# साहित्यदर्पणम्

विवृतिः
विज्ञप्रिया
कुसुमप्रतिमा
लक्ष्मी

विवृतिपूर्तिः
लोचनम्
विमला
रुचिरा

प्रो० योगेश्वरदत्त शर्मा पाराशरः

NP
NAG
PUBLISHERS

नाग पब्लिशर्स

व्याकरणशास्त्रे यथाऽष्टाध्याय्याः सूक्ष्मतमं रूपं विद्यते लघुसिद्धान्तकौमुदीतथैव साहित्यशास्त्रे वेविद्यते स्थानं विश्वनाथरचितसाहित्यदर्पणस्य। ग्रन्थ एषोऽधीतः स्याद् यैः साहित्यशास्त्रच्छात्रैः तैः खलु साहित्यशास्त्रस्य सर्वेषां विभागानामेवाध्ययनं कृतं स्यात्। एतस्य ग्रन्थस्योपरि यद्यपि बह्व्यः टीकाः कृता व्याख्याकारैः, परं समुपलभ्यन्ते अष्टावेव टीकाः। एतासां सर्वासां टीकानां समवेतेनैकत्र समीकरणं स्यादिति बहुविमृष्टं मया बहुकालात्। यथैव प्राप्ताः सर्वास्तथैवैकत्रीकृताः सर्वाः। एतासु टीकासु विवृतिनाम्नी टीका छात्राणां शोधकानां च कृते बहुविचारावहा। किञ्च कुसुमप्रतिमाऽपि स्वविशिष्टं स्थानमाधत्ते। वस्तुतः सर्वा एव व्याख्या विशेषतो विवृतिमनुकुर्वते।

अस्मिन् ग्रन्थे प्रथमं मूलपाठः पृष्ठोपरि प्रदत्तः ततश्च क्रमेण विवृति-विवृतिपूर्त्ति-विज्ञप्रिया-लोचन- कुसुमप्रतिमा-विमला-लक्ष्मी-रुचिरा नाम्नीटीकानां पाठाः प्रदत्ताः। कालक्रमेणापि परिपाटी एषैव दरीदृश्यते। एतासां सर्वासां टीकानां तुलनात्मकमध्ययनं कुर्वतां समालोचकानां कृते ग्रन्थ एष मार्गप्रदर्शकः स्मयादित्या स्ते सम्पादकस्य मनीषा मनसि।

# साहित्यदर्पणम्

## (चतुर्थखण्डः)

| विवृतिः | विवृतिपूर्तिः |
|---|---|
| विज्ञप्रिया | लोचनम् |
| कुसुमप्रतिमा | विमला |
| लक्ष्मी | रुचिरा |

सम्पादकः

**प्रो० योगेश्वरदत्त शर्मा पाराशरः**

हिन्दू कालेज, दिल्ली विश्वविद्यालय,

दिल्ली-११०००७

NAG PUBLISHERS

**नाग पब्लिशर्स**

**११ ए-यू० ए०, जवाहर नगर, दिल्ली-११०००७**

**भारत**

राष्ट्रिय संस्कृत संस्थान, नई दिल्ली के वित्तीय सहयोग से प्रकाशित ।



(१) ११ए/यू. ए. जवाहर नगर, दिल्ली-११०००७
दूरभाष : ३९५७४४०, ३९६७९७५, ३९१५८८३

(२) जलालपुर माफी (चुनार-मिर्जापुर) उ० प्र०

ISBN : 81-7081-511-8 (set)

ISBN : 81-7081-522-3 (vol IV)

प्रथम संस्करण : २०००

मूल्य :

श्री सुरेन्द्र प्रताप द्वारा नाग पब्लिशर्स, ११ए यू. ए, जवाहर नगर, दिल्ली ११०००७, द्वारा प्रकाशित । अक्षरयोजक अमर प्रिंटिंग प्रैस तथा जी. प्रिंट प्रासेस, ३०८/२, शहजादा बाग, दयाबस्ती, दिल्ली ११००३५ द्वारा मुद्रित ।

# विषयानुक्रमणिका

## दशमपरिच्छेदः

# दशमः परिच्छेदः

अथावसरप्राप्तानलंकारानाह—

**शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः ।**

**रसादीनुपकुर्वन्तोऽलंकारास्तेऽङ्गदादिवत् ॥ १ ॥**

यथा अङ्गदादयः शरीरशोभातिशायिनः शीरीरिणमुपकुर्वन्ति, तथानुप्रासोपमादयः शब्दार्थशोभातिशायिनो रसादेरुपकारकाः । अलंकारा अस्थिरा इति नैषां गुणवदावश्यकी स्थितिः ।

---

## विवृतिः

अलंकारनिरूपणे संगतिमाह—**अथेति** । रीतिनिरूपणानन्तरमित्यर्थः । **अवसरप्राप्तान्** अवसरसंगत्या निरूपयितुं युक्तानित्यर्थः । प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिरवसरः । प्रकृते सूचीकटाहन्यायेन प्रथमं रीतिनिरूपणजिज्ञासा जाता अस्यैवोद्देशक्रमप्राप्तालंकारनिरूपणप्रतिबन्धिका तन्निवृत्तावलंकारनिरूपणजिज्ञासा जायत इति भावः । अलंकाराणां सामान्यलक्षणमाह—**शब्दार्थयोरिति** । अस्थिरा काव्येष्वनियतवृत्तयः । काव्यत्वाव्यापका इति यावत् ।

एतेन परम्परया शब्दार्थधर्माणां गुणानां वारणम् । रीतेरस्थिरत्वात्तद्वारणायाह—**शोभातिशायिन इति** । शोभातिशयजनका इत्यर्थः । रीतेः शब्दशोभाजनकत्वेऽपि गुणालंकारवच्छोभातिशयजनकत्वं नास्तीति भावः । नीरसशब्दार्थयोरनुप्रासोपमादीनां वारणायाह—**रसादीनिति** । उपकुर्वन्त उत्कर्षयन्तः । एवं च यत्र रसो नास्ति तत्रोक्तिवैचित्र्यमात्रप्रयोजकेष्वनुप्रासोपमादिष्वलंकारपदप्रयोगो गौण एव । विवृणोति—**यथेति** । शरीरिणमात्मानम् । अनुप्रासादेः शब्दालंकारत्वादुपमादेरर्थालंकारत्वादुभयोः पृथगुपादानम् । गुणेष्वतिव्याप्तिं वारयति—**नैषामिति** । एषामलंकाराणाम् ।

## विवृतिपूर्तिः

**अलंकारा इति** । अलंक्रियतेऽनेनेति करणव्युत्पत्त्यालंकारशब्दः शब्दार्थालंकारबोधकः । साहित्यशास्त्रापरपर्यायोऽलंकारशब्दस्तु भावसाधनः । इह जयरामभट्टाचार्यादि व्याख्यानेनालंकारस्येदं लक्षणत्रयं लभ्यते—रसोपकारकत्वे सति रसावृत्तित्वम् । तथात्वे सति रसव्यभिचारित्वम् । अनियमेन रसोपकारकत्वं चेति । तदेतत्क्रमेण कामिन्यां कमले कलशे चातिव्याप्तम् । तथाहि—कामिनी श्रृङ्गारस्यालम्बनविभावभूतापि, 'रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा । गुणाः' इति प्रकाशानुरूपया अष्टमपरिच्छेदकारिकया गुणवत्तद्धर्मत्वाभावा-

तदवृत्तिरिति व्यक्तमेव। एवं कमलमुद्दीपनविभावभूतमपि यथा वह्निर्धूमाभाववत्ययोगोलेऽस्तीति धूमोपकर्तापि धूमव्यभिचारीति कथ्यते तथा कमलमपि रसाभाववति जडे जलादौ विद्यत इति रसव्यभिचार्येव। एवं कलशोऽपि कुचस्मारकत्वेन कदाचिद् रसोपकर्तेत्यनियमेन तत्रापि तदुपकर्तृत्वम्। एवं कुवलयानन्दचन्द्रिकोक्तमपि। तथाहि—अलंकारत्वं च रसादिव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासंबन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम्। अनुप्रासादिविशिष्टशब्दज्ञानाद् उपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदयात्तेषु लक्षणसमन्वयः। शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकतायां विषयितया अवच्छेदकत्वेन तद्विशेषणीभूतानुप्रासोपमादेस्तन्निष्ठावच्छेदकतावच्छेदकत्वात्। रसवदाद्यलंकारसंग्रहाय व्यङ्ग्योपमादिवारणाय च भेदद्वयगर्भेसत्यन्तोपादानमिति। अत्रापि प्राग्वदेव ज्ञाते कामिन्यादित्रितयेऽपि प्रत्येकमप्यतिप्रसङ्गः। तथाहि—रसादिभिन्नत्वमत्र व्यङ्ग्ये रसोऽपि यत्र रसान्तरस्याङ्गं भवति तत्प्रभृति रसवदाद्यलंकार चतुष्टयभिन्नत्वमेव तादृशं यद् व्यङ्ग्यं व्यङ्ग्योपमादिलक्षणं तद्भिन्नत्वे सतीति सत्यन्तार्थः संमतः। तेनोक्तकामिन्यादौ व्यङ्ग्यरसकरणीभूतरसाख्यरसवदाद्यलंकारभिन्नत्वं व्यङ्ग्योपमाद्यलंकारभिन्नत्वमपि प्रसिद्धमेव। नहि कामिनी कमलं कलशो वा कस्यचिद्रसस्य व्यञ्जको रसो भवति भावादिर्वा येनापरस्याङ्गं सन् रसवत्प्रेयआद्यलंकारः स्यात्। तथोदासीनतादशायां व्यङ्ग्योपमाद्यलंकारभिन्नस्तु वर्तत एव। एवं ज्ञानार्थत्वेन तत्र चमत्कृतिजनकतावच्छेदकता या सा ज्ञाननिष्ठविषयितासंबन्धावच्छिन्ना भवति। तत्र विशेषणत्वेनानन्दकरस्य कामिनीत्वादेरवच्छेदकत्वमित्यनलंकारेष्युदासीनकामिन्यादावुक्तालंकारसंचारः। संप्राप्त एव। नहि कामिनी कमलं कलशो वा ज्ञातश्चेत्सामान्यतो नानन्दकर इति। अथात्रालंकाराणां रसोपकारकत्वप्रतिपादनमपि दुःशकम्। अर्थाद्युपकारद्वारा तदङ्गीकारे त्वर्थादेरेव तथात्वस्य साक्षात्संभवेन तेषां कुलालपित्रादिवदन्यथासिद्धत्वात्। तथा चात्र मूलग्रन्थोऽलंकारस्वरूपलक्षणपरतया योजनीयो न त्वसाधारणलक्षणलक्षणपरतयेत्यन्यत्र विस्तरः॥

## विज्ञप्रिया

**अथावसरेति**। उद्देश्यक्रमलङ्घनात्, न तु तत्क्रमप्राप्तानिति भावः।

- **नैषां गुणवदिति**—माधुर्य्यादीनां शृङ्गारादिव्यापकत्वात् तत्र तेषामवश्यस्थितेः।

## लोचन

इदानीमलङ्कारं निरूपयितुकामोऽवतारयति-अथेति। अलङ्कारानाह स्वरूपतो विशेषतश्चेत्यर्थः।

यथेति। शब्दार्थशोभातिशायित्वमात्रेणालङ्कारत्वम्। तथाहि रसाद्यध्यवसायपृथक्यत्ननिवर्त्त्यस्य यमकादेरेकरूपानुबन्धनवतोऽनुप्रासस्याऽसमीक्ष्य विनिवेशितस्य रूपकादेश्च रसानुपकारित्वादलङ्कारता। यदुक्तं ध्वनिकृता—

> **"यमकादिनिबन्धेषु पृथक् यत्नोऽस्य जायते।**
> **शक्तस्यापि रसाङ्गत्वं तस्मादेषां न विद्यते॥"**

शक्तस्याप्यस्य कवेः। यमकदुष्करादीनां यथा—

> **"श्रृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धनात्।**
> **सर्वेष्वेव प्रबन्धेषु नानुप्रासः प्रकाशकः॥" इति**

रूपकादेः समीक्ष्य निवेशनं च तेनैवोक्तम्—

**"विवक्षातत्परत्वेन नाङ्गित्वेन कथञ्चन।**

**काले च ग्रहणत्यागो नाति निर्वहणैषिता॥**

**निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्।**

**रूपकादेरलङ्कारवर्गस्याङ्गत्वसाधनम्॥ इति॥"**

**"कपोले पत्राली करतलनिरोधेन मृदिता**

**निपीतो निश्वासैरयममृतहृद्योऽधररसः।**

**मुहुः कण्ठे लग्नः तरलयति बाष्पः स्तनतटं**

**प्रियो मन्युर्जातस्तव निरनुरोधे! न तु वयम्॥"**

कपोले गण्डस्थले, पत्राली पत्ररचना, करतलनिरोधेन पाणितलपीडनेन, मृदिता प्रमृष्टा। निश्वासैरमृत-हृद्योऽमृतवन्मधुरोऽधररसः, निपीतः आहतः। बाष्पः अश्रु, कण्ठे लग्नः सक्तः सन्, स्तनतटं, कुचप्रान्तं, मुहुः पुनः पुनः तरलयति कम्पयति। एवमनेन प्रकारेण नायको नायिकामुपालभते। मन्युः क्रोधः, तव प्रियो जातः अयि निरनुरोधे! अनङ्गीकृतानुवर्त्तने! वयं प्रिया हिताः न भवामः इति सम्बन्धः। अत्र पत्रालीमर्दनव्यापारेण सौभाग्यहारी मन्युः तव प्रियो जात इत्यनेन त्वदनुरोधकारिणो वयं तव हिता न भवाम इत्यनेन च उपालम्भो गम्यते। नायिका, स्वीया मध्या, नायकस्तु शठः। मानकृतो विप्रलम्भश्रृङ्गारः। अत्र सोपालम्भवचनं नर्म। आक्षेपोऽलङ्कारः" इत्यादौ। मम तातपादानां प्रभावतीपरिणये प्रभावतीवर्णनं यथा—

**कलाकुलगृहं मनः—पतगपञ्जरं कामिनां**

**वशीकरणभेषजं, परमकौशलं वेधसः।**

**जगद्विजयकर्मणि स्मरमहीभुजः कार्मणं**

**दृशोर्निगडबन्धनं त्रिजगतां परं भूषणम्॥**

इत्यादौ अलङ्काराणां निर्वाहकरससम्बन्धाक्षिप्तचेतसः कवेरपृथक्-यत्ननिवर्त्यत्वात् न दोषः, इत्यतोऽतीवरसपरिपोषकत्वम्। यदुक्तं ध्वनिकृता—

**रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।**

**अपृथक्यत्ननिर्वर्त्त्यः सोऽलङ्कारो ध्वनेर्मतः।**

तथालङ्कारान्तराणि निरूप्यमाणदुर्घटनान्यपि रससमाहितचेतसः प्रतिभानवतः कवेरहंपूर्विकया परापतन्ति। यथा—

**"इयमम्लपित्तशमनी त्रिदोषदमनी बुभुक्षुकमनीया।**

**मर्त्यानाममृतवटी रसगन्धकपर्पटी जयति॥" इत्यादौ।**

सत्यपि रसे तमपि नोपकुर्वन्ति अनुप्रासादयः। यथा—"ओवट्टइ उल्लटइ" इत्यत्र अनुप्रासः।

**"मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति**

**क्रन्दत्सु भ्रमरेषु वीक्ष्य दयिता सन्नं पुरः सारसम्।**

**चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता**

**कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः।"**

इत्यत्र चोद्दीपनरूपाया बिसलतायाः प्रयत्नजीवहरणावसानोपकारकत्वात् जीवननिरोधार्गलरूपोत्प्रेक्षायां विप्रलम्भशृङ्गारतदाभासयोरननुगुणत्वान्नालङ्कारः रसस्योपकारकः। इह नोपमेति उत्प्रेक्षानिरूपणे वक्ष्यते। तदेव सुष्ठूक्तं शब्दार्थशोभातिशयद्वारेण रसादेरूपकारका अलङ्कारा इति।

**अस्थिरा** इति—कारिकापदमनूद्य विवृणोति। **नैषामिति**—गुणादीनां वाक्येष्वन्वयतिरेकानुविधायिनो रसस्य धर्मत्वेन अवस्थितिः। अलङ्काराणां च क्वचिदभावेऽपि न काव्यत्वहानिरित्यर्थः। यथा गुणा रसस्य स्थिरधर्मास्तथा नैते शब्दार्थयोः। एवं शब्दार्थयोरनुपचरितधर्मत्वेनास्थिरत्वेन शब्दार्थसोभाधानद्वारेण रसोपकारकत्वेन च गुणव्यतिरिक्तत्वमलङ्काराणां दर्शितम्।

## कुसुमप्रतिमा

इदानीमलङ्कारनिरूपणे अवसरसङ्गतिं दर्शयति अथेति; अत्राथशब्द, अलङ्कारनिरूपणरूपकार्य्यान्तरारम्भे निरतिशयगहनस्य तस्य मङ्गलार्थे वा, रीतिनिरूपणारन्तर्य्यस्याभिधानक्रमेणैव प्राप्ततया तत्सूचनाय पुनरथशब्दोपादानस्य वैयर्थ्यापत्तेः। कार्य्यान्तराभावोऽवसरः। तथा च "उत्कर्षहेतवःप्रोक्ता गणालङ्काररीतयः" इत्युद्देशक्रमेण गुणनिरूपणानन्तरं प्राप्तमप्यलङ्कारनिरूपणं सूचीकटाहन्यायेनापहाय कृते रीतिनिरूपणे प्राप्तो योऽवसरस्तेन प्राप्तान् पूर्वोद्देशवशान्निरूपणप्रसक्तान् अलङ्कारानाह निरूपयति मूलकार इति शेषः।

अज्ञाते सामान्ये तद्विशेषज्ञानासम्भवादादौ सामान्यमलङ्कारलक्षणमाह शब्देति। अत्र शब्दाथयोरित्युपलक्षणम्, रसादिधर्म्मस्वरूपाणां रसवदाद्यलङ्काराणामपि वक्ष्यमाणत्वात्। तथा शब्दार्थयोरिति साहित्यमभिधानक्रियापेक्षया, गर्गा भोज्यन्तामित्यादिवत्; न तु तद्धर्म्मसम्बन्धापेक्षया अनुप्रासादीनां केवलशब्दधर्म्मत्वात् उपमादीनाञ्च केवलार्थधर्म्मत्वात्। अस्थिराः सर्वत्र अस्थायिनः शब्दे अर्थे वा स्थित एव अलङ्कारात्मकतद्धर्म्मैरपि स्यातव्यमिति नियमरहिता इत्यर्थः, निरलङ्कारयोरपि शब्दार्थयोर्बहुलमुपलम्भादिति भावः। शोभां काव्यस्य सौन्दर्य्यम् अतिशाययन्ति अतिशयेनोत्पादयन्तीति शोभातिशायिनः। रसादीनित्यादिशब्देन रसाभास-भाव भावाभास सन्धि-शबलतानां तेषामभावस्थले तयोः शब्दार्थयोरपि च ग्रहणम्। एतेन रसाद्यभावस्थले रामचरणेन यदलङ्काराणां गौणत्वमभिहितं तदपास्तम्, मुख्यत्वसम्भवे गौणत्वाङ्गीकारस्यान्याय्यात्वात्। उपकुर्वन्त उत्कर्षयन्तः। अलङ्क्रियते काव्यमेभिरित्यलङ्कारा इति करणव्युत्पन्नोऽयमलङ्कारशब्दः। अङ्गदं केयूरम् आदिशब्दात् हारादीनां ग्रहणम्। अस्थिराः शोभातिशायिनो रसादीनुपकुर्वन्तः शब्दार्थयोर्येधर्म्मास्ते अङ्गदादिवदलङ्कारा इत्यन्वयः। एतेन—

साक्षात् परम्परया वा रसाद्युत्कर्षजनकत्वे सति अनियतशोभातिशायिकाव्यधर्म्मत्वमलङ्कारत्वम्।

इत्यलङ्कारलक्षणं पर्य्यवसितम्। तथा च साक्षादेव रसाद्युत्कर्षजनकत्वं रसवदाद्यलङ्काराणाम्। स्वाश्रयव्यङ्ग्यतारूपपरम्परासम्बन्धेन रसाद्युत्कर्षजनकत्वमनुपासोपमादीनाम्। काव्यशब्देन च स्वशरीरभूतौ शब्दार्थौ स्वात्मभूता रसादयश्चेति समुदाय एवोच्यत इति सर्वत्र लक्षणसङ्गतिः। तत्र कालिदासप्रणीतत्वादिरूपकाव्यधर्म्मेष्वतिव्याप्तिवारणाय सत्यन्तदलम्। गुणेष्वतिव्याप्तिवारणाय अनिवतेति। शब्दे अर्थे च यस्य कस्यचिद्गुणस्या-

वश्यस्यातव्यत्वात्तेषां नियतत्वमेवेति बोध्यम्। रीतिष्वतिव्याप्तिवारणाय च शोभातिशायोति विशेषणम्। रजगगगगदद--०दतडीतीनां शोभामात्रजनकत्वमेव, न पुनः शोभातिशयजनकत्वमित्यवधेयम्।

कारिकागतानामितशब्दानां सुगमार्थताभिप्रायेण केवलमङ्गदादिवदिति सादृश्यमात्र स्पष्टयति यथेति। शरीरस्य शोभातिशायिनः शोभातिशयजनकाः, शरीरिणं तच्छरीरगतंमात्मानम्, उपकुर्वन्ति सन्तोषात्पादनेनानुकूलयन्ति। अनुप्रासादयः शब्दालङ्काराः शब्दशोभाम् उपमादयश्चार्थालङ्कारा अर्थशोभामतिशायन्तीत्युभयवर्गप्रदर्शनायोभयोपादानम्। शब्दार्थयोः शोभातिशायिनः शोभातिशयजनकाः। उपकारका उत्कर्षजनकाः। ये धर्म्माः।

अस्थिरा इत्यस्य व्यावृत्तिमाह अस्थिरा इति। एषाम् अलङ्कारत्वे नाभिमतानां शब्दार्थधर्म्मणाम्। आवश्यकी नियता तथा च रसादिमति शब्दे अर्थ च यस्य कस्यचिद्गुभ्य नियतैव स्थितिः अलङ्काराणान्तु न तथा, तेषां कादाचित्कत्वादिति अस्थिरा इत्यनेन गुणो व्यावर्त्यत इति भावः।

## विमला

अलङ्कारनिरूपणे सङ्गतिमाह, अथेति।—रीतिनिरूपणानन्तरमित्यर्थः, अवसरप्राप्तान्—अवसरसङ्गत्या निरूपयितुं युक्तानित्यर्थः; प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिरवसरः। प्रकृते सूचीकटाहन्यायेन प्रथमं रीतिनिरूपणजिज्ञासा जाता, एषैवोद्देशक्रमप्राप्ताऽलङ्कारनिरूपणप्रतिबन्धिका, तन्निवृत्तौ अलङ्कारनिरूपणजिज्ञासा जायते इति भावः।

अलङ्काराणां सामान्यलक्षणमाह, शब्दार्थयोरिति।—अस्थिराः,—काव्येष्वनियतवृत्तयः, काव्यत्वाव्यापका इति यावत्; [एतेन परम्परया शब्दार्थधर्माणां गुणानां वारणं, निरलङ्कारमपि काव्यमस्तीति च सूचितम्]। रीतेरस्थिरत्वात् तद्वारणाआह, शोभाऽतिशायिन इति।—शोभाऽतिशयजनका इत्यर्थः, रीतेः शब्दशोभा जनकत्वेऽपि गुणालङ्कारवच्छोभाऽतिशयजनकत्वं नास्तीति भावः।

## लक्ष्मी

अधुनाऽलङ्कारनिरूपणे अवसरसङ्गतिमुपपादयति—अथेति। अत्राथशब्दस्य 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरादनेकार्थत्वेऽपि अलङ्कारनिरूपणरूपकार्यान्तरारम्भे, अत्यन्तगहनस्य तस्य मङ्गलार्थे वा न त्वानन्तर्यार्थे, तथासति रीतिनिरूपणानन्तर्यरूपप्रतिपादकक्रमेणैव लब्धतया तद्द्योतनाय पुनरथशब्दोपादानस्य निरर्थकत्वं स्यात्। निरूपणोचितसमयोऽवसरः, तथा च 'उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः' इत्युद्देश्यक्रमेण गुणनिरूपणानन्तरं प्राप्तमप्यलङ्कारनिरूपणं, सूचीकटाहन्यायेन त्यक्त्वा रीतिनिरूपणे कृतेऽपि प्राप्तो योऽवसरस्तेन प्राप्तान् अवसरसङ्गत्या निरूपयितुं युक्तान् अलङ्कारानाह प्रतिपादयति सामान्यविशेषाभ्यां मूलकार इति शेषः।

सामान्यलक्षणेऽज्ञाते तद्विशेषलक्षणज्ञानस्याऽप्यनुदयादादावलङ्काराणां सामान्यलक्षणं दर्शयति—शब्दार्थयोरिति। रसादिधर्मस्वरूपाणां रसवदाद्यलङ्काराणामपि वक्ष्यमाणत्वेनात्र शब्दार्थयोरित्युपलक्षणं ज्ञेयम्। अस्थिरा काव्येष्वनियतवृत्तयः शब्देऽर्थे वा सत्त्व एव अलङ्कारात्मकतद्धर्मैरपि वर्त्तितव्यमिति नियमरहिता इत्यर्थः, एतेन निरलङ्कारमपि काव्यमस्तीतिसूचितम्। तथा परम्परया शब्दार्थधर्माणां गुणानां च वारणमिति सूचितम्। धर्मा अनुप्रासोपमादयो न तु गुणास्तेषामस्थिरत्वाभावात् शोभां काव्यस्य सौन्दर्यम् अतिशाययन्ति अतिशयेन न जनयन्तीति शोभातिशायिनः काव्यसौन्दर्यातिशयप्रयोजका इत्यर्थः, तेन वाच्यत्वप्रमेयत्वादीनामतद्रूपाणां नालङ्का-

रत्वम्, रीतेः शब्दशोभाजनकत्वेऽपि गुणालङ्कारवच्छोभातिशयजनकत्वं नास्तीति न तत्रातिव्याप्तिः। रसादीनित्यादिपदेन रसभासभाव-भावाभास-सन्धिशबलतानां परिग्रहो बोध्यः। एवञ्च यत्र—

'तरङ्गिनिकरोन्नीततरुणीगणसङ्कुला।
सरिद्वहतिकल्लोलवाहव्याहततीरभूः॥'

इत्यादौ रसानुसन्धानाराहित्यम्, तत्रोक्तिवैचित्र्यमात्रप्रयोजकरूपकानुप्रासालङ्कारपदप्रयोगे गौण एवेत्यवधेयम्। उपकुर्वन्त उत्कर्षयन्तः। अलङ्क्रियते भूष्यते काव्यमेभिरित्यलङ्काराः, करणव्युत्पत्या निष्पन्नोऽयमलङ्कारः। साहित्यशास्त्रापरपार्यायोऽलङ्कारशब्दस्तु भावसाधन इत्युभयोर्भेदः। लौकिकदृष्टान्तमाह—अङ्गदादिवदिति। अङ्गदं केयूरम् आदिपदात् हारादीनां परिग्रहः। तथाचात्र परस्परमन्वयस्तु—अस्थिराः शोभातिशायिनः रसादीनुपकुर्वन्तः शब्दार्थयोर्ये धर्मास्ते अङ्गदादिवदलङ्कारा इति। एवञ्च—साक्षात् परम्परया वा रसाद्युत्कर्षजनकत्वे सति अनियतशोभातिशायिकाव्यधर्मत्वमलङ्कारत्वम्। रसवदाद्यलङ्काराणां साक्षादेव रसाद्युत्कर्षजनकत्वम् अनुप्रासोपमादीनां च स्वाश्रयव्यङ्ग्यत्वरूप परम्परासम्बन्धेन रसाद्युत्कर्षजनकत्वम्। काव्यशब्देनात्र स्वशरीरभूतौ शब्दार्थौ स्वात्मभूता रसादयश्चेति समूह एव प्रतिपाद्यते इति सर्वत्र लक्षणसमन्वयः। सत्यन्तदलानुपादाने महाकविकालिदासादिरचितत्वादिरूपकाव्यधर्मेष्वतिप्रसङ्गः स्यादतस्तदुपादानम्। अनियतविशेषणोपादानेन गुणेषु नातिव्याप्तिः, यस्य कस्यापि गुणस्य तत्रावश्यम्भाव्यत्वेनानियतत्वाभावात्। शोभातिशायिविशेषणदानेन च रीतिषु नातिव्याप्तिः, रीतीनां शब्दशोभामात्रजनकत्वमेव न तु शोभातिशयजनकत्वमित्यवगन्तव्यम्।

कारिकास्थानामन्यशब्दानां सौलभ्यमभिप्रेत्य केवलमङ्गदादिवदिति सादृश्यमात्रं विवृणोति-यथेति। शरीरस्य शोभातिशायिनः शोभातिशयोत्पादकाः, शरीरिणं तच्छरीरगततदन्तर्यामिनम्, उपकुर्वन्ति सन्तोषजनेनानुकूलयन्ति। अनुप्रासादयः शब्दालङ्काराः शब्दशोभाम् उपमादयश्चार्थालङ्कारा अर्थशोभामतिशाययन्तीत्युभयकोटिप्रदर्शनाय द्वयोर्ग्रहणम्। उपकारका उत्कर्षयितारः। ये धर्माः। अत्रेदं रहस्यम्—यथात्मत्वस्यावलम्बनमात्मा शरीरं पुनरन्यद् तथा काव्यत्वस्यालम्बनं रसः वाक्यं पुनस्तदन्यत्। तत्र यत्र रसस्य संभवस्तत्र तमुपकुर्वन्ति यत्र तस्यासम्भवस्तत्रोक्तिवैचित्र्यमात्रावहाः। यथा अङ्गदहारादयः कामिनीनां सौन्दर्यसत्त्वे एव तदङ्गानुमुत्कर्षकाः कुरूपाङ्गे तु दृष्टिवैचित्र्यमात्रहेतवस्तथेति। क्वचित्तु—सन्तमपि रसं नोपकुर्वन्ति यथा अतिसुकुमारनायिकाङ्गे ग्रामीणालङ्कारः।

अस्थिरा इत्यस्य व्यावृत्तिं दर्शयति—**अस्थिरा** इति। एषाम् अनियतस्थितिकानामलङ्कारत्वेन स्वीकृतानां शब्दार्थधर्माणाम्। गुणवद् गुणानामिव आवश्यकी निश्चिता। एवञ्च रसादिमति शब्दे अर्थे च यस्य कस्यापि गुणस्य निश्चितत्वेन विद्यमानत्वम्, न च तथालङ्काराणाम्, तेषां कादाचित्कत्वादिति गुणा एव **अस्थिरा** इत्यनेन निवर्त्त्यन्ते इत्याशयः। वस्तुतस्तु रीतीनां गुणव्यञ्जकवर्णादिघटितत्वादस्थिरत्वेनालङ्कारत्वप्रसक्तौ तद्वारणाय शोभातिशायिन' इत्यस्य विलक्षणवैचित्र्याधायकत्वमितितदर्थंकरणम्, अवश्यं तेनैव गुणानामपि वारणसम्भवादस्थिरा इति विशेषणमनुपादेयमेवेत्यवधेयमितितर्कवागीशाः।

तदेवं गुणालङ्कारयोर्भेदे व्यवस्थिते यदभट्टोद्भट्टादिभिः 'समवायवृत्त्या सौर्यादयः संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः ओजः प्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरितिगड्डुरिकाप्रवाहेणैवैषां भेद इत्युक्तमयुक्तम्। तेषामयमभिप्रायः—लौकिका गुणलङ्काराः शौर्यादिहारादयः समवेत-

तत्संयुक्तसम्बन्धेन तिष्ठन्तीति येषां भेदोऽस्तु काव्ये पुनरलौकिकानां गुणालङ्काराणां माधुर्याद्यनुप्रासोपमादीनामेकेनैव समवायसम्बन्धेनाऽवस्थितिरिति भेदोऽनुपपन्नः तस्मादलौकिकयोर्गुणलङ्कारयोर्भेदाभिधानं गड्डलिकाप्रवाहन्यानेन। गड्डरं मेषमनुगच्छतीति गड्डरिका मेषानुगतमेषपंक्तिस्तस्याः प्रवाहन्यायेन यथा काचिदेका मेषी केनचिद्धेतुना पुरो गच्छति अन्यास्तु विनैव निमित्तविचारं तामनुगच्छन्ति अग्रिमायाः कूपादिपाते सति इतरा अपि कूपादौ पतन्ति च तथा केनापि प्राक्तनेनालङ्कारिकेण गुणालङ्कारौ कयाचिद्भ्रान्त्या भिन्नत्वेनोक्तौ अन्ये आधुनिकास्तु विनैव हेतुविचारं तदनुसारेण तद्भेदं वदन्तीतितदसम्यग्वेदिव्यमिति प्रदीपोद्योतादौ स्पष्टम्।

## रुचिरा

**अभूतिं सद्भूतिं प्रकृतिविधुरं साधुकृतिनं निरीहं नानेहं गुणरहितिमुल्लासिसुगुणम्।**

**अनीशं सर्वेशं विसदृशमशेषैकसदृशं विरूपं रूपेज्यं किमपि कमनीयं विजयते॥ १॥**

अथ गुणादिनिरूपणानन्तरमलङ्कारनिरूपणं सङ्गमयति-अथेत्यादिना।

अथ रीतिनिरूपणानन्तरम्। **अवसरप्राप्तान्** अवसरं निरूपणोचितः समयस्तं प्राप्ता इति तान्। **अलङ्कारान्।** आह—'सामान्यविशेषाभ्याम्' इति शेषः। 'तथा च—सामान्यविशेषोभयविधलक्षणैः तदनुरूपोदाहरणेन च समुद्भावयति-इति निष्कर्षः ६१ शब्दार्थयोरित्यादिना।

६१ ये। 'केचित्' इति शेषः। **अस्थिरा** न स्थिरा नियतस्थिताका इति तथोक्ताः। 'काव्येषु' इति शेषः। अत एव काव्यत्वोपकारकत्वमप्येतेषामनियतमेवेति बोध्यम्। **शब्दार्थयोः** शब्दस्यार्थस्य चेत्यर्थः। **शोभाऽतिशायिनः।** शोभामतिशाययन्ति इत्येवंशीला इति तथोक्ताः। तथा च-शब्दार्थसम्बन्धिन्या शोभायाः अतिशायका इति निष्कृष्टम्। 'सुप्यजातौ णिनिस्ताच्छील्ये।' ३/२/७८ इति णिनिः। **धर्माः**। ननु गुणास्तेषामस्थिरत्वाभावात्। न च रीतयस्तासां शब्दार्थयोरुभयोरपि शोभाऽतिशयविधायकत्वाभावात्। **रसादीन्** शृङ्गारादितदाभासादीनित्यर्थः। उपकुर्वन्ति उत्कर्षयन्ति। 'अनैयत्येन' इति शेषः। तथा च-अनियतस्थितिकतया ये शब्दार्थयोः शोभामतिशाययन्तो रसादीनुपकुर्वन्तीति निष्कृष्टम्। 'उपकुर्वन्त' इति पाठे 'स्थिताः' इत्याहार्य्यम्। ते धर्मा इति शेषः। अङ्गदादिवदङ्गदादिभिस्तुल्यम्। **अलङ्कारा** 'मताः' इति शेषः। एतेन-निरलङ्कारमपि काव्यमिति सूचितम्। अत्रायम्भावः—शब्दार्थ (वाक्य) शरीरं रसात्मशालि काव्यम्, तत्र शब्दार्थनिष्ठाः पुनरनुप्रासोपमाप्रभृतयः काव्यात्मभूतानां शृङ्गारादि तदाभासादीनामलङ्कारा इत्यलङ्कारा इति व्यपदिश्यन्ते, अङ्गदादयो यथाऽलङ्काराश्चमत्कारविशेषरूपमात्मानमन्तरा शरीरेऽवस्थापिता अपि विडम्बयन्ति, न तु मनागुपकुर्वन्ति; तथा शब्दार्थयोरवस्थापिता अपि रसमन्तरेण तेऽप्यनुप्रासोपमादयः, इति तेषामिवैतेषां तदानीं गौणत्वमव्याहतमूर्त्ति, अनियतस्वाभाव्यात्। अथ यथाऽङ्गदादयः स्वनिवेशोचितबाह्वादयतिरिक्ताङ्गस्थिता नाङ्गिनोऽलङ्कृतये, तथाऽनुप्रासोपमादयोऽपि स्वनिवेशोचितरसानुगुणव्यतिरिक्तवाक्यविशेषस्थिता न काव्यस्योपकृतये। तथा—सर्वस्याङ्गिनोऽलङ्कृतयेऽङ्गदादयोऽप्रभवन्तोऽपि यथा यस्यकस्यचित्तदङ्गस्य निर्बाधं क्षमन्तेऽलङ्कृतये तथाऽनुगुणः पुनरुक्तवदाभासोपमाऽऽदयः काव्यस्योपकृतयेऽप्रभवन्तोऽपि यस्यकस्यचित्तदंशस्य प्रभवन्त्युपकृतयेऽवश्यम्। इति नालङ्कुर्वन्तु नामात्मानं, समस्तं वा शरीरं; किन्तु शरीरांशभूतमवयवविशेषं त्ववश्यमलङ्कुर्वन्तीति निर्विचिकित्सितं विदुषाम्। अत एवोक्तं प्रकाशकारैः—'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्। हारादिवदलङ्कारास्तेऽनुप्रासोपमाऽऽदयः॥' इति। इदमभिहितम्, हारादयोऽलङ्कारा यथा कण्ठादद्युत्कर्षाधानमुखेन शरीरस्योत्कर्षका भवन्तः शरीरिणोऽप्युत्कर्षाय, तथाऽनुप्रासोपमाऽऽदयो वाचक वाच्योत्कर्षाधानमुखेन वाक्यस्योत्कर्षकाः सन्तो रसस्याप्युत्कर्षयेत्यमी अलंङ्कारव्यपदेश्याः।

एवं च (शब्दार्थ शरीरशोभाऽतिशयाधानमुखेन (रसस्य) आत्मनः कदाचिदलङ्कारकत्वमलङ्कारत्वमिति निष्कृष्टम्। अन्ये त्वाहुः 'रसोपकारकत्वे सति रसावृत्तित्वं, रसोपकारकत्वे सति रसानियतस्थितिकत्वमलङ्कारत्वम्।' इति॥ ५४॥

तदेव विवृणोति—**यथा। अङ्गदादयः। शरीरशोभाऽतिशायिनः शरीरिणं** शरीरमायतनत्वेन यस्य तं तथोक्तम्। **उपकुर्वन्ति। तथा—अनुप्रासोपमाऽऽदय। शब्दार्थशोभाऽतिशायिनः। रसादेः** रसः शृङ्गारादिरादौ यस्य तस्य तथोक्तस्य। **उपकारका** उत्कर्षयितारः। अत्रेदं तत्त्वम्—यथाऽहम्प्रत्ययस्यालम्बनं जीवः, शरीरं पुनरन्यत्, तथा काव्यत्वस्याल्लम्बनं रसो, वाक्यं पुनस्तदन्यत्। तत्र अङ्गदहारादयो नायिकादीनां शरीरमेव शोभाऽतिशयं नयन्ति, न पुनस्तदन्तर्यामिनं साक्षात्, अथापि गौणरूपेण नायिकाद्यालम्बनः शोभाऽतिशयः प्रत्याय्यते तैः। तथा हि-यथा स्वतःसम्पन्नसौन्दर्य्यमेव नायिकाऽऽदिशरीरमलङ्कुर्वन्ति यथौचित्यमवस्थापिता अङ्गदाद्या अलङ्काराः, तथा सरसस्यैव काव्यस्य वाक्यं (शब्दमर्थं वा) तेऽप्यनुप्रासोपमाऽऽद्याः, सौदर्य्यसद्भावे एवाङ्गदादीनामलङ्कारकत्वादिव रससत्त्वे एवानुप्रासोपमादीनामप्यलङ्कारत्वात्। अत एव—'तमेव भान्तमनुभाति सर्वम' इत्युक्तदिशा रसात्मनः प्रकाशानन्तरमेवेतरेषां प्रकाशकत्वमभिमन्वते मुनयः। एवं सति रसानुपदमनुप्रासादीनामलङ्कारकत्वाद्गौणत्वम्। अनुप्रासादीनां रसानुपदमलङ्कारकत्वमपि न सर्वदा साक्षात्, किन्तु क्वचिद्वाचकद्वारा क्वचिद्वाच्यद्वारा क्वचिद्वाचकस्यैव क्वचिद्वाच्यस्येति विवेकः। तत्र वाचकद्वारा यथा—'अपसारय घनसारं कुरु हारं दूर एव किं कमलैः। अलमलमालिमृणालैरिति वदति दिवानिशं बाला॥' इत्यन्तरेफानुप्रासस्य विप्रलम्भानुपदम्। वाच्यद्वारा यथा-'मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव। हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो न मां त्रातुं तातः प्रभवति न चाम्बा न भवती॥' इत्यत्रोपमाया विप्रलम्भानुपदम्। क्वचिद्वाचकस्य यथा—'अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम्। कम्बुकण्ठयाः क्षणं कण्ठे कुरु कण्ठार्त्तिमुद्धर॥' इत्यत्र टवर्गानुप्रासस्य। वाच्यस्य यथा—'मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति, क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुनः सारसम्। चक्राह्वेन वियोगिना विसलता नास्वादिता नोज्झिता कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः॥' इत्यत्रोपमायाः। यत्तूक्तं रसशून्यस्यापि काव्यत्वम्। यथा—'स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्च्छन्मोहमहर्षिहर्षविहितस्नानाऽह्निकाऽहाय वः। भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुमद्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम्॥' इत्यत्रानुप्रासात्। इति। तत्रोच्यते—नात्राप्यलङ्कारसद्भावमात्रेण। अत एवाहुः—'अत्र काव्यत्वं गङ्गाविषयकरतेरभिव्यक्तेः, अङ्घ्रिपदेन भावस्याप्युक्तेश्चा' इति एवं 'शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान् दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः। घर्मांशोस्तस्य वोऽन्तर्द्विगुणघृतघृणानिघ्ननिर्विघ्नवृत्तेर्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघाताम्॥' इत्यत्रापि सूर्यविषयकरतिभावस्याभिव्यक्तेः। इति। नहि रीतिः शब्दार्थयोः शोभाऽतिशयविधायिकेति तस्या एतेभ्यो भेदमनभिधायेव गुणेभ्य एषाम्भेदं दर्शयति **अलङ्काराः। अस्थिरा** अनियतवृत्तयः। **इति।** 'हेतोः' इति शेषः। एषामनियतस्थितिकानामलङ्काराणामित्यर्थः। **गुणवद्** गुणानामिव। **आवश्यकी** निश्चिता। **स्थितिः।** न'गुणानां त्वावश्यकी स्थितिरित्येतेषां तेभ्यो भेदः' इति शेषः। यत्त्वाहुरुद्भटभट्टाः—'समवायवृत्तया शौर्यादयः, संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः, ओजः प्रभृतीनामनुप्रासो। पमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरितिगड्डरिकाप्रवाहन्यायेनैवेषां भेदः। इति। तत्रेदं तत्त्वम्—'समवायवृत्त्याऽपृथक् सिद्धिरूपेण नतु वैशेषिककल्पितेन सम्बन्धविशेषेण शौर्यादयो गुणास्तिष्ठन्ति। संयोगवृत्त्या संयुक्तत्वरूपेण सम्बन्धविशेषेण तु हारादयोऽलङ्कारास्तिष्ठन्तीति लौकिकानां गुणानामलङ्काराणां भेदोऽस्तु। ओजः

प्रभृतीनां गुणानामनुप्रासोपमाऽऽदीनामलङ्काराणामलौकिकानां समवायवृत्त्या समवेतत्वरूपेण सम्बन्धेन, न त्वेकेषां समवेतत्वरूपेण, अपरेषां संयुक्तत्वरूपेण सम्बन्धविशेषेण स्थितिः। तस्मात् (वस्तुतयाऽभिन्नत्वे सिद्धेऽपि) गड्डुरिकाप्रवाहन्यायेन गड्डुरं मेषमनुधावतीति गड्डुरिका मेषानुगतमेषपङ्क्तिस्तस्याः प्रवाहन्यायेन यथा काऽपि मेषी पुरो धावति, अन्या पुनस्तामनुधावति, सा चेत् कूपादौ निपतति तदाऽपरापि विचारमन्तरा निपतति, तथैवैतेषामलौकिकानां भेदः। इत्येवं केनापि कस्याप्यालङ्कारिकस्य गुणालङ्काराणां भेदाभिधानमनुमन्वानेन भ्रान्त्यैव भेदोऽभिहितः।' इति तदवहेयम्। अचलस्थितिकानां गुणानां चलस्थितिकानामलङ्काराणां च भेदस्य स्फुटत्वात्। यच्चोक्तं वामनाचार्य्यैः—'काव्यशोभायाः कर्त्तारो धर्मा गुणाः, तदतिशयहेतवस्त्वलङ्काराः।' इति। तदपि न सत्। अत्रायम्भावः—रीतिरात्मा काव्यस्य, सा च पदसङ्घटनविशेषरूपा त्रिप्रभेदा। वैदर्भी, गौडी, पाञ्चाली च। सर्वगुणाभिव्यञ्जकैर्वर्णैर्युक्ता वैदर्भी, ओजःप्रसादयोरेव गुणयोरभिव्यञ्जकैर्वर्णैर्युक्ता गौडी, माधुर्य्यप्रसादयोर्गुणयोश्चाभिव्यञ्जकैर्वर्णैर्युक्ता पाञ्चाली। तत्र रीतिधर्माणो गुणाः, शब्दार्थोभयरूपस्य काव्यस्य शोभाविधातारः, शब्दार्थाश्रयितारश्चालङ्काराः, गुणा हि शोभाऽतिशयविधायकाः। तत्र किं समस्तैरुत कतिपयैर्गुणैः काव्ये शोभोत्पत्तिः। अथ समस्तैरिति चेत् गौडयाः पाञ्चाल्याश्च समस्तगुणत्वाभावाच्छोभाया अनुत्पत्तौ काव्यत्वस्यैवाभावः येन केनापि गुणेनेति चेत्? 'शुष्को वृक्षस्तिष्ठत्यग्रे' 'अद्रावत्र प्रज्वलत्याग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः।' इत्यादौ न कथं काव्यत्वम्। न चास्तीति वक्तुं शक्यम् रसाभावात्। अथ-'स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनि! अस्या रदच्छदरसो न्यक्करोति तरां सुधाम्॥' इत्यत्रासत्यपि प्रसादादौ तदाधेयायाः शोभायाश्चानवतारे तस्या अतिशयविधानस्य दविष्ठत्वे न स्यातां विभावना व्यतिरेकश्च। ओमिति चेत्। 'एकगुणहानिकल्पनया शेषगुणदार्ढ्यं कल्पनाविशेषोक्तिः' 'उपमेयस्य गुणातिरेकत्वं व्यतिरेकः' इति किम्मूलम्?

शब्दार्थयोः प्रथमं शब्दस्य बुद्धिविषयत्वाच्छब्दालंकारेषु वक्तव्येषु शब्दार्थालंकारस्यापि पुनरुक्तवदाभासस्य चिरंतनैः शब्दालंकारमध्ये लक्षितत्वात्प्रथमं तमेवाह—

**आपाततो यदर्थस्य पौनरुक्त्येन भासनम्।**

**पुनरुक्तवदाभासः स भिन्नाकारशब्दगः ॥ २ ॥**

**भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः।**

**जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः ॥**

अत्र भुजङ्गकुण्डल्यादिशब्दानामापातमात्रेण सर्पाद्यर्थतया पौनरुक्त्यप्रतिभासनम्। पर्यवसाने तु भुजङ्गरूपं कुण्डलं विद्यते यस्येत्याद्यन्यार्थत्वम्। 'पायादव्यात्' इत्यत्र क्रियागतोऽयमलंकारः, 'पायात्' इत्यस्य 'अपायात्' इत्यत्र पर्यवसानात्। 'भुजङ्गकुण्डली' इति शब्दयोः प्रथमस्यैव परिवृत्तिसहत्वम्। 'हरः शिवः' इति द्वितीयस्यैव। 'शशिशुभ्रांशु' इति द्वयोरपि। 'भाति सदानत्यागः' इति न द्वयोरपि इति शब्दपरिवृत्तिसहत्वासहत्वाभ्यामस्योभयालंकारत्वम्।

---

## विवृतिः

शब्दालंकारनिरूपणस्य प्राथमिकत्वे हेतुं दर्शयंस्तत्रापि पुनरुक्तवदाभासनिः रूपणस्य प्राथमिकत्वे हेतुमाह—**शब्दार्थयोरिति**। वक्तव्येषु निरूपणयोग्येषु। शब्दार्थालंकारस्यापीत्यनेन शब्दार्थोभयशक्तिमूलध्वनिवत्पश्चान्निरूपणयोग्यत्वमस्य सूचितम्। चिरंतनैरित्यादि शब्दालंकारप्रकरणे निरूप्यत्वे हेतुः। तत्रापि प्रथमनिरूपणे सूचीकटाहन्याय एव हेतुद्रष्टव्यः ॥ **आपातत इति**। तात्पर्यानवधारणदशायामित्यर्थः ॥ भिन्नाकारशब्दग इति यमकव्यावृत्त्यर्थम्। स च शब्दस्य भङ्गाभङ्गाभ्यां द्विविधः। शब्दभङ्गे यथा—'भाति सदानत्यागः स्थिरतायामवनितलतिलकः' इति। अत्रापाततो दानत्यागशब्दौ पुनरुक्तौ। पर्यवसाने तु सदा अनत्या प्रणतिराहित्येन भाति। स्थिरतायामगः पर्वत इत्यर्थः ॥

शब्दाभङ्गे उदाहरति—**भुजङ्गेति**। शशिशुभ्रांशुशीतगुशब्दानां पौनरुक्त्यमापाततः। पर्यवसाने तु शशिनः कर्पूरस्येव शुभ्रा अंशवो यस्य तादृशः शीतगुश्चन्द्रो यत्र स इत्यर्थः। यद्वा शशी शुभ्रांशुः शीतकिरण इत्यर्थः। सदा अपायादित्यपि शब्दभङ्गः। चेतोहरः मनोरमः। अस्योभयालंकारत्वमुपपादयति—**भुजङ्गकुण्डलीति** भुजङ्गावतंस इति। द्वितीयपरिवर्तने पौनरुक्त्यमेव नास्तीति भावः। एवमग्रेऽपि यथायथं बोध्यम्। द्वयोरपीत्यादिना शीतगुरिति। तृतीयस्यापीति। लभ्यते। **न द्वयोरपीति**।

द्वयोरपि न परिवृत्तिसहत्वमित्यर्थः। अस्य पुनरुक्तवदाभासस्यो **भयालंकारत्वं** शब्दार्थोभयालंकारत्वम्। शब्दपरिवर्तने तदर्थकशब्दान्तरादानेऽपि वैचित्र्यसंभवादर्थान्वयव्यतिरेकानुविधायित्वादर्थालंकारत्वम्, यत्र तु शब्दपरिवर्तने वैचित्र्यं न संभवति तत्र शब्दान्वयव्यतिरेकानुविधायित्वाच्छब्दालंकारत्वमिति भावः ॥

## विवृतिपूर्तिः

**पुनरिति**। पुनरुक्तस्येव पुनरुक्तवद् आभासो ज्ञानमिति पुनरुक्तवदाभासः ॥

**भिन्नेति**। भिन्नाकारो विजायतीयानुपूर्वीको यः शब्दस्तद्गः ॥

**भातीति**। संपूर्णश्लोकस्तु 'अरिवधदेहशरीरः सहसा रथिसूततुरगपादातः। भाति सदानत्यागः स्थिरतायामवनितलतिलकः ॥' इति। अवनितलतिलको राजा भाति। कया। सदानत्या सतां विषये आनत्या अतिनम्रभावेन। यद्वा सदा सर्वकाले अनत्या अरिषु अनम्रतया। कीदृशः। अरिवधदा शत्रुसंहारिणी ईहा चेष्टा येषां तादृशा ये शरिणः शरविशिष्टभटाः तानीरयति प्रेरयतीति अरिवधदेहशरीरः। सहसा शीघ्रं रथिभिः सुष्ठु ऊताः संबद्धास्तुरगा अश्वाः पादाताः पदातिकाश्च यस्य सः। स्थिरतायामगः। पर्वततुल्य इत्यर्थः। यथा वा—'अम्बरेण गगनेन संवृतं जीवनैः शिरसि वारिभिः श्रितम्। भोगिभिश्च भुजगैर्विभूषितं शंकरं शुभकरं भजामहे ॥' इति। अत्र अम्बरेण गगनेनेति, जीवनैर्वारिभिरिति, भोगिभिर्भुजगैरिति, शंकरं शुभकरमिति आमुखे पौनरुक्त्यं पर्यवसानेऽन्यार्थकत्वात्तदभावः ॥

## विज्ञप्रिया

तत्रादौ पुनरुक्तवदाभासस्य शब्दार्थोभयालङ्कारत्वे शब्दालङ्कारतया कथनबीजं प्रदर्शयंस्तमाह—शब्दालङ्कारस्यापीति।

**आपाततो यदर्थस्येति**। आपातत एव न तु प्रणिधानेऽप्यर्थपौनरुक्त्यम्। भिन्नाकारशब्दत्वेन पौनरुक्त्यप्रसक्तिस्तु नास्त्येव।

**भुजङ्गकुण्डलीति**। शिवो जगन्त्यपि सदाऽपायादव्याद् अवतु। कीदृशः भुजङ्गरूपकुण्डलवान्; तथा व्यक्तेन शशिनः शुभ्रांशुना शीतः शीतलः गौर्वृषः यस्य तादृशः। चेतोहारः मनोहरः।

अपयादित्यत्र **पर्य्यवसानादिति**। प्रश्लिष्टाकारप्रतिसन्धानात् तत्र पर्य्यवसानम्।

**प्रथमस्यैवेति**। सर्पकुण्डलीत्युक्तेऽपि पौनरुक्त्यस्य भानात्। **द्वितीयस्यैवेति**। परिवृत्तिसहत्वमित्यन्वयः। मृडो भव इत्युक्तावपि तथात्वात्। द्वयोरपीति। परिवृत्तिसहत्वमित्यन्वयः। चन्द्रशीतांशुपददानेऽपि तथात्वात्।

भातीति। भाति सदानत्यागः स्थिरतायामिति काव्यप्रकाशोक्त्यैकदेशप्रदर्शनमिदम्। तत्र भवान् सदा अनत्या परनतिराहित्येन भातीति। स्थिरतायामगः पर्वतश्चेत्यर्थः। तत्र दानत्यागपदपौनरुक्त्यावभासः। अत्र न द्वयोरपि परिवृत्तिसहत्वम्।

## लोचन

सम्प्रतीत्यवतार्य्य तद्भेदानाह—**शब्दार्थयोरिति**। आह लक्षयतीत्यर्थः।

आपाततः पौनरुक्त्यावभासनं, पुनरुक्तिवत् प्रत्ययः, पर्य्यवसाने तु न तथा। अतः पुनरुक्तवदाभास इत्यर्थवन्नामालङ्कारः। भिन्नाकारशब्दग इत्यनेन यमकव्यवच्छेदः। अत्र "नवपलाशपलाशवनं पुरः" इत्यादावपि आपाततः पौनरुक्त्यावभासनं; किन्तु तदेकरूपशब्दगतम्।

कुण्डली सर्पः, कुण्डलवांश्च। शशिशुभ्रांशुशीतगुशब्दास्त्रय एव आपाततश्चन्द्रार्थाः। पर्य्यवसाने तु शशिनः शुभ्रा उज्ज्वला येंऽशवः तद्वत् शीता गावः कान्तयो यस्य इति। अपायात् अपायतः अव्यात् रक्षतात्। हरः सदाशिवः मनोहरश्च। अत्र पयादिति पाधातोः, अव्यादिति अवधातोः रक्षणार्थस्य लिङन्तत्वे पौनरुक्त्यावभासः। पर्य्यवसाने तु सन्धिहेतुकं लुप्तमकारमादायापायशब्दस्य सुबन्तत्वमित्यर्थः।

अस्य च शब्दार्थालङ्कारत्वे हेतुमाह—**भुजङ्गेति**। परिवृत्तिसहत्वम्; अहि—कुण्डली, सर्पकुण्डलीत्या-द्युक्तावपि पौनरुक्त्यावभासता। तेनात्र कुण्डलीति पदस्य न परिवृत्तिसहत्वम्। एवं 'हरः शिवः' इत्यादावपि बोद्धव्यम्।

तृतीयादौ च दानत्यागाभ्यां सह वर्त्तते इति पौनरुक्त्यावभासः। सदा सर्वदा अनत्या, अनमनेन, अगः पर्वत इति पर्य्यवसानम्। न द्वयोर्दानत्यागयोः। परिवृत्तिसहत्वासहत्वाभ्यां क्वचित् परिवृत्तिसहत्वादर्थालङ्कारत्वं, क्वचित्तदसहत्वाच्छब्दालङ्कारत्वं, दोषगुणालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेरन्वयव्यतिरेकाभ्यां नियमनादि-त्यर्थः।

## कुसुमप्रतिमा

प्रथमं शब्दलङ्काराणां लक्षणकरणे युक्तिं प्रदर्शयन् तत्रापि शब्दार्थोभयालङ्काररूपस्य पुनरुक्तवदाभा-सस्य सर्वप्रथमं लक्षणकरणे युक्तिं प्रदर्शयति शब्देति। शब्दार्थयोर्मध्ये। प्रथममर्थज्ञानात पूर्वम्। शब्दज्ञानान-न्तरमेव तत्सङ्केतग्रहद्वारा अर्थस्य ज्ञायमानत्वादिति भावः। प्रथमं शब्दालङ्कारेषु वक्तव्येष्वित्यर्थः। शब्दार्थालङ्कारस्य शब्दार्थोभयनिरूपितालङ्कारस्य। चितन्तनैः प्राचीनैः। लक्षिततत्वात् कृतलक्षणकत्वात्। प्राची-नानां रीतिमनुसरतैव पुनरुक्तवदाभासस्य प्रथमं लक्षणं कृतम्, अन्यथा अस्योभयालङ्कारत्वात्। प्राचीनानां रीति-मनुसरतैव पुनरुक्तवदाभासस्य प्रथमं लक्षणं कृतम्, अन्यथा अस्योभयालङ्कारत्वात् काव्यप्रकाशकारवदुभयालङ्कारमध्य लक्षणं क्रियेतेति भावः।

आपातत इति। आपाततः श्रवणमात्रेणैव, न तु पर्य्यालोचनात् परमपीति भावः, अर्थस्य अभिधेयसा यत् पौनरुक्त्येन पुनरुक्तत्वप्रकारेण अवभासनं प्रतीतिः भिन्नाकारशब्दगः विभिन्नाकृतिविशिष्टशब्दवर्त्ती, स पुनरुक्त-वदाभासो नाम अलङ्कार उच्यत इति शेषः। परत्र पुनरुक्तेति भावे क्तः। तेन अर्थस्य पुनरुक्तवत् पुनरुक्तत्ववत् आभासात् आपाततः प्रतीतेरेवास्य पुनरुक्तवदाभास इति संज्ञा। अत्र भिन्नाकारशब्दग इत्यभिधानात् भिन्नाकार-शब्दगतत्वे पुनरुक्तवदाभासः, अभिन्नाकारशब्दगतत्वे तु "स सुरभिं सुरभिं सुमनोभरैः" इत्यादौ यमकमेवेति बोध्यम्।

शब्दस्य अभङ्गभङ्गाभ्यामयं द्विविधः; तत्र प्रथमं शब्दस्य अभङ्गे उदाहरणं भुजङ्गेति। भुजङ्ग एव कुण्डलमस्यास्तीति भुजङ्गकुण्डली, व्यक्तः प्रकाशितः शशिवत् कर्पूरवत् शुभ्रांशु श्वेतकिरणः शीतगुः शीतरश्मि-श्चन्द्रो यस्मिन् सः 'कर्पूरश्चन्द्रसंज्ञकः' इत्यमरः, तथा चेतोहरो मनोहरः, शिवो महादेवः, सदा अपायाद्विपदः न केवलं मां जगन्त्यपि भुवनान्यपि अव्यात् रक्ष्यात् इत्याशीर्विभक्तिः।

अत्र भुजङ्गकुण्डलीति सर्पवाचकयोः शब्दयोः, शशि-शुभ्रांशु-शीतगुरिति चन्द्रवाचकानां शब्दानाम्, पायादव्यादिति रक्षार्थकक्रिययोश्च श्रवणमात्रेणैव तत्तदर्थस्य पुनरुक्ततया प्रतीतेः, पर्य्यालोचने तु उक्तव्याख्या-नरुपभेदात् पुनरुक्तवदाभासः।

उक्ते लक्ष्ये लक्षणं सङ्गमयति अत्रेति । प्रथमादिपदेन शशिशब्दप्रभृतीनां द्वितीयादिपदेन च चन्द्राद्यर्थानां ग्रहणम् । आपातमात्रेण श्रुतावुपस्थितिमात्रेण । पौनरुक्त्यप्रतिभासनं पुनरुक्ततया प्रतीतिः । पर्य्यवसाने उपस्थितेः परन्तु अर्थानुसन्धान्वेलायान्वित्यर्थः । तृतीयादिपदेन कर्पूराद्यन्यार्थानां ग्रहणम् । अन्यार्थत्वमिति । तत्तु व्याख्यायामेव प्रदर्शितम् ।

"भिन्नाकारशब्दगः" इत्यत्र शब्दपदस्य सामान्यसुखप्रवृत्ततया अर्थबोधकशब्दमात्रपरत्वादाह पायादिति । क्रियागतः क्रियावाचकशब्दार्थनिरूपितः । नन्वस्तु क्रियागतः, तथात्वेऽपि कथमनयोरर्थभेद इत्याह पायादिति । इत्यस्य शब्दस्य । इत्यत्र रूपे । पर्य्यवसनात् सन्धौ लुप्तस्य अकारस्य प्रश्लेषकल्पनेन परिणतत्वात्, अन्यार्थत्वमित्यनुषज्यते ।

ननु कथमस्य शब्दार्थोभयालङ्कारत्वमित्याह भुजङ्गेति । प्रथमस्यैव भुजङ्गशब्दस्यैव । एवशब्देन द्वितीयस्य व्यवच्छेदः । परिवृत्तिमहत्त्वं सर्पाथकशब्दान्तरप्रयोगेण परिवर्त्तनेऽपि प्रकृतपुनरुक्तवदाभासघटकत्वम् । अत्रेदमवधेयम्—अन्वयव्यतरेकाभ्यामेव गुणदोषालङ्काराणां शाब्दत्वस्य आर्थत्वस्य तदुभयरूपस्वस्य च व्यवस्था, अन्ययथाशब्दार्थयोर्नित्यसुखभूतया सर्व त्रैव सर्वेषामेव शब्दार्थत्वसङ्करापत्तेस्तङ्गेदव्यवस्थैव न स्यात् । तथा च 'भुजङ्गकुण्डली इत्यत्र भुजङ्गशब्दस्थाने पन्नगशब्दोपादानेऽपि पुनरुक्तवदाभासस्य सम्भव एव, सर्पभिन्नार्थकसुवर्णादिशब्दोपादाने तु तस्य न प्रसक्तिरपि; इत्यतः सर्परूपार्थसत्त्वे पुनरुक्तवदाभाससत्ता, सर्परूपार्थासत्त्वे तु पुनरुक्तवदाभासासत्ता, इत्यन्वयम्यतिरेकाभ्यां भुजङ्गेत्येशे पुनरुक्तवदाभासस्य आर्थत्वम् । कुण्डलीतिशब्दस्य तु न परिवृत्तिसहत्वम् । तथाहि कुण्डलिशब्दस्थाने सपार्थकभुजगशब्दोपादाने सर्पभिन्नार्थकभूषणादिशब्दोपादाने वा पुनरुक्तवदाभाससस्यसम्भव एव, आद्ये पर्य्यवसानेऽप्यर्थभेदासम्भवात् द्वितीये आपाततोऽपि पौनरुक्त्यावभासनाभावात् । एवञ्च कुण्डलिशब्दसत्त्वे पुनरुक्तवदाभाससत्ता कुण्डलिशब्दासत्त्वेतु पुनरुक्तवदाभासासत्तेति कुण्डलीत्यंशे पुनरुक्तवदादाभासस्य शाब्दत्वम् । तेन चास्य शब्दार्थोभयघटितत्वात्तदुभयालङ्कारत्वम् । एवमेवोत्तरत्रापि पर्य्यालोचनीयम् ।

द्वितीयस्यैव शिवशब्दस्यैव परिवृत्तिसहत्त्वमित्यनुषङ्गः, न तु हर इत्यस्याप्तीत्यर्थः । तेन शिव इत्यंशे आर्थत्वं हर इत्यंशे च शाब्दत्वमिति भावः । द्वयोः शब्दयोः अपिशब्दात् तृतीयस्य शीतगुशब्द्स्य च परिवृत्तिसहत्वमित्यन्वयः । तेन द्वितीयपादे केवलार्थत्वमेवेत्याशयः । द्वयोरपि दानत्यागशब्दयोर्नपरिवृत्तिसहत्वमिति सम्बन्धः । तेनात्र केवलशाब्दत्वमेवेत्यभिप्रायः । इति हेतोः शब्दानां परिवृत्तेः परिवर्त्तनस्य सहत्वसहत्वञ्च ताभ्याम्, अस्य पुनरुक्तवदाभासस्य ।

भातीति श्लोकसमुदायो यथा काव्यप्रकाशे—

**"अरिवधदेहशरीरः सहसारथिमूततुरगपादातः ।**
**भाति सदानत्यागः स्थिरतायाभवनितलतिलकः ॥"**

इदमेव च शब्दस्य भङ्गे उदाहरणम् ।

अस्यार्थः—न विद्यते रथो रथारोहो सूतः सारथिः तुरगोऽश्वः पादातं पदातिसमूहश्च यस्य सः अरथिसूततुरगपादातोऽपि सन्, सहसा शीघ्रमेव, अरीणां वधदा विनाशविधायिनी ईहा चेष्टा यस्मिन् तदरिवधदेहं यस्य स तथोक्तः स्थिरतायाम् अगः पर्वत इव, तथा अवनितलतिलकश्च भवान्, सत्सु साधुजनेषु आनत्या विशेषनस्रभावेन विद्यमानः सन् भाति राजते ।

अत्र देहशरीरयोः सारथिसूतयोः दानत्यागयोश्च शब्दयोरापाततोऽर्थस्य पुनरुक्ततया प्रतीतेः पर्य्यवसाने तु व्याख्यातरूपभेदात् पुनरुक्तवदाभासः। अत्र देह-सारथि दानशब्दघटने शब्दान्तराणां भङ्गः।

## लक्ष्मी

(क) शब्दालङ्कारनिरूपणस्य प्राथमिकत्वे युक्तिमुपपादयन् तत्रापि शब्दार्थोभलङ्काररूपस्य पुनरुक्तवदाभासस्य प्राथम्येन लक्षणविधाने युक्तिमुपपादयति—शब्दार्थयोरिति। शब्दार्थयोर्मध्ये प्रथमार्थबोधात्पूर्वम्। शब्दप्रतिपत्त्यनन्तरमेव तत्सङ्केतग्रहद्वारा अर्थस्यावगम्यमानत्वादित्याशयः। वक्तव्येषु निरूपणयोग्येषु। शब्दार्थालङ्कारस्य शब्दार्थोभयालङ्कारस्य शब्दार्थोभयशक्तिमूलध्वनेरिव पश्चान्निरूपणीयस्येतिशेषः। चिरन्तनैः प्राचीनैराचार्यैरितिशेषः। शब्दालङ्कारा अनुप्रासादयस्तेषां मध्ये। लक्षितत्वात् 'अलङ्कारसर्वस्वादिषु' 'आमुखावभासनं पुनरुक्तवदाभासः' इत्यादिना कृतलक्षणकत्वादित्यर्थः चिरन्तनानां रीतिमनुसृत्यैव पुनरुक्तवदाभासस्य सूचीकटाहन्यायेन प्रथमं लक्षणमभिहितम्, अन्यथा अस्योभयालङ्कारत्वात् काव्यप्रकाशकृद्वदुभयालङ्कारान्तर्मध्य एव लक्षणं युक्तं स्यादित्याशयः।

आपतत इति। आपाततः श्रवणमात्रेणैव झटिति निर्धारणात् न तु तात्पर्यालोचनात् परमपीतिभावः, अर्थस्य अभिधेयस्य यत्पौनरुक्त्येन पुनरुक्ततया भासनं प्रतीतिः, भिन्नाकारशब्दगः भिन्नो विजातीयः आकारः स्वरूपं यस्य सोऽसौ शब्दस्तं गच्छतीति तथोक्तः, गमेर्डः, सःपुनरुक्तवदाभासो नाम अलङ्कार उच्यत इति शेषः। एतेन अर्थान्तरसङ्क्रमितवाच्ये 'कदली कदली' 'यस्य मित्राणि मित्राणि' इत्यादौ एतस्यावस्थानाभावः सूचितः। परे तु भिन्नाकारशब्दग इत्यनेन 'स सुरभिं सुरभिं' 'नयने तस्यैव नयने च' इति यमकलाटानुप्रासयोरभिन्नाकारशब्दगत्वान्नातिव्याप्तिरित्याहुः। एवं च विभिन्नरूपयोर्वस्तुनो भिन्नार्थकयोरपि शब्दयोरापाततः एकार्थकतया प्रतीतिः पुनरुक्तवदाभास इत्यर्थः। पुनरुक्तस्येव पुनरुक्तवत् आभासो ज्ञानमितिपुनरुक्तवदाभासपदव्युत्पत्तिर्ज्ञेया।

स चायं द्विविधः शब्दनिष्ठः शब्दार्थनिष्ठश्च, तत्रापि शब्दनिष्ठः अभङ्गशब्दनिष्ठः सभङ्गशब्दनिष्ठश्च तत्र शब्दस्य अभङ्गे प्रथममुदाहरति—भुजङ्गेति। भुजङ्गावेव कुण्डले तेऽस्य स्तः इति तथोक्तः। यद्वा भुजङ्गाभ्यां कुण्डली—कर्णाभरणवान कङ्कणवान् वेति तादृशः, 'कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च' इति मेदिनी, व्यक्तः प्रकाशितः, शशिनश्चन्द्रमस इव शुभ्राः श्वेता अंशवः किरणा यस्य तस्येव कर्पूरस्येव शीता गावो रश्मिर्यस्य स तथोक्तश्चन्द्रः, 'कर्पूरश्चन्द्रसंज्ञक' इत्यमरः, 'गौः स्वर्गे च वलीवर्द्दे रश्मौ च कुलिशे पुमान्' इति मेदिनी, तथा चेतोहरो मनोहरः, शिवो महेश्वरः, सदा अपायाद्विध्मात् न केवलं मामेव जगन्त्यपि सर्वाणि विश्वान्यपि अव्यात् रक्ष्यात् इत्यशीर्लिङि रूपम्।

अत्र हि 'भुजङ्गकुण्डलीतिसर्पार्थकयोः शब्दयोः, शशिशुभ्रांशुशीतगुरितिचन्द्रार्थकानां शब्दानाम्, हरशिवयोः महादेवार्थकयोः शब्दयोः, पायादव्यादितिरक्षणार्थकक्रिययोश्च श्रुतिमात्रेणैव तत्तदर्थस्य पुनरुक्तत्वेन प्रतीतेः पर्यवसाने तु उक्तव्याख्यानरूपभिन्नत्वेन पुनरुक्तवदाभासः।

प्रदर्शितोदाहरणे लक्षणं संयोजयति—अत्रेति। प्रथमादिशब्देन 'शशिशुभ्रांशुशीतगुहरशिव' शब्दानाम् द्वितीयादिशब्देन च चन्द्राद्यर्थानां परिग्रहः। आपातमात्रेण श्रुतावुपस्थितमात्रेण. सर्पाद्यर्थकतया सर्वचन्द्रमहेश्वरार्थकतया पौनरुक्त्यप्रतिभासनं पुनरुक्ततायाः प्रतीतिः। पर्यवसाने निश्चयावसरे तु अर्थानुसन्धानसमये त्वित्यर्थः। तृतीयादिशब्देन कर्पूराद्यन्यार्थानां परिग्रहो बोध्यः।

'भिन्नाकारशब्दगः' इत्यत्र शब्दपदस्य सामान्यरूपेणैव प्रवृत्तया अर्थप्रत्यायकशब्दमात्रपरत्वादाह—पायादिति। क्रियागतः क्रियाबोधकशब्दार्थनिरूपितः। क्रियागतत्वेऽपि कथमनयोरर्थभेद इत्याशङ्कायामाह—मायादिति 'अपायात्' इत्यस्येति। 'सदा' इत्यत्र सन्धिनाकारश्लेषाङ्गीकारादिति शेषः। पर्यवसानात् अन्तस्तात्पर्यावधारणात्, अन्यार्थत्वमितिपूर्वतोऽनुषञ्जनीयम्।

अस्योभयामङ्कारत्वं कथमित्युपपादयति—भुजङ्गकुण्डलीति। भुजङ्गकुण्डलीतिशब्दयो'र्मध्ये' इति शेषः, प्रथमस्यैव भुजङ्गशब्दस्यैव न तु कुण्डलीतिशब्दस्य एवेन तद्व्युदासः। परिवृत्तिसहत्वं सर्पार्थकपर्यायशब्दोपादानेऽपि प्रकृतोपयोगित्वम्।

इदमत्रानुसन्धेयम्—शब्दार्थयोर्नित्यसम्बन्धतया सर्वत्रैव सर्वेषामेव शाब्दत्वार्थत्वसाङ्कर्यत्वापत्तिवारणाय गुणदोषालङ्काराणां शाब्दत्वस्य आर्थत्वस्य शब्दार्थोभयरूपत्वस्य च अन्वयव्यतिरेकाभ्यामेव तद्भेदव्यवस्था। एवं च 'भुजङ्गकुण्डली' इत्यत्र भुजङ्गशब्दस्थाने सर्पशब्दस्थापितेऽपि पुनरुक्तवदाभासस्य स्थितिः स्यादेव, सर्वातिरिक्तार्थसुवर्णादिशब्दनिक्षेपे तु न तस्य प्राप्तिरपि तथा च सर्परूपार्थोपलम्भे पुनरुक्तवदाभासस्य विद्यमानत्वम्, सर्परूपार्थाविद्यमाने तु पुनरुक्तवदाभासाविद्यमानत्वम् इत्यन्वयव्यतिरेकाभ्यां भुजङ्ग इत्यत्र पुनरुक्तवदाभासस्य आर्थत्वम्। कुण्डलीशब्दस्य स्थाने सर्पेतरार्थकभूषणादिशब्दस्थापिते सर्पार्थकपन्नगशब्दनिहिते वा एकत्र आपाततोऽपि पौनरुक्त्याऽवभासमानाभावेन अपरत्र पर्यवसानेऽप्यर्थभेदाभावेन पुनरुक्तवदाभासस्य सम्भव एव नेत्यतः कुण्डलीतिशब्दस्य न परिवृत्तिसहत्वम्। अत्र कुण्डलीशब्दस्य विद्यमानत्वे पुनरुक्तवदाभासस्य विद्यमानत्वम्, तदविद्यमाने तु पुनरुक्तवदाभासस्याविद्यमानत्वमितिकुण्डलीत्यंशे पुनरुक्तवदाभासस्य शाब्दत्वम् तेन चास्य शब्दार्थोभयसंवलितत्वादुभयालङ्कारत्वम्। एवमग्रेऽप्यनुसन्धेयम्।

द्वितीयस्यैव शिवशब्दस्यैव, परिवृत्तिसहत्वमिति पूर्वत एवानु ञ्जनीयम्, न तु हर इति प्रथमस्यापीत्यर्थः। अत एव हर इत्यत्रार्थत्वम्, शिव इत्यत्र शाब्दत्वमित्यभिप्रायः। द्वयोः शशिशुभ्रांशुशब्दयोः अपिशब्दाच्छीतगुशब्दस्य तृतीयस्यापि परिवृत्तिसहत्वमित्यनुषङ्गेन सम्बन्धः, तेन द्वितीयपादे केवलमार्थत्वमितिभावः। एवं शब्दार्थोभयनिष्ठोदाहरणप्रदर्शनेनैवान्यान्यपि पृथक्पृथगुदाहरणानि बोध्यानीत्याशयेनाह—भातीति। द्वयोरपि दानत्यागशब्दयोर्न परिवृत्तिसहत्वमित्यन्वयः। एतेनात्र केवलं शाब्दत्वमेवेत्याशयः। इति हेतोः शब्दानां परिवर्त्तनस्य सहत्वमसहत्वञ्च ताभ्यां तथोक्ताभ्याम्। अस्य पुनरुक्तवदाभासस्य, उभयालङ्कारत्वं शब्दार्थोभयालङ्कारत्वम्।

'भातति समग्रश्लोको यथा काव्यप्रकाशे—

**'अरिवधदेहशरीरः सहसारथिसूततुरगपादातः।**

**भाति सदानत्यागः स्थिरतायामवनितलतिलकः॥'**

अस्यार्थः—सहसा शीघ्रमेव रथिभिः रथारोहिभिः सुष्ठु उताः सम्बद्धाः तुरगा अश्वाः पादाताः पदातिकाश्च यस्य स तथोक्तः, अरीणां शत्रूणां वधदा विनाशिनी ईहा चेष्टा येषां तादृशा ये शरिणः शरयुक्ता योधास्तान् ईरयति प्रेरयतीति अरिवधदेहशरीरः, स्थिरतायाम् अगः पर्वततुल्य इत्यर्थः तथा अवनितलको भूतलभूषणभूतो राजा भवान् सदा सर्वस्मिन् समये नत्या नम्रभावेन अथवा सदानत्या सती विषये आनत्या अतिनम्रभावेन सन्तोषोत्पादनेन वा, यद्वा सदा सर्वदा अनत्या क्षुद्रेषु अनम्रतया विद्यमानः सन् भाति शोभते। आर्याच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव।

अत्र देहशरीरशब्दयोः सारथिसूतशब्दयोः दानत्यागशब्दयोश्चापाततोऽर्थस्य पौनरूक्त्येन प्रतीतेः, अन्ततस्तात्पर्यालोचने तु व्याख्यातरूपभेदात् पुनरुक्तवदाभासः। अत्रेदं तत्त्वम्—देहशरीर इति द्वावपि शब्दौ सार्थकौ सभङ्गौ च। सारथिसूत इति द्वयोराद्यो निरर्थकः अन्त्यश्च सार्थकः उभावपि सभङ्गौ। दानत्याग इति उभावपि निरर्थकौ सभङ्गौ चेति। शब्दस्य सार्थकत्वं च विवक्षितार्थकत्वम्, निरर्थकत्वं तु विवक्षितार्थाभाववत्वमित्यन्यत्र विस्तरः।

एवमल्पप्रभेदं पुनरुक्तवदाभासमुपपाद्य शब्दालङ्कारेष्वतिप्रसिद्धतया रसानुगुण्यतया च प्रथममनुप्रासमेव सामान्येनोपपादयति—अनुप्रास इति। स्वरस्याचः प्रत्याहारस्य न तु निषादादेः, वैषम्ये विजातीयत्वे सत्यपि अपिना साम्ये सत्यपि च।

**'अपिः सम्भावनाप्रश्नशङ्कागर्हासमुच्चये।**

**तथा युक्तपदार्थे च कामचारक्रियासु च॥' इति विश्वः,**

यत् शब्दसाम्यं शब्दपदं व्यञ्जनपरं तथा च व्यञ्जनवर्णमात्रसादृश्यमित्यर्थः सोऽनुप्रासस्तदाख्यः शब्दालङ्कारः। साम्यं चात्र समानश्रुतिमत्वम्। लक्षणं यमकादभेदं चानुपदमेव वृत्तौ स्फुटीभविष्यति।

ननु कारिकायां 'वैषम्येऽपि स्वरस्य' इत्युक्तत्वात् शब्दपदेन केवलं व्यञ्जनमेव स्वीकृतम्, किन्तु स्वरमात्रसाम्यमपि कथं न स्वीकृतमत आह—स्वरमात्रेति। स्वरमात्रमेव सादृश्यन्तु 'हरिविष्णु' इत्यादिषु यथेकारेण केवलस्वरसाम्यन्तु न गणितम् अनुप्रासत्वेन न लक्षितम्। स्वरेण सादृश्यं न नितान्तमपेक्षितं वर्त्तते तदन्तराऽपि शब्दसादृश्यमात्रे वैचित्र्येण तत्सम्भवाद्व्यञ्जनसाम्याभावे केवलस्वरसाम्यं नानुप्रासः, वैचित्र्याभावात् सर्वत्र वैचित्र्यस्यैवालङ्कारभ्युपगमादित्याशयः। तस्मान्न तत्रानुप्रास इत्यवधेयम्।

## रुचिरा

अथ निरूपणीयसङ्गतिं दर्शयति—शब्दार्थयोरित्यादिना।

**शब्दार्थयोः। प्रथमम्। शब्दस्य। बुद्धिविषयत्वात्** बुद्धिवृत्तिविषयभूतत्वात्। **शब्दालङ्कारेषु। वक्तव्येषु** 'सत्सु' इति शेषः। शब्दार्थालङ्कारस्य शब्दार्थोभयालङ्कारस्य। 'शब्दार्थोभयशक्तिमूलध्वनेरिव पश्चान्निरूपणीयस्येति' शेषः। **अपि। पुनरुक्तवदाभासस्य** पुनरुक्तमुक्तत्वोक्तं तस्य तुल्यमिति, पुनरुक्तवत् आभास प्रतीतिस्तत्स्वरूप इति यावत्। तस्य। यद्वा-पुनरुक्तं पुनरुक्तिः, तदस्यास्तीति पुनरुक्तवान्, तादृश आभासो यत्र तस्य तथोक्तस्य। **शब्दालङ्कारमध्ये** शब्दालङ्कारा अनुप्रासादयस्तेषां मध्यं तत्र। 'न निर्धारणे।' २/२/१० इति निषेधस्तु सम्बन्धाविषयक एवेति बोध्यम्। **चिरन्तनैः** 'आचार्य्यैः' इति शेषः। **लक्षितत्वात्** 'अलङ्कारसर्वस्वा'दिषु 'आमुखावभासनं पुनरुक्तवदाभासः' इत्यादिनेति शेषः। **प्रथमम्। तम्। एव आह—६२ आपातत** इत्यादिना।

६२ आपाततः झटिति निर्धारणात्। **यदर्थस्य** यस्यार्थस्य। **पौनरुक्त्येन** पुनरुक्ततया। **भासनं** प्रतीतिः। सः। 'अर्थः' इति शेषः। **भिन्नाकारशब्दगो** भिन्नो विजातीय आकारो यस्येति भिन्नाकारः, सोऽसौ शब्दस्तं गच्छतीति तथोक्तः। एतेन 'यस्य मित्राणि मित्राणि''कदली कदली' इत्यादौ एतस्यावस्थानाभावः सूचितः। **पुनरुक्तवदाभासः।** 'स्यात्' इति शेषः। अत्रायम्भावः—वस्तुतः पुनरुक्तौ पुनरुक्त्याख्यो दोषः, एकाकारतस्तूक्तौ लक्षणामूलस्य ध्वनेरवस्थानम्। एवं सति न वस्तुतया किंतु एकाकारतया यत्र पुनरुक्तिः प्रतीयते, न त्वस्त्येव, स पुनरुक्तवदाभासः। अयं च द्विविधः, शब्दनिष्ठः शब्दार्थनिष्ठश्च। तत्रापि शब्दनिष्ठः सभङ्गशब्दनिष्ठोऽभङ्गशब्द-

निष्ठश्चेति। तत्त्वं च—पर्य्यायपरिवृत्त्यसहत्वात्। आद्यो यथा—'अरिवधदेहशरीरः सहसारथिसूततुरगपादातः। भाति सदानत्यागः स्थिरतायामवनितलतिलकः ॥' इति। अत्र हि—देहशरीरादीनामापाततः पुनरुक्तिः प्रतीयते। शब्दाश्चैते सभङ्गाः। द्वितीयो यथा—'चकासत्यङ्गनारामाः कौतुकानन्दहेतवः। तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्त्तिनः ॥' इति। अत्र हि अङ्गनारामाशब्दयोः स्यर्थकतया कौतुकानन्दशब्दयोः सन्तोषार्थकतया सुमनोविबु-धशब्दयोश्च देवार्थकतयाऽऽपाततः पौनरुक्त्यं भासते। अभङ्गाश्चैते तदभङ्गशब्दनिष्ठोऽयं पुनरुक्तवदाभासः शब्दालङ्कारः। शब्दालङ्कारत्वं चैतस्य पर्य्यायपरिवृत्त्यसहत्वात्। ननु 'अङ्गनारामाः इत्यादौ अङ्गनाऽऽदिशब्दानां महिलाऽऽदिरूपपर्य्यायपरिवृत्तिसहत्वेनास्तामुभयालङ्कारत्वम्।' इति चेन्न, 'विशेषास्त्वङ्गना भीरुः' 'यत्रानन्दाश्च मोदाश्च' 'मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा।' इत्याद्युक्त्या पर्य्यायत्वानुपपत्तेः। यत्तु व्याख्यातम्—'अङ्गने आरमन्तर्यत्यङ्गनारामाः।' इति तच्चिन्त्यम्, तथाशब्दस्य सभङ्गत्वापत्तेः। अथ शब्दार्थनिष्ठो यथा—'तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः। तेजोधाममहः पृथुमनसामिन्द्रो हरिर्जिष्णुः ॥ इति'। अत्र हि 'तनुवपुः' शब्दयोः शरीरार्थकतया 'करिकुञ्जर'शब्दयोर्गजार्थकतया 'रुधिररक्त' शब्दयोः शोणितार्थकतया 'तेजोधाममहः' शब्दानां तेजोऽर्थकतया 'इन्द्रहरिजिष्णु'शब्दानां च देवराजार्थकतयाऽऽपाततः पुनरुक्तिर्भासते, तत्र 'वपुःकरिरुधिरेन्द्र' शब्दाः केवलं परिवृत्तिं सहन्ते, नतु 'तनुकुञ्जररक्तधाममहोहरि' शब्दा इति शब्दार्थोभय-निष्ठोऽयम्। इति ॥ ५५ ॥

उदाहर्त्तुमुपक्रमते—**उदाहरणं** 'यथा' इति शेषः। '**भुजङ्गकुण्डली** भुजङ्गावेव कुण्डले इति भुजङ्गकुण्डले, ते अस्य स्त इति तथोक्तः यद्वा-भुजङ्गाभ्यां कुण्डली कर्णाभरणवान् कङ्कणवान्वेति तथोक्तः। 'कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च।' इति मेदिनी। **व्यक्तशशिशुभ्रांशुशीतगुर्व्यक्तो** विख्यातोऽसौ शशिशुभ्रांशुशीतगुरिति तथोक्तः। शशिनश्चन्द्रमस इव शुभ्रा अंशवो यस्य तत शशिशुभ्रांशु, तस्येव (कर्पूरस्येव) शीता गावः किरणा यस्य स इति तथोक्तः। 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्।' इति मेदिनी। **चेतोहरः**। **शिवः** शङ्करः। **सदा**। **अपायाद्** वृजिनात्। 'भीत्रार्थानां भयहेतुः।' १/४/२५ इति पञ्चमी। **जगन्ति** सर्वाणि विश्वानीत्यर्थः। अपि न केवलं माम्। **अव्यात्**। अत्र हि 'भुजङ्गकुण्डलि' शब्दयोर्नागार्थकतया 'शशिशुभ्रांशुशीतगु' शब्दानां चन्द्रार्थतया 'हरशिव' शब्दयोः शङ्करार्थकतया 'अपायादव्यात्' इत्येतयोः शब्दयोश्च रक्षणार्थकक्रियापदतया च पुनरुक्तत्वं भासमानमपि न तथा पर्य्यवसीयतेऽवसाने इति पुनरुक्तवदाभासः। 'अपाया'दित्यन्तरा सर्वेऽभङ्गाः शब्दा एते 'कुण्डलिशीतगुहरापाय' शब्दातिरिक्तानामेव भुजङ्गादिशब्दानां पर्य्यायपरिवृत्तिसहत्वमित्यभङ्गसभङ्गशब्दार्थनि-ष्ठश्चायाम्। इति बोध्यम् ॥ ७० ॥'

तदेवाह—अत्रोदाहृते पद्ये। '**भुजङ्गकुण्डल्यादिशब्दानाम्**। आदिपदेन 'शशिशुभ्रांशुशीतगु-हरशिव' शब्दानां ग्रहणम्। **आपातमात्रेण. सर्पाद्यर्थकतया** सर्पचन्द्रशङ्करार्थकतया **पौनरुक्त्यप्रतिभासनं** पुनरुक्ततायाः प्रतीतिः। **पर्य्यवसाने** निर्धारणावसरे। तु पुनः। '**भुजङ्गरूपम्**। **कुण्डलं** कर्णाभरणं वलयो वा। **विद्यते**। **यस्य** 'स' इति शेषः। '**इत्याद्यन्यार्थकत्वात्** '**पायात्**' **इत्यस्य** 'शब्दस्य च' इति शेषः। '**अपायात्**' इत्यत्र 'सदा' इत्यत्राकार-श्लेषोररीकरणात्' इति शेषः। पर्य्यवसानादन्ततस्तात्पर्य्यावस्थानात्। **अपायादव्यात्**। **इत्यत्र**। **क्रिया गतः**। अयं पुनरुक्तवदाभास इत्यर्थः। **अलङ्कारः**। '**भुजङ्गकुण्डली**'तिशब्दयो 'र्मध्ये'इति शेषः। प्रथमस्य भुजङ्गशब्दस्ये-त्यर्थः। एव नतु 'कुण्डली'ति शब्दस्य। **परिवृत्तिसहत्वम्**। '**हरः शिवः इत्य**' 'त्रे'ति शेषः। **द्वितीयस्य** शिवशब्द-स्येत्यर्थः। एव 'परिवृत्तिसहत्वम्'इति शेषः। इत्येवम्। **शब्दपरिवृत्तिसहत्वासहत्वाभ्याम्**। अस्य 'पुनरुक्तवदाभासस्येत्यर्थः। **उभयालङ्कारत्वं** शब्दार्थालङ्कारत्वम्। एवं शब्दार्थोभयनिष्ठोदाहरणप्रदर्शनेनैवान्या-न्यपि पृथक्पृथगुदाहरणान्यवगन्तव्यानीत्यभिप्रेत्याह—'**भाति**। **सदानत्यागः**' **इति**। 'अत्रे'ति शेषः। द्वयोः 'देह-

शरीरे'त्यादिरूपयोर्द्वयोर्द्वयो'शब्दयोरिति भावः। **अपि। न।** 'परिवृत्तिसहत्वम्' इति शेषः। **इति।** 'पुनरुक्तवदाभास' इति शेषः। अत्रायम्भावः उदाहृतमिदमन्यत्र 'अरिवधदेहशरीरः सहसारथिसूततुरगपादातः। भाति सदानत्यागः स्थिरतायामवनितलतिलकः॥' इति। अरिवधदेहा चेष्टा येषां ते, अमी च शरीरिण इति तानीरयतीति तथोक्तः। सहसा **शीघ्रं** हठेनेति वा। रथिभिः सुष्ठूताः सम्बद्धास्तुरगाः पादातानि पदातिसमूहाश्च यस्य सः। स्थिरतायाम्। अगः पर्वतस्तत्सदृश इति यावत्। अवनितलस्य तिलको राजा। सदाऽऽनत्या सतामानतिः प्रणमनमिति तयेति वा। भाति॥' इत्ययमर्थः। आर्य्याछन्दस्तल्लक्षणं च प्रागुक्तम्। 'पादातं पत्तिसंहतिः।' इत्यमरः। अत्र 'देह-शरीर' शब्दयोः 'सारथि-सूत' शब्दयोः 'दान-त्याग'शब्दयोश्च परिवृत्त्यसहत्वेन सभङ्गत्वेनामुख एवैकार्थकत्वेन पर्य्यवसाने पुनर्भिन्नार्थकत्वेन सभङ्गशब्दनिष्ठः पुनरुक्तवदाभासः। इति। अथाभङ्गशब्दनिष्ठ उदाहृत एवायमस्माभिः। यथा वा-'अम्बरेण गगनेन संवृतं जीवनैः सिरसि वारिभिः श्रितम्। भोगिभिश्च मुजगैर्विभूषितं शङ्करं शुभकरं भजामहे॥' इति।

**अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्।**
**स्वरमात्रसादृश्यं तु वैचित्र्याभावान्न गणितम्।**
**रसाद्यनुगतत्वेन प्रकर्षेण न्यासोऽनुप्रासः।**
**छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा ॥ ३ ॥**

छेकश्छेकानुप्रासः। अनेकधेति स्वरूपतः क्रमतश्च। रसः सर इत्यादेः क्रमभेदेन सादृश्यं नास्यालंकारस्य विषयः। उदाहरणं मम तातपादानाम्—

**'आदाय बकुलगन्धानन्धीकुर्वन्पदे पदे भ्रमरान्।**
**अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः ॥'**

अत्र गन्धानन्धीति संयुक्तयोः, कावेरीवारीत्यसंयुक्तयोः, पावनः पवन इति व्यञ्जनानां बहूनां सकृदावृत्तिः। छेको विदग्धस्तत्प्रयोज्यत्वादेष च्छेकानुप्रासः।

---

## विवृतिः

अनुप्रासालंकारमाह—**अनुप्रास इति**। शब्दस्य वर्णपदैकदेशपदानामन्यतमस्य साम्यं सादृश्येनावर्तनम्। वर्णानां सादृश्यं च कत्वादिना एकस्थानोच्चार्यत्वेनापि। तेन वर्णत्वादिना सदृशस्य विजातीयवर्णस्यावर्तने नातिप्रसङ्गः, नापि श्रुत्यनुप्रासासंग्रहः। पदपदैकदेशयोस्तु तत्तद्व्यञ्जनघटितत्वेन छेकलाटानुप्रासयोः संग्रहाय 'वर्णसाम्यम्' इत्यनुक्त्वा 'शब्दसाम्यम्' इति कृतम्। वस्तुतस्तु पदतदेकदेशसाम्येऽपि वर्णसाम्यसंभवाच्छब्दपदं वर्णमात्रपरम्। अत एव 'वर्णसाम्यमनुप्रासः' इति काव्यप्रकाशः। 'वैषम्येऽपि' इत्यादिना साम्येऽपीति लभ्यते। एतच्च लाटानुप्रासे नियतम्। न च समस्वरपदतदेकदेशसाम्यं यमकेष्वतिव्याप्तमिति वाच्यम्। तेषां प्रकरणनियम्यतया तदतिरिक्तत्वेनास्य विशेषणात्। ननु 'वैषम्येऽपि स्वरस्य' इत्यनेन व्यञ्जनेन व्यञ्जनसाम्यमनुप्रास इति लभ्यते। स्वरमात्रसाम्यं न कथमनुप्रास इत्यत आह—**स्वरमात्रेति**। अनुप्रासपदव्युत्पत्तिमाह—**रसादीति**। तृतीयाद्वयं विशेषणे। रसाद्यनुगतः प्रकृष्टश्चेत्यर्थः। स्वाश्रयशब्दप्रकर्षणद्वारा रसादिप्रकर्षकत्वम्। तेनैव प्रकृष्टन्यास इत्येकदेशार्थमाह—**न्यास इति**। अनुप्रासस्य पञ्चप्रभेदानाह—**छेक इति**। **अनेकधेति**। स्वरूपतः क्रमतश्चेत्यर्थः॥

अस्य छेकानुप्रासस्य विषयः स्थानम्। तथा च तद्वारणायैव क्रमतश्चेत्युपात्तम्॥ **आदायेति**। अन्धीकुर्वन् मधुलोभेन अन्धवद्भ्रान्तान् कुर्वन्। पदे पदे स्थाने स्थाने। कावेरीवारिसंयोगेन पावनः पवित्रकरः॥

## विवृतिपूर्तिः

**अनुप्रास इति**। अनुशब्दोऽनुगमार्थः, प्रशब्दः प्रकर्षार्थः, आसशब्दो न्यासार्थ इति योगार्थो दर्शितः।

**छेक इति**। अथवा छेका आलयस्थाः पक्षिणस्तेषां हि प्रायो द्विर्भाषितं भवति। तेन छेकभाषितोपलक्षितोऽनुप्रासश्छेकानुप्रास इति। 'छेकस्त्रिषु विदग्धेषु गृहासक्तमृगाण्डजे' इति चवर्गादौ रभसः। अयमनुप्रासः

सजातीयाव्यवहितद्वित्रादिवर्णानामप्यावर्तने संभवति । तथा चोक्तम्—'सजातीयाव्यवहितवर्णा द्वित्रादयो यदि । आवर्तन्ते तदा केचिच्छेकानुप्रासमूचिरे ॥' इति ॥

**उदाहरणमिति** । यथा वा मदीये **दशकण्ठवधे**—'लीलालोलमरालबाललुलितव्याकोशकोशाम्बुजश्च-योतत्स्फारपरागरागललितं व्यालोलमम्भोभरम् । बिभ्राणा तरुणारुणारुणमिव प्रावारमुत्कण्ठिता यां कल्लोलभु-जच्छलेन सरयूरालीमिवालिङ्गति ॥' इति । यामयोध्याम् ॥

## विज्ञप्रिया

अनुप्रासालङ्कारमाह—**अनुप्रास** इति । **स्वरमात्रसादृश्यमिति**-मात्रपदात् व्यञ्जनसाम्यव्युदासः । तेन "के वाते सेवया देशे गेहे च लेभिरे यश" इत्यत्र नानुप्रासः । व्यञ्जनमात्रसाम्ये तु कुपितकपिकपोलेत्यादौ अनुप्रास एव । क्वचिदुभयसाम्येऽपि यथा—"धूतचूतप्रसून" इति । यथा वा—"गुणसिन्धुः सतां बन्धुस्त्वबन्धुस्त्वपरो जनः ।" केवलं स्वरमात्रसाम्यं व्युदस्तं बोध्यम् । अनुप्रासपदव्युत्पत्तिमाह—**रसाद्येति** । अनुगमश्च व्यञ्जना । अनुप्रासवि-शिष्टपदवाक्याभ्यां रसादिव्यञ्जनात् । आदिपदाद् वक्तुर्वैदग्ध्यपरिग्रहः ।

तत्र छेकानुप्रासलक्षणमाह—**छेक** इति । व्यञ्जनसङ्घत्वमत्र एकव्यञ्जनभिन्नत्वमात्रं विवक्षितम् । तेन द्वयोस्त्यादीनां च तथात्वम् ।

**अनेकधेति** । वर्णानामानुपूर्व्याश्च साम्यमित्यनेकधात्वम् । ईदृशैकधात्वं तु साम्यानुप्रासस्य विषय इत्याह—**सरो रस** इति । न चैवं वर्णैरानुपूर्व्याच्च साम्येऽनुप्रासाद् यमकाभेदप्रसक्तिरिति वाच्यम्; तत्र स्वरस्याऽपि साम्येन एतद् भेदात् ।

**आदायेति**—भ्रमराणामन्धीकरणं गन्धलोभेन तदनुसरणमात्रेण विषयाऽन्तरादर्शनम् ।

वर्णद्वयस्यापि संघपदार्थत्वेनात्र विवक्षणात्तयोरनेकवर्णानां चात्र सकृत्त्वं दर्शयति—अत्रेति । **तत्प्रयोज्य-त्वादेवेति** । तथा च छेकपदं तत्प्रयोज्ये निरूढलाक्षणिकम् । एवं च वृत्त्यनुप्रासस्यापि विदग्धप्रयोज्यत्वेऽपि तत्र रूढ्यभावात् न छेकपदप्रयोगः ।

## लोचन

**अनुप्रास** इति—स्वरवैषम्येऽपि शब्दसाम्यमित्यत्र शब्दा व्यञ्जनान्येव । स्वराणां स्वरानाधारत्वात् । तेनैषा बालायातीत्यादौ स्वरमात्रस्य असकृदावृत्तावपि व्यञ्जनवैसादृश्ये चारुत्वाभावस्य सहृदय संवेद्यत्वान्नाल-ङ्कारः । एतदेवोक्तं वृत्तौ स्वरमात्र इत्यादिना । किञ्च स्वरस्य वैषम्येऽपि इत्यनेन "कावेरी वारी"त्यादेरेतदवाह्यत्वम् । अपिशब्दात् "दर्दुरदुरध्यवसाय सायम्" इत्यादौ दुरशब्दसाम्ये स्वरमाम्येप्यनुप्रासत्वम् ।'नवपलाशपलाशवनं पुर" इत्यादौ यमकस्यापवादत्वेनानुप्रासबाधकता । दर्दुरदुर इत्यादौ प्रथमदुरशब्ददकारस्य मूर्ध्नि रेफयोगान्न यमकम् । दुरध्यवसाय सायमित्यादौ चानुस्वारयोगादनुप्रास एव न यमकम् । "आकर्ण्य कर्णमधुराणी"त्यादौ च प्रथमकर्ण-शब्दस्य स्वतः स्वरायोगेऽपि द्वितीयकर्णशब्दनिष्ठस्वभावात् स्वरवैषम्यम् । नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृ-तेत्यादौ नकाररेफयुक्तदकारयोर्दूरावस्थानादनुप्रासाभावबुद्धिर्न कार्या, संस्कारविच्छेदाभावाद् यदुक्तं—"पूर्वानुभवसंस्कारबोधनीयेत्यदूरते"तिं ।

तद् भेदानाह। सङ्घशब्देनात्र नैकस्य व्यञ्जनस्यासकृदेकवारमनेकधा स्वरूपतः क्रमश्च। एतदेवोक्तं वृत्तावनेकधेत्यादिना।

रस रस इत्यत्र रसयोः स्वरूपत एव साम्यं, न तु क्रमतः। कावेरी वारीत्यादौ वरयोरिव क्रमतोऽपि।

संयुक्तयोर्नकारधकारयोः। छेक इत्यादिना पूर्वप्रसिद्धस्य नाम्नः कथंञ्चिन्निरुक्तिः।

**अनेकस्येति**। अनेकस्यार्थाद् व्यञ्जनस्य एकधा साम्यम् एकः। अनेकधापि वाऽसकृत् साम्यं द्वितीयः, असकृदित्यनेन छेकानुप्रासव्यवच्छेदः। एकस्य व्यञ्जनस्य सकृदसकृद् वा साम्यमिति द्वाविति चतुर्द्धा वृत्त्यनुप्रासः।

## कुसुमप्रतिमा

शब्दालङ्कारेष्वपि अतिप्रसिद्धतया प्रथममनुपासमेव सामान्येन लक्षयति अन्विति। स्वरस्य वैषम्ये सत्यपि अपिशब्दात् साम्ये च यत् शब्दसाम्यं व्यञ्जनवर्णमात्रसादृश्यम्, सोऽनुप्रास इत्यर्थः। अत्र एकस्थानोच्चार्य्यत्वरूप साम्यं ग्राह्यम्। एकस्थानोच्चार्य्यत्वस्य केषाञ्चिद्वञ्जनानाम् एकविधाकृतिमत्त्व न केषाञ्चिच्च एकतालव्यत्वादिना सम्भवति। तेन स्वरस्य साम्ये वैषम्ये वा एकस्थानोच्चार्य्यव्यञ्जनावृत्तिरनुप्रास इति फलितम्। तत्र एकतालव्यादिव्यञ्जनावृत्तो श्रुत्यनुप्रासः, एकविषाकृतिमद्वयञ्जनावृतौ तु अन्ये अनुप्रासा इति सर्वत्र लक्षणसङ्गतिः। एवम् अन्तयानुप्रासलाटानुप्रासयोः स्वरस्य साम्यमेवावश्यकम्, अन्वेषान्तु न तथा।

न चैवं स्वरव्यञ्जनयोरुभयोरेव साम्ये यमकेऽप्यस्यलक्षणस्य सङ्गतेरतिव्याप्तिरिति वाच्यम्, सामान्यविशेषन्यायेनास यमकेतरविषयत्वकल्पनात् तत्रानुप्रासः सामान्यं यमकन्तु विशेष इति।

ननु कारिकायां स्वरस्य वैषम्येऽपीत्यभिधानात् शब्दपदेन व्यञ्जनमात्रमेव, गृहीतम्, किन्तु केवलस्वराणामपि तद्वदेव साम्यसम्भवे कथं तन्न गृहीतमित्याह स्वरेति। स्वरमात्रसादृश्यन्तु केवलस्वराणामेव साम्यन्तु। न गणितम् अनुप्रासत्वेन लक्षितम्। व्यञ्जनसाम्याभावे केवलस्वरसाम्यं नानुप्रास इत्यर्थः। वैचित्रयाभावात् वैचित्रयस्यैव चालङकाररूपत्वादिति भावः। तेन "नर पच" इत्यत्र व्यञ्जनसाम्याभावे अकाररूपस्वरचतुष्टयमात्रस्य साम्ये नानुप्रास इति बोध्यम्।

अनुप्रासशब्दस्य योगार्थं दर्शयति रसादीति। आदिपदेन रसाभासादीनां ग्रहणम्। रसादीनाम् अनुगतत्वेन अनुकूलकत्वेन इत्यनुशब्दस्यार्थः। प्रकर्षेणेति प्रशब्दस्यार्थः। न्यासः स्थापनं प्रयोग इति आसशब्दस्यार्थः।

छेकानुप्रासं लक्षयति छेक इति। व्यञ्जनसङ्घस्य व्यञ्जनवर्णसमूहस्य सकृत् एकवारमात्रम् अनेकधा अनेकप्रकारेण साम्यं सादृश्यं छेकश्छेकानुप्रासः। समूहो नाम बहूनामेव सम्भवति, न पुनरेकस्य द्वयोर्वा। तेन एकक्रमेणावस्थितानां बहुतरव्यञ्जनवर्णानामेकविधाकृतिमत्त्वरूपमेकवारमात्रसादृश्यं छेकानुप्रास इत्यर्थः। अत्र बहुतरेत्युपादानात् "धृतचृताङ्कुर" इत्यत्र केवलतकारद्वयस्य सादृश्ये वृत्त्यनुप्रासविषयेनातिव्याप्तिः। एकैकस्य दलस्य मध्ये वर्णान्तरव्यवधाने तु सादृश्ये नायमलङ्कारः "सन्निहिते वुद्धिरन्तरङ्ग" इति न्यायात्—यथा—"मुनिर्जयति योगीन्द्रो जलं सिन्धोः पपौ च यः।" अत्र हि "ज यो" "ज यः" इत्यनयोर्दलयोरेककैकस्यैव मध्ये वर्णान्तरैव्यवधानम्। तेनात्र श्रुत्यनुप्रास एव।

अस्य सामान्यरूपतया विशेषेतरपरत्वनियमाद्विशेषभूतयोरन्तानुप्रासलाटानुप्रासयोर्यंयासम्भवं प्राप्तावपि नातिव्याप्तिरित्यवधेयम्।

छेक इति। एतेन भीमसेनशब्दस्य भीम इतिवत् छेकानुप्रासशब्दस्य छेक इत्येकदेश एव कारिकायामुपात्तः, लोके छेकानुप्रासशब्दस्यैव प्रसिद्धत्वादित्यभिप्रायः सूचितः।

अनेकधेतीति। उभयत्रापि तृतीयान्तात्तस्। तेन स्वरूपत एकविधाकृतिमत्त्वेन, क्रमत एकविधपौर्वापर्य्येण चेत्यर्थः। उत्तरत्राप्यवम्।

तत्र एकविधाकृतिमत्स्वरूपसाम्यस्यैव लक्ष्यतया तद्व्यावृत्त्यसम्भवात् क्रमत इत्यस्य व्यावृत्तिमाह रस इति। क्रमभेदेन भिन्नपौर्वापर्य्येण सादृश्यं केवलैकविधाकृतिमत्त्वेन साम्यम्। अस्यच्छेकानुप्रासस्य न विषयो न स्थानम्।

उदेति। अत्र ताते गौरवातिशयद्योतनाय तातपादशब्दस्यैव ताते लक्षणा। तद्गौरवादेव च बहुवचाम्। स्ववंशपरम्पराया एव च कवित्वसुख्यातिं सूचयितुमिदमभिहितम्। तथा चालङ्कारशास्त्रीणोदाहरणानां सम्भवद्विषयतामात्रप्रदर्शनप्रयोजनतया स्मृत्यादिवदाप्तवाक्यत्वावश्यकत्वाभावात् ईदृशमुदाहरणं नादृढमित्यवधेयम्। एवमन्यत्रापि।

आदायेति। कावेर्य्या नद्याः वारिणा तद्वरिसंस्पर्शनेत्यर्थः पावनः पवित्रताजनकः अयं पवनो वायुः, वकुलानां कुसुमानां गन्धानादय पदे पदे स्थाने स्थाने भ्रमरान् अन्धीकुर्वन् तद्गन्धप्रापणेन तन्मधुपानलोभजननादन्धवन्मुग्धान् कुर्वन् मन्दमन्दम् एति आगच्छति।

उदाहृते लक्षणं योजयति अत्रेति। संयुक्तयोर्नकारसंयुक्तयोर्धकारयोः। असंयुक्तयोर्वैरिवारिशब्दयोः। बहूनामसंयुक्तानामिति शेषः। सकृदावृत्तिरेकवारमात्रं पुनरुच्चारणम्। अतएवात्र च्छेकानुप्रास इति भावः। अत्र संयुक्तयोरसंयुक्तयोरित्यनेन संयोगासंयोगनैरपेक्ष्येण केवलव्यञ्जन सामान्यस्यैव उक्तविधसादृश्ये अयमलङ्कारी भवतीति दर्शितम्। "पदे पदे" "मन्दमन्दम्" इति वौस्मितपदेषु तु उक्तविधसाम्यसत्त्वेऽपि वैचित्र्याभावान्नायमलङ्कार इति बोध्यम्।

इदानीं छेकानुप्रासशब्दस्य व्युत्पत्तिमाह छेक इति। विदग्धः सुरसिकपण्डितः। तथा च रभसः—"च्छेकस्त्रिषु विदग्धेषु गृहासक्तमृगाण्डजे।"

## लक्ष्मी

अनुप्रासपदस्य योगार्थमुपपादयति—रसाद्यनुगतत्वेनेति। अनुशब्दोऽनुगमार्थकः प्रशब्दः प्रकर्षार्थकः आसशब्दो न्यासार्थकः, अनुगमनं रसादेः, आदिपदेन रसाभासादीनां परिग्रहः। तथा च रसाद्यनुगतत्वेन प्रकृतरसव्यञ्जनवर्णसम्बन्धित्वेन, प्रकृतरसानुकूलेन प्रकर्षेण, अनतिव्यवहिततया चमत्कृत्याधायको न्यासः आवृत्तिः। एवञ्च स्वरस्य वैषम्ये वा अनतिव्यवहितत्वेन चमत्कृत्याधायिका प्रकृतरसव्यञ्जकसदृशवर्णावृत्तिरनुप्रास इति लक्षणं फलितम्। तत्र एकतालव्यादिव्यञ्जनावृत्तौ श्रुत्यनुप्रास एकविधाकृतिमद्व्यञ्जनावृत्तौ तु अन्येऽनुप्रासा इति सर्वत्र लक्षणसमन्वयः। परन्तु यथा अन्त्यानुप्रासलाटानुप्रासयोः स्वरसाम्यस्यैवावश्यकत्वम्, न तथान्येषामितिबोध्यम्। स्वरस्य 'वैषम्य'इत्यनेन 'कावेरी वारी'त्यादेरेतदबाह्यत्वम् 'साम्य'इत्युक्त्या च 'दर्दुरदुरध्यवसायम्' इत्यादौ दुरशब्दसाम्ये स्वरसाम्येऽप्यनुप्रासत्वम्। नचैवं स्वरव्यञ्जनयोरुभयोरेव साम्येऽस्य लक्षणस्य 'नवपलाशपलाशवनं पुरः' इत्यादि यमकेऽपि प्रसक्तावतिव्याप्तिरितिवाच्यतम् यमकस्यापवादत्वेन तदतिरिक्तस्थल एवानुप्रासाङ्गीकारात् 'प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते' इति न्यायात् तत्रानुप्रास उत्सर्गः

यमकन्त्वपवादः । 'नेत्रानन्देन चन्द्रेण माहेन्द्री दिग्लङ्कृता' इत्यादौ नकाररेफयुक्तदकारयोर्दूरावस्थानाद् नतिव्यवहितत्वाभावेन अनुप्रासाभावबुद्धिर्न विधेया संस्कारविच्छेदाभावात् । यदुक्तम्—पूर्वानुभवसंस्कारबोधनीयेत्यदूरते'ति ।

अनुप्रासो द्विविधः-निरर्थकसार्थकभेदात् । तत्राद्यश्छेकानुप्रासो वृत्त्यनुप्रासः श्रुत्यनुप्रासोऽन्त्यानुप्रासश्चेति चतुर्विधः । तौ च क्रमादुपपादनीयाविति प्रथमछेकमुपपादयति—छेक इति । व्यञ्जनसङ्घस्य व्यञ्जनानां हल्वर्णानां सङ्घः समूहस्तस्य तथोक्तस्य, सकृदेकवारमात्रम् अनेकधा अनेकप्रकारेण स्वरूपेण क्रमेण चेति प्रकारद्वयेनेति यावत्, साम्यं सादृश्यं छेकश्छेकनामाऽनुप्रासः व्यञ्जनसङ्घत्वमत्र एकव्यञ्जनभिन्नत्वमात्रं तेन द्वयोस्त्रयादीनां च तथात्वम् । तथा च एकक्रमेण विद्यमानानां बहुतरव्यञ्जनवर्णानामेकविधाकृतिमत्वरूपमेकवारमात्रसाम्यं छेकानुप्रास इत्यर्थः । 'धूतचूतप्रसून,' इत्यत्र केवलतकारद्वयस्य साम्ये वृत्त्यनुप्रासविषयेऽतिव्याप्तिवारणाय बहुतरेत्युपादानम् ।

एकैकस्य दलस्य मध्ये वर्णान्तरव्यवधाने तु साम्ये सत्यपि नायमलङ्कारः । अत एव 'मुनिर्जयति योगीन्द्रो जलं सिन्धोः पपौ च यः'

इत्यत्र 'जयो' 'जेयः' इत्यत्र श्रुत्यनुप्रास एव । 'प्रसर सरति पद्मं बाहुलब्धुं तवेष्टम्' इत्यत्र तु स्वरूपतःक्रमतश्च साम्यमिति भवत्युदाहरणम् ।

कठिनांशं विवृणोति—छेक इति । एतेन सत्यभामाशब्दस्य सत्या इतिवत् छेकानुप्रासशब्दस्य छेक इत्येकदेश एव कारिकायां गृहीतः । छेकानुप्रासशब्दस्यैव लोके प्रसिद्धत्वादित्याशयो व्यञ्जितः ।

अनेकधेति । अनेकधा इति इत्यस्य स्वरूपत एकविधस्वरूपेण क्रमतः एकविधपौर्वापर्यक्रमेणेत्यर्थः उभयत्र तृतीयान्तात्तस्प्रत्ययः ।

तत्र एकविधस्वरूपसादृशस्यैव लक्ष्यतया तद्व्यावृत्त्यसम्भवात् क्रमत इत्यस्य व्यावृत्तिं दर्शयितुमाह—रस इति । 'रसः सरः' इत्यादेः शब्दस्येतिशेषः । क्रमभेदेन न तु क्रमेण न वा स्वरूपभेदेनाऽपीत्यर्थः । सादृश्यं केवलैकविधस्वरूपत्वेन साम्यम् । यत्तदिति शेषः । अस्यच्छेकानुप्रासस्य न विषयो न स्थानम् । तथा च तद्वारणायैव क्रमतश्चेत्युक्तमितिभावः ।

लक्षणमुपपाद्य लक्ष्यमुपपादयितुमुपक्रमते—उदाहरणमिति । ताताः पितरश्चन्द्रशेखराः त एव पादाः पूज्यास्तेषाम् । गौरवातिशयव्यञ्जनाय बहुवचनेनोपन्यासः । स्वकुलपरम्पराया एव च कवित्वसुप्रसिद्धमभिव्यञ्जयितुमिदमुक्तम् ।

आदायेति । कावेर्यास्तन्नामिकाया नद्यो वारिणा तज्जलसंस्पर्शेन पावयति पवित्रतां नयति स्वसेविनमितिपावनः पवित्रतासम्पादकः, अयं स्पर्शवत्या प्रत्याख्यातुमशक्यः पवनो वायुः बकुलानां 'मौलसरी'तिप्रसिद्धसुरभितकुसुमविशेषाणां गन्धान् आदाय गृहीत्वा पदे पदे स्थाने स्थाने भ्रमरान् भ्रमन्ति मधुनि लब्धतयेतिभ्रमरा मधुपास्तान् अन्धीकुर्वन् तद्गन्धप्रापणेन तन्मधुपानलोभोत्पादनादन्धानिव मुग्धान् कुर्वन् मन्देषु मन्द इति मन्दमन्दं यथास्यात्तथा 'न निर्धारणे' इति षष्ठ्या एव समासनिषेधात्सप्तम्यन्तेन समासो ज्ञेयः । एति आगच्छति । आर्याच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

उदाहृते लक्षणं सङ्गमयितुमाह—अत्रेति । संयोगयोः न्ध्इत्येतयोर्नकारसंयुक्तयोर्धकारयोः । असंयुक्तयोः वेरिवारिपदयोः । बहूनाम् । असंयुक्तानामितिशेषः । व्यञ्जनानां हलाम् । सकृदेकवारमात्रम् आवृत्तिः पुनरुच्चारणं छेकानुप्रासः ।

अत्र संयुक्तासंयुक्तयोरित्युपपादयता संयोगासंयोगयोरपेक्षाशून्येन केवलव्यञ्जनसामान्यस्यैव प्रदर्शितसाम्येऽलङ्कारोऽयं भवतीतिसूचितम् । ननु 'पदे पदे' 'मन्दमन्दम्' इति द्विरक्तपदेषु प्रदर्शितसादृश्यसद्भावे कथन्नायमलंकारः प्रदर्शित इति चेत् ? वैचित्र्याधकत्वाभावात् ।

छेकानुप्रासपदस्य व्युत्पत्तिमुपपादयितुमाह—छेक इति । विदग्धश्चतुरः । यद्वा छेकाः नीडस्थाः पक्षिणस्तेषां प्रायो द्विर्भाषितं भवति तेन छेकभाषितोपलक्षितोऽनुप्रासश्छेकानुप्रासः । 'छेकस्त्रिषु विदग्धेषु गृहासक्तमृगाण्डजे' इति रभसः । एवं च छेकपदं तत्प्रयोज्ये लाक्षणिकम् । वृत्त्यनुप्रासस्य विदग्धप्रयोज्यत्वेऽपि तत्र रूढ्यभावात् न छेकपदप्रयोगः । अयमनुप्रासः—

'सजातीयव्यवहिता वर्णा द्वित्रादयो यदि । आवर्त्तन्ते तदा केचिच्छेकानुप्रासमूचिरे ।'

इत्युक्तदिशा सजातीयव्यवहितद्वित्रादिवर्णानाप्यावर्त्तने संभवतीति वदन्ति ।

## रुचिरा

एवं सूचीकटाहन्यायेनाल्पप्रभेदं पुनरुक्तवदाभासं निरूप्य बहुप्रभेदं 'तथाऽनुप्रासोपमादयः' इत्युक्तदिशा प्रथमं निरूपणीयमप्यनुप्रासं निरूपयति—६३ **अनुप्रास** इत्यादिना ।

६३ यत् । स्वरस्याचः प्रत्याहारस्य, नतु निषादादेः । **वैषम्ये** विषमत्वे विजातीयत्वे इति यावत् । **अपि** किं पुनस्तस्यापि साम्ये इत्यर्थः । 'अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये । तथा युक्तपदार्थे च कामचारक्रियासु च ॥' इति विश्वः । शब्दसाम्यं शब्दस्य वर्णपदैकदेशपदानामन्यतमस्य साम्यं सादृश्यं समानाकारत्वमिति यावत् । 'तत्' इति शेषः । अनुप्रासोऽनुगतः प्रकृष्ट आसो न्यासस्तत्स्वरूप इति यावत् । प्रकृष्टत्वं च रसानुगतत्वे एव । अत्रायम्भावः—अनुप्रासस्तावद् द्विविधः, वर्णानुप्रासः पदानुप्रासश्चेति । तत्रावाचकवर्णावृत्तिर्वर्णानुप्रासः, वाचकवर्णानुवृत्तिश्च पदानुप्रासः । इति ।

स्वरसादृश्यं नैकान्तमपेक्षितमित्याह—**स्वरमात्रसादृश्यं** स्वर एवेति तेन सादृश्यम् 'हरिविष्णु' इत्यादिषु यथेकारेण सादृश्यमिति यावत् । तु । **वैचित्र्याभावात्** । **न** । **गणितं** 'वैषम्येऽपि स्वरस्य' इत्युक्तदिशास्वरेण सादृश्यं न नितान्तमं पेक्षितं, तदन्तराऽपि शब्दसादृश्यमंात्रे वैचित्र्येण तत्सम्भवादिति भावः । **रसाद्यनुगतत्वेनाप्रकर्षेणाह्लादजन**केन व्यापार विशेषेणेति भावः । **न्यासः** शब्दयोः शब्दानां वा नतु शब्दस्य तत्र प्रकृष्टत्वासम्भवात् । अनुप्रासस्तत्पदार्थ इत्यर्थः । अत्रायम्भावः—श्रृङ्गारादय एव विचित्रा रसास्तत्त्वस्यात्रैवोपलब्धेः । काव्यं च रसात्मकवाक्यमिति निर्णीतपूर्वम् । तस्मादेतच्छृङ्गाराद्यन्यतमात्मकमिति काव्ये श्रृङ्गाराद्यन्यतमसम्भवो निर्बाधः । अन्यथा काव्यमचेतनमेव परित्याज्य स्यात् । एवं यमुपजीव्य काव्यं सचेतनं चमत्कुरुते स एव रसस्तस्यैव रस्यते आस्वाद्यते सहृदयैरिति निर्वचनोत्पत्तेः । तथा च—तद्व्यञ्जकयोश्शब्दयोस्तद्व्यञ्जकानां वा शब्दानामनतिव्यवधानेन न्यासोऽनुप्रासः । अनतिव्यवधानमन्तरेण तद्व्यञ्जकत्वस्योद्रेकाभावात् । अनतिव्यवहिततया चमत्काराधायिकाऽत एव प्रकृतरसव्यञ्जकवर्णघटितशब्दावृत्तिरनुप्रासपदार्थ इति वा निर्गलितोऽर्थः । नच 'काव्यस्य रसात्मकत्वाद्रसस्य च व्यञ्जकवर्णसङ्घटितशब्दाधीनत्वाद्व्यञ्जकवर्णानां चानुप्रासे सम्भवान्मा भूदनुप्रासमन्तरा काव्यत्वम् ।' इति

वाच्यम्। 'काव्यत्वजीवातोश्चमत्कारापरपर्य्यायस्य रसात्मनो व्यञ्जकवर्णाभावेऽपि अनपोहितत्वात्। 'व्यंञ्जकवर्णानां हि तत्प्रत्यायकत्वमात्रम् नतु तत्सद्भावहेतुत्वमपि। अन्यथा व्यञ्जकव्यपदेशोऽप्यपार्थः स्यात्। न वा रसस्य स्वसत्ताकत्वं सङ्गच्छेते'त्येके, 'वर्णानां व्यञ्जकत्वसाधर्म्येण सजातीयत्वेऽपि तेषां चानैकात्म्येन विजातीयानामव्यवधानेनावस्थानस्याक्षतमूर्तावप्यनुप्रासघटकलक्षणासम्भवेऽपि काव्यत्वानापायादित्य'परे। 'ननुप्रकृतरसव्यञ्जकवर्णेतरघटकशब्दानतिव्यवहितासकृन्नायासोऽनुप्रासः, सूत्रकारेण शब्दावृत्तिमात्रे तस्य स्वीकृतत्वात्। इति चेत्? सत्यम्। 'रसाद्यनुगतत्वेन प्रकर्षेण न्यासोऽनुप्रासः' इति वृत्तिकारोक्तनिर्वचनेन प्रकृतरसव्यञ्जकत्वे एवेति क्रोडीकरणात्।' इत्येके 'शब्दानामव्यवहिताऽऽवृत्तिरनुप्रासः, स च निवेशौचित्ये कुण्डलादिरिव प्रकृतरसव्यञ्जकत्वे, समुपादेयः—अन्यथा यथाकथञ्चिदेवोपादेयः।' इत्यपरे।

अयं च द्विविधः, निरर्थकसार्थकशब्दभेदात्, तत्राप्याद्यश्छेकानुप्रासो वृत्त्यनुप्रासः श्रुत्यनुप्रासोऽन्त्यानुप्रासश्चेति चतुर्भेदः। तौ च क्रमाद्दर्शनीयाविति प्रथमं प्रथमाह—६४ छेक इत्यादिना।

६४ सकृदेकवारम्। **अनेकधा** नैकधा, स्वरूपेण क्रमेण चेति प्रकारद्वयेनेति यावत्। **व्यञ्जनसङ्घस्य** व्यञ्जनानां हलां सङ्घस्तस्य। **साम्यं** सदृशाकारत्वम्। छेकस्तन्नामाऽनुप्रास इत्यर्थः। अयम्भावः—स्वरूपेणैव क्रमेणैव वेति न, किन्तूभयथा यत्र व्यञ्जनानामेकवारं सदृशाकारतया न्यासः स छेको नामानुप्रासः। इति ॥ ५६ ॥

कठिनांशं व्याचष्टे—**छेक** 'इत्यस्ये'ति शेषः। **छेकानुप्रास** 'इत्यर्थः' इति शेषः। 'छेकस्त्रिषु विदग्धेषु गृहासक्तमृगाण्डजे।' इति रभसोक्त्या छेकश्चतुरो लक्षणया तत्प्रयोज्योऽपि स एव। छेकाः (चतुराः) ह्यनुप्रासं प्रायः प्रयुञ्जते। तस्माच्छेक (चतुर) प्रयोज्योऽलङ्कारश्छेको नामानुप्रास इति भावः। **अनेकधा इति** इत्यस्य। **स्वरूपतः** स्वरूपेण। च तथा। **क्रमतः** क्रमेण। 'इत्यर्थ' इति शेषः। अयमभावः—यद् यथा निहितं तत्तथा यदि पुनरपि निविश्येत तर्हि सादृश्यं, तत्स्वरूपस्त्वत्येव, अथ यदि क्रमतोऽपि, तर्ह्यलङ्कृतये, यदि न तर्हि नालङ्कृतयेऽपि, यथा—'प्रसर सरसि पद्मं यर्हि लब्धुं तवेष्टम्' इत्यत्र 'सरे'ति स्वरूपतः क्रमतश्च सदृशम्, 'रसः सरः स्थित'इत्यत्र 'रस' इति स्वरूपतः सदपि न क्रमतः सदृशं प्रतिभासते, इत्युभयथैव सादृश्यमलङ्कृतिविशेषे हेतुरित्युक्तमनेकधेति। तदेवाह—**'रसः सर' इत्यादेः** 'शब्दस्ये'ति शेषः। **क्रमभेदेन** न तु क्रमेण न वा स्वरूपभेदेनापीति भावः। **सादृश्यं** 'यत्त'दिति शेषः। न नैव। **अस्य**। **अलङ्कारस्य**। **विषयः** स्थानम्।

अत्रायम्भावः—स्वरसादृश्यं नैकान्तमपेक्ष्यते, तदसत्त्वेऽपि चारुत्वोल्लासेनालङ्कारं वक्तुं युक्तत्वात्। इत्युक्तं 'व्यञ्जनसङ्घस्ये'ति। अथ यदि तदप्यापतेत्तर्हि सुतरामित्युच्यते नैकान्तमिति। नहि 'व्यञ्जनसङ्घस्ये' त्युक्तनयेन सति व्यञ्जनसाम्ये स्वरसाम्यमुत्सार्य्यते, किन्तु तावताऽलङ्कार इति निदर्श्यते।' इति।

लक्षणं निरूप्य लक्ष्यं निरूपयितुमुपक्रमते—मम विश्वनाथस्येत्यर्थः। तातपादानां ताताः पितरश्चन्द्रशेखरा इति यावत्, त एव पादाः पूज्यास्तेषाम्। 'कृतौ' इति शेषः। **उदाहरणम्**।, यथे'ति शेषः। **'आदाय....** 'इत्यादि।

**'बकुलगन्धान्** बकुलस्य 'मोल्सरी'ति। प्रसिद्धस्य सुरभितकुसुमविशेषस्य गन्धाः इति तान्। 'अथ केशरे। बकुल' इत्यमरः। **आदाय** गृहीत्वा। पदेपदे स्थानेस्थाने। 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु।' इत्यमरः। 'आनुपूर्व्ये द्वे वाच्ये।' इति द्वित्वम्। **भ्रमरान्** भ्रमन्ति मधुनि लुब्धतयेति भ्रमरा मधुपास्तान्। अन्धी कुर्वन्नन्धानिव कुर्वन्। अयं स्पर्शवत्तया प्रत्याख्यातुमशक्यः। **कावेरीवारिपावनः** कावेर्य्यास्तदाख्यायाः सरितो वारि जलं तेन पावनः पवित्रतासम्पादकः। पावयति पवित्रतां नयति स्वसेविनमिति पावनः। पवनो गन्धवहः।

**मन्द-मन्दं** मन्देषु मन्द इति मन्दमन्दः, स यथा भवेत्तथेति तथोक्तम् । 'न निर्धारणे ।' २/२/१० इति निर्धारणार्थे षष्ठया एव निषेधात्सप्तम्या समासः । एति गच्छति सञ्चरतीति यावत् । अत्रार्य्या छन्दः, लक्षणं चोक्तं प्राक् ॥७१ ॥

लक्ष्यं समर्थयते—अत्र । **'गन्धानन्धी'ति** । 'अत्रे'ति शेषः । एवमग्रेऽपि । **संयुक्तयोः** संयोगवतोः । 'न्ध्' इत्येतयोरिति शेषः । **'कावेरीवारी'ति** । अत्र । **असंयुक्तयोः** 'वर' इत्येतयोरिति भावः । **'पावनः पवनः' इति** । अत्र पुनः-'पवन' इत्येतेषाम् । **बहूनाम्** । **व्यञ्जनानां** हलाम् । सकृदेकवारम् । **आवृत्तिः** । **छेकोविदग्धः** । **तत्प्रयोज्यत्वात्** । **एषः** छेकानुप्रासः । 'यथा वा मम-'सुमुखि ! समुन्नय नयने महिमानं मानयानयं स्वस्याः । दीनान् दुनोष्यथापि स्मयसे नयसे ततः पदं किं त्वम् ॥' इति ।

**अनेकस्यैकधा साम्यमसकृद्व वाप्यनेकधा ।**

**एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥ ४ ॥**

एकधा स्वरूपत एव, न तु क्रमतोऽपि । अनेकधा स्वरूपतः क्रमतश्च । सकृदपीत्यपिशब्दादसकृदपि । उदाहरणम्—

**'उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-**

**क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ।**

**नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-**

**प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥'**

अत्र 'रसोल्लासैरमी' इति रसयोरेकधैव साम्यम्, न तु तेनैव क्रमेणापि । द्वितीये पादे, कलयोरसकृत्तेनैव क्रमेण । प्रथमे, एकस्य मकारस्य सकृत्, धकारस्य चासकृत् । रसविषयव्यापारवती वर्णरचनावृत्तिः, तदनुगतत्वेन प्रकर्षेण न्यसनाद्वृत्त्यनुप्रासः ।

---

## विवृतिः

वृत्त्यनुप्रासमाह—**अनेकस्येति** । व्यञ्जनस्येत्यर्थः ॥ **असकृदिति** । अत्राप्यनेकस्येत्यनुषज्यते ॥

**उन्मीलदिति** । वसन्तवर्णनमिदम् । अमी वसन्तसंबन्धिनो वासराः पथिकैः प्रवासिकामुकैः कथंकथमपि महता कष्टेन नीयन्ते । कीदृशाः । उन्मीलतः प्राचुर्येण उत्पद्यमानस्य मधुनो मकरन्दस्य गन्धेन लुब्धा ये मधुपास्तैर्व्याधूतेषु चूताङ्कुरेषु आम्रमुकुलेषु क्रीडतां कोकिलानां काकलीभिः सूक्ष्मध्वनिभिः कलकलैः प्रौढशब्दैरुद्गीर्णः प्रावसित्वेन निक्षिप्तः कर्णेषु ज्वरः पीडा येषु ते । पथिकैः कीदृशैः । ध्यानावधानेन ध्यानस्य निष्ठया क्षणं प्राप्तः प्राणसमायाः प्रियायाः समागमरसेन संभोगरसेन उल्लास आह्लादो यैस्तैः ॥ **रसयोः** रेफसकारयोः । **प्रथमे इति** । पादे इत्यन्वयः । तदतिरिक्ताश्छेकानुप्रासा इह वेदितव्याः । संज्ञाव्युत्पत्तिमाह—**रसेति** । रसविषयव्यापारो रसव्यञ्जनं तद्वतीत्यर्थः । वृत्तिश्च त्रिविधा—उपनागरिका, परुषा, कोमला च । तदुक्तं काव्यप्रकाशे—'माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते । ओजः प्रकाशकैस्तैस्तु परुषा कोमला परैः ॥'

परैः शेषैः । केचित् कोमलां ग्राम्यां वदन्ति । एतास्तिस्रो वृत्तयो वैदर्भीगौडीपाञ्चालीसंज्ञकरीतित्वेन प्राङ् निर्दिष्टा इति ग्रन्थकृतेह नोक्ताः ॥ **तदनुगतत्वेन** वृत्त्यनुगतत्वेन ॥

## विज्ञप्रिया

वृत्त्यनुप्रासमाह—**अनकस्येकधेति** । तत्रैकधा पदार्थं व्याचष्टे—**स्वरूपत एवेति** । व्यञ्जनवर्णस्वरूपत इत्यर्थः । असकृद् वाप्यनेकधेत्यत्राऽनेकधात्वं व्याचष्टे—**अनेकधेति** । अत्र अनेकस्येत्यस्यान्वयः, तथा चानेकस्यानेकधा सकृत्त्वे छेकः । असकृत्त्वे तु वृत्त्यनुप्रासः । 'एकस्य सकृदपि' इत्यत्राऽपिकारसमुचितं दर्शयति—

**सकृदपीत्यपिशब्दादिति**। एकस्य सकृत्त्वे अनुप्रासस्तु न काव्यप्रकाशसम्मतः। जातच्युतेत्यत्र वैचित्र्याननुभवात्। स्वरसादृश्यसत्त्वे तु तस्यापि सम्मतो यथा "धूतचूतप्रसून" इत्यत्र।

**उन्मीलदित्यादि**। "काकली तु कलौ सूक्ष्मे ध्वनौ तु मधुरा स्फुटे" इत्यमरः। तद्रूपैः कलकलैः।

अत्र अनेकस्यैकधासकृत्त्वं दर्शयति—**रसोल्लासैरमी** इति। **रसयोरिति**—रसेति रेफसकारयोरानुपूर्वी-राहित्यादेकधा। **कलयोरिति**—कोकिलकाकलीकलकलैरित्यत्रेत्यर्थः। एकस्य सकृत्त्वमसकृत्त्वं दर्शयति—**प्रथमे** इति। धूतचूतेत्यत्र तकारस्य। मधुगन्धलुब्धमधुपेत्यत्र धकारस्येत्यर्थः। समासमेत्यत्र तु अनेकधानेकस्य सकृत्त्वाच्छेक एवेत्यतस्तन्न दर्शितम्। वृत्त्यनुप्रास इत्यत्र वृत्तिपदार्थं व्याचष्टे—**रसविषयेति**। रसविषयो व्यापारः व्यञ्जना, तद्वत्यां वस्तुरचनायां वस्तुनोऽर्थस्य शब्देन रचनायां वृत्तिसंज्ञा इत्यर्थः। तत्रानुप्रासशब्दार्थं यौजयति—**तदनुगतत्वेनेति**। तादृशरचनासम्बन्धत्वेनेत्यर्थः। प्रकर्षश्च वर्णसाम्यम्।

## लोचन

प्राणसमासमागमेत्यत्र च यमकत्वं वक्ष्यते। यद्यपि ल्लासैरमी वासरा इत्यत्र च सरयोरनेकधा साम्यहे-तुकेन छेकानुप्रासेन सहैकधासाम्यभेदस्य वृत्त्यनुप्रासभेदस्य एकवाचकानुप्रवेशरूपः सङ्करो वक्ष्यते, तथापि वासर-शब्दमगणयित्वा वृत्त्यनुप्रासभेदकथनम्। एवमन्यत्र। **रसविषयेति**। रसविषयः स्वादानुप्राणको व्यापारो वृत्तिः। वृत्त्यतेऽनया शब्दो रसव्यञ्जनयेति व्युत्पत्त्या। तेन तद्वती उक्तरीत्या श्रृङ्गारादिरसौपयिककोमलपरुषमध्यमवर्णा-रब्धा वापि रचना वृत्तिरुपचारादिति भावः। तदनुगतत्वेन तया वृत्त्योपलक्षितत्वेन।

## कुसुमप्रतिमा

वृत्त्यनुप्रासं लक्षयति अनेकस्येति। अनेकस्य व्यञ्जनवर्णस्य, एकधा स्वरूपत एव सकृत्साम्यं वृत्त्यनुप्रास इत्येकं लक्षणम्। अत्र एकधेत्यभिधानात् छेकानुप्रासे नातिव्याप्तिः। अनेकस्य व्यञ्जनस्य एकधा स्वरूपत एव असकृद्वा साम्यं वृत्त्यनुप्रास इति द्वितीयं लक्षणम्। अत्र तु एकधेति असकृदिति चोक्तत्वात् छेकानुप्रासे नातिप्रसङ्गः। प्रथमे पादे सकृदसकृदिघचनयोरेकस्याप्यनभिधानात् सामान्यत एव तदुभयं लभ्यत इति बोध्यम्। वा अथवा, अनेकस्य व्यञ्जनस्य अनेकधा स्वरूपतः क्रमतश्च असकृत् साम्यं वृत्त्यनुप्रास इति तृतीयं लक्षणम्। अत्र अपिशब्दादनेकस्येत्यनुषज्यते। असकृदिति विशेषणाञ्च छेकानुप्रासे न लक्षणसङ्गतिः। एकस्य व्यञ्जनवर्णस्य सकृत् साम्यं वृत्त्यनुप्रास इति चतुर्थं लक्षणम्। अत्राप्यपिशब्दात् असकृदित्यनुषज्यते। तेन एकस्य व्यञ्जनवर्णस्य असकृत् साम्यञ्च वृत्त्यनुप्रास इति पञ्चमं लक्षणम्। अनयोरेकस्येत्यभिधानात् छेकानुप्रासे नातिव्याप्तिः। तथा च वृत्त्यनुप्रासः समुदायेन पञ्चविध इति द्रष्टव्यम्। अस्यापि सामान्यरूपतया विशेषेतरपरत्वनियमात् विशेषभूतयोर-न्त्यानुप्रासलाटानुप्रासयोर्यथासम्भवं प्राप्तावपि नातिव्याप्तिरिति चावधेयम्।

## विमला

उदाहरति, उन्मीलदिति।—वसन्तवर्णनमिदम्। उन्मीलत्सु प्राचुर्य्येण उद्गच्छत्सु, मधुगन्धेषु लुब्धाः ये मधुपा भ्रमराः, तैः व्याधूतेषु विशेषेणाकम्पितेषु, चूताङ्गेषु आम्रमुकुलेषु, क्रीड़तां विहरतां, कोकिलानां पिकानां, काकलीनां सूक्ष्मकलध्वनीनां, कलकलैः कोलाहलैः, प्रौढ़शब्दैरित्यर्थः, उद्गीर्णाः, सञ्जनिताः, प्रवासित्वेन निक्षिप्त इत्यर्थः, कर्णज्वरः कर्णेषु पीड़ा येषु तथाविधाः, अमी वासराः वासन्ताः दिवसा इत्यर्थः, पथिकैः प्रवासिकामुकैः, ध्याने,

प्रियाया इति भावः, यत् अवधानं मनोनिवेशः, तस्य क्षणे प्राप्तेन अनुभूतेन, प्राणसमायाः प्रियतमायाः, समागमरसेन सम्भोगरसेन, सङ्गमसुखेन इत्यर्थः, उल्लसन्ति सन्तुष्यन्तीति तथोक्तैः सद्भिः कथंकथमपि अतिकृच्छ्रेणेत्यर्थः, नीयन्ते अतिवाह्यन्ते । शार्दूलविक्रीड़ितं वृत्तम् ।

अत्रेति ।—रसयोः,—रेफसकारयोः । प्रथमे इति ।—पादे इत्यनेनान्वयः, तदतिरिक्ताः छेकानुप्रासा इह वेदितव्याः । संज्ञाव्युत्पत्तिमाह, रसेति ।—रसविषयः यः व्यापारः व्यञ्जनध्वननादिकं, तद्वती तदुद्भावयित्रीत्यर्थः । वृत्तिश्च त्रिविधा—उपनागरिका, परुषा, कोमला च । तदुक्तं काव्याप्रकाशे—"माधुर्य्यव्यञ्जकैर्वर्णैरुप नागरिको-च्यते । ओजः प्रकाशकैस्तैस्तु परुषा कोमला परैः ॥" परैः,—शेषैः । केचित् कोमलां ग्राम्यां व्रहन्ति । एताः तिस्रः वृत्तयः वैदर्भी गौड़ी पाञ्चालीसंज्ञक रीतित्वेन प्राङ्निर्दिष्टाः इति ग्रन्थकृतेह नोक्ताः । तदनुगतत्वेन वृत्त्यनुगतत्वेन इत्यर्थः ।

## लक्ष्मी

वृत्त्यनुप्रासं निरूपयति—अनेकस्येति । अस्य पञ्चविधानि लक्षणानि तानि तत्र प्रथममअनेकस्य नैको वर्णान्तरेण संयुक्तः इत्यनेकस्तस्य तादृशस्य संयुक्तस्य व्यञ्जनवर्णस्येत्यर्थः, एकधा स्वरूपत एव सकृत् साम्यं वृत्त्यनुप्रास इत्येकं लक्षणम् । अनेकस्य इत्युक्त्य स्वरे च साम्यावश्यकत्वं निरस्तम् । छेकानुप्रासेऽतिप्रसक्तिवा-रणाय एकधेत्युक्तिः । अनेकस्य व्यञ्जनवर्णस्य एकधा स्वरूपत एव असकृद्वा साम्यं वृत्त्यनुप्रास इति द्वितीयं लक्षणम् अत्र हि छेकानुप्रासेऽतिप्रसङ्गवारणाय 'एकधा' असकृदित्युभयोरुपादानम् । सकृदसकृदित्यनयोर्मध्ये कस्यापि प्रथमपादेऽनुक्तत्वात् सामान्येनैव तदुभयोर्लाभ इत्यवधेयम् । वा अथवा अनेकस्य व्यञ्जनवर्णस्य अनेकधा स्वरूपतः क्रमतश्च असकृत् साम्यं वृत्त्यनुप्रास इति तृतीयं लक्षणम् । अत्रापिना पूर्वतः अनेकस्यैत्यनुषङ्गः छेकानुप्रासातिप्रसक्तिवारणायैवासकृदित्युपादानम् । एकस्य व्यञ्जनस्य सकृत् साम्यं वृत्त्यनुप्रास इति तुरीयं लक्षणाम् । अत्राऽप्यपिना असकृदित्यनुषङ्गो विधेयस्तेन एकस्य व्यञ्जनस्य असकृत् साम्यं च वृत्त्यनुप्रास इति पञ्चमं लक्षणं भवति । छेकानुप्रासेऽतिप्रसङ्गवारणायैवानयोरेकस्येत्युक्तिः । तदेवं समुदायेन पञ्चविधो वृत्त्यनु-प्रासः । अत्र व्युत्पत्तिश्च वृत्तौ रीतावनुप्रासो वृत्त्यनुप्रासः वृत्तिश्च मधुरादिरसानुगुणनियतकोमलशब्दविशेषगतो रसविषयो व्यापारो व्यञ्जनाख्य इत्येके । माधुर्यादिव्यञ्जकसुकुमारादिवर्णगतत्वेन मधुरादिरसोपकारकः शब्दस्य सङ्घटनाख्यो रीत्यात्मा व्यापारविशेष इत्यपरे, स्पष्टीभविष्यति विवरणेऽग्रे ।

कारिकोक्तपदानां दुरूहमर्थं विवृणोति—एकधेति । एकधा इत्यस्येति शेषः । स्वरूपत इति स्वस्यरूपं प्रतिकृतिस्तस्मात् । क्रमात् उद्देश्यानुपूर्व्या । अपिशब्दादपठितादितिशेषः ।

एकपद्येनैवोक्तपञ्चविधवृत्त्यनुप्रासानामुदाहणं दर्शयति—उन्मीलदिति । गीतगोविन्दे वसन्तवर्णनमि-दम् । ध्याने प्रियतमायाश्चिन्तनेऽवधानं चित्तैकाग्रता तेन क्षणं प्राप्तः प्राणसमाया दयितायाः समागमरसेन सम्भो-गरसेन उल्लासः प्राचुर्य्येणानन्दोद्गमो यैस्तैः पथिकैः प्रवासिभिः कामिजनैः, (कर्तृ) उन्मीलतः प्राचुर्येण उत्पद्यमानस्य मधुनः पुष्परसस्य गन्धेन सौरभेण लुब्धा ये मधुपा मधुपानशीला भ्रमरास्तैर्व्याधूतेषु (स्वपातवशेन) समाकम्पितेषु चूताङ्कुरेषु आम्रदलनूतनप्ररोहेषु तन्निकटेष्वित्यर्थः, क्रीडतां खेलया सञ्चरतां कोकिलानां काकलीभिः सूक्ष्म ध्वनिभिः कलकलैः प्रौढशब्दैः, उद्गीर्णाः प्रवासित्वेनोत्पादिताः कर्णेषु ज्वराः सन्तापा येषु ते अमी वसन्तसम्बन्धिनो वासरा दिवसाः (कर्म) कथंकथमपि महताक्लेशेन नीयन्ते व्यतीयन्ते । शार्द्दूलविक्रीडितच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

उक्तोदाहरणे लक्षणानि संयोजयितुमाह—अत्रेति । इति । इत्यत्र अंश इति शेषः, रसयो रेफदन्त्यसकारयोः, एकधैव स्वरूपत एव साम्यं सकृत् सादृश्यम्, न तु पुनः, तेन निर्दिष्टेन, अपि तयो पुर्नवैंपरीत्येन न्यासादिति शेषः । 'रसो' इत्यत्र रेफस्य प्राग्वर्त्तित्वात् 'सर' इत्यत्र तु तस्योत्तरवर्त्तित्वादित्याशयः । तेन चात्र प्रथमलक्षणसमन्वयः । प्रथमलक्षणसमन्वयायैव हि पद्यस्य चरमांशमादाय प्रदर्शनारम्भ इत्यवगन्तव्यम् । 'वासराः' इत्यस्य 'सराः' इतिभागमादाय 'रसो' इत्यनेन तद्वदेव एकधैवासकृत्साम्यात् द्वितीयलक्षणस्य समन्वयोऽवगन्तव्यः । कलयोः ककारलकारयोः तेनैव क्रमेण येनानुपूर्व्येण निर्दिष्टाविति शेषः चकारात् स्वरूपेण च असकृत् साम्यं तौल्यम् । एवञ्च तृतीयलक्षणसमन्वयः स्पष्टः । प्रथमे पादे इत्यनुषङ्गः, सकृदेकवारं साम्यमित्यनुषङ्गः, अत एव तुरीयलक्षणसमन्वयः इत्याशयः । एकस्य धकारस्य च असकृत् साम्यमित्यत्रापि पूर्वतोऽनुषञ्जनीयम् । एवञ्च पञ्चमलक्षणसमन्वय इत्यभिप्रायः । समासमेत्यत्र तु अनेकधामेकस्य सकृत्त्वाच्छेक एवेत्यतस्तन्न प्रदर्शितम् । एवमुद्गीर्णकर्ण 'उन्मीलन्मधु' इत्यत्र 'न्मे'त्यस्य सकृत् सकृत् साम्यात् छेकानुप्रास एव । केचित्तु समासमेत्यत्र यमकमेवेच्छन्ति ।

वृत्त्यनुप्रासशब्दस्य योगव्युत्पत्तिलभ्यमर्थं दर्शयति—सविषयेति । रस एव विषयो यस्य तादृशोऽसौ व्यापारो व्यञ्जनरूपः क्रियाविशेष इति रसविषयकव्यापारः सोऽस्यामस्तीति तादृशी वर्णरचना वर्णसङ्घटना वृत्तिः इति व्यपदिश्यत इति शेषः । वृत्तिश्च त्रिविधा उपनागरिका, परुषा, कोमला च । तदुक्तं—काव्यप्रकाशकारैः—

**माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।**

**ओजः प्रकाशकैस्तैस्तु परुषा कोमला परैः ॥ परैः शेषैः ।**

**केचित्तु—शेषैर्वर्णैर्यथायोगं ग्रथितां कोमलाख्यया ।**

**ग्राम्यां वृत्तिं प्रशंसन्ति काव्ये निष्णातबुद्धयः ॥'**

## रुचिरा

अथ द्वितीयमाह—६५ अनेकस्येत्यादिना ।

**६५ अनेकस्य** नैको वर्णान्तरेणसम्पृक्त इत्यनेकस्तस्य तथोक्तस्य संयुक्तस्येति भावः । 'व्यञ्जनस्ये'ति शेषः । एतेन—स्वरेण साम्यावश्यकत्वं व्युदस्तम् । एकधैकेन प्रकारेण । **वा** । अनेकधा । अपि न केवलमेकधैवेति भावः । असकृदनेकवारम् । साम्यम् । **वृत्त्यनुप्रासो** वृत्तौ रीतावनुप्रास इति तथोक्तः । वृत्तिश्च मधुरादिरसानुगुणनियतमसृणादि शब्दविशेषगतो रसविषयो व्यापारो व्यञ्जनाख्य इत्येके माधुर्य्यादिव्यञ्जकसुकुमारादिवर्णगतत्वेन मधुरादिरसोपकारकः शब्दस्य सङ्घटनाख्यो रीत्यात्मा व्यापारविशेष इत्यपरे । अथवा—एकस्यासंयुक्तस्य 'व्यञ्जनस्ये'ति शेषः । एतेन स्वरेण साम्यावश्यकत्वं व्युदस्तम् । सकृदेकवारम् । अपि किं नरनेकवारमिति भावः । 'साम्य'मिति शेषः । एषः । **वृत्त्यनुप्रासः** । **उच्यते** । अयम्भावः—असत्यपि स्वरेण समानत्वे संयुक्तस्य व्यञ्जनस्य स्वरूपेणैव, स्वरूपेण क्रमेण चेत्युभयथा वा; असकृत्साम्यं वृत्त्यनुप्रासः, असंयुक्तस्य वा व्यञ्जनस्य सकृदसकृद्वा सादृश्यं वृत्त्यनुप्रासः । एवं च अनेकस्य व्यञ्जनस्य स्वरूपेणासकृत्साम्यं स्वरूपेण क्रमेण चेत्युभयथा असकृत्पुम्यं, तथा एकस्य व्यञ्जनस्य सकृत्साम्यम्, असकृत्साम्यं वेति चतुर्भेदो वृत्त्यनुप्रासः । इति ॥ ५७ ॥

अत्र सुत्रोक्तपदानां दुरूहमर्थं व्याचष्टे—**एकधा** 'इत्यस्ये'ति शेषः । **स्वरूपतः** स्वस्य रूपं प्रतिकृतिस्तस्मात् । **एव** । **न तु** । **क्रमत** उद्देशानुपूर्व्या । अपि । 'इत्यर्थः' इति शेषः । **अनेकधा** 'इत्यस्ये'ति शेषः । **स्वरूपतः** ।

**क्रमतः** । च । 'इत्यर्थ' इति शेषः । **'सकृदपी'ति** । 'अत्रे'ति शेषः । **अपिशब्दात्** । 'पठिता'दिति शेषः । **असकृत्** । अपि । 'इति निष्कृष्टम्' इति शेषः ।

उदाहरणं दर्शयति—**उदाहरणम्** । यथा—**उन्मीलन्मधुगन्ध...**उन्मीलदुल्लासं-प्राप्नुवद् यन्मधु पुष्परस इति तस्योन्मीलन्मधुनो गन्धः सौरभं तेन लुब्धा लोभं नीता इत्यमी मधुपा मधुपानशीला भ्रमरा इति तैरुन्मीलन्मधुगन्धः लुब्धमधुपैर्व्याधृता विशेषेण (स्वपातवशात्) कम्पान्नीता अमी चूताङ्कुरा आम्रदलानां नूतनप्ररोहा इति तेषून्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरेषु क्रीडन्तश्च ते कोकिलास्तेषां काकली स्वरविशेष इति तस्याः कलकला मधुरशब्दास्तैस्तथोक्तैः । **उद्गीर्णकर्णज्वरा** उद्गीर्णं उद्गारं प्रापितः कर्णज्वरो येषु ते तथोक्ताः । **अमी** । **वासन्तिका** इत्यर्थः । **वासरा** दिवसाः (कर्म) । **ध्यानाव...**ध्याने प्रियायाश्चिन्तनेऽवधानं चित्तैकाग्र्यं तेन क्षणं प्राप्तः प्राणसमांसमागमरसोल्लासो यैस्तैस्तथोक्तैः प्राणैः (प्रियत्वेन समास्तुल्येति तथाभूतायाः समागमः सम्यग्लाभ इति तस्य रस आस्वादः इति तस्योल्लास इति प्राणसमासमागमरसोल्लासः । उल्लासः प्राचुर्य्येणोद्गमः । **पथिकैः** प्रवासिभिः (कर्तृ) **कथंकथमपि** महता कष्टेन । **नीयन्ते** व्यतीयन्ते ॥' पद्यमिदं गीतगोविन्दस्य शार्दूलविक्रीडितं वृत्तम् । लक्षणं च प्रोक्तं प्राक् । इति ॥ ७२ ॥'

उदाहरणीयं निर्दिशति—**अत्र 'रसोल्लासैरमी'** इति । 'अंशे' इति शेषः । रसयो रकारसकारयोः । **एकधा** स्वरूपेण । **एव** । **साम्यम्** । न तु पुनः । तेन निर्दिष्टेन । **एव** । **क्रमेण** । अपि 'तयोः पुनर्वैपरीत्येन न्यासात्' इति शेषः । द्वितीये 'क्रीडत् कोकिल' इति रूपे । पादेः चरणे भाग इति यावत् । **कलयोः** ककारलकारयोः । असकृदनेकवारम् । तेन 'येन (आनूपूर्व्येण) निर्दिष्टा'विति शेषः । एव नतु विपरीतेन । क्रमेणानुपूर्व्येण । 'साम्य' मिति शेषः । अथप्रथमे 'पादे' इति शेषः । **एकस्य** । **तकारस्य** । सकृदेकवारम् । 'साम्य' मिति शेषः । **धकारस्य** । च पुनः । असकृंदनेकवारम् । 'साम्य' मिति शेषः । अत्रेदं बोध्यम्—अत्र न केवलं वृत्त्यनुप्रास एव, किन्तु च्छेकानुप्रासोऽपि, 'उन्मीलन्मधु' इत्यादौ 'न्मे'त्यादेः सकृत्साम्यात् । अत एव तर्कवागीशा अप्याहुः । 'तददतिरिक्ताश्छेकानुप्रासा इह वेदितव्याः' इति । ननु कथं वृत्त्यनुप्रास इति व्यपदेशः ? इत्यत आह—**रसविषयव्यापारवती** रस एव विषयो यस्य तादृशोऽसौ व्यापारो व्यञ्जनरूपः क्रियाविशेष इति रसविषयव्यापारः, सोऽस्यामस्तीति तथोक्ता । **वर्णरचना** वर्णानां रचना (सङ्घटना) वृत्तिः 'इति व्यपदिश्यते' इति शेषः । **तदनुगतत्वेन** तस्याः (वृतेरित्यर्थः) अनुगतत्वमानुकूल्यं तेन तद्रूपेणेति भावः । प्रकर्षेणातिशयेन । न्यसनान्न्यासविधानात् । **वृत्त्यनुप्रासः** 'इति व्यपदेशः सङ्गच्छते' इति शेषः । अत्रेदं बोध्यम्-वृत्तिस्त्रिविधा, उपनागरिका परुषा कोमला चति भेदात् । तथोक्तं प्रकाशकारैः—'माधुर्य्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते । ओजः प्रकाशकैस्तैस्तु कोमला परुषा परैः ॥ परैः' शेषैः । इति । कोमलामेव ग्राम्येत्यपि व्यपदिशन्ति केचित् । तदुक्तम्—'शेषैर्वर्णैर्यथायोगं ग्रथितां कोमलाख्यया । ग्राम्यां वृत्तिं प्रशंसन्ति काव्ये निष्णातबुद्धयः ॥' इति । एताश्च वैदर्भीगौडीपाञ्चाल्यभिधेया रीतयः । अत एव प्रकाशकारैरप्युक्तम्—'केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ।' एतास्तिस्रो वृत्तयो वामनादीनाम्मते वैदर्भीगौडीपाञ्चाल्याख्या रीतयो मताः । इति । अमी च निरुक्तस्वरूपा एव इति नात्र ग्रन्थकृता पुनर्निरूपिता इति बोध्यम् ।

**उच्चार्यत्वाद्यदेकत्र स्थाने तालुरदादिके ।**

**सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ॥ ५ ॥**

उदाहरणम्—

**'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।**

**विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥'**

अत्र जीवयन्ति' इति, 'याः' इति, 'जयिनीः' इति । अत्र जकारयकारयोरेकत्र स्थाने तालावुच्चार्यत्वात्सादृश्यम् । एवं दन्त्यकण्ठ्यानामप्युदाहार्यम् । एष च सहृदयानामतीव श्रुतिसुखावहत्वाच्छ्रुत्यनुप्रासः ।

---

## विवृतिः

श्रुत्यनुप्रासमाह—**उच्चार्यत्वादिति** । स्थाने उच्चारणस्थाने । रदो दन्तः । आदिना मूर्धकण्ठोष्ठस्य संग्रहः । अत्र स्वरूपतः साम्याभावेऽप्यनुप्रासत्वं प्रागेवोपपादितम् ॥ **दृशेति** । विरूपाक्षस्य शिवस्य ॥ संज्ञाव्युत्पत्तिमाह—**एष इति** ।

## विज्ञप्रिया

श्रुत्यनुप्रासाख्यमनुप्रासान्तरमाह—**उच्चार्य्यत्वादिति** । वर्णसाम्याभावेऽपि एकस्थानोच्चार्य्यत्वसादृश्यादित्यर्थः ।

**दृशा दग्धमिति**—विरूपाक्षस्य जयिनीस्ता वामलोचना अहं स्तुवे । लोचनस्य विरूपत्वसुन्दरत्वात्मकवामत्वाभ्यां जयपराजयावुक्त्वा क्रियाभ्यामप्याह—**दृशा दग्धमिति** । हरेण मनसिजस्य दृशा दाहस्ताभिस्तु कटाक्षरूपया दृशा जीवनमतोऽपि जयः ।

## लोचन

उच्चार्य्यत्वादिति—द्वयोर्बहूनां वा व्यञ्जनानां तालव्यत्वेन दन्त्यत्वेनादिशब्दात् कण्ठयत्वादिना साम्यं श्रुत्यनुप्रास इत्यर्थः । इमं च श्रुत्यनुप्रासं "निवेशयति वाग्देवी कस्यचित् प्रतिभावतः' इत्यादिना प्रशंसन्ति प्राच्याः ।

## कुसुमप्रतिमा

एकेनैव पद्येन निरुक्तपञ्चविधानामेव वृत्त्यनुप्रासानां लक्ष्याणि दर्शयति उन्मीलदिति । वसन्तवर्णनेयं जयदेवस्य । ध्यानं प्रियतमायाश्चिन्तनमेव अवधानं मनोयोगस्तस्य क्षणे समये प्राप्तः प्राणेसमाया दयेतायाः समागमरसेन सम्भोगासङ्गेन उल्लास आनन्दो यैस्तथोक्तैः, पथिकैर्विदेशस्थैः कामिभिर्जनैः, उन्मीलत्सु परितः सञ्चरत्सु मधुगन्धेषु कुसुमरससौरभेषु लुब्धा ये मधुपा भ्रमरास्तैर्व्याधूतेषु समाकम्पितेषु चूताङ्कुरेषु आम्रमुकुलेषु तत्समीपेष्वित्यर्थः क्रीडतां खेलया विचरतां कोकिलानां याः काकल्यः सूक्ष्मकलरवस्तासां कलकलैः कोलाहलैः

उद्गीर्णा उत्पादिताः कर्णेषु ज्वराः सन्तापा येषु ते तादृशाः, अमी वसन्तकालीया वासरा दिवसाः, कथं कथमपि अतिकष्टेनेत्यर्थः नीयन्ते अतिक्रम्यन्ते ।

उदाहृते लक्षणानि सङ्गमयितुमाह अत्रेति । इति इत्यत्र, र सयो रेफदन्त्यसकारयो, एवधैव स्वरूपत एव, साम्यं सकृत् सादृश्यम् । न त्विति । "रसो" इत्यत्र रेफस्य पूर्ववर्त्तित्वात् "सैर" इत्यत्र तु तस्य परवर्त्तित्वादिति भावः । अतएवात्र प्रथमलक्षणसङ्गतिः । अतएव च पद्यस्य अन्त्यभागमादाय प्रदर्शनारम्भ इति बोध्यम् । "वासराः" इत्यस्य च "सराः" इत्यंशमादाय "रसो" इत्यनेन तद्वदेव एकधैवासकृत् साम्यद्द्वितीयलक्षणसङ्गतिरित्यनुसन्धेयम् । क लयोः ककार लकारयोः, तेनैव क्रमेण चकारात् स्वरूपेण च असकृत् साम्यम् । अतस्तृतीयलक्षणसङ्गतिरित्याशयः प्रथमे, पादे इत्यनुषज्यते । सकृत् सम्यम् । अतश्चतुर्थलक्षणसङ्गतिरित्यभिप्रायः । एवस्यधकारस्य च असकृत् साम्यम् । अतश्च पञ्चम लक्षणसङ्गतिरिति भावः । "उद्गीर्णाकर्णा" इत्यत्र तु च्छेकानुप्रासः । "समा समा" इत्यत्र च यमकमेवेत्यनुसन्धेयम् ।

इदानीं वृत्त्यनुप्रासशब्दस्य योगार्थमाह रसेति । रसविषयव्यापारो रसादीनां पुष्टिस्तद्वती जनकातासम्बन्धेन तद्विशिष्टा रसादिपुष्टिकारिणीत्यर्थः, वर्णरचना वैदर्भीगौड़ी-पाञ्चाली लाटी संज्ञकरीतिरूपा वर्णयोजना । तदनुगतत्वेन तदनुकूलकत्वेन । न्यसनात् स्थापनादिभिधानादित्यर्थः ।

श्रुत्यनुप्रासं निरूपयति उच्चार्य्यत्वादिति । रदा । दन्ताः । आदिशब्देन ओष्ठ-मूर्द्ध कण्ठानां ग्रहणम् । तथा च तालुरदादिके एकत्र एकस्मिन् स्थाने उच्चार्य्यत्वात् उच्चार्य्यत्वं पुरस्कृत्य उच्चारणीयत्वरूपमित्यर्थः, व्यञ्जनस्यैव केवलव्यञ्जनवर्णस्ययत्, सादृश्यम्, तत् श्रुत्यनुप्रास उच्यते । अत्र एकस्थानोच्चार्य्यत्वरूपसादृश्यग्रहणात् एकविधाकृतिमत्त्वरूपस्वरूपापेक्षा नास्तीति प्रतिपादितम् एवशब्देन च स्वराणामेकस्थानोच्चार्य्यत्वरूपं सादृश्य वैचित्र्याभावान्न श्रुत्यनुप्रास इति सूचितम् ।

दृशेति । पद्यमदं विद्धशालभञ्जिकायाम् । या वामलोचनाः, दृशा शिवस्य तृतीयनेत्रेण दग्धं मनसिजं मदनं दृशैव दृष्टयैव जीवयन्ति । अतएव विरूपाक्षस्य विषमनेत्रस्य शिवस्य जयिनीर्विजयकारिणीः, ता वामलोचना महिलाः स्तुमो नुमः ।

उदाहृते लक्षणं योजयति अत्रेति । तालाविति "इवर्ण चवर्ग य शास्तालव्याः" इत्यनुशासनादिति भावः । सादृश्यमिति । अतएव श्रुत्यनुप्रास इति शेषः ।

एवमिति । दन्त्यकण्ठ्यानामिति बहुवचनादोष्ठ्यमूर्द्धन्यानामपि गृहणम् ।

तत्र दन्त्यानां यथा नैषधे—

**"तदह विद्रधे तथा तथा दमयन्त्याः सविधे तव स्तवम् ।**

**हृदये निहितस्तया भवान् अपि नेन्द्रेण यथापनीयते ॥"**

अत्र "लृवर्ण-तवर्ग ल-सा दन्त्याः" इत्यनुशासनात् त थ द ध न सकाराणामेकदन्तस्थानोच्चार्य्यतया सादृश्यात् श्रुत्यनुप्रासः ।

कण्ठानां यथा शिशुपालवधे—

**"हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।**

**शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥"**

अत्र "श्रवण" कवर्ग-ह विसर्जनीयाः कण्ठ्याः' इति न्यायात् ह थ क गकारणमेककण्ठस्थानोच्चार्य्यतया सादृश्यात् श्रुत्यनुप्रासः ।

ओष्ठ्यानां यथा उद्भटः—

**"पिनाक-फणि-बालेन्दु-भस्म-मन्दाकिनीयुता ।**

**तथापि भव ! ते मूर्त्तिरपपवर्गफलप्रदा ॥"**

अत्र "उवर्ण-पवर्गो पध्मानीया ओष्ठाः" इति नियमात् प फ ब भ मकाराणामेकोष्ठस्थानोच्चार्य्यतया सादृश्यात् श्रुत्यनुप्रासः ।

मूर्द्धन्वानां यथा मम वङ्गीयप्रलापनाटके—

**"वमति विषधरश्चेत् साधु पीयूषराशिं विकिरति किरणं वा शीतलञ्चेत् खरांशुः ।**

**नहि खलु खललोकात् सत्प्रशंसा तथापि क्वचिदपि हि जनानां क्षीयते न स्वभावः ॥"**

अत्र "ऋवर्ण-टवर्ग-र-षा मूर्द्धन्या" इत्यनुशासनात् ष-र-णकाराणमेकमूर्द्धस्थानोच्चार्य्यत्वात् श्रुत्यनुप्रासः ।

इदानीं श्रुत्यनुप्रासशब्दस्य योगार्थमाह एष चेति । एषोऽलङ्कारः ।

## विमला

श्रुत्यनुप्रासमाह, उच्चार्य्यत्वादिति ।—एकत्र—एकस्मिन्, तुल्यरूपे इत्यर्थः, स्थाने—वर्णानामुच्चारण-स्थाने, तालुरदादिके—तालुदन्तप्रभृतौ, (आदिना मूर्द्धकण्ठोष्ठाना सङ्ग्रहः) उच्चार्य्यत्वात् व्यञ्जनस्य यत् सादृश्य स श्रुत्यनुप्रास उच्यते । अत्र स्वरूपतः साम्याभावेऽप्यनुप्रासत्वं प्रागेवोपपादितम् इति ज्ञेयम् ।

दृशेति ।—याः,—वामलोचनाः, दृशा—हरनेत्रेणेत्यर्थः, दग्धं—भस्मीकृतं, मनसिजं—कामं, दृशैव—नेत्रैणैव, जीवयन्ति—सजीवं कुर्वन्ति, नेत्रविक्षेपेण मीर कामाविष्करणादिति भावः, विरूपाक्षस्य—विषमनयनस्य, त्रिलोचनस्य इत्यर्थः, कुर्वन्, जयिनीः,—विजेत्रीः, ताः वामलोचनाः,—वामाक्षीः, स्तुमः,—नमामः ।

## लक्ष्मी

इत्युक्तलक्षणां कोमलां ग्राम्यां वदन्ति । एतास्तिस्रो वृत्तयो वैदर्भीगौडीपाञ्चालीसंज्ञकरीतित्वेन पूर्वमुपपादिता इति ग्रन्थकृतात्र न प्रदर्शिताः । तदनुगतत्वेन तस्या वृत्तेरनुगतत्वमानुकूल्यं तेन तद्रूपेणेत्यर्थः । प्रकर्षेणातिशयेन न्यसनात्स्थापनादभिधानादित्यर्थः वृत्यनुप्रासः इति व्यपदेशः सङ्गच्छत इति शेषः ।

श्रुत्यनुप्रासं लक्षयति—उच्चार्यत्वादिति । तालु जिह्वेन्द्रियाधिष्ठानम् । रदा दन्ताः । आदिपदेन ओष्ठ-मूर्ध-कण्ठानां परिग्रहः । एवञ्च तालुरदादिके एकत्र एकस्मिन् स्थाने उच्चार्यत्वात् उच्चार्यत्वं पुरस्कृत्य व्यञ्जनस्यैव व्यञ्जनवर्णस्यैव न तु स्वरस्यापि यत् सादृश्यं सवर्णत्वं, तत् श्रुत्यनुप्रास उच्यते । अत्र एकस्थानोच्चार्यत्वरूपसादृश्योपादानात् एकविधाकृतिमत्वरूपस्वरूपापेक्षा नास्तीति व्यञ्जितम् ।

अत्रायमाशयः—स्वरूपतः सादृश्याभावेऽपि ताल्वाद्येकस्थानवशात् यस्य व्यञ्जनस्यैव येन व्यञ्जनेन सादृश्यं सम्भवेत्तस्य स्वरूपतोऽसदृशस्यैव सकृदसकृद्वा स्थाने श्रुत्यनुप्रासः, एवं केवलव्यञ्जनवर्णस्य स्वरूपतः

सादृश्याभावेऽपि ताल्वादिस्थानैक्यवशात् सादृश्ये श्रुत्यनुप्रासः। ताल्वादिना सादृश्यं च 'तुल्यास्यप्रयत्नं सवर्णम्' इत्यनेन पाणिनिसूत्रेणेति स्पष्टमन्यत्र।

उदाहरणं यथेति शेषः। दृशेति। राजशेखरकृतायां विद्धशालभञ्जिकायां पद्यमिदम्। या वामलोचना वामे सुन्दरे लोचने नयने यासां तादृशा महेश्वरस्य तृतीयनेत्रेण दग्धं भस्मसात्कृतम्, मनसिजं कामदेवं दृशैव दृष्टयैव न तु साधनान्तरेण जीवयन्ति सचेतनतां नयन्ति, अत एव विरूपाक्षस्य विषमलोचनस्य महेश्वरस्य जयिनीः पराजयकारिणीः ता वामलोचना महिलाः स्तुमः प्रशंसामः।

अत्र च यो हि महेश्वरेण नेत्ररूपेणोपायेन दग्धं प्रापितस्तस्य कामदेवस्य दग्धकारणभूतेनैव तेन नेत्ररूपेणोपायेन महेश्वरं जेतुमिच्छुभिर्वामलोचनाभिर्जीवनरूपस्य तद्विपरीतस्य कार्यस्य विधानाद्व्याघातः। विरूपाक्षनेत्रवामलोचनानेत्रयोर्यद्यपि नैक्यम्, तथापि नेत्रयोरेकजातीयत्वेन व्याघात एवेत्यनुसन्धेयम्।

उक्तोदाहरणे लक्षणं सङ्गमयति—अत्रेति। तालाविति। 'इचुयशानां तालु' इति तालुरूपे स्थान इति भावः। उच्चार्यत्वात् हेतोरिति शेषः, सादृश्यं सावर्ण्यम्, अत एवात्र श्रुत्यप्रास इति शेषः।

अन्यत्राऽप्येवमुदाहर्त्तव्यमित्याह—एवमिति। यथाऽस्य तालुस्थानीयं तथा **दन्त्यकण्ठयानामपि** सावर्ण्ये इति शेषः। उदाहार्यमुदाहरणमन्यदन्वेषणीयमिति भावः। दन्त्यकण्ठ्यानामिति। बहुवचनोपादानादोष्ठ-मूर्धन्यानामपि परिग्रहः।

तत्र दन्त्यानां नैषधं यथा—

**'तदहं विदधे तथा तथा दमयन्त्याः सविधे तव स्तवम्।**

**हृदये निहितस्तया भवान् अपि नेन्द्रेण यथापनीयते॥'**

अत्र 'लृतुलसानां दन्ताः' इति नयेन त-थ-द-ध-न-सकाराणामेकदन्तस्थानोच्चार्यतया सादृश्यात् श्रुत्यनुप्रासः। कण्ठस्थानां शिशुपालवधे यथा—

**'हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।**

**शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्॥'**

अत्र 'अकुहविसर्जनीयानां कण्ठः' इत्यनुशासनेन ह-ध-क गकाराणामेककण्ठस्थानोच्चार्यतया सादृश्यात् श्रुत्यनुप्राप्तः। एवमोष्ठादीनां बोध्यम्।

अधुना श्रुत्यनुप्रासवदस्य योगव्युत्पत्तिलभ्यमर्थमुपपादयति—एष चेति। एषोऽलङ्कारः। सहृदयानां सचेतसां काव्यार्थभावनापरिपक्वतामिति यावत्। अतीव अत्यन्तम्। श्रुत्योः श्रवणयोर्यत् सुखमानन्दस्तस्य आवाहत्वात् आधायकत्वात्। श्रुत्यनुप्रास इत्यालङ्कारिकैर्गीयते इति शेषः।

## रुचिरा

अथ तृतीयमाह—६६ उच्चार्यत्वादित्यादिना।

६६ यदा। एकत्रैकस्मिन् **तालुरदादिके**। तालु जिह्वेन्द्रियाधिष्ठानम्। रदा दन्ताः। 'शेषाद्विभाषा।' ५/४/१५४ इति कप्। आदिना मूर्धकण्ठादेः सङ्ग्रहः। **स्थाने उच्चार्य्यत्वात्। व्यञ्जनस्य।** एव नतु स्वरस्यापि। सादश्यं सवर्णत्वम्। **श्रुत्यनुप्रासः**। श्रुतौ श्रवणेऽनुप्रास इति तथोक्तः। **उच्यते** अयम्भावः—स्वरूपतः सादृश्या-

भावेऽपि ताल्वाद्येकस्थानवशाद् यस्य व्यञ्जनस्यैव येन व्यञ्जनेनैव सादृश्यं सम्भवेत्तस्य स्वरूपतोऽसदृशस्यैव सकृदसकृद्वा न्यासे श्रुत्यनुप्रासः। एवं व्यञ्जनमात्रस्य स्वरूपतः सादृश्याभावेऽपि ताल्वादिस्थानैक्यवशात्सादृश्ये श्रुत्यनुप्रासस्ताल्वादिना सादृश्यं च—'तुल्यास्यप्रयत्नं सवर्णम्।' १/१/९ इत्याकरे विवृतम्॥ ५८॥

**उदाहरणं** 'यथे'ति शेषः। **'याः।** **दृशा** नेत्रेण 'महादेवस्ये'ति शेषः। **दग्धं** भस्मसात् कृतम्। **मनसिजं** कामदेवम्। दृशा नेत्रेण 'स्वात्मन' इति शेषः। एव नतु साधनान्तरेण। **जीवयन्ति** सचेतनतां नयन्ति। अत एव-**विरूपाक्षस्य** विरूपमक्षि यस्येति तस्य तथोक्तस्य। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्'। ५/४/११३ इति षच्। **जयिनीः** पराजयकर्त्रीः। ताः। **वामलोचना** वामं सुन्दरं लोचनं यासां ताः। **स्तुमः** प्रशंसामः। राजशेखरकृताया विद्धशालभञ्जिकायाः पद्यमिदम्॥ ७३॥'

उदाहरणीयं दर्शयति—**अत्र 'जीवयन्ति'** इति 'अत्रे'ति शेषः। **'या' इति।** 'अत्रे'ति शेषः। तथा—**'जयिनीः' इति। अत्र। जकारयकारयोः** एकत्रैकस्मिन्। तालौ तालुरूपे स्थाने। उच्चार्य्यत्वात् 'कारणा'दिति शेषः। **सादृश्यं** सावर्ण्यम्। 'अतोऽत्र श्रुत्यनुप्रास' इति शेषः। अत्रेदं बोध्यम्—योहि हरेण दृग्रूपेणोपायेन दाह नीतस्तस्य मदनस्य दाहहेतुभूतेनैव तेन दृग्रूपेणोपायेन हरं जिगीषुभिर्वामालोचनाभिर्जीवनरूपस्य तद्विपरीतस्य कार्यस्य सम्पादितवाद् व्याघातः। यद्यपि विरूपाक्षदृग्वामलोचनादृशोर्नैक्यम्, तथाऽपि दृशोरेकजातीयतया व्याघात एव, यद्वा-कार्य्यवैजात्यस्य कारणवैजात्यप्रयोजत्वादेकजातीयाद्विजातीयकार्य्यभिधानाद् व्याघात एव। तथा—'जीवयन्ती'त्यादौ जकारयकारयोः 'इचुयशानां तालु' इत्युक्त्या तालुरूपस्थानैक्यात्सावर्ण्ये श्रुत्यनुप्रासः। इति।

अन्यत्राप्येवमुदाहार्य्यमित्याह—एवं यथाऽस्य तालुस्थानीयस्य तथा। **दन्त्यकण्ठ्यानाम्। अपि।** 'सावर्ण्ये इति शेषः। उदाहार्य्यमुदाहरणीयमन्यद्गवेषणीयमिति भावः।

यथावा —'अद्याप्युन्मदयातुधानतरुणीचञ्चत्करास्फालनव्यावल्गन्नृकपालतालरणितैर्नृत्यत्पिशाचाङ्गनाः। उद्गायन्ति यशांसि यस्य विततैर्नादैः प्रचण्डानिलप्रक्षुभ्यत्करिकुम्भकूटकुहरव्यक्तै रणक्षोणयः॥' इत्यत्र 'लृतुलसानां दन्ताः' इति नवेन 'तुधानत' इति दन्त्यानां साम्यात्, 'ऋटुरषाणां मूर्धा' इति 'रुणी' त्यत्र मूर्द्धन्ययो रणयोः साम्यात्, श्रुत्यनुप्रासः। यथा वा मम—'अयि यदि जयिसि शशाङ्कं निरूपमसौभगलसन्मुखि! स्थाने। अधरसुधाया अधरं निपाय्य हननं परं परमम्॥' इत्यत्र प्रथमे तालव्यानां द्वितीये दन्त्यानामेवं तृतीये साम्यच्छुत्यनुप्रासः। इति दिक्।

अथास्य सार्थकतां दर्शयति—**एषः।** च। सहृदयानां सचेतसां काव्यमार्मिकाणामिति यावत्। अतीवा-न्त्यन्तम्। श्रुतिसुखावहत्वाच्छ्रुत्योः कर्णयोर्यत् सुखमानन्दस्तस्यावहत्वात् कारणात्। **श्रुत्यनुप्रासः।** 'इति गीयते' इति शेषः।

**व्यञ्जनं चेद्यथावस्थं सहाद्येन स्वरेण तु।**
**आवर्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत्॥ ६॥**

---

## विवृतिः

अनुप्रासविशेषः॥ अन्त्यानुप्रासमाह—**व्यञ्जनमिति**। अवर्त्यते पुनरुच्चार्यते। संज्ञाव्युत्पत्तिमाह—**अन्त्येति**। अन्त एवान्त्यः। तत्र योग्यत्वात्॥

**केश इति**। प्रकटितः करभस्य उष्ट्रस्य विलासः सादृश्यं येन सः॥

## विज्ञप्रिया

अन्त्यानुप्रासाख्यमनुप्रासान्तरमाह—**व्यञ्जनं चेदिति**। यथावस्थमिति। अनुस्वारेण विसर्गेण वा विशिष्टोऽविशिष्टो वा यः स्वरः केवलो वा पूर्वपादस्य पूर्वपदस्य वा अन्ते उच्चरितस्तादृशस्वरविशिष्टाऽवस्थं व्यञ्जनं चेदाद्येन स्वरेण स्वपूर्वभूतस्वरेण सह आवर्त्यते तदाऽन्त्यानुप्रास इत्यर्थः। तत् संज्ञाव्युत्पत्तिमाह—**अन्तयोज्यत्वादिति**। यथा एकपादान्ते धीरः अन्यपादान्ते वीरः इति, यथा वा एकपादान्ते सारमन्यपादान्ते हारमिति। एवं कारी हारीति स्वरमात्रे।

यथावस्थमिति व्याचष्टे—**यथासम्भवमिति**। अनुस्वारविसर्गस्वराणामन्यतरसम्भवो यथासम्भवपदार्थः। अक्षरविशिष्टमित्यत्र यथावस्थं बोध्यम्। अन्त्ययोज्यत्वं व्याचष्टे—**एष चेति**। प्रायेण इत्यनेन पज्झटिकादिच्छन्दः स्वेवाऽस्य सम्भवो नानुष्टुवादाविति दर्शितम्।

**केशः काशेति**—जरत उक्तिरियम्। काशपुष्पस्तबकवद् धवलः केशः प्रकटितस्य वक्रस्य कुब्जस्य करभस्य करिशावकस्यैव विलासो यस्य कायस्तादृशः। तथापि चेतोऽनल्पं बहु काममभिलाषं न त्यजतीत्यर्थः। तथापीत्याकाङ्क्षाबललभ्यम्। अत्र काशलासशब्दौ स्वविसर्गान्त्यस्वरविशिष्टान्त्यव्यञ्जनौ। कल्पानल्पशब्दौ सानुस्वारान्त्यस्वरविशिष्टान्त्यव्यञ्जनौ। तच्चान्त्यव्यञ्जनं तत्पूर्वस्वरेण सहावृत्तम्।

## लोचन

**व्यञ्जनमिति**। केश इत्यत्र यथासम्भवमिति वचनात् संयुक्ताक्षररहितो विकाश इत्यत्र शकारः स्वरविसर्गयुक्तः ककारस्थितेनाऽऽकारेण सह। विलास इत्यत्र लकारस्थितेनाऽऽकारेण सह वर्त्तते। कल्पमित्यत्र लकाररूपं व्यञ्जनं पकारानुस्वारयुक्तं, ककारस्थितेनाऽकारेण सह। अनल्पेत्यत्र नकारस्थितेनाऽकारेण सहेत्यर्थः। प्रायेण इति वचनात् मम तातपदानां लक्ष्मीस्तवे यथा—

**"श्रुताधीता गीता श्रुतिभिरविगीताखिलगुणा**
**गुणातीता भीताऽभयकृदविनीताऽपचयदा।**
**नतिप्रीता पीताम्बरसुपरिणीताऽमरवधू-**
**दृशा पीता स्फीता मलरुचिपरीता विजयताम्॥"**

इत्यादौ क्वचिदन्त्ययोज्यत्वाभावेऽप्ययमनुप्रासो दृश्यते। अस्य च प्राचीनोक्तालङ्कारेभ्यः पृथगनुभव-सिद्धश्चमत्कारविशेष इति पृथगलङ्कारत्वम्।

## कुसुमप्रतिमा

अन्त्यानुप्रासं लक्षयति व्यञ्जनमिति। अवस्थां प्रथमोच्चारितव्यञ्जनावस्थामनतिक्रम्य स्थितमिति यथा-वस्थं व्यञ्जनम्, चेद्यदि, आद्येन प्राथमिकेन प्रथमोच्चारितव्यञ्जनपूर्ववर्त्तिस्वरसमानाकारेण स्वरेण सह, आवर्त्यते पुनरुच्चार्यते; तत्तदा अन्त्यानुप्रासः। नन्वन्त्यानुप्रास इति संज्ञां प्रति को हेतुरित्याह अन्त्ययोज्यत्वादिति। अन्त एव अन्त्यः स्वार्थे यः। तथा च अन्त्ये पादस्य पदस्य वा अवसाने योज्यत्वात् प्रयोज्यत्वादेव अस्य अन्त्यानुप्रास इति संज्ञेत्याशयः। त्र यथावस्थमित्यनेन प्रथमोच्चारितव्यञ्जनपरवर्त्ति स्वरमात्रमेव ग्राह्यम्, न तु तदाद्यस्वरोऽपि तस्य तत्पूर्वव्यञ्जनावस्थारूपतयैव प्रसिद्धत्वादित्यत आह आद्येन स्वरेण सहेति।

यथावस्थपदस्यार्थमाह यथेति। अत्रानुस्वारविसर्गौ व्यञ्जनात् पूर्ववर्तिनौ परवर्त्तिनौ च ग्राह्यौ, स्वरस्तु व्यञ्जनात् परवर्त्येव, संयुक्ताक्षरं स्वस्मिन् सम्मिलितवर्गः तैर्विशिष्टमिति परोच्चारणीयव्यञ्जनविशेषणम्।

भूयोदर्शनं संज्ञाव्युत्पत्तिञ्चानुसृत्य व्यवस्थामाह एष चेति। अन्त्यानुप्रास इत्यर्थः। प्रायेण बाहुल्येनपा-दस्य अन्ते, क्वचित् पदस्य अन्ते चेत्यर्थः।

केश इति। जराजीर्णतायामपि अत्यन्तविषयासक्तं कञ्चित् प्रति कस्यचिन्निन्दाव्यञ्जकोक्तिरियम्। केशः, काशन्तवकस्य काशकुसुमगुच्छस्य विकास इव विकासः प्रकाशो यस्य स तथाभूतः, पक्वतया अतीवशुभ्र-वर्णः सञ्जात इत्यर्थः; कायः शरीरम्, प्रकटितो व्यक्तीकृतः करभस्य करिशावकस्य विलास इव विलासो भङ्गो येन स तथोक्तः कुब्जोभूत इति तात्पर्य्यम्। तथा चक्षुः दग्धो यो वराटकःकरपर्द्दकस्तत्कल्पं ततुल्यम्; तथापि चेतश्चित्तं कर्तृ अनल्पं विशालं कामं विषयासक्तिं न त्यजति। अहो मोहप्रभाव इति भावः।

अत्र प्रथमापादान्तगत 'आस' इत्यंशः द्वितीयपादान्ते, तृतीयपादान्तगतश्च 'अल्पम्' इत्यंशश्चतुर्थपादान्ते पुनरुच्चारित इति आद्यस्वरेण सह यथावस्थितव्यञ्जनस्य पुनरुच्चारणादन्त्यानुप्रासः।

(क) मन्दमिति। अस्य मतपूरितपरपदत्रयं यथा—

**"मन्दं हसन्तः पुलकं वहन्तः प्रद्युम्नकान्ताः स्मरतापतान्ताः।**

**वने प्रशस्ते तरुणास्वयस्ते चलत्सुचेलं विविशुः सखेलम्॥"**

अत्र "हसन्तः," इति पदान्तगतः 'अन्तः' इत्यशः 'वहन्तः' इति पदस्यान्ते पुनरुच्चारित इति अन्त्यानुप्रासः।

## विमला

संज्ञाव्युत्पत्तिमाह, एष इति।—अनुप्रासविशेष इत्यर्थः।

सव्युत्पत्तिकमत्यानुप्रासमाह, व्यञ्जनमिति।—चेत्—यदि, यथाऽवत्थं—एकधा यादृश्या अवस्थया स्थितं, व्यञ्जनम् आद्येन स्वरेण सह आवर्त्यते—पुनरुच्चार्य्यर्थ तत अनेकधा।—तदा, अन्त्ययोज्यत्वात्—अन्त्ये—पादस्य पदस्य वा अवसाने, (अन्त एव असकृच्च योज्यत्वात्—प्रयोज्यत्वात्, एव अन्त्यानुप्रासः।

केश इति ।—केशः काशस्य काशकुसुमस्य, स्तवकवत् विकासः प्रकाशः यस्य तथाभूतः, धवल इत्यर्थः, कायः देहः, प्रकटितः प्रकाशितः, करमस्येव करिशावकस्येव, विलासः विभ्रमः येन तथाविधः, कुब्जोभावमापन्न इति भावः, चक्षुः नयनं, दग्धं यत् वराटकं तस्मात् ईषदूनं, तत्सदृशमित्यर्थः, (तथाऽपि) चेतः अनल्पं प्रबलमित्यर्थः, कामं विषयाभिलाषं, न त्यजति । अत्र "विकासः" इति प्रथमपादान्तस्थितस्य आस इति पदांशः द्वितीयपदान्ते आवर्त्तितः, तथा तृतीयपादान्तस्थितः "अल्पम्" इति पदाशः चतुर्थपादान्त पुनः पठितः । अत्र पज्झाटका वृत्तम्, "प्रतिपदयमकितषोड़शमात्रा नवमगुरुत्वविभूषितगात्रा । पज्झाटिकाया एष विवेकः क्वापि न मध्यगुरुर्गण एकः ॥" इति लक्षणात् । यथा वा—"अनन्तमहिमव्याप्त विश्वां वेधा न वेद याम् । या च मातेव भजते प्रणते मानवे दयाम् ॥" इति ।

अथ पदान्तगस्य उदाहरणमाह—मन्दमिति । उदाहरणान्तरं यथा स्तुतिकुसुमाञ्जल्यां—"सारासारविदः सतां भयभिदः प्रह्लापतापच्छिदः कारुण्यार्द्रः प्रपन्नसुहृदः स्फारोभवत्संविदः । त्राताशेषविशः प्रकाशितदिशः कीर्त्या महीनिर्विशः कर्षन्तीश निशः प्रसक्तसुदृशस्त्वल्पादपीठस्पृशः ॥" इति ।

## लक्ष्मी

अथ चतुर्थमन्त्यानुप्रासं निरूपयति—व्यञ्जनमिति । अवस्थामाद्योच्चारितव्यञ्जनावस्थामनतिक्रम्य स्थितमिति यथावस्थं यथार्थेऽव्ययीभावः, व्यञ्जनम्, चेद् यदि आद्येन प्राथमिकेन आद्योच्चारितव्यञ्जनप्राग्वर्त्तिस्वरसादृश्यरूपेण स्वरेण अचा सह आवर्त्यते पुनः पठ्यते तर्हि अन्तेऽवसाने भवोऽन्त्यस्तत्र योजयितुं योक्तुमर्हमिति तादृशान्निमित्तादेव अन्त्योऽसावनुप्रासः अन्त्यानुप्रास इति व्यपदेश इत्यभिप्रायः । अत्र यथावस्थमित्युक्त्या प्रथमोच्चारितव्यञ्जनोत्तरवर्ति स्वरमात्रस्यैव ग्रहणं बोध्यम्, न तु तत्पूर्वव्यञ्जनावस्थारूपतयैव प्रसिद्धत्वादित्याशयेनाह—आद्येन स्वरेण सहेति । अस्य च प्राचीनोक्तालङ्कारेभ्यः पृथगनुभवसिद्धश्चमत्कारविशेष इति पृथगलङ्कारत्वम् ।

कारिकायाः कठिनांशं व्याचिख्यासुः यथावस्थपदस्यार्थं दर्शयति—यथेति । अनुस्वारविसर्गस्वराणामन्यतमसम्भवो यथासम्भवपदार्थः । अनुस्वारश्च स्वराश्रयेणोच्चार्यमाणो विन्दुरेखया व्यज्यमानोऽनुनासिको वर्णविशेषः, विसर्गस्तु स्वरमाश्रित्य बिन्दुद्वयात्मकः । तथ च अनुस्वारविसर्गौ व्यञ्जनात् पूर्वस्थायिनौ परस्थायिनौ च स्वरस्तु व्यञ्जनात्परस्थायिनावेव, संयुक्ताक्षरं स्वस्मिन् समुदितवर्गः, तैर्विशिष्टमिति परोच्चारणीयव्यञ्जनविशेषणम् ।

अन्त्ययोज्यत्वं विवृणोति—एष चेति । अन्त्यानुप्रास इत्यर्थः । प्रायेण अधिक्येन पादस्य पद्यचतुर्थांशस्य, अन्ते क्वचित् पदस्य अन्ते चेत्यर्थः । प्रायेण इत्यनेन पज्झटिकाछन्दःस्वेवाऽस्य सम्भवो नानुष्टुबादाविति सूचितमिति केचिद्वदन्ति ।

उदाहरति—केश इति । वार्धक्यदुःखेनातिनिर्विण्णस्य विषयत्यागमनिच्छितोर्जरत उक्तिरियम् । केशः काशस्य काशकुसुमस्य स्तवको विकासोन्मुखकलिका तद्वत् विकाशः प्रकाशो यस्य स तथाभूतः, काशस्तवको हि श्वेतो भवतीति तेनोपमानत्वम्, तथा च पक्वतया अतीवश्वेतवर्णः सञ्जात इत्यर्थः, कायः शरीरम्, प्रकटितः स्फुटीकृतः करभस्य हस्तिशिशोः विलासवद्विलासो भङ्गी येन स तादृशः, कुब्जतया शोभमान इति तात्पर्यम्, तथा चक्षुः दग्धो भस्मीभूतो यो वराटकः कपर्दकस्तत्कल्पं तत्सदृशम्, दग्धवराटकवन्निर्ज्योतिष्कमित्याशयः 'वराटकः पद्मबीजकोशे रज्जौ कपर्दके' इति कोशः, तथापि चेतश्चित्तं (कर्त्तृ) अनल्पं विशालं कामं विषयासक्तिं न त्यजति मुञ्चति इति महदाश्चर्यमिति भावः । षज्झटिकाच्छन्दस्तल्लक्षणन्तु—

**प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभूषितगात्रा ।**

**पज्झटिका पुनरत्र विवेकः क्वापि न मध्यगुरुर्गण एकः ।।**

अत्र यथासम्भवमित्युक्त्या संयुक्ताक्षररहितः प्रथमपादान्तर्गत 'आस' इत्यंशः द्वितीयपादान्ते, तृतीयपादान्तगतश्च 'अल्पम्' इत्यंशश्चतुर्थपादान्ते पुनरुच्चारित इति ककारस्थितेनाकारेण, लकारस्थितेनाकारेण ककारस्थितेनाकारेण नकारस्थितेनाकारेणन च आद्यस्वरेण सह यथावस्थितव्यञ्जनस्य पुनः पठनादन्त्यानुप्रासः । तथा निर्विण्णत्वरूपे निमित्ते उक्तेऽपि कामपरित्यागरूपस्य कार्यस्योत्पत्त्यभावानुक्तेर्विशेषोक्तिः, एवं तारुण्यरूपनिमित्ताभावे उक्तेऽपि कामापरित्यागरूपकार्यानुक्ते विभावना, यदपि तदपीतिशब्दयोरनुपादानात्तयोर्व्यङ्ग्यत्वमात्रम् । तथा च प्रकृते विरुद्धधर्मयोस्तयोः क इति सन्देहात्तन्मूलकः सन्देहसङ्करालङ्कार इत्यपि बोध्यम् ।

मन्दमिति । अत्र 'हसन्तः' इति पादान्तर्गतः 'अंशः' 'वहन्तः' इति पदस्यान्ते पुनः पाठत इति अन्त्यानुप्रासः ।

## रुचिरा

अथ चतुर्थमाह—६२ व्यञ्जनमित्यादिना ।

६७ चेद् यदि । **आद्येन । स्वरेणाचा** । सह । तु पुनः । यथाऽवस्थम् । व्यञ्जनम् । आवर्त्यते पुनः पाठ्यते । तत्तर्हि अन्त्ययोज्यत्वादन्तेऽवसाने योजयितुं योक्तुमर्हमिति तत्त्वात्तथोक्तात् कारणात् । **अन्त्यानुप्रासो**ऽन्त्योऽसावनुप्रास इति तथोक्तः । एव न त्वन्यत्रान्तर्भाव्य प्रत्याख्यातुं शक्यः, एवं तन्मूलस्य चमत्कारस्य स्फुटत्वात् । अयम्भावः—यदावर्त्यते तद् यदि स्वाद्येन स्वरेण सहैव सम्भवतोऽनुस्वारविसर्गयुक्तं तर्ह्यन्त्यानुप्रासोऽयम् । अस्य च प्रायः पादस्य पदस्य वाऽवसाने एव सम्भव इति व्यपदेशसार्थक्यम् । न चायं यमकेन गतार्थयितुं शक्यः, 'आशाःस्वच्छ प्रकाशाः' इत्यादौ तदसम्भवेऽप्यसम्भवात् । अत एव 'एवे'ति सङ्गच्छते । इति ।।५९ ।।

अथ कारिकास्थं दुरूहार्थे पदं व्याचष्टे । **यथाऽवस्थम्** । इतीत्यस्य । **यथासम्भवम् । अनुस्वारविसर्गस्वरसंयुक्ताक्षरविशिष्टम्** । 'इत्यर्थः' इति शेषः । तथा च-स्वराश्रयेणोच्चार्य्यमाणो बिन्दुरेखया व्यज्यमानोऽनुनासिको वर्णविशेषोऽनुस्वार इति निष्कृष्टम् । एषोऽन्त्यानुप्रासः । च । प्रायेणाधिक्येन । **पादस्य** पद्यचतुर्थांशस्य । च तथा । **पदस्य । अन्ते । प्रयोज्यः** 'प्रयोज्यनियोज्यौ शक्यार्थे ।' ७/३/६८ इत्यनेन उत्वाभावो ण्यच्च ।

उदाहरति—**पादान्तगः** । 'अन्त्यानुप्रास' इति शषः । **यथा । मम । 'केशः'**...इत्यादौ ।

**'काशस्तबकविलासः** काशस्य काशकुसुमस्य स्तबको विकासोन्मुखकलिका तद्वद्विलास उल्लासो यस्य सः । 'अथो काशमस्त्रियाम् ।' 'स्याद्गुच्छकस्तु स्तबकः' इति चामरः । काशस्तवको हि सितो भवतीत्यस्योपमानत्वम् । केशः । 'यद्यपी'ति शेषः । तथा-**प्रकटितकरभविलासः** प्रकटितः करभवद् विलासो येन सः । करभ उष्ट्रशावकः । 'करभः शिशुः ।' इत्यमरः । उष्ट्रशावकवत् कुब्जतयाऽलङ्कियमाण इति भावः । **कायः** शरीरम् । एवम्-**दग्धवराटककल्पं** दग्धो यो वराटकस्तस्मात् किञ्चिन्न्यूनमित्यर्थः । वराटकः पद्मबीजकोशः कपर्दिका वा । 'वराटकः पद्मबीजकोशे रज्जौ कपर्दके ।' इति कोशः । 'ईषदसमाप्तौ कल्पदेश्यदेशीयरः । ५'/३/६७ इति कल्पः । दग्धवराटकवन्निर्ज्योतिष्कमिति भावः । **चक्षुः** । 'तदपी'ति शेषः । **चेतः । अनल्पम् । कामम्** (कर्म) न । **त्यजति** 'इति चित्रम्' इति शेषः । वार्द्धक्यदुःखेन निर्विण्णस्योक्तिरियम् । चतुष्पदी छन्दः । तल्लक्षणं यथा—'षोडशकलाश्चरणगा यस्याश्चतुष्पदीत्यभिधा खलु तस्याः ।' इति । अत्रेदं बोध्यम्—निर्विण्णत्वरूपे कारणेऽभिहितेऽपि

कामपरित्यागरूपस्य कार्य्यस्योत्पत्त्यभावाभिधाना द्विशेषोक्तिः, एवं यौवनरूपकारणाभावेऽभिहितेऽपि कामपरित्यागरूपकार्य्याभिधानद्विभावना, 'यदपि तदपी'ति शब्दयोरदर्शनात्तयोर्व्यङ्ग्यत्वमात्रम्। प्रकृते तथा विरुद्धशीलयोस्तयोः कतमेति सन्देहात्तन्मूलः सन्देहसङ्करो जयति। पादान्ते 'कासलासे'त्यादीनामन्त्यमात्रस्य सादृश्यादन्त्यानुप्रासस्तथा प्रत्यक्षसिद्धः। इति ॥ ७४ ॥'

**पदान्तगः। यथा—'मन्दं...'** इत्यादौ।

'मन्दमल्पम्' हसन्तो हासं कुर्वन्तः। अत एव प्रेम्णा—**पुलकं** रोमोद्गमम्। **वहन्तः**। इत्यादि 'गोष्ठीं श्रयन्तश्चषकं पिबन्तः। रतिं नयन्तः सुविकाशमन्तः प्रियां स्पृशन्तः स्वरिवावसन्तः ॥' इति शेषः ॥ स्वरिव स्वर्गे इवावसन्तो मोदन्ते इति भावः। यथा वा मम पादान्ते 'म्लायति दर्शंदर्शं तव मुखमपरस्य दुर्लभादर्शम्। तदिति ग्लौरिति लोके प्रथितं चन्द्रं समालोके ॥' इति। यथा वा पदान्ते 'सारासारविदः सताम्भयभिदः प्रह्वोपतापच्छिदः कारुण्याद्रहृदः प्रपन्नसुहृदः स्फारीभवत्संविदः। त्राताशेषविशः प्रकाशितदिशः कीर्त्या महीनिर्विशः ! कर्षन्तीश ! निशः प्रसक्तसुदृशस्त्वत्पादपीठस्पृशः ॥' इति। अत्राहुः सूत्रकाराः—'पूर्वस्वरविनाकृतस्याप्यन्त्यव्यञ्जनस्यावृत्तिर्दृश्यते। यथा—'पुनरपि मरणं पुनरपि जननं पुनरपि जननीजठरे शयनम्। क्षणमपि सज्जनसङ्गतिरेका भवति भवार्णवतरणे नौका ॥' इति। अत्रेदं तत्त्वम्-अनुप्रासो हि स्वरसाम्यं नात्यपेक्षते। अत एवेदं सङ्गच्छते। इति।

यथावस्थमिति यथासंभवमनुस्वारविसर्गस्वरयुक्ताक्षरविशिष्टम्। एष च प्रायेण पादस्य पदस्य चान्ते प्रयोज्यः। पादान्तगो यथा मम—

**केशः काशस्तबकविकासः कायः प्रकटितकरभविलासः।**

**चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम्॥**

पदान्तगो यथा—

**'मन्दं हसन्तः पुलकं वहन्तः' इत्यादि।**

**शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः।**

लाटानुप्रास इत्युक्तो—

उदाहरणम्—

**स्मेरराजीवनयने नयने किं निमीलिते।**

**पश्य निर्जितकंदर्पे कंदर्पवशगं प्रियम्॥**

अत्र विभक्त्यर्थस्यपौनरुक्त्येऽपि मुख्यतरस्य प्रातिपदिकांशद्योत्यधर्भिरूपस्याभिन्नार्थत्वाल्लाटानुप्रासत्वमेव।

**'नयने तस्यैव नयने च॥' (४३४ पृ.)**

अत्र द्वितीयनयनशब्दो भाग्यवत्त्वादिगुणविशिष्टत्वरूपतात्पर्यमात्रेण भिन्नार्थः।

**'यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य।**

**यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य॥'**

अत्रानेकपदानां पौनरुक्त्यम्। एष च प्रायेण लाटजनप्रियत्वाल्लाटानुप्रासः।

**ऽनुप्रासः पञ्चधा ततः॥ ७॥**

स्पष्टम्।

---

## विवृतिः

लाटानुप्रासमाह—**शब्दार्थयोरिति**। शब्दः प्रातिपदिकं पदं च। भिन्नार्थशब्दपौनरुक्त्ये यमकस्यैव विषय इति तद्वारणार्थेति। 'स्मेरराजीवनयने लोचने किं निमीलिते।' इत्यादावर्थमात्रस्य पौनरुक्त्ये नायमनुप्रास इत्युभयोपादानम्। अर्थस्य पौनरुक्त्यं तु पूर्वपदार्थविशेषणविशेषाभ्यां सहोत्तरपदार्थविशेषणविशेष्ययोरैक्ये संभवति।

तेन—घनेन संवृते सुमुखि व्योम्नि विभाति चन्द्रमाः' इत्यादौ विशेषणयोर्भेदान्नायमनुप्रासः। नापि 'वपुः कान्तं वचः कान्तं मनस्तु परुषं तव' इत्यादौ विशेष्ययोर्भेदात्। ननु 'यातु यातु किमनेन तिष्ठतु मुञ्च मुञ्च सखि सादरं वचः' इत्यादौ क्रोधादिव्यञ्जके शब्दार्थपौनरुक्त्ये लाटानुप्रासप्रसङ्ग इत्यत आह—**भेद इति**। तात्पर्यविषया-न्वयामात्रभेदे सतीत्यर्थः।

अतएव 'अन्वयमात्रभेदात्' इति काव्यप्रकाशः। तथाह 'यातु यातु' इत्यादावन्वयभेदो नास्ति किं तु क्रोधव्यञ्जकत्वमेव पौनरुक्त्यमिति भावः। नन्वर्थान्तरसंक्रमितवाच्ये ध्वनावापाततः शब्दार्थयोः पौनरुक्त्यावभा-सनेऽपि पर्यवसाने वक्तृतात्पर्यविषयविशेषणान्तरप्रतीत्या भिन्नार्थत्वाभासनेनायमनुप्रास इत्यभिप्रायेणाह—**नयने इति**। द्वितीयेति भाग्यवत्त्वादिगुणरूपं यद्विशिष्टत्वं विशेषणं तन्मात्रेण वक्तृतात्पर्यमात्रेण भिन्नार्थ इति योजनावै-परीत्येनान्वयः। अत एव 'दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने। अर्थान्तरसंक्रमितवाच्ये हर्षेऽवधारणे॥' इत्यर्थान्तरसंक्रमितवाच्यध्वनेः पृथगुपादानं संगच्छते। मात्रपदेन नयनत्वस्य व्यवच्छेदः। शब्दस्य पौनरुक्त्यं द्विरुक्तिः। प्रातिपदिकपौनरुक्त्यं च तावदेकस्मिन्समासे विभिन्नसमासे समासासमासयोश्च संभवतीति त्रिवि-धम्। यथा—'सितकरकररुचिरविभा, विभाकराकार, धरणिधर, कीर्तिः। पौरुषकमला, कमला सापि तवैवास्ति नान्यस्य॥' अत्र करेति प्रातिपदिकावृत्तिरेकस्मिन्समासे, विभेति भिन्ने, कमलेति समासासमासयोश्च। समासास-मासगतं प्रातिपदिकपौनरुक्त्यमुदाहरति—**स्मेरेति**। फुल्लेत्यर्थः। नन्वत्र प्रातिपदिकस्य पौनरुक्त्यसत्त्वेऽपि विभ-क्त्यर्थस्य भिन्नत्वादर्थपौनरुक्त्यं नास्तीति कथमस्य विषय इत्यत आह—**अत्रेति**। भिन्नत्वात्पुनरुक्तत्वात्। पदपौनरुक्त्यमप्यनेकानेकपदगतत्वेन द्विविधम्। तत्रैकपदपुनरुक्ते यथा—'वदनं वरवर्णिन्यास्तस्याः सत्यं सुधा-करः। सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत्॥' अत्र विभक्तिसहितस्य प्रातिपदिकस्य तदर्थस्य च पौनरु-क्त्यम्। प्रथमं सुधाकरपदं विधेयार्थम्, अपरमनुवाद्यार्थम्॥ अनेकपदपौनरुक्त्ये उदाहरति—**यस्य नेति**। अत्र पूर्वार्धे तापकरत्वात्तुहिनदीधितिर्दवदहनः। परार्थे तु तादृशदुःखाजनकत्वाद्दवदहनोऽपि तुहिनदीधितिरिति तात्पर्य-विषयस्योद्देश्यविधेयभावेनान्वयस्य भेदः। पदार्थानां त्वभेद एव। मिलित्वा अनुप्रासः पञ्चप्रकारः। चरमप्रकारद्वयं पदानुप्रास इत्यन्ये। अयं चान्यैरुभयालंकारतयोक्तोऽपि शब्दविशेषान्वयव्यतिरेकानुविधायित्वाद्ग्रन्थकृता शब्दालंकारमध्ये गृहीतः॥

## विवृतिपूर्तिः

**पदान्तग इति**। यथा वा—'सारासारविदः सतां भयभिदः प्रह्वोपतापच्छिदः कारुण्यार्द्रहृदः प्रपन्नसुहृदः स्फारीभवत्संविदः। त्राताशेषविशः प्रकाशितदिशः कीर्त्या महीनिर्विशः कर्षन्तीश निशः प्रसक्तसुदृशस्त्वत्पादपी-ठस्पृशः॥' इति स्तुतिकुसुमाञ्जलिपद्यमुदाहरणीयम्। एतदनुप्रासानुसरणेनैवाश्वधाटीछन्दः सहृदयहृदयावर्जकं भवति। तत्र 'न्यायावधिः श्रुतनिकायाकरस्त्रिभुवनायावताररसिकश्छायावधीरितकलायाबलिः कनकदायादपट्टव-सनः। जायास्पृहाजटिलमायातनूविहितकायाभिमानिचरितः पायाददो जगदपायाददभ्रकरुणाया निधी रघुपतिः॥' इति मदीयं देवराजचरितपद्यमुदाहार्यम्॥

**लाटेति। प्रकाशे तु**—'पदानां स पदस्यादि वृत्तावन्यत्र तत्र वा। नाम्नः सवृत्त्यवृत्त्योश्च तदेवं पञ्चधा मतः॥' इत्यनेन लाटानुप्रासस्य पञ्चविधत्वमाम्नातम्, तत्तु विवृतिकृता दर्शितमेव। अत्र कारिकायां वृत्तिपदेन कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चापि वृत्तय उपलक्ष्यन्ते। तेन 'चन्द्रायते शुक्लरुचापि हंसो हंसायते चारुगतेन कान्ता।' इत्यादेरपि संग्रहः। **कमलाकरादयस्तु**—'मधुनि मधुकर त्वं रङ्गमङ्गीकरोषि—' इत्यादौ

नामैकदेशावृत्तावप्यमुमिच्छन्ति। केचित्तु कारिकागतनामपदस्योपलक्षणमूरीकृत्य 'जित्वा विश्वं भवानद्य विहरत्यवरोधनैः। विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः॥' इत्यप्युदाहरन्ति॥

**अनुप्रास इति**। छेकानुप्रासवृत्त्यनुप्रासश्रुत्यनुप्रासान्त्यानुप्रासलाटानुप्रासभेदैः पञ्चधा पञ्चप्रकारक इत्यर्थः॥

## विज्ञप्रिया

लाटानुप्रासाख्यमनुप्रासमाह—**शब्दार्थयोरिति**। शब्दद्वयार्थयोरित्यर्थः। पौनरुक्त्यं पुनः पुनः कथनम्। ततश्च पुरुक्तिदोषप्रसक्तावाह—**भेदे** इति। तात्पर्य्यमुद्देश्यविधेयताविषयम्। मात्रपदादर्थभेदो व्यावर्त्त्यते।

**स्मेरराजीवेति**—नायकं दृष्ट्वा क्रोधान्निमीलिताक्षीं मानिनीं प्रति सख्या उक्तिरियम्। रूपेण कन्दर्पनिर्जेताऽपि त्वदनुरागात् त्वद्वशगस्तथा चात्र मानाऽनौचित्यमिति भावः। अत्र आद्ये नयनकन्दर्पपदे उद्देश्यतात्पर्य्यकेऽन्त्ये तत्पदे तु विधेयतात्पर्य्यके इत्यतो भेदः। पदार्थौ तु अभिन्नौ मात्रपदात् प्रकृत्यर्थस्य एव भेदव्यावृत्तिर्न तु प्रत्ययार्थस्य।

इत्यतो विभक्त्यर्थभेदं दर्शयति—**अत्र विभक्त्यर्थस्येति। मुख्यतरस्येति।** प्रातिपदिकांशौ नयनकन्दर्पपदे, तद्द्योत्यस्य, तद्बोध्यस्य धर्मिरूपस्य नयनकन्दर्पात्मकस्य अर्थस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वेन अस्वतन्त्रप्रत्ययापेक्षया स्वातन्त्रयाद् मुख्यतरस्याऽभिन्नत्वाद् इत्यर्थः।

यत्र तु प्रकत्यर्थस्यापि भेदस्तत्र न लाटानुप्रासत्वमित्याह—**नयने** इति। अत्र द्वितीयनयनशब्दस्य भाग्यवत्तादीत्यर्थे तात्पर्यात् तात्पर्य्यस्यैव प्रातिपदिकार्थस्यापि भेद इति दर्शयति—अत्र हीति। तथा च अर्थान्तरसंक्रमितवाच्यलक्षणाविषय एवायं न लाटानुप्रास इत्युक्तम्। अतएव अर्थान्तरसंक्रमितवाच्यलाटानुप्रासयोः कथितपदादोषताकथने पृथगेव तद्द्वयमुक्तम्।

अस्य एकपदे इव अनेकपदेष्वपि सम्भवं दर्शयति—यथा वा। **यस्य चेति**—अत्र प्रथमार्धे दवदहने तुहिनदीधितित्वं विधेयमतापकरत्वात्।

**पञ्चधेति**—छेकानुप्रासः, वृत्त्यनुप्रासः, श्रुत्यनुप्रासः, अन्त्यानुप्रासो लाटानुप्रासश्चेति पञ्चधा। काव्यप्रकाशे तु लाटानुप्रासस्यैव पञ्चधात्वमुक्तम्।

## लोचन

**शब्दार्थयोरिति**। तात्पर्य्यमन्यपरत्वं, तच्चार्थान्तरसंक्रमितस्वरूपं तच्छब्देन विधेयतया प्रकृतोपयोगार्थविवक्षणात् तन्मात्रेण, न तु स्वरूपेण भेदो विशेषः।

अत्रेति। विभक्त्योः सुपोः। धर्मिरूपस्य चक्षुरादिरूपस्य। विभक्तीत्युपलक्षणं; तेन लिङ्गवचनयोरपि एवं सुप्रतिपत्तयेऽसन्दिग्धमुदाहरणं दर्शयित्वा सन्दिग्धं दर्शयति-**नयने** इति। तात्पर्य्यमात्रेण न तु स्वरूपेण। इह च पौनरुक्त्यप्रतिभासमात्रमलङ्कारः, न तु प्रतीयमानो विशेषः तस्य गूढत्वादिगुणीभावहेतुत्वाभावात्।

एष च बहुपदनिष्ठोऽपि सम्भवतीति तत्रोदाहरणान्याह—**यथा वेति**। यस्य न सविधे दयितेत्यादौ प्रथमार्धे तुहिनदीधितिर्दवदहनः द्वितीयार्धे दवदहनः तुहिनदीधितिरिति सम्बन्धः।

उपसंहरति—**अनुप्रास** इति ।

## कुसुमप्रतिमा

लाटानुप्रास निरूपयति शब्देति । तात्पर्य्यमात्रतस्यात्पर्य्यविषयीभूतात् केवलादन्वयादेव भेदे वक्तुरभिप्रेतसम्बन्धमात्रभेदेनैव शब्दार्थयोर्भेदे सतीत्यर्थः, शब्दार्थयोरुभयोरेव यत् पौनरुक्त्यं पुनरुक्तिः, स लाटानुप्रास इत्युक्तः, कविभिरिति शेषः । अत्र "स्मेरराजीवनयने ! लोचने किं निमीलिते" इत्यादौ अर्थमात्रपौनरुक्त्ये शब्दपौनरुक्त्याभावे अतिव्याप्तिवारणायाह शब्देति । "स सुरभिं सुरभिं सुमनोमरैः" इत्यादौ शब्दमात्रपौनरुक्त्ये अथपौनरुक्त्याभावे यमके अतिव्याप्तिवारणायोक्तमथेति । "चित्रं चित्रमनाकाशे कथं सुमुखि ! चन्द्रमाः" इत्यादौ चित्रं चित्रमिति शब्दार्थयोरुभयोरेव पौनरुक्त्ये तात्पर्य्यमात्रतोऽपि भेदाभावस्थले अतिव्याप्तिनिरासायाह "भेदे तात्पर्य्यमात्रतः" इति ।

स्मेरेति । स्मेरं प्रस्फुटं राजीवं पद्ममिव नयनं यस्यास्तत्सम्बोधनम् । नयने नेत्रद्वयं किं निमीलिते मानवशान्मुद्रिते ? । निर्जितो रूपेण विजितः कन्दर्पो येन तं तादृशं प्रियं पतिं कन्दर्पवशगं कामायत्तं पश्य । अतो मानमपहायैनं चरितार्थयेति भावः ।

अत्र "नयने नयने" इति शब्दार्थयोः "कन्दर्पं कन्दर्प" इति शब्दार्थयोश्च पौनरुक्त्यात्र पूर्वत्र सम्बोधनविषयत्व-कर्म्मस्वरूपसम्बन्धभेदात् परत्र च कर्मत्वसम्बन्धित्वरूपसम्बन्धभेदाच्च लाटानुप्रासः ।

ननूदाहृते नयनशब्दयो कन्दर्पशब्दयोश्च पौनरुक्त्येऽपि तदुभयगतविभक्त्यर्थानां भेदेन पौनरुक्त्याभावात् कथं निरुक्तलक्षणसङ्गतिरित्याह अत्रेति । मुख्यतरस्य विभक्त्यर्थापेक्षया प्रथमोपस्थितकत्वेन मात्रन्त्रयेण च प्रधानतरस्य । एतेन "गौणमुख्योर्मुख्ये कार्य्यसम्प्रत्ययः" इति न्यायात् कारिकाया शब्दार्थयोरित्यत्रार्थपदेन मुख्यतरः प्रकृत्यर्थ एव गृहीत इति सूचितम् । प्राप्तपदिकांशेन "कृत्तद्धितसमासाश्च" इत्यनेन समस्तस्य पुनः प्रातिपादिक संज्ञाकरणात् तदेकदेशरूपेण नयनशब्देन कन्दर्पशब्दद्वयेन च, द्योत्य उपस्थाप्यो यो धर्म्मिरूपः तत्तद्विक्त्यर्थरूपधर्म्मशाली नेत्रादिरूपार्थः, अभिन्नार्थत्वात् अभिन्नपदार्थत्वेन पुनरुक्तत्वात्, लाटानुप्रासत्वमेव अत्र प्रसजतोऽलङ्कारस्येत्यर्थः । अत्र एवशब्देन यमकत्वं व्यवच्छिद्यते । तथा च नयने इत्यादेः स्वरव्यञ्जनसंहतेस्तेनैव क्रमेणावृत्तावपि उक्तरीत्या प्रधानस्य प्रातिपदिकार्थस्य पार्थक्याभावान्न यमकत्वमपीत्य शयः ।

अथ अर्थान्तरसंक्रमितवाच्यध्वनिस्थले कथं न लाटानुप्रास इत्याह नयने इति । भाग्यवत्त्वादिगुण एव विशिष्टत्वं विशेषणं तद्रूपेण तात्पर्य्यमात्रेण, भिन्नः अर्थः प्रतिपदिकार्थो यस्य सः । तथा चात्र प्रथमनयनशब्दस्य नेत्ररूप एवार्थः, द्वितीयनयनशब्दस्य तु भाग्यवत्त्वादिगुणविशिष्ट एव नेत्ररूपोऽर्थ इति प्रातिपदेकार्थयोरेव भेदेन पौनरुक्त्याभावान्न लाटानुप्रासः, किन्तु अर्थान्तरसंक्रमितवाच्यध्वनिमात्रमित्याशयः । अतएव च "दैन्येऽर्थ लाटानुप्रासेऽनुकम्पायां प्रसादने । अर्थान्तरसंक्रमितवाच्ये हर्षेऽवधारणे ॥" इति कथितपदत्वदोषप्रतिप्रसवे लाटानुप्रासोऽर्थान्तरसंक्रमितवाच्यध्वनिश्च पृथगेवाभिहितः ।

इदानीं "पदानां स पदस्यापि" इत्यनेन काव्यप्रकाशकृता यद्बहुपदानामेकपदस्य वा आवृत्तौ लाटानुप्रासस्य भेदद्वयमङ्गीकृतम्, तदपि स्वमते विशेषानभिधानादङ्गीकृतमेवेति भङ्ग्या सूचयन्नाह यथा वेति ।

अत्र बहुपदानामावृत्तौ काव्यप्रकाशधृतमेवोदाहरति यस्येति । यस्य कामिनः सविधे सकाशे दयिता वल्लभा न वर्त्तते, तस्य जनस्य सम्बन्धे तुहिनदीधितिः शीतरश्मिश्चन्द्रोऽपि दवदहनो दवाग्निः, तद्वदेव दारुणस-

न्तापकरत्वादित्याशयः। चकारस्त्वर्थे। यस्य तु कामिनः सविधे समीपे दयिता वल्लभा वर्त्तते, तस्य जनस्य तु सम्बन्धे दवदहनो दावाग्निरपि तुहिनदीधितिः शीतरश्मिश्चन्द्रः; तस्य सर्वपदार्थेष्वेव शीतलतानुभवादिति भावः।

अत्र सविधे इत्यादीनां बहुपदानां तदर्थानाञ्च पौनरुक्त्यात् परञ्च समीपे दयिताया अविद्यमानताविद्यमानतारूपसम्बन्धमात्रभेदेन भेदात् दवदहन्तुहिनदीधित्योः प्रदर्शितप्रकारोद्देश्यविधेयभाववैपरीत्यरूपसम्बन्ध मात्रभेदेन भेदाच्च लाटानुप्रासः।

अत्रेति। पौनरुक्त्यमित्युपलक्षणम्, उक्तविधसम्बभेदश्च। तेनात्र लाटानुप्रास इत्याशयः। न चात्र स्वरव्यञ्जनसंहतेस्तेनैव क्रमेणावृत्तिसत्त्वाद्यमकमेवेति वाच्यम्, प्रातिपदिकार्थानां पार्थक्याभावात् प्रातिपदिकार्थपार्थक्य एव च यमकाङ्गीकारात्।

एकपदपौनरुक्त्ये यथा शिशुपालवधे—

**"श्रियः पतः श्रीनतिशासितुं जगज्जगन्निवासो वसुदेवसद्मनि।"**

अत्र जगज्जगति शब्दार्थयोः पौनरुक्त्यात् कर्म्मत्वसम्बन्धित्वरूपसम्बन्धमात्रभेदाच्च लाटानुप्रासः। तेनात्र मल्लिनाथोक्तो वृत्त्यनुप्राश्चिन्त्यः, वृत्त्यनुप्रासश्च सामान्यरूपतया लाटानुप्रासरूपविशेषेतरत्वस्यैवौचित्यात् अन्यथा आनयोः साङ्कर्य्यापत्तेर्दुनिवारत्वात्।

अस्य चापरे भेदाः काव्यप्रकाशादावनुसन्धेयाः।

इदानीं लाटानुप्रासशब्दस्य योगार्थमाह एष इति। लाटः सुरसिकः।

इदानीमनुपासमुपसंहरन् तद्भेदसङ्कलनमाह अन्विति। ततश्छेकादिभेदात्। तथा च—। छेकानुप्रासः १। वृत्त्यनुप्रासः २। श्रुत्यनुप्रासः ३। अन्त्यानुप्रासः ४। लाटानुप्रासः ५। सन्निहितान्व वामीषामुदाहरणानि।

स्पष्टमिति। अतो न किञ्चिद्वयाख्यातमित्याशयः।

## विमला

लाटानुप्रासमाह, शब्दार्थयोरिति।—तात्पर्य्यमात्रतः, न तु अर्थतः इति भावः, भेदे सति तात्पर्य्यविषयान्वयमात्रभेदे सतीत्यर्थः, अत एव "अन्वयमात्रभेदात्" इति काव्यप्रकाशः। ननु "यातु यातु किमनेन तिष्ठता मुञ्च मुञ्च सखि ! सादरं वचः" इत्यादौ क्रोधादिव्यञ्जके शब्दार्थपौनरुक्त्ये लाटानुप्रासप्रसङ्गः भवितुमर्हति इत्यतः केचिदे" इति पदमुपात्तम्। तथा च—"यातु यातु" इत्यादौ अन्वयभेदो नास्ति, किन्तु क्रोधव्यञ्जकमेव पौनरुक्त्यमिति भावः। शब्दार्थयोः शब्दः प्रातिपदिकं पदञ्च, तथा अर्थश्च तयोरित्यर्थः, भिन्नार्थतेशब्दपौनरुक्त्ये यमकस्यैव विषयः इति तद्वारणाय अर्थेति, पौनरुक्त्यं लाटानुप्रासः इति उक्तः। "स्मेरराजीवनयने ! लोचने किं निमीलिते" इत्यादौ अर्थमात्रस्य पौनरुक्त्ये नायमनुप्रासः इति शब्दार्थोभयोरुपादनम्। अर्थस्य पौनरुक्त्यन्तु पूर्वपदार्थविशेषविशेष्याभ्यां सह उत्तरपदार्थविशेषणविशेष्ययोरैक्ये सम्भवति; तेन "घनेन संवृते सुमुखि ! व्योम्नि विभाति चन्द्रमाः" इत्यादौ विशेषणयोः भेदात् नायमनुप्रासः; नापि "वपुः कान्तं वचः कान्तं ममस्तु परुषं तव" इत्यादौ विशेष्ययोर्भेदात्। प्रकाशकारोऽप्याहं—"शाब्दस्तु लाटानुप्रासो भेदे तात् पर्य्यमात्रतः" इति। तत्र शब्दस्य पौनरुक्त्यं द्विरुक्तिः, प्रातिपदिकपौनरुक्त्यच्च तावदेकस्मिन् समासे विभिन्नसमासे समासासमासयोश्च सम्भवतीति त्रिविधम्।

तद्यथा—"सितकरकररुचिरविभा विभाकराकारधरणीधरकीर्त्तिः। पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य ॥" अत्र करेति प्रातिपदिकावृत्तिरेकस्मिन् समासे, विभेति भिन्ने, कमलेति समासासमासयोश्च इति ।

समासासमासगतं प्रातिपदिकपौनरुक्त्यं विशेषेणोदाहर्त्तुमाह, स्मेरेति ।—स्मेरं विकसितं, यत् राजीवं तद्वत् नयने यस्याः तत्सम्बुद्धौ, नयने किं—कथं, निमीलिते ? निर्जितः कन्दर्पो येन तादृशम्, अतिसुन्दरमित्यर्थः, प्रियं—कान्तं, कन्दर्पवशगं—कामपरतन्त्रं, पश्य—अवलोकय ।

नन्वत्र प्रातिपदिकस्य पौनरुक्त्यसत्त्वेऽपि विभक्त्यर्थस्य भिन्नत्वात् अर्थपौनरुक्त्यं नास्तीति कथमस्य विषयः ? इत्यत आह, अत्रेति ।—अत्र विभक्त्यर्थस्य एकत्र सम्बोधनरूपस्य, अन्यत्र कर्मरूपस्य, मुख्यतरस्य विभक्त्यपेक्षया प्रधानस्य, प्रकृतिप्रत्यययोः प्रकृतेरव प्राधान्यम् आश्रयत्वादिति भावः, प्रातिपदिकाशेन शब्दांशेन, द्योत्यस्य प्रतिपाद्यस्य, धर्मिरूपस्य नेत्ररूपार्थस्य, अभिन्नार्थत्वात् एकार्थत्वात्। [अत्र "भिन्नार्थत्वात्" इति पाठे—पुनरुक्तवादित्यर्थः] । अत्र विभक्तेः भिन्नत्वात् तात्पर्य्यभिन्नत्वं बोध्यम् ।

नन्वर्थान्तरसङ्क्रमितवाच्य ध्वनावापाततः शब्दार्थयोः पौनरुक्त्यावभासनेऽपि पर्य्यवसाने वक्तृतात्पर्य्यविषयविशेषणान्तरप्रतीत्या भिन्नार्थत्वावभासनेनायमनुप्रासः इत्यभिप्रायेणाह—नयने इति। भाग्यवत्त्वेति ।—भाग्यवत्त्वादिगुणरूपं यद्विशिष्टत्वं विशेषणं, तन्मात्रेण वक्तृतात्पर्य्यमात्रेण, भिन्नार्थ इति योजनावैपरीत्येनान्वयः । अत एव "दैन्येऽथ लाटानाप्रासेऽनुकम्पाया प्रसादने । अर्थान्तरसङ्क्रमितवाच्ये हर्षेऽवधारणे ॥" इत्यर्थान्तरसङ्क्रमितवाच्यध्वनेः, पृथगुपादानं सङ्गच्छते । तात्पर्य्यमात्रेणेत्यत्र मात्रपदेन नयनत्वस्य व्यवच्छेदः ।

एकानेकपदगतत्वेन द्विविधे पदपौनरुक्त्ये प्रथमम् अनेकपदपौनरुक्त्यम् उदाहरति, यस्येति ।—यस्य सविधे—समीपे, दयिता—प्रिया, न, विद्यते इति शेषः, तस्य तुहिनदीधितिः—चन्द्रः दवदहनः—दावाग्निः यस्य सविधे दयिता, विद्यते इति शेषः, तस्य दवदहनः तुहिनदीधितिः । अत्र प्रथमार्द्धे—तापकरत्वात् तुहिनदीधितिर्दवदहनः, परार्द्धे तु—तादृशदुःखाजनकत्वात् दवदहनोपि तुहिनदीधितिरिति तात्पर्य्यविषयस्योद्देश्यविधेयभावेनान्वयस्य भेदः, पदार्थानां त्वभेद एव । अत्र गीतिच्छन्दः, तथोक्तम्—"आर्य्याप्रथमार्द्धसमं यस्या अपरार्द्धमाह तां गीतिम्" इति । एकपदपुनरुक्ते यथा—"वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः । सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ? ॥" अत्र विभक्तिसहितस्य प्रातिपदिकस्य तदर्थस्य च पौनरुक्त्यम्; प्रथमं सुधाकरपदं विधेयार्थम्, अपरमनुपाद्यार्थम् ।

अनुप्रास इति ।—ततः—पूर्वोक्त्या रीत्या, छेक-वृत्ति-श्रुति-अन्त्य-लाटोपाधिभेदादिति यावत्, अनुप्रासः, पञ्चधा—पञ्चविधः । चरमप्रकारद्वयं पदानुप्रास इत्यन्ये, अयञ्चान्यैरुभयालङ्कारतयोक्तोऽपि शब्दविशेषान्वयव्यतिरेकानुविधायित्वात् ग्रन्थकृता शब्दालङ्कारमध्ये गृहीतः इति बोध्यम् ।

## लक्ष्मी

पञ्चमं लाटानुप्रासं निरूपयति—शब्दार्थयोरिति । तात्पर्यमात्रस्तात्पर्यविषयीभूतादन्वयमात्रादेव भेदे वक्तुः केवलाभिप्रेतसम्बन्धभेदेनैव शब्दार्थयोर्भेदे सतीत्यर्थः शब्दः प्रातिपदिकं पदं च अर्थो वाच्यः तयोः शब्दार्थयोरुभयोरेव यत् पौनरुक्त्यं पुनः कथनम्, स लाटानुप्रास इत्युक्तो मनीषिभिरिति शेषः । अत्र—

**'स्मेरराजीवनयने ! लोचने किं निमीलिते ।'**

इत्यादावर्थमात्रस्य पौनरुक्त्ये शब्दस्य च तदभावे अतिप्रसङ्गवारणाय शब्दोपादानम्, 'नवपलाशपलाशवनं पुरः' इत्यादौ शब्दमात्रस्य पौनरुक्त्ये अर्थस्य च तदभावे यमके अति प्रसङ्गवारणायर्थेति । अर्थस्य पौनरुक्त्यं तु पूर्वपदार्थविशेषणविशेषाभ्यां सहोत्तरपदार्थविशेषणविशेष्ययोरैक्ये सम्भवति । अत एव—

'धनेन संवृते देवि ! व्योम्नि भाति हिमांशुमान्' इत्यादौ विशेषणयोर्भेदान्नायमनुप्रासः ।

**'वपुः कान्तं वचः कान्तं मनस्तु परुषं तव'**

**इत्यादौ च विशेष्ययोर्भेदान्नायमनुप्रासः ।**

**'यातु यातु किमनेन तिष्ठतु मुञ्च मुञ्च सखि ! सादरं वचः'**

**'चित्रं चित्रमनाकाशे कथं सुमुखि ! चन्द्रमाः'** ।

इत्यादौ च क्रोधादिव्यञ्जके शब्दार्थयोरुभयोरेव पौनरुक्त्ये तात्पर्यमात्रतोऽपि भेदाभावस्थले लाटानुप्रासप्रसङ्गस्तद्वारणाय—भेदे तात्पर्यमात्रत इत्युक्तम् ।

अन्यच्च पदगस्तदंशगतश्चेति द्विविधः । तत्राऽप्याद्यः अनेकपदगत एकपदगतश्चेति द्विविधः, अन्त्यः पुनः समासासमासगतः, एकसमासगतो विभिन्नसमासगतश्चेति त्रिविधः, तदेवं पञ्चविधः ।

उक्तं च काव्यप्रकाशकृता—

**'पदानां स पदस्यादिवृत्तावन्यत्र तत्र वा ।**

**नाम्नः सवृत्त्यवृत्त्योश्च तदेवं पञ्चधा मतः ॥**

तत्र समासासमासगतत्वे उदाहरति—स्मेरराजीवेति । नायकं दृष्ट्वा क्रोधान्निमीलिताक्षीं मानिनीं प्रति सख्या उक्तिरियम् । स्मेरे प्रफुल्ले ये राजीवे कमले ते इव नयने यस्याःतत्सम्बुद्धौ तादृशे !

**'स्मेरं विकसिते किञ्चिद्धास्ययुक्ते च वाक्यवत्' इति श्रीधर ।**

**'बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च'इत्यमरः,**

नयने लोचनद्वयं किं निमीलिते मानवशान्मुद्रिते ? स्मेरराजीवनयनाया नयनस्मेरत्वमेव युक्तम्, न तु तदभावः तस्माद् यथा तवेदं स्मेरराजीवनयनत्वमुपपद्येत तथा त्वया विधातव्यमित्याशयः । नयनोन्मीलनस्यापि साफल्यं दर्शयति—निर्जितकन्दर्पं निर्जितो रूपेण विजितः कन्दर्पो मदनो येन (स्वसौन्दर्येण) तं तादृशं पतिं कन्दर्पवशगं कामेन वशीकृतं पश्य अवलोकय अतो मानं परित्यज्यैनं चरितार्थयेति भावः ।

अत्र 'नयने नयने' शब्दार्थयोः 'कन्दर्पं कन्दर्पं' इति शब्दार्थयोश्च पौनरुक्त्यात् प्रथमे सम्बोधनविषयत्वकर्मत्वरूपसम्बन्धभेदात् उत्तरत्र च कर्मत्वसम्बन्धित्वरूपसम्बन्धभेदाच्च लाटानुप्रासः ।

ननूक्तोदाहरणे नयन-कन्दर्पप्रातिपदिकयोः पुनरुक्तिसत्त्वेऽपि तदुभयनिष्ठविभक्त्यर्थानां भेदेन पौनरुक्त्यभावात् कथमस्य लक्षणस्य विषय अत आह—अत्रेति ।

अत्र 'स्मेरराजीवनयने नयने' 'कन्दर्पं कन्दर्पम्' इत्यंशयोरित्यर्थः । मुख्यतरस्य अतिशयेन मुख्यस्य विभक्त्यर्थापेक्षया प्रथमोपस्थितिकत्वेन स्वातन्त्र्येण च मुख्यतरस्येत्यर्थः । प्रातिपदिकस्य 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' १/२/४५ 'कृत्तद्धितसमासाश्च' १/२/४६ इत्युक्तदिशा प्रकृते स्मेरराजीवनयन इत्यस्य 'निर्जित-

कन्दर्पम्' इत्यस्य चांशोऽवयवः 'नयन' 'कन्दर्पम्' इत्यात्मकं तेन द्योत्य उपस्थाप्यो यो धर्मिरूपः तत्तद्विभक्तयर्थ-रूपधर्मशाली नेत्रादिकरूपार्थस्तस्य अभिन्नार्थत्वात् भेदाभावात् लाटानुप्रासत्वमेव ।

अत्र प्राप्नुवतोऽलङ्कारस्येत्यर्थः । अत्र एवपदोपादानेन यमकव्यवच्छेदः । तथा चोक्तस्थले नयने इत्यादेः स्वरव्यञ्जनसंहते तेनैव क्रमेण पुनरुक्तावपि दर्शितदिशा मुख्यस्य प्रातिपदिकार्थस्याभिन्नार्थत्वान्न यमकत्वमपीति भावः ।

नन्वर्थान्तरसंक्रमितवाच्यध्वनौ 'कदली कदली' त्यादावापाततः शब्दार्थयोः पौनरुक्त्यावभासनेऽपि पर्यवसाने वक्तृतात्पर्यविषयविशेषणान्तरप्रतीत्या भिन्नार्थत्वाभावेन तत्राऽप्ययमेवास्तामित्यत आह—नयन इति । तस्यैव तादृशसुभगस्यैव नयने नेत्रद्वयम्, च पुनः नयने भाग्यवत्तादिगुणविशिष्टे इति तदर्थः । अत्र उदाहरणे, द्वितीयो द्वितीयवारं पठितोऽसौ नयनशब्दः यत्र स तथोक्तः स्वार्थेऽसम्भवन् इति शेषः । भाग्यवत्तादिगुण एव विशिष्टत्वे विशेषणं तद्रूपेण तात्पर्यमात्रेण, भिन्न अर्थः प्रातिपदिकार्थो यस्य स तादृशः । तथा च 'स्मेरराजीवनयने नयने' इत्यादावुभयोरेव नयनादिपदार्थयोः प्रातिपदिकांशद्योत्यधर्मिरूपस्य भेदाभावतया पौनरुक्त्येऽपि तात्पर्यमात्रे भेदाल्लाटानुप्रासः । प्रकृते 'नयने तस्यैव नयने च' इत्यत्र तु प्रथमनयनशब्दस्य नेत्ररूप एवार्थः द्वितीयनयनशब्दः स्वार्थेऽसम्भवंल्लक्षणया भाग्यवत्त्वादिगुणविशिष्ट एव नेत्ररूपोऽर्थ इति प्रातिपदिकार्थयोरेव भेदेन पौनरुक्त्यभावान्न लाटानुप्रासः किन्तु अर्थान्तरसङ्क्रमितवाच्यध्वनिमात्रमित्यभिप्रायः । अत एव हि कथितपदत्वदोषप्रतिप्रसवे लाटानुप्रासोऽर्थान्तरसङ्क्रमितवाच्यध्वनिश्च—

**'दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने ।**<br>
**अर्थान्तरसङ्क्रमितवाच्ये हर्षेऽवधारणे ॥'**

इत्यनेन पृथगेवोक्तः ।

अनेकपदपौनरुक्त्ये उदाहरति—यथा वेति । यस्य नेति, यस्य कमिनः सविधे समीपे—

'समीपे निकटासन्नसन्निकृष्टसनीडवत् । सदेशाभ्याससविधसमर्यादसवेशवत्' इत्यमरः, दयिता प्रियतमा नास्ति तस्य तथाविधजनस्य सम्बन्धे तुहिनं हिमं दीधितिषु किरणेषु यस्य स तादृशः 'भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्' इत्यमरः, दवदहनो दावाग्निः विरहोद्दीपकतया तद्वदेवातिशयसन्तापजनको भवतीत्याशयः । समुच्चयाभावात् चोऽत्र त्वर्थे । यस्य तु कामिनः सविधे निकटे दयिता प्रियतमा अस्ति, तस्य दयितया अनुगृहीतस्य जनस्य तु सम्बन्धे, दवदहनो दावाग्निरपि तुहिनदीधितिश्चन्द्रो भवति तत्सान्निध्येन सर्वपदार्थेष्वेव तस्य शैत्यानुभवो भवतीतिभावः । 'तुहिनदीधितिर्दवदहनः' 'दवदहनस्तुहिनदीधितिः' इत्युभयमपि रूपकमितिफलितम् । प्रदीपकारादयस्तूपमामेवाङ्गीकुर्वन्ति । आर्याच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

अत्र सविधे दयितेत्यादीनामनेकानां पदानां तात्पर्यमात्रभेदन पुनरुक्तिरित्यनेकपदगतो लाटानुप्रासः । तात्पर्यभेदश्चात्र पूर्वार्द्धे तुहिनदीधितौ दवदहनत्वं विधेयम् उत्तरार्द्धे तु दवदहने तुहिनदीधितित्वं विधेयमित्युद्देश्यविधेयभावविपर्यासेन शाब्दबोधरूपान्वय भेदादित्यवधेयम् ।

अत्र लक्षणया यथाक्रमं तापकरत्वस्य शीतलत्वस्य च विधेयत्वं नेह विवक्षितम् अन्यथा भिन्नार्थकत्वापत्त्या लाटानुप्रासो न स्यादतः पूर्वार्धे दवदहनस्यैव उत्तरार्द्धे तुहिनदीधितेरेव च विधेयतया आरोपणमिति । लाटानुप्रासादौ उद्देश्यविधेययोवपरीत्येनोपन्यासो न दोषायेतिबोध्यम् ।

लक्ष्ये लक्षणं योजयितुमाह—अत्रेति। अनेकपदानां 'सविधे...स्त्स्येत्येतेषामनेकेषां पदानामित्यर्थः। पौनरुक्तयमिति। सति तात्पर्यभेदेऽर्थैक्यादिति शेषः। इदञ्चोपलक्षणं तेन प्रदर्शितसम्बन्धप्रदश्च अतश्चात्र लाटानुप्रास इति भावः। ननु स्वरव्यञ्जनसंहतेस्तेनैव क्रमेणावृत्तिसद्भावाद्यमकमेवेति चेत्? मैवम्, प्रातिपदिकार्थपार्थक्य एव यमकस्वीकारेण प्रकृते प्रातिपदिकार्थानां पार्थक्याभावात्।

अधुना लाटानुप्रासशब्दस्य योगव्युत्पत्तिलभ्यमर्थं दर्शयति—एव चेति। लाटस्तन्नामा देशविशेषस्तस्थो यो जनः कविस्तद्वल्लभत्वात् तत्प्रियत्वादित्यर्थः।

'लाटो देशविशेषे स्याद्दक्षे वस्त्रे तु न द्वयोः' इति श्रीकण्ठः।

एवं सप्रभेदमनुप्रासमुक्त्वा तद्भेदसङ्कलनं दर्शयति—अनुप्रास इति। ततश्छेकादिभेदात् पञ्चधा छेकानुप्रास १. वृत्यनुप्रास २. श्रुत्यनुप्रास ३. अन्त्यानुप्रास ४. लाटानुप्रास ५. भेदैः पञ्चप्रकारक इत्यर्थः।

नात्र किञ्चिद्व्याख्यातव्यमिति दर्शयति—स्पष्टमिति।

## रुचिरा

अथ सार्थकवर्णानुप्रासं निरूपयति—६८ शब्दार्थयोरित्यादिना ६८।

तात्पर्य्यमात्रतस्तात्पर्य्यमेवेति तस्मात्तथोक्तात्। भेदे। 'सती'ति शेषः। **शब्दार्थयोः** शब्दस्यार्थस्य चेत्यर्थः। **पौनरुक्त्यं** पुनरुक्तत्वम्। **लाटानुप्रासो** लाटोऽसावनुप्रासः। इति। **उक्तः**। लाटो देशविशेषः, लक्षणया तत्रत्यजनप्रियोऽपि लाटः, तस्माल्लाटो नामायमनुप्रासः।

अस्यम्भावः—तात्पर्य्यं नाम उद्देश्यविधेयभावादिरूपः, कर्त्तृकर्मत्वादिरूपश्च पदार्थयोः सम्बन्धः। तन्मात्राद्भेदे (नतु स्वरतःक्रमतश्च भेदेऽपि) शब्दार्थयोरुभयोर्नतु केवल शब्दस्य नवाऽर्थस्य यत् पुनरुक्तत्वमाम्रेडितत्वं तत् लाटजनवल्लभत्वाल्लाट इति व्यददेश्योऽनुप्रासः। तथा च—यत्र स्वरूपत एव नतु तात्पर्य्यैक्यादपि, शब्दार्थयोः पौनरुक्त्यं, तल्लाटो नाम 'अनुप्रासः शब्दसाम्य'मित्यादिनाऽभिहितस्वरूपोऽनुप्रासः। इति फलितम्। अत्र तात्पर्य्यैक्याभावे पौनरुक्त्यं, न दोषाय, किन्तु साम्यायैव, तेन-अन्वयभेदे सति समानानुपूर्वीकतया समानस्वरूपयोः शब्दार्थयोरनतिव्यवहिता पुनरुक्तता निरवद्यतयाऽवतिष्ठमाना लाटानुप्रासकृते इति सिद्धम्, एवम्-'यातु-यातु' इत्यादावन्वयभेदाभावात्, 'कदली कदली' इत्यादावर्थस्यापुनरुक्तत्वाच्च नातिव्याप्तिः। अयं च-पदगस्तदंश गतश्चेति द्विविधः, तत्राप्याद्यः—अनेकपदगत एकपदगतश्चेति द्विविधः, अन्त्यः पुनः-सामासासमासगत, एकसमासगतो विभिन्नसमासगतश्चेति त्रिविधः, तस्मादनेकात्मेति सिद्धम्। अत्र समासासमासगतोऽनेकपदगतश्च मूल एवोदाहरिष्येते, अन्ये, पुनर्यथाक्रमेण—'वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः। सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत्॥' इत्यत्र 'सुधाकर' इत्येकस्यैव सार्थकस्य पदस्य तात्पर्य्यभेदेन पौनरुक्त्यमित्येकपदगतः। अत्र प्राथमिकस्य विधेयपरत्वं, द्वितीयस्योद्देश्यपरत्वमिति तात्पर्य्यानैक्यम्। अत एवाहुः—'अत्राद्यसुधाकरपदस्य लाक्षणिकत्वेऽपि प्राग्वदर्थाभेदः (प्राग्वत्-'यस्य न सविधे दयिता' इत्यत्रेव)। उद्देश्यविधेयभावभेदाच्च तात्पर्य्यभेदः।' इति। 'सितकरकररुचिरविभा विभाकराकार! धरणिधर! कीर्त्तिः पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य॥' इत्यत्र 'कमला कमले'ति पूर्वस्य समासः उत्तरस्यासमास इति समासासमासगतः, 'करकरे'त्येकसमास इत्येकसमासगतः। 'विभा, विभे'ति विभिन्नौ समासाविति विभिन्नसमासगतः। एवं त्रिविधोऽप्यत्रैव द्रष्टव्यः। इति।

उदाहर्त्तुमुपक्रमते-**उदाहरणम्**। 'यथा' इति शेषः। 'हे **स्मेरराजीवनयने** स्मेरे प्रफुल्ले ये राजीवे कमले इति ते इव नयने यस्यास्तत्सम्बुद्धौ तथोक्ते ! । 'स्मेरं विकसिते किञ्चिद्धास्ययुक्ते च वाच्यवत्।' इति श्रीधरः। 'बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च।' इत्यमरः। **नयने। किं** किमु। **निमीलिते**। 'त्वये'ति शेषः। 'स्मेरराजीवनयनाया नयनस्मेरत्वमेव स्थाने, नतु तदभावः, तस्मात्-यथा तवेदं स्मेरराजीवयनत्वं सङ्गच्छेत तथा त्वया यतितव्यम्। इति'भावः। अथ नयनोन्मीलनस्यापि साफल्यमाह—**निर्जितकन्दर्पं** निर्जितः कन्दर्पः कामो येन (स्वसौन्दर्येण) तम्। अथापि—**कन्दर्पवशगं** कन्दर्पस्य वशमाधीन्यं गच्छतीति तम्। मदनेन वशीकृतमिति भावः। 'अन्यत्रापि दृश्यते इति वक्तव्यम्' इति डः। **प्रियम्**। कान्तम्। पश्य अवलोकय। अत्रेदं बोध्यम्—असौ रतिकलहे कुपितस्यापि कामनिर्जिततया कोपमपहाय स्वयमुपतिष्ठतः स्वविरहे स्वमेव ध्यायन्तीं प्रियां प्रति कस्याप्यनुनयोक्तिः। स्मेररा जीवनयनत्वेन सम्बोध्यां प्रति नयननिमीलनत्वाभिधानं निश्शेषेण कन्दर्पजयिनश्च स्वस्य तद्वश्यत्वाभिधानं विरुद्धम्, स्मेरराजीववनयनयोर्दिव्यत्वमात्रावेदनं, सौन्दर्य्येण कन्दर्पजयिनो रागेण तद्वश्यत्वावेदनं चेष्टमिति विरोधाभावाद्विरोधाभासः। इति ॥ ७५ ॥'

लक्ष्यं समर्थयते-अत्र 'स्मेरराजीवनयने ! नयने' इत्यंशे इति भावः। **विभक्त्यर्थस्य। अपौनरुक्त्ये** पुनरुक्तत्वाभावे। 'भिन्नत्वेने'ति शेषः। **अपि। प्रातिपदिकांशद्योत्यधर्मिरूपस्य** प्रातिपदिकस्य 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्॥'१/२/४५ 'कृत्तद्धितसमासाश्चा।' १/२/४६ इत्युक्तदिशा प्रकृते 'स्मेरराजीवनयन'इत्यस्यांशोऽवयवः 'नयन'इत्यात्मकस्तेन द्योत्योऽसौ धर्मी नयनपदार्थस्तद्रूपस्येत्यर्थः। मुख्यतरस्यातिशयेन मुख्य इति तस्य। अभिन्नार्थत्वाद्भेदाभावात्। 'पौनरुक्त्यमिती'ति शेषः। **लाटानुप्रासत्वं** लाटोऽनुप्रासो यत्र तत्त्वम्। एव। अत्रेदं तत्त्वम्—'समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।' इति नयेन प्रकृते 'स्मेरराजीवनयने' इति समुदिते शक्तिः, शक्तिमच्चैवं तदेव, तदेव प्रातिपदिकं च; शक्तिमद्भिन्नस्य प्रादिपदिकत्वानुपपत्तेः। तस्य 'प्रकृतिप्रत्यययोः प्रकृतेरेव बलीयस्त्वम् आश्रयत्वात्' इति टाप्प्रत्ययस्याप्रधानतया तद्भिन्नस्यैव प्राधान्यमिति'टाब्' भिन्नत्वे सति यदवशिष्टं तत्'स्मेरराजीयनयन' इत्येतावत् प्रातिपदिकं, तस्य च विवक्षावशात् 'नयन' इत्येतावानंशः प्रकृतोपयुक्तः, तेन द्योत्यो धर्मिरूपो 'नयन' पदार्थः, असौ च द्वितीयेन सजातीयेन"नयन'पदार्थेनाभिन्न एवेति स्फुटमभिन्नार्थतया पुनरुक्तत्वं, तेन च लाटानुप्रासो निर्बाधः। अत्र 'स्मेरसजीवनयने' इति समुदिते एव प्रातिपदिकत्वेनाभिमन्तव्येऽपि 'प्राधान्येन व्यपदेशा भवन्ती'ति 'नयन' इत्येतदेव प्रातिपदिकं कल्प्यम्, तदेवांशस्तेन द्यत्यस्य धर्मिरूपस्य 'नयन' इत्येतस्येत्यर्थः। 'स्मेरराजीव' इति 'टाप्' इति च तत्रैव प्रकारीभूततयाऽप्रधानम्। इत्येके, 'स्मेरराजीवनयन' इत्येतावत् प्रादिपदिकं, तस्यांशो 'नयन' इति। अन्यत् स्पष्टम्।' इत्यपरे 'नयने'इत्येतावत् प्रातिपदिकं तदेवांशः। 'अंश' इतिशब्दोऽविवक्षित एव। अन्यत् स्पष्टम्।' इति बहवः प्राहुः। अत्र पूर्वस्य समस्ततया, उत्तरस्य तदभावात्समासासमासगतत्वम्। इति। अत्राहुः—कृत्तद्धितादिगतोऽप्ययं दृश्यते, यथा—'हंसायते चारुगतेन कान्ता कान्तायते स्पर्शसुखेन वायुः। वायुर्यथा वाति न वाति सद्वाक् सद्वाक्कृतं चारु न चारु चान्यत्॥' इत्यादौ। इति।

ननु एवमर्थान्तरसङ्क्रमितवाच्ये ध्वनावापाततः शब्दार्थयोः पौनरुक्त्यं प्रतिभासते, पर्य्यवसाने वक्तृतात्पर्य्यविषयविशेषणान्तरप्रतीत्याभिन्नार्थत्वमिति तत्राप्ययमेवास्तमिति चेन्नेत्यभिसन्धायाह—'नयने'इत्यादि।

'तस्य तादृशस्य सुभगस्य। एव। नयने। नेत्रद्वयम्। च पुनः। नयने भाग्यवत्ताऽऽदिगुणविशिष्टे।' अत्रास्मिन्नुदाहृते'येनानुपममनोज्ञे ! रमिताऽसि विलोकिताऽसि वा जातु। सुभगः स एव सुभगो नयने तस्यैव नयने च॥' इति पद्यांशे इति यावत्। **द्वितीयनयनशब्दो** द्वितीयो द्वितीयवारं पठितोऽसौ नयनशब्दः 'स्वार्थेऽसम्भवन्'

इति शेषः। **भाग्यवत्ताऽऽदिगुणविशिष्टरूपतात्पर्यमात्रेण** भाग्यं सौभाग्यमनयोरस्तीति तत्ता आदिर्येषां (महनीयतादीनाम्) ते, तथोक्ता अमी गुणा इति तैर्विशिष्ट इति तत्त्वं तद्रूपं च यत्तात्पर्य्यं वक्तुरभिप्रायस्तन्मात्रेणेति तथोक्तेन अभेदे हेतौ वा तृतीया। **भिन्नार्थो** भिन्नोऽर्थो यस्य स तथोक्तः। अत एव नात्र लाटानुप्रासः, किन्तु—अर्थान्तरसङ्क्रमितवाच्यो ध्वनिरेव' इति शेषः। 'अत्रायम्भावः—'स्मेरराजीवनयने नयने' इत्यत्रोभययोरपि नयनपदार्थयोः प्रातिपदिकांशद्योत्यधर्मिरूपस्याभिन्नतया पौनरुक्त्येऽपि तात्पर्य्यमात्रे भेदाल्लाटानुप्रासः, 'नयने तस्यैव नयने च' इत्यत्र तु द्वितीयो नयनपदार्थः स्वार्थेऽसम्भवँल्लक्षणया भाग्यवत्ताऽऽदिगुणविशिष्टत्वरूपतात्पर्य्यमात्रेणार्थान्तरसङ्क्रमिततां नीत इति न लाटानुप्रासः, किन्तु-अर्थान्तरसङ्क्रमितवाच्यो ध्वनिरेव। इति।

**यथा वा**—"**यस्य** 'पुरुषस्य' इति शेषः। सविधे समीपे। 'समीपे निकटासन्नसन्निकृष्टसनीडवत्। सदेशाभ्याशस विधसमर्यादसवेशवत्॥....' इत्यमरः। **दयिता** प्रिया। न 'शेते' इति शेषः। तस्य तथाभूतस्य। **तुहिनदीधितिश्चन्द्रः**। तुहिनं हिमं दीधितिषु किरणेषु यस्य, तुहिनास्तुहिनवद् वा शीतला दीधितयो यस्य स इति तथोक्तः। 'भानुः करो मरीचिः स्त्रिपुंसयोर्दीधितिः स्त्रियाम्।' इत्यमरः। दवदहनो वनाग्निः। 'विरहोद्दीपकतया भवती'ति शेषः। **यस्य**। च पुनः। अत्र समुच्चेयार्थासम्भवात् 'चे'ति त्वि'त्यर्थे। **सविधे**। **दयिता**। 'शेते' इति शेषः। तस्य दयितयाऽनुगृहीतस्य। **दवदहनो** वनाग्निः। **तुहिनदीधितिश्चन्द्रः**। 'भवती'ति शेषः। एवमुभयथाऽपि रुपकम्॥' अत्रार्या छन्दः, लक्षणं प्रोक्तं प्राक्॥ ७६॥"

अत्रेदं बोध्यम्—'सविधे......' इत्यादीनामनेकेषां पदानां तात्पर्य्यमात्रभेदेनाम्रेडनमित्यनेकपदगतो लाटानुप्रासः। पूर्वत्र—तुहिनदीधितिमुदिश्य दवदहनत्वम्, उत्तरत्र पुनर्दवदहनमुद्दिश्य तुहिनदीधित्वं विधीयते; इत्यनयोरेव वैपरीत्येन विधेयत्वम्, नतु क्रमेण तापकरत्वस्य शैत्यकरस्य वा, तथा सति भिन्नार्थत्वापत्त्या लाटानुप्रासोदाहरणं न सङ्गच्छेत। उद्देश्यविधेयभाववैपरीत्येन शाब्दबोधरूपान्वयभेदात्तात्पर्य्यभेदे स्फुटो लाटानुप्रासः। इति। तदेव निर्दिशति-अत्र। **अनेकपदानां** 'सविधे...स्तस्ये'त्येतेषामनेकेषां पदानामित्यर्थः। **पौनरुक्त्यं** 'सति तात्पर्यभेदेऽर्थैक्यात्' इति शेषः। **एषः**। **च**। प्रायेणाधिक्येन। लाटजनप्रियत्वाल्लाटस्तन्नामा देशविशेषश्चतुरो वा तस्य सोऽसौ वा जनस्तत्प्रियत्वात्। 'कारणात्' इति शेषः। 'लाटो देशविशेषे स्याद्दक्षे वस्त्रे तु न द्वयोः।' इति श्रीकण्ठः। **लाटानुप्रासो** लाटो लक्षणया लाटप्रियोऽसावनुप्रास इति तथोक्तः।

एवं सप्रभेदमनुप्रासमभिधाय तत्प्रभेदसङ्ख्यामाह—६९ अनुप्रास इत्यादिना।

६९ **अनुप्रासो** निरुक्तलक्षणोऽलङ्कारविशेषः। पञ्चधा पञ्चविधः 'छेक-वृत्ति-श्रुत्य-न्त्य-लाटोपाधिभेदात्' इति शेषः। मतः। 'आलङ्कारिकैरिति शेषः॥ ६०॥

नात्र किञ्चिद्विवरणीयमित्याह—**स्पष्टम्**। इति।'

**सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।**
**क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥ ८ ॥**

अत्र द्वयोरपि पदयोः क्वचित्सार्थकत्वं क्वचिन्निरर्थकत्वम् । क्वचिदेकस्य सार्थकत्वमपरस्य निरर्थकत्वम्, अत उक्तम्—'सत्यर्थे' इति । 'तेनैव क्रमेण' इति दमो मोद इत्यादोर्विविक्तविषयत्वं सूचितम् । एतच्च पादपादार्धश्लोकावृत्तित्वेन पादाद्यावृत्तेश्चानेकविधतया प्रभूततमभेदम् ।

---

## विवृतिः

यमकालंकारमाह—**सत्यर्थ इति** ।

स्वरव्यञ्जनसंहतेः अज्झलूसमुदायस्य । स्वरव्यञ्जनयोरेकत्वेऽपि यमकं भवति । यथा—'नानाकारेण कान्ताभ्रूराराधितमनोभुवा । विविक्तेन विलासेन ततक्ष हृदयं मम ॥' एतद्वर्णयमकं वामनसंमतम् । **क्रमेणेति** । येन क्रमेण प्रथमं स्वरव्यञ्जनसमूह उक्तस्तेनैवेत्यर्थः । आवृत्तिः पुनरुच्चारणम् ।

पदयोः स्वरव्यञ्जनसमूहयोः । **क्वचिदिति** । 'नगजानगजा दयिता दयिता' इत्यादौ । **क्वचिन्निरर्थकत्वमिति** । द्वयोरित्यनुषङ्गः । यथा—'विजितामरतामरसेक्षणा' इत्यादौ । अत्र तामरेति समूहयोः पदैकदेशत्वान्निरर्थकत्वम् । **एकस्येति** । प्रथमस्य द्वितीयस्य वा स्वरव्यञ्जनसमूहस्येत्यर्थः । विविक्तविषयत्वं विभिन्नविषयत्वम् । यमकादिति शेषः । रसादीनामत्यन्तोपकारिणो यमकप्रपञ्चस्य निर्वचनमनसिप्रयोजनमिति संक्षेपेणैव यमकनिरूपणं ज्याय इत्यभिप्रायेणाह—**एतच्चेति** । यमकं चेत्यर्थः । अत्र पादपदं पादैकदेशपरम्, अर्धपदं श्लोकार्धपरम् । **पादाद्यावृत्तेश्चेति** । पादपदस्य द्विधा त्रिधा चतुर्धा वा खण्डने चानेकविधत्वम् । आदिना पादश्लोकार्धयोः संग्रहः । तत्र प्रथमपादस्य द्वितीयाद्यन्यतमस्मिन्द्वितीयादिसमुदाये च, द्वितीयतृतीयसमुदाये च, द्वितीयस्य तृतीयान्यतरस्मिस्तृतीयादिसमुदाये च, तृतीयस्य चतुर्थे आवृत्तिः संभवतीति दशविधत्वमेव पादयमकस्य । एवं प्रथमार्धस्य द्वितीयार्धे, प्रथमपादस्य द्वितीये, तृतीयस्य चतुर्थे, प्रथमस्य चतुर्थे, द्वितीयस्य तृतीये पादे आवृत्तिः संभवतीति श्लोकार्धयमकस्य त्रैविध्यम् । श्लोकयमकमपि विजातीयचतुष्पादवृत्त्या च द्विविधम् । प्रभूततमभेदमतिप्रचुरप्रकारम् ।

## विवृतिपूर्तिः

**यमकमिति** । (१) यदि प्रथमपादो द्वितीये यम्यते तदा **मुखयमकम्** । यथा—'दर्पकान्तक विराजमानयाऽदर्प-कान्त-कविराज-मानया । त्वत्प्रसादविधिलब्धया धिया साधवो दधति वैबुधीं धुरम् ॥' (२) प्रथमस्तृतीयपादे चेत्तदा **संदंशः** । यथा—'सन्नारीभरणोमायमाराध्य विधुशेखरम् । सन्नाऽरीभरणोऽमायस्ततस्त्वं पृथिवीं जय ॥' (३) प्रथमश्चतुर्थपादे चेत्तदावृत्तिः । यथा—'मुदाऽऽरताडी समराजिराऽजितः प्रवृद्धतेजाः प्रथमो धनुष्मताम् । भवान्बिभर्तीह नगश्च मेदिनीमुदार-ताडी-समराजि राजितः ॥' (४) द्वितीयस्तृतीयपादे चेत्तदा गर्भः । यथा—'आध्यास्यते शमजुषा भवतः प्रसादादामोदराजि-तरु-चारु चिरं जनेन । दामोदरा जितरुचा रुचिरञ्जनेन कीर्णं तृणेन मृदुना वनमार्तवेन ॥' (५) द्वितीयपादश्चतुर्थे चेत्तदा **संदष्टकम्** । यथा—'शारदीमिव नदीं प्रसादिनीमुच्चकैरव-सरोज-राजिताम् । स्तोतुमेष मम मूर्तिमैश्वरीमुच्चकैरवसरोऽजराजिताम् ॥' (६) तृतीयपादश्चतुर्थे चेत्तदा

**पुच्छम्। यथा**—'उत्तुङ्गमातङ्गकुलाकुले यो व्यजेष्ट शत्रून्समरे सदैव। स सारमानीय महारि चक्रं ससार मानी यमहारिचक्रम्॥' (७) प्रथमपादस्त्रिष्वपि यम्यते चेत्तदा पङ्क्तिः। यथा—'तनुशङ्करवैरसमायतयातनु शंकर वै रस मायतया। तनु शं करवै रसमायतयातनुशं कर वैरसमायतया॥' हे शंकर, मां मां रस संभावय। मां प्रति स्ववचनामृतं मुञ्चेति। वै प्रसिद्धौ। कैः। अतनु यथा स्यात्तथा ये तनुशङ्का निःशङ्का रवा भक्तजनं प्रत्यभयदानवचनानि तैः। कीदृशं मा कर्मभूतम्। असमोऽनन्यसदृशोऽयः शुभावहो विधिर्यस्य, सोऽसमायः, तस्य भावस्तत्ता तया असमायतया उपलक्षितम्। कथंभूतया असमायतया। आयतया अनियतया। हे विभो, शं कैवल्यलक्षणं तनु विस्तारय। अहं रसं भक्तिरसं करवै। त्वं मा माम् अतनुशम् अतनुः कामस्तं श्यति तनूकरोतीत्यतनुशस्तथाभूतं कर। कुर्वित्यर्थः। करेति च्छान्दसः प्रयोगः। 'छान्दसा अपि क्वचिद्भाषायां प्रयुज्यन्ते' इति वचनात्। कया हेतुभूतया। वैरसमायतया। वैरेणान्तररिपुसद्भावजनितेन, सह मायया वर्तत इति समायः तस्य भावस्तत्ता तया। कीदृश्या। आयतया विस्तीर्णया। इति तदर्थः। 'यमकं तु विधातव्यं न कदाचिदपि त्रिपात्' इति नियमादेकस्यापरपादद्वयगतत्वेन भेदो न भवतीत्यसंकीर्ण पादगतं यमकं सप्तधैव। (८) प्रथमः पादश्चतुर्थे पादे द्वितीयस्तृतीये चेद्यम्यते तदावृत्तिगर्भयोगात्परिवृत्तिः। यथा—'मुदा रताऽसौ रमणी यता यां स्मरस्यऽदोऽलं कु-रुतेन वोढा। स्मरस्यदोऽलंकुरुतेऽनवोढामुदारतासौ रमणीयतायाम्॥' (९) प्रथमो द्वितीये तृतीयश्चतुर्थे चेद्यम्यते तदा मुखपुच्छयोगाद् **युग्मकम्**। यथा—'शमित-संगमसज्ज-नताऽऽपदंशमितसङ्गमसज्जनतापदम्। न-मत-काममहीन-बिभासितं नमत काममहीन-विभा-सितम्॥' इत्यर्धाभ्यासमृते पादद्वयावृत्तौ द्वयमिति नव। (१०) अर्धावृत्तिः समुद्गकम्। यथा—कलि-तमोहनमारव-राजितं स्मर हरं शिखि चन्द्रकला-ऽऽच्छितम्। कलितमोहन-मारव-राऽजितं स्मरहरं शिखिचन्द्रक-लाञ्छितम्॥' (११) श्लोकावृत्तिर्महायमकम्। यथा—'सकलशं सकपालमलंकृतप्रमदमस्थिरसं मदनाशनम्। भवमदभ्रम-महानिधने हितं शमनमज्जनमानमताऽलयम्॥ सकल-शंसक-पालमलं कृतप्रमदमस्थिर-संमद-नाशनम्। भव-मद-भ्रम-हानिधनेहितं शम-नमज्जन-मान-मताऽऽलयम्॥' यदभ्रंयन्महद् अनिधनं अविनाशित्वं निजभक्तजनदेयं तत्र हितम्। शमनं यमं मज्जयतीति शमनमज्जनम्। अलयं निर्नाशम्। सकला ये शंसका स्तुतिकर्तारस्तान्पालयति तथाभूतम्। कृतः प्रमदः परमानन्दो येन स तादृशम्। भवे संसारे यो मदस्तेन यो भ्रमस्तस्य हानिः सैव धनं येषां ते संसारभ्रमविरक्तास्तैरीहितस्तम्। शभेन नमन्तो ये जनास्तेषां मानार्थ मतोऽङ्गीकृत आलयः प्रतिदेहस्थितिरूपो येन स तादृशम्। शेषं स्पष्टम्। इति तदर्थः। एतद्वितयमपि पादावृत्तिविशेष इत्येकादश पादयमकानि। पादभागवृत्ति त्वनेकविधम्—द्विधा विभक्तेषु पादेषु प्रथमादिपादानामाद्यभागाः पूर्ववद्द्वितीयादिपादेष्वाद्यभागेष्वेव यदि यम्यन्ते तदा पूर्ववन्मुखादयो दश भेदा उत्पद्यन्ते। यथा—प्रथमपादाद्यभागो द्वितीयतृतीयचतुर्थपादाद्यभागेषु यम्यत इति त्रिधा। द्वितीयपादाद्यभागस्तृतीयचतुर्थपादाद्यभागयोर्यम्यत इति द्विधा। तृतीयपादाद्यभागश्चतुर्थपादाद्यभागे यम्यत इत्येकः। प्रथमपादाद्यभागस्त्रिष्वप्याद्यभागेषु यम्यत इत्यन्य इति सप्तासंकीर्णभेदाः। प्रथमपादाद्यभागसमानो द्वितीयपादाद्यभागस्तृतीयपादाद्यभागसमानश्चतुर्थपादाद्यभाग इत्येकः। संकरः। प्रथम पादाद्यभागस्तृतीयपादाद्यभागसमानो द्वितीयपादाद्यभागश्चतुर्थपादाद्यभागसमान इत्यपरः संकर इति नव। अर्धावृत्त्या समं पूर्ववद्दश भेदाः। एवं प्रथमादिपादानामन्त्यभागस्य द्वितीयादिपादान्त्यभागेष्वेव यमने पूर्ववद्दश भेदा जायन्ते। यथा—प्रथमपादान्त्यभागस्य द्वितीयतृतीयचतुर्थभागेषु यमने त्रिधा। द्वितीयपादान्त्यभागस्य तृतीयचतुर्थपादान्त्यभागयोर्यमने द्विधा। तृतीयपादान्त्यभागस्य चतुर्थपादान्त्यभागे यमने एकः। प्रथमापादान्त्यभागस्य त्रिष्वप्यन्त्यभागेषु यमन इत्यपर इति सप्तासंकीर्णाः। प्रथमपादान्त्यभागद्वितीयपादान्त्यभागयोस्तृतीयपादान्त्यभागचतुर्थपादान्त्यभागयोश्च साम्ये एकः संकरः। प्रथमपादान्त्यभागतृतीयपादान्त्यभागयो-

द्वितीयपादान्त्यभागचतुर्थपादान्त्यभागयोश्च साम्येऽन्यः संकर इति नव। अर्धावृत्त्या समं पूर्ववद्दश भेदाः। इत्थं द्विखण्डीकृतेषु पादेषु विंशतिः, त्रिखण्डीकृतेषु त्रिंशत्, चतुःखण्डीकृतेषु चत्वारिंशद्भेदाः स्थानापरिवर्तिनो भवन्ति। एतेषामुदाहरणानि पादावृत्तिदिशैवावसेयानि। अथ स्थानपरिवर्तनभेदाः—'प्रथमादिपादानामन्त्यादिभागा द्वितीयादिपादानामाद्यादिभागेषु यम्यन्त इत्याद्यन्वर्थतानुसारेणान्ता- द्यादियमकादयः प्रभेदा भवन्ति। तथाहि—द्विखण्डे यथा प्रथमपादस्यान्त्यमर्धं द्वितीयपादस्याद्यर्धे चेद्यम्यते तदन्तादियमकम्। प्रथमभाग एव चेदन्त्यभागे तदाद्यन्तयमकम्। एवं प्रथमपादस्याद्यान्तभागौ द्वितीयस्यान्तादिभाग्योर्यदि यम्येते तदाद्यन्तादियमकयोः समुच्चयः। अत्र त्रिखण्डचतुःखण्डयोः पूर्वपादमध्यभाग उत्तरपादस्यादिभागे यदि यम्यते तदा मध्यादियमकम्। पूर्वस्यादिभागश्चेदुत्तरपादस्य मध्यभागे तदादिमध्ययकम्। पूर्वस्य मध्यादिभागौ चेदुत्तरस्याद्यमध्ययोस्तदा मध्याद्यादिमध्ययोः समुच्चयः। एवं प्रथमस्यान्त्यभागो द्वितीयस्य मध्यभागे चेत्तदान्त्यमध्यम्। पूर्वस्य मध्यभागश्चेद्वितीयस्यान्तभागे तदा मध्यान्तिकम्। पूर्वस्यान्त्यमध्यभागौ चेद्द्वितीयस्य मध्यान्तभागयोस्तदान्त्यमध्यमध्यान्तयोः समुच्चयः। यद्यपि पूर्वस्यादिभाग उत्तरस्यान्त्यभागे चेत्तदाद्यन्तकमन्त्यभागस्त्वाद्यभागे चेत्तदान्तादिकमित्यादि प्रकारद्वयं, संभवति, तथापि द्विखण्डान्तर्गतमेव तदिति पृथङ्ग गण्यते। सर्वेषां चैषामपरः समुच्चय इति भिन्नपादे यमने प्रभेदाः। एवं तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेष्वावृत्तौ भेदा द्रष्टव्याः। सर्वे चैते नियतस्थानविवक्षया स्थानयमकभेदा नियतेषु स्थानेष्वावृत्तेरिति बोध्यम्। अनियतस्थानयमकभेदा अपि बहवो भवन्तीति प्रभूततमभेदं यमकम्। एतेषामुदाहरणानि तत्र तत्र महाकविप्रयोगेष्वनुसंधेयानि, विस्तरभयान्नेह प्रपञ्च्यन्ते॥

## विज्ञप्रिया

यमकनिकरमाह—**सत्यर्थ** इति। अर्थे सति पृथगर्थायाः पदसंहतेः तेनैव क्रमेण आवृत्तिरित्यर्थः। अत्र लाटानुप्रासवारणाय पृथगर्थाया इत्यवश्यं देयम्। तथा च शमरतेऽमरतेजसीत्यत्र यमकितभागयोः द्वयोः "समरसोऽय"मित्यत्र एकतरस्य निरर्थकत्वे पृथगर्थाया इत्युक्त्यनौचित्यम्; अतोऽर्थे सत्युक्तमित्याह।

**अत्र द्वयोरपीति**। द्वयोरेकतरस्य वा अर्थाऽसत्त्वे तु स्वरव्यञ्जनसंहतेः तेनैव क्रमेण आवृत्तिरित्येवमेव लक्षणान्तरमित्यभिप्रायः। उभयानुगमस्तु एकार्थाभिन्नाया इत्येवंरूपेण बोध्यम्।

अस्य प्रभेदा बहव इत्याह—**एतच्चेति**। पादादीत्यादिपदात् पादस्यैव तृतीयचतुर्थभागस्य अनियततद्भागस्य च परिग्रहः।

## लोचन

एतदेव वृत्तौ विशदयति—अत्रेत्यादि। अत्र यमके। पदयोर्यमकावयवभूतयोः स्वरव्यञ्जनयोरित्यर्थः। द्वयोरेकस्य वानर्थकत्वे पदत्वाभावादिति क्वचिद् विषये सार्थकत्वे प्रियतमांयतमानेत्यादिवत् निरर्थकत्वम्। इह च प्रायिकत्वात् वर्णसमुदायद्वयस्वातन्त्र्येणेत्यर्थः। अनर्थकत्वं पदावयवरूपाक्षरसाचिव्येनैव सार्थकत्वात्। त्रिचतुःपौनरुक्त्येन लक्षणानुसारेण यथायोगमूह्यम्। मधिकृत्य सार्थकत्वादिकमुक्तम्।

## कुसुमप्रतिमा

अनुप्रासनन्तरं यमकस्यैव लोके प्रसिद्धतया इदानीं तदेव लक्षयति सत्यर्थ इति। अर्थे स्थिते सति, पृथग् भिन्नः अर्थः, प्रकृतिप्रतिपाद्यमभिधेयं यस्यास्तस्याः, स्वरव्यञ्जनयोः सहतेः समूहस्य, येन क्रमेण पूर्वमुच्चारणम्,

परमपि तेनेव क्रमेण आवृत्ति: पुनरुच्चारणम्, यमकं नामालङ्कारोविनिगद्यते । अत्र 'सत्यर्थे इत्यस्य क्रमेण तेनैव इत्यस्य चाभिप्राहं वृत्तावेवाह । पृथगर्थाया इत्यभिधानात् लाटानुप्रासे नातिव्याप्ति । तथा च प्रकृत्यर्थभेदे यमकं प्रकृत्यर्थभेदाभावे केवलतात् पर्य्यतो भेद एव लाटानुप्रास इति परस्परभेद: । अत्रसंहतिरनेकत्वम्; तच्च एकमात्र-व्यञ्जनेन सह एकमात्रस्वरस्य सम्मेलनेनापि सम्भवति । तेन—

**"नानाकारेण कान्ताभ्रू राराधितमनोभुवा ।**

**विविक्तेन विलासेन ततक्ष हृदयं मम ।।"**

इति वामनसम्मतवर्णयमकस्थलेऽपि नाव्याप्ति: । न च "केश: काशस्तवकविकास: काय: प्रकटितकर-भविलास:" इत्यादौ "आस:" इति भागमादाय अन्त्यानुप्रासवद्यमकलक्षणस्यापि सङ्गतेरतिव्याप्तिरिति वाच्यम्, अन्त्यानुप्रासस्य पदपादान्तमात्रनियततया विशेषत्वेन यमकस्य तु तदनियततया सामान्यत्वेन यमकस्य अन्त्यानु-प्रासेतरविषयकत्वकल्पनात् सामान्यविशेषन्यायात् । "पावन: पवन:" इत्युदाहृते छेकानुप्रासस्थले 'वन:' इति भागमादाय यमकस्यापि प्रवेशस्यानिवार्य्यतया छेकानुप्रांसयमकयोरेकाश्रयानुप्रवेशरूप: सङ्करोऽङ्गीकार्य्य एव गत्यन्तराभावात् । यमयति श्रुतिमधुरतया सहृदयानां हृदयामानन्दे नियमयतीति यमकम् । यमकशब्दोऽयं नित्य-नपुंसकलिङ्ग: स्वभावादपत्यादिशब्दवत् ।

सत्यर्थे इत्यस्याभिप्रायमाह, अत्रेति । निरर्थकत्वस्थलं विना अन्येषान्त्वमोषां स्थलानि वृत्तावेवानुपद-माह—सार्थकत्वमिति । सार्थकत्वे पृथगर्थकत्वमावश्यकम् । क्वचिन्निरर्थकत्वमिति । अत्रापि द्वयोरित्यनुष-ज्यते । यथा—"रभिंसु रभिंसु—" इति । अत्रापि पर्य्यालोचने समुदायस्य सार्थकत्वमावश्यकमेव, सर्वथा निरर्थकानामप्रयोगात् ।

क्रमेण तेनैवेत्यस्य व्यावृत्तिमाह तेनैवेति । इत्यादे: स्थलस्य, विविक्तविषयत्वं भिन्नविषयत्वं यमकेत-रालङ्कारलक्ष्यत्वमिति यावत् । तथा च 'दमो मोद:' इत्यादौ क्रमभेदान्न यमकम्, किन्तु केवलस्वरूपत एव साम्यात् प्रथमप्रकारो वृत्त्यनुप्रास एवेत्याशय: ।

यमकानामतिप्रचुरतरप्रकारतया साकल्येन प्रदर्शयितुमशक्यत्वात् भोजराजमम्मटादयोऽपि सरस्वतीक-ण्ठाभरणकाव्यप्रकाशादौ कियत: प्रकारान् प्रदर्शयन्त एव विरता:, तदपेक्षया प्रपञ्चेन तद्भेद प्रदर्शनविरतिरेव वरमिति मन्यमान आह एतच्चेति । यमकञ्चेत्यर्थ: । अत्र पदशब्द: पादस्य यत्किञ्चिद्भागपर:, अर्द्धशब्दश्च श्लोका-र्द्धपर: । पद-पादार्द्ध श्लोकानामावृत्तित्वेन रूपेण पदस्य आदिशब्दात् पादादीनां पादाद्य-मध्यान्त्यावयवादीनाञ्च आवृत्ते: पुनरुच्चारणात् । तथा च केवलपदावृत्तित्वरूपेणैव पदावृत्ते:, न तु पदादीनां पादादिष्वन्तर्भावात् पादाद्या-वृत्तित्वेन पदाद्यावृत्ते:—इत्यादितात्पर्य्यलाभाय "पद पादार्द्ध श्लोकावृत्तित्वेने"त्युक्तम् । **एवञ्च** केवलपदस्य पुनरुच्चारणात्, केवलपादस्य पुनरुच्चारणात् केवलश्लोकार्द्धस्य पुनरुच्चारणात्, केवलश्लोकस्य च पुनरुच्चार-णात् एवं पादस्य आद्यमध्यान्त्यावयवादीनां पुनरुच्चारणाच्च अनेकविधतया प्रभूततमभेदम् अतिबहुतरप्रकारमिति सरलार्थ: ।

## विमला

यमकमाह, सत्यर्थे इति ।—अर्थे सति—विद्यमाने, पृथगर्थाया:,—भिन्नार्थाया:, स्वरव्यञ्जनानां संहते:,—समूहस्य, (स्वरव्यञ्जनयोरेकत्वेऽपि यमकं भवति, यथा—"नानाकारेण कान्ताभ्रूराराधितमनोभुवा । विविक्तेन

विलासेन ततक्ष हृदयं मम ॥" एतद्वर्णयमकं वामनसम्मतम्) । तेनैव—पूर्वोक्तेनैव, क्रमेण—येन क्रमेण प्रथमं स्वरव्यञ्जनसमूह उक्तस्तेनैवेत्यर्थः, आवृत्तिः—आवर्त्तनं, पुनः कथनमित्यर्थः, यमंकर विनिगद्यते—कथ्यते ।

अत्र द्वयोरिति ।—पदयोः,—स्वरव्यञ्जनसमूहयोः । क्वचिदिति ।—"नगजानगजा दयिता दयिता" इत्यादौ । क्वचिन्निरर्थकत्वमिति द्वयोरित्यनुषङ्गः; यथा—"विजितामरतामरसेक्षणा" इत्यादौ; अत्र तामरेतिस्वर-व्यञ्जनसमूहयोः, पदैकदेशत्वात् निरर्थकत्वम् । एकस्येति ।—प्रथमस्य द्वितीयस्य वा स्वरव्यञ्जनसमूहस्येत्यर्थः । विविक्तविषयत्वं—विभिन्नविषयत्वं, यमकादिति शेषः, पूर्वोक्तक्रमेणैव उक्तेरावश्यकत्वकथनात् "दमो मोदः" इति नास्यालङ्कारस्य विषय इत्यर्थः । रसादीनामत्यन्तोपकारिणी यमकप्रपञ्चस्य निर्वचनमनतिप्रयोजनमिति सङ्क्षे-पेणैव यमकनिरूपणं ज्याय इत्यभिप्रायेणाह, एतच्चेति ।—यमकञ्चेत्यर्थः । अत्र पदपदं पादैकदेशपरम्, अर्द्धपदं श्लोकार्द्धपरम् । पादाद्यावृत्तेश्चेति ।—पादस्य द्विधा त्रिधा चतुर्द्धा वा खण्डने चानेकविधत्वम्, [आदिना पाद-श्लोकार्द्धयोः सग्रहः] । तत्र प्रथमपादस्य द्वितीयाद्यन्यतमस्मिन् द्वितीयादिसमुदाये च, द्वितीयस्य तृतीयाद्यन्यतर-स्मिन् तृतीयादिसमुदाये वोक्ततृतीयस्य चतुर्थे आवृत्तिः सम्भवतीति दशविधत्वमेव पादयमकस्य; एवं प्रथमार्द्धस्य द्वितीयार्द्धे, प्रथमपादस्य द्वितीये, तृतीयस्य चतुर्थे, द्वितीयस्य तृतीये पादे आवृत्तिः सम्भवतीति श्लोकार्द्धयदमकस्य त्रैविद्यम् । श्लोकयमकमपि विजातीयचतुष्पादावृत्त्या च द्विविधम् । प्रभूततमभेद—बहुभेदमित्यर्थः । दिङ्मात्रं—किञ्चिन्मात्रं, प्रकारान्तरोपलक्षणमल्पमित्यर्थः ।

## लक्ष्मी

अनुप्रासानन्तरं लोके यमकस्य प्रसिद्धत्वेन अधुना तमेव निरूपयति—सत्यर्थ इति । अर्थे वाच्यार्थे स्थिते सति, पृथग् भिन्नः अर्थः प्रकृतिप्रतिपाद्यो वाच्ये यस्यास्तस्याः तादृशायाः, स्वरसहिते व्यञ्जने स्वरसहितानि वा व्यञ्जनानि तयोस्तेषां वा संहतिः समुदाय इति तस्याः तथोक्तायाः शाकपार्थिवादित्वान्मध्यमपदलोपि समासः । स्वराश्च व्यञ्जनानि च तेषां संहतिस्तस्या इति द्वन्द्वसमासस्तु न 'द्वन्द्वान्ते श्रूयमाणं प्रत्येकमभिसम्बध्यत' इति न्यायेन संहतिपदस्य प्रत्येकं सम्बन्धापत्त्या स्वरसंहतेः व्यञ्जनसंहतेः' इत्यर्थापत्तेः । येन क्रमेण प्रथमं स्वरव्यञ्जनसमूह उक्तः न तु विपरीतेन आवृत्तिः पुनरुच्चारणम्, यमकं नामालङ्कारः । यमौ द्वौ समानजातिकौ तत्प्रतिकृति यमकम् 'इवे प्रतिकृतौ' इति पाणिनिसूत्रेण कन्प्रत्ययः, यद्वा यमयति श्रुतिमधुरतया सचेतसां हृदयमानन्दे स्वरव्यञ्जनसंहतिक्रम-निवेश्यत्वेन नियमयतीति यमकम् 'ण्वुल्तृचौ' इति पाणिनिसूत्रेण ण्वुल्प्रत्ययः । अत्र 'सत्यर्थे' 'क्रमेण तेनैव' इत्यस्य चाभिप्रायं वृत्तावेव स्फुटीकरिष्यति । 'लाटानुप्रासेऽतिव्याप्तिवारणाय 'पृथगर्थायाः' इत्यभिधानम् । तथा च अभि-न्नार्थायाः स्वरव्यञ्जनसंहतेः पुनरुक्तौ लाटानुप्रासः, अयन्तु विभिन्नार्थाया इति परस्परभेदः । एवञ्च समानार्थकत्वा-भाववत्समानानुपूर्वीकस्वरसंबलितव्यञ्जनसंहत्यावृत्तिर्यमकमितिलक्षणमवगन्तव्यम । अत्र संहतिरनेकत्वम्, तच्च एकमात्रव्यञ्जनेन सह एकमात्रस्वरस्य संयोजनेनापि सम्भवति । अत एव—

**नानाकारेण कान्ताभ्रूराराधितमनोभुवा ।**
**विविक्तेन विलासेन ततक्ष हृदयं मम ॥**

इति वामनाभिमतवर्णयमकस्थले,

**'एकं कूपे नयनमपरं मन्मुखे खेलयन्ती मामुद्दिश्य प्रतिकृतिमपि स्वां किमप्यालपन्ती ।**

**उद्यत्पीनोरसिजयुगलं कुम्भमभ्युद्धरन्ती शिक्षाकूतस्मितशुचिमुखी प्राविशन्मानसं मे ॥'**

इत्यादौ चाऽव्यप्तिर्नेत्यवधेयम्। नचान्त्यानुप्रासोदाहरणे—

**'केशः काशस्तवकविकाशः कायः प्रकटितकरभविलासः'**

इत्यादौ 'आसः' इत्यंशमाश्रित्यैतल्लक्षणस्यापि प्रवृत्तावतिव्याप्तिरितिवाच्यम्, सामान्यविशेषन्यायमाश्रित्य दोषाभावात्। तथाहि—अन्त्यानुप्रासस्य केवलपदपादान्तनिश्चिततया विशेषत्वेनैतस्य तदनिश्चयतया सामान्यत्वेन एतल्लक्षणस्य अन्त्यानुप्रासेतरविषयकत्वकल्पनादितिभावः। छेकानुप्रासयमकयोरेकाश्रयानुप्रवेश-रूपसङ्करोऽवश्यं स्वीकरणीय एव। तथाहि छेकानुप्रासोदाहरणे 'पावनः पवनः' इत्यत्र 'वनः' इत्यंशमाश्रित्य यमकप्रवेशस्योपायशतेनापि परिहर्तुमशक्यत्वेनोपायान्तराभावात्। अयञ्चालङ्कार एकस्मिन पादे द्वयोर्वा पादयोः चतुर्ष्वपि वा पादेषु प्रयोक्तव्यः, न तु पादत्रये—

**'यमकं तु विधातव्यं न कदाचिदपि त्रिपात्' इति निषेधात्।**

अत एव यमकस्य पादत्रयगतस्याप्रयुक्तत्वं दोष इत्युक्तं ग्रन्थकृता दोषपरिच्छेदे।

कारिकास्थ 'सत्यर्थे' इत्यस्याशयमाह—अत्रेति। अस्मिन् यमक इत्यर्थः। क्वचित् 'सुषमया समया दिवमञ्चति' 'नगजानगजा दयिता दयिता' इत्यादावित्यर्थः, द्वयोर्यस्यावृत्तिर्विधीयते यच्चावर्त्यते तयोरुभयोराद्य-स्यान्त्यस्य चेत्यर्थः। पदयोः स्वरसंवलितव्यञ्जनसंहतिविशेषयोरित्यर्थः। सार्थकत्वे पृथगर्थत्वमावश्यकमितिबो-ध्यम्। क्वचित् 'शमरतेऽमरतेजसि पार्थिवे' 'विजयते जयतेपि च शात्रवम्' 'विजितामरतामरसेक्षणा' 'रभिसुं रभिसुं' इत्यादावित्यर्तः। पुनरितिशेषः। निरर्थकत्वम् अत्रापि 'द्वयोरपि पदयोः' इत्यनुषङ्गः। अत्रापि पर्यालोचने तु समुदायस्य सार्थकत्वमावश्यकमेवाभ्युपेयम्, सर्वथा निरर्थकानामप्रयोगात्। क्वचित् 'भवता भवतापभीतोऽहम्' 'समुदितं मुदितं भुवि तत् पुरम्' इत्यादावित्यर्थः। एकस्य मयोर्द्वयोरेकतरस्याद्यस्यान्तिमस्य वेत्यर्थः। अपरस्य तदितरस्येत्यर्तः। अतोऽस्माद्धेतोः।

'दमो मोदः' 'सरो रस' इत्यादौ स्वरव्यञ्जनसाम्यात् क्रमभेदादतिव्याप्तिरित्यतः क्रमेण तेनैवावृत्तेरित्यस्य फलं दर्शयितुमाह—तेनैवेति तेनैव पूर्वेणैव क्रमेण पृथगर्थायाः स्वरव्यञ्जनसंहतेरावृत्तिर्यमकमितिशेषः। इत्युक्त-त्वेनेत्यर्थः। दम इन्द्रियजयः। मोद आह्लादः। इत्यादेः स्थलस्येतिशेषः।

अत्रादिपदेन 'सरो रसः' इत्यादेः परिग्रहः। विविक्तविषयत्वं पृथग्विषयत्वम्, यमकेतरालङ्कारलक्ष्यत्व-मितियावत् एवञ्च 'दमो मोदः' इत्यादौ स्वरूपमात्रसाम्यात्। प्रथमप्रकारो वृत्त्यनुप्रास एव न तु यमकमितिभावार्थः।

यमकानां प्रभूततमभेदतया साकल्येन उपपादयितुमशक्यत्वात् काव्यप्रकाशकृद्भोजराजप्रभृतयोऽपि स्वस्वप्रबन्धे काव्यान्तर्गतगडुभूतत्वेन कियतः प्रकारानेव प्रदर्शितवन्त इति प्राचीनसरणिमवलम्ब्य विरतिरेव श्रेयसीत्याशयेनाह—एतच्चेति, ममकञ्चेत्यर्थः। पादपादार्द्धश्लोकावृत्तित्वेन पादावृत्तिरूपत्वेन पादार्धावृत्तिरूप-त्वेन श्लोकावृत्तिरूपत्वेन चेत्यर्थः। पादाद्यावृत्तेश्च आदिना पादमध्यान्त्यावयवादेः परिग्रहः। एवञ्च केवलपादस्य पुनरुच्चारणात् केवलपादार्द्धस्य पुनरुच्चारणात् केवलश्लोकस्य श्लोकार्द्धस्य च पुनरुच्चारणात्, एवं पादस्य आद्यमध्यान्त्यावयवादीनां पुनरुच्चारणाच्च अनेकविधतया अनेकप्रकारैरेव स्थिततया प्रभूततमभेदम् अतिप्रचुर-प्रकारमितिसरलार्थः। यमकभेदानां प्रभूततरत्वेन सर्वोदाहरणासक्तेर्यथाशक्ति उदाह्रियत इत्याशयेनाह—दिङ्मात्रमिति। एवञ्च एकभेदमात्रं पदावृत्तिमात्रमित्यर्थः।

## रुचिरा

अथ यमकालङ्कारमाह—७० सतीत्यादिना।

७० **अर्थे** वाच्यार्थे इत्यर्थः। **सति**। पृथगर्थाया: पृथग्भिन्नोऽर्थो यस्यास्तस्याः। **स्वरव्यञ्जनसंहतेः** स्वरसहितें व्यञ्जने इति, स्वरसहितानि व्यञ्जनानीति वा, तयोस्तेषां वा संहतिः समुदाय इति तास्यास्तथोक्तायाः। शाकपार्थिवादिवन्मध्यमपदलोपः। 'स्वराश्च व्यञ्जनानि चेति तेषां संहतिस्तस्याः।' इति तु न युक्तम्, 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते।' इति नयेन संहतिपदस्य प्रत्येकमन्वयापत्त्या 'स्वरसंहतेः' 'व्यञ्जनसंहतेः' इत्याद्यर्थापत्तेः। तेन पूर्वेण। एव नतु विपरीतेन। **क्रमेण**। **आवृत्तिः** पुनः पाठः। यमकं तन्नामाऽलङ्कार इत्यर्थः। यमौ द्वौ समान, जातिकाविति यावत्, तत्प्रतिकृतिरिति तथोक्तम्। 'इवे प्रतिकृतौ।' ५/३/९६ इति कन्। यद्वा—यम-यति नियमयति स्वरव्यञ्जनसंहतिं क्रमेण निवेश्यत्वेनेति यमकम्। 'ण्वुल्तृचौ।' ३/१/१३३ इति एण्वुल्। **विनिगद्यते** ॥ ६१ ॥

इदं तत्त्वम्—लाटानुप्रासोऽभिन्नार्थायाः स्वरव्यञ्जनसंहतेः पुनरुक्तौ, अयं तु विभिन्नार्थाया इति विशेषः। 'शुभयते भवते' इत्यादावाद्यायाः 'भवता भवतापभीतोऽहम्' इत्यादावन्त्याया आवर्त्यमानायाः स्वरव्यञ्जनसंहतेर-नर्थकतयाऽप्रसङ्गनिवारणाय 'सत्यर्थे' इत्युक्तम्। यद्यर्थस्तदा पृथग्भूत इत्यर्थः। 'वंदे देवं....' इत्यादावतिप्रसक्ति-वारणाय 'क्रमेण तेनैवावृत्तिः' इत्युक्तम्। अत्र स्वरव्यञ्जनसंहतेः साम्येऽपि न स क्रमः। एवं च-समानार्थकत्वाभाववत्समानानुपूर्वीकस्वरसंवलितव्यञ्जनसंहत्यावृत्तिर्यमकम्। इति। तदिदं विवृणोति-अत्रा-स्मिन् यमके इति यावत्। **क्वचित्** 'सुषमया समया दिवमञ्चति ॥' इत्यादौ इत्यर्थः। द्वयोर्यस्यावृत्तिर्विधीयते, यच्चावर्त्स्यति तयोरुभयोराद्यस्यान्त्यस्य चेत्यर्थः। **अपि**। **पदयोः** स्वरसंवलितव्यञ्जनसंहतिविशेषयोः। **सार्थक-त्वम्**। क्वचित् 'विजयते जयतेपि त शात्रवम् ॥' इत्यादावित्यर्थः। 'पुन'रिति शेषः। **निरर्थकत्वम्**। क्वचित् 'द्वयोरपि पदयोः' इति पूर्वेणान्वयः। अथ-**क्वचित्** 'भवताभवतापभीतोऽहम् ॥,' 'समुदितं मुदितं भुवि तत् पुरम् ॥' इत्यादावित्यर्थः। एकस्य तयोर्द्वयोरेकतरस्याद्यस्यान्त्यस्य वेति यावत्। सार्थकत्वम्। अपरस्य तद्भिन्नस्येत्यर्थः। **निरर्थकत्वम्**। अतोऽस्मात् कारणात्। **'अर्थे। सति।' इति। उक्तम्**। अयम्भावः—यत्र सार्थकत्वं तत्र पृथगर्थ-त्वमेव। अन्यथा लाटानुप्रासेनैक्यं स्यात्। अत एवाहुः प्रदीपकाराः—'अर्थे सतीति। यद्यर्थस्तदा भिन्न इत्यर्थः।' इति। एवं च—पृथगर्थैवावर्त्यमाना स्वरसंवलितव्यञ्जनसंहतिर्यमकमिति फलितम्। तेन पूर्वेण। **एव**। **क्रमेण** 'पृथगर्थायाः स्वरव्यञ्जनसंहतेरावृत्तिर्यमक'मिति शेषः। इत्यभिधानेनेत्यर्थः। 'दम इन्द्रियजयः। **मोद** आह्लादः।' **इत्यादौ** 'पृथगर्थायाः स्वरव्यञ्जनसंहतेः।' इत्यर्थः। **विभक्तविषयत्वं** विभक्तः पृथक्कृतो विषयो यस्य तत्त्वम्। **सूचितम्**। अयम्भावः—'दमो मोदः' इत्यादौ पृथगर्थत्वमपि स्वरव्यञ्जनसंहतिरपि पूर्वक्रमस्य पर परित्याग इतीदं नास्य विषयः। इति। **एतद्** 'यमक'मिति शेषः। च। **पदपदार्धश्लोकावृत्तित्वेन**। पदावृत्तिरूपत्वेन पदार्धावृत्ति-रूपत्वेन श्लोकावृत्तिरूपत्वेन चेत्यर्थः। **पादाद्यावृत्तेः**। आदिना पादद्वयादेग्रहणम्। च। **अनेकविधतयाऽनेकप्र-कारैरवस्थिततया**। **प्रभूततमभेदं** प्रभूततमा अतिसङ्ख्याका भेदा यस्य तत्तथोक्तम्। इदं बोध्यम्—अयं चालङ्कार एकस्मिन् पादे द्वयोर्वा पादयोश्चतुर्ष्वपि वा पादेषु प्रयोज्यः, न तु त्रिषुः 'यमकं तु विधात्व्यं न कदाचिदपि त्रिपात्।' इति निषेधात्। अत एवोक्तं कविराजैः—'यमकस्य पादत्रयगतस्याप्रयुक्तत्वं दोषः।' इति। अत्रेदं टिप्पणीकाराः प्राहुः (१) 'यदि प्रथमपादो द्वितीये यम्यते तदा मुखयमकम्। यथा—'दर्पकान्तकविराजमानयाऽदर्पकान्तकविराज-मानया। त्वत्प्रसादविधिलब्धया धिया साधवो दधिति वैबुधीं धुरम् ॥' (२) प्रथमस्तृतीयपादे चेत् तदा संदंशः। यथा—'सन्नारीभरणोपायमाराध्य विधुशेखरम्। सन्नारीभरणोऽप्रायस्ततस्त्वं पृथिवी जय ॥' (३) प्रथमश्चतुर्थ-

पादे चेतदाऽऽवृत्तिः । यथा—'मुदाऽऽरताडीसमराजिराऽजितः प्रवृद्धतेजाः प्रथमो धनुष्मताम् । भवान् बिभर्तीह नगश्च मेदिनीमुदार-ताडी-समराजि-राजितः ॥' (४) द्वितीयस्तृतीयपादे चेत्तदा गर्भः । यथा—'अध्यास्यते शम-जुषा भवतः प्रसादादामोदराजि-तरु-चारु चिरं जनेन । दामोदरा-जितरुचा-रुचिरञ्जनेन कीर्णं तृणेन मृदुना वनमार्त्त-वेन ॥' (५) द्वितीयपादश्चतुर्थे चेत्तदा संदष्टकम् । यथा-'शारदीमिव नदीं प्रसादिनीमुच्चकैरव-सरोजराजिताम् । स्तोतुमेष मम मूर्त्तिमैश्वरीमुच्चकैरवसरोऽजराजिताम् ॥' (६) तृतीयपादश्चतुर्थे चेतदा पुच्छम् । यथा—'उत्तुङ्गमां-तङ्गकुलाकुले यो व्यजेष्ट शत्रून् समरे सदैव । ससारमानीय महारिचक्रं ससारमानीयमहाऽरिचक्रम् ॥' (७) प्रथम-पादस्त्रिष्वपि यम्यते चेत्तदा पङ्क्तिः । यथा—'तनुशङ्करवैरसमायतया तनुशङ्करवैरसमायतया । तनु शंकर वै रसमायतया तनुशंकर वै रसमायतया ॥' 'हे शङ्कर ! मा मां रस सम्भावय । मां प्रति स्ववचनामृतं मुञ्चति । वै प्रसिद्धौ । कैः । अतनु यथा स्यात्तथा ये तनुशङ्का निःशङ्का रवा भक्तजनान् प्रत्यभयदानवचनानि तैः । कीदृशं मा कर्मभूतम् । असमोऽनन्यसदृशोऽयः शुभावहो विधिर्यस्य सोऽसमायः, तस्य भावस्तत्ता तयाऽसमायतयोपलक्षि-तम् । कथम्भूतयाऽसमायतया । आयतयाऽनियतया । हे विभो, शं कैवल्यलक्षणं तनु विस्तारय, अहं रसं भक्तिरसं करवै । त्वं मा माम् अतनुशम् अतनुः कामस्तं श्यति तनूकरोतीत्यतनुशस्तथाभूतं कर कुर्वित्यर्थः । करेति च्छादन्दसः प्रयोगः । 'छान्दसा अपि क्वचिद्‌भाषायां प्रयुज्यन्ते' इति वचनात् । कया हेतुभूतया । वैरसमायतया वैरेणान्तररि-पुसद्‌भावजनितेन, सह मायया वर्त्तत इति समायः । तस्य भावस्तत्ता तया । कीदृश्याऽऽयतया विस्तीर्णया ।' इति तदर्थः । 'यमकं तु विधातव्यं न कदाचिदपि त्रिपात् ।' इति नियमादेकस्यापरपादद्वयगतत्वेन भेदो न भवतीत्यसङ्कीर्णं पादगतं यमकं सप्तधैव । (८) प्रथमः पादश्चतुर्थे पादे द्वितीयस्तृतीये चेद् यम्यते तदा वृत्तिगर्भयोगात् परिवृत्तिः । यथा—'मुदा रताऽसौ रमरणीयतायां स्मरस्यदोऽलंकु-रुते नवोढा । स्मरस्यदोऽलंकुरुतेऽनवोढामुदारतासौ रम-णीयतायाम् ॥' (९) प्रथमो द्वितीये तृतीयश्चतुर्थे चेद् यम्यते तदा मुखपुच्छयोगाद् युग्मकम् । यथा—'शमित-सङ्गमसज्ज-नतापदं शमितसङ्गमसज्जनतापदम् । न-मत-काममहीन-विभासितं नमत काममहीन-विभा-सितम् ॥' इत्यर्थाभ्यासमृते पादद्वयावृत्तौ द्वयमिति नव । (१०) अर्धावृत्तिः समुद्रकम् । यथा—'कलि-तमो-हनमारव-राजितं स्मर हरं शिखि-चन्द्रकलाऽञ्छितम् । कलितमोहन-मारवराऽजितं स्मरहरं शिखिचन्द्रकलाञ्छितम् ॥' (११) श्लोकावृत्तिर्महायमकम् । यथा—'सकलशं सकपालमलङ्कृतप्रमदमस्थिरसं मदनाशनम् । भवमदभ्र-महानिधने हितं शमनमज्जनमानमताऽलयम् ॥ 'सकल-शंसक-पालमलं कृतप्रमदमास्थिर-सम्मद-नाशनम् । भव-मद-भ्रम-हानि धनेहितं शम-नमज्जन-मान-मताऽऽलयम् ॥' 'अदभ्रं यन्महद् अनिधनम् अविनाशित्वं निजभक्तजनदेयं तत्र हितम् । शमनं यमं मज्जयतीति, तं शमनमज्जनम् । अलयं निर्नाशम् । सकला ये शंसकाः स्तुतिकर्त्तारस्तान् पालयति तथाभूतम् । कृतः प्रमदः परमानन्दो येन तादृशम् । भवे संसारे यो मदस्तेन यो भ्रमस्तस्य हानिः, सैव धनं येषां ते संसारभ्रमविरक्तास्तैरीहितस्तम् । शमेन नमन्तो ये जनास्तेषां मानार्थं मतोऽङ्गीकृतः आलयः प्रतिदेहस्थि-तिरूपो येन तादृशम् ।, शेषं स्पष्टम् ।' इति तदर्थः । एतद्‌द्वितयमपि पादावृत्तिविशेष इत्येकादश पादयमकानि । पादभागवृत्ति (यमक) त्वनेकविधम्—द्विधा विभक्तेषु पादेषु प्रथमादिपादानामाद्यभागाः पूर्ववद्द्वितीयादिपादेष्वा-द्यभागेष्वेव यदि यम्यन्ते तदा पूर्ववन्मुखादयो दश भेदा उत्पद्यन्ते । यथा-प्रथमपादाद्यभागो द्वितीयतृतीयचतुर्थपा-दाद्यभागेषु यम्यत इति त्रिधा । द्वितीयपादाद्यभागस्तृतीयचतुर्थपादाद्यभागयोर्यम्यते इति द्विधा । तृतीयपा-दाद्यभागश्चतुर्थपादाद्यभागे यम्यत इत्येकः । प्रथमपदाद्यभागस्त्रिष्वपि आद्यभागेषु यम्यत इत्यन्य इति सप्तासङ्कीर्-र्णभेदाः । प्रथमपादाद्यभागसमानो द्वितीयपादाद्यभागस्तृतीयपादाद्यभागसमानश्चतुर्थपादाद्यभाग इत्येकः सङ्करः । प्रथमपादाद्यभागस्तृतीयपादाद्यभागसमानो द्वितीयपादाद्यभागश्चतुर्थपादाद्यभागसमान इत्यपरः सङ्कर इति नव ।

अर्धावृत्त्या समं पूर्ववद्दश भेदाः । एवं प्रथमादिपदानामन्त्यभागस्य द्वितीयादिपादान्त्यभागेष्वेवयमने पूर्ववद्दश भेदा जायन्ते । यथा—प्रथमपादान्त्यभागस्य द्वितीयतृतीयचतुर्थभागेषु यमने त्रिधा । द्वितीयपादान्त्यभागस्य तृतीयचतुर्थपादान्त्यभागयोर्यमने द्विधा । तृतीयपादान्त्यभागस्य चतुर्थपादान्त्यभागे यमन एकः । प्रथमपादान्त्यभागस्य त्रिष्वव्यन्त्यभागेषु यमन इत्यपर इति सप्तासङ्कीर्णाः । प्रथमपादान्त्यभागद्वितीयपादान्त्यभागयोस्तृतीयपादान्त्यभागचतुर्थपादान्त्यभागयोश्च साम्येऽन्य इति सङ्करा इति नव । अर्धावृत्त्या समं पूर्ववद्दशभेदाः । इत्थं द्विखण्डीकृतेषु पादेषु विंशतिः, त्रिखण्डीकृतेषु त्रिंशत्, चतुःखण्डीकृतेषु चत्वारिंशद्भेदाः स्थानापरिवर्त्तिनो भवन्ति । तेषामुदाहरणानि पादावृत्तिदिशैवावसेयानि । अथ-स्थानपरिवर्त्तनभेदाः—प्रथमादिपादानामन्त्यादिभागा द्वितीयादिपादानामाद्यादिभागेषु यम्यंते इत्याद्यन्वर्थताऽनुसारेणान्त्याद्यादियमकादयः प्रभेदा भवन्ति । तथा हि—द्विखण्डे यथा प्रथमपादस्यान्त्यमर्धं द्वितीयपादस्यार्धे चेद् यम्यते तदाऽन्तादियमकम् । प्रथमभाग एव चेदन्त्यभागे तदाद्यन्तयमकम् । एवं प्रथमपादस्याद्यान्तभागौ द्वितीयस्यान्तादिभागयोर्यम्येते तदाद्यन्तादियमकयोः समुच्चयः । अत्र त्रिखण्डचतुः खण्डयोः पूर्वपादमध्यभागे उत्तरपादस्यादिभागे यदि यम्यते तदा मध्यादियमकम् । पूर्वस्यादिभागश्चेदुत्तरस्याद्यमध्ययोस्तदाः मध्याद्यादिमध्ययोः समुच्चयः । एवं—प्रथमस्यान्त्यभागो द्वितीयस्य मध्यभागे चेत्तदाऽन्त्यमध्यम् । पूर्वस्य मध्यभागश्चेद् द्वितीयस्यान्त्यभागे तदा मध्यान्तिकम् । पूर्वस्यान्त्यमध्यभागौ चेद्द्वितीयस्य मध्यान्त्यभागयोस्तदान्त्यमध्यमध्यान्त्ययोः समुच्चयः । यद्यपि पूर्वस्यादिभाग उत्तरस्यान्त्यभागे चेत्तदाद्यन्तकमन्त्यभागस्त्वाद्यभागे चेत्तदादिकमित्यादिप्रकारद्वयं सम्भवति, तथाऽपि द्विखण्डान्तर्गतमेव तदिति पृथङ् न गण्यते । सर्वेषां चैषामपरः समुच्चय इति भिन्नपादे यमने प्रभेदाः । एवं तस्मिन्नेवपादे आद्यादिभागानां मध्यादिभागेष्वावृत्तौ भेदा द्रष्टव्याः । सर्वे चैते नियतस्थानविवक्षया स्थानयमकभेदा नियतेषु स्थानेष्वावृत्तेरिति बोध्यम् । अनियतस्थानयमकभेदा अपि बहवो भवन्तीति प्रभूततमभेदं यमकम् । एतेषामुदाहरणानि तत्र महाकविप्रयोगेष्वनुसन्धेयानि, विस्तरभयान्नेह प्रपञ्चयन्ते ॥' इति ।

दिङ्मात्रमुदाह्रियते—

**'नवपलाश-पलाशवनं पुरः स्फुटपराग-परागत-पङ्कजम्।**

**मृदुल-तान्त-लतान्तमलोकयत्स सुरभिं सुरभिं सुमनोभरैः ॥'**

अत्र पदावृत्तिः। 'पलाशपलाश' इति, 'सुरभिं सुरभिं' इत्यत्र च द्वयोः सार्थकत्वम्। 'लतान्त-लतान्त' इत्यत्र प्रथमस्य निरर्थकत्वम्। 'परागपराग' इत्यत्र द्वितीयस्य। एवमन्यदप्युदाहार्यम्।

**'यमकादौ भवेदैक्यं डलोर्बवोर्लरोस्तथा।'**

**इत्युक्तनयात् 'भुजलतां जडतामबलाजनः' इत्यत्र न यमकत्वहानिः,**

---

## विवृति

**दिङ्मात्रमिति।** प्रकारान्तरोपलक्षणमल्पमित्यर्थः॥ **नवेति।** नवानि पलाशानि पत्राणि येषां तादृशं पलाशवनं किंशुकारण्यं यत्र तम्। स्फुटानि विकसितानि परागै रजोभिः परागतानि संबद्धानि पङ्कजानि यत्र तम्। मृदुलोऽत एव तान्त आतपेन ग्लानो लतान्तो यत्र तम्। स श्रीकृष्णः सुरभिं वसन्तं सुमनोभरैः पुष्पातिशयैः सुरभिः सुगन्धिम् **पदावृत्तिः** पादैकदेशावृत्तिः। **द्वितीयस्येति।** निरर्थकत्वमित्यन्वयः। **अन्यदपीति।** पादवृत्तयादिरूपयमकमित्यर्थः। पादाभ्यासो यथा—'न मन्दयाऽवर्जित-मान-सात्मया नमन्दया-वर्जितमानसात्मया। उरस्युपास्तीर्ण-पयोधरद्वयं मया समालिङ्ग्यत जीवितेश्वरः॥' इत्यादि। अर्धाभ्यासो यथा—'नाऽस्थेयसत्वया वर्ज्यः परमायत—मानया। नास्थेयः स त्वयाऽऽवंर्ज्यः परमायतमानया॥' इत्यादि। श्लोकावृत्तिद्वयं क्रमेण यथा—'विनायकेन भवता वृत्तोपचितबाहुना। स्वमित्रोद्धाऽरिणाऽभीता पृथ्वी यमतुलाश्रिता॥' विनायकेन भवता वृत्तोपचितबाहुना। स्वमित्रोद्धारिणाऽभीता पृथ्वी यमतुलाश्रिता॥' विनायकेन भवता वृत्तोपचितबाहुना। स्-वमित्रोद्धाऽरिणाऽभीता पृथ्वी यमतुलाश्रिता॥' 'समानयास माऽनया समानयाऽसमानया। समानया समानया समान या समानया॥' अयं चतुरक्षरपादश्लोकः। यमकादावित्यादिना श्लेषादिग्रहणम्। तेन 'त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ। अयं तु युवयोर्भेदः स जडात्मा पटुर्भवान्॥' इत्यादौ न श्लेषभङ्गः॥

## विवृतिपूर्तिः

**अत्रेति।** अत्र कालिदासपद्ये डकार-लकारयोर्भेदसत्त्वेऽपि श्रुतिसाम्यान्न यमकत्वव्याघात इत्यर्थः॥

## विज्ञप्रिया

**नवपलाशेति।** स कृष्णः पुरः सुरभिं वसन्तमलोकयत्। कीदृशं नवं पलाशं पत्रं यस्य तादृशं पलाशवनं किंशुककाननं यत्र तादृशम्। स्फुटैः परागैः परागतं व्याप्तं पङ्कजं यत्र तादृशम्। मृदुतो मृदुतरः एव क्लान्तोऽर्थात् रविरश्मना लताया अन्तः अग्रभागो यत्र तादृशम्। यद्वा मृदुलः मृदुः तान्तः अर्थात् युवभिराकाङ्क्षितो लताया अन्तो अग्रभागो यत्र तादृशम्। तमु काङ्क्षायामिति धातुः। सुरभिं कीदृशम्। सुमनोभरैः पुष्पसमूहैः सुरभिं सुगन्धिम्।

अत्र सार्थकयोः पलाशं सुरभिमित्यनयोः पदयोः द्वयोः आवृत्तिः इत्याह—**अत्रेति**। अन्यतरनिरर्थकत्वं तु दर्शयति—**लतान्तेति**।

यमकादावित्यादिपदात् श्लेषपरिग्रहः। डलोरित्यादौ सर्वत्र प्रथमवर्णे अकार उच्चारणार्थः। ववोरित्यत्र अन्यस्थपवर्गीययोरैक्यमुक्तम्। अत्र चालङ्कारिकसमयमात्रम्। अन्ये द्वये तु जलयोरेकत्वं डश्रुतेर्लश्रुतिरित्यनुशासनमप्यस्ति।

## लोचन

नवपलाशं नूतनपत्रम्। पलाशवनं, किंशुकवनम्, स्फुटैः परागैः कुसुमरेणुभिः परागतं, मृदुलं कोमलं, तान्तं विस्तृतं, लतान्तं लताम्। द्वयोर्निरर्थकत्वे "प्रियतमायतमामेत्याद्युदाहरणम्।

अन्यत्र पादाद्यावृत्तौ। अत्र पादावृत्तिर्यथा मम तातपादानां कुवलयाश्वचरिते मुन्याश्रमवर्णनम्। 'जीअ उअ जण माणअं, जीअ उअ जण माणअं।" केचित्तु स्वरैकव्यञ्जनावृत्तावपि यमकमिच्छन्ति। यथा मुद्राहस्तगोविन्दानन्दकवेः—

**"एकं कूपे नयनमपरं मन्मुखे खेलयन्ती**
**मामुद्दिश्य प्रतिकृतिमपि स्वां किमप्यालपन्ती।**
**उद्यत्पीनोरसिजयुगलं कुम्भमभ्युद्धरन्ती**
**शिक्षाकूतस्मितशुचिमुखी प्राविशन्मानसं मे॥"**

यमकादावित्यादिशब्देन श्लेषादौ।

## कुसुमप्रतिमा

अतएवाह दिङ्मात्रमिति। एकप्रकारमात्रं पदावृत्तिमात्रमित्यर्थः;

नवेति। शिशुपालवधषष्ठसर्गे वसन्तवर्णनमिदम्। स हरिः पुरः पुरतः नवानि नूतनानि पलाशानि पर्णानि यत्र तादृश पलाशवनं किंशुकविपिनं यस्मिन् तादृशम्, स्फुटानि विकचानि परागैः रजोभिः परागतानि व्याप्तानि च पङ्कजानि पद्मानि यस्मिन् तम्, मृदुलाः सुकुमाराः अतएव तान्ता आतप तापेन क्लान्ताः लतान्त लताप्रान्तभागा यत्र तम्, तथा सुमनोभरैः पुष्पप्राचुर्य्यैः सुरभिं सौरभविशिष्टं सुरभिं वसन्तकालमलोकयत् अपश्यत्।

उदाहृते पदावृत्तिं प्रदर्शयति अत्रेति। "पलाश पलाश" इति इत्यादिरूपेणेत्यर्थः पदावृत्तिः। तथा च "पलाश-पलाश" इति "—पराग पराग" इति "लतान्त लतान्त" इति "सुरभि सुरभिम्" अथवा "रभिंसु रभिसु" इति च एकैकपदानामेव द्विर्द्विरुच्चारणादत्र पदयमकमिति भावः।

"द्वयोरपि पदयोः क्वचित् सार्थकत्वम्" इत्यादिकं यदभिहितं तदिदानीं प्रद्रश यति सुरभिमिति। द्वयोः पदयोरित्यर्थः। सार्थकत्वमिति। एकस्य वसन्तवाचकत्वात् अपरस्य च सौरभविशिष्टबोधकत्वादिति भावः। तथैव च पृथगर्थकत्वमपि द्रष्टव्यम्। निरर्थकत्वमिति। मृदुलशब्दस्य लकारमादायैव 'लतान्त' इति प्रथमरूपनिष्पत्तेः, तद्रूपेण च तेन कस्यचिदप्यर्थस्य बोधयितुमशक्यत्वादिति भावः। द्वितीयलतान्तशब्दस्य तु सार्थकत्वमेव। द्वितीयस्येति। निरर्थकत्वमितुषज्यते। परागतशब्दस्य तकारमंपहाय 'पराग' इति द्वितीयरूपनिष्पत्तेः, तद्रूपेण च

तेनापि कस्यचिदप्यर्थस्य बोधयितुमशक्यत्वादित्याशयः। तत्रापि प्रथमपरागशब्दस्य सार्थकत्वमेवेति बोध्यम्। द्वयोरेव पदयोनिरर्थकत्वन्तु—"रभि सु-रभि सु—" इत्यत्र इति दर्शितमेव।

एवमिति। तत्र पादावृत्तिर्यथा मम रुक्मणीहरः महाकाव्य—

"विद्धास्त्रं स वपुः पातिशिलोमुखकदम्बकम्। वहन्निवागात् कृष्णं स शिलोमुखकदम्बकम्॥" अर्द्धावृत्तिर्यथा तत्रैव—

"सह तेन समुद्युक्तः समिते समयादरम्। सहते न समुदयुक्तः समिते समयादरम्॥" श्लोकावृत्तिर्यथा काव्यप्रकाशे—

**"स त्वारम्भरतोऽवश्यमबलं विततारवम्।**
**सर्वदा रणमानैषीदवानलसमस्थितः॥**
**सत्वारम्भरतोऽवश्यमवलम्बिततारम्।**
**सर्वदारणमानैषीदवानलसमस्थितः॥"**

पादाद्यावृत्तिर्यथा शिशुपालवधे—

**"राजीवराजावशलालभृङ्गं मुणन्तमुणन्ततिभिस्तरुणाम्।**
**कान्तालकान्ता ललनाः सुराणां रक्षोभिरक्षोभितमुद्वहन्तम्॥"**

पादमध्यावृत्तेर्यथा सरस्वती कण्ठाभरणे—

**"दधतमाकरिभिः करिभिः क्षतैः समवतारसमैरसमैस्तटैः।**
**विविधका[illegible]िना महिताम्भसः स्फुटसरोजवना जवना नदीः॥"**

पादान्त्यावृत्तिर्यथा तत्रैव—

**"व्यथितसिन्धु सनीरशनैः शनैः अमरलोकबधूजघनैर्घनैः।**
**फणभृतामभितो विततं ततं दयितरम्यलतावकुलैः कुलैः॥"**

**अपरे च कियन्तो भेदाः सरस्वतीकण्ठाभरणादावनुसन्धेयाः।**

क्वचिद्वर्णयोर्भेदेऽपि पारिभाषिकमभेदमङ्गीकृत्य यमकादीनुपपादयितुमाह यमकादाविति। आदिपदेन श्लेषानुप्रासादीनां ग्रहणम्। ड लोर्डकारलकारयोः, बवोर्वर्गीयवकारान्तस्थवकारयोः, तथा लरोः लकार रेफयोश्च ऐक्यं वस्तुतः स्वरूपादिभेदेऽपि अभेदो भवेत्।

इत्युक्तात् नयात् रीतेः। "जलतां जड़ताम्" इत्यत्र कपिलिकादित्वात् लत्वाभावपक्षे लकारड्कारयोर्भेदेन प्रसक्तापि यमकत्वहानिर्नेत्यर्थः। श्लोकसमुदायो यथा रघुवंशनवमसर्गे—

**"अनुभवन् नवदोलमृतूत्सवंपटुरपि प्रियकण्ठजिघृक्षया।**
**अनयदासनरज्जुपरिग्रहे भुजलतां जड़तामबलाजनः॥"**

श्लेषेडकारलकारयोरैक्यम यथा—

**"तृष्णापहारौ विमलो द्विजावासो जनप्रियः।**

ह्रदः पद्माकरः किन्तु बुधस्त्वं स जड़ाशयः ॥"

उद्योतकारस्तु एतदतिरिक्तमपि परिभाषितवान् । यथा—

"यमकादौ भवेदैक्यं डलयोरलयोर्वयोः ।

श-षयोन-णयोश्चान्ते सविसर्गाविसर्गयोः ।

सविन्दुकाविन्दुकयोः स्यादभेदप्रकल्पनम् ॥"

## विमला

नवेति ।—राजसूये निमन्त्रितस्य इन्द्रप्रस्थं गच्छतः कृष्णस्य पथि वसन्ताविर्भावदर्शनवर्णनमिदम् । सः,—कृष्णः, पुरः,—अग्रतः, नवानि—नूतनानि, पलाशानि—पत्राणि यत्र तादृशं, पलाशवनं—किंशुककाननं यत्र तादृशं, स्फुटानि—विकसितानि, परागैः,—रजोभिः, ("परागः कौसुमं रजः" इत्यमरः) परागतानि—व्याप्तानि, पारगैः,—रजोभिः, ("पारगः कौसुमं रजः" इत्यमरः) परागतानि—व्याप्तानि, पङ्कजानि यस्मिन् तथाभूतं, तथा मृदुलाः,—कोमलाः, अत एव तान्ताः,—कुसुमभरेण आतपेन वा क्लान्ता इत्यर्थः, लतान्ताः,—पल्लवाः यत्र तादृशं, सुमनसां—पुष्पाणां, भरैः,—समूहैः, सुरभिं—सुगन्धि, सुरभिं—वसन्तम्, अलोकयत्—ददर्श । द्रुतविलम्बितं वृत्तम् । शिशुपालवधस्येदं पद्यम् ।

अत्रेति ।—पदावृत्तिः,—पादैकदेशावृत्तिः । द्वयोः,—"सुरभिं सुरभिम्" इत्युभयोरित्यर्थः । सार्थकत्वम्—अर्थवत्त्वम्; [ग्रन्थकृता एतद्वयं सार्थकतया उदाहृतमपि तदेव अन्यविधया "रभिंसु रभिंसु" इत्येवमानुपूर्व्यां गृहीतमुभयमपि निरर्थकत्वेन उदाहर्तुं शक्यते इति सुधीभिर्विधेयम्] । द्वितीयस्येति ।—निरर्थकत्वम् इत्यन्वयः । अन्यदपीति ।—पादावृत्त्यादिरूपयमकमित्यर्थः । पादाभ्यासो यथा—"न मन्दयाऽवर्जित-मान सात्मया नमन्द्यावर्जितमानसात्मया । उरस्युपास्तीर्णपयोधरद्वयं मया समालिङ्गत जीवितेश्वरः ॥" इत्यादि । अर्द्धाभ्यासो यथा—"नाऽस्थेयसत्वया वर्ज्यः परमायत मानया । नास्थेयः स त्वयाऽऽवर्ज्यः परमायतमानया ॥" इत्यादि । श्लोकावृत्तिद्वयं क्रमेण यथा—"विनायकेन भवता वृत्तोपचितबाहूना । स्वमित्रोद्धाऽरिणाऽभीता पृथ्वीयमतुलाश्रिता ॥" "समानयासमाऽनया समानयाऽसमानया । समानया समानया समान या समानया ॥" अर्थ चतुरक्षरपादश्लोकः ।'

यमकादाविति ।—अत्र आदिपदेन श्लेषादिग्रहणं, तेन "त्वं समुद्रश्च दुर्वारो महासत्त्वौ सतेजसौ । अयन्तु युवयोर्भेदः स जड़ात्मा पटुर्भवान् ॥" इत्यादौ न श्लेषभङ्गः । अन्ये तु—"यमकादौ भवेदैक्यं डलयो रलयोर्बवोः । शषयोर्नणयोश्चान्ते सविसर्गाविसर्गयोः ॥ सविन्दुकाविन्दुकयोः स्यादभेदप्रकल्पनम् ॥" इति पठन्ति ।

## लक्ष्मी

नववलाशेति । शिशुपालवधमहाकाव्ये षष्ठसर्गे वसन्तवर्णनियम् । स श्रीकृष्णः पुरः पुरतः नवानि नूतनानि पलाशानि पत्राणि यत्र तत्तथोक्तम्, पलाशवनं किंशुकारण्यं यत्र तादृशम्, 'पत्रं पलाशं छदनं दलः पर्ण छदः पुमान्' इति 'पलाशे किंशुकः पर्णो वातपोथः' इति चामरः ॥ स्फुटानि विकसितानि परागैः सुगन्धाश्रितै रजोभिः परागतानि संबद्धानि व्याप्तानीतियावत् 'परागः सुमनोरजः' इत्यमरः, पङ्कजानि कमलानि यत्र तम्, मृदुलाः सुकुमारा अत एव

तान्ताः आतपेन म्लाना लतान्ता लताप्रान्तभागा यस्मिन् तम्, तथा सुमनसां पुष्पाणां भरा अतिशया समृद्धय इति यावत् तैः पुष्पप्रचुरैरित्यर्थः 'स्त्रियां सुमनसो भूम्नि पुष्पे' इति व्याडिः, 'अथातिशयो भरः' इत्यमरः, सुरभिं वसन्तकालम्,

**'सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः । सुगन्धौ च मनोज्ञे च वाच्यवत् ॥' इति विश्वः,**

अवलोकयत् अपश्यत् ।

अथात्र अर्थान्तरस्तु—अन्योऽपि पुरोऽग्रतः नवपलाशपलाशो वनं वसतिर्यस्य तं वानप्रस्थत्वात्, 'वनं निवासे गहने इति कोशः, स्फुटं परागः प्रसिद्धिर्यस्य तथोक्तम्, परागतम् अपगतं पङ्कजं पापादिप्रभवं दुःखादि यस्य तादृशम् 'पङ्कं कर्दमपापयोः' इति कोशः मृदुला सुकुमारा तान्ता तपश्चरणक्लान्ता लता योषित् यस्य तादृशम्, सुमनोभरैः पण्डितसमूहैः सुरभिं विख्यातम्, तं सुरभिं सज्जनम् अपश्यत् 'विख्याते च वसन्ते च सुगन्धौ सज्जनेऽपि च । चैत्रमासे च सुरभिः' इति **कोशः** । द्रुतविलम्बितछन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

उक्तोदाहरणे पदावृत्तिमुपपादयति—अत्रेति । 'पलाशपलाश' इत्यादिरूपेणेत्यर्थः, पदावृत्तिः पदस्य पादांशस्यावृत्तिः तत्रभेदं यमकमिति यावत् तथा च 'पलाशपलाश' इति 'परागपराग' इति 'लतान्तलतान्त' इति 'सुरभिं सुरभिम्' इति यद्वा 'रभिंसु रभिंसु' इति च एकैकपदानामेव वारद्वयमुच्चारणात् पदयमकमित्याशयः ।

'द्वयोरपि पदयोः क्वचित्सार्थकत्वम्' इत्यादिकं यदुक्तं तदधुनोपपादयति—सुरभिमिति । द्वयोरिति । आद्यान्तयोः पादांशयोरित्यर्थः । सार्थकत्वमिति । एकस्य वसन्तसमयाभिधायकत्वात् अन्यस्य सुगन्धिवाचकत्वादित्याशयः । एवमेव च पृथगर्थकत्वमप्यवगन्तव्यम् । प्रथमस्य प्राथमिकस्य । निरर्थकत्वमिति । मृदुलशब्दस्य लकारमाश्रित्यैव 'लतान्त' इति प्रथमरूपसिद्धेः, तद्रूपेण च तेन कस्यचिदप्यर्थस्य ज्ञापयितुमक्षमत्वादित्यभिप्रायः । द्वितीयलतान्तशब्दस्य तु सार्थकत्वमेव । द्वितीयस्येति । निरर्थकत्वमिति पूर्वतोऽनुषञ्जनीयम् । तथा च परागतशब्दस्य तकारं विहाय 'पराग' इति द्वितीयरूपसिद्धेः, तद्रूपेण च तेनापि कस्यचिदप्यर्थस्य ज्ञापयितुमक्षमत्वादिति भावः । प्रथमपरागशब्दस्य तु तत्रापि सार्थकत्वमेवेत्यवधेयम् । 'रभिंसु रभिंसु' इत्यत्र तु द्वयोरेव निरर्थकत्वमित्युपपादितमेव ।

एवमिति । अन्यत्र पादाद्यावृत्तौ । उदाहरणानि च यथासम्भवं 'दर्पकान्तक' इत्यादि काव्यप्रकाशोदाहरणान्यनुसन्धेयानि । ननु—

**'अनुभवन्नवदोलमृदुत्सवं पटुरपि प्रियकण्ठजिघृक्षया ।**

**अनयदासनरज्जुपरिग्रहे भुजलतां जडतामवलाजनः ॥'**

इत्यादौ यमकं कथं सम्भवेत् तथैवावृत्यभावादित्याशङ्क्य तत्र वर्णयोर्भेदेऽपि पारिभाषिकमभेदं स्वीकृत्य यमकमभ्युपेयमितिदर्शयितुमाह—यमकादाविति । आदिशब्देन श्लेषानुप्रसादीनां परिग्रहः । डलोर्डकारलकारयोः बवोर्वर्गीयबकारान्तस्थवकारयोः, तथा लरोः लकाररेफयोश्च ऐक्यं वस्तुतः स्वरूपादिभेदेऽपि समानात्मकम् अभेद इतियावत् भवेत् । इत्युक्तनयात् नीतेः । इत्यत्र कालिदासीये रघुकाव्ये ९ सर्गे ४६ पद्ये इत्यर्थः । समस्तपद्यमु परिष्टान्निर्दिष्टम् । न यमकत्वहानिः 'जलतां जडताम्' इत्यत्र कपिलकादित्वात् लत्वाभावपक्षे लकारडकारयोः, तथासबिन्दुकाबिन्दुकयोश्च भेदसत्त्वेऽपि श्रुतिसाम्यान्न यमकत्वहानिरित्यर्थः ।

## रुचिरा

इक्षुदण्डेचर्व्यमाणे गडुवत् काव्येऽपि यमकस्य रसप्रतिबन्धकत्वमित्येतस्य प्रभूततयोदाहृतैरपि किं भेदैरित्याशयेनाहदिङ्मात्रमित्यादि । स्पष्टम् 'नवे'त्यादि ।

'स श्रीकृष्णः । **नवपलाशपलाशवनं** नवानि पलाशानि पत्राणि यस्य तत्, तादृशं पलाशवनं पलाशानां (किंशुकानां) वनं यत्र तम् । 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ।' इति 'पलाशे किंशुकः पर्णो वातापोथः' इति चामरः । **स्फुटपरागपरागतपङ्कजं** स्फुटानि विकसितानि परागपरागतानि पङ्कजानि यत्र तम् । परागेण सुगन्धाश्रितेन रजो विशेषेण परागतानि व्याप्तानीति परागपरागतानि । 'परागः सुमनोरजः ।' इत्यमरः । **मृदुल-तान्त-लतान्तं** मृदुलाः कोमला अत एव तान्ताः क्लिष्टाः (आतपेन) लताऽन्ता लतानामन्ता अन्त्यावयवा यत्र तम् । तमेःक्ते 'अनुनासिकस्य क्विझलोः क्ङिति ।' ६/४/१५ इति दीर्घे तान्तः । 'अथास्त्रियाम् । अन्तो जघन्यं चरममन्त्यः पाश्चात्यपश्चिमम् ।' इत्यमरः । **सुमनोभरैः** सुमनसां पुष्पाणां भरा अतिशयाः समृद्धय इति यावत् तैः । 'स्त्रियां सुमनसो भूम्नि पुष्पे' इति व्याडिः । 'अथातिशयो भरः ।' इत्यमरः । **सुरभिं** सुगन्धिम् । **सुरभिं** वसन्तम् । 'सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः । सुगन्धौ च मनोज्ञे च वाच्यवत् ।' इति विश्वः । पुरः पुरस्तात् प्रथमं वा । **अलोकयत्** ॥ ७७ ॥'

अत्र यमकं दर्शयति-**अत्र** । **पदावृत्तिः** पदस्य पादांशस्यावृत्तिः तत्रभेदं यमकमिति यावत् । तत्र च 'पलाश पलाश' इति । 'अत्रे'ति शेषः । **'सुरभिं सुरभिम्'** इत्यत्र । **च** । द्वयोराद्यान्त्ययोः पादांशयोरित्यर्थः । सार्थकत्वम् । **'लतान्त-लतान्त'** इत्यत्र । **प्रथमस्य** प्राथमिकस्य । **निरर्थकत्वम्** । 'तदवयवायमानास्य'ल' इत्यस्य पदान्तरावयवत्वात् ।' इति शेषः । **'पराग-पराग' इत्यत्र । द्वितीयस्य** 'परागत' इत्यंशभूतस्यान्त्यस्य यमकस्येत्यर्थः । 'पुनर्निरर्थकत्वम्' इति शेषः । एवं च—पादांशभूतानां 'पलाशा' दिपदानामावर्त्यमानत्वात्पदावृत्तिर्नामं यमकम् ।

इदं च बोध्यम्—अत्र एषां सार्थकत्वं निरर्थकत्वं, च यत्र पुनःसार्थकत्वं तत्रार्थो भिन्न एवेति न लाटानुप्रासेनास्य गतार्थत्वम् । इति । **एवम्** । **अन्यत्र** । **अपि** । **उदाहार्यम्** ।

ननु 'अनुभवन्नवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिघृक्षया । अनयदासनरज्जुपरिग्रहे भुजलतां जडतामबलाजनः ॥' इत्यादौ यमकं कथं सम्भवति, तथैवावृत्त्यभावात् । इत्याशङ्क्याह—**'यमकादौ** । आदिना श्लेषादिग्रहणम् । 'अलङ्कारे' इति शेषः । डलोर्डकारलकारयोः । वबोर्वकारबकारयोः । तथा लरोर्लकाररकारयोः ऐक्यं समानात्मकत्वम् । **भवेत्** । 'शष **(सष)** योर्नणयोश्चान्ते सविसर्गाविसर्गयोः । सबिन्दुकयोः स्यादभेदप्रकल्पनम् ॥' इति शेषः । **इत्युक्तनयात्** । **'भुजलतां जड(ल) तामवलाजनः ॥' इत्यत्र** । 'कालिदासप्रबन्धे' इति शेषः । यमकत्वहानिः । न । डकारलकारयोः सबिन्दुकाबिन्दुकयोश्च भेदसत्त्वेऽपि श्रुतिसाम्यात्' इति शेषः ।

**अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्यदि।**

**अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा॥ ९॥**

द्विधेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च। क्रमेणोदाहरणम्—

**'के यूयं, स्थल एव संप्रति वयं, प्रश्नो विशेषाश्रयः**

**किं ब्रूते विहगः, स वा फणिपतिर्यत्रास्ति सुप्तो हरिः।**

**वामा यूयमहो विडम्बरसिकः कीदृक्स्मरो वर्तते**

**येनास्मासु विवेकशून्यमनसः पुंस्वेव योषिद्भ्रमः॥'**

अत्र विशेषपदस्य 'विः पक्षी' 'शेषो नागः' इत्यर्थद्वययोगात्सभङ्गश्लेषः। अन्यत्र त्वभङ्गः।

---

## विवृति

वक्रोक्त्यलंकारमाह—**अन्यस्येति**। वक्तुरित्यर्थः। अन्यार्थकमन्यतात्पर्यकम्। अन्यथा अर्थान्तरप्रतिपादकत्वेन। **योजयेत्** संगमयेत्। अन्यः श्रोता। ततः श्लेषरकाकुवक्रोक्तिभ्याम्।

श्लेषस्यापि पदभङ्गाभङ्गाभ्यां द्वैविध्येन श्लेषवक्रोक्तिरपि द्विविधा॥ **के यूयमिति।** जले यूयमित्यर्थान्तरे संगमञ्श्रोताह—स्थल इति। वक्ता स्वतात्पर्यमेवावगमयन्नाह—प्रश्न इति। विशेषाश्रयो विशेषविषयः। विःपक्षी शेषोऽनन्त इत्यभिप्रायेण तदपि श्रोतान्यथा योजयति—किं ब्रूत इति। किं पृच्छतीत्यर्थः। एवं वाक्छलेन कदर्थितो वक्ता श्रोतारमाक्षिपति—वामा इति। प्रतिकूलतया छलग्राहिण इत्यर्थः। तदपि योषिदभिप्रायेण श्रोतान्यथा योजयति—प्रतिकूलतया छलग्राहिण इत्यर्थः। तदपि योषिदभिप्रायेण श्रोतान्यथा योजयति—अहो इति। विडम्बरसिकः प्रतारणाचतुरः। येन स्मरविडम्बनेन विवेकशून्यमनसः। तव इति शेषः। यद्वा सामान्येनाक्षेपो विशेषे पर्यवस्यतीति वाग्वैदग्ध्यम्। तत्रैव श्लेषवक्रोक्तिद्वैविध्यं दर्शयति—**अत्रेति**। नागो नागराजः। अर्थद्वययोग्यत्वात्प्रतिपाद्यद्वये संगमनीयत्वात्॥

## विवृतिपूर्तिः

वक्रोक्तिरिति। एकेनान्याभिप्रायेणोक्तं वाक्यं यद्यन्येनान्याभिप्रायकं कल्प्यते तदा वक्रोक्तियोगाद् वक्रोक्तिरिति। वक्तृश्रोतृनिर्वाह्योऽयमलंकार इति भावः। अत्र प्रदीपकारास्तु—"इयं च न वाकोवाक्यमात्रे किं तु स्वतोऽप्यन्येनोक्तस्यान्यथायोजनमात्रे। न्यायसाम्यात्। यथा—'कृष्णो वैरिविमर्दने हरिपदप्रीत्यर्जने त्वर्जुनः पीतः पङ्कजलोचनाभिरभितो नेत्राञ्चलैश्चञ्चलैः। रक्तः सज्जनसंगमेषु करणश्रेणीमणे श्रीधर स्थाने वर्णचतुष्टयस्य भुवने भर्ता भवान्गीयते॥' अत्र वर्णचतुष्टयस्य भर्ता श्रीधर इति सार्वलौकिकं वाक्यमन्वयाश्लेषादिनास्माभिः समर्थितम्॥" इत्याहुः॥ सेयं वक्रोक्तिर्भामहेनैवं प्रशस्यते—'सैषासर्वत्र वक्रोक्तिरक्तया(रस्फुटा)र्था विभाव्यते। यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना॥' अत एवोक्तम्—'वक्रोक्तिः काव्यजीवितम'(१५ पृ.) इति॥

**अभङ्ग इति**। 'अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता। त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित्॥' इत्यत्र दारुणा क्रूरा काष्ठेनेत्युभयार्थपक्षेऽपि दारुणेति पदस्य न भङ्ग इत्यभङ्गपदश्लेषेण वक्रोक्तिरियम्॥

## विज्ञप्रिया

वक्रोक्त्यलङ्कारमाह—अन्यस्य वक्तुरन्यार्थकं वाक्यम् अन्यः श्रोता तद्वाक्यश्लेषेण स्ववाक्यकाक्वा वाऽन्याभिप्रायकतया यदि योजयेद् योजनविशिष्टं प्रत्याययेत तदा सा द्विधा वक्रोक्तिरित्यर्थः। द्विधात्वं दर्शयति—श्लेषेति।

**के यूयमिति**। अविज्ञातनामजातिकं कञ्चित् प्रति अयं वक्तुः प्रश्नः। पृष्टः पुरुषश्च विद्रावकः स तद्वाक्यं तद्वाक्यश्लेषेण के जले यूयम् इत्यभिप्रायकं स्थले एवेत्यादि स्वोत्तरेण प्रत्याययति। पूर्ववक्ता त्वाह—**प्रश्न इति**। त्वदीयनामजातिरूपविशेषविषय इत्यर्थः। श्रोता तु विः पक्षी, शेषोऽनन्तनागस्तदाश्रयस्तद्द्वयोः प्रश्न इत्यर्थकतां स्वोत्तरेण प्रत्याययति—**किं ब्रूते** इति। यत्र वौ गरुडे हरिरस्ति, यत्र शेषेऽन्ते हरिः शेते इत्यर्थः। प्रष्टा तत् श्रुत्वा क्रोधादाह—वामा विपरीतबोद्धृत्वेन प्रतिकूला यूयमिति। श्रोता तु यूयं वामाः स्त्रियः इत्यभिप्रायकतां प्रत्याययन् तं निन्दति—**अहो विडम्बेति**। विडम्बो विडम्बनं वर्त्तते त्वयीति शेषः। विवेकशून्यमनसस्तवेति शेषः। अस्मासु पुंसु इत्यन्वयः। अत्र श्लेषं सभङ्गाभङ्गपदयोर्दर्शयति—**अत्रेति**।

## लोचन

**अन्यस्येति**। अन्येन केनचिदन्यार्थकत्वेनोक्तम्। तदितरेण सभङ्गेनाभङ्गेन वा श्लेषेण, काक्वा, स्वरविशेषेण वा यदिं यथार्थतोऽन्यार्थत्वेन प्रयोज्यते सा वक्रोक्तिः। ततः श्लेषकाकुरूपोपाधिद्वययोगाद् द्विविधेत्यर्थः।

के किमाख्याः ? जले च। विशेषो वैधर्म्यं, विः पक्षी, शेषो नागश्च। वामा वक्राः स्त्रियश्च। विडम्बरसिकः विडम्बे रसिकः सकौतुकः।

## कुसुमप्रतिमा

वक्रोक्तिं लक्षयति अन्यस्येति। अन्वस्य प्रथमवक्तुः अन्यार्थकं स्वाभिप्रेतापरार्थबोधकं वाक्यम्, अन्यः, अन्वः प्रथमश्रोता जनो यदि श्लेषेण अनेकार्थाभिधायकतया कोक्वा विकृतस्वरेण वा, अन्यथा वक्तुरभिप्रेतभिन्नाथकत्वेन योजयेत् परिणमयेत्, तदा सा वक्रोक्तिर्नामालङ्कारः। ततः श्लेषवशात् काकुवशाच्च सा द्विधा द्विप्रकारा। प्रथमश्रोतुरुक्तेर्वक्रतावशादस्य वक्रोक्तिरिति संज्ञा। श्लेषेणैवीत्थापिततया शुद्धश्लेषस्यापवादोऽयम्। अयन्तु उक्तिप्रत्युक्तिस्थलं विनापि अन्यार्थ बोधनेच्छया उच्चारितस्य वाक्यस्य तदन्यार्थ प्रतिपादनमात्र एव सम्भवति। काव्यप्रदीपकारोऽप्येवम्। अतएव नैषधचतुर्थ सर्गे—

**"किमसुभिर्गलितेजड़ ! मन्वसे मयि निमज्जतु भीमसुतामनः।**
**मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः॥"**

अत्र "मनश्चन्द्रे निलीयते" इति श्रुतौ ग्रहरूपचन्द्रबोधनेच्छया उच्चारितस्य चन्द्रपदस्य दमयन्त्या जलमुखचन्द्रपरत्वेन योजनात् वक्रोक्तिरेव। एतेन यत् केचिदुक्तिप्रत्युक्तिस्थल एवायमलङ्कार इति ब्रुवते, तदपास्तम्; कारिकयापि तन्मात्राबोधनादिति सुधीभिर्भाव्यम्।

द्विधेतीति। श्लेषवक्रोक्तिरपि द्विधा—अभङ्गश्लेषमूला सभङ्गश्लेषमूला चेति।

तत्र तां द्विविधामपि श्लेषवक्रोक्तिमेकोदाहरणेनाह के यूयमिति। कस्यचिदागन्तुकैः कैश्चित् सह उक्तिप्रत्युक्तिरूपमिदं पद्यम्। आगन्तुकानवलोक्य "ननु के यूयम्" इति प्रथमवक्तुर्जिज्ञासा। अत्र प्रश्नार्थे

किंशब्दरूपतया प्रयुक्त 'के' इति पदम्, "मारुते वेधसि बध्ने पुंसि कः क शिरोम्बुनोः" इत्यमरोक्तेः सप्तम्यन्त 'क-' शब्दरूपतया जलार्थपरतया योजयित्वा तत्र च काकुवशात् प्रश्नार्थकत्वं प्रतिपाद्य प्रथमश्रोतृणामुत्तरम्—"स्थल एव सम्प्रति वयम्" इति । तत्र विरक्तः प्रथमवक्ता पुनराह—"प्रश्नो विशेषाश्रयः" इति । विशेषाश्रयः किं शब्दाश्रयः 'के यूयम्' इति किंशब्दप्रतिपाद्य एव मम प्रश्न इत्यर्थः । प्रथमश्रोतारस्तु विशेष श्रयपदस्यापि 'विः पक्षी'; 'शेषोऽनन्तनागः' इति सभङ्गश्लेषेण वक्तुरभिप्रेतभिन्नार्थ योजयित्वा प्रत्युत्तरयन्ति किं ब्रूत इति । विहगो यः कोऽपि पक्षी, यत्र च हरिर्नारायणः सुप्तोऽस्ति, स फणिपतिर्नागराजोऽनुनन्तो वा; अनयोर्विषये मम प्रश्नः—इति किं भवान् ब्रूते ब्रवीति ? । इत्यञ्च प्रतिहतप्रश्नोद्यमः प्रथमवक्ता साक्षेपमाह—यूयं वामः मम प्रश्नस्य यथावदुत्तरदाने प्रतिकूलाः । अत्रापि वामाशब्दस्य स्त्रीरूपमर्थं योजयित्वा प्रथमश्रोतारः प्रत्युत्तरयन्ति अहो इत्यादि । अहो आश्चर्य्यः खलु भवान् विडम्बरसिको रमणीकदर्थनाभिलाषी दृश्यत इति शेषः । कीदृक् च भवतः स्मरः कामावेगो वर्त्तते ? येन स्मरेण विवेकशून्यमनसो भवतः अस्मासु पुंस्वेव पुरुषेष्वेव योषिद्भ्रमः स्त्रीभ्रान्तिरभवत् ।

उदाहृते श्लेषस्य सभङ्गत्वमभङ्गत्वञ्च दर्शयितुमाह अत्रेति । इति इत्थं शब्दाभङ्गद्वारा, अर्थद्वयस्य योगात् सम्बन्धात् । "वि विष्किर-पतत्रयः" इति "शेषोऽनन्ते वासुकिस्तु" इति चामरोक्तेरिति भावः ।

## विमला

वक्रोक्त्यलङ्कारमाह, अन्यस्येति ।—अन्यस्य—जनस्य, वक्तुरित्यर्थः, अन्यार्थकम्—अन्यतात्पर्य्यकं, वाक्यम् अन्यः—अपरः, श्रोता इत्यर्थः, श्लेषेण वा काक्वा—ध्वनिविकारविशेषेण, अन्यथा—अन्यार्थत्वेनेत्यर्थः, यदि योजयेत्—सङ्घटयेत्, सा वक्रोक्तिः, ततः—श्लेषकाकुवक्रोक्तिभ्या, सा द्विधा—श्लेषनिबन्धना काकुनिबन्धना चेति द्विप्रकारा । केनचिदन्याभिप्रायेण कथितस्य वाक्यस्य केनचिदन्येनान्याभिप्राये कल्पनमेव वक्रवचनसम्बन्धात् वक्तृबाद्धव्यनियन्त्रितः वक्रोक्तिनामालङ्कारः, इति भावः । अत्र काव्यप्रदीपकाराणान्त्यमाशयः; यथा हि—"इयञ्च न वाकोवाक्यामात्रे, किन्तु स्वतोऽप्यन्येनोक्तस्य अन्यथायोजनमात्रे न्यायसाम्यात्" यथा—"कृष्णो वैरिविमर्दने हरिपदप्रीत्यर्जने त्वर्जुनः पीतः पङ्कजलोचनाभिरभितो नेत्राञ्चलैश्चञ्लैः । रक्तः सज्जनमङ्गमेषु करणश्रेणीमणे ! श्रीधर ! स्थाने वर्णचतुष्टस्य भुवने भर्त्ता भवान् गीयते ॥" अत्र वर्णचतुष्टयस्य भर्त्ता श्रीधर इति वक्तव्ये श्लिष्टपदसामर्थ्यवशेन यत्र तात्पर्य्याभावेऽपि स्वत एव अन्यार्थबोधः" इति ।

श्लेषस्यापि पदभङ्गाभङ्गाभ्यां द्वैविध्येन श्लेषमूलवक्रोक्तेरपि द्वैविध्यम् । तत्रादौ सभङ्गाभङ्गात्मकश्लेषमूलवक्रोक्तिमुदाहरति, के इति ।—के यूयम् ? (इति प्रश्नः) जले यूयम् इति अर्थान्तरे सङ्गमयन् श्रोताऽऽह, स्थले इति ।—सम्प्रति वयं स्थले एव, न तु के—जल इति भावः, (उत्तरमिदम् । "मुखशीर्षजलेषु कम्" इति नानार्थकोषः) । वक्ता स्वतात्पर्य्यमवगमयन्नाह, प्रश्न इति ।—प्रश्नः विशेषमाश्रयतीति तथोक्तः विशेषविषयक इत्यर्थः, प्रश्नार्थकः किंशब्द इति भावः, (प्रत्युत्तरमिदम्) । विः—पक्षी, शेषः—अनन्तः, इत्यर्थाभिप्रायेण तदपि श्रोता अन्यथा योजयति, किमिति ।—किं ब्रूते ?—कथयति ? भवान् इति शेषः, विहगः—पक्षी ? वा सः—प्रसिद्धः, फणिनां—नागानां, पतिः—अनन्तः, यत्र—फणिपतौ, हरिः—नारायणः, सुप्तः—निद्रितः, अस्ति, निद्रातीत्यर्थः, [सुप्त इति वर्त्तमाने क्तप्रत्ययः] तदाश्रयः किं भवतः प्रश्नः ? इति भावः; अत्र वि-शेष-शब्दौ पक्षिनागपतिवाचकौ इति बोध्यम् । (द्वितीयस्य उत्तरमिदम् । "नगौकोवाजिविकिर-विविष्किरपतत्रयः" इत्यमरः) । एवं वाक्छलेन कदर्थितो वक्ता श्रोतारमाक्षिपति, वामा इति ।—यूयं वामाः—प्रतिकूलवादिन इत्यर्थः, एकार्थतया प्रयुक्तं मद्वाक्यं विपरीतार्थतया छलग्राहिण इति यावत्, (प्रथमस्योक्तिरियम् । "वामं घने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्य्यां

स्त्रियाम्" इति मेदिनी)। तदपि योषिदर्थपरतया श्रोता योजयन्नाह, अहो ! इति ।—अहो !—आश्चर्य्यं, विडम्बे—प्रतारणायां, रसिकः,—पटुरित्यर्थः, कीदृक् स्मरः,—कामः, वर्त्तते ? तत्रेति शेषः, येन—कामपारवश्येन, विवेकशून्यमनसः,—निर्विवेकस्य, स्त्रीपुरुषगतवैशिष्टयविचाराक्षमस्येत्यर्थः, तव इति शेषः, पुंस्मृ—पुरुषेषु एव, अस्मासु इति शेषः, योषिद्भ्रमः,—नारीभ्रान्ति, वामाशब्दस्य नारीवाचकत्वादिति भावः। (द्वितीयस्य प्रत्युक्तिरियम्)। इह श्लेवशेन एकस्य अन्यार्थवाक्यस्य तद्भिन्नार्थतया सङ्घटनात् वक्रोक्तिः। शार्दूलविक्रीडि़तं वृत्तम्। यथा वा—"किं गौरि ! मां प्रति रुषा ? ननु गौरहं किम्? कुप्यामि कां प्रति ? मयीत्यनुमानतोऽहम्। जानाम्यतस्त्वमनुमानत एव सत्यमित्थं गिरो गिरिभुवः कुटिला जयन्ति ॥" इति। "अहो ! केनेदृशी बुद्धिर्दारुणा तव निर्मिता त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥" इति। तथा—"नन्दराजगृहपण्य जौथिकाम् आलि ! यामि वद किं नयामि ते ?। नीलमुज्जवलमतीव सुन्दरं केश बन्धनमिहानयस्व मे ॥" इति च। (अत्र केशबन्धनं—रज्जुविशेषार्थकं, श्लेषमूले मखीवाक्ये तु "केशवं धनम्" इति) इत्यादिकन्तु श्लेषे एव उदाहरणीयं, न वक्रोक्तौ इति केचित्।

उदाहृतश्लोके सभङ्गाभङ्गश्लेषमूलवक्रोक्तिद्वैविध्यं दर्शयति, अत्रेति ।—नागः,—सर्पराजः, अर्थद्वययोगात्—अर्थद्वयप्रयोज्यत्वात्, प्रतिपाद्यद्वये सङ्गमनीयत्वादिति यावत्।

## लक्ष्मी

वक्तोक्तिं निरूपयति—अन्यस्येति। अन्यस्य स्वभिन्नस्य प्रथमवक्तुः, अन्यार्थकं स्वतात्पर्यभिन्नार्थबोधकं वाक्यम्, अन्यः प्रथमश्रोता जनो यदि श्लेषेण शब्दबोध्यार्थान्तरेण काक्वा ध्वनिविकारेण वा अन्यथा वक्तुस्तात्पर्यभिन्नार्थकत्वेन योजयेत् सङ्गमयेत्, तदा सा वक्रोक्तिर्नामालङ्कारः। एकेनान्यतात्पर्येण उक्तम यद् वाक्यम् अन्येन यदि अन्यतात्पर्यार्थकत्वेन कल्पितं तदा वक्रोक्तियोगाद् वक्रोक्तिरित्यर्थः। ततः श्लेषवशात् काकुवशाच्च सा द्विविधा। अत्र योजयेदित्यन्तं सामान्यलक्षणम्, श्लेषेण काक्वा वा इति योजनाहेतुकथनमुखेन विशेषलक्षणद्वयम्, 'सा वक्रोक्तिस्ततो द्विधा' इति लक्ष्यविशेषकथनं विभाग इति ज्ञेयम्। अन्येनेत्युक्त्या वक्ष्यमाणापह्नुतौ नातिव्याप्तिः अपह्नुतौ स्वोक्तेः स्वयमेवान्यथाकरणात्। श्लेषेणेत्यस्य शब्दबोध्यार्थान्तरेणेत्यर्थकरणेन—

**'मञ्चः क्रोशति किमहो प्रयासि नय मां परावृत्य।**

**किं कातरतयैवं मुह्यति मञ्चः किमालपति ॥'**

इत्यादौ मुग्धया नवाभिसारिकया पुरुषे लक्षणया प्रयुक्तं मञ्चपदं दूत्या मुख्यार्थाभिप्रायेण योजितमिति अस्य न भेदान्तरत्वम्। श्लेषेणैवोत्थापिततया श्लेषस्यायमपवाद इत्यवगन्तव्यम्।

सेयं वक्रोक्तिर्भामहेनैवं स्तूयते—

**'सैषा सर्वत्र वक्रोक्तिरस्फुटार्था विभाव्यते।**

**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥'**

अत एव च 'वक्रोक्तिः काव्यजीवितम्' इत्युक्तम्।

कारिकां सुगमयितुमाह—द्विधेति। श्लेषस्यापि पदभङ्गाभङ्गाभ्यां द्वैविध्येन श्लेषवक्रोक्तिरपि द्विधा ज्ञेया। अत्र च तत्तच्छब्दानां परिवृत्त्यसहत्वेन परिवृत्त्यसहत्वेन शब्दस्यैव चमत्काराधायकतया चास्य शब्दालङ्कारत्वमित्यभिप्रायः।

तत्र तां द्विविधामपि श्लेषवक्रोक्तिमेकत्रस्थल एव दर्शयति—के यूयमिति। कैश्चिदभ्यागतैः कस्यचिदुक्तिप्रत्युक्तिरूपोऽयं श्लोकः। अभ्यागतान् दृष्ट्वा 'ननु के यूयम्' पुरः स्थिता भवन्तः के इति प्रथमवक्तुर्जिज्ञासा अत्र किमः जिज्ञासायामेव शक्तत्वेन 'के' इति पदं प्रश्नार्थे प्रयुक्तम्, 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' इत्यमरोक्तदिशा जलार्थक 'क' शब्दस्य सप्तम्यैक वचने 'के' इत्यस्य जले इत्यर्थः कल्पयित्वा तत्र च प्रश्नार्थकत्वं प्रतिपाद्य प्रथमश्रोतृणामुत्तरम्—'स्थल एव सम्प्रति वयम्' इति। तत्र विरक्तः स्वतात्पर्यमेवावगमाय प्रथमवक्ता पुनः प्रतिपादयति—'प्रश्नो विशेषाश्रयः' इति विशेषो व्यक्तिराश्रयो विषयो यस्य तथाविधः प्रश्नः, युष्मद्व्यक्तिजिज्ञासा विषयको मम प्रश्न इति तात्पर्यम्। प्रथमश्रोतारस्तु—विशेषाश्रयपदस्यापि 'नगौको बाजिविकिरविविष्किरपतत्रिय' 'शेषोऽनन्तो वासुकिस्तु' इति चामरोक्तदिशा विः पक्षी शेषोऽन्तश्चेति तावाश्रयोऽधिष्ठानं यस्य सः इति सभङ्गश्लेषेण वक्तुस्तात्पर्यभिन्नार्थं कल्पयित्वा प्रत्युत्तरयन्ति—किं ब्रूत इति। विहायसा आकाशमार्गेण गच्छतीति विहगो यः कोऽपि पक्षी विह उपपदात् गमेर्डः यत्र च हरिर्नारायणः सुप्तोऽस्ति स फणिपतिर्नागराजोऽनन्तो वा, अनयोर्विषये मम प्रश्न इति किं भवान् ब्रूते अभिधत्ते? पृच्छतीत्यर्थः। एवं वाक्छलेन कदर्थितः प्रथमवक्ता श्रोतारमाक्षिपति—यूयं वामाः मम प्रश्नस्य वाक्छलेन कदर्थयित्वा यथावदुत्तरदाने प्रतिकूलाः।

**वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे।**

**पयोधरे हरे कामे विद्याद्वाममपि स्त्रियाम्' इति विश्वः॥**

अत्रापि वामाशब्दस्य योषिद्रूपमर्थं कल्पयित्वा प्रथमश्रोतारं प्रत्युत्तरयन्ति—अहो इत्यादि। अहो आश्चर्यं खलु भवान् विडम्बरसिकः प्रतारणाचतुरः समवलोक्यत इति शेषः। कीदृक् च भवतः स्मरो मन्मथावेगो वर्त्तते, येन स्मरविडम्बेन विवेकशून्यमनसः वक्तव्यावक्तव्यरूप्रज्ञानरहितचित्तस्य भवत इति शेषः अस्मासु पुंस्वेव पुंव्यक्तिकेषु विषयेऽपि एवकारोऽप्यर्थकोऽत्र योषिद्भ्रमः स्त्रीभ्रान्तिः सञ्जात इति शेषः। शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्रागेव।

उक्तोदाहरणे श्लेषपदभङ्गाभङ्गत्वञ्चोपपादयितुमाह—अत्रेति।—इतीत्थं पदभङ्गद्वारा, अर्थद्वयस्य योगात् सम्बन्धात् पूर्वोक्तामरोक्तेरितिभावः। सभङ्गश्लेषः भङ्गो विभागस्तेन सह वर्त्तते इति सभङ्ग सोऽसौ श्लेषः। अभङ्गः श्लेष इति शेषः सभङ्गश्लेषस्य शुद्धोदाहरणं तु काव्यप्रकाशे यथा—

**'नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो**

**वामानां प्रियमादधाति हितकृन्नैवावलानां भवान्।**

**युक्तं किं हितकर्त्तनं ननु बलाभावप्रसिद्धात्मनः**

**सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः॥'**

अत्र नारीणामितिपदे अबलानामितिपदे च सभङ्गश्लेषः, नारीतिसमुदायस्य अवलेतिसमुदायस्य च स्त्रियां रूढत्वात् यद्यपि वामादिपदे न भङ्गस्तेन न केवलं सभङ्गश्लेषोदाहरणं तथापि नारीणामितिपदभङ्गमुपजीव्यप्रवृत्तानां श्लेषान्तराणां स एव मूलमिति तेनैव व्यवहार इति तद्व्याख्यातारः।

अभङ्गपदश्लेषेण वक्रोक्तिर्यथा तत्रव—

**'अहो केनेऽदृशी बुद्धिर्दारुणा तव निर्मिता।**
**त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित्॥'**

अत्र दारुणा क्रूरा काष्ठेनेत्युभयार्थपक्षेऽपि दारूणेतिपदस्य न भङ्गः इत्यभङ्गपदश्लेषेण वक्रोक्तिरियम्।

## रुचिरा

अथ वक्रोक्तिं लक्षयति ७१ अन्यस्येत्यादिना।

**७१ अन्यो**.भिन्नो जनः 'वक्तु'रिति शेषः। **यदि**। **अन्यस्य** स्वभिन्नस्य वक्तुरित्यर्थः। अन्यार्थकमन्यः स्वतात्पर्य्याद्भिन्नोऽर्थस्तात्पर्य्यं यस्य तत्। **वाक्यम्**। अन्यथाऽर्थान्तरप्रतिपादकत्वेन। **योजयेत्**। समर्थयेत। **तर्हिवक्रोक्तिः। सा**। 'यत' इति शेषः। **श्लेषेण** शब्दश्लेषेण। वाऽथवा। **काक्वा** ध्वनिविकारेण। 'सम्पद्यते' इति शेषः। ततस्तस्मात् कारणात्। **द्विधा** द्विविधा। इदं तत्त्वम्-येन केनापि जनेन येन केनापि तात्पर्य्येण यत् किञ्चिदुक्तं तद्भिन्नेन जनेन पुनस्तत् किमपि वाक्यं तद्भिन्नेन केनापि तात्पर्य्येण कल्प्यते, तद् (वाक्यं) वक्रोक्तिर्नामलङ्कारः, तत्र तथा कल्पनं श्लेषेण काक्वा वेति द्विविधैषा। श्लेषश्च सभङ्गपदोऽभङ्गपदश्चेति श्लेषवक्रोक्तिर्द्विविधा। शब्दपरिवृत्त्यसहत्वाच्छाब्दीयम्। इति॥ ६२॥

कारिकां सुगमयितुमाह-द्विधेत्यादि। स्पष्टम्। उदाहरति—'के। **यूयं** पुरः स्थिता भवन्तः। (इति वक्तृतात्पर्य्यम्) **सम्प्रति। वयम्। स्थले** निर्जले प्रदेशे। एव न तु के (जले) 'मारुते वेधसि ब्रघ्ने पुंसि कः, कं शिरोऽम्बुनोः।' इत्यमरः। (इति तात्पर्य्यान्तरम्)। वक्ताऽऽह-**विशेषाश्रयो** विशेषो व्यक्तिराश्रयो विषयो यस्य सः। **प्रश्नः** (युष्मद्व्यक्तिजिज्ञासाविषयक्रो मम प्रश्नः। इति तात्पर्य्यम्)। विहगः पक्षी। **किम्। ब्रूते** पृच्छति। सः। **प्रश्नः** (युष्मद्व्यक्तिजिज्ञासाविषयक्रो मम प्रश्नः। इति तात्पर्य्यम्) यत्र यद्भोगे इत्यर्थः। हरिर्विष्णुः। **सुप्तः। अस्ति। सः। वा। फणिपतिः** शेषः। 'किं ब्रूते' इति पूर्वेणान्वयः। (विश्च शैषश्चेति तावाश्रयोऽधिष्ठानं यस्य सः। तथा च न युष्मभ्यं, किन्तु वये (पक्षिणे) शेषाय वा मम प्रश्न इति तात्पर्य्यान्तरेणोत्तरम्) 'नगौकोवाजिविकिरविविष्किरपतत्रियः।' इत्यमरः। एवमुत्तरेण कदर्थित आह-**वामाः** कुटिलाः। 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे। पयोधरे हरे कामे विद्याद्वाममपि स्त्रियाम्॥' इति विश्वः। यूयम् (वाक्छलेन कदर्थयथेति यूयं कुटिला इति तात्पर्यम्) अलो आश्चर्यम्। येन यद्द्वारा यद्वशतयेति यावत्। अस्मात् (पुंसु पुंव्यक्तिकेषु विषये। एव। अप्यर्थमिदम्। **विवेकशून्यमनसो** विवेकेन विचारेण वक्तव्यावक्तव्यरूपेणाज्ञानेनेति यावत्, शून्यं रहितं मनो बुद्धिर्यस्य तस्येति तथोक्तस्या। 'मनश्चित्ते मनीषायाम्।' इति व्याख्यामुधा। **योषिद्भ्रमो** योषिदवलम्बनो भ्रमः (अत एव-वामाः स्त्रियो यूयमिति प्रश्नः। इति तात्पर्यान्तरम्। सः—**विडम्बरसिको विडम्बः** प्रतारणं तत्र रसिकः। **स्मरो** मदनः। **कीदृक्। वर्त्तते॥'** अत्र शार्दूलविक्रीडितं वृत्तम्। तल्लक्षणं चोक्तं प्राक्॥ ७८॥

अत्रेत्यत्रेत्यर्थः। 'वक्रोक्तौ' इति शेषः। **विशेषपदस्य**'विशेषाश्रय' इत्यवयवभूतस्य 'विशेष' इति शब्दस्य। विः (पक्षी) **शेषः। (नागः)** इत्यर्थद्वययोगात्। सभङ्गश्लेषो भङ्गो विभागस्तेन सह वर्त्तते इति सभङ्गः, सोऽसौ श्लेषः। अन्यत्र। तु पुनः। **अभङ्गः**। 'श्लेषः' इति शेषः।

यथा वा—'किं गौरि! मां प्रति रूषा ननु गौरहं किं कुप्यामि कां प्रति मयीत्यनुमानतोऽहम्। जानाम्यतस्त्वमनुमानत एव सत्यमित्थं गिरे गिरिभुवः कुटिला जयन्ति॥' इत्यत्र 'गौरिमाम्''अनुमानतोऽहम्' इत्येतयोर्भङ्ग

एव श्लेषः । यथा वा—'नाथ ! मयूरो नृत्यति, तुरगवदनक्षसः कुतो नृत्यम् । ननु कथयामि कलापिनमिह सुखलापी प्रिये ! कोऽस्ति ॥ इत्यत्र—'मयूरः' 'कलापिनम्' इत्येतयोर्भङ्गे श्लेषः । अभङ्गश्लेषो यथा—'अहो केनेदृशी बुद्धिर्दारुणा तव निर्मितादारुणाश्रूयते बुद्धिर्नतु दारुमयी क्वचित् ॥' इत्यत्र 'दारुणे'त्यभङ्गमेव श्लिष्टम् । अत्राहुः प्रदीपकाराः—'इयं च न वाकोवाक्यमात्रे किन्तु स्वतोऽप्यन्येनोक्तस्यान्यथायोजनमात्रे, न्यायसाम्यात् । यथा— 'कृष्णो वैरिविमर्दने सुविदितः प्रीत्यर्जने त्वर्जुनः पीतः पङ्कजलोभिरभितो नेत्राञ्चलैश्चञ्चलैः । रक्तः सज्जनसङ्गमेषु करणश्रेणीमणे श्रीधर ! स्थाने वर्णचतुष्टयस्य भुवने भर्त्ता भवान् गीयते ॥' इत्यत्र वर्णचतुष्टयस्य भर्त्ता श्रीधर इति सार्वलौकिकं वाक्यमन्वयश्लेषादिनाऽस्माभिः समर्थितम् ॥' इति । वाको वाक्यं चान्याभिप्रायेणोक्तस्य वाक्यस्यान्याभिप्रायेण योज्यमानत्वम् । तदुक्तम् । 'अन्याभिप्रायेणोक्तं वाक्यमन्येनान्यार्थकतया यद्योज्यते सा वक्रोक्तिः । एतदेव वाकोवाक्यमुच्यते ।' इति ।

**'काले कोकिलवाचाले सहकारमनोहरे।**

**कृतागसः परित्यागात्तस्याश्चेतो न दूयते॥'**

अत्र कयाचित्सख्या निषेधार्थे नियुक्तो नञ् अन्यथा काक्वा दूयत एवेति विध्यर्थे घटितः।

---

## विवृति

काकुवक्रोक्तिमुदाहरति—**काले इति**। कृतागसः कृतापराधस्य। 'पत्युः' इति शेषः। **घटितो** योजितः॥

## विवृतिपूर्तिः

**नेति**। न दूयते, अपि तु दूयत एवेति काक्वा योजना। अत्र काकोः शब्दधर्मतया शब्दालंकारता; अन्यथा योजनं च व्यञ्जनयेति सहृदयाः॥

**यथेति**। यथा वा विद्याधिपतिपरनाम्नो **रत्नाकरस्य**—'लीलाविलोलकलकण्ठविहंगकेलिकोलाहलाकुलकुलायकुलामलाङ्के। कक्कोलकन्दकदलीलवलीलवङ्गमालाललामचलमञ्जुलकुलायकुलामलाङ्के। कक्कोलकन्दकदलीलवलीलवङ्गमालाललामचलमञ्जुलकूलकच्छे।' अयं श्लोको भाषाषङ्कसमः। एतदनुबन्ध्युत्तरश्लोकस्तु—'यस्मिन्सलीलमसितोन्नतगण्डशैलनागः करोति विकरालकरावमर्शात्। रक्तातपाभिनवपल्लवभङ्गमर्कबिम्बालवालवलयस्य दिनद्रुमस्य॥' इति। मन्दराद्रिवर्णनमेतत्॥

## विज्ञप्रिया

काक्वा योजनमाह—**काले** इति। क्रोधान्नायिकया परित्यक्तस्य कृतागसो नायकस्य आश्वासजनकसखीं प्रति सख्या उक्तिरियम्। कोकिला वाचाला यत्र इति विग्रहः। सहकारं तत् पुष्पम्। **अत्रैकयेति**। यद्यपि तत्प्रयुक्तं वाक्यं न श्रुतमस्ति यदन्तर्गतः नञ् निषेधार्थकः स्यात्। अतोऽस्य काले इत्यादिवाक्यस्य काक्वा योजनया तदर्थकवाक्यस्यासम्भव एव, तथापि प्रकरणादस्य वाक्यस्य नायकाश्वासजनकवाक्यत्वप्रतीतौ काकुनञा एव तदुपपत्तेस्तदाक्षिप्तवाक्यस्थनञ् एव स्ववाक्यस्थनञो विध्यर्थकताघटनं बोध्यम्। इदं च तादृक्प्रकरणसत्त्वे एव संगच्छते, तादृक्प्रकरणग्राहकासत्त्वे तु नेदमुदाहरणम्। तथाऽऽक्षिप्तवाक्यस्थस्य नञो निषेधार्थकत्वम्। एवं काकुनञ्विशिष्टवाक्यस्यैव विध्यर्थकता। तथा च—

**"गुरुपरतन्त्रतया बत, दूरतरं देशमुद्यतो गन्तुम्।**

**अलिकुलकोकिलललिते नैष्यति सखि! सुरभिसमयेऽसौ॥"**

इति काव्यप्रकाशकृदुक्तमेव उदाहरणं बोध्यम्। तत्र हि शोचनाभिप्रायकस्य पूर्ववाक्यस्य कामाकुलाभिप्रायकत्वेन द्वितीयवक्त्रया योजनम्।

## कुसुमप्रतिमा

काकुवक्रोक्तेरुदाहरणमाह काले इति । सखीं प्रति सख्यन्तरस्योक्तिरियम् । कोकिला वाचाला अविरतशब्दकारिणो यत्र तस्मिन्, सहकारेण आम्रेण आम्रमुकुलविकासेन मनोहरे काले वसन्तसमये, कृतागसः कृतापराधस्य पत्युः परित्यागात्, तस्या सख्याः चेतश्चित्तं न दूयते कामतापेन न मन्तप्यते ।

उदाहृते उक्तार्थस्य अन्यथा योजनप्रदर्शनद्वारा वक्रोक्तिमुपपादयितुमाह अत्रेति । निषेधार्थे अभावार्थे, नियुक्तः प्रयुक्तः । काक्वा "तस्याश्चेतो न दूयते ?" इति विकृतस्वरेण । विध्यर्थे भावार्थ घटितः परिणमितः ।

ननु द्वितीयपरिच्छेदे "वक्तृ बोद्धव्यवाक्यानाम्" इत्यादिना काकुवैशिष्ट्ये आर्थव्यञ्जना अङ्गीकृता, तयैव चार्थान्तरप्रत्यायनमिति काकुवक्रोक्तेरर्थालङ्कारत्वमेवोचितमिति चेत्, न; वक्रोक्तिघटिकायाः काकोः शब्द धर्म्मत्वाद्वक्रोक्तेरपि शब्दधर्म्मतया शब्दालङ्कारत्वस्यैवौचित्यात् ।

## विमला

काकुवक्रोक्तिमुदाहरति, काले इति ।—कोकिलावाचाले—कोकिलवाकलीमुखरिते इत्यर्थः, सहकारेण—आम्रेण, तद्विकासेन इति यावत्, मनोहरे काले—वसन्ते इत्यर्थः, कृतागसः—कृतापराधस्य, कान्तस्य इति शेषः, [कर्मणि षष्ठी] परित्यागात्—निराकरणात्, तस्याः—नार्य्याः, चेतः—चित्तं, न दूयते ?—न खिद्यते ? अपि तू दूयते एवेति अर्थः काक्वा प्रतिपाद्यते । शब्दधर्मेण काक्वा उक्तार्थ प्रतिपादनादस्य शब्दालङ्कारत्वम् । आपाततः प्रतीतस्यार्थस्य अन्यथा योजनञ्च व्यञ्जनामूलकं बोध्यम् ।

## लक्ष्मी

एवं श्लेषमूलां वक्रोक्तिमुदाहृत्य काकुमूलां वक्रोक्तिमुदाहरति—**काले** इति । क्रोधान्नायिकया परित्यक्तस्य कृतागसो नायकस्य आश्वासनजकसखीं प्रत्युक्तिरियम् । कोकिला पिकाः वाचाला अविरतध्वनिकारिणो यत्र तस्मिन् सहकारेण अतिसौरभाम्रेण आम्रमुकुलप्रकटेन 'सहकारोऽतिसौरभः' इत्यमरः, मनोहरे काले वसन्तसमये, कृतमागोऽपराधः सपत्नीष्व परिष्वङ्गरूपो येन तस्य प्रियस्येति शेषः, 'आगोऽपराधो मन्तुश्च' इत्यमरः परित्यागात् परित्यागविधानात् तं परित्यज्यावस्थानादितिभावः, तस्याः प्रियायाः चेतश्चित्तं न दूयते कामतापेन न परितप्यते अपि तु परितप्यत एवेति काकुः ।

उक्तोदाहरणे अर्थान्तरस्य अन्यथा योजनोपपादनद्वारा वक्रोक्तिं प्रदर्शयितुमाह—अत्रेति । निषेधार्थे अभावार्थे, नियुक्तः प्रयुक्तः । काक्वा 'तस्याश्चेतो न दूयत' इति ध्वनिविकारेण । विध्यर्थे भावार्थे घटितो योजितः । तथा च न दूयते इति निषेधार्थकतया न प्रयुक्तो नञ् अपि तु दूयत एवेतिविध्यर्थकतया काक्वा योजितः । ननु पूर्वं द्वितीयपरिच्छेदे आर्थीव्यञ्जनानिरूपणावसरे 'वक्तृबोद्धव्यकाकूनाम्' इत्यादिना काकुवैशिष्ट्ये आर्थीव्यञ्जना स्वीकृता, तयैव चात्रार्थान्तरावबोध इति काकुवक्रोक्तेरर्थालङ्कारत्वमेव युक्तमिति चेत् ? मैवम्, वक्रोक्तियुक्तायाः काकोः शब्दधर्मत्वात् वक्रोक्तेरलङ्कारस्यापिशब्दधर्मत्वेन शब्दालङ्कारस्यैव युक्तत्वात् ।

## रुचिरा

एवं श्लेषमूलां वक्रोक्तिमुदाहृत्य काकुमूलामुदाहरति—'**काले**' इत्यादिना । इति ।

**'कोकिलवाचाले** कोकिलैर्वाचालस्तत्र। कोकिलानां ध्वनिभिर्व्याप्ते इत्यर्थः। यद्वा कोकिला एव वाचाला विरहिजनस्य दुःखप्रदतया बहुलतया वाऽनादरास्पदका कलिका यत्र तत्रेति तथोक्ते। 'आलजाटचौ बहुभाषिणि।' ५/२/१२५ इति वाच आलः। **सहकारमनोहरे** सहकारैरतिसौरभैराम्रैर्मनोहरस्तत्र 'सहकारोऽतिसौरभः।' इत्यमरः। **काले** समये वसन्तर्तौ इति यावत्। **कृतागसः** कृतमागोऽपराधः सपत्नीपरिष्वङ्गरूपो येन तस्येति भावः। 'अपि प्रियस्य' इति शेषः। 'आगोऽपराधो मन्तुश्च।' इत्यमरः। **परित्यागात्** परित्यागकरणात्। तं परित्यज्यावस्थानादित्यर्थः। तस्या मम सख्याः। चेतश्चितम्। न ? दूयते। 'दु' उपतापे।' अत्र कयाऽपि 'न दूयते' इति निषेधार्थकतया प्रयुक्तो 'नञ्' शब्दोऽन्यथाविध्यर्थतया योजितः। कानेकतया च छेकानुप्रासः॥ ७९॥'

अत्र काकुं दर्शयति-अत्रास्मिन्नुदाहृते पद्य इति भावः। **कयाचित्**। **सख्या**। **निषेधार्थे**। **नञ्** 'नञ्' इति शब्दः। **नियुक्तः**। **अन्यथा** 'पुन' रिति शेषः। **काक्वा** काकुद्वारा **'दूयते। एव' इतीत्येवम्**। **विध्यर्थे**। **घटितो योजितः**। यथा वा—'गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्। अलिकुलकोकिलललिते सखि ! नैष्यति सुरभिसमयेऽसौ॥' इत्यत्र नैष्यती' ति कयाऽपि निषेधार्थकतयोक्त्याऽन्यया विध्यर्थे तस्यैव काक्वा योजित्वात्। यथा वा—'सुस्मितरुचिरं मधुरं सुभगे मुदितं विलासि मित्रेण। तव मुखमिदमयि दयिते ! कुवलयमेवानुसज्जयति॥' इत्यत्र काक्वा 'एवे'ति निषेधे समर्थ्य 'कुवलयमेव न किन्तु 'कमलमपी' ति विध्यर्थे समर्थ्यते।

**शब्दैरेकविधैरेव भाषासु विविधास्वपि।**

**वाक्यं यत्र भवेत्सोऽयं भाषासम इतीष्यते ॥ १० ॥**

यथा मम—

**'मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे।**

**विरसासि केलिकीरे किमालि धीरे च गन्धसारसमीरे ॥'**

एष श्लोकः संस्कृतप्राकृतसौरसेनीप्राच्यावन्तीनागरापभ्रंशेष्वेकविध एव।

'सरसं कइण कव्वं'

इत्यादौ तु 'सरसं' इत्यत्र संस्कृतप्राकृतयोः साम्येऽपि वाक्यगतत्वाभावे वैचित्र्याभावान्नायमलंकारः।

---

## विवृतिः

भाषासमावेशालंकारमाह—**शब्दैरिति** ॥

**मञ्जुलेति**। मानिनीं प्रति सख्या वचनमिदम्। कलेन मधुरध्वनिना गम्भीरे मनोहरे। केलिकीरे क्रीडाशुके। धीरे मन्दे। गन्धसारसमीरे चन्दनवायौ ॥ **कइण कव्वं** कवेः काव्यम् ॥

## विज्ञप्रिया

भाषासमालङ्कारमाह—**शब्दैरिति**। शब्दैः पदैः। वाक्यं तत् समूहः, स च संस्कृतप्राकृतसकलभाषासु एकविधपदघटित इत्यर्थः।

**मञ्जुलेति**। हे आलि ! मञ्जुलमणिमञ्जीरे मञ्जुलं मणियुक्तं मञ्जीरं यस्याः हे तादृशि। अथवा मञ्जीरे कलशब्दो गम्भीरो यत्र तादृशि। विहारसरसीतीरे कीदृशे, केल्यर्थकः कीरो यत्र। गन्धसारः गन्धप्रधानः समीरश्च यत्र तादृशे। एतादृशाऽनेकोद्दीपकसत्त्वेऽपि किं विरसाऽसीत्यर्थः।

सर्वभाषासु एकविधैः पदैः वाक्यघटितत्वे एवायमलङ्कारः तादृशैकपदेन तु वाक्यघटने तादृशस्थले नायमलङ्कार इत्याह—**सरसं कइण इति**। सरसं कवीनां काव्यमित्यर्थः। अत्र तादृशैकसरसपदघटितत्वाद् वाक्यस्य नायमलङ्कार इत्यर्थः।

## लोचन

**शब्दैरिति**। एकविधैर्विशेषाभावादेकप्रकारैः। भाषासु संस्कृतप्राकृतादिषु। भाषासमः। भाषासु समान्येकरूपाणि पदानि विद्यन्ते यत्रेति व्युत्पत्तियोगादन्वर्थनामा पृथगलङ्कारः। एष च श्लेषालङ्कारविशेष इति यदुक्तं चण्डीदासपण्डितैस्तदसङ्गतम्, अर्थद्वयाभावात्।

## कुसुमप्रतिमा

भाषासममलङ्कारं निरूपयति शब्दैरिति । एकविधैरेव शब्दैः विविधास्वपि संस्कृत प्राकृतादिषु नानाप्रकारास्वपि भाषासु, यत्र यत् वाक्यं भवेत्, सः अयं भाषासम इति नाम अलङ्कारः कविभिरिष्यते । भाषासु समः समानरूप एव शब्दो यत्रेति व्युत्पत्तेः । अतएवायं शब्दालङ्कारः । अत्र विविधासु भाषास्वित्यभिधानात् भाषाद्वयात्मकभाषाश्लेषे नातिव्याप्तिः । तथा च एकविधैरेव शब्दैर्बहुतरभाषासु वाक्यनिष्पत्तिस्थले भाषा समः, केवलभाषाद्वये वाक्यनिष्पत्तिस्थले तु भाषाश्लेष इति भेदः ।

**मञ्जुलेति** । मानवशान्निवृत्तसकलव्यापारां सखीं प्रति सख्यन्तरस्योक्तिरियम् । हे आलि ! सखि ! कलो मधुरास्फुटः गम्भीरो मन्द्रश्च तस्मिन् तादृशध्वनिकारिणीत्यर्थः मञ्जुलमणिमञ्जीरे सुन्दरमणिमयनूपुरे, विहारसरसीतीरे केलिसरोवरतटे, केलिकीरे खेलोपकरणीभूतशुके, घोरे मन्दमन्दसञ्चारिणि गन्धसारसमीरे चन्दनस्पर्शिवायौ च, किं कथं विगतानुरागा असि ? ।

अत्र एकविधैरेव शब्दैः संस्कृतादिविविधभाषासु वाक्यनिष्पत्तेर्भाषास्रमः ।

एष इति । श्लोकः श्लोकात्मकं वाक्यम् ।

ननु कारिकायां "पदं यत्र भवेत्" इत्यनुक्ता "वाक्य यत्र भयेत्" इति व्यापकवचने का युक्तिरित्यपेक्षायां वाक्यपदव्यावृत्तिमाह सरसमिति । "सरसं कवेः काव्यम्" इति संस्कृतानुवादः । संस्कृत-प्राकृतयोरित्युपलक्षणम् । शोरसेन्यादाव पे द्रष्टव्यम् । सम्येऽपि एकविधपदत्वेऽपीत्यर्थः । वैचित्रयस्यैवा लङ्कारपदार्थत्वादिति बोध्यम् । एवञ्च वैचित्रप्रतिपत्त्यर्थमेव वाक्यमिति व्यापकवचनमिति भावः ।

## विमला

भाषासमालङ्कारमाह, शब्दैरिति ।—विविधासु अपि—नानाप्रकारा अपि, भाषासु—संस्कृतप्राकृताद्युक्तिष्वित्यर्थः, एकविधैरेव—एकरूपैरेव—एकरूपैरेव, शब्दैः यत्र— शुद्धित्यर्थः, [अप्ययमिदम्] वाक्यं भवेत्, सः अयं भाषासमः इति शब्दालङ्कारः दृश्यते, बुधैरिति शेषः ।

भाषासममुदाहरति, मञ्जुलेति ।—मानिनीं प्रति सख्या वचनमिदम् । हे आलि !—सखि ! ("आली सखी वयस्या च" इत्यमरः) कलेन—मधुरास्फुटेन स्वनेन, गम्भीरे—मनोरमे इत्यर्थः, मञ्जुलः—मनोहरः, यःमणिमञ्जीरः,—रत्ननूपुरः तस्मिन् ("मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः) विहासरसस्याः,—क्रीड़ावाप्याः, तीरे केलिकीरे—क्रीड़ाशुके, घोरे—मन्दमन्दसञ्चारिणीत्यर्थः, गन्धसारसमीरे—चन्दनसुरभिमलयमरुति च, किं—कथं, विरसा—अरूचिः असि ?—भवसि ? आर्य्या वृत्तम् । अथवा यथा रत्नाकरस्य—"लीलाविलोलकलकण्ठविहङ्गकेलिकोलाहलाकुलकुलायकुलामलाङ्के । कल्लालकन्दकदलीलवलीलवङ्गमालाललाभजलमञ्जुलकूलकच्छे ॥" इति भाषाषट्कतुल्यं पद्यम् । मन्दराद्रिवर्णने एतदनुकूलश्लोको यथा—"यस्मिन् सलीलमसितोन्नतगण्डशैलनागः करोति विकरालकरावमर्षात् । रक्तातपाभिनवपल्लवभङ्गमर्कविम्बालवालवलयस्य दिनद्रुमस्य ॥" इति । संस्कृतप्राकृतमयो गोमूत्रिकाबन्धो यथा—"बालाविलासाबलिहारिहासा लीलामला भावंसहा सहावा । देहं हरन्ती सरसा सुरामा गेहं चरन्ती सहसाऽभिरामा ॥" इति । एवमानुलोम्यप्रातिलोम्याभ्यामपि भाषासाम्ये एष एवालङ्कारो बोध्यः, यथा—"इह रे ! बहलालासे बाला राहुमलीमसा । सालका रसलीला सा तुङ्गालालिकलारत ॥" इति । अत्रानुलोम्येन पाठे संस्कृतमयः, प्रातिलोम्येन पुनः पाठे प्राकृतमयः श्लोकः सम्पद्यते ।

यथा—"तरला कलिला गातुं सालाली सरकालसा । सामली महुरालावा सेलाला इव रेहइ ॥" इति । आनुलोम्येन प्रातिलोम्येन च पाठे अर्थैक्ये एवार्थं नाम चित्रालङ्कारः, यथा—"विदिते दिवि केऽनोके तं यातं निजिताजिनि । विगदं गविरोद्धारो योद्धा यो नर्तिमेति न ॥" इति । इदमेव प्रातिलेम्येन "नतिमेति न षोद्धा यो रोद्धारो विगदं गवि । निजिताजिनि तं यातं केऽनोके विदिते दिवि ॥"

इति सम्पद्यते पद्यम् । अत्रापि अर्थसाम्यम् ।

["सरसं कवेः काव्यम्" इति संस्कृतम् ।]

## लक्ष्मी

भाषासममलङ्कारं लक्षयति—शब्दैरिति । एकविधैरेव शब्दैः, विवधास्वपि संस्कृतप्राकृताद्यनेक-तयाऽनेकप्रकारास्वपि भाषासु विषये यत्र यत् वाक्यं भवेत्, सः अयं भाषाषु समस्तुल्यरूप एव शब्दो यत्र तथाविधो भाषासम इति नाम अलङ्कार इष्यते अभिलष्यते अलङ्कारिकैरिति शेषः । सर्वभाषासु तुल्यरूपत्वादेवायं शब्दाल-ङ्कारः ।

अत्र भाषाद्वयात्मकभाषाश्लेषेऽतिव्याप्तिवारणाय'विविधासु' भाषासु इत्यभिधानम् । एवञ्च एकविधैरेव शब्दैरनेकविधभाषासु वाक्योपपत्तिस्थले भाषासमः, द्विभाषामात्रे वाक्योपपत्तिस्थले तु भाषाश्लेष इत्यनयोर्भेदः । एष च श्लेषालङ्कारविशेष इति यदुक्तं चण्डीदासपण्डितैस्तदसङ्गतमेव अर्थद्वयाभावात् ।

मञ्जुलेति । मानवशात्त्यक्तसकलव्यापारां स्वसखीं प्रति सख्या वचनमिदम् । हे आलि सखि ! कलेन कोकिलादीनां मधुरध्वनिना गम्भीरे मनोहरे, मञ्जुलो मनोरमोऽसौ मणिमञ्जीरो नूपुरस्तत्र तथोक्ते, 'मनोज्ञं मञ्जुमञ्जु-लम् ।' 'रक्तं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च' 'मञ्जीरो नूपुरस्त्रियाम्', इति चामरः, विहारसरसीतीरे केलिस-रोवरतटे, केलिकीरे क्रीडोपकरणीभूतशुके, धीरे मन्दमन्दसञ्चारिणि गन्धसारसमीरे चन्दनवायौ च, किं कथं विरसा विरक्तानुरागा असि । अत्र स्कन्धकं छन्दस्तल्लक्षणन्तु—

**'स्कन्धकमिति तत् कथितं यत्र चतुष्कलगणाष्टकेनार्धं स्यात् ।**

**तत्तुल्यमग्रिमदलं भवति चतुःषष्टिमात्रकशरीरमिदम् ॥'**

अत्र एकविधैरेव शब्दैः संस्कृतप्राकृतादिविविधभाषासु वाक्योपपत्तेः भाषासमः । कथं भाषासमत्वमि-त्युपपादयति—एष इति । श्लोकः श्लोकात्मकं वाक्यम् ।

ननु कारिकायां 'वाक्यं यत्र भवेत्' इति व्यापकवचनापेक्षया 'पदं यत्र भवेत्' इत्येवं कथं नोपात्तमिति जिज्ञासायां तत्फलमुपपादयति—सरसमिति । 'सरसं कवेः काव्यम्' इति संस्कृतम् ।

**'सरसं कहण कव्वं पअडि अपि उ ससार सव्वस्स ।**

**तह जह णिच्चं मृदिअं सखिनं पेअं मुहं तेत्थि ॥' इति समस्तम् ।**

संस्कृतप्राकृतयोरित्युपलक्षणत्वेनशौरसेन्यादीनां परिग्रहः । साम्येऽपि एकविधपदत्वेऽपि । वाक्यं 'सर-सं कहण कव्वम्' इति, तद्रतत्वाभावे सतीत्यर्थः । वैचित्र्येति । वैचित्र्य एवालङ्कारत्वाभ्युपगमान्नात्रायमलङ्कार इत्यर्थः । एवञ्च वैचित्र्यबोधनार्थमेव व्यापकवचनं वाक्यमित्यवधेयम् ।

## रुचिरा

अथ भाषासममाह—७२ शब्दैरित्यादिना।

७२ यत्र यस्मिन्नलङ्कारे शब्दन्यासे वा। **विविधासु** संस्कृतप्राकृताद्यनेकतयाऽनेकविधासु। **अपि**। **भाषासु** विषये। **एकविधैः**। **एव**। **शब्दैः**। अभेदे तृतीया। तथा च—तादृशशब्दाभिन्नमिति फलितम्। **वाक्यम्**। **भवेत्**। सः। **अयम्** अलङ्कारः शब्दन्यासो वेति शेषः। **भाषासमो** भाषया भाषणेन समस्तुल्य इति तथोक्तः। 'पूर्वसदृशसनामार्थकलहनिपुणमिश्रश्लक्ष्णैः।' २/१/३१ इति समासः। इति। इष्यतेऽभिलष्यते। 'आलङ्कारिकै रिति शेषः॥ ६३॥

उदाहरति—यथा। **मम** विश्वनाथस्य कृतौ-**"मञ्जुलमणिमञ्जीरे"**इत्यत्र'।

'हे **आलि** सखि! **"मञ्जुलमणिमञ्जीरे"** मंजुलो मनोरमोऽसौ मणि (युक्त) मञ्जीरो नूपुरस्तत्र। 'मनोज्ञं मंजु मंजुलम्।' 'रत्नं मणिर्द्वयोरश्मजातौ मुक्ताऽऽदिकेऽपि च' 'मञ्जीरो नूपुरोऽस्त्रियाम्।' इति चामरः। तथा-**कलगम्भीरे** कलेन कोकिलादीनां रवविशेषेण गम्भीरेऽत्यन्तं निबिडतया पूर्णे। **विलाससरसीतीरे** विलासः क्रीडा तस्य या सरसी वापी तस्यास्तीरं तत्र। तथा—केलिकीरे केलेः क्रीडायाः कीरः शुकस्तत्र। च पुनः। धीरे मन्दे। **गन्धसारसमीरे** गन्धसारं चन्दनं तस्य समीरो वायुस्तत्र। **किम्**। **विरसा** विरक्ता। **असि**। अत्र स्कन्धकं वृत्तम्। तदुक्तम् यथा—'स्कन्धकमिति तत् कथितं यत्र चतुष्कलगणाष्टकेनार्धं स्यात्। ततुल्यमग्रिमदलं भवति चतुःषष्ठिमात्रकशरीरमिदम्॥' इति॥ ८०॥

अत्र कथं भाषासमत्वमित्याशङ्कामपनेतुमाह—

एष उदाहृतः। श्लोकः पद्यम्। **संस्कृतप्राकृतसौरसेनीनागरापभ्रंशेषु**। **एकविध** एकप्रकारः। एव। तस्मादत्र भाषाणां साम्यद्भाषासमः इति शेषः। विस्तरभयादुपरम्यते।

अथ यत् किञ्चिद्वाक्यांशभूतं पदं भाषासममपि नास्य पात्रमित्याह—'सरसं रसयुक्तम्। **कइण** कवेः। 'कगचजतदपयवां प्रायो लोपः।' २/२ इत्यनेन वस्य लोपः। 'इदुतोः शसोणो' ५/१४ इत्यनेनेतः परस्य ङसो णो॥ कव्वं काव्यम्। 'अदातो यथादिषु वा।' १/१० इत्यातोऽदादेशः। अधोमयाम्।' ३/२ इति यलोपः। **इत्यादौ**। तु पुनः। **'सरसं' इत्यत्र संस्कृतप्राकृतयोः** संस्कृतस्य प्राकृतस्य चेत्यर्थः। **साम्ये**। **अपि वाक्यगतत्वाभावे वाक्यं** 'सरसं कइणो कव्वं' इति, तद्गतत्वाभावे सतीत्यर्थः।। 'तस्य साम्यस्ये'ति शेषः। **वैचित्र्याभावात्**। **अयम्**। **अलङ्कारः**। न नास्ति। अत्रायम्भावः—'सरसं कइणो कव्वं पअडिअपीऊससारसव्वस्स। तहजह णिच्चं मुदिअं सुखिणं पेअं मुहं तेत्थि॥' इत्यादौ 'सरसं' इत्यादेर्वावयत्वाभावाद्भाषासमस्य च वाक्यमात्रसम्भवितया नात्र भाषासमोऽलङ्कारः। इति।

**शिलष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते।**

**वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि॥ ११॥**

**श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः।**

क्रमेणोदाहरणम्—

**'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।**

**अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्त्रमपि॥'**

अत्र 'विधौ' इति विधु-विधि-शब्दयोरुकारेकारयोरौकाररूपत्वात् श्लेषः।

---

## विवृतिः

श्लेषालंकारमाह—**शिलष्टैरिति**। 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति नियमेन काव्ये स्वरभेदानादराद् यावन्तोऽर्थास्तावन्त एव शब्दा एकप्रयत्नेनोच्चार्यन्त इति नये युगपन्नानाशब्दोच्चारणेऽपि तेषां भेदोपलम्भो न भवति। तत्रापि प्रकरणादिनियमाभावादनेकार्थानामभिधयैव बोधः। प्रकरणादिनियमसत्त्वे तु एकस्याभिधयापरस्य व्यञ्जनयेति मतमाश्रित्येदं लक्षणम्। एवं चैकप्रयत्नोच्चार्यत्वेन लुप्तभेदानां वर्णादीनां मेलकः श्लेष, तद्विशिष्टैः पदैरनेकार्थानामभिधया बोधने सति श्लेषो भवतीत्यर्थः। एवं सति नात्माश्रयः॥

शिलष्टवर्णादिभेदेन श्लेषस्याष्टविधत्वमाह—**वर्णेति**। वर्णौ च प्रत्ययौ च लिङ्गं चेति विग्रहः। सः श्लेषालंकारः॥ **प्रतिकूलतामिति**। सूर्यौस्तवर्णनमिदम्। पतिष्यतोऽस्तं गमिष्यतो दिनभर्तुः सूर्यस्य किरणसहस्रमप्यवलम्बनाय अस्तमयविघाताय नाभूत। अथ च पतिष्यतः, स्खलिष्यतो जनस्य करद्वयमपि पतनविघाताय भवति। तस्य तु करसहस्रमप्यवलम्बनाय नाभूदिति श्लेषः। अर्थद्वयमपि श्लेषेण समर्थयति—प्रतिकूलतामति। विधौ चन्द्रे प्रतिकूलतां विरुद्धफलभागित्वम्। उदयफलभागित्वमितियावत्। बहुसाधनता बहुस्थित्युपायशालित्वं विफलतामेति। तथा च कालान्तरे सूर्यास्तगमनं प्रति तत्कालीनकिरणानां प्रतिबन्धकत्वं कल्प्यते। एवं च संध्याकाले तत्कालीनकिरणरूपप्रतिबन्धकानां सद्भावेऽपि सूर्यास्तगमनममिथ्येति प्रथमार्थसमर्थनम्। पक्षे—विधौ दैवे प्रतिकूलतामनभिमतफलसाधनोन्मुखतामुपगते सति बह्वभिमतफलोपायाशालित्वं विफलतामेतीत्यर्थः॥

## विवृतिपूर्तिः

**वर्णेति**। रुद्रटस्तु वर्णादिश्लेषाणां प्रत्येकं लक्षणमाह—'यत्र विभक्तिप्रत्ययवर्णशादैकरूप्यमापतति। वर्णानां विविधानां वर्णश्लेषः स विज्ञेयः॥ यत्र प्रकृतिप्रत्ययसमुदायानां भवत्यनेकेषाम्। सारूप्यं प्रत्ययतः स ज्ञेयः प्रत्ययश्लेषः॥ स्त्रीपुंनपुंसकानां शब्दानां भवति यत्र सारूप्यम्। लघुदीर्घत्वसमासैर्लिङ्गश्लेषः स विज्ञेयः॥ सिध्यति यत्रान्यैः सारूप्यं प्रत्ययागमोपपदैः। प्रकृतीनां विविधानां प्रकृतिश्लेषः स विज्ञेयः॥ यस्मिन्विभक्तियोगः समासयोगश्च जायते विविधः। पदभङ्गेषु विभक्तो विज्ञेयोऽसौ पदश्लेषः। सारूप्यं यत्र सुपां तिङां तथा सर्वथा मिथो

भवति। सोऽत्र विभक्तिश्लेषो वचनश्लेषस्तु वचनानाम्॥ यस्मिनुच्चार्यन्ते सुव्यक्तविविक्तभिन्नभाषाणि। वाक्यानि यावदर्थं भाषाश्लेषः स विज्ञेयः' इति॥

## विज्ञप्रिया

श्लेषालङ्कारमाह—**श्लिष्टैरिति**। श्लिष्टैरुभयावाचकैः एकरूपैरित्यर्थः।

तस्य अष्टविधत्वमाह—वर्णेति। सकलषष्ठ्यन्तानां श्लेषाद् इत्यत्रान्वयः। वर्णादित्रयेऽपि वर्णद्वयप्रत्ययद्वयलिङ्गद्वयेति बोध्यम्। एवं विभक्तिवचनभाषास्वपि द्वित्वं त्रित्वं च बोध्यम्। प्रकृतिपदयोस्तु द्विवचनेनैव तथात्वं बोधितं, विभिन्नरूपवर्णद्वयस्य ऐक्यरूप्यं तत्त्वम्।

**प्रतिकूलतामिति**। हि एवार्थे। विधौ विधातरि प्रतिकूलतामुपगते बहुसाधनता बहूपायत्वं विफलत्वमेति इत्यर्थः। तदेव दर्शयति—**अवलम्बनायेति**। पतिष्यतः दिनभर्तुः अवलम्बनाय रक्षणाय करसहस्रं रश्मिसहस्रमेव करसहस्रं हस्तसहस्रं नाभूदित्यर्थः। विधौ चन्द्रे तस्यैव तत्प्रतिकूलत्वान्न तु विधातुः। अत्र विधावित्यत्र उकारेकाररूपवर्णयोर्विकारेण ऐक्यरूप्यमित्याह—**अत्रेति**।

## लोचन

**श्लिष्टैरिति**। अनेकेत्यनेन द्वयोर्वा बहूनां वार्थानामभिधाने प्रकरणादिनियमाभावादभिधया बोधने। एतेन ध्वनिव्यवच्छेदः। ननु किं भिन्नैः पदैरनेकार्थाभिधानमुतैकैकेन? आद्ये गौरश्वः पुरुषो, हस्तीत्यादावपि श्लेषप्रसङ्गः। द्वितीये लक्षणस्यासम्भवित्वमन्यायं चानेकार्थत्वमिति न्यायात्। इत्यत आह—**श्लिष्टैरिति**। श्लिष्टैः "अर्थभेदेन शब्दभेद" इति दर्शनात्, "काव्यमार्गे स्वरो न गण्यते" इति च नयात् वाच्यभेदेन भिन्नैरपि युगपदुच्चारणेनापगतभेदैः। त्रिधा खलु शब्दाभिव्यक्तिः रूपतोऽर्थतः स्वरतश्चेति दर्शनात्। एवं च भिन्नयोरपि समानश्रुत्योः शब्दयोस्तत्तन्न्यानेन उच्चरितयोः क्रमेण स्वस्यार्थबोधनं यत्र तत्र शब्दस्वरूपश्लेषेण शब्दश्लेषः। शब्दपरिवृत्तिसहत्वे त्वर्थश्लेष इति नियममङ्गीकुर्वतां काव्यप्रकाशकारादीनां मतमनुसृत्य व्याख्यानम्। अन्ये त्वाहुः—न खलु घटपटयोरिव "वसुधामहित पुराजित निरागमनाभावाः। वर्षाश्चासुरभितवराहवपुषस्तव च हरेश्चोपमा घटता॥" इत्यादौ शब्दानामेकप्रयत्नेन निष्पत्तिद्वयमुपपद्यते। द्वयोरेकाकारत्वेन तथाङ्गीकारे एक एव कुलालः, एकाकारं घटशतमेकया सामग्र्या निष्पादयेत्। तथा सति भेदव्यवहारोच्छेदः स्यात्। "अयमेव भेदो भेदहेतुश्च यद्विरुद्धधर्माध्यासः कारणभेदश्चेति"। किं च यद्युभयार्थप्रतिपादनसमीहया वक्तुरेकदा शब्दद्वयोदाहरणसम्भवस्तदा घटसहस्रचिकीर्षुः कुलालोऽपि एकदा तत् निर्वाहयेत्। तदुक्तमाचार्य श्री मदुद्योतकरचरणैः "क्रम वृत्तित्वाद् वाच" इति। तेनैकत्रैव शब्दे नानविषयाणामर्थानां स्वस्वसामग्रीवशेन क्रमेणोज्जीवनमिति वादिनां मतमेवाश्रयितुमुचितम्। किन्त्वत्र मते तत्प्रथमविरुद्धाया द्वितीयाभिधायाः पुनरुज्जीवनमनुपपन्नमिति द्वितीयाभिधानाम्ना "जनस्थाने भ्रान्त" मित्यादाविवाऽत्रापि व्यञ्जनैव वृत्तिरुपदिश्यते। एवं च ध्वनितन्त्रे प्रकरणनियमस्थले तस्मादेव शब्दादुच्चारणादिसामग्रीसहकृता तद्व्यापारान्तरेण सभङ्गाभङ्गशब्दान्तरलभ्यार्थप्रतीतिः। यत्र तु येन ध्वस्तेत्यादौ प्रकरणादिनियमो नास्ति तत्र द्वयोरभिधानसंशयः। यत्र च शब्दपरिवर्तनेऽपि द्वयर्थहानिस्तत्रशब्दशक्तेर्मूलत्वेन शब्दश्लेषः। यत्र च शब्दपरिवर्तनेऽपि न तदर्थक्षतिस्तत्रार्थमात्रं प्रत्येवंशब्दोपयोगादर्थश्लेषता। एतन्मतानुसारेण तु श्लिष्टावर्थौ विद्येते एष्विति मत्वर्थीयप्रत्ययान्तत्वेन श्लिष्टैः पदैरित्यादि सौत्रं श्लिष्टपदं व्याख्येयम्। **अनेकार्थभिधान** इति। अनेकार्थाभिधानसंशय इति। अस्य सूत्रस्य शब्दालङ्कारप्रकरणे पठिततवा देव सिद्धं पदानां परिवृत्त्यसहत्वम्। ये

त्वाहुः "प्रति प्रसूते शब्दः शब्दान्तर" मिति तदयुक्तं, प्रतिप्रसूतशब्दानुभवाभावात्, अननुभूतशब्देनार्थप्रतीतौ चातिप्रसङ्गात्, भिन्नवाचकाद् भिन्नवाच्योत्पत्तिनियमाभावाद्वा। एवं च वर्णादिगतत्वेन श्लेषस्य प्राचीनानुरोधेन व्यवहारः। तथोच्चारणाङ्गीकारे हि शब्दयोः "दुर्गालङ्घित" इत्यादौ जनस्थान इत्यादावपि व्यञ्जनानङ्गीकारप्रसङ्गः। "हृदिज्ञेषु च वक्ष्यति" इत्यादौ "व्यथां द्वयेषामपि मेदिनीभृताम्" इत्यादौ च यस्यार्थस्य प्रथमं बुद्ध्यारोहस्तस्योपमेयता, अन्यस्य च उपमानतेति संगतिः।

इह च वर्णादिगतत्वेन अष्टविधत्वं श्लेषस्यासमीचीनमिति चण्डीदासपण्ड़ितराघवानन्दप्रभृतीनां मतम्। तदभिधानमसत्। तथाहि—वर्णादिगतत्वेन सर्वथा श्लेषस्याष्टविधत्वमस्ति। तथा च—

**"वक्रीभूते विधौ मूर्द्धनि भवेद् भस्मानुलेपनम्।**

**श्मशाने रक्तिरावासः स्याद्दिगम्बरता तथा॥"**

इत्यत्र प्रकरणाभावात् किं महादेवः? उताहो कश्चिद्दरिद्रो वाच्य इति सन्देहः। तेनात्र विधुविधिशब्दयोरुकारेकारयोरौकाररूपत्वाद् वर्णश्लेषः। "येन ध्वस्तमनोभवेन" इत्यादौ "स्यान्नन्दिता विरूपाक्षपादपद्मनिषेवणात्"इत्यादौ च प्रकरणाज्ञाने किमहं नन्दितानन्दकः स्यामिति कस्यचिद् भक्तस्य वचनम्? उत कस्यचिद् भक्तस्य नन्दितानन्दिनामगणविशेषत्वं स्यादिति वंचनमिति सन्देहः। तेनात्र स्यात् स्यामिति प्रत्ययश्लेषः। नन्दिता इत्यत्र तल्तृचोर्विभक्तयोः श्लेषः।

**"योऽसकृत् परगोत्राणां पक्षच्छेदक्षणक्षमः।**

**शतकोटिदतां बिभ्रद् विबुधेन्द्रः स राजते॥'**

इत्यत्र पुंनपुंसकलिङ्गयोः शतकोटिदतामित्यत्र ददाति-द्यत्योः धात्वोः प्रकृत्योश्च श्लेषः। "येन ध्वस्त"इत्यादौ विभक्तिसमासयोर्वैलक्षण्येन श्लेषः। "सर्वस्वं हर सर्वस्व" इत्यत्रापि वक्ष्यमाणोदाहरणेऽर्थद्वयस्यापि सन्देहास्पदत्वाद् विभक्तिश्लेषः। "दधतेऽस्य परां शोभामहो मधुरताभृतः"इत्यादौ च किं मधुरतां बिभ्रतीति मधुरताभृतो बहवो जनाः, उत मधुरतया भृतः कश्चिद् वर्त्तत इति बहुवचनैकवचनयोः श्लेषः। किञ्च मधुरताभृत इत्यत्रापि क्विप्प्रत्ययक्तप्रत्ययोः। दधत इत्यत्रापि च पक्षे धाधातोर्बहुवचनं पक्षे च दधधातोरेकवचनं श्लिष्टं च। तदेवमभिधाद्वयसंवेद्यप्रत्ययोक्ति श्लेषालङ्कारविषयेऽष्टविधश्लेषस्य सम्भवमविचार्य्य प्राचीनाधिक्षेपकारिभिरुपजीव्यै सहालं बहुना विवादेन। नन्वेवं "येन ध्वस्त"इत्यादावपि यस्यार्थस्य प्रथमं बुद्ध्यारोहः स वाच्योऽस्तु अपरस्तु व्यङ्ग्योऽस्तु किं तत्रापि श्लेषालङ्कारकल्पनैरिति चेन्नैवम्। इह यदि संशयज्ञानविषयत्वादनिर्द्धारितत्वात् 'भद्रात्मन' इत्यादौ, 'हृदिज्ञेषु च वक्ष्यति इत्यादौ च निर्द्धारितत्वात् वृत्तिद्वयकल्पनसद्भावे संगतिः। यत्तु चण्डीदासपण्डितैरुक्तं "व्यथां द्वयेषामपि मेदिनीभृताम्" इत्यादौ उभयाभिधानं चेतीति

**"सन्ध्यावन्दनवेलायां मुक्तोऽहमिति मन्यते।**

**खण्डलड्डुकवेलायां दण्डमुद्यम्य धावति॥"**

इत्याभाणकमनुकरोति। क्वचिदभिधाङ्गीकारे हि भद्रात्मन इत्यादावपि किमपराद्धमभिधाद्वयेन। नन्वत्रैव दोषनिरूपणप्रस्तावे सन्दिग्धयोरर्थशब्दयोर्दुष्टता, तत् कथं "येन ध्वस्त"इत्यादावभिधानसंशये अलङ्कारत्वमप्युच्यते? "अबला अचला वा स्युः" इत्यादौ "आशीः परम्परां वन्द्याम्" इत्यादौ च दोषस्थले सन्देहवशेन विवक्षितैकार्थानिर्द्धारणादतिव्यग्रतयाऽऽस्वादं प्रति प्रातिकूल्यम्। इह तु विवक्षितयोरप्यर्थयोरनिर्द्धारणरूपाया

विच्छित्तेरानुकूल्यमनुभवसिद्धम्। अतएव पूर्वत्र महाकवेः स्खलनमन्यत्रबह्वर्थपदनिवहे प्रयुक्तसाधनं सार्वलौकिकमेव। किञ्च पूर्वत्रैकार्थस्यास्वादप्रदाने द्वितीयार्थः प्रतिकूलभूतः, तं हठादिवाकृष्य ततो बहिष्करोति, इह तु द्वयोरर्थयोरेकस्य बुद्ध्यारोहेणापरेणार्थेन तन्निमित्तकाव्यादावपकर्षत्वम्। एवमेव द्वयोरर्थयोः निर्द्धारितत्वेन कविविवक्षानुभवसाक्षिकेति रहस्यम्। एवं "वैरिवंशदवानल" इत्यादौ वंशशब्दात् व्यञ्जनया बोधितस्य वेणुरूपार्थस्यैकान्वयरूपेणार्थेन 'गौर्वाहीक' इत्यादौ गोवाहीकयोरिव 'मुखचन्द्र' इत्यादौ मुखचन्द्रयोरिव तादात्म्याद्रूपकम्। ननु गौर्वाहीक इत्यादौ आरोप्यमांणगवार्थस्य उत्पद्यमानान्वयबाधः। स च गवार्थो मुख्य इति तत्र गौणी लक्षणा। इह च वेणुरूपार्थो व्यङ्ग्य इति कथं मुख्यार्थबाध जीविता लक्षणेति चेत्? अत्रैवं सङ्गतिः। यथा खलु "जातिरेकपदार्थ" इति वादिनां मते प्राचीनैरस्माभिश्च इहैव द्वितीयपरिच्छेदे सङ्केतितार्थनिरूपणे प्रदर्शितेन नयेन जातिमात्रबोधनाद् अभिधायां विरतायां व्यङ्ग्यत्वेनाऽभ्युपगन्तव्याया व्यक्ते रूप्यमाणान्वयबोधे लक्षणा तथेहापि व्यङ्ग्यत्वेनाह—तस्य वेणुरूपार्थस्य यथाव्यक्तिरूपव्यङ्ग्यस्य जातिरूपव्यङ्ग्येनाऽविनाभावेन तद्वत्प्रतीतिः। 'गतोऽस्तमर्क' इत्यादौ 'कान्तमभिसरे' त्यादिव्यङ्ग्यवैलक्षण्येनावश्यकत्वेन मुख्यप्रायत्वं दवानलादित्वसामग्रीसमुत्थितस्य वेणुरूपार्थस्यापीति तौल्यम्।

## कुसुमप्रतिमा

श्लेषं लक्षयति श्लिष्टैरिति श्लिष्टैरनेकेनार्थेनालिङ्गितैः वाच्यतासम्बन्धेन सम्बद्धैः एकोच्चारणेनैव युगपदेवानेकार्थवाचकैरित्यर्थः, पदैः सुबन्तैस्तिङन्तैर्वा, अनेकार्थाभिधाने अभिधया वृत्त्या युगपदेव एकाधिकार्थबोधने श्लेषां नामालङ्कार इष्यते। पदैरिति बहुवचनमविवक्षितम्, "सूत्रे लिङ्गं संख्या कालश्चातन्त्रणि" इति न्यायात् कारिकायाश्च सूत्ररूपत्वात्। एतेन—

अनेकार्थवाचकपदेन अनेकार्थाभिधानं श्लेषः।

इति लक्षणं पर्य्यवसितम्। उक्तया च रीत्या एकस्मिन्नेव पदे अनेकार्थानां परस्परश्लेषणात् श्लेष इति संज्ञाव्युत्पत्तिसिद्धिः।

न च "सकृदुच्चरितः शब्दः सकृदर्थं गमयति" इत्यादिकं रामचरणोक्तं युक्तमिति वाच्यम्, उक्तन्यायस्य श्लेषेतरविषयत्वाद्। किञ्च, "यावन्तोऽर्थान्तावन्त एव शब्दा एकप्रयत्नेनोच्चार्य्यन्ते, युगपन्नानाशब्दोच्चारणेऽपि तेषां भेदोपलम्भो न भवति।" अहो! अपूर्वोऽयं खलु सिद्धान्तवादः; यत्, शब्दश्च द्विरुच्चारितो भवेत् श्रुतिश्च तयोरेकैव स्यादिति। अथ पृच्छ्यते—दूरे तावदास्तां भवान्, योगेन वशीकृतरसना योगिनोऽपि किं कश्चिदपि शब्दं युगपदेव द्विरुच्चारयितुमर्हन्ति?। अथ अर्हन्ति चेत्, श्रुतिभेदोऽपि तर्हि तयोरावश्यक एव। अन्वया यमकालङ्कारलोपस्यैव प्रसङ्गः, द्विःश्रवणाभावात्। अथ द्विरेव श्रूयतेऽपीति चेत् "प्रतिकूलतामुपगते हि विधौ" इत्यादौ विधौ विधाविति द्विःश्रवणात् सर्वत्रैव छन्दोभङ्गप्रसङ्गः। किञ्च, उक्तविधकष्टकल्पनापेक्षया "सर्वदा नानार्थव्यवहारस्तु श्लेषकाव्यादौ" इति तिथितत्त्वे स्मार्त्तोक्तेः व्युत्पत्तिवादे तथैव गदाधरोक्तेः, "एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" इत्याप्ततमासरसिंहस्य 'एकयोक्त्या' इति स्पष्टमभिधानाच्च "एकाच्चारणेनैव युगपदनेकार्थवाचकैः" इति सिद्धान्त एव ज्यायानिति सुधीभिरवधेयम्।

तत्र एकतरार्थस्य प्रकरणादिभिनियमितत्त्वाभावे श्लेषः, तस्य तैर्नियमितत्वे तु ध्वनिरेवेति बोध्यम्।

ननु अनेकार्था वाचकैः पदैरनेकार्थानामभिधातुमशक्यत्वात् कथं शिलष्टै रित्यभिहितम् ? । न च ध्वनावतिव्याप्तिवारणायेति वाच्यम्, 'अभिधाने' इत्यनेनैव अभिधावृत्तिप्रतिपाद्यत्वलाभेन ध्वनावतिव्याप्तिवारणात् ध्वनेस्तु व्यञ्जनाप्रतिपाद्यत्वात् । सत्यम्, अथ श्लेषे अतिव्याप्तिवारणाय शिलष्टैरित्यभिहितम् । तथा च अनेकार्थ वाचकैः पदैरनेकार्थाभिधाने शब्दश्लेषः, एकार्थवाचकैरेव पदैरनेकार्थाभिधाने तु अर्थश्लेष इति भेदः । तेन भिन्नप्रवृत्तिनिमित्तकत्वेनानेकार्थोपस्थापकः शब्दः शब्दश्लेषप्रयोजकः, एकप्रवृत्ति नमित्तकत्वेन अनेकार्थोपस्थापकः शब्दस्तु अर्थश्लेषप्रयोजक इति समाधेयम् ।

एवञ्च तादृशतादृशशब्दसत्त्वे श्लेषसत्त्वात् तदसत्त्वे च तदसत्त्वादस्य श्लेषस्य शब्दालङ्कारत्वम् ।

प्राचीनमतानुसारेण श्लेषं विभजते वर्णेति । वर्णौ यत्किञ्चिदक्षरद्वयम्, विभक्तेः पृथगभिधानात् प्रत्ययौ विभक्तिभिन्नौ यौ कौचित्, तथा स्त्रीपु सपुंसकानां मध्ये यत्किञ्चिलिङ्गद्वयं तेषाम्, प्रकृत्योर्धातुभूतयोः प्रातिपदिकभूतयोस्तदुभयोर्वा, पदयोः सुवन्तयोस्तिङन्तयोस्तदुभयोर्वा, विभक्तौ सूब्द्वयं तिङ्द्वयं तदुभयं वा, वचने एकवचनद्विवचनबहुवचनानां मध्ये यत्किञ्चित् द्वयम्, भाषे यत्किञ्चिद्भाषाद्वयञ्च तासामपि च श्लेषादेकत्र मेलनेनानेकार्थाभिधानात स श्लेषः अष्टधा । तथा च वर्णश्लेषः, प्रत्ययश्लेषः, लिङ्गश्लेषः, प्रकृतिश्लेषः, पदश्लेषः, विभक्तिश्लेषः, वचनश्लेषः, भाषाश्लेषश्चेति ।

तत्र च यच् श्लेषेण वैचित्र्यातिशयः सम्पद्यते, तन्नाम्नैव तद्व्यपदेशोऽङ्गीकार्य्यः । अन्यथा सर्वत्र पदश्लेषप्रसङ्गः ।

वर्णश्लेषं दर्शयति प्रतीति । शिशुपालवधे नवमसर्गे सन्ध्यावर्णनमिदम् । विधौ दैवेचन्द्रे च, प्रतिकूलतां विरोधित्वं विपरीतदिग्वर्त्तित्वञ्च उपगते प्राप्ते सति, बहूनि साधनानि फलनिष्पादनोपाया यस्य तस्य भावः सा बहुतरोपायवत्त्वमपीत्यर्थः, हि निश्चितम्, विफलत्वम् एति प्राप्नोति । तथा च पतिष्यत आसन्नपातस्य दिनभर्त्तुः सूर्य्यस्य कराणां रश्मीनां हस्तानाञ्च सहस्रमपि अवलम्बनाय आकाशे आश्रयणाय नाभूत् उपायो नाभवत् ।

उदाहृते वर्णश्लेषमुपपादयितुमाह अत्रेति । औकाररूपत्वात् औकाररूपप्राप्तेः, श्लेषो मेलनेनानेकार्थाभिधानम् । तथा च विधुशब्दात् विधिशब्दाच्च सप्तम्येकवचने कृते 'डिरौ सपूर्वैः' इत्यनेन विधुशब्दस्य उकारेण विधिशब्दस्य च इकारेण सह सस्य स्थाने औकारविधानात् 'विधौ' इति शब्दे विधुरूपार्थस्य विधिरूपार्थस्य च मेलनेन 'विधौ' इति शब्देनैव च तदुभयार्थाभिधानात् तादृशवर्णस्यैव च वैचित्र्यातिशयजननाद्वर्णश्लेष इति सरलार्थः ।

## विमला

श्लेषालङ्कारमाह, शिलष्टैरिति ।—"सकृदुच्चरितः शब्दः सकृदर्थं गमयति" इति नियमेन काव्ये स्वरभेदानादरात्, "यावन्तोऽर्थाः तावन्त एव शब्दाः एकप्रयत्नेनोच्चार्य्यन्ते" इति नये युगपत् नानाशब्दोच्चारणेऽपि तेषां भेदोपलम्भो न भवति; तत्रापि प्रकरणादिनियमाभावात् अनेकार्थानामभिधयैव बोधः, प्रकरणादिनियमसत्त्वे तु एकस्याभिधया अपरस्य व्यञ्जनया इति मतमाश्रित्येदं लक्षणम् । एवञ्चैकप्रयत्नोच्चार्य्यत्वेनलुप्तभेदानां वर्णादीनां मेलकः श्लेषः तद्विशिष्टैः शिलष्टैः,—अनेकार्थैः, पदैः,—स्वव्यञ्जत समूहात्मकैरित्यर्थः, अनेकार्थानाम् इत्यादिकन्तु अभिधया प्रतिपादने, [अनेकार्थौ च अनेकार्थाश्च इत्येकशेषद्वन्द्वे अनेकार्थाः तेषां, तेन द्वयोर्बहूनां वा अर्थानामित्यर्थो बोध्यते] श्लेषः,—श्लेषाख्योऽलङ्कारः, इष्यते; अनेकार्थाभिधानमेव श्लेषः, एवं सति नात्माश्रयः इति भावः ।

शिलष्टवर्णादिभेदेन श्लेषस्याष्टविधत्वमाह, वर्णेति ।—स च—श्लेषालङ्कारः, वर्णप्रत्ययलिङ्गानां—वर्णौ च प्रत्ययौ च लिङ्गे च तेषामिति विग्रहः, तथा च वर्णादीनामष्टानां श्लेषात्—अनेकार्थतया प्रतिपादनात्, अष्टधा—अष्टविधः, वर्णश्लेषः, प्रत्ययश्लेषः, लिङ्गश्लेषः, प्रकृतिश्लेषः, पदश्लेषः, विभक्तिश्लेषः, वचनश्लेषः, भाषाश्लेषश्चेत्येवंरूपः । प्रकृतिश्लेषः पुनः द्विधा—धातुप्रातिपदिकभेदात् द्विप्रकारः; पदश्लेषश्च सुबन्ततिङन्तभेदात् द्विविध इति बोध्यम् । रुद्रटग्रन्थे वर्णादिश्लेषाणां प्रत्येकं लक्षणमेवंविधं दृश्यते; यथा—"यत्र विभक्तिप्रत्ययवर्णवशादैक रुप्यमापतति । वर्णानां विविधानां वर्णश्लेषः स विज्ञेयः ॥ यत्र प्रकृति प्रत्ययसमुदायानां भवत्यनेकेषाम् । सारूप्यं प्रत्ययतः स ज्ञेयः प्रत्ययश्लेषः ॥ स्त्रीपुंनपुंसकानां शब्दानां भवति यत्र सारूप्यम् । लघुदीर्घत्वसमासैर्लिङ्गश्लेषः स विज्ञेयः ॥ सिध्यति यत्रानन्यैः सारूप्यं प्रत्ययागमोपपदैः ॥ प्रकृतीनां विविधानां प्रकृतिश्लेषः स विज्ञेयः ॥ यस्मिन् विभक्तियोगः समासयोगश्च जायते विविधः । पदभङ्गेषु विभक्तो विज्ञेयोऽसौ पदश्लेषः ॥ सारूप्यं यत्र सुपां तिङां तथा सर्वथा मिथो भवति । सोऽत्र विभक्तिश्लेषो वचनश्लेषस्तु वचनानाम् ॥ यस्मिन्नुच्चार्य्यन्ते सुव्यक्तविविक्तभिन्न-भाषाणि । वाक्यानि यावदर्थं भाषाश्लेषः स विज्ञेयः ॥" इति ।

वर्णश्लेषमुदाहरति, प्रतिकूलतामिति ।—सूर्य्यास्तवर्णनमिदम् । विधौ—दैवे ("विधिर्विधाने दैवे च" इत्यमरः) प्रतिकूलतां—विमुखताम्, अनभिमतफलसाधनोन्मुखतामित्यर्थः, उपगते—प्राप्ते सति, बहूनि साधनानि—उपायाः येषां ते बहुसाधनाः, तेषां भावः बहुसाधनता—बह्वभिमतफलोपायशालित्वम् इत्यर्थ, हि—निश्चितं, विफलतां—व्यर्थताम्, एति—प्राप्नोति; पक्षे—विधौ—चन्द्र, प्रतिकूलतां—विरुद्धफलभागित्वम उदयफलभागित्वमिति यावत्, उपगते बहुसाधनता—बहुस्थित्युपायशालित्वं, विफलत्वमेति, तथा हि—पतिष्यतः,—पतनोन्मुखस्य, अस्तं गमिष्यत इत्यर्थः, दिनभर्त्तुः कराणां—किरणानां, हस्तानाञ्च, सहस्रमपि—साधनभूतमितिभावः, अवलम्बनाय—आश्रयाय, रक्षणाय इति यावत्, न अभूत्—अवलम्बनसाधनेणासीदित्यर्थः । तथा च कालान्तरे सूर्य्यास्तगमनं प्रति तात्कालिककिरणानां प्रतिबन्धकत्वं कल्प्यते, एवञ्च सन्ध्याकाले तात्कालिककिरण-रूपप्रतिबन्धकानां सद्भावेऽपि सूर्य्यास्तगमनममिथ्येति प्रथमार्थसमर्थनम्; अथ च—पतिष्यतः,—स्खलिष्यतः जनस्य, करद्वयमपि पतनविधाताय भवति, तस्य तु करसहस्रमपि अवलम्बनाय नाभूत् इति श्लेषः । शिशुपालवधस्येदं पद्यम् । प्रामिताक्षरा वृत्तं—"प्रमिताक्षरा सजसलैः कथिता" इति च तल्लक्षणम् ।

अत्र विधाविति ।—विधौ इति पदस्य औकाररूपवर्णस्य इक्षारोकारणन्धत्वात् अर्थद्वयस्य श्लेषेण समर्थनं बोध्यम् ।

## लक्ष्मी

श्लेषं निरूपयति—**श्लिष्टैरिति** । श्लिष्टैः अनेकेनार्थेन सम्मिलितैः वाच्यतासम्बन्धेन संश्लिष्टैः एकोच्चारणेनैव युगपदनेकार्थबोधकैरिति यावत्, पदैः सुप्तिङन्तैः अनेके येऽर्थास्तेषामभिधानमभिधयोपस्थानं यत्र तस्मिन् तथोक्ते सतीति शेषः, श्लेषस्तन्नामकः शब्दालङ्कार इष्यते कविभिरिति शेषः । पदैरिति बहुवचनमतन्त्रम्, तेनैकस्मिन्नपि पदे अनेकार्थानां मिथः संश्लेषणात् श्लेषः ।

'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति नियमाङ्गीकर्त्तृणां मतेन एकानुपूर्वीकत्वेऽपि तत्तदर्थनिरूपितवृत्तिभेदाच्छब्दभेद इत्यर्थकेन 'अर्थभेदेन शब्दभेदः' इति नयेन भिन्नाः शब्दाः, इन्द्रशत्रुप्रभृतीनां भिन्नसमासानां श्लेषे उदात्तानुदात्तादिस्वरभेदे भेदग्रहो दुरपह्नव इति शङ्कानिराकरणाय 'काव्यमार्गे स्वरो न गण्यते' इति नयस्तेन च युगपदुच्चारणविषयतया यत् श्लिष्यन्ति भिन्नं स्वरूपमपह्नवते एकवृन्तगतफलद्वयन्यायेन यत्रार्थद्वयप्रतीतिः स

श्लेषः। एवञ्चैकोच्चारणापह्नुतभेदकभिन्नार्थकसदृशनानाशब्दत्वं श्लेष इति फलितम्। 'सकृदुच्चरित' इति नियमानङ्गीकर्तृणां मते एकदा गृहीतनानातात्पर्यकः शब्द एव श्लेष इत्यपि सुवचम्। न च 'दुर्गालङ्घित' इत्यादाविवात्रापि अर्थान्तरे व्यञ्जनैवास्त्विति वाच्यम्, प्रकरणादीनां तुल्यत्वेनैकत्राभिधानियन्त्रणाभावात्। तस्मान्नानार्थेषु शिलष्टेषु यत्रानेकत्र तात्पर्यग्राहकं युगपदवतरति नावतरति वा तत्र श्लेषः। यत्र तु क्रमेण तत्र आवृत्तिः सा च पुनरनुसन्धानं यथा 'अक्षा भज्यन्तां भुज्यन्तां दीव्यन्ताम्' इति अत्रान्वयिपदार्थभेदाद्बोद्धुरावृत्त्यैव बोधः उच्चारणं तु तन्त्रेणैव। यत्र त्वेकत्रैव तत्र व्यञ्जनेति व्यवस्थितिः। नानार्थेषु शिलष्टेषु यत्रानेकत्र प्रकरणादिकं युगपदवतरति तत्रैव श्लेष इति तु न वाच्यम्, अनेकत्र प्रकरणाद्यनवतारे 'योऽसकृत् परगोत्राणाम्' इत्यादौ श्लेषानापत्तेरित्यनुसन्धेयम्। एवञ्च तर्क्कवागीशैः सकृदुच्चरितेति न्यायमवतारयद्भिर्यदुक्तमत्र तत्समीचीन मेव यत्तु न्यायमेनं श्लेषेतरविषयत्वेन प्रकल्प्य तर्कवागीशमतं नादरणीयमित्यभिहितं तत्र तत्समाधानमेव नादरणीयम् उक्तयुक्तेः, प्रदीपादौ स्पष्टमुपलम्भाच्च।

प्राचीनमतानुसारेण श्लेषं विभजते—वर्णेति। वर्णौ प्रत्ययाद्यतिरिक्तयत्किञ्चिदक्षरविशेषौ प्रत्ययो विभक्तिभिन्नां प्रत्याययति अर्थं बोधयतीति प्रत्ययः प्रत्ययसंज्ञकः एवञ्च प्रत्ययाधिकारपठितत्वे सति अर्थबोधकत्वं तत्त्वम्, प्रत्ययपदमत्र गोवलीवर्दन्यायेन विभक्तिभिन्नपरम् अन्यथा—'विभक्त—' इति पृथगुपादानमनर्थकं स्यात्, लिङ्गे पुंस्त्वस्त्रीस्वरूपे पुंस्त्वनपुंसकत्वरूपे वा प्रकृत्योः प्रत्ययविधातुरुद्देश्यतावश्छेदकाक्रान्तयोः प्रत्ययविधानावधिभूतयोर्वा, पदयोः सुबन्तयोस्तिङन्तयोस्तदुभयोर्वा, विभक्ती सुब्द्वयं तिङ्द्वयं तदुभयं वा वचने एकवचनद्विवचनबहुवचनानां मध्ये यत् किञ्चित् द्वयम्; भाषे—

'संस्कृतप्राकृतमागधपिशाचभाषाश्च शौरशेनी च। षष्ठोऽत्र भूरिभेदो देशविशेषादपभ्रंशः॥'

इति षड्विधासु मध्ये यत्किञ्चिद्भाषाद्वयञ्च तासामपि च श्लेषात् एकत्र सम्मेलनेनानेकार्थप्रतिपादनात् स श्लेष अष्टधा। तथा च १. वर्णश्लेषः २. प्रत्ययश्लेषः ३. लिङ्गश्लेषः ४. प्रकृतिश्लेषः ५. पदश्लेषः ६. विभक्तिश्लेषः ७. वचनश्लेषः ८. भाषाश्लेषश्चेति। तत्र च पदश्लेषस्य सर्वत्र प्रसक्तावपि यत्र श्लेषेण वैचित्र्यातिशयो जायते तत्संज्ञयैव तद्व्यपदेशोऽभ्युपगन्तव्यः।

वर्णश्लेषमुदाहरति—प्रतिकूलतामिति। शिशुपालवधे नवमसर्गे सूर्यास्तवर्णनमिदम्। 'विधौ भाग्ये चन्द्रे च भाग्यं स्त्रीनियतर्विधिः' 'विधुः सुधांशुः शुभ्रांशुः' इति चामरः, प्रतिकूलतां प्रतिद्वन्द्विवदनाभिमतार्थोपस्थापकत्वं विरुद्धफलभागित्वञ्च उदयरूपफलभागित्वमिति यावत्, उपगते प्राप्ते सति, बहूनि साधनानि फलनिष्पादनोपाया यस्य तस्य भावस्तत्ता तथोक्ता बहुस्थित्युपायशालित्वमपीत्यर्थः, हि निश्चितम्, विफलत्वम् अकिञ्चित्सहायकत्वम्, एति प्राप्नोति। अर्थद्वयमपि श्लेषेण समर्थयति—अवलम्बनायेति। पतिष्यत उन्नतपदात् भ्रश्यतः उदयादस्तं गमिष्यत सौभाग्याद्दौर्भाग्यं गमिष्यत इति यावत् दिनभर्तुः सूर्यस्य तत्त्वेनाध्यस्तस्यापि वा कस्यापि पुंसः, कराणां रश्मीनां हस्तानाञ्च सहस्रमपि' करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः' इति मेदिनी। अवलम्बनाय आकाशे आश्रयणाय अस्तमयंविघातायेति यावत्, नाभूत् उपायो नाभवत्।

अयमाशयः—पतिष्यतः पुंसः करद्वयमपि पतनविघाताय भवति तस्य तु—किं पुनः करसहस्रमप्यवलम्बनाय नाभूदिति श्लेषः। न चैवमपि विधोरुदये सूर्यस्यास्तमितत्ववर्णन एव तात्पर्यं तदा 'विफलत्वमेति बहुसाधनता' इति द्वितीयपादार्थस्य सङ्गतिः कथमिति वाच्यम्, कविना विधोः (चन्द्रमसः) प्रतिकूलतयोपस्थित्या सूर्यास्तस्य वर्णितत्वात्। विधोः (चन्द्रमसः) प्रतिकूलतायां विधीयमानं निखिलं विपरीतं भवति सम्पन्नं च

विनश्यतीति दैवज्ञराद्धान्तः। प्रकृते च विधोः (चन्द्रमसः) प्रतिकूलता उदयपदप्राप्तिरेवेत्यवधेयम्। वैतालीयं छन्दः, तल्लक्षणन्तूक्तं प्रागेव।

उक्तोदाहरणे वर्णश्लेषमुपपादयति—अत्रेति। उकारेकारयोः विजातीययोरपीति शेषः औकाररूपत्वात् औकाररूपप्राप्तेः श्लेषे मेलनेन विधिविधुशब्दार्थद्वयस्यापि वाच्यत्वम्। तथा च विधिविधुशब्दयोर्विजातीययोर-पीकारोकारयोः 'अच्च घेः' इति पाणिनिसूत्रेण ङौ परे तुल्यरूपत्वम्, तस्मात् विधाविति शब्दे औकारमाहात्म्येना-भिन्नप्रयत्नोच्चार्यत्वमिति विधिविधुशब्दप्रतिपाद्यार्थद्वयोरपि तयोर्वैचित्र्यातिशयजननात् वर्णयोः श्लेषः। विधावित्यादेशिनि भेदेऽपि आदेशमादाय सादृश्यं बोध्यम्।

## रुचिरा

अथ सप्रभेदं श्लेषं लक्षयति—**७३ श्लिष्टैरित्यादिना।**

**७३ श्लिष्टैः** सम्मिलितैः परस्परं विभिन्नतां परित्यज्यानन्यतयाऽवस्थितैरिति यावत्। पदैः शब्दैः 'पदं शब्दे च वाक्ये च व्यवसायापदेशयोः। पादतच्चिन्हयोः स्थानत्राणयोरङ्कवस्तुनोः॥' इति विश्वः। **अनेकार्थाभिधाने**ऽनेकेयेऽर्थस्तेषामभिधान-मभिधयोपस्थापनं तत्रेति तथोक्ते। 'सती'ति शेषः। श्लेषस्तदाख्यः शब्द-गतोऽलङ्कार इत्यर्थः। **इष्यते।** अत्राहुस्तर्कवागीशाः—'सकृदुच्चरितः शब्दः सकृदर्थं गमयती'ति नयेन काव्ये स्वरभेदानादराद् 'यावन्तोऽर्थास्तावन्त एव शब्दा एकप्रयत्नेनोच्चार्य्यन्ते' इति नये युगपन्नानाशब्दोच्चारणेऽपि तेषां भेदोपलम्भो न भवति। तत्रापि प्रकरणादिनियमाभावादनेकार्थानामभिधयैव बोधः। प्रकरणादिनियमसत्त्वे तु एकस्याभिधयाऽपरस्य व्यञ्जनयेति मतमाश्रित्येदं लक्षणम्। एवं च—एकप्रयत्नोच्चार्यत्वेन लुप्तभेदानां वर्णादीनां मेलकः श्लेषः, तद्विशिष्टैः पदैरनेकार्थानामभिधया बोधने सति श्लेषो भवतीत्यर्थः। एवं सति नात्माश्रयः।' इति। स श्लेषः। च पुनः। **वर्णप्रत्ययलिङ्गानां** वर्णौ च प्रत्ययौ च लिङ्गे चेति तेषां तथोक्तानाम्। वर्णौ प्रत्ययाद्यति रिक्ताक्षरविशेषौ। प्रत्ययौ विभक्तिभिन्नौ शब्दविशेषौ, अन्यथा 'विभक्ति...' इति पृथगुपादानमयुक्तं स्यात्। उक्तं च प्रदीपकारैः 'विभक्तेर्वैचित्र्यविशेषहेतुतया पृथुगुपादानात् प्रत्ययपदं तदतिरिक्तपरम्।' इति। अत एव वामनाचार्य्यैरप्युक्तम्—'**प्रत्ययः** प्रत्ययसञ्ज्ञकः। प्रत्येति (प्रत्याययति) अर्थं बोधयतीति व्युत्पत्तिः। एवं च-प्रत्य-याधिकारपठितत्वे सत्यर्थबोधकत्वं प्रत्ययत्वम्। प्रत्ययपदमत्र गोबलीवर्दन्यायेन विभक्तिभिन्न'परम्।' इति। लिङ्गे पुंस्त्वस्त्रीत्वरूपे पुंस्त्वनपुंसकत्वरूपे स्त्रीत्वनपुंसकत्वरूपे वा। प्रकृत्योः प्रत्ययविधानावधिभूतयोः। पदयोः। अपि तथेत्यर्थः। अव्ययानामनेकार्थत्वात्। **विभक्तिवचनभाषाणाम्।** श्लेषान्मिलितत्वात्। 'कारणा' दिति शेषः। अष्टधाऽष्टप्रकारः। अत्रेदं तत्त्वम्—'सकृदुच्चारितः शब्दः सकृदर्थं गमयति' 'अर्थभेदे शब्दभेदः' 'काव्यमार्गे स्वरो न गण्यते,' 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इत्याद्युक्तदिशाऽनेकार्थस्याप्येकस्य शब्दस्य 'संयोगे विप्रयोगश्च...शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।'इत्युक्तदिशा संयोगादिपरतन्त्रतयाऽर्थद्वयवाचकत्वं न वक्तुं शक्यते, यत्र पुनरर्थद्वयं तत्र संयोगादिमहिम्ना प्रकरणाद्यनियन्त्रितत्वे एव, अथ यत्रैकवाच्यार्थस्याप्येकस्य शब्दस्यार्थद्वयं, तत्र कविकौशलेनैकवत् प्रतीयमानस्य शब्दद्वस्य माहात्म्यम्, नतु वस्तुत एकस्य। यत्र पुनर्वस्तुत एक एव शब्दः सोऽपि स्वभावादेकार्थस्तत्राभिधेयार्थस्त्वेक एव, किन्तु क्वचिल्लक्ष्योऽपि, यथाऽर्थश्लेषे, एवं स्वभावादेकवाच्यार्थस्यैकस्यापि शब्दस्याभिधा (निरूढ) लक्षणाभ्यामर्थद्वयेऽर्थश्लेषः, अनेकवाच्यार्थस्य प्रकरणा-द्यनियन्त्रितस्यैकस्यापि शब्दस्य संयोगादिमहिम्नाऽर्थद्वये पुनः शब्दविशेषगतोऽभङ्ग श्लेषः। प्रकरणादिनियन्त्रि-तस्य तस्यार्थद्वये व्यञ्जनाया माहात्म्यम्, अभिधाया एकार्थोपस्थापनानन्तरं क्षीणव्यापारत्वे व्यञ्जनाया एव तत्र

प्रभुत्वात्। अत्रैवं—'यत्रैकप्रयत्नोच्चार्य्यतयाऽभिन्नत्वेन प्रतीयमानैः पदैः 'एकवृन्तगतफलद्वय' न्यायेनार्थद्वयस्योपस्थानं स शब्दश्लेषः' इति फलितम्। स त्रिविधः, सभङ्गपदाभङ्गपदसभङ्गाभङ्गपदभेदात्, तत्राद्योऽष्टविध, वर्ण-प्रत्यय-लिङ्ग-प्रकृति-लिङ्ग-विभक्ति-वचन-भाषाणां भेदात्। अत्राहुर्भीमसेनाः—...तथा च-एकोच्चारणापह्नुतभेदकभिन्नार्थकसदृशनानाशब्दत्वं श्लेषत्वमिति फलितम्। अत्र केचित्, नन्वेकोच्चारणेन सदृशनानाशब्दोत्पत्तिर्दुर्घटा; न चानेकार्थप्रतिपादयिषयोच्चारणात्तथा, नानाघटचिकीर्षातः कपालादिसंयोगादेकस्मान्नानाघटोत्पत्त्यापत्तेः। अत्र चक्रवर्त्तिनः समवाय्य समवायभेदान्न तथा, तदैक्यात्तत्सम्भव इत्याहुः। तच्चिन्त्यम्, साम्ग्रयैक्ये कार्य्यैक्यात्, भेदे मानाभावाद्गौरवाच्च। एकस्माच्छब्दात् 'सकृदुच्चरितः' इत्यादिनियमसत्त्वे आवृत्त्या नानाऽर्थबोधः सम्भवति, आवृत्तिः पुनरनुसन्धानमिति तत्कृतानुपूर्वीभेदाद् वृत्तिभेदाच्च पदभेद इत्याहुः। तदपि न रमणीयम्, आवृत्त्यङ्गीकारे एकवृन्तगतफलद्वयन्यायनुपपत्त्या श्लेषस्य दुरुपपादत्वात्। यत्रानेकत्र क्रमेण प्रकरणादिकमवतरति तत्रावृत्तिरिति सिद्धान्तात्। अपरे तु द्वितीयक्षणे शब्दजशब्दोत्पत्त्या पदभेदः सम्भवतीत्याहुः। तदपि मौनिमात्रविदितश्लेषव्यापकमिति न रमणीयम्। वयं तु वस्तुत एकः शब्दः सकृदुच्चरितः सकृदर्थं गमयति, न त्वेकोच्चारणापह्नुतभेदोऽपीति श्लिष्टस्योभयत्र तात्पर्यग्राहकसद्भावेऽभावे वा एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वादुद्बुद्धस्वस्वसंस्कारेण द्वयोर्युगपदुपस्थितिः, ततश्च 'सकृदि'त्यादिनियमवशात्सदृशनानाशब्दबोधः। तदुक्तं श्रीवाग्देवताऽवतारैः—'अर्थभेदेन शब्दभेद' इति। शब्दे सादृश्यं तु क्वचित् साहजिकम्। यथा—'विद्वन्मानसहंस! वैरिकमलासङ्कोचदीप्तद्युते! दुर्गामार्गणनीललोहित! समित्स्वीकारवैश्वानर! सत्यप्रीतिविधानदक्ष! विजयप्राग्भावभीम! प्रभो! साम्राज्यं वरवीर! वत्सरशतं वैरिञ्चं मुञ्चैः क्रियाः॥' इत्यादौ अखण्डपदश्लेषे क्वचित्वपह्नुतभेदत्वेन यथा—'श्वेतो (श्व-इतो) धावति' 'येन ध्वस्तमनोभवेन...' इत्यादिसखण्डपदश्लेष इति युक्तमुत्पश्यामः। एवं चैकोच्चारणेन सदृशनानाशब्दोत्पत्तिदुर्घटेति रिक्तं वचः। यत्तु जयरामन्यापञ्चाननैरुक्तम्—'इदं तु बोध्यम्—'यत्रैकस्यैव शब्दस्य शक्यलक्ष्योभयपरत्वं तत्रार्थश्लेष एव पदस्य परिवृत्तिसहत्वे। यस्य चैकस्य समुदायस्य बोधितार्थस्य तेन रूपेण नार्थान्तरबोधनं तत्र न श्लेषः। यथा—'वैदेही'ति 'देवं हिमकराङ्कितम्।' इत्यत्र च, एकत्र केवलमर्थप्रयुक्तभेदाभावात्, रूपतोऽपि भेदात्। तदाहुर्वैयाकरणाः—'त्रिधा शब्दो भिद्यते, रूपतः स्वरतोऽर्थतश्च, 'त्रिधा तु भिद्यते शब्दो रूपतः स्वरतोऽर्थतः।' इत्युक्तेरिती'ति। तच्चिन्त्यम्। तथा सति-स-खण्डपदश्लेषोच्छेदापत्तेः, रूपभेदाभावस्योपपदितत्वाच्चेति सुधीभिः परिभावनीयम्।' इति। अन्ये पुनः प्राहुः—"यत्रैकस्यैव शब्दस्य स्वभावादेकवाच्यार्थत्वे द्वितीयोलक्ष्यार्थोऽस्ति, तत्राश्लेषः, यत्र तु स्वरूपमपह्नवानैः पदैर्वाच्यार्थस्यैव द्विधोपस्थानं तत्र सखण्डपदगतः श्लेषः।" इति॥ ६४।।

अथोदाहर्त्तुमुपक्रमते—**क्रमेण** वर्णादीनामानुपूर्व्या। **उदाहरणम्** 'यथा—विधौ चन्द्रे भाग्ये वा। 'विधुः सुधांशुः शुभ्रांशुः।' 'भाग्यं स्त्री नियतिर्विधिः।' इति चामरः। **प्रतिकूलतां** प्रतिकूलफल (उदयरूपफल) भागित्वं प्रतिद्वन्द्विवदनभिमतार्थोपस्थापकत्वं वा। **उपगते**। **बहुसाधनता** बहूनि साधनान्युपाया यस्य तस्य भावस्तत्ता तथोक्ता। विफलत्वमकिञ्चित्सहायकत्वम्। **एति** गच्छति। ह्येव। एवं विशेषमभिधाय—सामान्यं समर्थयते-**पतिष्यत** उन्नतपदाद् भ्रश्यत उदयादस्तं सौभाग्याद्वा दौर्भाग्यं गमिष्यत इति यावत्। **दिनभर्तुः** सूर्य्यस्य तत्त्वेनाध्यस्तस्य वा कस्यापि जनस्य। **अवलम्बनायाश्रयाय**। **करसहस्रं** कराणां किरणानां हस्तानां वा सहस्रम्। 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः।' इति मेदिनी। अपि। न नैव। अभूत्। अयम्भावः—पततो जनस्य करद्वयमपि साहाय्याय, किं पुनस्तत्सहस्रम् अथापि विधौ प्रतिकूले तदकिञ्चित्करमभूदिति साम्प्रतम्। अत

एवार्थान्तरन्यासः ॥ अत्र सूर्यास्तवर्णनम्। इदं च शिशुपालवधीयम्। वैतालीयं छन्दः। लक्षणं चोक्तं प्राक् ॥७५॥'

अत्र श्लेषं दर्शयति—**अत्र 'विधौ' इति**। **'विधुविधि शब्दयोः उकारेकारयो'** 'र्विजातीययोरपी'ति शेषः। वर्णयोः। आकाररूपत्वादौकाररूपेणैकप्रयत्नोच्चार्य्यत्वाद्धेतोः। श्लेषो 'विधुविधिशब्दार्थद्वयस्यापि वाच्यत्वात्' इति शेषः। अत्रायम्भावः—'विधु विधि—' शब्दावयवभूतयोर्विजातीययोरप्युकारेकारयोः 'अच्च घेः।' ७/३/११९ इत्यनेन ङौ परे समानरूपत्वम्, तस्मात्—औकारमहिम्नाऽभिन्नप्रयत्नोच्चार्य्यत्वमिति तयोर्वर्णयोः श्लेषः, तथा सति—'विधु-विधि' शब्दप्रतिपाद्यार्थद्वयस्य वाच्यत्वम्। अथापि—श्लेषमहिम्ना तात्पर्य्यस्य च विधोरुदये दिनभर्त्तुरस्तमितत्ववर्णनपरत्वात् 'विधिविधु' पदवाच्ययोरुपमानोपमेयत्वेन प्रतीत्योपमाध्वनिः। न च 'ननु यदि विधोरुदये दिनभर्त्तुरस्तमितत्ववर्णन एव तात्पर्य्यं तर्हि 'विफलत्वमेति बहुसाधनता' इति द्वितीयपादार्थः कथं सङ्गमिष्यते।' इति शङ्क्यम्, कविना विधोः (चन्द्रमसः) प्रतिकूलतयोपस्थित्या सूर्य्यास्तस्य वर्णितत्वात्। विधोः (चन्द्रमसः) प्रतिकूलतायां क्रियमाणं सर्वं विपरीतं भवति, सम्पन्नं च विनश्यतीति दैवज्ञसिद्धान्तः। प्रकृते च विधोः प्रतिकूलतोदयपदलब्धिरेवेति सर्वमंवदातम्।' इति।

**'किरणा हरिणाङ्कस्य दक्षिणश्च समीरणः ।**
**कान्तोत्सङ्गजुषां नूनं सर्वं एव सुधाकिरः ॥'**
**अत्र 'सुधाकिरः' इति क्विप्-क-प्रत्यययोः ।**

किं चात्र बहुवचनैकवचनयोरैकरूप्याद्वचनश्लेषोऽपि ।

---

## विवृति

प्रत्ययश्लेषमुदाहरति—**किरणा इति** । **क्विप्-क-प्रत्यययोरिति** । श्लेष इत्यनुषङ्गः । एवमग्रेऽपि । क इत्यप्रत्ययस्य संज्ञा । **वचनश्लेषोऽपीति** । सर्व इति, सुधाकिर इति च । अत्रादौ संधिवशादैकरूप्यम् ॥

## विवृतिपूर्तिः

**सुधाकिर इति** । सुधां किरन्तीति क्विपि प्रथमाबहुवचनम् । सुधां किरतीति कप्रत्यये प्रथमैकवचनम् ॥

## विज्ञप्रिया

प्रत्ययश्लेषमाह—**किरणा** इति । विभक्तिश्लेषस्य पृथगुपादानात् प्रत्ययोऽत्र विभक्तिभिन्नो बोध्यः । विभिन्नरूपप्रत्ययद्वयस्यैकरूप्यं तत्त्वम् । कान्तोत्सङ्गजुषां नारीणामित्यर्थः । अत्रैकवचनश्लेषोऽप्यस्तीत्यत्राह—**किञ्चेति** । वचनद्वयेऽपि ऐक्यरूप्यं तत्त्वम् । अत्र किरणा इति बहुवचनान्तम् । समीरण इति एकवचनान्तम् । उभयत्रैव सर्व इति किर इति च । अत्र च सर्व इत्यत्र प्रत्ययश्लेषं विना वचनश्लेष एव । 'दोषयुक्तः पदादर्थ' इत्यत्र तु वचनश्लेषं विना प्रत्ययश्लेष एवेत्यतः पृथक् श्लेषद्वयम् । अत्र हि दोषयुक्त इत्यस्य पदादित्यत्रन्वये पञ्चम्यास्तसिप्रत्ययः । अर्थ इत्यन्वये तु कृप्रत्यये उभयत्र एकवचनम् ।

## लोचन

यद्वा "सोऽयमिषोरिव दीर्घदीर्घतरो व्यापार" इति मताश्रयणाद् वेणुरूपार्थवंशशब्दस्यान्वयरूपार्थवंशशब्देन एकाकारत्वादभेदोपचाराद् व्यङ्ग्यस्य वेणुरूपार्थस्य विधेयत्वाद् मुख्यार्थत्वमिति । श्लेषादित्यस्य वर्णेत्यादौ प्रत्येकमन्वयः । तेन वर्णयोः श्लेषात् प्रत्ययोः श्लेषादित्यादि ।

विधौ चन्द्रे, विधातरि वा । कराः किरणाः, हस्ताश्च ।

सर्व एव इत्यत्र सर्वशब्दो बहुवचनान्तः, एकवचनान्तश्च । तेन सुधाकिरः इत्यस्य बहुवचनान्तस्य विशेषणत्वे विक्षेपार्थात् कृधातोः क्विप्प्रत्ययः । एकवचनान्तस्य तु कप्रत्ययः ।

## कुसुमप्रतिमा

प्रत्ययश्लेषं दर्शयति किरणा इति । हरिणाङ्कस्य शशाङ्कस्य किरणाः, दक्षिणो दक्षिणाया दिश आगतः, समीरणां वायुश्च एवं सर्व एव, कान्तानां प्रेयसां प्रेयसीनां वा उत्सङ्गानङ्गान् जुषन्ते सेवन्त इति तासां प्रेयसीनां तेषां प्रेयसां वा नूनं निश्चितं सुधाकिरः अमृतवर्षकश्च ।

अत्रेति । क्विप् क प्रत्यययोः श्लेष इत्यनुषज्यते । तथा च किरणा इत्यनेनान्वये सुधां किरन्तीति सुधाधिरः, "कृ विक्षेपे" इति कृधातोः "क्विप् च" इति क्विप्प्रत्ययान्तात् प्रथमाया बहुवचनम् । समीरण इत्यनेनान्वये तु सुधा किरतीति सुधाकिरः, तस्मादै वकृधातोः "नाभ्युपध प्री कृ-गृ-ज्ञां कः" इति कप्रत्ययान्तात् प्रथमाया एकवचनमिति भावः ।

किञ्चेति । अपि चेत्यर्थः । अत्र "सर्व एव" इत्यत्र 'सुधाकिरः' इत्यत्र च । अपि च 'कान्तोत्सङ्गजुषाम् इत्यत्र स्त्रीपुलिङ्गयोरैकरूपात् लिङ्गश्लेषोऽपि द्रष्टव्यः । तथापि तु क्विप् क प्रत्यययोः श्लेषेणैव वैचित्रया तेशयजननादत्र प्रत्ययश्लेषत्वेनैव व्यपदेश इत्याशयः ।

## विमला

प्रत्ययश्लेषमुदाहरति, किरणा इति ।—हरिणाङ्कस्य—चन्द्रस्य, किरणाः,—अंशवः, दक्षिणः,—दक्षिणाशाभवः, समीरणः,—पवनश्च, सर्व एव ननं—निश्चितं, कान्तोत्सङ्गजुषां—कान्तक्रोडस्थितानां कान्तानां, कान्ताक्रोडस्थितानां कान्तानाञ्च, सुधाकिरः,—अमृतवर्षिणः, पक्षे—अमृतवर्षौ चेत्यर्थः । अत्र सुधां किरन्तीति क्विपि सुधाकिर्शब्दस्य प्रथमाबहुवचने, तथा सुधां किरतीति कप्रत्यये सुधाकिरशब्दस्य प्रथमकवचने च सुधाकिर इति पदस्य, तथा किरणविशेणत्वे समीरणविशेषणत्वे च "सर्वे" "सर्वः" इति च पदस्य प्रत्ययवचनाभ्यामुभयथा सिद्धत्वात् अनेकार्थाभिधायित्व बोध्यम् ।

अत्र सुधाकिर इति ।—क्विप्रत्ययः कप्रत्यययोरिति, श्लेषः इत्यनुषङ्गः, एवमग्रेऽपि । किञ्चात्र "कान्तोत्सङ्गजुषाम्" इति लिङ्गश्लेषाऽपि बोद्धव्यः । वचनश्लेषोऽपीति ।—"सर्वः" इति, "सुधाकिरः" इति च, इत्यादौ सन्धिवशादैकरूप्यं ज्ञेयम् ।

## लक्ष्मी

एवं वर्णमात्रश्लेषं दर्शयित्वा प्रत्यययोर्वचनयोश्चैकत्रैव श्लेषं दर्शयति—'किरणा' इति । हरिणाङ्कस्य मृगचिन्हस्य चन्द्रमस इति यावत् 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः, किरणा रश्मयः, दक्षिणो दक्षिणाया दिश आगत समीरणो वायुश्च, 'समीरणः स्यात् पवने पथिके च फणिज्जके' इति मेदिनी, एवं सर्व एव, कान्तानां प्रेयसां प्रेयसीनां वा उत्सङ्गान् क्रोडान् जुषन्तीति तेषां प्रेयसां तासां प्रेयसीनां वा, नूनं निश्चितम्, सुधाममृतं किरतीति वा अमृतवर्षकः अमृतवर्षिका च । श्लोकश्छन्दः ।

प्रत्यययोर्वचनयोश्च युगपत् श्लेषमुपपादयति—अत्रेति । उक्तोदाहरण इत्यर्थः । क्विप्-क-प्रत्यययोः श्लेष इति पूर्वतोऽनुषञ्जनीयम् । अथ च 'किरणा' इत्यनेन सम्बन्धाय सुधां किरन्तीति सुधाकिरः 'कृ विक्षेपे' इत्यस्मात् 'अन्येभ्योऽपि दृश्यते' इति पा० सूत्रेण क्विप् 'ऋत इद्धातोः' इत्यनेनेत्वे सति प्रथमायां बहुवचने रूपम् । 'समीरणः' इत्यनेन सम्बन्धाय तु सुधां किरतीति सुधाकिरः तस्मादेव कृन्धातोः 'इगुपधज्ञाप्रीकिरः क' इति पाणनिसूत्रेण कप्रत्ययान्तात् प्रथमाया एकवचने रूपमित्याशयः ।

किञ्चेति । अपि चेत्यर्थः । अथ 'सर्व एव' इत्यत्र सुधाकिर इत्यत्र च । यद्यपि 'कान्तोत्सङ्गजुषाम्' इत्यत्र स्त्रीलिङ्गयोः समानरूपत्वात् लिङ्गश्लेषस्तथापि क्विप्कप्रत्यययोः श्लेषस्यैव चमत्कारातिशयाधायकत्वात् प्रत्ययश्लेषत्वेनैव व्यवहार इति भावः ।

## रुचिरा

एवं वर्णमात्रश्लेषमुदाहृत्य प्रत्यययोर्वचनयोश्चैकत्रैव श्लेषमुदाहरति—**'किरणाः...'** इत्यादिना।

**'हरिणाङ्कस्य** मृगाङ्कस्य चन्द्रमस इति यावत्। 'ग्लौर्मृगाङ्कः कलानिधिः।' इत्यमरः। किरणः। च तथा। दक्षिणो दक्षिणदेशतः प्रत्यावर्त्तमान इति भावः। समीरणो वायुः। 'समीरणः स्यात् पवने पथिके च फणिज्जके।' इति मेदिनी। इत्येवम्—**सर्वे, सर्वः** इति वा। **एव। नूनम्। कान्तोत्सङ्गजुषां** कान्तानामुत्सङ्गः क्रोडं, तं जुषन्तीति तासां तेषां वेति तथोक्तानाम्। सुधाकिरः सुधाममृतं किरन्तीति, किरतीति वेति तथोक्ताः। अत्र श्लोकश्छन्दः। लक्षणं चोक्तं प्राक्॥ ७६॥'

अत्र प्रत्यययोर्वचनयोश्च युगपत् श्लेषं दर्शयति—अत्रास्मिन्नुदाहृते पद्य इति भावः। **'सुधाकिरः'** इत्य'त्रे'ति शेषः। **क्विप्-कप्रत्यययोः** 'श्लेषः' इति शेषः। तथा च—एकत्र बहुवचनम्, अन्यत्रैकवचनमित्येवं वचनयोरपि श्लेष इत्याह—**किञ्च। अत्र** 'सुधाकिर' इत्यत्र। बहुवचनैकवचनयोर्बहुवचनस्यैकवचनस्य चेत्यर्थः। 'विजातीययोरपी'ति शेषः। ऐकरूप्यादेकरूपत्वात्कारणात्। **वचनश्लेषो** वचनयोर्बहुवचनैकवचनयोः श्लेष इति तथोक्तः। अपि। इदमिह समुच्चये। अत्रायम्भावः—'सुधाकिर' इत्यत्र 'सुधां किरन्ती' त्येवं व्युत्पत्तौ 'अन्येभ्योऽपि दृश्यते।' ३/२/१७८ इति क्विप्। 'ऋत इद्धातोः।' ७/१/११० इतीत्। अथ 'सुधां किरति' इति व्युत्पत्तौ 'इगुपधज्ञाप्रीकिरः कः।' ३/१/१३६ इति कः। पूर्वत्र-जस्, परत्र पुनः सुः। एवं विभिन्नयोरपि 'क्विपाक' प्रत्यययोस्तदनुगतयोर्बहुवचनैकवचनयोश्च समानरूपत्वेन श्लेषः। असौ च 'सर्व एव' इत्यत्र संहितामहिम्ना संपन्नमूर्त्तिः। तथा च—कान्तोत्सङ्गजुषां सर्वे हरिणाङ्कस्य किरणाः सुधाकिर एव, सर्वो दक्षिणः (मलयगिरितः प्रत्यावर्त्तमानः) समीरणश्च सुधाकिर एवेति निष्कृष्टम्। एवम्-कान्तानां सुन्दरीणामुत्सङ्गजुषः। सुन्दर्य्यः, कान्तानां सुन्दरीणां वोत्सङ्गजुषः सुन्दराः, इत्येवं पूर्वत्र परत्र च क्रमेण पुंस्त्वस्त्रीत्वयोः, स्त्रीनपुंस्त्वयोरैक्याच्छेषः। इति। यथा वा, मम क्रमेण-'अयि दयिते! तव वदनं न नयति कमलं मुदं कुमुद्वन्तम्। अमृतभृतो ननु महिमा तस्मादपरस्य नो विदितः॥' अस्य चायमर्थः-अयि दयिते! तव वदनं कं कुमुद्वन्तं (कोर्मुदिति, साऽस्यास्तीति तम्) मुदमलं न नयति, यद्वा—कमलं मुदं न नयति, किन्तु कुमुद्वन्तं कुमुदप्रायं देशम्। कुत इत्याह—तस्माद्वदनादितरस्यामृतभृतो महिमा नो विदितः॥' यद्वा-तस्मादमृतभृतो वदनेन्दोरित्यर्थः, अपरस्य (चन्द्रमसः) महिमा नोऽस्माकमविदितः, यद्वा—तस्मादपरस्यामृतभृतोऽमृतेन पूर्णो महिमा, नो नैव विदितः, यद्वा-तस्मात् कारणात् अपरस्य सर्वोत्कृष्टस्य (न परो महितो यस्मात्तस्य) तस्य महिमाऽमृतेन भृत, इति नोऽस्माकं विदितः॥' इति। अत्र हि महिमविशेषणत्वेऽमृतभृत इत्यत्र क्तः, अपरस्य तस्मादित्यस्य वा विशेष'णत्वे पुनः क्विप्, इत्येवं क्त—क्विपोः श्लेषः, तथा—प्रथमापञ्चमी-षष्ठीनां विभक्तीनां श्लेषः। 'कमल'मित्यत्र पदयोरपीति 'न तथा त्वन्मुखसुषमा कला यथेन्दोर्ददत्यहो मोदम्। एषा दयिते! सततं तावद् यत् केवलं नक्तम्॥' इत्यत्र 'यथेन्दोः कला मोदं ददति, तथा त्वन्मुखसुषमा न मोदं ददती' इत्येवं बहुवचनैकवचनयोः श्लेषः।

**'विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी।**
**तव दत्तां सदामोदं लसत्तरलहारिणी॥'**

अत्र नपुंसकस्त्रीलिङ्गयोः श्लेषो वचनश्लेषोऽपि।

---

## विवृति

लिङ्गश्लेषमुदाहरति—**विकसदिति**। 'दत्ताम्' इति दाधातोः परस्मैपदद्विवचनात्मनेपदैकवचनयोरपि श्लेषः। आमोदमानन्दम्। अथ च नीलाब्जयोः सौरभदानं संभवति। नेत्रपक्षे—लसन्ती च तरले च हारिणी च मनोहरे चेति विग्रहः। स्तनद्वयीपक्षे— लसंस्तरलो हारमध्यगो मणिर्यत्र, सा चासौ हारिणी चेति विग्रहः। यद्वा लसंस्तरलो यत्र, एवंभूतो हारो यत्रास्ति। कर्मधारयोत्तरमतुब्निषेधस्य प्रायिकत्वादेतत्साधुवचनम्। श्लेषोऽपीत्य-पिना णिन्प्रत्ययस्य च श्लेषः॥

## विवृतिपूर्तिः

**दत्तामिति**। विकसन्नेत्रनीलाब्ज इत्यस्य कर्तृत्वे दत्तामिति लोटि परस्मैपदद्विवचनम्, स्तनद्वयीत्यस्य कर्तृत्वे त्वात्मनेपदैकवचनमिति बोध्यम्॥

## विज्ञप्रिया

लिङ्गश्लेषमाह—**विकसदित्यादि**। लिङ्गद्वयेऽप्यैकरूप्यं तत्त्वम्। तन्व्या विकसन्ती नेत्रनीलाब्जे स्तन-द्वयी च तव मोदं सदा दत्ताम्। उभयोर्विशेषणमाह—**लसदिति**। नेत्रपक्षे—लसन्ती ते तरले चेति समासे। तादृशी च ते हारिणी मनोहारिणी। लसन् तरलः हारमध्यगः मणिर्यस्य तादृशहारवती स्तनद्वयी। अत्रापि वचनश्लेषसङ्क-रमाह—**अत्र चेति**। अत्रापीत्यर्थः। अत्र लिङ्गेश्लेषं विना दत्तामित्यत्र वचनश्लेषः। वचनश्लेषं विना लिङ्गश्लेषस्तु "हरिस्तन्नाम चाघनुत्" इति। अत्र हरिस्तन्नाम्नो लिङ्गभेदेऽपि अघनुदित्यैकरूप्यम्। वचनं तु अभिन्नम्।

## लोचन

**दत्तामिति**—दाधातोः परस्मैपदे द्विवचनान्तः। आत्मनेपदे चैकवचनान्तः। लसत् तरलहारिणीति पदं नेत्रनीलाब्जविशेषणत्वे द्विवचनान्तं स्तनद्वय्यास्त्वेकवचनान्तं स्त्रीलिङ्गम्। वचनश्लेषोऽपीत्यपिशब्दात् न केवलं लिङ्गश्लेषमात्रमित्यर्थः।

## कुसुमप्रतिमा

लिङ्गश्लेषमाह विकसदिति। तन्वी कृशाङ्गी तस्याः, विकसन्नेत्रनीलाब्जे इत्यस्य विशेषणपक्षे लसन्ती प्रकाशमाने तरले चञ्चले हारिणी सुन्दरे चेति लसत्तरलहारिणी, द्वयोर्द्वयोः पदयोः क्रमात् कर्म्मधारयः, ततश्च क्लीवलिङ्गे प्रथमाया द्विवचनम्। स्तनद्वयी इत्यस्य विशेषणपक्षे तु लसन् शोभमानः तरलो मध्यमणिर्यस्य स तथोक्ता हारो मुक्तामाला अस्या अस्तीति लसत्तरलहारिणी। "तरलो हारमध्यगः" इत्यमरः। विकसन्ती प्रकाश-माने नेत्रे चक्षुषी एव नीलाब्जे नीलपद्मयुगलम्, तथा स्तनद्वयी कुचयुगलञ्च, सदा तव आमोदमानन्दं दत्तां वितरतां

वितरतु च । विकसदित्यादिना अन्वयकाले दत्तामिति दाधातोर्लोटः परस्मैपदद्विवचनम्, स्तनद्वयी इत्यनेनान्वयकाले तु दत्तामिति दाधातोर्लोट आत्मनेपदस्यैकवचनम्, दाधातोरुभयपदित्वात् ।

ननु स्तनद्वयीविशेषणपक्षे लसत्तरलहारिणीय कथं मत्वर्यीय इन्प्रत्ययः "न कर्म्मधारयान्मत्वर्थीयो बहुब्रीहिश्चेदर्थप्रतिपत्तिकरः" इत्यनेन निषेधादिति चेन्न, अत्र प्रशंसाये इन्प्रत्ययविधानात् तदर्थस्य तु बहुब्रीहिणा प्रतिपादयितुमशक्त्यत्वात् । अतएव तु "बहुब्रीहिश्चेदर्थप्रतिपत्तिकरः" इत्यभिहतम् । तेन संसर्ङ्गार्थ एवायं मत्वर्थीयप्रत्ययनिषेधः पर्य्यवसित इत्यवधेयम् ।

अत्रेति । उक्तरीत्या नपुंसकस्त्रीलिङ्गयोः श्लेषः 'लसत्तरलहारिणी' इत्यत्र, वचनश्लेषस्तु 'दत्ताम्' 'लसत्तरलहारिणी' इत्युभयत्र, अपिशब्दात् 'हारिणी' इत्यत्र णिन्नेप्रत्ययस्य च श्लेषात् प्रत्ययश्लेषाऽप्युयः । तथापि तु लिङ्गश्लेषस्यैव वैचित्रयातिशयजननात् लिङ्गश्लेषत्वेनैव व्यपदेश इति भावः ।

## विमला

लिङ्गश्लेषमुदाहरति, विकसदिति ।—तन्वाः,—कृशाङ्गाः, लसत्तरलहारिणी विकसन्नेत्रे एव नीलाब्जे—नीलपङ्कजे, तथा स्तनयोः द्वयौ तव सदा आमोदं—प्रेममोदं, सौरभं वा, (नीलाब्जयोः सौरभदानं सम्भवति) दत्ताम् । अत्र "दत्ताम्" इति कियापदं "विकसन्नेचनीलाब्जे" इत्यनेन यदा अन्वेति, तदा "दा" धातोः लोट्परस्मैपदप्रथमपुरुषद्विवचनान्तता, यद्वा "स्तनद्वयी" इत्यनेनान्वेति, तदालोट् आत्मनेपदप्रथमपुरुषैकवचनान्तता, तस्मादस्य अनेकार्थत्वम् । तथा "लसत्तरलहारिणी" इति पदं यदा "विकसन्नेत्रनीलाब्जे" इत्यस्य विशेषणं, तदा लसन्ती च तरले च हारिणी च—मनोहरे च इति विग्रहेण क्लीवलिङ्गद्विवचनान्तता, यदा "स्तनद्वयौ" इत्यस्य विशेषणं, तदा लसंस्तरलः,—हारमध्यगोः मणिः यत्र ("तरलो हारमध्यमः" इत्यमरः) सा चासौ हारिणी चेति विग्रहेण स्त्रीलिङ्गैकवचनान्तता, यद्वा—लसंस्तरलो यत्र एवम्भूतो हारो यत्रास्ति; [अत्र बहुब्रीहिसमासेन अर्थप्रतिपत्तिसम्भवेन कर्मधारयोत्तरेन्प्रत्ययस्य "न कर्मधारयात् मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इत्यनुशासनेन असाधुत्वेऽपि "भूम-निन्दा प्रशंसासु—" इत्यादिनियमेन अतिरिक्तस्य नित्यत्रोगार्थस्य विवक्षितत्वान्न कोऽपि दोषः इति विचार्य्यम्,] इत्यनयोः क्रियापदः विशेषणपदयोरनेकार्थाभिधायित्वामवधेयम् । एवम् अत्र वचनयो लिङ्गयोश्च श्लेषः ।

अत्रेति ।—श्लेषोऽपीत्यपिना णिन्प्रत्ययस्य इन्प्रत्ययस्य च श्लेष इति ज्ञेयम् ।

## लक्ष्मी

क्रमप्राप्तं लिङ्गश्लेषमुदाहरति—विकसदिति । तन्वी कृशाङ्गी तस्याः, अत्र 'लसत्तरलहारिणी' इति पदं 'विकसन्नेत्रनिलाब्जे' इत्यस्य विशेषणे सति लसन्ती प्रकाशमाने तरले चञ्चले हारिणी मनोज्ञे चेति द्वयोर्द्वयोः पदयोर्यथाक्रमं कर्म्मधारयः । ततश्च नपुंसकलिङ्गस्य प्रथमाविभक्तेर्द्विवचनम् । स्तनद्वयीत्यस्य विशेषणे संति तु लसन् शोभमानः तरलो हारमध्यगो मणिर्यस्य स तादृशो हारो मुक्तामाला अस्या अस्तीति लसत्तरलहारिणी एकवचनान्तं स्त्रीलिङ्गम् । 'तरलो हारमध्यगः' इत्यमरः । न चात्र 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इत्यनेन निषेधात् कथम् इन्प्रत्यय इति वाच्यम्, अत्र प्रशंसार्थे इन्विधानात् तत्र बहुव्रीहिणा तदर्थस्याप्रतिपादनेन तन्निषेधाप्राप्तेः । विकसन्ती द्योतयन्ती नेत्रे लोचने एव नीलाब्जे नीलकमलयुगलम्, तथा स्तनद्वयी कुचयुगलञ्च, सदा तव आमोदम् आनन्दं दत्तां दधातां दद्याच्च आशिषि लोट् । दा धातोरुभयपदित्वेन विकसदि-

त्यादिना सम्बन्धसमये दत्तामिति आशिषि लोटः परस्मैपदद्विवचनम्, स्तनद्वयीत्यनेन सम्बन्धसमये तु दत्तामिति दाधातोरेव आशिषि लोटः आत्मनेपदस्यैकवचनमित्यवगन्तव्यम्।

अत्रेति। उक्तोदाहरणे दर्शितदिशा 'लसत्तरलहारिणीत्यत्र' नपुंसकस्त्रीलिङ्गयोः श्लेषः वचनश्लेषोऽपीति। केवलं लिङ्गश्लेषमात्रं किन्तु वचनयोर्द्विवचनैकवचनयोरपि श्लेषः। तथा च ददातेः परस्मैपदे लोटो द्विवचनान्तत्वम्, आत्मनेपदे पुनरेकवचनान्तत्वमिति तथा लसत्तरलहारिणीत्यत्र विकसदित्यादेः स्तनद्वयीत्यस्य च विशेषणत्वे द्विवचनैकवचनान्तत्वमिति भावः। लिङ्गश्लेषत्वेन व्यवहारस्तु तस्यैव वैचित्र्यातिशयोत्पादनादित्याशयः। वचनश्लेषं विना लिङ्गश्लेषस्तु 'हरिस्तन्नाम चाघनुत्' इति। अत्र हरिस्तन्नाम्नो लिङ्गभेदेऽपि अघनुदित्येकरूप्यं वचनं अभिन्नम्।

## रुचिरा

अथ क्रमप्राप्तं लिङ्गश्लेषमुदाहरति—**'विकसन्नेत्रनीलाब्जे'**इत्यादिना।

**'लसत्तरलहारिणी** लसन्ती च तरले च हारिणी चेति, लसंस्तरलो हारमध्यगो मणिर्यत्र, सा चासौ हारिणीति वा तथोक्ता। तर्कवागीशस्त्वेवमपि व्याचक्षते—'यद्वा—लसंस्तरलो यत्र एवंभूतो हारो यत्रास्ति (तथोक्ता)। कर्मधारयोत्तरमतुनिषेधस्य प्रायिकत्वादेतत्साधुवचनम्।' इति। तन्व्याः दयितायाः। विकसन्नेत्रनीलाब्जे विकसन्ती एव तत्र नीलाब्जे इति तथोक्ते **तथा। स्तनद्वयी। तव। सदा। आमोदम्** आनन्दम्। दत्तां दद्याद्द्यातां वा। आशिषि लोट्॥ ७७॥'

अत्रास्मिन्नुदाहृते पद्ये इति भावः। **नपुंसकस्त्रीलिङ्गयोः** 'लसत्तरलहारिणी' इति नपुंसके प्रथमाया द्विवचनम्, स्त्रीलिङ्गे प्रथमाया एकवचनं, तस्मात्-विकसन्नेत्रनीलाब्जयोः स्तनद्वय्याश्च विशेषणत्वे समानरूपत्वात् क्लीबस्त्रीलिङ्गयोः श्लेषः। तथा-**वचनश्लेषो** वचनयोर्द्विवचनैकवचनयोः श्लेष इत्यर्थः। 'हारिणी' इत्यस्य नीलाब्जविशेषणत्वे क्लीवे प्रथमाया द्विवचनान्तत्वं, 'द्वयी' त्यस्य विशेषणत्वे स्त्रीलिङ्गे एकवचनान्तत्वं च, तथा ददातेः परस्मैपदे लोटो द्विवचनान्तत्वम्, आत्मनेपदे लोटः पुनरेकवचनान्तत्वम्, इत्यनयोः श्लेष इति भावः। अपि'ज्ञेय' इति शेषः। तर्कवागीशास्त्वाहुः—'अपिना' 'णिन्' प्रत्ययस्य 'इन्' प्रत्ययस्य च श्लेषः।' इति। यथा वा—'भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी, ध्यानालम्बनतां समाधिनिरतैर्नीतेहिताप्राप्तये। लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः॥' अत्रापि नेत्रयोर्विशेषणत्वे 'प्रणयिनी' इत्यादीनां क्लीबे प्रथमाद्विवचनान्तत्वम्, तथा-तन्वीविशेषणत्वे स्त्रियामेकवचनान्तत्वम्, इति लिङ्गवचनश्लेषः।

**'अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।**

**सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥'**

अत्र 'वक्ष्यति' इति वहि-वच्योः, 'सामर्थ्यकृत्' इति कृन्तति-करोत्योः प्रकृत्योः ।

---

## विवृति

प्रकृतिश्लेषमुदाहरति—**अयमिति** । राजपुत्रे जाते ज्योतिर्विदो वचनमेतत् । हृदि वक्ष्यतीति वह धातुः । ज्ञेषु पण्डितेषु वक्ष्यतीति वचधातुः । अमित्राणां सामर्थ्यच्छेत्ता, मित्राणां सामर्थ्यस्य कर्ता ॥

## विवृतिपूर्तिः

**वक्ष्यतीति** । धारयिष्यति, कथयिष्यतीति यथाक्रमं योजना ॥

**सामर्थ्येति** । सामर्थ्य कृन्ततीति करोतीति यथायोगमनुसंधेयम् ॥

## विज्ञप्रिया

प्रकृतिश्लेषमाह—**अयमिति** । राजपुत्रे जाते ज्योतिर्विद् उक्तिरियम् । हृदि वक्ष्यतीत्यन्वयः । ज्ञेषु पण्डितेषु शास्त्राणि वक्ष्यति कथयिष्यति । अमित्राणां सामर्थ्यस्य छेत्ता । मित्राणां सामर्थ्यस्य कर्त्ता जनकः ।

## लोचन

**वहिवच्योरिति**—हृदोऽधिकरणत्वे वहिधातुर्ज्ञानार्थवाची । सामर्थ्यकृत् चामित्रसम्बन्धित्वे छेदनार्थः कृन्तति इति धातोः मित्रसम्बन्धित्वे करणार्थः । विभक्त्यभेदेऽपि प्रकृतिमात्रस्य भेदात् प्रकृतिश्लेष एव इत्यत आह—**प्रकृत्योरिति** ।

## कुसुमप्रतिमा

प्रकृतिश्लेषोदाहरणमाह अयमिति । अयं नृपात्मजः, हृदि स्वहृदये ज्ञेषु पण्डितसमाजेषु च, सर्वाणि शास्त्राणि वक्ष्यति धारयिष्यति कथयिष्यति चेति यथः संख्येनार्थः । तथा अभिन्नाणां विपक्षाणां मित्राणां स्वपचाणाञ्च सामर्थ्यङ्गत् प्रभावेण शक्तिनाशकारी साहाय्येन शक्तिकारी च भविष्यतीति शेषः । अत्रापि यथासंख्येनार्थः ।

अत्रेति । वहि-वच्योः प्रकृत्योरिति परेणान्वयः । प्रकृत्योः श्लेष इति पूर्वस्मादनुषज्यते । तथा च 'हृदि' इत्यनेनान्वये 'वक्ष्यति' इति वहधातोर्धृट्स्यतौ प्रयोगः, 'ज्ञेषु' इत्यमेनान्वये तु 'वक्ष्यति' इति वचधातोर्लृट्स्यतौ प्रयोगः । तथा अमित्राणामित्यनेनान्वये 'सामर्थ्यकृत्' सामर्थ्यं कृन्तति छिनत्ति नाशयतीत्यर्थे कृत्धातोः क्विपि प्रयोगः, मित्राणामित्यनेनान्वये तु 'सामर्थ्यकृत्' इति सामर्थ्यं करोतीत्यर्थे कृधातोः क्विपि प्रयोगः । एवञ्चात्र पदापेक्षया प्रकृतिश्लेषस्यैव वैचित्र्यातिशयजननात् प्रकृतिश्लेषत्वेनैव व्यपदेश इत्यभिप्रायः ।

## विमला

प्रकृतिश्लेषमुदाहरति, अयमिति ।—राजपुत्रे जाते ज्योतिर्विदो वचनमेतत् । अमित्राणां—शत्रूणां, सामर्थ्यकृत्—सामर्थ्यक्षयकरः, मित्राणां—सुहृदाञ्च, सामर्थ्यकृत्—सामर्थ्यकरश्च, अय नृपात्मजः—राजपुत्रः, हृदि—हृदये, ज्ञेषु—विद्वत्सु च, सर्वाणि शास्त्राणि वक्ष्यति—धारयिष्यति कथयिष्यति चेत्यर्थः; हृदि धारयिष्यति, ज्ञेषु कथयिष्यतीति यथासम्भवमन्वयः ।

अत्रेति ।—अत्र वक्ष्यतीति क्रियापदस्य हृदि इत्यनेन अन्वये "वह" धातुना, "ज्ञेषु" इत्यनेन अन्वये "वच" धातुना निष्पन्नस्य वहन-कथनोभयार्थत्वात् अनेकार्थाभिधायित्वम्; तथा सामर्थ्यं कृन्तति करोति वा इत्युभयंथा निष्पन्नस्य सामर्थ्यकृदिति पदस्य अनेकार्थाभिधायित्वं बोध्यम् ।

## लक्ष्मी

प्रकृतिश्लेषमुदाहरति—अयमिति । राजपुत्रे जाते जन्मग्रहान् जानतो ज्योतिर्विद उक्तिरियम् । अयं नृपात्मजो राजपुत्रः हृदि स्वचेतसि ज्ञेषु विद्वत्समाजेषु च 'ज्ञौ ब्रह्मबुधविद्वत्सु' इति मेदिनी, सर्वाणि अखिलानि व्याकरणादीनि शास्त्राणि (कर्म) वक्ष्यति प्रापयिष्यति कथयिष्यति चेति यथाक्रममर्थः । तथा अमित्राणां शत्रूणां मित्राणां सुहृदां च सामर्थ्यं कृन्तति करोतीति च सामर्थ्यकृत् प्रभावेण सामर्थ्यच्छेत्ता साहायेन सामर्थ्यकारकश्च भविष्यतीति शेषः । अत्रापि यथाक्रममर्थः ।

श्लेषमुपपादयति—अत्रेति । बहिवच्योः प्रकृत्योरित्युत्तरेण सम्बन्धः । प्रकृत्योः श्लेष इति पूर्वतोऽनुषङ्गः । कृन्ततिकरोत्योः 'कृतीछेदने 'डुकृञ्करणे इकस्तिपो धातुनिर्देशे' इति तिपानिद्देशे तथा च कृद्रूपाया कृद्रूपायाश्चेत्यर्थः । एवञ्चात्र 'हृदि' इत्यनेन सम्बन्धे 'वक्ष्यति' इति 'वह प्रापणे' इति प्रापणार्थकवहधातोलृटि स्ये तिपि 'कुहोश्चुः' इति पासूत्रेण चुत्वे 'आदेशप्रत्यययोः' इति पाणिनिसूत्रेण षत्वे प्रयोगः । 'ज्ञेषु' इत्यनेन सम्बन्धे तु 'वक्ष्यति' इति 'वच परिभाषणे' इत्यस्माद्धातोः लृट् स्यतौ प्रयोगः ।

तथा अमित्राणामित्यनेन सम्बन्धे सामर्थ्यकृत् इति उक्तार्थे सामर्थ्ये कर्मण्युपपदे कृतेः क्विपि तलोपे तुकि प्रयोगः, मित्राणामित्यनेन सम्बन्धे तु सामर्थ्ये कर्मण्युपपद एव कृञः क्विपि तुकि प्रयोगः । अथ च पुनर्विशेषः पूर्वत्र तिङ्प्रत्ययस्य, परत्र कृत्प्रत्ययस्य माहात्म्यम् । तथा चात्र पदापेक्षया प्रकृतिश्लेषस्यैव वैचित्र्यातिशयोत्पादनात् प्रकृतिश्लेषत्वेनैव व्यवहार इत्याशयः ।

## रुचिरा

अथ प्रकृतिश्लेषमुदाहरति—'अयं...' इत्यादिना ।

'**अयम्** । **नृपात्मजो** नृपस्यात्मजः । **अमित्राणां** शत्रूणाम् । **सामर्थ्यकृत्** सामर्थ्यं कृन्तीति तथोक्तः । च तथा । **मित्राणाम्** । 'सामर्थ्यकृत्' इति शेषः, सामर्थ्यं करोतीति तथोक्तः । तथा च-मित्रसम्बन्धिनः सामर्थ्यस्य विधातेति निष्कृष्टोऽर्थः । **सर्वाणि** सर्वविधानि व्याकरणादीनि । **शास्त्राणि** (कर्म) । हृदि मनसि । च तथा । **ज्ञेषु** विद्वत्सु तन्मध्य इति यावत् । वक्ष्यति प्रापयिष्यति, कथयिष्यतीति वा । अत्र नृपात्मजस्य कस्यापि जन्मग्रहान् जानतो दैवज्ञस्योक्तिः ॥ ७८ ॥'

अत्रास्मिन्नुदाहृते पद्ये इति भावः। **'वक्ष्यति' इति** 'अत्र' इति शेषः। **'वहि-वच्योः' 'सामर्थ्यकृत्'** इति। 'अत्रे'ति शेषः। **'कृन्तति-करोत्योः'** 'कृति'छेदने, 'डुकृञ्' करणे। 'इक्तिपौ धातुनिर्देशे।' इति तिपानिर्देशे, तथा च-कृद्रूपायाः कृरूपायाश्चेत्यर्थः। **प्रकृत्योः**। 'श्लेषः' इति शेषः।

इदमिह तत्त्वम्—'वक्ष्यते' इति 'वह' प्रापणे, 'वच्' परिभाषणे; इत्यस्माद्वा लृटि स्ये तिपि 'कुहोश्चुः।' ७/४/६२ इति चुत्वे सस्य च 'आदेशप्रत्यययोः।' ८/३/५९ इति षत्वे 'वह,-वच.' प्रकृत्योः, तथा—सामर्थ्ये कर्मण्युपपदे 'कृतेः' 'कृञो' वा क्विपि पूर्वत्र तल्लोपमात्रे परत्र 'ह्रस्वस्य पिति कृति तुक्।' ६/१/७१ इति तुकि सिद्धेः, तयोः प्रकृत्योः स्फुटः श्लेषः। इयान् पुनर्विशेषः—पूर्वत्र, तिङ्प्रत्ययस्य, परत्र कृत्प्रत्ययस्य माहात्म्यम्। इति।

'पृथुकार्तस्वरपात्रं—' इत्यादि (४३५ पृ.)। अत्र पदभङ्गे विभक्तिसमासयोरपि वैलक्षण्यात्पदश्लेषः, न तु प्रकृति श्लेषः। एवं च—

**'नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः।**

**सदृशे वनवृद्धानां कमलानां तदीक्षणे॥'**

अत्र लुब्धशिलीमुखादिशब्दानां श्लिष्टत्वेऽपि विभक्तेरभेदात्प्रकृतिश्लेषः। अन्यथा सर्वत्र पदश्लेषप्रसङ्गः।

---

## विवृति

पदश्लेषमुदाहरति—**पृथुकेति**। व्याख्यातमिदं दोषपरिच्छेदे। नन्वत्र प्रकृतिश्लेषोऽपि संभवतीत्यत आह—अत्र **पदभङ्गे** अर्थबोधनाय समस्तपदस्य पार्थक्ये। **विभक्ति**समासयोरपीत्यपिना प्रकृतेः संग्रहः। विभक्तिरत्र समासाङ्गम्॥ क्वचित्पदभङ्गाभावेऽपि प्रकृति विभक्तिवैलक्षण्येन पदश्लेषो यथा—'यस्य चेतः प्रियालोके तस्य स्मरकदर्थनम्।' अत्र यद्यसोस्ततसोः प्रकृत्योः सुप्तिङोर्विभक्त्योरपि वैलक्षण्यात्पदश्लेषः। **एवं च** प्रकृतिविभक्तिवैलक्षण्येन पदश्लेषाङ्गीकारे च॥ **नीतानामिति**। तस्या ईक्षणे कमलानां पद्मानां मृगविशेषाणां च सदृशे। 'मृगभेदेऽपि कमलः कमला श्रीवरस्त्रियोः' इति मेदिनी। कीदृशानाम्। लुब्धैर्मधुलुब्धैर्भूरिभिः शिलीमुखैर्भ्रमरैराकुलीभावं नीतानाम्। पक्षे—लुब्धैर्व्याधैर्बहुभिर्बाणैर्व्याकुलीभावं व्याकुलतां नीतानाम्। वने जले, विपिने च वृद्धानां प्राप्ताधिकरूपाणाम्। ईक्षणेऽपि, पद्मिनीमुखे पतद्भिर्भ्रमरैर्व्याकुलत्वं नीयेते॥ अन्यथा प्रकृतिभेदमात्रेणापि पदश्लेषाङ्गीकारे। सर्वत्र प्रकृतिश्लेषस्थले। एवं च पदश्लेषासंकीर्णं प्रकृतिश्लेषोदाहरणं न स्यादिति प्रकृतिश्लेषोच्छेदप्रसङ्ग इति भावः॥

## विवृतिपूर्तिः

**यस्येति**। यसो दैवादिकस्य तसश्च लोण्मध्यमपुरुषैकवचने यस्य तस्येति यत्तदोः षष्ठयेकवचनेऽपि। तदाह—अत्र यद्यसोरित्यादिना॥

## विज्ञप्रिया

पदश्लेषमाह—**पृथुकेति**। न्यूनाधिकवर्णयोः पदयोर्मिलनाद् अर्थद्वयेऽपि ऐक्यरूप्यं तत्त्वम्। पृथुकार्तेत्यादि व्याख्यातम्। अत्र प्रकृतिश्लेषत्वं निरस्यति **अत्र पदभङ्गे** इति। विभक्तेर्वैलक्षण्यमत्र समासे लुप्ताया बोध्यम्। यद्यपि न्यूनाधिकेत्यादिलक्षणवशादेव प्रकृतिश्लेषतो भेदसिद्धिस्तथापि प्रकारान्तरेणापि तत्सिद्धिर्दर्शिता। तथा चैतत्सकलवैलक्षण्यविशिष्टः पदश्लेषः। प्रकृतिमात्रवैलक्षण्ये तु प्रकृतिश्लेषः।

तन्मात्रवैलक्षण्ये प्रकृतिश्लेषमप्यत्राह—**एवं नीतानामिति**। मधुलुब्धैर्भ्रमरैर्नीलोत्पलभ्रमेणाकुलीकृतयोः नायिकायाः नेत्रयोः वर्णनमिदम्। अत्र कमलानामित्यत्र चार्थो गम्यः। तथा च वनेवृद्धानां वृद्धमृगाणां कमलानां च सदृशे तस्या लोचने। वनवृद्धकमलनायिकालोचनद्वयानां विशेषणमाह—**नीतानामिति**। भूरिशिलीमुखैरनेकबाणैः करणभूतैः लुब्धकैर्व्याधैः कर्तृभिराकुलीभावं नीता वनवृद्धाः मृगाः, लुब्धैर्मधुलुब्धैर्भूरिशिलीमुखैरनेकमधु-

करैराकुलीभावं नीतानि वने जले वृद्धानि कमलानि च। परं तु नीलोत्पलभ्रमान्नेत्रद्वयमिति विशेषः। 'अलिबाणौ शिलीमुखौ' इति कोषः। अत्र लुब्धशिलीमुखौ प्रकृती। **अन्यथेति**। न्यूनाधिक इत्यादिलक्षणाभावपक्षे इति बोध्यम्।

## लोचन

पृथुकेत्यादि व्याख्यातमेव सन्दिग्धत्वस्य क्वचिददोषकत्वकथनप्रस्तावे। **अत्रेति**। अयमर्थः। विभक्त्यादेरभिन्नत्वे हि प्रकृतिमात्रस्य भेदे प्रकृतिश्लेषत्वमेवोचितम्। इह तु विभक्तेः पृथ्वादिशब्देषु पृथुकादिशब्देषु च भिन्नतया पददोष एव। विभक्त्यादेरभेदेऽपि पदमात्रस्य भेदात्प्रकृतिश्लेष एव इत्याह।

**एवं चेति**। कमलशब्दस्य पदार्थत्वे लुब्धैर्लोभयुक्तैर्भूरिभिः शिलीमुखैर्भ्रमरैः। मृगविशेषार्थत्वे लुब्धैर्लुब्धकैर्भूरिभिः पूर्णभूतैः शिलीमुखैर्बाणैः वनं जलं काननं च। विभक्तेः प्रत्ययरूपायाः सर्वत्र वक्ष्यत्यादौ।

## कुसुमप्रतिमा

पदश्लेषं दर्शयति पृथ्विति। व्याख्यातपूर्वमिदं पद्यम्।

अत्र पृथुकार्त्तस्वरादिपदानामेव श्लेषेण वैचित्र्यातिशयजननात् पदश्लेषत्वेन व्यपदेशः।

ननु पृथुकार्त्तस्वरेत्यादौ पृथु-पृथुकादिशब्दानां प्रातिपदिकरूपप्रकृतित्वात् कथं न प्रकृतिश्लेष इत्याह अत्रेति। पदानां भङ्गे पृथुकार्त्तस्वर इत्यादौ 'पृथु' इत्यादिरूपेण पृथुकं इत्यादिरूपेण च विश्लेषणे, पृथूनि कार्त्तस्वरपात्राणि यस्मिन्निति राजपक्षे, पृथुकानामार्त्तस्वरस्य पात्रमिति दरिद्रपक्षे, इत्यादि रूपेण न केवलं पदानामेव वैलक्षण्यात् किन्तु विभक्तिसमासयोरपि वैलक्षण्यात् वैषम्यात्। तथा च यथासम्भव पदभङ्गे विभक्तिसमासयोर्वैलक्षण्ये च पदश्लेषः, तदवैलक्षण्ये तु प्रकृतिश्लेष इति भेद इत्याशयः।

एवञ्चति। यथासम्भवं पद विभक्ति-समासवैलक्षण्यस्थल एव पदश्लेषस्वीकारे चेत्यर्थः।

प्रकारान्तरेण प्रकृतिधमेवोदाहरति नीत्तानामिति। कस्याश्चिन्नायिकाया नयनधर्म्ममिदम्भूरयः प्रचुरः शिलीमुखः शरा येषां तैस्तादृशैः लुब्धेर्व्याधैः, आकुलीभावं भयविह्वलत्वं नीतानां प्रापिता नाम, वने कानने वृद्धानां वृद्धिं प्राप्तानाम्, कमलानां हरिणानां हरिणनयनानामित्यर्थः सदृशे तुल्ये तस्य नायिकाया ईक्षणे नयनद्वयम् वर्त्तत इति शेषः। पक्षान्तरे तु—लुब्धेर्मधुपानलोभिभिः, भूरिशिलीमुखे बहुतरेभ्रमरैः, आकुलीभावं व्याप्ततां नीतानां प्रापितानाम्, वने जल वृद्धानां वृद्धि प्राप्तानाम्, कमलान पद्मानां सदृशे तस्या नायिकाया ईक्षणे नयनद्वयम्।

"अलिवाणौ शिलीमुखौ" "वने सलिलकानने" "स्यात् कुरङ्गेऽपि कमलः" इति चामरः। लुब्धोभ्यर्थ लोलुपे च" इति गोपालः।

अत्रेति। आदिशब्देन वन कमलशब्दयोग्रहणम्। विभक्तेरभेदादेकादृशविभक्तेः। अन्यथा विभक्त्यादीनामभेदस्थलेऽपि पदश्लेषाङ्गीकारे, सर्वत्र वर्णादिश्लेषस्थलमात्रे पदश्लेषप्रसङ्गः। तथा व सति श्लेषस्य प्रकारान्तराङ्गीकारः प्राचामसङ्गत एव स्यादिति भावः।

## विमला

पदश्लेषमुदाहरति, पृथ्विति ।—व्याख्यातं प्राक् दोषपरिच्छेदे ६१३ पृष्ठे । अत्र "पृथुकार्त्तस्वरपात्रम् इत्यादिपदानामनेकार्थाभिधायित्वम् । नन्वत्र प्रकृतिश्लेषोऽपि सम्भवति इत्यत आह, अत्रेति ।—अत्र पदभङ्गे—अथर्धबोधनाय समस्तपदस्य पार्थक्ये, विभक्तिसमासयोरपीत्यपिना प्रकृतेः सङ्ग्रहः । विभक्तिरत्र समासाङ्गम् । क्वचित् पदभङ्गाभावेऽपि प्रकृतिविभक्तिवैलक्षण्येन पदश्लेषो यथा—"यस्य चेन्नः प्रियालोके तस्य स्मरकदर्थनम्" । अत्र यद्यसोः तत्तसोः प्रकृत्योःसुप्तिङोर्वभक्तयोरपि वैलक्षण्यात् पदश्लेषः; तथा हि—दैवादिकस्य यसः तसश्च लोट्मध्यमपुरुषैकवचने यस्य तस्येति सिद्धं, यत्तदोः षष्ठेयकवचनेऽपि तथा रूपम् इति सारः । एवञ्च—प्रकृतिविभक्तिवैलक्षण्येन पदश्लेषाङ्गीकारे च इत्यर्थः ।

नीतानामिति ।—भूरिशिलीमुखैः,—बहुबाणधारिभिः, लुब्धैः,—व्याधैः, अन्यत्र—भूरि—अत्यन्तं, लुब्धैः,—लोलुपैः, शिलीमुखैः,—भ्रमरैः, ("अलिवाणी शिलीमुखौ" इत्यमरः, "लुब्धो व्याधे लोलुपे च" इति गोपालः) आकुलीभावं—मर्दितावस्थां, नीतानां—प्राप्तानां, वनवृद्धानां—वने—कानने, अन्यत्र—जले, ("वने सलिलकानने" इत्यमरः) वृद्धानां—वृद्धिं प्राप्तानां, कमलानां—हरिणानां पद्मानाञ्च, ("स्यात् कुरङ्गेऽपि कमलः" इति "सहस्रपत्रं कमलम्' इति चामरः) सदृशे— समाने, तदोक्षणे—तस्याः,—कान्तायाः, ईक्षणे—नेत्रे, शोभेते इति शेषः ।

अत्रेति ।—अत्र प्रकृतिश्लेष इति परेणान्वयः । प्रकृतिरत्र प्रातिपादिकरूपा बोध्या । अन्यथा—प्रकृतिभेदमात्रेणापि पदश्लेषाङ्गीकोर सर्वत्र—प्रकृतिश्लेषस्थले; एवञ्च पदरलेषासंङ्कीर्णं प्रकृतिश्लेषोदाहरणं न स्यात् इति प्रकृतिश्लेषोच्छेदप्रसङ्गः इति भावः ।

## लक्ष्मी

पदश्लेषमुदाहरति—पृथुकार्तेति । व्याख्यातमिदं दोषपरिच्छेदे सन्दिग्धत्वस्य क्वचिददोषत्वकथनप्रस्तावे ।

अत्र पृथुकार्त्तस्वरादिपदानामेव श्लेषेण वैचित्र्यातिशयोत्पादनात् पदश्लेषत्वेनैव व्यवहारः ।

ननु पृथुकार्त्तस्वरेत्यादौ पृथु कार्त्तस्वरः पृथुक आर्तस्वरादिशब्दानां प्रातिपदिकरूपप्रकृतिश्लेषोऽपि सम्भवितुमर्हति तत्कथं न प्रकृतिश्लेष इत्यत आह—आत्रेति । पदानां भङ्गे अर्थबोधनाय समस्तपदस्य पार्थक्ये, तथा च 'पृथुकार्त्तस्वर' इत्यादौ 'पृथु-कार्त्त-स्वर' इत्यादिरूपेण 'पृथुक आर्त्तस्वर' इत्यादिरूपेण च पदानां विश्लेषणे इत्यर्थः, राजपक्षे 'पृथूनि कार्त्तस्वरपात्राणि यत्रे'त्येवंक्रमेण, याचकपक्षे—'पृथुकानामार्त्तस्वरस्य पात्र'मित्यादिक्रमेण च न केवलं पदानामेव वैलक्षण्यात् किन्तु बहुव्रीह्यादिसमासघटकप्रथमादिविभक्तेः बहुव्रीह्यादिसमासयोश्चापि वैलक्षण्यात् वैषम्यात् । यद्यपि न्यूनाधिकेत्यादिलक्षणवशादेव प्रकृतिश्लेषतो भेदसिद्धिस्तथापि प्रकारान्तरेणापि तत्सिद्धिर्दर्शिता । एवञ्च पदश्लेषो हि यथासम्भवपदभङ्गे विभक्तिसमासयोर्वैलक्षण्ये च ज्ञेयः, प्रकृतिश्लेषस्तु तदवैलक्षण्ये एवेत्यनयोर्भेद इत्यभिप्रायः ।

क्वचित्पदभङ्गाभावेऽपि प्रकृतिविभक्तिवैलक्षण्येन पदश्लेषो यथा—

**'यस्य चेतः प्रियालोके तस्य स्मरकदर्थनम् ।'**

अत्र यसो दैवादिकस्य तसश्च लोण्मध्यमपुरुषैकवचने यस्य तस्येति यत्तदोः षष्ठयेकवचनेऽपि वैलक्ष-ण्यात् पदश्लेषः ।

यथासम्भवं पदविभक्तिसमासवैलक्षण्य एव पदश्लेषः अन्यथा प्रकृतिश्लेष इति सिद्धे आह—एव-ञ्चेति । निर्दिष्टक्रमेण पदश्लेषस्वीकारे चेत्यर्थः ।

तन्मात्रवैलक्षण्ये प्रकृतिश्लेषमेवेत्युदाहरति—नीतानामिति । कस्याश्चिन्नायिकाया लोचनवर्णनेयम् । भूरयो बहुलाः शिलीमुखा बाणायेषां तैः तथोक्तैः, 'अलिबाणौ शिलीमुखौ' इत्यमरः, लुब्धैर्व्याधैः 'लुब्ध आका-ङ्क्षिणि व्याधे' इति हैमः, आकुलीभावं भयव्यग्रत्वं नीतानां प्रापितानाम्, वने कानने 'वने सलिलकानने' इत्यमरः, वृद्धानां वृद्धिं प्राप्तानां, कमलानां मृगाणां मृगलोचनानामित्यर्थः, 'कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे । मगभेदे तु कमलः' इति मेदिनी, सदृशे समाने समानसुन्दर इत्यर्थः तस्या नायिकाया ईक्षणे लोचनयुगलम्, विद्यत इति शेषः । पक्षान्तरे तु लुब्धैः सौरभेन लोभं प्राप्तैः भूरिशिलीमुखैर्बहुभिर्भ्रमरैः आकुलीभावं व्याप्ततां नीतानां प्रापितानाम्, वने सलिले वृद्धानां वृद्धिं प्राप्तानां, कमलानां जलजानां पद्मानामितियावत्, सदृशे तस्या नायिकाया ईक्षणे लोचनयुग-लम् ।

अत्रेति । आदिपदेन वनकमलशब्दयोः परिग्रहः । श्लिष्टत्वेऽपि नानार्थकतया सम्बद्धत्वेऽपीत्यर्थः । विभक्तेः समासस्य चेति शेषः । अभेदात् वैलक्षण्याभावात् । प्रकृतीनां लब्धादिरूपाणां श्लेषः । अन्यथा विभ-क्त्यादीनामभेदस्थलेऽपि पदश्लेषस्वीकारे सर्वत्र वर्णश्लेषस्थलमात्रे पदश्लेषप्रसङ्गः । एवञ्च पदश्लेषासङ्कीर्णं प्रकृतिश्लेषोदाहरणं न स्यादिति प्राचां प्रकारान्तरेण प्रकृतिश्लेषस्वीकारोच्छेदप्रसङ्गः स्यादिति भावः ।

## रुचिरा

अथ पदश्लेषमुदाहरति—'पृथुकार्त्ते'त्यादिना । व्याख्यातपूर्वमिदम् । अत्र दरिद्रस्य कस्यापि राजानं प्रति तदैश्वर्य्यप्रशंसनपूर्वं स्वदुःखनिवेदनार्थोक्तिः ॥ ७९ ॥

लक्ष्यं निर्दिशति—**अत्र । पदभङ्गे** पदानां "पृथु-कार्त्तस्वर..."इत्यादिरूपाणां 'पृथुक-आर्त्तस्वर...'इत्यादि-रूपाणां वा भङ्गस्तस्मिन् । विभक्तिसमासयोर्विभक्तिः समासघटकभूता, समासस्तत्पुरुषादिरूपस्तयोस्तथोक्त-योरित्यर्थः । अपि 'किं पुनः प्रकृतेः' इति शेषः । अत एव विवृतिकारा आहुः—'अपिना प्रकृतेः सङ्ग्रहः' इति । वैलक्ष्यणपाद भेदात् । **पदश्लेषः** । न । तु पुनः **प्रकृतिश्लेषः** । अयम्भावः—अत्र हि नरदेवसदनपक्षे-पदभङ्गे 'पृथूनि कार्त्तस्वरपात्राणि यत्रे'त्येवं क्रमेण 'पृथुकार्त्तस्वरपात्र' इत्यादिः प्रकृतिः बहुव्रीह्यादिसमासघटका प्रथमादिर्विभक्तिः, बहुव्रीह्यादिश्च समासोऽस्त्येव तथा । याचकपक्षे-'पृथुकानामार्त्तस्वरास्तेषां पात्रमधिकरणम्' इत्येवं क्रमेण— 'पृथुक-आर्त्तस्वर-पात्र' इत्यादिः प्रकृतिः, षष्ठ्यादिर्विभक्तिः, तत्पुरुषादिः समासः, इत्येवं प्रकृतिविभक्तिसमासानां विलक्षणतया पदानां श्लेषः, नतु प्रकृतीनाम्, समासे समासघटकत्वेन वा तत्तत्पदत्वानपायात् । इति ।

विभक्तिसमासवैलक्षण्ये एव पदश्लेषः, अन्यथा प्रकृतिश्लेषः, इत्याह—

एवं निर्दिष्टक्रमेण । च । 'लुब्धैर्व्याधैः, सौरभे लोभं प्राप्तैश्च । 'लुब्ध आकाङ्क्षिणि व्याधे' इति हेमचन्द्रः । शिलीमुखैर्बाणद्वारा, भ्रमरै (कर्त्तृभिः) श्च । 'अलिबाणौ शिलीमुखौ' इत्यमरः । भूर्य्यत्यन्तम् । **आकु-लीभावम् । नीतानाम्** । **वनवृद्धानां** वने विपिने जले वा वृद्धा (वृद्धिं गताः) वृद्धानि वा तेषाम् । 'वने सलिलकानने ।' इत्यमरः । **कमलानां** मृगाणाम्बुजानां वा । 'कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे । मृगभेदे तु कमलः' इति

मेदिनी । सदृशे समाने समानसुन्दरे इति यावत् । तदीक्षणे तस्या नायिकाया ईक्षणे नेत्रे इति तथोक्ते ॥ 'अत्रेत्यत्रे-त्यर्थः । '**लुब्धशिलीमुखादिशब्दानाम्** । **श्लिष्टत्वे** नानाऽर्थकतया सम्बद्धे त्वे इत्यर्थः । **अपि** । **विभक्तेः** 'समासस्य चे'ति शेषः । **अभेदाद्** वैलक्षण्याभावात् । **प्रकृतिश्लेषः** प्रकृतीनां लब्धादिरूपाणां श्लेषः । 'नतु पदश्लेषः, विभक्त्यादिवैलक्षण्य एव तत्स्वीकारादि'ति शेषः । अन्यथाऽनेवं स्वीकारेऽर्थभेदेन प्रकृतिभेदस्वीकारे इति यावत् । **सर्वत्र** प्रकृतिश्लेषस्थलेऽपीत्यर्थः । **पदश्लेषप्रसङ्गः** पदयोः श्लेषस्तस्य प्रसङ्गोऽति प्रसङ्ग इति भावः ।

**'सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः ।**
**नयोपकारसांमुख्यमायासि तनुवर्तनम् ॥'**

अत्र 'हर' इति पक्षे शिवसंबोधनमिति सुप् । पक्षे हृधातोस्तिङ्ित विभक्तेः । एवं 'भव' इत्यादौ ।

---

## विवृति

विभक्तिश्लेषमाह—**सर्वस्वमिति** । शिवं प्रति तद्भक्तस्य, पुत्रं प्रति दास्याश्चोक्तिरियम् । प्रथमे—हे हर, त्वं, सर्वस्य जनस्य सर्वस्वम्, भवस्य संसारस्य छेदतत्परश्च, नयस्योपकारस्य च सांमुख्यं यस्मात्तादृशं तनुवर्तनं शरीरवृत्तिमायासि । प्राप्नोषीत्यर्थः । द्वितीये—त्वं सर्वस्य सर्वस्वं हर । छेदे ध्वनिना मारणे तत्परो भव । उपकारसांमुख्यं नय अपनय । तद्विमुखो भवेत्यर्थः । आयासि परपीडाकारि वर्तनं जीवनोपायं तनु । विस्तारयेत्यर्थः ॥

## विज्ञप्रिया

विभक्तिश्लेषमाह—**सर्वस्वमिति** । सुप्तिङन्तत्वेन भेदेऽपि पदयोश्चैक्यरूप्यं तत्त्वम् । **सर्वस्वमिति** । शिवभक्तस्तं प्रति दस्योश्च पुत्रादिकं प्रति चोक्तिरियम् । हे हर ! त्वं सर्वस्य सर्वस्वम् । भवस्य उत्पत्तेश्छेदतत्परश्च मुक्तिदत्वात् । नयस्य नीतेः उपकारान्तरस्य साम्मुख्यं सम्भवो यस्मात् तादृशं तनुवर्त्तनं शरीरस्थितिम् आयासि आगच्छसि प्राप्नोषीति यावत् । दस्युपक्षे—त्वं सर्वस्य सर्वस्वं हर । छेदतत्परो भव । उपकारस्य साम्मुख्यमानुकूल्यं नय अपनय । आयासि परायासकारिवर्त्तनं तनु विस्तारय ।

## लोचन

**सर्वस्वमिति** । हे हर शम्भो ! त्वं सर्वस्य लोकस्य सर्वस्वं, त्वं किम्भूतः ? भवस्य संसारस्य छेदतत्परः । आयासि आयासयुक्तं तनोर्देहस्य वर्त्तनं वृत्तिमुपकारसाम्मुख्यं नय प्रापय । देहवृत्तिमायासरहितां कुर्विति भावः । पक्षे—त्वं सर्वस्य सर्वस्वं हर नाशय । छेदे खण्डने तत्परो भव । उपकारात् साम्मुख्यं नय उपकारं मा कुर्विति भावः । वर्त्तनं वृत्तिम् आयासि आयासयुक्तं तनु विस्तारय ।

## कुसुमप्रतिमा

विभक्तिश्लेषोदाहरणमाह सर्वस्वमिति । महेश्वरं प्रति तद्भक्तस्य, चौरं प्रति तन्मातृश्चोक्तिरियम् । हे हर ! महेश्वर ! त्वं सर्वस्य लोकस्य सर्वस्वं समग्रधनस्वरूपः, प्राणपणेनापि सर्वदैवोपास्थलाः दिति भावः । तथा त्वं मूर्धस्य त्वद्भक्तजनस्य भवच्छेदतत्परो जन्मबन्धुदूरीकरणपरायणः । तथा त्वम्, नयेन नीतेरुपदेशेन य उपकारस्तस्मिन् साम्मुख्यमुद्यमो यस्य तत्तश्रोक्तम्, तनुवर्त्तनं शङ्कराचार्य्यादिदेहधारणम् आयासि प्राप्नोषि । पक्षान्तरे तु—हे पुत्र ! त्वं सर्वस्य जनस्य सर्वस्वं समस्तमेव धनं हर अपहर, तत्र यदि कश्चित् तव प्रतिबन्धको भवेत्तदा तस्य केदतत्परः अङ्गप्रत्यङ्गादिच्छेदनप्रवृत्तोभव तथा आयामि परिश्रमविशिष्टम्, तनुवर्त्तनंः सन्धिद्वारादिना

परगृहे शरीरप्रवेशनम्, उपकारसाम्मुख्य परजनप्राप्ति रूपोपकाराय उपयोगिताम्, नय प्रापय, परकीयधनगृहणाय सन्धिद्वारेण भित्तिरन्धादिना वास्तिगृहे स्वशरीप्रवेशयेत्यर्थः । अत्र हरेत्यादी सर्वत्रैव विध्यर्थे लोट् ।

अत्रेति । पक्षे एकस्मिन्निति शेषः । पक्षे च अपरस्मिन्निति शेष । विभक्तः श्लेष इति पूर्वेणान्वयः । आदावित्यनेन 'नय' 'आयासि' इत्यनयोर्ग्रहणम् । तथा च 'भव' इति शिवपक्षे सम्बन्धिपदमिति नृप्, चौरपत्ते तु भुधातोस्तिङ् । एवमन्वयौरप्यूह्यम् ।

## विमला

विभक्तिश्लेषमुदाहरति, सर्वस्वमिति ।—प्रथमोक्तव्याख्यायां शिवं प्रति तद्भक्तस्य उक्तिः । हे हर ! त्वं सर्वस्य, जगतः इति शेषः, सर्वस्व—समस्तधनस्वरूपं, तथा भवस्य—संसारस्य, छेदे—खण्डने, तत्परः,—नित्यरतश्च, संसाराशेषदुःखध्वसणार्थी च सन्नित्यर्थः, नयेन—नीतिप्रदर्शनेन, यः उपकारः तस्मिन् साम्मुख्यम्—आनुकूल्यं यस्य तादृशं तनुवर्त्तनं—-शरीरधारणम्, आयासि—प्राप्नोषि, लोकहितार्थं जन्म परिगृह्णासीत्यर्थः । पक्षान्तरे तस्करं प्रति तन्मातुरुक्तिः । त्वं सर्वस्य, जनस्येति शेषः, सर्वस्व—सर्वधनं, हर—घोरय, तथा छेदतत्परो भव—प्रतिबन्धिनो विनाशय इत्यर्थः, आयासि—आयासयुक्तं क्लेशावहमित्यर्थः, तनुवर्त्तनं—क्षुद्रं जीवनोपायम्, उपकारसाम्मुख्य नय—प्रापय, अतिकष्टे स्थिता वयं, तत् त्वं चौर्य्यं कृत्वा यथा वयं सुखेन जीवामस्तथा कुरु इति भावः; यद्वा—उपकारसाम्मुख्यं नय—अपनय, तद्विमुखी भवेत्यर्थः, आयासि—परपीड़ाकारि, वर्त्तनं—जीवनोपायं, नक्षु—विस्तारयेत्यर्थः ।

## लक्ष्मी

विभक्तिश्लेषोदाहरणं दर्शयति—सर्वस्वमिति । शिवं प्रति तद्भक्तस्य पुत्रं प्रति चौरस्य चोक्तिरियम् । तत्राद्यपक्षे—हे हर ! शम्भो त्वं सर्वस्य लोकस्य सर्वस्वं सर्वं च तत् स्वं धनमैश्वर्यमिति यावत्;

'स्वो ज्ञातायात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः,

ईशावास्यमिदं सर्वं यत् किञ्चिज्जगत्यां जगत्' इति श्रुतिः तस्मात् त्वयैव प्रापणीयत्वेन सर्वदैवोपास्य इति भावः, तथा त्वं सर्वस्य त्वद्भक्तजनस्य भवस्य संसारस्य जन्ममरणरूपस्याविद्याकृतस्य प्रवाहस्य छेदो मुक्तिप्रदानेन ततो निवर्त्तनमुद्धारो वा तत्परस्तत्परायणः 'आमुक्तेः संसार' इति नियमात् मोक्षप्रदानेन जन्मादिबन्धदूरीकरणपरायण इत्यर्थः, तथा त्वं नयेन नीतेरुपदेशेन य उपकारो दुःखत्राणं तस्मिन् साम्मुख्यमानुकूल्यं यस्य तत्तथोक्तम्, तदनुवर्त्तनं शङ्कराचार्यादिदेहधारणम् आयासि प्राप्नोषीत्यर्थः ।

पक्षान्तरे तु-हे पुत्र ! त्वं सर्वस्य जनस्य सर्वस्वं ग्रामहिरण्यादिकं समस्तमेव धनं हर अपहर चोरयेत्यर्थः, तत्र कश्चिद्यदिप्रतिबन्धको भवेत्तदा तस्य छेदे भित्तेरङ्गप्रत्यङ्गादेश्च कर्त्तने ध्वनिना मारणे तत्परः प्रवृत्तो भव, तथा आयासि परेषाम् आयासदायकं क्लेशकारकं वर्त्तनं जीविकां तनु विस्तारय यद्वा आयासि परिश्रमविशिष्टम्, तनुवर्त्तनं सन्धिद्वारादिना अन्यगेहे शरीरप्रवेशनम्, उपकारसाम्मुख्यं प्रत्युपकारकरणं नय अपनय वा परधनप्राप्तिरूपोपकाराय उपयोगितां नय प्रापय, परकीयवित्तानयनाय सन्धिद्वारेण भित्तिरन्धादिना वा तद्गेहे स्वदेहं प्रवेशय इत्यर्थः ।

अत्रेति। 'हर' इति रूपमिति शेषः पक्षे एकस्मिन्निति शेषः। इति सुबिति। अस्माद्धेतोस्तदन्तर्गता 'सु'विभक्तिरित्यर्थः। पक्षे अपरस्मिन्निति शेषः। हृधातोरिति। हरणार्थकात् हृञ्धातोः, परस्माद्विधीयमानाया इति शेषः। तिङ्ति विभक्तेरिति। तिङन्तर्गतायाः लोटि सिपो विभक्तेः श्लेष इत्यर्थः। एवं यथाऽत्र सुप्तिङोः श्लेषस्तथा भव वेत्यत्रापीत्याशयेनाह—एवमिति। आदिपदेन नय आयासि तनु इत्येतेषां परिग्रहः। तथा च भवेत्यस्य शिवपक्षे सम्बोधनत्वेन चौरपक्षे क्रियापदत्वेन च सुप्तिङ्विभक्तित्वम्। एवमन्ययोरपि स्वयमेवोहनीयम्।

## रुचिरा

विभक्तिश्लेषमुदाहरति—**'सर्वस्वं...'** इत्यादिना।

'हे हर शङ्कर! **सर्वस्य** जगत इति शेषः। **सर्वस्वं** सर्वं च तत् स्वं धनमैश्वर्य्यमिति यावदिति तथोक्तम्। सर्वस्वभूत इति भावः। 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।' इत्यमरः। 'ईशावास्यमिदं सर्वं यत् किञ्चिज्जगत्यां जगत्।' इति श्रुतिः। **भवच्छेदतत्परो** भवस्य संसारस्य, जननमरणरूपस्याविद्याकृतस्य प्रवाहस्येति यावच्छेदो मुक्तिप्रदानेन ततो निवर्त्तनमुद्धारो वा तत्र तत्पर उद्यत इति तथोक्तः। मोक्षप्रद इति भावः। **त्वम्। नयोपकारसाम्मुख्यं** नयेन नीत्या नीतिपूर्वकाचारेणोपकार इह परत्र वाऽऽनन्दलाभस्साम्मुख्यमानुकूल्यं यस्मात्तत्। **तनुवर्त्तनं** तमोः शरीरस्य वर्त्तनं धारणमिति तथोक्तम्। आयासि प्राप्नोषि करोषीति यावत्। यद्वासर्वस्वं यत किञ्चिद् यस्यास्ति तत्सर्वम् हरापहर। नात्र काऽपि क्षतिः, 'यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम्। यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते॥' इत्याद्युक्तदिशा तथा तवानुग्रहोदयात्। इति भावः। किन्तु सर्वस्य लोकस्य। भवच्छेद-तत्परो मोक्षदाता। त्वम्। यद्वा सर्वस्य। छेदतत्परश्छेदे बन्धच्छेदे तत्पर इत्यर्थः। त्वम्। भव। 'छेदतत्परो बन्धच्छेदतत्परो' भव इत्युद्द्योतः। इति। अथ च-उपकारसाम्मुख्यम्। नयापनय। आयस्यायासस्तपश्चर्य्यादि-परिश्रमोऽस्मिन्नस्तीति तत्तथोक्तम्। वर्त्तनं जीवनम्। तनु विस्तारय। इति। यद्वा-भवच्छेदतत्परः। त्वम्। सर्वस्याविद्याविजृम्भितजातस्य। सर्वस्व त् किञ्चिदविद्याविजृम्भितं तत्सर्वम्। हरापहर। आयास्यायासो विवि-धदुरर्थेहया परमात्मोपासनातिरिक्तव्यापारविषयकः परिश्रमोऽस्यास्तीति तत्तथोक्तम्। तनुवर्त्तनं तनोः शरीरस्य वर्त्तनमवस्थानं, तनु क्षणिकं वा वर्त्तनं जीवनमिति तत्तथोक्तम्। उपकारसाम्मुख्यमुपकारस्यसाम्मुख्यमानुकूल्य-मिति तत् (प्रति)। नय। यद्वा—(दस्युपक्षे) त्वम्। सर्वस्वम्। हर। सर्वस्य दीनादीनस्य। छेदतत्परः। भव। अपकारसाम्मुख्यम्। नय। उ ननु। वर्त्तनं जीवनम्। आयासि दुःखितम्। यथेष्टम्। तनु। यद्वा—नयोपकारसा-म्मुख्यम्। मा नैव। किन्तु-तनुवर्त्तनं शरीरमात्ररक्षणम्। यासि।' असै शिवं दस्युं वा प्रति कस्याप्युक्तिः॥ ८१॥

अत्र विभक्तिश्लेषं दर्शयति—अत्रेत्यादिना।

अत्रेत्यस्मिन्नुदाहृते पद्ये। पक्षे 'एकस्मिन्' इति शेषः। 'हर' इति 'रूपम्' इति शेषः। **शिवसम्बोधनं** शिवस्य सम्बोधनं सम्बुद्धिस्तत्पदमिति यावदिति तत्। इतीत्यस्मात् सुप् तदन्तर्गता 'सु' विभक्तिरित्यर्थः। 'तत्रे'ति शेषः। पक्षे 'द्वितीये' इति शेषः। 'हृ'धातोर्हरणार्थकात् 'हृञ्' धातोः। 'परस्माद्विधीयमानाया' इति शेषः। **तिङ्ति-विभक्ते**'स्तिङ्'ति सञ्ज्ञकाया विभक्तेस्तिङन्तर्गताया लोटि सिपो विभक्तेरिति तात्पर्य्यम्। एवं यथाऽत्र सुप्तिङो श्लेषस्तथा **'भव' इत्यादौ** भवनयायासि तन्वित्येतेष्वित्यर्थः।

अस्य च भेदस्य प्रत्ययश्लेषेणापि गतार्थत्वे प्रत्ययान्तरासाध्यसुबन्ततिङन्तगतत्वेन विच्छित्तिविशेषाश्रयणात्पृथगुक्तिः ।

---

## विवृति

अस्य च विभक्तिश्लेषपरस्य च । प्रत्ययश्लेषेणापीत्यपिर्भिन्नक्रमे । प्रत्ययश्लेषेण गतार्थत्वेऽपीत्यर्थः । प्रत्ययान्तरेणासाध्यं यत्सुबन्तं तिङन्तं च तद्गतत्वेन विच्छित्तिविशेषाश्रयणाद् वैचित्र्यविशेषजननात् कृत्तद्धितान्तस्य स्वादिव्यतिरेकेण प्रयोगाभावात् प्रत्ययान्तरसाध्यत्वम्, सुप्तिङन्तस्य तु न तथात्वमिति विशेषः । 'आयासि' इत्यत्र प्रकृतिविभक्तिवैलक्षण्येन पदश्लेषोऽपीत्यवधेयम् ॥

## विज्ञप्रिया

अत्र आयासि इति विना सर्वत्र लुप्तसुप्तिङन्तत्वेऽपि आयासि इत्यत्र लुप्तालुप्तद्वयान्तत्वेऽपि च पदयोरैकरूप्यं दर्शयति—अत्र चेति । अस्य प्रत्ययश्लेषतो वैलक्षण्यमाह—**अस्य चेति** ।

**प्रत्ययान्तरासाध्येति** । स्वतुल्यत्वेन प्रत्ययान्तरम् असाध्यम् । अबोध्यं ययोः तादृशौ यौ सुप्तिङौ तदन्तर्गतत्वेनास्य श्लेषस्य इत्यर्थः । विच्छित्तिर्वैचित्रयम् ।

## लोचन

विच्छित्तिविशेषः सहृदयानुभवसिद्धः ।

## कुसुमप्रतिमा

ननु सुप्तिङोरपि प्रत्ययत्वेन प्रत्ययश्लेष एवाधमास्ताम्, किं विभक्तिश्लेषान्तराङ्गीकारेण इत्याह ध्वनेति । भेदस्य विभक्तिश्लेषरूपप्रकारस्य, गतार्थत्वे चरितार्थत्वे प्राप्तविषयत्वेऽपीत्यर्थः । प्रत्ययान्तरैः लिवादिभिः असाध्यमनिष्पाद्यं यत् भुवन्तं तिङन्तश्च हरादिपदं तदगतत्वेन, विच्छित्तिविशेषाश्रगृह्णास्त चमत्करितातिशयाबलम्बनात् ।

## विमला

"भव" इत्यादाविति ।—भव इति पदम् एकत्र—भूधातोस्तिङन्तरूपम्, अन्यत्र—सम्बन्धिपदत्वात् लुप्तष्ठ्यन्तमिति विभक्तिबलात् अनेकार्थाभिधायकमिति भावः । अस्य च—विभक्तिश्लेषपरस्य च, प्रत्ययश्लेषेणापि इत्यपिर्भिन्नक्रमे, प्रत्ययश्लेषेणगतार्थत्वेऽपीत्यर्थः; गतार्थत्वे—चरितार्थत्वे, उक्तत्वे इत्यर्थः, प्रत्ययान्तरेति—प्रत्ययान्तरेणासाध्यं यत् सुवन्तं तिङन्तञ्च तद्गतत्वेनेत्यर्थः, विच्छित्तिविशेषाश्रयणात्—वैचित्रयातिशयप्रतिपादनात्; कृत्तद्धितान्तस्य स्वादिव्यतिरेकेण प्रयोगाभावात् प्रत्ययान्तरसाध्यत्वं, सुप्तिङन्तस्य तु न तथात्वमिति विशेषः । "आयासि" इत्यत्र प्रकृतिविभक्तिवैलक्षण्येन पदश्लेषोऽपीत्यवधेयम् ।

## लक्ष्मी

ननु सुप्तिङो विभक्तेरपि प्रत्ययत्वेन प्रत्ययश्लेषेणैव विभक्तिश्लेषस्यापि गतार्थत्वेऽलंविभक्तिश्लेषेणेत्यत आह—अस्य चेति। भेदस्य विभक्तिश्लेषरूपप्रकारस्य, प्रत्ययश्लेषेणापीत्यपिर्भिन्नक्रमे प्रत्ययश्लेषेण गतार्थत्वेऽन्तर्भूतत्वेऽपीत्यर्थः। प्रत्ययान्तरेण क्विबादिना असाध्यमनिष्पाद्यं यत् सुबन्तं तिङन्तञ्च हरादिपदं तद्गतत्वेन तदन्तर्वर्त्तित्वेन, विच्छित्तिविशेषाश्रयणात् वैचित्र्यविशेषालम्बनात् कृत्तद्धितान्तस्य स्वादिव्यतिरेकेण प्रयोगाभावात् प्रत्ययान्तरसाध्यत्वम्, सुप्तिङन्तस्य तु न तथात्वमितिविशेषः, 'आयासि' इत्यत्र प्रकृतिविभक्तिवैलक्षण्येन पदश्लेषोऽपि इति तर्कवागीशाः।

## रुचिरा

अथ विभक्तेरपि प्रत्ययत्वे प्रत्ययश्लेषेणैव विभक्तिश्लेषस्याप्यभिधाने किं पुनस्तस्याभिधानमित्याशङ्कयाह—अस्य चेत्यादि।

**अस्य** विभक्तिश्लेषपरस्य। च पुनः। **भेदस्य**। **प्रत्ययश्लेषेण**। **गतार्थत्वे**। **अपि**। **प्रत्ययान्तरासाध्यसुबन्ततिङन्तगतत्वेन** प्रत्ययान्तरेणासाध्यमनिष्पाद्यं सुबन्ततिङन्तगतत्वं सुबन्ततिङन्ताद्यन्यमान्तर्गत (वर्त्ति) त्वं तेन। **विच्छित्तिविशेषाश्रयणा**द्विच्छित्तिश्चमत्कारस्तद्विशेषस्याश्रयणं तस्मादित्यर्थः। **पृथक्**। **उक्तिः**।

विभक्तिश्लेषो यथा वा मम—'**वि**विधवृजिनतापैर्भर्जितानामपि स्वशरणमुपगतानां जीवनोद्धारदक्षे। त्वयि सुमहिममूर्त्ते! त्राहि मां सानुरागं न गणय मम दोषान् दर्शयोदारभावम्॥' इत्यत्र देवीं भगवन्तं च प्रत्युक्तिरिति 'दक्ष' इति सुङिभ्यां श्लिष्टम्। 'त्वदनुग्रहमप्राप्य मृडान्यहमिति स्थितिः। मृषैव जगतीशानि! तन्मन्ये नापरां गतिम्॥' इत्यत्र 'मृडानी' ति सम्बुद्धिपदं क्रियापदं चेति सुप्तिङोः श्लेषः। इति दिक्।

**'महदे सुरसंधं मे तमव समासङ्गमागमाहरणे।**
**हर बहुसरणं तं चित्तमोहमवसर उमे सहसा ॥'**

अत्र संस्कृतमहाराष्ट्रयोः।

---

## विवृति

भाषाश्लेषमाह—**महदे इति**। संस्कृतार्थो यथा—हे महदे उत्सवदे, हे उमे हे गौरि आगमाहरणे विद्याग्रहणे मे मम तं प्रसिद्धं समासङ्गं अव रक्ष। कीदृशम्। सुरसंधं देवप्रार्थनीयम्। अवसरे समये तं प्रसिद्धं चित्तमोहं सहसा झटिति हर अपनय। कीदृशम्। बहुसरणं बहुविषयगामिनम्। प्रकृतार्थस्तु-मह-मम, देसु-देहि, रसं-रतिम्। धम्मे—धर्मे, तमवसं-तमोवशाम्, आसं-आशाम्, गमागामा-संसारात्, हर-अपनय, णे-अस्माकम्, हरवहुशिववधूः, सरणं-रक्षयित्री, तं-त्वम्, चित्तमोहं-चित्तमोहः, अवसरउ-अवसरतु, मे-मम, सहसेति। भाषासमे तु भाषाणामैकरूप्यमेव, न त्वर्थभेदः। इह त्वर्थभेदोऽपीति भेदः ॥

## विवृतिपूर्तिः

**संस्कृतेति**। संस्कृतप्राकृतयोरित्यर्थः। उत्कृष्टं प्राकृतं महाराष्ट्रीति व्यपदिश्यते। न तु 'भक्तिविना वश नोहे वीण्यानें वा मृदङ्गनादानें। कन्यादानफलातें केवीं पावे मृदंगनादानें ॥' इत्यादिमहाराष्ट्रजनसुप्रसिद्धगाथेति। तथा चोक्तं **दण्डिना**—'महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः। सागरः सूक्तिरक्तानां सेतुबन्धादि यन्मयम् ॥' इति। संस्कृतमागध्योः श्लेषो यथा—'कुललालिलावलोले शलिलेशे शालशालिलवशूले। कमलाशवलालिवलेऽमाले दिशमन्तकेऽविशमे ॥' 'कुररालिरावरोलं सलिलं तत्सारसालिरवशूरम्। कमलासवलालिवरं मारयति शाम्यतो विषमम् ॥' इति मागधीछाया। 'कूलानि लालयन्ति पोषयन्त्येवंशीला ये तेषां लावे छेदने लोलस्तस्मिन्। शलन्तीति शलाः सोद्यमाः ते सन्ति यत्र देशे स शली तं लिशत्यल्पीकरोतीति शलिलेशस्तस्मिन्। शालैर्गृहैः शालन्ते शोभन्ते ये तांल्लुनातीति शालशालिलवः स चासौ शूलं चेति, दुःखजनकत्वात्, तथाभूते। कमला लक्ष्मीस्तस्याः शवा दरिद्रास्तेषु ललति लसतीत्येवंशीलं बलं यस्य स तस्मिन्। मलनं मालः, न विद्यते मालो यस्यासावमालस्तस्मिन्। 'मल धारणे।' अनिवार्य इत्यर्थः। अन्तके मृत्यौ सति स वासुदेवे विषये या दिङ्मार्गस्तां दिशमविशं प्रविष्टोऽस्मि।' इति संस्कृतवाक्यार्थः। मागधस्तु—'कुरराणां पक्षिविशेषाणां या आलिः पङ्क्तिस्तद्रावैः रोलः कलकलो यत्र तत्। सारसानां यालिस्तद्रवेण शूरं तद्विरहिमारणसमर्थम्। कमलानामासवं मकरन्दं ये लान्ति ते च तेऽलिनश्च तैर्वरम्। विषमं वियोगिजनदुःखावहं तत्सलिलं शाम्यतः शमजुषोऽपि मारयति। शरदि तादृशं सलिलं विलोक्य मुनयोऽपि क्षुभ्यन्ति।' इति। संस्कृतपैशाच्योर्यथा—'कमनेकतमादानं सुरतनरजतु च्छलं तदासीनम्। अप्पतिमानं खमते सोऽगनिकानं नरं जेतुम् ॥' 'कामे कृतामोदानां सुवर्णरजतोच्छलद्दासीनाम्। अप्रतिमानं क्षमते स गणिकानां न रञ्जयितुम् ॥' इति पैशाचीछाया। 'हे सुरतनः निधुवनपुरुष। सुरतातिरिक्ते कर्मणि न तेऽभिज्ञतेत्यामन्त्रणाभिप्रायः। खमते शून्यबुद्धे, यस्त्वया श्लाघ्यते स पुरुषः कं नरं जेतुमजतु गच्छतु। अहो, न तादृशः पुरुषो यं स जेष्यतीति। किंभूतम्। अनेकतमान्यादानानि यस्य ताम्। तत्प्रसिद्धं छलं मायामासीनमाश्रितम्। अप्पतेर्वरुणस्येव मानो यस्य तम्। अगा अचला निकाना दीप्तिर्यस्य तम्।' इति संस्कृतवाक्यार्थः पैशाचस्तु 'स पुरुषो

रञ्जयितुमात्मरञ्जनाय कामविषये कृतामोदानां सुवर्णरजताभ्यामुच्छलन्त्यो दास्यो यासां तथाभूतानां गणिकानाम-प्रतिमानं न क्षमते न सहतेन तदानीमादरमभिलषतः कस्यचिदुप्रकृतगणिकस्योक्तिरियम्।' इति। संस्कृतसूरसे-न्योर्यथा—'तोदी तदिगगणमदोऽकलहं स सदा बलं विदन्तरिदम्। आर दमेहावसरं सासदमारं गदासारम्॥' ततो दृश्यते गगनमदः कलहंसशतावलम्बितान्तरितम्। आरतमेघावसरं शाश्वतमारं गतासारम्॥' इति। सूरसे-नीच्छाया। 'तुदति परानिति तोदी, देशनं दिक् उपदेशः तया सह वर्तत इति सदिक् न गणेन सहायेन मदो यस्य सः, स वित्, सदा सर्वकालमेव अकलहं परिभूतत्वान्निर्वैरम्, अत एव दमेहाया उपशमचेष्टाया अवसरो यस्य तत्, तथास्यन्ते क्षिप्यन्ते इत्यासाः शरास्तान्घ्नन्ति खण्डयन्तीत्यासदा धानुष्काः सह तैर्वर्तत इति सासदम्, गदासारम्, इदमारमरिसक्तं बलमन्तर्मध्ये आर ससार।' इति संस्कृतवाक्यार्थः। सौरसेनस्तु—'आरतो निवृत्तो मेघानामवसरो यत्र। शाश्वतो मारः कामो यत्र। गत **आसारो यतस्तत्**। शारदनभोवर्णनमेतत्।' इति। संस्कृतापभ्रंशयोर्यथा—'धीरागच्छदुमे हतमुद्धरवारिसदः सु। अभ्रमंदप्रसराहरणुरविकिरणा तेजः सु॥' 'धीरा गच्छसु मेघतमो दुर्धरवा-र्षिकदस्यु।' अभ्रमदप्रसराहरणं रविकिरणास्ते यस्य॥' इत्यपभ्रंशच्छाया। 'हे उमे, अवेरिव गड्डुरिकाया इव किरणं विक्षेपेणं निर्वासनं यस्याः तथाभूता, हतमुत्, अणुः कृशा, अभ्रे गगने माद्यति यः सः तथा विधोऽपां प्रसरो यस्याः सा अभ्रमदप्रसरा गङ्गा अहर्दिवसमपि उद्गता धरा प्रलयापन्निमग्ना यस्मात्तदुद्धरं तच्च तद्वारि च समुद्रजलं च तदेव सदो गृहं येषां तेषु तेजः सु। वडवानलतेजः स्वित्यर्थः। अगच्छत् अपतत् हरनिर्वासनदुःखिता सती गङ्गात्मानं वडवानलेन्धनीचकारेति धीरा सपत्न्या व्यसनेन स्वस्था भव।' इति संस्कृतवाक्यार्थः। 'हे धीराः, दुर्धरा वार्षिका दस्यवो यत्र तथाभूततन्मेघतम इति गच्छत्वपसरतु। यस्य मेघतमसः ते न भ्रमं ददातीत्यभ्रमदः प्रसरो येषां तादृशा रविकिरणा हरणं हर्तारः।' इत्यपभ्रंशवाक्यार्थः॥

## विज्ञप्रिया

भाषाश्लेषमाह—**महदे** इति। संस्कृतपक्षे—हे महदे हे उत्सवदात्रि! हे उमे पार्वति! आगमस्य वेदस्य आहरणे वशीकरणे मे मम तं प्रसिद्धं समासङ्गम् अव रक्ष। मुनिजनेषु प्रसिद्धं वेदाभ्यासं मम जनयेत्यर्थः। समासङ्गं कीदृशं सुरसन्धं सुराणां सन्धं सम्बन्धिकारकं, मम सुरत्वप्रापकमित्यर्थः। तथा तं प्रसिद्धं चित्तमोहम् अवसरेऽर्थान्म-रणरूपे सहसा हर नाशय। कीदृशं चित्तमोहं बहुसरणं नानाविधकार्य्यविषयम्। सृ गतौ।

प्राकृतपक्षे—

**मम देहि रसं धर्मे तमोवशामाशां गमागमाद् हर नः।**

**हरवधु शरणं त्वं चित्तमोहोऽपसरतु मे सहसा॥" इति संस्कृतम्।**

तदर्थश्च—हे हरवधु! मम धर्मे रसं देहि। गमागमात् संसारात् तमोवशामाशां नोऽस्माकं हर। त्वं मे शरणम्। मम चित्तमोहः सहसाऽपसरतु।

## लोचन

**"महदे"** इति। संस्कृतपक्षे—महदे उत्सवदे! उमे! पार्वति! मे मम आगमाहरणे आगमानामाकलने तं समासङ्गम् आसक्तिम् अव स्थिरीकुर्विति भावः। सुरैर्देवैः सन्धः समाधानं येनेति समासङ्गविशेषणम्। आगमा-ध्यासस्य स्वर्गहितुत्वाद् बहु बहुलं सरणं प्रसारो यस्य एवंभूतं चित्तमोहं मनोनिष्ठम् अज्ञानम्, अवसरे, सहसा वेगेन हर अपनय। (महाराष्ट्रीयप्राकृतपक्षे) चतुर्थ्यर्थे "महद इति षष्ठी। तेन—

**"मह्यं देहि रसं धर्मे तमोवशामाशां गमागमाद्धर नः ।**

**हरवधु ! शरणं त्वं चित्तमोहोऽपसरतु मे सहसा ॥"**

गमागमो विद्यते यत्र तस्मात् गमागमात् संसारादित्यर्थः ।

एवं वर्णादि गतत्वेनाष्टविधं श्लेषमुक्त्वा पुनः प्रकारान्तरेण त्रिविधमाह—पुनरिति ।

## कुसुमप्रतिमा

भाषाश्लेषमुदाहरति महेति । पार्वती प्रति भक्तद्वयस्योक्तिरियम् । महमुत् सर्व ददातीति महदा तत् सम्बोधनम् । हे उमे ! पार्वति । सुराणां देवानामपि सन्धा कर्त्तव्यत्वेन प्रतिज्ञा यस्मिन् तम आगमाहरणे शास्त्रीय-ज्ञानानार्जने मे मम तं पूर्वाजातम्, समासङ्गं सम्यगासक्तिम् अव चिरायैवरक्ष । तथा अवसरे, यथासमये बहुसरणं बहुव्यापकं तं पूर्वजातं चित्तमोहं सहसा शीघ्रं हर विनाशय ।

**"मम देहि रसं धर्म्मे तमोवशामाशां गमागमात् हर नः ।**

**हरवधु ! शरणं तं चित्तमोहम् अपसरतु मे सहसा ॥"**

इति महाराष्ट्रीतः संस्कृतानुवादः । हे हरवधु ! भवानि ! धर्म्मे मम रसमनुरागं देहि । नः अस्माकम्, गच्छति प्रतिष्ठते यस्मात् आगच्छति पुंनरुपतिष्ठते च यस्मिन्निति गमागमः पार्थिवं जगत्तस्मात्, तमोवप्रां तमोगुणाधीनाम् अज्ञानजनितामित्यर्थः आशां पार्थिवसुखाभिलाषं हर दूरीकुरु । शरणं रक्षिका भवती सहसा मे मम तं चिरीत्पन्न चित्तमोहम्, अपसरतु विनाशयत्विति सकर्म्मकत्वविवक्षा ।

अत्रेति । भाषयोरिति शेषः । श्लेष इत्यनुषज्यते । उत्कृष्टप्राकृतभाषैव महाराष्ट्रीति दण्डी । तदुक्तं तेनैव—"महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः ।"

तत्र भाषासमलक्षणे "भाषासु विविधास्वपि" इत्यभिधानात् एकविधैरेव शब्दैर्बहुतरभाषासु वाक्य निष्पत्तिस्थले भाषासमः, केवलभाषाद्वये वाक्यनिष्पत्तिस्थले तु भाषाश्लेषइति भेद इति तूक्तमेव । तर्कवागीशस्तु-भाषासमेतु भाषाणामैकरूप्यमेव, न त्वर्थभेदः इह त्यर्थ भेदोऽपीति भेदः'' इत्याह स्म ।

मेजावश्यभाषयोः श्लेषो यथा मम वङ्गीयप्रतापनाटके शङ्करंगाने—

"हे सन्तान ! तव जननी, धनजनसमंन्विता केन अनाथिनी ।

परमुखे दृष्टिकरी परद्वारि भिक्षाकरौ, यथा दीगहीननारी जीविता विषायिनी ।

अतिनिद्रापरायण-निरुद्यमपृथगण आलस्यवशाजीवन आकुला गौरविणी ।"

तर्कवागीशमते तु अत्रापि भावासम एवालङ्कारः ।

## विमला

भाषाश्लेषमाह, महदे इति ।—संस्कृतार्थो यथा—हे महदे !—उत्सवदायिनि ! ("मह उद्भव उत्सवः" इत्यमरः) उमे !—गौरि ! मे—मम, तं सुरसन्धं—देवप्रार्थनीयम्, आगमाहरणे—शास्त्रज्ञाने, समासङ्गं—सम्यक् आसक्तिम्, अत्र—रक्ष; तथा अवसरे—समये, तं बहुसरणं—बहुव्यापिनं, चित्तमोहम्—अज्ञानमित्यर्थः, सहसा—झटिति, हर—नाशय । महाराष्ट्रीभाषाऽर्थस्तु—मह—मम, धम्मे—धर्मे, रसम्—अनुरागंत देसु—देहि, गमा-

गमा—गमागमात्, संसारात् इत्यर्थः, णे—नः, अस्माकमित्यर्थः, तमवसं—तमोवशां, तमोगुणजनितामित्यर्थः आसम्—आशामित्यर्थः, हर—नाशय, हे हरबहु !—हरबधु ! तं—त्वं, सरणं—शरणं, रक्षित्री असीत्यर्थः, मे—मम, चित्तमोहं—चित्तमोह इत्यर्थः, सहसा अवसरउ—अपसरतु । भाषासमालङ्कारे भाषाणामेकरूपत्वं, न तु अर्थतो भेदः, इह तु "महदे सुरसन्धं मे" इति पदानामनेकार्थता इत्युभयोर्भेदः ।

## लक्ष्मी

भाषाश्लेषोदाहरणमाह—महदे इति । आनन्दवर्धनप्रणीते देवीशतके भक्तद्वयस्य प्रत्युक्तिरियम् । अत्र संस्कृतार्थे यथा—महमुत्सवं ददातीति तत्सम्बुद्धौ तथोक्ते, 'मह उद्धव उत्सवः' इत्यमरः, हे उत्सवद इत्यर्थः, हे उमे गौरि ! सुराणां देवानामपि सन्धा सन्धानं सम्यग्ज्ञानमितियावत् यस्मात्तथाभूतम्, यद्वा सुरैः देवैः सन्धा सन्धिः मिलनमिति यावत् यस्मात्तथाभूतम्, आगमाहरणे वेदविद्योपार्जने मे मम तं प्रसिद्धं समासङ्गं संसक्तिम् अव रक्ष, तथा अवसरे मोहापचयोचिसमये बहुसरणं बहु अनेकधा सरणं प्रसरणं यस्य तथाभूतम्, बहुविषयगामिनमित्यर्थः, यद्वा बहु वारम्बारं सरणं संसारो यस्मादित्यर्थः, तं प्रसिद्धं चित्तमोहं सहसा झटिति हर अपनय । प्राकृतार्थपक्षे तु—

**मह देसु रसम् धम्मे तमवसम् आसम् गमागमा हरणे**

**हरबहु सरणं तम् चित्तमोहम् अवसरउ मे सहसा ॥ इति च्छेदः ।**

**'मम देहि रसं धर्मे तमोवशाम् आशां गमागमात् हर नः ।**

**हरवधु ! शरणं त्वं चित्तमोहम् अपसरतु मे सहसा ॥' इति संस्कृतम् ।**

चित्तमोहमित्यत्र मोहशब्दस्य गुणवाचकत्वात् 'क्लीबे गुणगाः' इति प्राकृतसूत्रेण नपुंसकत्वमितिमर्मज्ञाः । हे हरवधु गौरि ! धर्मे पुण्ये कर्मणि ममरसं प्रीतिं देहि प्रयच्छ । 'श्रृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः, नः अस्मात्सम्बन्धिनीं गमो गमनं मरणमिति यावत् आगमः आगमनं पुनर्जन्मेति यावत् यस्मिस्तादृशात् संसारात्, तमोवशां तमोगुणयुक्ताम् अज्ञानजिनतामित्यर्थः आशां पार्थिवसुखेच्छां हर अपनय । त्वं मे मम शरणं रक्षयित्री भवसीतिशेषः 'शरणं गृहरक्षित्रोः' इत्यमरः, सहसा शीघ्रं चित्तमोहम् अपसरतु दूरीकरोतु । जघनविपुलाच्छन्दस्तल्लक्षणन्तूक्तमेव ।

अत्रेति । संस्कृतमहाराष्ट्र्योः भाषयोरितिशेषः, संस्कृतप्राकृतभाषयोरित्यर्थः । श्लेष इत्यनुषञ्जनीयम् । उत्कृष्टं प्राकृतं महाराष्ट्रीतिव्यपदिश्यते । तदाह दण्डी—

**'महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः ।**

**सागरः सूक्तिरक्तानां सेतुबन्धादियन्मयम् ॥' इति । न तु—**

**'भक्ति विना वशनोहे वीण्यानं वा मृदङ्गनादानं ।**

**कन्यादानफलातं केवीं पावे मृदङ्गनादानं ॥'**

इत्यादिमहाराष्ट्रजनसुप्रसिद्धगाथेतिबोध्यम् । भाषासमलक्षणे 'भाषासु विविधास्वपि' इत्युक्तत्वात् एकप्रकारकैरेव शब्दैरनेकभाषासु वाक्योपपत्तिस्थले भाषासमः, भाषाद्वयमात्रे वाक्योपपत्तिस्थले तु भाषाश्लेष इति त्वभिहितमेव । अत्र तर्कवागीशेन तु 'भाषासमे तु भाषाणामैकरूप्यमेव न त्वर्थभेदः इह त्वर्थभेदोऽपी'त्युक्तम् ।

अत्रेदम्बोध्यम्—संस्कृतप्राकृतमागध्यादिभेदेन षड्विधा भाषा इति तु दर्शितं श्लेषविभागस्थले। तत्र संस्कृतप्राकृतयोरुदाहरणं ग्रन्थकृतैव दर्शितमिदानीं काव्यालङ्कारप्रतिपादितान्युदाहरणानि प्रदर्श्यन्ते यथाक्रमम्। तत्र संस्कृतमागध्योः यथा—

(क) 'कुललालितावलोले शलिलेशे शालशालिलवशूले।
कमलाशवलालिवलेऽमाले दिशमन्तकेऽविशमे॥'
कुररालिरावरोलं सलिलं तत्सारसालिरवशूरम्।
कमलासवलालिवरं मारयति शाम्यतो विषमम्॥'

संस्कृतपैशाच्योर्यथा—

(ख) 'कमनेकतमादानं सुरतनरजतुच्छलं तदासीनम्।
अप्पतिमानं खमते सोऽगनिकानं नरं जेतुम्॥'
कामे कृताभोदानां सुवर्णरजतोच्छलद्दासीनाम्।
अप्रतिमानं क्षमते स गणिकानां न रञ्जयितुम्॥ इति

पैशांचीच्छाया।

संस्कृतशूरसेन्योर्यथा—

(ग) 'तोदीतदिगगणमदोऽकलहं स सदा बलं विदन्तरिदम्।
आरदमेहावसरं सासदमारं गदा मारम्॥'
ततो दृश्यते गगनमदः कलहंसशतावलम्बितान्तरितम्।
आरतमेथावसरं शाश्वतमांर गतासारम्॥' इति शूरसेनीच्छाया

संस्कृताथभ्रंशयोर्यथा—

(घ) धीरागच्छदुमे हृदमुद्धरवारिसदः सु।
अभ्रमदप्रसराहरणु विकिरणातेजः सु॥

## रुचिरा

वचनश्लेष उदाहृतपूर्व इति तमनुदाहृत्य भाषाश्लेषमुदाहरति—'**महदे...**' इत्यादिना।

हे **महदे** महमुत्सवं ददातीति तत्सम्बुद्धौ तथोक्ते 'मह उद्धव उत्सवः।' इत्यमरः। **उमे** गौरि! **मे** मम। **तं** प्रसिद्धम्। **आगमाहरण** आगमा वेदास्तेषामाहरणं ग्रहणं तत्र। **सुरसन्धं** सुरा शोभनदात्री सन्धा सन्धानं यस्य तमिति तम्। शोभनं रातीति तथोक्ता। शोभनदायकसन्धानशालिनमिति तात्पर्यम्। **समासङ्गं** सम्यग्भूतोऽसावासङ्ग आसक्तिस्तम्। **अव** रक्ष। **अवसरे** मोहापचयोचिते समये इति भावः। **तम्**। **बहुसरणं** बहु सरणं संसारो यस्मात्तम्। **चित्तमोहम्**। **सहसा**। **हर**। यद्वा—"**धमे** धर्म्मे। **मह** मम। **रसं** रतिम्। **देसु** देहि। **गमागमा** गमागमात्संसारादिति यावत्। गमो गमनं मरण, मागमः पुनर्जन्म यस्मिंस्तस्मात्। **तमोवसं** तमोवशां तमोगुणाधीनामिति यावत्। **णे** नोऽस्माकमिति यावत्। **आसमाशाम्**। **हर**। हे **हरबहु** हरवधु महेश्वरीति यावत्। **सरणं** शरणमाश्रयः।

'शरणं गृहरक्षित्रोः ।' इत्यमरः । तं त्वम् । अतः—मे मम । चित्तमोहं चित्तमोहश्चित्तस्य मोह इति भावः । 'त्वत्कृपये'ति शेषः । सहसा शीघ्रम् । अवसरउ अपसरतु दूरीभवत्विति यावत् ॥' अत्र जघनविपुलाछन्दः । लक्षणं चोक्तं प्राक् ॥'

अत्र श्लेषं दर्शयति—अत्र । सस्कृतेत्यदिनास्पष्टम् संस्कृतं च महाराष्ट्री चेति तयोः । महती चासौ राष्ट्री राष्ट्र (राज्य) सम्बन्धिनी प्राकृतभाषेति महाराष्ट्री । तदुक्तं दण्डिना—'महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः । सागरः सूक्तिरत्नानां सेतुबन्धादि यन्मयम् ॥ इति ।' 'श्लेष'इति श्लेषः । इति । अत्रेदं बोध्यम्—'संस्कृतप्राकृत-मागधंपिशाचभाषाश्चशौरसेनी च षष्ठोऽत्र भूरिभेदो देशविशेषादपभ्रंशः ॥' इत्युक्तदिशा षड्विधा भाषाः । तत्र संस्कृतप्राकृतोदाहरणं तु दर्शितमेव, प्रकृष्टप्राकृतस्यैवं महाराष्ट्रीति व्यपदेशात् । उदाहरणानि यथा काव्यालङ्कारे—'कुललालिलावलोले शशिलेशे शालशालिलवशूले । कमलाशवलालिबलेऽमाले दिशमन्तकेऽविश मे ॥' इदं संस्कृतमागध्युदाहरणम् । 'कुररालिरावरोलं 'कुररालिरावरोलं सलिलं तत्सारसालिरवशूरम् । कमलासवलालि-वरं मारयति शाम्यतो विषमम् ॥' इति मागध्याः संस्कृतम् । तदर्थो यथा 'कुलानि लालयन्तीत्येवंशीलास्तेषां कुललालिनां (सतां) लावे छेदे लोलो लम्पटस्तत्र । शलिनः खङ्गयोर्धाँल्लिशत्यल्पीकरोतीति तस्मिन् । शालैर्गृहैः शालन्ते इत्येवंशीलाँल्लुनातीत्येवंभूतं शूलं तत्र । कमलाया लक्ष्म्याः शवा मृततुल्या दरिद्रा इति यावत्तेषु ललति विलसतीत्येवंशीलं बलं यस्य तत्र । मलनं मालः, तदभावोऽमालस्तत्रानिवार्ये इति भावः, (मल धारणे) । अन्तके 'उपस्थित' इति शेषः । ए विष्णौ 'अकारो वासुदेवः स्या' दित्युक्तेः । दिशं मार्गम् । अविशम् ॥ यद्वा—'कुरराणां पक्षिविशेषाणामालिस्तद्रावै रोलः कलकलो यत्र तत् । सारसालिरवेण सारसपङ्क्तिक्रन्दनविधानेन शूरम् इति तथाभूतम् । कमलानामासवस्तंलान्ति गृह्णन्तीत्येवंभूता येऽलिनस्तैर्वरम् । विषमं विरहिजनदुःखावहम् । सलि-लम् । शाम्यतः शमयुजः । 'अपी'ति शेषः । मारयति । 'शरदि तादृशं सलिलं विलोक्यमुनयोऽपि म्रियन्ते' इति निष्कर्षः । 'कमनेकतमादानं सुरतनरजतु च्छलं तदासीनम् । अप्यतिमानं खमते सोऽगनिकानं न रंजेतुम् ।' इदं संस्कृतपैशाच्युदाहरणम् । 'कामे कृतामोदानां सुवर्णरजतोच्छलद्दासीनाम् । अप्रतिमानं क्षमते सगणिकानां न रञ्जयितुम् ॥' इति पैशाच्याः संस्कृतम् । तदर्थो यथा—'हे सुरतनः निधुवन पुरुष ! खवच्छून्या मतिर्यस्य तत्स-म्बुद्धौ । सः । कम् । अनेकतमान्यादानानि यस्मात्तत् । तत् प्रसिद्धमाछलम् (कर्म) आसीनमाश्रितम् । अप्पतेर्वरुण-स्येव मानोऽभिमानो यस्य तम् । अगा निश्चला निकाना दीप्तिर्यस्य तम् । नम् । जेतुम् । अहो अजतु यातु ॥'

यद्वा-'कामेकृत आमोदो यासां तासाम् । सुवर्णरजताभ्यामुच्छलन्त्यो दास्यो यासां तासाम् । गणिकानाम् । रञ्जयि-तुम् । अप्रतिमानम् । सः । न क्षमते ॥' इति । 'तोदी सदि गगणमदो, कलहंससदाबलं विदन्तरिदम् । आरदमेहा-वसरं सासदमारं गदासारम् ॥' इदं संस्कृतशौरसेन्युदाहरणम् । 'ततो दृश्यते गगनमदः कलहंसशतावलंबितान्तरितम् । आरतमोघावसरं शाश्वतमारंगतासारम् ॥' इति शौरसेन्याः संस्कृतम् । तदर्थो यथा—'तुदति परानिति तोदी, देशनं दिगुपदेशस्तया सह वर्त्तत इति सदिक् । न गणेन सहायेन मदो यस्य सः । सः । वित् । सदा । अकलहम् । दमेहाया अवसरो यस्य तत् । अस्यन्ते क्षिप्यन्ते इत्यासाः शरास्तान् घ्नन्तीत्यासदा धनुर्धरास्तैः सह वर्त्तत इति सासदम् । गदाभिः सारमिति गदासारम् । इदम् । आरमरिसक्तम् । बलम् । अन्तः । आर ससार ॥' यद्वा—आरतोविरतो मेघावसरो यत्र तत् शाश्वतो मारो यत्र तत् । गतः प्रासारो यतस्तत् । कलहंसशतेनाबलम्बितमंतरितं चेति तथोक्तम् । अदः । गगनम् । ततः प्रावृषोऽपगमानन्तरम् । दृश्यते ॥' इति । 'धीरा गच्छदु मेहतमुदुद्धखारिसदःसु । अभ्रमदप्पसराहरणु रविकिरणा ते जःसु ॥' इदं संस्कृतापभ्रंशोदाहरणम् । 'धीरा गच्छतु मेघतमो दुर्द्धरवार्षिकदस्यु । अभ्रमदप्रसराहरणं रविकिरणास्ते यस्य ॥' इत्यपभ्रंशसंस्कृतम् । तदर्थो

यथा 'हे उमे धीरा भव यतः—अवेर्गड्डुरिकाया इव किरणं विक्षेपणं निर्वासनं यस्याः साहतामुद्यस्याः सा । अणुः कृशा अभ्रे माद्यतीत्येवंभूतोऽप्रसरो जलप्रसारो यस्याः सा गङ्गा । अहर्दिवसम् । 'अपी'ति शेषः । उद्गता धरा (पृथिवी) प्रलयापन्निमग्ना यस्मात्तच्च यद्वारि जलं तदेव सदः स्थानं येषां तेषु । तेजःसु ।वडवानलतेजः स्वित्यर्थः । अगच्छदपतत् ॥' यद्वा—हे धीराः । दुर्धरा वार्षिका दस्यवो यत्र तत् । मेघतमः । अच्छतु । यस्य (मेघतमसः) न भ्रमं ददातीत्येवंभूतः प्रसरो येषां ते रविकिरणाः । हरणं हर्त्तारः ॥' इति । एवं प्राकृतमागध्यादीनामप्युदाहरणानि द्रष्टव्यानि । यत्तु तत्रैव-वाक्ये यत्र कस्मिन्नेकभाषानिबन्धनं क्रियते । अयमपरो विद्वद्भिर्भाषाश्लेषोऽत्र विज्ञेयः ॥' इत्युक्तम् । तन्मन्दम्, अर्थविशेषमन्तराऽश्लिष्टयोरपि भाषयोः साधारण्यात्तत्समत्वस्यैवाङ्गीकार्यत्वात् । एतेन 'समरे भीमारम्भं विमलासु कलासु सुन्दरं सरसम् । सारं सभासु सूरिं तमहं सुरगुरुसमं वन्दे ॥' 'शूलं शलन्तु शं वा विशन्तु शबलावशं विशङ्का वा । अशमदशं दुःशीला दिशन्ति काले खला अशिवम् ॥' 'चम्पाककलिकाकोमलकान्तिकपोलाऽथ दीपिकाऽनङ्गी । इच्छति गजपतिगमनाचपलायतलोचना लपितुम् ॥ 'अधरदलं ते तरुणा मदिरामद मधुरवाणि ! सामोदम् । साधु पिबन्तु सुपीवर परिणाहि पयोधराररम्भे ॥' 'क्रीडन्ति प्रसरन्ति मधुकमलप्रणयि लिहन्ति ।भ्रमरामित्रसुविभ्रमा मत्ता भूरि रसन्ति ॥' इत्यादीनि संस्कृतसमानि प्राकृतमागधीपैशाचीशौरसेन्यपभ्रंशवाक्यानि न श्लेषव्यपदेशभाञ्जि, अर्थविशेषमन्तरेण स्वरूपसमानयोर्विजातीयत्वाभावे तयोः श्लेष एव सादृश्यमिति वक्तुमनर्हत्वादिति सूचितम् । इति ।

**पुनस्त्रिधा सभङ्गोऽथाभङ्गस्तदुभयात्मकः ॥ १२ ॥**

एतद्भेदत्रयं चोक्तभेदाष्टके यथासंभवं ज्ञेयम्।

यथा वा—

**'येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो**
**यश्चोद्वृत्तभुजंगहारवलयोगङ्गां च योऽधारयत्।**
**यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः**
**पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥'**

अत्र 'येन'—इत्यादौ सभङ्गश्लेषः। 'अन्धक—' इत्यादावभङ्गः। अनयोश्चैकत्रसंभवात्सभङ्गात्मको ग्रन्थगौरवभया त्पृथङ्नो दाहृतः।

---

## विवृत्ति

**यथासंभवमिति**। 'पृथुकार्तस्वर—' इत्यादौ सभङ्गः। 'नीतानाम्—' इत्यादावभङ्गः। 'सर्वस्वं हर' इत्यादौ सभङ्गाभङ्गः ॥ एकत्रैव तत्रितयमुदाहरति—**यथावेति**। सर्वदः सर्वाभीष्टदाता माधवः, सर्वदा उमाधवश्च त्वां पायात्। माधवपक्षे—येन अभवेन जन्मरहितेन अनः शकटं ध्वस्तं पादेन परावर्तितम्। बलेरसुरराजस्य जेता। कायः पुरा अमृतपरिवेषणावसरे स्त्रीकृतः स्त्रीत्वं प्रापितः। अमृतार्थं विवदमानानां देवासुराणाममृतपरिवेषणाय मायया नारायणेन मोहिनीरूपं धृतमिति पुराणवार्ता। यश्चोद्वृत्तस्य उन्मत्तस्य अभङ्गस्य अघासुरस्य हन्ता। यद्वा कालियस्य पीडाकरः। आरवलयः अरिसंबन्धि सैन्यं यातीत्यर्थः। यद्वा उद्वृत्तभुजंगहारं बलं यस्य तेन गरुडेन यातीत्यर्थः। अगं गोवर्धनं कृष्णरूपेण, गां पृथ्वीं च कूर्मरूपेण योऽधारयत्। शशिनं मन्थातीति शशिमद्राहुः तस्य शिरोहर इति स्तुत्यं नाम यस्य चामरा आहुः। अन्धकानां यादवानां क्षयकरो द्वारकाख्यनिवासनिर्माता। उमाधवपक्षे—येन ध्वस्तमनोभवेन विनाशितकामेन बलिजितो विष्णोः कायः पुरा स्त्रीकृतः। मोहिनीरूपदिदृक्षुणा शिवेन प्रेषितो विष्णुः पुनर्मोहिनीरूपं दधारेति पुराणवार्ता। यश्च उद्वृत्तौ उत्कर्षेण वर्तितौ भुजंगरूपौ हारवलयौ येन सः। यश्च शिरसि गङ्गामधारयत्। यद्वा शरीरार्धेन गौरीम्, शिरसि गङ्गां चेत्यभिप्रायेण चकारः। यस्य शिरः शशिमच्चन्द्रयुक्तं हर इति स्तुत्यं नाम चामरा आहुः। अन्धकस्य असुरविशेषस्य विनाशकरः ॥

## विवृतिपूर्तिः

**पुनरिति**। त्रिविधोऽप्ययं श्लेषः प्रकृतानेकविषयाप्रकृतानेकविषयप्रकृताप्रकृतानेकविषयभेदैर्भिद्यते ॥

## विज्ञप्रिया

**पुनस्त्रिधेति**। अयमष्टविधः श्लेषालङ्कारस्त्रिधा भवतीत्यर्थः। कथमित्यत्राह—**सभङ्ग इति**। तदुभयात्मकः सभङ्गाभङ्गात्मक इत्यर्थः। **उक्तभेदाष्टक** इति। तत्र पृथुकार्तेत्यत्र सभङ्गः। "किरणा" इत्यत्र "सर्व एव सुधाकिर" इत्यत्राभङ्गः। महदे इत्यत्र चित्तमोहमित्यत्राभङ्गः। महदे इत्यादिषु सभङ्गः, इत्युभयात्मकः।

श्लोकान्तरेऽपि त्रैविध्यं दर्शयति—**येन ध्वस्तमिति**। त्वां सर्वदा स उमाधवः सर्वदो माधवश्च पायात्। तत्र माधवपक्षे, अभवेन अनुत्पत्तिना येन अनः शकटं ध्वस्तं नित्यशरीरस्य तस्य रूपान्तरेणाविर्भावमात्रं, नतूत्पत्तिः। तथा यो बलिजित् बलिजेता। येन कायः पुरा मोहिनीरूपेण स्त्रीकृतः। एकत्रैव नित्यशरीरे आकारभेदप्रदर्शनमात्रं, न तु शरीरभेद इति भावः। यश्च उद्वृत्तस्य दुर्वृत्तस्य भुजङ्गस्य अघासुरस्य हन्ता। रवस्य नानात्मकब्रह्मणो लयो लीनता यत्र तादृशः। अगं गोवर्द्धनं, कूर्मवराहमूर्त्या च गां पृथिवीं च योऽधारयत्। शशिमथः राहोः शिरोहर इति स्तुत्यं नाम यस्याऽमरा आहुः। स कीदृशः? स्वयमन्धकवंशक्षयकरः निवासकरः। क्षि निवासगत्योः इति धातोः। उमाधवपक्षे—ध्वस्तमनोभवेन ध्वस्तो दलितो मनोभवो कामो यस्मात्। येन बलिजितो विष्णोः कायः पुरस्य त्रिपुरासुरस्य नाशकास्त्रीकृतः, त्रिपुरवधे विष्णोः कायस्य शरीकृतत्वात्। यश्चोद्वृत्तभुजङ्गरूपो हारः वलयश्च कङ्कणः यस्य तादृशः, गङ्गां च यो मौलौ अधारयत्। यस्य शिरः शशिमत् चन्द्रयुक्तम्। हर इति स्तुत्यं नाम चामरा आहुः। स कीदृशः—स्वयमन्धकासुरस्य नाशकरः। अत्र त्रितयसत्त्वं दर्शयति—**अत्रेति**। एकैकश्लोके एकैकाप्रदर्शनस्य बीजमाह—**ग्रन्थेति**।

## लोचन

हरपक्षे—मनोभवः कामः। बलिजित् विष्णुः, तस्य कायः पुरा दैत्यार्थमस्त्रीकृतः। उद्वृत्ता अतिवर्त्तुलाकारा भुजङ्ग एव हारा वलयाश्च यस्य। गङ्गां त्रिपथगाम्। शशी विद्यते यत्र तत् शशिमत्। अन्धकदैत्यस्य क्षयो नाशः, तत्करः सर्वदा उमाधवः गौरीपतिः। हरिपक्षे—येन अनः शकटं ध्वस्तम्। अभवेन चिद्रूपेण। आत्मन एव कायः पुरा पूर्वम् अमृताहरणकालेऽसुरमोहनार्थं स्त्रीरूपः कृतः। उद्वृत्तः उद्धतो भुजङ्गः कालियः तं हन्तीति। रवे नादरूपे ब्रह्मणि लयो यस्य। अगं पर्वतं गोवर्द्धनाख्यं गां पृथ्वीं च। शशिनं मथ्नाति इति शशिमद्राहुः तस्य शिरोहरः। अन्धकानाम् अन्धकवंशीयानां क्षयो निवासो द्वारकापुरसम्बन्धी तत्करः। सर्वं ददाति इति सर्वदः। माधवः श्रीपतिः। सभङ्गः पदभङ्गे अर्थप्रत्ययात्। अनयोः सभङ्गाभङ्गरूपयोः श्लेषयोरेकश्लोके।

## कुसुमप्रतिमा

पुनरपि श्लेषं विभजते पुनरिति। तत्र शुभङ्गः शब्दविप्रेषथनिष्पन्नः अभङ्गः शब्दसाधक सति अनेकार्थाभिधानमात्रेण सिद्धः, तदुभयात्मकः सभङ्गेभयरूपः स तु वाक्ये क्वचिदेशे सभङ्गः क्वचिदंशे चाभङ्ग इत्येवंरूपः। तत्र पदश्लेष-विभक्तिश्लेष भाषाश्लेषा एतक्षिविधा एव सम्भवन्ति, अन्ये वर्णश्लेषा द्यस्तु पञ्च केवलाभङ्गरूपा एव। तेन वर्णश्लेषादयः पक्ष, पदश्लेषास्त्रयः, विभक्तिश्लेषास्त्रयः, भाषाश्लेषाश्च त्रय इति समुदायेन चतुर्दशप्रकारा, श्लेषा इत्युन्नेयम्।

एतर्ददिति। "पृथुकार्त्तस्वरपात्रम्" इत्यादौ 'महदे' इत्यादौ च केवलसभङ्गः, 'प्रतिकूलताम्' इत्यादौ केवलाभङ्गः, "सर्वस्व हर सर्वस्य" इत्यादौ तु सभङ्गाभङ्गीभयरूपः।

शिष्यात्सन्धानसौकर्य्यार्थमेकोदाहरणेनैव सभङ्गादिभेदत्रयं दर्शयितुमाह यथा वेति।

येनेति। हरिहरोभयद्वारैधायमाशीर्वादश्लोकः। न विद्यते भवो जन्म यस्य तेन, येन माधवेन, अतः शवट शकटरूपधारी असुर विशेषः ध्वस्तं चरणोट्टङ्कमेन विनष्टम्। बलिजित् क्रलेन विरोचनमुत्तस्य जेता कायो वामनदेह पुरा देवासुरेभ्यः अमृतपरिवेशनसमये स्वीकृतो मोहिनीमूर्त्या परिणमितः, सश्च उद्धृतमुद्धतस्वभावं भुजङ्गं भुजङ्गरूपवारिणम् अधासुरं हन्तीति उद्धृतभुजङ्गहा, अरेरिदमिति आरम् अरिसम्बन्धि वलं सेन्यं यति आक्रमितुं गच्छतीति

आरवलया, यश्च अगं गोवर्द्धनपर्वतं गां पृथिवीञ्च आधारवत् कृष्णरूपेण कूर्म्मरूपेण चेत्यर्थ:; अमरादेवाश्च यस्य शशिनं चन्द्रं मथ्नाति पीड़यतीति शशिमत् राहु: तस्य शिरो हरति सम्मिनेवामृतपरिवेशनममये चक्रेण छिनत्तीति शशिमच्छिरोहर इति स्तुत्यं स्तवार्ह नाम आहुब्रवन्ति; स्वयमात्मनैव निजकूटव्यवहारेणैव अन्धकानां यदुवंशीयानां क्षयकर: प्रभामयज्ञे विनाशकर: सर्वं सर्वाभीष्टं ददातीति सर्वद:, स माया लक्ष्म्या धव: पतिर्नारायण:, पायात् रक्ष्यात् ।

शिवपक्षे तु—ध्वस्तो विनष्टो मनोभव: कामदेवो यस्मात्तेन, येन शिवेन, पुरा त्रिपुरासुरविनाशकाले, गलिजितो वामनरूपेण बलिविजयिनो नारायणस्यापि काय: शरीरम्, अस्वीकृत: शर: कृत:; यश्च उद्वृत्त क्षत्कर्षण वर्त्तमान: भुजङ्ग: सर्प एव हारी बलयश्च यस्य धतादृश:, यश्च गङ्गां भागीरथीं मस्तके अक्षारयत्, अमरा देवाश्च यस्य शशी अस्यास्तीति शशिमत् शिरो मस्तकं यस्य स शशिमच्छिरा: स चासौ उरश्चेति शशिमच्छिराहर:, इति इत्थं स्तुत्यं स्तवार्हं नाम आहु:; अन्धकक्षयकर: अन्धकाव्यसूरविनाशकारी, स उमाधव: पार्वतीपंति: स्वयं सर्वदा त्वां पायात् रक्ष्यात् ।

अत्रोमवपक्षीया: पौ राक्षिकवार्चा: स्वयमहुसन्देया: ।

अत्रेति । प्रथमादिपदेन "उद्वृत्तं" इत्यादीन: ग्रहणम् । द्वितीयादिपदेन च "शशिमच्छिरोहर:" इत्यस्य ग्रहणम् । एकत्र उदाहृतश्लोकरूपैकवाक्ये । ननु स्पष्टार्थ पृथगुदाहरणमवोचितमित्याह ग्रन्थात ।

## विमला

उक्तभेदाष्टके इति ।—यथासम्भवं—"पृथुकार्त्तस्वरपात्रम्" इति सभङ्गश्लेष: । "नीतानाम्—" इति अभङ्गश्लेष: । "सर्वस्वं हर" इत्यत्र सभङ्गाभङ्गात्मक श्लेष इति बोध्यम् ।

एकत्रैव तत्रितयमुदाहरति—यथा वेति । येनेति ।—श्लोकोऽयं हरिहरीभयपक्षे एव व्याख्येय इति प्रथमं हरिपक्षे व्याख्या यथा—सर्वद:—सर्वाभीष्टप्रदायौ, स: मा—लक्ष्मी:, तस्या: धव:—पति:, कृष्ण इत्यर्थ:, उमाधवश्च, त्वां पायात्—रक्षतु । माधवं विशिनष्टि—येन अभवेन—अजेन, अन:—शकटं, ध्वस्तं—पादप्रक्षेपेण परावर्त्तितं, तथा पुरा—पूर्वस्मिन् काले, अमृतपरिवेशनावसरे इत्यर्थ:, बलिजित्—बलिनामकासुरराजस्य जेता, काय:—शरीरं, वामनदेह इत्यर्थ:, स्त्रीकृत:—असुराणां मोहनार्थं मोहिनीमूर्त्तिपरिग्रह: कृत: इत्यर्थ:, (अमृतार्थं विवदमानानां देवासुराणाम् अमृतपरिवेशनाय मायया नारायणेन मोहिनीरूपं धृतम् इति पुराणवार्त्ता) यश्च उद्वृत्तभूजङ्गहा—उद्वृत्तम्—उद्दामचरित्रं, भुजङ्गं—सर्परूपिणमधासुरं कालियं वा हतवानित्यर्थ:, तथा आरम्—अरिसम्बन्धि, बलं—सैन्यं, याति—आक्रामतीति आरबलय:, अथवा—उद्वृतभुजङ्गं हरतीति उद्वृतभुजङ्गहार:—गरुड़:, तस्य बलेन याति—गच्छतीति तथोक्त:, य: अगं—पर्वतं, गोवर्द्धनमित्यर्थ:, ("शैलवृक्षौ नगावगौ" इत्यमर:) कृष्णरूपेण, गां—पृथिवीञ्च, कूर्मरूपेण, अधारयत्, अमरा:—देवा:, यस्य शशिनं—चन्द्रं, मथ्नातीति शशिमत्—राहु:, तस्य शिर: हरतीति शशिमच्छिरोहर:, इति स्तुत्यं—स्तवनीयं, नाम आहु:—कथयन्ति, यश्च स्वयम् अन्धकानां—यादवानां, क्षयकर:—क्षय:—स्थानं, तस्य कर:—विधाता, द्वारकाख्यनिवासनिर्माता इत्यर्थ:, ("क्षयो रोगान्तरे वेश्म कल्पान्तापचयेषु च" इति मेदिनी) । हरपक्षे व्याख्या यथा—ध्वस्तमनोभवेन—दग्धकामेन, येन पुरा—त्रिपुरविध्वंसकाले इत्यर्थ:, बलिजित्काय:—विष्णुशरीरम्, अस्त्रीकृत:—अस्त्ररूपतया धनुषि संहित इत्यर्थ:, (विष्णुशरीरं शरं कृत्वा तेन त्रिपुरासुरो निपातित: इति पौराणिकी वार्त्ता) यद्वा—पुरा स्वीकृत:—नारीकृत: । (अत्र "मोहिनीरूपदिदृक्षुणा शिवेन प्रषितो विष्णु: पुनर्मोहिनीरूपं दधार" इति पौराणिकौ वार्त्ता) यश्च उद्वृत्त:—उत्कर्षेण वर्तत:, भुजङ्ग:—पञ्चग:, हार:—हारस्थानीय: बलय:—बलयस्थानीयश्च यस्य तथाविध:, यश्च (गङ्गा-

श्चेत्यत्र चकारो भिन्नक्रमे, तेन "यः" इत्यनेन अन्वयः) गङ्गाम् अधारयत्—शिरसि दधार इत्यर्थः, यद्वा—शरीरार्द्धेन गौरीं, शिरसि गङ्गाञ्च इत्यभिप्रायेण चकारः; अमराः,—देवाः, यस्य शिरः,—मस्तकं, भालस्थलमित्यर्थः, शशिमत्—चन्द्रवत्, तथा हर इति स्तुत्यं—स्तवार्हं, नाम च आहुः, तथा यश्च स्वयम् अन्धकक्षयकरः,—अन्धकासुरहन्ता, अन्धकाख्यमसुरं निहतवानित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

अत्रेति ।—उदाहरणे इत्यर्थः । अनयोः,—सभङ्गाभङ्गयोः तथा च एतेनैव सभङ्गाभङ्गतदुभयात्मकस्य त्रिविधश्लेषस्य उदाहृततया प्रत्येकं पृथक् उदाहरणमनावश्यकमिति भावः ।

## लक्ष्मी

**धीरा 'गच्छसु' मेघतमो दुर्धरवार्षिकदस्यु ।**

**अभ्रमदप्रसराहरणं रविकिरणास्ते यस्य ।। इत्यपभ्रंशच्छाया ।**

एवं वर्णादिगतत्वेनाष्टविधंश्लेषमुपपाद्य पुनः प्रकारान्तरेण त्रैविध्यमुपपादयति—पुनरिति । सभङ्गः शब्द (पद) विश्लेषणसम्पन्नः, अभङ्गः शब्द (पद) सादृश्ये सति अनेकार्थप्रतिपादनमात्रेण निष्पन्नः, तदुभयात्मकः सभङ्गाभङ्गोभयस्वरूपः, अष्टविधोऽयमलङ्कारः पुनस्त्रिधा भवतीत्यर्थः, सभङ्गाभङ्गोभयात्मको हि—वाक्ये क्वचिदंशे सभङ्गः क्वचिदंशे चाभङ्ग इत्येवं रूपो ज्ञेयः । अत्रेदम्बोध्यम्-पदश्लेष-विभक्तिश्लेष-भाषाश्लेषा एतत्त्रिप्रकारा एव सम्भवन्ति, एतदतिरिक्तवर्णश्लेषादयस्तु पञ्च केवलाभङ्गरूपा एव । अत एव वर्णश्लेषादयः पञ्च, पदश्लेष—विभक्तिश्लेष-भाषाश्लेषाश्च प्रत्येकं त्रय इति समुदायेन चतुर्दशविधाः श्लेषा भवन्ति ।' इति ।

एतदिति । यथासम्भवमिति । पृथुकार्त्तस्वरपात्रम्' 'महदे सुरसन्धम्मे' इत्यादौ च सभङ्गश्लेषमात्रम्, 'प्रतिकूलताम्' 'किरणा' 'सर्व एव सुधाकिरः' नीतानामाकुलीभावम्' इत्यादौ चाभङ्गश्लेषमात्रम्, 'सर्वस्वं हर सर्वस्य' इत्यादौ सभङ्गाभङ्गोभयात्मकः ।

एकत्रैव शिष्यानुसन्धानसौकर्यार्थं तत्रितयमुदाहर्तुमाह—यथा वेति ।

येनेति । सुभाषितावल्यां चन्द्रकस्य कवेः हरिहरोभयद्वारैवाशीर्वादात्मकपदमिदम् । तत्र हरिपक्षे अभवेन न विद्यते भवो जन्म यस्य तेन तथोक्तेन न भवः संसारो यस्मात्तेन वा 'भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः' इति मेदिनी, येन माधवेन अनः शकटं तत्र निलीनः शकटासुर इति यावत्, ध्वस्तं चरणोट्टङ्केन पातितम्, 'क्वीबेऽनः शकटोऽस्त्रीस्यात्' इत्यमरः 'अनः क्लीबं जले शोके मातृस्पन्दनयोरपि' इति विश्वः, पुरा किल बाल्ये श्रीकृष्णः शकटरूपधारिणं शकटासुरं पादघातेन पातयामासेतिपौराणिकी कथात्रानुसन्धेया । बलिजित् कपटेन विरोचनसुतं बलिनामानं दैत्यं जयतीति बलिजित् बलिजयनशीलः, स्वस्य कायो देहः पुरा अमृतपरिवेषणावसरे स्त्रीकृतो मोहिनीमूर्त्या स्त्रीरूपतां प्रापितः, अमृतार्थं विवदमानानां देवासुराणाममृतपरिवेषणाय मायया भगवता विष्णुना मोहिनीरूपं धृतमिति पौराणिकी वार्त्ता । यश्च उद्वृत्तस्य दृप्तस्य भुजङ्गस्य कालियसर्पस्य हन्ता यद्वा उद्धतस्योद्धतस्वभावस्यं भुजङ्गस्य भुजङ्गरूपधारिणः अघासुरस्य हन्ता, अरेरिदम्, आरं शत्रुसम्बन्धिबलं सैन्यं याति आक्रमितुं गच्छतीति आरवलयः, यद्वा रवाणां शब्दानां (नाम्नां) लयो यत्र स तथोक्तः नामरूपात्मकजगतो ब्रह्मणि लय इति वेदान्तविदनुमतम्, यश्च अगं गोवर्धनपर्वतं गां पृथिवीञ्च अधारयत् धृतवान् श्रीकृष्णवराहरूपतया करेण दंष्ट्राङ्कुरेण चेत्यर्थः अमरा देवाश्च यस्य शशिनं चन्द्रं मथ्नाति पीडयतीति शशिमत् राहुस्तस्य शिरो हरति तस्मिन्नेव मृतपरिवेषणे चक्रेण छिनत्तीति शशिमच्छिरोहर इति स्तुत्यं स्तवनीयं नाम नामधेयम् आहुः कथयन्ति स्वयम्

आत्मनैव निजकूटव्यवहारेणैव अन्धकानां यादवानां क्षयं निवासं द्वारकारूपं गृहं कृतवान् 'क्षयो गेहे च कल्पान्तेऽपचये रुजि' इति हैमः, सर्वदा सर्वाभीष्टदाता, स माया लक्ष्या धवः पतिर्हरिः त्वां पायात् रक्षतु 'इन्दिरा लोकमाता मा' 'धवः पतिः प्रियो भर्त्ता' इति चामरः हरपक्षे तु—ध्वस्तो विनाशितो मनोभूः कन्दर्पो येन तेन तथोक्तेन, येन हरेण, पुरा त्रिपुरनामकदैत्यवधकाले बलिजितो वामनरूपेण बलिदैत्यविजयिनो विष्णोरपि कायः शरीरम् अस्त्रीकृतो बाणरूपतां प्रापितः। उक्तं च महिम्नः स्तोत्रे पुष्पदन्तेन—

'रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति।' इति

पुरा किल तारकासुरस्य सुताः तारकाक्षः कमलाक्षो विद्युन्माली चेति त्रयोऽसुरा पितामहाल्लब्धवराः बलाढयाः मयासुरेण निर्मितेषु काञ्चनं रौप्यं कार्ष्णायसं चेति विविधेषु पुरेषु यथाक्रमं सपरिवाराः तस्थुः। तांश्चासुरान् शम्भुः शराग्निना ददाह तत्र विष्णुः बाणरूपतां प्राप्तवानिति पौराणिकी वार्ताऽत्राप्यनुसन्धेया।

यश्च उद्वृत्ता उत्कर्षेण वर्त्तमाना भुजङ्गा वासुक्यादय एव हारा वलयानि च यस्य स तादृशः, यश्च गङ्गां भागीरथीम् उत्तमाङ्गे अधारयत्, अमरा देवाश्च यस्य शशी यस्यास्तीतिशशिमत् शिर उत्तमाङ्गं यस्य स शशिमच्छिरः स चासौ हरश्चेति शशिमच्छिरो हर इति इत्थं स्तुत्यं स्तवनीयं नाम नामधेयम् आहुः, अन्धकक्षयकरः अन्धकनामकदैत्यस्य क्षयो नाशस्तत्कर्त्ता स उमायाः पार्वत्या धवः पतिः महेश्वरः स्वयं सर्वदा सर्वकाले त्वां पायात् अव्यात्।

उक्तत्रैविध्यश्लेषं सङ्गमयितुमाह—अत्रेति। प्रथमादिपदेन 'उद्वृत्तः' इत्यादीनां परिग्रहः। द्वितीयादिपदेन शशिमच्छिरो हर' इत्यस्य परिग्रहः। अनयोः सभङ्गाभङ्गयोःएकत्र एकस्मिन्नुदाहरणे। ननु स्पष्टप्रतिपत्त्यर्थं पृथगेव कथं नोदाहृत अत आह—ग्रन्थेति। नोदाहृत अस्माभिरितिशेषः। यद्यप्यत्र विष्णुपक्षे शशिमत्पदस्य राहावप्रयुक्तत्वम्, क्षयपदस्य गृहे निहितार्थत्वं च तथापि न दोषः श्लेषनिर्वाहकत्वात् वैचित्र्यातिशयजननेन प्रतिबन्धकाभावादित्यनुसन्धेयम्।

## रुचिरा

अस्य पुनः प्रभेदानवतारयति—

**७४ सभङ्गो** भङ्गेन पद (शब्द) भङ्गेन सह वर्त्तत इति तथोक्तः। अथ। अभङ्गो न भङ्गः पदभङ्गो यत्र सः। तथा—**तदुभयात्मकस्तौ** सभङ्गाभङ्गौ चामू उभयौ, तावात्मानौ यस्य सः। इत्येवम्-पुनः। 'श्लेष' इति शेषः। **त्रिधा।** 'त्रिविधोऽप्ययं श्लेषः प्रकृतानेकविषयाप्रकृतानेकविषयप्रकृताप्रकृतानेकभेदैर्भिद्यते।' इति टिप्पणीकाराः। इदं तत्त्वम्—श्लेषस्त्रिविधः सभङ्गा—भङ्ग—सभङ्गाभङ्गभेदात्, सोऽपि पुनः प्रत्येकं प्रकृतानेकविषया—प्रकृतानेकविषय-प्रकृताप्रकृतानेकविषयभेदात्त्रिधा भिद्यमानो नवविधः प्रोच्यते। तथा च—सभङ्गश्लेषोऽभङ्गश्लेष इत्येवं व्यपदिश्यमानोऽसौ त्रिविधः, अन्यदा स्वरूपसन्नेव सभङ्गादिभेदात्त्रिविध इत्युभयथा त्रिविधः। इति।

प्रकृतानेकविषयादीनामपि सभङ्गत्वादि मन्यमान आह-**एतद्भेदत्रयम्। च। उक्तभेदाष्टके** उक्तभेदानां 'वर्ण...' इत्यादिनाऽभिहितभेदानामष्टकं तत्र। **यथासम्भवम्।** ज्ञेयमन्वेषणीयम्, तत एषामनतिरेकादिति भावः।

**यथा वा**—

**'येन। अभवेन** न भवो जन्म यस्य तेनाजन्मनेत्यर्थः। अनः शकटं तत्र निलीनोऽसुर इति यावत्। 'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरः। **ध्वस्तं** परावृत्य पातितम्। तथा-**बलिजित्कायो** बलिं जितवानिति बलिजित्, तादृशः कायः शरीरम्। **पुरा। स्त्रीकृतः।** यद्वा-ध्वस्तमनोभवेन ध्वस्तो विनाशितो मनोभवो येन तेन

मदनान्तकेनेत्यर्थः । बलिजित् कायः शरीरं यस्य स हरिरित्यर्थः । पुरा अस्त्रीकृतः 'त्रिपुरा सुरं हन्तु'मिति भावः । च पुनः । यः । उद्वृत्तभुजङ्गहोद्वृत्ता दुराचारिणो ये भुजङ्गास्तान् हन्तीति तथोक्तः । 'यश्चोद्वृत्तस्याघासुरस्य (भुजङ्गस्य) हन्ता । यद्वा-कालियस्य पीडाकरः ।' इति विवृतिकाराः । **आरवलय** आरमरीणां सम्बन्धि यद् बलं तद् यातीति तथोक्तः । यः । अगं गोवर्धनपर्वतम् । च तथा । गां पृथ्वीम् । **अधार यत्** । यद्वा-उद्वृत्तभुजङ्गहारवलय उद्वृत्ता ये भुजङ्गास्त एव हारवलया हारवलयभूता यस्य सः । यः । च । गङ्गाम् । अधारयत् । **अमरा** देवाः । **शशिमच्छिरोहरः** शशिनं चन्द्रं मथ्नातीति शशिमत् सैहिकेयस्तस्य शिरोहर इति तथोक्तः । **इति** । **यस्य** । **च** । **स्तुत्यं** प्रशंसनीयम् । नाम । आहुः । यद्वा-अमराः । यस्य शशिमच्छशी चन्द्रोऽस्मिन्नस्तीति तत् शिरः यस्य सोऽसौ हरः । इतीत्येवम् । स्तुत्यम् । नाम । आहुः । सः अन्धकक्षयकरोऽन्धकानां यादवानां क्षयः स्थानं द्वारकेति यावत्, यद्वा अन्धकस्य तदाख्यासुरस्य क्षयो विनाशस्तकरः । **सर्वदः** सर्वं (स्वाभीष्टम्) ददातीति तथोक्तः । यद्वा-सर्वदा सर्वस्मिन्समये । माधवः यद्वा-उमाधवः । **स्वयम्** । **त्वाम्** । पायाद्रक्षेत् । अत्र कस्यापि स्मार्तस्य कमपि यजमानम्प्रत्याशीर्वादोक्तिः । पद्यमिदं सुभाषितावलीस्थं चन्द्रककवेः । अत्र 'येनध्वस्तमनोभवेने'त्यादौ 'या जयश्रीः....' इत्यादाविवाभवन्मतयोगत्वं दोषः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं चोक्तं प्राक् ॥ ६३ ॥'

उक्तं श्लेषस्य त्रैविध्यं क्रमाद्दर्शयति—**अत्र 'येन...' इत्यादौ** 'येन ध्वस्तमनोभवेन...' इत्यादौ । सभङ्गः । श्लेषः । **'अन्धक' इत्यादौ 'अन्धकक्षयकर'** इत्यत्र । अभङ्गोऽभङ्गश्लेषः । **अनयोः** सभङ्गाभङ्गश्लेषयोः । **च** । **एकत्र** । **सम्भवात्** । **सभङ्गाभङ्गात्मकः** । 'श्लेष' इति शेषः । नन्वेष पृथक् कथं नोदाहृत इत्याह—**ग्रन्थगौरवभयात्** । पृथक् । न नैव । उदाहृतः । 'अस्माभिरि'ति शेषः । अत्रायं पर्य्यालोकः—'पृथुकार्त्तस्वरपात्रं...' इत्यादौ सभङ्गः, 'नीतानामाकुलीभावं...' इत्यादावभङ्गः, सर्वस्वं हर सर्वस्य...' इत्यादौ पुनः सभङ्गाभङ्गः श्लेषः । तथा 'पृथकार्त्तस्वरपात्रं...' इत्यादौ कृतानेकविषयः, 'सर्वस्वं हर सर्वस्य...' इत्यादावप्रकृतानेकविषयः, 'प्रतिकूलतामुपगते हि विधौ...' इत्यादौ पुनः प्रकृताप्रकृतानेकविषयः श्लेषः । इत्येवमन्यत्राप्यूह्यम् । इति ।

अत्र केचिदाहुः—'सभङ्गश्लेष एव शब्दश्लेषविषयः, यत्रोदात्तादिस्वरभेदाद्भिन्नप्रयत्नोच्चार्यत्वेन भिन्नयोः शब्दयोर्जतुकाष्ठन्यायेन श्लेषः । अभङ्गस्त्वर्थश्लेष एव । यत्र स्वराभेदादभिन्नप्रयत्नोच्चार्यतया शब्दाभेदादर्थयोरेकवृन्तगतफलद्वयन्यायेन श्लेषः । यो हि यदाश्रितः स तदलंकार एव । अलंकार्यालंकरणभावस्य लोकवदाश्रयाश्रयिभावेनोपपत्तिः' इति । तदन्ये न क्षमन्ते ।

तथाहि—अत्र ध्वनिगुणीभूतव्यङ्ग्यदोषगुणालंकाराणां शब्दार्थगतत्वेन व्यवस्थितेरन्वयव्यतिरेकानुविधायित्वेन नियम इति । न च 'अन्धकक्षय—' इत्यादौ शब्दाभेदः, 'अर्थभेदेन शब्दभेदः' इति दर्शनात् ।

किं चात्र शब्दस्यैव मुख्यतया वैचित्र्यबोधोपायत्वेन कविप्रतिभयोट्टङ्कनाच्छब्दालंकारत्वमेव । विसदृशशब्दद्वयस्य बन्धे चैवंविधस्यवैचित्र्याभावाद्वैचित्र्यस्यैव चालंकारत्वात् । अर्थमुखप्रेक्षितया चार्थालंकारत्वेऽनुप्रासादीनामपि रसादिपरत्वेनार्थमुखप्रेक्षितयार्थालंकारत्वप्रसङ्गः । शब्दस्याभिन्नप्रयत्नोच्चार्यत्वेनार्थालंकारत्वे 'प्रतिकूलतामुपगते हि विधौ' इत्यादौ शब्दभेदेऽप्यर्थालंकारत्वं तवापि प्रसज्यतीत्युभयत्रापि शब्दालंकारत्वमेव । यत्र तु शब्दपरिवर्तनेऽपि न श्लेषत्वखण्डना, तत्र—

**'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।**
**अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥'**

इत्यादावर्थश्लेषः । अस्य चालंकारान्तरविविक्तविषयताया असंभवाद्विद्यमानेष्वलंकारान्तरेष्वपवादत्वेन तद्बाधकतया तत्प्रतिभोपत्तिहेतुत्वमिति केचित् ।

---

## विवृत्ति

श्लेषस्तावच्छब्दालंकारोऽर्थालंकारश्च संभवति, तयोः परमतनिराकरणपूर्वकं भेदं निरूपयति—**अत्रेति**। **जतुकाष्ठेति**। पृथगुपलभ्यमानयोरपि जतुकाष्ठयोर्योगे यथैकत्वप्रतिभासस्तथेहापीत्यर्थः। **लोकवदिति**। यथा लोके मौल्यादिगतं मुकुटादि मस्तकाद्यलंकारत्वेन व्यपदिश्यते तथा काव्येऽपीत्यर्थः॥ दूषयति—**तदन्ये इति**। शब्दाभेदादर्थश्लेष इति यदुक्तं तद्दूषयति—**न चेति**। दर्शनस्य प्रामाण्यानभ्युपगमे त्वाह—**किं चेति**। **कविप्रतिभया** कवीनामनुभवेन उट्टङ्कनाद् विषयीकरणात्। शब्दस्यान्वयानुविधायित्वं प्रदर्श्य व्यतिरेकानुविधायित्वं दर्शयति—**विसदृशेति**। बन्धे चेति चकारस्य वैचित्र्याभावाच्चेत्यन्वयः। ननु वैचित्र्यस्य शब्दान्वयव्यतिरेकानुविधायित्वेन किमायातमत आह—**वैचित्र्यस्यैवेति**। अलंकारत्वादलंकारनियामकत्वात्। **अर्थमुखप्रेक्षितया** अर्थानुसंधानसापेक्षत्वेन **अर्थालंकारत्वे** अर्थालंकारत्वाङ्गीकारे। **रसादिपरत्वेन** रसाद्युत्कर्षाभिप्रायप्रयोज्यत्वेन। **शब्दभेदेऽपीति**। 'विधौ' इत्यादौ स्वरभेदाभावेन एकप्रयत्नेनैव शब्दद्वयोच्चारणादर्थद्वयप्रतीतिरिति भावः। उभययत्रसभङ्गाभङ्गश्लेषयोः। "नन्वेवं श्लेषस्यार्थालंकारत्वोच्छेद इत्यत आह—**यत्र त्विति**। **स्तोकेनेति**। सुवर्णादिगौरवप्रकर्षाप्रकर्षप्रकाशिका लुप्तिका शिखरशलाका तुलाकोटिः। अत्र स्तोकादिपद-

स्थानेऽल्पादिपदनिवेशेऽप्यर्थद्वयप्रतीतिरस्त्येव। 'अयम्—' इत्यादौ 'वक्ष्यति' इत्यादिपदस्थाने 'धारयिष्यति' इत्यादिपदनिवेशे तु नार्थद्वयप्रतीतिरिति तत्र शब्दालंकारत्वमेव। इदानीं श्लेषस्यालंकारान्तरविविक्तविषयत्वमुपपादयितुं परमतं निराकरोति—**अस्य चेति**। श्लेषस्य चेत्यर्थः। **विविक्तेति**। विमुक्तेत्यर्थः। अपवादत्वेन असंभवविषयान्तरत्वेन **तद्बाधकतया** अलंकारान्तरबाधकतया तत्प्रतिभोत्पत्तिहेतुत्वमलंकारान्तरप्रतीतिजनकप्रतीतिविषयत्वम्। तथा च प्राथमिकप्रतीतिविषयत्वेन श्लेषस्य व्यपदेश एव, न तु चरमप्रतीतिविषयस्यालंकारान्तरस्य व्यपदेश इति भावः॥

## विवृतिपूर्तिः

**यत्रेति**। समासभेदेनोदात्तादिस्वरभेदाद्भिन्नप्रयत्नोच्चारणयोग्ययोरपि शब्दयोः श्लेषभङ्गभयेन स्वरभेदानादरादेकप्रयत्नोच्चारणे जतुकाष्ठन्यायेन शब्दश्लेष इति भावः॥

**यत्र स्वरेति**। समासाभेदेनोदात्तादिभेदाभावादभिन्नप्रयत्नोच्चार्यत्वेन शब्दभेदाभावे केवलमर्थयोरेकवृन्तगतफलद्वयन्यायेन श्लिष्टत्वादर्थश्लेष इति भावः॥

**पुराणवार्तेति**। अस्त्रीकृत इति च्छेदः। त्रिपुरवधे विष्णुर्यस्य बाणो बभूवेति पुराणवार्ता इति तु युक्तम्॥ तथा च शिवमहिम्नः स्तवे—'रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति'॥

**शब्दार्थेति**। पर्यायान्तरपरिवृत्तिसहत्वासहत्वाभ्यां शब्दार्थगतव्यवस्थितिरिति भावः॥

**दर्शनादिति**। 'यावन्त एवमर्थाः स्युः शब्दास्तावन्त एव हि।' इत्याद्युक्तिमूलकादित्यर्थः॥

**शब्दभेद इति**। विधिविधुशब्दयोः पार्थक्येऽपीत्यर्थः॥

**श्लेषत्वेति**। श्लेषत्वखण्डना श्लेषभङ्गः॥

**अलंकारेति**। अलंकारान्तरेभ्यो विविक्तोऽपरामृष्टो विभिन्नो विषयो यस्य तस्य भावस्तत्ता तस्याः। यत्र यत्र श्लेषो वर्तते तत्र तत्रान्योऽपि कश्चिदलंकार इति भावः॥

## विज्ञप्रिया

सभङ्गत्वे शब्दश्लेषत्वबीजमाह—**यत्रेति**। सभङ्गश्लेषस्थले काव्येऽपि स्वरभेदगणनमिति तन्मतम्। ततश्च भिन्नप्रयत्नोच्चार्य्यत्वेनैव पृथक् पृथक् शब्दभेदः। केवलं विभिन्नत्वेन प्रतीयमानयोरपि अत्यन्तसन्निधानरूप एव जतुकाष्ठयोरिव श्लेष इत्यर्थः। अभङ्गश्लेषस्त्वर्थश्लेष इत्याह—**अभङ्गस्त्विति**। तदर्थश्लेषत्वे बीजमाह—**यत्रेति**। अभिन्नप्रयत्नोच्चार्य्यत्वेन शब्दभेदाभावाद् एकवृन्तलग्नफलद्वयवदेकशब्दलग्नार्थयोरेव श्लिष्टत्वमित्यर्थः। तावतैव कथमर्थालङ्कारत्वम् इत्यत्राह—**यो हि यदाश्रय** इति। सभङ्गत्वे शब्दयोरेव श्लिष्टत्वात्तत्र श्लेषः शब्दाश्रितः। एकदेशाश्रितयोरर्थयोरेव च श्लिष्टत्वादर्थाश्रितस्तत्र श्लेष इत्यर्थः।

**तदन्ये** इति। काव्यप्रकाशकारादयस्तदनुयायिनो वयञ्च इत्यर्थः। **तथा ह्यत्रेति**। अत्रालङ्कारशास्त्रे शब्दशक्तिमूलव्यङ्ग्यत्वे ध्वनिगुणीभूतव्यङ्ग्ययोः शब्दगतत्वव्यवहारः। अर्थशक्तिमूलत्वे तु अर्थगतत्वेन दोषादीनां तु शब्दार्थान्वयाद्यविधानं स्फुटमेव। तथा च नानार्थभङ्गशब्दस्यापि श्लेषेणान्वयव्यतिरेकानुविधानात् तत्रापि शब्दश्लेषत्वमेव इति भावः।

मतविशेषे तु यत्र नानार्थस्थलेऽपि शब्दभेदस्तथा च तत्रपि श्लिष्टानेकशब्दकृतः शब्दालङ्कारस्तन्मते निर्बाध एवेति तन्मतं दर्शयति—**न चान्धक** इति। न च शब्दाभेद इत्यन्वयः। तत्र हेतुमाह—**अर्थभेदेनेति**। घटपटरूपार्थभेदेन घटपटशब्दभेदनादित्यर्थः। तथा चैतद् दृष्टान्तेनैवार्थभेदस्य शब्दभेदव्याप्यत्वसिद्धिरिति भावः। न च तत्कथं नानार्थकशब्दाः श्रूयन्ते इति वाच्यम्-एकप्रयत्नोच्चार्य्यत्वदोषेण भेदाग्रहात्।

ननु सभङ्गश्लेषस्थलेऽर्थभेदात् त्वदभिमतस्वरभेददृष्टान्तेन अभङ्गानेकशब्दानामर्थभेदात् स्वरभेद एव स्यात्। तथा च स्वरभेदवैलक्षण्यग्रहे कथं भेदाग्रहः स्यादतोऽर्थभेदस्य शब्दभेदव्याप्तिरप्रयोजिकैव इत्यत एकप्रयत्नेन नानाशब्दोच्चारणमित्यत आह—**किञ्चेति**। शब्दस्यैव मुख्यतया वैचित्र्योपायत्वेन कविप्रतिभयोट्टङ्कनाद् विषयीकरणादित्यर्थः। ननु अन्धकाद्यखण्डशब्दस्य मुख्यत्वे किं प्रमाणमित्यत आह—**विसदृशशब्दद्वयस्येति**। नहि हरिणशब्दस्थले तदर्थकेन्द्रादिशब्दप्रयोगे हरिं नौमीत्यत्रेव विष्णिवन्द्रौ नौमीत्यत्रापि श्लेषरूपवैचित्र्याननुभव इत्यर्थः। नन्वर्थमुखप्रेक्षित्वाद् अभङ्गश्लेषस्याऽर्थालङ्कारत्वमुच्यते इत्यत आह—**अर्थमुखेति**। अनुप्रासादीनामित्यादिपदात् सभङ्गश्लेषवक्रोक्त्यादिपरिग्रहः। **रसादिपरत्वेनेति**। रसनिष्ठगुणार्थकत्वेनैव रसपरत्वं बोध्यम्। आदिपदात् लाटानुप्रासे वाच्यार्थमुखप्रेक्षित्वमेव बोध्यम्।

अभिन्नप्रयत्नोच्चार्य्यत्वेनार्थालङ्कारत्वस्य तदुक्तस्य शब्दालङ्कारतया निर्विवादे वर्णश्लेषवर्णानुप्रासेऽपि अतिप्रसक्तिमाह—**प्रतिकूलतामिति**। **उभयत्रापि** इति। सभङ्गाभङ्गयोरित्यर्थः।

नन्वेवमर्थश्लेषालङ्कारोच्छेदप्रसङ्ग इत्यत आह—**यत्र त्विति**। तमेव विषयमाह—**तत्र स्तोकेनेति**। अहो तुलाया मानतुलायाः कोटेरग्रभागस्य खलस्य च सुसदृशी वृत्तिर्यतः स्तोकेनेत्यादि। स्तोकेन गुञ्जाद्यल्पवस्तुना, पक्षे स्तोकेनाऽल्पप्रशंसनेनाऽल्पनिन्दनेन च। अत्रोन्नत्यधोगत्यर्थकपदान्तरदानेऽपि नार्थश्लेषत्वखण्डना।

इदानीं श्लेषस्य अलङ्कारान्तरासङ्कीर्णविषयाभावाद् अलङ्कारान्तरस्य च श्लेषासङ्कीर्णविषयसत्त्वात् सामान्यमलङ्कारान्तरमपवादत्वेन बाधित्वा श्लेष एवालङ्कारः अलङ्कारान्तरं तु तत् सङ्कीर्णं तद्ग्राहकमेवेति केचिदाहुः। तन्मतं दर्शयति—**अस्येति**। **तत्प्रतिभोत्पत्तिहेतुत्वमिति**—तत्प्रतिभा, अलङ्कारान्तरविषयिणी प्रतिभा तस्या एवोत्पत्तिहेतुत्वमस्य श्लेषस्य तद्विषयबोधकत्वमित्यर्थः। शब्दश्लेषेण श्लेषालङ्कारविषयप्रतिभैव जन्यत इत्यर्थः। नतु अलङ्कारान्तरविषयप्रतिभा इत्यर्थः। तथा चालङ्कारान्तरसंकरे श्लेष एवालङ्कार इत्यर्थः।

## लोचन

सम्प्रति सभङ्ग एव शब्दश्लेषविषयः; अभङ्गस्त्वर्थश्लेष इति स्वीकुर्वतां पक्षमनूद्य दूषयति—इहेत्यादि। आहुरित्यस्य दूरस्थेनोपपत्तेरितीति शब्देनान्वयः। सभङ्गः वर्णव्यूहेषु भङ्गेन युतः, तद्भावात्मकेन भिन्नपदेन वा सहितः। शब्दश्लेषविषयः। शब्दद्वैधभिन्ननिर्व्यूढार्थद्वैविध्यादित्यर्थः। **उदात्तादीति**—उच्चैरुदात्तः। नीचैरनुदात्तः। आदिशब्दात्तदन्तर्गतानामनुनासिकादीनां काकुभेदानां चोपसङ्ग्रहः। भिन्नप्रयत्नोच्चार्य्यत्वेन प्रयत्नभेदेन उच्चारणं विना उदात्तादिभेदाभावात्।एतेन तत्कार्य्येणातिभेदश्चाभिप्रेतः। यथा—

**"सारसवत्ता विहता न बका विलसन्ति चरति नो कङ्कः।**

**सरसीव कीर्त्तिशेषं गतवति भुवि विक्रमादित्ये॥"** इति

अत्र हि राजपक्षे सा, इति, कम् इति। सरः पक्षे नेतीत्यत्र तु सा नास्ति। **जतुकाष्ठन्यायेनेति**। यथा काष्ठयोर्भिन्नयोरप्युपायवशेन जडीकृतयोरेकता तथाभिन्नयोः पदयोः शब्दयोरेकत्र वर्णव्यूहे सन्निवेशः।

अर्थश्लेष एव शब्दस्वरूपविपर्यासाभावेऽप्यर्थस्य द्विधात्मकत्वादित्यर्थः। यत्रेति। यथा एकस्मिन्नेव वृन्ते फलद्वयं तथा एकस्मिन्नेव शब्देऽर्थद्वयसंसर्गः।

**यो हीति**। यथा लोके भुजाश्रितो भुजस्थालङ्कारः कण्ठाश्रितः कण्ठस्य तथासौ शब्दाश्रित इति भावः। **लोकवदिति**। लोके आश्रयाश्रयिभावेन एव व्यपदेशः, यथा राजपुरुषः। यद्वा उपपत्तेरूपादानाद् व्यवहरणादिति यावत्।

सिद्धान्तमाह—तद् उक्तप्रकारं पूर्वेषां मतम्, अन्येऽभियुक्ता न मन्यन्ते न स्वीकुर्वन्ति। कुतो न मन्यन्ते तत्र हेतुमाह—**तथाहीति**। अत्र अलङ्कारप्रस्तावे येषां द्वन्द्वार्थानां शब्दानां पर्य्यान्तरेण प्रतिपादनेऽपि न क्षतिस्त एवार्थगताः। येषां न तु तथा ते शब्दगता एवेति नियमनात् प्राचीनैरलङ्कारकारैरिति शेषः।

नच तन्नियमनमात्रेणाभङ्गस्य शब्दश्लेषत्वं, शब्दभेदादपि इत्याह—**नचेति**। हेतुमाह—**अर्थभेदेनेति**। दर्शनाद् युष्माभिरेव सिद्धान्तात् प्रमाणीकृतादिति शेषः।

येऽप्याहुर्यो यदाश्रितः स तदलङ्कार इति तन्मतेऽप्यत्र वैचित्र्यस्य शब्दनिष्ठत्वाच्छब्दालङ्कारत्वमित्याह—किञ्चेति। वैचित्र्यं लोकोत्तरविच्छित्तिरलङ्काररूपा। प्रतिभा नवनवोन्मेषशालिनी प्रज्ञा। उट्टङ्कनात् उल्लेखनात्। अत्र हेतुमाह—**विसदृशेति**। विसदृशमसमानश्रुतिकम्। यथा अन्धकक्षयकर इत्यत्र क्षयशब्दस्थाने विनाशनिवासरूपकशब्दद्वयम्। अस्य च वैचित्र्यस्यार्थानुसन्धानमन्तरेणानुपलब्धेरर्थालङ्कारत्वमस्तीत्याशङ्क्याह—**अर्थेति**। अर्थमुखप्रेक्षित्वमर्थानुसन्धाने वैचित्र्ययोगः। तथा सति अलङ्कारान्तरेऽतिप्रसङ्ग इत्यत आह—**अनुप्रासादीनामिति**। अयमर्थः—अनुप्रासादीनामपि हि रसादिपरत्वाभावे वृत्तिविरोधात्। रसादिरूपस्यार्थस्य तदभिव्यञ्जकस्य विभावादिरूपस्यार्थस्य वाऽनुसन्धानमस्त्येवेति तेपि कथं शब्दालङ्कारमध्ये युष्माभिरपि गण्यन्त इति।

यत् पुनरुक्तं शब्दस्यैकप्रयत्नोच्चार्य्यत्वेऽर्थालङ्कारत्वमिति तथाप्यव्याप्तिदोष इत्याह—**शब्दस्येति**। प्रतिकूलतामित्यादौ विधावित्यत्र इकारोकारयोरौकाररूपत्वेनाभिन्नप्रयत्नोच्चार्य्यत्वं तत् शब्दभेदेन शब्दश्लेषमङ्गीकुर्वतः। उभयत्र "येन ध्वस्त" इत्यादौ "अन्धकक्षय"इत्यादौ च।

तत् क्व नु पुनरर्थश्लेष इत्याह—**यत्र हीति**। शब्दस्य परिवर्त्तने पर्य्यायान्तरेण प्रतिपादने। सुवर्णादिगौरवप्रकर्षापकर्षसूचिका तुलाकोटिः। अत्र स्तोकादिस्थाने स्वल्पादिपदनिवेशेऽपि न द्व्यर्थताहानिः।

एष च नियमादलङ्काराणां विच्छित्तिमादायैव सम्भवतीत्येतद्विषये विद्यमानानामलङ्काराणां बाध इति ये मन्यन्ते तेषां पक्षमुपन्यस्य दूषयति-**अस्य चेति**। विद्यमानेष्वेतद्विषयेषु। तद्बाधकत्वात्। तेषामलङ्काराणां बाधकत्वादवकाशान्तराभावेन तद्व्यपदेशं बाधित्वा मुख्यत्वेन व्यपदेष्टुं योग्यत्वात्। अस्य च हेतुरपवादत्वेनेति। तेषामलङ्काराणां प्रतिभाबुद्धिस्विता उत्पत्तिहेतुरस्येति तत्प्रतिभोत्पत्तिहेतुः।

## कुसुमप्रतिमा

शिष्यबुद्धिप्रसारार्थं स्वमतयुक्तसूचनार्थञ्च क्रमात् परमतद्वयमाह इच्छेति। श्लेषप्रस्ताव इत्यर्थः। कैविद्वामतादयः। उदात्तादीत्यादिपदेन अनुदात्तसमाहारयोर्ग्रहणम्। एकप्रयत्न नोच्चारणे एकविधस्वरस्यैव सम्भवात् स्वरभेदस्थले भिन्नप्रयत्ने गोच्चारणमावश्यकमिति भावः। जत् लाक्षा काष्ठश्च तत् संसक्त दारु, तथोर्न्यायेन तुलनया। अथ यो शब्दसापेक्षयोरित्यर्थः। एकस्मिन् वृत्ते गतं स्थितं यत् फलद्वयं तस्य न्यायेन तुलनया। नन्वेवं

व्यवस्थायां कि विनिगमकमित्याह यो हीति । अलङ्करण मति करणसाधनः शब्दः । तथा च अलङ्कार्य्यालङ्करणभावस्य अलङ्कार्य्यालङ्कारयोरित्यर्थः । लोकवत् लौकिकालङ्कार्य्यालङ्कारवत्, आश्रयाश्रयिभावेन आधाराधेयभावेन, उपपत्तिः शब्दश्लेषार्थश्लेषयोर्व्यवस्था । अत्र तेषा मनुमाशयः—यथा लोके कर्णा श्रतं कुण्डलं कर्णालङ्कार उच्यते, यथा वा हस्ताश्रितो वलयो हस्तालङ्कारऽभिधीयते; तथा उक्तयुक्तेः शब्दमात्राश्रितः सभङ्गश्लेषः, शब्दश्लेष इत्यान्याते, अर्थ मात्राश्रितः अभङ्गश्लेषस्तु अर्थश्लेष इत्युच्यते । एवञ्च "ध्वस्तमनोभवेन" इत्यादौ शब्दश्लेषः "अन्धकक्षयकरः" इत्यादौ च अर्थश्लेष इति ।

तदिति । अन्ये काव्यप्रकाशकारादयः न मन्यन्ते युक्तियुक्ततया नाङ्गीकुर्वन्ति । तत्र हेतुमाह तथाहीति । अत्र अलङ्कारशास्त्रे । शब्दार्थगतत्वेन शाब्दत्वेन आर्थत्वेन च व्यवस्थतेर्व्यवस्थायाः अन्वयव्यतिरेकयोरनुविधायित्वेन अनुसारित्वेन नियमो । तथा च ततसत्त्वे तत्सत्त्वे तत्सत्ता अन्वयः, तदसत्त्वे तदसत्ता च व्यतिरेकः । तेन यत्र तत्तच्छब्दसत्त्वे ध्वन्यादिसत्तारादसक्त च तदसत्ता, तत्र ध्वन्यादीनां शाब्दत्वम्; इतरथा तु आर्थत्वम् । एवञ्च शब्दभङ्गाभङ्गोभयस्थलेऽपि तत्तच्छब्दसत्त्व एव श्लेषसत्त्वात् तदसत्त्वं च तदसत्त्वात् तदुभयस्थलेऽपि शब्दश्लेष एवेत्याशयः ।

अथ यथा भवन्तोऽन्व व्यतिरेकाभ्यां श्लेषादीनां शाब्दत्वमार्थत्वञ्च नियमयन्ति, तथा वयमपि शब्दः भेदाभेदाभ्यां तथा तन्नियभयामः । तेन च—

"यश्चाभयेः समो दोषः परोहारश्च यः स्मः । नैकस्तत्रानुयोज्यः स्यात्तादृगथ विनिश्चये ।"

इति न्यायादस्मन्मतानङ्गीकारे को नाम विशेषो हेतुरित्याह न चेति । शब्दाभेद इति वाच्यमिति शेषः । दर्शनात् "यावन्त एवमर्थाः स्युः शब्दास्तावन्त एव हि इति मीमांसकमय इति शेषः । एवञ्च मीमासकमतविरोध एव भवन्मतानङ्गीकारे विशेषो हेतुः । तेन व्यवहारपक्षे यादवार्थकत्वात् हरपक्षे च असुरविशेषार्थकत्वात् अथ भेदेन अन्धकशब्दस्यापि भेदावश्यकतया "अन्धकक्षयकरः" इत्यादावपि शब्दश्लेषत्वमेवानिच्छ्तापि भवता वाच्यमित्याशय ।

ननु "अथ भेदेन शब्दभेदः इति मीमांसकानामेव सिद्धान्तः, शाब्दिकानान्त "एकयोक्त्या पुष्पवन्तौ दिवाकरनशाकरौ" इत्यादिशाब्दकधुरीणामरसिंहादिवचनप्रामाण्यात् "अथ भेदेऽपि न शब्दभेदः" इत्येव सिद्धान्तः । तथा चालङ्कारिकाणां शब्दमात्रावलम्बितया प्रागुक्तयुक्त्या उक्तमीमांसकामतस्य विचारासहतया च शाब्दिकमतानुसरणस्यैवौचित्यात् 'अन्धकक्षयकरः' इत्यादावथश्लेष एवाङ्गीकार्य्य इत्याह किञ्चेति । अत्र अभङ्गश्लेषस्थलेऽपीत्यर्थः । मुख्यतयेति । तादृशशब्दाभवे वैचित्रयबोधाभावादिति भावः । कवेः प्रतिभया असाधारणबुद्धिनैपुण्येन, उट्टङ्कात् प्रकाशनात् शब्दस्यैवेति पूर्वेणान्वयः । शब्दालङ्कारत्वमेवेति । गौण मुख्यचायादिति भावः ।

अथ अर्थस्यापि वाच्यतया मुख्यत्वात् कविप्रतिभयैवोट्टङ्कन्नाच्च अर्थालङ्कारत्वमेवास्तामित्युक्तौ को कोष इत्याह विसद्दशेति । किञ्चेति चार्थः । विसदृशशब्दद्वयस्य बन्धे 'यादवक्षयकरः' 'अन्धकक्षयकरः' इत्यादिरूपविभिन्नशब्दाध्यस्य योजने । ननु अस्तु नाम वैचित्रयस्याभाव इत्याह वैचित्रयस्यैवेति । तथा चोक्तरीत्या अर्थयोर्मुख्यंत्वा टीकारेऽपि वैचित्रयाभावान्नाच्च लङ्कारस्वमित्ति भावः ।

ननु सभङ्ग स्थले अथनैरपेक्ष्येण केवल मेलनादेव शब्दालङ्कारत्वमांस्ताम्, अभङ्गस्थले तु अर्थसापेक्षतया अर्थालङ्कारत्वमेवोचितमित्याह अर्थमुखेति । अत्रापि किञ्चेति चार्थः । चार्थस्य मुखं वदनं प्रक्षत इत्यर्थ मुखप्रेक्षा यस्य भावस्तया किञ्चिन्मावार्थसम्बद्धतयेत्यर्थः । सौल्लुण्ठनौक्तिरियम् । तथा च अभङ्गस्थलेऽपि न सर्वथेवार्थ

सापेक्षत्वम्, किन्तु निरर्थकानामप्रयोगात्तावन्मात्रेणैवार्थसापेक्षत्वम्; तथापि च शब्दश्लेषणमेव श्लेषप्रयोजकमित्याशयः। अर्थालङ्कारत्वे अङ्गीकर्त्तव्ये इति शेषः। अनुप्रासादीनाइत्यादिशब्देन यमकादिशब्दालङ्कारमात्रग्रहणम्। रसादिपरत्वेन रसादिप्रकर्षजननाय प्रयुक्तत्वेन। अत्रादिशब्देन रसाभासभावादीनां संग्रहः। अर्थमुखप्रेक्षितः। तथैव किञ्चिन्मात्रार्थ सम्बद्धया। अर्थसम्बन्धाभावे रसादेरेवासम्भवेन तत्प्रकर्षस्याप्यसम्भवादिति भाव।

स्वमतदृढ़त्वाय पुनरपि "यत्र स्वराभेदादभिप्रयत्नोच्चार्य्यतया" इत्यादिपरोक्तिं दूषयति शब्दस्येति। अर्थालङ्कारत्वे अङ्गीकर्त्तव्ये इति शेषः। शब्दभेदेऽपीत। 'विधौ' इत्यस्यसमासाभावेन स्वरभेदाभावादभिन्नप्रयत्नाच्चार्य्यतया भवन्मते शब्दभेदसम्भवेऽपि अर्थद्वयदर्शनादेव शब्दाभेदावश्यम्भावेऽपीत्यर्थः। तत्रापि मत इति शेषः। इति हेतोः। उभयत्रापि "ये। ध्वस्तमनोभवेन" इत्यादौ सभङ्गस्थले "अन्धकक्षयकरः' इत्यादावभङ्गस्थलेऽपीत्यर्थः।

अथ तर्हि कुत्रार्थश्लेष इत्याह यत्रेति। श्लेषत्वस्य खण्डना हानिः। तत्र अर्थश्लेष इति परेक्षान्वयः।

स्तोकेनेति। तुलाकोटिः खलश्च, स्तोकेन अल्पभारदानेन अल्पधनदानेन च उन्नतिम् ऊर्द्धगमनम् अभ्युदयञ्च, आयाति लभते; स्तोकेन पुनरल्पभावापसारणेन अल्पधनक्षयेण च अधोगतिम अधोगमनं दैन्यश्च आयाति प्राप्नोति। अतएव, अहो आश्चर्य्यम्! तुलाकोटेस्तोलनदण्डाग्रभागस्य खलस्य दुर्जनस्य च, मुमुद्रशी सर्वथा समाना वृत्तिरवस्था।

अत्र "अल्पेमोद्गतिमाप्नोति अल्पेनाप्नोत्यधः स्थितिम्" इत्येवं शब्दपरिवर्त्तनेऽपि उक्तविध्यर्थसत्त्वे श्लेषसत्त्वात् उक्तविधार्थासत्त्वे चश्लेषासत्त्वात् अर्थश्लेष एवेयाशयः।

'इह केचिदाहु' 'तदन्ये न मन्यन्ते' इत्युक्तद्वयभङ्ग्या ग्रन्थकृता विश्वनाथेन पनयोरेकतरोऽपि पक्षः साकल्येन नाङ्गीक्रियत इति प्रत्येतव्यम्। किन्तु "शब्दैः" स्वभावादेकार्यैः श्लेषोऽपिकार्य्यवाचनम्" इति वक्ष्यमाणार्थश्लेषलक्षणात् "स्वभावादेकार्थैरति शब्दश्लेषाद्व्यवच्छेद" इति तत्र तावभिधास्यामाधत्त्वाच्च स्वभावादनेकार्थैः शब्दैरनेकार्थाभिधाने शब्दश्लेषः। भावादेकार्थैः शब्दैरमेकार्थ भिधाने तु अर्थश्लेष अनेकार्थैः शब्दैरनेकार्थाभिधाने शब्दश्लेषः एकार्थैः शब्दैरनेकार्थाभिधाने तु अर्थश्लेष इति परमत इत्येतदेवास्य मतमिति प्रत्येतव्यम्। तेन सभङ्गस्थले शब्दश्लेष इति पूर्वमतपरिग्रहः; अःङ्गस्थले तु अनेकार्थः शब्दैरनेकर्थाभिधाने शब्दश्लेषः, एकार्थः शब्देरनेकार्थाभिधाने त अर्थश्लेष इति परमतसंग्रहः।

अन्वालङ्काराभावस्थल एव श्लेषव्यपदेश इत्युपपादयितुं खण्डनाभप्रायेण "मतान्तराणयाअथेति। श्लेषत्येत्यर्थः। अलङ्कारान्तर वविक्तविषयताया अन्यालङ्कारविषयताभिन्नविषयताया असम्भवात् अन्वालङ्कारसम्भवस्थल एवास्य सम्भवादित्यर्थः। अपवादत्वेन विशेषरूपत्वेन, तेषां सामान्यरूपाणामलङ्कारान्तराणा बाधकता हेतुना, तेषामलङ्कारान्तराणां या प्रतिभा प्रकाशस्तस्या उत्पत्तेर्हतुत्वं जनकत्वम्। अत्रायं सरलार्थः—यत्र यत्र अन्वेषामलङ्काराणां या प्रतिभा प्रकाशस्तस्या उत्पत्तेर्हतुत्वं जनकत्वम्। अत्रायं सरलार्थः—यत्र यत्र अन्वेषामलङ्काराणां सम्भवः, तत्र तत्रैव श्लेषस्य सम्भवः न पुनरन्वालङ्कारविषयपरित्यागेण श्लेषाऽवतिष्ठतामिति वाच्यम्, सर्वथैवान्यालङ्कारशून्यविषयासम्भवेन श्लेषस्यैवासम्भवात्। ते श्लेषो विशेषरूपतया अपवादरूपः, अन्यान्यालङ्कारास्तु सामान्यरूपतया उत्सर्गरूपाः, तेनैकत्र विद्यमानानप्यन्व नालङ्कारान् बाधित्वा श्लेष एव प्रथमं व्यपदेश्यो भवति, परञ्चान्यान्यालङ्कारप्रतीतिः श्लेषप्रतीतिप्रतिपाद्यति केचिद्वामनादयः।

उक्तस्वमतसमर्थनाय तैर्यष्टिचारितं तदपि दूषयितुमुत्थापयति इत्यमिति। अत्र प्रदर्शितस्वमते, इत्थ वक्ष्यमाणप्रकारम्, विचार्य्यते तैरेवेति शेषः। आदिशब्देन आद्य परिसंख्या विध्याभासादीनां ग्रहणम्। द्वितीयार्थस्य परप्रतीतिविषयीभूताश्च स्य, अनभिधेयतया अभिधया वृत्त्या अप्रतिपाद्यतया व्यञ्जनामात्रबोध्यतयेत्यर्थः। अस्य श्लेषस्य गन्धोलेशोऽपि न प्रसक्तिरेव नास्तीत्यर्थः, श्लेषे हि उभयार्थस्यैव वाच्यम् नियमादिति भावः। ततश्च समासोक्त्यादिव्यञ्जनप्रतिपाद्यालङ्कारविषये न श्लेषस्य सम्भव इत्यवधेयम्।

## विमला

श्लेषस्तावच्छब्दास्तङ्कारोऽर्थालङ्कारश्च सम्भवति, तयोः परमतनिराकरणपूर्वकं भेदं निरूपयति— इहेति। यत्रेति।—उदात्तादिस्वरभेदात्—उदात्तादीनाम्,—उच्चैःस्वरादीनाम्, [अत्रादिपदेन अनुदात्त-स्वरितयोः परिग्रहः, तदर्थश्च—अनुदात्तःनीच्चैःस्वरः, स्वरितः,—मध्यमस्वरः इति] स्वराणां भेदात्—पार्थक्यात्, भिन्नेन प्रयत्नेन—स्वरभेदजनितप्रयासेनेत्यर्थः, उच्चार्य्यत्वेन—उच्चारणीयत्वेन, भिन्नयोः,—समासभेदेन स्वरभेदात् भेदं गतयोः। जतुकाष्ठन्यायेन—यथा जतु काष्ठञ्च समवेतं प्रयत्नभेदेन जतुनः काष्ठं, काष्ठतश्च जतु पृथक् क्रियते, तथा स्वरभेदेन समवेतयोः शब्दयोःभेदोऽवगम्यते इत्यर्थः, पृथगुपलभ्यमानयोः अपि जतुकाष्ठयोर्योगे यथैकत्वप्रतिभासः, तथेहापि शब्दश्लेषः इति भावः।-स्वराभेदात्—समासाभेदेनोदात्तादिस्वरभेदाभावात्, अभिन्नप्रयत्नोच्चार्य्यतया—एकप्रयत्नोच्चारणीयत्वेन, शब्दभेदात्—शब्दैक्यात्, अर्थयोः,—द्वयोरित्यर्थः, एकवृन्तगतफलद्वयन्यायेनेति—यथा एकस्मिन् वृन्ते फलद्वयं तिष्ठति, तथा एकप्रयत्नोच्चरिते एकस्मिन् शब्दे अर्थद्वयसमावेशेन अर्थश्लेषः इत्यर्थः। यदाश्रित इति—यमश्रित्य तिष्ठतीत्यर्थः। तदलङ्कारः,—तस्य आश्रयस्य अलङ्कारः, इत्यर्थः। लोकवदिति।—यथा लोके यो यमलङ्कारं परिधत्ते, स तस्य एवालङ्कारः, तद्दिहापीति भावः, यद्वा—यथा लोके मौल्यादिगतं मुकुटादि मस्तकाद्यलङ्कारत्वेन व्यपदिश्यते, तथा काव्येऽपीति भावः। दूषयति, तदन्ये इति। तथा हि—तमेवार्थं जानीहीतयर्थः। अत्र—अलङ्कारग्रन्थे इत्यर्थः। शब्दार्थगतत्वेन—अयं ध्वनिः, दोषः, गुणः, अलङ्कारः। वा शब्दगतः अर्थगतो वा इत्येवमित्यर्थः, व्यवस्थितेः,—पर्य्यायान्तरपरिवृत्तिसहत्वासहत्वाभ्यां शब्दार्थगतत्वव्यवस्थायाः इत्यर्थः, अन्वयेति—तत्सत्त्वे तत्सत्ता अन्वयः, तदसत्त्वे तदसत्ता व्यतिरेकः, तौ अनुविदधाति—अनुसरतीति तथोक्ता तस्याः भावः तेन, नियमः,—निर्द्धारणमित्यर्थः; यदि तस्य शब्दस्य सत्तायामेव तस्य ध्वन्यादेः सद्भावः, न तु तत्परिवृत्तौ, तदाध्वन्यादीनां शब्दगतत्वम्, अन्यथा अर्थगतत्वमिति भावः। तस्मात् "अन्धकक्षयकरः" इत्यादौ शब्दाभेदेऽपि नार्थश्लेषः, शब्दपरिवृत्त्यसहत्वात् शब्दानामेवात्र प्राधान्यमिति बोध्यम्। शब्दाभेदादर्थश्लेष इति यदुक्तं, तद्दूषयति, न चेति।—अर्थभेदेनेति। —"सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति" इति न्यायादिति भावः। दर्शनस्य प्रामाण्यानभ्युपगमे त्वाह, किञ्च अत्रेति।—अत्र—अन्धकेत्यादौ, मुख्यतया—प्राधान्येन, कविप्रतिभया—कवेः प्रज्ञोन्मेषेण, उट्टङ्कनात्—उत्कीर्त्तनात्, उत्थापनादित्यर्थः॥ शब्दस्यान्वयानुविधायित्वं प्रदर्श्य व्यतिरेकानुविधायित्वं दर्शयति, विसदृशेति।—विसदृशस्य—अन्यविधस्य, शब्दद्वयस्य बन्धे—रचनायां, (अत्र चकारः भिन्नक्रमे, तेन वैचित्र्याभावाच्चेत्यन्वयः। ननु वैचित्र्यस्य—शब्दान्वयव्यतिरेकानुविधायित्वेन किमायातम्? अत आह, वैचित्र्यस्यैवेति।—वैचित्र्यस्य— चमत्कारस्य। अलङ्कारत्वात्—अलङ्कारनियामकत्वात् इत्यर्थः। अर्थमुखेति।—अर्थमुखप्रेक्षितया—अर्थानुगुण्यदर्शनिन, अर्थालङ्कारत्वे—यो हि अर्थानुगुण्यं दर्शयति, स एवार्थालङ्कार इत्येवम् अर्थालङ्कारत्वाङ्गीकारे इत्यर्थः। अनुप्रासादीनामिति।—अत्रादिपदेन वक्रोक्ति-भाषासम यमकादीनां परिग्रहः। रसादिपरत्वेन—रसाद्यनुकूलत्वेन,

रसाद्युत्कर्षाभिप्रायप्रयोज्यत्वेन इत्यर्थ; रसादीनाम् इत्यत्र आदिपदेन रसाभासादीनां ग्रहणम् । अर्थमुखप्रेक्षितया—रसादीनां व्यङ्ग्यार्थत्वादिति भावः, अर्थालङ्कारत्वप्रसङ्गः,—अर्थालङ्कारत्वापत्तिरित्यर्थः । अभिन्नप्रयत्नोच्चार्य्यत्वेन—एकप्रयासोच्चारणीयत्वेन । शब्दभेदेऽपि—"विधौ" इत्यादौ स्वरभेदाभावेन एकप्रयत्नेनैव शब्दद्वयोच्चारणात् अर्थद्वयप्रतीतिः इति भावः । तत्रापि, मते इति शेषः । इति—अस्मात् कारणात्, उभयत्रापि—"प्रतिकूलताम्" इत्यत्र "अन्धकक्षयकर" इत्यत्र च सभङ्गाभङ्गश्लेषयोः इत्यर्थः । ननु एवं श्लेषस्यार्थालङ्कारत्वोच्छेदः स्यात् इत्यत आह—यत्र त्विति । शब्दपरिवर्त्तने इति ।—शब्दस्य परिवर्त्तने—पर्य्यायशब्देनोपादानेऽपि, श्लेषत्वखण्डना—श्लेषत्वव्याघातः ।

स्तोकेनेति ।—अहो ।—आश्चर्य्ये ! तुलाकोटेः,—सुवर्णादिगौरवप्रकर्षाप्रकर्षप्रकाशिका लुप्तिका शिखरशलाका तुलाकोटिः तस्या इत्यर्थः, खलस्य—दुर्जनस्य च, वृत्तिः,—व्यवहारः, सुसदृशी—विशेषेण सौसादृश्यशालिनी, तथा हि, उभयमपीत्यर्थः, स्तोकेन—अल्पेन, उन्नतिम्—ऊर्द्धगतिम्, अभ्युदयञ्च, आयाति—प्राप्नोति, स्तोकेन—अल्पेन, अधोगतिं—निम्नगामित्वं, दुरवस्थाञ्च, आयाति । अत्र उदत्यधोगतिशब्दयोः परिवृत्तावपि, अथवा स्तोकादिपदस्थाने अल्पादिपदनिवेशेऽपि न श्लेषखण्डनम् । "अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति" इत्यादौ "वक्ष्यति" इत्यादिपदस्थाने "धारयिष्यति" इत्यादिपदनिवेशे तु नार्थद्वयप्रतीतिः इति तत्र शब्दालङ्कारत्वमेव इति बोध्यम् ।

इदानीं श्लेषस्यालङ्कारान्तरविविक्तविषयत्वमुपपादयितुं परमतं निराकरोति, अस्य चेति ।—श्लेषस्य चेत्यर्थः । अलङ्कारेति ।—अलङ्कारान्तरेभ्यः श्लेषभिन्नेभ्यः अन्येभ्यः अलङ्कारेभ्य इत्यर्थः, विविक्तः,—विभिन्नः, अपरासृष्ट इत्यर्थः, विषयो यस्य तत्तायाः, असम्भवात्—असत्त्वात्, यत्र यत्र श्लेषोऽस्ति, तत्र तत्रान्योऽपि कश्चिदलङ्कारोऽन्तीति नियम इति भावः; विद्यमानेषु—तिष्ठत्सु, श्लेषेण सहेति शेषः, अलङ्कारान्तरेषु—अन्येषु अलङ्कारेषु सत्सु इत्यर्थः, अपवादत्वेन—असम्भवविषयान्तरत्वेन, तद्बाधकतया—तेषामलङ्काराणां बाधकतया आच्छादकतया, तेभ्यः प्राबल्येनेत्यर्थः, तत्प्रतिभेति—तेषाम्—अलङ्काराणां, प्रतिभा—स्फुरणं, तस्या उत्पत्तिहेतुः,—सम्भवकारणं तत्त्वम्, अलङ्कारान्तरप्रतीतिजनकप्रतीतिविषयत्वमित्यर्थः, तथा च प्राथमिकप्रतीतिविषयत्वेन श्लेषस्यैव व्यपदेशः, न तु चरमप्रतीतिविषयस्यालङ्कारान्तरस्य व्यपदेष इति भावः ।

## लक्ष्मी

सम्प्रति सभङ्ग एव शब्दश्लेषविषयः, अभङ्गस्त्वर्थश्लेष इति स्वीकुर्वताम् अलङ्कारसर्वस्वकारादीनां मतमनूद्य दूषयितुमुत्थापयति—इहेति । अस्मिन् सभङ्गाभङ्गयोः शब्दार्थालङ्कारतामीमांसावसरे इत्यर्थः । केचित् अलङ्कारसर्वस्वकारादयः । आहुरित्यस्याग्रिमेणोपपत्तिरितीतिशब्देन सम्बन्धः । यत्र यस्मिन् सभङ्गश्लेषे उदात्तादिस्वरभेदात् उदात्तः 'उच्चैरुदात्तः' १/२/२९ इति पाणिनीयसूत्रप्रतिपादितस्वरूपः स्वर आदिर्येषां तेषां भेदात् आदिपदात् अनुदात्तस्वरितानुनासिकादीनां काकुभेदानां चोपसङ्ग्रहः । भिन्नौ विजातीयौ बाह्याभ्यन्तरप्रयत्नभेदेन भिन्नौ यौ प्रयत्नौ ताभ्यामुच्चार्यौ तयोर्भावस्तत्त्वं तेन तथोक्तेन, एकप्रयत्नोच्चारणे एकविधस्वरस्यैव सम्भवात्, विजातीयस्वरस्थले भिन्नप्रयत्ने उच्चारणं नावश्यकमितिभावः । भिन्नयोर्विजातीययोरित्यर्थः, अपीतिशेषः । जतु लाक्षा काष्ठञ्च तत् संसक्तं दारु तयोर्न्यायेन तुलनया । तथा च जतुसंयोगात् पूर्वं काष्ठं स्थितम्, पश्चात् जतुसंयोगेन जतुकाष्ठयोर्यथाश्लेषस्तथा भिन्नप्रयत्नोच्चार्यतया भिन्नयोः शब्दयोः श्लेषः सभङ्गः स च शब्दविषयाच्छब्दश्लेष इति ।

अर्थयोः स्वरूपतो भिन्नयोरिव एकत्रोत्पत्तिस्थानतया सोदरयोरिव कविप्रतिभोट्टङ्कनमहिम्नाऽभिन्नतयाऽवगम्यमानयोरित्यर्थः। एकस्मिन् वृन्ते प्रसवस्थाने गतं स्थितं यत्फलद्वयं तस्य न्यायेन तुलनया। 'वृन्तं प्रसवबन्धनम्' इत्यमरः, एकस्मिन् वृन्ते यथा फलद्वयं वर्त्तते तथा एकस्मिन् शब्दे अर्थद्वयमितिशब्दस्य भेदाभावादभङ्गः श्लेषः। अयञ्चार्थाश्रयत्वादर्थालङ्कार इति तदाशयः। नन्वेतादृशव्यवस्थायां किं बीजमिति तद्दर्शयति—योहीति। अलङ्करणमितिकरणसाधनः शब्दः। एवञ्च अलङ्कार्यालङ्करणभावस्य अलङ्कार्यालङ्करणयोरित्यर्थः। लोकवत् लौकिकालङ्कार्यालङ्कारवत्, आश्रयाश्रयिभावेन आधाराधेयभावेन उपपत्तिः शब्दार्थश्लेषयोः निष्पत्तिः।

अत्रायमाशयः—लोके अलङ्कारः कटककुण्डलादिर्यत्र हस्ताद्यवयवे वर्त्तते सोऽवयवोऽलङ्कार्यः, तदवयवस्य तु सोऽलङ्कारः, एवं योऽलङ्कारो यदाश्रयः स तदलङ्कारः यथा वलयो हस्तस्य कुण्डलं कर्णस्येत्यादि। तद्वत् केवलशब्दाश्रितः सभङ्गश्लेष इति व्यपदिश्यते, केवलार्थाश्रितः, अभङ्गश्लेषस्तु अर्थश्लेष इत्यभिधीयते। तथा च सभङ्गाभङ्गोभयात्मकोदाहरणे 'येन ध्वस्ते'त्यादौ ध्वस्तमनोभवेनेत्यादौ शब्दश्लेषः 'अन्धकक्षयकरः' इत्यादौ च अर्थश्लेष इति।

तदिति। तत् उक्तप्रकारं पूर्वेषां मतम् अन्ये काव्यप्रकाशकारादयोऽभियुक्ता इत्यर्थः। न मन्यन्ते न स्वीकुर्वन्ति। कुतो न मन्यन्ते इत्यत्र हेतुं प्रदर्शयति—तथाहीति। अत्र अलङ्कारशास्त्रे। शब्दगतत्वेन अर्थगतत्वेन शब्दार्थोभयगतत्वेन चेत्यर्थः व्यवस्थितेर्व्यवस्थायाः अन्वयव्यतिरेकयोरनुविधायित्वेन अनुकूलत्वेन नियमो निर्णयः। तथा च तत्सत्त्वे तत्सत्ता अन्वयः यथा दण्डचक्रादिसत्त्वे घटोत्पत्तिसत्त्वमित्यन्वयः, तदभावे तदभावश्च व्यतिरेकः यथा—दण्डचक्राद्यभावे घटोत्पत्त्यभावो व्यतिरेक इति। तेन यत्र तत्तच्छब्दसत्त्वे ध्वन्यादिसत्ता तदभावे च तदभावः, तत्र ध्वन्यादीनां शब्दगतत्वम्, इतरथा तु अर्थगतत्वम्। अयमत्र **काव्यप्रकाशकारादीनां** सिद्धान्तः—शब्दार्थयोर्मध्ये शब्देऽर्थे वा सति ये ध्वनिगुणीभूतव्यङ्ग्यदोषगुणालङ्काराः सन्ति असति च न सन्ति ते तदधीनस्वरूपतया तदीया इति व्यवस्थाप्यन्ते एतन्मूलकमेव तच्छब्दमनुपादाय तच्छब्दसमानार्थकशब्दोपादानेऽपि सम्भवासम्भवाभ्यां शब्दार्थगतत्वव्यवस्थितिः, इति प्राचां प्रवादः। एवञ्च यथा ध्वनिगुणीभूतव्यङ्ग्यदुःश्रवत्वादयो दोषाः ओज आद्यपरनामानो वामनाद्युक्ता गाढत्वादयो गुणा अनुप्रासादयश्चालङ्काराः तत्तच्छब्दे सति सन्ति असति च न सन्ति चेतिशब्दगता इत्युच्यन्ते। तथा च अपुष्टार्थत्वादयो दोषा, ओज आद्यपरनामानो वामनाद्युक्ताः प्रौढिप्रभृतयो गुणाः, उपमादयश्चालङ्काराः सति तस्मिन्नर्थे सन्ति असति च तस्मिन् न सन्ति च तत्तच्छब्दपरिवर्त्तनमपि सहन्त इत्यर्थगता इति नियम्यन्ते, यथा उभयश्लेषोदाहरणतया निर्णीतेऽपि 'येनध्वस्त...' इत्यादौ परार्द्धगत 'अन्धका' दिशब्द इव पूर्वार्द्धगतेऽपि 'ध्वस्तमनोभवे'त्यादौ तत्तच्छब्दे सति असति च श्लेषस्य सत्त्वमसत्त्वमिति शब्दाधीनस्वरूपत्त्वाविशेषेण शब्दश्लेष एवेति।

ननु यथा भवद्भिरन्वयव्यतिरेकाभ्यां श्लेषादीनां शब्दगतत्वमर्थगतत्वञ्च निर्णीयते, तथा अस्माभिरपि शब्दभेदाभेदाभ्यां तेषां निर्णयं करिष्यते तथासति नास्मन्मते कापि विप्रतिपत्तिरित्यस्मन्मतपरित्यागे किं बीजमित्यत आह—नचेति। शब्दाभेद इति वक्तव्य इति शेषः। दर्शनादिति 'यावन्त एवमर्थाः स्युः शब्दास्तावन्त एव हि' इति मीमांसकाद्युक्तमूलकादित्यर्थः। एवञ्च मीमांसकमतविरोध एव भवन्मतपरित्यागे बीजमिति भावः। तेन च प्रकृते विष्णुपक्षे यादवार्थकत्वात् शिवपक्षे दैत्यविशेषार्थकत्वात् अर्थभेदेन अन्धकशब्दस्यापि भेदावश्यम्भावित्वेन 'अन्धकक्षयकर' इत्यादावप्यकामेनापि भवता शब्दश्लेषत्वमेवाङ्गीकरणीयमीति समाधानाभिप्रायः।

शाब्दिकमूर्धन्यानाममरसिंहादीनां मते 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्युक्त्या 'अर्थभेदेऽपि न शब्दभेदः' इत्येव निर्णीतं वर्त्तते इति तदनुयायिनामालङ्कारिकाणामपि तन्मतानुसरणस्यैवौचित्येन

'अर्थभेदेन शब्दभेदः' इति मीमांसकमतविरोधेऽप्युपेक्षणीयत्वात् 'अन्धकक्षयकरः' इत्यादावर्थश्लेष एव स्वीकरणीय इत्याशयेनाह—**किञ्चेति**। **यद्वा** न केवलमस्मन्मत एव शब्दालङ्कारत्वं तत्र किन्तु येप्याहुः 'यो यदाश्रितः स तदलङ्कार' इति तन्मतेऽप्यत्र वैचित्र्यस्य शब्दनिष्ठत्वाच्छब्दालङ्कारत्वमित्यत आह—**किञ्चेति**। अत्र अभङ्गश्लेषस्थले 'अन्धकक्षयकरः' इत्यादावित्यर्थः। शब्दस्यैव 'अन्धक' इत्यादिशब्दमात्रस्यैव न त्वर्थस्य। मुख्यतया प्राधान्येन। वैचित्र्यं चमत्कारोऽलङ्काराद्यनन्यस्थितिहेतुः तादृशशब्दाभावेवैचित्र्याभावादितिभावः। कवेः प्रतिभया नवनवोन्मेषशालिन्या प्रज्ञया उट्टङ्कनात् उल्लेखनात् प्रकाशनादितियावत् शब्दस्यैवेति पूर्वेण सम्बन्धः। शब्दालंकारत्वमेतेति, 'अन्धकक्षय' इत्यादौ 'अन्धक' इत्यादिशब्दजातस्यैव चमत्कारः तदसत्त्वे तदसत्त्वात् तस्मात् वैचित्र्यस्य शब्दाधीनतया प्रकृते शब्दालङ्कारत्वमेव न त्वर्थालङ्कारत्वं 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न्यायादिति भावः।

ननु शब्दार्थयोर्मध्ये यथा शब्दस्य मुख्यत्वेन कविप्रतिभोट्टङ्कनेन च शब्दालङ्कारत्वमित्युच्यते तथार्थस्यापि वाच्यत्वेन मुख्यत्वात् कविप्रतिभयैवोट्टङ्कनाच्च विनगमनाविरहादुक्तस्थले अर्थालङ्कारत्वमेव कथं न स्यादित्याह—विसदृशेति। अपि चेति चार्थः। विसदृशमसमानश्रुतिकम्, विसदृशशब्दद्वयस्य बन्धे 'यादवध्वंसकरः' 'अन्धकक्षयकरः' इत्यादिरूपासमानशब्दद्वयस्य रचनायाम्। एवंविधस्य एतादृशस्य 'अन्धकक्षय' इत्यादिसदृशशब्दद्वयबन्धगतस्येतियावत्। ननु वैचित्र्यस्याभाव एवास्तु का क्षतिरित्याह—वैचित्र्यस्यैवेति। अलङ्कारत्वात् अलङ्कारनियामकत्वात्। एवञ्चोक्तदिशा अर्थयोर्मुख्यत्वस्वीकारेऽपि वैचित्र्याभावान्नार्थालङ्कारत्वमित्याशयः।

ननु सभङ्गस्थले अर्थानुसन्धानापेक्षाभावेन मेलनमात्रेणैव शब्दालङ्कारत्वं भवतु, अभङ्गस्थले तु अर्थानुसन्धानापेक्षत्वेन अर्थालङ्कारत्वमेव युक्तमित्यत आह—**अर्थमुखेति**। अत्रापि अपि चेति चार्थः। अर्थस्य मुखं लक्षणया तद्वत् स्वरूपप्रत्यायकं 'चिन्हं तत्रेक्षितुं शीलमस्यास्तीति तस्य भावस्तत्ता तया तथोक्त्या किञ्चिन्मात्रार्थानुसन्धानसापेक्षत्वेनेत्यर्थः। तथा च अभङ्गस्थलेऽपि न सर्वथैवार्थानुसन्धानसापेक्षत्वं किन्तु निरर्थकानामप्रयोगात्तावन्मात्रेणैवार्थानुसन्धानसापेक्षत्वम्, तथापि च शब्दश्लेषणमेव श्लेषप्रयोजकमितिभावः। अर्थालङ्कारत्वे अर्थालङ्कारत्वस्वीकारे। अनुप्रासादीनां शब्दालङ्काराणामितिशेषः, आदिपदेन केवलयमकादिशब्दालङ्कारपरिग्रहः। रसादिपरत्वेन रसाद्युत्कर्षोत्पादनाय प्रयुक्तत्वेन। अत्रापिपदेन रसाभासभावादीनां ग्रहणम्। अर्थमुखप्रेक्षितया तथैव किञ्चिन्मात्रार्थानुसन्धानसापेक्षतया अर्थानुसन्धानाभावे रसादेरेवासम्भवेन तदुत्कर्षस्याप्यसम्भवादित्यभिप्रायः।

अथ पुनः सिंहावलोकनन्यायेन 'स्वराभेदादभिन्नप्रयत्नोच्चार्यतया शब्दार्थयोरेकवृन्तगतफलद्वय' न्यायेन श्लेष इति परमतं दूषयितुमाह—**शब्दस्येति**। अर्थालङ्कारत्वे अर्थालङ्कारत्वस्वीकारे। शब्दभेदेऽपीति। प्रतिकूलतामित्यादौ 'विधौ' इत्यत्र समासाभावेन स्वराभेदादभिन्नप्रयत्नेनैव शब्दद्वयोच्चारणादर्थद्वयप्रतीतिरितिभावः। तवापि मत इति शेषः। यद्यप्यत्र 'केचित्' इत्युपक्रम्य तेषां 'युष्माकम्' इत्येव वक्तुं युक्तम्, तथापि प्रतिवादित्वमुद्दिश्यैकवचनमित्यवधेयम्। इति हेतोः। उभयत्राऽपि 'येन ध्वस्त' इत्यादौ सभङ्गस्थले 'अन्धकक्षय' इत्यादावङ्गस्थलेऽपीत्यर्थः। तस्मात्। 'स्वराभेदात्' इत्यादि यदुक्तं तन्न सम्यगित्याशयः।

नन्वेवं श्लेषस्यार्थालङ्कारत्वोच्छेदः सर्वत्रशब्दश्लेषस्यैव सम्भवादत आह—**यत्र** त्विति। श्लेषत्वस्य खण्डना भङ्गो व्याघात इति यावत्। अत्र श्लिष्यतीतिश्लेषस्तस्य भावस्तत्त्वं श्लेषत्वमिति न तु श्लेषणं श्लेषस्तस्य भावस्तत्वं भावाद्भावप्रत्ययस्यानावश्यकत्वात्।

अर्थश्लेषमुदाहरति—**स्तोकेनेति**। तुलाकोटिः सुवर्णादिगौरवप्रकर्षाप्रकर्षसूचिका लुप्तिका शिखरशलाका, खलश्च, स्तोकेन अल्पभारदानेन अल्पद्रव्यदानेन च उन्नतिम् ऊर्ध्वगमनम् अहङ्कारञ्च आयाति प्राप्नोति। स्तोकेन पुनरल्पभारापगमनेन अल्पद्रव्यनाशेन च अधोगतिम् अधोगमनं दर्पभ्रंशं च अधोगतिम् अधः पतनं पादपतनञ्चेत्यन्ये आयाति प्राप्नोति अत एव अहो आश्चर्यम्। तुलाकोटेः उक्तस्वरूपतया खलस्य दुर्जनस्य च सुसदृशी तुल्या वृत्तिर्वर्त्तनम् आवरणमिति यावत्।

अत्र स्तोकादिपदपरिवर्त्तनेन 'अल्पेनोद्रेकमाप्नोति अल्पेनाप्नोत्यधःस्थितम्' इत्यादिरीत्या अल्पादिपदोपादानेऽपि उक्तविध्यर्थसत्त्वे श्लेषसत्त्वात् उक्तविध्यर्थाभावे च श्लेषाभावात् न श्लेषभङ्ग इत्यर्थश्लेष एवेत्यभिप्रायः।

**अत्रेदम्बोध्यम्**—ग्रन्थकृता हि 'शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम्' इत्यग्रेऽर्थश्लेषलक्षणमभिधाय 'स्वभावादेकार्थैरिति शब्दश्लेषाद्व्यवच्छेदः' इति विवृतम्, तेन स्वभावादनेकार्थैः शब्दैरनेकार्थप्रतिपादने शब्दश्लेषः, स्वभावादेकार्थैः शब्दैरनेकार्थप्रतिपादने तु अर्थश्लेषः, 'अनेकार्थैः शब्दैरनेकार्थप्रतिपादने शब्दश्लेषः एकार्थैः शब्दैरनेकार्थाभिधाने तु अर्थश्लेष' इति परमते, इत्येतदेव ग्रन्थकर्त्तुरभिप्रेतोऽवगम्यते तेन 'केचित्' इत्यनेन 'तदन्ये न मन्यन्ते' इत्यनेन चोभयोर्मतं नाभिप्रेतोऽस्येत्यवधेयम्। अतश्च सभङ्गस्थले शब्दश्लेष इति पूर्वमताश्रयणम्, अभङ्गस्थले तु अनेकार्थैः शब्दैरनेकार्थप्रतिपादने शब्दश्लेषः एकार्थैः शब्दैरनेकार्थप्रतिपादने तु अर्थश्लेष इति परमताश्रयणम्। एतेन 'तदन्ये न मन्यन्ते' इत्यस्य काव्यप्रकाशकारादयस्तदनुयायिनो वयञ्च इत्यर्थं कुर्वाणाः परास्ताः।

इदानीं श्लेषस्यालङ्कारान्तरासङ्कीर्णविषयाभावात् अलङ्कारान्तरस्य च श्लेषासङ्कीर्णविषयसत्त्वात् सामान्यमलङ्कारान्तरमपवादत्वेन बाधित्वा श्लेष एवायमलङ्कारः अलङ्कारान्तरं तु तत्सङ्कीर्णं तद्ग्राहकमेवेति ये मन्यन्ते तेषां पक्षमुपन्यस्य दूषयितुम् अन्यालङ्काराभावस्थल एव श्लेषव्यपदेश इति समर्थयितुमुत्थापयति—**अस्येति**। श्लेषस्येत्यर्थः। अलङ्कारान्तरेभ्यो विविक्तोऽपरामृष्टो विभिन्नो विषयो यस्य तस्य भावस्तत्ता तस्यास्तथोक्तायाः असम्भवात् यत्र यत्र श्लेषो वर्त्तते तत्र तत्रान्यस्यापि कस्याऽप्यलङ्कारस्य सम्भवादित्यर्थः। विद्यमानेषु स्वस्वविषयविशेषमहिम्नाऽपरित्याज्येषु। अपवादत्वेन विशेषरूपत्वेन तेषां सामान्यरूपाणामलङ्कारान्तराणां बाधकतया कारणेन, तेषामलङ्कारान्तराणां या प्रतिभा आभानमात्रं तस्या उत्पत्तेः हेतुत्वं जनकत्वम्, केचित् तस्य अलङ्कारान्तरस्य प्रतिभा बुद्धिस्थितं ज्ञानमात्रं न तु स्वस्मिन् विश्रान्तिधामतया चमत्कारित्वं सा उत्पत्तिहेतुरस्येति विग्रहमाहुः। अत्रायं **सरलार्थः**—'बहुव्यापकं सामान्यमल्पव्यापको विशेषः' इति न्यायात् यत्रान्येषामलङ्काराणां सम्भवस्तत्र तत्रैव श्लेषस्य सम्भवः न पुनरन्यालङ्कारविविक्तविषयेण श्लेषोऽवतिष्ठत इति सर्वथैवालङ्कारान्तरविमुक्तविषयासम्भवेन श्लेषस्यैवासम्भवात्, एवं सति स्पष्टमेव श्लेषो विशेषरूपतया अपवादरूपः, अलङ्कारान्तराणि तु सामान्यरूपतया उत्सर्गरूपाणि ततश्च 'सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्' इति न्यायात् श्लेषस्तावदलङ्कारान्तराणां बाधकः 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति न्यायादपि श्लेषोऽलङ्कारान्तराणां बाधकः तेनैकत्र विद्यमानानप्यन्यालङ्कारान् बाधित्वा श्लेष एव प्रथमं व्यवहारपदं लभते किन्त्वन्यान्यलङ्काराणां प्रतीतिः श्लेषप्रतीति प्रतिपाद्येति। केचिदपसिद्धान्ततयोपेक्षणीयवाच्या वामनादय इत्यर्थः।

## रुचिरा

अत्र परमतं दर्शयति—अत्रास्मिन् सभङ्गाभङ्गयोः शब्दार्थालङ्कारतामीमांसाऽवसर इति यावत्। **केचित्।** अलङ्कारसर्वस्वकारादय इत्यर्थः। आहुः। यत्र यस्मिन् सभङ्गश्लेषे। उदात्तादिस्वरभेदादुदात्तः 'उच्चैरुदात्तः' १/२/२९ इत्युक्तस्वरूपः स्वर आदिर्येषां, ते चामी स्वरास्तद्भेदात्। आदिपदेन 'नीचैरनुदात्तः।' १/२/३० 'समवृत्त्या स्वरितः।' १/२/३१ इत्युक्तस्वरूपस्वरग्रहणम्। **भिन्नप्रयत्नोच्चार्यत्वेन** भिन्नौ विजातीयौ बाह्याभ्यन्तरप्रयत्नभेदेन भिन्नौ यौ प्रयत्नौ ताभ्यामुच्चार्यौ तयोर्भावस्तत्त्वं तेन। भिन्नयोर्विजातीययोः। 'अपी'ति शेषः। **शब्दयोः। 'जतु-काष्ठ' न्यायेन** 'जतुना युक्तं काष्ठं' तन्न्यायस्तेन। यथा जतु-काष्ठयोर्भिन्नयोरपि संपृक्तयोरेकत्वेन प्रतिभासस्तथेत्यर्थः। **श्लेषः।** 'स' इति शेषः। **सभङ्गश्लेषो** भङ्गेन समासवैचित्र्यानुपदं सम्पद्यमानेन पदभङ्गेन सह वर्त्तत इत्यसौ श्लेष इति तथोक्तः। **शब्दश्लेषविषयः** शब्दयोः श्लेष इत्यसावेव विषयो यस्य सः। एवेति निर्विचिकित्सितम्। इदमभिहितम्—सभङ्गस्य समासभेदेनानेकधा भिद्यमानैः पदैः श्लिष्टत्वेन स्वरभिन्नत्वं, तत्सत्त्वे प्रयत्नभिन्नत्वं, प्रयत्नभेदे शब्दभेदः, एवं पुनर्भिन्नयोस्तयोर्जतुकाष्ठयोरिवैकत्र समावेशः श्लेषः। अत एवासौ शब्दश्लेषः। यथाऽऽहुरलङ्कारसर्वस्वकाराः। उदात्तादिस्वरभेदात् प्रयत्नभेदाच्च शब्दान्यत्वे शब्दश्लेषः, यत्र प्रायेण पदभङ्गो भवति।' इति। इति। अत एव-यत्र यस्मिन् अभङ्गश्लेष इति यावत्। **स्वराभेदात्** स्वराणामुदात्तादीनामभेदः समासाभेदेन भेदाभावस्तस्मादिति तथोक्तात्। **अभिन्नप्रयत्नोच्चार्य्यतयाऽभिन्न** एकोऽसौ प्रयत्नस्तेनोच्चार्य्यौ तत्तया। 'हेतुने'ति शेषः। शब्दाभेदाच्छब्दयोरर्थद्वयप्रतिपादकत्वेन भिन्नयोरपि तथाऽभिन्नयोरिति यावत्, अभेद ऐक्यं तस्मात्। **अर्थयोः।** 'स्वरूपतो भिन्नयोरप्येकजन्मभूमितया सोदरयोरिव कविप्रतिभोट्टङ्कनमहिम्नाऽभिन्नतया प्रतीयमानयो'रिति शेषः। **'एकवृन्तगतफलद्वय'न्यायेनैकं** च तद्वृन्तं प्रसवस्थानं तद्गतं यत् फलद्वयं तन्न्यायस्तन्मार्गस्तेन। 'वृन्तं प्रसवबन्धनम्।' इत्यमरः। श्लेषाः। 'स' इति शेषः। अभङ्गो न भङ्गः समासाभावात्पदविभागो यत्र तादृशः। तु पुनः। अर्थश्लेषोऽर्थयोः श्लेष एकत्रैकत्वेन समावेशो यत्र तादृशः। 'अलङ्कार' इति शेषः। एवेति सिद्धान्तः। अत्र हेतुमाह-**अलङ्कार्य्यालङ्करणभावस्यालङ्कार्य्यमलङ्कर्त्तुमर्हमलङ्करणं** येनालङ्क्रियते तच्च तयोर्भावस्तस्य। अलङ्कार्य्यत्वस्य मस्तकादित्वस्येवालङ्करणत्वस्य मुकुटादित्वस्येव चालङ्कार्य्यत्वस्य शब्दार्थान्यतरस्यालङ्करणत्वस्य पुनरुक्तवदाभासोपमादित्वस्य चेति भावः। 'अचो यत्।' ३/१/९७ इति यत्। 'ल्युट् च' ३/३/११५ इति ल्युट्। लोकवल्लोक इव। 'तत्र तस्येव।' ५/१/११६ इति वतिः। **आश्रयाश्रयिभावेनाश्रयत्वेनाश्रयित्वेन चेत्यर्थः। उपपत्तेः** 'हेतो'रिति शेषः। यो ध्वनि-गुणीभूतव्यङ्ग्य—दोष-गुणा-लङ्कारान्यतमः। **ह्येव। यदाश्रितो यं शब्दमर्थं** वाऽऽश्रितः आश्रित्यावस्थित इत्यर्थः ! स ध्वन्याद्यन्यतमः। तदाकारस्तस्य स्वाश्रयभूतस्येवाकारो यस्य तादृशः। एव। इदमभिहितम्-सभङ्गः शब्दयोः श्लेषमधिगतोऽवतिष्ठत इति तस्य शब्दालङ्कारत्वम्, अभङ्गः पुनरर्थयोरित्यस्यार्थालङ्कारत्वमेव युक्तम्, दृश्यते हि लोके सौवर्णस्य मुकुट-कुण्डलादेः शिरः कर्णाद्याश्रयमहिम्ना शिरः प्रभृत्यलङ्कारत्वम्। यथाऽऽहुरलङ्कारसर्वस्वकाराः—'अर्थश्लेषस्तु यत्र स्वरादिभेदो नास्ति, अत एव न तत्र सभङ्गपदत्वम्। सङ्कलनया तूभय (शब्दार्थोभय) श्लेषः। यथा—'रक्तच्छदत्वं विकचा वहन्तो नालं जलैः सङ्गतमादधानाः। निरस्य पुष्पेषु रुचिं समग्रां पद्मा विरेजुः श्रमणा यथैव॥' अत्र 'रक्तच्छदत्व'मित्यादावर्थश्लेषः, 'नाल'मित्यादौ शब्दश्लेषः। उभयघटनायामुभयश्लेषः। एष च नाप्राप्तेष्वलङ्कारेष्वारभ्यमाणस्तद्बाधकत्वेन तत्प्रतिभोत्पत्तिहेतुरिति केचित्, 'येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृत' इत्यादौ विविक्तोऽस्य विषय इति निरवकाशत्वाभावात् नान्यबाधकत्वमित्यन्ये; तत्र पूर्वेषामयमभिप्रायः—इह प्राकरणिकाप्राकरणिकोभयरूपानेकार्थगोचरत्वेन तावत् प्रतिष्ठितोऽयमलङ्कारः। तत्राद्ये प्रकारद्वयं तुल्ययोगिताया

विषयः। तृतीये तु प्रकारे दीपकं भवतीति तावदलङ्कारद्वयमिदं श्लेषविषये व्याप्त्या व्यवतिष्ठते। तत्पृष्ठे चालङ्कारान्तराणामुत्थापनमिति नास्ति विविक्तोऽस्य विषयः। अत एवालङ्कारान्तराणां बाधितत्वात् प्रतिभानमात्रेणावस्थानम्। 'येन ध्वस्तमनोभवेन' इत्यादौ च प्राकरणिकत्वादर्थद्वयस्य तुल्ययोगितायाः प्रतिभानम्। अलङ्कार्यालङ्करणभावस्य लोकवदाश्रयाश्रयिभावेनोपपत्तेः। 'रक्तच्छदत्व...' इत्यादावर्थद्वयाश्रितत्वादयमर्थालङ्कारः 'नालं...' इत्यादौ तु शब्दद्वयाश्रितत्वाच्छब्दालङ्कारोऽयम्। यद्यप्य 'र्थभेदाच्छब्दभेद' इति दर्शने 'रक्तच्छदत्वं...' इत्यादावपि शब्दाश्रितोऽयं, तथाऽप्यौपपत्तिकत्वादत्र शब्दभेदस्य प्रतीतेरेकताऽवसायान्नास्ति। शब्दभेदः। 'नालं...' इत्यादौ तु प्रयत्नादिभेदात् प्रातीतिक एव शब्दभेदः। अतश्च पूर्वत्र 'एकवृन्तगतफलद्वय' न्यायेनार्थद्वयस्य शब्दश्लिष्टत्वम्, अपरत्र 'जतुकाष्ठ—' न्यायेन स्वयमेव श्लिष्टत्वम्, 'पूर्वत्र अन्वयव्यतिरेकाभ्यां शब्दहेतुकत्वाच्छब्दालङ्कारत्वम्' इति चेत्? न, आश्रयाश्रयिभावेनालङ्कारत्वस्य लोकवद्व्यवस्थानात्, एवं च—'सकलकलं पुरमेतत् सम्प्रति सुधांशुबिम्बमिव।' इत्यादौ न गुणक्रियासाम्यवत् शब्दसाम्यमुपमा प्रयोजकम्, अपि तु-उपमाप्रतिमोत्पत्तिहेतुः श्लेष एवावसेयः। श्लेषगर्भे रूपके तु रूपकहेतुकस्य श्लेषस्य तृतीयकक्षायां रूपके एव विश्रान्तिरिति रूपकेण श्लेषो बाध्यते। श्लिष्टविशेषणनिबन्धनायां च समासोक्तौ विशेष्यस्यापि गम्यत्वात् श्लेषस्यापि बाधिका समासोक्तिः। 'त्रयीमयोऽपि प्रथितो जगत्सु यद्वारुणीं प्रत्यगमद् विवस्वान्। मन्येऽस्तशैलात् पतितोऽत एव विवेश शुद्धयै वडवाग्निमध्यम्॥' इत्यत्र श्लोके विवस्वतो वस्तुवृत्तसम्भवि अधः प्रदेशसंयोगलक्षणं यत् यत् पतितत्वं, यच्च वडवाग्निमध्यप्रवेशनं, ते द्वे अपि त्रयीमयत्वसम्बन्धिवारुणीगमनरूपविरुद्धाचरणहेतुकाभ्यां पतितत्वाग्निप्रवेशनाभ्यामतिशयोक्त्या श्लेषमूलयाऽभेदेनाध्यवसिते, सोऽयमतत्क्रियायोगः। तद्धेतुका च 'मन्ये' इति क्रिया अतएव 'विशुद्धयै' इत्युत्प्रेक्षाऽत्र, 'अत एवे' ति परामृष्टो विरोधालङ्कारालङ्कृतोऽर्थो हेतुत्वेनोत्प्रेक्ष्यते 'विशुद्धयै' इति च फलत्वेन। ततश्च हेतुफलयोर्द्वयोरप्यत्रोत्प्रेक्षा। विरोधाभासस्य विरोधाभासत्वं लक्षणम्। अतो विरोधाभासनसमय एव हेतुफलोत्प्रेक्षयोरुत्थानम्, उत्तरकालं तु विरोधसमाधिः। श्लेषस्य च सर्वालङ्कारापवादकत्वाद् विरोधे प्रतिभोत्पत्तिहेतुरयं श्लेषः। यत्र तु प्रस्तुताभिधेयपरत्वेऽपि वाक्यस्य श्लिष्टपदमहिम्ना वक्ष्यमाणार्थनिष्ठमुपक्षेपापराभिधानं सूचकत्वं तत्र किं श्लेषः? उत शब्दशक्तिमूलध्वनिः? इति विचार्य्यते—तत्र न तावत् श्लेषः, अर्थद्वयस्योचितत्वेनाभिधेयतया वक्तुमनिष्टेः, नापि ध्वनिः, उपक्षेप्यस्यार्थस्यासम्बद्धत्वाभावात्तेन सहोपमानोपमेयत्वस्याविवक्षणात्। न चान्या गतिरस्ति तदत्र किं कर्त्तव्यम्? उच्यते—श्लेषस्योक्तनयेनाप्रवृत्तेर्ध्वनेरेवायं विषय इति निश्चयः। तथा हि-शब्दशक्तिमूले ध्वनावर्थान्तरस्यासम्बद्धत्वात्तत्सम्बन्धार्थमौपम्यं कल्प्यते। स च सम्बन्धः प्रकारान्तरेणौपम्यपरिहारेण यद्यप्युपपादयितुं शक्यः स्यात् तत् कोऽयमभिनिवेशस्तत्र। उपमाध्वनौ वस्तुध्वनिरपि सम्बन्धान्तरेण तत्र समीचीनः स्यात्। अत एव—'अलङ्कारोऽथ वस्त्वेव शब्दादेवावभासते। प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा॥' इति न्यायभरबन्धेन द्विधा शब्दशक्त्युद्भव उक्तः। एवं प्रकृतेऽपि यत्र सूचनाव्यापारोऽस्ति, तत्र शब्दशक्तिमूलो वस्तुध्वनिर्बोद्धव्यः, यथा—'सद्यः कौशिकदिग्विजृम्भणवशादाकाशराष्ट्रं रसात्यक्त्वा धूसरकान्तिवल्कलधरो राजाऽस्तशैलं ययौ। तत्कान्ताऽप्यथ सान्त्वयन्त्यलिकुलध्वानैः समुल्लासिभिः क्रन्दन्तं कुमुदाकरं सुतमिव क्षिप्रं प्रतस्थे निशा॥' इत्यत्र हरिश्चन्द्रचरिते प्रभातवर्णनानुगुण्येन राजशब्दाभिधेयेऽस्तमुपेयुषि चन्द्रे रोहिताश्वाख्यतनयसहितयोशीनर्या वध्वा युक्तस्य हरिश्चन्द्रस्य राज्ञो विश्वामित्रसम्पादितोपद्रववाशात् प्रातः स्वराष्ट्रं त्यक्त्वा वाराणसीं प्रति गमनं सूचितं स्यात्, तथा च कौशिकशब्दः प्रकृत इन्द्रोलूकयोर्वर्त्तते। सूचनीयार्थविषयत्वेन तु विश्वामित्रवृत्तिः। वल्कलसुताभ्यां त्वौपम्यं सूचनीयार्थनैरपेक्ष्येण सादृश्यसम्भवामात्रेण सम्भवनीयम्। अतश्च प्रकृते न सूचनीयस्य सम्बन्धात् शब्दशक्ति-

मूलो वस्तुध्वनिरयम्। इह च—'आकृष्यादावमन्दग्रहमलकचयं वक्रमासज्य वक्त्रे कण्ठे लग्नः सुकण्ठः प्रभवति कुचयोर्दत्तगाढाङ्गसङ्गः। बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स तादृक् प्रियो मे वाले लज्जा निरस्ता नहिनहि सरले चोलकः किं त्रपाकृत्॥' इत्यलङ्कारान्तरविविक्तोऽयं श्लेषस्य विषय इति नाशङ्कनीयम्, अपन्हुतेरत्र विद्यमानत्वात्। वस्तुतोऽपह्नवस्य सादृश्यपर्य्यवसायिता वाऽपह्नवेनापह्नवपर्य्यवसायिना व सादृश्येन भूतार्थापह्नवस्योभयत्र विद्यमानत्वात्। 'सादृश्यव्यक्तये यत्रापह्नवोऽसावपह्नुतिः। अपह्नवाय सादृश्यं यत्राप्येषाप्यपह्नुतिः॥' इति सङ्क्षेपः। आद्या स्वप्रस्ताव एवोदाहृता, द्वितीया तु सम्प्रति दर्शिता। तेनालङ्कारान्तरविविक्तो नास्य विषयोऽस्तीति सर्वालङ्कारापवादोऽयमिति स्थितम्।' इति। एतेन 'अन्वयव्यतिरेकानुविधायित्वेन तत्तदीयं मन्दमिति सूचितम्। अत एवाहू रसगङ्गाधरकाराः—'अन्वयव्यतिरेकाभ्यां हि हेतुत्वावगमो घटादिं प्रति दण्डादेरिवास्तु, न त्वाश्रयावगमः, स तु तद्वृत्तित्वज्ञानाधीनः। इह हि सभङ्गश्लेषस्य शब्दद्वयवृत्तित्वं 'जतुकाष्ठ' न्यायेन, अभङ्गश्लेषस्य चार्थद्वयवृत्तित्वम् 'एकवृन्तगतफलद्वय'वत् स्फुटमेवेत्येकस्य शब्दालङ्कारत्वम्, अपरस्यार्थालङ्कारत्वम्। यद्यपि द्वियीयस्यापि 'प्रतिप्रवृत्तिनिमित्तं शब्दभेदः' इति नये शब्दद्वयवृत्तित्वात् शब्दालङ्कारत्वमुचितम् तथाऽपि शक्तताऽवच्छेदकानुपूर्व्यभेदादभेदाध्यवसानात् शब्दद्वयवृत्तित्वज्ञानं दुःशकम्; अन्यथा 'प्रत्यर्थं शब्दभेदः'इति नये पराभिमतोऽर्थश्लेषोऽपि शब्दालङ्कार एव स्यात्।' इत्यलङ्कारसर्वस्वकारादयः।' इति। इति अत्रेदं तत्त्वम्-सभङ्ग एव शब्दश्लेषविषयः, न त्वभङ्गः, एतस्य परमर्थालङ्कारत्वमिति।

एतन्निराकरोति-**अन्ये** तेभ्यो भिन्नाः श्रद्धेया इति यावत्। तद् यत् 'स भङ्ग एव शब्दश्लेषः' इत्यादि केचिदाहुस्तत्सर्वमिति भावः (कर्म)। न नैव। **मन्यन्ते** 'क्षमन्ते' इति पाठान्तरम्। 'क्षोदक्षमत्वाभावादि'ति शेषः। **तथाहि** अत्रास्मिन् काव्ये। **ध्वनिगुणीभूतव्यङ्ग्य-दोष-गुणा-लङ्काराणाम्। शब्दार्थगतत्वेन** शब्दगतत्वेनार्थगतत्वेन शब्दार्थोभयगतत्वेन चेत्यर्थः। व्यवस्थितेर्व्यवस्थायाः। **अन्वयव्यतिरेकानुविधायित्वेन। नियमः**। अयम्भावः यथाहि-मृन्मये भृदोऽन्वयव्यतिरेकाभ्यां व्यवस्थानं तथैव काव्येऽपि यत्र तत्र शब्दाद्यन्यतमस्येत्येष स्थाने पन्था, न तु दण्डादेरिव शब्दादेर्निमित्तत्वेन, मृन्मयस्य दण्डाद्यसद्भावेऽपि तत्तत्सद्भावस्यैव ध्वन्यादेः शब्दाद्यसद्भावेऽपि तत्तत्सद्भावस्याङ्गीकारापत्तेः। न च तथेति घटादेर्मृन्मयत्वाद्युक्तौ मृदादेरिव ध्वन्यादेः शाब्दत्वाद्युक्तौ शब्दादेरन्वयव्यतिरेकाभ्यामेव तत्तत्सद्भावस्याङ्गीकारापत्तेः। न च तथेति घटादेर्मृन्मयत्वाद्युक्तौ मृदादेरिव ध्वन्यादेः शाब्दत्वाद्युक्तौ शब्दादेरन्वयव्यतिरेकाभ्यामेव व्यवस्थानं नियतम्। लोकवत्तत्तद्वयवस्थास्वीकारे तु मौल्यादिनिष्ठत्वाभावावसरेऽपि मुकुटादेर्मौल्याद्यलङ्कारत्वस्येव शब्दाद्याश्रया भावेऽपि तस्य तस्य शब्दाद्यलङ्कारादित्वस्य प्रसङ्गः स्यात्, न च तथा, तस्माद् यथोक्तमेव ज्याय इति स्थितम्। यथा व्याचक्षतेऽभियुक्ताः—'यस्मिन् शब्देऽर्थे वा सत्येव ये ध्वन्यादयः सम्भवन्ति, असति च तस्मिन् यदि त एव न, तर्हि ते तदधीनस्वरूपतया तदीया इति निर्विचिकित्सितम्। एवं च-यथा वस्तुध्वन्यादयो रसाद्यङ्गभूतव्यङ्ग्यादयो दुःश्रवत्वादयो माधुर्य्यादयः पुनरुक्तवदाभासादयश्च यस्मिन् शब्देऽर्थे वा सति सन्ति, यस्मिन् पुनरसति त एव न, तथाऽस्यापि तत्सत्त्वासत्त्वाभ्यां सत्त्वासत्त्वव्यवस्थाऽङ्गीकार्य्या।' इति। ननु शब्दाभेदादर्थश्लेषः, यत्रयत्र शब्दाभेदस्तत्रतत्र तथोपपत्तेः; इति चेन्नेत्याह—**'अन्धकक्षयः...' इत्यादौ** 'श्लेषे' इति शेषः। 'अर्थभेदेनार्थयोर्भेदो विजातीयत्वं तेन। अत्र हेतौ तृतीया। **शब्दभेदः** शब्दयोर्भेदो विजातीयत्वम्। 'भवती'ति शेषः।' इतिदर्शनादित्येतस्मात् सिद्धान्तात्, **शब्दाभेदः। इति।** न च। 'वाच्य'मिति शेषः। इदमभिहितम्-'अर्थभेदेन शब्दभेद' इति नये प्रत्यर्थं शब्दभेद इति स्थिते 'अन्धकक्षये' त्यादौ'अन्धके'त्यादीनां शब्दानामभेदापायात्तेषामेव परस्परं वैजात्येऽपि 'जतुकाष्ठ' सादृश्येन श्लेषः। असौ च शब्दानामित्यन्वयव्यतिरेकानुविधायित्वे शाब्दे शाब्दः। ननु 'अर्थभेदेन शब्दभेद' इति स्वीकारेऽर्थश्लेषो न क्वापि

स्वीकारेऽर्थश्लेषो न क्वापि सम्पत्स्यते, तत्रापि तथा शाब्दभेदे शाब्दत्वोपपत्तेरिति चेत्सत्यम्। यदि तत्र शब्दान्वयव्यतिरेकानुविधायित्वं सम्पत्स्यत। एतेन 'अन्यथा' प्रयर्थं शब्दभेद' इति नये पराभिमतोऽर्थश्लेषोऽपि शब्दालङ्कार एव स्यात्।' इति दूरं गतम्। अत एव—'शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम्।' इत्यत्र 'स्ववादेकार्थै'रिति च वक्ष्यमाणं सङ्गमिष्यते। इति। ननु-'अर्थभेदेन शब्दभेद' इति नयेन 'अन्धकक्षय' इत्यादौ शब्दभेद आस्तां नाम, किन्तु सत्यर्थभेदे अर्थश्लेष एव स्वीक्रियताम्, किमन्वयव्यतिरेकानुविधायितामुखप्रेक्षित्वेन? इत्याशङ्क्याह-किञ्च 'न तावानेव तत्र शाब्दत्वे हेतुः, किन्त्वन्योऽपि' इति भावः। अत्र 'अन्धकक्षय' इत्यादावित्यर्थः। **मुख्यतया** प्राधान्येन। **शब्दस्य** 'अन्धक' इत्यादि शब्दमात्रस्य। एव न तु ततदर्थस्या**वैचित्र्यबोधोपायत्वेन**। वैचित्र्यां चमत्कारोऽलङ्काराद्यन्यस्थितिहेतुः। **कविप्रतिभोट्टङ्कनात्** कवेः प्रतिभाऽनुभवस्तस्या उट्टङ्कनं स्फुरणं तस्मात्। **शब्दालङ्कारत्वम्**। एव। न त्वर्थालङ्कारत्वम्। 'सम्भवती'ति शेषः। इदमभिहितम्—'अन्धकक्षय...' इत्यादौ'अन्धक' इत्यादिशब्दजातस्यैव चमत्कारस्तदसत्त्वे तदसत्त्वात् तस्माद् वैचित्र्यस्य शब्दाधीनतया प्रकृते शब्दालङ्कारत्वमेव साम्प्रतम्। इति। ननु 'शब्दस्यैवे'त्यत्र 'एव'कारेण वैचित्र्यस्य शब्दान्वयानुविधायित्वं तदा समयोक्ष्यत, यदा नार्थस्य; इत्याशङ्क्य तस्य शब्दव्यतिरेकानुविधायित्वं प्रदर्श्य 'नार्थस्ये'ति द्रढयति-**विसदृशशब्दद्वयस्य** विसदृशस्यान्यविधस्य 'अन्धकक्षय' इत्यादौ 'यादवालय' इत्यादेः। बन्धे। अत्र विषये सप्तमी। च। एवं विधस्यैतादृशस्य 'अन्धकक्षय' इत्यादिसदृशशब्दद्वयबन्धगतस्येति यावत्। **वैचित्र्यस्य**। एव। न तु यादवालयेत्यादिबन्धगतस्य। अलङ्कारत्वादलङ्काररूपत्वात्। च। इदमभिहितम्-यदि **'अन्धकक्षय' इत्यादावर्थाश्रिततया**ऽर्थालङ्कारोऽभविष्यत्तर्हि तद्विसदृशशब्दद्वय (यादवालय) बन्धेऽपि समभविष्य द्वैचित्र्यम्, किन्तु न; इति वैचित्र्यस्यालङ्कारत्वबीजभूतस्य प्रकृते शब्दव्यतिरेकानुविधायित्वेन शब्दालङ्कारत्वमिति निर्विवादम्। ननु 'यो यन्मुखप्रेक्षी स तदलङ्कार' इति नयेन 'पृथुकार्त्तस्वरपात्रं...' इत्यादौ शब्दमुखप्रेक्षितया शब्दालङ्कारत्वम्। 'अन्धकक्षयकर' इत्यादौ पुनरर्थप्रेक्षितयाऽर्थालङ्कारत्वमवगन्तव्यम्, किमन्वयव्यतिरेकानुविधायित्वगवेषणेन? इत्याशङ्क्याह-**अर्थमुखप्रेक्षितया**ऽर्थस्य मुखं तद्वत्स्वरूपप्रत्यायकं चिन्हं तत् प्रेक्षितुं शीलमस्यास्तीति तस्य भावस्तत्ता तया। च। अलङ्कारत्वेऽलङ्कारत्वस्वीकारे इति भावः। **अनुप्रासादीनाम्**। 'शब्दालङ्काराणा'मिति शेषः। **अपि। रसादिपरत्वेनरसादौ** चमत्कारात्मनि श्रृङ्गारादौ परस्तत्त्वेनतदनुकूलतयाऽवस्थितत्वेन। अत्राभेदे तृतीया। **अर्थमुखप्रेक्षितया**ऽर्थपिक्षित्वेन। **अर्थालङ्कारत्वप्रसङ्गः**। 'स्या'दितिः शेषः। अत्रेदमुक्तम्-अर्थपिक्षितयाऽऽर्थत्वेऽनुप्रासादीनां शाब्दानामप्यार्थत्वमेव स्यात्। न चानुप्रासादीनां चमत्कारेऽर्थमुखप्रेक्षित्वाभावाच्छब्दालङ्कारत्वमिति वाच्यम्, तेषां रसाद्युत्कर्षाभिप्रायप्रयोज्यत्वात्। अत एवोक्तं कुवलयानन्दकारैः—'तत्र सभङ्गश्लेषः शब्दालङ्कारः। अभङ्गश्लेषस्त्वर्थालङ्कार इति केचित्। (अलङ्कारसर्वस्वकारादयः), 'उभयमपि शब्दालङ्कारइत्यन्ये (काव्यप्रकाशकारादयः) 'उभयमप्यर्थालङ्कार' इति स्वाभिप्रायः। एतद्विवेचनं तु चित्रमीमांसायां द्रष्टव्यम्।' इति। 'नन्वभिप्रायस्यार्थालङ्कारमध्यकथनादवगतस्यापि विशेषतः कथनमन्तरेण कथमुपपत्तिरित्याशङ्क्याह—एतदिति। यद्यप्युत्प्रेक्षाग्रन्थानन्तरं चित्रमीमांसा न क्वापि दृश्यते, तथाऽप्ययमाशय उन्नीयते चमत्कारेऽर्थमुखप्रेक्षित्वादर्थालङ्कारत्वम्।' इति चालङ्कारचन्द्रिका (कुवलयानन्दव्याख्या) कारैः। एतेन यत्तूक्तमेभिः 'अनुप्रासयमकादेस्तु न चमत्कारेऽर्थमुखप्रेक्षित्वादर्थालङ्कारत्वम्, अपि तु शब्दवैचित्र्याच्छब्दालङ्कारत्वमेव।' इति तद्दत्तोत्तरम्। इति।

अथ पुनः सिंहनिरीक्षणन्यायेन 'स्वराभेदादभिन्नप्रयत्नोच्चार्य्यतया शब्दार्थयो-'रेकवृन्तगतफलद्वय' न्यायेन श्लेषः' इति परमतं निराकरोति-शब्दस्येत्यादिना।

**शब्दस्य**। ''स्वराभेदा'दिति शेषः। **अभिन्नप्रयत्नोच्चार्यत्वेन**। अर्थालङ्कारत्वेऽर्थालङ्कारत्वस्वीकारे। **'प्रतिकूलतामुपगते हि विधौ।' इत्यादौ** 'शब्दश्लेषे' इति शेषः। **शब्दभेदे** शब्दयोर्विधुविधि' इत्येतयोः शब्दयो-

भेदे । अत्र सत्यर्थे सप्तमी । अपि । 'अभिन्नप्रयत्नोच्चार्यत्वेने'ति शेषः । अर्थालङ्कारत्वमर्थालङ्कारतास्वीकारः । तव । अत्र प्रतिवादित्वमुद्दिश्यैकवचनम्, अन्यथा—'केचि'दित्युपक्रम्य तेषां' 'युष्माकम्' इत्येव वक्तुमयोक्ष्यत । **अपि । प्रसज्यति । इति । उभयत्र** सभङ्गेऽभङ्गेचेत्यर्थः । **अपि । शब्दालङ्कारत्वम्** । एव इदमभिहितम्—समासभेदे स्वरभेदस्तस्मिन् पुनः सति प्रयत्नभेद इति शब्दभेदे सभङ्गोऽस्तु शब्दश्लेषः, किन्तु यदीममेव नयमनुसृत्य'विधा' वित्यादौ शब्दश्लेषत्वं गवेष्यते न तर्ह्यसावुपपद्यते, तथा हि-अत्र समासाभावात् स्वराभेदे प्रयत्नाभेदः, तत्सत्त्वे पुनः शब्दाभेदे शब्दश्लेषो न सम्भवति शब्दानेकत्वे तच्छलेषानुपपत्तेः । तस्मात्—'स्वराभेदात्' इत्यादि यदुक्तं न तत् सङ्गच्छते । इति ।

नन्वेवं सति सर्वत्रैवास्तां शब्दश्लेषः, कथं वा कुत्रचिदर्थश्लेषोऽपि भवेत् इत्यर्थश्लेषस्य सावकाशतां दर्शयत्—यत्र यस्मिन् । तु । **शब्दपरिवर्त्तने** । 'कृते' इति शेषः । **अपि । तथा । श्लेषत्वखण्डना** श्लेषत्वस्य श्लेषस्य खण्डना भङ्गोव्याघात इति यावत्, इति तथोक्ता । श्लिष्यतीति श्लेषस्तत्त्वं श्लेषत्वम् । नतु श्लेषणं श्लेषस्तत्त्वं श्लेषत्वम्; भावाद्भाव प्रत्ययावश्यकत्वाभावात् । न 'सम्भवती'ति शेषः । तत्र—

'स्तोकेनाल्पेनाल्पद्रव्यमानह्रासेनेत्येकत्रार्थः, अन्यत्राल्पोद्योगसार्थक्येनेत्यर्थः । उन्नतिमुन्नमनमूर्ध्वगमन-मुन्नतवद्वा स्वस्वरूपस्याविशिचकीर्षामित्यर्थः । **आयाति** प्राप्नोति । **स्तोकेन । अधोगतिम् । आयाति** । इत्येवम्-**तुलाकोटेस्तुलायाः** कोटिरेकदेशस्तस्य । च तथा खलस्य दुर्जनस्य । वृत्तिर्वर्त्तनं जीवनं वा । अहो आश्चर्यम् । **सुसदृशी** । नितान्तं सदृशत्वमधिगतेति भावः । सदृशशब्दस्य वाच्यलिङ्गत्वात्स्त्रीप्रत्ययः । अत्राल्पेन द्रव्यह्रासेन, तुलाकोटेरूर्ध्वगमनमिव खलस्याल्पलाभादिनाऽहङ्काराविष्कारः क्षणादेवाधः पाताय, अल्पेनैव पुनर्द्रव्यतिरेकेण तुलाकोटेरधः स्थानमिव खलस्य पुरुषार्थविपर्य्यासादिनाऽवमानावमननमपि क्षणिकम् । इत्यर्थो व्यङ्गः ॥ ८४ ॥'

**इत्यादौ । अर्थश्लेषः** 'शब्दपरिवृत्तिसहत्वा'दिति शेषः ।

ननु श्लेषस्यालङ्कारान्तराणां च परस्परं बाध्यबाधकत्वेनानुस्यूतत्वमेव, केषाञ्चित् श्लेषविषयत्वात्, श्लेष-स्यैवं केषाञ्चिद्विषयत्वाच्च, तस्मान्नायं पृथग्व्यपदेश्यः इति परमतमाह—अस्य चेत्यादिना ।

अस्य श्लेषालङ्कारस्य । च पुनः । **अलङ्कारान्तरविविक्तविषयताया** अलङ्कारान्तरा विविक्तविषयता तस्याः । 'पञ्चमी विभक्ते' २/३/४२ इति पञ्चमी । विविक्तो विषयो येषां तेषां भावस्तत्ता । **असम्भवात् । विद्य मानेषु** स्वस्वविषयविशेषमहिम्नाऽपरिहेयेषु । अत्र विषये सप्तमी । **अलङ्कारान्तरेषु** । अपवादत्वेनापवाद्यत्वेनाप-वादकत्वेनेति वा । अपवाद्यते इति, अपवादयतीति वाऽपवादस्तेन । 'अकर्त्तरि च कारके सञ्ज्ञायाम् ।' ३/३/१९ ति घञ् 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।' ३/१/१३४ इति पचादित्वादच् वा । अत्राभेदे तृतीया । **तद्बाधकतया** तानि अलङ्कारान्तराणि बाधकानि यस्येति तत्तया तेषां बाधक इति तस्य भावस्तत्ता तयेति वा । अत्र हेतौ तृतीया । **तत्प्रतिभोत्पत्तिहेतुत्वं** तेषां प्रतिभेति, सैवोत्पत्तिहेतुर्यस्य तस्य भावस्तत्त्वमिति, तत्प्रतिभाया उत्पत्तिहेतुस्तत्त्व मिति वा ।' इतीत्येवम् । केचिदपसिद्धान्ततयोपेक्षणीयाभिधाना उद्भटादय इति यावत् । **प्राहुः** । इदमभिहितम्-केषाञ्चि-द्विषयं श्लेषोऽभिनिविशते, श्लेषस्य विषयं केचिदिति नायमलङ्कारान्तरेभ्यो विविक्तः; तेष्वेव बाध्यबाधकत्वाभ्या-मेतस्य स्थितेः । 'येन नाप्राप्ते य आरभ्यते स तस्य बाधकः' इति च नयः । येनेति कर्त्तरि तृतीया । नञ् द्वयं प्रकृतं दढयतुम् । आपेश्च भावे क्तः । तथा च—यद्विषय एव य आरभ्यते स तं बाधते, अन्यश्चैतस्य बाध्य इति येषां विषय एव श्लेष आरभ्यते तानलङ्कारान् श्लेषो बाधते, ये च श्लेषविषय एव स्वयमारभ्यन्ते ते श्लेषं बाधन्ते श्लेषश्च तेषां बाध्य इति स्थितम् । इत्युद्भटादीनां मतम् । इति ।

इत्थमत्र विचार्यते—समासोक्त्यप्रस्तुतप्रशंसादौ द्वितीयार्थस्यानभिधेयतया नास्य गन्धोऽपि। 'विद्वन्मानसहंस—' इत्यादौ श्लेषगर्भे रूपकेऽपि मानसशब्दस्य चित्तसरोरूपोभयार्थत्वेऽपि रूपकेण श्लेषो बाध्यते। सरोरूपस्यैवार्थस्य विश्रान्तिधामतया प्राधान्यात्। श्लेषे ह्यर्थद्वयस्यापि समकक्षत्वम्। 'संनिहितबालान्धकारा भास्वन्मूर्तिश्च' इत्यादौ विरोधाभासेऽपि विरुद्धार्थस्य प्रतिभातमात्रस्य प्ररोहाभावान्न श्लेषः। एवं पुनरुक्तवदाभासेऽपि।

---

## विवृत्ति

श्लेषाबाध्यानलंकारान्विशिष्य दर्शयति—**इत्थमिति**। तत्र प्रथमं समासोक्त्यादेः श्लेषबाध्यत्वभ्रमं निराकरोति—**समासोक्तीति**। अस्य श्लेषस्य। गन्धोऽपि। अल्पप्रसङ्गोऽपि। व्यञ्जनयैव तत्र द्वितीयार्थस्य प्रतीतिरिति भावः। ननु श्लिष्टरूपके उभयार्थस्याभिधेयतया श्लेषबाध्यत्वमस्तीत्यत आह—**विद्वदिति**। विदुषां ज्ञानिनां मानसमेव मानसं सरोविशेषस्तस्य हंस इत्यर्थः। **श्लेषगर्भे** श्लेषप्रतिभोत्थापिते।

**उभयार्थत्वेऽपि** रूप्यरूपकोभयवाचकत्वेऽपि। श्लेषस्य बाध्यत्वप्रयोजकं संभवद्विषयान्तरत्वं दर्शयति—**सरोरूपस्यैवेति**। एवकारेण चित्तरूपस्य व्यवच्छेदः। विश्रान्तिधामतया रूपकप्रतीतिपर्यवसानास्पदतया। **प्राधान्यादिति**। अर्थयोः समकक्षत्वाभावोपपादकं समकक्षत्वं परस्परनिरपेक्षतया प्रधानत्वम्। तथा चार्थद्वयस्य समकक्षत्वे श्लेषस्य विषयः संभवति। प्रकृते तूद्देश्यविधेयभावेन गुणप्रधानभावापेक्षितया तुल्यकक्षत्वाभावाद्रूपकेण श्लेषो बाध्यते। अन्यथा श्लिष्टपरम्परितरूपकस्य निर्विषयतापत्तेरिति भावः। नन्वेवमपि विरोधाभासोच्छेदस्तत्र समकक्षार्थद्वयस्याभिधानेन श्लेषस्य निर्बाधप्रसरत्वादित्यत आह—**संनिहितेति**। संनिहितो बालः केश एवान्धकारो यत्र सा, भास्वन्मूर्तिर्देदीप्यमानशरीरा। अथ सनिहितनवीनान्धकारा सूर्यस्वरूपा चेति विरोधः॥ **प्रतिभातमात्रस्य** पदार्थस्मृतिविषयस्यैव। प्ररोहाभावादयोग्यत्वेन शब्दानुभवाभावात्। तथा चार्थद्वयस्य शब्दानुभवेऽपि श्लेषस्य विषयसंभवादुत्सर्गत्वम्, विरोधाभासस्यायोग्यतया शब्दानुभवाभावेऽपि विषय इत्यपवादत्वमिति भावः॥ **पुनरुक्तवदाभासेऽपीति**। द्वितीयार्थस्य पुनरुक्ततया शब्दानुभवो न भवतीति भावः।

## विवृतिपूर्तिः

**विद्वदिति**। 'विद्वन्मानसहंस वैरिकमलासंकोचदीप्तद्युते दुर्गामार्गणनीललोहितसमित्स्वीकारवैश्वानर। सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः॥' संपूर्णः श्लोकः॥

**श्लेषस्येति**। श्लेषस्येव व्यपदेश इत्यन्वयः॥

## विज्ञप्रिया

तन्मतेऽपि सकलालङ्कारसंकरे श्लेषो न बाधकः, किन्तु कतिपयालङ्कारसंकरे एवेति निष्कर्षं प्रतिपादयितुमाह—**इत्थमत्रेति**। तत्र समासोक्त्यप्रस्तुतप्रशंसासङ्कीर्णस्य श्लेषस्य तद्द्वयबाधकप्रसक्तिरेव नास्ति इत्याह—**समासोक्तीति**। प्रस्तुतकथनेनाऽप्रस्तुतव्यञ्जनं समासोक्तिः। क्वचित् श्लेषसङ्कीर्णा सा। यथा—

**"अनुरागवती सन्ध्या दिवसस्तत्पुरः सरः।**

**अहो दैवगतिश्चित्रा तथापि न समागमः ॥"**

इत्यत्र प्रकृतदिवसपुरःसरसन्ध्याकथनादप्रकृतनायकपुरःसरनायिकाप्रतीतौ रक्तिमानुरागोभयार्थकानुरागपदश्लेषसंकरः। अप्रस्तुतकथनेन प्रस्तुतव्यञ्जनं चाप्रस्तुतप्रशंसा; सा च क्वचित् श्लेषसङ्कीर्णापि भवति। यथा—

**"सततं या मध्यस्था कथयति यष्टिः प्रतिष्ठितासीति।**

**पुष्करिणी नैव तदुचितं पूर्णायत्तामधो नयसि ॥"**

इत्यत्र जनैः यष्टिप्लावनाप्राकरणिकपुष्करिणीकथनेन प्राकरणिकप्रतिष्ठागायकजनतिरस्कारकसम्पत्तिमज्जनप्रतीतौ मध्यस्थादिपदश्लेषसंकरः। एतदुभयत्र श्लेषालङ्कारप्रसक्तिरेव नास्तीत्यत आह—**नास्य गन्धोऽपीति**। अत्र हेतुमाह—**द्वितीयार्थस्येति**। अनयोर्द्वितीयार्थस्य व्यङ्ग्यत्वादेव। अर्थद्वयस्य वाच्यत्व एव श्लेषालङ्कारः। अप्रस्तुतप्रशंसादौ इत्यादिपदादुपमाध्वनिपरिग्रहः, यथा दुर्गालङ्घितेत्यादौ।

पूर्वोक्ते श्लिष्टपरम्परितरूपकेऽपि न श्लेषालङ्कारप्रसक्तिरित्याह—**विद्वन्मानसेति**। विदुषां मन एव मानसं सरस्तत्र हंसेति राज्ञः सम्बोधनम्। अत्र रूपकस्य श्लेषबाधकत्वे हेतुमाह—**सरोरूपस्येति**। विश्रान्तिधामता पर्य्यन्तिकप्रतीतिविषयता, हंसाश्रयत्वेन न तद्रूपकस्यैव तथात्वात्। उभयत्रैव विश्रान्तिसत्त्वे एव श्लेषप्रसक्तिः। यथा "पृथुकार्त्तस्वरपात्रम्" इत्यत्र सदनद्वयविशेषणयोः श्लिष्टार्थयोः विश्रान्तिस्तदाह—**श्लेषे हीति**।

श्लिष्टविरोधाभासेऽपि न श्लेषालङ्कारप्रसक्तिरित्याह—**सन्निहितेति**। नायिका भास्वन्मूर्त्तिर्दीप्यमानमूर्त्तिः सन्निहितबालरूपान्धकारा च मोहजनकत्वेन। बालस्यान्धकारत्वरूपणम्। अत्र भास्वन्मूर्त्तेः सूर्य्यबिम्बस्याल्पान्धकारसान्निध्यं बालपदभास्वत्पदश्लेषादुपस्थितं विरुद्धतयाऽऽभासते। अत्र श्लेषालङ्कराप्रसक्तिबीजमाह—**विरुद्धार्थस्येति**। प्रतिभातमात्रस्य उपस्थितमात्रस्य इत्यर्थः। प्ररोहाभावाद् अन्वयबोधाभावात्। नहि अन्धकारसन्निहितसूर्य्यमूर्त्तिर्नायिका न वाऽन्धकारसान्निध्यं सूर्य्यबिम्बस्य इति बाधस्यापि उपस्थितिमात्रेण एव विरोधाभासलङ्कारता श्लेषस्य तु श्लिष्टार्थस्यान्वये सत्येव अलङ्कारता विरोधाभासवत् श्लेषाभासालङ्कारानभ्युगमात्।

**एवं पुनरुक्तेति**—न हि भुजङ्गकुण्डलिशब्दयोः एकार्थत्वबोधः पर्य्यन्तिकः; आपातमात्रतः श्लेषेण तथा बोधात्।

## लोचन

इत्थमिति वक्ष्यमाणस्य बुद्धिस्थितया इदमा परामर्शः। अत्रेत्थमनन्तरोक्तम्। केषाञ्चित् पूर्वपक्षिणां मते समासोक्तिर्यथा—

**"उपोढरागेण विलोलतारकं, तथा गृहीतं शशिना निशामुखम्।**

**यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम् ॥"**

अप्रस्तुतप्रशंसा यथा—

**"एणालं सम्भ्रमेण त्यज गवय! भयं सैरिभ! स्वैरमास्व**

**क्षोभं मा यास्तरक्षो! विहर गिरिदरीं स्वेच्छयैवाच्छभल्ल!**

**पारिन्द्रः पारदृश्वा निखिलवनभुवः केवलं मोदतेऽसौ**

**माद्यत्कुम्भीन्द्रकुम्भस्थलगलितघनस्थूलमुक्ताफलोघैः ॥"**

आदिशब्देन पर्य्यायोक्त्यादिः। द्वितीयार्थः प्रकृताऽप्रकृतो वा यथा नायकव्यवहारादिः। अनभिधेयतया अभिधायाः प्रकृतबोधनेन विरमाद् अस्य श्लेषस्य।

श्लेषो बाध्यते—श्लेषव्यपदेशमनूद्यात्मना व्यपदेशः कार्य्यते। विश्रान्तिधामता चित्तरूपार्थानुवादेन विधेयत्वालाभात्। इह हि चित्तादिकमवच्छादितस्वरूपं सरोवरादिरूपत्वमापद्यते। अतएवात्र "राजनारायणं लक्ष्मीः समालिङ्गति निर्भरम्" इत्यत्र राज्ञो नारायणत्वोचितलक्ष्मीसमालिङ्गनं वर्ण्यते। तथा "मुखचन्द्रः प्रकाशते" इत्यत्र मुखं चन्द्ररूपतामापद्यत इत्युपरचितचन्द्रधर्मस्य तत्र वर्णनम्।

समकक्षत्वं न खलु रूपकवद् एकस्य गौणताऽन्यस्य प्राधान्यम्। स्वस्वसामग्रीवशेन पृथक्पृथक्स्वस्वार्थबोधनेनोपक्षेपात्। यथा—"हृदिन्नेषु वक्ष्यति" इत्यादौ वहनवचनयोः तथा "पृथुकार्तस्वर" इत्यादौ पृथुकादीनाम्।

बालः क्षुद्रः केशश्च। भास्वतः सूर्य्यस्य, भास्वतः कान्तिमतोऽपिवा सूर्य्यमूर्तौ अन्धकारस्य सन्निधानाभावाद् विरोधाभासः। यथा भासनं न तथा विश्रान्तिप्ररोहः।

पुनरुक्तवदाभासे यथोदाहृतभुजङ्गकुण्डलीत्यादौ। तेन हेतुना तुल्ययोगितायामित्यादेरूपरितनेन विद्यमानायामित्यनेन सम्बन्धः।

## कुसुमप्रतिमा

अथ श्लिष्टपरम्परितरूपके उभयार्थस्यैव वाच्यतया श्लेषः सम्भवत्वाह विद्वदिति। अयं श्लोकसमुदायो यथा काव्यप्रकाशे—

**"विद्वन्मानसहंस ! वैरिकमलासंङ्कोचदीप्तद्युते !**

**दुर्गामार्गयनीललोहित ! समितस्वीकारवैश्वानर !।**

**मन्दीति विधानदक्ष। विजयप्राग्भावभीम ! प्रभो !**

**सम्राज्य वरनीर ! वनमरशतं वैरिञ्चिमुञ्चैः क्रियाः ॥"**

विदुषां पण्डितानां मानस चित्तमेव मानसं मानसाख्यः सरोवरस्तत्र हंसो हंसस्वरूप उभयत्रापि सततावस्थानादिति भावः। विश्रामधामतया प्रतीतिपर्य्यवसानस्थलतया विधेयतयेत्यर्थः। समकक्षत्वं समानबलत्वम्। तथा च विदुषां चित्ते हंसस्य विचरणासम्भवात् हंसेन सह मानसस्यान्वयोपपत्तये चित्ते सरोवरत्वारोप आवश्यक एव, स चारोप एव रूपकं प्रतीतिपर्य्यवसानस्थलत्वेन विधेयत्वात् प्रबलश्च; श्लेषस्तु प्राक्प्रतीतिविषयत्वेनोद्देश्यत्वात् दुर्बल एवेति रूपकेण श्लेषो बाध्यते; तथा उक्तरीत्या चित्तरूपार्थस्य दुर्बलतया अर्थद्वयस्य समकक्षत्वाभावात् स्वतोऽपि न श्लेषप्रवेश इति नात्रापि श्लेषप्रसङ्ग इत्याशयः।

अथ तर्हि श्लिष्टविरोधाभासालङ्कारे अर्थद्वयस्यैव सममक्षतया श्लेष एवास्तामित्याह सन्निहितेति। सन्निहितो निकटवर्त्ती बालो नवीनोऽन्धकारो यस्याः सा तथाभूता, भास्वतः सूर्य्यस्य मूर्तिरिति विरोधः। सन्निहितो विधिना अवस्थापितः बालः केशः अन्धकार इव गाढकृष्णवर्ण इत्यर्थः यस्याः सा, तथा भास्वतो लावण्यद्युतिमती

मूर्त्तिः शरीरं यस्याः सा तथोक्ता चेति तद्विरोधसमाधानम्। विरुद्धार्थस्य सूर्य्यान्तिके अन्धकारसन्निधानरूपस्य, प्रतिभातमात्रस्य शब्दशक्त्या बुद्धावुपस्थितमात्रस्य प्ररोहाभावादसम्भवत्वेन अङ्कुरवत् क्षणमपि स्थायित्वाभावात् न श्लेषः, विरुद्धार्थस्य असम्भवत्वात् प्ररोहाभावेन अनेकार्थस्यैवाभावादित्याशयः।

ननु तर्हि पुनरुक्तवदाभासे उक्तविधासम्भवत्वाभावात् श्लेषः सम्भवत्वित्याह एवमिति। तथा च 'भुजङ्गकुण्डली' इत्यादौ कुण्डलेत्यत्र सर्परूपार्थस्य प्रतिभातमात्रस्य पुनरुक्तताज्ञानेनैव प्ररोहाभावात् पूर्ववदेव न श्लेष इत्यभिप्रायः। एवञ्च एतेषु समासोक्त्यप्रस्तुतप्रशंसारूपकादिषु न श्लेषव्यपदेश इति प्रबन्धाशयः।

## विमला

श्लेषाबाध्यानलङ्कारान् विशिष्य दर्शयति, इत्यमिति।—तत्र प्रथमं समासोक्त्यादेः श्लेषबाध्यत्वभ्रमं निराकरोति, समासोक्तीति।—अनभिधेयतया—अवाच्यतया, व्यङ्ग्यतयेत्यर्थः, अस्य—श्लेषस्य, गन्धोऽपि—अल्पप्रसङ्गोऽपि, व्यञ्जनयैव तत्र द्वितीयार्थस्य प्रतीतेरिति भावः। ननु श्लिष्टरूपके उभयार्थस्याभिधेयतया श्लेष-बाध्यत्वमस्तीत्यत आह, विद्वदिति।—"विद्वन्मानसहंस!—" इत्यादौ—"विद्वन्मानसहंस! वैरिकमलासङ्कोचदीप्तद्युते! दुर्गामार्गणनीललोहितसमित्स्वीकारवैश्वानर!। सत्यप्रीतिविधानदक्ष! विजयप्राग्भावभीम! प्रभो! साम्राज्य वरवीर! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः॥" इत्यत्रेत्यर्थः, (विदुषां—ज्ञानिनां,मानस-मेव—चित्तमेव, मानसं—सरोविशेषः, तस्य हंसः तत्सम्बुद्धौ, विहन्मानसञ्चारिन्नित्यर्थः) श्लेषगर्भे—श्लेषप्रतिभोत्थापिते इत्यर्थः, चित्तसरोरूपोभयार्थत्वेऽपि—मनः सरोवररूपरूप्यरूपकोभयवाच-कत्वेऽपि इत्यर्थः। अत्र रूपकस्यैव श्लेषबाधकत्वम्। श्लेषस्य बाध्यत्वप्रयोजकं सम्भवद्विषयान्तरत्वं दर्शयति, सरोरूपस्यैवेति।—एवकारेण चित्तरूपस्य व्यवच्छेदः, मानसशब्दस्य यः सरोवररूपोऽर्थः तस्यैव, न तु चित्तरूप-स्येत्यर्थः, विश्रामधामतया—हंसस्य विश्रामास्पदतया, रूपकप्रतीतिपर्य्यवसानस्थलत्वेनेत्यर्थः। प्राधान्या-दिति।—अर्थयोः समकक्षत्वाभावोपपादकात् प्राबल्यादित्यर्थः, समकक्षत्वं—तुल्यबलत्वं, परस्परनिरपेक्षतया द्वयोरेव प्रधानत्वमित्यर्थः; तथा च अर्थद्वयस्य समकक्षत्वे श्लेषस्य विषयः सम्भवति, प्रकृते तु उद्देश्यविधेयभावेन गुणप्रधानभावापेक्षितया तुल्यकत्वात् रूपकेण श्लेषो बाध्यते; अन्यथा श्लिष्टपरम्परितरूपकस्य निर्विषयतापत्तेः इति भावः। नन्वेवमपि विरोधाभासोच्छेदस्तव समकक्षार्थद्वयस्याभिधानेन श्लेषस्य निर्बाधप्रसरत्वादित्यत आह, सन्निहितेति।—अत्र भास्वन्मूर्त्तिः,—सूर्य्यमूर्त्तिः!, सन्निहितबालान्धकारा— नवान्धकारसन्निधाना इत्यापाततः विरोधः, पर्य्यवसाने तु—सुकेशाया नायिकाया वर्णनमिदं, सन्निहितः बालः,—केशः एव, अन्धकारो यस्याः तादृशी, भास्वन्मूर्त्तिः,—दीप्यमाना तनुरित्यविरोधः। प्रतिभातमात्रस्य—स्फुरितमात्रस्य, पदार्थस्मृतिविषयस्यैवेति यावत्, प्ररोहाभावात्—अङ्कुराभावात्, अयोग्यत्वेन शब्दानुभवाभावात् इत्यर्थः, न श्लेषः इत्यन्वयः; अर्थयोः समक-क्षताऽभावादिति हृदयम्; तथा चार्थद्वयस्य शब्दानुभवेऽपि श्लेषस्य विषयसम्भवादुत्सर्गत्वं, विरोधाभासस्यायो-ग्यतया शब्दानुभवाभावेऽपि विषय इत्यपवादत्वमिति भावः। पुनरुक्तवदाभासेऽपीति।—अत्रापि आपातत एव पुनरुक्तवत् स्फुरणं, न तु पर्य्यवसानेऽपीति भावः।

## लक्ष्मी

उक्तस्वमतोपपत्तये तैर्यद्विचारितं तदपि निरसितुमाह—इत्यमिति । अत्र प्रदर्शितश्लेषविषये स्वमते, इत्थं वक्ष्यमाणप्रकारम्, विचार्यते विचारः क्रियते तैरेवेतिशेषः । **समासोक्त्यप्रस्तुतप्रदशंसादाविति** । तत्र पूर्वपक्षिणां मते समासोक्तिर्यथा—

> **'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।**
>
> **यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥'**

अप्रस्तुतप्रशंसा यथा—

> **'एणालंसम्भ्रमेण त्यज गवय ! भयं सैरिभि ! स्वैरमास्व**
>
> **क्षौमं भायास्तरक्षो ! विहर गिरिदरीं स्वेच्छेयैवाच्छभल्ल ! ।**
>
> **पारीन्द्रः पारदृश्वा निखिलवनभुवः केवलं मोदतेऽसौ**
>
> **माद्यत्कुम्भीन्द्रकुम्भस्थलगलिघनस्थूलमुक्ताफलोघैः ॥'**

आदिपदेन पर्यायोक्ति—आर्थपरिसंख्या—विरोधाभासादीनां परिग्रहः । द्वितीयार्थः प्रकृताप्रकृतस्य वा यथा नायकव्यवहारादेः अनभिधेयतया अभिधया वृत्त्या अप्रतिपाद्यतया केवलव्यञ्जनागम्यतयेत्यर्थः अभिधायाः प्रकृतिबोधनेन विरमादित्याशयः । अस्य श्लेषस्य गन्धो लेशोऽपि न प्राप्तिरेव नास्तीत्यर्थः अर्थद्वयस्याभिधेयत्व एव श्लेषालङ्कारस्य नियमादितिभावः । एवञ्च समासोक्त्यादिव्यञ्जनाबोध्यालङ्कारविषये श्लेषालङ्कारस्य सम्भव एव नेति बोध्यम् ।

ननु श्लिष्टपरम्परितरूपके अर्थद्वयस्यैवाभिधेयतया श्लेष आस्तामित्याह—**विद्वन्मानसेति** । समस्तपद्यमिदं यथा **काव्यप्रकाशे**—

> **'विद्वन्मानसहंस ! वैरिकमलासङ्कोचदीप्तद्युते !**
>
> **दुर्गामार्गणनीललोहित ! समित्स्वीकारवैश्वानर ! ।**
>
> **सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीम ! प्रभो !**
>
> **साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्चिमुच्चैः क्रिया ॥'**

विदुषां मनीषिणां मानसं चित्तमेव मानसं मानसाख्यसरोविशेषस्तस्य हंसो हंसस्वरूप इति राज्ञः सम्बोधनम्, अत्र रूपकस्य श्लेषबाधकत्वे हेतुं दर्शयति—**सरोरूपस्येति** । सरोरूपस्यैव न तु चित्तरूपस्यापि, अर्थस्य मानसपदार्थस्येत्यर्थः, विश्रान्तेः प्रतीतिपर्यवसानसस्य धामास्पदमिति तस्य भावस्तत्ता तया तथोक्त्या रूपकप्रतीतिपर्यवसानास्पदतयेत्यर्थः । **प्राधान्यादिति** । प्राधान्ये हेतुमाह—**श्लेषे हीति** । समकक्षत्वं परस्परनिरपेक्षतया प्रधानत्वम्, तथा च विदुषां चित्ते हंसस्यसञ्चरणासम्भवात् हंसेन सह मानसस्य सम्बन्धोपपत्तये चित्ते सरोवरत्वारोप आवश्यक एव स चारोप एव रूपकं प्रतीतिपर्यवसानास्पदत्वेन प्रबलश्च, श्लेषस्तु प्राक्प्रतीतिविषयत्वेनोद्देश्यत्वात् दुर्बल एवेति रूपकेण श्लेषो बाध्यते । तथा दर्शितदिशा चित्तरूपार्थस्य दुर्बलतया द्वयोरप्यर्थयोः परस्परनिरपेक्षतया प्रधानत्वाभावात् स्वतोऽपि श्लेषप्रवेशो नेति नात्रापि श्लेषप्रसक्तिरितिभावः ।

ननु द्वयोरप्यर्थयोः समकक्षत्व एव श्लेषाभ्युपगमे श्लिष्टविरोधाभासालङ्कारे अर्थद्वयस्यैव समकक्षतया श्लेष एव जायतामित्याक्षपे तत्रापि न श्लेषप्रसक्तिरिति दर्शयति—**सन्निहितेति**। सन्निहितः समीपवर्त्ती बालः अन्धकारो यस्याः सा तादृशी भास्वतः सूर्यस्य मूर्त्तिरिति विरोधः। सन्निहितो दैवेन अवस्थापितो बालः केशः अन्धकार इव अत्यन्तकृष्णवर्ण इवेत्यर्थः यस्याः सा तादृशी, तथा भास्वती लावण्येन देदीप्यमाना मूर्त्तिः शरीरं यस्याः सा तादृशी चेति विरोधपरिहारः। अत्र श्लेषालङ्काराप्रसक्तिबीजमाह—**विरुद्धार्थस्येति**। सूर्यसन्निधौ अन्धकार-स्थितिरूपस्येत्यर्थः, प्रतिभातमात्रस्य शब्दशक्तिमहिम्ना आपाततो बुद्धावुपस्थितमात्रस्य प्ररोहाभावात् अयोग्यत्वेन शब्दानुभवाभावात् न श्लेषः। नहि अन्धकारसन्निहितसूर्यमूर्त्तिनायिका न वाऽन्धकारसान्निध्यं सूर्यबिम्बस्य इति बाधस्यापि उपस्थितिमात्रेण एव विरोधाभासालङ्कारता श्लेषस्य तु श्लिष्टार्थस्य सम्बन्धे सत्येव अलङ्कारतेतिवि-रोधाभासवत् श्लेषाभासालङ्कारतानभ्युपगमेन विरुद्धार्थस्य असम्भवात् प्ररोहाभावेन अनेकार्थस्यैवाभावात् श्लेषालङ्कारप्रसक्तिरेव नेति भावः।

अथ तर्हि पुनरुक्तवदाभासे विरोधाभासवदसम्भवत्वाभावेन श्लेष एवास्तामत आह—एवमिति। यथा विरोधाभासे द्वितीयार्थस्य प्रतिभातमात्रस्य प्ररोहाभावान्न श्लेषस्तेत्यर्थः। पुनरुक्तवदाभासेऽपि न सम्भवतीति-शेषः। तथा च 'भुजङ्गकुण्डली' इत्यादौ सर्परूपार्थस्य प्रतिभातमात्रस्य पुनरुक्तत्वबोधेनैव प्ररोहाभावात् प्राग्वदेव श्लेषो नेत्याशयः। एतेन प्रदर्शितेषु समासोक्त्यप्रस्तुतप्रशंसारूपकादिषु न श्लेषत्वेन व्यवहार इति सन्दर्भाभिप्रायो ज्ञेयः।

## रुचिरा

अथ तदेव तावत् स्पष्टं विवृणोति-इत्थमनेन प्रकारेण। अत्रास्मिन् श्लेषविषय इति भावः। **विचार्य्यते** विचारः क्रियते 'तैरेवे'ति शेषः। **समासोक्त्यप्रस्तुतप्रशंसादौ** 'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्। यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम्॥' 'नितरान्नीचोऽस्मीति त्वं खेदं कूप ! मा कदाऽपि कृथाः। अत्यन्तसरहृदथो यतः परेषां गुणग्रहीताऽसि॥' इत्याद्युदाहरणायां समासोक्तावप्रस्तु-तप्रशंसायां पर्य्यायोक्तौ चेति भावः। आदिपदेन पर्य्यायोक्तेर्ग्रहणात्। अत्र सति सप्तमी। **द्वितीयार्थस्य** द्वितीय-श्चन्द्रातिरिक्तनायकादिप्रत्यायकश्चासावर्थस्तस्य। अनभिधेयतयाऽभिधया प्रतिपाद्यमानत्वस्याभावादिति भावः। अस्य श्लेषस्यागन्धो लक्षणायाऽल्पसम्पर्कः। **अपि** किं पुनः साक्षात् सम्बन्धः। न नैवास्ति। इदमभिहितम्। समासोक्त्यादौ यो हि द्वितीयोऽर्थः स केवलं व्यञ्जनयाऽवगम्यते, तस्मान्न तत्रास्य सम्भवः, उभयोरर्थयोर्वाच्यत्वे एवैतस्य स्वीकारात्। यत्त्वाहुः—'अयमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः। सततमसुमतामगम्य-रूपाः परिणतदिक्करिकास्तटीर्बिभर्त्ति॥' अत्र हि (यः) समासोक्त्युदाहरणे वृद्धवेश्यावृत्तान्तः प्रतीयते तत्राभङ्ग-श्लेषः' इति सर्वेषामभिमतम्। एवं च-'अप्रकृतार्थो न व्यङ्ग्यः।' इति, तत्प्रमत्तजल्पितम्, अन्यथा 'प्रतीयते' इति 'तत्राभङ्गश्लेष' इति कथं सङ्गच्छेत। न च 'श्लेषो नाम द्वयोः सम्बन्धः।' इति वक्तुं शक्यम्। 'एवं च अप्रकृतार्थो न व्यङ्ग्य' इति विरोधात्। एवं च—'समासेक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्।' इत्यनभिधाय 'अभिधानं समासोक्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्।' इत्येवाभिधेयत्वं प्रसज्येत। यत्तु—'एवं चान्योऽन्यसन्नि। धानबलादित्य-र्थकेनोक्तार्थकेनेदं बोधितं यत् प्रकृतार्थे नियामकद्वयसत्त्वात् प्रथममुपस्थितिः, द्वितीयेऽपि शब्दान्तरसन्निधिरूप-नियामकमात्रसत्त्वेन तस्याप्युपस्थितिः, किन्तु पश्चात्।...तद्वरं व्यञ्जनामनङ्गीकृत्य तेषां शक्त्युल्लासादिहेतुत्वकल्पनमेव।' इत्युक्तम्, तस्य मारीचवद्दूरे पातः। इति। **'विद्वन्मानस...' इत्यादौ** 'विद्वन्मा-

नसहंसवैरिकमलासङ्कोचदीप्तद्युते दुर्गामार्गणनीललोहितमरुत्सीकारवैश्वानर। सत्यप्रीतिविधानदक्षविजयप्राग्भावभीम प्रभो ! साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः॥' इत्यादावित्यर्थः। श्लेषगर्भे श्लेषो गर्भे यस्य तत्र। **रूपके** 'रूपकं रूपितारोपाद्विषयेनिरपह्नवे।' इति वक्ष्यमाणलक्षणेऽलङ्कारे। **'मानस' शब्दस्य। चित्तसरोरूपोभयार्थत्वे** चित्तसरोरूपरूप्यरूपकोभयार्थत्वे'इत्यर्थः। **अपि। रूपकेण। श्लेषः। बाध्यते** नतु श्लेषेण रूपकमिति शेषः। कुत इत्याह—**सरोरूपस्य**। एव नतु चित्तरूपस्यापि। **अर्थस्य** मानसपदार्थस्येत्यर्थः। विश्रान्तिधामतया विश्रान्तेः प्रतीतिपर्य्यवसानस्य धामास्पदमिति तस्य भावस्तत्ता तयेति तथोक्त्या। **प्राधान्यात्**। प्राधान्ये हेतुमाह—हि यतः। **श्लेषे** 'सती'ति विशेषः। **अर्थद्वयस्य। अपि। समकक्षत्वं** परस्परनिरपेक्षतया प्रधानत्वम्। तथा च—श्लेषो नामार्थयोर्द्वयोरपि साम्यम्, रूपकं पुना रूप्यार्थमात्रप्राधान्यम्। तस्मादिह रूपकेण श्लेषो बाध्यते, नतु श्लेषेण रूपकमिति निष्कृष्टम्। तर्कवागीशा अप्याहुः—'अर्थयोरसमकक्षत्वाभावोपपादकं समकक्षत्वं परस्परनिरपेक्षतया प्रधानत्वम्। तथा च—अर्थद्वयस्य समकक्षत्वे श्लेषस्य विषयः सम्भवति। प्रकृते तु उद्देश्यविधेयभावेन गुणप्रधानापेक्षितयाऽतुल्यकक्षत्वाद्रूपकेण श्लेषो बाध्यते। अन्यथा—श्लिष्टपरम्परितरूपकस्य निर्विषयताऽऽपत्तेरिति भावः।' इति। ननु द्वयोरप्यर्थयोः समकक्षत्वे श्लेषस्य प्राधान्याङ्गीकारे विरोधस्योच्छेदः, तत्रापि अर्थयोः समकक्षत्वादित्याशङ्क्याह—**सन्निहितबालान्धकारा** सन्निहितो बालोऽल्पः केश एवेति वाऽन्धकारो यत्र सा। चापि। भास्वन्मूर्त्तिर्भास्वतो मूर्त्तिर्भास्वती मूर्त्तिर्यस्या इति सेति वा।' **इत्यादौ** 'पुन'रिति शेषः। **विरोधाभासे** विरोधमाभासयतीति तस्मिन् सतीत्यर्थः। **अपि। विरुद्धार्थस्य** सन्निहितबालान्धकारत्वेऽपि भास्वन्मूर्त्तित्वाभिधानरूपस्येति भावः। **प्रतिभातमात्रस्य** प्रतिभात एवेति तस्य तथोक्तस्य। **प्ररोहाभावात्** प्ररोहस्य वस्तुतयाऽवस्थानस्याभावस्तस्मात्। श्लेषः। न न सम्भवतीत्यर्थः। न चैवं विरोधाभासस्योच्छेद इति भावः। आहुश्च तर्कवागीशाः—'प्रतिभातमात्रस्य पदार्थस्मृतिविषयस्यैव प्ररोहाभावादयोग्यत्वेन शब्दाननुभवात्। तथा च-अर्थद्वयस्य शब्दतोऽनुभवेऽपि श्लेषस्य विषयसम्भवादुत्सर्गत्वम्, विरोधाभासस्यायोग्यतया शब्दतोऽनुभवाभावेऽपि विषय इत्यपवादः त्वमिति भावः।' इति। एवं यथा विरोधे द्वितीयार्थस्य प्रतिभातमात्रस्य प्ररोहाभावान्न श्लेषस्तथेत्यर्थः। **पुनरुक्तवदाभासः**। अपि 'न सम्भवति शेषः।

तेन 'येन ध्वस्त—' इत्यादौ प्राकरणिकयोः, 'नीतानाम्—' इत्यादावप्राकरणिकयोरेकधर्माभिसंबन्धात्तुल्ययोगितायाम्,

**'स्वेच्छोपजातविषयोऽपि न याति वक्तुं**

**देहीति मार्गणशतैश्च ददाति दुःखम्।**

**मोहात्समुत्क्षिपति जीवनमप्यकाण्डे**

**कष्टं प्रसूनविशिखः प्रभुरल्पबुद्धिः ॥'**

इत्यादौ च प्राकरणिकाप्राकरणिकयोरेकधर्माभिसंबन्धाद्दीपके,

'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव ।'

इत्यादौ चोपमायां विद्यमानायामपि श्लेषस्यैतद्विषयपरिहारेणासंभवाद् एषां च श्लेषविषयपरिहारेणापि स्थितेरेतद्विषये श्लेषस्य प्राधान्येन चमत्कारित्वप्रतीतेश्च श्लेषेणैव व्यपदेशो भवितुं युक्तः। अन्यथा तद्व्यपदेशस्य सर्वथाभावप्रसङ्गाच्चेति ।

अत्रोच्यते—न तावत्परमार्थतः श्लेषस्यालंकारान्तराविविक्तविषयता 'येन ध्वस्त—' इत्यादिना विविक्तविषयत्वात्। न चात्र तुल्ययोगिता, तस्याश्च द्वयोरप्यर्थयोर्वाच्यत्वनियमाभावात्। अत्र च माधवोमाधवयोरेकस्य वाच्यत्वनियमे परस्य व्यङ्ग्यत्वं स्यात्। किं च तुल्ययोगितायामप्येकस्यैव धर्मस्यानेकधर्मिसंबन्धितया प्रतीतिः। इह त्वनेकेषां धर्मिणां पृथक्पृथग्धर्मसंबन्धतया। 'सकलकलम्—' इत्यादौ च नोपमाप्रतिभोत्पत्तिहेतुः श्लेषः पूर्णोपमाया निर्विषयत्वापत्तेः 'कमलमिव मुखं मनोज्ञमेतत्' इत्याद्यस्ति पूर्णोपमाया विषय इति चेत् न। यदि 'सकल—' इत्यादौ शब्दश्लेषतया नोपमा तत्किमपराद्धं 'मनोज्ञम्' इत्यादावर्थश्लेषेण ।

**'स्फुटमर्थालंकारावेतावुपमासमुच्चयौ, किं तु।**

**आश्रित्य शब्दमात्रं सामान्यमिहापि संभवतः ॥'**

इति रुद्रटोक्तदिशा गुणक्रियासाम्यवच्छब्दसाम्यस्याप्युपमाप्रयोजकत्वात्। ननु गुणक्रियासाम्यस्यैवोपमाप्रयोजकता युक्ता, तत्र साधर्म्यस्य वास्तवत्वात्। शब्दसाम्यस्य तु न तथा, तत्र साधर्म्यस्यावास्तवत्वात्। ततश्च पूर्णोपमाया अन्यथानुपपत्त्या गुणक्रियासाम्यस्यैवार्थश्लेषविषयतया परित्यागे पूर्णोपमाविषयता युक्ता, नतु 'सकल—' इत्यादौ शब्दसाम्यस्यैवेति चेत्, न। 'साधर्म्यमुपमा' इत्येवाविशिष्टस्योपमालक्षणस्य शब्दसाम्याद्यवृत्तेरभावात्। यदि च शब्दसाम्ये साधर्म्यमवास्तवत्वान्नोपमाप्रयोजकम्, तदा कथं 'विद्वन्मानस—' इत्यादावाधारभूते चित्तादौ सरोवराद्यारोपो राजादेर्हंसाद्यारोपप्रयोजकः।

किंच यदि वास्तवसाम्य एवोपमाङ्गीकार्या, कथं त्वयापि 'सकलकल—' इत्यादौ बाध्यभूतोपमाङ्गीक्रियते। किं चात्र श्लेषस्यैव साम्यनिर्वाहकता, न तु साम्यस्य श्लेषनिर्वाहकता। श्लेषबन्धतः प्रथमं साम्यस्यासंभवात् इत्युपमाया एवाङ्गित्वेन व्यपदेशो ज्यायान। 'प्रधानेन हि व्यपदेशा भवन्ति' इति न्यायात्।

ननु शब्दालंकारविषयेऽङ्गाङ्गिभावसंकरो नाङ्गीक्रियते तत्कथमत्र श्लेषोपमयोरङ्गाङ्गिभावः संकर इति चेत् न। अर्थानुसंधानविरहिण्यनुप्रासादावेव तथानङ्गीकारात्। एवं दीपकादावपि ज्ञेयम्।

**'सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः।**
**निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥'**

अत्र शरद्वर्णनया प्रकरणेन धार्तराष्ट्रादिशब्दानां हंसाद्यर्थाभिधाने नियमना दुर्योधनादिरूपोऽर्थः। शब्दशक्तिमूलो वस्तुध्वनिः। इह च प्रकृतप्रबन्धाभिधेयस्य द्वितीयार्थस्य सूच्यतयैव विवक्षितत्वादुपमानोपमेयभावो न विवक्षित इति नोपमाध्वनिर्न वा श्लेष इति सर्वमवदातम्।

---

## विवृत्ति

ननु तर्हि के श्लेषबाध्या इत्यपेक्षायामाह—**तेनेति**। समासोक्त्यादौ श्लेषस्य प्रसङ्गाभावादेव बाध्यत्वासंभवेनेत्यर्थः। प्राकरणिकयोरित्येकधर्माभिसंबन्धादित्यग्रेणान्वयः। माधवोमाधवयो रक्षणोपयोगित्वेन प्राकरणिकत्वम्। **अप्राकरणिकयोरिति**। पद्ममृगविशेषयोरुपमांनत्वेऽप्राकरणिकत्वमिति भावः। तुल्ययोगितायामिति विद्यमानायामपीत्यग्रेणान्वयः॥ **स्वेच्छेति**। दुर्मतिराजसेवकस्योक्तिरियम्। प्रसूनविशिखः कामः, अल्पबुद्धिश्च प्रभुः। कष्टं कष्टहेतुः। कष्टहेतुत्वमुपपादयति पादत्रयेण—स्वेच्छया उपजाता उपपन्ना विषया उपभोगसाधनद्रव्याणि यस्य सः। न याति विषयान्नानुभवति। गत्यर्थानां ज्ञानार्थत्वात्। मार्गणशतैर्याचकसमूहैर्देहीति वक्तुमर्थात्तेभ्यो दुःखं ददाति। महाबुद्धिस्तु देहीति वचनं विनैव याचकेभ्यो धनं ददातीति भावः। मोहादपराधभ्रमात् समुत्क्षिपति हरति। अकाण्डे अकाले॥ कामपक्षे—स्वेच्छं यथेष्टमुपजाताः संभवन्तो विषया लक्ष्याणि यस्य सः। देहीति शरीरीति वक्तुं योग्यतां न याति न प्राप्नोति। मार्गणशतैः शरसमूहैः मोहान्मोहं विधाय। अशरीरोऽपि संभवद्बहुलक्ष्योपि कस्मै चिन्मार्गणशतैर्दुखं ददाति। लक्ष्येषु विभज्य यदि शरान् क्षिपेत्तदा एकस्य वेधने शरशतासंभवाद्दुःखातिशयो न भवतीति भावः। अत्र स्मरस्योपमांनत्वेनाप्राकरणिकत्वम्, राज्ञ उपमेयत्वेन प्राकरणिकत्वम्॥ **दीपके इति**। विद्यमानेऽपीति लिङ्गविपरिणामेनान्वयः॥ सकलकलं कोलाहलसहितम्। अथ च सकला समग्रा कला यस्य तादृशम्॥ **एतद्विषयेति**। तुल्ययोगितादिविषये इत्यर्थः। एषां तुल्ययोगितादीनाम्। अन्यथा एतद्विषये श्लेषानङ्गीकारे॥ एतन्मते दोषं प्रदर्श्य सिद्धान्तमाह—**अत्रोच्यत इति**। विविक्तविषयत्वात् अलंकारान्तरपृथक्कृतविषयत्वात्। अत्र 'येन ध्वस्त—' इत्यादिश्लेषविषये। तस्यास्तुल्ययोगितायाः। एतद्दीपकस्याप्युपलक्षणम्। अर्थयोर्वाक्यार्थयोः। **वाच्यत्वनियमाभावादिति**। एकस्य वाच्यत्वनियमादिति तात्पर्यार्थः।

न च 'वक्राः स्वभावमधुरा वहन्त्यो रागमुल्बणम्। दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियम्॥' इत्यादौ तुल्ययोगितायां द्वितीयार्थस्यापि वाच्यत्वेन कथमेकस्यैव वाच्यत्वमिति वाच्यम्। ये तु 'दुर्गालङ्घितवि-

ग्रहः—' इत्यादौ (६१ पृ.) पदपरावृत्त्या द्वितीयार्थस्यापि वाच्यत्वमङ्गीकुर्वन्ति, तेषां मत इत्यर्थः। अत्र चेति। 'येन ध्वस्त—' इत्यादौ तुल्ययोगितानुरोधेनैकस्य वाच्यत्वनियमो वाच्यस्तथा सत्यपरस्य व्यङ्ग्यत्वापत्त्या श्लेषस्य विषयो न स्यादिति भावः॥ ननु पदपरावृत्तिपक्षे द्वयोरप्यर्थयोर्वाच्यत्वमत आह—किं चेति। इह तु श्लेषे तु। पृथक्पृथग्धर्मसंबन्धितया प्रतीतिरित्यन्वयः। अलंकाराणां यो यत्प्रतीतिजन्यप्रतीतिविषयः स तद्बाध्य इति नियमाभिप्रायेण श्लेषस्य बाध्यत्वमुपमायां प्रसह्य निषेधयति—**सकलकलमित्यादौ चेति**। श्लेषो नोपमाबाधक इति भावः। तत् तदा। **शब्दमात्रं** सामान्यमाश्रित्यापीहालंकारमध्ये संभव इत्यन्वयः। यद्यपि 'सकलकलम्—' इत्यादावेकप्रयत्नेन शब्दद्वयोत्पत्त्या शब्दस्याप्येकत्वं न संभवति, तथाप्येकानुपूर्व्यवच्छिन्नत्वेन शब्दयोरेकत्वप्रतिभास इति भावः। समुच्चयालंकारे एकधर्माभिसंबन्धस्य निवेशाभावात्तत्समुच्चयपदमत्र तुल्ययोगितापरं दीपकपरं च तयोस्तत्संभवात्। नन्वेव 'किं च तुल्ययोगितायाम्—' इत्यादिना श्लेषतुल्ययोगितयोर्यो विषयविभागः कृतः स न संगच्छते 'येन ध्वस्त—' इत्यादावपि शब्दरूपैकधर्मसंबन्धस्य सत्त्वेन तुल्ययोगिताया विषयसंभवादिति चेत्। सत्यम्। यत्रानेकस्यैकधर्मसंबन्धावगमे द्विवचनबहुवचनचकाराद्यपेक्षा तत्रैव दीपकतुल्ययोगितयोर्विषयः। 'येन ध्वस्त'—इत्यादौ तु द्विवचनाद्यपेक्षाविरहेण तुल्ययोगिताया विषय एव नास्ति। एवं ययोरेकधर्मसंबन्धस्तयोरनेकप्रयत्नोच्चार्यपदवाच्यत्वं दीपकतुल्ययोगितालक्षणे निवेशनीयमतो नातिप्रसङ्गः। एवं च 'स्वेच्छोपजातविषयोऽपि—' इत्यादिदीपकस्य 'किरणा हरिणाङ्कस्य—' इत्यादि, 'विकसन्नेत्रनीलाब्जे—' इत्यादि च तुल्ययोगितायाश्च विषय इति ध्येयम्। गुणक्रियासाम्यवद्गुणक्रियासाम्यस्यैव। तत्र गुणक्रियासाम्यप्रयुक्तोपमायाम। **वास्तवत्वाद्** वस्तुसमवेतत्वात्। न तथा नोपमाप्रयोजकता। तत्र शब्दसाम्यप्रयुक्तोपमायाम्। **साधर्म्यस्य** शब्दरूपसामान्यस्य धर्मस्य। **अवास्तवत्वाद्** उपमानोपमेयरूपवस्तुनोरसमवेतत्वात्। ततश्च शब्दसाम्यस्योपमाप्रयोजकत्वायोगाच्च। **अवशिष्टस्य** वास्तवत्वरूपविशेषरहितस्य। **उपमालक्षणस्य** काव्यप्रकाशाद्युक्तस्य। तथा च येन केनापि संबन्धेनोपमानोपमेयवृत्तिधर्म उपमा, न तु समवायसंबन्धेनेति नियमः। शब्दस्योपस्थाप्यत्वसंबन्धेनोपमानोपमेयवृत्तित्वेनोपमाप्रयोजकत्वमक्षतमिति भावः। उपमानोपमेययोरभेदप्रतीतिरूपकमित्यभिप्रायेणाह—**यदि चेति**। आधारभूते विषयरूपे॥ ननु श्लिष्टपदनिबन्धनपरम्परितरूपकान्यथानुपपत्त्या तत्र तथा कल्पनीयम्, न तूपमायामित्यत आह—किं चेति। कथमिति। तदेति शेषः। श्लेषस्यालंकारान्तरप्रतिभोत्पत्तिहेतुत्वेन तेनैव व्यपदेश इति यदुक्तं तद्दूषयति—किं चात्रेति। अङ्गित्वेन साध्यतया प्रधानत्वेन। तथा च श्लेषस्य प्रथमोपस्थितत्वेऽपि साधनत्वेनाप्रधानतया तेन व्यपदेशो नोचित इति भावः। **तथानङ्गीकारात्** अङ्गाङ्गिभावसंकरानङ्गीकारात्। श्लेषस्य शब्दालंकारत्वेऽप्यर्थानुसंधानसापेक्षत्वादुपमाङ्गत्वमक्षतमिति भावः। **एवमिति**। यथा एकशब्दत्वेनोपमां स्वीकृत्य

तस्या एव प्राधान्यव्यपदेशस्तथा दीपकादावपीत्यर्थः। आदिपदात्तुल्ययोगितापरिग्रहः॥ 'सत्पक्षाः—' इत्यादौ केचिदुपमाध्वनिं केचिच्च श्लेषं स्वीकुर्वन्ति, तदुभयमपि नोचितमित्याह—**सत्पक्षा इति**। सन्तः पक्षाः पत्राणि येषां ते। प्रसाधिताशा अलंकृतदिशः। मदेन शरत्कालकृतचित्तविकारविशेषेण उद्धत आरम्भ आरवो येषाम्। 'रभि शब्दे' इत्यस्य रूपम्। धार्तराष्ट्रा हंसविशेषाः। कालवशात् शरत्कालवशात्। वर्षासु हंसा मानसे सरसि तिष्ठन्ति, शरदि पृथिवीमागच्छन्तीति प्रसिद्धिः॥ पक्षे—सत्पक्षाः उत्तमसहायाश्च ते अमधुरगिरश्चेति समासः। प्रसाधिताशा वशीकृतदिशः। यद्वा प्रकृष्टं साधिता आशाः स्वेच्छाविषया यैः। अथवा प्रसाधिता धृता आशा जयेच्छा यैस्ते। मदेन गर्वेण उद्धता आरम्भा युद्धाद्याडम्बरा येषां ते। धार्तराष्ट्राः धृतराष्ट्रपुत्राः। कालवशा-

न्मृत्युकालवशात् ॥ नियमनान्नियन्त्रणात् । ध्वनिर्व्यङ्ग्यः । **न वा श्लेष इति** । प्रकरणनियमेन द्वितीयार्थस्यानभिधेयत्वादिति हेतुरत्र द्रष्टव्यः ॥

## विवृतिपूर्तिः

**तेनेति** । विशेषविषयकालंकारान्तरैः श्लेषस्य बाध्यत्वेनेत्यर्थः ॥

**कमलेति** । 'कमलमिव मुखं मनोज्ञमेतत्कचतितराम्' इत्यत्र मनोज्ञत्वलक्षणस्य गुणस्य, प्रकाशलक्षणायाः क्रियायाः, गुणक्रिययोर्वा साम्यात्पूर्णोपमाविषयोऽस्तीत्यर्थः ॥

**मनोज्ञमिति** । मनोज्ञत्वस्योपमानोपमेयभूतयोः कमलमुखयोर्भेदेन शिलष्टत्वादर्थश्लेष इत्यर्थः ॥

**मत्तेति** । मत्तधीरनागमिति क्रियाविशेषणम ।

## विज्ञप्रिया

इत्थमुक्तस्थलेषु श्लेषालङ्कारं बाधित्वा ते ते अलङ्कारा एवेत्युक्त्वा अलङ्कारान्तरस्यैव बाधकः श्लेष इति तदभिप्रेतं वक्तुमाह—**येन ध्वस्तमिति** । येन ध्वस्तमित्यादौ नीतानामित्यादौ च तुल्ययोगितायां, स्वेच्छोपजातेत्यादौ दपिके सकलकलमित्यादौ चोपमायां विद्यमानायामपि श्लेषेणैव व्यपदेशो भवितुं युक्त इत्यग्रेऽन्वयः । तेन येन ध्वस्तमित्यादौ माधवोमाधवयोर्द्वयोरपि प्राकरणिकयोः येन ध्वस्तेत्याद्येकधर्मान्वयरूपस्तुल्ययोगितालङ्कारः ।

**"पदार्थानां प्रस्तुतानमन्येषां वा यदा भवेत् ।**

**एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥"**

इति लक्षणात् । अत्र हि प्रस्तुतानां प्राकरणिकानामेवान्येषामप्राकरणिकानामेवेत्यर्थः । नीतानामित्यादौ तु अप्राकरणिकयोरेव वनवृद्धकमलयोः नीतानामित्यादि पूर्वार्द्धोक्ते कर्मान्वयः । स्वेच्छोपजातेत्यादौ सलक्षणं दीपकं दर्शयिष्यते ।

तच्छ्लोकार्थस्तु यथा—प्रभुरल्पबुद्धिरित्यत्र चकारार्थो गम्यः । वक्तुमित्यत्र भावतुम्वचनमित्यर्थः । तथा च कष्टं खेदे । प्रसूनविशिखोऽल्पबुद्धिः प्रभुश्च स्वेच्छोपजातविषयोऽपि स्वेच्छया सर्वलोकोपरि प्राप्ताधिकारोऽपि देहीति वचनं न याति न प्राप्नोति । देहाभावेन देहीति वाग्विषयो न प्रसूनविशिखः । तथापि मार्गणशतैः असंख्यबाणैः दुःखं ददाति । उक्तरूपः प्रभुस्तु लोकेषु देहीति ददस्वेति वचनं न याति न प्राप्नोति । एतादृशवाग्वक्ता न भवतीत्यर्थः । मार्गणशतैः परधनान्वेषणरूपमार्गणशतैः अर्थात् ईदृशपदातिशतैः दुःखं ददाति । देहीत्यनुक्तवापि पदातिद्वारा सर्वस्वं हृत्वा दुःखं ददातीत्यर्थः । अधिकारसत्त्वाद्देहीत्युक्तवापि सर्वस्वं ग्रहीतुं सामर्थ्यसत्त्वेऽपि अल्पबुद्धित्वात्तथा न करोतीत्यर्थः । एवं प्रसूनविशिखः स्वदत्तमोहाद् अकाण्डेकस्माज्जीवनमपि समाक्षिपति हरति इत्यर्थः । अत्र प्राकरणिकउक्तरूपः प्रभुप्राकरणिकः प्रसूनविशिखः; तयोर्न याति इत्याद्येकधर्मान्वयरूपं दीपकम् । तदुक्तम्—"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु तदुच्यते" इति । एकधर्मान्वय इति तत्र शेषः ।

सकलकलमित्यादौ च सकलकलावत्त्वकलकलशब्दवत्त्वार्थद्वयशिलष्टोपमा स्पष्टैव । तत्र परस्परव्यभिचारसत्त्वेन द्वयोरप्यलङ्कारत्वं द्रढयन्नुभयसत्त्वेषु विषयेषु श्लेषस्यैवौचित्यमित्याह—**श्लेषस्यैतद्** इत्यादि । प्रतिकूलतामुपगते हि विधौ इत्यादिषु एतद्विषयपरिहारेण श्लेषस्य श्लेषरहिततुल्ययोगितादीपकोपमानान्तु श्लेषपरिहारेण स्थितिर्बहुष्वेवोदाहरणेषु द्रष्टव्या । एषु श्लेषालङ्कारस्यैवौचित्ये हेतुमाह—**प्राबल्येन चमत्कारि-**

**त्वेति । अन्यथेति** । एषु विषयेष्वपि तुल्ययोगितादित्रयस्यैवालङ्कारत्वमित्यर्थः । **तद् व्यपदेशस्येति** । श्लेषव्यपदेशस्येत्यर्थः । नच कथं तदभावप्रसङ्गः । प्रतिकूलतामित्यादिष्वेव तत्सत्त्वादिति वाच्यम् ? तत्रापि विधेः प्रतिकूलतोपगमनस्य बहुसाधनतावैफल्यहेतुत्वेन हेत्वलङ्कारसत्त्वात् ।

इत्थं श्लेषस्यालङ्कारान्तरविविक्तविषयासत्त्वादलङ्कारान्तरस्य च श्लेषविविक्तविषयस्यापि सत्त्वेन सामान्यत्वादपवादेन श्लेषेण दर्शितास्तुल्ययोगितादयोऽलङ्कारा बाध्यन्त इति केषाञ्चिन्मते दर्शिते, तद्दूषयितुमाह—**अत्रोच्यत** इति । श्लेषस्यालङ्कारान्तरविविक्तविषयासत्त्वे एव तस्याऽपवादकत्वं, तदेव तु न । तस्यापि तद्विविक्तविषयसत्त्वादित्याह—न **तावत्परमार्थत** इति । अलङ्कारान्तरविविक्तं विषयं दर्शयति—**येन ध्वस्तमिति** । अत्र येन ध्वस्तमित्यादौ इति समीचीनः पाठः । क्वचित्तु येन ध्वस्तेत्यादिना इति पाठः । तदा च इत्यादिना श्लोकेन हेतुना विविक्तविषयसत्त्वादित्यर्थः । अत्र माधवोमाधवयोः प्राकरणिकयोर्येनेत्याद्येकधर्मान्वयित्वात् तुल्ययोगितालङ्कारमाशङ्कते—**नचेति** । समाधत्ते—**तस्यामिति** । तुल्ययोगितायामित्यर्थः । नन्वत्रापि द्वयोः प्राकरणिकयोर्वाच्यत्वमित्याह—**अत्र हीति** । अत्र द्वयोरर्थयोश्च प्राकरणिकत्वे नियामकं नास्ति । तथा च वक्त्रा यद्येकमेवार्थं प्रक्रम्येदं पद्यमुक्तं स्यात्तदाऽन्यार्थस्य व्यङ्ग्यत्वेन तुल्ययोगिताया अत्र प्रसक्त्यभावेनाऽयमेव तुल्ययोगितालङ्कारविविक्तः श्लेषस्य विषयः स्यादित्यर्थः । नच तथापि व्यङ्ग्योपमालङ्कारसङ्कीर्ण एवायं श्लेष इति वाच्यम्, सम्भवदवाच्यताकस्यालङ्कारस्य व्यङ्ग्यत्वे अलङ्कारत्वाभावात् किन्तु तदलङ्कारध्वनित्वादेव केवलं तत्रालङ्कारव्यपदेशो ब्राह्मणश्रमणन्यायेन वाच्यतादशायामलङ्कारत्वमादाय गौण एव । समासोक्त्यप्रस्तुतप्रशंसयोस्तु वाच्यताऽसम्भवाद् व्यङ्ग्यत्वेऽपि अलङ्कारता, ननु माधवोमाधवयोः द्वयोरपि तुल्यविभक्तिविषयत्वेन प्राकरणिकत्वमेवेत्यतो द्वयोर्वाच्यत्वेनात्र तुल्ययोगितैवेत्यत आह—**किञ्चेति । एकस्यैव धर्मस्येति** । न तु एकशब्दवाच्यधर्मद्वयस्येत्यर्थः । **इह त्विति** । येन ध्वस्तेत्यादावित्यर्थः । अनेकेषाम् इत्यत्र बहुत्वमविवक्षितम् । उमाधवमाधवयोरित्यर्थः । पृथग्धर्मैः श्लिष्टैकशब्दस्य पृथगर्थौ अनोमनोभवादिरूपौ । सम्बन्धितयेत्यत्र प्रतीतिरित्यन्वयः । एवं च येन ध्वस्तेत्यादौ नीतानामित्यादौ च यत्तुल्ययोगिताप्रदर्शनं प्राक्कृतं तत्परकीयमतप्रदर्शनमात्रं कृतमिति बोध्यम् । वस्तुतस्तु तद्द्वये श्लेष एव तुल्ययोगितारहित इति साधितं बोध्यम् ।

तथा सकलकलमित्यादौ च यदुपमायां विद्यमानायामपि अपवादत्वेन श्लेषस्यैव प्राधान्येन व्यपदेशो भवितुं युक्त इत्युक्तं तत्रोपमैवालङ्कारो न श्लेष इति । प्रतिपादयति—**सकलकलमित्यादौ चेति । नोपमाप्रतिभोत्पत्तिरिति** । उपमाप्रतिभा उपमाज्ञानम् । सैव उत्पत्तिहेतुर्ज्ञानोत्पत्तिहेतुर्यस्य; श्लेषस्तादृशो न, उपमाज्ञानज्ञाप्यो न श्लेष इत्यर्थः । उपमा श्लेषज्ञापिकैव । अत्र श्लेष एव त्वलङ्कार इति नेत्यर्थः । तथा च श्लिष्टधर्मसाधर्म्या उपमां एवालङ्कार इत्युक्तमनेन । तत्रोपमां बाधित्वा श्लेषस्यैवालङ्कारत्वेऽनिष्टोत्पत्तिमाह—**पूर्णोपमाया** इति । उपमानोपमेयसाधारणधर्मे वादितचतुर्णाम् उपादाने हि पूर्णोपमा । अत्राप्युपमेयं पुरम्, उपमानं चन्द्रबिम्बं, सकलकलरूपमुभयान्वितार्थकत्वेन साधर्म्यम्, इवशब्दोऽस्तीति पूर्णोपमा । तद् बाधयाऽत्र श्लेषस्यैवालङ्कारत्वे पूर्णोपमाया निर्विषयत्वापत्तिरित्यर्थः । ननु श्लेषरहितगुणसाधर्म्योपमैव पूर्णोपमा; तद्वान् विषय एव पूर्णोपमाया विषयः स्यादित्याशङ्कते—**कमलमिवेति** । अत्र हि न श्लेषो मनोज्ञत्वगुणकथनरूपक्रिययोरेव साधर्म्याद् न तु श्लिष्टशब्दस्य इति । तत्र प्रतिबन्धमाह—यदीति । श्लेषो द्विविधः शब्दश्लेषोऽर्थश्लेषश्च । यदि सकलकलमित्यत्रोपमां बाधित्वा श्लेष एव शब्दालङ्कारस्तदा कमलमिव मुखमित्यादावप्युपमां बाधित्वा अर्थश्लेषोलङ्कारे प्रसजति तेन किमपराद्धं मनोज्ञत्वादिधर्माणामुभयत्रान्वयरूपश्लिष्टत्वादिति भावः । इवशब्दसद्भावादुपमाया एव तत्रानुभविकत्वे तु सकलकलमित्यादावपि शब्दसाधर्म्यादनुभूयमानोपमैवत्यभिप्रायेणात्र रुद्रटोक्तमपि प्रमाणयति—**स्फुट-**

**मर्थेति**। इहापि शब्दालङ्कारमध्येऽपि "तवाधरे च रागोऽभूद् रम्भोरु ! हृदये च मे" त्यत्र शब्दसाधर्म्यात् समुच्चयालङ्कारः।

**तत्र साधर्म्यस्याऽवास्तवत्वादिति**। शब्दस्य पुरचन्द्रबिम्बधर्मत्वाभावादिति भावः। ततश्च सकलकलमित्यादावुपमाप्रसक्त्यभावात्तत्र श्लेषालङ्कार एवास्तु। पूर्णोपमाया निर्विषयत्वापत्तिपरिहाराय गुणक्रियासाधर्म्येऽर्थश्लेषं बाधित्वा पूर्णोपमैवास्तामित्याह—**ततश्चेति**। न तु सकलकलमित्यादौ शब्दसाधर्म्यस्य इत्यत्र उपमाप्रयोजकत्वमित्यन्वयः। **शब्दसाधर्म्याद् व्यावृत्तेरभावा**दितिउपमालक्षणस्य शब्दसाम्यतोऽव्यावृत्तत्वात् शब्दसाम्यविषयत्वादपीत्यर्थः। शब्दस्य साधर्म्यं च वाचकतासम्बन्धेन इति यद्वृत्तित्वादिति भावः।

यदि हि वाचकतासम्बन्धस्य वृत्तिनियामकत्वाभावेन शब्दरूपसाधर्म्यस्य अवास्तवत्वान्नालङ्कारप्रयोजकत्वं तदा परम्परितरूपके एव शब्दवाच्यत्वेन साम्येन तदर्थयोरभेदारोपात्मकरूपं कथं रूपकालङ्कारप्रयोजकमित्याह-**शब्दसाम्य** इति।

ननु साधर्म्यं तावत् समानो धर्मस्तस्याऽवास्तवत्वे तदनुपपन्नम्। विद्वन्मानसेत्यादौ त्वभेदारोप आहार्य्येऽवास्तवत्वेऽपि श्लिष्टशब्दरूपदोषेण सम्भवत्येव इत्यत आह—**किञ्चेति**। **बाध्यभूतोपमेति**। उपमात्वाभावे उपमाया बाध्यत्वस्याप्यनुपपत्तिः इत्यर्थः।

ननु तत्रैव शब्दबोध्यत्वरूपसादृश्यात्तत्रोपमापदं गौणमेवेत्यत आह-किञ्चेति। **श्लेषस्यैव** इति। श्लिष्टपदस्यैवेत्यर्थः। साम्यनिर्वाहकता-उपमाघटकसाम्यनिर्वाहकता। उभयात्मकत्वे ज्ञाते सत्येव तादृशैकशब्दार्थरूपसाम्यबोधादित्यर्थः। **श्लेषबन्धतः प्रथममिति**। सकलकलपदबन्धाभावे पुरचन्द्रबिम्बयोः साम्याऽप्रतीतेः, अङ्गित्वेन पर्य्यन्तिकप्रतीतिविषयतया प्रधानत्वेन; तथा च श्लिष्टपदार्थानुसन्धानेन साम्यप्रतीतौ ततोऽङ्गिन्युपमा प्रतीयते। श्लेषस्तु तन्निर्वाहकरूपमङ्गमिति भावः। अङ्गाङ्गिभावो निर्वाहकनिर्वाह्यभावः। एवं दीपकादावपीति। दीपकतुल्ययोगिताऽर्थालङ्कारादावपि श्लेषस्तदङ्गमित्यर्थः।

इत्थं सकलकलमित्यत्रोपमैव न श्लेष इति साधिते श्लेषाधीनवस्तुध्वनावपि न श्लेषालङ्कार इत्याह—**सत्पक्षा** इति। शरत्कालवर्णनमिदं प्राकरणिकम्। तत्र धार्त्तराष्ट्राः कृष्णवर्णचञ्चूचरणा हंसविशेषाः शरत्कालवशात् मेदिनी पृष्ठे निपतन्तीत्यन्वयः। पक्षं पतत्रम्। आशा प्रसाधनं दिक्षु गमनं, चौरादिकस्य साधेर्गत्यर्थत्वात्। अत्र धृतराष्ट्रपुत्राणाममङ्गले वक्तुस्तात्पर्य्यम्। तेषां मरणरूपं वस्तु श्लिष्टशब्दव्यञ्जनया प्रतीयते। तत्र धार्त्तराष्ट्रा धृतराष्ट्रपुत्रा दुर्य्योधनादयः प्रसाधिताशाः शासितदिङ्मण्डलाः। अतएव मदोद्धतारम्भाः। सत्पक्षाः प्रकृष्टसहायाः कालवशाद् यमवशात् मधुरगिरः कान्तवाचः मेदिनीपृष्ठे निपतन्ति इत्यर्थः।

अत्र चोपमाध्वनित्वं श्लेषालङ्कारश्च न प्रसज्यत इत्याह—**इह चेति**। प्रकृतप्रबन्धो वेणीसंहारनाटकं तदभिधेयस्य तत्प्रतिपाद्यस्य कुरूणां मरणरूपस्य द्वितीयार्थस्य सूच्यतयैव व्यङ्ग्यतयेत्यर्थः, न तु हंसोपमानत्वेनेति एवकारार्थः। तदेव विवृणेति—**उपमेय** इति। **नच श्लेष** इति। उभयार्थस्य वाच्यत्वाभावाद् इति भावः। सर्वमवदातमिति। येन ध्वस्तमित्यादावलङ्कारान्तरासङ्कीर्ण एव श्लेषः। सकलकलमित्यादौ च श्लेषघटित उपमालङ्कार एवेत्यादिकं विशदितमित्यर्थः।

## लोचन

**स्वेच्छेति**। स्वेच्छया उपजात आश्रितः विषयः भोगः यस्य। वक्तुं न यातीति न तत्र स्वार्थनिवेदनं वक्तुं शक्य इत्यर्थः। देहि प्रयच्छ। इति। मार्गणशतैः याचनशतैः प्रदानाभावात् पुनः पुनः कृतैः। मोहादपराधगुरुलघुविचारादक्षत्वात्। अकाण्डेऽकस्मात्, स्वल्पेऽप्यागसीति यावत्। पक्षान्तरे तु विषयः कामस्याश्रयो वनितादिः। **वक्तुं न यातीति**। वक्तुं न यातीदृशः सम्प्रति मे काम इति। देही प्राणीत्येतावन्मात्रेण विशेषमनपेक्ष्य, मार्गणशतैर्मोहादात्मनो विवेकाभावात्। कष्टमिति निर्वेदेऽव्ययम्। दीपके विद्यमान इत्यर्थः।

सकलकलं कोलाहलध्वनिसहितं, सकलाभिः, कलाभिर्युक्तं च। एषां तुल्ययोगितादीनां त्रयाणामलङ्काराणां प्राबल्येन चमत्कारित्वं कविना द्व्यर्थशब्दस्य वैचित्र्यबोधोपायत्वेनोपादानात्।

अत्र सिद्धान्तमाह—**अत्रेति। वाच्यत्वे नियमाभावादिति**। येन ध्वस्तेत्यादावुक्तप्रकारेण प्रकरणादिनियमाभावात्, माधवोमाधवार्थयोर्द्वयोर्वाच्यत्वनियमः। तुल्ययोगितायां च द्वयोर्वाच्यत्वनियमो नास्ति। शब्दयोस्तन्त्रताऽङ्गीकारेण द्वयोर्वाच्यत्वनियमः समनन्तरोक्तप्रकारेण ध्वनितन्त्रवादिमते चैकस्य वाच्यत्वमितरस्य व्यङ्ग्यत्वमित भावः। एतदेव विशेषयति—अत्र हीति। अत्र येन ध्वस्तेत्यादौ। अत्र हीत्यनन्तरं तुल्ययोगिताङ्गीकारे इति शेषः।

अनुपपत्त्यन्तरमाह—**किञ्चेति**। अयमाशयः—

**"सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्।**
**प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः॥"**

इत्यादौ तुल्ययोगितायामेकस्यैव निलयगमनोपक्रमरूपधर्मस्य सौरभीप्रभयोर्धर्मिणोः सम्बद्धतया प्रत्ययः। इह तु श्लेषेषु पुनरनेकेषां धर्मिणां माधवोमाधवप्रभृतीनां येन ध्वस्तमनोभवेनेत्यादिरूपपृथक्पृथग्धर्मसम्बद्धतया प्रत्यय इत्यन्वयः। धर्मवाचकशब्दयोर्भिन्नरूपत्वात्। तुल्ययोगितायां तु निलयगमनोपक्रमंस्य भिन्नार्थत्वेऽपि एकताध्यवसादेकता। नहि येन ध्वस्तेत्यादावपि माधवोमाधवगामिनोर्धर्मयोरेकताध्यवसायः। द्वयोरनिश्चयेन प्रकृताप्रकृतत्वाभावात्। यद्यपि तुल्ययोगितायामपि द्वयोर्नप्रकृताप्रकृत्वं तथापि तद् विवक्षा, तत्रोपमानोपमेयत्वस्य प्राच्यानामप्यभिमतत्वात्।

न केवलं श्लेषस्यालङ्कारान्तरविविक्तविषयता। पूर्णोपमादिविषयेऽस्यासम्भवोऽपीत्याह—**सकलेति**। पूर्णोपमाप्रकरणे लक्ष्यमाणार्थश्लेषेण कमलमिवेत्यादौ मनोज्ञत्वधर्मस्य कमलमुखरूपप्रतिसम्बन्धिभेदाङ्गीकारप्रयोजितेन किमपराद्धम्। तुल्येनापराधेन शब्दश्लेषविषये पूर्णोपमामनङ्गीकृत्य एतद् विषये किं तस्याः परिग्रहोऽभिमतो युष्माकं, द्वयोः समानत्वादिति भावः। कथं द्वयोः समानन्यायत्वमित्याहस्फुटमिति। समुच्चयो यथा वसुधामहितेत्यादिः। सामान्यं साधारणो धर्मः। इह शब्दालङ्कारमध्ये गुणसाम्यं, कमलमित्यादि, क्रियासाम्यं चन्द्र इव मुखं शोभते इत्यादि।

तत्र गुणक्रियासाम्ये वास्तवत्वात् स्वाभाविकत्वात् अवास्तवत्वात् अतात्त्विकत्वात्। पूर्णोपमाविषयता युक्ता गत्यन्तराभावादिति भावः। अविशिष्टस्य गुणक्रियासाम्ये चेति विशिष्यानिर्दिष्टस्य।

दूषणान्तरमाह—**यदि वेति**। अयमर्थः—यदि शब्दसाम्यस्य सकलकलमित्यादौ नोपमाप्रयोजकता कथं तर्हि "विद्वन्मानसहंस" इत्यादौ राज्ञो हंसारोपस्य मानससाधारणप्रयोजकता चेति।

पुनर्दूषणान्तरमाह—**किञ्चेति**। बाध्यभूता श्लेषस्य सर्वालङ्कारापवादत्वप्रपन्नेत्यर्थः। कथमङ्गीक्रियते, उत्सर्गसिद्धस्यैवाऽपवादबाध्यत्वादित्यर्थः।

एवं चात्रोपमायाः श्लेषप्रतिभोत्पत्तिहेतुत्वेनाङ्गित्वं, श्लेषस्य तदङ्गत्वमिति युक्त्यन्तरेणापि द्रढयति—**किञ्चात्रेति**। साम्यमुपमाप्रयोजकम्। अङ्गाङ्गिभावसंकरः। "अविश्रान्तजुषामात्मन्यङ्गाङ्गित्वे तु संकर" इत्युक्तप्रकारः। अर्थाननुसन्धानात् शब्दालङ्कारेष्वनुप्रासादीनां परस्परनिरपेक्षत्वेनाङ्गाङ्गिभावसंकरः नाङ्गीक्रियते, श्लेषादेस्त्वर्थानुसन्धानात् सापेक्षत्वेन परस्परापेक्षासम्भवात् कथं वा न स्वीक्रियते इति भावः। एवमुक्तप्रकार उपमाभिधायकन्यायो दीपकादावपि ज्ञेयः। अयमर्थः— यथाशब्दसाम्यस्योपमाप्रयोजकत्वे श्लेषस्य तदङ्गता, तथा दीपकादिप्रयोजकत्वे दीपकाद्यङ्गतेति। आदि शब्दात्तुल्ययोगितादौ।

**सत्पक्षा** इति। पक्षो गरुत् सहायश्च। प्रसाधिताः। भूषिताः प्रकर्षेणात्मसात्कृताश्च। धार्त्तराष्ट्रा हंसाः दुर्योधनादयश्च। उपमाध्वनिशङ्कां निराचष्टे।

प्रकृतप्रबन्धो वेणीसंहाराख्यं नाटकम्। सूच्यतयैव विवक्षितत्वात् यदुक्तमत्रैव नाटकलक्षणावसरे "सूचयेद् वस्तुबीजं वा मुख्यपात्रमथापिवा" इति उपमेयोपमानभावो हंसादीनां दुर्योधनादिभिः सहेत्यर्थः। नच श्लेषः, शरद्वर्णनाया एव प्रकृतत्वात्।

## कुसुमप्रतिमा

अथ तदा कुत्रान्वानलङ्कारान् वाधित्वा प्रथमः श्लेषव्यपदेश इत्याह तेनेति। उदाहृतेषु उक्तरीत्या श्लेषासम्भवेनेत्यर्थः। प्राकरणिकयोः प्रकरणेन स सृष्टयोः प्रस्तुतयोर्द्वयोरपि हरिहरयोरित्यर्थः, एक धर्म्माभिसम्बन्धादिति परेणान्वयः, कर्तृत्वसम्बन्धेनैकरक्षणक्रियायां सम्बन्धादित्यर्थः। अप्राकरणिकयोः नयनस्यैव प्रस्तुतत्वेन अप्रस्तुतयोः पद्महरिणयोः, एकधर्म्माभिसम्बन्धात् सादृश्यरूपैकगुणसम्बन्धात् प्राप्तायामिति शेषः, तुल्ययोगितायां तदाख्यालङ्कारे 'विद्यमानायामपि' इति परेणान्वयः।

स्वेच्छोपजातेति। अपराधिभ्रमेण दण्डितायाः प्रजाया बर्बरं राजानमुद्दिश्योक्तिरियम्। स्वेच्छया निजेच्छामात्रानुसरणेन उपजातविषयोऽपि सञ्जाततम् विषयोऽपि, वक्तुं न याति वाग्विषयतां न प्राप्नोति, अन्याय्याचरणेन किञ्चिद्वक्तव्योऽपि दण्डेन तद्वाक्यावसरं न ददातीत्यर्थः। कामपक्षे तु—स्वेच्छया निजेच्छामात्रेणैव उपजातः सम्भूतः विषयो लक्ष्यं यस्य सः, अतएव कमपि जनं वक्तुं न याति त्वं मे लक्ष्यो भव" इति कथयितुं न गच्छति। देहि राजग्राह्यं करमपयं इति कृत्वा मार्गणशतैनि जानुचरद्वारा बहुतरयाचनै प्रजाभ्यो दुःखञ्च ददाति। कामपक्षे तु—देहौ कामौ जनो देहधारी इति हेतोः, मार्गणशतैः शरसमूहै दुःखं ददाति च। आत्मवद्देहाभावे तु शरशतैदुःखदानासम्भव इति भावः। मोहाद्बुद्धिवैकल्यात् अकाण्डे अनवसरे हठादेवेत्यर्थः, प्रजानां जीवनं समुत्क्षिपति विनाशयति। कामपक्षे तु—मोहात् मोहं जनयित्वा अकाण्डे अकाले कामिजनस्य जीवनं समुत्क्षिपति संहरति। अतएव प्रसूनविशिखः पुष्पबाणः कामः अल्पबुद्धि प्रभू राजा च कष्टं जनानां निरतिशयकष्टजनकः।

इत्यादाविति। प्राकरणिकाप्राकरणिकयोः प्रस्तुताप्रस्तुतयोः राज कामयोः एकधर्म्माभिसम्बन्धात् कष्टत्वरूपैकगुणसम्बन्धात् दीपके वक्ष्यमाणलक्षणे दीपकालङ्कारे, विद्यमानेऽपीतं वक्ष्यमाणेन लिङ्गव्यत्यया दन्वयः।

सकलेति। एतत् पुरम्, सम्प्रति सुधांशुबिम्बं चन्द्रमण्डलमिव, कलकलेन कोलाहलेन सह विद्यमानमिति सकलकलं कोलाहलयुक्तम्, अन्यत्र तु सकलाः कलाः षोड़शभागा यस्मिन् तत्तादृशञ्च जातम्।

इत्यादाविति। एतेषां तुल्ययोगितादीनां ये विषयाः स्थलानि तेषां परिहारेण परित्यागेन असम्भवात् स्थलाभावेन समावेशाप्राप्तेः। एतेन श्लेषस्य विशेषरूपत्वेनापवादत्त्वं सूचितम्। एषां तुल्ययोगितादीनाञ्च श्लेष-विषयपरिहारेणापि श्लेषस्थलपरित्यागेनापि, स्थितेः, समावेशसम्भवात्। एतेन तुल्ययोगितादीनां सामान्यरूपत्वे-नीत्सर्गरूपत्वं द्योतितम्। एतद्विषये तुल्ययोगितादीनां स्थले। प्राधान्येन आधिक्येन। व्यपदेशः "अत्र श्लेषोऽलङ्कारः" इत्येवं नामनिर्द्देश। अन्यथा उदाहततुल्ययोगितादिस्थलेष्वपि श्लेषव्यपदेशानङ्गीकारे, तद्व्यप-देशस्य श्लेषसंज्ञायाः श्लेषाख्यालङ्कारान्तरस्येत्यर्थः, अभावप्रसङ्गात् सर्वत्रैव प्रसक्त्यभावेन विलोपप्राप्तेः श्लेष-स्वीकारस्य वैयर्थ्यापत्तेरित्यर्थः। इतिशब्दस्तीयविचारसमाप्तिद्योतनार्थः। एतेन तुल्ययोगितादिस्थले श्लेषसत्त्वे श्लेषनाम्नैव व्यपदेशः, तदसत्त्वे तु तुल्ययोगितादिनाम्नेति तेषां मते फलितम्।

इदानीमुक्तमते दोषं प्रदर्शयन् स्वसिद्धान्तमभिधातुमाह अत्रोच्यत इति। अत्र इदानीम् उच्यते उक्तमते दोषः स्वसिद्धान्तश्चेति शेषः। परमार्थतो वस्तुतः। अलङ्कारान्तरविविक्तविषयता न अन्यान्यालङ्कारविषयाभिन्न-विषयता न, अन्यान्यालङ्काराणामपि यदेव स्थलं श्लेषस्यापि तदेव स्थलम् इति नेत्यर्थः। इत्यादिना उदाहरणेन, विविक्तविषयत्वात् अन्यान्यालङ्कारविषय भिन्नविषयताया दर्शितत्वादित्यर्थः। तथा च "येन ध्वस्त—" इत्यादौ अन्येऽलङ्कारा न विद्यन्ते, श्लेषस्तु विद्यत एवेति अलङ्कारान्तरविविक्तविषयतायाः सम्भवात् "अस्य चालङ्कारान्त-रविविक्तविषयताया असम्भवात्" इति यदुक्तं तदपास्तमिति भावः।

ननु पायादियेकरक्षणंक्रियायां माधवोमाधवयोः कर्तृत्वसम्बन्धेनाभिसम्बन्धात् "येन ध्वस्त—" इत्यादौ तुल्ययोगितैवास्तीति कथमुच्यते "इत्यादिना विविक्तविषयत्वात्" इति अत आह न चेति। तस्यास्तुल्ययोगितायाः सम्बन्धे। एतदुपलक्षणं दीपकस्यापि बोध्यम्। वाच्यत्वनियमाभावादिति। एकस्य वाच्यत्वनियमात् अपरस्य चावाच्यत्वनियमादित्यर्थः! तेन "येन ध्वस्त—" इत्यादौ द्वयोरप्यर्थ योर्वाच्यत्वादेव न तुल्ययोगितेति भावः। अथ अत्रापि प्रकरणादिना एकस्यैव वाच्यत्वमस्तु इत्याह अत्रेति। व्यङ्ग्यत्वं स्यादिति। तथा च सति श्लेष एव न स्यात्, श्लेषे हि द्वयोरप्यर्थ योर्वाच्यत्वनियमादित्याशयः।

ननु "वाच्यत्वनियमाभावात्" इति यदुक्तं तदप्रमाणमिति "येन ध्वस्त—" इत्यादौ द्वयोरप्यर्थयोर्वा-च्यत्वेऽपि तुल्ययोगितैवास्तामित्याह किञ्चेति। धर्म्मस्य गुणक्रियान्यतररूपस्य। अनेकधर्म्मिसम्बद्धतया अनेकाश्रयसम्पृक्ततया। इह तु 'येन ध्वस्त—" इत्यादौ तु। पृथक् पृथग् धर्म्मसम्बद्धतया प्रतीतिरिति पूर्वेणान्वयः। तथा च योगाबलस्विशिवरूपधर्म्मिणी ध्वस्तमनोभवत्वरूपधर्म्मेण बालककृष्णरूपधर्म्मिणो ध्वस्तशकटत्वरूप-धर्म्मेण, योद्धृशिवरूपधर्म्मिणः अस्त्रीकरणरूपधर्म्मेण नारायणरूपधर्म्मिणश्च स्त्रीकरणरूपधर्म्मेण, इत्यादिरूपेण अनेकेषां धर्म्मिणां भिन्न-भिन्न धर्म्मसम्बद्धतया प्रतीतेः "येन ध्वस्त—" इत्यादौ कथमपि न तुल्ययोगिता, किन्तु केवलः श्लेष एवेत्याशयः।

एतेन "स्वेच्छोपजातविषयोऽपि—" इत्यादावपि इत्यमेवानेकेषां धर्म्मिणां पृथक् पृथग् धर्म्मसम्बद्धतय प्रतीतेनं दीपकम्, किन्तु केवलः श्लेष एव इत्यपि सूचितमिति बोध्यम्।

इदानीमवशिष्टं श्लेषेण पूर्णोपमाया बाध्यत्वं निरसितुमाह सकलेति। उपमायाः प्रतिभाप्रकाशः प्रतीति-रिति यावत् तस्या उतपत्तेर्हतुः कारणं 'सकलकलम्' इत्यादौ नोपमा, किन्तु क्तरीत्या श्लेष एवेति न वाच्यमित्यर्थः। निर्विषयत्वापत्तेरिति। श्लेषं विना पूर्णोपमाया असम्भवात् श्लेषेण पूर्णोपमाया बाध्यत्वे पूर्णोपमाङ्गीकारवैयर्थ्या-पत्तेति भावः। अस्तीति। कमलमित्यादौ शब्दश्लेषासम्भवादिति भावः। अपराद्धमिति। तथा च शब्दश्लेषेण

उपमा बाध्येत, अर्थश्लेषेण तु न, इत्यत्र विनिगमनाभावात् 'कमलमिव' इत्यादावपि अर्थश्लेषेण पूर्णोपमाया बाध्यत्वात्तस्यनिर्विषयत्वमेवेत्याशयः।

स्वमते वृद्धसंवादमाह स्फुटमिति। एतौ उपमासमुच्चयौ स्फुटं स्पष्टम् अर्थालङ्कारौ अर्थप्रयोज्यतया अर्थालङ्कारत्वेन सर्वैरेव स्पष्टं प्रतीयमानावित्यर्थः। किन्तु तथापि सामान्यमुभयगतधर्म्मबोधकम्, शब्दमात्रं केवलमेकानुपूर्वीकं शब्दम् आश्रित्य इह श्लेषविषयेऽपि सम्भवतः प्रसजतः; 'स्वाधर्म्मयमुपमा' 'गुणयौगपद्ये समुच्चय' इति लक्षणद्वये सामान्यत एव साधर्म्य गुणयौगपद्ययोराश्रयणादिति भावः।

"जने नवीने तपने च रागः" इत्यादौ रागोऽनुरागो रक्तिमा चेति श्लिष्टशब्दप्रतिपाद्यगुणद्वययौगपद्येऽपि समुच्चय इति रुद्रटमतम्। तेन "समुच्चयपदमत्र तुल्ययोगितादीपकपरञ्च" इति रामचरणस्य निरर्थकलक्षणाकल्पना हेया।

इतीति। रुद्रटोक्त्या दिशा प्रकारेण। उपमाप्रयोजकत्वादिति। 'कमलमिव' इत्यादिवत् 'सकलकलम्' इत्यादावपि पूर्णोपमैवेति शेषः।

श्लेषव्यपदेशवादौ पुनः शङ्कते नन्विति। वास्तवत्वाद्यथार्थत्वात्। तथा च साधर्म्यं नाम तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वम्। तच्च "कमलमिव मुखं मनोज्ञम्" इत्यादौ कमलगतसौन्दर्य्यात्मकधर्म्मवत्त्वरूषं मुखे यथायथमेव विद्यत इत्याशयः। न तथा नोपमाप्रयोजकता युक्तेत्यर्थः। अवास्तवत्वात् मिथ्याभूतत्वात्। तथाहि 'सकलकलम्' इत्यादौ तात्पर्य्यविषयीभूतमुक्तविधं किमपि चन्द्रबिम्बसाधर्म्यं पुरे नास्त्येवेति भावः। ततश्च उक्तयोक्तेश्च। अन्ययाऽनुपत्तेः अर्थश्लेषस्यापि विषयपरित्यागे असम्भवात्। एतेन पूर्णोपमाया अर्थश्लेषापवादत्वमभिहितम्। गुणक्रियासाम्यस्यैव पूर्णोपमाविषयता युक्तेत्यन्वयः। अर्थश्लेषस्य स्वविषयतायाः परित्यागे सतीत्यर्थः। तथा च सामान्यस्य विशेषेतरपरत्वनियमात् "कमलमिव मुखं मनोज्ञम्" इत्यादिकं स्वयोग्यमपि विषयं परिहृत्य सामान्यरूपे "अर्थश्लेषे" प्रवृत्तयन् क्रियाः साध्वी—" इत्यादौवक्ष्यमाणे पूर्णोपमाया अविषये स्थिते सति, विशेषरूपा पूर्णेपमा 'कमलमिव' इत्यादौ समाविशतीति सरलार्थः। शब्दसाम्यस्यैवेति। पूर्णोपमाविषयता युक्ते त पूर्वेणाचयः। अविशिष्टस्य वास्तवत्वावास्तवत्वरूप विशेषहितस्य सामान्यत ए। काव्यप्रकाशकारेणोक्तस्य वास्तविकतया सर्वेषामेवाभिमतस्य चेत्यर्थः। शब्दसाम्याद्व्यावृत्तेरभावात् विनिगमकाभावेन "सकलकलम्" इत्यादिकं शब्दसाम्यस्थलमपहाय अन्यत्र नियमनासम्भवादित्यर्थः।

ननु शब्दसाम्यस्य अवास्तवत्वमेव उक्तनियमे विनिगमकमित्याह यदि चेति। आधारभूते उपमेयत्वेन विषयरूपे। अत्र सरोवरपदं सरोवरत्वपरम्। एवं हंसपदमपि हंसत्वपरम्। तत्तदारोपरूपः कथमत्र श्लिष्टपरस्परितरूपकालङ्कार इत्यशङ्कार्थः। तथा च 'सकलकलम्' इत्यादौ शब्दसाम्ये साधर्म्मयमवास्तवतत्वाद्यथा नोपमाप्रयोजकम्, तथा "विद्वन्मानस—" इत्यादौ श्लिष्टपरम्परितरूपकप्रयोजकमपि न स्यात् साधर्म्मावत्तया उपमानोपमेययोरभेदज्ञानस्यैव रूपकालङ्कारत्वात् तस्य च साधर्म्यस्य "विद्वन्मानस—" इत्यादावपि अवास्तवतया समानन्यादित्याशयः।

ननु आरोपात्मकतया रूपकस्यैवावास्तवत्वात् तत्प्रयोजकं साधर्म्मयमप्यवास्तवं भवितुमर्हति; उपमायास्तु वास्तवतया तत्प्रयोजकसाधर्म्मयस्यापि वास्तवत्वमेवापेक्षितमित्याह किञ्चेति। वास्तवसाम्य एव गुणक्रियासाम्याद्यथार्थसाधर्म्मय एव। अङ्गीकार्य्या त्वयेति शेषः। बाध्यभूता शब्दश्लेषेण बाधनीयरूपा। तथा च

'सकलकलम्' इत्यादौ साधर्म्मयस्य अवास्तवतया उपमाप्रयोजकत्वाभावत्तस्याः प्रसक्तिरेव नास्ति, तथापि कथं त्वया शब्दश्लेषेण उपमाया बाध्यत्वादित्यभिप्रायेण "श्लेषेणैव व्यपदेशो भवितुं युक्तः" इत्यभिहितमित्याशयः।

नन्वास्तां तावदवास्तवसाधर्म्मप्युपमा, तथापि 'सकलकलम्' इत्यादौ "श्लेषस्य प्राधान्येन श्लेषेणैव व्यपदेशो भवितुं युक्त." इत्युक्तिरेव मे युक्तिसहेत्याह किञ्चेति। साम्यनिर्वाहकता अभिन्नानुपूर्वीकशब्दोपस्था-प्यत्वरूपसादृश्यघटकता। श्लेषबन्धतः 'सकलकलम्' इत्यनेकार्थकशब्दयोजनायाः, प्रथम पूर्वम्। तेन च अन्य-थासिद्धिशून्यनियतपूर्ववर्त्तिनः कारणत्वात् साम्यनिर्वाहं प्रति, तन्नियतपूर्ववर्त्तिनः श्लेषस्यैव कारणत्वमिति भावः। उपमायाः पूर्णोपमाया एव, अङ्गित्वेन कार्य्यतया उद्देश्यत्वात् प्रधानत्वेन, व्यपदेशः "अत्र पूर्णोपमालङ्कारः" इत्येवं संज्ञानिर्द्देशः, ज्यायान् श्रेयान् उचित इत्यर्थः। काव्यप्रकाशकारोऽप्येवम्।

एतेन "सकलकलम्" इत्यादौ वामनादिमते "अत्र श्लेषोऽलङ्कारः, अत्र श्लेषोपमालङ्कारः" इत्येवं व्यप-देशः, काव्यप्रकाशकार-साहित्यदर्पणकारयोर्मते तु "अत्र पूर्णोपलालङ्कारः" इत्येवं व्यपदेश इति व्यपदेशभेद एव एतावद्विचारफलमिति बोध्यम्।

"उपमाया एवाङ्गित्वेन" इत्युक्तिं प्रति तृतीयः शङ्कते नन्विति। नाङ्गीक्रियत इति। अङ्गाङ्गिभावो हि निर्वाहकनिर्वाह्यभावः। एवञ्च अनुप्रासादिशब्दालङ्कारास्तादृश शब्दालङ्कारान्तरं कदापि न निर्वाहयन्तीति युक्ते रिति बोध्यम्। अत्र "सकलकलम्" इत्यादौ। अर्थानुसन्धानविरहिणि अर्थावधारण निरपेक्षे केवलशब्दावृत्तिसा-पेक्षे इत्यर्थः। अनुप्रासादावित्यादिशब्देन यमकभाषासमयोर्ग्रहणम्। तथाऽनङ्गीकारात् अङ्गाङ्गिभावसङ्करास्वीका-रात्। तत्रैवोक्तयुक्तेः सामञ्जस्यात्, श्लेषोपमयोस्तु अर्थानुसन्धानसापेक्षत्वेन निर्वाह्यनिर्वाहकभावस्यावश्यम्भावादङ्गाङ्गिभावः सङ्करः सम्भवत्येवेत्यभिप्रायः।

एवमिति। आदिशब्देन तुल्ययोगितादीनां ग्रहणम्। यथा "सकलकलम्" इत्यादौ शब्दश्लेषसत्त्वेऽपि प्राधान्यात् पूर्णोपमाव्यपदेशः, तथा "स्वेच्छोपजातविषयोऽपि—" इत्यादौ शब्दश्लेषसत्त्वेऽपि प्राधान्यात् दीपक-व्यपदेशः "स्तोकेनोन्नतिमायाति" इत्यादौ च अर्थश्लेषसत्त्वऽपि प्राधान्यात् तुल्ययोगिताव्यपदेश इत्यर्थः।

मतान्तरद्वयं निरसितुमुदाहरति सत्पक्षा इति। वेणीसंहारनाटकप्रस्तावनायां नटस्योक्तिरियम्। सन्तः सुन्दराः पक्षाः पतत्राणि येषां ते, मधुराः सुश्रुव्या गिरो रवा येषां ते, प्रसाधिताः स्वावस्थानेनालङ्कृता आशा दिशोयैस्ते, तथा मदेन आनन्देन उद्धता उत्कटा आरम्भा विहारादिव्यापारा येषां ते तथाभूताश्च, धार्त्तराष्ट्राः कृष्णवर्ण चञ्चु चरणविशिष्टा हंसविशेषाः, कालवशात् शरत्कालप्रभावात्, मेदिनीपृष्ठे निपतन्ति वर्षासमयप्राप्तमानससरोवरादा-गत्य भूमण्डले विचरन्तीत्यर्थ। "धार्त्तराष्ट्रा सितेतरैः" इत्यमरः।

द्वितीयोऽर्थस्तु—सन्तो महावीरत्वादिना अभ्यर्हिताः पक्षा भीष्मद्रोणादयः सहाया येषां ते, मधुरगिरः प्रियवचनाः, प्रसाधिताशा आयत्तीकृतसर्वदिशः, तथा मदेन अहङ्कारेण उद्धता विकटा आरम्भा युद्धादिव्यवहारा येषां ते तादृशाः, धृतराष्ट्रस्य राज्ञोऽपत्यानीति धार्त्तराष्ट्रा दुर्य्योधनादयः, कालवशात् कालप्राप्तिवशात् मरणादित्यर्थः मेदिनीपृष्ठे भूतले निपतन्ति अवलुण्ठन्ति।

अत्र धार्त्तराष्ट्रा दुर्य्योधनादय इव धार्त्तराष्ट्रा हंसा निपन्तीति "हिममुक्तचन्द्ररुचिरः" इत्यादिवदुपमाध्व-निरिति केचित्। अपरे तु द्वितीयार्थस्यापि प्रकृतप्रबन्धाभिधेयत्वे नाभिधानात् "नीतानामाकुलीभावम्" इत्यादिवदेव प्रकृतिश्लेष इत्याहुः।

तत्र स्वमतमाह अत्रेति । शरद्वर्णनया शरद्वर्णनारूपेण । प्रथमादिपदेन पक्षादिशब्दानाम्, द्वितीयादिपदेन च पतत्राद्यर्थानां ग्रहणम् । नियमात् "संयोगो विप्रयोगश्च" इत्याद्युक्तन्यायेन नियमितत्वात् । वस्तुध्वनिरिति । "पन्थिअ ण एत्थ सत्थरमत्थि" इत्यादिचतुर्थपरिच्छेदोदाहृतवदिति भावः ।

प्रदर्शितमतद्वयं निरस्यति इह चेति । किञ्चेति चार्थः, इह 'सत्पक्षाः' इत्यादिश्लोके । प्रकृतप्रबन्धाभिधेयस्य प्राक्प्रस्तुत-वेणीसंहाराख्यग्रन्थवाच्यस्य, अर्थस्य दुर्योधनादिपतनरूपस्य, सूच्यतयैव अत्यन्तचमत्कारिताविधानार्थमवश्यव्यङ्ग्यतयैव । न विवक्षित इति । अत्रायमाशयः—सर्वत्रैव आवश्यक भावेनोपमेयं वर्णयता कविना तस्य दृढत्वमात्रं सम्पादयितुमनावश्यकभावेनैव उपमानं प्रदर्श्यते; अत्र तु अत्यन्तवगत्कारिताविधानाय दुर्योधनादिपतनरूपस्य द्वितीयार्थस्य आवश्यकभावेनैव द्योतयितुमभिप्रेतत्वादुपमानत्वं न विवक्षितम्, तदविवक्षया च उभयोरुपमानोपमेयभाव एव न विवक्षित इति । न वा श्लेष इति । शरद्वर्णनारूपप्रकरणवशेन प्रथमार्थस्यैव वाच्यत्वनियमेन द्वितीयार्थस्य केवलं व्यङ्ग्यतया वाच्यत्वाभावादिति भावः । अवदातं निर्म्मलं सर्व एव विषयः परिष्कृत इत्यर्थः ।

एतेन प्रकरणादिनियमाभावादुभयार्थस्यैवाभिधेयत्वे श्लेषः, एकतरस्यार्थस्य अभिधेयत्वे अन्वतरस्य व्यङ्ग्यत्वं तयोश्चोपमानोपमेयभावसत्त्वे उपमाध्वनिः, तदसत्त्वे तु शब्दशक्तिमूलवस्तुध्वनिप्रभृतिरित्यवधेयम् ।

## विमला

ननु तर्हि के श्लेषबाध्याः ? इत्यपेक्षायामाह, तेनेति ।—समासोक्त्यादौ श्लेषस्य प्रसङ्गाभावादेव बाध्यत्वासम्भवेनेत्यर्थः । "प्राकरणिकयोः" इति "एकधर्माभिसम्बन्धात्" इत्यग्रेणान्वयः, एकः धर्मः,—गुणक्रियारूपः, तस्य अभिसम्बन्धात्—संयोगात्, "ग्रेच—" इत्यादौ माधवोमाधवयोः पदार्थयोरेकरक्षणक्रियाऽभिसम्बन्धः इति प्राकरणिकत्वम् । "नीतानाम्—" इत्यादौ "अप्राकरणिकयोः" इति पद्म-मृगविशेषयोरूपमानत्वे अप्राकरणिकत्वं बोध्यं, कमलेक्षणयोः पदार्थयोः आकुलीभावादिरूपैकगुणसम्बन्धश्च बोध्यः । तुल्ययोगितायां—"पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् । एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥" इति वक्ष्यमाणलक्षणायां, "विद्यमानायामपि" इत्यग्रेणान्वयः ज्ञेयः ।

स्वेच्छेति ।—निर्बोधराजसेवकस्योक्तिरियम् । प्रसूनविशिखः—कामः, अल्पबुद्धिः,—अबोधः, प्रभुः,—स्वामी च, कष्टं—क्लेशहेतुरित्यर्थः, भवतीति शेषः । पादत्रयेण तयोः कष्टहेतुत्वमुपपादयति, तथा हि—प्रसूनविशिखः स्वेच्छया—यथेष्टम्, उपजाताः,—सम्भवन्तः, विषयाः,—लक्ष्याणि यस्य तथोक्तः अपि, स्वेच्छया कामिजनरूपाणि लक्ष्याणि विध्यन्नपीत्यर्थः, देहीति—शरीरीति वक्तुं न याति—उक्तियोग्यतां न प्राप्नोतीत्यर्थः, अनङ्गत्वादिति भावः, मार्गणशतैः,—शरसमूहैः, दुःखं—क्लेशं, कामिभ्यः इति शेषः, ददाति, मोहात्—अज्ञानात्, स्वविकारजनितं मोहमुत्पाद्येत्यर्थः, [ल्यवर्थेयं पञ्चमी] जीवनमपि—प्राणानपि, कामिजनस्येति शेषः, अकाण्डे—सहसा, समुत्क्षिपति—हरति च । अल्पबुद्धिः प्रभुश्च स्वेच्छया—यथेष्टम्, उपाजाताः,—अधिगताः, विषयाः,—सम्पदः, उपभोगसाधनद्रव्याणीत्यर्थः येन तादृशः, यथेच्छं व्ययोपयोगिसम्पदोऽधिकुर्वन्नपीत्यर्थः, न याति—तान् विषयान् न अनुभवति इत्यर्थः, ["सर्वे गत्यर्था ज्ञानार्थाः प्राप्त्यर्थाश्च" इत्यनुशासनसिद्धमिहगत्यर्थ-याधातोर्ज्ञानार्थत्वमिति बोध्यम्] मार्गणशतैः,—याचकसमूहैः, ("वनीयको याचनको मार्गणो याचकार्थिनौ" इत्यमरः) देहीति वक्तुं दुःखं ददाति—अर्थात् तेभ्यो याचकेभ्यो देहीति याच्ञाशतजन्यं क्लेशं ददातीति विशदार्थः, महाबुद्धिस्तु देहीति वचनं विनैव याचकेभ्यो धनं ददातीति भावः, तथा मोहात्—अज्ञानात्, अपराधभ्रमात् इत्यर्थः, जीवनमपि,

अधिकृतलोकानामिति शेषः अकाण्डे—सहसा, समुत्क्षिपति—हरति। अत्र वसन्ततिलकं वृत्तं—"ज्ञेयं वसन्ततिलकं तभजा जगौगः" इति तल्लक्षणम्।

प्राकरणिकाप्राकरणिकयोः,—अत्र अल्पबुद्धिः प्रभुः प्राकरणिकः, कामस्तु तदुपमानतया अप्राकरणिकः तयोः, एकधर्माभिसम्बन्धात्—एकेन धर्मेण गुणक्रियारूपेण सम्बन्धात्, दीपके—"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते" इत्युक्तलक्षणे, विद्यमानेऽपीति लिङ्गविपरिणामेनान्वयः।

सकलेति।—एतत् पुरं—नगरं, सम्प्रति सुधांशुबिम्बमिव—चन्द्रबिम्बमिव, सकलकलं—कलकलेन—कलरवेण सह वर्त्तमानमित्यर्थः, अन्यत्र—सकलकलं सकला—सम्पूर्णा, कला यस्य तादृशं, जातं—सम्पन्नमित्यर्थः। अत्र सकलकलत्वरूपधर्मसाम्यात् पुरं चन्द्रबिम्बेनोपमीयते इति उपमायां—"साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमा द्वयोः" इत्युक्तलक्षणायां, विद्यमानायामपि—स्थितायामपि, एतद्विषयपरिहारेण—तुल्ययोगितादिविषयपरित्यागेन, असम्भवात्—असत्त्वात्, एतान् विषयान् परित्यज्य श्लेषो न सम्भवतीति हेतोरित्यर्थः। एषाञ्चेति।—एषां—तुल्ययोगिताऽऽदीनामलङ्काराणाञ्च, श्लेषविषयपरिहारेणापि—विना श्लेषमित्यर्थः, स्थितेः,—सम्भवादित्यर्थः, प्राबल्येन—प्राधान्येन, चमत्कारित्वप्रतीतेः,—वैचित्र्यबोधात्, व्यपदेशः,—कीर्त्तनं, श्लेषालङ्कारोऽत्रेति कथनमित्यर्थः। अन्यथा—एतादृशस्थले श्लेषाव्यपदेशे इत्यर्थः, तद्व्यपदेशस्य—श्लेषालङ्कारकीर्त्तनस्य, सर्वथा—सर्वैः प्रकारैः, अभावप्रसङ्गात्—लोपापत्तेरित्यर्थः।

एतन्मते दोषं प्रदर्श्य सिद्धान्तमाह, अत्रोच्यते इति।—परमार्थतः,—तत्त्वतः। अलङ्कारेति।—अलङ्कारेति।—अलङ्कारान्तरेण अविविक्तः,—अविभिन्नः, संवलित इत्यर्थः, विषयो यस्य तस्य भावः, न तावत्—नैवेत्यर्थः। विविक्तविषयत्वात्—अलङ्कारान्तरपृथक्कृतविषयत्वात्, विभिन्नविषयत्वादित्यर्थः। अत्रेति।—"येन ध्वस्त—" इत्यादि श्लेषविषये इत्यर्थः। तस्याश्चेति।—तस्याः,—तुल्ययोगितायाः, एतद्दीपकस्यापि उपलक्षणम्, द्वयोरप्यर्थयोः,—प्राकारणिकाप्राकरणिकयोः वाक्यार्थयोः, वाच्यचनियमाभावात्—अभिधेयत्वनियमासत्त्वात्, एकस्य वाच्यत्वनियमादिति तात्पर्य्यार्थः, द्वावेव वाच्यौ भवतः इत्येवं नियमी नास्ति, अत्र तु उभयोरेवार्थयोर्वाच्यत्वं स्यादेव इति भावः। न च "रक्ताः स्वभावमधुरा वहन्त्यो रागमुल्वणम्। दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियम॥" इत्यादौ तुल्ययोगितायां द्वितीयार्थस्यापि वाच्यत्वेन कथमेकस्यैव वाच्यत्वमिति वाच्यम्, ये तु "दुर्गालङ्घितविग्रहः" इत्यादौ पदपरावृत्त्या द्वितीयार्थस्यापि वाच्यचमङ्गीकुर्वन्ति, तेषां मते इत्यदोषात्। अत्र हीति।—"येन ध्वस्त—" इत्यादौ तुल्ययोगिताऽनुरोधेन एकस्य वाच्यत्वनियमो वाच्यः, तथा सति अपरस्य व्यङ्ग्यत्वापत्त्या श्लेषस्य विषयो न स्यादिति भावः। ननु तुल्ययोगितायां पदपरावृत्तिपक्षे द्वयोरप्यर्थयोः वाच्यत्वनियमोऽस्तु, तत्र का हानिः? इत्याशङ्क्य दोषान्तरमुत्थापयति, किञ्चेति।—धर्मस्य—गुणक्रियारुपस्य, "अनेकधर्मिसम्बद्धतया—बहुव्यक्तिसंसृष्टतया। इह तु—श्लेषे तु इत्यर्थः, अनेकेषां—बहूनां, धर्मिणां (बहुवचनमुपलक्षणं, द्वयोरपि धर्मिणोः, यथा—"येन ध्वस्त—" इत्यादिषु माधव उमाधवश्च द्वौ धर्मिणौ तयोः) पृथक् पृथक् धर्मेण सम्बद्धतया प्रतीतिः इत्यन्वयः।

अलङ्काराणां यो यत्प्रतीतिजन्यप्रतीतिविषयः, स तद्बाध्य इति नियमाभिप्रायेण श्लेषस्य बाध्यत्वमुपमायां प्रसह्य निषेधति—सकलकलमित्यादौ चेति। न उपमेति।—उपमायाः प्रतिभा उत्पत्तिहेतुर्यस्य तादृशः, न, उपमानुप्राणितः श्लेषो नेत्यर्थः, श्लेषेणोपमाबाधक इति भावः। निर्विषयत्वापत्तेः,—लक्ष्यस्थलाभावप्रसङ्गादित्यर्थः। तत्—तदा, किमपराद्धं—को दोषः कृत इत्यर्थः, तदा मनोज्ञमित्यादौ अर्थश्लेष एवास्तामिति समुदितार्थः।

स्फुटमिति ।—एतौ उपमासमुच्चयौ स्फुटं—स्पष्टम्, अर्थालङ्कारौ किन्तु सामान्यं शब्दमात्रम् आश्रित्य इहापि—अर्थालङ्कारमध्येऽपि, सम्भवतः । यद्यपि "सकलकलम्—" इत्यादौ एकप्रयत्नेन शब्दद्वयोत्पत्त्या शब्दस्यापि एकत्वं न सम्भवति, तथाऽपि एकानुपूर्व्यवच्छिन्नत्वेन शब्दयोरेकत्वप्रतिभास इति भावः । समुच्चयालङ्कारे एकधर्माभिसम्बन्धस्य निवेशाभावात् तत्समुच्चयपदमत्र तुल्ययोगितापरं दीपकपरञ्च, तयोः तत्सम्भवात्; नन्वेवं "किञ्च तुल्ययोगितायाम्—" इत्यादिना श्लेषतुल्ययोगितयोः यो विषयविभागः कृतः, स न सङ्गच्छते; "येन ध्वस्त—" इत्यादावपि शब्दरूपैकधर्मसम्बन्धस्य सत्त्वेन तुल्ययोगिताया विषयसम्भवात् इति चेत्, सत्यम्; यत्र अनेकस्य एकधर्मसम्बन्धावगमे द्विवचनबहुवचनचकाराद्यपेक्षा, तत्रैव दीपकतुल्ययोगितयोः विषयः; "येन ध्वस्त—" इत्यादौ तु द्विवचनाद्यपेक्षाविरहेण तुल्ययोगिताया विषय एव नास्ति, ययोरेकधर्मसम्बन्धः, तयोः अनेक प्रयत्नोच्चार्य्यपदवाच्यत्वं दीपकतुल्ययोगितालक्षणे निवेशनीयम्, अतो नातिप्रसङ्गः । एवञ्च, "स्वेच्छोपजातविषयोऽपि—" इत्यादि दीपकस्य, "किरणा हरिणाङ्कस्य—" इत्यादि "विकसनेत्रनीलाब्जे—" इत्यादि च तुल्ययोगितायाश्च विषय इति ध्येयम् ।

इतीति ।—इति रुद्रटेन—तदाख्यग्रन्थकारेण उक्ता या दिक्—नयः तथा, गुणेति—गुणक्रियासाम्यवत्—गुणक्रियासाम्यस्येव, यथा गुणक्रियासाम्यम् उपमाप्रयोजकं, तथा शब्दसाम्यमपि उपमाप्रयोजकमिति भावः । उपमाप्रयोजकता—औपम्यसाधकत्वम् । तत्र—गुणक्रियासाम्यप्रयुक्तोपमायां, साधर्म्यस्य—समानधर्मवत्त्वस्य,वास्तवत्त्वात्—वस्तुसमवेतत्वात्, तात्त्विकत्वादित्यर्थः । तथा—उपमाप्रयोजकता युक्ता इत्यर्थः, तत्र—शब्दसाम्यप्रयुक्तोपमायां, साधर्म्यस्य—शब्दरूपसामान्यस्य धर्मस्य, अवास्तवत्वात्—उपमानोपमेयरूपवस्तुनोऽसमवेतत्वात् । ततश्च—शब्दसाम्यस्य उपमाप्रयोजकत्वायोगाच्च । अन्यथाऽनुपपत्तेः,—अन्येन प्रकारेण उपपत्तेरसम्भवादित्यर्थः । अविशिष्टस्य—वास्तवत्वरूपविशेषरहितस्य, सामान्येनाभिःहितस्येत्यर्थः, उपमालक्षणस्य—काव्यप्रकाशाद्युक्तस्य, तथा च येन केनापि सम्बन्धेन उपमानोपमेयवृत्तिधर्म उपमा, न तु समवायसम्बन्धेन इति नियमः, शब्दस्य उपस्थाप्यत्वसम्बन्धेन उपमानोपमेयवृत्तित्वेन उपमाप्रयोजकत्वम् अक्षतमिति भावः । व्यावृत्तेः,—व्यवच्छेदस्य । उपमानोपमेययोरभेदप्रतीतिः रूपकम् इत्यभिप्रायेणाह—यदीति । क्विन्मानसेत्यादि ।—उपमानोपमेययोरभेदप्रतिपत्तिरूपस्य रूपकस्य कथमत्र अवास्तवेऽपि सद्भावः, भवन्मते अवास्तवे उपमानोपमेयभावस्यासत्त्वादिति भावः । आधारभूते—विषयरूपे । ननु श्लिष्टपदनिबन्धनपरम्परितरूपकान्यथाऽनुपपत्त्या तत्र तथा कल्पनीयं, न तूपमायामित्यत आह—किञ्चेति । कथमिति ।—बाध्यभूता—बाधिता इत्यर्थः । श्लेषस्य अलङ्कारान्तरप्रतिभोत्पत्तिहेतुत्वेन तेनैव व्यपदेश इति यदुक्तं तदपि दूषयति, किञ्चेति ।—अत्र—"सकलकलम्" इत्यादौ । साम्यनिर्वाहकंता—औपम्यप्रयोजकता, श्लेषबन्धतः,—श्लेषरचनायाः, प्रथमं—पूर्वम् । अङ्गित्वेन—साध्यतया प्राधान्येन, व्यपदेशः,—कीर्त्तनं, ज्यायान्—श्रेष्ठः । तथा च, श्लेषस्य प्रथमोपस्थितत्वेऽपि साधनत्वेन अप्रधानतया तेन व्यपदेशो नोचित इति भावः । अर्थेति ।—अर्थानुसन्धानविरहिणि—अर्थानुसन्धानरहिते, केवलं शब्दानुसन्धानमात्रसाध्ये इति भावः । तथाऽनङ्गीकारात्—अङ्गाङ्गिभावसङ्करास्वीकारादित्यर्थः, श्लेषस्य शब्दालङ्कारत्वेऽपि अर्थानुसन्धानसापेक्षत्वात् उपमाङ्गत्वम् अक्षतमिति भावः । एवमिति ।—यथा "सकलकलम्" इत्यत्र उपमायाः प्राधान्यं, तथा "स्वेच्छोपजातविषयः" इत्यादौ श्लेषसत्त्वेऽपि दीपकस्य प्राधान्यमिति भावः । (दीपकादावित्यादिशब्दात् तुल्ययोगितादिपरिग्रहः) ।

"सत्पक्षाः—" इत्यादौ केचिदुपमाध्वनिं, केचिच्च श्लेषं स्वीकुर्वन्ति, तदुभयमपि नोचितमित्याह, सत्पक्षा इति ।—सत्पक्षाः,—उत्कृष्टपक्षशालिनः, अन्यत्र—सुसहायाः, मधुरगिरः,—मनोहरवचसः, उभयत्र समानं, यद्वा—

सत्पक्षाः,—उत्तमसहायाश्च ते अमधुरगिरश्च इति कर्मधारयः समासः, प्रसाधिताः,—शोभिताः, आशाः—दिशः यैः तादृशाः, अन्यत्र—अर्थिनामाशापूरकाः, वशी कृतदिशो वा, अथवा —प्रसाधिताः,—प्रकृष्टं साधिताः, आशाः,—स्वेच्छाविषयाः यैः तादृशाः, अथवा—प्रसाधिता—धृता, आशा—जयेच्छा यैः ते, मदोद्धतः,—मदेन—चित्तविकारविशेषेण, उद्धतः,—उच्चैस्तरः, आरम्भः,—आरवः येषां ते, ["रभि शब्दे" इत्यस्य रूपम] अन्यत्र—मदेन—गर्वेण, उद्धताः,—अविनीताः, आरम्भाः,—युद्धादिविचेष्टितानि येषां तथाभूताः, धार्त्तराष्ट्राः,—हंसविशेषाः, धृतराष्ट्रसुताः दुर्य्योधनादयश्च, कालवशात्—शरत्कालक्रमात्, अन्यत्र—मृत्युकालवशात्, मेदिनौ पृष्ठे—पृथिव्यां, निपतन्ति, मानससरस इति शेषः, "जलधरसमये मानसं यान्ति हंसाः" इति कविसमयप्रसिद्धेः, साम्प्रतं वर्षाऽऽपगमादिति भावः, अन्यत्र—रणक्षेत्रे, निपतन्ति—निहताः शेरते इत्यर्थः। वेणीसंहारस्येदं पद्यम्। अत्रार्य्या नाम च्छन्दः।

अत्र शरदिति।—प्रकरणेन—"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता। अर्थः प्रकरणं लिङ्गम्" इति लक्षणोक्तेन, नियमनात्—नियन्त्रणात्, व्यवस्थापनात् इत्यर्थः। सूच्यतयैव—सामान्येन प्रकाश्यतयैव, विवक्षितत्वात्—वक्तुमिष्टत्वात्। उपमाध्वनिः,—व्यङ्ग्यभूता उपमा इत्यर्थः। न वा श्लेष इति।—प्रकरण नियमेन द्वितीयार्थस्य अनभिधेयत्वादिति हेतुरत्र द्रष्टव्यः। अवदातं—विशुद्धं, निर्मलमिति यावत्।

## लक्ष्मी

ननु तर्हि केऽलङ्काराः श्लेषबाध्या इति जिज्ञासायामाह—तेनेति। समासोक्त्यप्रस्तुतप्रशंसादौ श्लेषस्य प्रसङ्गाभवादेव बाध्यत्वासम्भवेनेत्यर्थः। प्राकरणिकयोः प्रकरणप्राप्तयोर्द्वयोरपि हरिहररूपयोरर्थयोरित्यर्थः, एकधर्माभिसम्बन्धादित्यग्रेण सम्बन्धः पायादित्येकरक्षणक्रियायां कर्त्तृत्वसम्बन्धेन सम्बन्धादित्यर्थः।

अप्राकरणिकयोःपद्ममृगविशेषरूपयोरुपमानत्वेनाप्रस्तुतयोरर्थयोरित्यर्थः, एकधर्माभिसम्बन्धात् एको धर्मो गुणक्रियाद्यन्यतमरूपस्तस्याभिसम्बन्धः संयोगस्तस्मात्तथोक्तात्, पूर्वत्र पालनरूपैकक्रियासम्बन्धात् उत्तरत्र पुनराकुलीभवादिरूपगुणसम्बन्धादित्यर्थः, तुल्ययोगितायाम्—

**'पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्।**
**एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता॥'**

इतिवक्ष्यमाणेऽलङ्कारविशेषे 'विद्यमानानामपि' इत्यग्रिमेण सम्बन्धः।

स्वच्छोपजातेति। अपराधिभ्रमेण दण्डितस्य कस्यचिद्दुर्मतिराजसेवकस्योक्तिरियम्। स्वेच्छया स्वाभिलाषामात्रानुसारेण उपजाता उपपन्ना विषया उपभोगसाधनद्रव्याणि यस्य स तथोक्तोऽपि प्रभुः देहीति ददस्वेति वचनं न याति न प्राप्नोति एतादृशवाग् वक्ता न भवतीत्यर्थः, यद्वा न याति विषयान्नानुभवतीत्यर्थः गत्यर्थानां ज्ञानार्थत्वात्। मार्गणशतैः स्वसेवकद्वारापरधनान्वेषणरूपमार्गणशतैः अर्थात् ईदृशपदातिशतैः दुःखं ददाति देहीत्यनुक्त्वापि पदातिद्वारा सर्वस्वं हृत्वा दुःखं ददातीत्यर्थः, अधिकारसत्त्वादेहीत्युक्त्वापि सर्वस्वं ग्रहीतुं सामर्थ्यसत्त्वेऽपि अल्पबुद्धित्वात्तथा न विदधातीत्यर्थः, यद्वा मार्गणशतैर्याचक समूहैर्देहीतिवक्तुमर्थतिभ्यो दुःखं ददाति महाबुद्धिस्तु देहीतिवचनं विनैव याचकेभ्योधनं ददातीत्याशयः। मोहात् अपराधभ्रमात् अकाण्डे असमये हठादेवेत्यर्थः जीवनं प्रजाजनस्येतिशेषः समुत्क्षिपति विनाशयति अत एव प्रसूनविशिखः अल्पबुद्धिःप्रभुः कामश्च कष्टं जनानामत्यन्तकष्टजनकः। **कामपक्षे** तु—स्वेच्छया स्वाभिलाषामात्रेणैव उपजातः समुत्पन्नः विषयो लक्ष्यं यस्य स

तथाभूतः अनायासेन सर्वलोकपरिप्राप्ताधिकारोऽपीत्यर्थः, अत एव कमपि जनं वक्तुं न याति 'त्वं मे लक्ष्यो भव' इत्यभिधातुं न गच्छति तथा देहीति शरीरीति वक्तुं न याति न प्राप्नोति देहाभावेन देहीतिवाग्विषयो न भवतीत्यर्थः, मार्गणशतैः शरसमूहैः दुःखं ददाति सम्भवद्बहुलक्ष्योऽपि कस्मैचिदेव मार्गणशतैः दुःखातिशयं ददाती त्यर्थः, लक्ष्येषु विभज्य यदि शरान् क्षिपेत्तदा एकस्य वेधने शरशतासम्भवाद्दुःखातिशयो न भवतीत्याशयः। मोहात् मोहम् उत्पाद्य अकाण्डे असमये जीवनं कामिजनस्येतिशेषः समुत्क्षिपति संहरति। अत एव प्रसूनानि पुष्पाण्येव विशिखा बाणा यस्य स तथोक्तः काम इत्यर्थः कष्टं जनानां कष्टातिशयोत्पादकः। **वसन्ततिलकं** छन्दः तल्लक्षणञ्चोक्तं प्रागेव।

इत्यादाविति। प्राकरणिकाप्राकरणिकयोः उपमेयत्वोपमानत्वाभ्यां प्रस्तुताप्रस्तुतयोः प्रभु—कामयोः एकधर्माभिसम्बन्धात् स्वेच्छोपजातविषयत्वादिरूपैकगुणसम्बन्धात् दीपके 'विद्यमानायामपि' इतिवक्ष्यमाणस्य लिङ्गव्यत्ययेन विद्यमानेन सम्बन्धः। वक्ष्यति च 'प्रस्तुताप्रस्तुतयोर्दीपकन्तु निगद्यते' इति।

**सकलेति**। 'नक्षत्राधिकृतत्वं दधति करा यस्य सर्वत्र नित्यम्' इत्युत्तरार्द्धम्।'

एतत् पुरं सम्प्रति वर्त्तमानसमये सुधांशुबिम्बं चन्द्रमण्डलमिव, कलकलेन सह वर्त्तत इति सकलकलं कोलाहलसहितम्, अन्यत्र तु सकलाः समग्राः कला षोडशो भागो यत्र तत्तथोक्तञ्च जातम्।

इत्यादाविति। उपमाया 'साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः' इतिवक्ष्यमाणलक्षणेऽलङ्कारविशेषे। एतेषां तुल्ययोगिताद्यलङ्काराणां विषया उदाहरणानि तेषां परिहारेण परित्यागेन असम्भवात् उदाहरणभावेन समावेशाप्राप्तेः। अनेन श्लेषस्य विशेषरूपत्वेनापवादत्वं ध्वनितम्। एषां तुल्ययोगिताद्यलङ्काराणाञ्च श्लेषविषयपरिहारेणापि श्लेषोदाहरणपरित्यागेनापि स्थितेः समावेशसम्भवात्। अनेन तुल्ययोगिताद्यलङ्काराणां सामान्यरूपत्वेनोत्सर्गत्वं सूचितम्। एतेषां तुल्ययोगितादीनां विषये उदाहरणे प्राधान्येन प्राबल्येन एषु श्लेषालङ्कारस्यैवौचित्ये हेतुमाह—**चमत्कारित्वातिशयेति**। व्यपदेशः 'अयं श्लेषालङ्कारः' इत्येवमभिधानम्। अन्यथा तुल्ययोगित्वादीनां शिलष्टत्ववत्तानभ्युपगमे तद्व्यपदेशस्य श्लेषसंज्ञायाः अभावप्रसङ्गात् सर्वत्रैव प्राप्त्यभावेन श्लेषाङ्गीकारस्य वैयर्थ्यापत्तेरित्यर्थः। नच कथं तद्भावप्रसङ्गः 'प्रतिकूलतामुपगते हि विधौ' इत्यादिष्वेव तत्सत्त्वादितिवाच्यम्, तत्रापि विधेः प्रतिकूलतोपगमनस्य बहुसाधनतावैफल्यहेतुत्वेन हेत्वलङ्कारसत्त्वात् इतिपदं परमतविचारसमाप्तिसूचनार्थम्।

अनेन च यदि तुल्ययोगिताद्युदाहरणे श्लेषसत्त्वे श्लेषस्यैव प्राधान्यम्, तदभावे तु तुल्ययोगिताद्यभिधेयेति तेषां मते निष्कर्ष आयाति।

तदयमत्र परमतसङ्कलितोऽर्थः—समासोक्त्यादौ द्वितीयार्थस्य केवलव्यञ्जनागम्यत्वात् श्लेष एव न रूपकादौ श्लेषः सन्नपि रूपकादेरेव प्राधान्यात् तेन बाध्यते, तुल्ययोगितादौ तु अपवादत्वेन श्लेष एवेति।

एतन्मते दोषं प्रदर्शयन् स्वसिद्धान्तं प्रदर्शयितुमाह—**अत्रोच्यत** ति। अत्र अस्मिन् 'अस्य च' इत्यादिना प्रदर्शिते पूर्वपक्षे, उच्यते तन्मते दोषः स्वसिद्धान्तश्च प्रतिपाद्यते इति भावः। परमार्थतो वस्तुतः। अलङ्कारान्तरेभ्योऽविविक्तोऽभिन्नो विषयो यस्य तस्य भावस्तत्ता, अलङ्कारान्तरणामपि यदेवोदाहरणं श्लेषस्यापि तदेवोदाहरणमिति नेत्यर्थः। अलङ्कारान्तरविविक्तविषयत्वमुपपादयितुमुत्थापयति—**येन ध्वस्त इति**। इत्यादिना उदाहरणेन, विविक्तविषयत्वात् अलङ्कारान्तरपृथक्कृतविषयत्वात्। तथा च 'येनध्वस्त' इत्यादौ अलङ्कारान्तरा न वर्त्तन्ते श्लेषस्तु वर्त्तत एवेति अलङ्कारान्तरविविक्तविषयतायाः सम्भवात्—'अस्य चालङ्कारान्तरविविक्तविषताया असम्भवात्' इतियत्प्रतिपादितं तदापातरमणीयमित्याशयः।

ननु 'येन ध्वस्त' इत्यादौ प्राकरणिकाप्राकरणिकयोर्माधवोमाधवयोः पायादित्येकरक्षणक्रियायां कर्तृत्व-सम्बन्धेनाभिसम्बन्धात् तुल्ययोगिताऽप्यस्तीति कथमिह तस्य विविक्तविषयत्वमित्यत आह—नचेति। तस्यास्तुल्ययोगितायाः सम्बन्धेः। इदञ्चोपलक्षणं तेन दीपकस्यापि सङ्ग्रहः।

**वाच्यत्वनियमाभावादिति**। एकस्य वाच्यत्वनियमात् अन्यस्य चावाच्यत्वनियमादित्यर्थः, 'येन ध्वस्त' इत्यादौ तु अर्थद्वयस्यापि वाच्यत्वादेव न तुल्ययोगितेत्याशयः। ननु येनेत्यादौ कथं न अर्थद्वयस्यापि वाच्यत्वं पर्यायेणोभयत्राप्यभिधासम्भवादत आह—**अत्र** चेति। एकस्य माधवोमाधवान्यतरपदार्थस्येत्यर्थः। **व्यङ्ग्यत्वं** स्यादिति। एवञ्च सति श्लेष एव न स्यात्, श्लेषे हि—अर्थद्वयस्यापि वाच्यत्वनियमादितिभावः।

ननु माधवोमाधयोः द्वयोरपि तुल्यविभक्तिविषयत्वेन प्राकरणिकत्वमेवेत्यतो द्वयोर्वाच्यत्वेनापि तुल्ययोगितैव भवतु तत्रार्थद्वयस्याप्रि वाच्यत्वनियमाभावे प्रमाणाभावादत आह—किञ्चेति। एकस्यैव न त्वनेकेषाम्, धर्मस्य गुणक्रियान्यतररूपस्य। अनेकधर्मसम्बद्धताया अनेकाश्रयसंयुक्ततया। इह तु 'येन ध्वस्त' इत्यादौ तु। अनेकेषामत्र बहुवचनमविवक्षितम्, माधवोमाधवयोरित्यर्थः। पृथग् पृथग् धर्मैः शिलष्टैकशब्दस्य पृथगथः अनोमनोभवादिरूपैः सम्बतद्धयेत्यस्य प्रतीतिरितिपूर्वेण सम्बन्धः। एवञ्च 'येन ध्वस्त' इत्यादौ नीतानामित्यादौ च यत्तुल्ययोगिताप्रदर्शनं प्राक् कृतं तत्परकीयमतप्रदर्शनं कृतमिति, परमार्थतस्तु तद्द्वये श्लेष एव तुल्ययोगितारहित इत्यवगन्तव्यम्। यदि च अनेकेषामित्यत्र बहुवचनं नाविवक्षितं तदा अनेकेषां धर्मिणां पृथक् पृथक् धर्मसम्बद्धश्चेत्थम्—बालकश्रीकृष्णरूपधर्मिणः शकटत्वरूपधर्म्मेण योगाश्रितशिवरूपधर्मिणः ध्वस्तमनोभवत्वरूपधर्म्मेण विष्णुरूपधर्म्मिणश्च मोहिनीस्त्रीकरणरूपधर्म्मेण त्रिपुरविजयशिवरूपधर्म्मिणः अस्त्रीकरणरूपधर्म्मेण, इत्यादिरूपेण अनेकेषां धर्म्मिणां पृथक् पृथक् धर्मसम्बद्धतया प्रतीतेः 'येन ध्वस्त' इत्यादौ न कथञ्चारमपि तुल्ययोगिता, किन्तु श्लेषमात्रमेवेत्याशयं मर्म्मज्ञाः प्रतिपादयन्ति एवं 'स्वेच्छोपजातविषयोऽपि' इत्यादावपि स्वेच्छोपजातविषयत्वाद्यनेकेषां धर्म्मिणां भिन्न-भिन्नधर्म्मसंयुक्ततया प्रतीतेर्न दीपकम्, किन्तु श्लेषमात्रमेवेत्यपि व्यञ्जितं भवतीति वेदितव्यम्।

तथा 'सकलकल'मित्यादौ चोपमानस्य विद्यमानत्वेऽपि 'अपवादत्वेन श्लेषस्यैव प्राधान्येन व्यपदेशो भवितुं युक्त इत्युक्तं तत्रोपमैवालङ्कारो न श्लेष इत्युपपादयितुमत्थापयति—सकलकलमिति। उपमाप्रतिभा उपमाज्ञानं सैव उत्पत्तिहेतुर्ज्ञानोत्पत्तिहेतुर्यस्य स श्लेषस्तादृशो न उपमाज्ञानज्ञाप्यः श्लेषो नेत्यर्थः। उपमाश्लेषज्ञापिकैव। अत्र श्लेष एव त्वलङ्कार इति नेतिभावः एतेन शिलष्टधर्मसाधर्म्या उपमा एवालङ्कार इतिप्रतिपादितं भवति। तत्रोपमां बाधित्वा श्लेषस्यैवालङ्कारत्वेऽनिष्टोत्पत्तिं दर्शयति—**पूर्णोपमाया** इति। निर्विषयत्वापत्तेरिति। उपमानोपमेयसाधारणधर्मेवादिचतुर्णाम् उपादाने हि पूर्णोपमा भवति। अत्राऽप्युपमेयं पुरम्, उपमानं चन्द्रबिम्बम्, सकलकलरूपमुभयान्वितार्थकत्वेन साधर्म्यम्, इवशब्दोऽप्यस्तीति पूर्णोपमा, तद्वाधयित्वाऽत्र श्लेषस्यैवालङ्कारत्वे श्लेषं विना पूर्णोपमाया असम्भवात् पूर्णोपमाङ्गीकारवैयर्थ्यापत्तेरित्यर्थः। ननु श्लेषरहितगुणसाधर्म्योपमैव पूर्णोपमा, तद्वान् विषय एव पूर्णोपमाया विषयः स्यादित्याशङ्कते—कमलमिवेति। अस्तीति। अत्र शङ्कितुरयमाशयः—उपमाद्यसङ्कीर्णस्य श्लेषस्यासम्भवात् उपमादीनाञ्च श्लेषं विनापि सम्भवात् सामान्यविशेषन्यायेन श्लेषस्यैवोपमादिबाधकत्वमिति। अत्रोदाहरणेऽर्थश्लेष एवालङ्कारः मनोज्ञत्वस्योपमानोपमेययोः कमलमुखयोर्भेदेन भिन्नतया शिलष्टत्वात्, यत्र तु न साधारणधर्मोपादानं तत्र श्लेषाभावादुपमैव लङ्कार इति। इत्यादावित्यत्रादिपदेन—

**देव ! त्वमेव पातालमाशानां त्वं निबन्धनम् ।**

**त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥**

इति काव्यप्रकाशोदाहरणादेर्ग्रहणं बोध्यम् । उपमाद्यलङ्कारे प्रतिबन्धकमाह—यदीति । श्लेषो द्विविधः शब्दश्लेषोऽर्थश्लेषश्च । यदि सकलकलमित्यत्रोपमां बाधित्वा श्लेष एवालङ्कारस्तदा कमलमिव मुखमित्यादावप्युपमां बाधित्वा अर्थश्लेषालङ्कारः प्राप्नोति तत् **किमपराद्धमिति** । शब्दश्लेषेणोपमा बाधितः स्यात् अर्थश्लेषेण तु न, यतः-मनोज्ञत्वादिधर्माणामुभयत्रान्वयरूपश्लिष्टत्वात्, तस्मात्पूर्णोपमया निर्विषयत्वमेवेति भावः ।

इवशब्दसद्भावादुपमाया एव तत्रानुभविकत्वे तु सकलकलमित्यादावपि शब्दसाधर्म्यादनुभूयमानोपमैवेत्याशयेनात्र स्वमते वृद्धसंवादं रुद्रटोक्तमपि प्रमाणयति—**स्फुटमर्थेति** । एतौ उपमासमुच्चयौ स्फुटं निश्चितम् अर्थालङ्कारौ अर्थप्रयोज्यतया अर्थालङ्कारत्वेन सर्वैरपि निश्चितमवगम्यमानापीत्यर्थः, किन्तु तथापि सामान्यमुभयगतसाधारणधर्मबोधकम्, शब्दमात्रं केवलं शब्दमाश्रित्य इह शब्दालङ्कारमध्येऽपि सम्भवतः प्रसजतः ।

इतीति । रुद्रटः कव्यालङ्कारकर्त्ता तेनोक्ताऽसौ दिक् मार्गदर्शनं तया रुद्रटोक्तप्रकारेणेत्यर्थः । गुणक्रियासाम्यवत् गुणक्रिययोः साम्यस्येव, शब्दसाम्यस्यापि केवलशब्दरूपसाधारणधर्मसमानताया अपि, उपमाप्रयोजकत्वात् उपमासाधकत्वेनाङ्गीकारात् । कमलमिव' इत्यादाविव 'सकलकलम्' इत्यादावपि पूर्णोपमैव न तूपमाप्रतिभोत्पत्तिहेतुः श्लेष इति शेषः ।

पूर्वपक्षी पुनः शङ्कते—नन्विति । गुणक्रियासाम्यस्यैव न तु शब्दसाम्यस्येत्यर्थः, उपमाप्रयोजकता उपमानिर्वाहकता, युक्ता सङ्गता, तत्र हेतुमाह—तत्रेति । गुणक्रियासाम्यप्रयुक्तोपमायाम्, वास्तवत्वात् उपमानोपमेयरूपवस्तुनः समवेतत्वात् । एवञ्च साधर्म्यं नाम 'तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वम्' 'कमलमिव मुखं मनोज्ञम्' इत्यादौ कमलवृत्ति सौन्दर्यात्मकधर्मवत्वरूपं मुखे वास्तवमेव सन्तिष्ठते इत्यभिप्रायः । न तथा नोपमा प्रयोजकता युक्तेतिशेषः । तत्र शब्दसाम्यप्रयुक्तोपमायाम्, साधर्म्यस्य शब्दरूपसामान्यस्य धर्मस्य अवास्तवत्वात् उपमानोपमेयरूपवस्तुनोरसमवेत्वात् । तथाहि 'सकलकलम्' इत्यादौ तात्पर्यविषयीभूतमुक्तप्रकारं किमपि चन्द्रबिम्बसाधर्म्यं नगरे नास्त्येवेत्यभिप्रायः ।

ततश्च गुणक्रियासाम्यमात्रस्योपमाप्रयोजकतेतिस्वीकारात् शब्दसाम्यस्योपमा प्रयोजकत्वास्वीकाराच्च । अन्यथा शब्दसाम्यस्याप्युपमाप्रयोजकत्वामिति स्वीकारे, अनुपपत्तेरुपपत्तेरसम्भवात् शब्दसाम्ये सादृश्यस्यावास्तवत्वान्न शब्दसाम्ये उपमा पूर्णेतिहेतोरितिभावः । एतेन पूर्णोपमाया अर्थश्लेषापवादकत्वमुक्तम् । गुणक्रियासाम्यस्यैव न तु शब्दसाम्यस्य, पूर्णोपमाविषयता युक्तेत्यग्रिमेण सम्बन्धः । अर्थश्लेषस्य स्वविषयतायाः परित्यागे सतीत्यर्थः । तथा च सामान्यस्य विशेषातिपरकत्वनियमेन 'कमलमिव मुखं मनोज्ञम्' इत्यादिकं स्वयोग्यमपि विषयं परित्यज्य सामान्यरूपे अर्थश्लेषे 'प्रवर्त्तयन् क्रियाः साध्वीः' इत्यादौ वक्ष्यमाणोदाहरणे पूर्णोपमाया विषयाभावे विद्यमाने सति विशेषरूपा पूर्णोपमा 'कमलमिव' इत्यादौ सञ्जायते इत्यर्थः । **शब्दसाम्यस्यैवेति** पूर्णोपमाविषयता युक्तेति पूर्वेण सम्बन्धः । अविशिष्टस्य वास्तत्वरूपविशेषरहितस्य उपमालक्षणस्य काव्यप्रकाशाद्युक्तस्य । तथा च येन केनापि सम्बन्धेनोपमानोपमेयवृत्तिधर्म उपमा न तु समवायसम्बन्धेनेतिनियमः । एवं सति शब्दस्योपस्थाप्यत्वसम्बन्धेनोपमानोपमेयवृत्तित्वेनोपमाप्रयोजकत्वं निर्विवादमित्याशयः । **शब्दसाम्यस्य** व्यावृत्तेरसम्भवादितिप्रमाणाभावेन 'सकलकलम्' इत्यादिकं शब्दसाम्योदाहरणं परिहृत्य अन्यत्र नियमनासम्भवादित्यर्थः ।

ननु उक्तनियमे शब्दसाम्यस्य अवास्तत्वमेव प्रमाणमत आह—**यदि** चेति । **'विद्वन्मानसहस'** इत्यादाविति । उपमानोपमेययोरभेदप्रतिपत्तिरूपस्य साधर्म्यस्य अवास्तवत्वेऽपीतिशेषः । आधारभूते उपमेयत्वेन विषयरूपे । चित्रादौ मानसपदवाच्यादौ अत्र सरोवरपदं सरोवरत्वपरम् । राजादेः राजपदवाच्यादेः । एवं हंसपदमपि हंसत्वपरम् । तत्तदारोपरूपः श्लिष्टपरम्परितरूपकालङ्कारोऽत्र कथमित्याशङ्कार्थः । एवञ्च शब्दसाम्ये साधर्म्यस्यावास्तवाद् यथा 'सकलकलम्' इत्यादौ नोपमाप्रयोजकम्, तथा श्लिष्टपरम्परितरूपकमपि 'विद्वन्मानसहंस' इत्यादौ न स्यात् साधर्म्यवत्वेन उपमानोपमेययोरभेदज्ञानस्यैव रूपकालङ्कारत्वात् तत्साधर्म्यस्य च 'विद्वन्मानसहंस' इत्यादावपि अवास्तवत्वेन तुल्यन्यायादित्यभिप्रायः ।

ननु श्लिष्टपदनिबन्धनपरम्परितरूपकान्यथानुपपत्त्या तत्रावास्तवसाम्यस्य प्रयोजकत्वं कल्पनीयम्, न तूपमायामित्याशङ्कायामाह—किञ्चेति । वास्तवसाम्य एव गुणक्रियासाम्यरूपे वास्तवे सादृश्ये एव न तु शब्दसाम्यरूपेऽवास्तवे सादृश्ये इत्यर्थः अङ्गीकार्या स्वीकार्यत्वेनाभिमता त्वयेतिशेषः । बाध्यभूता शब्दश्लेषेण बाधनीयरूपा । उपमाया असम्भवे उपमाया बाध्यतावादिनस्तव स्ववचनविरोध इत्यर्थः तथा च 'सकलकलम्' इत्यादौ साधर्म्यस्य अवास्तवत्वेनं उपमाप्रयोजकत्वाभावात्तस्याः प्राप्तिरेव नास्ति, तथापि कथं वादिना त्वया शब्दश्लेषेण उपमाया बाध्यत्वादित्याशयेन 'श्लेषेणैव व्यपदेशो भवितुं युक्त' इत्युक्तमितिभावः ।

श्लेषस्यालङ्कारान्तरप्रतिभोत्पत्तिहेतुत्वेन तेनैव व्यपदेश' इति यदुक्तं तद्दूषयितुम् अत्रोपमायाः श्लेषप्रतिभोत्पत्तिहेतुत्वेनाङ्गित्वं श्लेषस्य तदङ्गत्वमितियुक्तयन्तरेणाऽपि द्रढयितुमाह—किञ्चेति । श्लेषस्यैव श्लिष्टपदस्यैवेत्यर्थः । साम्यनिर्वाहकता उपमाघटकसाम्यनिर्वाहकता । श्लेषबन्धतः प्रथमं 'सकलकलम्' इत्यनेकार्थकशब्दयोजनायाः पूर्वम् । एवञ्च अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववृत्तित्वस्य कारणत्वाभ्युपगमेन साम्यनिर्वाहं प्रति श्लेषस्यैव कारणत्वमित्याशयः । उपमायाः पूर्वोपमाया एव अङ्गित्वेन साध्यतया उद्देश्यत्वात् मुख्यत्वेन व्यपदेशः, अत्र पूर्णोपमालङ्कार इत्येवं नामनिर्देशः ज्यायान् श्रेयान् युक्त इत्यर्थः । तथा च श्लेषस्य प्रथमोपस्थितत्वेऽपि साधनत्वेन गौणतया तेन व्यपदेशो नोचित इति भावः । अत्रैतावत्सन्दर्भविचारनिष्कर्षस्तु वामनादिमते 'सकलकलम्' इत्यादौ अत्र श्लेषोपमालङ्कार इत्येवव्यपदेशः, काव्यप्रकाशकृद्ग्रन्थकृतोर्मते तु 'अत्रपूर्णोपमालङ्कारः' इत्येव व्यपदेश इति व्यपदेशभेद एव समायाति ।

श्लेषोपमयोरङ्गाङ्गिभावसङ्करेऽनुपपत्तिं दर्शयितुं शङ्कते—नन्विति । अङ्गाङ्गिभावश्च निर्वाहकनिर्वाह्यभावः । तस्य सङ्कर 'अविश्रान्तियुषामात्मन्यङ्गाङ्गित्वे तु सङ्करः' इत्युक्तप्रकारः । नाङ्गीक्रियते-सङ्करस्यार्थालङ्कारमात्रविषयत्वादितिशेषः । अत्र 'सकलकलम्' इत्यादौ । अर्थानुसन्धानविरहिणि अर्थावधारणापेक्षशून्ये शब्दावृत्तिमात्रसापेक्षे इत्यर्थः अर्थालङ्कारैः शून्ये इति यावत् । अनुप्रासादावेव न तु श्लेषादौ । अनुप्रासादावित्यत्रादिपदेन यमकभाषासमयोः परिग्रहः । तथानङ्गीकारात् अङ्गाङ्गिभावसङ्करानभ्युपगमात् । अर्थाननुसन्धानात् शब्दालङ्कारेष्वनुप्रासादीनां परस्परसापेक्षत्वेनाङ्गाङ्गिभावसङ्करो भवता नाङ्गीक्रियते । श्लेषोपमयोस्तु अर्थानुसन्धानात् सापेक्षत्वेन परस्परापेक्षासम्भवान्निर्वाह्यनिर्वाहकभावस्यावश्यंभावाच्च कथं वा न स्वीक्रियते इति भावः ।

एवमिति । एवमुक्तप्रकारेण उपमाभिधायकन्यायो दीपकादावपि । आदिपदेन तुल्ययोगितादीनां परिग्रहः । तथा च यथा 'सकलकलम्' इत्यादौ शब्दश्लेषस्य विद्यमानत्वेऽपि मुख्यत्वात् पूर्णोपमाया अङ्गित्वम् अस्य चाङ्गत्वेन व्यपदेशः 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायात्, तथा 'स्वेच्छोपजातविषयोऽपि' इत्यादौ शब्दश्लेषस्य विद्यमानत्वेऽपि मुख्यत्वात् दीपकस्यैवाङ्गित्वम् अस्य चाङ्गत्वेन व्यपदेशः तुल्यन्यायात् । एवं

'स्तोकेनोन्नतिमायाति' इत्यादौ च अर्थश्लेषस्य विद्यमानत्वेऽपि मुख्यत्वात् तुल्ययोगिताया अङ्गित्वेन अस्य चाङ्गत्वेन व्यपदेश इति सरलार्थः।

इत्थं सकलकलमित्यत्रोपमैव न श्लेष इति साधिते 'सत्पक्षाः' इत्यादौ केचिदुपमाध्वनिं केचिच्च श्लेषमङ्गीकुर्वन्ति तन्मतद्वयमपि दूषयितुमाह—'सत्पक्षा' इति। वेणीसंहारनाटकप्रस्तावनायां सूत्रधारस्योक्तिरियम्। सन्त उत्तमाःपक्षाः पत्राणि येषां ते तथोक्ताः, मधुरा मनोहरा गिरः शब्दा येषां ते तादृशाः, प्रसाधिता आलङ्कृता आशा दिशो यैस्ते, तथा मदेन शरत्कालकृतचित्तविशेषेण उद्धता उत्कटा आरम्भा विहारादिव्यापाराः येषां ते तादृशाश्च धार्त्तराष्ट्राः कृष्णवर्णचञ्चूचरणा हंसविशेषाः **'धार्त्तराष्ट्राः सितेतरै'** रित्यमरः, कालवशात् कालः सूत्रधारानुज्ञातसङ्गीतानुरागितया शरत्समयस्तस्य वश इच्छा तस्मात् कालेच्छामनुरूध्येत्यर्थः, ल्यब्लोपपञ्चमीयम्, मेदिन्या मानससरोवरसम्बन्धिन्याः पृथिव्याः पृष्ठे निपतन्ति 'जलधरसमये मानसं यान्ति हंसाः' इतिकविसमयात् जलधरसमयप्राप्तमानससरोवरादागत्य पृथिव्यां सञ्चरन्तीत्यर्थः। अत्र धृतराष्ट्रपुत्राणाममङ्गले वक्तुस्तात्पर्यार्थम्। तेन द्वितीयार्थस्तु—सन्तो विद्यमानाः पक्षा भीष्मद्रोणादयः सहाया येषां ते मधुरगिरः कान्तवाचः, प्रसाधिताशा वशीकृतसर्वदिशः यद्वा प्रकृष्टं साधिता आशाः स्वेच्छाविषया यैस्ते, प्रसाधिता धृता आशा जयेच्छा यैस्ते इति वा, मदेन अहङ्कारेण उद्धता विकटा आरम्भा युद्धाद्याडम्बरा येषां ते तथोक्ताः, धृतराष्ट्रस्य राज्ञोऽपत्यानि पुमांस इति धार्त्तराष्ट्रा दुर्योधनादयःकालवशात् मृत्युकालवशात् मेदिनीपृष्ठे पृथिव्यां निपतन्ति अवलुठन्ति।

अत्र केचित् 'हिममुक्तचन्द्ररुचिरः' इत्यत्रोपमाध्वनिरिव धार्त्तराष्ट्राः धृतराष्ट्रपुत्रा इव धार्त्तराष्ट्रा हंसा निपतन्तीन्त्युपमाध्वनिरित्याहुः। केचिच्च 'नीतानामाकुलीभावम्' इत्यत्र प्रकृतिश्लेष इव द्वितीयार्थस्यापि प्रकृतप्रबन्धाभिधयत्वेन प्रतिपादनात्प्रकृतिश्लेष एवेत्याहुः।

तत्र स्वाभिप्रायं दर्शयति—अत्रेति। शरद्वर्णनया शरद्वर्णनारूपेण, अभेदे तृतीया। **धार्त्तराष्ट्रादिशब्दाना**मिति। अत्र सत्पक्षादिशब्दानामितिवक्तव्येऽप्येतद्वचनमेतत्प्राधान्यं दर्शयितुम्। अत्रादिपदेन पक्षादिपदानां परिग्रहः। हंसाद्यर्थानामभिधानमभिधया प्रतिपादनं तत्र तथाह्युक्तम् 'सूत्रधारः—(सवैलक्ष्यस्मितम्) मारिष! शरत्समयवर्णनाशंसया हंसा धार्त्तराष्ट्रा व्यपदिश्यन्ते, तत्किं शान्तं पापम्' इति। अत्राप्यादिपदेन पक्षाद्यर्थानां परिग्रहः। नियमनात् संयोगो विप्रयोगाश्च' इत्याद्युक्तदिशा नियन्त्रणात्। शब्दानामनेकार्थानां सत्पक्षादिपदानामनेकार्थोपस्थापनसामर्थ्यरूपाऽभिधेति सैव मूलं यस्य स तथोक्तः अभिधामेवाश्रित्य व्यञ्जनायाः प्रवृत्तेः। वस्तुध्वनिरिति। 'पन्थिअ ण एत्थ सत्थरमत्थि' इत्यादिचतुर्थपरिच्छेदोदाहृतवत् वस्तुनः 'दुर्योधनादयो म्रियन्ते' इत्यर्थस्य ध्वनिरिति भावः।

प्रदर्शितमतद्वयं दूषयति—इह चेति। किञ्चेति चार्थः। इह 'सत्पक्षा मधुरगिर' इत्यत्र। प्रकृतः 'शान्तं पापम्' 'प्रतिहतममङ्गलम्' इत्यादिपारिपार्श्वकाद्युक्तरीत्या दुर्योधनादिपतनमभिधातुं प्रस्तुतोऽसौ प्रबन्धः 'सत्पक्षा...' इत्यादिग्रन्थ इति तस्याभिधेयस्तद्द्वाराऽभिधया वाच्यस्तस्य तथोक्तस्य। द्वितीयार्थस्य दुर्योधनादिपतनरूपस्य, सूच्यतयैव चमत्कारातिशयार्थमवश्यव्यङ्ग्यतयैव, न तु हंसोपमानत्वेनेत्येवकारार्थः। तदेवोपपादयति—उपमेय इति। न विवक्षित इति। सर्वत्रैव आवश्यकभावेनोपमेयं प्रतिपादयता कविना उपमेयस्य केवलं दृढत्वमुपपादयितुमनावश्यकभावेनैव उपमानं प्रदर्श्यते। अत्र तु चमत्कारातिशयप्रतिपादनाय द्वितीयार्थस्य दुर्योधनादिपतनरूपस्य अवश्यम्भावेनैव सूचयितुमिष्टत्वादुपमानत्वं न विवक्षितम्, तदविवक्षया च द्वयोरप्युपमानोपमेयभाव एव न विवक्षित इत्याशयः। **न वा श्लेष** इति। प्रकरणनियमेन उभयार्थस्य वाच्यत्वाभादिति भावः। **सर्वमवदात**मिति। अखिलं निर्दोषमित्यर्थः।

एवञ्च प्रकरणादिनियमाभावादर्थद्वयस्यापि वाच्यत्वे श्लेषः, यथोदाहृते—'येन ध्वस्त' इत्यादौ एकस्यार्थस्य वाच्यत्वे तदन्यस्य तु प्रतीयमानत्वम्। उभयोश्चोपमानोपमेयभावसद्भावे उपमाध्वनिः यथा 'दुर्गालङ्घित' 'सकलकलम्' इत्यादौ, तदसद्भावे, तु शब्दशक्तिमूलवस्तुध्वनिः यथा 'पथिअ ण एत्थि' 'सत्पक्षा' इत्यादाविति बोध्यम्।

## रुचिरा

तेन समासोक्त्यादौ श्लेषस्य प्रसङ्गाभावादेव बाध्यत्वाभाव इत्यनेन हेतुनेति भावः। **'येन ध्वस्तमनोभवेन' इत्यादौ** 'श्लोके' इति शेषः। प्राकरणिकयोः प्रकरणप्राप्तयोः प्रकरणप्राप्तयोः शिवहरिरूपयोरर्थयोः। 'पाया'दित्यत्रोपयोगित्वेन प्रकृतयोरित्यर्थः। **'नीतानां...इत्यादौ** 'श्लोक' इति शेषः। **अप्राकरणिकयो** पद्ममृगविशेषरूपयोरुपमानत्वेनाप्राकृतयोरर्थयोरित्यर्थः। **एकधर्माभिसम्बन्धादेको** धर्मो गुणक्रियाद्यन्यतमरूपस्तस्याभिसम्बन्धः संयोगस्तस्मात्। पूर्वत्र पालनरूपैकक्रियासम्बन्धात्, परत्र पुनराकुलीभावादिरूपैकगुणसम्बन्धादिति भावः। **तुल्ययोगितायां** 'पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्। एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता॥' इति वक्ष्यमाणलक्षणेऽलङ्कारविशेष इत्यर्थः। 'विद्यमानायामपी'त्यग्रिमेणान्वयः।

**'स्वेच्छोपजातिविषयो** स्वेच्छया निजकामनयोपजाताः सम्पन्ना विषयाः कामिजनरूपाणि लक्ष्याणि यस्य स इति, यद्वा स्वेच्छं यथेष्टमुपजाता उपपन्ना विषया लक्ष्याण्युपभोगसाधनानीति यावद् यस्य सः। **देही** शरीरी 'देहि' इति वा पदच्छेदः। दानं कुरुष्वेत्यर्थः। **इति। वक्तुम्।** न 'योग्यता'मिति शेषः। याति। मार्गणशतैर्मार्गणानां बाणानामुपायानां वा शतानीति तैः। अत्र करणे तृतीया। च तथा। दुःखं पीडाम्। **ददाति। मोहात्। जीवनं** 'कामिजनस्ये'ति 'प्रजाजनस्ये'ति वा शेषः। अपि। अकाण्डेऽकाले। समुत्क्षिपति हरति। अतः—प्रसूनविशिखः प्रसूनानि पुष्पाण्येव विशिखा बाणा यस्य सः, काम इत्यर्थः। 'तथे'ति शेषः। अल्पबुद्धिरल्पा मन्दा। बुद्धिर्यस्य सः। प्रभुः। इति-**कष्टम्।** इदमत्र निष्कृष्टम्-कामो मूढः प्रभुश्चातिकष्टप्रदः, तत्र कामोऽनङ्गत्वान्न देहवानिति वक्तुं शक्यते, अथापि-मार्गणशतैः कामिजनान् दुःखाकरोति, न केवलं दुःखाकरोति किन्तु तेषां जीवनमप्यकाण्डे एव संशयं नयति, मूढः प्रभुः सेव्यमान्योऽप्यनेकसाधनैर्दुःखाकरोति, अपराधभ्रममात्रे त्वकाले जीवनं चापहरतीति॥ अत्र निर्बोधराजसेवकस्योक्तिरियम्। अत्र वसन्ततिलकं छन्दः। तल्लक्षणं चोक्तं प्राक्॥ ८५॥'

**इत्यत्र। प्राकरणिकाप्राकरणिकयोरुपमेयोपमानत्वाभ्यां** प्रकृताप्रकृतयोः प्रभुस्मरयोरित्यर्थः। **एकधर्माभिसम्बन्धात्स्वेच्छोपजातविषयत्वादिरूपैकधर्मसम्बन्धात्। दीपके** 'अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते।' इति वक्ष्यमाणलक्षणेऽलङ्कारविशेषे। 'विद्यमानायामपी'ति वक्ष्यमाणस्य 'लिङ्गव्यत्ययेनाविद्यमानेऽपी'ति योज्यम्। **'एतत्। पुरम्। सम्प्रति** वर्त्तमानसमये। **सुधांशुबिम्बं** सुधांशोर्बिम्बमिति तथोक्तम्। **इव। सकलकलं** कलकलेन सह वर्त्तत इति सकलाः कला यत्र तदिति वा। **जातम्।** 'नक्षत्राधिकृतत्वं दधति करा यस्य सर्वत्र॥' इति शेषः। अत्रार्याछन्दः, लक्षणं चोक्तं प्राक्।' **इत्यादौ।** च पुनः। **उपमायां** 'साम्यं वाच्यमवैधर्म्यवाक्यैक्य उपमाद्वयोः।' इति वक्ष्यमाणलक्षणेऽलङ्कारविशेषे। **विद्यमानायाम्। अपि। श्लेषस्य** तदाख्यस्यालङ्कारस्येत्यर्थः। **एतद्विषयपरिहारेणैतेषां** तुल्ययोगिताऽऽद्यलङ्काराणां विषया उदाहरणानि तेषां परिहारः परित्यागस्तेन, तुल्ययोगिताद्युदाहरणानि परित्यज्येति भावः। **असम्भवात्।** एषां तुल्ययोगिताऽऽद्यलङ्काराणाम्। च पुनः। **श्लेषविषयपरिहारेण** श्लेषोदाहरणानि परित्यज्येति भावः। **अपि। स्थितेः** सम्भवात्। 'श्लेषस्तुल्ययोगितादिबाधक' इति शेषः। **एतद्विषये** एतेषां तुल्ययोगिताद्युदाहरणे इति भावः। श्लेषस्यानेकार्थवाचनस्यालङ्कारस्य। **प्राबल्येन** प्रब-

लतया प्रधानतयेति यावत्। **चमत्कारित्वप्रतीतेश्**चमत्करणशीलतायाः प्रत्ययेनेत्यर्थः। च। **श्लेषेण** श्लेषद्वारा। एव। **व्यपदेशो**ऽभिधानम्। तत्र तत्र श्लिष्टत्वमित्युक्तिः। **भवितुम्**। **शक्तः**। अन्यथा तुल्ययोगितादीनां श्लिष्टत्ववत्ताऽनङ्गीकारे इति भावः। **तद्व्यपदेशस्य** तस्य श्लेषस्य व्यपदेशस्तस्य। **सर्वथा** सर्वविधया। **अभावप्रसङ्गा**दभावस्य प्रसङ्गस्तस्मात्। च। 'एतद्विषये (तुल्ययोगिताद्युदाहरणे) **श्लषेणैव** व्यपदेशो भवितुं युक्तः' इति पूर्वेणान्वयः। अयम्भावः—समासोक्त्यादौ श्लेष एव न, तत्र द्वितीयार्थस्य व्यङ्ग्यमात्रत्वात्, रूपकादौ च श्लेषः सन्नपि रूपकादिना बाध्यते, तत्र रूपकादेरेव प्राबल्यात्, तुल्ययोगितादौ पुनः श्लेषोबाधकः, तदपेक्षयाऽस्यैव प्राबल्यात्; एवं च—'निरवकाशो विधिः सावकाशं बाधते' इति नयेन तुल्ययोगिताऽऽदिसम्भवस्थले एव श्लेषस्यापि सम्भवोऽभ्युपगन्तव्यः असौ च तत्रापवादस्वरूपेणावतिष्ठते, नच रूपकादावपि तत्रास्य तेन बाधित्वात्। इति।

एवं पूर्वपक्षं संदर्श्योत्तरपक्षं दर्शयितुमुपक्रमते-**अत्रास्मिन्** 'अस्य च...' इत्यादिना प्रदर्शिते पूर्वपक्षे। **उच्यते** सिद्धान्त। त्वेन प्रतिपाद्यत इति भावः। **परमार्थतः** सिद्धान्तविचारतः। **श्लेषस्य**। **अलङ्कारान्तराविविक्तविषयता**ऽलङ्कारान्तरेभ्योऽविविक्तोऽभिन्नो विषयो यस्य तद्भावस्तत्ता। न नैव। **तावत्** प्रथमं 'सम्भवती'ति शेषः। कुत इत्याह—**'येन वस्तमनोभवेन'इत्यादिना**। **विविक्तविषयत्वाद्**विविक्तः पृथगुदाहृतो विषयो यस्य तत्त्वात्। ननु'येन...'इत्यादौ तु प्राकरणिकयोर्माधवोमाधवयोरेकधर्माभिसम्बन्धात्तुल्ययोगिताऽप्यस्तीति कथमिह तस्य विविक्तविषयत्वमित्याशङ्क्याह-अत्र 'येन' इत्यत्र। **च न**। **तुल्ययोगिता**। यतः-**तस्यां** 'येन' इत्यत्र तथाऽभिमन्यमानायां तुल्ययोगितायामित्यर्थः। **च**। **द्वयोः**। 'प्राकरणिकाप्राकरणिकयो'रिति शेषः। **अपि**। **अर्थयोः**। **वाच्यत्वनियमाभावाद्** वाच्यत्वेन नियमस्तदभावस्तस्मात् तुल्ययोगितायां द्वावप्यर्थौ वाच्यौ भवतः, किन्तु 'येन' इत्यादौ तन्नियमाभाव ति हेतोरिति भावः। ननु 'येने'त्यादौ कथं न द्वयोरप्यर्थयोर्वाच्यत्वं, पर्य्यायेणोभयत्राप्यभिधासञ्चारात्' इत्याशङ्क्याह—अत्र 'येने'त्यादौ। हि यतः। **माधवोमाधवयोः**। अत्र निर्धारणे सप्तमी। **एकस्य** माधवोमाधवान्यतरपदार्थस्येत्यर्थः। **बाच्यत्वनियमे** वाच्यत्वस्य नियमः 'संयोगो विप्रयोगश्च' इत्याद्युक्तदिशा नियन्त्रणमिति यावत् तस्मिन्। अत्र सत्यर्थे सप्तमी। **अपरस्य** नियन्त्रितत्वविधुरस्य। **व्यङ्ग्यत्वं** व्यञ्जनयाऽभिनेयत्वम्। **स्यात्**। अयम्भावः—'येने'त्यादौ माधवोमाधवान्यतरपरार्थ एवाभिधाया विषयः, 'संयोगो विप्रयोगश्च' इत्याद्युक्तदिशैकत्रास्यानियन्त्रितत्वेऽन्यत्र विषयमभिधातुम शक्यम्, एवं च-यत्र नाभिधासञ्चारस्तत्र व्यञ्जनयोपनीयतेऽर्थ इति सिद्धान्ते माधवोमाधवयोरेकस्य वाच्यत्वेऽपरस्य व्यङ्ग्यत्वं निर्बाधम्। इति। एवमेकं दोषं प्रदर्श्यापि असन्तुष्यन् दोषान्तरं दर्शयति-**किञ्च** दोषान्तरमपीत्यर्थः। **तुल्ययोगितायाम्**। अत्र विषये सप्तमी। **एकस्य**। **एव** नत्वनेकेषाम्। **धर्मस्य** 'यथा—'स्वच्छोपजातविषयोऽपी'त्यादौ स्वेच्छोपजातविषयत्वादिरूपस्य तथा' इति शेषः। **अनेकधर्मिसम्बद्धतयाऽनेके** च ते धर्मिण इति तैस्सम्बद्धस्तद्भावस्तत्ता तया। 'यथा—'स्वेच्छोपजात...'इत्यादौ प्रसूनविशिखधर्मिणा मूढप्रभुरूपधर्मिणा च सम्बद्धतया तथे'ति शेषः। **प्रतीतिः** 'सम्भवती'ति शेषः। इह 'येन'इत्यादौ। तु। **अनेकेषां** 'माधवोमाधवादिरूपाणा'मिति शेषः। अत्र बहुवचनमविवक्षितम्। **धर्मिणाम्**। **पृथक्पृथक्**। वीप्सायां द्वित्वम्। **धर्मसम्बद्धतया** धर्मैरनोध्वंसनाभवत्वादिभिर्ध्वस्तमनोभवत्वादिभिश्चेति भावः। सम्बद्धास्तद्भावस्तत्ता तया। 'प्रतीति' रिति पूर्वेणान्वयः। 'न तस्मात्-'येन ध्वस्तम् नोभवेन' इत्यादौ तुल्ययोगितायाः सम्भवोऽपी'ति शेषः। अयम्भावः—'येन ध्वस्तमनोभवेन' इत्यादावपि 'स्वेच्छोपजातविषयोऽपि' इत्यादिवद्यद्यभविष्यदनेकैर्धर्मिभिरेकस्यैव धर्मस्य सम्बद्धस्तर्ह्यत्रापि तुल्ययोगिता समभविष्यत्। नच तथेति न किञ्चिदेतदिति। अलङ्काराणां मध्ये यो यत्प्रतिभाजन्यप्रतिभाविषयः स तद्बाध्य इति नियममनुसृत्य ननु श्लेषेणोपमा

बाध्यते इति चेन्नेत्याह **'सकलकलं...' इत्यादौ**। च। **उपमाप्रतिभोत्पत्तिहेतु**रुपमाप्रतीतिजननहेतुभूत उपमाबाधक इति यावत्। **श्लेषः**। न नैवाभ्युपगन्तव्यः। कुत इत्याह—**पूर्णोपमायाः**। **निर्विषयत्वापत्तेः**। 'सकलकलं...' इत्यादावपि यदि श्लेषः, तर्हि पूर्णोपमा कुत्र ? न च कुत्रापि, तस्मादुपमैव श्लेषस्य बाधिकेति भावः।

न 'कमलम्' **इव**। **एतत्**। 'ललनासम्बन्धी'ति शेषः। मुखम्। मनोज्ञं मनोरमम्। **'कचतितराम् विभाति।' इत्यादि** 'वाक्य'मिति शेषः। **अस्ति**। **पूर्णोपमाविषयः** पूर्णोपमाया विषयभूतम्। **इति**। **चेत्**। **न** कुत इत्याशङ्क्याह—**यदि**। **शब्दश्लेषतया** शब्दानां श्लेषो यत्र तत्तया। शब्दश्लेषवत्तयेति भावः। **'सकलकलं...' इत्यादौ**। **उपमा**। **न** 'बाध्यते' इति शेषः। **तर्हि**। **'मनोज्ञं' इत्यादौ**। 'सम्भवता' इति शेषः। अर्थश्लेषेण। मनोज्ञत्वस्योपमानोपमेयभूतयोः कमलमुखयोर्भिन्नतया शिलष्टत्वादर्थयोः श्लेषेणेति भावः। **किम्**। **अपराद्ध**। मपराधः कृतः। अयं भावः—यथा'सकलकलं...' इत्यादौ शब्दश्लेषेणोपमा न बाध्यते, तथा 'कमलमिव' इत्यादा-वर्थश्लेषेण कथं न सा बाधिष्यते, उभयत्र श्लेषस्य तुल्यबलत्वात्। इति। ननु शब्दश्लेषोऽर्थश्लेष इति शब्दार्थ-योर्भेद एव नियामकः, उपमाया अर्थालङ्कारतया शब्दश्लेषस्यैवोपमा बाधकत्वात्, अर्थश्लेषस्य चोपमाबाध्यत्वादिति चेत्रेत्याह-**'एतौ** पूर्वमभिहितलक्षणौ। **उपमासमुच्चयौ**। **स्फुटं** निश्चितम्। **अर्थालङ्कारौ**। **किन्तु**। **शब्दमात्रं** शब्द एवेति तत्तथोक्तम्। सामान्यं साधारणं धर्मम्। आश्रित्योपजीव्य। इह 'सकलकलं...' इत्यादौ। **अपि**। **सम्भवतः**।' इतीत्येवम्। **रुद्रटोक्तदिशा** रुद्रटः काव्यालङ्कारकर्त्ता तेनोक्ताऽसौ दिक् मार्गदर्शनं तया। **गुणक्रियासाम्यवद्** गुणक्रिययोः साम्यस्येव। **शब्दसाम्यस्य** केवलशब्दरूपसाधारणधर्मसमानतायाः। अपि। **उपमाप्रयोजकत्वा**दुपमासाधकत्वेन स्वीकारादित्यर्थः। 'सकलकलं...' इत्यादौ नोपमाप्रति, भोत्पत्तिहेतुः श्लेषः' इति 'पूर्वेणान्वयः। ननु (आशङ्कते)। **गुणक्रियासाम्यस्य**। एव नतु शब्दसाम्यस्य। **उपमाप्रयोजकतोपमा-निर्वाहकता**। युक्ता सङ्गता। कुत इत्याह—तत्र गुणक्रियासाम्य इत्यर्थः। **साधर्म्यस्य** समानधर्मताया उपमानोप-मेययोसमानतया प्रत्यायकस्य धर्मस्येति भावः। वास्तवत्वादुपमानोपमेयरूपवस्तुनः समवेतत्वादिति भावः। शब्दसाम्यस्य। तु पुनः। तथा यथा गुणक्रियासाम्यस्योपमाप्रयोजकता' इति पूर्वेणान्वयः। न नैव। 'युक्ते' ति शेषः। कुत इत्याशङ्क्य तत्परिपन्थिनं हेतुमाह—**साधर्म्यस्य** समानधर्मतायाः। अवास्तवत्वादुपमानोपमेयरूपव-स्तुनोरसमवेतत्वात्। अथानेवंस्वीकारे आपत्तिं दर्शयन् स्वमतं निवेदयति-ततस्तस्मात्, गुणक्रियासाम्यमात्रस्योप-माप्रयोजकतेति स्वीकारात्। च पुनः। **अन्यथा** शब्दसाम्यस्याप्युपमाप्रयोजकत्वमिति स्वीकारे। **पूर्णोपमायाः**। अनुपपत्तेरुपपत्तेरसम्भवात् शब्दसाम्ये सदृशयस्यावास्तवत्वात्र शब्दसाम्य उपमा पूर्णेति हेतोरिति भावः। **गुणक्रि-यासाम्यस्य**। एव नतु शब्दसाम्यस्य। **अर्थश्लेषविषयतापरित्यागेऽर्थश्लेषस्य** विषयस्तस्य भाव इति तस्यास्त-त्तायाः परित्यागस्तस्मिन्निति तथोक्ते। अत्र सत्यर्थे सप्तमी। **पूर्णापमाविषयता**। युक्ता। न। तु पुनः। **'सकलकलं...' इत्यादौ**। **शब्दसाम्यस्य** 'शब्दश्लेषविषयतापरित्यागे पूर्णोपमाविषयते'ति शेषः। इतीत्येवम्। चेत्। अत्रेदं हैय्यङ्गवीनम्-ननु यत्रोपमानस्योपमेयस्य च गुणैःक्रियाभिश्च सादृश्यं तत्रैवोपमा, यत्र तु न गुणैर्न वा क्रियाभिरुपमानोपमेययोः सादृश्यं, तत्र शब्दमात्रसादृश्यं नोपमोपकृतये। अथ यदि शब्दसाम्यमुपमां निर्वहतीति स्वीक्रियेत ? पूर्णोपमायाः को नाम तर्हि विषयः ? 'कमलमिव' इत्यादौ तु न शब्दसाम्यम्, अस्ति पुनः-'सकलकलं' इत्यादौ, अत्रैवं शब्दसाम्ये पूर्णोपमैव न सम्भवति, उपमानोपमेययोर्वस्तुतया सादृश्योल्लासानुपस्थानात्। तस्मात् 'सकलकलं...' इत्यादौ, श्लेषः प्रधानः सन् कथमपि सम्भवन्तीमप्युपमां बाधते 'कमलमिव' इत्यादावुपमाप्रधानभूता कथमपि सम्भवन्तं श्लेषम्। इति चेत्! को दोषः ? इति। उत्तरमाह—न तथाऽभिधेयमिति भावः। यतः—**'साधर्म्यं** समानः सदृश एको वा धर्मो गुणक्रियासमानशब्दवाच्यत्वरूपो ययोः (उपमानोपमेययोः) तौ सधर्माणौ तयोर्भावः

साधर्म्यमुपमानोपमेययोः समानधर्मेण सह सम्बन्ध इति भावः । 'समानस्य च्छन्दस्य मूर्धप्रभृत्युदर्केषु ।' ६/३/८४ इत्यत्र 'समानस्य' इति योगविभागे 'सपक्षः" इत्यादिवत्सादेशः । इति काशिकाकाराः । 'वोपसर्जनस्य ।' ६/३/८२ इति 'समानः सख्येति ससखी'ति वदस्वपदविग्रहे सहशब्दस्य समानवचनत्वात्सादेशः । इति दीक्षिताः । धर्मादनिच् केवलात् । ५/४/१२४ इत्यनिच् । **उपमा** तन्नामालङ्कारः । इतीत्येवम् । **अविशिष्टस्य** 'वास्तवं साधर्म्यमुपमा, न पुनरवास्तवम्;' इति विशिष्यानभिहितस्येति भावः । **एव उपमालक्षणस्य** । **शब्दसाम्यात्** । **व्यावृत्तेः** । **अभावात्** । अयम्भावः—गुणक्रियाभिः साम्यं (साधर्म्यम्) चेदुपमा, शब्दतश्चेन्नेति विशिष्य साधर्म्यस्योपमात्वेनास्वीकारात् शब्दसाम्यस्याप्युपमाप्रयोजकत्वेनाभ्युपगमात् । इति । तर्कवागीशा अप्याहुः—'अविशिष्टस्य वास्तवरूपविशेष-रहितस्य । उपमालक्षणस्य काव्यप्रकाशाद्युक्तस्य । तथा च-येन केनापि सम्बन्धेनोपमानोयमेयवृत्तिधर्म उपमा, नतु समवायसम्बन्धेनेति नियमः । शब्दस्योपस्थाप्यत्वसम्बन्धेनोपमानोपमेयवृत्तित्वेनोपमाप्रयोजकत्वमक्षतम् ।' इति । वास्तवमेव साधर्म्यमुपमाप्रयोजकमित्यपि नो वक्तव्यमित्याह-**यदि** । **च** । **शब्दसाम्ये** 'सती'ति यावत् । **साध-र्म्यम्** । **अवास्तवत्वात्** । **उपमाप्रयोजकम्** । **न** । **तदा** । **कथम्** । **'विद्वन्मानसहंस' इत्यादौ** । 'उपमानोपमेययोरभे-दप्रतिपत्तिरूपस्य रूपकस्य (साधर्म्यस्य) अवास्तवत्वेऽपी'ति शेषः । **आधारभूते** । **चित्तादौ** मानसपदवाच्यादौ । **सरोवराद्यारोपः** । **राजादे** राजपदवाच्यादेः । **हंसाद्यारोपरूपकप्रयोजको** हंसादेरारोप इति तं रूपयतीति हंसाद्या-रोपरूपकः, सोऽसौ प्रयोजक इति तथोक्तः । अयम्भावः—यथा-शब्दसाम्ये साधर्म्यस्यावास्तवत्वेऽपि 'विद्वन्मान-सहंस' इत्यादौ उपमानोपमेययोरभेदस्तथा स्वीक्रियतां नाम 'सकलकलं' इत्यादावपि । इयान् भेदः । तत्र साधर्म्यवाचकाभावः, अत्र पुनः-साधर्म्यवाचकमपि पदम् । अत एव तत्र उपमानेन सममुपमेयस्य साक्षाद्भेदाभावार्थ आरोपः, अत्र पुनर्न तथा, किन्तु साधर्म्यमात्रम् । यद्यपि रूपकस्थले साधर्म्यं नेति न वक्तुं शक्यते, तथाऽपि तद्वाचकपदानुपादानाद् व्यङ्ग्यम् । एवं च—'रूपकादिषु साम्यस्य व्यङ्ग्यत्वम्' इति वृत्तिकारेण वक्ष्यमाणं सङ्गच्छते । एतेन-'शब्दसाम्ये साधर्म्यस्यावास्तवत्वेन नोपमाप्रयोजकत्वम् ।' इति दत्तोत्तरम् । शब्दसाम्ये साध-र्म्यस्य वास्तवत्वानङ्गीकारे 'विद्वन्मानसहंस' इत्यादौ रूपकेऽप्युपमानोपमेयभावरूपवस्तुनः समवेतत्वं वक्तुमश-क्यत्वात् । इति । अथ वादिनः स्ववचनविरोधं दर्शयति-**किञ्च** । यदि । वास्तवसाम्ये गुणक्रियासाम्यरूपे वास्तवे सादृश्य इत्यर्थः । एव नतु शब्दसाम्यरूपेऽवास्तवे सादृश्य इत्यर्थः । उपमा । **अङ्गीकार्य्या**ऽङ्गीकार्यत्वेनाभिमतेति । भावः । **तदा** । **कथम्** । **त्वया** 'वादिसमाजेन' इति शेषः । वादिनां बहुत्वेऽपि समाजमुद्देश्यैकत्वेनाभिधानमनवद्यम् । अपि । **'सकलकलं' इत्यादौ** । **बाध्यभूता** श्लेषकर्तृकबाधविषयकभूतेति भावः । उपमा । अङ्गीक्रियते । अय-म्भावः—शब्दसाम्ये साधर्म्यं न वास्तवम्, अवास्तवत्वे, च तस्य नोपमा इत्येव यदि स्वसिद्धान्तः, तर्हि तादृशस्थले श्लेषेणोपमा बाध्यते इत्यप्यभिधानं किम्मूलम्? इति । नच 'सकलकलं' इत्यादौ **श्लेषस्य** प्राधान्यम्, इति वर्क्तुमर्हमित्याह—**किञ्च** । **अत्र** 'सकलकलं...' इत्यादौ । **श्लेषस्य** । **एव** । **साम्य निर्वाहकता** साम्यस्योपमात्वस्य निर्वाहकस्तस्य भावस्तत्ता । **न** । तु । साम्यस्योपमात्वस्य । **श्लेषनिर्वाहकता** । अत्र हेतुमाह-**श्लेषबन्धतः** । **प्रथ-मम्** । **साम्यस्य** । **असम्भवात्** । एवमुत्तरयित्वोपदिशति । इत्यस्माद्धेतोः ।**उपमायाः** । एव (नतु श्लेषस्य) **अङ्गित्वेन** प्रधानत्वेन । **व्यपदेशः** । **ज्यायान्** । **अत्र हेतुमाह**—'प्राधान्येन । अत्र करणे तृतीया । 'प्रधानेने'ति पाठे तु अभेदे इति बोध्यम् । **व्यपदेशः** । **भवन्ति** ।' **इत्युक्तनयात्** । अयम्भावः—'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबि-म्बमिव' इत्यादौ 'सकलकलम्' इत्येतावत्यंशे श्लेषः, असौ च 'सुधांशुबिम्बमिव' इत्यौपम्यं निर्वहति, न हि 'सुधांशुबिम्बमिव' इत्येतावत्यभिहिते 'पुरमेतत्' इत्यनेनौपम्यं सङ्घटते, तस्मात् तन्निर्वाहाय 'सकलकलम्' इति श्लेषः । एवं सति-श्लेषोत्तरमौपम्यम्, न त्वौपम्योत्तरं श्लेषः, इत्युपमाऽङ्गितया प्रधानभूता, श्लेषः पुनरङ्गतयाऽप्रधा-

नभूतः इत्येव वक्तुं युक्तम्। 'अलङ्कारा हि प्राधान्येन चमत्काराधायका भवन्तो' ति च नयः। इति। **ननु** (आशङ्क्यते)। **शब्दालङ्कारविषये** शब्दालङ्काराणां मध्ये। **अङ्गाङ्गिभावसङ्करः**। न। अङ्गीक्रियते 'सङ्करस्यार्थालङ्कारमात्रविषयत्वात्' इति शेषः। **तत्तर्हि**। **कथम्**। अत्र 'सकलकलं' इत्यादौ। **श्लेषोपमयोः**। **अङ्गाङ्गिभावस्तद्रूपः**। सङ्करः। **इति चेत्**। न कुत इत्याह— **अर्थानुसन्धान**विरहिरर्ण्यर्थालङ्कारैः शून्ये। **अनुप्रासादौ**। एव नतु श्लेषादौ। तथाऽङ्गाङ्गित्वेन सङ्कर इति। **अनङ्गीकारात्**। उक्तमर्थमन्यत्राप्यतिदिशति— **एवम्**। **दीपकादौ** दीपकतुल्ययोगितादौ। **अपि**। **ज्ञेयम्**। 'प्राधान्येन व्यपदेश' इति नयानुसरणमिति शेषः। प्राधान्येन व्यपदेश इति नयः सति सन्देहे विविच्योपासनीय इति ध्वनयति 'सत्पक्षाः सन्त उत्तमाः पक्षाः पत्राणि तत्सदृशाः सहायाश्च येषां ते इति तथोक्ताः। **मधुरगिरो** मधुरा गीर्वाक् येषां यस्य वेति ते तस्येति वा। यद्वा द्वितीये पक्षे— सत्पक्षाश्च तेऽमधुरगिर इति सत्पक्षामधुरगिरः। **प्रसाधिताशाः** प्रसाधिता अलङ्कृताः, पूर्णाः कृता इति वाऽऽशा दिशो मनोरथा वा यैरिति ते तथोक्ताः। **मदोद्धतारम्भा** मदेन शरत्कालकृतेन चित्तविकारेण, राज्यसम्पदादिकृतेन गर्वेण वाऽऽरम्भा व्यापारा येषां ते। **धार्त्तराष्ट्रा** हंसविशेषा, धृतराष्ट्रस्यात्मजा दुर्योधनादयो वा। 'धार्त्तराष्ट्राः सितेतरैः।' इत्यमरः। धृतराष्ट्रस्यापत्यानि पुमांस इति धार्त्तराष्ट्राः। 'तस्यापत्यम्।' ४/१/९२ इत्यण्। **कालवशात्** कालः सूत्रधारानुज्ञातसङ्गीतानुरागितया शरत्समयः, भविष्यनाटकीयवस्तुसूचनाऽनुरोधितया मृत्युसमयो वा तस्य वश इच्छा तस्मात्। कालेच्छामनुरुध्येत्यर्थः। 'वशः कान्तौ' इत्यमरः। 'ल्यब्लोपे। कर्मण्यधिकरणे चे' ति पञ्चमी। **मेदिनीपृष्ठे** मेदिन्या मानससरोवरसम्बन्धिन्याः सङ्ग्रामसम्बन्धिन्या वा पृथिव्याः पृष्ठं तत्र। **निपतन्ति**। 'शरदि मानसं हंसा प्रयान्ती'ति कविसमयात्, 'कालेन कवलिता दुर्योदनादयो भवन्ती' ति द्योतनीयत्वाच्च। वेणीसंहारे सूत्रधारस्योक्तिरियम्। अत्रार्याछन्दः, तल्लक्षणं चोक्तम प्राक् ॥ ८६ ॥'

**इत्यत्र**। **शरद्वर्णनया** शरदो वर्णनेन (अभेदे तृतीया) **प्रकरणेनाधार्त्तराष्ट्रादिशब्दानम्**। अत्र 'सत्पक्षादिशब्दाना'मिति वक्तव्येऽप्येतद्वचनमेतत्प्राधान्यं द्योतुयितुम्। **हंसाद्यर्थाभिधाने** हंसाद्यार्थानामभिधानभिधया प्रतिपादनं तत्र। तथा ह्युक्तम्-'सूत्रधारः—(सवैलक्ष्यस्मितम्)मारिष! शरत्समयवर्णनाशंसया हंसा धार्त्तराष्ट्रा व्यपदिश्यन्ते, तत् किं शान्तं पापम्.. इति। **नियमनात्** 'संयोगो..अर्थः प्रकरणं..शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।" इत्युक्तदिशा। नियतत्वात्। **दुर्योधनादिरूपः**। अर्थः। 'व्यज्यमानत्वा'दिति शेषः। **शब्दशक्तिमूलः** शब्दानामानेकार्थानां सत्पक्षादिपदानां शक्तिरनेकार्थोपस्थापनसामर्थ्यरूपाऽभिधेति सैव मूलं (तामेवाश्रित्यात्र व्यञ्जनायाः प्रवृत्ते यस्य सः। वस्तुध्वनिर्वस्तुनः 'दुर्योधनादयो म्रियन्ते' इत्यर्थस्य ध्वनिः। नन्विह न कथं 'हंसा इव कालवशा दुर्योधनादयो निपतन्ती'त्युपम ध्वनिः, तदुभयार्थस्य वा शक्तिमूलत्वाच्छलेष इत्याशङ्क्याह-इह 'सत्पक्षा मधुरगिरः' इत्यत्र। **च**। **प्रकृतप्रबन्धाभिधेयस्य** प्रकृतः 'शान्तं पापं, प्रतिहतममङ्गलम्' इत्यादिपारिपार्श्वकाद्युक्तदिशा दुर्योधनादिपतनं प्रतिपादयितुमारब्धोऽसौ प्रबन्धः 'सत्पक्षा...' इत्यादिग्रन्थ इति तस्याभिधेयस्त-द्द्वाराऽभिधया प्रतिपाद्य इति तस्य, तत्स्वरूपस्येति भावः। **द्वितीयार्थस्य** द्वितीयः शरदाशंसनरूपप्रकरणवशात्प्रथमवतिष्ठमानस्य हंसाद्यर्थस्यापेक्षया पश्चादवतिष्ठमानोऽसावर्थं इति तस्य तथोक्तस्य। **सूच्यतया** सूचितुं योग्य इति सूच्यस्तस्य भावस्तत्ता तया। 'अल्पमात्रं समुद्दिष्टं बहुधा यत्प्रसर्पति। फलस्य प्रथमो हेतुर्बीजं...' इत्याद्युक्तदिशाऽस्पष्टं प्रतिपाद्यत्वेनात एवाप्रधानतयेति भावः। एव अन्यथा सूत्रधारः—(मारिष! शरद्वर्णनाशंसया हंसा धार्त्तराष्ट्रा व्यपदिश्यन्ते तत् किं शान्तं पापं, प्रतिहतममङ्गलमित्यादि) वाक्यं विरुद्धं स्यादित्यवधारणम्। **विवक्षितत्वात्**। **उपमानोपमेयभावः**। **विवक्षितः**। न 'सम्भवती' ति शेषः। **इत्यस्मात् उपमाध्वनिः**। **न श्लेषः**। वा। न इतीत्येवम्। **सर्वम्**। अवदातं निर्दोषम्। 'दुर्गालङ्कृतविग्रहो...' इत्यादिवदुपमाया ध्वनिः।

अत्राहुर्गङ्गाधरकाराः—'अयं चालङ्कारः प्रायेणालङ्कारान्तरस्य विषयमभिनिविशते, तत्र किमस्य बाधकत्वं स्यादाहोस्वित्सङ्कीर्णत्वम्, उताहो बाध्यत्वम्; इति । अत्राहुरुद्रटाचार्याः—'येन नाप्राप्ते य आरभ्यते स तस्य बाधक' इति न्यायेनालङ्कारान्तरविषय एवायमारभ्यमाणोऽलङ्कारान्तरं बाधते न चास्य विविक्तः कश्चिदस्ति विषयो यत्रसावकाशोऽयं नान्यं बाधेत । तथा हि—अप्रकृतमात्रयोः प्रकृतमात्रयोर्वातुल्ययौगितैवः जागर्त्ति, प्रकृताप्रकृतयोस्तु दीपकम्, तदनुमोदिता उपमादयश्च । न च 'देव ! त्वमेव पाता(ऽ)लमाशानां त्वं निबन्धनम् । त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥' इत्यादिकाव्यप्रकाशोक्तौ विविक्तोऽस्य विषय इति वाच्यम्, रूपकस्यैवात्र स्फुटत्वात् । श्लेषस्थापितपातालाद्यर्थस्याभेदारोपमन्तरेण लोकत्रयात्मकत्वस्य दुरुपपादत्वात् । कथं तर्हि 'नदीनां सम्पदं बिभ्रद्राजाऽयं सागरो यथा ।' इत्यादावुपमायाः प्रत्ययः, कथं वा तत्रव यथा शब्दस्थाने किमुशब्ददाने उत्प्रेक्षायाः, अपर इति कृते च रूपकस्य; इति चेत् । न । अत्र ह्युपमादीनां प्रतिभानमात्रं न तु वास्तवी स्थितिः । नहि श्वैत्येन शुक्तौ रजतत्वं प्रतीयमानं वस्तुतोऽस्ति, तस्मादुपमाऽऽदिप्रतिभोत्पत्तिहेतुः श्लेष एव स्वविषये सर्वत्रालङ्कारः ।' इति । एतच्चापरे न क्षमन्ते, तथाहि—यत्तावदुच्यते-'येन नाप्राप्ते...' इत्यादि तत्र प्रागुदाहृते 'पद्माख्यं तत् किमपि ललितं...' इत्यस्मत्पद्ये, 'सर्वदोमाधवः—पातु योगङ्गं समदीधरत् ।' इत्यादिपरकीयपद्ये च श्लेषातिरिक्तः कोऽलङ्कारः ? तुल्ययोगिता तु सादृश्यप्रतीतिनियता कथमत्र शक्यते वक्तुम् । नहि-लक्ष्मीकमलयोर्हरिहरयोर्वा प्रकृते सादृश्यं प्रतिविपादयिषितम् । नापि चात्रैकश्रुत्याऽर्थद्वयोपपादनं विनाऽन्यत् किञ्चिच्चमत्कारजनकं, येनालङ्कारान्तरमभ्युपगच्छेम । एकश्रुत्याऽर्थद्वयोपादानं तु श्लेष एव । एवं च सावकाशत्वाच्छ्लेषस्यालङ्कारान्तरापवादकत्वं न युक्तम् । अत एवोपमाऽऽदीनां प्रतिभानमात्रमिति यदुक्तं, तदपि न सङ्गतम् । गुणक्रियाऽऽदेरिव शब्दमात्रस्यापि समानधर्मत्वेनोपमायां तावद्बाधकाभावात् । एवमेवालङ्कारान्तरस्यापि श्लेषविषये पारमार्थिक्येव सत्ता, न प्रातिभासिकी, प्रत्युत श्लेषस्यैव प्रतिभानमात्रमिति वक्तुं युक्तम् । पूर्णोपमाया विषयस्य सर्वस्यापि त्रिविधश्लेषेणाक्रान्तत्वान्निरवकाशतयाऽस्य सावकाशस्य स्वविषये बाधौचित्यात् । तथा—'समरार्चितोऽप्यमरार्चितः' इत्यादौ श्लेषस्य तैमरिकचन्द्रद्वयवत्प्रतिभानमात्रमेव, न त्वलङ्कारत्वम्, तज्जीवातोर्द्वितीयार्थस्याप्रतिष्ठानात् । विरोधस्य त्वाभासरूपस्याप्यलङ्कारत्वं नतु श्लेषस्येति स्फुटमेव । तस्मादेवमादौ श्लेषप्रतिभयोत्पाद्यो विरोध एवालङ्कारः, नतु विरोधप्रतिभयोत्पाद्यः श्लेषः । किञ्च-प्रत्येकं तत्तदूपपुरस्कारेण कस्याप्यलङ्कारस्य नास्ति श्लेषविषये नाप्राप्तत्वमलङ्कारान्तरपुरस्कारेणेति चेत्, एवं तर्हि बाध्यसामान्यचिन्तया स्वविषये प्राप्तस्य सर्वस्यापि बाधापत्तौ श्लिष्टपरम्परितरूपकस्य श्लिष्टसमासोक्तेश्चोच्छेद एव स्यात् । तस्माच्छलेषस्य नापवादकत्वं, सङ्कीर्णत्वं तु स्यात् ।' इति । अन्ये तु-'अलङ्कारा हि प्राधान्येन चमत्काराधायकाः स्वांस्वामाख्यां लभन्ते, त एव परोपकारकतया वर्तमानास्तां त्यजन्ति । यथा—'रराज भूमौ वदनं मृगाक्ष्या नभोविभागे हरिणाङ्कबिम्बम् ।' इत्यत्र प्रकृताप्रकृतात्मकानामेकधर्मसम्बन्धो दीपकाख्यां भजते, त्यजति च—'राजते वदनं तन्व्या नभसीव निशाकरः ।' इत्यत्र । अत एवोच्यते—'प्रा (प्र) धान्ये (ने) न व्यपदेशा भवन्ति'इति । एवं चालङ्कारान्तरोपस्कारकतया स्थितः श्लेषः कथङ्कारं स्वगृहस्थ इव श्लेषालङ्कारव्यपदेशं वोढुमीष्टामिति बाध्यप्राय एव ।' इत्यप्याहुः ।' इति । प्रदीपकारा अप्याहुः—'ननु श्लेषस्तावद् द्विधा सभङ्गपदोऽभङ्गपदश्च । तत्रादयः शब्दश्लेषः स्वरितादिगुणभेदाद्भिन्नप्रयत्नोच्चार्य्यतया भिन्नानां शब्दानां बन्धे 'जतुकाष्ठ' न्यायाच्छब्दयोरेव श्लिष्टत्वात् । द्वितीयस्त्वर्थश्लेषः स्वरितादिगुणाभेदादेकप्रयत्नोच्चार्यतया शब्दभेदाभावा 'देकवृन्तगतफलद्वय' न्यायेनार्थयोरेव श्लिष्टत्वात् । यद्यपि-'अर्थभेदेन शब्दभेद' इति नयेन द्वितीयेऽपि शब्दस्य भेदः, तथाऽप्युपपत्त्या शब्दभेदप्रतीतावप्येकताऽध्यवसायान्नास्ति शब्देभेदः, स एव निरवकाशतया सर्वालङ्कारबाधक इत्यलङ्कारान्तराणां प्रतिभामात्रमुत्पादयति, नतु

तत्पर्याप्तिम्। यथा—'स्वयं च पल्लवाताम्रभास्वतकरविराजिनी। प्रभातसन्ध्येवास्वापफललुब्धे हितप्रदा।' अत्र पूर्वार्धेऽभङ्गपदः, द्वितीयार्धे सभङ्गपदः। द्वयमप्युपमाप्रतिभोत्पत्तिहेतुः। साधर्म्याभावेन तस्याः प्ररोहाभावात्। 'एक-प्रयत्नोच्चार्य्याणां तच्छायां चैव विभ्रमाम्। स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्ट इहोच्यते॥' 'अलङ्कारान्तरगतां प्रतिभां जनयेत्पदैः। द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम्॥' इति। द्विविधोऽलङ्कारसर्वस्वकारादिभिरर्थाश्रितत्वेना-र्थालङ्कारमध्ये पठितस्तत् कथं शब्दालङ्कारमध्ये पठ्यते। इति। उच्यते—दोषगुणालङ्काराणां शब्दार्थगतत्वेन यो विभागः सोऽन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते।_यच्चोक्तम्—'स्वयं च...' इत्यादावुदाहृते उपमाप्रतिभोत्पत्ति-हेतुःश्लेषः। इति, तदप्ययुक्तम्। प्रत्युतोपमैवात्र श्लेषप्रतिभोत्पत्तिहेतुः। तद्बाधकत्वात्। तथा हि-साधर्म्याभावे-नोपमायाः प्ररोहाभावादेव तावन्नोपमा बाध्या। यतः—'कमलमिव मुखं मनोज्ञमेतत् कचतितराम्' इत्यादौ मनोज्ञत्वस्य गुणस्य दीप्तिरूपायाः क्रियाया वा उपयोर्वा साम्यं यथोपमा निर्वहति तथा 'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव।' इत्यादावपि शब्दमात्रसाम्येनापि सा युक्तैव, साधर्म्यमात्रस्योपमाप्रयोगकत्वात्, तस्य चार्थरूपस्येव शब्दरूपस्याविशेषेण सम्भवात्। यथा ह्युक्तं रुद्रटेन—'स्फुटमर्थालङ्कारावुपमासमुच्चयौ' इति। अथात्र साधर्म्यसम्भवेऽपि नोपमा। साधारणधर्मप्रयोगशून्यो हि 'कमलमिव मुखम्।' इत्येतावन्मात्रादिरुपमावि-षयः। अत्र तु शब्दरूपसाधारणंधर्मप्रयोग एवेति वैजात्याद्वक्तव्यं, तदपि न युक्तम्। पूर्णोपमाया निर्विषयत्वापत्तेः। साधारणधर्मप्रयोगे उपमात्वाभावात् तदप्रयोगे त्वपूर्णत्वात्। तदेतदुक्तम्।

'न च कमलमिव मुखम्' इत्यादि। साधारणधर्मप्रयोगशून्य उपमाविषय इति वक्तुं युक्तम्। पूर्णोपमाया निर्विषयत्वापत्तेः। इति। केचित्पुनस्तदन्यथा व्याचक्षते—तथा हि 'यत्र साधारणधर्मोद्धारेऽप्युपमा सम्भवति प्रसिद्धत्वात्स उपमाविषयो न चात्र तथेत्याक्षेपार्थः। अयं पूर्णोपमाविषयो न स्यात्। इति। यद्वा-श्लेषस्योपमाबा-धकत्वायैतदङ्गीक्रियते तथा श्लेषस्योपमाबाधकत्वे पूर्णोपमा निर्विषयैव स्यात्। 'कमलमिव मुखं मनोज्ञमेतत्' इत्यत्र मनोज्ञत्वस्य-सम्बन्धिभेदान्नानात्वेनार्थश्लेषस्वीकारात्। इति समाधानार्थः। ननु एवं श्लेषस्य निर्विषयत्वम्, असङ्कीर्णस्थलाभावात् इति चेत्, न 'देव! त्वमेव पातालमाशानां त्वं निबन्धनम्। त्वं चामरमरुद्भूभिरेको लोक-त्रयायसे॥' इत्यादावलङ्कारान्तरासम्भवात्। तथा हि—न तावदत्रोपमा। इवाद्यप्रयोगात्। नापि तुल्ययोगितादी-पके। नापि पातालादिना रूपकं वाच्यम्। व्यङ्ग्यस्य तस्य सम्भवेऽपि वाच्यापेक्षयैवासङ्करगवेषणम्। इति। किञ्च—'येन ध्वस्तमनोभवेन' इत्यादौ नास्त्येव किञ्चिदलङ्कारान्तरामित्युपमाश्लेषयोर्विभक्तोदाहरणसम्भवाद्बा-ध्यबाधकभावानुपगमे द्वयोर्योगे सङ्कर एवेतिं वरमभ्युपगन्तव्यम्। उत्पत्तिपर्य्यालोचने तु उपमाया एवायं विषयो न श्लेषस्य। इत्युक्तमेव। उत्पत्तिश्चेयम्—'व्यपदेशाः प्राधान्येन सम्भवन्ती' ति वस्तुस्थितिः। प्रधानं चात्रोपमा, श्लेषस्य तन्निर्वाहकस्य तदङ्गत्वात्। नहि श्लेषं विना समानशब्दवाच्यत्वलक्षणं साधर्म्यमुपमानिर्वाहकं निर्वहति। उपमा तु न श्लेषाङ्गम्। श्लेषप्रतीतिं विना तत्प्रतीत्यभावेन तदनुपकारकत्वात्। इति। यदि चोपमाव्यवहारवारणाय साधारणधर्मप्रयोगशून्य उपमाविषय इति स्वीकर्त्तव्यम्; तदा पूर्णोपमाया निर्विषयत्वमेव स्यात्। इति। तदेतदु-क्तम्—'अन्यथा पूर्णोपमाया निर्विषयत्वापत्तेः।' इति न केवलमुपमाया एव श्लेषबाधकत्वं, किन्त्वलङ्कारान्तर-स्यापि, 'अविन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका।' इत्यत्र विरोधालङ्कारस्य। न ह्यत्र अर्थद्वयप्रतिपादकशब्दस्य श्लेषः। बिन्दुसाहित्यरूपस्य द्वितीयार्थस्य प्रतिभामात्रविषयस्य प्ररोहाभावात्। नन्वप्ररूढोऽपि श्लेषालङ्कार आ-स्तां, विरोधाभासवत्। इति चेत्? भवेदेवम्—यदि विरोधाभावस्य विरोधित्वमिव श्लेषाभासस्य श्लेषत्वमनुमतं स्यात्। नचैवम्। तस्मादेवंविधे विषये श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरं प्राधान्यात्। तथा च—'सद्वंश-मुक्तामणिः' इत्यत्र परम्परितश्लिष्टरूपके रूपकं प्रधानम्। वंशशब्दे श्लेषस्तु वेणुकुलयो रूपकोपयोगितया

तदङ्गमिति श्लेषप्रतिभोत्पत्तिहेतू रूपकमेव व्यपदेश्यम्। 'नाल्पः कविरिव स्वल्पश्लेषो देव महान् भवान।' इत्यत्र श्लेषव्यतिरेके व्यतिरेके एव प्रधानं श्लेषस्तु तन्निर्वाहक इति तत्प्रति भोत्पत्तिहेतुर्व्यतिरेकः। 'अनुरागवती सन्ध्या दिवसस्तत् पुरः सरः। अहो दैवगतिश्चित्रा तथाऽपि न समागमः॥' इत्यत्र समासोक्तिरलङ्कारः। 'अभिधाया नियमेन श्लेषस्यासम्भवात्। 'आदाय चापमचलं कृत्वा हीनं गुणे विषमदृष्टिः। यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षी-न्नमस्तस्मै॥' इत्यत्र विरोध एवालङ्कारः, श्लेषस्तु तदङ्गमात्रम्; अप्ररोहात्। 'कवीनां सन्तापो भ्रमणमभितो दुर्गति-रिति त्रयाणां पञ्चत्वं रचयसि न तच्चित्रमधिकम्। चतुर्णां वेदानां व्यरचि नवता वीर! भवता द्विषत्सेनालीनामयुतमपि लक्षं त्वमकृथाः॥' अत्र मंदीये काव्यलिङ्गस्य श्लेषोऽङ्गमिति श्लेषप्रतिभोत्पत्तिहेतुः काव्यलिङ्गम्। तस्मादलङ्कारान्तरप्रतिभोत्पत्तिहेतुः श्लेष इति रिक्तं वचः।' इति।

**पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते।**

**आदिशब्दात्खड्ग-मुरज-चक्र-गोमूत्रिकादयः।**

अस्य च तथाविधलिपिसंनिवेशविशेषवशेन चमत्कारविधायिनामपि वर्णानां तथाविधश्रोत्राकाशसमवायविशेषवशेन चमत्कारविधायिभिर्वर्णैरभेदेनोपचाराच्छब्दालंकारत्वम्। तत्र पद्मबन्धो यथा मम—

**'मारमासुषमा चारुरुचा मारवधूत्तमा।**

**मात्तधूर्ततमावासा सा वामा मेऽस्तु मा रमा॥'**

एषोऽष्टदलपद्मबन्धो दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिषटवर्णः, किंतु विदिग्दलेष्वन्यथा कर्णिकाक्षरं तु श्लिष्टमेव। एवं खड्गबन्धादिकमप्यूह्यम्। काव्यान्तर्गडुभूततया तु नेह प्रपञ्च्यते।

**रसस्य परिपन्थित्वान्नालंकारः प्रहेलिका॥ १३॥**

---

## विवृत्ति

चित्राख्यमलंकारमनेकविधमाह—**पद्मादीति**। पद्माद्याकारवर्णस्तोमजनकत्व इत्यर्थः॥ **गोमूत्रिकादय इति**। आदिपदेन काकपद्यादयो ग्राह्याः। ननु श्रोत्रसंबन्धानां जन्यवर्णानां पद्माद्याकारजनकत्वरूपचित्रालंकाराभावात्कथमस्य शब्दालंकारत्वमतस्तदुपपादयति—**अस्य चेति**। चित्रालंकारस्येत्यर्थः। तथाविधस्य पद्मादिसदृशस्य लिपीनां वर्णसंस्थानानां संनिवेशविशेषस्य रचनाविशेषस्य वशेन चमत्कारविधायिनां वक्तृविस्मयकारिणां वर्णानां तथाविधः श्रोत्राकाशसमवायविशेषः कर्णरन्ध्रसंबन्धविशेषः तद्वशेन चमत्कारविधायिभिः श्रोतृविस्मयकारिभिः। एवं च पद्माद्याकारलिपिसंनिवेशविशेषमालोक्य वक्रा ये वर्णा उच्चार्यन्ते तैरेव श्रोतृणां श्रोत्रे पद्माद्याकारवर्णस्तोमो जन्यते। कार्यकारणयोर्भेदोपचारेण जन्यवर्णानामपि चित्रालंकारसंभव इति भावः॥ **मारमेति**। सा वामा मनोरमा स्त्री मे ममास्तु। रमा मास्तु। कीदृशी। मारमासुषमा मारस्य कामस्य मा लक्ष्मीः सेव सुषमा परमा शोभा यस्याः सा। चारुरुचा मनोरमकान्त्या मारवध्वा रतेरप्युत्तमा। मात्तधूर्ततमावासा अगृहीतधूर्ततमगृहा॥ **श्लिष्टवर्णः** अनुलोमप्रतिलोमपाठेनैकरूपाक्षरः। अन्यथा क्वचित्प्रवेशः क्वचिन्निर्गम इत्यपि श्लिष्टवर्ण एव। अत्राष्टसु दिक्षु वितताष्टदलं पद्मं लेख्यम् तत्कर्णिकायां श्लोकस्य प्रथममक्षरं लेख्यम्, ततः पूर्वादिदलेषु प्रदक्षिणक्रमेण द्वौ द्वौ वर्णौ लेख्यौ। एवं सप्तदशभिरक्षरैः पद्मं भवति। तत्र कर्णिकास्थवर्णोपक्रमेण प्राच्यदले निर्गमेनाग्नेयदले प्रवेशेन दक्षिणदले निर्गमप्रवेशाभ्यां नैर्ऋतदले निर्गमेन पश्चिमदले निर्गमप्रवेशाभ्यां वायव्यदले प्रवेशेन उत्तरदले निर्गमप्रवेशाभ्यां ईशानदले निर्गमेन प्राच्यदले पश्चात्प्रवेशेन श्लोकः पाठ्यः। तदुक्तम्—'वर्णद्वयेन चैकैकं दलभूतदलाष्टकम्। सर्वोत्तराद्यवर्णेन पद्मं स्यात्कृतकर्णिकम्॥' इति। खड्गबन्धो यथा—'माराारिशक्ररामेभमुखैरासाररंहसा। सारारब्धस्तवा, नित्यं तदार्तिहरणक्षमा॥ माता नतानां, संघट्टः श्रियां, बाधितसंभ्रमा। मान्याथ, सीमा रामाणां, शं मे दिश्यादुमाद्रिजा॥' अस्यार्थः—उमा अद्रिजा मे मह्यं शं कल्याणं दिश्यात् दद्यात्। कीदृशी। मारारिः शिवश्च, शक्रश्च, रामश्च इभमुखो गणेशश्च, तैरासाररंहसा वृष्टिकणरीत्या नित्यमारब्धस्तवा। पुनः कीदृशी। सारा श्रेष्ठा। तेषां स्तुवतां शिवादीनां आर्तेः पीडायाः हरणे क्षमा। नतानां

प्रणतानां माता मातेव पालयित्री। श्रियां संपदां संघट्टः संमेलनस्थानम्। बाधितसंभ्रमा निरूद्वेगा, सम्यग्भ्रमरहिता। रामाणां नारीणां पराकाष्ठा। 'अद्रिजा' इत्यत्र 'आदिजा' इति पाठे आद्येत्यर्थः॥ अनेन श्लोकद्वयेन खड्गबन्धः प्रस्तीर्यते। तत्र मुष्टेरुपर्यधः शाखाद्वयम्। उपरि शाखाचतुष्पथे प्राथमिक 'मा' कारं विन्यस्य तिर्यगधःक्रमेण 'रारि—' इत्यादि 'ह' कारान्तांश्चतुर्दश वर्णान्नयसेदित्येका धारा। ततः खड्गशिखायां 'सा'इति श्लिष्टम्। ततस्तिर्यगूर्ध्वक्रमेण 'रारब्ध—' इत्यादिवर्णचतुर्दशकं विन्यस्यापरां धारां कुर्यात्। इत्येषा पट्टिका। 'मा' कारः पूर्व 'मा'कारं प्रविष्टः। एवमग्रेऽपि तत्रैव प्रविष्टं कल्पयित्वा दक्षिणशाखायां 'ता' इत्यादिवर्णसप्तकं विन्यस्य वामशाखायां तिर्यग्विलोमेन 'श्रि' कारादिवर्णसप्तकं लिखेत्। 'मा' कारचतुष्पथे प्राथमिक 'मा' कारं प्रविष्टः। ततस्तमेव 'मा' कारमारभ्याधोऽधो 'न्याथसी' इति त्रयो वर्णा मुष्टौ लेख्याः। ततोऽधश्चतुष्पथमध्ये तदन्तिम-'मा' कारं विन्यस्य तद्दक्षिणशाखायां 'रामाणां शं' इति चतुरो वर्णान्विन्यस्येत्। ततो वामशाखायां विलोमेन 'मे दिश्यादु' इति चतुरो वर्णांल्लिखेत्। 'मा' कारोऽधश्चतुष्पथस्थ 'मा' कारं प्रविष्टः।ततो मुष्टेरधः त्सरुके 'द्रिजा' इति 'दिजा' इति वा वर्णद्वयं लेख्यमिति खड्गनिष्पत्तिः॥ मुरजबन्धो यथा—'सा सेनागमनारम्भे रसेनासीदनारता। तारनादजना मत्तधीरनागमनामया॥' अत्र पङ्क्तिचतुष्टयेन लिखितस्य पादचतुष्टयस्याधःक्रमेण यथाक्रमं प्रथमद्वितीयतृतीयचतुर्थानूर्ध्वक्रमेण पञ्चमषष्ठसप्तमाष्टमान्वर्णान्गृहीत्वा प्रथमः पादः। द्वितीयात्प्रथमं प्रथमाद्वितीयतृतीयौ द्वितीयाच्चतुर्थपञ्चमौ प्रथमात्षष्ठसप्तमौ द्वितीयादष्टमं गृहीत्वा द्वितीयः पादः। तृतीयात्प्रथमं तुर्याद् द्वितीयतृतीयौ तृतीयात्तुर्यपञ्चमौ तुर्यात्षष्ठसप्तमौ तृतीयादष्टमं गृहीत्वा तृतीयः पादः। पादचतुष्टयस्योर्ध्वक्रमेण प्रथमद्वितीयतृतीयचतुर्थानधःक्रमेण पञ्चमषष्ठसप्तमाष्टमान्गृहीत्वा चतुर्थः पादः पाठ्य एवं मुरजसिद्धिः॥ चक्रबन्धो विदग्धमुखमण्डने, गोमूत्रिकाबन्धो दण्डिनि ज्ञेयः। एवमन्येऽपि मुसल-शूल-शक्ति-हल-चतुरङ्ग-पीठ-रथ-तुरग-गज-पाठ्यादयो बोध्याः। एवं वर्णानामनुलोमप्रतिलोमपाठादिना एकरूपपदोच्चयहेतुत्वेऽपि सर्वतोभद्रादिनामकश्चित्रालंकारो वेदितव्यः॥

## विवृतिपूर्तिः

**काव्यान्तरिति**। गडुर्ग्रन्थिरिति सांप्रदायिकाः। यथेक्षुचर्वणदशायां ग्रन्थी रसव्यवधायकस्तथैव काव्ये चित्रादीति परमार्थः॥

## विज्ञप्रिया

चित्रालङ्कारमाह—**पद्येति**। अत्र वर्णस्मारकलिपीनां सन्निवेशस्यैव पद्माद्याकारकत्वाल्लिपीनां चाऽशब्दत्वात् शब्दालङ्कारत्वमस्याऽनुपपन्नमित्याशङ्क्य समाधत्ते—**तथाविधश्रोत्रेति**। तथाविधलिपिस्मार्य्यवर्णस्य यः श्रोत्ररूपे आकाशे समवायविशेषः तद्वशेन चमत्काराधायिभिर्वर्णैः सह लिपेः अभेदोपचारादित्यर्थः। तादृशसमवायस्य वर्णानुभवजनकत्वं तज्जनितसंस्कारेण लिपितो वर्णस्मरणं ततश्चमत्कार इत्येतत्परम्परया श्रोत्राकाशसमवायस्य चमत्कारजनकत्वं बोध्यम्। तत्तद्वर्णनिरूपितसमवायलाभार्थं विशेषपर्य्यन्तानुधावनम्।

**मारमेति**।

> **"मारमा सुषमा चारु-रुचा मारवधूत्तमा।**
> **मात्तधूर्त्ततमा वासा सा वामा मेऽस्तु मारमा॥"**

इति श्लोकः।

अस्यार्थः—सा वामा मा आर नागता। कीदृशी चारुरुचा विशिष्टा अतएव मासुषमा, लक्ष्मीतुल्यपरमाशोभा। तथा मारस्य कामस्य वधू रतिरिवोत्तमा। तत्किं धूर्त्ततया नागता इत्यत्राह—**मात्तधूर्त्ततमा** इति। धूर्त्ततमा पुनर्मेत्यर्थः। तत्कथं नागतेत्यत्राह—अवासा—वासो वसतिः तद्रहिता। इत्थं श्रुत्वा नायक आत्मानमाशास्ते—**सा वामेति**। पूर्वत्रान्वितस्यापि आवृत्त्या पश्चादप्यन्वयेन सा वामा मे मारमा कमलक्ष्मीरस्तु। आवृत्तिवशेन सा वामा इत्यस्य पश्चादप्यन्वयेन तस्य वा परकीयपदत्वादपि ततपरत्वाद् मे इत्यादेशः।

अस्य बन्धप्रकारं दर्शयितुमाह—**एषोऽष्टदलपद्मबन्ध** इति। अष्टदलता च दिग्विदिग्दलैर्लेख्या। **तत्र प्रवेशनिर्गमाभ्यामिति**। कर्णिकायामाद्यवर्णं लिखित्वा दले द्वौ द्वौ वर्णौ लेख्यौ। तत्र निर्गमप्रवेशाभ्यामित्येव बोध्यम्। कर्णिकालिखितप्रथमवर्णमाकारमारभ्य प्राच्यदले प्रथमनिर्गमादेव श्लोकान्ते च प्रवेशात्। तत आग्नेयदलात् प्रवेश एव दक्षिणदिग्दले, ततो निर्गत्य पुनः प्रवेशः। नैर्ऋतदले ततो निर्गत्य पश्चिमदले प्रवेशस्ततः तेनैव दलेन निर्गत्य वायव्यदलप्रवेशः। तत उत्तरदलेन च निर्गत्य तेनैव दलेन पुनः प्रवेशः, तत ईशानदलेन निर्गत्य प्राच्यदलेन पुनः प्रवेश इति। अस्य संस्थानं लिखित्वाऽपि दर्श्यते यथा पद्मबन्धः।

## लोचन

सम्प्रति रसानुपकारकमपि कविभिस्तेषु तेषु शक्तिप्रदर्शनार्थमुपनिबद्धत्वात्प्राच्यैरलङ्कारमध्ये लक्षितं चित्रं निरूपयति—**पद्मेति**। अस्य चालङ्कारतायां तथाविधनैपुण्यादिसंस्कारवशेन विस्मयावेशो यथाकथञ्चिद् बीजम्।

तथाविधश्चक्षुरिन्द्रियैरनुभूयमानो यो लिपिनिवेशः सन्निवेशविशेषोऽर्थाद् भूम्यादिस्थले सम्यगभिमतनिर्वाहोपयिकतया निवेशविशेषः, तद्वशेन तन्निमित्तीकृत्येत्यर्थः। तथाविधश्रोत्रेन्द्रियेणानुभूयमानैर्वर्णैरर्थादनुप्रासादिशब्दालङ्कारप्रयोजकैः। अत्र हि शब्दान्वयव्यतिरेकानुविधायित्वमात्रेण शब्दालङ्कारत्वाङ्गीकारेऽनुप्रासान्तःपातित्वमेव स्यादिति भावः।

**मारमेति**—माया लक्ष्म्या रमणात् मारमो विष्णुस्तस्य असुसमाप्राणसमा। मारवधू रतिः। ततोऽपि उत्तमा श्रेष्ठा। आत्तो गृहीतो धूर्त्ततमस्यावासो यया एवंभूता न भवतीत्यर्थः। तथाभूता सा प्रसिद्धा रमा लक्ष्मीर्मे वामा, वक्रा मास्त्विति सम्बन्धः। **एषोऽष्टदल इति**। कर्णिकायाम् "मा" शब्दं विन्यस्य "रमा" इत्यस्याक्षरद्वयं तत्र दिग्दले लिखित्वा, 'सु' 'ष' इति अक्षरद्वयं विदिग्द लेन प्रवेश्य "चारु" इत्यक्षराभ्यामितरदिग्दलेन निर्गमप्रवेशौ। तदनन्तरं विदिग्दले 'रव' इति अक्षरद्वयं दत्त्वा तदनन्तरदिग्दले "धूर्त" इत्यक्षरद्वयेन प्रविश्य पुनः कर्णिकाक्षरात् प्रभृति तेनैव निर्गम्य "तमा" इत्यक्षरद्वयेन, पुनः तदनन्तरविदिग्दले प्रविश्य, तदनुदिग्दले, "वा सा" इत्यक्षरद्वयेन निर्गमप्रवेशौ। तदितरदिग्दले 'मेऽस्तु' इत्यक्षरद्वयेन निर्गत्य पुनः प्राक् निर्गम्य दिग्दले "मार" इत्यक्षरद्वयेन प्रविश्य कर्णिकाङ्गतां गते "मा" इत्यत्र विश्रान्तिः। श्लिष्टवर्णः अभिन्नवर्णः। कर्णिकाक्षरं "मा" इति। खड्गबन्धो यथा—

> **"सानन्दं देवदैत्यध्विजभुजगमुखैः प्राणिभिः सेव्यमाना**
> **नाशं तापं नयन्ती शरदि शशिकलां श्यामयन्ती स्वभासा।**
> **सा सख्यः साधरारे सकलजगदधीशेन संयुक्तहारा**
> **सा ध्वस्ताशेषपापा सलिलनिधिसुता सन्ततं पातु युष्मान्॥"**

अन्तर्गडुभूततया काव्यमध्यप्रविष्टगडुवद् असारतया।

## कुसुमप्रतिमा

चित्रं नामालङ्कार लक्षयति पद्मेति। वर्णानामकारादीनां पत्रादौ लिखितानामित्यर्थः पद्माद्याकारहेतुत्वे पद्मप्रभृत्याकृतिसम्पादकत्वे चित्रं नामालङ्कार उच्यते। पत्रादौ पद्माद्याकृतिसम्पादको वर्णविन्यासश्चित्रालङ्कार इत्यर्थः। अस्य चित्रसम्पाद्यतया चित्रमिति नाम।

आदीति। अत्राप्यादिशब्दात् लता वृक्षादीनां ग्रहणम्।

ननु पत्रादौ पद्माद्याकृतिसम्पादकवर्ण-विन्यासस्य चित्रालङ्कारत्वे शब्दरूपत्वाभावात् कथमस्य शब्दालङ्कारत्वम्, येन शब्दालङ्कारप्रकरणे गणनमुपपद्यत इत्याह अस्य चेति। चित्रालङ्कारस्य चेत्यर्थः। तथाविधः पद्मादिप्रकारो यो लिपिसन्निवेशविशेषः पत्रादौ चित्रविन्यासविशेषः तस्य वशेन प्रभावेण चमत्कारविधायिनां वर्णानां चित्र पाणामित्यर्थः। तथाविधः पद्मादिप्रकारो यः श्रोत्राकाशसमवायविशेषः कर्णविवरेसम्बन्धविशेषशेन चमत्कारविधायिभिर्वर्णैः शब्दात्मकैः सह अभेदेनोपचारात् तादात्म्येन व्यवहारात्। चित्रभूतानामपि वर्णानामुच्चारणकाले शब्दरूपतयाविर्भावात् तेषां चित्रितानानां वर्णानां तदुच्चारणेनोत्पन्नानां शब्दरूपवर्णानाञ्च कारण-कार्य्यरूपतया परस्परमभेदमङ्गीकृत्य चित्रालङ्कारस्य शब्दालङ्कारत्वं व्यवस्थाप्यत इत्यर्थः।

अत्रेति। चित्रालङ्कारमध्ये इत्यर्थः। पद्मवद्बन्धो वर्णरचना पद्माकृतिसम्पादको वर्णविन्यास इत्यर्थः। अन्यत्राप्येवम्।

मारेति। इष्टदेवतान्तिके आत्मानं प्रति लक्ष्मीदेव्या अप्रतिकूलताचरणप्रार्थनेयम्। मारस्य कन्दर्पस्य, मा माता, सुषमा सुन्दरी, चारुरुचा सुन्दरप्रभया मारबध्वा रतिदेवीतोऽपि उत्तमा उत्कृष्टा, तथा मा आत्तो न गृहीतो धूर्त्ततमस्य अत्यन्तदुष्टजनस्य आवासो गृहं यथा सा तथोक्ता, सा प्रतिद्धा, रमा लक्ष्मीदेवी, मे मम वामा कदापि प्रतिकूला, मा अस्तु न भवतु। "मा च मातरि माने च" इति रससः। "सुषमं साधु शोभनम्" इत्यमरः।

एष इति। अष्टभिर्दलैः पर्णैः पद्मबन्धः पद्माकृति सम्पादको वर्णविन्यासः। तद्विन्यासपाठयोः प्रकारमाह दिगिति। दिग् दलेषु पूर्व-दक्षिण-पश्चिमोत्तरदिग् वर्तिपर्णेषु, निर्गमप्रवेशाभ्यां यथा सम्भवं बहिर्गमनान्तर्गमनाभ्याम्, श्लिष्टवर्णः हिः पठनीयतया श्लिष्टवर्ण द्वयविशिष्टः। विदिग्दलेषु आग्नेयनैर्ऋत-वायव्येशानकोणस्थपर्णेषु, अन्यथा क्वचित् प्रवेश एव क्वचिव्य निर्गम एव, तथा अश्लिष्टवर्णश्च। कर्णिकाक्षरन्तु मध्यवर्त्ती वर्णस्तु श्लिष्टमेव, बहुवारपठनीयत्वादिति भावः। तथा चास्य विशेषलक्षणं सरस्वतीकण्ठाभरणे—

"कर्णिकायां न्यसेदेक द्वे द्वे दिक्षु विदिक्षु च। प्रवेशनिर्गमौ दिक्षु कुर्य्यादष्टदलाम्बुजे॥"

एवम्भूतलक्षणस्य दिङ्मात्रप्रदर्शनपरतया चमत्कारिताविधायित्वे प्रकारान्तरेणापि पद्मबन्धादिकं भवतीत्युन्नेयम्।

उदाहृतपद्मबन्धचित्रं यथा—(१) प्रकारान्तरपद्मबन्धचित्र यथा मम—(२)

श्लोको यथा—"हरः शिवो मे सुरमानसौका रिष्टं हरेन्मां सुतवत् समव्य।

दाता च भूयात् सुखमार्त्तिधाती सदा स्यां सुकृती कृतार्थः॥"

अस्य उद्धारस्तु—दलाग्र-'ह'-कारादारभ्य सरलभावेन द्वि-द्वि-दलवर्णाः क्रमशः पठनीयाः एवञ्च कर्णिकाक्षरं श्लिष्टं स्यात् चमत्कारिताविशेषस्तु दलाग्र-'ह' कारादारभ्य दक्षिणावर्त्तेन दलाग्रवर्णानां क्रमशः पाठे 'हरिदासकाव्यतीर्थः' इति कविनाम भवतीति।

एवमिति । ऊह्यं काव्यप्रकाश-सरस्वतीकण्ठाभरणादिष्विति शेषः ।

(१) तत्र खड्गबन्धचित्रं यथा काव्यप्रकाशे— (२) मुरजबन्धचित्रं यथा मम रुक्मिणीहरणमहाकाव्यं— (मुरजो मृदङ्गस्तद्वद्वन्धो वर्ण विन्यासो मुरजबन्धः ।)

(१) श्लोको यथा—

"मारारिशक्र-रामेम-मुखैरासाररंहसा । साराख्धस्तवा नित्यं तदार्त्तिहरणक्षमा ॥ माता नतानां संघट्टः श्रियां बाधितसम्भ्रमा । मान्याथ सीमा रामाणां शं मे दिश्यादुमाद्रिजा ॥" अनयोर्याण्या तु काव्यप्रकाशीयमहेश्वरटीकायां रामचरणटीकायां वानुसन्धेया ।

चक्रबन्धः शिशुपालवधोनविंशसर्गे अनुसन्धेयः ।

(२) श्लोको यथा—

**"सहसोच्चतमानश्रीः साहसीर्जितमानसः ।**
**सहसोद्धर्द्धमानश्रीः सहसोच्चतमाननः ॥"**

उच्चतमाना उत्कर्षेण याचमाना श्रीलक्ष्मीदेवी यं स उच्चतमानश्रीः आरूढ़वानर इत्यादिवद्बहुब्रीहिः । सहसा तत्तक्षणादेव साहसेन ऊर्जितमुत्तेजितं मानसं मनो यस्य सः । सहसा बलेन उद्वर्द्धमाना श्रीर्वीरशोभार यस्य सः । तथा सहसं हास्ययुक्तम् उच्चतममुन्नतञ्च आननं यस्य स तादृशः कृष्णः, अद्युतदिति परश्लोकेनान्वयः ।

(३) चक्रबन्धः शिशुपालवधोन विंशसर्गे अनुसन्धेयः ।

गोमूत्रिकाबन्धचित्रं यथा

मम रुक्मिणीहरणमहाकाव्ये—

(३) अस्य श्लोकस्तु वामत्रो यथारीतिपाठेनैव सम्पद्यत इति द्रष्टव्यम् ।

एषां लक्षणानि सरस्वतीकण्ठाभरणादावनुसन्धेयानि । चित्रान्तरोदाहरणानि तु शिशुपालवधकिरातार्जुनीय मदीयरूक्मणीहरणादिषु यथेष्टं दर्शनीयानि ।

ननु महाकविकाव्यनिवहेषु बाहुल्येनैव निबद्धश्चित्रालङ्कारो भोजराजादिभिरपि प्रायेणैव लक्षणोदाहरणाभ्यां प्रपञ्चितः, भवता तु कथं न प्रपञ्चत इत्याह काव्यान्तरिति । काव्यस्यान्तर्मध्ये गड़भूततया ग्रन्थिरूपतया ग्रन्थिरूपत्वेनात्यन्तकटिनत्वान्नोरसतयेत्यर्थः, इह साहित्यदर्पणे न प्रपञ्चयते लक्षणोदाहरणाभ्यां न विस्तरतो विरच्यते, चित्रालङ्कार इति शेषः । प्राचीनानुरोधेनैव स्पृशतापि इक्षुदण्डस्य ग्रन्थिभाग इव नितान्तकाठिन्यात् रसाविष्कारदुष्करतया चित्रालङ्कारः परित्यज्यत इत्याशयः । काव्यप्रकाशकृताप्येवमेव परित्यक्तः ।

## विमला

चित्राख्यालङ्कारमनेकविधमाह, पद्मेति ।—वर्णानां पद्माद्याकारहेतुत्वे—पद्माद्याकारवर्णस्तोमजनकत्वे इत्यर्थः, (आदिपदेन खड्गमुरजचक्रगोमूत्रिकादयो गृह्यन्ते इति मूलकृतैवोक्तम्) पद्मादिसदृशवर्णानां विन्यासः चित्रमिति तात्पर्य्यार्थः ।

आदिशब्दादिति ।—पद्माद्याकारेत्यादिपदादित्यर्थः, ("गोमूत्रिकादयः" इत्यत्र आदिपदेन काकपद्यादयो ग्राह्याः) । ननु श्रोत्रसम्बन्धानां जन्यवर्णानां पद्माद्याकारजनकत्वरूपचित्रालङ्काराभावात् कथमस्य शब्दालङ्कारत्वम् ? अतस्तदुपपादयति, अस्य चेति ।—चित्रालङ्कारस्येत्यर्थः, तथाविधेत्यादि ।—तथाविधस्य—पद्मादिसदृशस्य, लिपीनां—वर्णसंस्थानानां, सन्निवेशस्य—रचनाविशेषस्य, वशेन—सामर्थ्येनेत्यर्थः, चमत्कारविधायिनां—वक्तृविस्मयकारिणां, वैचित्र्याबोधकानामित्यर्थः । तथाविधेति ।—तथाविधः यः श्रोत्राकाशसमवायविशेषः,—कर्णरन्ध्रसम्बन्धविशेषः, तद्वशेन, चमत्कारविधायिभिः,—श्रोतृविस्मयजनकैः । अभेदेन—तादात्म्येन, उपचारात्—अध्यवसायात्; एवञ्च पद्माद्याकारलिपिसन्निवेशविशेषमालोक्य वक्ता ये वर्णा उच्चार्यन्ते, तैरेव श्रोतृणां श्रोत्रे पद्माद्याकारवर्णस्तोमो जन्यते; कार्य्यकारणयोरभेदोपचारेण जन्यवर्णानामपि चित्रालङ्कारसम्भव इति भावः ।

पद्मबन्धं चित्रमुदाहरति, मारमेति ।—मारस्य—कामस्य, मा—जननी, सुषमा—परमा शोभा, तत्स्वरूपेत्यर्थः, चारुरुचा—मनोहरकान्त्या, मारबध्वाः,—रतेरपि, उत्तमा—श्रेष्ठा, माऽऽत्तः,—न गृहीतः, धूर्त्ततमस्य आवासः यया सा तथोक्ता,—मनोरमा मे मम, वामा—प्रतिकूला, मा अस्तु—न भवतु, यद्वा-सा वामा-मनोरमा । मे-मम, अस्तु-भवतु, रमा—लक्ष्मीरपि इत्यर्थः, मा अस्तु—न भवतु; सा मनोमोहनी यदि मम स्यात्, तदाऽहं सर्वजनकाम्यां श्रियमपि तृणाञ्च मन्ये इति भावः । सा कीदृशीत्याह, मारमेति ।—मारस्य—कामस्य, मा—लक्ष्मीः, माव से परमा शोभा यस्याः सा तथोक्ता, चारुरुचा—मनोहरकान्त्या, मारस्य,—रतेरपि, उत्तमा, मात्तधूर्त्ततमावासा—अगृहीत धूर्त्तमगृहा इति ।

एष इति ।—दिग्दलेषु—पूर्वदक्षिणपश्चिमोत्तरपदेषु निर्गमप्रवेशाभ्यां—वहिर्गमान्तर्गमाभ्यां, निर्गमेण एकार्थः, प्रवेशेन अन्यार्थः इति हेतोरित्यर्थः, श्लिष्टवर्णः,—विभिन्नरूपवर्णः, अनुलोमप्रतिलोमपाठेन एकरूपाक्षर इत्यर्थः, अन्यथा क्वचित् प्रवेशः क्वचिन्निर्गम इत्यति श्लिष्टवर्ण एव । विदिग्दलेषु—अग्न्यादिकोणवर्त्ति,दलेषु, अन्यथा—अश्लिष्टवर्ण इत्यर्थः, कर्णिकाक्षरं—पद्ममध्यस्थितमक्षरम् । अत्र अष्टसु दिक्षु विवताष्टदलं पद्मं लेख्यं, तत्कर्णिकायां श्लोकस्य प्रथममक्षरं लेख्यं, ततः पूर्वादिदलेषु प्रदक्षिणक्रमेण द्वौ द्वौ वर्णौ लेख्यौ, एवं सप्तदशभिः अक्षरैः पद्मं भवति, तत्र कर्णिकास्थवर्णोपक्रमेण प्राच्यदले निर्गमेण, आग्नेयदले प्रवेशेन, दक्षिणदले निर्गमप्रवेशाभ्यां, नैऋतदले निर्गमेण, पश्चिमदले निर्गमप्रवेशाभ्यां, वायव्यदले प्रवेशेन, उत्तरदले निर्गमप्रवेशाभ्यां, ईशानदले निर्गमेण, प्राच्यदले पश्चात् प्रवेशेन श्लोकः पाठ्यः; तदुक्तं—"वर्णद्वयेन चैकैकं दलभूतदलाष्टकम् । सर्वोत्तराद्यवर्णेन पद्मं स्यात् कृतकर्णिकम् ॥" इति ।

खड्गबन्धो यथा—"मारारिशक्ररामेभमुखैरासाररंहसा । साराब्धस्तवा नित्यं तदार्त्तिहरणक्षमा ॥ माता नतानां सङ्घट्टः श्रियां बाधितसम्भ्रमा । मान्याऽथ सीमा रामाणां शं मे दिश्यादुमाऽद्रिजा ॥" (अस्यार्थः,—अद्रिजा उमा, मे मह्यं, शं कल्याणं, दिश्यात् दद्यात् । सा कीदृशी ? माराारिः,—शिवः, शक्रः,—इन्द्रः, रामाः,—दाशरथ्यादिरामत्रयं, इभमुखः,—गणेशश्च तैः, आसाररंहसा—वृष्टिकणरीत्या, नित्यम् आरब्धस्तवा, पुनः कीदृशी ? सारा—श्रेष्ठा, तेषां—स्तुवतां शिवादीनाम् आर्त्तेः,—पीड़ायाः, हरणे क्षमा, नतानां—प्रणतानां, माता—मातेन पालयित्री, श्रियां—सम्पदां, सङ्घट्टः,—सम्मेलनस्थानं, बाधितसम्भ्रमा—शोभाबाहुल्यात् बाधितसम्भ्रमं भयं यया तादृशी, निरुद्वेगा इत्यर्थः, मान्या, अथ—समुच्चये, —नारीणा, सीमा—पराकाष्ठा, ["अदिजा" इत्यत्र "अद्रिजा" इति पाठे—आद्या इत्यर्थः, "आदिमा" इति पाठेऽपि स एवार्थः] अनेन श्लोकद्वयेन खड्गबन्धः प्रस्तीर्य्यते; तत्र मुष्टिरूपर्य्यधः शाखाद्वयम्, उपरि शाखाचतुष्पथे प्राथमिक 'मा' काल विन्यस्य तिर्य्यगधः क्रमेण 'रारि—' इत्यादि 'ह' कारान्तान् चतुर्दशवर्णान् न्यसेत् इत्येका धारा, ततः खड्गशखाया 'सा' इति श्लिष्टं, ततः तिर्य्यगूर्द्धक्रमेण

'रारब्ध—' इत्यादिवर्णचतुर्दशकं विन्धस्य अपरां धारां कुर्य्यात् इत्येषा पट्टिका । 'मा'-कारः पूर्व-'मा'-कारं प्रविष्टः । एवमग्रेऽपि तत्रैव प्रविष्टं कल्पयित्वा दक्षिणशाखायां 'ता' इत्यादिवर्णसप्तकं विन्धस्य वामशाखायां तिर्य्यग्विलोमेन 'श्रि'-कारादिवर्णसप्तकं लिखेत्, 'मा'-कारचतुष्पथे प्राथमिक 'मा'-कारं प्रविष्टः, ततः तमेव 'मा' कारमारभ्य अधोऽधः 'न्यायसौ' इति त्रयो वर्णाः मुष्टौ लेख्याः, ततः अधश्चतुष्पथमध्ये तदन्तिम 'मा'-कार विन्यस्य तद्दक्षिणशाखायां 'रामाणां शं' इति चतुरो वर्णान् विन्यसेत्; ततो वामशाखायां विलोमेन 'मे दिश्याटु' इति चतुरो वर्णान् लिखेत्, 'मा'-कारः अधश्चतुष्पथस्थ 'मा'-कारं प्रविष्टः, ततो मुष्टेरधः त्सरुके 'द्विजा' इति पाठान्तरयोऽस्तु—'दिशा' इति 'दिमा' इति वा वर्णद्वयं लेख्यम् इति खड्गनिष्पत्तिः) ।

(अनारता—अविच्छिन्नप्रहरणव्यापारा आसीत् । मत्तधीरनागमिति क्रियाविशेषणम् । रसेन—वीरेण । तारनाद्जना—महाप्राणशब्दजना) । अत्र पङ्क्तिचतुष्टयेन लिखितस्य पादचतुष्टयस्याधः क्रमेण यथाक्रमं प्रथमद्वितीयतृतीयचतुर्थानूर्द्धक्रमेण पञ्चमषष्ठसप्तमाष्टमान वर्णान् गृहीत्वा प्रथमः पादः; द्वितीयात् प्रथमं, प्रथमात् द्वितीयतृतीयौ, द्वितीयात् चतुर्थपञ्चमौ, प्रथमात् षष्ठसप्तमौ, द्वितीयात् अष्टमं गृहीत्वा द्वितीयः पादः; तृतीयात् प्रथमं, तुर्य्यात् द्वितीयतृतीयौ, तृतीयात् तुर्य्यपञ्चमौ, तुर्य्यात् षष्ठसप्तमौ, तृतीयात् अष्टमं गृहीत्वा तृतीयः पादः, पादचतुष्टयस्य ऊर्द्धक्रमेण प्रथमद्वितीयतृतीयचतुर्थान् अधः क्रमेण पञ्चमषष्ठसप्तमाष्टमान् गृहीत्वा चतुर्थः पादः पाठ्यः, एवं मुरजसिद्धिः । चक्रबन्धो विदग्धमुखमण्डने, गोमूत्रिकाबन्धो दण्डिनि ज्ञेयः । एवमन्येऽपि मुषल-शूल-शक्ति हलचतुरङ्गपीठ-रथ तुरग गज-पाठ्यादयो बोध्याः । एवं वर्णानाम् अनुलोमप्रतिलोमपाठादिना एकरूपपदोच्चयहेतुत्वेऽपि सर्वतोभद्रनामकः चित्रालङ्कारो वेदितव्यः । काव्यान्तरिति ।— काव्यान्तगड़भूततया— काव्यान्तरर्वर्त्तिरोगविशेषतया, यद्वा—गडुः,—ग्रन्थि रित्यर्थः, अन्तग्रन्थिवत् काव्ये अकिञ्चित्कारत्वेन इत्यर्थः, यथा इक्षुभक्षणसमये तद्ग्रन्थीनां रमास्वादप्रतिबन्धकत्वं तथा काव्येऽपि चित्रादीनाम् इति भावः, तु इह—काव्यालङ्कारविचारप्रकरणे, न प्रपञ्चयते—विस्तार्य्यते, चित्रालङ्कार इति शेषः ।

## लक्ष्मी

सम्प्रति रसानुपकारकमपि कविभिस्तेषु तेषु शक्तिप्रदर्शनार्थमुपनिबद्धत्वात् प्राच्यैरलङ्कारमध्ये लक्षितं चित्रं निरूपयति—पद्मेति । वर्णानां शब्दस्वरूपाणामकाराद्यक्षरणम्, भूम्यादौ उट्टङ्कितानामित्यर्थः, पद्माद्याकारहेतुत्वे पद्मप्रभृतिस्वरूपसम्पादकत्वे चित्रं नामालङ्कार उच्यते, भूम्यादौ पद्मादिस्वरूपसम्पादको वर्णविन्यासश्चित्रालङ्कार इति निकृष्टोऽर्थः । **यद्यपि** शब्दात्मकानामाकशगुणानां वर्णानां पद्माद्याकारहेतुता नास्ति तथापि तद्व्यञ्जकानां भूम्यादौ लिप्यात्मकानां वर्णानां तथात्वेन तेषु तथात्वमुपचर्यत इत्यवधेयम् । अस्य चालङ्कारतायां तथाविधनैपुण्यादिसंस्कारवशेन विस्मयावेशो यथाकथञ्चिद्बीजमितिलोचनकाराः । चित्रसम्पाद्यतयाऽस्य चित्रमिति नाम ।

'पद्माद्याकार' इत्यत्रादिपदाद्बोध्यं निर्दिशति—आदिशब्दादिति । खड्गेत्यादि । खड्ग करवालः शस्त्रविशेषः, मुरजो मृदङ्गो वाद्यविशेषः चक्रं प्रसिद्धम्, गोमूत्रिका गोमूत्रधारा आदिपदेन बन्धादीनां ग्रहणम् । तदुक्तम् **अग्निपुराणे—**

**'अनेकधावृत्तिवर्णविन्यासैः शिल्पकल्पना ।**
**तत्तत्प्रसिद्धवस्तूनां बन्ध इत्यभिधीयते ॥'**

अस्यानेकविधत्वमपि तत्रैवोक्तम्—

**'बाणबाणासनव्योमखड्गमुद्गरशक्तयः ।**
**मृदङ्गपद्मश्रृङ्गाटदम्भोलिमुशलाङ्कुशाः ॥'**

**'पदं रथस्य नागस्य पुष्करिण्यसिपात्रका ।**
**एते बन्धास्तथा चान्येऽप्येवं ज्ञेयाः स्वयं बुधैः ॥'**

ननु भूम्यादौ पद्मादिस्वरूपसम्पादकवर्णविन्यासस्य चित्रालङ्कारत्वाभ्युपगमे शब्दरूपत्वाभावेन शब्दालङ्कारत्वाभावात् शब्दालङ्कारप्रस्तावे तत्स्वरूपोपपादनं कथमित्याशङ्कां निराकरोति—**अस्य** चेति । चित्रालङ्कारस्य चेत्यर्थः । तथाविधः पद्मादिसदृशो यो लिपिसन्निवेशविशेषो भूम्यादौ चित्ररचनाविशेषः तस्य वशेन प्रभावेण पद्माद्याकारतया लिपिरचनामहिम्नेत्यर्थः, चमत्कारविधायिनं वक्तृविस्मयकारिणमपि वर्णानां चित्ररूपाणामित्यर्थः तथा विधः पद्मादिसदृशो यः श्रोत्राकाशसमवायविशेषः कर्णरन्ध्रसम्बन्धविशेषस्तद्वशेन चमत्कारविधायिभिः श्रोतृविस्मयकारिभिः वर्णैः शब्दात्मकैः सह अभेदेन तादात्म्येन उपचारात् व्यवहारात् । एवञ्च पद्माद्याकारलिपिसन्निवेशविशेषमवलोक्य वक्त्रा ये वर्णा उच्चार्यन्ते तैरेव श्रोतृणां श्रोत्रे पद्माद्याकारा वर्णा जन्यमानाः कमपि चमत्कारमादधतीव तेषाञ्च कार्यकारणयोरभेदेनोपचाराज्जन्यानामपि वर्णानां चित्रालङ्कारव्यपदेशभाक्त्वं सङ्गच्छत इति भावः ।

अथोदाहर्त्तुमुपक्रमते—तत्रेति । तत्र तेषु पद्मादिस्वरूपभेदेन बहुविधेषु चित्रालङ्कारेषु मध्य इत्यर्थः । पद्मबन्धः पद्मवद्बन्धो वर्णरचना, पद्मस्वरूपसम्पादको वर्णविन्यास इत्यर्थः । एवमन्यत्रापि ।

मारमेति । मारस्य कामस्य मा लक्ष्मीः सैव सुषमा परमाशोभा यस्याः सा, यद्वा मा नैव रमासुषमा लक्ष्म्या अत्युत्कृष्टाऽपि शोभा यस्याः सा लक्ष्म्या अत्युत्कृष्टत्वं यच्छोभापेक्षया न तादृशीति भावः ।

अथवा 'मारमे'ति 'असुषमे' तिपदच्छेदः, मां लक्ष्मीं रमयति विनोदयति विडम्बनास्पदमादधातीति यावत् तथा, न सुषमा यदपेक्षया सा स्वयमेव परममुत्कृष्टेत्यर्थः, अत एव चारू मनोरमाया रुक्कान्तिस्तया मनोहरकान्त्येत्यर्थः, मारस्य कामस्य वधू रतिस्तस्या उत्तमा रतेरप्युत्कृष्टेत्यर्थः, अथवा 'अमारवधूत्तमा इति पदच्छेदः, न मारवधूत्तमा यदपेक्षया तादृशी, धूर्तश्चासौ तमो राहुस्तस्यावासः सङ्ग इति धूर्त्तमावासः सा नैव आत्तो गृहीतो धूर्त्ततमावासो यया सा तथा सौन्दर्ये सत्यपि वञ्चकस्य राहोः कवलनावसरो यया न दत्तस्तादृशीतिभावः 'तमस्तु राहुः स्वर्भानुः' इत्यमरः, यद्वा मात्तधूर्त्ततमा अगृहीतधूर्त्ततमगृहा, सा प्रसिद्धा, वामा मनोरमा प्रिया, मे ममास्तु किन्तु रमा लक्ष्मीःमास्तु । ननु कुत एवमितिजिज्ञासायां वामाविशेषणानि व्यतिरेकेण रमापरत्वेन योज्यानि । तथाहि-मारं मृत्युं मिमीते कथयतीति मारमा लक्ष्म्या योगवियोगयोः प्राणात्यय इति वेदान्तिनः, अतएव न सुषमा परमाशोभा यस्याः सा तादृशी, एवंसति सर्वैः लोकैः कथमुपास्यत अत आह—चार्विति चारु इति क्रियाविशेषणम् । मारस्य कन्दर्पस्य वधूरतिः तदपेक्षया उत्तमा, अथवा तत एव अचारुरुचा निन्दितशोभया, मारस्य मृत्योर्भयभार्यायाः वधूः स्नुषा यातनेत्यर्थः तस्या उत्तमा उत्कृष्टेति मरवधूत्तमा 'मारोऽनङ्गे मृतौ विघ्ने' इति गोपालः, 'वधूः पत्न्यां स्नुषाभार्योः' इति हैमः । भागवतेऽपि—

**'दुरुक्तौ कलिराधत्त भयं मृत्युञ्च सत्तम ! ।**
**तयोश्च मिथुनं जज्ञे यातना निरयस्तथा ॥'**

तथा च यदपेक्षया यातनाऽपि नेतिभावः, मा नात्ता गृहीतेति मात्ताऽतन्त्रेत्यर्थः सा चासौ धूर्त्ततमाया इव धूर्त्ततमवद् आवासो निवासस्थानं यस्याः सा । यदि च कस्यचित् स्वेष्टदेवता सविधे आत्मानं प्रति लक्ष्मीदेव्याः स्वानुकूलायाभ्यर्थनेति विभाव्यते तदाऽयमर्थः—माया लक्ष्म्या रमणात् मारमो विष्णुस्तस्य असुसमा प्राणसमा यद्वा

मारस्य कामस्य मा माता 'मा च मातरि माने च' इति रभसः, सुषमा परमसुन्दरी, 'सुषमं साधुशोभनम्' इत्यमरः, चारुरुचा मारवध्वा कामपत्न्या रतिदेवीतोऽपि उत्तमा श्रेष्ठा तथा मा आत्तो गृहीतो धूर्ततमस्य अत्यन्तदुष्टजनस्य आवासो निकेतनं यया सा तादृशी, सा प्रसिद्धा, रमा लक्ष्मीर्देवी मे वामा वक्रा मा अस्तु कदापि प्रतिकूला न भवत्वित्यर्थः।

अस्य स्वरूपं प्रतिपादयति—**एष इति**। अष्टभिर्दलैः पर्णैः पद्मस्वरूपसम्पादको वर्णविन्यासः। 'दलं पर्णं छदः पुमान्' इत्यमरः। तद्विन्यासपाठयोर्विधिं प्रदर्शयति—दिगिति। **श्लिष्टवर्णः** अनुलोमप्रतिलोमपाठेनैकरूपाक्षरः। अन्यथा क्वचित्प्रवेशः क्वचिन्निर्गम इत्यपि शिलष्टवर्ण एव। कर्णिकाक्षरं 'मा' इति। अत्राष्टसु दिक्षु विततोष्टदलं पद्मं लेख्यम्। कर्णिकायां 'मा' शब्दं विन्यस्य 'रमा' इत्यस्याक्षरद्वयं तत्र दिग्दले लिखित्वा, सु 'स' इति अक्षरद्वयं विदिग्दलेन प्रवेश्य 'चारु' इत्यक्षराभ्यामितरदिगदलेन निर्गमप्रवेशौ, तदनन्तरं विदिग्दले 'रव' इति अक्षरद्वयं दत्वा तदन्तरदिग्दले 'धूर्ते' इत्यक्षरद्वयेनप्रविश्य पुनः कर्णिकाक्षरात्प्रभृति तेनैव निर्गम्य 'तमा' इत्यक्षरद्वयेन, पुनस्तदनन्तरविदिग्दले प्रविश्य तदनुदिग्दले 'वासा' इत्यक्षरद्वयेन निर्गमप्रवेशाः। तदितरदिग्दले 'मेऽस्तु' इत्यक्षरद्वयेन निर्गत्य पुनः प्राक् निर्गम्य दिग्दले 'मार' इत्यक्षरद्वयेन प्रविश्य कर्णिकाङ्गता— गते 'मा' इत्यत्र विश्रान्तिः। **तदुक्तम्**—

**'वर्णद्वयेन चैकैकं दलभूतदलाष्टकम्।**

**सदोत्तराद्यवर्णेन पद्मं स्यात्कृतकर्णिकम्॥' इति।**

अस्य च विशेषलक्षणं **सरस्वतीकण्ठाभरणे**—

**'कर्णिकायां न्यसेदेकं द्वे द्वे दिक्षु विदिक्षु च।**

**प्रवेशनिर्गमौ दिक्षु कुर्यादष्टदलाम्बुजे॥'**

सुखपूर्वकं बोधनाय तत्र तत्र तत्तच्चित्राकारोऽपि लिख्यतेऽस्माभिः। तत्रोदाहृतपद्मबन्धचित्रं यथा—

दिङ्मात्रमुदाहृतमेतत्पद्मबन्धम्। चमत्कारातिशायित्वे प्रकारान्तरेणापि पद्मबन्धादिकं भवतीत्यवधेयम्। तत्स्वरूपं सरस्वतीकण्ठाभरणदितो ज्ञेयम्।

एवमिति। यथा पद्मबन्धस्तथेत्यर्थः। खड्गबन्धादिकमित्यत्रादिपदेन मुरजादीनां परिग्रहः। ऊह्यमिति। काव्यप्रकाशसरस्वतीकण्ठाभरणादिलक्षणग्रन्थेष्विति शेषः।

**यथा—'मारारिशक्ररामेभमुखैरासाररंहसा।**

**साराब्धस्तवानित्यं तदार्त्तिहरणक्षमा॥**

**माता नतानां संघट्टः श्रिया बाधितसंभ्रमा।**

**मान्याथ सीमा रामाणां शं मे दिश्यादुमादिजा॥'**

सविस्तरं पद्मव्याख्यानं काव्यप्रकाशादावेवानुसन्धेयम्। अनेन श्लोकद्वयेन खड्गबन्धः प्रस्तीर्यते। तत्र-मुष्टेरुपर्यधः शाखाद्वयम्, उपरि शाखाचतुष्पथे प्राथमिकमाकारं विन्यस्य तिर्यगधः क्रमेण 'रारि' इत्यादि 'ह' कारान्तांश्चतुर्दशवर्णान्न्यसेदित्येकाराधारा। ततः खड्गशिखायां सा इति शिलष्टम्। ततः तिर्यगूर्ध्वक्रमेण 'रारब्ध' इत्यादिवर्णचतुर्दशकं विन्यस्या परां धारां कुर्यात्, इत्येषा पट्टिका 'मा' कारः पूर्वं 'मा' कारं प्रविष्टः।

एवमग्रेऽपि तत्रैव प्रविष्टं कल्पयित्वा दक्षिणशाखां 'ता' इत्यादिवर्णसप्तकं विन्यस्य वामशाखायां तिर्यग्विलोमेन 'श्रि' कारादिवर्णसप्तकं लिखेत् । 'मा' कारचतुष्पथे प्राथमिक 'मा' कारं प्रविष्टः । ततस्तमेव 'मा' कारमारभ्याधोऽधो 'न्याथसी' इति त्रयोवर्णा मुष्टौ लेख्याः । ततोऽधश्चतुष्पथमध्ये तदन्तिम 'मा' कारं विन्यस्य तद्दक्षिणशाखायं 'रामाणां शं' इति चतुरो वर्णान् विन्यसेत् । ततो वामशाखायां विलोमेन 'मे दिश्यादु' इति चतुरो वर्णांल्लिखेत् । 'मा' कारोऽत्र चतुष्पथस्य 'मा' कारं प्रविष्टः । ततो मुष्टे रधत्सरुके 'दिमा' इपिवर्णद्वयं लेख्यमितिखड्गनिष्पत्तिः । स्पष्टश्चैतद्विवृत्तौ ।

**सचित्रखडगमुशलबन्धौ** यथा—

**मायाविनं महाहावा रसायातं लसद्भुजा ।**

**जातलीला यथासारवाचं महिष मावधीः ॥**

चापबन्धो यथा—

**मामभीदा शरण्या मुत्सदैवारुक्प्रदा च धीः ।**

**धीरा पवित्रा सन्त्रासात्रासीष्टा मातरारम् ॥**

बाणबन्धो यथा—

**माननापरुषं लोकदेवीं सद्रससन्नम ।**

**मनसा सादरं गत्वा सर्वदा दास्यसङ्गतम् ॥**

शूलबन्धो यथा—

**मामुषो राजस स्वासूंल्लोककूटेशदेवताम् ।**

**तां शिवावासिनां सिद्धाध्यासितां हि स्तुतां स्तुहि ॥**

शक्तिबन्धो यथा—

**माहिषाख्ये रणेऽन्यानु सानुनानेयमत्र हि ।**

**हिमातङ्कदिवामुं च कं कम्पिनमुपप्लुतम् ॥**

सचित्रं

६. शक्ति बन्धः ।

हलबन्धो यथा—

मातङ्गानङ्गविधिनामुना पादं तमुद्यतम् । तङ्गयित्वा शिरस्यस्य निपात्याहन्ति रंहसा ॥

सचित्रं

७ हलबन्धः

(क) खडगादिसप्तभिरेवबन्धैरष्टमो महाचक्रबन्धो जायते—

**चक्रबन्धलक्षणं** यथा सरस्वतीकण्ठाभरणे—

पुरः पुरो लिखेत्पादनत्र त्रीन् षडरीकृतान् । तुर्यं तु भ्रमयेन्नेमौ नामाङ्कश्चक्रसंविधिः ॥

पुरः पुरो लिखित्वान्यानग्रे लिखेद्यथा षडक्षराः सम्पद्यन्ते। सकलानि पूर्वोदाहरणान्येवो दाहरणानि वेदितव्यानि।

सचित्रं

८ चक्रबन्धः

**उदाहरणान्तरं यथा—**

**'सत्वं मानविशिष्टमाजिरभसादालम्ब्य भव्यः पुरो लब्धाद्यक्षयशुद्धिरुद्धरतरश्रीवत्सभूमिर्मुदा।**

**मुक्त्वा काममपास्तभीः परमृगव्याधः सनादंहरे रेकोघैः समकालमभ्रमुदयीरोपैस्तदा तस्तरे॥'**

मुरजबन्धः—

**'अत्र पादचतुष्केऽपि क्रमशः परिलेखिते। श्लोकपादक्रमेण स्याद्रेखासु मुरजत्रयी॥'**

**अयम्भावः**—पंक्तिचतुष्टयेन लिखितस्य पादचतुष्टयस्याधः क्रमेण यथाक्रमं प्रथम—द्वितीयतृतीयचतुर्थानूर्ध्वक्रमेण पञ्चम-षष्ठ-सप्तमाष्टमान् वर्णान् गृहीत्वा प्रथमः पादः। द्वितीयात्प्रथमं प्रथमाद्द्वितीयतृतीयौ द्वितीया चतुर्थपञ्चमौ प्रथमात्षष्ठसप्तमौ द्वितीयादष्टमं गृहीत्वा द्वितीयःपादः। तृतीयात्प्रथमं तुर्याद्द्वितीयतृतीयौ तृतीयाचतुर्य पञ्चमौ तुर्यात्षष्ठसप्तमौ तृतीयादष्टमं गृहीत्वा तृतीयः पादः। पादचतुष्टयस्योर्ध्वक्रमेण प्रथम-द्वितीय-तृतीयचतुर्थानधः क्रमेण पञ्चम—षष्ठ-सप्तमाष्टमान् गृहीत्वा चतुर्थः पादः पाठ्य इत्येवंक्रमेण मुरजसिद्धिः। मुरजबन्धोदाहरणं यथा—

**'साये नागमनारम्भे रसेनासीदनारता।**
**तारनादजमा मत्तधीरनागमनामया॥'**

उदाहरणान्तरं यथा—

**'सरला बहुलारम्भतरलालिवलारवा।**
**वारलाबहुलामन्दकरलावहुलामला॥**

सचित्रं

१०. मुरजबन्धः।

गोमूत्रिकाबन्धः—

**वर्णानामेकमात्रत्वं यद्येकान्तरमर्धयोः।**
**गोमूत्रिकेति तत्प्राहुर्दुष्करं तद्विदो विदुः॥'**

षोडशकोष्ठद्वये पङ्क्तिद्वयेऽर्धद्वय क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिः।

उदाहरणं यथा—

**प्रवृत्तेविलसद्धानं साध नेऽप्य विषादिभिः।**

**ववृषे विकसद्दानं युध माप्य विषाणिभिः॥**

तच्चित्रं यथा—

ननु महाकविभिर्भोजराजादिभिरस्य लक्षणोदाहरणाभ्यां बाहुल्येनैव प्रपञ्चितत्वात्कथमत्रापि न तथैव प्रतिपाद्यत इति जिज्ञासायामाह—काव्यान्तरिति। काव्यान्तर्मध्ये गडुग्रन्थिरित्यभियुक्ता: गडुभूतया ग्रन्थिरूपतया यथेक्षुचर्वणादशायां ग्रन्थी रसव्यवधायकस्तथैव काव्ये ग्रन्थिरूपत्वेनात्यन्तकठिनत्वान्नीरसतया चित्रालङ्कार इति तात्पर्यम्, तेन इह साहित्यदर्पणे न प्रपञ्च्यते लक्षणोदाहरणाभ्यां विस्तरतो नोपन्यस्यते। उक्तञ्च **ध्वनीकृताऽपि**—

**'यमकादिनिबन्धेषु पृथग्यत्नोऽस्य जायते।**

**शक्तस्यापि रसाङ्गत्वं तस्मादेषां न विद्यते॥'**

ननु—

**व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात्।**

**यत्र बाह्यार्थसम्बन्धः कथ्यते सा प्रहेलिका॥**

## रुचिरा

अथ चित्राख्यमनेकविधमप्यलङ्कारं 'कष्टं काव्यमेतत्' इत्याद्युक्तदिशा रसस्योपकारिणममन्वानो मनाङ्‌निर्दिशति ७५ **पद्माद्याकारहेतुत्वे**...इत्यादिना।

७५ वर्णानां शब्दस्वरूपाणामकाराद्यक्षराणाम्। पद्माद्याकारहेतुत्वे पद्ममादौ येषां (खड्गादीनां) तेषामाकार: सादृश्यप्रत्यायकं चिन्हं तस्य हेतवो हेतुभूतास्तत्त्वं तस्मिन्। सति सप्तमीयम्। चित्रं 'नामे'ति शेष:। **उच्यते**। तथा च—येये वर्णा यद्यदाकारहेतव: स्युस्ते ते तत्तदाकारभेदेन भिन्नं चित्रमिति व्यपदेशं लभन्ते इति निष्कृष्टम्।

'पद्माकार...' इत्यत्रादिशब्दाद्बोध्यमाह—**आदिशब्दात्। खड्गमुरजचक्रगोमूत्रिकादय:**। खड्ग: करवाल: शस्त्रविशेष:। मुरजो मृदङ्गो वाद्यविशेष:। चक्रं प्रसिद्धम्। गोमूत्रिका गोमूत्रधारा। आदिपदेन हारनागशक्तिधनुश्रृङ्गारकादिग्रहणम्। गोमूत्रमत्रास्तीति स्त्री चेद् गोमूत्रिका। 'अत इनि ठनौ।' ५/२/११५ इति ठन्। नन्वमूर्त्तानामपि वर्णानां कथं पद्माद्याकारता, कथं वा तया चित्रालङ्कारतया व्यपदेश इत्यत आह—अस्य चित्रालङ्कारस्य च। तथा **विधलिपिनिवेशविशेषवशेन** तथाविधा पद्मादिसदृश्यऽसौ लिपिस्तस्या निवेशविशेषस्तद्वशेन। पद्माद्याकारतया लेखविन्यासमहिम्नेत्यर्थ:। **चमत्कारविधायिनां** चमत्कारोऽलौकिकत्वमलौकिकत्वाभास इति यावत् (साक्षादलौकिकत्वस्य काव्यजीवातोस्तथा तिरोभावात्) तस्य विधायिनंस्तेषाम्। 'वक्तुश्चेतसी'ति शेष:। अपि। **वर्णानाम्। तथाविधश्रोत्राकाशसमवायविशेषवशेन** तथाविध: पद्माद्याकारं लेखविशेषं सङ्केतमहिम्ना प्रत्यानेयोऽसौ श्रोत्राकाशसमवायविशेष: कर्णरन्ध्रसम्बन्धविशेषस्तद्वशेन। **चमत्कारविधायिभि:** 'श्रोतुश्चेतसी'ति शेष:। वर्णै:। 'सम'मिति शेष:। **अभेदेन**। उपचाराल्लक्षणया। **शब्दालङ्कारत्वम्**। अयम्भाव:-पद्माद्याकारलिपिनिवेशविशेषमवलोक्य ये वर्णा उच्चार्य्यन्ते तैरेव श्रोतु: श्रोत्रे पद्माद्याकारा वर्णा जन्यमाना: कमपि चमत्कारमादधतीव, तेषां च कार्य्यकारणयोरभेदेनोपचाराज्जन्यानामपि वर्णानां चित्रालङ्कारव्यपदेशभाक्त्वं सङ्गच्छते। इति। यथाहु:—प्रदीपकारा: 'यद्यपि वर्णानामाकाशगुणानां खड्गाद्यकृतिहेतुत्वमसम्भवि, तथाऽपि विन्यस्तवर्णानुमापिका लिपय: सन्निवेशविशेषवत्त्वेन यत्र खड्गाद्याकारमुल्लासयन्ति, तच्चित्रमिति विवक्षितम्। तर्हि—'लिपिनिष्ठत्वाच्छब्दालङ्कारत्वं न स्या'दिति चेत्, न। तादृशवर्णविन्यासं विना तादृशलिपिविन्यासाभावात्। शब्दान्वयव्यतिरेकयोरभग्नत्वात्। लिपेर्वर्णाभेदस्य लोकप्रसिद्धिमाश्रित्य शब्दालङ्कारत्वमिति कश्चित्। तथाऽपि

श्रृङ्गारादिरसानुपकारकस्य कथमलङ्कारकत्वमिति चेत् कविनैपुण्यवशेन विस्मयोपकारकत्वादिति गृहाण । श्लेष-निर्वाह्यं चैतत् । न च तादृशं रसोपकारकम् ।' इति ।

अथोदाहर्तुमुपक्रमते—तत्र तेषु पद्माद्याकारभेदेनानेकविधेषुचित्रालङ्कारेष्विति यावत् । 'उदाह-र्त्तव्ये'ष्विति शेषः । **पद्मबन्धः** पद्मवद्बन्ध इति तथोक्तः । यथा । मम ग्रन्थकर्त्तुरित्यर्थः । 'कृता'विति शेषः । **'मारमासुषमा...**इत्यादौ ।

**'मारमासुषमा** मा नैव रमासुषमा लक्ष्म्या अप्युत्कृष्टाऽपि शोभा यस्या यदपेक्षयेति तथोक्ता । लक्ष्म्या अप्युत्कृष्टत्वं यच्छोभाऽपेक्षया न तादृशीति भावः । यद्वा-'मारमे'ति 'असुषमे' ति च पदच्छेदः । मां लक्ष्मीं रमयति विनोदयति विडम्बनास्पदं करोतीति यावत्, इति तथा । न सुषमा यदपेक्षया सा, स्वयमेव परममुत्कृष्टेत्यर्थः । अत एव-**चारुरुचा** चारू रमणीया या रुक्कान्तिस्तया, रमणीयकान्त्येत्यर्थः । **मारवधूत्तमा** मारस्य कामस्य वधू रतिस्तस्या उत्तमा, रतेरप्युत्कृष्टेति भावः । यद्वा—'अमारवधूत्तमा' इति पदच्छेदः । न मारवधूरुत्तमा यदपेक्षया सा । **मात्तधूर्त्ततमावासा** मा नैवात्तो गृहीतो धूर्त्ततमावासो यया सा । धूर्त्तश्चासौ तमो राहुरिति, तस्या वासः सङ्ग इति धूर्त्ततमावासः । तथा सौन्दर्य्येऽपि वञ्चकस्य राहोः कवलनावसरो यया न दत्तस्तादृशीति भावः । 'स्वर्भानुस्तु तमो राहु'रीत्यमरमाला । सा प्रसिद्धा । मे मम । वामा सुन्दरी प्रिया । **अस्तु** । किन्तु-रमा लक्ष्मीः । मा नैव । 'वामा मेऽस्तु' इति पूर्वेणान्वयः । कुत इत्यपेक्षायां वामाविशेषणानि व्यतिरेकेण रमापरत्वेन योज्यानि, तथा हि—मारं मृत्युं मिमीते कथयतीति मारमा । लक्ष्म्या योगवियोगयोः प्राणात्यय इति वेदान्तिनः । अत एव न सुषमाऽत्यन्तं शोभा यस्याः सेति-**असुषमा** । ननु तर्हि कथमसावुपास्यत इत्यपेक्ष्याह—रुचा । चारु (क्रियाविशेषणमिदम्) मारस्य कामस्य वधूर्भार्य्या तदपेक्षयोत्तमा । यद्वा-तत एव-अचारुरुचा निन्दितकान्त्या । मारस्य मृत्योर्भयभार्य्याया वधूः स्नुषा यातनेति यावत् तस्या उत्तमोत्कृष्टेति मारवधूत्तमा । 'मारोऽनङ्गे मृतौ विघ्ने ।' इति गोपालः 'वधूः पत्न्यां स्नुषानार्य्योः...' इति हैमः । 'दुरुक्तौ कलिराधत्त भयं मृत्युं च सत्तम । तयोश्च मिथुनं जज्ञे यातना निरयस्तथा ॥' इति भागवतम् । यदपेक्षा यातना (पीडा)ऽपि नेति भावः । मा नात्तो गृहीतेति मात्ताऽतन्त्रेत्यर्थः, सा चासौ धूर्त्ततमाया इवेति धूर्त्ततमवदावासो निवासः स्थानमिति यावद् यस्याः सेति । अत्र श्लेषानुगृहीतो व्यतिरेकः ॥ ८७ ॥'

अस्य स्वरूपं निर्दिशति—**एषः** । **अष्टदलपद्मबन्धो**ऽष्टपत्रकमलाकारबन्धः । **दिग्दलेषु** पूर्वादिषु चतुर्षु भागेषु । **निर्गमप्रवेशाभ्याम्** । **श्लिष्टवर्णः** श्लिष्टा अनेकत्वेऽप्येकायमाना वर्णा यत्र सः । किन्तु-**विदिग्दलेषु** ईशानादिषु भागेषु । अन्यथाऽश्लिष्टवर्ण इत्यर्थः । **कर्णिकाक्षरं** मध्यभागस्थो वर्णः । तु । श्लिष्टं नानापदान्व-योगि । एव । एवं यथा पद्मबन्धस्तथा । खड्गबन्धादिकम् । आदिना मुरजचक्रबन्धादेर्ग्रहणम् । **ऊह्यम्** । अत्र हेतुं निर्दिशति-काव्यान्तर्गडुभूततया काव्यस्य (इक्षोरिव) अन्तः गडुभूतः (ग्रन्थिभूतः) तत्र तत्तया । इह । चित्रम्—**न** । **प्रपञ्च्यते** ।

**उक्तिवैचित्र्यमात्रं सा च्युतदत्ताक्षरादिका।**

च्युताक्षरा च्युतदत्ताक्षरा च। उदाहरणम्—

**'कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजम्।**

**किं करोतु कुरङ्गाक्षी वदनेन निपीडिता ॥'**

तत्र 'रसाले' इति वक्तव्ये 'साले' इति 'र' च्युतः। 'वने' इत्यत्र 'यौवने' इति 'यौ' दत्तः। 'वदनेन' इत्यत्र 'मदनेन' इति 'म' च्युतः 'व' दत्तः। आदिशब्दात्क्रियाकारकगुप्त्यादयः। तत्र क्रियागुप्तिर्यथा—

**'पाण्डवानां सभामध्ये दुर्योधन उपागतः।**

**तस्मै गां च सुवर्णं च सर्वाण्याभरणानि च ॥'**

अत्र 'दुर्योधनः' इत्यत्र 'अदुर्योऽधनः' इति। 'अदुः' इति क्रियागुप्तिः। एवमन्यत्रापि।

---

## विवृति

काव्यस्यान्तर्गडुभूततया अन्तर्गडुवदकिंचित्करत्वेन। इह काव्यालंकारविचारप्रकरणे ॥ दण्ड्यादिभिरुक्तं प्रहेलिकायामलंकारत्वं दूषयति—**रसस्येति**। रसबोधस्येत्यर्थः। परिपन्थित्वाद्विलम्बकत्वात्। तथा च प्रत्युत दोषलक्षणाक्रान्ततया प्रहेलिका काव्ये नोपादेयेति भावः। ननु तर्हि प्राचीनैः किमित्यलंकारप्रकरणे प्रहेलिका प्रपञ्चितेत्यत आह—**उक्तीति**। वैचित्र्यमात्रं वैचित्र्यमात्रप्रयोजकम्। तथा च वैचित्र्यमात्रप्रयोजकत्वेनालंकारसाम्यात्तत्रालंकारपदप्रयोगो गौण एवेति। भावः ॥ **वन इति**। वक्तव्य इत्यन्वयः ॥ **एवमिति**। कारकसंबोधनगुप्त्यादावप्येवमुदाहार्यमित्यर्थः। तत्र 'दुर्योधन उपागतः' इत्यत्र 'योऽधन उपागतः' इत कर्तृपदं गुप्तम्। यथा वा—'ब्राह्मणेभ्यो नदीतीरे वस्त्राण्याभरणानि च। ददाति गां हिरण्यं च वसुधां च द्रुतं व्रज ॥' अत्र 'ब्राह्मण' इति संबोधनपदम्, 'इभ्यः' इति कर्तृपदम्, संप्रदानभ्रमजनकत्वाद् गुप्तम् ॥ एवमेकद्वित्रिचतुःस्वरनियमोऽप्युक्तिवैचित्र्यमेव। क्रमेण यथा—'करपद्मलसच्चक्रनक्रग्रस्तगजग्रह। भक्तभव्य भरव्यग्र्य मम व्यसनमर्दय ॥', 'श्रीदीप्ती ह्रीकीर्ती धीनीती गीः प्रीती। एधेते द्वे द्वे ते ये नेमे देवेशे ॥' 'क्षितिविजितिस्थितिविहितिव्रतरतयः परगतयः। उरुरुरुधुर्गुरु दुधुवुर्युधि कुरवः स्वमरिकुलम् ॥', 'आम्नायानामाहान्त्या वाग्गीतीरीतीः प्रीतीर्भीतीः। भोगो रोगो मोदो मोहो ध्येये धेच्छे देशे क्षेमे ॥' एवमेकादिचतुष्पर्यन्तवर्णस्थाननियमानामुदाहरणानि दण्डिनि द्रष्टव्यानि ॥

## विवृतिपूर्तिः

**रसस्येति**। अत एव भोजराजेनाप्युक्तम्—'प्रहेलिका सकृत्प्रश्नः सापि षोढा च्युताक्षरा। दत्ताक्षरोभयं मुष्टिर्बिन्दुमत्यर्थवत्यपि ॥ क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे। परव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥' इति। एवमन्तः प्रश्न-बहिः प्रश्नबहिरन्तः प्रश्न-जाति प्रश्न-पृष्टप्रश्न-उत्तरप्रश्न-प्रभृतयोऽपि क्रीडामात्रोपयोगिनः। एतेषां बन्धविशेषाणां प्रपञ्चः सरस्वतीकण्ठाभरण-काव्यालंकारादौ द्रष्टव्यः ॥

**उदाहरणमिति**। यथा वा—'तदा क्षणेन वीर्यस्यं समदः सहितः पदम्। रेजे स्तुतनयः साक्षान्नयवेदी क्षतामतः ॥' अत्र यथेष्टाभ्यां मात्रापहारदानाभ्यां श्लोकद्वयमुत्पद्यते—'तदाक्षणेन वर्यस्य समिदः सहतः पदम्।

रेजेऽस्तुतनयः साक्षान्नयवेदे क्षतामतिः ॥ तदेक्षणेन वर्यस्य सामदः सहितः पदम् । रेजे स्तुतिनयः साक्षान्नयवादोक्षितामृतः ॥' वर्यस्य प्रार्थनीयस्य पदम् । ततः सर्वं लभ्यत इत्यर्थः । समशब्दः सर्वपर्यायः । सममस्ति येषां ते समिनः सर्वेश्वरा दैत्यास्तान्द्यति खण्डयति यः । सहतः सहिष्णोः पदम् । अस्तस्त्यक्तस्तनयोऽन्धको येन । अन्धकस्य तत्पुत्रत्वात् । नयस्य वेदे ज्ञाने सति क्षतामतिर्निहतकुबुद्धिः । अथवैवं विपर्ययः—ईक्षणेन वर्यस्य पदं दर्शनमात्रेणाभीष्टप्रदः । सहतिः सह शत्रुहिंसया वर्तते स्तुतिर्नयो यस्य । नयवादेनोक्षितं सिक्तं स्तुतममृतं येन सः ॥

**क्रियेति** । क्रियाकारकगुप्त्यादीनां विशेषोदाहरणानि मदीयमित्र-पण्डित-काशिनाथसंकलिते सुभाषितरत्नभाण्डागारे द्रष्टव्यानि ॥

## विज्ञप्रिया

प्रहेलिकां वक्तुमाह—**रसस्येति** । नालङ्कारो न रसप्रकर्षकोऽलङ्कार इति, किन्तु उक्त्यलङ्कार एवेत्याह—**उक्तिवैचित्र्यमात्रमिति** । तथा च **वैचित्र्यमलङ्कार** इति अलङ्कारसामान्यलक्षणाक्रान्तत्वाद् उक्त्यलङ्कार एव स इत्यर्थः । सा च्युतदत्तेत्यादित्रिप्रकारा क्रिया गुप्त्यादिका च भवतीत्याह—**च्युतदत्तेति** । च्युताक्षराऽयुक्तैकाक्षरा । दत्ताक्षरा उक्ताधिकैकाक्षरा । च्युतदत्ताक्षरा एकाक्षरं च्यावयित्वा तत्स्थले दत्तापराक्षरा ।

एतत्त्रयस्य एकमुदाहरणमाह—**कूजन्तीति** । अत्र यथाश्रुतेऽर्थसम्भवेपि अनुपयुक्तकथनरूपत्वेन च्युतदत्ताक्षरत्वे एव तात्पर्य्यात् । प्रहेलिकात्वं तत्र यथाश्रुतेऽर्थो यथा—कोकिलाः शालवृक्षे कूजन्ति । नारीणां यौवनेऽम्बुजं फुल्लम् । निपीडिता कुरङ्गाक्षी वदनेन किं करोतु इति । अनुपयुक्तकथनमेतत् । च्युतदत्ताक्षरत्वे तु भवत्येव उपयुक्तकथनम्—यथा—"कूजन्ति रसाले कोकिलाः । वने जले चाम्बुजं फुल्लम् । एभिरुद्दीपकैर्मदनेन निपीडिता सती कुरङ्गाक्षी किं करोत्विति ।

अत्र च्युतदत्ताक्षराणि दर्शयति-**अत्रेति** । **पाण्डवानामित्यादि स्पष्टम्** । **कारकगुप्त्यादौ** यथा मम—

**"षड्जसम्वादमापन्नैः स्वरैः श्रुतिमनोहरैः ।**

**गिरिशृङ्गस्थितं सर्वं मयूरं जयति ध्रुवम् ॥" इति**

अत्र मयूरं जयति इत्यत्र लुप्तः कर्त्ता । सिद्धान्ते तु मयुस्तुरङ्गवदनो गिरिशृङ्गस्थितं सर्वं जनं रञ्जयतीत्यर्थः । कर्मगुप्तिर्यथा—

**"कर्मभिर्बहुभिः श्रान्तः पुरुषो वारयत्ययम् ।**

**अपयातपरिश्रान्तेरस्य दास्यामि वेतनम् ॥"**

अत्र पुरुषोऽयं वारयतीति । अस्य कर्म गुप्तम् । सिद्धान्ते तु वाः जलं पुरुषोऽयमयति याति । अक्षरलोपगुप्तिः विरुद्धप्रदर्शनं च यथा—

**"मुकुन्देनामुना नूनं शुभ्रेण वरवर्णिनि ।**

**हसितेनासितेनापि राजमाना व्रजाङ्गने ॥"**

अत्र मुकुन्देन शुभ्रेण हसितेनाऽसितेन इति विरुद्धधर्मवत्त्वम् । अत्रैव कस्यचिदक्षरस्य लोपो गुप्तः । सिद्धान्ते तु मुकुन्दपदस्य मुकाराहित्यात् कुन्देन इत्यर्थः । तथा च तेन कुन्दवैशिष्ट्येन यद् हसितं तेन राजमानाऽसीत्यर्थः ।

## कुसुमप्रतिमा

अय "प्रहेलिका सकृत्प्रश्नः" इति भोजराजलक्षणात् "अभिप्रेतार्थसंवरणकारिवचनविन्यासः प्रहेलिका" इति साम्प्रदायिकलक्षणात् "प्रहेलिका तु सा ज्ञेया वचः संवृतिकारि यत्" इति प्राचीनान्तरलक्षणाच्च प्रहेलिकाया अलङ्कारतया तल्लक्षणं भवताप्यवश्यमभिधेयमित्याह रसस्येति। रसस्य परिपन्थित्वात् आस्वादविलम्बजनकत्वेन विरोधित्वात् प्रलेहिका नालङ्कारः। किन्तु च्युतदत्ताक्षरादिका सा प्रहेलिका उक्तिवैचित्रयमात्रं केवलोक्तिगताश्च-र्य्यमात्रप्रयोजिकेत्यर्थः। तथा च रसास्वादविलम्बजनकतया दोषत्वस्यैव सम्भवेऽपि उक्तिवैचित्रयमादायैव प्राचां प्रहेलिकायामलङ्कारपदप्रयोगः, स पुनर्गौण एवेत्याशयः।

आदिशब्दग्राह्यं दर्शयति च्युतेति। च्युतं दत्तञ्च अक्षरं यस्यां सा। भोजराजस्तु अक्षर मुष्टिः बिन्दुमती अर्थ वती चेत्यधिकं भेदत्रयं मन्यमानः साकल्येन प्रहेलिकां षड्विधामाह स्म।

एकोदाहरणेनैव च्युताक्षरादिभेदत्रयं दर्शयति कूजन्तीति। सखीं प्रति सख्यन्तरस्योक्तिरियम्। कोकिलाः साले रसाले चूततरौ कूजन्ति अव्यक्तं शब्दायन्ते, यौवने वने जले अम्बुजं पद्मं फुल्लं प्रस्फुटितम्, वदनेन मदनेन निपीड़िता कुराङ्गाक्षी हरिणलोचना सा नायिका पतिविरहादिदानीं किं करोतु। इति ब्रूहीति भावः।

उदाहृतं च्युताक्षरत्वादिस्थलं दर्शयितुमाह अत्रेति।

आदिशब्दस्य व्यवस्थावाचित्वात् पुनरपि तद्ग्राह्यान् दर्शयितुमाह आदिशब्दादिति। अत्राप्यादिशब्दात् सम्बोधनगुप्त्यादीनां ग्रहणम।

पाण्डवानामिति। राजसूययज्ञसमाप्तौ दानवर्णनमिदम्। पाण्डवानां सभाया मध्ये यः अधनो दरिद्र उपागत उपस्थित आसीत्, तस्मै ... हिरण्यं सुवर्णञ्च, सर्वाणि आभरणानि च अदुर्दत्तवन्तः, दाननियुक्ताः कर्णादय इति शेषः।

नन्वत्र कथं क्रियागुप्तिरित्याह अत्रेति। तथा चापाततः 'दुर्य्योधनः' इति धृतराष्ट्रज्येष्ठपुत्रस्यैव प्रतीतेः क्रियागुप्तिरिति भावः।

एवमिति। अन्यत्र कारकगुप्त्यादावप्येवमुदाहरणमूह्यमित्यर्थः। यथा—पाण्डवानामित्यत्रैव 'उपागतः' इत्यस्य 'अधनः' इति कर्त्तकारकगुप्तिः। विस्तरस्तु सरस्वतीकण्ठाभरणकाव्यादर्शादावनुसन्धेयः।

## विमला

रसस्येति।—रसबोधस्येत्यर्थः, परिपन्थित्वात्—प्रतिकूलत्वात्, विलम्बकत्वादित्यर्थः। ननु तर्हि प्राचीनैः किमित्यलङ्कारप्रकरणे प्रहेलिका प्रपञ्चिता? इत्यत आह, उक्तोत्यादि।—सा—प्रहेलिका, उक्तिवैचित्र-यमात्रं—वचनचातुर्य्यमात्रप्रयोजकमित्यर्थः। तथा च वैचित्रयमात्रप्रयोजकत्वेन अलङ्कारसाम्यात् तत्र अलङ्कारपद-प्रयोगो गौण एव इति भावः। सा च—प्रहेलिका, च्युतेति।—च्युताक्षरा, दत्ताक्षरा, च्युतदत्ताक्षरा च तत्प्रभृतिका, (आदिपदेन क्रियाकारकगुप्त्यादीनां ग्रहणम्)।

कूजन्तीति।—कोकिलाः,—पिकाः, साले—रसाले इत्यर्थः, कूजन्ति—अव्यक्तमधुरं रुवन्ति, यौवने—वने, जले इत्यर्थः, अम्बुजं—पद्मं, फुल्लं—विकसितं, कुरङ्गाक्षी—हरिणनयना, वदनेन—मदनेनेत्यर्थः, निपीड़िता—आक्रान्ता सती, किं करोतु?—किं विदधातु? न किमपीत्यर्थः।

पाण्डवानामिति ।—राजसूययज्ञोत्सवे दानाद्यध्यक्षतया नियुक्तानां कर्णादीनामतिथ्याराधनवर्णनपरमिदं पद्यम् । पाण्डवानां सभामध्ये दुर्य्योधनः,—धार्त्तराष्ट्रः, उपागतः,—प्राप्तः, तस्मै गाञ्च—भूमिञ्च, हिरण्यञ्च—सुवर्णञ्च, सर्वाणि आभरणानि च—अलङ्कारांश्च, इति स्फुटं प्रतीयमानेऽर्थे क्रियापदमध्याहार्य्यं प्रतिभासते । अत्र "अदुः" इति क्रियापदं, तच्च अस्थाने संहिताविधानेन गोपितमिति बोध्यम् । क्रियापदस्य प्रत्ययानन्तरन्तु, पाण्डवानां सभामध्ये यः अधनः,—धनहीनः, उपागतः,—उपस्थितः, तस्मै गाञ्च हिरण्यञ्च सर्वाणि आभरणानि—अलङ्कारांश्च, अदुः,—दत्तवन्तः, अतिथिसमाराधने नियुक्ताः पाण्डवा इति कर्त्तृपदमत्र बोध्यम् ।

अत्रेति । एवमिति ।—कारकसम्बोधनागुप्त्यादौ अपि एवमुदाहार्य्यमित्यर्थः । तत्र "दुर्य्योधन उपागतः" इत्यत्र "यः अधन उपागतः" इति कर्त्तृपदं गुप्तम् । यथा वा—"ब्राह्मणेभ्यो नदीतीरे वस्त्राण्याभरणानि च । ददाति गां हिरण्यञ्च वसुधाञ्च द्रुतं व्रज ॥" अत्र "ब्राह्मण" इति सम्बोधनपदम्, "इभ्यः" इति कर्त्तृपदं सम्प्रदानभ्रमजनकत्वात् गुप्तम् । एवमेकद्वित्रिचतुः स्वरनियमोऽपि उक्तिवैचित्र्यमेव; क्रमेण यथा—"करपद्यलसच्चक्र-नक्रग्रस्तगजग्रह । भक्तभव्यभरव्यग्र मम व्यमनमर्दय ॥" "श्रीदीप्तौ ह्रीकीर्त्ती धीनीती गोः प्रीती । एधेते द्वे द्वे ते ये नेमे देवेशे ॥" "क्षितिविजितिस्थितिविहितिव्रतरतयः परगतयः । उरु रुरुधुर्गुरु दुधुवुर्युधि कुरवः स्वमरिकुलम् ॥" "आम्रायानामाहान्त्या वाग्मीतीरीतीः प्रीतीर्भीतीः । भोगो रोगो मोदो मोहो ध्येये धेच्छे देशे क्षेमे ॥" एवमेकादिचतुष्पर्य्यन्तवर्णस्थान—नियमांनाम् उदाहरणानि दण्डिनि द्रष्टव्यानि ।

## लक्ष्मी

**'प्रहेलिका सकृत्प्रश्नः साऽपि षोढा च्युताक्षरा । दत्ताक्षरोऽभयं मुष्टिर्बिन्दुमत्यर्थवत्यपि ॥'**

**'क्रीडागोष्ठविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे । परव्यामोहने चाऽपि सोऽपयोगाः प्रलेहिकाः ॥'**

इति सप्रभेद-सरस्वतीकण्ठाभरणकृल्लक्षणात्, 'प्रहेलिका तु सा ज्ञेया वचः संवृतकारि यत्' इत्यादिप्राचीनान्तरलक्षणकरणाच्च प्रहेलिकाया अलङ्कारतया तल्लक्षणस्यावश्यं वक्तव्यत्वात्कथमत्रोपेक्षितमित्याकाङ्क्षायामाह—**रसस्येति ।** रसस्य काव्यात्मभूतचमत्कारस्य परिपन्थित्वात् आस्वादविलम्बोत्पादकत्वे विरोधत्वात् प्रहेलिका प्रहेलयति सूचयति भावं न तु स्वरूपमिति या सा तथोक्ता, नालङ्कारः प्रत्युत तथा दोषलक्षणाक्रान्ततया त्याज्येति शेषः । ननु तर्हि प्राचीनैः कथमलङ्कारप्रकरणे प्रलेहिका प्रपञ्चितेत्यत आह—च्युतेति । च्युतं च दत्तं चेति, च्युतदत्ते चेतिच्युतदत्तानि तथा भूतान्यक्षराणि यत्र स आदौ यस्याः सा तादृशीत्यर्थः । उक्तिवैचित्र्यमात्रं केवलोक्तिगतक्रीडा मात्रप्रयोजिकेत्यर्थः । तथा चाहुः—'मात्राविन्दुच्युतके प्रहेलिकाकारकक्रियागूढे । प्रश्नोत्तरादिचान्यक्रीडामात्रोपयोगमिदम् ॥'

एवञ्च रसास्वादविलम्बोत्पादकतया दोषत्वस्यैव सम्भवेऽपि उक्तिवैचित्र्यमादायैव प्राचां सरस्वतीकण्ठाभरणकृदादीनां तत्रालङ्कारपदप्रयोगः, स च पुनर्गौण एव । परे तु उक्तिवैचित्र्यमात्रमित्यनेन वैचित्र्यमलङ्कार इत्यलङ्कारसामान्यलक्षणाक्रान्तत्वात् उक्त्यलङ्कार एव स इत्यर्थ इत्याहुः ।

अत्रादिपदग्राह्यं प्रदर्शयति—च्युतेति । च्युताक्षरा अयुक्तैकाक्षरा दत्ताक्षरा उक्ताधिकैकाक्षरा, च्युतदत्ताक्षरा एकाक्षरं च्यावयित्वा तत्स्थाने दत्तापराक्षरा । सरस्वतीकण्ठाभरणकृत्तुषाड्विध्यमाह ततूपपादितमेवास्त्युपरिष्टात् । एतद्भिन्ना अपि अन्तः प्रश्नः बहिः प्रश्नबहिरन्तः प्रश्न-जातिप्रश्नपृष्टप्रश्नोत्तरप्रश्नप्रभृतयोऽपि प्रहेलिकाः । क्रीडामात्रोपयोगिन एवेत्यगन्तव्याः ।

च्युताक्षरादिभेदत्रयस्य एकमुदाहरणं दर्शयति—**कूजन्तीति**। सहचरीं प्रति कस्याश्चिन्नायिकाया उक्तिरियम्। अत्र यथाश्रुते अर्थसम्भवेऽपि अनुपयुक्तकथनरूपत्वेन च्युतदत्ताक्षरत्वे एव तात्पर्यात् प्रहेलिकात्वम्। तत्र यथाश्रुतेऽर्थो यथा—कोकिलाः साले शालवृक्षे कूजन्ति, नारीणां यौवने अम्बुजं फुल्लम्, निपीडिता कुरङ्गाक्षी वदने निपीडिता किं करोतु इति। परन्तु अनुपयुक्तकथनमेतत्। च्युतदत्ताक्षरत्वे तु भवत्येव उपयुक्तत्वम्। यथा—कोकिलाः साले रसाले कूजन्ति 'कुहू' इति कलमुद्गिरन्ति, यौवने वने जले च अम्बुजं कमलं फुल्लं विकसितम्, वदनेन मदनेन निपीडिता कुरङ्गाक्षी मृगनयना सा नायिका स्वामिवियोगात् सम्प्रति किं करोतु इति कथयेत्याशयः।

उक्तोदाहरणे च्युतदत्ताक्षराणि दर्शयति—अत्रेति। **साले** इति। इत्येवोक्तमितिशेषः। च्युतो वर्ण इति शेषः। एवमन्यत्र।

पुनरपि आदिपदेन ग्राह्यान् दर्शयति—आदिशब्दादिति। अत्राऽप्यादिपदेन सम्बोधनगुप्तयादेः परिग्रहो बोध्यः। उदाहर्त्तुमाह—तत्रेति।

**पाण्डवानामिति**। युधिष्ठिरकृतराजसूययज्ञान्ते दानवर्णनेयम्। पाण्डवानां युधिष्ठिरादीनां पाण्डुतनयानामित्यर्थः, सभाया मध्ये च अधनोऽकिञ्चन उपागतः सम्प्राप्तः आसीत् तस्मै गां हिरण्यं सुवर्णं च सर्वाणि सर्वप्रकाराणि आभरणानि भूषणानि च अदुर्दत्तवन्तः दानाध्यक्षाः कर्णादय इति शेषः।

अत्र कथं क्रियागुप्तिरवगम्यते इत्युपपादयति—अत्रेति। एवञ्च श्रवणमात्रेण 'दुर्योधन' इत्यनेन धृतराष्ट्रज्येष्ठपुत्रस्यैव बाधात् क्रियागुप्तिरित्यभिप्रायः।

एवमिति। अन्यत्र-कारक-गुप्त्यादावपीत्यमेवोदाहरणमूह्यमित्यर्थः। यथा उक्तोदाहरण एव दुर्योधन उपगतः इत्यत्र योऽधन उपागत इति कर्त्तृकारकगुप्तिः।

यथा वा कारकगुप्त्युदाहरणम्—

'षड्जसम्वादमापन्नैः स्वरैः श्रुतिमनोहरैः। गिरिश्रृङ्गस्थितं सर्वं मयूरं जयति ध्रुवम्॥'

अत्र 'मयूरं जयति' इत्यत्र लुप्तः कर्त्ता सिद्धान्ते—तु मयुस्तुरङ्गवदनोगिरिश्रृङ्गस्थितं सर्वं जनं रञ्जयतीत्यर्थः। सम्बोधनगुप्तिर्यथा—

**'ब्राह्मणेभ्यो नदीतीरं वस्त्राण्याभरणानि च।**
**ददाति गां हिरण्यं च वसुधां च द्रुतं व्रज॥'**

अत्र ब्राह्मणेतिसम्बोधनं कारकगुप्तिरपि। 'इभ्य' इति कर्त्तृपदम्, सम्प्रदानभ्रमजनकत्वाद्गुप्तम्। इतोऽधिकस्तु सरस्वतीकण्ठाभरण—काव्यालङ्कारादौ बोध्यम्।

## रुचिरा

प्रहेलिकाया अलङ्कारत्वं प्रसह्य निषेधति—७६ रसस्येत्यादिना।

**७६ रसस्य** काव्यजीवातोश्चमत्कारस्यापरिपन्थित्वात् परिपन्थिन्या विरोधिन्या भावस्तत्त्वं तस्मात्। काव्यजीवातुभूतं चमत्कारमपगमयतीति हेतोरिति भावः। **प्रहेलिका** प्रहेलयति सूचयति भावं ननु स्वरूपार्थमिति तथोक्ता। **अलङ्कारः**। न 'प्रत्युत तथादोषलक्षणाक्रान्ततयाऽपहेये' ति शेषः। ननु तर्हि—'व्यक्तीकृत्य कमप्यर्थं

स्वरूपार्थस्य गोपनात्। यत्र बाह्यार्थसम्बन्धः कथ्यते सा प्रहेलिका॥' 'प्रहेलिका सकृत्प्रश्नः साऽपि षोढा च्युताक्षरा। दत्ताक्षरोभयं मुष्टिर्बिन्दुमत्यर्थवत्यपि॥ क्रीडा गोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे। पराव्यामोहने चापि सोपयोगाः प्रहेलिकाः॥' इत्यादिना किमिति जरत्तरा आद्रियन्ते स्मेत्यत आह—सा प्रहेलिकेति भावः। **च्युतदत्ताक्षरादिका** च्युतं च दत्तं चेति, च्युतदत्ते चेति च्युतदत्तानि, तथाभूतान्यक्षराणि यत्र, स आदौ यस्याः सा तथाभूतेति भावः। **उक्तिवैचित्र्यमात्र्यमुक्तेर्वैचित्र्यमिति** तदेवेति तथोक्तम्। तथाहुः—'मात्राबिन्दुच्युतकेप्रहेलिकाकारकक्रियागूढे। प्रश्नोत्तरादि चान्यक्रीडामात्रोपयोगमिदम्॥' इति। अयम्भावः—च्युताक्षरादत्ताक्षरेत्येवमनेकविधाऽपि प्रहेलिका केवलमुक्तेर्वैचित्र्यरूपा रसं च काव्यजीवातुमपनयतीत्यलङ्कार इति न व्यपदेष्टुमर्हा प्रत्युत तथाभूताऽसौ काव्येऽपनेया इति॥ ६६॥

'च्युतदत्ताक्षरादिका' इत्यस्य 'च्युतदत्ताक्षरा' इत्यंशं व्याचष्टे—**च्युतक्षारा। दत्ताक्षरा। च्युतदत्ताक्षरा।** च। चात्र समुच्चयार्थः।

उदाहर्त्तुमुपक्रमते, **यथा—उदाहरणम्—'साले** रसाले। अत्र 'र' इत्यस्य च्युतत्वम्। **कोकिलाः। कूजन्ति** 'कुहू' इति कलमुद्गिरन्ति। **यौवने** वन इत्यर्थः। अत्र 'यौ' इत्यस्य दत्तत्वम्। **अम्बुजं** कमलम्। **फुल्लम्। वदनेन** मदनेन कामेनेति भावः। अत्र 'म' इत्यस्य च्युतत्वं, 'व' इत्यस्य च दत्तत्वं चेति बोध्यम्। निपीडिता। कुरङ्गाक्षी मृग गलोचना। **किम्। करोतु** कुर्य्यात्॥ ८८॥' इति।

अत्र प्रहेलिकायास्त्रैविध्यं लक्षयति—अत्रास्मिन्नुदाहृते पद्य इत्यर्थः। **'रसाले' इति वक्तव्ये** 'अपि' इति शेषः। **'साले' इत्ये** 'वोक्त'मिति शेषः। तस्मात्—**'र' इति** 'वर्ण' इति शेषः। **च्युतः। 'वने' इत्यत्र** 'वक्तव्येऽपी' ति शेषः। **'यौवने'** इत्युक्तमिति शेषः। तस्मात्—**'यौ' इति** 'वर्ण'इति शेषः। **दत्तः। 'मदनेन' इत्यत्र** 'वक्तव्येऽपि'इति शेषः। **'वदनेन'** इत्यु'क्त'मिति शेषः। तस्मात् 'यौ'इति 'वर्ण' इति शेषः। **च्युतः।** 'व' इति 'वर्ण' इति शेषः। **दत्तः।** तथा च—क्रमात् तिस्रोऽत्र प्रहेलिका इति निष्कृष्टम्। अथादिपदद्योत्यमाह—**आदिपदात्। क्रियाकारकगुप्त्यादयः** 'प्रहेलिका ग्राह्या' इति शेषः। तत्र तासु मध्ये। **क्रियागुप्तिः** क्रियायाः क्रियापदस्य गुप्तिर्गोपनं यत्र सेति तथोक्ता। अत्र व्यधिकरणो बहुव्रीहिः। सा—यथ

**'पाण्डवानां** युधिष्ठिरादीनां पाण्डुपुत्राणामित्यर्थः। **सभामध्ये। दुर्योधनो** धृतराष्ट्रपुत्रस्तेषां भ्रातेति भावः। **उपागतः।** तस्मै दुर्योधनाय। **गाम्। च। सुवर्णम्। रत्न। सर्वाणि** सर्वप्रकाराणि। **आभरणानि** भूषणानि च॥ ८९॥'

अत्रास्मिन्नुदाहृते 'असमापितक्रियाऽऽकाङ्क्षोत्थाने' इति यावत्। **'दुर्योधन' इत्यत्र** 'श्रूयमाणे शब्दविशेषे' इत्यर्थः। 'अदुर्योऽधन' इत्य 'कारश्लेष' इति शेषः। तस्मात् 'अदु'रितिक्रियागुप्तिः 'अदु'रिति क्रियाया गुप्तिरिति तथोक्ता। **एवम्। अन्यत्र** कारकगुप्त्यादौ। अपि। कारकगुप्त्यादयो बोद्धव्या' इति शेषः।

अथावसरप्राप्तेष्वर्थालंकारेषु सादृश्यमूलेषु लक्षितव्येषु तेषामप्युपरजीव्यत्वेन प्राधान्यात्प्रथममुपमामाह—

**साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः ॥ १४ ॥**

रूपकादिषु साम्यस्य व्यङ्ग्यत्वम्, व्यतिरेके च वैधर्म्यस्याप्युक्तिः, उपमेयोपमायां वाक्यद्वयम्, अनन्वये त्वेकस्यैव साम्योक्तिरित्यस्या भेदः ।

---

## विवृति

अर्थालंकारान्निरूपयितुमुपमानिरूपणस्य प्राथमिकत्वे हेतुमाह—**अथेति**। शब्दालंकारानिरूपणानन्तरमित्यर्थः। अवसरप्राप्त्या अवसरसंगत्या निरूपणयोग्येषु अर्थालंकारेषु मध्ये **सादृश्यमूलेषु** सादृश्यप्रतिभोत्थापितेषु स्मरणादिषु लक्षितव्येषु निरूपणीयेषु तेषां सादृश्यमूलालंकाराणामूपजीव्यत्वेन उत्थापकत्वेन प्राधान्यात्प्रथममुपमां निरूपयतीत्यर्थः। एवं च हेतुता संगतिर्दर्शिता ॥ **साम्यमिति**। वाक्यस्यैकत्वे सति द्वयोः साम्यमुपमेत्यन्वयः। साम्यं साधर्म्यं गुणक्रियादिरूपम्। वाच्यमभिधया बोध्यम्।

अवैधर्म्यं विरुद्धधर्मोक्तिशून्यम्। वैधर्म्याविषयकैकवाक्यविषयत्वे सतीवादिवाच्यमुभयसंबन्धिसाधर्म्यमुपमेत्यर्थः। वाच्यादिपदचतुष्टयस्य क्रमेण व्यावृत्तिमाह—**रूपकादिष्विति**। आदिना परिणामादिग्रहणम्। 'मुखं चन्द्रः' इत्यभेदप्रत्ययानन्तरं 'मुखं चन्द्रसाधर्म्यवत्' इति व्यञ्जनया साधर्म्यप्रतीतिरिति भावः। ननु 'विधवति मुखाब्जं—' इत्यादौ वक्ष्यमाणोदाहरणे साम्यस्य गम्यत्वात्कथं लक्षणगमनमिति चेत्। न। 'दध्यानय' इत्यादौ लुप्तस्यामादेः प्रतिसंधानात्कर्मतादेरिव लुप्तायप्रत्ययप्रतिसंधानात्साम्यस्य वाच्यताङ्गीकारात्समासस्यैवोपमावाचकत्वाङ्गीकाराच्च। अत एव दण्डिनोक्तं सादृश्यवाचकप्रकरणे—'समासश्च बहुव्रीहिः शशाङ्कवदनादिषु' इति। चकारात्कर्मधारयश्च। ननु तथापि सादृश्यवाचकसमासस्य सत्त्वे 'क्विप्समासगता द्वेधा धर्मेवादिविलोपने' इति वक्ष्यमाणमसंगतमिति चेत्। न। समासस्य सादृश्यवाचकत्वमस्वीकुर्वतां प्राचां मतानुसारेणैव तत्प्रकारस्य प्रणेष्यमाणत्वात्। एवं 'वदनं मृगशावाक्ष्याः सुधाकरमनोहरम्' इत्यौपम्यवाचकस्य लोपे यदुदाहृतं तदपि प्राचीनमतानुसारेणैव वेदितव्यम्। एतन्मते तु प्रथमं धर्मलोपस्य द्वितीयं पूर्णाया उदाहरणं बोध्यम्। ननु तथापि 'मुखमस्या विधुं द्वेष्टि, 'सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम्' इत्यादावव्याप्तिः साम्यस्य गम्यत्वात्। न च 'स्पर्धते जयति द्वेष्टि' इत्यादिदण्डिदर्शनात्तत्रापि साम्यस्य वाच्यत्वमिति वाच्यम्। तस्य साम्यव्यञ्जकपरत्वेनोपपत्तौ साम्यवाचकत्वकल्पनाया अन्याय्यत्वात्। अत्रोच्यते—द्वेषस्पर्धयोश्चेतनधर्मत्वेन मुखनारङ्गकयोरसंभवादुपमायां पर्यवसानेन तादृशस्थले निदर्शनालंकारस्यैवाङ्गीकारात्। 'इवादि' इत्युपादानात् 'मुखचन्द्रौ मनोज्ञौ" इत्यत्रोभयसाम्यस्य वाच्यत्वेऽपि नातिव्याप्तिः। **व्यतिरेके इति**। 'अकलङ्कि मुखं तस्या न कलङ्की यथा विधुः' इत्याद्येकवाक्यगतव्यतिरेक इत्यर्थः। अत्राकलङ्कित्वमुपमानस्य कलङ्कित्वमुपमेयस्य वैधर्म्यम्। नन्वत्र साम्यस्य वाच्यत्वेऽपि तस्य नञा मुखे संबन्धाभावबोधादुभयसंबन्धित्वमेव नास्ति, कथमत्रोपमाप्रसक्तिरिति चेत्। न। मुखे चन्द्रसाधर्म्यबाधासंभवेन नञो मुखस्योत्कर्षातिशयप्रतीतिमात्रे तात्पर्यात्। **उपमेयोपमायामिति**। 'मतिरिव कमला कमलेव मतिः—' इत्यादावित्यर्थः। अत्र श्रीमत्योरतुल्यत्वं साधर्म्यं वाक्यद्वयेन प्रतिपाद्यते। रसनोपमादेरपि विलक्षणवैचित्र्याधायकत्वेनालंकारान्तरत्वमित्यनेनैव तद्वारणमित्यवधेयम्। **वाक्यैक्य इति**। वाक्यान्तरव्यव-

च्छेदकमेव न त्वेकपदव्यवच्छेदकम्। तेन मुखाब्जमित्यादावेकपदेऽप्युपमा। **अनन्वये त्विति**। 'चन्द्रश्चन्द्र इवातन्त्रः' इत्यादावित्यर्थः। अत्रैकस्यैव चन्द्रस्यातन्त्रत्वं साधर्म्यमिवशब्देन प्रतिपाद्यते। ननु 'घटत्वमिव पटत्वं नित्यम्' इत्यादेरप्युपमात्वं स्यादिति चेष्टमेव, किंतु वैचित्र्यविशेषानाधायकत्वात्तस्यामलंकारव्यवहारो नास्तीति विशेषः। एवमन्यत्रापि बोध्यम्। केचित्तु—'इवादिशब्दवत्तुल्यादिपदेनापि साधारणधर्मस्य प्रतिपादनात्करिष्यमाणश्रौत्यार्थीविभागानुपपत्त्या साधारणधर्मसंबन्ध एवोपमा, न तु साधारणधर्ममात्रम्। स च प्रतियोगितारूपः। 'चन्द्र इव मुखम्' इत्यादौ चन्द्रप्रतियोगिकसादृश्याश्रयो मुखमितिप्रतीतेरानुभविकत्वात्। तादृशसंबन्धश्च इवादिशब्देन वाच्यस्तुल्यादिपदेनार्थवशलभ्य इति 'श्रौत्यार्थीविभागः' इत्याहुः। तन्न। आर्थ्यामुपमायामव्याप्तेः। तत्र साधारणधर्मसंबन्धस्य विभक्त्यादिप्रतिसंधानलभ्यतया इवादिशब्दवाच्यत्वाभावात्, उभयसंबन्धित्वस्येवादिवाच्यत्वे श्रौती अर्थवशलभ्यत्वे त्वार्थीति विवक्षयैव विभागोपपत्तेश्च॥

## विवृतिपूर्तिः

**साम्यमिति**। अत्रेदमनुसंधेयम्—उपमायामुपमानमुपमेयं साधारणो धर्मउपमावाचकश्चेति चत्वारः पदार्थाः। तत्र साधारणधर्मवत्त्वेन प्रसिद्धः पदार्थ उपमानम्, तद्धर्मवत्तया कविसंरम्भगोचर उपमेयम्, 'उत्कृष्टगुणवत्तया संभाव्यमानमुपमानम्, अपकृष्टगुणवत्तया संभाव्यमानमुपमेयम्' इति केचित्। 'सादृश्यप्रतियोगि उपमानम्, सादृश्यानुयोगि उपमेयम्' इत्यन्ये। उपमानोपमेययोः संगतो धर्मः साधारण इत्युच्यते। यस्य धर्मस्य संबन्धाद्येन सह यदुपमीयते स साधारणधर्मः तदुपमानं तच्चोपमेयमिति तत्त्वम्। यथा 'कमलमिव मुखं मनोज्ञमेतत्' इत्यादौ मनोज्ञत्वधर्मसंबन्धात्तद्वत्तया प्रसिद्धेन कमलेन सह मुखमुपमीयत इति मनोज्ञत्वं साधारणो धर्मः कमलमुपमानं मुखमुपमेयमित्युपमालंकारः। अत्र सर्वत्रेवादिपदादेरिव यथादिपदादपि सादृश्यावगमने पर्यायपरिवृत्तिसहत्वादुपमादीनामर्थालंकारत्वम्। इयमुपमा तत्तदुक्तिवैचित्र्येण नानालंकारभावमवगाहते। तथाहि—'चन्द्र इव मुखं मुखमिव चन्द्रः' **इत्युपमेयोपमा**। 'मुखं मुखमिव' इत्यनन्वयः। 'मुखमिव चन्द्रः' इति प्रतीपम्। 'चन्द्रं दृष्ट्वा मुखं स्मरामि' इति स्मरणम्। 'मुखमेव चन्द्रः' इति रूपकम्। 'मुखचन्द्रेण तापः शाम्यति' इति परिणामः। 'किमिदं मुखमुताहो चन्द्रः' इति संदेहः। 'चन्द्र इति चकोरास्त्वन्मुख रज्यन्ति' इत्युल्लेखः। 'चन्द्रोऽयं न मुखम्' इत्यपह्नवः। 'नूनं चन्द्रः' इत्युत्प्रेक्षा। 'चन्द्रोऽयम्' इत्यतिशयोक्तिः। 'मुखेन चन्द्रकमले निर्जिते' इति **तुल्ययोगिता**। 'निशि चन्द्रस्त्वन्मुखं च हृष्यति' इति दीपकम्। 'त्वन्मुख एवाहं रज्यामि चन्द्र एव चकोरो रज्यते' इति **प्रतिवस्तूपमा**। 'दिवि चन्द्रो भुवि त्वन्मुखम्' इति दृष्टान्तः। 'मुखं चन्द्रश्रियं बिभर्ति इति निदर्शना। 'निष्कलङ्कं मुखं चन्द्रादतिरिच्यते' इति **व्यतिरेकः**। 'त्वन्मुखेन समं चन्द्रो निशासु हृष्यति' इति **सहोक्तिः**। 'मुखस्य पुरतश्चन्द्रो निष्प्रभः' इत्यप्रस्तुतप्रशंसा। 'मुखं नेत्राङ्कमनीयं स्मितज्योत्स्नाहारि' इति **समासोक्तिः**। एवं विविधभूमिकामासादयन्ती कविकर्मरङ्गे नृत्यन्ती उपमानर्तकी सहृदयहृदयान्यावर्जयतीति तत्प्राङ्निरूपणे बीजम्। आचार्यरुद्रटस्त्वत्र 'अर्थस्यालंकारा वास्तवमौपम्यमतिशयः श्लेषः। एषामेव विशेषा अन्ये तु भवन्ति निःशेषाः॥' इत्येवमर्थालंकाराणां प्राधान्येन वास्तवादि चातुर्विध्यमुद्दिश्य तल्लक्षणानि प्राणैषीत्। तत्र—'वास्तवमिति तज्ज्ञेयं क्रियते वस्तुस्वरूपकथनं यत्। पुष्टार्थमविपरीतं निरूपममनतिशयमश्लेषम्॥ १॥' इति 'तस्य सहोक्तिसमुच्चयजातियथासंख्यभावपर्यायाः। विषमानुमानदीपकपरिकरपरिवृत्तिपरिसंख्याः॥ हेतुः कारणमालव्यतिरेकोऽन्योन्यमुत्तरं सारम्। सूक्ष्मं लेशोऽवसरो मीलितमेकावली भेदाः॥' इति वास्तवस्य त्रयोविंशतिः, 'सम्पत्प्रतिपारयितुं स्वरूपतो वस्तु तत्समानमिति। वस्त्वन्तरमभिदध्याद्वक्ता यस्मिंस्तदौपम्यम्॥' इति 'उपमोत्प्रेक्षारूपकमपह्नुतिः संशयः

समासोक्तिः ।' मत्तमुत्तरमन्योक्तिः प्रतीपमर्थान्तरन्यासः ॥ उभयन्यासभ्रान्तिमदाक्षेपप्रत्यनीकदृष्टान्ताः । पूर्वसहोक्तिसमुच्चयसाम्यस्मरणानि तद्भेदाः ॥' इत्यौपम्यस्यैकविंशतिः 'यत्रार्थधर्मनियमः प्रसिद्धबाधादिपर्ययं याति । कश्चित्क्वचिदतिलोकं स स्यादित्यतिशयस्तस्य ॥' इति, 'पूर्वविशेषोत्प्रेक्षाविभावनातद्गुणाधिकविरोधः । विषमासंगतिपिहितव्याघाता हेतवो भेदाः ॥' इत्यतिशयस्य द्वादश, 'यत्रैकमनेकार्थैर्वाक्यं रचितं पदैरनेकस्मिन् । अर्थे कुरुते निश्चयमर्थश्लेषः स विज्ञेयः ॥' इति 'अविशेषविरोधाधिकवक्रव्याजोक्त्यसंभावयवाः । तत्त्वविरोधाभासाविति भेदास्तस्य शुद्धस्य ॥' इति श्लेषस्य दश चेति यथायथं लक्षयित्वा पर्यन्तं इत्थमुपसमहार्षीत्—'एषां तु चतुर्णामपि संकीर्णानामगणिता भेदाः । तन्नामानस्तेषां लक्षणमंशेषु संयोज्यम् ॥' इति । अहो आचार्यस्य परिच्छेददाक्षिण्यम् । प्रसङ्गादुपमाघटकसादृश्यस्य प्रतियोग्यनुयोगिनावुच्येते—'चन्द्रकलाम्बुजदामशिरीषं विद्युत्तारा कनकलता च । दमनककाञ्चनयष्टी दीपः । सर्वैरेभिर्योषा वर्ण्या ॥' 'रोचनास्वर्णविद्युद्भिर्हरिद्राभिर्वराटकैः । चम्पकैर्हेमकेतक्या वर्ण्यते तत्तनोर्द्युतिः ॥' वराटकः प्रत्यग्रपद्मबीजम् । 'वेत्रत्वचा तुल्यरुचां वधूनां कर्णान्ततो गण्डतलागतानि । भृङ्गाः सलीलं यदि नापतिष्यन्को ऽवेदयिष्यन्नवपङ्कजानि ॥', 'काश्मीरगौरवपुषामभिसारिकाणाम्—' इत्यादिप्रयोगदर्शनात्तत्साम्यमप्यवसेयम् । 'तमः शैवालजीमूतबर्हभ्रमरचामरैः । यमुनावीचिनीलाश्मनीलाम्भोजैः समः कचः ॥', 'ललाटमर्धचन्द्रेण हेमपट्टिकया तथा । वल्लीस्मरधनुर्वीचिभृङ्गालीपल्लवैर्भ्रुवौ ॥' 'चन्द्रादर्शौ कपोलस्य मुखस्येन्दब्जदर्पणाः । तिलप्रसूनं नासायाः कण्ठः कम्बोःसमः स्मृतः ॥' कामतूणीकृत्य नासा वर्ण्यत इति **श्रीहर्षः** । 'नासावंशो मृगीदृशाम्' इति 'नासानाली तिलोपमा' इति च विशेषो द्रष्टव्यः । 'मृंगतल्लोचनाम्बोजतत्पत्रझषखञ्जनैः । नेत्रं चकोरतन्नेत्रकेतकालिस्मराशुगैः ॥', 'प्रवालबिम्बबन्धूकपल्लवैरधरोष्ठकौ । वर्ण्यौ माधुर्यमाश्रित्य यावन्मधुरवस्तुभिः ॥', 'मुक्तामाणिक्यनारङ्गदाडिमीकुन्दकोरकैः । ताराभिश्च रदा, वाणी हंसालिशुककिंनरैः ॥', 'वेणुकोकिलवीणाभिर्माधुर्यं मधुरैः सह ॥', 'बाहुर्बिसेन विद्युद्वल्लिमृणालैः, करस्तु पद्मेन । पल्लवविद्रुमकाभ्यां, चन्द्रकलाकुन्दकोरकैश्च नखाः ॥', 'पूगाब्जतत्कोरकबिल्वतालगुच्छेभकुम्भाचलकुम्भचक्रैः । सौवीरजम्बीरकबीजपूरसमुद्गछोलङ्गफलैरुरोजः ॥', 'नाभी रसातलावर्तह्रदकूपनदादिभिः । वली तटिन्या तद्रूपैः पृष्ठं काञ्चनपट्टकैः ॥' तद्रूपैस्तदनुकारिपाशादिभिः । 'सूच्यग्रतलशून्याणुवेदिसिंहादिभिः समः । मुष्टिग्राह्यो भवेन्मध्यो जघनं पुलिनोपमम् ॥' मध्यस्यातिसूक्ष्मत्वात्तत्प्राधान्येनोपमानता । तेनैव 'सदसत्संशयगोचरोदरि' इति 'परमाणुमध्याः' इति च वर्णयन्ति । 'पीठ लक्षणगमनमिति चेत् । न । 'दध्यानय' इत्यादौ लुप्तस्यामादेः प्रतिसंधानात्कर्मतादेरिव लुप्तायप्रत्ययप्रतिसंधानात्साम्यस्य वाच्यताङ्गीकारात्समासस्यैवोपमावाचकत्वाङ्गीकाराच्च । अत एव दण्डिनोक्तं सादृश्यवाचकप्रकरणे—'समासश्च बहुव्रीहिः शशाङ्कवदनादिषु' इति । चकारात्कर्मधारयश्च । ननु तथापि सादृश्यवाचकसमासस्य सत्त्वे 'क्विप्समासगता द्वेधा धर्मेवादिविलोपने' इति वक्ष्यमाणमसंगतमिति चेत् । न । समासस्य सादृश्यवाचकत्वमस्वीकुर्वतां प्राचां मतानुसारेणैव तत्प्रकारस्य प्रणेष्यमाणत्वात् । एवं 'वदनं मृगशावाक्ष्याः सुधाकरमनोहरम्' इत्यौपम्यवाचकस्य लोपे यदुदाहृतं तदपि प्राचीनमतानुसारेणैव वेदितव्यम् । एतन्मते तु प्रथमं धर्मलोपस्य द्वितीयं पूर्णाया उदाहरणं बोध्यम् । ननु तथापि 'मुखमस्या विधुं द्वेष्टि', 'सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम्' इत्यादावव्याप्तिः साम्यस्य गम्यत्वात् । न च 'स्पर्धते जयति द्वेष्टि' इत्यादिदण्डिदर्शनात्तत्रापि साम्यस्य वाच्यत्वमिति वाच्यम् । तस्य साम्यव्यञ्जकपरत्वेनोपपत्तौ साम्यवाचकत्वकल्पनाया अन्याय्यत्वात् । अत्रोच्यते— द्वेषस्पर्धयोश्चेतनधर्मत्वेन मुखनारङ्गकयोरसंभवादुपमायां पर्यवसानेन तादृशस्थले निदर्शनालंकारस्यैवाङ्गीकारात् । 'इवादि' इत्युपादानात् 'मुखचन्द्रौ मनोज्ञौ' इत्यत्रोभयसाम्यस्य वाच्यत्वेऽपि नातिव्याप्तिः । व्यतिरेके इति । 'अकलङ्कि मुखं तस्या न कलङ्की यथा विधुः'

इत्याद्येकवाक्यगतव्यतिरेक इत्यर्थः। अत्राकलङ्कित्वमुपमानस्य कलङ्कित्वमुपमेयस्य वैधर्म्यम्। नन्वत्र साम्यस्य वाच्यत्वेऽपि तस्य नञा मुखे संबन्धाभावबोधादुभयसंबन्धित्वमेव नास्ति, कथमत्रोपमाप्रसक्तिरिति चेत्। न। मुखे चन्द्रासाधर्म्यबाधासंभवेन नञो मुखस्योत्कर्षातिशयप्रतीतिमात्रे तात्पर्यात्। **उपमेयोपमायामिति**। 'मतिरिव कमला कमलेव मतिः' इत्यादावित्यर्थः। अत्र श्रीमत्योरतुल्यत्वं साधर्म्य वाक्यद्वयेन प्रतिपाद्यते। रसनोपमादेरपि विलक्षणवैतचित्र्याधायकत्वेनालंकारान्तरत्वमित्यनेनैव तद्वारणमित्यवधेयम्। **वाक्यैक्य** इति। वाक्यान्तरव्यवच्छेदकमेव न त्वेकपदव्यवच्छेदकम्। तेन मुखाब्जमित्यादावेकपदेऽप्युपमा। **अनन्वये त्विति**। 'चन्द्रश्चन्द्र इवातन्त्रः' इत्यादावित्यर्थः। अत्रैकस्यैव चन्द्रस्यातन्त्रत्वं साधर्म्यमिवशब्देन प्रतिपाद्यते। ननु 'घटत्वमिव पटत्वं नित्यम्' इत्यादेरप्युपमात्वं स्यादिति चेष्टमेव, किन्तु वैचित्र्यविशेषानाधायकत्वात्तस्यामलंकारव्यवहारो नास्तीति विशेषः। एवमन्यत्रापि बोध्यम्। केचित्तु—'इवादिशब्दवत्तुल्यादिपदेनापि साधारणधर्मस्य प्रतिपादनात्करिष्यमाणश्रौत्यार्थीविभागानुपपत्त्या साधारणधर्मसंबन्ध एवोपमा, न तु साधारणधर्ममात्रम्। स च प्रतियोगितारूपः। 'चन्द्र इव मुखम्' इत्यादौ चन्द्रप्रतियोगिकसादृश्याश्रयो मुखमितिप्रतीतेरानुभविकत्वात्। तादृशसंबन्धश्च इवादिशब्देन वाच्यस्तुल्यादिपदेनार्थवशलभ्य इति 'श्रौत्यार्थीविभागः' इत्याहुः। तत्र। आर्थ्यामुपमायामव्याप्ते। तत्र साधारणधर्मसंबन्धस्य विभक्त्यादिप्रतिसंधानलभ्यतया इवादिशब्दवाच्यत्वाभावात्, उभयसंबप्रस्तरभूचक्रैर्नितम्बः परिवर्ण्यते। ऊरुस्तु हस्तिहस्तेन कदल्या करभेण च ॥', 'चरणः पल्लवाम्भोजस्थलपद्मप्रवालकैः। पूर्णेन्दुनाङ्गुष्ठनखौ गमनं हंसहस्तिवत् ॥', 'कटाक्षो यमुनावीचिभृङ्गावलिविषामृतैः। ज्योत्स्नेन्दुपुष्पपीयूषफेनकैरववद्ध सः ॥', 'मुक्ताफलं वा स्फुटविद्रुमस्थम्' इति कालिदासप्रयोगान्मुक्ताप्यत्र गणनीया। 'दर्शनं वमदब्जादिः श्वासस्तु सुरभिः शनैः। हंससारसशब्दाभ्यां वर्ण्यते नूपुरध्वनिः ॥', 'पुंसामत्यन्तपीनत्वमुच्चता दीर्घबाहुता। युगार्गलभुजङ्गेन्द्रदण्डस्तम्भेभहस्तकैः ॥' 'बाहु, र्वक्षः कपाटेन शिलापट्टेन वर्ण्यते। अंसे विपुलता मध्ये कार्श्यमुन्नतता पदे ॥', 'स्तनयोरिव योषाणामत्यन्तस्वच्छता हृदि। कान्तिप्रयोजकं यावत्तावत्तद्वत्रवर्ण्यते ॥', 'प्रतापोऽर्काग्निवज्राद्यैः कीर्त्तिश्चन्द्रादिशु भ्रकैः। करे पद्मोर्ध्वरेखादि पदे च्छत्रध्वजादिकम् ॥ गमनं हस्तिसिंहाभ्यां कार्कश्यं च भुजादिषु ॥' इति दिक्। विस्तरस्तु तत्तद्वर्णनानियामकमहाकविप्रयोगानुसारेणानुसंधेयः। उक्तं च—'कवीनां घटनान्यैव चराचरविलक्षणा। अकर्तुमन्यथाकर्तुं कर्तुं या क्षमते जगत् ॥' इति ॥

## विज्ञप्रिया

अर्थलङ्कारान् वक्तुमाह—**अथेति**। **प्राधान्यात् सादृश्यमूलेष्विति**। उपमारूपकोत्प्रेक्षादयो बहवोऽलङ्काराः सादृश्यमूला अन्यालङ्कारान्तरापेक्षया चमत्काराधिक्यात् प्रथमं ते लक्षितुमुचिताः। तत्रापि तत्सर्वोपजीव्यत्वेन प्रथममुपमामाहेत्यर्थः। तस्यास्तदुपजीव्यत्वं च सर्वत्रैव सादृश्यवशात् प्रथममुपमास्फुरणात्।

**साम्यमिति**। अवैधर्म्यमनुक्तवैधर्म्यम्। द्वयोरुपमेयोपमानयोः साम्यं वाक्यैक्ये वाच्यं सद् उपमा इत्यर्थः।

तत्र वाच्यपदव्यावृत्तिमाह—**रूपकादिष्विति**। एवं च उपमाध्वनावुपमापदं गौणमिति बोध्यम्। अवैधर्म्यपदव्यावृत्तिमाह—**व्यतिरेके चेति**। वाक्यैक्यपदवृत्तिमाह—**उपमेति**। द्वयोरित्यस्य व्यावृत्तिमाह—**अनन्वये चेति**। अनन्वयनामालङ्कार इत्यर्थः। अत्रोपमेयस्यैव उपमानत्वेन द्विर्भावात्। अत्र च साम्यमित्यस्य समानो धर्म इति नाऽर्थः। वक्ष्यमाणधर्मलुप्तोपमायां धर्मस्याऽवाच्यत्वेनाऽव्याप्त्यापत्तेः। मुखमाह्लादकश्चन्द्र इति रूपकधर्मस्य वाच्यत्वेन तत्राऽतिव्याप्त्यापत्तेः। किन्तूपमेयोपमानयोः सामान्यसादृश्यरूपस्य धर्मस्य तयोरनुयोगिताप्रति-

योगिताख्यः सम्बन्ध एव अत्र साम्यपदार्थः। चन्द्र इव मुखमित्यत्र चन्द्रप्रतियोगिसादृश्यवन्मुखमिति बोधे सादृश्यस्य प्रतियोगितायाश्चन्द्रेऽनुपयोगितायाश्च मुखे प्रतीतेः सादृश्यसम्बन्ध एवोपमेत्यर्थः। अतएव साधर्म्य-मुपमाभेदे इति काव्यप्रकाशोक्तलक्षणे समानेन धर्मेण सम्बन्ध उपमा इत्येव तत्र व्याख्यातम्। परन्त्विवादयः षष्ठीवत् सम्बन्धं प्रतिपादयन्ति, इति तत्र लिखनात् सादृश्यप्रतियोगिताख्यः सम्बन्ध एव तन्मते उपमानानुयोगि-ताख्यः। ग्रन्थकृन्मते तु उपमानोपमेयगतं सम्बन्धं बोधयन्तीत्यग्रे लिखनात् प्रतियोगिताऽनुयोगिताख्यसम्बन्धद्व-यमेवोपमा। काव्यप्रकाशे च तादृशप्रतियोगिताया इवाद्यव्ययपदवाच्यत्वेन उपमायाश्च श्रौतीत्वं तुल्याद्यनव्ययपदवाच्यत्वेन तस्या आर्थीत्वम्। अव्यानामन्विताभिधायियित्वमतेन चन्द्रान्वितप्रतियोगिताया इवा-दिवाच्यत्वात्तुल्याद्यनव्ययपदानां त्ववाच्यत्वात्। प्रकृतग्रन्थकृत्तु—इवादयः श्रुतमात्रा एव शीघ्रमुपमां प्रतिपादय-न्तीति तत्सद्भावे श्रौती उपमा। तुल्यादयोऽनव्ययशब्दास्तु प्रणिधानेन विलम्बादेव उपमां प्रतिपादयन्तीति तत्सद्भावे आर्थीति वक्ष्यति। अतएव तन्मतेऽन्विताभिधानं नास्ति। ननु तत्कथं तादृशसम्बन्धरूपस्य साम्यस्य वाच्यत्वम्? यदि चान्विताभिधानवादावलम्बेन वाच्यत्वस्वीकारस्तथापि इवादेरुपमानस्य वाऽनुपादाने या लुप्तो-पमा तत्र तादृशसम्बन्धस्याऽवाच्यत्वात्तत्राऽव्याप्तिः। अतएव काव्यप्रकाशे तादृशसम्बन्धरूपाया उपमाया वाच्य-त्वघटितं लक्षणं न कृतम्। उच्यते। अत्रापि वाच्यत्वघटितं लक्षणं कृतम्। किन्तु वाच्यमित्यस्याऽव्यङ्ग्यमित्येवार्थः। अतएव रूपकादौ साधर्म्यस्य व्यङ्ग्यत्वादेव तत्र वाच्यपदेन तद्व्यावृत्तिर्द-र्शिता। इवादेरुपमानस्याऽनुपादाने त्वध्याहृतादिवादेरुपमानवाचकपदाच्च तल्लाभो, न व्यञ्जनयेति तत्त्वम्। इवाद्युपादाने तु अन्विताभिधानाभ्युपगमे वाच्यत्वमेव तादृशसम्बन्धस्य। तदनभ्युपगमे तु इवाद्युपादाने तुल्याद्यु-पादाने वा संसर्गमर्य्यादयैव तल्लाभ इति। सर्वत्राऽव्यङ्ग्यत्वमेव।

## लोचन

**अथेति**। अथ शब्दालङ्कारनिरूपणानन्तरमर्थालङ्कारेष्वर्थालङ्कारविशेषलक्षणेषु। प्राधान्यादित्यनन्तरं प्रथममिति शेषः। उपजीव्यत्वं तेषामेतन्मूलत्वेन प्रवृत्तेः। यदुक्तम्-उपमैव प्रकारवैचित्र्येण सर्वालङ्काराणां बीजभू-तेति।

रूपकमित्यादिशब्दाद् दीपकतुल्ययोगितादयः। वैधर्म्यस्य अकलङ्कं मुखं तस्याश्चन्द्रवदित्यादावकल-ङ्कत्वादेः। एकाकारकपदावृत्तिरनन्वये चेति।

## कुसुमप्रतिमा

इदानीमर्थालङ्काराणां निरूपणे सङ्गतिं तत्रापि चोपमाया एव प्रथमाभिधाने युक्तिञ्चाह अथेति। अथशब्दोऽयमर्थालङ्कारनिरूपणारम्भे, शब्दालङ्कारनिरूपणानन्तर्य्यस्याभिधानक्रमेणैव प्राप्तव्यात्तद्वैयर्थ्यापपत्तेः। अवसरप्राप्तेषु शब्दालङ्कारनिरूपणस्य संक्षेपेणैव समापिततया कार्य्यान्तराभावादवसरः प्राप्तस्तेन निरूपणीयेषु अर्थालङ्कारेषु लक्षितव्येष्विति परेणान्वयः। प्राधान्यादिति। चमत्कारविशेषविधायितया प्रचुरतया चेति भावः। एतच्च सादृश्यमूलेषु प्रथमं लक्षितव्येषु इत्येतत् प्रत्येवहेतुः। लक्षितव्य षु लक्षणादिभिर्निरूपयितव्येषु सत्सु, तेषामपि सादृश्यमूलानामलङ्काराणामपि, उपजीव्यत्वेन प्राधान्यादाश्रयणीयत्वेन।

साम्यमिति। वाक्यस्य ऐक्ये एकत्वे सति, द्वयोरुपमानोपमेयभावेनाभिमतयोः अवैधर्म्मयतात्पर्य्यविष-यीभूतविरुद्धधर्म्मरहितम्, वाच्यम् इवादिभिः शब्दैः क्यङादिभिः प्रत्ययैः उपमितादिभिः समासैर्वा स्पष्टप्रतिपाद्यम्,

साम्यं सादृश्यम् उपमा। ननु "मुखं तव तथा भाति यथा राजति चन्द्रमाः' इत्यादौ वाक्यद्वये अव्याप्तिरिति चेन्न, वाक्यैक्य इत्यनेन साकाङ्क्षवाच्यगतत्वे इत्यस्याभिप्रेतत्वात्, अत्र तूभयोरपि वाक्ययोः साकाङ्क्षत्वात्। एतेनो-पमेयोपमायां द्वयोरपि "वाक्ययोः परस्परनिराकाङ्क्षतया नातिव्याप्तिरपीति द्रष्टव्यम्। इत्थञ्च—

तात्पर्य्यविषयीभूतविरुद्धधर्म्माभावत्त्वे सति इवादिप्रातिपाद्यसाकाङ्क्षवाक्यगतोभयसादृश्यत्वमुपमा-त्वमिति लक्षणं पर्य्यवसितत्।

"या गम्याः सत्सहायानां यासु खेदो भयं यतः। तासां किं यन्न दुःखाय विपदामिव सम्पदाम्॥"

इति किरातार्जुनीयपद्यादौ विपत्त्व सम्पत्त्वयोः सर्वथा विरुद्धयोरपि धर्म्मयोर्विरुद्धत्वेन कवेस्तात्पर्य्यवि-षयीभूतत्वाभावान्नाव्याप्तिः।

"हसति द्यामपि शक्रभर्त्त-काम्" इत्यादौ हसतीत्यादीनां साम्यप्रतिपादकया दण्डिनाभिहितत्वान्ना-व्याप्तिः। 'राजपुरुषः' इत्यादौ लुप्तविभक्तेरिव 'विधवति मुखाब्जम्' इत्यादावपि प्राचीनमते लुप्तक्यङादेरर्थ वाचकत्वाङ्गीकारात् साम्यस्य वाच्यतया लक्षणसङ्गतिः। 'मुखशशी' इत्यादावुपमितसमासेन 'शशाङ्कवदना' इत्यादौ च बहुब्रीहिसमासेन साम्यस्य प्रतिपादितत्वादुपमोपपत्तिः। तथा द्वयोरिति उभयेति चानेकोपलक्षणम्। तेन "हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमतं" इत्यादौ बहूनां सादृश्ये नाव्याप्तिः। "सूत्रानुरूप" वसनम्" इत्यादौ चापमानोपमेयभावाभावात् वैचित्र्याभावाच्च नातिव्याप्तिरिति सारसंक्षेपः।

रूपकादिभिः सहोपमाया भेदप्रदर्शनच्छलेन वाच्यमित्यादिविशेषणपदानां कारिकापाठक्रमेण व्यावृत्ति-माह [रूपकादिष्विति। आदिपदेन परिणामप्रतिवस्तूपमादीनां ग्रहणम्। तथा च व्यङ्ग्यमाम्यव्यवच्छेदार्थमेव वाच्यमिति विशेषणमित्याशयः। एवञ्च लक्षणाप्रतिपाद्यसाम्यस्थलेऽपि उपमैवेति ग्रन्थकृदभिप्रायो बोध्यः। यथा—"सरसिजप्रत्यर्थि पाणिद्वयम्।" अत्र प्रत्यर्थिशब्देन सदृशं लक्ष्यत इति नव्याः।

अवैधर्म्मयमित्यस्य व्यावृत्तिमाह व्यतिरेके चेति। "अकलङ्कं मुखं तस्या न कलङ्कीविधुर्यथा" इत्यादि-व्यतिरेकालङ्कारस्थले चेत्यर्थः। वैधर्म्यस्य उदाहृते अकलङ्कत्वकलङ्कित्वरूपस्य। तथा च व्यतिरेकस्थले अतिव्या-प्तिवारणार्थन अवैधर्म्मयमिति विशेषणमिति भावः।

वाक्येक्य इत्यस्य व्यावृत्तिं दर्शयति उपेति। अत्रोपमेयोपमापदं रसनोपमाया अप्युपलक्षणम्। तथा चोपमेयोपमायां रसनोपमायाञ्च वाक्यद्वयं पपरस्परनिराकाङ्क्षमनेकवाक्यमित्यर्थः। तत्रोपमेयोपमायां यथा—"कमलेव मति" इत्येकं वाक्यम्, "मतिरिव कमला" इति च द्वितीयम्। रसनोपमायां यथा—"चन्द्रायते शुक्लरु-चापि हंसः" इत्येकं वाक्यम्, "ह सायते चारुगतेन कान्ता" इत्यादिकञ्च द्वितायादि। एवञ्चात्र वाक्यैक्य इत्यभिधानात् उपमेयोपमायां रसनोपमायाञ्च साम्यस्य परस्परनिराकाङ्क्षानेकवाक्यगतत्वादुपमालक्षणस्य नातिव्याप्तिरित्यभि-प्रायः। एतदुक्तित्रयेण "साधर्म्मुपमाभेदे" इति काव्यप्रकाशलक्षणे कटाक्षितमिति बोध्यम्।

द्वयोरित्यस्य व्यावृत्तिमाह अनन्वये चेति। तथा च "राजीवमिव राजीवम्" इत्यादावेकमात्र पदार्थस्य साम्ये अनन्वयालङ्कारस्थले अतिव्याप्तिनिरासार्थमत्र द्वयोरित्यभिहितमित्याशयः।

इतीति। इति अनया रीत्या, अस्या उपमायाः, भेदो रूपकादिभ्यः पार्थक्यम्।

## विमला

अर्थालङ्कारान् निरूपयितुम् उपमानिरूपणस्य प्राथमिकत्वे हेतुमाह, अथेति ।—शब्दालङ्कारनिरूपणानन्तरमित्यर्थः, अवसरप्राप्तेषु—अवसरसङ्गत्या निरूपणयोग्येषु, अर्थालङ्कारेषु—अर्थालङ्कारमध्ये इत्यर्थः, सादृश्यमूलेषु—सादृश्यप्रतिभोत्थापितेषु, स्मरणालङ्कारादिषु इति शेषः, लक्षितव्येषु—निरूपयितव्येषु, तेषां—सादृश्यमूलकम्मरणाद्यलङ्काराणाम्, उपजीव्यत्वेन—आश्रयस्वरूपत्वेन, उत्थापकत्वेन इति यावत्, प्राधान्यात्—मुख्यत्वात्, प्रथमम् उपमाम् आह—निरूपयतीत्यर्थः, एवञ्च हेतुतासङ्गतिर्दर्शिता इति ज्ञेयम् ।

साम्यमिति ।—वाक्यैक्ये—वाक्यस्य एकत्वे सति, द्वयोः,—उपमानोपमेययोः, अवैधर्म्यं—वैधर्म्यरहितं, विरुद्धधर्मोक्तिशून्यमित्यर्थः, वाच्यम्—अभिधेयं, साम्यं—सादृश्यं, गुणक्रियादिरूपमित्यर्थः, उपमा । वैधर्म्याविषयकैकवाक्यविषयत्वे सति इवादिवाच्यम् उभयसम्बन्धिसाधर्म्यमुपमा इत्यर्थः । अत्र साम्यं, सारूप्यं, साधर्म्यं, सादृश्यमिति च पर्य्यायशब्दत्वेनाभिन्नार्थकम् । अत्रेदं ज्ञातव्यं, तथा हि, उपमाऽलङ्कारे घटकता त्रयः पदार्था विद्यन्ते; ते च—उपमानम्, उपमेयं, समानधर्मश्च (सादृश्यम्) इति । तत्र सामान्यधर्मविशिष्टत्वेन प्रख्यातः पदार्थः उपमानम्; तद्धर्मवत्त्वन कविप्रतिपाद्यविषयः उपमेयम् । "उत्कृष्टगुणवत्त्वया सम्भाव्यमानम् उपमानम्, अपकृष्टगुणवत्त्वया सम्भाव्यमानम् उपमेयम्" इति केषाञ्चित मतम् । अपरेषाञ्च "सादृश्यप्रतियोगि उपमानम्, सादृश्यानुयोगि उपमेयम्" इति । उपमानोपमेयोजयानुगतो धर्मः समानधर्मः इति अभिधीयते; बद्धर्मस्य संसर्गवशात् येन सार्द्धं यदुपमीयते, स एव समानधर्मः, तदुपमानं, तच्चोपमेयम् इति परमार्थः । यथा—"कमलमिव मुखं मनोज्ञमेतत्" इत्यादिस्थले मनोहरत्वधर्मसंसर्गात् मनोज्ञतश्चा स्वतः प्रसिद्धेन कमलेन मुखमुपमीयते इति मनोज्ञत्वं समानो धर्मः, कमलमुपमानम्, एवं मुखमुपमेयम् इति उक्तपदार्थत्रयस्य समावेशवशादस्योपमाऽलङ्कारत्वम् । अत्र अर्धस्मिन् स्थले इवप्रभृतिशब्द दिव ययादिशब्दादपि साम्यवगतौ पर्य्यापरिवृत्ति सहत्वात् अर्थालङ्कारत्वपमादीनामलङ्काराणाम् । एवैव चोपना विविध विचित्रोक्तिशलेन बहुविद्यालङ्काररूपतां प्रतिपद्यते; तथा च, तदेवात्र वैशद्यार्थं प्रपञ्च्यते—"वदनमेव इन्दु" इति रूपकस्य, "वदनेन इन्दुजलजे निर्जिते" इति तुल्ययोगितायाः, "इन्दुरयं न वदनम्" इत्यपङ्कवस्य, "किमेतत् वदनम्? उताहो! इन्दुः?" इति सन्देहस्य, "वदनेन्दुला सन्तापोऽपगच्छति" इति परिणामस्य, "सुधाकर इति चकोराः तत्र वदनमनुसरन्ति" इति भ्रान्तिमतः, "इन्दुरेषः" इत्यतिशयोक्ते, "इन्दुरिति चकोराः, सरोजमिति मधुकराः त्वन्मुखे रज्यन्ति" इत्युल्लेखस्य, "वदनं वदनमिव" इत्यनन्वयस्य, "इन्दुरेव वदनं, वदनमिव इन्दु" इत्युपमेयोपमायाः, "वदनमिव इन्दु" इति प्रतीपस्य, "नूनमिन्दु" इत्युत्प्रेक्षायाः, "तव वदनमिन्दुश्च रजन्यां राजते" इति दीपकस्य, "सुधाकरमालोक्य वदनं स्मरामि" इति स्मरणस्य, "तव वदने एवाहं रज्यामि, शशिनि एव चकोरो रज्यते" इति प्रतिवस्तुपमायाः, "समं तव मुखेनेन्दु र्विभावर्य्यां प्रकाशते" इति सहोक्ते, "वदनं नयनाङ्कमनोहरं शुभ्रकौमुदीविशदम्" इति समासोक्तेः, "दिवि सुधाकरः भुवि तवाननम्" इति दृष्टान्तस्य "वदनस्य पुरतश्चन्द्रमा हतश्रीः" इत्यप्रस्तुतप्रशंसायाः, "निष्कलङ्कं मुखं तस्या इन्दोरप्यतिरिच्यते" इति व्यतिरेकस्य, "वदनमिन्दुश्रियं धत्ते" इति निदर्शनायाः, तथैवमन्येषाभप्यलङ्काराणामुपजीवकतया सर्वानुगतत्वमनुसन्धेयम् । एवं नानाविधपरिवृत्ति सहन्तौ कविकर्मरङ्गे सविलासं विचरन्ती उपमानर्त्तकी रसज्ञमनांसि रमयति इति तस्याः आदावेव उल्लेखः समीचीनः इति बोध्यम् ।

लक्षणघटकस्य वाच्यादिपदचतुष्टयस्य क्रमेण व्यावृत्तिमाह, रूपकादिष्विति ।—(आदिना परिणामादिग्रहणम्) "मुखं चन्द्रः" इत्यभेदप्रत्ययानन्तरं "मुखं चन्द्रसाधर्म्यवत्" इति व्यञ्जनया साधर्म्यप्रतीतिरिति भावः । ननु "विधवति मुखाब्जम्" इत्यादौ वक्ष्यमाणोदाहरणे साम्यस्य गम्यत्वात् कथं लक्षणगमनम्? इति चेत्, न; "दध्यानय"

इत्यादौ लुप्तस्य अमादेः प्रतिसन्धानात् कर्मतादेरिव लुप्तायप्रत्ययप्रतिसन्धानात् साम्यस्य वाच्यताऽङ्गीकारात् समासस्यैव उपमावाचकत्वाङ्गीकाराच्च; अत एव दण्डिना उक्तं सादृश्यवाचकप्रकरणे—"समासश्च बहुब्रीहिः शशाङ्कवदनादिषु" इति, चकारात् कर्मधारयश्च। ननु तथाऽपि सादृश्य वाचकसमासस्य सत्त्वे "क्विप्समासगता द्वेधा धर्मेवादिविलोपने" इति वक्ष्यमाणमसङ्गतमिति चेत्, न; समासस्य सादृश्यवाचकत्वमस्वीकुर्वतां प्राचां मतानुसारेणैव तत्प्रकारस्य प्रणेष्यमाणत्वात्। एवं "वदनं मृगशावाक्ष्याः सुधाकरमनोहरम् इत्यौपम्यवाचकस्य लोपे यदुदाहृतं, तदपि प्राचीनमतानुसारेणैव वेदिव्यम्; एतन्मते तु—प्रथमं धर्मलोपस्य, द्वितीयं पूर्णया उदाहरणं बोध्यम्। ननु तथाऽपि "मुखमस्या विधुं द्वेष्टि" "सद्योमुण्डितमत्तहूनचिबुकप्रस्पर्द्धिनारङ्गकम्" इत्यादौ अव्याप्तिः, साम्यस्य गम्यत्वात्; न च "स्पर्द्धते जयति द्वेष्टि" इत्यादिदण्डि दर्शनात् तत्रापि साम्यस्य वाच्यत्वम् इति वाच्य, तस्य साम्यव्यञ्जकपरत्वेन उपपत्तौ साम्यवाचकत्वकल्पनाया अन्याय्यत्वात्। अत्रोच्यते द्वेषस्पर्द्धयोः चेतनधर्मत्वेन मुखनारङ्गकयोरसम्भवात् उपमायां पर्य्यवसानेन तादृशस्थले निदर्शनाऽलङ्कारस्यैवाङ्गीकारात्। "इवादि" इत्युपादानात् "मुखचन्द्रौ मनोज्ञौ" इत्यत्र उभयसाम्यस्य वाच्यत्वेऽपि नातिव्याप्तिः। व्यतिरेके इति।—"अकलङ्कि मुखं तस्या न कलङ्कौ यथा विधुः" इत्याद्येकवाक्यगतव्यतिरेके इत्यर्थः; अत्र अकलङ्कित्वम् उपमानस्य, कलङ्कित्वम् उपमेयस्य वैधर्मयम्। ननु अत्र साम्यस्य वाच्यत्वेऽपि तस्य नञा मुखेसम्बन्धाभावबोधात् उभयसम्बन्धित्वमेव नास्ति, कथमत्र उपमाप्रसक्तिः? इति चेत्।, न; मुखे चन्द्रसाधर्म्यबाधासम्भवेन नञो मुखस्य उत्कर्षातिशयप्रतीतिमात्रे तात्पर्य्यात्। उपमेयोपमायामिति।—"मतिरिव कमला कमलेव मतिः" इत्यादौ इत्यर्थः; अत्र श्रीमत्योः अतुल्यत्वं साधर्म्यं वाक्यद्वयेन प्रतिपाद्यते। रसनोपमादेरपि विलक्षणवैचित्रयाधायकत्वेन अलङ्कारान्तरम् इत्यनेनैव तद्वारणम् इत्यवधेयम्। "वाक्यैक्ये" इति वाक्यान्तरव्यवच्छेदकमेव, न तु एकपदव्यवच्छेदकम्; तेन "मुखाब्जम्" इत्यादौ एकपदेऽपि उपमा। अनन्वये त्विति।—"चन्द्रश्चन्द्र इवातन्द्रः" इत्यादौ इत्यर्थः। अत्र एकस्यैव चन्द्रस्य अतन्त्रत्वं साधर्म्यम् इवशब्देन प्रतिपाद्यते। ननु "घटत्वमिव पटत्वं नित्यम्" इत्यादेरपि उपमात्व स्यात् इति चेत्, इष्टमेव; किन्तु वैचित्रयविशेषानाधायकत्वात् तस्याम् अलङ्कारव्यवहारो नास्तीति विशेषः; एवमन्यत्रापि बोध्यम्। केचित्तु—"इवादिशब्दवत् तुल्यादिपदेनापि साधारणधर्मस्य प्रतिपादनात् करिष्यमाणश्रौत्यार्थीविभागानुपपत्त्या साधारणधर्मसम्बन्ध एव उपमा, न तु साधारणधर्ममात्र, स च प्रतियोगितारूपः, 'चन्द्र इव मुखम्' इत्यादौ "चन्द्रप्रतियोगिकसादृश्याश्रयो मुखम्' इति प्रतीतेः आनुभाविकत्वात्, तादृशसम्बन्धश्च इवादिपदेन वाच्यः, तुल्यादिशब्देन तु अर्थवशलभ्य इति श्रौत्यार्थीविभागः" इत्याहुः, तन्न; आर्थ्यामुपमायाम् अव्याप्तेः, तत्र साधारणधर्मसम्बन्धस्य विभक्त्यादिप्रतिसन्धान लभ्यतया इवादिशब्दवाच्यत्वाभावात्, उभयसम्बन्धित्वस्य इवादिशब्दवाच्यत्वे श्रौती, अर्थवशलभ्यत्वे तु आर्थी इति विवक्षयैव विभागोपपत्तेश्च।

## लक्ष्मी

इदानीं शब्दालङ्कारनिरूपणानन्तरमर्थालङ्काराणां निरूपणे सङ्गतिं तत्रापि चोपमाया एव प्राथम्येन निरूपणे युक्तिञ्चोपपादयितुमुपक्रमते—अथेति। अथशब्दोऽत्र न शब्दालङ्कारनिरूपणानन्तर्यप्रतिपादनपरस्तस्याभिधानक्रमेणैव प्राप्तेरतस्तत्सार्थक्योपपत्तये अथेत्यस्यार्थालङ्कारनिरूपणारम्भे इत्यर्थः अवसरसंगत्या निरूपणयोग्येषु। यथाक्रमं वक्ष्यमाणेषु अर्थालङ्कारेषु लक्षितव्येष्वित्युत्तरेण सम्बन्धः। प्राधान्यादिति। चमत्कारविशेषाधायकत्वे प्रचुरतया चेत्याशयः। प्राधान्यादित्यनन्तरं प्रथममित्यस्य पाठो ज्ञेयः। एतच्च "सादृश्यमूलेषु प्रथमं लक्षितव्येषु' इत्येतत्प्रत्येव निमित्तम्। सादृश्यमूलेषु सादृश्यप्रतिभोत्थापितेष्वनन्वयादिषु लक्षितव्येषु लक्षणादिभिर्निरूपणीयेषु

सत्सु, तेषामपि सादृश्यमूलानामलङ्काराणामपि, उपजीव्यत्वेन प्राधान्यादुत्थापकत्वेन उपमालङ्कारमाह-उपमालङ्कारं निरूपयतीत्यर्थः। अनन्वादयोऽलङ्काराः सर्वेऽपि प्रायः सादृश्यमूलाः, किन्तु केऽपि साक्षात् केऽपि पुनः परम्परया प्रकारान्तरेण वा, तत्रान्वयोपमेयोपमानादन्वयः साक्षात् स्मरणादयः प्रकारान्तरेण। अत्र—

**'अलङ्कारशिरोरत्नं सर्वस्वं काव्यसम्पदाम्।**
**उपमा कविवंशस्य मातैवेति मतिर्मम॥'**

इतिराजशेखरोक्त्या 'उपमैवानेकप्रकारवैचित्र्येण अनेकालङ्कारबीजभूतेति प्रथमं निर्दिष्टा' इत्यलङ्कारसर्वस्वकारोक्त्या—

**'उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदात्।**
**रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः॥'**

इत्याद्युक्तदिशा च 'मुखं मुखमिव' 'चन्द्र इव मुखं मुखमिव चन्द्र' 'चन्द्रं दृष्ट्वा मुखं स्मरामि' 'मुखमेव चन्द्रः मुखचन्द्रेण तापः शाम्यति''किमिदं मुखमुताहो चन्द्रः' 'चन्द्र इति चकोरास्त्वन्मुखमनुधावन्ति' कमलमिति चञ्चरीकास्त्वन्मुखे रज्यन्ति' 'चन्द्रोऽयं न मुखम्' 'नूनं चन्द्रः' 'चन्द्रोऽयम्' 'मुखेन चन्द्रकमले निर्जिते' 'निशि चन्द्रस्त्वन्मुखञ्च हृष्यति' 'त्वन्मुख एवाहं रज्यामि चन्द्र एव चकोरो रज्यते' 'दिवि चन्द्रा भुवि त्वन्मुखम्' 'मुखं चन्द्रश्रियं बिभर्त्ति''निष्कलङ्कं मुखं चन्द्रादतिरिच्यते' 'त्वन्मुखेन समं चन्द्रो निशासु हृष्यति' 'मुखस्य पुरतश्चन्द्रो निष्प्रभः' 'मुखं नेत्राङ्ककमनीयं' 'स्मितज्योत्स्ना हारि' इत्यन्वयोपमेयोपमा-प्रतीप-स्मरण-रूपक-परिणाम-सन्देह-भ्रान्तिमानुल्लेखापह्नवोत्प्रेक्षातिशयोक्तितुल्ययोगितादीपकप्रतिवस्तूपमादृष्टान्तनिदर्शनाव्यतिरेकसहोक्तयप्रस्तुतप्रशंसासमासोक्त्यादीनां विविधभूमिकामासादयन्ती कविकर्मरङ्गनृत्यन्ती उपमानर्त्तकी सहृदयहृदयमनुरञ्जयन्तीत्येका सर्वेष्वर्थालङ्कारेषु मूलभूतेतितत्प्रथमनिरूपणे बीजमनुसन्धेयम्।

एवञ्च अर्थालङ्काराणां प्राधान्येन वास्तवादिचातुर्विध्यमुद्दिश्य तल्लक्षणानि भेदांश्चोपपादयन्तो रुद्रटादयः परास्ताः।

साम्यमिति। वाक्यस्य ऐक्ये एकत्वे सति, द्वयोरुपमानोपमेयभावेन प्रसिद्धयोः अवैधर्म्यं तात्पर्यविषयीभूतविरुद्धधर्मोक्तिशून्यम्, वाच्यम् अभिधया प्रतिपाद्यम्, इवादिभिः शब्दैः, क्यङादिभिः प्रत्ययैः उपमितादिभिः समासैर्वा स्फुटमभिधेयमित्यर्थः, समयोः साधारणधर्मसम्बन्धवतोर्भावः साम्यं साधारणधर्म्मसम्बन्धरूपसादृश्यम् उपमा तन्नामाऽर्थालङ्कारः। अत्र वाक्यैक्य इत्यस्य साकाङ्क्षवाक्यगतत्वे तात्पर्यम् अत एव—

'मुखं तव तथा भाति यथा राजति चन्द्रमाः'

इत्यादावुभयवाक्यत्वेऽपि वाक्यद्वयस्यापि साकाङ्क्षत्वान्नाव्याप्तिः। नापि 'मतिरिव कमला कमलेव मतिः' इत्यादावुपमेयोपमायामतिव्याप्तिः, तत्रोभयोरपि वाक्ययोः परस्पराकाङ्क्षारहितत्वात्। एवञ्च तात्पर्यविषयीभूतविरुद्धधर्मोक्तिरहितत्वे सति इवाद्यभिधेयसकाङ्क्षवाक्यगतोभयसादृश्यत्वमुपमात्वमितिसामान्यलक्षणं फलितम्।

ननु लक्षणेन साम्यत्वस्वीकारात् 'विधवति मुखाब्ज'मित्यादौ वक्ष्यमाणोदाहरणे साम्यस्य वाच्यत्वाभावादव्याप्तिरितिचेत्? 'दध्यानय' इत्यादौ लुप्तङ्स्याम् विभक्त्यादेः प्रति सन्धानात् कर्मतादेरिव लुप्ताय प्रत्ययप्र-

तिसन्धानात् साम्यस्य वाच्यताऽभ्युपगमात्, समासस्यैवोपमावाचकत्वस्वीकाराच्च लक्षणसमन्वयः। उक्तञ्च दण्डिना सादृश्यवाचकप्रकरणे—

'समासश्च बहुव्रीहिः शशाङ्कवदनादिषु' इति।

चेन कर्मधारयस्यापि बोधः। ननु तथापि सादृश्यवाचकसमासस्य सत्त्वे—

क्विप् समासगता द्वेधा धर्मेवादिविलोपने'

इति वक्ष्यमाणमसङ्गतमितिचेत्? न समासस्य सादृश्यवाचकत्वमनङ्गीकुर्वतां प्राचां मतानुसारेणैव तत्प्रकारस्य प्रणेष्यमाणत्वात्। एवं—

'वदनं मृगशावाक्ष्याः सुधाकरमनोहरम्'

इत्यौपम्यवाचकस्य लोपे यदुदाहृतं तदपि प्राचीनमतानुसारेणैव वेदितव्यम्। एतन्मते प्रथमं धर्मलोपस्य द्वितीयं पूर्णाया उदाहरणं बोध्यम्। ननु तथापि 'मुखमस्या विधुं द्वेष्टि''सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्द्धिनारङ्गकम्' इत्यादावव्याप्तिः साम्यस्य वाच्यत्वाभावात्। न च 'स्पर्द्धते जयति द्वेष्टि' इत्यादिदण्डिदर्शनात्तत्रापि साम्यस्य वाच्यत्वमितिवाच्यम्, तस्य साम्यव्यञ्जकपरत्वेनोपपत्तौ साम्यवाचकत्वकल्पनाया अन्याय्यत्वात्। अत्रोच्यते— द्वेषस्पर्द्धयोश्चेतनधर्मत्वेन मुखनारङ्गकयोरसम्भवादुपमायां पर्य्यवसानेन तादृशस्थले निदर्शनालङ्कारस्यैव स्वीकारादिति स्पष्टं विवृतौ। द्वयोरिति उभयोरितिचानेकोपलक्षणम्। अत एव—

'हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत' इत्यादौ बहूनां सादृश्ये सत्यपि नाव्याप्तिः।

'मृदनुरूपं भाण्डम्' इत्यादौ चोपमानोपमेयभावाभावात् वैचित्र्याभावाच्च नातिव्याप्तिः।

**लक्षणान्तराण्यपि** शास्त्रान्तरेषु दृश्यते। तथाहि—'अथात उपमा यदतत्तत्सदृशमिति गार्ग्यस्तदासां कर्म' नि. ३. १३

**भरतनाट्य शास्त्रे—**

'यत्किञ्चित्काव्यबन्धेषु सादृश्येनोपमीयते। उपमा नाम सा ज्ञेया गुणाकृतिसमाश्रया॥'

भामहः—

**'विरुद्धेनोपमानेन देशकालक्रियादिभिः।**

**उपमेयस्य यत्साम्यं गुणलेशेन सोपमा॥'**

उद्भटः—

**'यच्चेतो हारि साधर्म्यमुपमानोपमेययोः।**

**मिथो विभिन्नकालादिशब्दयोरुपमा तु तत्॥'**

**चन्द्रालोके**—'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः।'

**अत्रेदमनुसन्धेयम्**—उपमास्थले उपमानमुपमेयं साधारणो धर्मः उपमावाचकश्चेति चत्वारः पदार्था अपेक्ष्यन्ते। तत्र साधारणधर्मत्वेन प्रसिद्धः पदार्थः उपमानम्, तद्धर्मवत्तया वर्णनीयः पदार्थ उपमेयम्, केचितु— अधिकरणगुणवत्तया सम्भाव्यमानमुपमानम्, निकृष्टगुणवत्तया सम्भाव्यमानमुपमेयमित्याहुः। सादृश्यप्रतियोग्यु-

पमानम्, सादृश्यानुयोग्युपमेयमित्यन्ये । उपमाने उपमेये च संगतो धर्म: साधारणो धर्म इत्यभिधीयते । यस्य धर्मस्य सम्बन्धाद् येन सह यदुपमीयते स साधारणो धर्म: तदुपमानं तच्चोपमेयमितिपरमार्थ: । यथा 'कमलमिव मुखं मनोज्ञम्' इत्यादौ मनोज्ञत्वधर्मसम्बन्धात्तद्वत्तया प्रसिद्धेन कमलेन सह मुखमुपमीयते इति मनोज्ञत्वं साधारणो धर्म: कमलमुपमानम्, मुखमुपमेयमुत्युपमालङ्कारोऽयम् ।

अत्र सर्वत्र इवादिपदादेरिव यथादिपदादपि साधर्म्याद्यवगते: पर्यायपरिवृत्तिसहत्वादुपमादेरर्थालङ्कारत्वमिति स्पष्टं प्रकाशविवृत्तौ ।

वाच्यादिपदचतुष्टयस्य सार्थकत्वं क्रमेण दर्शयति—रूपकादिष्विति । आदिपदेन परिणामप्रतिवस्तूपमादीनां परिग्रह: । व्यङ्ग्यत्वमिति न तु वाच्यत्वमितिशेष: । 'इत्यस्याभेद' इत्युत्तरेणान्वय: । एवमग्रेऽपि । तथा च 'मुखं चन्द्र:' इत्यभेदप्रत्ययानन्तरं 'मुखं चन्द्रसादृश्यवत्' इति व्यञ्जनया सादृश्यप्रतीतिरिति तद्व्यावृत्त्यर्थमेव वाच्यमितिविशेषणमुपात्तमितिभाव: । एवञ्च लक्षणावाच्यसाम्यस्थलेऽपि उपमैवेति ग्रन्थकर्त्तुराशयो ज्ञेय: । यथा 'सरसिजप्रत्यर्थिपाणिद्वयम्' अत्र प्रत्यर्थिशब्देन सदृशं लक्ष्यते इत्यर्वाचीना वदन्ति ।

अवैधर्म्यमित्यस्य व्यवच्छेद्यं दर्शयति—**व्यतिरेके चेति** । व्यतिरेके तदाख्येऽलङ्कारे वैधर्म्यस्यापि न तु केवलं साधर्म्यस्येतिशेष: । तथा च 'अकलङ्कि मुखं तस्या न कलङ्की यथा विधु:' इत्याद्येकवाक्यगतव्यतिरेकालङ्कारोदाहरणे वैधर्म्यस्य अकलङ्कित्वकलङ्कित्वरूपस्याऽप्युक्तिरिति तत्रापि व्याप्ति निरासार्थम् अवैधर्म्यमितिविशेषणापादानमिव भाव: । नचात्र साम्यस्य सत्वेऽपि तस्य नञा मुखे सम्बन्धाभावबोधादुभयसम्बन्धित्वाभावेन कथमत्रोपमाप्रसक्तिरितिवाच्यम्, मुखे चन्द्रसाधर्म्यबाधासम्भवेन नञा मुखस्योत्कर्षातिशयप्रतीतिमात्रे तात्पर्यादिति तर्कवागीशा: ।

वाक्यैक्य इत्यस्य व्यवच्छेद्यमाह—**उपमेयोपमायामिति** । 'कमलेव मतिर्मतिरिव कमला' इत्यादावित्यर्थ: । अत्र श्रीमत्यो रत्यो: परस्परमनाकांक्षं सादृश्यं, 'कमलेव मति:, 'मतिरिव कमला' इति वाक्यद्वयेन प्रतिपाद्यते । अत्रोपमेयोपमापदं रसनोपमाया अप्युपलक्षणम् । तथा च रसनोपमायाम्—'चन्द्रायते शुक्लरुचाऽपि हंस:' 'हंसायते चारुगतेन कान्त' इत्यत्रोभयोर्वाक्ययो: परस्पराकाङ्क्षारहितत्वेनानेकवाक्यत्वम् । एवञ्च वाक्यैक्य इति प्रतिपादनात् उपमेयोपमायां रसनोपमायाञ्च साम्यस्य परस्पराकाङ्क्षारहितत्वेनानेकवाक्यगतत्वादुपमालक्षणस्य नातिप्रसक्तिरित्याशय: ।

एतद्विशेषणत्रयोपादानेन 'साधर्म्यमुपमाभेद' इति काव्यप्रकाशकृल्लक्षणेऽस्वरस: सूचित इत्यवधेयम् ।

द्वयोरित्यस्य साफल्यं दर्शयति—**अनन्वये** इति । तथा च 'राजीवमिव राजीवम्' इत्यादौ केवलैकपदार्थस्य साम्ये अनन्वयालङ्कारोदाहरणे अतिप्रसक्तिवारणाय द्वयोरित्युक्तमितिभाव: । ननु घट इव पटं द्रव्यम्, 'अस्थीव धवलं यश:' इत्यादेरप्युपमात्वं स्यादितिचेत् ? सत्यम् किन्तु वैचित्र्यविशेषानाधायकत्वात्तस्यामलङ्कारव्यपदेशाभावाऽवगमात् ।

इतीति । इति अनेन प्रकारेण अस्या निरुक्तलक्षणाया उपमाया भेदो रूपकादिभ्यो व्यवच्छेद: ।

## रुचिरा

एवं शब्दालङ्कारान्निरूप्यार्थलङ्कारान्निरूपयितुमुपक्रमते—**अथ**। **अवसरप्राप्ते**षु निरूपणोचितावसरेषु। **अर्थालङ्कारे**ष्वर्थान्वयव्यतिरेकानुविधायिष्वलङ्कारेषु मध्ये। **प्राधान्यात्**। **सादृश्यमूलेषु** सादृश्यमूलचमत्कारेषु। **लक्षितव्येषु** लक्षणीयेषु सत्सु। **तेषां** सादृश्यमूलानाम्। **अपि उपजीव्यत्वेन**। **प्रथमम्**। **उपमाम्**। **आह—७७** साम्यमित्यादिना।

इदं तावदवसेयम्—'उपमाऽनन्वयश्चैवमुपमेयोपमा ततः। स्मरणं रूपकं चैव परिणामस्ततः परम्॥ सन्देहो भ्रान्तिमानेवमुल्लेखो वाऽप्यपह्नुतिः। निश्चयश्चैवमुत्प्रेक्षाऽतिशयोक्तिरनन्तरम्॥ तुल्ययोगित्वमुद्दिष्टं दीपकं तदनन्तरम्। प्रतिवस्तूपमा प्रोक्ता दृष्टान्तश्च निदर्शना॥ व्यतिरेक सहोक्तिश्च समासोक्तिरतः परम्। स्यातां परिकरश्लेषावप्रस्तुतप्रशंसनम्॥ व्याजस्तुतिर थोद्दिष्टं पर्य्यायोक्तमतः परम्। भवेदर्थान्तरन्यसः काव्यलिङ्गानुमानके॥ हेतुर्वाऽप्यनुकूलं स्यादा क्षेपश्च विभावना। विशेषोक्ति विरोधावसङ्गतिर्विषमं समम्॥ विचित्रमधिकान्योऽन्ये विशेषो व्याहतिस्तथा। हेतुमाला भवेन् मालदीपकैकावली पुनः॥ सारश्चैव यथासङ्ख्यं पर्य्यायपरिवर्त्तने। परिसङ्ख्योत्तरं चैवमर्थापत्तिर्विकल्पनम्॥ समुच्चयसमाधी वा प्रत्यनीकं प्रतीपकम्। मीलितं वाऽपि सामान्यं तद्गुणोऽतद्गुणस्तथा॥ सूक्ष्मं व्याजोक्तिरुद्दिष्टा स्वभावोक्तिश्व भाविकम्। उदात्तं रसवत् प्रेय ऊर्जस्वि च समाहितम्॥ भावोदयो भावसन्धिर्भावशाबल्यमीरितम्। संपृष्टिः सङ्करश्चेति नामतोऽत्र प्रकीर्त्तिताः॥' एते सर्वेऽपि प्रायः सादृश्यमूलाः, किन्तु केऽपि साक्षात्, केचित्पुनः परम्परया प्रकारान्तरेण वा; तत्रानन्वयोपमेयोपमाऽऽदयः साक्षात्, स्मरणादयः प्रकारान्तरेण। एवं च-अनेकेषामनन्वयोपमेयोपमारूपकपरिणामसन्देहभ्रान्तिमदपह्नुतिनिश्चयोत्प्रेक्षाऽतिशयोक्तितुल्ययोगितादीपकादीनां मूलभूतोपमैवेति।

७७ **वाक्यैक्ये** वाक्यस्यैकत्वे एकस्मिन् वाक्ये सतीति यावन्। द्वयोः प्रसिद्धयोरुपमानोपमेययोः। अवैधर्म्यं विरुद्धधर्म्मोक्तिशून्यम्। वाच्यमभिधया प्रतिपाद्यम्। साम्यं **साधर्म्यम्**। **उपमा** तन्नामाऽर्थाङ्कारः। एकवाक्यगतत्वे सति प्रसिद्धोपमानोपमेययोर्वैधर्म्याविषयमेवादिपदवाच्यं यत् साधर्म्यं तदुपमेत्यर्थः। तत्र एकवाक्यगतत्वे सतीत्यनेन 'गिरिरिव गजराजोऽयं गजराज इवोच्चकैर्विभाति गिरिः। निर्झर इव मदधारा मदधारेवास्य निर्झरः स्रवति॥' इत्यादेर्व्यवच्छेदः। एकपदं च वाक्यान्तरव्यावर्त्तकं, न तु एकपदव्यावर्त्तकं, तेन 'शशिमुखी' त्यादावेकपदत्वेऽप्येषा। प्रसिद्धेत्यनेन "सरसीयं सुभगेव स्फुरति च लावण्यवल्लभं सलिलम्। वदनमिवाम्भः प्रभवं शफरीनयने यथा तथा यस्याः॥' इत्यादेः, उपमानोपमेत्यनेन "वदनमिवास्या वदनं नयने नयने इवाद्भुते स्फुरतः। लावण्यमिवाङ्गानां लावण्यं वाऽपि सन्नद्धम्॥" इत्यादेः, वैधयेर्म्याविषयमित्यनेन 'अमृतनिधानं सहसा सन्तापप्रशमकर्म्मणि प्रथितम्। शशिमण्डलमिव वदनं तन्निशि चेदं दिवाऽपि ते सुमुखि।' इत्यादेः, वाच्यमित्यनेन 'अपि सुभगे तव वदनं श्यामान् केशान् दधानमालोक्य। मुग्धा अमी चकोरा हन्त विलोकय कथन्नु नृत्यन्ति॥' इत्यादेश्चेति बोद्धव्यम्। अथ-उपमानं नाम सादृश्यप्रतियोगि, उपमेयं पुनः सादृश्यानुयोगिएते एव- 'साधारणधर्म्यवत्त्वेन सिद्धः पदार्थ उपमानम्, तद्धर्म्मवत्तया कविसंरम्भगोचर उपमेयम् इति, 'उत्कृष्टगुणवत्तय, सम्भाव्यमानमुपमानम्, अपकृष्टगुणवत्तया सभ्भाव्यमानमुपम्येयम्, इति' 'उत्कृष्टगुणवत्तया प्रसिद्धमुपमानम् अपकृष्टगुणवत्तय, प्रसिद्धं चोपमेयम्" इति चान्ये आहुः। उपमानोपमेययोरनुगतो धर्म्मः साधर्म्यम्, साम्यं 'सादृश्यं साधारणो धर्म्म इत्यन, र्थान्तरम्। तथा च-'अम्बुजमिव तव वदनं विकसति मित्रावलोकनं यावत्। मधुपानां स्पृहणीयं विमुखं दोषाकरीयरुचेः॥' इत्यादौ स्फुटमुपमा अम्बुजवदनयोरुपमानोपमेययोर्विकसत्त्वादिरूपस्य साम्यस्येवादिपदवाच्यत्वात् इयं च—"उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान्। रञ्जयति काव्यरङ्गे नृत्यन्ती

तद्विदां चेतः ॥" इत्युक्तदिशा 'वदनं वदनमिव' 'कमलमिव वदनं, वदनमिव कवलम्' 'कमलमवलोक्य वदनं स्मरामि,' 'वदनमेव कमलम्' 'वदनकमलेन मधुप उन्माद्यते' 'किमिदं वदनम् उत कमलम्' 'वदनं विलोक्य मधुपा अनुनयन्ते,' 'कमलमिति मधुपाः, सुधानिधिरिति चकोरास्तव वदने रज्यन्ति', 'कमलमिदं, न वदनम्'। 'वदनमिदं, न कमलम्', 'कमलमिदम्,' 'वदनेन ते शशिकमले विजिते,' 'मित्रं दृष्ट्वा त्वद्वदनं कमलं च हृष्यति,' 'त्वद्वदन एवाहं रज्यामि, कमले एव मधुपो रज्यति,' 'सलिले कमलम्, स्थले त्वद्वदनम्,' 'मित्रमण्डलं त्वद्वदनस्य विकाशकम्,' 'त्वद्वदनं कमलं च सदा ऽऽ(ऽ) लिगणं मोदयतः,' 'त्वद्वदनस्य पुरः कमलं न किञ्चित्,' इत्यनन्वयो—पमेयोपमा-स्मरण—रूपक-परिणामसन्देह-भ्रान्तिम-दुल्लेखा-पह्नुति-निश्चयोत्प्रेक्षाऽ- तिशयोक्ति - तुल्ययोगिता- दीपक - प्रतिवस्तूपमा- दृष्टान्त-निदर्शना-व्यतिरेक-सहोक्ति-समासोक्ति-परिकर-श्लेषा- प्रस्तुतप्रशंसाऽदीनामभिनयं दर्शयन्ती सहृदयहृदयमनुरञ्जयन्तीत्येका सर्वेष्वर्थालङ्कारान्तरेषु प्रधानभूताऽत एव प्रथमं निरूपणीया, अस्याश्च 'सरसी-न्दुकलाऽभोजदम-काञ्चनवल्लरी। स्वर्णयष्टि-स्तडि-द्दीपज्वालाश्च योषितः समाः ॥ रोचना कनकं विद्यु-द्धरिद्रा च वराटकः। हेमकेतक-चाम्पेयौ रम्भाचास्यास्तनूसमाः ॥ तमो-जीमूत-शैवाल-बर्ह-नीलाश्मचामरैः। इन्दी-वरार्कजाबीचि-मधुपैश्च कचः समः ॥ अर्द्धचन्द्रो हेमपट्टस्तथा भालस्य साम्ययुक्। वल्ली-स्मरधनु-र्वीचिभृङ्गाली-पल्लवा भ्रुवोः ॥ चन्द्रादर्शौ कपोलस्य, मुखस्येन्द्वब्जदर्पणाः। तिलपुष्पं त नासायाः, कम्बोः कण्ठः स्मृतस्तथा ॥ अब्ज-तत्पत्र-शफरी-मृग-तन्नेत्रखञ्जनैः। नेत्रं चकोर-तन्नेत्र-केतकालि-स्मराशुगैः ॥ प्रवाल-बिम्ब-बन्धूकपल्लवैरधरोष्ठकौ। मुक्ता:माणिक्य-नारङ्गकुन्ददाडिमकोरकैः ॥ ताराचन्द्रकरैर्दन्ता वाग्घंस-शुककिन्नरैः ॥ वीणावेणुमृदङ्गैस्तु पिकेन स्वरसौभगम् ॥ विसवल्लीमृणालैश्च बाहुः पाणिस्तु पङ्कजैः। प्रवालप-ल्लवाभ्यां च नखास्त्विन्दुकलासमाः ॥ कुन्दकोरकतुल्याश्च वर्ण्याः सहृदयोत्तमैः ॥ पूगाब्जतत्कोरकविल्वतालगुच्छेभकुम्भाचलकुम्भचक्रैः। सौवीरजम्बीरकबीजपूरसमुद्गछोलङ्गफलैरुरोजः ॥ नाभी रसातलावर्त्तह्रदकूपनदादिभिः। वली तटिन्या तद्रूपैः पृष्ठं काञ्चनपट्टकैः ॥ सूच्यग्रतलशून्याणुवेदिसिंहादिभिः समः। मुष्टिग्राह्यो भवेन्मध्यो जघनं पुलिनोपमम् ॥ पीठप्रस्तरभूचक्रैर्नितम्बः परिवर्ण्यते। ऊरुस्तु हस्तिहस्तेन कदल्या करभेण च ॥ चरणः पल्लवाम्भोजस्थलपद्मप्रवालकैः। पूर्णेन्दुनाऽङ्गुष्ठनखौ गमनं हंसहस्तिवत् ॥ कटाक्षो यमुनावीचिभृङ्गावलिविषामृतैः। ज्योत्स्नेन्दुपुष्पपीयूषफेनकैरववद्धसः ॥ इत्युक्तनयेन उपमानप्रसिद्धिरवसेया, एष च दिङ्निर्देशः, विस्तरतस्तु स्वयमूह्य पमानोपमेयत्वम् ॥ ६७ ॥

वाच्यादीनां चतुर्णां पदानां सार्थकतां दर्शयति—**रूपकादिषु** रूपकपरिणामादिष्वलङ्कारेषु। **साम्यस्य** सादृश्यस्य साधर्म्यस्येति यावत्। **व्यङ्ग्यत्वम्** 'नतु वाच्यत्व' मिति शेषः। 'इत्यस्याभेद' इति परेणान्वेति। तथा च—'सुभगे तव किल वदनं कमलं मधुपप्रमोदकोल्लासम्।' इत्यादौ 'वदनं कमल' मित्यभेदप्रत्ययान्तरं 'वदनं कमलसाधर्म्यशाली'ति प्रत्ययो व्यङ्ग्य इति रूपकादौ साम्यस्य व्यङ्ग्यत्वान्नातिव्याप्तिः, ननु तर्हि 'विधवति तव वदनमये' इत्यादौ अपि साम्यस्य व्यङ्ग्यत्वान्माभूदुपमाविषयत्वमिति चेन्न, व्यङ्ग्यत्वस्यैव तत्रासिद्धेः, 'अम्भोजन्म स्मरति' इत्यादौ लुप्तस्यामादेः प्रतिसन्धानात् कर्म्मतादेरिव लुप्तस्य क्विप्प्रत्ययस्य प्रतिसन्धानात् साम्यस्य वाच्यत्वात्। ननु 'वदनं ते ननु चन्द्रजित्वरम्' 'सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम्' इत्यादौ कथं न पुनरव्याप्तिः, साम्यस्य व्यङ्ग्यत्वादिति चेत् अस्तु नाम, जित्वरप्रस्पर्धित्वयोश्चेतनधर्मतया वदननारङ्गकसम्बन्धि-त्वासम्भवात् उपमायां पर्य्यवसाने निदर्शनाया एव स्वीकारात्, 'वदनकमले सुरुचिरे' इत्यादौ तु साधर्म्यस्य वाच्यत्वेऽपि इवादिपदोपादानाभावान्नोपमात्वम्। इति फलितम्। **व्यतिरेके** तदाख्येऽलङ्कारे। **च**। **वैधर्म्यस्य**। अपि। 'नतु केवलं साधर्म्यस्ये'ति शेषः। **उक्तिः**। 'इत्यस्याभेद' इति परेणान्वयः। तथा च—'पङ्कजमिव तव वदनं

विकसति न तदिव पुनः परं दिवसे।' इत्यादौ वैधर्म्यस्याप्यभिधानान्नातिव्याप्तिः, अत्र हि नक्तमपि विकास उपमानस्य, दिवैव विकासः पुनरुपमेयस्य वैधर्म्यम्। ननु 'पङ्कजमिवे' त्यादौ साम्यस्य वाच्यत्वमस्तु नाम, किन्तु नञा तस्य वदने सम्बन्धापोहनात् कथमुपमायाः प्रसक्तिरेव, इति चेन्न; वदने विकाससाधर्म्यप्रतिपादनान्तरं तस्योत्कर्षबोधाय नञा केवलं दिवा विकासित्वनिषेधनात्। इति फलितम्। **उपमेयोपमायां** तदाख्येऽलङ्कारे 'मतिरिव कमला कमलेव मति' रित्यादाविति यावत्। **वाक्यद्वयम्** 'नत्वेकं वाक्य' मिति शेषः। 'इत्यस्याभेद' इति परेणान्वेति तथा च—लक्ष्मीबुद्ध्योरसदृशत्वरूपं साधर्म्ये वाच्यमपि वाक्यद्वयप्रतिपाद्यमिति न तत्रातिव्याप्तिः। उपमेयोपमायामिति रसनोपमाऽऽदेरप्युलक्षकम्। तेनेतोऽप्यस्या अनेनैव व्यवच्छेदः। इति बोध्योऽर्थः। **अनन्वये** तदाख्येऽलङ्कारे। तु। एकस्योपमानोपमेयैकतरस्य। एव। 'नतु तयोरुभयोरपी'ति शेषः। **साम्ययोक्तिः**। साधर्म्यस्याभिधया प्रतिपादनम्। इति। अस्माद्धेतोः। अस्या निरुक्तलक्षणाया उपमायाः। भेदो व्यवच्छेदः। तथा च—'विधुरिव विधुर्मनोज्ञः' 'मुखमिव मुखं मनोज्ञ' मित्यादौ विधुमुखाद्येकतरस्य मनोज्ञत्वादि साधर्म्यमिवादिशब्दप्रतिपाद्यम्, तच्चोपमानोपमेयोभयासम्बन्धित्वेन वाच्यमपि नोपमात्वानुयोगीति सूचितम्।

अत्राहुर्विवृतिकाराः—'केचित्तु—'इवादिशब्दवत् तुल्यादिशब्देनापि साधारणधर्म्मस्य प्रतिपादनात् करिष्यमाणश्रौत्यार्थीविभागानुपपत्त्या साधारणधर्म्मसम्बन्ध एवोपमा, नतु साधारणधर्म्ममात्रम्, स च प्रतियोगितारूपः। 'चन्द्र इव मुखम्' इत्यादौ चन्द्रप्रतियोगिकसादृश्यश्रयो मुखमिति प्रतीतेरानुभविकत्वात् तादृशसम्बन्धश्च इवादिशब्देन वाच्यस्तुल्यादिपदेनार्थवशलभ्य इति श्रौत्यार्थी विभागः।' इत्याहुः, तन्न आर्थ्यामुपमायाव्याप्तेः। तत्र-साधारणधर्म्मसम्बन्धस्य विभक्त्यादिप्रतिसन्धानलभ्यतया इवादिशब्दवाच्यत्वाभावात्। उभयसम्बन्धित्वस्य इवादिवाच्यत्वे श्रौती, अर्थवशलभ्यत्वे तु आर्थीति विवक्षयैव विभागोपपत्तेश्च।" इति।

ननु 'अस्थीव धवलं यशः' 'घट इव पटो द्रव्यम्' इत्यादौ उपमात्वमस्ति, न वा; अस्तीति चेत् तदलङ्कारतां कथमधिगतम्, नास्तीति चेत् कथं न उपमालक्षणस्य अत्र सर्वथा सत्त्वात्। इति चेत्! अत्र सर्वत्र 'अलङ्कारत्वे सती'ति विशेषणस्यानुषक्तत्वमवधेयम्। तथा च—सत्यपि 'साम्यं वाच्य' मित्यादिलक्षणानुलक्षितत्वेनोपमात्वे वैचित्र्यानाधायकत्वेनालङ्कारव्यपदेशार्हत्वम्। एवम्—पुरस्तादपि बोध्यम्।

**सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च ।**

**उपमेयं चोपमानं भवेद्वाच्यम्—**

सा उपमा । साधारणधर्मो द्वयोः सादृश्यहेतू गुणक्रिये मनोज्ञत्वादि । औपम्यवाचकमिवादि । उपमेयं मुखादि । उपमानं चन्द्रादि । इयं पुनः ॥ १५ ॥

---

## विवृति

उपमायाः पूर्णा लुप्ता चेति भेदद्वयमाह—**सेति** । सामान्यपदविवरणम् । **साधारणेति** । सादृशहेतू सामान्यव्यावृत्तिबोधकारणे साम्यविशेषणे इति यावत् । **औपम्यवाचकमिति** । अव्ययानामन्विताभिधानस्वीकारादिति भावः । उपलभ्यमानसाम्यस्यानुयोगि उपमेयम्, प्रतियोगि उपमानम् ॥

## विवृतिपूर्तिः

**औपम्यवाचीति** । उक्तं च दण्डिना—'इववद्वायथाशब्दाः समाननिभसंनिभाः । तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः ॥ प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः । सदृक्सदृशसंवादिसजातीयानुवादिनः । प्रतिबिम्बप्रतिच्छन्दसरूपसमसंमिताः ॥ सलक्षणसदृक्षाभसपक्षोपमितोपमाः । कल्पदेशीयदेश्यादिप्रख्यप्रतिनिधी अपि ॥ सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिनः । समासश्च बहुव्रीहिः शशाङ्कवदनादिषु ॥ स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति । आक्रोशत्यवजानाति कदर्थयति निन्दति ॥ विडम्बयति संधत्ते हसतीर्ष्यत्यसूयति । तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ॥ तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति । तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते ॥ तमन्वेत्यनुबन्धाति तच्छीलं तं निषेधति । तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः ।. उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः ॥' इति । अभिधया लक्षणया व्यञ्जनया चोपमाप्रतीतिरिति तस्या वाचका इवादयः, लक्षकाः स्पर्धत इत्यादयः स्पर्धादीनां सादृश्ये संकेताकरणात्, व्यञ्जकाः 'तस्य मुष्णाति सौभाग्यम्' इत्यादयः ॥

## विज्ञप्रिया

सा च पूर्णा लुप्ता चेति द्विधा । तत्र पूर्णामाह—**सा पूर्णेति** । **भवेद्वाच्यमिति** । कारिकाञ्चलस्य "इयं पुनः" अग्रे शेषभागः । व्याचष्टे—**सा उपमेति** । सामान्यधर्मपदार्थमाह—**साधारणधर्म** इति । स एव क इत्यत्राह—**द्वयोरिति** । श्लिष्टशब्दोऽपि गुण इत्यभिप्रायः तेन सकलकलं पुरमित्यादेः परिग्रहः ।

## लोचन

तद्भेदानाह—**सेति** । सामान्यधर्म इत्यस्य विवृत्तिः साधारणधर्म इति द्वयोरुपमानोपमेययोः ।

## कुसुमप्रतिमा

उपमा च पूर्णालुप्ताभेदेन प्रधानतो द्विविधेति दर्शयन् प्रथमं पूर्णां लक्षयति सेति। यदि सामान्यधर्म्म उपमानोपमेयोभयवृत्तिधर्म्मबोधकं पदम्, औपम्यवाचि सादृश्यवाचकं पदञ्च प्रयुक्तं भवेदित्यर्थः तथा उपमेयमुपमानञ्च वाच्यमुल्लिखितं भवेत्; तदा सा उपमा पूर्णा पूर्णोपमाभिधाना स्यादित्यर्थः। सर्वाङ्गपूर्णत्वादित्याशयः।

सामान्यधर्म्मादिपदानि क्रमशो विवरीतुमाह साधारणेति। सामान्यसाधारणशब्दयोः पर्य्यायतया सामान्यधर्म्म इत्यस्य स्थाने साधारणधर्म्म इति प्रयोगेऽपि न दोषः। द्वयोरुपमानोपमेयत्वेनाभिमतयोः पदार्थयोः, सादृश्यस्य हेतू घटिके। तथा च तद्भिन्नत्वे सति सम्भाव्यमानतद्गतानेकधर्म्मवत्त्व नाम सादृश्यम्। तेन च स धर्म्मस्तस्य सादृश्यस्य घटक एव भवति, धनमिव धनित्वस्येति भावः। गुणश्च क्रिया चेति गुणक्रिये। एतञ्चोपलक्षणम्, एकविधशब्दोपस्थाप्यत्वमपि शाब्दः सामान्यधर्म्म इत्युन्नेयम्। मनोज्ञत्वादिपदेन भातिप्रभृति क्रियायास्तादृशशाब्दधर्म्मस्य च ग्रहणम्। तथा च "कमलमिव मुखं मनोज्ञम्" इत्यादौ मनोज्ञत्वादिरूपो गुणः सामान्यधर्म्मः। 'मुख' चन्द्र इवाभाति इत्यादौ आमातीत्यादिरूपा क्रिया समान्यधर्म्मः। "सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिवं इत्यादौ सकलकलमित्येकविधशब्दोपस्थाप्यत्वरूपः स्वरूपविशेषः सामान्यधर्म्मः।

औपम्येति। एतच्च अव्ययानामपि केषाञ्चिच्छब्दानां वाचकत्वमङ्गीकुर्वतां वैयाकरणैकदेशोयानां मतमाश्रित्याभिहितमिति बोध्यम्। आदिशब्देन यथादिशब्दानां वदादिप्रत्यानां बहुब्रीहिसमासस्य च ग्रहणम्। दण्डिना तु—'इव-वद्वा यथा-शब्दाः' इत्यादिना औपम्यवाचकाः कियन्तः शब्दाः परगणिता उन्नेयाः।

उपेति। उपमीयते सदृशीक्रियते यत्तदुपमेयं सादृश्याश्रयः पदार्थः। यंस्य दृष्टान्तो मुखादिति। "चन्द्रवन्मुखम्' इत्यादौ मुखादिकमित्यर्थः। उपमीयते सदृशीक्रियते येन तदुपमानं सादृश्यस्य नियतसम्बन्धी पदार्थः। तत्र दृष्टान्तश्चन्द्रादीति। 'चन्द्रवन्मुखम्' इत्यादौ चन्द्रादिकमित्यर्थः।

## विमला

सा चोपमा पूर्णालुप्ताभेदेन मुख्यतः द्विधा, तत्र आदौ पूर्णां लक्षयति, सेटति।—सा—उपमेत्यर्थः।

सामान्यधर्मं लक्षयति, साधारणधर्म इति।—सादृश्यहेतू—सामान्यव्यावृत्तिबोधकारणे विशेषणे इति यावत्। औपम्यवाचीत्यस्य व्याख्यामाह; औपम्यवाचकमिति।—अव्ययानामन्विताभिधानस्वीकारादिति भावः। उपमेयं दर्शयति, उपमेयं मुखादीति।—उपलभ्यमानसाम्यस्य अनुयोगि उपमेयम्। उपमानं लक्षयति, उपमानं चन्द्रादीति।—उपलभ्यमानसाम्यस्य प्रतियोगि उपमानम्।

## लक्ष्मी

पूर्णालुप्ताभेदेन प्रधानत उपमा द्विधेतिप्रतिपादयन् प्रथमं पूर्णां प्रतिपादयति—सेति। यदि सामान्यधर्म उपमानोपमेयोभयगतलक्षणीयत्वेनाभिमतधर्मविशेषबोधकपदम्, औपम्यवाचि सादृश्यवाचकं पदञ्च प्रयुक्तं स्यादित्यर्थः, तथा उपमेयमुपमानञ्च वाच्यमभिधयाप्रतिपाद्यं भवेत् तदा सा उपमा पूर्णा पूर्णोपमा स्यादित्यर्थः, सर्वांशयुक्तत्वादितिभावः।

यथाक्रमं सेत्यादिपदं विवृणोति—सेति। साधारणेति। सामान्यसाधारणब्दयोः तुल्यतया सामान्यधर्मस्थाने साधारणधर्म इति प्रयोगेऽपि दोषाभावो ज्ञेयः। द्वयोरुपमानोपमेयत्वेन प्रसिद्धयोः पदार्थयोः सादृश्यस्य हेतू

घटिके। सादृश्यत्वं तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्वम्, स च धर्मः सादृश्यघटक एव धनमिव धनित्वस्येत्याशयः। गुणश्च क्रिया चेति गुणक्रिये उपलक्षणं चैतत् तेन एकविधशब्दोपस्थाप्यत्वमपि साधारणधर्म इति बोध्यम्।

मनोज्ञत्वादीत्यत्र आदिपदेन भाति—प्रभृतिक्रियायास्तथाविधशब्दधर्मस्य च परिग्रहः, क्रमेण यथा—'कमलमिव मुखं मनोज्ञम्' इत्यादौ मनोज्ञत्वादिगुणः साधारणधर्मः, मुखं चन्द्र इवाभाति' इत्यादौ भातीत्यादिक्रिया साधारणधर्मः, सकलकलमित्यादौ सकलकलमित्येकविधशब्दोपस्थाप्यत्वरूपः स्वरूपविशेषः साधारणधर्मः।

**औपम्येति**। औपम्यवाचकं सादृश्यवाचकं पदञ्चेत्यर्थः। निपातानां द्योतकत्वेऽपि वाचकत्वाङ्गीकारः साम्यस्य वाच्यत्वविवक्षास्फुटीकरणार्थः। यद्वा अव्ययानामप्यन्विताभिधानस्वीकाराद्वाचकोपपत्तिरित्यवधेयम्। आदिपदेन वदादिप्रत्ययादीनां परिग्रहो बोध्यः। औपम्यवाचका इवादयो दण्डिना काव्यादर्शे निरूपिताः।

उपमेयमिति। उपमातुं समानतया प्रत्याययितुं योग्यं यत्तदुपमेयं सादृश्याश्रयः पदार्थः, यस्योदाहरणमाह—मुखादीति। 'चन्द्रवन्मुखम्' इत्यादौ मुखादिकमित्यर्थः। उपमीयते समानतया प्रत्याय्यते येन तदुपमानम् सादृश्यस्य निश्चितसम्बन्धीपदार्थः। तत्रोदाहरणमाह—**चन्द्रादीति**। 'चन्द्रवन्मुखम्' इत्यादौ चन्द्रादिकमित्यर्थः। उममेयोपमानयोः प्रसिद्धयोरेव ग्रहणं बोध्यम्।

पूर्णोपमाया एव श्रौत्यार्थीभेदेन द्वैविध्यं विभजते—इयं पुनरिति। इयं पुनः निरुक्तलक्षणा पूर्णोपमा, यदि यथाशब्द इवशब्दः 'वा स्याद्विकल्पोपमयोरिवार्थे च समुच्चये' इति विश्वकोशात् उपमार्थको वाशब्दः बहुवचनेन इवाथकनिपातवशब्दश्च इवार्थो वतिः प्रत्ययो वा विद्यते तदा श्रौतीत्युच्यते श्रूयते इति श्रुतिः शब्दः, तया साक्षादेवोपलभ्यमानोपमेयसम्बन्धा श्रौती। इवार्थकनिपात 'व' शब्दस्य ग्रहणे—

'पङ्कजदलानिव समुत्सफुरन्ति तासां सुनेत्रयुग्मानि'।

इत्यादौ पूर्णोमात्वम्।

'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सरौ मम'।

## रुचिरा

७८ अस्याः पूर्णा लुप्ता चेति भेदद्वयं विवक्षुस्तावत् पूर्णां लक्षयति—सेत्यादिना।

**७८ यदि**। **सामान्यधर्म्म** उपमानोपमेयोभयगतो लक्षणीयत्वेन अभिमतो धर्म्मविशेषः। **औपम्यवाच्यौ**-पम्यस्य साधर्म्यस्य वाचि 'इववद्वायथातुल्यसमाननिभसम्मितम्। सदृशं च समं प्रायः सन्निभं च सदृक्पदम्॥' इत्यादिपदमिति यावत्। **च**। **उपमेयम्**। **च**। **उपमानम्**। वाच्यमभिधया प्रतिपाद्यम्। भवेत्। 'तर्हि' ति शेषः। सा निरुक्तलक्षणा 'साम्यं वाच्य'मिति लक्षितेति यावत्। **पूर्णा**। 'उपमे' ति पूर्वतोऽनुक्रान्तम्। तथा च—निरुक्तलक्षणैव यद्युपमासामान्यधर्म्मप्रतिपादनपुरस्सरमिवाद्युपादाने सति उपमेयोपमानयोः शोभाऽतिशयार्थमभिधानं स्यात्। तदाऽसौ पूर्णेति निर्गलितोऽर्थः।

सूत्रार्थं सुबोधयितुं तत्पदानि व्याचष्टे—सा 'इत्यस्ये'ति शेषः। **उपमा** 'साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः।'इत्युक्तलक्षणोऽलङ्कार विशेषः 'इत्यर्थ' इति शेषः। **सामान्यधर्मः** साधारण धर्मः। 'नामे'ति शेषः। **द्वयोः** प्रसिद्धयोरुपमानोपमेययोरिति भावः। **सादृश्यहेतुः**। **मनोज्ञत्वादिः**। आदिना 'भाती' त्यादीनां ग्रहणम्। 'सादृश्यहेतू गुणक्रिये मनोज्ञत्वादि'रिति पाठान्तरे सादृश्यहेतुभूते ये गुणक्रिये तद्रूपो मनोज्ञत्वादिरित्यर्थः। तत्र

मनोज्ञत्वादिर्गुणो, 'भाती'त्यादिः क्रिया। इति बोध्यम्। **औपम्यवाचकं** सादृश्यवाचि। निपातानां द्योतकत्वेऽपि वाचकत्वाङ्गीकारः साम्यस्य वाच्यत्वविवक्षास्फुटीकरणार्थः। यद्वा-अव्ययानामपि अन्विताभिधानस्वीकाराद्वाचकत्वोपपत्तिरिति। बोध्यम्। 'नामे'ति शेषः। **इवादि**। आदिपदेन वद्वावयथातथा समसमानसम्मितसन्निभादेर्ग्रहणम्। अत्रेदम्बोध्यम् "इववद्वायथाशब्दा समाननिभसन्निभाः। तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपकाः॥ प्रतिपक्षप्रतिद्वन्द्वि-प्रत्यनीकविरोधिनः। सदृक्सदृशसंवादिसजातीयानुवादिनिः॥ प्रतिबिम्बप्रतिच्छन्दसरूपसमसप्रभाः। सलक्षणसदृक्षाभाः सपक्षोपमितोपमाः॥ कल्पदेशीयदेश्यादिप्रख्यप्रतिनिधी अपि। सवर्णतुलितौ शब्दौ ये वाऽन्यूनार्थवाचिनः॥ समासश्च बहुव्रीहिः शशाङ्कवदनादिषु। स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति॥ आक्रोशत्यवजानाति कदर्थयति निन्दति। विडम्बयति संरुन्धे हसतीर्ष्यत्यसूयति॥ तस्य मुष्णातिसौभाग्यं तस्य कान्ति विलुम्पति। तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति॥ तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते। तमन्वेत्यनुबन्धाति तच्छीलं तन्निषेधति। तस्य चानुकरोतीति शब्दाःसादृश्यसूचकाः" इत्युक्तदिशेवादयः 'बन्धुश्चौरः सुहृद्वादी प्रतिमा प्रतिभा तथा। सोदरः प्रतिभानं च प्रतिमानं च वादि च॥' इत्युक्तदिशा बन्ध्वादयश्चौपम्यार्थाः, एषु चइवाद्यास्सोदराद्याश्च अभिधिया, स्पर्धते इत्यादयो बन्ध्वादयश्च लक्षणया, हसतीत्याद्या व्यञ्जनया सादृश्यमवगमयन्ते। ति। उपमेयमुपमातुं समानतया प्रत्याययितुं योग्यम्। 'यथे'ति शेषः। **मुखादि**। आदिनोर्वादीनां ग्रहणम्। **उपमान**मुपमीयते समानतया प्रत्याय्यतेऽनेनेति तथोक्तम्। 'यथे'ति शेषः। **चन्द्रादि**। आदिना रम्भादीनां ग्रहणम्। तथा च यत्रोपमेयोपमानयोः प्रसिद्धयोः सतोः सप्रभेदमभिधानमिवाद्युपादानपूर्वकं सचमत्कारकारणमेकवाक्यगतं सामान्यधर्म्मवाच्यत्वं सा पूर्णोपमा। अत्र 'द्वयो'रित्येतावतोपादानेनोपमेयोपमानयोः प्रसिद्धत्वमभिप्रेयते। अत एवाहुः—"यदाऽयमुपमानांशो लोकतः सिद्धिमृच्छति। तदोपमैव येनेवशब्दः सादृश्यवाचकः॥ यदा पुनरयं लोकादसिद्धः कविकल्पितः। तदोत्प्रेक्षैव येनेवशब्दः सम्भावनापरः॥' इति। एवं च—'मुखमिव कमलं रुचिर' मित्यादौ नातिव्याप्तिः। मुखस्योपमानत्वेन कमलस्य चोपमेयत्वेनाप्रसिद्धेः। इवाद्युपादानपूर्वकमित्यनेन 'मुखं शशाङ्कसुन्दर'मित्यादेरस्या व्यवच्छेदः। सचमत्कारकारणमित्यनेन—'मुखं कमलमिव सितम्' इत्यादेर्व्यवच्छेदः, अत्र हि सादृश्यवाच्यत्वादिसत्त्वेऽपि चमत्कारकत्वाभावान्नात्रालङ्कारत्वम्। एकवाक्यगतमित्यनेन 'चन्द्रायते शुक्लरुचाऽपि हंसो हंसायते चारुगतेन कान्ता' इत्यादेर्व्यवच्छेदः। सामान्यधर्म्मवाच्यत्वमित्यनेन-'कमलमिव वदन' मित्यादेर्व्यवच्छेदः। सामान्यधर्म्मो नाम सादृश्याद्यपरपर्य्यायः, सादृश्यं च तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वम्, प्रकृते च तस्य व्यङ्ग्यत्वं, शब्देन साक्षादप्रतिपादनात्। यत्तु विश्वेश्वरेणोक्तम् 'वाचकधर्म्मसमत्वप्रतियोग्यनुयोगिनां ग्रहे पूर्णा।' इति, तत्र—वाचकेतिपदसमभिव्याहारेण समत्वादीनामपि वाच्यत्वमवधेयम्। अन्यथा—लक्ष्यव्यङ्ग्योपमयोरपि वाचकोपादाने लक्ष्यव्यङ्ग्यत्वोपपत्तिरेव न सम्पत्स्यते। इति।

उक्त्याः पूर्णोपमाया एव द्वैविध्यं लक्षयति—७९ इयमित्यादिना।

**इयं पुनः ॥१५॥**

**श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि।**

**आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः ॥ १६ ॥**

यथेववादयः शब्दा उपमानानन्तरप्रयुक्ततुल्यादिपदसाधारणा अपि श्रुतिमात्रेणोपमानोपमेयगतसादृश्यलक्षणसंबन्धं बोधयन्तीति तत्सद्भावे श्रौत्युपमा, एवं 'तत्र तस्येव' इत्यनेनेवार्थे विहितस्य वतेरुपादाने। तुल्यादयस्तु—'कमलेन तुल्यं मुखम्' इत्यादावुपमेय एव। 'कमलं मुखस्य तुल्यम्' इत्यादावुपमान एव, 'कमलं मुखं च तुल्यम्' इत्यादावुपभयत्रापि विश्राम्यन्तीत्यर्थानुसंधानादेव साम्यं प्रतिपादयन्तीति तत्सद्भावे आर्थी। एवं 'तेन तुल्यं—' इत्यादिना तुल्यार्थे विहितस्य वतेरूपातान्।

---

## विवृति

पूर्णोपमायाः श्रौत्यार्थीभेदेन द्वैविध्यमाह—**इयं पुनरिति**। इयं पूर्णोपमा। श्रूयत इति श्रुतिः शब्दः, तया साक्षादेवोपलभ्यमानोपमेयसंबन्धा श्रौती। तस्या उपलम्भकानाह—**यथेवेति**। 'वा स्याद्विकल्पोपमयोरिवार्थे स समुच्चये' इति कोषाद्वाशब्दस्योपमार्थत्वम्. बहुवचनमाद्यर्थम्। तेन 'पङ्कजदलानि व लोचनानि' इत्यादौ वशब्दोऽप्युपमार्थः। पदार्थानुसंधानापेक्षया प्रतीयमानोभयसंबन्धा आर्थी। तस्या ज्ञापकानाह—**तुल्येति**। आद्यपदेन समसदृशादीनां ग्रहणम्।

भेदमुपपादयति—**यथेवेति**। यद्यपि यथादयः शब्दा उपमानवाचकपदात्परं प्रयुज्यमानस्य तुल्यादिपदस्य साधारणास्तदुपमानोपमेयगतसाधर्म्यबोधकाः, तथापि **श्रुतिमात्रेण** स्वोपलब्धिमात्रेण न तु पदार्थानुसंधानापेक्षया उपमानोपमेयवृत्तिसाधर्म्यं बोधयन्तीति हेतोस्तेषां यथादिशब्दानां सद्भावे प्रयोगे श्रौती उपमेत्यर्थः। अव्ययानामन्विताभिधानस्वीकाराद् यथा 'घटो न पटः' इत्यादौ नञ्पदं पदार्थोपस्थितिमन्तरेणैव पदार्थोपस्थितेः प्रागेव समभिव्याहृतपदार्थयोरन्वितं भेदं बोधयति, तथा 'कमलमिव मुखम्' इत्यादाविवादिपदमपि श्रवणमात्रेण समभिव्याहतपदार्थयोरन्वितं साधर्म्यं बोधयति। **अन्विताभिधानवादिमते**। ह्यखण्डवाक्यस्याखण्डवाक्यार्थे शक्तिरेकातिरिक्ता कल्प्यते, प्रथमं तयैव वाक्यार्थबोधो जायते, पश्चादेव शक्त्या लक्षणया वा प्रत्येकपदार्थोपस्थितिरिति भावः। अव्ययानामभिहितान्वयाङ्गीकारेऽपि अव्ययातिरिक्तनामार्थयोरभेदातिरिक्तसंबन्धेन साक्षादन्वयस्वीकारादव्ययार्थस्य नामार्थेन साक्षादेवान्वयः संभवतीत्यव्यपदेनोपमानोपमेयभावेऽपि साधारणधर्मसंबन्धोपस्थापनेन विभक्त्यर्थप्रतिसंधानापेक्षेति बोध्यम्। **एवमिति**। 'तत्र तस्येव' इति पाणिनिसूत्रम्। तत्रेव तस्येवेत्यर्थे वतिर्भवतीति तदर्थः। इवार्थकस्य वतेरिवशब्दतुल्यव्युत्पत्तिः, तदुपादानेऽपि श्रौत्येवोपमेत्यर्थः। आर्थीमुपपादयति—**तुल्यादयस्त्विति**। 'शब्दाः' इत्यनुषङ्गः। 'कमलेन' इति षष्ठ्यर्थे तृतीया। षष्ठ्यर्थश्चात्र कुम्भस्य जलमितिवदाधेयत्वम्। तस्य च तुल्यपदार्थैकदेशे सादृश्येऽन्वयः। तथा च कमलवृत्तिसादृश्याश्रयो मुखमित्यर्थः। **उपमेयएवेति**। 'विश्राम्यन्ति' इत्यग्रेणान्वयः। स्वार्थं बोधयन्तीति तदर्थः। एवकारेण उपमानव्यवच्छेदः। एवं च तुल्यादिपदानामनव्ययतयान्विताभिधानस्वीकारेणार्थबोधात्प्राक् पदार्थोपस्थितिमात्रं जनयित्वा उपमेय एव विश्रान्तिः, पश्चात्तूपमानपदार्थानुसंधानेन तात्पर्यानुसंधानेन चोपमानस्य सादृश्योपमानप्रती-

तिरिति भावः। **उपमान एवेति**। 'तुल्यादयः शब्दा विश्राम्यन्ति' इत्यन्वयः। कमलादीनां मुखोपमानत्वं दण्डी। विषयविशेषे तुल्यादिपदानामपि षष्ठ्यर्थानुसंधानं विनाप्युभयसंबन्धिसाधर्म्यबोधकत्वमाह—कमलं मुखं चेति। अर्थानुसंधानादेवेति षष्ठ्यर्थानुसंधानादुभयसंबन्धसाम्यं बोधयन्त्येवेत्यर्थः। तुल्यादिपदानामपि क्वचित्षष्ठ्यर्थानुसंधानं विनाप्युभयसंबन्धसाम्यबोधकत्वस्य संभवेऽपीवादिवत्सर्वत्र तदभावात्तत्सद्भावेन श्रौत्युपमेति भावः। तुल्यार्थस्य वतेरुपादानेऽप्यार्थीमाह—**एवमिति**। 'तेन तुल्यं—' इति पाणिनिसूत्रम्। वतेरूपादाने आर्थीति संबन्धः॥

## विवृतिपूर्तिः

**यथेति**। अत्र वाशब्दवद् वशब्दोऽप्युपमार्थको बोध्यः। तथा च **कालिदासः**—'शात्रवं व पपुर्यशः' इति। यद्यपीह 'शात्रवं च' इति चघटितपाठो बहुत्रोपलभ्यते तथापि न श्लाघ्य इवार्थक-वशब्दोपादानेनैव चमत्कारोत्पत्तेः 'मणी वोष्ट्रस्य' इति भारतप्रयोगसमर्थनावसरे **मनोरमायां** दीक्षितैरूपेक्षितत्वाच्च॥

**तत्रेति**। तत्रेति सप्तमीसमर्थात्तस्येति षष्ठीसमर्थाच्च इवार्थे वतिप्रत्ययो भवतीति तदर्थः। सप्तमीसमर्थाद्यथा—मथुरावत्स्रुघ्ने प्राकारः। मथुरायामिव मथुरावदिति विग्रहः। प्राकाराद्याधेयापेक्षाधिकरणविहितसप्तम्यन्ताद्वतिप्रत्ययविधानम्। मथुरायां यादृशः प्राकारस्तेन तुल्यः स्रुघ्ने प्राकार इत्यर्थः। षष्ठीसमर्थाद्यथा—चैत्रवन्मैत्रस्य गावः। चैत्रस्येव चैत्रवदिति विग्रहः। चैत्रादिस्वाम्यपेक्षसंबन्धविहितषष्ठ्यन्ताद्वतिः। चैत्रस्य यादृश्यो गावस्तत्तुल्या मैत्रस्येत्यर्थः॥

**तेनेति**। 'तेन तुल्यं क्रिया चेद्वतिः' इति संपूर्णसूत्रम्। तेनेति तृतीयासमर्थात्तुल्यमित्यर्थे वतिः प्रत्ययो भवति, यत्तुल्यं क्रिया चेत्सा भवतीति तदर्थः। उपमेयस्य क्रियात्वे उपमानवाचकात्तृतीयान्तात्तुल्यमित्यर्थे वतिप्रत्ययो भवतीति भावः। 'ब्राह्मणवदधीते क्षत्रियः' इति तदुदाहरणम्। ब्राह्मणेन तुल्यं ब्राह्मणवदिति विग्रहः। अध्ययनक्रियाविशेषणत्वात्तुल्यमिति द्वितीया नपुंसकत्वं च। ननु ब्राह्मणसादृश्यस्याध्ययनेऽभावात्कथमिहवतिरिति चेत्। न। ब्राह्मणशब्दस्य तत्कर्तृकाध्ययने लाक्षणिकत्वात्। सौष्ठवादिश्चात्र साधारणो धर्मः। तथा च ब्राह्मणकर्तृकाध्ययनतुल्यं क्षत्रियकर्तृकं वर्तमानकालिकमध्ययनमिति बोधः। अत्र 'क्रिया चेत्' इत्युक्त्या क्रियातुल्यत्व एवास्य वतेः साधुत्वम्। 'तत्र तस्येव' इति विहितस्य तु गुणजात्यादिनापि तुल्यत्वे साधुत्वमिति विवेकः। तेन 'पुत्रेण तुल्यःस्थूलः' इति गुणतुल्ये वाक्यमेव तिष्ठति, न तु वतिरिति बोध्यम्॥

## विज्ञप्रिया

अस्याः श्रौत्यार्थीत्वद्वैविध्यमाह—**इयं पुनरिति**। इयं पूर्णोपमा सर्वप्रकारैव श्रौत्री आर्थी चेत्यर्थः। वक्ष्यमाणा लुप्ता तु किञ्चित्प्रकारैव। यथेववाशब्दा इत्यत्रादिपदशब्दोऽपि बोध्यः। तेन 'शात्रवं च पपुर्यशः' इत्यादावपि तथात्वम्। श्रुतिमात्रेण श्रवणमात्रेण शीघ्रमित्यर्थः। उपमानोपमेयगतं सम्बन्धं प्रतियोगितानुपयोगितारूपमित्यर्थः। **सादृश्यलक्षणमिति**। सादृश्याल्लक्षणं ज्ञानं यस्य तादृशमित्यर्थः। प्रतियोगिताऽनुयोगिताख्यस्य सम्बन्धस्य सादृश्यनिरूप्यत्वेन तज्ज्ञानज्ञेयत्वात्। ननु सादृश्यरूप एव सम्बन्ध उपमा, तस्य तुल्यादिपदानामपि वाच्यत्वात् शीघ्रप्रतीयमानत्वेन इवादितोऽविशेषेण श्रौत्यार्थीविभागानुपपत्तेः। षष्ठ्यन्तसप्तम्यन्ततो विहितस्य वतेरपीवार्थे पाणिनिना विहितत्वात्, तस्यापि इवतुल्यव्युत्पत्तिकत्वेन तदुपादानेऽपि श्रौतीत्याह—**एवं तत्रेति**। तत्र तस्येवेति वतिविधायकं पाणिनिसूत्रम्। तत्रैव तस्येव इत्यर्थकं षष्ठ्यन्तात् सप्तम्यन्ताद् वा इवार्थे वतिरित्यर्थः।

तुल्याद्यनव्ययोपादाने तु आर्थीत्वं वक्तुमाह—**तुल्यादयस्त्विति**। तुल्यादयः शब्दा विश्राम्यन्तीत्यग्रेऽन्वयः। विश्राम्यन्ति। विशेष्यतां प्रतिपादयन्ति। यत्र हि विशेष्यताप्रतीतिस्तदुपमेयं तदितरदुपमानम्, तुल्यादिपदोपादाने तु तत्प्रतिपादनस्याऽनियतत्वाद् उपमेयोपमानयोः प्रतिसन्धानगम्यत्वाद् उपमेयोपमाननिष्ठप्रतियोग्यनुयोगिरूपाया उपमाया अपि प्रतिसन्धानगम्यत्वात् तत्सद्भावे आर्थीत्यर्थः। तत्र तुल्यादिपदोपादाने विशेष्यताप्रतीतेरनियतत्वं दर्शयति—**कमलेनेति**। **कमलं मुखस्येति**—नचात्र मुखमुपमानं कमलमुपमेयमेव इति कथमुपमाने विश्रान्तिरिति वाच्यम्, कमलस्योपमानत्वे तात्पर्य्याद् अप्येवं प्रयोगे तथात्वात्। तुल्यार्थेऽपि वतिविधायकं "तेन तुल्यम्" इति पाणिनेरपरं सूत्रम्। तादृशवत्युपादानेऽपि भवति आर्थीत्याह—**एवं तेनेति**।

## लोचन

इयं पूर्णा। श्रौतीशब्दः श्रुत्या ज्ञायत इति व्युत्पत्त्या। तेन साक्षान्निवेदिता श्रौती।

उपमानान्तरप्रयुक्ततुल्यादिपदसाधारणा अपीति। ननु मुखं चन्द्र तुल्यमित्याद्याकारेण उपमानानन्तरे यानि प्रयुक्तानि तुल्यसदृशानि पदानि तत्साधारणास्तत्प्रायाः यद्यपीत्यर्थः। **श्रुतिमात्रेणेत्यादि**। अयमाशयः—मुखं कमलमिव इत्यादेः शब्दस्य प्रयोगादेव मुखमुपमेयं कमलं चोपमानमिति प्रतीतिः। न त्वेवं तुल्यादिपदोपादान इति समनन्तरमेव वक्ष्यति—**एवमिति**। अनेन व्याकरणेन। यत इवशब्दस्योपादाने श्रौती, अतस्तदर्थविहितस्य वतेरुपादानेऽपि सैव युक्तेति भावः।

उपमेये इत्यादिभिः सप्तम्यन्तैः विश्राम्यन्तीति क्रियायाः सम्बन्धः। उपमेय एव विश्राम्यन्ति तद्विशेषणत्वेनोपादानात्। एवमुत्तरत्रापि। साम्यं मुखस्य उपमेयत्वम्। कमलस्य उपमानत्वम्। **एवमिति**—इवार्थविहितवतिविषयोक्तन्यायेन इत्यर्थः।

## कुसुमप्रतिमा

श्रौतीरूपेण आर्थीरूपेण च पूर्णोपमां द्विधा विभजते इयमिति। इयं पुनः पूर्णोपमा, यदि यथाशब्दः इवशब्दः, "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वकोषदर्शनात् उपमावाचको वाशब्दः, बहुवचनात् इवार्थे 'व'-निपातश्च इवार्थो वतिः प्रत्ययो वा वर्त्तते, तदा श्रौतीत्याख्यायते; श्रुतिमात्रेण सादृश्यावगमात्। यत्र तु तुल्यः, समानः, आद्यशब्दात् सदृशादयः, शब्दाश्च वर्त्तन्ते, तुल्यार्थो वतिः प्रत्ययो वा वर्त्तते, तत्र आर्थीत्यभिधीयते; अर्थानुसन्धानेनैव सादृश्यावगमात्।

ननु यथादयस्तुल्यादयश्च शब्दाः सादृश्यप्रत्यायने समानसमर्था एवेति कथं तत्तच्छब्दमात्रमादायैव श्रौत्यार्थीरूपद्विविधभेदकल्पनेत्याह यथेवेति। उपमानानन्तरम् उपमानबोधकशब्दात् परं प्रयुक्तानि बिम्बस्तानि यानि तुल्यादिपदानि तेषां साधारणाः समाना अपि, श्रुतिमात्रेण षष्ठीवत् श्रवणमात्रेणैव उपमानोपमेयगतं सादृश्यलक्षणं साम्यस्वरूपं सम्बन्धं बोधयन्ति शब्दशक्तिमहिम्ना प्रत्याययन्ति इति हेतोः, तेषां यथेववादिशब्दानां सद्भावे विद्यमानत्वे।

एवमिति। "तत्र तस्येव" इति (५/१/११६) पाणिनिसूत्रम्। तत्रेति सप्तम्यन्तात् तस्येति षष्ठयन्ताच्च शब्दादिवार्थे वतिप्रत्ययो भवतीत्यर्थः। वतेर्वतिप्रत्ययस्य उपादाने श्रौती उपमेति पूर्णेणान्वयः।

इदानीमार्थीति संज्ञामुपपादयितुमाह तुल्यादय इति। शब्दा इति पूर्वेणान्वयः। चादिशब्दात् समानसदृश-हसति-प्रत्यर्थिप्रभृतिशब्दानां ग्रहणम्। उपमेये मुख एव, विश्राम्यन्तीति परेणान्वयः। तुल्यमिति मुखमिति

चानयोः समानविभक्तिकत्वादिति भावः। एवमुत्तरयोरपि। मुख्यस्येति दीर्घिकाथा जलम्' इत्यादिवदधिकरणता-सम्बन्धे षष्ठी। उपमाने कमले एव। न चात्र कमलशब्दतुल्यशब्दयोः समानविभक्तिकत्वात् कमलस्योपमेयत्वमे-वेति वाच्यम्, मुखकमलशब्दयोः समभिव्याहारस्थले कमलस्योपमानतया चिरप्रसिद्धत्वात्। काव्यप्रकाशटीकायां महेश्वरोऽप्येवमेवाह स्म। विश्राम्यन्ति अवतिष्ठन्ते समानविभक्तिक त्वाद्विशेष्यताप्रत्यायनेन प्राधान्यं प्रत्याय-न्तीत्यर्थः। साम्यम् उपमेयत्वप्रतिपादकं विशेष्यीभूतं सादृश्यमित्यर्थः। तेषां तुल्यादिशब्दानां सद्भावे विद्यमानत्वे, आर्थी उपमेत्यन्वयः।

एवमिति। इत्यादिना "तेन तुल्यं क्रिया चेद्वतिः" (५/१/११५) इति पाणिनिसूत्रेणेत्यर्थः। तथा च तेनेवि तृतीयान्तात् तुल्यमित्यर्थे वतिप्रत्ययो भवति, तत्तुल्यं चेत् क्रिया क्रियाविशेषणत्वेन क्रियारूपं भवतीत्यर्थः। यथा—ब्राह्मणेन तुल्यमधीते ब्राह्मणवदधीते क्षत्रियः। वतेर्वतिप्रत्ययस्य उपादाने आर्थी उपमेति पूर्वेणान्वयः। काव्यप्रकाशकारोऽप्येवम्।

## विमला

पूर्णोपमायाः श्रौत्यार्थीभेदेन द्वैविध्यमाह, इयमिति।—इयं—पूर्णोपमा, श्रूयते इति श्रुतिः,—शब्दः, तथा श्रुत्या—श्रवणमात्रेणैव औपम्यं बोधयन्ती श्रौती तस्या उपलम्भकानाह, यथेविति।—"वा स्यात् विकल्पोपमयो-रेवार्थेऽपि समुच्चये इति कोषात् वाशब्दस्य उपमार्थत्वं, बहुवचनमाद्यर्थं, तेन—"पङ्कजदलानि व लोचनानि" इत्यादौ वशब्दोऽप्युपमार्थे। आर्थी—अर्थानुसन्धानेन औपम्यं बोधयन्ती पदार्थानुसन्धानापेक्षया प्रतीयमानोभयसम्बन्धे-त्यर्थः। तस्याः ज्ञापकानाह, तुल्येति।—(आद्यपदेन समसदृशादीनां ग्रहणम्)। अन्यत् स्पष्टम्।

भेदमुपपादयति यथेवेति।—यथेववादयः,—यथेववाप्रभृतयः, शब्दाः उपमानानन्तरम्—उपमानवाच-कपदात् परं, प्रयुक्तस्य—विहितस्य, तुल्यादिपदस्य साधारणाः,—तदुपमानोपमेयगतसाधर्म्यबोधकाः अपि, श्रुति-मात्रेण—स्वोपलब्धिमात्रेण, न तु पदार्थानुसन्धानापेक्षया इत्यर्थः, उपमानोपमेयगतम्—उपमानोपमेयवृत्तिः, यः सादृश्यलक्षणसम्बन्धः,—साधर्म्यरूपसंसर्गः, उपमानोपमेयवृत्ति साधर्म्यमित्यर्थः, तं बोधयन्ति, इति—इति हेतोः तत्मद्भावे—तेषां—यथादि शब्दानां, सद्भावे—प्रयोगे, श्रौती—तन्नाम्नी इत्यर्थः, उपमा, कथ्यते इति शेषः। अप्यानामन्विताभिधानस्वीकारात् यथा "घटो न पटः" इत्यादौ नञ्पदं पदार्थोपस्थितिमन्तरेणैव पदार्थोपस्थितेः प्रागेव समभिव्याहृतपदार्थयोः अन्वितं भेदं बोधयति, तथा "कमलमिव मुखम्" इत्यादौ इवादिपदमपि श्रवणमात्रेण समभिव्याहृतपदार्थयोः अन्वितं साधर्म्यं बोधायति। अन्विताभिधानवादिमते हि, अखण्डवाक्यस्य अखण्डवा-क्यार्थे शक्तिः एका अतिरिक्ता कल्प्यते, प्रथमं तयैव वाक्यार्थबोधो जायते पश्चादेव शक्त्या लक्षणया वा प्रत्येकपदार्थोपस्थितिरिति भावः। अव्ययानामभिहितान्वयाङ्गीकारेऽपि अव्ययातिरिक्तनामार्थयोः अभेदातिरिक्त-सम्बन्धेन साक्षादन्वयास्वीकारात् अव्ययार्थस्य नामार्थेन साक्षादेव अन्वयः सम्भवतीति अव्ययपदेन उपमानोपमे-यभावेऽपि साधारणधर्मसम्बन्धोपस्थापनेन विभक्त्यर्थप्रतिसन्धानापेक्षा इति बोध्यम्। एवमिति।—"तत्र तस्येव" इति (५/१/११६) पाणिनिसूत्रम्, तत्रेव तस्येव इत्यर्थे वतिः भवतीति तदर्थः। इवार्थकस्य वतेरिवशब्दतुल्यव्यु-त्पत्तिः, तदुपादानेऽपि श्रौती एव उपमा इत्यर्थः। आर्थीमुपपादयति, तुल्यादयस्त्विवति।—"शब्दाः" इत्यनुषङ्गः, "कमलेन" इति षष्ठ्यर्थे तृतीया, षष्ठ्यर्थश्च अत्र "कुम्भस्य जलम्" इतिवत् आधेयत्वम्; तस्य च तुल्यपदार्थैकदेशे सादृश्ये अन्वयः; तथा च—कमलवृत्तिसादृश्याश्रयो मुखम् इत्यर्थः। उपमेये एवेति।—"विश्राम्यन्ति" इत्यग्रेणा-न्वयः, स्वार्थं बोधयन्ति इति तदर्थः; एवकारेण उपमानव्यवच्छेदः; एवञ्च तुल्यादिपदानाम् अनव्ययतया अन्विता-

भिधानस्वीकारेण अर्थबोधात् प्राक् पदार्थोपस्थितिमात्रं जनयित्वा उपमेये एवं विश्रान्तिः; पश्चात्तु उपमानपदार्थानुसन्धानेन तात्पर्य्यानुसन्धानेन च उपमानस्य सादृश्योपमानप्रतीतिरिति भावः। उपमाने एवेति।—"तुल्यादयः शब्दाः विश्राम्यन्ति" इत्यन्वयः, कमलादीनां मुखोपमानत्वं प्रसिद्धम् इत्यभिप्रायेणेदं, वस्तुतस्तु कमलम् अत्र उपमेयमेव। इयमेव विपर्य्यासोपमा इति दण्डी। विषयविशेषे तुल्यादिपदानामपि षष्ठ्यर्थानुसन्धानं विनाऽपि उभयसम्बन्धिसाधर्म्यबोधकत्वमाह—कमलं मुखञ्चेति। अर्थानुसन्धानादेवेति।—षष्ठ्यर्थानुसन्धानादेवेत्यर्थः, साम्यम्—उभयसम्बन्धसाम्यं, प्रतिपादयन्ति—बोधयन्तीत्यर्थः, इति—इति हेतोः। तुल्यादिपदानामपि क्वचित् षष्ठ्यर्थानुसन्धानं विनाऽपि उभयसम्बन्धसाम्यबोधकत्वस्य सम्भवेऽपि इवादिवत् सर्वत्र तदभावात् तस्मद्भावेन श्रौती उपमा इति भावः। तुल्यार्थस्य वतेरुपादानेऽपि आर्थीमाह, एवमिति।—"तेन तुल्यम्"—(५/१/११५) इति पाणिनिसूत्रम्। वतेः उपादाने आर्थी इति सम्बन्धः।

श्रौत्यार्थीभेदेन द्विविधायाः पूर्णोपमायाः त्रैविध्यमाह, द्वे इति।—तद्धिते—वत्-कल्पादियोगे। समासे इति।—इवयोगे एव उपमानात् सर्वविभक्तीनामिव इति अलोपविधानसामर्थ्यात् समासः, स च नित्य एव "नित्यसमासे इवयोगे समासगा" इति काव्यप्रकाशदर्शनात् इवार्थस्य विशेषसापेक्षत्वेऽपि अनभिधानबलात्समासः। एवञ्च प्रतियोगिपदासमभिव्याहारेण यत् इवपदं प्रयुज्यते, तत् प्रयोक्तृप्रमादजमेव। वाक्ये यथादियोगे अत्र अगमकत्वेन समासाभावात् तद्योगे वाक्यन्तैव उपमा इति भावः। एवं त्रिविधा श्रौती। आर्थी तु तद्धिते वदादियोगे तुल्यादिपदसमासस्य वैकल्पिकत्वात् समासे वाक्ये च सम्भवतीति भावः। समासपक्षेऽपि लुप्तषष्ठ्यर्थस्य लक्षणाया वा प्रतिसन्धानादेव उपमानसम्बन्धबोध इति आर्थ्येव।

## लक्ष्मी

इत्यादौ तूत्प्रेक्षैव उपमेयोपमानभावाप्रसिद्धेः। एवं 'शात्रवं च पपुर्यशः' इतिकालिदासप्रयोगोऽपि सङ्गच्छते 'शात्रवं च' इति चघटितपाठे तादृशचमत्कारानुपपत्तेरितिबोध्यम्। यत्र तु तुल्यः समानः, आद्यपदात् समसदृशादयः शब्दाश्च विद्यन्ते, तुल्यार्थो वतिः प्रत्ययो वा विद्यते तत्रार्थीत्यभिधीयते पदार्थानुसन्धानपेक्षया प्रतीयमानोभयसम्बन्धवत्वादित्याशयः। तथा च श्रौत्युपमायां श्रुतिमात्रेण सादृश्यप्रतीतिः, अत्र तु अर्थानुसन्धानेनैव तत्प्रतीतिरिति निष्कर्षो ज्ञेयः।

ननु सादृश्यबोधने यथादयस्तुल्यादयश्च शब्दाः समानरूपा एव तत्कथं तत्तच्छब्दमात्रमाश्रित्यैवोक्तद्विविधभेदविभाग इत्यत आह—यथेवेति। आदिना व—इत्यस्य ग्रहणम्। उपमानन्तरम् उपमानवाचकपदानन्तरम् प्रयुक्तानि विन्यस्तानि यानि तुल्यादिपदानि तेषां साधारणास्तदुपमानोपमेयगतसादृश्यबोधने समाना अपि, श्रुतिमात्रेण स्वोपलब्धिमात्रेण उपमानोपमेयगतं सादृश्यलक्षणं साम्यस्वरूपं सम्बन्धं बोधयन्ति शब्दशक्तिमहिम्ना ज्ञापयन्ति, इति हेतोः तेषां यथेववादिशब्दानां सद्भावे प्रयोगे।

'चन्द्रवद् दृशि ते सुधा' इत्यादावप्यषैवेति दर्शयितुमुपपादयति—एवमिति। 'तत्र तस्येव' ५/१/११६ इति पाणिनिसूत्रम्। तत्रेति सप्तमीसमर्थात्तस्येति षष्ठीसमर्थाच्च इवार्थे वतिप्रत्ययो भवतीति तदर्थः। सप्तमीसमर्थाद्यथा—'मथुरावत्पाटलिपुत्रे प्राकारः' मधुरावदित्यस्य मथुरायामिवेत्यर्थः। प्रकाराद्याधेयापेक्षाधिकरणविहित-सप्तम्यान्ताद्वतिप्रत्ययः मथुरायां यादृशः प्राकारस्तेन तुल्यः पाटलिपुत्रे प्राकार इत्यर्थः। षष्ठीसमर्थाद्यथा—मथुरावत् पाटलिपुत्रस्य विस्तारः, मथुराया इवेत्यर्थः मथुरावदितिविग्रहः। मथुरासम्बन्धिविस्तारापेक्षसम्बन्धविहितषष्ठ्यन्ताद्वतिः। मथुरासम्बन्धिविस्ताराभिन्नः पाटलिपुत्रसम्बन्धीविस्तार इत्यर्थः। वतेरिति। वतेः वतिप्रत्ययस्य उपादाने

श्रौती उपमेति पूर्वेण सम्बन्धः। तथा च 'पद्मवत्त्वन्मुखे कान्ते ! भान्ति...चन्द्रवत्त्वन्मुखस्यापि सुषमा सुभगा सदा' इत्यादौ च क्रमेण सप्तम्यन्तात् पद्मशब्दात् षष्ठयन्ताच्चद्रशब्दाच्च विहितौ वतिप्रत्ययौ पद्म इव चन्द्रस्येवेत्यर्थं प्रत्याय्यत इति भावः।

इदानीमार्थीमुपमामुपपादयति—**तुल्यादयस्त्विति**। 'शब्दाः' इत्यनुषञ्जनीयम्। आदिपदात् समान-सदृश-हसति-प्रत्यर्थिप्रभृतिपदानां परिग्रहः। कमलनेति। षष्ठ्यर्थतृतीया, षष्ठ्यर्थश्चात्र वाप्याः जलमितिवदाधे-यत्वम्, तस्य च तुल्यपदार्थैकदेशे सादृश्ये सम्बन्धः। तथा च कमलवृत्तिसादृश्याश्रयो मुखमिति बोधः। **उपमेये** एव विश्राम्यन्तीत्युत्तरेण सम्बन्धः, स्वार्थं प्रत्याययन्तीति तदर्थः। तुल्यमिति मुखमिति समानविभक्तिकत्वादिति भावः। एवकारो हि उपमानव्यवच्छेदार्थः।

'मुखस्येत्यत्रापि पूर्ववदेवाधेयतासम्बन्धे षष्ठी। **उपमाने एव** कमल एव तुल्यादयः शब्दा विश्राम्यन्ति' इति सम्बन्धः। न चात्र कमलशब्दतुल्यशब्दयोः समानविभक्तिकत्वात् मुखमुपमानं कमलञ्चोपमेयमेवेति कथं कमलस्योपमाने विश्रान्तिरितिवाच्यम्, मुखकमलयोः समभिव्याहारस्थले कमलस्योपमान एव प्रसिद्धत्वात्। विषयविशेषे तुल्यादिशब्दानामपि षष्ठयर्थानुसन्धानं विनाऽप्युभयसम्बन्धिसादृश्यवाचकत्वमाह—**कमलं मुखं चेति। विश्राम्यन्तीति**। समानविभक्तिकत्वाद्विशेष्यताबोधनेन प्राधान्यं बोधयन्तीत्यर्थः। अर्थानुसन्धानादेव षष्ठाद्यर्थानुसन्धानमाश्रित्यैव साम्यम् उपमेयत्वबोधकं विशेष्यीभूतं सादृश्यमित्यर्थः। तेषां तुल्यादिशब्दानां सद्-भावे प्रयोगे आर्थीत्युपमेति सम्बन्धः। **अयमाशयः**—उपमानोपमेययोःसाधारणधर्मसम्बन्धरूपाया उपमायाः शाब्दबोधविषयत्वं श्रौतत्वम्, उपमानोपमेययोः साधारणधर्मसम्बन्धरूपायाश्च तस्या आर्थबोधविषयत्वमार्थ-त्वम्। अत एव श्रौत्यां तस्यां यथेवादीनामुपलब्ध्यनन्तरमेवोपमानोपमेययोः साधारणधर्मसम्बन्धाऽवगमः। आर्थ्यां पुनः षष्ठयार्थानुसन्धानोत्तरम् इति।

'मधुरः सुधावदधरः' इत्यादावप्यस्या एवार्थ्याः विद्यमानत्वमिति दर्शयितुमाह—**एवमिति**। आदिपदेन 'तेन तुल्यं क्रिया चेद्वतिः' ५/१/११५ इतिपाणिनिसूत्रेणेत्यर्थः। सूत्रे तुल्यमिति सामान्ये नपुंसकम्, प्रथमान्तश्च उदाहरणेऽप्येवम् अध्ययनादिव्यापारविशेषणत्वात्। क्रियेतिसन्निहितत्वात्समानविभक्तिकत्वात्प्राधान्याच्च प्रत्ययार्थविशेषणम्। तथा च तृतीयासमर्थात्तुल्यमित्यर्थे वतिः प्रत्ययो भवति यत्तुल्यं क्रिया चेत् सा भवतीत्यर्थः। प्रकृत्यर्थ विशेषणं तु न ब्राह्मणसादृश्यस्याध्ययनेऽभावात् ब्राह्मणादिशब्दानां लक्षणया तत्कर्त्तृकाध्ययनपरत्वेन क्रियोपमानत्वयोग्यार्थकत्वेऽपि तत्र तृतीयान्तार्थान्वयेन सत्त्वरूपतया क्रियात्वासंभवात्। एवञ्च उपमेयस्य क्रियात्वे उपमानवाचकात्तृतीयान्तात्तुल्यमित्यर्थे वतिप्रत्ययो भवतीतिभावः, यथा 'ब्राह्मणवदधीते क्षत्रियः' ब्राह्मणेन तुल्यं ब्राह्मणवदितिविग्रहः। सौष्ठवादिश्चात्र साधारणो धर्मः। तथासति ब्राह्मणकर्तृकाध्ययनतुल्यं क्षत्रियकर्तृकं वर्त्तमानकालिकमध्ययनमिति शाब्दबोधः।

सूत्रे क्रिया चेदित्युक्त्या क्रियातुल्यत्व एवास्य वतेः साधुत्वम्, 'तत्र तस्येव' इतिविहितस्य तु गुणजात्या-दिनापि तुल्यत्वे साधुत्वमित्यवगन्तव्यम्। तेन 'चैत्रेण तुल्यः कृशः' इति गुणतुल्ये वाक्यमेव न तु वतिः। परं 'चन्द्रवन्मुखम्' इत्यादौ भवतिक्रियामध्याहृत्य चन्द्रभवनसदृशं मुखभवनमित्येव वाच्योऽर्थः, चन्द्रमुखयोः सादृश्यं तु व्यञ्जनयैवेति बोध्यम्। वतेरिति। वतिप्रत्ययस्य उपादाने आर्थी उपमेति पूर्वेण सम्बन्धः। काव्यप्रकाश-कृताऽप्येवमेवोक्तम्।

## रुचिरा

७९ इयं निरुक्तलक्षणापूर्णोपमेयत्यर्थः । **पुनः । यदि । यथेववाशब्दाः** यथा—इव-वा-इत्येते शब्दाः । अत्र बहुवचनं 'व' इत्यस्यापि उपलक्षकम् । तथाच—'पङ्कजदलानि व समुत्स्फुरन्ति तासां सुनेत्रयुग्मानि ।' इत्यादावपि पूर्णोपमात्वमक्षतम् । 'मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ।' इत्यादौ तूत्प्रेक्षैव, वत्सतरयोर्मण्योश्च पमेयोपमानभावाप्रसिद्धेः । एवम्—'शात्रवं च पुपर्यशः ।' इत्यादावपि नोपमा, मधुपानस्योपमेयतायाः शत्रुयशः पानस्य चोपमानताया अप्रसिद्धेः । अतः—'शात्रवं व पपुर्यशः ।' इत्युपलभ्यमान एव पाठः साधीयान् । इति दिक् । **इवार्थः** । वाऽथवा । वतिः । 'तदे' ति शेषः । **श्रौती** श्रूयत इति श्रुतिः, तया साक्षादेवोपलभ्यमानोपमानोपमेयसम्बन्धेति तथोक्ता । यत्र । **तुल्यसमानाद्याः** । आद्यपदेन समसदृशादीनां ग्रहणम् । वाऽथवा । तुल्यार्थस्तुल्यार्थे विहितः । **वतिः** । 'से'ति शेषः । **आर्थी** । अस्या आर्थत्वं च—पदार्थान्तरानुसन्धानापेक्षया प्रतीयमानोपमानोपमेयसम्बन्धवत्त्वात् । विश्वेश्वरोऽप्याह—'स्यादिव यथाऽऽदियोगे वताविवपदार्थे च सा श्रौती । तुल्यादिकपदयोगे वतौ तदर्थेऽपि चार्थी सा ॥' इति । तथा च—यथाशब्दस्येवशब्दस्य वाशब्दस्य वशब्दस्य 'तत्र तस्येव ।' ५/१/११६ इत्यनेन सप्तमीसमर्थात् षष्ठीसमर्थाद्वा इवार्थे विहितस्य वतेर्वा योगे सैव पूर्णा श्रौतीति व्यपदिश्यते, यत्र तु तुल्यसमानसदृशादीनां 'तेन तुल्यं क्रिया चेद्वतिः ।' ५/१/११५ इत्यनेन वा तुल्यार्थे विहितस्य बतेश्च योगः साऽऽर्थीति व्यपदिश्यते इति निष्कर्षः ॥ ६९ ॥

तदेव सुबोधयितुं सूत्रार्थं विशदयति—**यथेववाऽऽदयः** । आदिना 'व' इत्यस्य ग्रहणम् । **शब्दाः** । **उपमानानन्तरप्रयुक्ततुल्यादिपदसाधारणा** उपमानस्योपमानभूतपदस्यानन्तरं परं प्रयुक्तं यत् तुल्यादिपदं तस्य साधारणाः सदृशाः । **अपि । श्रुतिमात्रेण** स्वोपलब्धिमात्रेण । **उपमानोपमेयगतसादृश्यलक्षणसम्बन्धमुपमानोपमेयर्योगतं** यत्सादृश्यं तदेव लक्षणं यस्य तादृशो यः सम्बन्धस्तं तथोक्तम् । **बोधयन्ति** ज्ञापयन्ति । इति अस्मात् कारणात् । तत्सद्भावे तेषां यथेववावशब्दानां सद्भावस्तस्मिन् सति । **श्रौती । उपमा** । तदेव विवृतिकारा अप्याहुः—'यद्यपि यथाऽऽदयः शब्दा उपमानवाचकात् पदात् परं प्रयुज्यमानस्य तुल्यादिपदस्य साधारणाः (तदुपमानोपमेयगतसाधर्म्यबोधकाः), तथापि श्रुतिमात्रेण' स्वोपलब्धिमात्रेण नतु पदार्थान्तरानुसन्धानापेक्षयोपमानोपमेयवृत्तिसाधर्म्यं बोधयन्तीति हेतोस्तेषां यथाऽऽदिशब्दानां सद्भावे (प्रयोगे) श्रौती उपमेत्यर्थः । अव्ययानामन्विताभिधानस्वीकारात् यथा—'घटो न पटः' इत्यादौ नञ्पदं पदार्थोपस्थितिमन्तरेणैव पदार्थोपस्थितेः प्रागेव समभिव्याहृतपदार्थयोरन्वितं भेदं बोधयति, तथा—'कमलमिव मुखम्' इत्यादाविवादिपदमपि श्रवणमात्रेण समभिव्याहृतपदार्थयोरन्वितं साधर्म्यं बोधयति । अन्विताभिधानवादिमते हि—अखण्डवाक्यस्याखण्डवाक्यार्थे शक्तिरेकाऽतिरिक्ता कल्प्यते, प्रथमं तयैव वाक्यार्थबोधो जायते, पश्चात् शक्त्या लक्षणया वा प्रत्येकपदार्थोपस्थितिरिति भावः । अव्ययनामभिहितान्वयाङ्गीकारेऽपि अव्ययातिरिक्तमार्थयोरभेदातिरिक्तसम्बन्धेन साक्षादन्वयास्वीकारादव्ययार्थस्य नामर्थेन साक्षादेवान्वयः सम्भवतीत्यव्ययपदेनोपमानोपमेयभावेऽपि साधारणधर्मोपस्थापनेन विभक्त्यर्थप्रतिसन्धानापेक्षेति बोध्यम् ।' इति । 'चन्द्रवद् दृशि ते सुधा ।' इत्यादावप्येषैवेत्याह—एवं यथा यथाऽऽदिपदानामुपादाने तथा । **'तत्र तस्येव । ५/१/११६ इत्यनेन** 'सप्तमीसमर्थात् षष्ठीसमर्थाच्च इवार्थे वतिप्रत्ययो भवतीत्यर्थकेन सूत्रेण । इवार्थे उपमाऽर्थे । **विहितस्य** प्रतिपादितस्य । वतेः । **उपादाने** । 'अपि' इति शेषः । 'श्रौत्युपमे' ति पूर्वतोऽन्वेति । तथा च—'पद्मवत्त्वन्मुखे कान्ते ! भान्ति....' 'चन्द्रवत्त्वन्मुखस्यापि सुषमा सुभगा सदा' इत्यादौ च क्रमेण सप्तम्यन्तात् पद्मशब्दात्, षष्ठ्यन्ताच्चन्द्रशब्दाच्च विहितौ वतिप्रत्ययौ पद्म इव चन्द्रस्येवेत्यर्थं चावगमयतः । इति निष्कृष्टोऽर्थः । ननु तुल्यादीनामपि योगे तर्हि श्रौत्येव किन्न भवेत्?

इत्याशङ्क्याह—**तुल्यादयः**। 'शब्दा' इति शेषः। आदिना—समानादीनां ग्रहणम्। तु। **'कमलेन। तुल्यं** सदृशमित्यर्थः। **मुखम्।** 'सुभगाया' इति शेषः। **इत्यादौ। उपमेये** मुखादिपदार्थे। एव। 'न तूपमाने' इति शेषः। 'अपि विश्राम्यन्ती' ति परेणानुषज्यते। **'कमलम्। मुखस्य** 'कान्ताया' इति शेषः। **तुल्यम्।' इत्यादौ। उपमाने** कमलादिपदार्थे। एव 'न तूपमेये' इति शेषः। 'अपि विश्राम्यन्ती' ति परतोऽनुषज्यते। **'कमलम्। मुखं** कान्तामुखम्। च। **तुल्यम्।' इत्यादौ**। उभयत्रोपमेये उपमाने च कमलादौ मुखादौ चेति यावत्। **अपि। विश्राम्यन्ति** व्याप्रियन्ते। इति अतः कारणात्। **अर्थानुसन्धानात्** षष्ठ्यद्यर्थानुसन्धानमाश्रित्य। **एव। साम्यं** सादृश्यमुपमेयादिना साधर्म्यमिति यावत्। **प्रतिपादयन्ति** बोधयन्ति। **इति। तत्सद्भावे** तुल्यादिशब्दानामुपस्थितौ। **आर्थी**। अयम्भावः—उपमानोपमेययोः साधारणधर्म्मसम्बन्धरूपाया उपमायाः शाब्दबोधविषयत्वं श्रौतत्वम्, उपमानोपमेययोः साधारणधर्म्मसम्बन्धरूपायाश्च तस्या आर्थबोधविषयत्वमार्थत्वम्, अत एव—श्रौत्यां तस्यां यथेवादीनामुपलब्ध्यनन्तरमेवोपमानोपमेययोः साधारणधर्म्मसम्बन्धावगमः। आर्थ्यां पुनः षष्ठयाद्यर्थानुसन्धानोत्तरम्। इति। 'मधुरः सुधावदधरः' इत्यादावप्यस्या एव आर्थ्याः सद्भावमुदाहकामस्तावत् तत्सङ्गतिं दर्शयति—**एवम्। 'तेन तुल्यं क्रिया चेद्वतिः।'** ५/१/११५ इत्यनेन तृतीयासमर्थात् तुल्यमित्यर्थे वतिः प्रत्ययो भवति, यत्तुल्यं क्रिया चेत् सा भवतीत्यर्थकेन सूत्रेण। **तुल्यार्थे। विहितस्य। वतेः। उपादाने** 'आर्थी'ति शेषः। एवं च-पूर्णोपमा श्रौत्यार्थी चेति द्विभेदा, तत्राद्या यथेवादिप्रयोगे इवार्थस्य वतेर्वोपादाने, अन्या पुनः तुल्यादीनां वों शब्दानां तुल्यार्थे वा विहितस्य वतेरुपादाने। इति निष्कृष्टोऽर्थः।

एवं द्विविधाया अस्याः प्रत्येकं तद्धितसमासवाक्यगतत्वेन त्रैविध्यं व्यवस्थापयन् षड्विधत्वं निर्दिशति—८० द्वे इत्यादिना।

द्वे तद्धिते समासेऽथ वाक्ये—

द्वे श्रौती आर्थी च। उदाहरणम्—

**'सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ।**

**हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले॥'**

अत्र क्रमेण त्रिविधा श्रौती।

---

## विवृति

श्रौत्यार्थी भेदेन द्विविधायाः पूर्णोपमायास्त्रैविध्यमाह—**द्वे इति**। तद्धिते वत्कल्पादियोगे। **समास इति**। इवयोग एवोपमानात्सर्वविभक्तीनामिवेत्यलोपविधान सामर्थ्यात्समासः। स च नित्य एव। 'नित्यसमासे इवयोगे समासगा' इति काव्यप्रकाशदर्शनादिवार्थस्य विशेषसापेक्षत्वेऽप्यनभिधानबलात्समासः। एवं च प्रतियोगिपदासमभिव्याहारेण यदिवपदं प्रयुज्यते तत्प्रयोक्तृप्रमादजमेव। वाक्ये यथादियोगेऽत्रागमकत्वेन समासाभावात्तद्योगे वाक्यगतैवोपमेति भावः। एवं त्रिविधा श्रौती आर्थी तु तद्धिते वदादियोगे तुल्यादिपदसमासस्य वैकल्पिकत्वात्समासे वाक्ये च संभवतीति भावः। समासपक्षेऽपि लुप्तषष्ठ्यर्थस्य लक्षणया वा प्रतिसंधानादेवोपमानसंबन्धबोध इत्यार्थ्येव॥ **सौरभमिति।** मुखस्य सौरभमम्भोरुहवृत्तिसाधर्म्याभिन्नमित्यन्वयबोधः। यद्वा सौरभाभिन्नमम्भोरुहसाधर्म्यं मुखसंबन्धीति। स्तनौ पीनत्वाभिन्नकुम्भवृत्तिसाधर्म्याश्रयावित्यन्वयबोधः। एवमुत्तरत्रापि॥

## विवृतिपूर्तिः

**सौरभमिति**। अत्राम्भोरुहमुपमानम्, मुखस्येत्युपमेयम्, सौरभं साधारणो धर्मः। 'अम्भोरुहवत्' इत्यत्र 'तत्र तस्येव' इति षष्ठ्यन्तादिवार्थे वतिप्रत्यय इति तद्धितगा श्रौती पूर्णा। अम्भोरुहपदस्य तत्संबन्धिसौरभलक्षकत्वेन अम्भोरुहस्येवास्य सौरभम् इत्यादिस्थले षष्ठ्युपपत्तये सौरभपदस्यावृत्त्या अम्भोरुहेऽप्यन्वयेन तादृशबोधस्यानुभवेन वृत्तावपि तथैवौचित्यात् कुम्भावित्युपमानम्, स्तनावित्युपमेयम्, पीनत्वादिः साधारणो धर्मः, इवशब्द उपमाप्रतिपादकः। 'कुम्भाविव' इत्यत्र 'इवेन समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति वार्तिकेन समासे **समासगा श्रौती** पूर्णा। अत्र काव्यप्रकाशादौ 'इवेन—' इति वार्तिके नित्यपदप्रक्षेपो दृश्यते स चाप्रामाणिक इति तद्व्याख्यातारः। अत एव 'उद्वाहुरिव वामनः' इत्यादिव्यस्तप्रयोगाः संगच्छन्त इति मनोरमादावुक्तम्। इह 'जीमूतस्येव भवति प्रतीकम्—'इति वैदिकोदाहरणमपि संभवति। अत्र बह्वृचशाखायां समासेन, तैत्तिरीय शाखायामसमासेन पदकारैः पाठः पठ्यते। अयं मन्त्र ऋक्तैत्तिरीयसंहितयोरपि श्रूयते। तेन समासाभावे तु वाक्यगैव श्रौती पूर्णेति बोध्यम्। कुम्भसादृश्यप्रयोजकपीनत्वादिधर्मवन्तौ स्तनाविति बोधः। शरदिन्दुरुपमानम्, वदनमुपमेयम्, मदयतीति मादनं साधारणो धर्मः, यथेत्युपमाप्रतिपादकम्। अत्र 'यथासादृश्ये' इत्यनेनासादृश्ये एव समासनियमेन सादृश्ये समासाभावाद्वाक्यमिति **वाक्यगा श्रौती** पूर्णेति। अत्र यत्तच्छब्दप्रकृतिक-प्रकारवाचिथाल्प्रत्ययान्त—यथादिशब्दयोगे यद्धर्मवाञ्शरदिन्दुस्तद्धर्मवद्वदनमित्युभयविशेष्यको बोधः, ततो यत्तभ्द्यां धर्मैक्यबोधात्सादृश्यं फलति, हृदयमादनलक्षणोऽनुगामी साधारणो धर्म इति तत्त्वम्॥

## विज्ञप्रिया

तत्र पूर्णायाः षड्विधत्वं दर्शयति—**द्वे इति**। वाक्ये इत्यन्तं कारिका पूर्णा। षडेव तद् इति तच्छेषः। तत्र तद्धितादिषु त्रिषु श्रौतीमाह—**सौरभमिति**। मुखस्य सौरभमित्यन्वयः। अत्राऽम्भोरुहस्येव इति षष्ठ्यन्ताद् वतिः। कुम्भाविवेत्यत्र इवशब्दयोगे नित्यसमासात्समासगा। शरदिन्दुर्यथा वंदनमित्यत्र वाक्यगा। इवादेस्तदर्थकवतेश्च सत्त्वात् श्रौतीति। **त्रिविधेति**—तद्धितसमासवाक्यगामिवत्वरूपत्रैविध्यवतीत्यर्थः।

## लोचन

सौरभमिवेत्यादौ सौरभं साधारणधर्मः। कुम्भाविवेत्यत्र "इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च" इति नित्यसमासः। एतत्रोक्तस्य पूर्वपदप्रकृतिस्वरत्वस्य वेद एव उपयोगः।

## कुसुमप्रतिमा

श्रौत्यार्थीभेदेन द्विविधाया अपि तस्याः पूर्णोपमायाः पुनस्त्रिविधत्वमाह द्वे इति। द्वे पूर्वोक्ते पूर्णोपमे श्रौत्यार्थीभेदेन द्विविधापि पूर्णोपमेत्यर्थः, प्रत्येकमेव तद्धिते समासे अथ तथा वाक्ये च सम्भवत इत्यर्थः।

सौरभमिति। हे बाले ! तव मुखस्य सौरभम् अम्भोरुहवत् पद्मस्येव, स्तनौ कुम्भाविव पीनौ स्थूलो। एव यथा शरदिन्दुः हृदयं मदयति, तथा तव वदनं कर्तृ हृदयं मदयेति औनन्दयति।

अत्रेति। तथा च प्रथमवाक्ये सामान्यधर्म्मः सौरभम्, अम्भोरुहमुपमानम्, मुखमुपमेयम्, वतिप्रत्ययश्चौपम्यवाचीति पूर्णोपमायाः सामान्यलक्षणसङ्गतिः। एव मन्वत्राप्यूह्यम्। सा चात्र पूर्णोपमा "तत्र तस्यैव" इत्यनेन इवार्थे वतिप्रत्ययविधानात् तद्धितगता श्रौती।

द्वितीयवाक्ये 'कुम्भाविव इत्यत्र "इवेन समासौ विभक्त्यलो५१च इति वार्त्तिकोक्त्या समासाश्रयणात् समासगता श्रौती पूर्णोपमा।

द्वितीयार्द्धस्य तु वाक्यरूपत्वात् यथाशब्दस्य श्रौतीघटकत्वाच्च वाक्यगता श्रौती पूर्णोपमा।

ननु प्रथमद्वितीययोरपि वाक्यत्वेन वाक्यगता श्रौत्या पूर्णोपमा तद्धितगता समासगतयोस्तयोः साङ्कर्य्यापत्तिः। न चापि तयोः क्रियाभावाद्वाक्यत्वाभाव इति वाच्यम्, अवश्यमेव क्रियाया अध्याहरणीयत्वात् अधया आकाङ्क्षानिवृत्त्यसम्भवेन अन्वयसमाप्त्यसम्भवात् "चकितमृगलोचनाभ्याम्" इत्यादिवक्ष्यमाणस्य क्रियाभावे वाक्यगतत्वे उदाहरणत्वासम्भवाच्चेति चेन्न, तद्धितगता-समासगतयोर्विशेषरूपत्वेनापवादरूपतया सामान्यरूपाया वाक्यगताया वाधकत्वाङ्गीकारात्।

## विमला

तद्धित-समास-वाक्यगतत्वेन त्रिविधां श्रौतीमुदाहरति, सौरभमिति। हे बाले ! तव मुखस्य सौरभं—सुगन्धः, अम्भोरुहवत्—अम्भोरुहस्य तुल्यम्, अम्भोकहवृत्तिसाधर्म्याभिन्नमित्यर्थः, सौरभाभिन्नसम्भोरुहसाधर्म्यं मुखसम्बन्धीत्यर्थो वा, स्तनौ कुम्भाविव पीनौ—स्थूलौ, पीनत्वाभिन्नकुम्भवृत्तिसाधर्म्याश्रयावित्यर्थः, वदनं—मुखं शरदिन्दुर्यथा—शारदसुधांशुरिव, हृदयं मदयति—ह्लादयति। अत्र प्रथमपादे सौरभं साधारणो धर्मः, उपमानं जलजं, मुखमुपमेयम्। "तत्र तस्येव" इत्यनेन श्रष्ठ्यन्तादम्भोरुहशब्दादिवार्थे वतिरिति तद्धितगता श्रौती पूर्णा।

अम्भोरुहपदार्थस्य तत्पदलक्षणया तदृत्तिसौरभरूपतयाऽम्भोरुहसम्बन्धिसौरभसमानं मुखसम्बन्धिसौरभमिति प्रत्ययानन्तरम् अम्भोरुहमुख सम्बन्धिनीः सौरभयोः साम्यहेतुकतादात्म्याध्यवसायेन साधारणधर्महेतुका अम्भोरुहमुखपदवाच्ययोरुपमा। तथा द्वितीयपादे कुम्भपदार्थ उपमानभूतः, स्तनपदार्थः उपमेयभूतः, पीनत्वञ्च साधारणधर्मः। इवेति औपम्यवाचकं पदं, "कुम्भाविव" इत्यत्र "इवेन समासो विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वञ्च" इत्यनेन कुम्भावित्यनेन इवपदस्य समासात् समासगता पूर्णा श्रौतौ "इवेन सह नित्यसमासः" इति त्वपपाठः। सूत्रस्थसमासपदे नित्यविशेषणादानात "उद्वाहुरिव वामनः" इत्यादयो व्यस्तप्रयोगा अपि सङ्गच्छन्ते इति मनोरमाऽऽदि कर्त्तारः। एवञ्च अत्र समासाभावपक्षस्वीकारे नेयं समासगता, किन्तु वाक्यगतैव श्रौती पूर्णा। कुम्भसम्बन्धिपीनत्वसदृशं स्तनसम्बन्धिपीनत्वमिति प्रत्ययानन्तरं तयोःपीनत्वयोः सादृश्यमूलकाभेदाध्यवसायेन अभिन्नधर्महेतुका कुम्भस्तनयोरुपमा। एवमुत्तरार्द्धे वदनमुपमेयं, शरदिन्दुरित्युपमानं, हृदयमारद्धत्वं साधारणो धर्मः, यथेति औपम्यवाचकं "यथाऽसादृश्ये" (२/१/७ पा.) इत्यनेन असादृश्य एव समासनियमात् सादृश्ये समासाभावाद्वाक्यगतेयं श्रौतीति दिक्।

त्रिविधामार्थीमुदाहरति, मधुर इति।— तस्या अधरः सुधावत् मधुरः, अत्र "तेन तुल्यं क्रिया चेद्वतिः" (५/१/११५ पा०) इत्यनेन सुधया तुल्य इत्यर्थे तृतीयान्तात् सुधाशब्दात् तुल्यार्थे वतिरिति तद्धितगता आर्थी। पाणिः पल्लवतुल्यः,—पल्लवेन सदृशः, अतिपेलवः,—अतिकोमलः, (अत्र एकदेशस्य अश्लीलत्वेऽपि पादचूतादिशब्दयत् कविनिवहप्रयुक्तत्वात् न दोषः, पेलवपदार्थैकदेशस्य तुल्यपदार्थैकदेशे साम्ये अभेदान्वयस्तु व्युत्पत्तिवैचित्र्यात्) अत्र उपमानभूतः पल्लवपदार्थ औपम्यवाचिना तुल्य (सदृश) शब्देन समस्तत्वात् समासगता आर्थी। लोचने च चकितमृगलोचनाभ्यां सदृशी चपले च, अत्र चकितमृगलोचनमुपमानं, प्रस्तुतनायिकालोचनमुपमेयं, चपलत्वञ्च साधारणधर्मः; सदृशीति चौपम्यवाचकं, तस्य च समासाभावात् वाक्यगता आर्थी। ननु अम्भाजस्येव मुखस्य सौरभमित्यादौ साधारणधर्मस्य उपमानसम्बन्धित्वबोधे षष्ठ्यर्थानुसन्धानस्य अपेक्षणीयतया कर्ण श्रौतीत्वम्? इति चेत्, न; नामार्थनिपातयोरन्वयबोधे विभक्त्यर्थानुसन्धानस्य अतन्त्रतया तत्र षष्ठ्या विशेषणविभक्तेरिव प्रयोगसाधुत्वमात्रार्थकत्वात्, अन्यथा "चन्द्रादिव मुखात्तस्या निरञ्चति कथाऽमृतम्"इत्यादौ सम्बन्धबाधकविभक्त्यभावात् उपमानसम्बन्धबोधो न स्यात् इति दिक्।

पूर्णेति।—तत्—तस्मात्, श्रौत्यार्थीभेदेन द्विविधाया अस्या उपमायाः तद्धित समास-वाक्यगतत्वेन पुनः त्रैविध्यात् षड्विधत्वमवसेयम्।

## लक्ष्मी

एवं द्विविधाया अस्याः प्रत्येकं तद्धितसमासवाक्यगतत्वेन त्रैविध्यमुपादयिष्यन् षड्विधत्वमाह—द्वे इति। द्वे पूर्वोक्ते पूर्णोपमे श्रौत्यार्थीभेदेन द्विविधापि पूर्णोपमेत्यर्थः, प्रत्येकमेव तद्धिते वत्कल्पादियोगे समासे अथ च तथा वाक्ये च सम्भवत इत्यर्थः।

सौरभमिति। हे बाले! तव मुखस्य सौरभं सौगन्ध्यम् अम्भोरुहं कमलं तस्येव, स्तनौ कुचौ कुम्भाविव कलशाविव पीनौ पुष्टौ। एवं यथा शरदिन्दुः शरच्चन्द्रः हृदयं चित्तं मदयति तथा तव वदनं मुखं (कर्तृ) हृदयं मदयति आनन्दयति।

अत्रेति। तथा च प्रथमवाक्ये अम्भोरुहम् उपमानम्, मुखस्येत्युपमेयम्, सौरभं साधारणो धर्मः वतिप्रत्ययश्चौपम्यवाचीति पूर्णोपमायाः सामान्यलक्षणसङ्गतिः। 'अम्भोरुहवत्' इत्यत्र 'तत्र तस्येव' इति षष्ठ्यन्तादिवार्थे-

वतिप्रत्ययविधानात् तद्धितगता श्रौती अम्भोरुहपदस्य मुखसम्बन्धिसौरभलक्षकत्वेन अम्भोरुहसम्बन्धिसौरभसदृशं मुखसंम्बन्धि सौरभमिति शाब्दबोधः । तत अम्भोरुहमुखसम्बन्धिनोः सौरभयोः सादृश्यमूलकाभेदाध्यवसायेनाभिन्नधर्ममूला अम्भोरुहमुखयोरुपमाप्रतीतिः ।

द्वितीयवाक्ये—कुम्भावित्युपमानम्, स्तनावित्युपमेयम्, पीनत्वादिः साधारणो धर्मः, इवशब्दः उपमाप्रतिपादकः 'कुम्भाविव' इत्यत्र 'इवेन समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति वार्त्तिकेन समासाश्रयणात् समासगता श्रौती पूर्णोपमा । कुम्भसादृश्यप्रयोजकपीनत्वादिधर्मवन्तौ स्तनावितिशाब्दबोधः । **द्वितीयार्द्धे**-शरदिन्दुरुपमानम्, वदनमुपमेयम्, मादनं साधारणो धर्मः, यथेत्युपमावाचकः शब्दः अत्र 'यथाऽसादृश्ये' २/१/१७ इतिपाणिनिसूत्रेणासादृश्ये एव समासस्योपपत्तौ सादृश्ये च समासस्याप्रतिपादनाद् वाक्यगतैव श्रौती पूर्णोपमा । अत्र यत्तच्छब्दप्रकृतिकप्रकारवाचिथाल्प्रत्ययान्तयथादिशब्दयोगे यद्धर्मवान् शरदिन्दुस्तद्धर्मवद्वदनमित्युभयविशेष्यके वाक्यार्थबोधः, ततो यत्तद्भ्यां धर्मैक्यबोधात् सादृश्यं फलति हृदयमादनलक्षणोऽनुगामी साधारणो धर्म इति परमार्थः । नन्वेवमपि पूर्वार्द्धयोः प्रथमद्वितीययोरपि वाक्यत्वेन वाक्यगतया श्रौत्या पूर्णोपमया तद्धितगतसमासगतयोस्तयोः साङ्कर्यापत्तिः, न च तयोः क्रियाभावाद्वाक्यत्वाभाव इति वाच्यम्, क्रियाया अध्याहारं विना आकाङ्क्षाशान्त्यभावेन अन्वयसमाप्त्यसम्भवादवश्यं क्रियाया अध्याहर्त्तव्यत्वात् क्रियाया अध्याहारं विना वाक्यगतत्वे 'चकितमृगलोचनाभ्याम्' इत्यादिवक्ष्यमाणोदाहरणत्वासम्भवादिति चेत्? मैवम्, एवं प्रकारेण वाक्यगतत्वस्य सर्वलोपसम्भात् सामान्यपरत्वेन तद्धितगतसमासगतयोर्विशेषरूपत्वेनापवादरूपतया बाधकत्वाभ्युपगमात् ।

## रुचिरा

८० द्वे श्रौती आर्थी चेति द्विविधा पूर्णोपमेत्यर्थः । **तद्धिते** । **समासे** । **अथ** । **वाक्ये** 'सम्भवति तस्मात्तयोः प्रत्येकं त्रैविध्यमि' ति शेषः ।

सन्देहापनयनाय-द्वे इति सूत्रस्थं पदं व्याचष्टे-द्वे इत्यादिनै । स्पष्टम् ।

ते चोदाहर्तुकाम आह-**उदाहरणं** 'तयोः क्रमेण यथे'ति शेषः । '**सौरभ**'मित्यादि ।

**'हे बाले** । **तव** । **मुखस्य** । **अम्भोरुहवत्** अम्भोरुहं कमलं तस्येवेत्यर्थः । **सौरभम्** । तव-**स्तनौ** कुचौ । **कुम्भाविव** कलशाविव । पीनौ पुष्टौ । तव-**वदनं** मुखम् । **यथा** । **शरदिन्दुः** शारदश्चन्द्रः । 'तथे'ति शेषः ।हृदयं चित्तम् । **मदयति** मोदयति । इदम्बोध्यम्—अत्र-अम्भोरुहमुपमानम्, तस्माच्च षष्ठ्यन्तात् 'तत्र तस्येव' ५/१/११६ इति वतिः । मुखमुपमेयम्, सौरभं साधारणो धर्म्मः, वतिश्च तद्वाचकः, तस्य च तद्धितीयत्वेन श्रौतीयं तद्धितगापूर्णोपमा । अम्भोरुहस्य मुखसम्बन्धिसौरभलक्षकत्वेनाम्भोरुहसम्बन्धिसौरभसदृशं मुखसम्बन्धिसौरभमित्यवगमः, अथ अम्भोरुह-मुख-सम्बन्धिनोः सौरभयोः सादृश्यमूलकाभेदाध्यवसायेनाभिन्नधर्म्ममूला अम्भोरुहमुखयोः सादृश्यप्रतीतिः । तथा-कुम्भद्वयमुपमानम्, स्तनद्वयमुपमेयम्, पीनत्वं साधारणो धर्म्मः, इवशब्दश्च तद्वाचकः, 'इवेन समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति वार्त्तिकेन 'कुम्भाविवेत्यत्र समासः, तस्मात् समासगेयं श्रौती पूर्णोपमा । शरदिन्दुरुपमानम्, वदनमुपमेयम्, मादनं साधारणो धर्म्मः । यथाशब्दश्च तद्वाचकः, अत्र च—'यथाऽसादृश्ये । २/१/७ इत्यनेनासादृश्ये एव समासस्योपपत्तौ सादृश्ये च समासस्याप्रतिपादनाद्वाक्यगैवेयं श्रौती पूर्णोपमा । इति । अत्रार्याछन्दः । तल्लक्षणं चोक्तं प्राक् ॥ ८९ ॥'

ननु कस्मिन्नंशे केत्याशङ्कयाह—अत्रेत्यादि ।

अत्र निरुक्तोदाहरणे । **क्रमेण** निर्देशानुपूर्व्या । **त्रिविधा** । **श्रौती** 'पूर्णोपमे'ति शेषः । यथा वा—'सुकुमारत्वमरुणता दृशोर्वशीकारकारणत्वं च । भातीह मत्तकाशिनि पाणियुगे तामरसवते ॥' इत्यत्र सप्तम्यर्थे वतिरिति तद्धितगा श्रौतीयम् । "अत्यायतैर्नियमकारिभिरुद्धतानां दिव्यैः प्रभाभिरनपायमयैरुपायैः । शौरिर्भुजैरिव चतुर्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं वभार ॥" इत्यत्र 'भुजै'रित्यस्येवेन समासात्समासगेयं श्रौती । 'इतीरितैर्नैषधसूनृतामृतैर्विदर्भजन्मा भृशमुल्ललास सा । ऋतोरधिश्रीः शिशिरानुजन्मनः पिकस्वरैर्दूरविकस्वरैर्यथा ॥' इत्यत्र यथाशब्दस्यासमस्तत्वाद्वाक्यगेयम् । यथा वा—"पाण्डयोऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो नवचन्दनेन । आभाति बालातपरक्तसानुः स निर्झरोद्गार इवाद्रिराजः ॥" "चण्डीजङ्घाकाण्डः शिरसा चरणस्पृशि प्रिये जयति । शङ्करपर्य्यन्तजितो विजयस्तम्भः स्मरस्येव ॥" इत्यादाविवेन समासस्याविवक्षितत्वाद्वाक्यगेयम् ।

**'मधुरः सुधावदधरः पल्लवतुल्योऽतिलेपवः पाणिः ।**
**चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः ॥'**

अत्र क्रमेण त्रिविधा आर्थी ।

पूर्णा षडेव तत् ।

स्पष्टम् ।

---

## विवृतिः

**सुधावदिति** । प्रथमान्तात्तुल्यार्थे वतिः । पेलवः कोमलः । अत्रैकदेशस्याश्लीलत्वेऽपि पापचूतादिशब्द-वत्कविनिवहप्रयुक्तत्वान्न दोषः । एत्र पेलवपदार्थैकदेशस्य तुल्यपदार्थैकदेशे साम्येऽभेदान्वयो व्युत्पत्तिवैचित्र्यात् । नन्वम्भोजस्येव मुखस्य सौरभमित्यादौ साधारणधर्मस्योपमानसंबन्धित्वबोधे षष्ठ्यर्थानुसंधानस्यापेक्षणीयतया कथं श्रौतीत्वमिति चेत् । न । नामार्थनिपातयोरन्वयबोधे विभक्त्यर्थानुसंधान-स्यातन्त्रतया तत्र षष्ठ्या विशेषणविभक्तेरिव प्रयोगसाधुत्वमात्रार्थकत्वात् । अन्यथा 'चन्द्रादिव मुखात्तस्या निरञ्चति कथामृतम्' इत्यादौ संबन्धबोधकविभक्त्यभावादुपमानसंबन्धबोधो न स्यात् ॥

## विवृतिपूर्तिः

**मधुर इति** । सुधा उपमानम्, अधर उपमेयम्, माधुर्यं साधारणो धर्मः, 'सुधावत्' इत्यत्र 'तेन तुल्यं—' इत्यादिना तृतीयान्तात् 'तुल्यार्थे वतिः' इति तद्धिगता आर्थी पूर्णा । सुधातुल्या-भिन्नो मधुर इति बोधः । तुल्यत्व-प्रयोजकं च माधुर्यं पश्चान्मनसा व्यञ्जनया वा बुध्यते । पल्लव इत्युपमानम्, पाणिरित्युपमेयम्, अतिपेशलत्वं साधारणो धर्मः, तुल्यपदमुपमाप्रतिपादकम् । 'पल्लवतुल्यः' इत्युपमानोपमाप्रतिपादकयोः समासत्वात्समासगार्थी पूर्णा । चकितहरिणलोचने उपमानम्, लोचने उपमेयम्, लोचने चपलत्वं साधारणो धर्मः सदृशी इत्युपमाप्रतिपाद-कम् । सदृशब्देन सह समासाभावाद्वाक्यमिति वाक्यगार्थी पूर्णेति ॥

## विज्ञप्रिया

एतत् त्रिविधामार्थीमाह—**मधुर इति** । अत्र सुधया तुल्य इत्यर्थे तुल्यार्थे वतिः । पल्लवतुल्य इत्यत्र समासः । चकितमृगलोचनाभ्यामित्यत्र वाक्यम् ।

## कुसुमप्रतिमा

मधुर इति । तस्यास्तरुण्या अधरः सुधावन्मधुरः, पाणिः पल्लवतुल्योऽतिपेलवः अतिशयेन कोमलः, तथा लोचने च चकितमृगस्य त्रस्तहरिणस्य लोचनाभ्यां सदृशी चपले चञ्चले ।

अत्र पेलवशब्दस्य आद्याक्षरे अश्लीले इति पदांशगताश्लीलतादोषो भवत्येव, अन्यथा "पाणिः पल्लव-पेलवः" इति सप्तमपरिच्छेदोदाहरणेऽप्यसौ दोषो स्यात् समानन्वायात् । अतः "न दोषः" इति रामचरणोक्तं चिन्त्यम् । तथापि न किञ्चिदुद्देजनीयं दोषस्यालङ्कारप्रतिबन्धकत्वाभावात् ।

अत्रेति । तथा च प्रथमवाक्ये अधरः सुधातुल्यमेव मधुरतया आस्वाद्यते इत्यर्थ विवक्षया "तेन तुल्यं क्रिया चेद्वतिः" इत्यनेन तुल्यार्थे वतिप्रत्ययात् तद्धितगता आर्थी पूर्णोपमा । द्वितीयवाक्ये पल्लवेन तुल्य इति समासात् समासगता आर्थी पूर्णोपमा । द्वितीयार्द्धस्य च वाक्यरूपत्वात् चकितमृगलोचनाभ्यामित्यत्र समासे सत्यपि सदृशी इत्यनेन समासाभावाच्च वाक्यगतैव आर्थी पूर्णोपमा । अत्रापि पूर्ववदेव पूर्वं वाक्ययोर्न वाक्यगता आर्थीपूर्णोपमेत्युहनीयम् ।

सङ्कलयति पूर्णेति । तत्तस्मात् उक्तविधभेदनिरूपणादित्यर्थः, पूर्णा पूर्णोपमा षड़े षेट् प्रकारैव । ते च प्रकारा अनुपदमेवोक्ता अनुसन्धेयाः ।

स्पष्टमिति । इदं वाक्यं सुबोधमित्यर्थः । अतो न किञ्चिद्वयाख्यातमित्याशयः ।

## लक्ष्मी

मधुर इति । तस्याः मनसा विषयीक्रियमाणायास्तरुण्याः, अधरः सुधावन्मधुरः पाणिर्हस्तः पल्लवतुल्यो नवपत्रसमान अतिपेलवः अत्यन्तं कोमलः 'पेलवं विरलं मृदु' इति गोपालः, तथा लोचने नयने च चकितमृगस्य भीतहरिणस्य लोचनाभ्यां सदृशी चपले चञ्चले चकितेत्यादौ 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' २/३/७२ इति पा० सू० तृतीया ।

अत्रेति । अत्र प्रथमवाक्ये सुधा उपमानम्, अधर उपमेयम्, माधुर्यं साधारणो धर्मः, तथा च अधरः सुधातुल्यमेव मधुरतया आस्वाद्यते इत्यर्थविवक्षया 'तेन तुल्यं क्रिया चेद्वतिः इत्यनेन तृतीयान्तात्तल्यार्थे वतिप्रत्ययविधानात् तद्धितगता आर्थी पूर्णोपमा । सुधावदित्यत्र सुधया तुल्यमितिविग्रहस्तत्र निरूपितत्वं तृतीयार्थः तस्य च तुल्यतायामन्वयात् सुधानिरूपिततुल्यताश्रयाभिन्न इति तन्निरूपिततुल्यता च माधुर्येणेतिसुधानिरूपितमाधुर्यप्रयोज्यतुल्यतावदभिन्नोऽधर इति बोधः । तुल्यताप्रयोजकं माधुर्यं तदर्थानुसन्धानोत्तरं मनसा व्यञ्जनया वा ज्ञायते इत्यार्थीत्वम् । द्वितीयवाक्ये—पल्लव उपमानम्, पाणिरित्युपमेयम्, अतिपेलवत्वं साधारणो धर्मः तुल्यपदमुपमाबोधकम्, 'पल्लवतुल्यः' इत्युपमानोपमाबोधकयोः समासत्वासमासगता आर्थी पूर्णोपमा । द्वितीयार्धे चकितहरिणलोचने उपमानम्, लोचने उपमेयम्, चपलत्वं साधारणो धर्मः, सदृशी इत्युपमाबोधकः, तथा च द्वितीयार्द्धस्य वाक्यत्वात् चकितमृगलोचनाभ्यामित्यत्र समासे सत्यपि सदृशी इत्यनेन समासाभावाद्वाक्यगतैव आर्थी पूर्णोपमा । पूर्ववाक्ययोरत्रापि सामान्यविशेषन्यायेन न वाक्यगता आर्थी पूर्णोपमेत्यालोचनीयम् । ननु अम्भोजस्येव मुखं सौरभमित्यादौ साधारणधर्मस्योपमानसम्बन्धित्वबोधे षष्ठ्यर्थानुसन्धानस्यापेक्षणीयतया श्रौतीत्वं कथमिति चेत् ? मैवम्, नामार्थनिपातयोरन्वयबोधे विभक्तयर्थानुसन्धानस्यातन्त्रतया तत्र षष्ठ्या विशेषणविभक्तेरिव प्रयोगसाधुत्वमात्रार्थकत्वात्, अन्यथा 'चन्द्रादिव मुखात्तस्या निरञ्चति कथामृतम्' इत्यादौ सम्बन्धबोधकविभक्तयभावादुपमानसम्बन्धबोधो न स्यादितिविवृतिकाराः ।

बोधसौकर्यार्थं सङ्कलयति—पूर्णेति । तत् तस्मात् उक्तप्रकारभेदप्रतिपादनादित्यर्थः, पूर्णा पूर्णोपमा षडेव षड्विधैव । ते च भेदा अनुपदमेवोक्ताः समुन्नेयाः ।

स्पष्टमिति । वाक्यमिदमतिसरलमित्यर्थः । अतो न किञ्चिद्विवृतमितिभावः ।

## रुचिरा

"**तस्या** मनसा विषयीक्रियमाणायाः कान्तायाः । **अधरः** । **सुधावत्** सुधया तुल्यम् । 'तेन तुल्यं क्रिया चेद्वतिः ।' ५/१/११५ इति वतिः । **मधुरः** । तस्याः—**पाणिर्हस्तः** । **पल्लवतुल्यः** पल्लवो नवपत्रं तस्य तुल्यः समानः । अतिपेलवोऽत्यन्तं कोमलः । 'पेलवं विरलं मृदु ।' इति गोपालः । तस्याः—**लोचने** नेत्रे । च । चकितमृगलोचनाभ्यां चकिते ये मृगलोचने ताभ्याम् । 'तुल्यार्थैरतुलोपमाभ्यस्तृतीयाऽन्यतरस्याम् ।' २/३/७२ इति तृतीया । सदृशी समाने । अत एव—**चपले** । इदम्बोध्यम्—अत्र, सुधोपमानम्, तस्माच्च तृतीयान्तात्तुल्यार्थे वतिः प्रत्ययः । अधर उपमेयम्, माधुर्य्यं साधारणो धर्म्मः, वतिश्च तद्वाचकः, तस्य च—तद्धितीयत्वादियं तद्धितगाऽऽर्थी । 'सुधावत् (सुधया तुल्यम्) इत्यत्र तृतीयाऽर्थो निरूपितत्वं, तस्य च तुल्यतायामन्वयात् सुधानिरूपिततुल्यताऽऽश्रयाभिन्न इति, तन्निरूपिततुल्यता च माधुर्य्येणेति सुधानिरूपितमाधुर्य्यप्रयोज्यतुल्यतावदभिन्नोऽधर इति बोधः । अत्र हि तुल्यताप्रयोजकं माधुर्य्यं तदर्थानुसन्धानोत्तरमवगम्यत इत्यस्या आर्थत्वम् । एवम्-पल्लव उपमानम्, पाणिरूपमेयम्, अतिपेलवत्वं साधारणो धर्मः, तुल्यशब्दश्च पल्लवशब्देन समस्तस्तद्वाचक इति समासगेयमार्थी । तथा—चकितमृगलोचने उपमानम्, लोचने उपमेयम्, चापल्यं साधारणो धर्म्मः, सदृशीति च तद्वाचकम्, सदृशस्य चासमस्तद्वाक्यगेयम् । इति । आर्याछन्दः, लक्षणं चोक्तं प्राक् । । ९० ॥"

यथा वा—"उन्नतिमानतिकठिनः समुदितनक्षत्रमालोऽयम् । बाले पयोधरस्तव कनकाचलवद्दरीवर्त्ति ॥" इत्यत्र तद्धितगार्थी । "अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः । सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर न कस्य ॥" इत्यत्र सदृशपदस्य समस्तत्वात्समासगाऽर्थी । "जलदोदरादुदीता भामिनि ! सौदामिनीलेखा । नीलनिचोलादाविर्भूताकान्तिश्च ते समा रम्या ॥" इत्यत्र वाक्यगेयम् । यथा वा—"चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारिकान्ति । सरसिजमिदमाननं च तस्याः सममिति चेतसि सम्मदं विधत्ते ॥"इति ।

एवमुदाहृत्य बोधसौकर्य्यायाह—अत्रोदाहृते पद्ये । **क्रमेण** सूत्रनिर्दिष्टानुपूर्व्या । **त्रिविधा** तद्धितसमासवाक्यगात्वभेदात् त्रिप्रकारा । **आर्थी** । "पूर्णोपमा" इति शेषः । अत्राहुर्विवृतिकाराः—'नन्वम्भोरुहस्येव मुखस्य सौरभमित्यादौ साधारणधर्म्मस्योपमानसम्बन्धित्वबोधे षष्ठयर्थानुसन्धानस्यापेक्षणीयतया कथं श्रौतीत्वमिति चेत् ! न, नामार्थनिपातयोरन्वयबोधे विभक्त्यर्थानुसन्धानस्यातन्त्रतया तत्र षष्ठया विशेषणविभक्तेरिव प्रयोगसाधुत्वमात्रार्थकत्वात्; अन्यथा-'चन्द्रादिव मुखात्तस्य निरञ्चति कथाऽमृतम् ।' इत्यादौ सम्बन्धबोधकविभक्त्यभावादुपमानसम्बन्धबोधो न स्यात् ।' इति ।

बोधसौकर्य्यायोक्तमर्थं स्मारयति—८१ तत् तस्मात् । **पूर्णा** पूर्णोपमेत्यर्थः । षट् षड्विधा । **एव ।...स्पष्टम् ।**

सूत्रस्थं तत्पदं व्याचष्टे—सेत्यादिना । स्पष्टम् ।

**लुप्ता सामान्यधर्मादेरेकस्य यदि वा द्वयोः ॥ १७ ॥**

**त्रयाणां वानुपादाने श्रौत्यार्थी सापि पूर्ववत् ।**

सा लुप्ता । तद्भेदमाह—

**पूर्णावद्धर्मलोपे सा विना श्रौतीं तु तद्धिते ॥ १८ ॥**

सा लुप्तोपमा धर्मस्य साधारणगुणक्रियारूपस्य लोपे पूर्णावदिति पूर्वोक्तरीत्या षट्प्रकारा, किं त्वत्र तद्धिते श्रौत्या असंभवात्पञ्चप्रकारा । उदाहरणम्—

**'मुखमिन्दुर्यथा, पाणिः पल्लवेन समः प्रिये ।**

**वाचः सुधा इवोष्ठस्ते बिम्बतुल्यो, मनोऽश्मवत् ॥'**

---

## विवृतिः

**तदिति** । उक्तप्रकारादित्यर्थः ॥ लुप्तामाह—**लुप्तेति** । आदिपदेन उपमानोपमेयेवादीनां संग्रहः । **अनुपादाने** । अवाच्यत्वे अप्रयोगे चेति यथासंभवं बोध्यम् । **तद्धिते श्रौत्या असंभवादिति** ।

धर्मस्यानुपादाने तन्निष्ठसंबन्धबोधिकायाः षष्ठ्याः सप्तम्या वानुत्पत्तौ तदन्तविहित इवार्थे वतिर्न संभवति । कल्पादेस्तु तुल्यार्थे विहितत्वेन तद्योगे आर्थ्येव संभवतीति भावः ॥ **अश्मवदिति** । अश्मतुल्यमित्यर्थः ॥

## विवृतिपूर्तिः

**पञ्चेति** । वाक्य-समासगतत्वेन द्विविधा, श्रौती, वाक्य-समास-तद्धितगतत्वेन त्रिविधार्थीति मिलित्वा धर्मलोपे पञ्चविधा लुप्तोपमेत्यर्थः ॥

**मुखमिति** । अत्रेन्दुमुखयोरुपमानोपमेययोराह्लादकत्वादिः साधारणधर्मो नोपात्तः, यथाशब्देन समासाभावाद्वाक्यमिति **वाक्यगा धर्मलुप्ता श्रौती** । पल्लवपाण्योरुपमानोपमेययोर्मार्दवादिः साधारणो धर्मो नोपात्तः, समंशब्देन समासाभावाद्वाक्यमिति वाक्यगा **धर्मलुप्तार्थी** । सुधावाचोरुपमानोपमेययोर्माधुर्यं साधारणो धर्मो नोपात्तः, इवेन समास इति **समासगा धर्मलुप्ता श्रौती** । बिम्बोष्ठयोरुपमानोपमेययो रक्तिमा साधारणधर्मो नोपात्तः, तुल्यशब्देन समास इति **समासगा धर्मलुप्तार्थी** । मनोऽश्मनोरुपमेयोपमानयोः काठिन्यं साधारणो धर्मो नोपात्तः । अश्मवदिति तृतीयान्तात्तुल्यार्थे वतिरिति तद्धितगा धर्मलुप्तार्थीति ज्ञेयम् ॥

## विज्ञप्रिया

लुप्तामाह—**लुप्तेति** । सामान्यधर्मः साधारणधर्मः । आदिपदादुपमाप्रतिपादकेवतुल्यादिशब्दा उपमानमुपमेयं च । तेषामेकस्य द्वयोस्त्रयाणां वेत्यर्थः । सापि यथासम्भवं श्रौती आर्थी च भवतीत्यर्थः । **पूर्ववदिति**—तद्धितादित्रयगामिनीत्यर्थः ।

**पूर्णावदिति**—लोपेऽनुपादाने। पूर्णावदिति व्याचष्टे—**पूर्वोक्तेति**। तद्धितादित्रयगामित्वं पूर्वोक्त-रीतिः। **षडिति**—षट् प्रसक्ता इत्यर्थः। वस्तुतस्तु पञ्चेत्याह—**किन्त्विति**। **श्रौत्या असम्भवादिति**। धर्मलोपे धर्मनिष्ठसम्बन्धबोधिका षष्ठी नास्ति। ततस्तदन्तादिवार्थके वतिरपि नास्ति इत्यतोऽसम्भवः।

**मुखमिन्दुरिति**। तत्राह्लादकत्वं धर्मो लुप्तः। यथाशब्देन सह समासाभावाद् वाक्यगा आर्थी। वाचः सुधा इवेत्यत्र मधुरत्वं धर्मो लुप्तः। इवशब्देन सह नित्यसमासात् श्रौती। ओष्ठस्ते इत्यत्र शोणत्वं धर्मो लुप्तः। तुल्यशब्देन समासात् समासगा आर्थी। मनोऽश्मवत्। इत्यत्राऽश्मना तुल्यमित्यर्थे तुल्यार्थे तद्धितेवतिरित्यार्थी।

## लोचन

सामान्यधर्मदेरित्यादिशब्देन उपमानोपमेयोपमाप्रतिपादकानां सङ्ग्रहः।

लुप्तोपमायां तद्धिते श्रौत्या असम्भवः। मुखस्य चन्द्रवत् शोभेत्यत्र शोभारूपसाधारणधर्मानुपादानेना-र्थस्य साकाङ्क्षत्वेनाऽसङ्गतेः।

मुखमिन्दुर्यथेत्यादौ पूर्वोक्तक्रमव्यत्ययः पद्यनिर्वाहार्थः।

## कुसुमप्रतिमा

लुप्तोपमां लक्षयति लुप्तेति। सामान्यधर्म्मादेरिति "द्वन्द्वः सामासिकस्य च" इति वतिवन्निर्द्धारण एव षष्ठ्या एकवचनम्। आदिशब्देन उपमानस्य उपमेयस्य औपम्यवाचकानामिवादिशब्दानाञ्च ग्रहणम्। तथा च सामान्यधर्म्मादेर्मध्ये यस्य कस्यचिदेकस्य, यदि वा अथवा ययोः कयोचित् द्वयोः किं वा येषां केषाञ्चित् त्रयाणाम् अनुपादाने अनभिधाने लुप्ता लुप्तोपमा भवति। सामान्यधर्म्मादीनां मध्ये एकप्रभृतेरनुपादानरूपलोपादेवास्या लुप्तोपमेति संज्ञा। लुप्तोपमापि पूर्ववत् पूर्णोपमावत् श्रौती आर्थी चेति प्रथमतो द्विविधेत्यर्थः।

पूर्वकारिकायां "सामान्यधर्म्मादिः" इति धर्म्मस्य प्रथमनिर्द्देशात् धर्म्मलोप एव लुप्तोपमां प्रथमं विभजते पूर्णावदिति। सा लुप्तोपमा धर्म्मलोपे सामान्यधर्म्मस्यानुपादाने सति तद्धिते श्रौती विना तु श्रौतीरूपं भेदं विहाय तु पूर्णावत् पूर्णोपमासमसंख्यकप्रकारा भवतीत्यर्थः।

धर्म्मस्येति। माधागण उपमानोपमेयोमयवृत्तिर्यो गुणक्रियारूपस्तस्य। पूर्वोक्तरीत्या श्रौती तद्धितगता समासगता वाक्यगता चेति त्रिविधा, आर्थी च तथैव त्रिविधेति प्रागुक्तप्रकारेण, षट्प्रकारषड्विधा भवितुं योग्यापीत्यर्थः। अत्र सामान्यधर्म्मलोपे सति। असम्भवादिति। अत्रायमभिप्रायः—"तत्र तस्यैव" इत्यनेन सप्त-म्यन्तात् षष्ठ्यन्ताच्च वतिप्रत्ययो विधीयते, सा पुनः सप्तमी षष्ठी च विभक्तिर्थं कञ्चित् सामान्यधर्म्ममपेक्ष्यैन सम्भवति। एतञ्च सामान्यधर्म्मानुपादाने तस्याः सप्तम्याः षष्ठ्याश्चासम्भवात् तदन्त एव प्रसक्तस्य वतिप्रत्यय-स्याप्यसम्भवेन सामान्यधर्म्मलोपे श्रौत्या अप्यसम्भव एव। तथा च "सौरभमम्भोरुहवन्मुखस्य" इत्यत्र सौरभरू-पसामान्यधर्म्मानुपादाने न खलु केवलम् 'अम्भोरुहस्य' इति षष्ठी विभक्तिस्तदन्ते वतिप्रव्ययो वा उपपद्यत इति। अतएवाह पञ्चप्रकारेति। तथाहि सामान्यधर्म्मलोपे समासगता वाक्यगता चेति द्विविधा श्रौती, तद्धितगता समास-गता वाक्यगता चेति त्रिविधा च आर्थीति मिलित्वा समुदायेन पञ्चविधा लुप्तोपमा।

मुखमिति। हे प्रिय! तव मुखम् इन्दुर्यथा चन्द्र इव। अत्र यथाशब्दस्योपादानात् आनन्दयतीति क्रियारूपसामान्यधर्म्मस्य चानुपादानात् वाक्यगता श्रौती लुप्तोपमा।

पाणिः पल्लवेन सम इति समशब्दस्योपादानात् कोमल इति गुणरूपसामान्यधर्मस्य चानुपादानात् वाक्यगता आर्थी लुप्तोपमा।

वाचः सुधा इव इति इवशब्दस्योपादानात् मधुरा इति समान्यधर्मस्य चानुपादानात् इवशब्देन सह प्रागुक्तन्यायेन समासाच्च समासगता श्रौती लुप्तोपमा।

ते तव ओष्ठो बिम्बतुल्य इति तुल्यशब्दस्योपादानात् लोहितवर्ण इति सामान्यधर्म्मस्य चानुपादात् बिम्बशब्देन सह तुल्यशब्दस्य समासाच्च आर्थी समासगता लुप्तोपमा।

तथा मनः अश्मववत् पाषाणवत् इति तृतीयान्तादश्मशब्दात् तुल्यार्थे वतिप्रत्ययविधानात् कठिनमिति सामान्यधर्म्मस्य चानुपादानात् तद्धितगता आर्थी लुप्तोपमा।

अत्र पञ्चानामेव स्थलानां वाक्यत्वेन सर्वत्रैव वाक्यगत लुप्तोपमात्वप्रसक्तावपि तद्धितगतायाः समासगतायाश्च विशेषरूपत्वे तदपवादरूपत्वात् तद्धितगता समासगतयोर्व्यतिरिक्तस्थल एव वाक्यगतायाः प्रवृत्तिरिति पूर्वमप्युक्तम्।

## विमला

लुप्तोपमामाह, लुप्तेति।—सामान्यधर्मादिः,—आदिना उपमानोपमेययोवौपम्यवाचिन इवादेश्च सङ्ग्रहः, तथा च, सामान्यधर्मोपमानोपमेयौपम्यवाचिना मध्ये इत्यर्थः, एकस्य—सामान्यधर्मोपमानोपमेयौपम्यवाचिनाम् एकतमस्येत्यर्थः, द्वयोर्वा सामान्यधर्मोपमानयोः सामान्यधर्मोपमेययोरुपमानोपम्यवाचिनीरित्येवम् अन्धतरयोरित्यर्थः, त्रयाणां वा—सामान्यधर्मोपमानोपमेयान्यतरौपम्यवाचिनामित्यर्थः, अनुपादाने—अवाच्यत्वे अप्रयोगे चेति यथासम्भवं बोध्यं, सा उपमा लुप्ता भवति; सा च पूर्ववत्—पूर्णवत्, श्रौती आर्थी च।

पूर्णेति।—सा—लुप्तोपमा, धर्मस्य—साधारणगुणक्रियारूपस्य, लोपे तद्धिते श्रौतीं विना पूर्णावत् भवति।

किन्त्विति।—धर्मस्य अनुपादाने तन्निष्ठसम्बन्धबोधिकायाः षष्ठ्याः सप्तम्या वा अनुत्पत्तौ तदन्तविहित इवार्थे वतिर्न सम्भवति, कल्पादेस्तु तुल्यार्थे विहितत्वेन तद्योगे आर्थ्येव सम्भवतीति भावः।

मुखमिति।—हे प्रिये! ते—तव, मुखम् इन्दुर्यथा—चन्द्रवदाह्लादकमित्यर्थः, पाणिः पल्लवेन समः,—पल्लवसदृशः कोमलः इत्यर्थः, वाचः,—वचनानि, सुधा इव—सुधावन्मधुरः इत्यर्थः, ओष्ठः बिम्बतुल्यः,—बिम्बवत् रक्त इत्यर्थः, मनः,—हृदयम्, अश्मवत्—पाषाणतुल्यं कठिनमित्यर्थः। इन्दुमुखादीनाम् उपमानोपमेयभूतानाम् आह्लादकत्वादिरूपस्य साधारणधर्मस्य अनुपादानात् लुप्तधर्मपदोपमा, किन्तु प्रथमे वाक्यगता श्रौती, द्वितीये वाक्यगता आर्थी, तृतीये समासगता श्रौती, चतुर्थे समासगता आर्थी, पञ्चमे तद्धितगता आर्थीयमिति बोध्यम्।

## लक्ष्मी

एवं षड्विधां पूर्णो निरूप्य इदानीमेकोनविंशतिविधां लुप्तां निरूपयन्नादौ द्वैविध्यमुपपादयति—लुप्तासामान्यधर्मदिरिति। निर्धारणार्थेयं षष्ठी, द्वन्द्वः सामासिकस्य चेतिवत्। आदिपदेन उपमानस्य उपमेयस्य औपम्यवाचकेवादिपदानां च परिग्रहः। एवञ्च सामान्यधर्मदिर्मध्ये यस्य कस्यचिदेकस्य साधारणस्य तद्वाचकस्योपमानस्योपमेयस्य वेत्यर्थः। यदि वा अथवा ययोः कयोश्चित् द्वयोः साधारणधर्मतद्वाचकयोः साधा-

रणधर्मोपमानयोः साधारणधर्मवाचकोपमयोः किं वा येषां केषाञ्चित्त्रयाणां साधारणधर्मतद्वाचकोपमानानाम् अनुपादाने साक्षादप्रतिपादने लुप्ता लुप्तोपमा भवति। सामान्यधर्मादीनां मध्ये यस्य कस्याप्यनुपादानरूपलोपादेवास्या लुप्तोपमेति नाम। सापि लुप्तोपमापि पूर्ववत् पूर्णोपमावत् श्रौती आर्थी चेति प्रथमतो द्विप्रकारेत्यर्थः।

'लुप्ता सामान्यधर्मादे' रितिकारिकायां धर्मस्य प्रथमोपादानात् धर्मलोप एव लुप्तोपमां प्रथमं सभेदं निरूपयति—पूर्णावदिति। सा लुप्तोपमा धर्मलोपे साधारणधर्मस्य साक्षादनभिधाने सति तद्धिते श्रौतीं विना तु श्रौतीरूपभेदं परित्यज्य तु पूर्णावत् पूर्णोपमा तुल्यसंख्यफलप्रदा भवति, पूर्णा यथा श्रौत्यार्थी चेति भिद्यमाना तद्धितसमासवाक्यगतत्वभेदैस्त्रिधा भिन्ना षड्विधा तथेह केवलं श्रौतीवर्ज्जनेनास्याः पञ्चविधात्वं भवतीति भावः।

तदेव विवृणोति—सेति। साधारणो गुणो मनोज्ञत्वादिः क्रिया पुनर्भातीत्यादिः तदात्मकस्य तस्य तथोक्तस्य। **पूर्वोक्तरीत्या षट्प्रकारेति**। प्रागुक्तदिशा श्रौत्यार्थीभेदेन षड्विधा भवितुं योग्यापीत्यर्थः। अत्र साधारणधर्मलोपे सति। असम्भवादिति। अत्रायमाशयः—'तत्र तस्येव' इत्यनेन सप्तम्यन्तात् षष्ठ्यन्ताच्च वतिप्रत्ययो विधीयते, तत्र यं कञ्चन् साधारणधर्ममाश्रित्यैव षष्ठी सप्तमी विभक्तिः। तथा च साधारणधर्मानभिधाने षष्ठी सप्तम्योश्चासम्भवात् तदन्त एव प्राप्तस्य वतिप्रत्ययस्याप्यसम्भवेन साधारणधर्मलोपे श्रौत्या असम्भव एव। एवञ्च 'सौरभमम्भोरुहवन्मुखस्य' इत्यत्र सौरभरूपसाधारणधर्मानुपादाने न षष्ठी विभक्तिर्नापि तदन्ते वतिप्रत्ययः सम्भवितुमर्हतीति। अत एवाह—**पञ्चप्रकारेति**। तथाहि लुप्तोपमेयं साधारणधर्मलोपे समासगता वाक्यगता चेति द्विधा श्रौती, तद्धित-समास-वाक्यगतत्वेन त्रिविधा चार्थीति सङ्कलनया पञ्चविधेत्यर्थः।

मुखमिति। हे प्रिये! इन्दुर्यथा तथेति शेषः ते तव मुखम् आनन्दयतीतिशेषः, पल्लवेन किसलयेन नूतनपत्रेणेति यावत्, समस्तुल्यः तव पाणिः कोमल इति शेषः, सुधा इव तव वाचो मधुरा इति शेषः, विम्बतुल्यः बिम्बफलसदृशः तव ओष्ठ अधरो रक्तवर्ण इति शेषः अश्मना प्रस्तरेण तुल्यम् अश्मवत् मनः कठिनमिति शेषः।

अत्र 'मुखमिन्दुर्यथे'त्यत्र यथाशब्दस्य प्रतिपादनेऽपि तेन समासाभावात् आनन्दयतीतिक्रियारूपसाधारणधर्मस्यानुपादानाद्वाक्यगता श्रौती धर्मलुप्तोपमा। 'पाणिः पल्लवेन सम' इत्यत्र, समशब्दस्य प्रतिपादनेऽपि तेन समासाभावात् कोमल इति गुणरूपसाधारणधर्मस्य चानुपादानात् वाक्यगता आर्थी धर्मलुप्तोपमा। 'वाचः सुधा इव' इत्यत्र इवशब्दप्रतिपादनात्तेन च सह पूर्वोक्तन्यायेन समासात् मधुरा इति साधारणधर्मस्यानुपादानाच्च समासगता श्रौती धर्मलुप्तोपमा। 'ओष्ठस्ते बिम्बतुल्यः' इत्यत्र तुल्यशब्दप्रतिपादनात् रक्तवर्ण इति साधारणधर्मस्य चाप्रतिपादनात् बिम्बपदेन सह तुल्यपदस्य समासाच्च समासगता श्रौती धर्मलुप्तोपमा। 'मनोऽश्मव' दित्यत्र तृतीयान्तादश्मशब्दात तुल्यार्थे 'तेन तुल्य' मिति वतिप्रत्ययकरणात् कठिनमिति साधारणधर्मस्य चाप्रतिपादनात् तद्धितगता आर्थी धर्मलुप्तोपमा।

अत्र पञ्चस्थलेष्वपि वाक्यगतधर्मलुप्तोपमात्वप्रसक्तेः पूर्वोक्तसमान्यविशेषन्यायेनैव वारणीयः। प्रत्येकमुदाहरणान्तरं विस्तरभयान्नेह प्रतिपादितम्।

धर्मलोप इति। आकाङ्क्षापूरणाय 'पूर्णावद्धर्मलोपे' अनुपदोक्तकारिकातो 'धर्मलोपे' 'सा' तत्पदवाच्य 'लुप्ता' इति च अनुषज्यते अनुषङ्गः क्रियते। एवं सत्येवाकाङ्क्षाशान्तेरित्याशयः।

## रुचिरा

एवं पूर्णायां लक्षितायामपूर्णाया अपि लक्षयितव्यत्वे आह—८२ लुप्तेत्यादि।

८२ लुप्ताऽपूर्णा। 'उपमे'ति प्रक्रमादनुषज्यते। **सामान्यधर्म्मादेः**। आदिना—वाचकोपमानोपमेयानां ग्रहणम्। निर्धारणार्थेयं षष्ठी। **एकस्य** साधारणस्य तद्वाचकस्योपमानस्योपमेयस्य वेत्यर्थः। **द्वयोः** साधारणधर्म्म-तद्वाचकयोः साधारणधर्मोपमानयोः साधारणधर्मवाचकोपमेययोः। **वा**। **यदि**। **त्रयाणां** साधारणधर्म्मतद्वाचकोप-मानानाम्। **अनुपादाने** साक्षादनभिधाने। 'भवति' इति शेषः। तथा च-अष्टविधेयं लुप्तोपमा, तत्र-एकस्य लोपे चतुर्धा, साधारणधर्म्मस्योपमानस्यौपम्यवाचकस्योपमेयस्य लोपात् द्वयोर्लोपे त्रिधा, साधारणधर्म्मोपमानयोः साधा-रणधर्मतद्वाचिनोर्धर्म्मोपमेययोश्च लोपात् त्रयाणां लोपे पुनरेकधा, साधारणधर्म्मतद्वाचकोपमानानां लोपात्। साधा-रणधर्मतद्वाचकोपमेयानां लोपे तु नेयम्, असम्भवात्। अस्याश्च पूर्णावत् श्रौत्यार्थीति भेदद्वयमाह—श्रौतीत्यादिना। साऽष्टविधा लुप्तोपमेत्यर्थः। **अपि**। **पूर्ववत्** पूर्णोपमावत्। **श्रौती**। आर्थी। 'चे'ति शेषः। एवं चास्याः षोडशविधात्वं स्फुटम्॥ ७०॥

अथैवं षोडशभेदभिन्नाया अप्यस्याः प्रकारान्तरेण भेदानाह—तद्भेदांस्तस्या निरुक्तदिशा षोडशवि-धाया लुप्तोपमाया भेदास्तान्। **आह—८३** सा लुप्तोपमा। **पूर्णावत्** पूर्णा यथा श्रौत्यार्थी चेति भिद्यमाना तद्धितसमासवाक्यगत्वभेदैस्त्रिधा भिन्ना षड्विधा तथेति भावः। **धर्म्मलोपे** साधारणधर्मस्य साक्षादनाभिधाने सति। **तद्धिते**। तु। **श्रौतीम्**। विना वर्जयित्वा। 'सम्भवती'ति शेषः। अतश्चास्याः पञ्चविधात्वं स्पष्टमिति भावः॥७१॥

तदेव विवृणोति—सा। **लुप्तोपमा**। **साधारणगुणक्रियारूपस्य**। साधारणो गुणो मनोज्ञत्वादिः, क्रिया पुनर्भातीत्यादिरुपचारात्तदनुकूलव्यापृतत्वम्, तदात्मकस्येति भावः। **धर्म्मस्य**। **लोपे**। पूर्णावत् पूर्णोपमेव भिद्यते इत्यर्थः। इति। पूर्वोक्तरीत्या प्रागुक्तेन नयेन। **षट्प्रकारा**। **किन्तु**। अत्रानयोः श्रौत्यार्थ्योः। **श्रौत्याः**। **तद्धिते**। **असम्भवात्**। **पञ्चप्रकारा**। अयम्भावः-अस्याः साधारणधर्म्मलोपे पूर्णावदभिधानात् षड्विधात्वं वक्तुं सङ्गतं, किन्तु श्रौत्यास्तद्धितेऽसम्भवात् पञ्चविधात्वमेवावस्थितम्। तथा च—लुप्तोपमेयं धर्म्मलोपे श्रौती समासगता वाक्यगता चेति द्विधा, आर्थी पुनः तद्धितसमासवाक्यगतत्वेन त्रिधेति पञ्चविधेति निष्कृष्टोऽर्थः॥ ७१॥

विस्तरभयादाह—**उदाहरणम्**। 'यथे'ति शेषः। **'हे प्रिये! यथा। इन्दुः** 'तथे'ति शेषः। ते तव। **मुखम्**। एवं परस्तादपि। 'भाती'ति शेषः। **पल्लवेन** किसलयेन नवपत्रेणेति यावत्। **समः** सदृशः। तव—**पाणिः**। 'पाणी पल्लवाभ्यां समौ' इति पाठः साधीयान्। 'कोमलौ' इति शेषः। **सुधा इव**। तव-**वाचः**। 'मधुरा' इति शेषः। **बिम्बतुल्यो** बिम्बफलसदृशः। तव-**ओष्ठोऽधरः**। 'रक्त' इति शेषः। अश्मवदश्मना पाषाणेन तुल्यम्। तव-मनः 'कठिन'मिति शेषः। इदम्बोध्यम्—'मुखमिन्दुर्यथे' त्यत्र मुखमुपमेयम्, इन्दुरुपमानम्, यथा धर्म्मवाचकम्, उपमा-नोपमेययोश्चाह्लादकत्वाद्य नुगतं मानस्य च साधारणधर्मस्यानुपादानम्, तस्मात् धर्म्मलोपः, यथापदस्य चासमस्त-त्वाद्वाक्यगतात्वमस्याः। 'पाणिः पल्लवेन समः' इत्यत्र पाणिरुपमेयम्, पल्लव उपमानम्, समश्च धर्मवाचकः, कोमलत्वरूपस्य धर्म्मस्य चानुपादानात् समपदेन च समासाभावाद्वाक्यगता धर्मलुप्ताऽऽर्थी। 'वाचः सुधा इवे' त्यत्र वागुपमेयम्, सुधोपमानम्, इव च धर्म्मवाचकम्, तस्य च पूर्वपदेन समस्तत्वात् माधुर्यधर्म्मस्य चानुपादानात्स-मासगा धर्मलुप्ता श्रौती। 'ओष्ठस्ते बिम्बतुल्यः' इत्यत्रौष्ठ उपमेयम्, बिम्बमुपमानम्, तुल्यपदं च तेन समस्यमानं धर्म्मवाचकम्, रक्तिमरूपस्य धर्म्मस्य चानुपादानमिति समासगता धर्मलुप्ताऽऽर्थी। 'मनोऽश्मव'दित्यत्र 'मन उपमेयम्, अश्मोपमानम्, तुल्यार्थो वतिश्च धर्म्मवाचकः, तस्य च तद्धितीयत्वात् तद्धितगा धर्म्मस्य च काठिन्यस्या-नुपादानात् धर्म्मलुप्ताऽऽर्थी। इति। श्लोकश्छन्दः॥ ९१॥"

यथा वा—"धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः। करणीयं वचश्चेतः सत्यं तस्यामृतं यथा" इत्यत्र वाक्यगा श्रौती धर्म्मलुप्ता, "आकृष्टकरवालोऽसौ सम्पराये परिभ्रमन्। प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः॥" इत्यत्र वाक्यगा धर्म्मलुप्ताऽऽर्थी। "लद्धा सादेणचिरं सुरवंदिपरिग्गहे णिसाअरवइणा। सीआ रक्खस-वसइं दिट्ठि विसघरं विसोसहिब्व उपणीआ॥" इत्यत्र समासगा धर्म्मलुप्ता श्रौती। "अग्घाइ छिवइ चुंबइ ठवेइ हिअअंमि जणिअरोमंचो। जाआकवोलसारेसाइ पहिउ महुअउप्फाइं॥" इत्यत्र समासगा धर्म्मलुप्ताऽर्थी। "मुख-ममृतद्युतिकल्पं कपोलदेशो मुकुरदेश्यः। तस्यां दृशां विलासाः कुवलयदलदामदेशीयाः॥" इत्यत्र तद्धितगा धर्म्मलुप्तार्थी। अत्र कौस्तुभकाराः—"ननु तद्धिते धर्म्मलुप्ता श्रौती कुतो नोच्यते इति चेत्, न। 'तत्र तस्येव'। ५/१/११६ इति सूत्रेण विहितस्य वतेः प्रयोगे हि श्रौती सम्भवति न च धर्म्मलोपः सम्भवति, उपमेये उपमानसम्ब-न्धबोधकस्य तस्य साधारणधर्म्मप्रयोगं विनाऽनुपपत्तेः। न हि 'मधुरायामिव स्रुघ्ने प्राकार' इति सम्भवति, सप्तम्यर्थाद्यनन्वयापत्तेः। किन्तु मधुरावत् स्रुघ्ने इत्येव। तस्मात् षष्ठयर्थसम्बन्धविशेषणस्य सप्तम्यर्थाधारत्ववि-शेषणस्य साधारणधर्म्मरूपस्य प्रयोगं विना इवार्थवतेरसम्भवान्न तद्धिते श्रौती धर्म्मलुप्ता। ननु मा भूदिवार्थकव-तियोगे धर्म्मलुप्ता श्रौती, तथाऽपि-इवार्थकतद्धितान्तरे सा दुर्वारा। तथा हि—'इवे प्रतिकृतौ॥' ५/३/९६ इत्यधिकारे 'कुशाग्राच्छः।' ५/३/१०५ इति सूत्रेण 'कुशाग्रमिवेति कुशाग्रीया बुद्धिरित्यत्र छप्रत्ययविधानेन एतादृशस्थले तत्सम्भवात् इति चेत्! अत्राहुः—'इवे प्रतिकृतौ।' ५/३/९६ इत्यधिकारे विहिताः प्रत्ययास्तुल्यार्था एव। 'कुशाग्रतुल्या बुद्धि'रित्यभेदान्वयदर्शनात् तस्य सादृश्यमात्रार्थत्वे तद्वत् परत्वाभावेन उपमेयसामानाधिक-रण्यासम्भवात्। न च इवार्थे तद्विधानेन तदविरोधादिति। अथ सादृश्यादिपदप्रयोगे श्रौत्यार्थी वा यथा—"परस्प-राक्षिसादृश्यमदूरोज्झितवर्त्मसु। मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु॥" इत्यादाविति चेत्! अत्र दीक्षिताः। "श्रौत्येवेयम्, ष्यन्प्रत्ययप्रकृतिभूतेन सदृशशब्देन सादृश्यवदभिधानेऽपि भावप्रत्ययस्य प्रकत्यर्थताऽवच्छेदकश-क्ततया तदुक्तसादृश्यस्यैव वाक्यार्थान्वयित्वादि"त्याहुः। न्यायपञ्चाननादयस्तु—'यत्पदार्थविशेषणस्योपमान-त्वनियमस्तत्रैव श्रौती, इवादिविशेषणीभूतस्य चन्द्रादेरुपमानत्वनियमात्। सादृश्यादिपदविशेषणस्य च नोपमानत्वनियमः। 'चन्द्रसादृश्य'मित्यादौ तथात्वेऽपि 'चन्द्रमुखयोः सादृश्य'मित्यादौ व्यभिचारात्'। इत्याहुः। तस्मात्—धर्म्मलुप्तायाः पञ्च भेदाः स्थिताः। अत्र दीक्षिताः द्विर्भावेऽपि धर्म्मलुप्ता दृश्यते। यथा—पटुपटुरिति। 'प्रकारे गुणवचनस्य।' ८/१/१२ इति सूत्रेण सादृश्ये द्विर्भावविधानात् पटुसदृश इत्यर्थः। वस्तुतोऽपटावयं प्रयोगः, न चेयं वाक्यगा 'कर्म्मधारयवदुत्तरेषु'। ८/१/८१ इति सूत्रेण तत्रैकपद्यविधानात्, नापि समासगा, वास्तवसमासत्वाभावात्। इति, तन्न; आतिदेशिकसमाससाधारण्येनैवात्रोपमाविभागकरणेनातिदेशिककर्म्मधार-यवद्भावेऽपि समासगायामेव तदन्तर्भावसत्त्वात्। अत एव—'पटुपटु'रित्यादौ समासत्वप्रयुक्ताः, पुंवद्भावान्तो-दात्तत्वदयोऽपि सिद्धयन्ति। केचित्तु (रसगङ्गाधरकारादयस्तु) 'वाचकधर्मलुप्तायामेतद्भेदस्याधिक्यम्, न तु केवलधर्म्मलुप्तायाम्, न चात्र द्विर्भावस्य सादृश्यवाचकस्य सत्त्वान्न वाचकलोप इति वाच्यम्, सादृश्ये द्योत्ये द्विर्भवत इति दर्शनात्, द्विर्भावस्य वाचकताया भाष्यकैयटविरुद्धत्वात्' इत्याहुः। तन्न। द्योतकत्वेऽप्युभयलुप्तत्वा-सम्भवात्। अन्यथाइवादीनां द्योतकत्वपक्षे चन्द्र इवेत्यादावपि लुप्तोपमानत्वप्रसङ्गात्। पदान्तरेण तादृशार्थबोधे सहकारित्वरूपस्य द्योतकस्य सत्त्वे तद्वाचकत्वस्य पदान्तरे स्वीकारस्यावश्यकत्वाच्च। यदीयमेकलुप्ता, यदि वा द्विलुप्ता, उभयथाऽपि समासमध्येऽन्तर्भावान्न दोषः। इति तत्त्वम्।" इति। रसगङ्गाधरकारा एवमाहुः—"यच्चा-प्यदीक्षितैरस्मिन्नेव, प्रस्तावे "धर्म्मलुप्ता वाक्यसमासतद्धितेषु दर्शिता, द्विर्भावेऽपि दृश्यते। 'पटुपटुर्देवदत्त' इत्यत्र 'प्रकारे गुणवचनस्य।' ८/१/१२ इति सादृश्ये द्विर्भावविधानात्।" इति निगदितं तत्तुच्छम्, अत्र च वाचकस्या-

प्यनुपादानाद्वाचकधर्म्मलुप्तायामेतदाधिक्यमुद्भावयितुमुचितम्, नतु धर्म्मलुप्तायाम्, धर्म्ममात्रलुप्ताया एव धर्म्म-लुप्ताशब्देन तैर्विवक्षणात्। अन्यथा—एकलुप्तास्वेव द्विलुप्तानां त्रिलुप्तायाश्च ग्रहणात् पृथगुपादानमसम्बद्धमेव स्यात्। न चात्र वाचकस्य द्विर्भावस्यैव सत्त्वान्नास्ति लोपः, अपि तु धर्म्ममात्रस्येति वक्तुं शक्यम्, द्विर्भावस्य सादृश्यत्वोक्तेर्भाष्यकैयटादि विरुद्धत्वात्। तदुक्तं कैयटेन—'प्रकारे गुणवचनस्य।' ८/१/१२ इति सूत्रे सिद्धं त्विति प्रतीकमादाय 'द्विर्वचनस्य प्रकृतिः स्थानी इति तदर्थो विशिष्यते, न तु प्रकारः, तत्र सर्वस्य गुणवचनत्वाद्व्य-भिचाराभावात्। तद्ग्रहणाद्गुणवचनो यः शब्दो निर्ज्ञातस्तस्य सादृश्यद्योत्ये द्वे भवत इति सूत्रार्थः।' इति सूत्रार्थः। इति।"

अत्र च नागेशभट्टा रसगङ्गाधरस्यैव मर्म्मप्रकाशाख्यायां व्याख्यायाम्, "सूत्रार्थ" इति प्रतीकमुपादा-याहुः—"द्विर्भावस्य सादृस्यद्योतकत्वेऽपि शक्तत्वरूपवाचकत्वाभावाद्वाचकलोप इति तव हृदयम्। ततु—इवा-देर्द्योतकतानये 'चन्द्र इव मुख'मित्यत्र'चन्द्रसुहृन्मुख'मित्यत्र च वाचकलुप्ताव्यवहाराभावाय सादृश्यतद्विशिष्टान्यतरबोधकाभावस्यैव वाचकलुप्ताव्यवहारप्रयोजकत्वस्य वाच्यत्वेन द्योतकस्यापि बोधकत्वा-नपायेन नास्ति वाचकलोप इति तदाशयात् (अथ दीक्षिताभिप्रायात्) अबोधमूलकमिति चिन्त्यमिदम्।" इति।

**आधारकर्मविहिते द्विविधे च क्यचि, क्यङि।**

**कर्मकर्त्रोर्णमुलि च स्यादेवं पञ्चधा पुनः ॥ १९ ॥**

'धर्मलोपे लुप्ता' इत्यनुषज्यते। क्यच् क्यङ्-णमुलः कलापमते इयिन्त्राणमः। क्रमेणोदाहरणम्—

**"अन्तः पुरीयसि रणेषु सुतीयसि त्वं**

**पौरं जनं, तव सदा रमणीयते श्रीः।**

**दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्र-**

**सञ्चारमत्र भुवि सञ्चरसि क्षितीश ! ॥"**

अत्र 'अन्तः पुरीयसि' इत्यत्र सुखविहारस्पदत्वस्य, 'सुतीयसि' इत्यत्र स्नेहनिर्भरत्वस्य च साधारणधर्मस्य लोपः। एवमन्यत्र।

इह च यथादितुल्यादिविरहाच्छ्रौत्यादिविशेषचिन्ता नास्ति। इदं च केचिदौपम्यप्रतिपादकस्येवादेर्लोप उदाहरन्ति। तदयुक्तम्। क्यङादेरपि तदर्थविहितत्वेनौपम्यप्रतिपादकत्वात्। ननु क्यङादिषु सम्यगौपम्यप्रतीतिर्नास्ति, प्रत्ययत्वेनास्वतन्त्रत्वाद् इवादिप्रयोगाभावाच्च, इति न वाच्यम्। कल्पबादावपि तथा प्रसङ्गात्। न च कल्पबादीनामिवादितुल्यतयौपम्यस्य वाचकत्वम्, क्यङादीनां तु द्योतकत्वम्। इवादीनामपि वाचकत्वे निश्चयाभावात्। वाचकत्वे वा 'समुदितं पदं वाचकम्"प्रकृतिप्रत्ययौ स्वस्वार्थबोधकौ' इति च मतद्वयेऽपि वत्यादिक्यङाद्योः साम्यमेवेति। यच्च केचिदाहुः—'वत्यादय इवाद्यर्थेऽनुशिष्यन्ते, क्यङादयस्त्वाचाराद्यर्थे' इति। तदपि न। न खलु क्यङादय आचारमात्रार्थाः, अपि तु सादृश्याचारार्था इति। तदेवं धर्मलोपे दशप्रकारा लुप्ता।

---

## विवृति

धर्मलुप्ताया एवोपमायाः पुनरपि पञ्चप्रकारानाह—**आधारेति**। अधिकरणात्कर्मणश्च विहिते क्यचि ईयप्रत्यये, कर्तुर्विहिते क्यङि आयि प्रत्यये, कर्मकर्त्रोरुपपदयोर्विहिते णमुलि क्त्वादेशे णमि, यिन्निति ईयप्रत्ययस्य। संज्ञा ॥ **अन्तःपुरीयसीति**। तुल्यत्वमाचारश्च ईयप्रत्ययार्थः। आचारश्चात्राधिकरणत्वान्वययोग्यक्रिया। सा च प्रकृते संचाररूपा ग्राह्या। व्युत्पत्तिवैचित्र्येण तुल्यत्वस्य प्रकृत्यर्थे आचारस्याख्यातार्थेऽन्वयः। तथा चान्तः पुरतुल्येषु रणेषु संचारकर्तेत्यन्वयबोधः। 'सुतीयसि' इत्यादौ त्वाचारो मननम्, पौरजनं सुततुल्यं मन्यस इत्यर्थः। 'रमणीयते' इत्यत्राचारो वर्तनम्, रमणीतुल्या श्रीर्वर्तत इत्यर्थः। अत्रात्यन्ताधीनत्वस्य उपभोगसाधनत्वस्य वा साधारणधर्मस्य लोपः। **दृष्ट इति**। अमृतद्युतिरिव दृष्ट इत्यर्थः। अत्र मनोज्ञत्वादिः साधारणो धर्मः। **इन्द्रसंचारमिति**। इन्द्र इव संचरसीत्यर्थः। अत्र विभवाद्यतिशयः साधारणधर्मः। केचित्तु—'क्यच्क्यङोरर्थ आचारस्तस्यात्र विद्यमानत्वाद्धर्मलोपोदाहरणमेतन्न भवति' इत्याहुः। तन्न। आचारस्य साधारणत्वेऽपि प्रकृते सादृश्यहेतुत्वेन

विवक्षणात्, उपदर्शितधर्माणां सादृश्यहेतुत्वेन झटिति प्रतीयमानत्वात् 'चन्द्रायते शुक्लरुचापि हंसः' इत्यादौ सत्यप्याचारे 'शुक्लरुचा' इति साधारणधर्मप्रयोगदर्शनाच्च, आचारस्याख्यातार्थान्वितत्वेन निराकाङ्क्षतया क्यच्क्यङर्थे सादृश्येऽभेदान्वयासंभवेन सादृश्यहेतुत्वायोगाच्च। **इहचेति**। श्रौतीत्यादिपदेनार्थीपरिग्रहः। वस्तुतस्तु यथा तुल्यार्थविहितस्य वतेर्योगे आर्थीत्वम्, तथात्रापि तुल्यार्थविहितक्यच्क्यङोर्योगे आर्थीत्वम्। श्रुतिः शब्दस्तेन साक्षात्प्रतीयमाना श्रौती, तदितरा आर्थीति वदतश्चण्डीदासस्य मते सुतरामार्थीत्वम्। वतेरितीवाद्युपलक्षणम्। कल्पबादेरित्यनुबन्धप्रकारसहितनिर्देशः।**निश्चयाभावादिति**। तथा चेवादेरव्ययतया उपमावचकत्वमसिद्धं तत्तुल्यस्य कल्पादेः सुतरामेव तदसिद्धमिति भावः। ननु 'कमलमिव मुखम्' इत्यादावुपमालक्षणाव्याप्तिभयेन इवादेरुपमावचकत्वमवश्यमङ्गीकार्यमित्यभिप्रायेणाह—**वाचकत्वे वेति**। इवादितुल्यत्वेन कल्पादेरुपमावाचकत्वाङ्गीकारे वेत्यर्थः। **समुदितं** प्रकृतिप्रत्ययसमुदायः, वाचकं प्रकृत्यर्थविशिष्टप्रत्ययार्थप्रतिपादकम्। स्वस्वार्थबोधकौ क्रमेण स्वार्थप्रतिपादकौ। **वत्यादीति**। आदिपदेन कल्पादिपरिग्रहः। **साम्यमेवेति**। सादृश्यवाचकत्वेन साम्यमित्यर्थः। **आचाराद्यर्थ इति**। 'अनुशिष्यन्ते' इत्यन्वयः। **अपि त्विति**। किंत्वित्यर्थः। 'अपि तर्हि' इति पाठे किं तर्हीत्यर्थः। उपसंहरति—**तदेवमिति**। वस्तुतस्तु 'चन्द्रायते शुक्लरुचापि हंसः' इत्यादौ साधारणधर्मोपादानेऽपि क्यङादियोगे उपमादर्शनादार्थ्या उपमायास्तद्धितादित्रितयगतत्ववत् क्यजादिपञ्चकगतत्वेन विशेषो बोध्यः। एवं चाष्टप्रकाराया आर्थ्या धर्मलोपालोपाभ्यां षोडशप्रकारत्वं बोध्यम्। क्यजादिपञ्चके धर्मलोपे उदाहरणं यथा—'धीरः प्रीतिकरत्वेन पर्यङ्कीयति मञ्चके। मित्रीयति परं प्रेम्णा भक्त्या देवायते नृणाम्॥ देवदर्शं जनैः साधुः प्रतीक्ष्यत्वेन दृश्यते। कृपया विष्णुसंचारं नित्यं संचरति क्षितौ॥' अत्र तृतीयान्तपदार्थानां क्यजाद्यर्थे सादृश्येऽभेदेनान्वयः॥

## विवृतिपूर्तिः

**कलापेति**। कलापो नाम 'सिद्धो वर्णसमाम्नायः' इत्यादिः 'अवर्णादूरो वृद्धिः' इत्यन्तो व्याकरणविशेषः। अस्यैव 'कातन्त्रम्' इति नामान्तरम्। उक्तं च—'अधुना स्वल्पतन्त्रत्वात्कातन्त्राख्यं भविष्यति। तद्वाहनकलापस्य नाम्ना कालापकं तथा॥' इति। तत्र कातन्त्रस्यैवं व्युत्पत्तिरुच्यते—'ईषदर्थे हि कुशब्दस्य कादेशः। तन्त्र्यन्ते व्युत्पाद्यन्ते शब्दा अनेनेति तन्त्रं सूत्रम्' इति॥

**अन्तरिति**। 'अन्तःपुरे इवाचरसि अन्तः पुरीयसि' इत्यत्र 'उपमानादाचारे' इति सूत्रस्थेन 'अधिकरणाच्च' इति वार्तिकेनोपमांनवाचकादन्तः पुरे इत्यधिकरणपदादाचारेऽर्थे क्यच्। 'सुतमिवाचरसि सुतीयसि' इत्यत्र 'उपमानादाचारे' इति सूत्रेणोपमानवाचकात्सुतमिति कर्मपदादाचारेऽर्थे क्यच्। 'रमणीवाचरति रमणीयते' इत्यत्र 'कर्तुः क्यङ् सलोपश्च' इति सूत्रेणोपमानवाचकाद् रमणीति कर्तृपदादाचारेऽर्थे क्यङ्। क्यङो ङित्वादात्मनेपदम् अमृतद्युतिमिव दर्शनमिति अमृतद्युतिदर्शम्। 'कृन्मेजन्तः' इत्यनेनाव्ययसंज्ञाविधानादव्ययम्। अत्र 'उपमाने कर्मणि च' इति सूत्रेणोपमानवाचके अमृतद्युतिमिति कर्मण्युपपदे दृशधातोर्भावे णमुल्। 'कषादिषु यथाविध्यनुप्रयोगः' इति सूत्रेण 'यस्माण्णमुलुक्तः स एव धातुरनुप्रयोक्तव्यः' इत्यर्थकेन 'दृष्टः' इति दृशधातोरेवानुप्रयोगः। इन्द्र इव संचरणमितीन्द्रसंचारम्। अत्रापि 'उपमाने'—इति सूत्रेण चकारानुकृष्टे उपमानवाचके इन्द्र इति कर्तर्युपपदे संपूर्वकाच्चरतेर्भावे णमुल् स च णमुल् 'तुमर्थे सेसेनसेऽसेन्—' इत्यादिसूत्रभाष्यगतेन 'अव्ययकृतो भावे भवन्ति' इति वाक्येन भाव एव भवतीत्यवसेयम्॥

**केचिदिति**। काव्यप्रकाशकारादय इत्यर्थः। तथा चाहुः—'वादेर्लोपे समासे वा कर्माधारक्यचि क्यङि। कर्मकर्त्रोर्णमुलि—' इति। तदयुक्मित्यादि चण्डीदासमतम्॥

**अस्वतन्त्रत्वादिति**। 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति दर्शनेन प्रत्ययानां स्वातन्त्र्येणार्थबोधकत्वविरहादिति भावः॥

**कल्पबादाविति**। अत्रेदं तत्त्वम्—'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति सूत्रविहितस्य कल्पप्रत्ययस्य 'विषकल्पं मनः—' इत्यादिसमानाधिकरण्येन निर्देशादीषदसमाप्तिविशिष्टो धर्मी अर्थः। ईषदसमाप्तिश्च किंचिन्न्यूनसकलधर्मसंबन्धरूपोपमैव। एवं चोवादेर्लोप इति वक्तुं न युज्यते, तत्र धर्मलोप एवेति वक्तुमुचितत्वात्। आदिपदेन वतेः परिग्रहः॥

**इवादीनामिति**। वैयाकरणनये औपम्यप्रतिपादकत्वेनेष्टानामिवादीनां वाचकत्वानङ्गीकारः। तथाहि—इवादीनां द्योतकत्वमेव, न वाचकत्वम्। निपातत्वादुपसर्गवत्। अत एव 'शरैरुस्त्रैरिवोदीच्यानुद्धरिष्यन्रसानिव' इत्यादावुस्त्रादिपदस्योस्त्रसदृशपरत्वेनोस्त्रसदृशैः शरैरिति शरविशेषणतया तृतीयादिसंगतिः। वाचकत्वे तूस्त्रपदोत्तरं तृतीया न संगच्छते। उस्त्राणामुद्धरणक्रियां प्रति करणत्वाभावाद् इवार्थसादृश्यान्वयित्वेन करणीभूतशरविशेषणत्वविरहाच्चेति भूषणे स्पष्टम्॥

**वाचकत्व इति**। आलंकारिकमत इत्यर्थः। अत्रेदमवधेयम्—उपसर्गाणां द्योतकत्वमिष्टमेव। अन्यथा उपास्यते हरः, अनुभूयते सुखम्, इत्यादौ धात्वर्थासनभवनक्रिययोरकर्मकत्वेन कर्मलकारोपपत्तिर्न स्यात्। इवादीनां तु वाचकत्वमेव। उपसर्गवाचकतायामिवेवादिवाचकतायां प्रतिबन्धकराहित्येन दृष्टान्तवैषम्यस्य सद्भावाद् विशेषणविशेष्ययो रेकविभक्तिकत्वे 'विशेष्येण सहैकार्थं भवेद्यत्र विशेषणम्। तत्र लिङ्गादयः प्रायो विशेष्यस्था विशेषणे॥' इत्यनुशासनस्येवोपमानोपमेययोरपि तत्र 'लिङ्गसंख्याविभेदेऽपि **उपमानोपमेयता**। विभक्तिः पुनरेकैव उपमानोपमेययोः॥' इत्यनुशासनस्य जागरूकत्वेन 'शरैरुस्त्रैः—इत्यादावुपमानपदोत्तरतृतीयादेः सूपपादकत्वाच्च। प्रायोग्रहणेन 'दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः करिण्यः कारुण्यास्पदम्—' इत्यादौ विशेष्यविशेषणयोर्लिंगादिभेदेऽपि न काचिदनुपपत्तिरित्यन्त्र विस्तरः॥

क्यङादय इति। अयमभिप्रायः—'कर्तुः क्यङ्सलोपश्च' इत्यत्र 'उपमानादाचारे' इत्यत उपमानपदमनुवर्तते, तेनेवार्थसादृश्यादपि बोधे सादृश्याचारार्थः क्यङिति॥

## विज्ञप्रिया

धर्मलुप्तामित्थं पञ्चविधामुक्त्वा तामेवान्यपञ्चविधामाह—**आधारकर्मविहित** इति। द्विविधे इत्यस्य क्यचि इत्यत्रैवान्वयो न तु क्यङीत्यत्रापि। **कर्मकर्त्रोरिति**—कर्मकर्त्रोरुपपदयोरित्यर्थः।

**अन्तः पुरीयसीति**। रणेषु निर्भयत्वेन अन्तः पुरेष्विवाचरसीत्यर्थः। अत्र निर्भयसञ्चारस्थानत्वं धर्मो लुप्तः। **पौरमिति**। पौरं जनं सुतमिवाचरसीत्यर्थः। अत्र स्नेहविषयत्वं धर्मो लुप्तः। अनयोराधारकर्मणोः क्यच्। सदा रमणीयते इत्यत्र रमणीवाचारतीत्यर्थे क्यङ्। अत्र अधीनत्वं धर्मो लुप्तः। **दृष्ट इति**। अमृतद्युतिकर्मकदर्शनेन त्वं प्रियाभिर्दृष्टः। अत्र मनोहरत्वं धर्मो लुप्तः। तथा चात्र भुवि इन्द्रकर्तृकसञ्चारेणैव सञ्चरसीत्यर्थः। अत्राऽऽधिपत्यं धर्मो लुप्तः। उभयत्र कर्मकर्त्रोरुपपदयोर्णमुल्।

अत्र क्यङादित्रये तदर्थाचारस्य णमुल्द्वये च धात्वर्थदर्शनसञ्चारयोश्च साधारणधर्माणां सत्त्वाद् धर्मलुप्तोदाहरणानि एतानि न सम्भवन्तीत्यतः काव्यप्रकाशकृता उपमाप्रतिपादके वादिलोपोदाहरणतयैव क्यङादिलोपे उदाहृतम्। ग्रन्थकृता तु आचारादीनां साधारणधर्मत्वमनवधायैवोदाहृत्य औपम्यप्रतिपादकलोपोदाहरणतया यत्काव्यप्रकाशकृतैतत् पञ्चकमुदाहृतं तद्दूषयितुमुत्कीर्त्तयति—**इदं च केचिदिति**।

दूषयति—**तदयुक्तमिति। तदर्थविहितत्वेनेति**—तादृशाचारविहितत्वेनेत्यर्थः। सुतमिवाचरतीति प्रतीतिवशात् तथार्थे एव विधानादित्यर्थः। ननु तादृशार्थे विधानसत्त्वेऽपि इवादिवन्न तेभ्यः स्वत औपम्यप्रतीतिः; प्रत्ययानां प्रकृत्यर्थान्वयेनैव बोधकत्वात्। अतः क्यजादयः स्वत औपम्यप्रतिपादकत्वाभावान्न स्वत औपम्यप्रतिपादकाः। तथा च तत्सत्त्वेऽपि विवक्षितः स्वत औपम्यप्रतिपादकलोपो नास्तीत्यशङ्कते—**नन्विति**। ननु तैरौपम्यं स्वतः प्रत्याय्यते एव; किन्तु तादृशार्थस्य प्रकृत्यर्थान्वितत्वमात्रं नियतं, तेषां तादृशार्थकत्वे तु तद्विवरकेव शब्दप्रयोग एव नास्ति। कथमसौ तदर्थविवरक इति भावः। तथा च क्यजादय इवादिवन्न स्वत औपम्यप्रतिपादकाः इत्यापातत एवेयं विचारसहाप्याशङ्का। तत्र स्वतस्तु अविवक्षैव न सम्भवतीति समाधत्ते—नेति।

**कल्पबादाविति**। तेषामपि प्रत्ययत्वादित्यर्थः। इदमुपलक्षणम्। इवादेरपि स्वतः प्रयोगाभावात्। तत्सत्त्वेऽपि औपमम्यप्रतिपादकलोपापत्तेरिति बोध्यम्। आपातत आशङ्कते—**नच कल्पबादीनामिति**।—आचारमत्र वाचकत्वम्; इवाद्यर्थस्य तु व्यञ्जकत्वमेवेत्यर्थः। प्रतिबन्धमाह—**इवादीनामपीति**। विनिगमकाभावेऽपि स्वतन्त्रमुख्यतया यदि कस्यचित्प्रत्ययस्य वाचकत्वं कस्यचित्प्रत्ययस्य व्यञ्जकत्वमुच्यते तदा इवादयोऽपि न वाचकाः स्युरुक्तिमात्रेणैव प्रमाणखण्डने तत्रापि प्रमाणाभावादित्यर्थः।

नन्वत्र नायं प्रतिबन्धकः। इवादीनामौपम्यवाचकत्वेऽनुशासनमेव प्रमाणमित्यतो यदि त्वयेवादेः स्वतोऽस्वतो वा वाचकत्वमिष्यते तदा ममाऽपि क्यजादीनामपि मतभेदा स्वतोऽस्वतो वा वाचकत्वं समानमेवेत्याह **वाचकत्वे वेत्यादि**। तव यथा वाचकत्वं ममाऽपि तथा वाचकत्वमिति साम्यमित्यर्थः। मतभेदेन तद्द्विधेति दर्शयति—**समुदितमिति**। स्वप्रकृतिप्रत्ययसमुदितमित्यर्थः। मतान्तरमाह—प्रकृतीति। स्वस्वार्थबोधकौ—स्वतः स्वस्वार्थबोधकावित्यर्थः। **वत्यादिक्यङाद्योरिति**। कल्पबित्यादयो यथेवादितुल्यतया त्वन्मते साम्यवाचकाः; क्यजादयोऽपि तथेति द्वयोः साम्यमित्यर्थः। एवं क्यजादीनामिवाद्यर्थकत्वेन नेदमौपम्यप्रतिपादकलोपोदाहरणमित्युक्तम्।

काव्यप्रकाशकृता तु तेषामाचारमात्रेऽनुशासनादिवाद्यर्थेऽनुशासनाभावान्न तदर्थकत्वमित्युक्तम्। तद्दूषयितुमाह—**यच्च केचिदिति**। न खलु **आचारमात्रार्था** इति। उपमानादाचारे इत्यनुशासनस्यैव तुल्याचारोऽर्थ इति भावः। तस्य च इवार्थकत्वेऽनुशासनाऽभावोक्तिदूषणायोक्तत्वेन पूर्वोक्तेन सह न पौनरुक्त्यमिति बोध्यम्। **तदेवमिति**। तद्धितादित्रयगाः श्रौत्यार्थीभेदा उक्ताः पञ्च; क्यजादावुक्ताः पञ्च, इत्येवं दशेत्यर्थः।

## लोचन

**क्यङीति**। अर्थात् कर्त्तृविहिते।

अमृतद्युतिदर्शंदृष्टः—अमृतद्युतिरिव दृष्टः। इन्द्रासञ्चारम सञ्चरसि। इन्द्रवत् सञ्चरसीत्यर्थः।

**अन्यत्रेति**। यथा रमणीयते इत्यत्र अधीनत्वस्य। अमृतद्युतिदर्शम् इत्यत्र मनोहरत्वस्य। इन्द्रसञ्चारमित्यत्र परिच्छदाद्यतिशयस्य। नास्तीत्यनन्तरं प्राचीनानुसारादिति शेषः।

तदर्थो वत्यर्थः । अस्वतन्त्रत्वात् प्रकृतियोगं विना केवलानामर्थबोधनसामर्थ्याभावात् ।

दूषणान्तरमाह **कल्पबादावपीति**—अयमर्थः—यदि क्वचित् क्यङादीनां सद्भावेऽपि तेषां प्रत्ययत्वे-नास्वतन्त्रतयार्थबोधनासामर्थ्याद् औपम्यवाचकत्वाभावः तदा कल्पबादीनां सद्भावे अपि तथा स्यात् । नच तथा कल्पबादीनां सद्भावेऽपि औपम्यवाचकत्वम् । कल्पेऽप्यभावस्य सर्ववादिनिषिद्धत्वाद् निश्चयाभावात्; त-थाहि—कैश्चिदिवादीनामपि वाचकत्वमङ्गीक्रियते । तन्मतानुसारेणास्माभिः कल्पबादीनामिवार्थविहितत्वेन वाच-कत्वम् । क्यङादीनां तु द्योतकत्वमङ्गीक्रियते इत्यत आह—**वाचकत्वे वा** इति । समुदितं प्रकृतिप्रत्ययाभ्यां मिलितं, तत् स्वरूपं पदम् । मतेत्यतः पूर्वं वैयाकरणेति शेषः । **वत्यादिक्यङद्योः साम्यमेवेति** । अयमाशयः—यदि वत्यादीनां वाचकत्वाङ्गीकारः तदा क्यङादीनामपि वाचकत्वम् । यदा तेषामपि न वाचकत्वं तदेषामपीति । सर्वैरपि वतिकल्पबादिसद्भावे औपम्यवाचकसद्भावाङ्गीकारात् प्रत्ययत्वेन तत्सदृशैः क्यङादिभिः किमपराद्धं यदेषां सद्भावे औपम्यवाचकलोपः स्यादिति ।

**सादृश्याचारार्था** इति । अयमर्थः—क्यङादीनामाचारमात्रार्थत्वे एव सादृश्यार्थत्वं न स्यात् न च तथा सादृश्याचारोभयार्थत्वादिति ।

वाक्यसमासयोः वाक्ये समासे चेत्यर्थः । वाक्ये समासाभावो वैयाकरणरीत्या तस्या इत्यादौ मुखेन सदृशमित्यत्र वाक्यगा । नयनतुल्यमित्यत्र समासगा । नास्ते किमपि वस्त्वन्तरमित्यर्थः ।

औपम्यवाचिन इवादेः क्विपो लोपः ।

## कुसुमप्रतिमा

पुनरपि लुप्तोपमामेव प्रकारान्तरैर्विभजते आधारेति । आधारकर्म्मविहिते क्यचि द्विविधे लुप्तोपमे अधिकरणकाद्विहिते क्याचि एकविधा, कर्म्मकारकाद्विहिते क्यचि च एकविधेति मिलित्वा एकस्मिन् क्यच्येव द्विविधे लुप्तोपमे इत्यर्थः । आधारकर्म्मविहिते द्विविधे क्यचि द्विविधा लुप्तोपमा इत्यन्वयो वा । क्यङि प्रत्यये एकविधा, तथा कर्म्म कर्त्रोर्णमुलि कर्म्मणि णमुलि कर्त्तरि णमुलि च प्रत्येकमेकैकविधतया द्विविधा एवमित्थं मिलित्वा सामान्यधर्म्मलोपे लुप्तोपमा समुदायेन पुनः पञ्चधा स्यादित्यर्थः ।

पुनरपि लुप्तोपमामेव प्रकारान्तरैर्विभजते आधारेति । आधारकर्म्मविहिते क्यचि द्विविधे लुप्तोपमे अधिकरणकाद्विहिते क्याचि एकविधा, कर्म्मकारकाद्विहिते क्यचि च एकविधेति मिलित्वा एकस्मिन् क्यच्येव द्विविधे लुप्तोपमे इत्यर्थः । आधारकर्म्मविहिते द्विविधे क्यचि द्विविधा लुप्तोपमा इत्यन्वयो वा । क्यङि प्रत्यये एकविधा, तथा कर्म्म कर्त्रोर्ण मुलि कर्म्मणि णमुलि कर्त्तरि णमुलि च प्रत्येकमेकैकविधतया द्विविधा एवमित्थं मिलित्वा सामान्यधर्म्मलोपे लुप्तोपमा समुदायेन पुनः पञ्चधा स्यादित्यर्थः ।

धर्म्मेति । पूर्वकारिकातो 'धर्म्मलोपे' इति 'सा' तत्पदवाच्य 'लुप्ता' इति च अनुषज्यते अनुकृष्यते, आकाङ्क्षितत्वादिति भावः ।

सर्वैरपि वैयाकरणैरलङ्कारशास्त्रस्यादरणीयत्वात् पाणिनीय क्यजादिप्रत्ययस्वरूपाणि कालापिकानवबो-धयितुमाह क्यजिति । अत्र यथासंख्येनान्वयः । मुग्धबोधमते तु क्य ङ्य चणम इत्यवधेयम् ।

एकपद्येनैव निरुक्तपञ्चविधलुप्तोपमायाः क्रमेणोदाहरणमाह अन्तरिति । हे क्षितीश ! राजन् ! त्व रणेषु अन्तःपुरीयसि अन्तःपुरेष्विवाचरसि अन्तपुरेष्विव सुखं विहरसीत्यर्थः । अत्र अन्तःपुरेत्यधिकरणात् पाणिनिमते

'उपमानादाचारे' इत्यत्र 'अधिकरणाच्च' इति वात्ति कोक्त्या क्यच्, कलापमतेऽपि 'उपमांनादाचारे' इत्यत्र 'आधारादपि स्यात्' इति दुर्गसिंहोक्त्या यिन् मुग्धबोधमते "ढडोपमानादाधारे क्य" इति सूत्रेण च क्यः प्रत्ययः।

पौरं जनं सुतीयसि सुतं पुत्रमिवाचरसि पुत्रतुल्यं स्नेहनिर्भरास्पदं मन्व्यस इत्यर्थः। अत्रापि सुतमिति कर्म्मपदात् मतत्रये उक्तसूत्रत्रयेण क्रमात् क्यच् यिन् क्यश्च प्रत्ययः।

श्रीर्लक्ष्मीः सदा तव रमणीयते रमणी वनितेवाचरति वनितेव सुखभोगं सम्पादयतीत्यर्थः। अत्र रमणीति कर्त्तृपदात् पाणिनिमते "कर्त्तुः क्यङ् सलोपश्च" इत्यनेन क्यङ्, कलापमते "कर्त्तुरायिः सलोपश्च" इत्यनेनायिः, मुग्धबोधमते तु "धाण्ड्यक्वी सलोपश्च" इत्यादिना ङ्यप्रत्ययः।

प्रियाभिरमृतद्युतेरिव दर्शनममृतद्युतिदर्शं त्वं दृष्टः चन्द्रवन्नयनानन्दकतरत्वेन दृष्ट इत्यर्थः। अत्र अमृतद्युतीति कर्म्मणयुपपदे दृशधातोः पाणिनिमते "उपमाने कर्म्मणि च" इत्यनेन णमुल्, कलापमते "कर्म्मणि चोपमाने" इत्यनेन णम्, मुग्धबोधमते तु "क्षणम् वाभीक्ष्ण्ये पूर्वकाले" इत्यनेनैव वाशब्दस्य व्यवस्थावाचित्वात् चणम्प्रत्ययः।

तथा अत्र भुवि इन्द्र इव सञ्चरणमितीन्द्रसञ्चार सञ्चरसि ऐश्वर्य्यातिशयादिन्द्र इवाप्रतिहतं सञ्चरसीत्यर्थः। अत्रापि इन्द्रेति कर्त्तर्य्यपपदे स पूर्वकचरधातोमतत्रयेऽप्युक्तसूत्रत्रयेण क्रमात् णमुल् णम् क्षणम् वा प्रत्ययः।

ननूदाहृतप्रयोगेषु कुत्र कीदृशस्य सामान्यधर्म्मस्य लोपः, येनैतेषु लुप्तोपमाविशेषाः स्युरित्याह अत्रेति। सुखविहारास्पदत्वस्य, "अन्तः पुरीयसि रणेषु" इत्यत्र अनायासविचरणाश्रयत्वरूपस्य, साधारणधर्म्मस्येति परेणान्वयः। उपमानोपमेयभूतयोरुभयोरपि रणान्तपुरयोस्तादृशधर्म्मस्य सत्त्वादिति भावः। एवमुत्तरत्रापि स्नेहनिर्भरत्वस्य "पौरं जनं मुतीयसि" इत्यत्र वात्सल्यातिशयाश्रयत्वस्य।

एवमिति। अन्यत्र "रमणीयते श्रीः" इत्यादिषु त्रिषु स्थलेष्वपि एवमूह्यमित्यर्थः। तथा च "रमणीयते श्रीः" इत्यत्र सुखभोगसम्पादकत्वस्य, "प्रियाभिरमृतद्युतिदर्शम्" इत्यत्र नयनानन्दकरत्वस्य, "इन्द्रसञ्चारं सञ्चरसि" इत्यत्र अप्रतिहतसञ्चरणस्य च सामान्यधर्म्मस्य लोपः।

नन्वमीषां पञ्चानामेव पुनः श्रौत्यार्थीरूपभेदद्वयेन पुनर्द्विविधत्वात् समुदायेन दशविधत्वे प्राप्ते कथं पञ्चधेतिमात्रमुक्तमित्याह इह चेति। क्यजादिप्रत्ययमात्रघटितलुप्तोपमायाञ्चेत्यर्थः। आदिशब्देन आर्थीग्रहणम्। तथा च श्रुतिमात्रेण सादृश्यबोधकानां यथादिशब्दानामभावात् श्रौतीरूपभेदचिन्ता नास्ति। एवमर्थानुसन्धानेन सादृश्यप्रतिपादकानां तुल्यादिशब्दानामभावात् आर्थीरूपभेदचिन्तापि नास्तीति सरलार्थः। श्रौतीभिन्नाया एवार्थीत्वाङ्गीकारे आर्थीत्वमस्त्येवेति बोध्यम्।

"वादेर्लोपे समासे सा कर्म्माधारक्यचि क्यङि। कर्म्मकर्त्रोर्ण'मुलि—"इति काव्यप्रकाशकारमतं दूषयितुमाह इदञ्चेति। "अन्तः पुरीयसि रणेषु" इत्यादिसदृशञ्चेत्यर्थः, काव्यप्रकाशे "पौरं सुतीयति जनम" इत्याद्युदाहरणदर्शनात्। केचित् काव्यप्रकाशकाराः। लोपे अनुपादाने। आदिपदेन क्यज् णमुलोर्ग्रहणम्। तदर्थविहितत्वेन इवार्थविहितत्वेन। औपम्येति। "यो यत्र प्रत्ययो जतिः" इत्यादिन्यायादिति भावः।

उक्तस्वमतं प्रतिशङ्कते नन्विति। स्वतन्त्रयात स्वार्थस्यापि प्रतयायने अस्वाधीनत्वात् प्रकृति साहाय्येनैव स्वार्थस्यापि प्रत्यायनादित्यर्थः। तथा चोक्तं कातन्त्रपरिशिष्टे श्रीपतिना—"प्रत्ययास्तु नियोगतः प्रकृतोरनुगच्छन्तस्तदार्थपिक्षयेव स्वार्थानभिदधना" इति। कल्पपादाविति। पाणिनिमते "ईषदसमाप्तौ कल्पवदेश्यदेशीयरः" इति सूत्रेण पकारानुच्चन्छः "कल्पप्" इति प्रत्ययः। कलापमते तु अकारान्त एव कल्पप्रत्ययः। आदिपदेन देश्य

देशीययोर्गृहणम् । तथा प्रसङ्गात् औपम्यप्रतीतभावप्रसङ्गात् । तथा च सति "इन्द्रकल्पो नृपः सोऽयम्" इत्यादावुपमाला । अप्यमावप्रसङ्गइत्याशयः ।

पुन शङ्कते न चेति । इत्यादि तुलाय्येति । "देशीय देश्य कल्पादिः" इति सादृश्यवाचकशब्दप्रदर्शनप्रकरणे दण्ड्युक्तेरिति भावः । काङ्दीनामित्यादिपदेन क्यज्णमुलोर्ग्रहणम् । द्योतकत्वमिति । वाच्यमिति शेषः तस्य च न चेतानेनाचयः । तेषामिवाद्यर्थे विधानाभावात्, किन्तु आचाराद्यर्थे विधानेन उपमानपःसमभिप्याहारमात्रदोपम्य य द्योतक वमात्रमित्याशय निश्चयाभावादिति । "अव्यया हि द्योतका न तु वाचकाः" इति केषाञ्चिन्नियमाभिधानादित्यभिप्रायः ।

ननु भवतामपि इवादीनामौप्यवाचकत्ववादिमतावलम्बने "चन्द्र इव मुखम्" इत्यादावुपमालक्षणस्यव्याप्तिः औपम्यवाचकमिवादि" इति स्वीक्तिविरोधश्चेत्याह वाचकत्वे वेति । आलङ्कारिकेरिवादीनामौपन्याभावकत्वाङ्गीकारे वेत्यर्थः । समुदितं प्रकृतिप्रत्ययसमुदायात्मकमेव पदं वाचक युगपदेवो भवार्थबोधकम्, न तु प्रकृतिमात्रं प्रत्ययमात्रं वा वाचकमित्यर्थः । स्वस्वार्थबोधकौ क्रमेण निज निजार्थ बोधकौ । साम्यमेवेति । उभयोरपि सादृश्यसम्बन्धिप्रत्ययत्वादिति भावः ।

काव्यप्रकाशकारमतानुयायिनां चण्डीदासादीनामपि मतं दूषयितुमाह यच्चति । अनुशिष्यन्ते "तत्र तस्येव" इत्यादिना शास्त्रेण विधीयन्ते । तया च वत्यादीनामिवार्थे विधानादौपम्यवाचकत्वम्, क्यङादीनान्तु आचारार्थे विधानादाचारार्थ वाचकत्वम्, "यो यत्र प्रत्ययो जातः" इत्यादिन्यायात् । तेन क्यङदिप्रत्ययस्थले औपम्यप्रतिपादकलोपाभिधानमेव सङ्गच्छत इति तेषामाशयः । सादृश्याचारार्थाः सादृश्यस्य व्यवहारार्थाः । तथा च रमणीवाचरति सुतमिवाचरति इत्येवमाद्यर्थे रमणीयते' 'सुतीयति' इत्यादौ राजनि श्रिया रमणीसदृशाचरणस्य पौरजने च राज्ञः पुत्रतुल्याचरणस्य प्रतीतेः क्यङादीनां सादृश्याचरणमेवार्थः, न पुनः केवलाचरणमर्थ इति "अन्तःपुरीयसि रणेषु" इत्यम्भूतानामिवादेर्लोपे काव्यप्रकाशकृतामुदाहरणमनुक्तमेवेति भावः ।

धर्म्मलोपे लुप्तोपमामुपसंहरन् समुदायेन तत्सङ्कलनमाह तदेवमिति । पूर्णावदित्याद्युक्त्या पञ्चप्रकारा आधारेत्याद्युक्त्या च पञ्चप्रकारेति मिलित्वा समुदायेन दशप्रकारेत्यर्थः । तर्कवागीशस्तु एकस्या आर्थ्या एव तद्धितादिगतत्वे क्यङादिगतत्वेन च अष्टप्रकारत्वमङ्गीकृत्य पुनः धर्म्मलोपालोपाभ्यां द्वैविध्यात् समुदायेन षोड़शप्रकारत्वमङ्गीकृतवान् । तत्तु "इह च यथादितुलादिविरहात् श्रौत्यादिविशेषचिन्ता नास्ति" इत्युक्त्या ग्रन्थकर्त्तुरनभिप्रेतत्वात् सादृशभेदानामन्यथापि सम्भवाच्योपेक्षणीयम् ।

धर्म्मलोपे लुप्तोपमामभिधायेदानीमुपमानोपमेययोरुपमानस्यैव प्रथमं बुद्धिविषयत्वात्तल्लोप एव लुप्तोपमामाह उपेति । उपमानस्य अनुपादाने अनभिधाने वाक्यसमासयोर्वाक्यगतत्वेन समासगतत्वेन च पुनर्विधा लुप्तोपलेत्यनुषज्यते । इदमत्रावधेयम्—उपमानपदानुपादाने तदुत्तरप्रयोज्यानां श्रौतीप्रतिपादकानामिवादिशब्दानामुपादानासम्भवात् श्रौतीभेदसामान्यस्यैवासम्भवः । न खलु चन्द्रपदानुपादाने "इव मुखम्" इतिमात्रः प्रयोगः सम्भवति । तथा उपमानपदानुपादानेनैव तदुत्तरमात्रकर्त्तव्यवतिप्रत्ययादीनामसम्भवादार्थीमध्येऽपि तद्धितगतभेदस्यासम्भव एवेति पारिशेष्यादुपमानानुपादाने आर्थी मध्ये केवलेन वाक्यगतत्वेन समासगतत्वेन च लुप्तोपमा द्विधेति ।

तस्या इति । "तदतुलना ललनासु प्रतिभाति सा मे मनोरमा ॥" इति सत्पूरितपरार्द्धम् ।

## विमला

धर्मलुप्ताया एवोपमायाः पुनरपि पञ्चप्रकारानाह, आधारेति ।—आधारकर्मविहिते—अधिकरणात् कर्मणश्च विहिते, द्विविधे—क्यचि—ईयप्रत्यये कर्त्तुर्विहिते क्यङि—आयिप्रत्यये, कर्मकर्त्रोरुपपदयोर्विहिते णमुलि च—कादेशेणमि, इत्येवं पञ्चधा—पञ्चप्रकारा, लुप्ता पुनः धर्मलोपे, भवति इति शेषः ।

क्यजिति ।—यिन् इति ईयप्रत्ययस्य संज्ञा ।

अन्तःपुरीयसीति ।—हे क्षितीश ! त्वं रणेषु—युद्धेषु, अन्तःपुरीयसि—अन्तःपुरेषु इव आचरसि, [अत्र "धिकरणाञ्च" इति वार्त्तिकेनान्तः पुरेष्विति अधिकरणपदादाचारेऽर्थे क्यच्] अत्र तुल्यत्वम् आचारश्च ईय(क्यच्) प्रत्ययार्थः, आचारश्चात्र अधिकरणत्वान्वययोग्यक्रिया, सा च प्रकृते सञ्चाररूपा ग्राह्या, व्युत्पत्ति वैचित्र्येण तुल्यत्वस्य प्रकृत्यर्थे आचारस्याख्यातार्थे अन्वयः । तथा च—अन्तःपुरतुल्येषु रणेषु सञ्चारकर्त्ता इत्यन्वययबोधः । पौरं जनं—पुरवासिलोकं, सुतीयसि—सुतमिवाचरसि, [अत्र "उपमानादाचारे" (३/१/१० पा.) इति सूत्रेण सुतमित्युपमानभूतकर्मपदादाचारेऽर्थ क्यच्] । आचारोऽत्र मननं, पौरजनं सुततुल्यं मन्यसे इत्यर्थः । श्रीः,—लक्ष्मीः, सदा तव रमणीयते—रमणीव आचरति, [अत्र "कर्त्तुः क्यङ् मलोपश्च" (३/३/११ पा०) इति सूत्रेण रमणीत्युपमानभूतात् कर्तृपदादाचारेऽर्थेक्यङ्, अत एवास्य ङित्वादात्मनेपदम्] अत्राचारो वर्त्तनं, रमणीतुल्या श्रीः वर्त्तते इत्यर्थः, अत्र अत्यन्ताधीनत्वस्य उपभोगसाधनत्वस्य वा साधारणधर्मस्य लोपः । प्रियाभिः अमृतद्युतिदर्शम्—अमृतद्युतिरिवेत्यर्थः, दृष्टः, [अत्र "उपमाने कर्मणि च" (३/४/४५ पा.) इति सूत्रेणामृतद्युतिमित्युपपदात् दृशेभावे णमुल् । अस्य च "कृन्मेजन्तः" (१/१/३९ पा.) इत्यनेनाव्ययत्वं, "कषादिषु यथाविध्यनुप्रयोगः"] (३/४/४५ पा.) इति सूत्रेण "दृष्टः" इत्येवात्रानुप्रयुक्तम्] मनोज्ञत्वादिरत्र साधारणो धर्मः । अत्र—अस्यामित्यर्थः, भुवि इन्द्रसञ्चारम्—इन्द्र इव सञ्चरणमिति तथोक्तम्, इन्द्र इव सञ्चरसीत्यर्थः, [अत्र "उपमाने कर्मणि च" (३/४/४५ पा.) इति सूत्रे चकारग्रहणप्राप्तात् "इन्द्रः" इत्युपमानकर्त्तृपदोपपदात् सञ्चरतेर्णमुल्] अत्र विभावाद्यतिशयः साधारणधर्मः । अत्र प्रथमे मुखविहारितयेति, द्वितीये स्नेहातिशयेनेति, तृतीये सन्तोषदायितयेति, चतुर्थे आह्लादकत्वेनेति, पञ्चमे निर्भयत्वेनेति साधारणधर्मलोपः । केचित्तु—"क्यच्-क्यङोरर्थ आचारः, तस्यात्र विद्यमानत्वात् धर्मलोपोदाहरणम् एतन्न भवति" इत्याहुः, तन्न; आचारस्य साधनत्वेऽपि प्रकृते सादृश्यहेतुत्वेन विवक्षणात्, उपदर्शितधर्माणां सादृश्यहेतुत्वेन झटिति प्रतीयमानत्वात् "चन्द्रायते शुक्लरुचाऽपि हंसः" इत्यादौ सत्यप्याचारे "शुक्लरुचा" इति साधारणधर्म्मप्रयोगदर्शनाच्च, आचारस्य आख्यातार्थान्वितत्वेन निराकाङ्क्षतया क्यच्क्यङोरर्थे सादृश्ये अभेदान्वयसम्भवेन सादृश्यहेतुत्वायोगाच्च ।

इह चेति ।—श्रौत्यादीत्यत्र आदिपदेन आर्थीपरिग्रहः; वस्तुतस्तु, यथा तुल्यार्थविहितस्य वतेर्योगे आर्थीत्वं, तथा अत्रापि तुल्यार्थविहितक्यच्-क्यङोश्रौन आर्थीत्वम् । "श्रुतिः,—शब्दः, तया साक्षात् प्रतीयमाना श्रौती, तदितरा आर्थी" इति वदतः चण्डीदासस्य मतं सुतरामार्थीत्वम् । केचित्—काव्यप्रकाशकारादध इत्यर्थः, "वादेलोपे समासे वा कर्माधारक्यचि क्यङि । कर्मकर्त्तोर्णमुलि—इति आहुः । "ब्रूतः" इति इवाद्युपलक्षणम् । तदर्थविहितत्वेन—वत्यर्थविहितत्वेन, औपम्यप्रतिपादकत्वात्—औपम्यबोधकत्वात् । सम्यक्—सम्पूर्णा अस्वतन्त्रत्वादिति—प्रत्ययानां स्वातन्त्र्यणार्थबोधकत्वं नास्ति "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः" इति नियमादित्यर्थः । कल्पबादाविति ।—अत्रादिपदेन वतेः परिग्रहः, "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" (५/३/६७ पा.) इत्यादिभिः सूत्रैर्विहितानां कल्पबादीनां प्रत्यायनां सद्भावस्थले, (कल्पबादेरित्यनुबन्धसहितप्रकारनिर्देशः) कल्पाबादिप्रत्य-

यस्थले त्वया अतेर्लोपे इति वक्तुं शक्यते, तव धर्मलोपे एव त्वया वाच्यं, तदयमेवां को भेद इति भावः। निश्चयाभावादिति।—सर्वे हि निपाता द्योतका एव, न तु वाचका इति केचित् वदन्ति, तन्मते इवादीनामपि साक्षात् औपम्यवाचकत्वेनाभिमतानां वाचकत्वे सन्देहः, का कथा प्रत्ययानामित्याशयः। तथा च इवादेः अव्ययतया उपमावाचकत्वम् असिद्धमिति तत्तुल्यस्य कल्पादेः सुतरामेव तदसिद्धमिति भावः। ननु कमलमिव मुखम्" इत्यादौ उपमालक्षणाव्याप्तिभयेन इवादेः उपमावाचकत्वम् अवश्यमङ्गीकार्य्यम् इत्यभिप्रायेणाह, वाचकत्वे वेति।—इवादितुल्यत्वेन कल्पादेः उपमावाचकत्वाङ्गीकारे वा इत्यर्थः, समुदितं—प्रकृतिप्रत्ययसमुदायः, वाचकं—प्रकृत्यर्थविशिष्टप्रत्ययार्थप्रतिपादकं, स्वस्वार्थबोधकौ—क्रमेण स्वार्थप्रतिपादकौ इत्यर्थः। अत्यादीति।—अत्रादिपदेन कल्पादिपरिग्रहः। साम्यमेव—सादृश्यवाचकत्वेन तुल्यतैवेत्यर्थः। अनुशिष्यन्ते—विधीयन्ते। आचारार्थे इति—"अनुशिष्यन्ते" इत्यनेनान्वयः। अपि तु—किन्त्वित्यर्थः। उपसंहरति, तदेवमिति।—वस्तुतस्तु "चन्द्रायते शुक्लरुचाऽपि हंसः" इत्यादौ साधारणधर्मोपादानेऽपि क्यङादियोगे उपमादर्शनात् आर्थ्या उपमायास्तद्धितादित्रितयगतत्ववत् क्यजादिपञ्चकगतत्वेन विशेषो बोध्यः। एवञ्च अष्टप्रकाराया आर्य्याः धर्मलोपालोपाभ्यां षोडशप्रकारत्वं बोध्यम्। क्यजादिपञ्चके धर्मलोपे उदाहरणं यथा—"वीरः प्रीतिकरत्वेन पर्य्यङ्कीयति मञ्चके। मित्रीयति परं प्रेम्णा भक्त्या देवायते नृणाम्॥ देवदर्शं जनैः साधुः प्रतीक्ष्यत्वेन दृश्यते। कृपया विष्णुसञ्चारं नित्यं सञ्चरति क्षितौ॥" अत्र तृतीयान्तपदार्थानां क्यजाद्यर्थे सादृश्ये अभेदेनान्वयः।

## लक्ष्मी

पुनः धर्मलुप्तोपमाया एवान्यान् पञ्च भेदानुपपादयति—**आधारेति**। आधारकर्मविहिते आधारोऽधिकरणं स च कर्म च ताभ्यां विहितस्तस्मिन् अधिकरणात् कर्मणश्च परस्तात् विहिते इत्यर्थः, क्यचि क्यच्प्रत्यये अस्यैव 'यिन्' इति नामान्तरम्, द्विविधे लुप्तोपमे अधिकरणकारकाद्विहिते क्यचि एकविधा कर्मकारकाद्विहिते क्यचि च एकविधेति समुदायेन मेलने एकस्मिन् क्यच्येव द्विविधे लुप्तोपमे इत्यर्थः। **यद्वा** आधारकर्मविहिते द्विविधे क्यचि द्विविधा लुप्तोपमा इति सम्बन्धः। क्यङि कर्त्तुर्विहिते इति **शेषः** अस्यैव अर्थीति नामान्तरम्। तथाच कर्त्तुर्विहिते क्यङ्प्रत्यये एकविधा, कर्मकर्त्रोः कर्मणि कर्तरि चेत्यर्थः विहिते इति शेषः, तथा सति कर्मकर्त्रोरुपपदयोः सतोर्विहिते णमुलि कर्मणि णमूलि कर्त्तरि णमुलि च प्रत्येकमेकैकरूपतया द्विविधा एवमित्थमेकत्रीभूय साधारणधर्मलोपे लुप्तोपमा मिलित्वा पुनः पञ्चधा पञ्चप्रकारा स्यादित्यर्थः।

अलङ्कारशास्त्रस्य सर्वशाब्दिकैरादृतत्वात् पाणिनीयमतेन क्यजादीन् निरूप्याथ तेषामेव कलापमतानुसारेण नामान्तरं निरूपयितुमुत्थापयति—क्यजिति। कलापमते कलापव्याकरणसिद्धान्ते इनायिणमइत्यभिधीयन्ते इति शेषः कलापव्याकरणस्यैव 'कातन्त्रम्' इति संज्ञान्तरम्। उक्तं च—

'अधुना स्वल्पतन्त्रवात् कातन्त्राख्यं भविष्यति। तद्वाहनकलापस्य नाम्ना कालापकं तथा॥'

एकश्लोकेनैव निरुक्तपञ्चविधधर्मलुप्तोपमायाः यथाक्रममुदाहरणं दर्शयति—अन्तः पुरीयसीति। हे क्षितीश पृथ्वीपते! त्वं रणेषु युद्धेषु प्रतिपक्षितयोपस्थितेषु वीरजनेष्विति यावत् अन्तःपुरीयसि अन्तःपुरेष्विवाचरसि अन्तः पुरस्ववलाजन इव सुखं विहरसि इत्यर्थः। अत्र अन्तःपुरेष्विवाचरसि' इति विग्रहे 'उपमानादाचारे' ३/१/१० इति सूत्रस्थेन 'अधिकरणाच्चे'ति वार्त्तिकेणोपमानवाचकादन्तःपुरेत्यधिकरणपदादाचारार्थे क्यच्। कलापमतेऽपि 'उपमानादाचारे' इति सूत्रस्थेन 'आधारदपि स्यात्' इत्युक्त्या यिन्।

पौरं जनं सुतीयसि सुतं पुत्रमिवाचरसि प्रकृतिमण्डलं सुततुल्यं मन्यसे इत्यर्थः। अत्रापि 'उपमानादाचारे' ३/१/१० इति सूत्रेणोपमानवाचकात् सुतमिति कर्मपदादाचारेऽर्थे क्यच् कलापमतेऽप्यनेनैव यिन प्रत्ययः।

श्रीः सम्पद्राज्यलक्ष्मीः सदा तब रमणीयते रमणी वनितेवाचरति वनितेव सुखभोगं ददाती त्यर्थः। अत्र 'कर्त्तु' क्यङ्सलोपश्च' ३/१/११ इति सूत्रेणोपमानवाचकात् रमणीतिकर्तृपदादाचारेऽर्थे क्यङोङित्वादात्मनेपदम्। कलापमते 'कर्त्तुरायि सलोपश्च' इत्यनेनायिः।

प्रियाभिरमृतद्युतिरिव दर्शनमिति अमृतद्युतिदर्शं दृष्टः चन्द्रवल्लोचनाह्लादजनकत्वेनानुभूत इत्यर्थः। अमृतद्युतिदर्शमित्यत्र 'कृन्मेजन्तः' १/१/३९ इत्यनेनाव्ययसंज्ञाविधानादव्ययत्वम्, 'उपमाने कर्मणि च' ३/४/३५ इति सूत्रेणोपमानवाच के अमृतद्युतिमिति कर्मण्युपपदे दृशधातोर्भावे णमुल्। 'यस्माण्णमुलुक्तः स एव धातुरनुप्रयोक्तव्यः इत्यर्थकेन 'कषादिषु यथाविध्यनुप्रयोगः' ३/४/४९ इति सूत्रेण दृष्ट इति दृशधातो'रेवानुप्रयोगः। कलापमते कर्मणि चोपमान इति सूत्रेण णम्। तथा अत्र भुवि पृथिव्याम् इन्द्र इव सञ्चरणमितिन्द्रसञ्चारं सञ्चरसि ऐश्वर्याधिक्यात् स्वर्गाधिष्ठाता इन्द्र इवाप्रतिहतं सञ्चरसीत्यर्थः। अत्रापि उक्तसूत्रेण चकारानुवर्तिते उपमानवाचके इन्द्र इति कर्त्तर्युपपदे संपूर्वकाच्चरतेर्भावे णमुल्। स च णमुल् 'तुमर्थे सेऽसेनकसेकसेन' इत्यादिसूत्रभाष्यगतेन 'अव्ययकृतो भावे भवन्ति' इति वाक्येन भाव एव भवति। कलापमते च भावे णम्।

ननु कस्मिन्नंशे को धर्मो लुप्तो येन तेषु विशेषा भवेयुरित्यत आह—**अत्रेति**। सुख विहारस्पदत्वस्य 'अन्तः पुरीयसि रणेषु' इत्यत्र अनायाससंञ्चारणाश्रयत्वरूपस्य साधारणधर्मस्य लोप इत्युत्तरेण सम्बन्धः। द्वयोरपि उपमानोपमेयभूतयो रणान्तःपुरयोस्तादृशधर्मस्य विद्यमानत्वादित्याशयः। एवमग्रेऽपि। स्नेहनिर्भरत्वस्य 'पौरं जनं सुतीयसि' इत्यत्र प्रेमाधिक्याधारत्वस्य।

एवमिति। अन्यत्र 'रमणीयते श्रीः' इत्यादित्रिषु प्रयोगेष्वपि एवमूह्यमित्यर्थः। एवञ्च 'रमणीयते श्रीः' इत्यत्र सुखोपभोगसाधकत्वस्य अत्यन्ताधीनत्वस्य वा, अमृतद्युतिदर्शम्' इत्यत्र लोचनाह्लादजनकत्वस्य, 'इन्द्रसञ्चारम्' इत्यत्र अप्रतिहतसञ्चरणस्य विभवातिशयत्वस्य च साधारणधर्मस्य लोपः।

ननूक्तानां पञ्चानामेव पुनः श्रौत्यार्थीत्वात् द्वैविध्येन मिलित्वा समुदायेन दशविधत्वे कथं केवलं पञ्चधेत्येवोक्तमित्यत आह—इह चेति। केवलक्यजादिप्रत्ययघटित 'अन्तःपुरीयसि' इति लुप्तोपमयाञ्चेत्यर्थः। आदिपदेन आर्थ्याः परिग्रहः, श्रौत्यादिविशेषचिन्ता श्रौतीयमार्थीयमिति विभज्य प्रदर्शनविचारः, नास्ति अनतिप्रयो-जनीयत्वादितिशेषः। वस्तुतस्तु श्रुतिमात्रेण सादृश्यव्यञ्जकानां यथादिशब्दाभावात् श्रौतीरूपभेदचिन्ता नास्ति। एवमर्थानुसन्धानेन सादृश्यबोधकानां तुल्यादिशब्दानामभावात् आर्थीरूपभेदचिन्तापि नास्तीत्याशयः। श्रुतिः शब्दस्तेन साक्षात्प्रतीयमाना श्रौती तदितरा आर्थीत्याश्रयणे त्वस्या आर्थीत्वमक्षतमेवेत्यवधेयम्।

ननु 'वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि। कर्मकर्त्रोर्णमुलि' इति काव्यप्रकाशोक्तदिशा। वाचकलुप्तैवाभिधातुं योग्या तत्कथं पुनर्धर्मलुप्तेत्यभिहितमित्याशङ्कां निराकर्तुं काव्यप्रकाशकृन्मतं च दूषयितु-माह—इदञ्चेति। 'अन्तःपुरीयसि रणेषु' इत्यादितुल्यं चेत्यर्थः। **काव्यप्रकाशे—**

**'पौरं सुतीयति जनं समरान्तरेऽसावन्तः पुरीयति विचित्रचरित्रचञ्चुः।**

**नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना।।'**

इत्युदाहरणम्। **केचित्** काव्यप्रकाशकारादयः। लोपे अनभिधाने। दूषयति—तदयुक्तमिति युक्तिसङ्गतं नेत्यर्थः। कुत इति हेतुं प्रदर्शयति—क्यङादेरिति। आदिपदेन क्यच्णमुलोः परिग्रहः तदर्थविहितत्वेन इवार्थविहितत्वेन औपम्यप्रतिपादकत्वात् सादृश्यप्रतिपादनात् यथा आर्य्या पूर्णोपमायां समादियोगे न वाचकत्वम्, तथैवात्रापि तदर्थे वस्तुतः तत्स्थाने विहितस्य क्यजादेर्योगात् 'यो यत्र प्रत्ययो जात इति न्यायादिति भावः।

उक्तस्वमते शङ्कते—नन्विति। क्यङादिषु प्रत्ययेषु सत्स्वितिशेषः। औपम्यप्रतीतिः सादृश्यस्य प्रत्ययः। प्रत्ययत्वेन क्यजादेरितिशेषः। अस्वतन्त्रत्वात् स्वार्थस्यापि वोधने अस्वाधीनत्वात् प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इतिनयेन प्रकृतिसाहायेनैव स्वार्थस्यापि बोधनादिति भावः। न वाच्यमिति। यत्र यत्रेवादिः तत्र तत्र सादृश्यस्य सम्यक्प्रतीतिः यत्र नैवं तत्र नैवम्। यथा क्यजादीनां योगे तस्मादत्रौपम्यबोधकाभावस्य स्फुटत्वात् वाचकलुप्तात्वमेव न वाच्यमितिभावः। कुत एतदत आह—**कल्पवादाविति**। आदिपदेन देश्यादीनां परिग्रहः। तथा प्रसङ्गात् सम्यगौपम्यप्रतीत्यभावापत्तेः। **अयम्भावः**—'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः'५/३/६७ इति पा० सूत्रेण विहितस्य पकारेत्संज्ञककल्पप्रत्ययस्य कलापमते अदन्तकल्पप्रत्ययस्य 'विषकल्पं मनः' इत्यादिसमानाधिकरण्येन निर्देशादीषदसमाप्तिविशिष्टो धर्मोऽर्थः, ईषदसमाप्तिश्च किञ्चिन्नयूनसकलधर्मसम्बन्धरूपोपमैव एवञ्च इवादेर्लोप इति वक्तुं नोचितम्, किन्तु तत्र धर्मलोप एवं वक्तुं युक्तत्वात्। अतएव 'इन्द्रकल्पं नृपः सोऽयम्' इत्यादावुपमात्वमक्षतमेव।

आपातत आशङ्कते—नचेति। **इवादितुल्यतयेति**।

'कल्पब्देशीयदेश्यादिप्रख्यप्रतिनिधी अपि'

इतिसादृश्यवाचकशब्दप्रदर्शनप्रस्तावे दण्डयुक्तेरित्याशयः। क्यङादीनामित्यादिपदेन क्यच्णमुलोः परिग्रहः। द्योतकत्वमिति वाच्यमितिशेषः, तस्य न चेत्यनेन पूर्वेण सम्बन्धः। क्यङादीनामिवाद्यर्थे विधानाभावात्, किन्तु आचाराद्यर्थे विधानेन केवलोपमानपदसमभिव्याहारादौपम्यस्य द्योतकत्वमितिभावः। ननु 'कमलमिव मुखम्' इत्यादावुपमालक्षणाव्याप्तिभयेन इवादेरुपमावाचकत्वं स्वीकार्यमेवेत्यत आह—**इवादीनामपीति**। **निश्चयाभावादिति**। अव्यया हि द्योतका न तु वाचका इति वैयाकरणनयेन सिद्धान्तानैक्यात्; तथाहि वैयाकरणनय इवादीनां द्योतकत्वमेव न वाचकत्वम् निपातत्वादुपसर्गवत्। अतएव

'शरैरुस्त्रैरिवोदीच्यानुद्धरिष्यन् रसानिव'

इत्यादावुस्त्रादिपदस्योस्त्रसदृशपरत्वेनोस्त्रसदृशैः शरैरितिशरविशेषणतया तृतीयादिसङ्गतिः। वाचकत्वेन तूस्त्रपदोत्तरं तृतीया न सङ्गच्छते उस्त्राणामुद्धरणक्रियां प्रति लक्षणत्वा भावात् इवार्थसादृश्यान्वयित्वेन करणीभूतशरविशेषणत्वविरहाच्चेतिवैयाकरणभूषणसारे स्पष्टम्। उक्तं च **वाक्यपदीयेऽपि**—

'चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः। प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते॥'

अत्र—एते हि चादयः केवला न प्रयुज्यन्ते ततो वाचका न भवन्तीतिबोद्धव्यम्।

इति हेलाराजस्तद्व्याख्याता।

ननु यदि इवादीनामौपम्यवाचकत्ववादिमताश्रयणं भवतामपीष्टं तदा 'कमलमिव मुखम्' इत्यादावुपमालक्षणस्याव्याप्तिः, 'औपम्यवाचकमिवादि' स्वाभिहितेन विरोधश्चेत्यत आह—**वाचकत्वे** वेति। आलङ्कारिकैरि-

वादितुल्यत्वेन कल्पबादेरुपमावाचकत्वाङ्गीकारे वेत्यर्थः। समुदितं प्रकृतिप्रत्ययाभ्यां मिलितं तत्स्वरूपं पदम्, युगपदेवोभयार्थवाचको न तु प्रकृतिमात्रं प्रत्ययमात्रं वाचकमित्यर्थः। उक्तं च वाक्यपदीये—

'पदे न वर्णा विद्यन्ते वाक्येष्ववयवा न च। वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन॥'

'मुख्यं वाचकत्वं तु कल्पनया बोधिते समुदायरूपे पदे वाक्ये वा लोकानां तत एवार्थबोधात्' इति च।

स्वस्वार्थबोधकौ स्वस्वार्थप्रतिपादकौ। उक्तं च—

'प्रकृतिप्रत्ययौ ब्रूतः प्रत्ययार्थं सहेति यत्। भेदेनैवाभिधानेऽपि प्राधान्येन तदुच्यते॥

पाकं हि पचिरेवाह कर्त्तारं प्रत्ययोऽप्तकः। पाकयुक्तः पुनः कर्त्ता वाच्योनैकस्य कस्यचित्॥'इति

**वत्यादिक्यङाद्योःसाम्यमेवेति**। अयमभिप्रायः—यदि वत्यादीनां वाचकत्वाङ्गीकारः तदा क्यङादीनामपि वाचकत्वम्, यदा तेषां न वाचकत्वं तदैषामपीति। सर्वैरेव वतिकल्पबादिसद्भावे औपम्यवाचकसद्भावाङ्गीकरात्। प्रत्ययत्वेन तत्सदृशैः क्यङादिभिः किमराद्धं यदेषां सद्भावे औपम्यवाचकता लोपः स्यादिति।

इदानीं काव्यप्रकाशमतानुयायिनां चण्डीदासप्रभृतीनां मतं खण्डयितुमाह—यच्चेति। अनुशिष्यन्ते 'तत्र तस्येव' इत्याद्यनुशासनेन नियम्यन्ते। एवञ्च 'यो यत्र प्रत्ययो जातः' इति न्यायेन वत्यादीनामिवार्थे विधानात् सादृश्यवाचकत्वम्, क्यङादीनां तु आचारार्थे विधनादाचारार्थवाचकत्वम्। तेन क्यङादिप्रत्ययोदाहरणे सादृश्य-बोधकलोपाभिधानमेव युक्तमिति तेषामभिप्रायः। आचारमात्रार्था आचारस्यैव बाधकाः। सादृश्याचारार्थाः सादृश्यार्थान्विताचारार्थबोधकाः। **अयम्भावः**—'कर्त्तुः क्यङ्सलोपश्च' इत्यत्र 'उपमानादाचारे' इत्यत उपमानपदमनुवर्त्तते तेनेवार्थसादृश्यादपि बोधे सादृश्याचारार्थक्यङिति। अत एव रमणीवाचरति सुतमिवाचरति इत्येवमाद्यर्थे 'रमणीयते' 'सुतीयते' इत्यादौ क्ष्मापतौ सम्पद्राज्यलक्ष्म्या रमणीसदृशाचरणस्य प्रकृतिमण्डले च राज्ञः सुतसदृशाचरणस्य प्रतीतेः क्यङादीनां सादृश्याचरणमर्थः प्रतीयते न तु तत्राचरणमेवार्थः। एवञ्च काव्यप्रकाशकारोक्तं कथञ्चिदप्यनिर्वाह्यमेवेत्यवधेयम्। रसगङ्गाधरकृताऽप्येवमेवोक्तम्।

## रुचिरा

पुनरन्यान् धर्म्मलुप्तायाः पञ्च भेदान्निर्दिशति—८४ **आधारकर्म्मविहिते** आधारोऽधिकरणं स च कर्म्म च ताभ्यां विहितस्तस्मिन् अधिकरणात् कर्म्मणश्च परस्तात् विहिते इत्यर्थः। अत एव—**द्विविधे**। **च**। **क्यचि** क्यच्प्रत्यये। अस्यैव 'ईय' इति सञ्ज्ञान्तरम्। तथा च—अधिकरणे क्यच् (ईय) प्रत्यये, कर्म्मक्यच् (ईय) प्रत्यये च सतीति निष्कृष्टोऽर्थः। **क्यङि** 'कर्त्तुर्विहिते' इति शेषः। अस्यैव 'आयी' ति सञ्ज्ञाऽन्तरम्। तथा च-कर्त्तुर्विहिते क्यङि (आयि) प्रत्यये सतीत्यर्थः। **कर्मकर्त्रोः** कर्म्म च कर्त्ता च तयोः, कर्म्मणि, कर्त्तरि चेत्यर्थः। 'उपपदयोर्विहिते' इति शेषः। **च णमुलि**। तथा च—कर्मकर्त्रोरुपपदयोः सतोर्विहिते णमुलि प्रत्यये चेत्यर्थः। **एवम्** इत्येवम्। **पुनः**। 'धर्म्मलुप्ता' इति पूर्वतोऽनुषज्यते। **पञ्चधा**। पञ्चविधा। **स्यात्**॥ ७२॥

बोधसौकर्य्यार्य—किञ्चिदाह—'**धर्म्मलोपे**। **लुप्ता** धर्म्मलुप्तोपमेति भावः' इति 'पूर्वत' इति शेषः। **अनुषज्यते**। क्यचादीनां कलापमतानुसारेण सञ्ज्ञान्तरमाह—**क्यच्-क्यङ्-णमुलः**। 'एवे' ति शेषः। **कलापमते** कलापव्याकरण सिद्धान्ते। णिण्णायिणमः णिण्-णायि-णमः। 'इत्युच्यन्ते' इति शेषः।

उदाहर्त्तुमाह—**क्रमेण**। **उदाहरणम्**। 'यथे'ति शेषः। 'हे **क्षितीश** क्षितेः पृथिव्या ईशस्तत्सम्बुद्धौतथोक्त ! पृथ्वीपते इति यावत्। **त्वम्**। **रणेषु** समरेषु प्रतिद्वन्द्वितयोपस्थितेषु वीरजनेष्विति यावत्। **अन्तःपुरीयसि**

अन्तः पुरेऽबलागृहेऽबलाजने इति यावत् इवाचरसीति भावः। 'उपमानादाचारे'। ३/१/१० इति सूत्रस्थेन 'अधिकरणाच्चेति वक्तव्यम्' इति वार्त्तिकेनोपमानवाचका'दन्तःपुरे' इत्यधिकरणादाचारेऽर्थे क्यच्। तुल्यत्वमाचारश्च क्यच्प्रत्ययार्थः। आचारश्चात्राधिकरणत्वान्वययोग्यक्रिया। सा च-प्रकृते सञ्चाररूपा ग्राह्या। व्युत्पत्तिवैशिष्ट्येन तुल्यतायाः प्रकृत्यर्थे आचारस्याख्यातार्थाऽन्वयः। तथा च-अन्तःपुरतुल्येषु रणेषु (अबलासदृशेषु वीरजनेषु मध्ये) सञ्चारकर्त्तेत्यन्वयावगमः। पौरं पुरे प्रकृतिमण्डले भव इति तम्। 'तत्र भवः।' ४/३/५३ इत्यण्। **जनम्। सुतीयसि** सुतमिवाचरसीति भावः। 'उपमानादाचारे।' ३/१/१० इति सूत्रेणोपमानवाचकात् 'सुत'मिति कर्म्मपदादाचारेऽर्थे क्यच्। अत्र चाचारो मननम्, तथा च—प्रकृतिमण्डलं सुततुल्यं मन्यसे इति भावः। श्रीः सम्पद्राज्यलक्ष्मीरिति यावत्। **सदा। तव। रणीयते** रमणीवाचरतीत्यर्थः। 'कर्त्तुः क्यङ्सलोपश्च।' ३/१/११. इति सूत्रेणोपमानवाचकात् 'रमणी'ति पदादाचारेऽर्थे क्यङ्। क्यङो ङित्त्वादात्मनेपदम्। अत्राचारो वर्त्तनम्। तथा च—रमणीतुल्या श्रीर्वर्त्तत इति भावः। **प्रियाभिः**। अमृतद्युतिदर्शममृतद्युतिरिवेत्यर्थः। दृष्टः। 'उपमाने कर्म्मणि च।' ३/४/३५ इति सूत्रेणोपमानवाचके 'अमृतद्युति'मितिकर्मपदे उपपदे 'दृश'धातोर्भाविणमुल्। 'कृन्मेजन्तः।' १/१/३९ इति सूत्रेणाव्ययसञ्ज्ञा। 'कषादिषु यथाविध्यनुप्रयोगः।' ३/४/४९ इति सूत्रेण-'कषादिषु मध्ये यस्माद्धतोर्णमुल् विहितस्स एव धातुरनुप्रयोक्तव्य' इति 'दृष्ट' इति 'दृश्' धातोरेवानुप्रयोगः। अत्र मनोज्ञत्वादिरूपः साधारणो धर्म्मः। दर्शनं चानुभवनम्। तथा च—अमृतद्युतितुल्यो मनोहरोऽनुभूत इति भावः। अत्रास्याम्। भुवि पृथ्व्याम्। **इन्द्रसञ्चारम्** इन्द्रः स्वर्गाधिष्ठाता स इवेत्यर्थः। **सञ्चरसि**। अत्रापि 'उपमाने कर्म्मणि च।' ३/४/४५ इति सूत्रेण चकारानुवर्तिते उपमानवाचके 'इन्द्र' इति कर्त्तृपदे उपपदे सम्पूर्वकाञ्चरतेर्भावे णमुल्। स च 'तुमर्थे सेसेनसेअमेन्कसेकसेन...।' ३/४/९ इत्यादिसूत्रमहाभाष्यगतेन 'अव्ययकृतो भावे भवन्ति' इति वाक्येन भावे एव। सञ्चरणं चाप्रतिहतैश्वर्य्यतया वर्त्तनम्। तथा च-इन्द्रतुल्योऽप्रतिहतैश्वर्य्यो भूलोके सञ्चरसीति भावः। वसन्ततिलकं वृत्तम्। अत्र विवृतिकाराः—'केचित्तु-'क्यच्क्यङोरर्थ आचारः, तस्यात्र विद्यमानत्वात् धर्म्मलोपोदाहरणमेतन्न भवति।' इत्याहुः, तन्न; आचारस्य साधनत्वेऽपि प्रकृते सादृश्यहेतुत्वेन विवक्षणात्, उपदर्शितधर्म्माणां सादृश्यहेतुत्वेन झटिति प्रतीयमानत्वात् 'चन्द्रायते शुक्लरुचाऽपि हंस' इत्यादौ सत्यपि आचारे 'शुक्लरुचे' ति साधारणधर्म्मप्रयोग दर्शनाच्चारस्याख्यातार्थान्वितत्वेन निराकाङ्क्षतया क्यच्क्यङोरर्थे सादृश्येऽभेदान्वयसम्भवेन सादृश्यहेतुत्वायोगाच्च।" इति ॥ ९३ ॥"

ननु कस्मिन्नंशे को लुप्तो धर्म इत्याशङ्क्याह—**इत्यत्र**। **'अन्तः पुरीयसि'** इत्यत्र 'अंशे' इति शेषः। **सुखविहारास्पदत्वस्य** 'साधारणधर्मस्य लोप' इति परेणान्वयः। **'सुतीयसि' इत्यत्र। च। स्नेहनिर्भरत्वस्य। साधारणधर्मस्य। लोपः। एवम्। अन्यत्र** 'रमणीयते' इत्यत्र अत्यन्ताधीनत्वस्य, उपभोगसाधनत्वस्य वा 'अमृतद्युतिदर्श' मित्यत्र मनोज्ञत्वादिरूपस्य, 'इन्द्रसञ्चार' मित्यत्र विभवातिशयत्वस्य च साधारणधर्मस्य लोप ऊह्यः इति भावः।

यथा वा क्रमेण—'भूधरीयति पयोधरद्वये चन्द्रमस्यति मुखे तवाद्य दृक्। विद्रुमीयति रदच्छदान्तरे दर्पणीयति कपोलमण्डले ॥," "धर्मागमापगमकालसमुत्सुकानां दृङ्मण्डली सपदि दण्डकबर्हियूनाम्। कादम्बिनीयति तनूं रघुनन्दनस्य सौदामिनीयति मुदा जनकेन्द्रजाताम् ॥" "चन्द्रश्चण्डकरायते, मृदुगतिर्वातोऽपि वज्रायते, माल्यं सूचिकुलायते, मलयजालेपः स्फुलिङ्गायते ॥" आलोकं स्तिमितायते, विधिवशात् प्राणोऽपि भारायते, हा हन्त प्रमदावियोगसमयः संहारकालायते ॥', "सांवर्त्तिकतीक्ष्णद्युतिदर्शं पश्यतिं सुधाकरं बाला। विरहेण निधिविधायं

निदधाति स्तनगतं नखाङ्कं ते ॥" "त्वद्विप्रयोगदहनज्वरदह्यमाने ये ये गुणा हृदि वसन्ति पुरो मृगाक्ष्याः। ते वह्निमध्यविलसद्बिसतन्तुनाशं नष्टस्त्रपाधृतिविवेकमुखाः समस्ताः ॥" इत्यादि।

"ननु लुप्तायाः श्रौत्यार्थीत्वात् अत्र का श्रौती का वाऽऽर्थीत्याशङ्क्याह-इह 'अन्तःपुरीयती'त्यादौ। **च यथाऽऽदितुल्यादिविरहात्। श्रौत्यादिविशेषचिन्ता** श्रौतीयमार्थीयमिति, विभज्य प्रदर्शनविचारः। **न। अस्ति** 'अनतिप्रयोजनीयत्वात्।' इति शेषः। 'वस्तुतस्तु—यथा तुल्यार्थविहितस्य वतेर्योगे आर्थीत्वम्, तथाऽत्रापि तुल्यार्थविहितक्य्चक्यङोर्योगे आर्थीत्वम्।' इति च विवृतिकाराः। ननु 'वादेर्लोपे समासे सा कर्म्माधारयक्यचि क्यङि। कर्म्मकर्त्रोर्णमुलि' इत्युक्तदिशाऽत्र वाचकलुप्तैव गदितुं योग्या, कथं पुनस्त्वया धर्म्मलुप्ता गदितेत्याशङ्क्योत्तरयितुमाह—इदं चेत्यादि।

**केचित्** काव्यप्रकाशकारादयः इति भावः। **इदम्** 'अन्तः पुरीयती'त्युदाहरणम्। च। **औपम्यप्रतिपादकस्य। इवादेः। लोपम्। उदाहरन्त्याहुः**। तत्। **अयुक्तन** युक्तिसङ्गतम्। कुत इत्याशङ्क्याह **क्यच्क्यङादेः**। आदिपदेन णमुलो ग्रहणम्। **अपि। तदर्थविहितत्वेन** तुल्याद्यर्थे विधानात्। **औपम्यप्रतिपादकत्वात्** प्रतिपादनात्। अयम्भावः—'अन्तः पुरीयसी' त्यत्र यथा धर्म्मलुप्तोदाहृता, तथैव एतस्यैव च्छायाभूते "पौरं सुतीयति जनं, समरान्तरेऽसावन्तः पुरीयति विचित्रचरित्रचञ्चुः। नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना ॥" इत्यादौ वाचकोपमा काव्यप्रकाशकारैरुदाहृता, तदुदाहरणं च न युक्तम्, यथा आर्थ्यां पूर्णोपमायां समादियोगे न वाचकलुप्तात्वम, तथैव-अत्रापि तदर्थे वस्तुतः तत्स्थाने विहितस्य क्यजादेर्योगात्। ननु क्यजादौ साधर्म्यवाचकानामिवादीनां प्रयोग इव साधर्म्यप्रत्यायकत्वासम्भवाद्वाचकलुप्तात्वमेव कुतो नेत्याशङ्कामुन्मूलयति-**ननु क्यङादिषु** 'प्रत्ययेषु सत्सु' इति शेषः। **सम्यक्। औपम्यप्रतीतिः** साधर्म्यस्य प्रत्ययः। **प्रत्ययत्वेन** 'क्यजादे'रिति शेषः। **अस्वतन्त्रत्वात्** 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति नयेन स्वातन्त्र्येणार्थबोधकत्वंविरहादिति भावः। **इवादिप्रयोगाभावात्। च। न। अस्ति**। अतः औपम्यप्रतिपादकलोप एवात्रानुमेय' इति शेषः।" **इति। न वाच्यम्**। अयम्भावः-यत्र यत्रेवादिः तत्र तत्र साधर्म्यस्य सम्यक्प्रत्ययः, यत्र नैवं तत्र नैवम्। यथा-क्यजादीनां योगे। तस्मात्—अत्रौपम्यप्रतिपादकाभावस्य स्फुटत्वाद्वाचकलुप्तात्वमेव वक्तुमुचितम्, इति; कुत इत्याशङ्क्याह-**कल्पबादौ**। आदिना-देश्यादीनां ग्रहणम्। अपि 'नतुकेवलं क्यजादौ प्रयुक्ते' इति शेषः। **तथाप्रसङ्गात्** सम्यगौपम्यप्रतीत्यभावापत्तेः। इदमभिहितम्-'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः।' ५/३/६७ इति सूत्रेण विहितस्य कल्पप्प्रत्यपस्य 'विषकल्पं मन' इत्यादिसामानाधिकरण्येन निर्देशाकिञ्चदपरिसमाप्तिविशिष्टोधर्म्यर्थः। किञ्चिदपरिसमाप्तिश्च यत्किञ्चिन्नयूनसमस्तधर्म्मसम्बन्धरूपोपमैव। तथा च-'इवादेर्लोप' इति न पार्य्यते, तत्र धर्म्मलोप एव गदितुं क्षमंत्वात्। इति। ननु-'कमलमिवास्य वदन' मित्यादौ उपमालक्षणसङ्गत्यनुरोधेन इवादेरुपमावाचकत्वं स्वीकार्य्यमित्यभिप्रेत्याह-इवादीनाम्। 'वाचकत्वेन स्वीक्रियमाणानाम्। अपि 'किं पुनरन्येषां निपातानां' मिति शेषः। **वाचकत्वे। निश्चयाभावात्** सिद्धान्तानैक्यात्। इदं तत्त्वम्-सर्वेषामेव निपातानां द्योतकत्वम्, तच्च तात्पर्य्यग्राहकत्वम्। 'ईश्वरमनुभवती' त्यादौ अनुभवादिः प्रतीयमानो न धात्वर्थः, 'भवती' त्यत्राप्यापत्तेः, नोपसर्गार्थः तथा सति अप्रकृत्यर्थतया तत्राख्यातार्थानन्वयापत्तेः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्, 'अनुगच्छती'त्यादौ अनुभवादिप्रत्ययापत्तेश्च, न विशिष्टार्थो गौरवात्। तथा च-धातोरेव विद्यमानत्वादिवाचकस्यास्तु लक्षणा। ननु उपसर्गास्तापर्य्यग्राहका इत्येषामस्तु द्योतकत्वम्, इति चेत्! एतत् इवादिष्वपि, 'चैत्रमिव मैत्रं पश्यती'त्यादौ सादृश्यविशिष्टं चैत्रपदलक्ष्यम्, इवशब्दश्च तातपर्य्यग्राहक इति, 'उपास्यते गुरुः' इत्यादौ चोपासना

किमुपसर्गार्थो विशिष्टस्य वा धातुमात्रस्य। नाद्यः, तथा सति-स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्म्मकत्वस्यासधातोरुपासनारूपफलवाचकत्वाभावादनापत्तेः, ततः कर्म्मणि लकारो न स्यात्। एवम् साक्षात् क्रियते दयिता', 'अलङ्क्रियते देवः,' "उरीक्रियते सिद्धान्त' इत्यादौ अपि धातोस्तदर्थे कर्मणि लकारसिद्धये तत्तदर्थवाचकत्वं वाच्यम्, इत्युपसर्गवदेव द्योतकत्वममीषाम्। यद्यपि कृधातोः सकर्म्मकत्वमेवास्ति अथापि एष्वर्थेषु सकर्म्मकता न भवेत्। अन्यथा-'वायुर्विकुरुते' इत्यादौ आत्मनेपदोपपत्तिर्नस्यात्, 'अकर्म्मकाच्च।' १/३/४५ इत्यनेनाकर्म्मकत्व एवात्मनेपदविधानात्। तथा—'शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव।' इत्यादौ उस्रादिपदस्योस्रादिसदृशपरत्वेनोस्रादिसदृशैरुस्रादेरुद्धरणक्रियां प्रति कारणत्वाभावात्। इवार्थसादृश्यान्वयित्वेन करणीभूतशरविशेषणत्वविरहाच्च। इति। इवादीनामपि द्योतकत्वमेवेति वैयाकरणानां सिद्धान्तः, विस्तरस्तु तत्तदाकरग्रन्थेषु स्वयमूह्यः। एवं वाचकत्वस्यानिश्चित्वेनोक्तमर्थं दूषयित्वा तथास्वीकारेऽपि प्रौढवादेन दोषं निर्दिशति-**वाचकत्वे**। **'इवादीना'** मिति शेषः। **वा**। **'समुदितं** प्रकृतिप्रत्ययसमुदायरूपम्। **पदम्**। **वाचकम्**। तथा चत्र्यकृत्यार्थान्वितप्रत्ययार्थप्रतिपाकत्वं वाचकम्। इति। निष्कृष्टोऽर्थः।' **'प्रकृतिप्रत्ययौ**। **स्वस्वार्थबोधकौ** 'क्रमेणे'ति शेषः।' **इति मतद्वये**। **अपि**। **वत्यादिक्यजाद्योः**। आदिपदाभ्यामेव कल्पबादेः, क्यङादेश्च ग्रहणम्। **साम्यम्**। एव। इति। 'बोध्य'मिति शेषः। इदं तत्त्वम्—नैयायकादय इवादीनां वाचकत्वमेवाङ्गीकुर्वन्ति, तथाहि-उपसर्गाणां द्योतकत्वमेव, अन्यथा—'उपास्यते गुरुः,' 'परिभूयते शत्रुः' इत्यादौ धात्वर्थासनभवनक्रिययोरकर्म्मकतया कर्म्मलकारोपपत्तिर्न स्यात्। इवादीनां तु वाचकत्वमेव, बाधकाभावात्। निपातमात्रस्य द्योतकत्वाङ्गीकारे तु अव्ययानामपि द्योतकत्वमेव स्यात्, न च इष्टापत्तिः, स्वरादीनां स्वातन्त्र्येण प्रयोगानापत्तेः। अथैवं वाचकत्वाङ्गीकारेऽपि इववत्यादेः क्यच्क्यङादेश्चसमुदितं पदं वाचकम्। 'प्रकृतिप्रत्ययौ स्वस्वार्थबोथकौ' इति उभयविधाभ्यां मताभ्यामपि साम्यमेव, उभयत्र न्यायस्य तुल्यत्वात्। अत्राहुः—निपातमात्रस्य द्योतकत्वं वाचकत्वं च, न केवलमुपसर्गाणां द्योतकत्वम्, इवादीनां वा वाचकत्वम्, वैषम्ये बीजाभावात्। तथा हि—'समुदितं पदं वाचकम्,' 'प्रकृतिप्रत्ययौ स्वस्वार्थबोधकौ।' इति नयेन च द्योतकत्वेनाभिमतानामपि वाचकत्वापत्तेः, वाचकत्वेनाभिमतानां पुनर्निपातानां द्योतकत्वापत्तेः।' इति। काव्यप्रकाशव्याख्याकारा अपि—अत एवाहुः, 'ननु 'नारीयते' इत्यादौ कथमौपम्यप्रतिपादकप्रयोगाभावः, क्यङादीनामेव तदर्थविहिततया तत्कर्म्मक्षमत्वात्। अथैषां प्रत्ययत्वेनास्वतन्त्रतया प्रयोगाभावेन वा न सम्यगौपम्यप्रतीतिरिति चेत्। तर्हि वतिकल्पबादावपि तथैव प्रसज्येत। नहि प्रत्ययतया तद्धितान्ययोः कश्चिद्विशेषः। कल्पबादयइवादितुल्यादय और औपम्यवाचकाः, क्यङादयस्तु द्योतका एवेत्यपि न, इवादीनामपि वाचकत्वे संदेहात्। अस्तु वा वाचकत्वम् तथाऽपि 'समुदितमेव पदं वाचकम्' 'प्रकृतिप्रत्ययौ स्वस्वार्थवाचकौ' इति मतद्वयेऽपि वत्यादिक्यङाद्योः साम्यमेवेति, सत्यमेवम्, अथाऽपि प्राचीनोपरोधनियन्त्रितोऽयमाचार्य्यो विद्वानपि ईदृशानि दुर्यशःसङ्कुचितानि सङ्कटानि प्रविशतीत्यत्र किं ब्रूमः' इति।

प्रकारान्तरेण परमतं समाधाय पुनः स्वमतं द्रढयितुं खण्डयति—**यत्**। **च**। **केचित्** 'नारीयते' इत्यादौ वाचकलुप्तात्वमेव समाधत्सवः। आहुः। **'वत्यादयः।'** आदिना कल्पबादेर्ग्रहणम्। **इवाद्यर्थे** सादृश्याद्यर्थे। अनुशिष्यन्तेऽनुशासनेन नियम्यन्ते। **क्यङादयः**। आदिना क्यजादेर्ग्रहणम्। तु (इदं च व्यवच्छेदकम्)। **आचाराद्यर्थे**। 'अनुशिष्यन्ते' इति पूर्वतोऽन्वेति। 'अतोऽत्र 'नारीयते' इत्यादौ न धर्म्मलुप्तात्व'मिति शेषः।' **इति**। **तत्**। **अपि**। **न**। 'युज्यते' इति शेषः। कुत इत्याह-**न खलु**। **क्यङादयः**। आदिना क्यजादेर्ग्रहणम्। **आचारमात्रार्था** आचारार्थस्यैव प्रतिपादकाः। अपितु। सादृश्याचारार्थाः सादृश्यार्थान्विताचारार्थप्रतिपादकाः। इदमंभिहितम्—'उपमानादाचारे।' ३/१/१० इत्यतः 'कर्त्तुः क्यङ् सलोपश्च।' ३/१/११ इत्यत्र 'उपमाना' दित्यनुवर्त्तते। तथा

च-उपमानार्थककर्तृपदोत्तरमाचारार्थे क्यङ्प्रत्ययः स्यात् इति स्थूलार्थः सम्पद्यते। आचारश्चाचरणम्, तच्च प्रकृते उपमेयस्योपमानताबोधनम्, प्रकृतेरुपमानार्थकत्वोपपत्तये इवार्थवाचकता तत एव क्यङ् सम्पद्यते। तथा च-उपमानार्थकात् कर्त्तृपदादुत्तरमिवार्थानुगताचरणार्थे कयङ्प्रत्ययः स्यादिति वास्तविकोऽर्थः। एवम्-क्यङ इवार्थकत्वोपपत्तौ धर्म्मलोप एव पर्य्यवसीयते। इति।

उपसंहरति-तदेवमित्यादिना। स्पष्टम्। श्रौती। धर्म्मलुप्ता, आर्थी धर्म्मलुप्ता च, तत्राद्या समासगा वाक्यगा चेति द्विविधा, अन्या पुनः तद्धितगा समासगा वाक्यगा चेति त्रिविधा, सम्मिलिताः पुनः पञ्च विधा धर्म्मलुप्तायाः। तथा आधारक्यचि कर्म्मक्यचि, कर्त्तरिक्यङि, कर्म्मणमुलि, कर्त्तृणमुलि च इत्येवं पञ्चं विधा अन्याधर्म्मलुप्तायाः। सम्मेलने च स्फुटं दश भेदाः। इति भावः।

**उपमानानुपादाने द्विधा वाक्यसमासयोः ।**

उदाहरणम्—

**'तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम् ।**

अत्र मुखनयनप्रतिनिधिवस्त्वन्तरयोर्गम्यमानत्वादुपमानलोपः । अत्रैव च 'मुखेन सदृशं' इत्यत्र 'मुखं यथेदं', 'नयनतुल्यं' इत्यत्र 'दृगिव' इति पाठे श्रौत्यपि संभवतीति । अनयोर्भेदयोः प्रत्येकं श्रौत्यार्थीत्वभेदेन चतुर्विधत्वसंभवेऽपि प्राचीनानां रीत्या द्विप्रकारत्वमेवोक्तम् ।

---

## विवृतिः

उपमानलुप्तामुपमामाह—**उपमानेति** । 'लुप्तोपमा' इत्यनुषङ्गः ॥ **न वेति** । न वा नयनतुल्यं रम्यमास्त इत्यन्वयः । अन्यथा धर्मोपमानलोपोदाहरणमिदं स्यात् । **प्रतिनिधीति** । सदृशेत्यर्थः ॥

## विज्ञप्रिया

**उपमानानुपादाने** इति । उपमानतावच्छेदकचन्द्रत्वादिना अनुपादाने इत्यर्थः । तेन सदृशतुल्यादिपदेन तदनुपादानेऽप्यनुपादानं बोध्यम् ।

तस्या मुखेनेति वाक्ये । नास्ते न वा नयनतुल्यमिति समासे । अत्र रम्यत्वं साधारणधर्म उक्त इत्यत्र उपमानमात्रलोपः । नच कथमत्रोपमानलोपः मुखेन सदृशमित्युक्तौ मुखस्यैव उपमानताप्रतीतेस्तस्य चोक्तत्वादेवेति वाच्यम् । मुखस्योपमानत्वे सदृशपदमत्रोपमेयपरं स्यात्; उपमेयस्य च उपमानापेक्षया नाधिकत्वम्, किन्तु न्यूनत्वं समानत्वं वा । तथा च तस्या मुखस्य न्यूनं समानं वा नास्तीत्युक्तेऽधिकत्वाकाङ्क्षानिवृत्तौ मुखप्रशंसानुपपत्त्या सदृशपदस्यात्रोपमानपरत्वादेव उपमेयापेक्षया उपमानस्याधिकत्वेन तस्या मुखस्याधिक्यं नास्तीत्येवार्थात् ।

नन्वेवं सदृशपदेनैव उपमानकथनात् कथं तल्लोप इत्यत आह—**अत्र मुखप्रतिनिधीति** । प्रतिनिधिरुपमानं चन्द्रादिवस्तु । **गम्यमानत्वादिति** । चन्द्रत्वादिना उपमानतावच्छेदकरूपेणानुपादानादाकाङ्क्षाबलेनाऽध्याहार्य्यत्वादित्यर्थः । एवं चाध्याहारलभ्ये तत्र सादृश्यप्रतियोगितारूपसाम्यं वाच्यमित्यत्र वाच्यपदस्य व्यङ्ग्यपरत्वं यद् व्याख्यातं तदत्रापि उपपन्नं बोध्यम् । एवमुत्तरत्रापि ।

दर्शितद्वये सादृश्यतुल्यपदवशादार्थीत्वमेव, तत्पदद्वयस्थाने यथा इवादिपददाने तु श्रौत्यौ अप्युपमाने लुप्ते भवतः । अतश्चतुर्विधा उपमानलुप्ता भवितुमर्हति । किन्तु काव्यप्रकाशकृदादिप्राचीनैस्तद्द्वयस्यानुक्तत्वाद् द्विप्रकारत्वमेवोक्तमित्याह—**अत्रैव चेति** ।

## कुसुमप्रतिमा

अत्र नास्ते इत्यन्तवाक्ये उपमानानुपादानात् वाक्यगता लुप्तोपमा । तथा नवा नयनतुल्यमित्यत्र तु तुल्यशब्देन समासात् उपमानानुपादानाच्च समासगता लुप्तोपमा ।

न चात्र मुखनयनयोर्भिन्नविभक्तिकतया उपमानत्वमेवेत्याशङ्कनीयम्, चन्द्रोत्पलयोरुपमानत्वेन मुखनयनयोस्तु तदुपमेयत्वेन सहृदयसमाजेऽत्यन्तप्रसिद्धत्वात्, प्रतीपालङ्कारे तु प्रौढिवशादेवैतद्वैपरीत्यकल्पनात्, अत्र तु तादृशप्रौढेरप्यभावात्।

नन्वनुपादानं नाम विद्यमानस्य वस्तुनोऽनभिधानम्, तेनात्र मुखसदृशरम्यस्य नयनतुल्यरम्यस्य चोपमानभूतवस्तुन आकाशकुसुमादिवदत्यन्तमेवाविद्यमानत्वे तयोरनुपादानासम्भवात् कथमिदमुदाहरणं सङ्गच्छत इत्याह अत्रेति। मुखनयनयोः प्रतिनिधिनो उपमानत्वेन सदृशे ये वस्त्वन्तरे चन्द्रोत्पलरूपावन्यपदार्थौ तयोर्गम्यमानत्वात् सर्वथा विद्यमानत्वेन व्यञ्जनया प्रतीयमानत्वात् उपमानयोस्तयोर्लोपः अनुपादानं सम्भवतीति शेषः। अतो न काचिदनुपपत्तिरिति भावः।

ननूपमानपदानुपादानात्तदुत्तरप्रयोज्यानामिवादिशब्दानां वत्यादिप्रत्ययानाञ्चासम्भवदुक्तरीत्या द्विविधैवास्तु, किन्तु मुखाद्युपमेयपदोत्तरमिवादिशब्दप्रयोगसम्भवात् श्रौतीरूपभेदसम्भवेन चतुर्विधैव सम्भवतीत्याह अत्रैव चेति। अनयोर्वाक्यसमासगतयोः।

## विमला

उपमानलुप्तामुपमामाह, उपमानेति।—उपमीयते अनेनेति उपमानं तस्य अनुपादाने—अप्रयोगे, वाक्यसमासयोः वाक्यसमासयोः द्विधा—वाक्यगता समासगता चेति द्विप्रकारा, लुप्तोपमा इत्यनुषङ्गः।

तस्या इति।—तस्याः,—कान्तायाः, मुखेन सदृशं—तुल्यं, रम्यं—मनोरमं, न आस्ते, न वा नयनतुल्यं, रम्यम् आस्ते इति शेषः; अन्यथा धर्मोपमानलोपोदाहरणमिदं स्यात्।

## लक्ष्मी

धर्मलोपे लुप्तोपमां समापयन् साकल्येन तत्सङ्कलयति—तदेवमिति। दशप्रकारेति। श्रौती धर्मलुप्ता आर्थी धर्मलुप्ता च। तत्राद्या समासगता वाक्यगता चेति द्विविधा, अन्या पुनः तद्धितसमासवाक्यगतत्वेन त्रिविधा साकल्येन पुनः पञ्चभेदा धर्मलुप्तायाः। तथा आधारक्यचि, कर्मक्यचि, कर्त्तरि क्यङि, कर्मणि णमुलि कर्तृणमुलि च, इत्येवमन्या धर्मलुप्तायाः साकल्येन स्पष्टमेव दशविधभेदा इति भावः।

धर्मलोपे लुप्तोपमामुक्त्वा सम्प्रति उपमानोपमेययोरुपमानस्यैव प्राथम्येनोपस्थितत्वात्तल्लोप एव लुप्तोपमां दर्शयति—**उपमानेति**। उपमानस्य उपमानवाचकपदस्य अनुपादाने अप्रयुक्तत्वे वाक्यसमासयोः वाक्यगतत्वेन समासगतत्वेन च पुनर्द्विधा द्विविधा लुप्तोपमेति पूर्वतोऽनुषङ्गः। **अत्रेदम्बोध्यम्**—उपमानपदाप्रयुक्तत्वे तदुत्तरप्रयोज्यानां श्रौतीबोधकानामिवादिपदानां प्रयोगासम्भवात् श्रौतीभेदसाधारणस्यैवासम्भवः। 'चन्द्रमिव मुखम्' इत्यत्र चन्द्रपदं विना केवलम् 'इव मुखम्' इत्यस्य प्रयोगो न सम्भवति। एवमुपमानपदाप्रयुक्तत्वे नैव तदुत्तरमात्रकर्त्तव्यवतिप्रत्ययादीनामसम्भवादार्थ्यामपि तद्धितगतभेदस्यासम्भव एवेति अवशिष्टत्वादुपमानाप्रयुक्तत्वे आर्थ्यां वाक्यमात्रगतत्वेन समासगतत्वेन च लुप्तोपमा द्विविधेति।

तस्या इति। 'त्रैलोक्येऽपि न सदृशी काचिद्वरवर्णिनी चास्ते।' इति मत्पूरितोत्तरार्द्धम्। अत्र 'चास्ते' इत्येतत्पर्यन्तवाक्ये उपमानाप्रयुक्तत्वात् वाक्यगता लुप्तोपमा। तथा 'नवा नयनतुल्यम्' इत्यत्र तु तुल्यपदेन समासात् उपमानाप्रतिपादानाच्च समासगता लुप्तोपमा।

नन्वत्र मुखनयनयोर्विभक्तिभिन्नत्वेनोपमानत्वमेवेति चेत् ? सर्वत्र सहृदयसमाजे चन्द्रपद्मयोरुपमानत्वेन मुखनयनयोस्तु तदुपमेयत्वेनातिप्रसिद्धत्वात् । न चैवं प्रतीपालङ्कारे कथं वैपरीत्यकल्पनेतिवाच्यम्, कविप्रौढिवशादेव तथाकल्पनात् अत्र तु तथा विधप्रौढेरप्यसत्त्वात् ।

नन्वनुपादानं नाम उपलभ्यमानस्य पदार्थस्याप्रतिपादनं तेनात्र मुखसदृशरम्यस्य नयनतुल्यरम्यस्य चोपमानभूतपदार्थस्य गगनपुष्पादिवदत्यन्तमेवानुपलभ्यमानत्वे तयोरनुपादानासम्भवात् तदुदाहरणमिदमसङ्गतमित्यत आह—अत्रेति । मुखनयनयोः प्रतिनिधिनी उपमानत्वेन तुल्ये ये वस्त्वन्तरे चन्द्रपद्मरूपावन्यपदार्थौ तयोर्गम्यमानत्वात् सर्वथा उपलभ्यमानत्वेन व्यञ्जनयावगम्यमानत्वात् उपमानयोस्तयोर्लोप अनुपादानं भवितुमर्हतीतिशेषः, एवं सति न काचित् क्षतिरित्याशयः ।

ननु 'तस्या मुखं यथेदं रम्यं नास्ते' इत्येवं श्रौतीत्वेऽप्यस्याः सम्भवेन चतुर्विधत्वसम्भवात् कथमस्य द्विविधत्वमेवेत्यत आह—**अनयोरिति** । **श्रौत्यमिति** अपिना आर्थी तु तथासम्भवत्येवेत्याशयः । अनयोः वाक्यसमासगतयोर्द्वयोः । प्राचीनानां काव्यप्रकाशकारादीनाम् । अयमाशयः—

'तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम्'

इत्यत्र यथा वाक्यगता समासगता चेति द्विविधोपमानलुप्तार्थी, तथा

'तस्या मुखं यथेदं रम्यं नास्ते न वा तादृगिव'

इति पाठपरिवर्त्तने वाक्यगता समासगता च सैवार्थीति चातुर्विध्येन द्वैविध्यकथनं प्राचीनानामनुरोधात् ।

## रुचिरा

उपमानलुप्तां, निर्दिशति-८५ **उपमानानुपादाने** उपमानवाचकपदानुपादाने उपमानवाचकस्य पदस्याप्रयुक्तत्वेऽवाच्यत्वेवेति यावत् । 'लुप्तोपमा' इति शेषः । वाक्यसमासयोर्वाक्ये समासे च ।' सम्भवतीत्यस्माद्धेतो' रीति शेषः द्विधा । तथा च— उपमानलुप्ता वाक्यगा समासगा चेति द्विविधा ।

उदाहर्त्तुमुपक्रमते—उदाहरणमित्यादिना । स्पष्टम् ।

**"तस्याः । मुखेन । सदृशम्** । रम्यं रमणीयम् । **न आस्ते** । तस्याः-**नयनतुल्यं** नयनाभ्यां तुल्यम् । वा । 'रम्य'मिति पूर्वतोऽनुषज्यते । न 'आस्ते' इति शेषः । 'भुवनत्रितये सदृशी वरवर्णिन्या यया न भव्या वा' इति शेषः । आर्यागीतिश्छन्दः ॥" यथा वा—"यस्य तुलामधिरोहसि लोकोत्तरवर्णपरिमलोद्गारैः । कुसुमकुलतिलक ! चम्पक ! न वयं तं तु जानीमः ॥" इति, अत्र हि-'यत्तुलनामधिरोहसि' इत्याद्यचरणनिर्म्माणे समासगात्वम् । 'उपमाऽभावेन सादृश्याभावस्य पर्य्यवसानात्, सादृश्यपर्य्यवसानस्य चोपमाजीवितत्वादलङ्कारान्तरमेव न तूपमानलुप्तेति न शङ्कनीयम्, 'यस्य तुला (यत्तुलना) मधिरोहसि न तं जानीम इत्युक्त्याऽस्माकमसर्वज्ञत्वादस्मदगोचरः कश्चित्तवोपमानं भविष्यतीति सादृश्यपर्य्यवसानमस्तीत्युपमानलुप्तैवेयम् । उदाहरणसङ्गतिं दर्शयति-**अत्र** 'तस्या मुखेन सदृशं रम्यं नास्ते' इत्युदाहरणे । **मुखनयनप्रतिनिधिवस्त्वन्तरयोर्**मुखसदृशस्य नयनसदृशस्य चान्यस्य वस्तुनः । **गम्यमानत्वादुद्बुध्यमानत्वात्** । **उपमानलोपः** । अयम्भावः-अत्रमुखं नयने चोपमानम्, उपमानं च नोपात्तम्, रम्यमिति साधारणो धर्म्मः सदृशेनासमस्तात् पूर्वत्र वाक्यगा, परत्र तुल्यपदेन समस्तात्समासगा । 'सदृशं तुल्य'मिति पदाभ्यां सामान्यत उपमानोक्तावपि विशेषतोऽनभिधानादुपमानलुप्तेयम् । वस्त्वन्तरस्य विशिष्य केवलमनुपादानमिति उपमानलोपव्यवहारः । एतेन-'अनन्वयोऽत्र' इति वदन्तः परास्ताः । इति । ननु 'तस्या मुखं यथेदं रम्यं नास्ते' इत्येवं

श्रौतीत्वेऽप्यस्याः सम्भवे कथं द्विविधमेवास्या इत्याशङ्क्याह—अत्र 'तस्या मुखेन सदृशं रम्यं नास्ते' इत्युदाहरणे। एव 'किं पुनः परत्रे ति शेषः। **'मुखेन सदृश'मित्यत्र** 'अंशे' इति शेषः। **'मुखं यथेदम'** 'इति पाठे परिवृत्ते' इति शेषः। **'नयनतुल्यम्' इत्यत्र** 'अंशे' इति शेषः। **'दृगिव' इति पाठे**। 'परिवृत्ते' इति शेषः। **श्रौती**। **अपि**। 'आर्थी तु तथा सम्भवत्येव' इति शेषः। **सम्भवति**। **इति**। **अनयोः** 'वाक्यसमासगतया द्वयो' रिति शेषः। **भेदयोः**। **प्रत्येकम्**। श्रौत्यार्थीत्वभेदेन श्रौतीत्वेनार्थीत्वेन चेति भावः। **चतुर्विधत्वसम्भवे**। **अपि**। प्राचीनानां काव्यप्रकाश-कारादीनाम्। रीत्या मार्गेण। **द्विप्रकारत्वम्**। **एव**। **उक्तम्**। अयम्भावः—'तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम्' इत्यत्र यथावाक्यगता समासगता चेति द्विविधोपमानलुप्ताऽऽर्थी, तथा—'तस्या मुखं यथेदं रम्यं नास्ते न वा न तादृगिव।' इति पाठवृत्तौ वाक्यगा समासगा च सैवार्थीति अस्याश्चातुर्विध्येऽपि द्वैविध्याभिधानं प्राचीनानामनुरोधात्। प्राचां ह्येष सिद्धान्तः 'नेयं श्रौती' इवादिपदानामुपमानानतर्य्यनियमेनोपमानपदं विनाऽन्वया-बोधकात्वात्।' इति। यद्यपि-इवेन नित्यसमासविधानस्येवोपमानानन्तर्य्यमिवादीनामवस्थितिनियमस्याग्रहमात्र-मूलत्वम्, तथाऽपि किं प्राचां दूषणगवेषणया ? । इति। अत्राहुः—'कथमियमुपमानलुप्ता,' 'सुधाकरस्य सदृश' मित्यादौ सुधाकरस्योपमानताया इव 'मुखस्य सदृश' मित्यादावपि मुखादेः उपमानताया एवाभिधानं किन्नः स्वीक्रियते ? इति चेत ! 'मुखस्य सदृश' मित्यादौ मुखप्रतियोगिकसादृश्यानुयोगीति नार्थः। किन्तु-मुखनिष्ठसा-दृश्यप्रतियोगीत्येव; मुखस्य प्रकृततया तदुत्कर्षायोपमेयत्वस्यैवाभिधित्सितत्वात्। यद्यपि-'सुधाकरस्य सदृश' मित्यादावपि एवं समाधातुं शक्यते, तथाऽपि—सर्वस्य सुधाकरादेरुपमानतयैव प्रसिद्धिरिति बोध्यम्। अत एव प्रदीपकारैरप्युक्तम् 'अत्र विशेषत उपमानं नोपात्तम्, चिन्त्यमेतत्' इति, अस्यायम्भावः—प्रकृततया काव्यस्यैव (मुखस्यैव) उपमेयत्वमुत्कर्षाय, इत्यसङ्गतम्, स्वनिष्ठसादृश्यप्रतियोगिनिषेधस्यैव स्वप्रतियोगिसादृश्यानुयोगिनि-षेधस्यापि उत्कर्षपर्य्यवसायित्वात्। यथा—'रक्षांसीति पुराऽपि संशृणुमहे वीरस्तु कस्तादृशो यो जागर्त्ति जगत्र-यीविपदलङ्कर्म्मीणदोर्विक्रमः। शश्वद्धारभुवि प्रशस्तिरचनावर्णायमानेक्षणश्रेणीसम्भृतगोत्रभिन्मयजयस्तम्भो यथा रावणः॥' अत्र हि रावणस्याश्रवणोक्त्या यथोक्तार्थलाभः। यथा वा—'त्वमिव कोऽपि परापकृतौ कृती न ददृशे न च मन्मथ ! शुश्रुवे।' इत्यत्र प्रकृतः कामः। तथा च-अत्र। 'कामप्रतियोगिकसादृश्यवानन्यो दर्शनश्रवणविषय-त्वाभाववान्।' इत्यवगम इव तत्र 'सुधाकरप्रतियोगिकसादृश्यवानन्यो दर्शनश्रवणविषयत्वाभाववान्।' इति बोधः। इति।

वाचकलुप्तां निर्दिशति—**८६ औपम्यवाचिनः** साधर्म्यप्रतिपादकस्येवादेः। लोपेऽप्रयोगे लुप्तत्वे वा। **समासे क्विपि** क्विप्प्रत्यथे। च 'इती' ति शेषः। द्विधा 'वाचकलुप्ते' ति शेषः॥७३॥

**औपम्यवाचिनो लोपे समासे क्विपि च द्विधा ॥ २० ॥**

क्रमेणोदाहरणम्—

**'वदनं मृगशावाक्ष्याः सुधाकरमनोहरम्।'**

**'गर्दभति श्रुतिपरुषं व्यक्तं निनदन्महात्मनां पुरतः।**

अत्र 'गर्दभति' इत्यत्रौपम्यवाचिनः क्विपो लोपः। न चेहोपमेयस्यापि लोपः। 'निनदन्' इत्यनेनैव निर्देशात्।

---

## विवृति

इवादिलुप्तामाह—औपम्येति। यत्र कालापादिभिरायलोपः क्रियते तत्र पाणिनीयैः क्विबनुशिष्यते ॥

**वदनमिति**। मृगशावस्याक्षीवाक्षि यस्या इति बहुव्रीहावक्षिपपदलोपः। इवार्थस्य समासगम्यतया इवपदाप्रयोगः। चञ्चलत्वस्य शब्दानुपात्तत्वाल्लोप इतीदं वक्ष्यमाणत्रिलोपोदाहरणम्। सुधाकर इव मनोहर-मिति 'उपमानानां सामान्यवाचिभिः' इति कर्मधारयः। एतदेव प्रकृतोदाहरणम् ॥

## विवृतिपूर्तिः

**सुधाकरेति**। 'सुधाकर इव मनोहरम्' इति विग्रहे 'उपमानानि सामान्यवचनैः' इत्यनेन समास इति समासगेवादिलुप्ता। इह पूर्वपदं तत्सदृशे लाक्षणिकमिति सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते स च न लुप्यते, किंतु समासेनैवोपमाविधानात् 'उक्तार्थानामप्रयोगः' इति न्यायेन प्रयोगाभावाल्लोपव्यवहार इत्यवसेयम् ॥

**गर्दभतीति**। 'गर्दभ इवाचरति गर्दभति' इत्यत्र 'सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः' इति वार्तिके-नोपमानवाचकाद् गर्दभपदादाचारेऽर्थे क्विप्प्रत्ययः तस्य सर्वापहारिलोपविधानात्क्विबो वादिलुप्ता ॥

## विज्ञप्रिया

**औपम्यवाचिन इति**। औपम्यप्रतिपादकस्येत्यर्थः, तुल्याद्यनव्ययानां तद्वाचकत्वाभावस्य दर्शितत्वात्।

**वदनमिति**—सुधाकर इवेत्यर्थः। **गर्दभतीति**—महात्मनां पुरतो व्यक्तं श्रुतिपरुषं निनदन्नयं गर्दभ इवाचरतीत्यर्थः। उभयत्र मनोहरत्वश्रुतिपरुषनिनादयोर्धर्मयोः सत्त्वादौपम्यप्रतिपादकयोरिव क्विपोर्लोपमात्रमत्र। लुप्तयोस्तयोः प्रतिसन्धानाच्चौपम्यस्य प्रतीतिरित्यतो न तस्य व्यङ्ग्यत्वमित्यतो निरुक्तं वाच्यत्वमस्येव।

**औपम्यवाचिनः क्विप् इति**। यद्यपि लुप्तस्य एव क्विपः क्विप्परिभाषा इत्यतः तस्य लोप इत्युक्तिस-म्भवः, तथापि भविष्यल्लोपस्य क्विप एव क्विप्त्व मुक्तं तस्यैवोपम्यवाचित्वं तु एवेत्युक्तमेव। **निनदन्नित्यनेनै-वेति**। कर्तुरुपमेयस्य कर्तरि विहितेन शतृडैवोकृत्वात्।

## कुसुमप्रतिमा

औपम्येति औपम्यवाचिनः सादृश्यवाचकमात्रस्य इवादिशब्दस्य तुल्यादिशब्दस्य च लोपे अनुपादाने समासे क्विपि प्रत्यये च द्विधा लुप्तोपमेत्यनुषज्यते ।

अत्रापोदमवधेयम्—इवादिशब्दाभावात् श्रौतीसामान्यस्यैवासम्भवः, तुल्यादिशब्दाभावाच्च तुल्यार्थक वतिप्रत्ययासम्भवात् तद्धितगतया आर्थ्या अप्यसम्भवः, अपवादरूपायाः, समासगतायाः प्रसक्त्या च वाक्यगताया आर्थ्या अप्यप्रसक्तिरिति पारिशेष्यात् आर्थी समासगतैकविधा क्विपप्रत्ययगता चैकविधेति मिलित्वा औपम्य-वाचिनो लोपे लुप्तोपमा केवलद्विविधेति ।

वदनमिति । "कदलीसुन्दरावूरू मृणालमृदुलौ भुजौ ॥" इति मतपूरितपरार्द्धम् ।

मृगशावस्य हरिणशिशोरक्षिणी इव अक्षिणी चक्षुषी यस्यास्तस्या वदनं सुधाकरमनोहरं चन्द्रवत् सुन्दरम् । अत्र सुधाकर इव मनोहरमिति वाक्ये "उपमानानि सामान्यवचनैः" इत्यनेन कर्म्मधारयसमासादोपम्यवा-चिनो लोपे समासगता लुप्तोपमा ।

गर्दभतीति । "कुक्वुर्रति च परपदानि विलिहन् परदत्तमात्रार्थी ॥" इति मतपूरितपरार्द्धम् ।

महात्मनां पुरतः समीपे व्यक्तं स्पष्टं श्रुतिपरुषं श्रवणकर्कशं यथा स्यात्तथा निनदन् शब्दायमानो गर्दभति गर्दभ इवाचरति ।

अत्रेति । "सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्यः" इति वार्त्तिकोक्त्या विहितस्य "क्विपः सर्वाप-हारौ"त्यादिना लोप इत्यर्थः । "निनदन्" इत्यनेन निर्द्देशात् सामान्यधर्म्मस्य तु न लोप इत्यवधेयम् । अतएवात्र क्विपप्रत्ययगता लुप्तोपया ।

नेति । लोप इति वाच्यमिति शेषः । अनिर्द्देशादिति भावः । निर्द्देशात् उपमेयस्याप्युपादानात् । विशेष-णनिर्द्देशेनेव विशेष्यस्याप्युपस्थितत्वादित्याशयः ।

ननु विशेषणमात्रोपादानेनैव विशेष्यस्यास्याप्युपादानमिद्धयङ्गीकारे "तस्या मुखेन सदृशं रम्यं नास्ते इत्यत्रापि रम्यमिति विशषणेन तद्विशेष्योपादानसिद्धया उपमानोपादानसिद्धेः उपमानानुपादाने "तस्या मुखेन" इत्याद्युदाहरणं कथं सङ्गच्छत इति चेत् "गर्दभति" इत्यादौ "व्यक्तम्" इत्यत्र "सोऽयम्" इति पठित्वा उपमेयमुपा-देयमिति दिक ।

## विमला

इवादिलुप्तामाह, औपम्येति ।—औपम्यवाचिनः,—इवादेरित्यर्थः लोपे समासे क्विपि च (यत्र कालापा-दिभिः आयलोपः क्रियते, तत्र पाणिनीयैः क्विप् अनुशिष्यते) प्रत्यये द्विधा भवति ।

## लक्ष्मी

वाचकलुप्तां दर्शयति—**औपम्येति** । औपम्यवाचिनः सादृश्यप्रतिपादकस्य इवादिपदस्य तुल्यादिपदस्य च लोपे अप्रतिपादने समासे क्विपि प्रत्यये च द्विधा द्विविधा लुप्तोपमेत्यत्राप्यनुषङ्गः । **इदमत्रापि बोध्यम्**—इवा-दिपदासत्त्वे श्रौती साधारणस्यैवासम्भवः, तुल्यादिपदासत्त्वे च तुल्यार्थकवतिप्रत्ययासम्भवेन तद्धितगताया आर्थ्या

अप्यसम्भवः अपवादरूपायाः समासगतायाः प्राप्त्या च वाक्यगताया आर्थ्या अप्यप्राप्तिरित्यवशिष्टत्वात् आर्थी समासगतैकविधा, क्विप् प्रत्ययगता चैकविधेति सम्मेलनेन औपम्यवाचिनो लोपे लुप्तोपमा द्विविधेति ।

वदनमिति । 'करभेण समावूरू करिकुम्भोपमौ कुचौ' इतिमत्पूरितोत्तरार्द्धम् । मृगस्य शावो बालस्तस्याक्षिणीव अक्षिणी नयने यस्यास्तस्याः हरिणशिशुसदृशचञ्चलनयनाया इत्यर्थः, वदनं मुखं सुधाकरमनोहरं चन्द्रवन्मनोज्ञम्। अत्र सुधाकर इव मनोहरमितिविग्रहे 'उपमानानि सामान्यवचनैः २/१/५५ इत्यनेन कर्मधारयसमासादौपम्यवाचिनो लोपे समासगतालुप्तोपमा । **अत्रेदमवगन्तव्यम्**—कर्मधारयसमासे पूर्वपदं तत्सदृशे लाक्षणिकमिति बोधयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते तस्य च लोपो न भवति समासेनैवोपमाविधानात् 'उक्तार्थानामप्रयोग' इतिन्यायेन प्रयोगाभावाल्लोपव्यवहार इति ।

गर्दभतीति 'शुनयत्यन्यगृहेषु पादं न्यस्यन् बुभुक्षितो नित्यम्' इतिमत्पूरितोत्तरार्द्धम् । महात्मनां महनीयचरितानां सुमतीनां गजानाञ्च पुरतः समीपे व्यक्तं स्फुटं श्रुतिपरुषं श्रवणकर्कशं यथास्यात्तथा निनदन् शब्दं कुर्वन् गर्दभति गर्दभ इवाचरति । आर्यागीतिश्छन्दः ।

अत्रेति । 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्य' इति वार्त्तिकेनोपमानवाचकाद् गर्दभपदादाचारेऽर्थे क्विप्प्रत्ययस्तस्य सर्वापहारिलोपविधानात् क्विपो लोपः । साधारणधर्मस्य तु नात्र लोपः 'निनदन्' इतिपदोपादानात् । एवञ्चात्र गर्दभ उपमानम् निनदन् कर्त्ता उपमेयम्, परुषनिनदनं च साधारणो धर्मः केवलमौपम्यवाचकस्य क्विपो लोपेन क्विप्वाचकलुप्तोपमेयम् ।

ननूपमेयस्याप्यत्र लोप इत्यत आह—नचेहेति । लोप इतिवाच्यमिति शेषः । अनिर्द्देशादित्याशयः । निर्द्देशात् उपमेयस्यापि प्रतिपादनात् । विशेषणोपादेनेनैव विशेष्यस्यापि प्राप्तत्वादितिभावः । ननु विशेषणमात्रनिर्द्देशेनैव विशेष्यस्याप्युपस्थितिस्वीकारे 'तस्यामुखेन सदृशं रम्यं नास्ते' इत्यत्रापि रम्यमितिविशेषणेन तद्विशेष्योपस्थितेरपि उपस्थित्या उपमानप्रतिपादनप्राप्तेः उपमानानुपादाने 'तस्या मुखेन' इत्याद्युदाहरणमसङ्गतमितिचेत् ? सत्यम्, 'गर्दभति' इत्युदाहरणे 'व्यक्तम्' इत्यत्र 'सोऽयम्' इति पठित्वा उपमेयस्योपादेयत्वादित्यन्यत्र विस्तरः ।

## रुचिरा

उदाहर्तुं प्रतिजानीते—क्रमेणेत्यादिना । स्पष्टम् । '**वदन**'मित्यादि ।

'**मृगशावाक्ष्या** मृगशावस्य मृगस्य शावो बालस्तस्याक्षिणी इवाक्षिणी यस्यास्तस्यास्तथोक्तायाः । मृगकिशोरनेत्रसदृशचञ्चलनेत्राया इति भावः । पदलोपः, 'उक्तार्थानामप्रयोग' इति नयेनेवस्य चाप्रयोगः (सामान्यधर्मस्याप्यनुपादानान्नात्र केवलं वाचकलुप्तेति नोदाहरणमिदम्) **वदनं** मुखम् । **सुधाकरमनोहरं** सुधाकर इव मनोहरमिति तथोक्तम् । 'उपमानानि सामान्यवचनैः ।' २/१/५५ इति कर्म्मधारयः । 'आत्मानं दर्शयँल्लोकमुदेधयति कौमुदम् ॥" इति शेषः । अत्र साधर्म्यवाचकस्येवस्य समासेऽनुपादानात् समासगा वाचकलुप्ता ॥' यथा वा—'कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् । अवेहि मां किङ्करमष्टमूर्त्तेः ! कुम्भोदरं नाम निकुम्भमित्रम् ॥' इत्यत्र 'कैलासगौर'मित्यत्रेवस्यानुपादानात् । '**महात्मनां** महनीयचरितानां सुमतीनाम्, अथ च-गजराजादीनाम् । **पुरतः** । **व्यक्तं** प्रकटमुच्चैरिति यावत् । **श्रुतिपरुषं** श्रुतौ श्रवणे परुषं यथा भवेत्तथा । निनदन् शब्दं कुर्वन् । **गर्दभति** गर्दभ इवाचरति । 'सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः ।' इति क्विप् । तस्य च-सर्वापहारिलोपवि-

धानात् क्विपो लुप्तत्वम् । अत एवात्र क्विब्लोपेन वाचकलुप्तेयम् । 'उपपादितपुरुषार्थो न्यस्यन् पादान् समुद्धतं सहसा ।' इति शेष: । आर्यागीतिश्छन्द: ॥'

अथ कथं वाचकलोप इत्याशङ्क्याह—अत्रेत्यादि । स्पष्टम् ।

ननु उपमेयस्यापि अत्र लोप इत्याशङ्क्याह—नचेत्यादि । स्पष्टम् । इदं त्ववसेयम्—अत्र-गर्दभ उपमानम्, निनादकर्त्तोपमेयम्, परुषनिनदनं च साधारणो धर्म: । औपम्यवाचकस्य क्विप: केवलं लोप इति वाचकलुप्तैवेयम् । इति । यथा वा—'कुचकलशेष्बलानामलकायामथ पयोनिधे: पुलिने । क्षितिपाल ! कीर्त्तयस्ते हारन्ति हरन्ति हीरन्ति ॥' इत्यत्र 'हार, हर, हीर' शब्दा आचारार्थके क्विपि लुप्ते धातव:, लक्षणया च हारादिसादृश्यं बोधयन्ति ।

**द्विधा समासे वाक्ये च लोपे धर्मोपमानयोः ।**

'तस्या मुखेन' इत्यादौ 'रम्यं' इति स्थाने 'लोके' इति पाठेऽनयोरुदाहरणम् ।

---

## विवृति

क्विपि उदाहरति— **गर्दभतीति** । गर्दभ इवाचरतीत्यर्थे क्विपि चिन्हार्थत्वात्तल्लोपः । यथा 'ग्रामध्वत्' इत्यादौ क्विपो लोपेऽपि कर्तृत्वस्य वाच्यत्वं तथेहापि सादृश्यस्येति सामान्यलक्षणगमनम् । अत्र श्रुतिपरुषनिनादः साधारणधर्मः शब्दोपात्त एव । **निर्देशादिति** । उपमेयस्येत्यनेनान्वयः ॥

एवमेकलोपामुपमामुक्त्वा द्विलोपामाह—'लुप्तोपमा'इत्यनुषज्यते । एवमग्रेऽपि ॥

## विज्ञप्रिया

एवं धर्मलोपे दश, उपमानानुपादाने च द्वे औपम्यवाचिलोपे च द्वे इति चतुर्दशविधामेकलुप्तामुक्त्वा द्विलुप्ताप्रभेदानाह—**द्विधेति** । **रम्यमिति स्थाने** इति । धर्मस्यापि लोपात् ।

## लोचन

एवमेवैकलोपे लुप्तोपमां दर्शयित्वा द्विलोपे दर्शयति । अनयो रुदाहरणं व्युत्क्रमेण इत्यर्थः । इयमपि पूर्ववत् श्रौत्यार्थी चेति चतुर्धा सम्भवति ।

**केचिदिति**—अनेनात्मनोसम्मतिप्रकटनम् । पुनरेकलोपे लुप्तोपमां प्राचीनानुरोधाद् द्विलोपप्रकरणे लक्षयति—**उपमेयस्येति** ।

## कुसुमप्रतिमा

इत्थञ्चैकैकलोपे लुप्तोपमामुक्त्वा इदानीं द्विद्विलोपे लुप्तोपमां दर्शयति द्विधेति । धर्म्मः सामान्यधर्म्मः उपमानञ्च एतयोर्लोपे युगपदुभयोरेवानुपादाने समासे वाक्ये च द्विधा लुप्तोपमेत्यनुषज्यते ।

अत्रापि प्रागुक्तयुक्त रेव पारिशेष्यात् समासगता वाक्यगता चेति द्विविधेत्यनुसन्धेयम् ।

उदाहरणान्तरान्वेषणपरिश्रमपरिहारार्थम् उदाहृतमेव किञ्चित् परिवत्तर्योदाहरति तस्या इति । तस्या मुखेन सदृशं लोके नास्ते" इति पाठे रम्यमिति सामान्यधर्म्मानुपादानात् उपमानानुपादानाच्च वाक्यगता अत्रत्था लुप्तोपमा । "न वा नयनतुल्यम्" इत्यस्यात् यथास्थितमेव पाठे रम्यमित्यनुषञ्जनीयसाम्बधर्म्मानुपादानात् उपमानानुपादानात् तुल्यशब्देन समासाच्च अत्रत्या लुप्तोपमेत्यभिप्रायः ।

न चेदृशपाठेऽपि पूर्वोक्त्या सहास्याः साङ्कर्य्यापत्तिरिति वाच्यम्, पूर्वस्याः केवलोपमानानुपादान एव विषयत्वात्, अस्यास्तु धर्म्मोपमानयोरुभयोरेवानुपादाने विषयत्वादिति ।

## विमला

वदनमिति ।—मृगशावाक्ष्याः,—मृगशावस्य अक्षिणी इव अक्षिणी यस्या इति बहुव्रीहौ अक्षिपदलोपः, इवार्थस्य समासगम्यतया इवपदाप्रयोगः । चञ्चलत्वस्य शब्दानुपात्तत्वात् लोप इतीदं वक्ष्यमाणत्रिलोपोदाहरणम् । वदनं सुधाकर इव मनोहरम् इति विग्रहे "उपमानानि सामान्यवचनैः" (२/१/५५ पा.) इति कर्मधारयसमासे इवेत्यस्य औपम्यवाचकस्य लोपे समासगता लुप्ता । एतदेव प्रकृतोदाहरणम् । क्विपि उदाहरति, गर्दभतीति ।—महात्मनां पुरतः,—अग्रतः, श्रुतिपरुषं—श्रोत्रकटु यथा स्यात् तथेत्यर्थः, निनदन् व्यक्तं—स्पष्टं, गर्दभति—गर्दभ इवाचरति, स इव आचरति इत्यर्थे "सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्यः" इति 'गर्दभ' इत्युपमानपदात् आचारेऽर्थे क्विप्, अस्य च लोपादौपम्यवाचकलुप्तेयम् । यथा "ग्रामध्वत्" इत्यादौ क्विपो लोपेऽपि कर्तृत्वस्य वाच्यत्वं, तथा इहापि सादृश्यस्य इति सामान्यलक्षणगमनम् । अत्र श्रुतिपरुषनिनादः साधारणधर्मः शब्दोपात्त एव ।

## लक्ष्मी

एवं धर्मलोपे दशउपमानानुपादाने च द्वे, औपम्यवाचिलोपे च द्वे मिलित्वा चतुर्द्दशविधा सैकलोपामुपमामभिधाय सम्प्रति द्विलोपां तामुपपादयति—द्विधेति । धर्मः साधारणधर्मः उपमानञ्च अनयोर्लोपे युगपदुभयोरेवाप्रयोगे समासे वाक्ये च द्विधा द्विविधा लुप्तोपमेत्यनुषङ्गः । अत्रापि पूर्वोक्तेरेवावशिष्टत्वात् समासगता वाक्यगता चेति द्विविधेत्युन्नेयम् ।

उदाहरणान्तरगवेषणखेदापनोदाय उदाहृतमेव किञ्चित् परिवर्त्तनं विधायोदाहरति—तस्या इति । 'तस्या मुखेन सदृशं लोके नास्ते' इति पाठे रम्यमिति साधारणधर्माप्रतिपादनात् उपमानाप्रतिपादनाच्च वाक्यगता अत्रत्या लुप्तोपमा । 'न वा नयनतुल्यम्' इत्यत्र पाठापरिवर्त्तने रम्यमित्यनुषञ्जनीयसाधारणधर्माप्रतिपादनात् तुल्यपदेन समासाच्च समासगता अत्रत्या लुप्तोपमेत्याशयः । नचैवं पाठकल्पने प्रागुपपादितया सहास्याः साङ्कर्यापत्तिः शङ्क्या, तस्या उपमानमात्राप्रतिपादन एवं सत्त्वात् अस्यास्तु धर्मोपमानयोर्द्वयोरेवाप्रतिपादने सत्त्वात् ।

## रुचिरा

धर्मोपमेयलुप्तायाः पूर्वमेवोपमेयलुप्ताया अपि निर्देशमुपमेयलोपनिर्देशोपक्रमौचित्येन मन्वानस्तामनिर्दिश्य धर्म्मोपमानलुप्तां तावन्निर्दिशति-८७ **द्विधा समास** इत्यादिना ।

**८७ धर्मोपमानयोः** । लोपेऽप्रयोगे । 'धर्मवाचकलुप्तोपमे'ति शेषः । **वाक्ये** । **समासे** । च 'सम्भवतीत्यतः'इति शेषः । **द्विधा** ।

उदाहरति—**'तस्या मुखेन'** इत्यत्र 'तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम् ।' इत्युदाहरण इत्यर्थः । **'रम्य'मिति स्थाने** । **'लोके' इति पाठे** । **अनयोः** वाक्यगायाः समासगायाश्चेति द्विविधाया धर्मवाचकलुप्ताया इति भावः । 'क्रमेणे'ति शेषः । **उदाहरणम्** । अयम्भावः—'तस्या मुखेन सदृशं लोके नास्ते न वा नयनतुल्यम् ।' इत्यत्र क्रमात्—वाक्यगा समासगा चेयम् । यथा वा—'गाहितमखिलं विपिनं परितो दृष्टाश्च विटपिनः सर्वे । सहकार ! न प्रपेदे मधुपेन तथाऽपि ते समं जगति ॥' 'ढुंढोलंतो मरिहिसि कंटअकलिआणि केअइवणइं । मालइकुसुमसरिच्छं भमर ! भमंतो ण पाविहिसि ॥' इत्यनयोः पूर्वत्र 'सम'मित्यस्यासमस्तत्वाद्वाक्यगा, परत्र 'सरिच्छं (सदृशम्)' इत्यस्य समस्तात् पुनः समासगा ।

**क्विप्समासगता द्वेधा धर्मेवादिविलोपने ॥ २१ ॥**

उदाहरणम्—

**'विधवति मुखाब्जमस्याः'**

अत्र 'विधवति' इति मनेहरत्व-क्विपप्रत्यययोर्लोपः। केचित्त्वत्राऽऽय प्रत्ययलोपमाहुः। 'मुखाब्जं' इति च समासगा।

---

## विवृति

**विधवतीति**। विधुरिव चरतीत्यर्थः। मुखमब्जमिवेति 'व्यघ्राद्यैस्तद्गुणस्तुयस्य' इति कर्मधारयः। अत्रेवादिसौरभाद्योर्लोपः। एवं 'शशाङ्कवदना' इत्यादिबहुव्रीहावप्येतदुदाहरणं बोध्यम् ॥

## विवृतिपूर्तिः

**विधवतीति**। विधुरिवाचरति विधवति विधुसदृशो भवति ॥

**मुखाब्जमिति**। 'मुखमब्जमिव' इति विग्रहे 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनेन समासः। अयं समास उपमानोपमेययोः समानलिङ्गत्व एव भवति विभिन्नलिङ्गत्वे मयूरव्यंसकादित्वात्समासः स च रूपकरूप इति शेखरादौ स्थितम् ॥

## विज्ञप्रिया

**विधवतीति**—विधुरिवाचरति इत्यर्थः। क्विपो लोप एव। **मुखाब्जमितीति**। मुखमब्जमिवेति पुरुष-व्याघ्रादिसमासः। न चात्र रूपकमेव नोपमेति वाच्यम्, उपमितं व्याघ्रादिभिः सामान्याप्रयोगे इति पाणिनिसूत्रेण साधारणधर्माप्रयोगे रूपकबाधया उपमानविधानात्। साधारणधर्मप्रयोगसत्त्वे एव रूपकसम्भवात्।

## कुसुमप्रातिमा

क्विति। धर्मः सामान्यधर्मः इवादिः सादृश्यवाचकः एतयोरुभयोरेव विलोपने युगपदनुपादाने क्विपप्र-त्ययगता समासगता चेति द्वेधा युनद्वि विधा लुप्तोपमेत्यनुषङ्गः। अत्रापि सम्भवपरत्वात् क्विपप्रत्ययगतत्वमतिरि-क्तमुपादीयते पूर्वोक्तयुक्तेः पारिशेष्याच्च श्रौत्यार्थीमध्ये केवलसमासगतत्वमदीयत इति ध्येयम्।

**विधेति। "विधवति मुखाब्जमस्याः कुन्दति नितरां तनुतनुदशनालौ।**

**चम्पकति निखिलमङ्गं तदिदं किमपि तरुणीरत्नम् ॥"**

इति मत्पूरितपरत्रिपादः पद्यसमुदायः।

अत्रेति। विधुरेवाचरतीति विधवति। एवञ्च मनोहरत्वरूपसामान्यधर्मस्य लोपोऽनुपादायम्। "सर्वप्रा-तिपदिकेभ्यः क्विप् वा वक्तव्यः" इति वार्त्तिकोक्त्या विहितस्य सादृश्यवाचकस्य क्विप्रत्ययस्य च सर्वापहारि-

त्वल्लोप: । कलापमते तु “कर्त्तुरायिः सलोपश्च” इत्यनेन विहितस्य चाये: “आयिलोपश्च विज्ञेय:” इति दुर्गसिंहोक्त्या लोप: ।

मुखाब्जमिति । मुखमब्जमिव इति विग्रहे “उपमित व्याघ्रादिभिः सामान्याप्रयोगे” इत्यनेन कर्म्मधारयसमासात् मनोहरत्वरूपसामान्यधर्म्मलोपात् इवादिलोपाच्च समासगता लुप्तोपमेयमित्यर्थ: । न च मुखमेवाब्जमिति मयूरव्यं संक्रादित्वात् रूपकसमास आशङ्कनीय:, पद्मस्य चन्द्रतुलाचरणासम्भवेन विधवतीत्यस्य उपमाया: साधकत्वात् रूपकस्य च बाधकत्वात् । चन्द्रमुखीति वक्तुब्रीहावपि समासगा द्रष्टव्या ।

केचिदिति । न केवलं गर्दभतीति पूर्वोदाहरणे विधवतीत्यत्रापीत्यर्थ:, क्विप्प्रत्ययलोपात् प्रत्ययलोपमेवाहु:, न पुन: सादृश्यवाचकलोपमिति तात्पर्य्यम्। अत्रास्वरसतावीजन्तु केवलप्रत्ययत्वेन प्रत्ययस्योपादानमनुपादानं वा उपमाया अप्रयोजकमेव सादृश्याभिधाना भावात् । सादृश्यवाचिप्रत्ययलोपाभिधाने तु स्वपक्षनिक्षेप एवेति ।

उपमानलोपे उपमानसंसृष्टधर्म्मेवादिलोपे च लुप्तोपमामभिधायेदानीमुपयेयलोपे तत् संसृष्टंधर्म्मलोपे च लुप्तोपमामभिधत्ते उपेति ।उपमेयस्य लोपे अनुपादाने तु क्यचि प्रत्यये, कलापमते यिनि, मुग्धबोधमते च क्ये, एका एकंविधा लुप्तोपमा स्यात् ।

## विमला

निर्देशादिति ।—उपमेयस्य इत्यनेनान्वय: ।

एवम एकलोपामुपमामुक्त्वा द्विलोपामाह, द्विधेति ।—धर्मस्य उपमानस्य च उभयो: लोपे समासे वाक्ये च द्विधा भवति, लुप्तोपमा इत्यनुषज्यते, एवमग्रेऽपि ।

प्रक्रारान्तरेण हिलोपामाह, क्विबिति ।—धर्मस्य इवादेश्च उभयोर्विलोपने क्विप्समासगतत्वेन द्विप्रकारा भवतीत्यर्थ: ।

विधवतीति ।—अस्या: मुखाब्जं—वदनसरोजं, विधवति—विधुरिव—चन्द्र इवाचरतीति तथा, चन्द्रसदृशं सम्पद्यते इति यावत् । मुखाब्जमिति ।—मुखम् अलमिवेति विग्रहे “उपमितं व्याघ्रादिभिः सामान्याप्रयोगे” (२/१/५६ पा.) इति औपम्यवाचकस्य इवादे:, तथा धर्मस्य मनोहरत्वसौरभादेश्च लोप: । एवं “शशाङ्क वदना” इत्यादिबहुब्रीहावप्येतदुदाहरणं बोध्यम् ।

## लक्ष्मी

क्विबिति । धर्म: साधारणधर्म:, इवादि: सादृश्यवाचक:, अनयोरुभयोरेव विलोपने युगपदनभिधाने क्विप्रत्ययगता समासगता चेति द्वेधा पुनर्द्विविधा लुप्तोपमेत्यनुषञ्जनीयम । सम्भवपरादेवात्रापि क्विप्रत्ययगतत्वं भिन्नं गृह्यते पूर्वोक्तयुक्ते: अवशिष्टत्वाच्च श्रौत्यार्थीमध्ये केवलसमासगत्वमित्यभिधीयत इत्यवगन्तव्यम् ।

विधवतीति । ‘विधवति मुखाब्जमस्या: उत्पलयति लोचने तन्व्या: ।

हस्तीयति मन्दगमनात् तदिदं युवजनमोहनं विधत्ते ॥

अत्र मत्पूरितांशत्रयम् ।

उदाहरणं संयोजयति—अत्रेति । विधुरिव आचरति विधवति विधवति विधुसदृशो भवति । मनोहरत्व-रूपस्य साधारणधर्मस्य तद्वाचकस्य क्विप्प्रत्ययस्य च लोपः । तथाहि विधुमुखयोः साधारणो धर्मो मनोहरत्वं तस्य चाभिधानमेव नेति लोपसदृशत्वाल्लोपः, 'सर्वप्रातिपदिकेभ्यः क्विव्वा वक्तव्यः' इतिवार्त्तिकेन सादृश्यप्रतिपाद-कस्य विहितस्यापि क्विप्प्रत्ययस्य 'वेरवृक्तस्य' ६/१/६७ इत्यादिना सर्वापहारी लोपः । कलापमते तु 'कर्त्तुरायिः सलोपश्च' इत्यनेन विहितस्य आयिप्रत्ययस्य 'आयिलोपश्च विज्ञेयः' इत्यनेन लोपः ।

मुखाब्जमिति । 'मुखमब्जमिव' इति विग्रहे 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' २/१/५६ इत्यनेन कर्मधारयसमासः । अयं समासः उपमानोपमेययोः समानलिङ्गत्व एव भवति विभिन्नलिङ्गत्वे मयूरव्यंसकादित्वात् समासः स च रूपकरूपः । एतेन मुखमेवाब्जमिति मयूरव्यंसकादित्वात्समासो न भवतीति वदन्तः परास्ताः । एवञ्चात्र मनोहरत्वरूपसाधारणधर्मलोपात् सादृश्यवाचकेवादिलोपाच्च समासगता लुप्तोपमेयमित्यर्थः ।

परमतेन समाधत्ते—**केचिदिति । अत्र** पूर्वोदाहरणे गर्दभतीत्यत्रैव न किन्तु विधवतीत्यत्रापीत्यर्थः, आयिप्रत्ययलोपात् प्रत्ययलोपमाहुः । एषामयमाशयः—अत्रायिप्रत्यय एव तुल्याचाररूपसाधारणप्रतिपादकः तस्य च सर्वापहारी लोपः तेनानुषङ्गिको धर्मलोपो न तु सादृश्यवाचकलोप इति । केचिदित्यनेनास्वरसः सूचितस्तद्बी-जन्तु—प्रत्ययत्वमात्रेण प्रत्ययस्याभिधानमनभिधानं वा उपमाया अप्रयोजकमेव सादृश्यप्रतिपादनाभावात् । सादृ-श्याभिधायिप्रत्ययलोपप्रतिपादेन तु स्वपक्षनिक्षेप एवेति ।

## रुचिरा

धर्म्मवाचकलुप्तां निर्दिशति—८८ **धर्म्मेवादिविलोपने** धर्म्मश्चेवादिश्च तयोर्विलोपनं तस्मिन्सती-त्यर्थः । 'लुप्तोपमे'ति शेषः । **क्विप्समासगता** क्विब्गता समासगता चेति भावः । **द्विधा** ॥ ७४ ॥

उदाहर्त्तुकाम आह-**उदाहरणं** यथा—"**अस्याः । मुखाब्जं** मुखमब्जमिवेति तथोक्तम् । 'उपमितं व्याघ्रा-दिभिः सामान्यप्रयोगे ।' २/१/५६ इति समासः । **विधवति** विधुश्चन्द्रः स इवाचरतीत्यर्थः । विधुसदृशं भवतीति भावः । 'अब्जति नयनद्वयं च रम्भोरोः । ऊरवति तथा करभः सौभगसर्वस्वभूतायाः ॥' इति शेषः । आर्य्या छन्दः ॥"

उदाहरणं समर्थयते—अत्र 'विधवति मुखाब्ज' मित्यत्र । **'विधवति' इति** 'पदे' इति शेषः । मनोहरत्व-क्विप्प्रत्यययोर्मनोहरत्वरूपस्य साधारणधर्म्मस्य तद्वाचकस्य च क्विप्प्रत्ययस्य च लोपस्येति भावः । **लोपः** । अयम्भावः—अत्र मनोहरत्वं विधुमुखयोः साधारणो धर्मः, स चोपात्त एव नेति तस्य लोपसदृशत्वाल्लोपः, तत्प्रतिपादकतयोपस्थितस्यापि क्विपः 'वेरपृक्तस्य ।' ६/१/६७ इति सर्वापहारी लोपः । तस्मात् स्फुटमनयोर्लो-पाद्धर्म्मवाचकलुप्तात्वम् । इति ।

परमतेन समाधत्ते—**केचित्** । तु । अत्र 'विधवति' इत्यत्र । **अपि । प्रत्ययलोपम्** । आहुः । **'मुखाब्जम्' इति** । च समासगा । एषामयमभिप्रायः—अत्र क्विप्प्रत्ययः एव तुल्याचाररूपसाधारणवाचकः, तस्य च 'वेरपृ-क्तस्य ।' ६/१/६७ इति सूत्रेण नित्यं लोपः, तेनानुषङ्गिको धर्मलोपः, नतु ऐच्छिकः ।' इति । केचिदित्यनेनास्वार-स्येद्भावनम् । 'विधवति विभया वदन' मित्युक्तौ धर्मोपादानस्यासङ्गत्यापत्तेः । अत एवाहुः—यद्यपि आचारार्थे क्विपि धर्मलोपो न सम्भवति, तथाऽपि 'वेरपृक्तस्य ।' ६/१/६७ इति सूत्रेण लोपात् धर्मलोपस्यापि व्यवहारः । वस्तुतस्तु—अत्रैच्छिको धर्मलोपः ।' इति ।

**उपमेयस्य लोपे तु स्यादेका प्रत्यये क्यचि ।**

यथा—

**'अरातिविक्रमालोकविकस्वरविलोचनः ।**

**कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥'**

अत्र 'सहस्रायुधमिवात्मानमाचरति' इति वाक्ये उपमेयस्यात्मनो लोपः । न चेहौपम्यवाचक-लोप उक्तादेव न्यायात् । अत्र केचिदाहुः—'सहस्रायुधेन सह वर्तत इति ससहस्रायुधः स इवाचरतीति वाक्यात्ससहस्रायुधीयतीति पदसिद्धौ विशेष्यस्य शब्दानुपात्तत्वादिहोपमेयलोपः' इति तन्न विचा-रसहम् ? कर्तरि क्यचोऽनुशासनविरुद्धत्वात् ।

---

## विवृति

**उपमेयस्यात्मन इति ।** कर्मक्यचोर्योगे कर्मण एवोपमेयत्वं तस्याप्रयोगे तथेति भावः ।

## विवृतिपूर्तिः

**सहस्रायुधमिति ।** अत्र 'उपमानादाचारे' इत्यनेनोपमानवाचकात्सहस्रायुधमिति कर्मपदादाचारेऽर्थे क्यच् । आचारोऽत्र दुर्जयत्वादिः । तथा च सहस्रायुधमिवात्मानमाचरतीत्यर्थादात्मात्रोपमेयः । यद्यपीह स इति तच्छब्देन साक्षदुपात्तः कर्तैवोपमेयस्तथापि कर्मत्वेनोपमेयभूत आत्मा कर्मत्वेन नोपात्त इति यथोक्तोदाहरणम् ॥

कर्तरीति । 'उपमानात्—' इति शास्त्रेण कर्मण्येव क्यचोऽनुशासनादित्यर्थः । ।

## विज्ञप्रिया

इत्थं द्विलुप्ताश्चतस्रः एकलुप्ताश्चतुर्दशोक्ता इत्यष्टादशोक्त्वा पुनरेकलुप्तामेकामाह—**उपमेयस्येति । अरातीति । सहस्रायुधीयतीति ।** कृपाणोदग्रदोर्दण्डोऽपि सहस्रायुधो यस्तमिवात्मानमाचरतीत्यर्थः ।

नच सहस्रायुधीयते इत्येवमपि सम्भवात् क्यङा चापि अस्याः सम्भव इति वाच्यम् । क्यङन्तस्याऽकर्म-कत्वेन कर्मभूतस्यात्मनः उपमेयस्याऽत्र प्रसक्त्यभावात् । नचेत्याशङ्क्योत्तरयति—**उक्तादेवेति ।** क्यच एव तद्वाचकत्वस्योक्त्वादित्यर्थः । ननु क्यजर्थस्य आचारस्य साधारणधर्मत्वमनवधाय पौरं सुतीयतीत्यादिकं धर्मलु-प्तत्वेन प्रागुदाहृतं, तत्कथमत्र उपमेयमात्रलोपे उदाहृतम्, आचारस्य साधारणधर्मत्वानवधानेन तस्यापि लोपाद् इति चेन्न, अरातीत्यादेः साधारणधर्मवत्त्वेऽवधानात् । सहस्रायुधपुरुषस्यापि तादृशविलोचनत्वात् । केचित्तु कर्मभूत-स्यात्मन उपमेयस्याऽत्र न लोपः । "अकर्मके कर्त्तरि वा" अत्र क्यचो विधानात् । तथा च कर्तैवात्रोपमेयस्तस्य च विशेष्यतावच्छेदकेन रूपेणाननुपादानाल्लोप इत्याहुः । तन्मतमाह—**अत्र केचिदिति ।** शब्दानुपात्तत्वादित्यर्थः । तन्मते कर्त्तरि विहितस्य क्यच आख्यातस्य च कर्तृत्वेन रूपेण वाचकत्वात् । अतो विशेष्यतावच्छेदकेन रूपेणा-नुपादानात् । **अननुशासनादिति ।** अकर्मके कर्त्तरीत्यर्थः । तथा च दर्शितार्थे ईदृशप्रयोगोऽसाधुरेवेत्युक्तं पुत्रीय-

तीत्यादौ कर्त्तृबोधस्तु कर्त्राख्यातादेवेति बोध्यम् । स इत्यनेन विशेष्यतावच्छेदकेन रूपेण कर्त्तुरुपादानमस्त्येवेत्यपि तन्मते दूषणं बोध्यम् ।

## लोचन

उक्तादाधारकर्मविहित इति सूत्रव्याख्यानप्रसङ्गे इत्यर्थः । केचिद् चण्डीदासपण्डितादयः । अनुशासनविरुद्धत्वात् कर्त्तरि क्यच एवानुशासनात् । किञ्च "स सहस्रायुधीयति" इत्यत्र क्विप्प्रत्ययस्य औपम्यवाचकत्वादुपक्रमे उपगमः । पर्य्यवसाने तु सम्भावनोत्थापनात् । उत्प्रेक्षा यथा—

**कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे**

**रोलम्बन्ति तमालवालमुकुलोत्तंसन्ति मौलीं प्रति ।**

**याः कर्णे विकचोत्पलन्ति कुचयोरङ्के च कालागुरू-**

**स्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः ।।"** इत्यादौ ।

## कुसुमप्रतिमा

अत्रेयं युक्तिरवधेया—क्यजादौ "इह च यथादि-तुल्यादि विरहात् श्रौत्यादिविशेषचिन्ता नास्ति" इति प्रागु षड्विधत्वसम्भावनाया एवाभावात् तद्विलक्षणैकैकविधेति । केचित्तु श्रौतीभिन्नाया एवार्थीत्वाभ्युपगमात् अर्थानुसन्धानेनैव सादृश्यावगमाच्च इयमपि लुप्तोपमा आर्थीविशेष एवेति वदन्ति ।

अरातीति । अरातिविक्रमस्य शत्रु पराक्रमंस्य आलोकेन दर्शनेन विकस्वरे समरोत्साहेन विष्वरप्राप्ते विलोचने विशालनयनद्वयं यस्य सः, तथा कृपाणेन असिना उदग्रो वीरसमाजे उन्नतो दोर्दण्डो बाहुदण्डो यस्य सः, स राजा सहस्रायुधीयति सहस्रमायुधानि यस्य स तादृशः पुरुषस्तमिवात्मानमाचरति, एककृपाणेनैव सहस्रसंख्यकायुधकार्य्यकरणादिति भावः ।

नन्वरातीत्यादौ स इति तत्पदेनैवोपमेयनिर्द्देशादुपमेयलोपे कथमिदमुदाहरणं सङ्गच्छत इत्याह अत्रेति । तथा च सहस्रायुधांशे उपमेयभूतस्यात्मनो लोपमादायैव इदमुदाहरणमित्यभिप्रायः । न चात्र सामान्यधर्म्मस्यापि लोप इति वाच्यम्, पूर्वार्द्धेनैव तस्य निर्द्देशात् ।

नेति । इह सहस्रायुधीयतीत्यत्र, औपम्यवाचकस्य इवादेर्लोप इति वाच्यमिति शेषः । उक्तादेव न्यायात् "इदञ्च केचित्" इत्यादिप्रागुक्तयुक्तेः ।

उक्तोदाहरणे प्रकारान्तरेणोपमेयलोपवादिना मतं दूषयितुमाह अत्रेति । पदसिद्धौ सत्याम् । विशेष्यस्य ससहस्रायुधीयतीति क्रियायाः कर्त्तुः, शब्दानुपात्तत्वात् केनचित् शब्देनानुपादानात् । कर्त्तरि कर्त्तृपदे स्वाव्यवहितपूर्वे सति कर्त्तृकारकादित्यर्थः, क्यचः कलापमते यिनः, अनुशासनविरुद्धत्वात्सूत्राभावादित्यर्थः । तथा च "उपमानादाचारे" इत्यनुशासनेन कर्म्मभूतादेव नाम्नः क्यज् विधीयत इति कर्त्तृभूतात् ससहस्रायुधशब्दात् क्यच् प्रत्ययस्यासम्भव एवेति भावः ।

## विमला

उपमेयस्येति ।—उपमीयते य इति उपमेयः तस्य ।

अरातीति ।—अरातीनां—शत्रूणां, विक्रमस्य आलोकेन—दर्शनेन, विकस्वरे—विकासं गते, विस्फारिते इत्यर्थः, विलोचने यस्य तथाभूतः, तथा कृपाणेन—खड्गेन, उदग्रः—भीषणः, दोर्दण्डः—बाहुदण्डः यस्य तथोक्तः सः सहस्रायुधीयति—सहस्रायुधमिव आत्मानमाचरतीत्यर्थः, इह ["उपमानादाचारे"(३/१/१० पा.) इत्युपमानबोधकात् कर्मपदात् आचारार्थे क्यच्प्रत्ययः] दुर्द्धर्षत्वादिरिहाचारः ।

सहस्रायुधमिवात्मानमाचरति इति आत्मन्युपमेयता । यदि च अत्र "सः" इति साक्षात् तच्छब्दपरिगृहीते कर्त्तर्य्येवोपमेयता, तथा सत्यपि कर्मतयोपमेयस्यात्मनः कर्मतयैवेहोपादानं सम्मतम् इति उक्तमेवोदाहरणं युज्यते । उपमेयस्यात्मन इति ।—कर्मक्यचोर्योगे कर्मण एवोपमेयत्वं, तस्याप्रयोगे तथेति भावः । उक्तादेवेति—क्यजादेः सादृश्यबोधकत्वव्यवस्थापनरूपात् कथितादित्यर्थः, न्यायात्—युक्तेः । कर्त्तरीति ।—अत्र "उपमानात्—" (३/१/१० पा.) इति सूत्रेण कर्मार्थे एव क्यचो निर्देशात् इत्याशयः, अनुशासनविरुद्धत्वात्—व्याकरणशास्त्रविरोधात्, आधारकर्मणोरेव तद्विधानादिति भावः ।

## लक्ष्मी

इत्थं द्विलुप्ताश्चतस्र एकलुप्ताश्चतुर्दशोक्ता इत्यष्टादशाभिधाय पुनरेकलुप्तामेकामुपपादयति—**उपमेयस्येति** । उपमेयस्य लोपे अनभिधाने अप्रयोगे तु इति यावत्, क्यचि प्रत्यये कलापमते आयिः, एका एकविधा लुप्तोपमा स्यात् 'लुप्तोपमे'त्यस्यानुषङ्गः पूर्ववदेव ।

**अत्रेदं रहस्यम्**—'इह च यथादितुल्यादिविरहात् श्रौत्यादिविशेषचिन्ता नास्ति' इति पूर्वोक्तदिशा क्यजादौ षड्विधत्वसम्भावनाया एवासम्भवात् तदपूर्वैकैकविधेति । केचित्तु—श्रौत्यतिरिक्ताया एवार्थीत्वस्वीकारात् अर्थानुसन्धानेनैव सादृश्यप्रतीतेश्च इयमपि लुप्तोपमा आर्थीविशेष एवेत्याहुः ।

**अरातीति** । अरातीनां शत्रूणां विक्रमस्य पराक्रमस्य आलोके दर्शने सति यद्वा आलोकेन दर्शनेन विकस्वरे मदङ्गेऽपि शत्रवो विक्रमे दर्शयन्तीतिसाश्चर्यमुद्रे विलोचने विशालनयने यस्य तादृशः 'आलोकौ दर्शनोद्योतो' इति नानार्थकोऽमरः, तथा कृपाणेन खड्गेन उदग्र उद्भटो भयावहो वा दोर्दण्डो दण्डसदृशो बाहुर्यस्य तथाभूतः स वीरो राजा सहस्रायुधीयति सहस्रमायुधानि यस्य स सहस्रायुधः कार्त्तवीर्यार्जुनस्तदमिवत्मानमाचरति । एवञ्च यथा तं दुर्जयं मन्यते तथात्मानमपीति भावः । तथा अभिमानप्रयोजनन्तु निःशङ्कं शत्रुषु प्रविश्यैककृपाणेनैव सहस्रसंख्यकायुधसम्पाद्यस्य सम्पादनम्, अतएवात्र वीररसप्रकर्ष इति विभावनीयम् ।

नन्वरातीत्यादौ 'स' इति तत्पदोपादानेनैवोपमेयस्याभिधानादुपमेयलोपे चेदमुदाहरणं नोचितमत आह—अत्रेति । इतिवाक्य इति । अयम्भावः—'उपमानादाचारे' ३/१/१० इत्यनेनोपमानवाचकात् सहस्रायुधमितिकर्मपदादाचारार्थे क्यच् । आचारोऽत्र दुर्जयत्वादिरूपः एवञ्च सहस्रायुधांशे उपमेयभूतस्यात्मनो लोपमाश्रित्यैव उदाहरणञ्चेदमितिभावः, साधारणधर्मस्याप्यत्र लोपस्तु न शङ्क्यः पूर्वार्धेनैव तदुपादानात् ।

ननु प्रकाशकारेणात्र धर्मवाचकलुप्तात्वमभिहितं तद्विरुध्यत इति चेदत आह—नचेहेति । इह सहस्रायुधीत्यत्र, औपम्यवाचकस्य इवादेर्लोप इति वक्तव्यमितिशेषः, उक्तादेव न्यायादिति । उक्तन्यायश्च क्यजादेः सादृश्यबोधकत्वव्यवस्थापनात्मैव तच्च 'इदञ्च केचित् इत्यादिनोक्तमितिभावः ।

पुनरपि प्रकारान्तरेणोक्तोदाहरणे उपमेयलोपवादिनां मतं निराकर्त्तुमाह—अत्रेति । ससहस्रायुध इत्यत्र 'सहस्य सः संज्ञायाम्' ६/३/७८ इत्यनेन सादेशः । ससहस्रायुध इत्यर्थः । पदसिद्धौ सत्याम्, विशेष्यस्य

ससहस्रायुधीयतीतिक्रियायाः कर्त्तुः, शब्दानुपात्तत्वात् केनचिच्छब्देन साक्षादनभिधानात्। उपमेयलोपः विशेष्यस्यैवोपमेयभूतत्वादित्याशयः। खण्डयति—**तन्नेति**। कर्त्तरि कर्त्तृपदे स्वाव्यवहितप्राग्वर्त्तित्वे सति कर्तृकारकादित्यर्थः, क्यचः कलापमते आयिन, अनुशासनविरुद्धत्वात् अनुशासनसूत्राभावादित्यर्थः, तथा च 'उपमानादाचारे' ३/१/१० इतिशास्त्रेण कर्मण्येवोपपदे नाम्नि क्यचोऽनुशासनात् कर्त्र्युपपदे तदनुशासनाभावात् विरोधस्य स्पष्टत्वादिति भावः।

## रुचिरा

उपमेयलुप्तां निर्दिशति—**८९ उपमेयस्ये**'त्यादिना।

**८९ उपमेयस्य**। लोपे। तु। 'लुप्तोपमे'ति शेषः। **क्यचि**। **प्रत्यये**। **एका**। **स्यात्**। क्यच्प्रत्ययगतोपमेयलुप्तैकविधैवेति भावः।

उदाहरति—**यथा**—'अरातीत्यादिना।

'**अरातिविक्रमालोकविकस्वरविलोचनो**ऽरातीनां शत्रूणां विक्रमस्तस्यालोको दर्शनं तेन विकस्वरे (मदग्रेऽपि शत्रवो विक्रमं दर्शयन्तीति साश्चर्य्यमुद्रे) विलोचने नेत्रे यस्य तथोक्तः। **कृपाणोदग्रदोर्दण्डः** कृपाणेन करवालन उदग्रो भयावहो दोर्दण्डो बाहुदण्डो यस्य तादृशः। **सः**। **सहस्रायुधीयति** सहस्रायुधः कार्त्तवीर्य्यस्तमिवात्मानमाचरतीति तथा। यथा तं दुर्जयं मन्यते तथाऽऽत्मानमपीति भावः। तथाऽभिमानप्रयोजनं तु निःशङ्कं शत्रुषु प्रविश्यैकेनैव कृपाणेनायुधसहस्र सम्पाद्यस्य शत्रूत्सारणस्य सम्पादनम्। अत एवात्र वीररसप्रकर्ष इति विभाव्यम् ॥९३॥'

उदाहरणसङ्गतये उपमानलोपं दर्शयति-इत्यत्रेत्यादिना। स्पष्टम्।

अयम्भावः—'उपमानादाचारे।' ३/१/१० इत्यनेनोपमानवाचकात् 'सहस्रायुध'मिति पदात् आचारार्थे क्यच्। आचारोऽत्र दुर्जयत्वरूपः। तथा च-सहस्रायुधमिवात्मानमाचरतीत्यर्थात् अत्रात्मोपमेयः, तस्य चाप्रयोग इति लोपः। यद्यपि—'स' इति पदेन साक्षादुपात्तः कत्तोपमेय एवाथापि कर्म्मत्वेन विवक्षित आत्मोपमेयः, तस्य च कर्म्मत्वेनानूपादानाल्लोप इति।

ननु प्रकाशकारेणात्र कथं धर्मवाचकलुप्तात्वमिति चेत्! मैवं शङ्कीरित्याह-इह। **औपम्यवाचकलोपः**। च। न। कुत इत्याह—**उक्तात्**। **एव**। **न्यायात्**। उक्तन्यायश्च क्यजादेः सादृश्यबोधकत्वव्यवस्थापनात्मैव।

अत्र परमतं निराकरोति-अत्र 'अराति' इत्युदाहृते पद्ये। **केचित्**। **आहुः**। **सहस्रायुधेन**। **सह**। **वर्त्तते**। **इति**। ससहस्रायुधः 'सहस्य सः सञ्ज्ञायाम्।' ६/३/७८ इति सादेशः। स सहस्रायुध इत्यर्थः। **इव**। **आचरति**। **इति वाक्यात्**। '**स सहस्रायुधी'ति पदसिद्धौ विशेष्यस्य शब्दानुपात्तत्वात्** साक्षादनुपादनात्। इह। उपभेयलोपः। विशेष्यस्यैवोपमेयभूतत्वादिति भावः। **इति**। **तत्**। **न विचारसहम्**। **कर्त्तरि क्यचः**। **अनुशासनविरुद्धत्वात्**। अनुशासनं हि—'उपमानादाचारे।' ३/१/१० इति, तच्च कर्म्मण्येव क्यचमनुशास्ते इति फुटं विरुद्धमिति भावः। यथा वा मम—'सहस्रनयनीयन्त्यनिमिषीयन्ति च प्रभो! अशेषाद्भुतकर्म्माणं त्वां विलोक्य तदा तदा॥' इति।

**धर्मोपमेयलोपेऽन्या—**

यथा—

'यशसि प्रसरति भवतः क्षीरोदीयन्ति सागराः सर्वे।'

अत्र क्षीरोदमिवात्मानमाचरन्तीत्युपमेय आत्मा साधारणधर्मः शुक्लता च लुप्तौ।

---

## विवृति

**उक्तादेवेति**। क्यजादेः सादृश्यबोधकत्वव्यवस्थापनादित्यर्थः। **अनुशासनविरुद्धत्वादिति**। अनुशासनाभावादित्यर्थः॥

## विज्ञप्रिया

क्षीरोदीयन्तीत्यत्र साधारणधर्मलोपप्रदर्शनमाधारस्य साधारणधर्मत्वानवधानादिति प्रागेव दर्शितम्। काव्यप्रकाशकृता तु एवादृशस्थले आचारस्यैव साधारणधर्मत्वादुपमेयलोपमात्रोदाहरणमेवोच्यते। क्षीरोदं यथा चरति तथात्मानमिति प्रतीत्या कर्मत्वेनोभयधर्मत्वादाचारस्य।

## कुसुमप्रतिमा

धर्म्मेति। धर्म्मः सामान्यधर्म्म उपमेयञ्च एतयोर्लोपे युगपदनुपादाने अन्या अपरैकविधलुप्तोपमा स्यादित्यनुषज्यते।

अत्रापि प्रागुक्तयुक्तेरेवैकविधेति भाव्यम्।

यशसीति। "प्रवहति वितरणसलिले नदीयन्ति मरुभूमयश्च॥" इति मत्पूरितपरार्द्धम्।

अत्रेति। अत्रापि क्षीरोदांशे आत्मन उपमेयत्वमिति बोध्यम्।

इदानीम् इवाद्युपमानोपमेयसामान्यधर्म्माणां मध्ये यावत्सम्भवं लोपे लुप्तोपमामाह त्रिलोप इति। त्रयाणाम् उपमान सादृश्यवाचकशब्द साधारणधर्म्माणां लोपे अनुपादाने समासगा समासगता अन्या एकविधा लुप्तोपमा स्यादित्यनुषङ्गः।

## लक्ष्मी

**धर्मेति**। धर्मः साधारणधर्मः उपमेयञ्च, अनयोर्लोपे युगपदनभिधाने अन्या उपमेयलुप्तातो भिन्ना एकविधा लुप्तोपमा स्यादित्यनुषञ्जनीयम्। पूर्वोक्तयुक्तेणात्राप्येकविधेतिबोध्यम्। यशसीति। प्रसरति सर्वतो व्याप्नुवति सर्वे क्षीरोदातिरिक्ताः, क्षीरोदीयन्ति क्षीरोदमिवात्मानमाचरन्ति। आर्या गीतिश्छन्दः।

अत्रेति। क्षीरोदं क्षीरसमुद्रम्। उपमेय इति अत्रापि क्षौरीदांशे आत्मन उपमेयत्वमित्यवधेयम्।

## रुचिरा

धर्म्मोपमेयलुप्तां निर्दिशति—९० अन्योपमेयलुप्तातो भिन्नेति भावः। **धर्म्मोपमेयलोपे**। 'लुप्तोपमे'ति शेषः। इयमपि क्यच्येवेति 'क्यची'ति पूर्वतोऽनुवर्त्तनीयम्।

उदाहरति—**यथा-भवतः**। **यशसि**। **प्रसरति** सर्वतो व्याप्नुवति सतीति भावः। **सर्वे** क्षीरोदातिरिक्ताः। **सागराः**। **क्षीरोदीयन्ति** क्षीरोदमिवात्मानमाचरन्ति। 'द्विषतामपयशसि पुनर्यमुनीयन्ति स्वरापगावाहाः॥' इति शेषः। आर्यागीतिश्छन्दः।

उदाहरणं विशदीकृत्य निर्दिशति—अत्रोदाहृते पद्ये इत्यर्थः। '**क्षीरोदं** क्षीरसमुद्रम्। **इव**। **आचरन्ति**।' इत्ये'वम्भूते विवक्षितेऽर्थे' इति शेषः। **उपमेय** उपमेयभूतः। **आत्मा**। **साधारणधर्मः**। **शुक्लता**। च। 'इति ता'विति शेषः। लुप्तौ इदं बोध्यम्-'सहस्रायुधीयती'त्यत्रेव 'क्षीरोदीयन्ती'त्यत्र क्यच आचारार्थे सद्भावेऽपि न पूर्वत्र धर्मस्यापि लोपः, सहस्रायुधशब्दस्य सहस्रायुधविशिष्टवाचकतापरत्वेन, सहस्रायुधत्वस्य च विवक्षितस्य धर्म्मस्य साक्षादुपादानात्। परत्र तु—क्षीरोदत्वस्याविवक्षिततत्वात् शुक्लत्वमात्रस्य धर्म्मस्य विवक्षिततत्वात्तस्य च नोपादानम्। इति।

**त्रिलोपे च समागता ॥ २२ ॥**

यथा—

**'राजते मृगलोचना ।'**

अत्र मृगस्य लोचने इव चञ्चले लोचने यस्या इति समासे उपमाप्रतिपादकसाधारणधर्मोपमानानां लोपः ।

---

## विवृति

**त्रिलोपे** धर्मोपमानेवादिलोपे ॥

**समास** इति । अत्र लोचनपदस्यैव समासे लोपो विहितः । अन्ययोस्तु गम्यमानत्वम् । ।

## विवृतिपूर्तिः

**मृगलोचनेति ।** मृगलोचने इव लोचने यस्या इति विग्रहे 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च' इति वार्तिकेन बहुव्रीहौ उपमानवाचके 'मृगलोचने' इति सप्तम्यन्ते पूर्वपदे 'लोचने' इत्युत्तरपदस्य लोपः । एवं च लोचनेत्युपमानस्यानुशासनिकइवशब्द-चञ्चलत्वलक्षणसाधारणधर्मयोश्चैच्छिको लोप इति त्रिलोपे समासगा । यद्यप्यत्र लोचनपदस्यैवोपमानवाचकत्वं तथाप्यवयवधर्मेण समुदायस्य व्यपदेशान्मृगलोचनपदस्योपमानपूर्वपदत्वमवधेयम् । 'अनेकमन्यपदार्थे' इति सूत्रेण समानाधिकरणानामेव बहुव्रीहिविधाने क्वचिदुत्तरपदलोपार्थं क्वचिद्व्यधिकरणानामपि बहुव्रीहिविधानार्थमुत्तरपदलोपार्थं च 'सप्तमी—' इत्यादिवार्तिकारम्भः । तत्र सप्तमीपूर्वपदस्य यथा—कण्ठेस्थः कालोऽस्य कण्ठेकालः । 'अमूर्धमस्तकात्—' इति सप्तम्या अलुक् । पदयोः सामानाधिकरण्याद् बहुव्रीहौ सिद्धेऽप्युत्तरपदलोपार्थम् । उपमानपूर्वपदस्य यथा—उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः । अवयवधर्मेण समुदायस्य व्यपदेशाद् उष्ट्रस्योपमानतेत्युपमानपूर्व उष्ट्रमुखशब्दः उपमानोपमेयवृत्तित्वात्पदयोर्वैयधिकरण्यमिति बहुव्रीह्यर्थमुत्तरपदलोपार्थं च वचनमिति भाष्यकैयटयोः स्पष्टम् । मृगपदस्य तल्लोचने लक्षणेति मते तु नेदमुदाहरणम् ॥

## विज्ञप्रिया

प्रभेदान्तरमाह—**त्रिलोपे** चेति मृगलोचनेत्यत्र त्रिलोपं दर्शयति । **अत्र मृगस्येति ।** मृगस्येवेति प्रामादिकः पाठः । लोचने इवेत्येव पाठः । इवकारस्योपमानपरभागनियमात् ।

अलुप्तेति । साधारणधर्मस्य शब्दप्रतिपाद्यत्वे इत्यर्थः ।

## कुसुमप्रतिमा

उक्तानां त्रयाणामनुप दाने समासं विना अन्यत्रासम्भवादियमप्येकविधैवेति बोध्यम् ।

राजत इति । "गजेन्द्रगमना श्यामा कोमला कोकिलस्वना ।

हंसवाणी प्रिया सेयं राजते मृगलोचना ॥" इति मत्पूरितपूर्वत्रिपादं पद्यम् ।

अत्रेति । उपमाप्रतिपादक इवशब्दः, साधारणधर्मश्चञ्चलत्वम्, उपमानञ्च प्रथमलोचनपदम्, एषां लोपोऽनुपादानम्, अतएवात्र त्रिलोपे समासगा लुप्तोपमेति भावः । एकशेषतया द्वितीयलोचनपदस्थितेर्नोपमेयलोप इत्यवधेयम् ।

## विमला

त्रिलोपे इति ।—त्रिलोपे—धर्मोपमानेकादिपलोपे इत्यर्थः ।

अत्रेति ।—मृगलोचना इत्यत्र "सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च" इति वार्त्तिकेन मृगलोचने इव लोचने यस्या इति विग्रहे बहुव्रीहिसमासेलोचने इत्युत्तरपदलोपः, तथा औपम्यवाचकस्य इवशब्दस्य, चञ्चलत्वरूपस्य साधारण धर्मस्य च लोपः । तथा च, उक्तत्रितयलोपात् त्रिलोपे समासगतेयमुपमा । यदि च इह मृगपदासमभिव्याहृतं लोचनपदमेवोपमानबोधकं, तदपि अवयवोपेतसमुदायव्यपदेशवशात् मृगलोचनेति समुदायस्योपमानपूर्वपदता बोध्या; अनेकमन्धपदार्थे" (२/२/२४ पा.) इति तुल्याधिकरणे एव स्थले बहुव्रीहिनिर्देशात् स्थलविशेषे विरुद्धाधिकरणानामपि पदानां तत्समासविधानाय, उत्तरपदलोपाय, क्वचित् केवलमुत्तरपदलोपविधानाय च शास्त्रे पुनः "सप्तमी—" इत्यादिवार्त्तिकसमावेशः । तत्र सप्तमीपूर्वपदस्योदाहरणं यथा—उरसिस्थं लोभ यस्य असौ उरसिलोमा, इह "अमूर्द्धमस्तकात्—" (६/३/१२ पा.) इति सप्तम्या अलुक्; एतयोः समानाधिकरणबहुव्रीहिसम्भवेऽपि उत्तरपदलोपार्थमारम्भः । इह मृगपदस्य तल्लोचने लक्षणा इति केषाञ्चित् सिद्धान्ते तु नोदाहरणमतत् इति बोध्यम् । समासे इति ।—अत्र लोचन पदस्यैव समासे लोपो विहितः, अन्ययोस्तु गम्यमानत्वम् इति ज्ञेयम् ।

## लक्ष्मी

सम्प्रति इवाद्युपमानोपमेयसाधारणधर्माणां मध्ये यथासम्भवं लोपे लुप्तोपमां दर्शयति त्रिलोप इति । त्रिलोपे धर्मोपमानेवादीनामनभिधाने समासगा समासगता अन्या एवंविधा लुप्तोपमा स्यादित्यनुषञ्जनीयम् । धर्मोपमानादीनां त्रयाणामनभिधाने समासं विना अन्यत्रासम्भवादियमप्येकविधैवेत्यवधेयम् ।

**राजत** इति ।

**चन्द्रकान्तिसमानेयं श्यामा बिम्बफलाधरा ।**

**मनोहरा प्रिया साध्वी राजते मृगलोचना ॥ इति मत्पूरितपादत्रयम् ।**

अत्रेति । उपमाप्रतिपादक उपमावाचक इवशब्दः साधारणधर्मश्चञ्चलत्वम्, उपमानञ्चात्र लोचनपदम्, एषां लोपोऽनभिधानम्, अत एवात्र त्रिलोपे समासगा लुप्तोपमेत्याशयः । **अत्रेदम्बोध्यम्**—'मृगलोचना' इत्यत्र मृगशब्देन यदि लक्षणया तल्लोचने विवक्ष्येते तर्हिनेदमुदाहरणं धर्मवाचकोपमानलुप्तायाः मृगस्यैवोपमानभूतत्वात् तस्य च लोपप्राप्तेः । यदा तु मृगलोचने इव चञ्चले लोचने यस्याः सेति विग्रहः क्रियते तदा 'अनेकमन्यपदार्थे' २/३/२४ इति पा० सूत्रभाष्यस्थेन (सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोश्च) इति वार्त्तिकेन 'मृगलोचने' इत्युपमानप्रतिपादकस्य 'लोचने' इत्यस्य बहुव्रीहौ मृगपदोत्तरपदभूतस्य 'लोचने'त्यस्य धर्मस्यालोपे उपमेयभूतस्य द्वितीयस्य 'लोचने' इत्यस्य चाविशेषात्सम्भवति चेदमुदाहरणम् । एवञ्च 'मृगलोचना' इत्युत्तरपदभूतस्य 'लोचने' त्युपमानस्य

इवेत्यौपम्यप्रतिपादकस्य चञ्चलत्वरूपस्य साधारणधर्मस्यानभिधानमितित्रिलोपे समासगेयम्। यद्यप्यत्र लोचनपदस्यैवोपमानप्रतिपादकत्वं तथाप्यवयवधर्मेण समुदायस्य व्यपदेशान्मृगलोचनपदस्योपमानपूर्वपदत्वमवगन्तव्यम्।

## रुचिरा

धर्मवाचकोपमानलुप्तां निर्दिशति—**९१ त्रिलोपे** त्रयाणां धर्मवाचकोपमानानां लोपस्तस्मिन् सतीत्यर्थः। **च। समा' सगा**। 'लुप्तोपमे'ति शेषः ॥ ७५ ॥

ऊदाहरति—**यथा-'मृगलोचना। मृगलोचने इव लोचने यस्यास्तादृशी। 'गजराजगतिश्चन्द्रसुषमा भुवनेश्वरी। मालतीसुरभिः काऽपि' इति शेषः। राजते।'**

अयम्भावः—'मृगलोचना' इत्यत्र मृगशब्देनैव यदि लक्षणया तल्लोचने विवक्षयित्वा 'मृग इव लोचने यस्याः सेति। समासो विधीयेत तर्हि, नेदमुदाहरणं धर्म्मवाचकोपमानलुप्तायाः मृगस्यैवोपमानभूतत्वात् तस्य च लोपाप्रसक्तेः। यदा तु-'मृगलोचने इव चञ्चले लोचने यस्याः से'ति, तदा 'अनेकमन्यपदार्थे।' २/३/२४ इति सूत्रस्य भाष्यस्थेन 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च।' इति वार्त्तिकेन 'मृगलोचने' इति उपमानवाचकस्य 'लोचने' इत्यनेन बहुव्रीहौ मृगपदोत्तरपदभूतस्य 'लोचने' इत्यस्य लोपे उपमेयभूतस्य द्वितीयस्य 'लोचने' इत्यस्य चावशेषादिदमुदाहरणम्। तथा च-'मृगलोचने' इत्युत्तरपदभूतस्य 'लोचने' इत्युपमानस्य 'इवे'ति औपम्यवाचकस्य चञ्चलत्वरूपस्य साधारणधर्म्मस्यानुपादानमिति तेषां त्रयाणां लोपे समासगेयम्। न च लोचनपदस्यैवोपमानवाचकत्वेन मृगलोचनशब्दस्योपमानपूर्वपदकत्वं न स्यादिति वाच्यम्, अवयवधर्म्मेण समुदायस्य व्यपदेशात् मृगलोचनशब्दस्यैवोपमानपूर्वपदकत्वात्। यद्यपि-एवं मृगस्योपमानत्वस्वीकारे मृगपदस्यलोपादुपादानाल्लोपः प्राप्तः, अथाऽपि तथयोपमानत्वावगमकस्य लोचनशब्दस्य लोपादुपमानस्यापि लोपः। इति बोध्यम्। एवम्-गजराजगतिरित्यादावपि इयं निर्बाधा, गजराजगतिरिव मत्ता गतिर्यस्या इत्युपमानवाचकधर्माणां लोपात्। उपमानलोप आनुशासनिको वाचकसाधारणधर्म्मयोर्लोपस्तु ऐच्छिकः। इति।

**तेनोपमाया भेदाः स्युः सप्तविंशतिसंख्यकाः ।**

पूर्णा षड्विधा लुप्ता चैकविंशतिविधेति मिलित्वा सप्तविंशतिप्रकाररोपमा । एषु चोपमाभेदेषु मध्येऽलुप्तसाधारणधर्मेषु भेदेषु विशेषः प्रतिपाद्यते—

---

## विवृति

**तेनेति** । उक्तप्रकारप्रपञ्चेनेत्यर्थः । **एकविंशतिविधेति** । धर्मलोपे दश, उपमानलोपे द्वे, औपम्यवाचिलोपे द्वे, धर्मोपमानलोपे द्वे, धर्मेवादिलोपे च द्वे, उपमेयलोपे धर्मोपमेयलोपे धर्मेवाद्युपमानलोपे चैकैकेत्येकविंशतिविधेत्यर्थः ॥

## विवृतिपूर्तिः

**एकविंशतिविधेति** । प्रायोऽभिप्रायमेतत् । तथाहि—'कोकिल इवालपति कोकिलालापिनी' इत्यत्र 'कर्तर्युपमाने' इति णिनिप्रत्यये, 'चञ्चा पुरुषः सोऽयं यः स्वहितं नैव जानीते' इत्यत्र चञ्चा तृणपुरुष इवेत्यस्मिन्नर्थे 'इवे प्रतिकृतौ' इति कन्प्रत्यये 'लुम्मनुष्ये' इति लुब्विधाने, 'आह्लादि वदनं तस्याः शरद्राकाशशाङ्कति' इत्यत्र आचारक्विपि पदान्तरेण प्रतिपादिते समाने धर्मेऽपि वाचकलुप्ता संभवति । 'यच्चोराणामस्य च समागमो यच्च तैर्वधोऽस्य कृतः । उपनतमेतदकस्मादासीद्वत काकतालीयम् ॥' इत्यत्र काकतालशब्दौ वृत्तिविषये काकतालसमवेतक्रियावर्तिनौ । तेन काकागमनमिव तालपतनमिव काकतालमिवार्थे 'समासाच्च तद्विषयात्' इति ज्ञापकात्सुप्सुपेति समासः । उभयत्रोपमेयं क्रमेण देवदत्तागमनं चोरसमागमश्च । तेन देवदत्तचोरसमागमः काकतालसमागमसदृश इति फलति । ततः 'काकतालमिव काकतालीयम्' इति द्वितीयस्मिन्निवार्थे 'समासाच्च तद्विषयात्' इति छः । ततश्च पतता तालफलेन यथा काकस्य वध एवं समागतैश्चारैर्देवदत्तस्य वध इति तत्त्वम् । यदाह भगवान्भाष्यकारः—'एवं तर्हि द्वाविवार्थौ काकागमनमिव तालपतनमिव काकतालं काकतालमिव काकतालीयम्' इति । एतच्च विवृतं भाष्यप्रदीपकृता—'तत्र काकागमनं' देवदत्तागमनस्योपमानम्, तालपतनं दस्यूपनिपातस्य । तालेन तु यः काकस्य वधः स देवदत्तस्य दस्युना वधस्योपमानमिति' इति । अकस्मादुपनतत्वं च समानो धर्मः । तदाह **वृत्तिकारः**—'अतर्कितोपनतं चित्रीकरणमुच्यते' इति । ततश्चात्र काकागमनतालपतनसमागमरूपस्य पतत्तालकृतकाकवधरूपस्य चोपमानस्यानुपादानात्प्रत्ययार्थोपमायामुपमानलोपः समासार्थोपमायां वाचकोपमानलोपो द्रष्टव्यः । 'पटुपटुर्देवदत्तः' इत्यत्र 'प्रकारे गुणवचनस्य' इत्यनेन सादृश्ये द्विर्भावे 'कर्मधारयवदुत्तरेषु' इत्यनेन समासे धर्मलुप्तेयम् । यो हि शास्त्रादिष्वपटुरेव पटुवदभिनयति स उच्यते पटुपटुरिति । पटुसदृश इत्यर्थः । विस्तरस्तु चित्रमीमांसा-रसगङ्गाधरादावनुसंधेयः ॥

## लोचन

उपसंहरति—तेनेति । लुप्तोपमा चैकविंशतिप्रकारा । तथा हि धर्मलोपेन दश । उपमानानुपादाने द्वौ । इवादिलोपे द्वौ । धर्मोपमानलोपे द्वौ । धर्मे वादिलोपे द्वौ । उपमेयलोपे एकः । धर्मोपमेयलोपे एकः । त्रिलोपे एकप्रकार इति गणनया एकविंशतिप्रकारा लुप्तोपमा । किं चोपमानानुपादाने धर्मे वादिलोपेनेति मिलित्वा प्रकारचतुष्टयं श्रौतमार्थं च सम्भवतीत्यष्टविधमिति पञ्चविंशतिप्रकारा ।

## कुसुमप्रतिमा

उपमापकरणमुपसंहरन्निदानीं समुदायेनोपमयाः सङ्कलनमाह तेनेति। उक्तविधभेदसमूह सम्भवेतेत्यर्थः।

पृथक्कृत्य भेदानां सप्तविंशतिसंख्यकत्वं दर्शयति पूर्णेति। तथा च—

नामानि उदाहरणानि तद्धितगता १...सौरभमम्भोरुहवन्मुखस्य।

समासगता १...कुम्भाविव स्तनौ पीनौ।

वाक्यगता १...हृदय मदयति वदन तव शरदिन्दुर्यथाबाले!।

श्रौती ३—

पूर्णोपमा ६

आर्थी ३—

तद्धितगता १...मधुरः सुधावदधरः।

सम सगता १...पल्लवतुल्योऽतिपेलवः पाणिः।

वाक्यगता १...चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः।

लुप्तोपमा १२

श्रौती २—

सामान्यधर्म्मलोपे ५

आर्थी ३—

समासगता १...वाचः सुधा इव।

वाक्यगता १...मुखमिन्दुर्यथा।

तद्धितगता १...मनोऽश्मवत्।

समासगता १...ओष्ठस्ते बिम्बतुल्यः।

वाक्यगता १...पाणिः पल्लवेन समः।

क्यचि २—

प्रत्यये ५

क्यङि १—

णमुलि २—

आधारात् क्यचि १...अन्तः पुरीयसि रणेषु।

कर्म्मणः क्यचि १...पौरं जनं सुतीयसि।

कर्त्तुः क्यङि १...श्रीस्तव रमणीयते ।

कर्म्मणि णमुलि १...अमृतद्युतिदर्शं दृष्टः ।

कर्तरि णमुलि १... इन्द्रसञ्चारं सञ्चरसि ।

उपमानलोपे २— वाक्यगता १...तस्या मुखेन सदृशं रम्य नास्ते ।

समासगता १...न वा नयनतुल्यं रम्यमास्ते ।

इवादिलोपे २— समासगता १...सुधाकरमनोहरं वदनम् ।

क्विप्प्रत्ययगता १...गर्द्दभति श्रुतिपरुषं व्यक्तं विनदन्

सामान्यधर्म्म उपमासञ्च महात्मनां पुरतः ।

एतयोरुभयोर्लोपे २— समासगता १...लोके न वा नयनतुल्यमास्ते ।

सामान्यधर्म्म इवादिश्च वाक्यगता १... तस्या मुखेन सदृशं रम्यं लोके नास्ते ।

एतयोरुभयोर्लोपे २—क्विप्प्रत्ययगता १...विधवति मुखाब्जमस्याः ।

समासगता १... मुखाब्जमस्याः ।

उपमेयलोपे क्यचि १— कर्म्मणः क्यचि १...विकस्वरविलोचनः ससहसस्त्रायुधीयति ।

सामान्यधर्म्म उपमेयञ्च

एतयोरुभयोर्लोपे १— कर्म्मणः क्यचि १...क्षीरोदीयन्ति सागराः ।

उपमानम्, इवादि, सामान्यधर्म्मश्च

एषां सर्वेषां लोपे १—समासगता १...राजते मृगलोचना ।

इत्यञ्च लुप्तसाधारणधर्म्मत्वेन अलुप्तसाधारणधर्म्मत्वेन च सर्वा एवोपमा द्विविधा भवितुमर्हन्ति तत्राह एषु चेति ।

## विमला

तेनेति ।—उक्तप्रकारप्रपञ्चेनेत्यर्थः ।

एकविंशतिविधेति ।—धर्मलोपे दश, उपमानलोपे द्वे, औपम्यवाचिलोपे द्वे, धर्मेवादिलोपे च द्वे, उपमेय-लोपे धर्मेवाद्युपमानलोपे चैकत्येकविंशतिविधेत्यर्थः ।

## लक्ष्मी

उपमाप्रकरणं समापयन्नधुना साकल्येनोपमायाः सङ्कलनं—दर्शयति—तेनेति । उक्तप्रकारभेदप्रपञ्चेने-त्यर्थः । विश्लेषणं विधाय भेदानां सप्तविंशतिसंख्यकत्वमुपपादयति—**पूर्णेति** । **एकविंशतिविधेति** । अयञ्च प्रायोवादः । तथाहि—'कोकिल इवालपति कोकिलालापिनी' इत्यत्र 'कर्त्तर्युपमाने' इति णिनिप्रत्यये, 'आह्लादिवदनं तस्याः शरद्राका शशाङ्कति' इत्यत्र आचारक्विपि 'चञ्चा पुरुषः सोऽयं यः स्वहितं नैव जानाति' इत्यत्र चञ्चातृणपुरुष

इवेत्यस्मिन्नर्थे 'इवे प्रतिकृतौ' इति पा० सूत्रेण कन्प्रत्यये पदान्तरेण प्रतिपादिते समाने धर्मेऽपि वाचकलुप्ता सम्भवति।

**'यच्चोराणामस्य च समागमो यच्च तैर्वधोऽस्य कृतः।**

**उपनतशतं तदेकस्मादासीद्वत काकतालीयम्॥'**

इत्यत्र काकतालशब्दौ वृत्तिविषये काकतालसमवेतक्रियावर्त्तिनौ। तेन काकागमनमिव तालपतनमिव काकतालमितीवार्थे 'समासाच्च तद्विषयात्' इति ज्ञापकात्सुप्सुपेतिसमासः। उभयत्रोपमेयक्रमेण देवदत्तागमनं चोरसमागमश्च। तेन देवदत्तचोरसमागमः काकतालसमागम्सदृशः। ततः 'काकतालमिव काकतालीयम्' इतिद्वितीयस्मिन्निवार्थे 'समासाच्च तद्विषयात्..इति पा० सूत्रेण छः ततश्च पतता तालफलेन यथा काकस्य बध एवं समागतैश्चौरैर्देवदत्तस्य वध इति रहस्यम्।

यदाह भगवान् भाष्यकारः—एवं तर्हि द्वाविवार्थो काकागमनमिव तालपनतमिव काकतालं काकतालमिव काकतालीयम्' इति। विवृतञ्चैतत् भाष्यप्रदीपकृता कैयटेन—'तत्र काकागमनं' देवदत्तागमनस्योपमानम्, तालपतनं दस्यूपनिपातस्य। तालेन तु यः काकस्य वधः स देवदत्तस्य दस्युना वधस्योपमानमिति। अकस्मादुपनतत्वं च साधरणां धर्मः। तदुक्तं वृत्तिकृता—'अतर्कितोपनतं यत्तु चित्रीकरणमुच्यते' इति। एवञ्चात्र काकागमनतालपसमागमरूपस्य पतत्तालकृतकाकवधरूपस्य चोपमानस्यानभिधानात्रत्ययार्थोपमायामुपमानलोपः समासार्थोपमायां वाचकोपमानलोपोऽवगन्तव्यः। इतोऽधिकजिज्ञासुभिः चित्रमीमांसारसगङ्गाधरादाववलोकनीयम।

पूर्णेति। सप्तविंशतिप्रकारोपमेति। तथाहि—

श्रौती—३

पूर्णोपमा

आर्थी ३—

श्रौती—२

लुप्तोपमा २१

साधारण धर्मलोपे

आर्थी ३—

क्यचि २—

प्रत्यये ५ क्यङि १—

णमुलि २—

उपमानलोपे २—

इवादिलोपे २—

साधारणधर्म उपमानञ्च

अनयोर्द्वयोर्लोपे २—

साधारणधर्मौपम्यवाचकयोर्द्वयोर्लोपे २—

उपमेयलोपे क्यचि १—

साधारणधर्मौपमयोरनयोर्द्वयोर्लोप १—

उपमानम्, इवादिसाधारणधर्मश्च सर्वेषामेषां लोपे १

२७

नामानि । उदाहरणानि ।

तद्धितगता १ सौरभमम्भोरुहवन् ।

समासगता २ कुम्भाविव स्तनौ पीनौ ।

वाक्यगता ३ हृदयं मदयति वदनमित्यादि ।

तद्धितगता १ मधुरः सुधावदधरः ।

समासगता १ पल्लवतुल्योऽतिपेलवः पाणिः ।

वाक्यगता १ चकितमृगलोचनाभ्यामित्यादि ।

समासगता १ वाचः सुधा इव ।

वाक्यगता १ मुखमिन्दुर्यथा ।

तद्धितगता १ मनोऽश्मवत् ।

समासगता १ ओष्ठस्ते बिम्बतुल्यः ।

वाक्यगता १ पाणिः पल्लवेन समः ।

आधारात्क्यचि १ अन्तः पुरीयसि ।

कर्मणः क्यचि १ पौरं जनं सुतीयसि ।

कर्त्तुः क्यङि १ श्रीस्तव रमणीयते ।

कर्मणि णमुलि १ अमृतद्युति दर्शं दृष्टः ।

कर्त्तरिणमुलि १ इन्द्रसञ्चारं सञ्चरसि ।

वाक्यगता १ तस्यामुखेन सदृशं रम्यं नास्ते ।

समासगता १ न वा नयनतुल्यं रम्यमास्ते ।

समासगा १ सुधाकरमनोहरं वदनम् ।

क्विप्प्रत्ययगता १ गर्दभति श्रुतिपरुषमित्यादि ।

समासगता १ लोके न वा नयनतुल्यमास्ते ।

वाक्यगता १ तस्या मुखेन सदृशं रम्यं लोके नास्ते ।

क्विप्रत्ययगता १ विधवति मुखाब्जमस्याः ।

समासगता १ मुखाब्जमस्याः ।

कर्मणः क्यचि १ विकस्वरविलोचनः स सहस्रायुधीयति ।

कर्मणः क्यचि १ क्षीरोदीयन्ति सागराः ।

समासगता १ राजते मृगलोचना ।

२७

अयञ्चोपमाविभागो न सर्वैः स्वीकृतः । तथाचोक्तमप्यदीक्षितेन चित्रमीमांसायाम्—

'एवमयं पूर्णालुप्ताविभागो वाक्यसमासप्रत्ययगोचरतया शब्दशास्त्रव्युत्पत्तिकौशलप्रदर्शनमात्रप्रयोजनो नातीवालङ्कारशास्त्रे व्युत्पाद्यतामर्हति । न वा लुप्तानामयं सामस्त्येन विभाग' इति ।

एवञ्च लुप्तसामान्यधर्मत्वेन अलुप्तसामान्यधर्मत्वेन च सर्वा एवोपमा द्विप्रकारा भवितुं शक्नुवन्ति तत्राह—**एषु** चेति । सप्तविंशतिसंख्याकेषु चेत्यर्थः ।

## रुचिरा

एवं भेदान्निर्दिश्य तत्साकल्यं निर्दिशति—९२ तेनेत्यादिना ।

९२ तेन निर्दिष्टक्रमेण । **उपमायाः । सप्तविंशतिसङ्ख्यकाः** सप्तविंशतिं संख्यान्तीति सप्तविंशतिसङ्ख्यास्त एवेति तथोक्ताः । 'आतश्चोपसर्गे' । ३/१/१३६ इति कः । 'न सामिवचने ।' ५/४/५ इति ज्ञापकात् स्वार्थेकन् । **भेदाः । स्युः ।**

कथमेतत्सङ्ख्याका भेदा इत्याशङ्क्याह—पूर्णेत्यादि । स्पष्टोऽर्थः । अयम्भावः-पूर्णोपमा तावत्-श्रौती, आर्थी च; उभे अपि तद्धितसमासवाक्यनिष्ठतोपाधेस्त्रिधेति षड्विध्यम्, एवं लुप्तोपमा-धर्म्मलोपे दशविधा उपमानलोपे द्विविधा, वाचकलोपे द्विविधा, धर्म-वाचकोभयलोपे द्विविधा, उपमेयेलोपे एकविधा, धर्म्मोपमेयोभयलोपे एकविधा, धर्म्म-वाचकोपमानत्रितयलोपे चैकविधेति तस्या एकविंशतिविधात्वम् । उभयसम्मेलने पुनर्यथोक्तप्रकारेयमिति ।

अत्र केषुचिद्भेदेषु विशेषं लक्षयितुं प्रतिजानीते—एषु सप्तविंशतिसङ्ख्याकेषु । **उपमाभेदेषु । मध्ये । च । अलुप्तसाधारणधर्म्मेष्वलुप्तेः** साधारणधर्म्मो येषु तेषु । **भेदेषु । विशेषोभेदः । प्रतिपाद्यते-९३ एकरूप** इत्यादिना ।

**९३ साधारणः** । गुणो धर्म्म इति भावः । **क्वचित् । एकरूप** एकविधः । क्वापि क्वचित् । भिन्नोनेकविधः । 'निरूप्यते' इति शेषः । तत्र-भिन्नेऽनेकविधे साधारणे धर्म्मे । बिम्बानुबिम्बत्वं बिम्बस्य सादृश्यस्यानुबिम्बत्वं प्रणिधानगम्यत्वम् । **शब्दमात्रेण** मात्रपदेन तात्पर्य्यस्य व्यवच्छेदः । वा । भिदा भेदः । अयम्भावः—वस्तुतो भिन्नयोरपि उपमानोपमेययोर्यो हि साधारणो धर्म्मः, स गुणरूपः क्रियारूपश्चेति द्विविधोऽपि क्वचित् नानाव्यक्तिषु जातिवदेकविधः, क्वचित् पुनरनेकविधः । अथ—यत्रानेकविधस्तत्र बिम्बानुबिम्बत्वम्, शब्दमात्रेण वा भिन्नत्वम् । तथा च-'अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता । मम्लौ साऽथ विषादेन पद्मिनीव हिमाम्भसा ॥' इत्यत्र बहूनां राज्यश्रीप्रभृतीनामुपमानानां तच्छब्दवाच्याया नायिकाया उपमेयस्य च म्लानिरूप एकविधः साधारणो गुणः ।

'ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् । प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥' इत्यत्र ज्योत्स्नादीनां बहूनामुपमानानां नितम्बिन्या उपमेयस्य च नयनानन्दहेतुत्वादयोऽनेके बिम्बप्रतिबिम्बतया साधारणा धर्म्माः । 'विमला चन्द्रकलेव स्फुरति सतां श्रीरिवानघा सततम् । क्षीरोदधिफेनततिर्यथा तथा ते मनोरमा विद्या ॥' इत्यत्र विमलादिपदबोधितचन्द्रकलादीनामुपमानानां विद्याया उपमेयस्य चैक एव साधारणो धर्म्मोनेकधा प्रत्यायितः । इति दिक् ॥७६ ॥

**एकरूपः क्वचित्क्वापि भिन्नः साधारणो गुणः ॥ २३ ॥**

**भिन्ने बिम्बानुबिम्बत्वं शब्दमात्रेण वा भिदा ।**

एकरूपे यथा उदाहृतम्—'मधुरः सुधावदधरः—' इत्यादि । बिम्बप्रतिबिम्बत्वे यथा—

**'भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।**

**तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥'**

अत्र 'श्मश्रुलैः' इत्यस्य 'सरघाव्याप्तैः' इति दृष्टान्तवत्प्रतिबिम्बनम् ।

---

## विवृति

**एकरूप इति** । जातिवन्नानाव्यक्तिष्वेक एव । गुणादिरित्युपाधिशक्तिवादिमतेनेदम् । यद्वा एकजातीय इत्यर्थः । एवं च क्वचिदेकजातीयत्वेन क्वचित्सादृश्यत्वेनैकोपचारादुभयवृत्तित्वं विवक्षणीयम् । गुणः साधर्म्यम् । भिन्ने भिन्नसाधारणधर्मे । बिम्बस्य सादृश्यस्य अनुबिम्बत्वं प्रणिधानगम्यत्वम् ।

एकधर्मस्यैकशब्देनोपादानं प्रायेण क्वचिच्छब्दभेदेनाप्युपादानं संभवतीत्याह—**शब्दमात्रेण वेति** । क्रमेणोदाहरति—**मधुर इति** । एतद्गुणैकत्वे । क्रियैकत्वे यथा—'स्त्रीव गच्छति षण्ढोऽयं वक्त्येषा स्त्री पुमानिव ।' **भल्लेति** । भल्लेन बाणविशेषेण अपवर्जितैः कृत्तैः । तेषां यवनानाम् । तस्तार छादयामास । सरघा मधुमक्षिका-स्ताभिर्व्याप्तैः क्षौद्रपटलैर्मधूत्पत्तिस्थानैः 'मौचाक' इति प्रसिद्धैः । **श्मश्रुलैरित्यस्येति** । दृष्टान्तालंकारे यथा वाक्यार्थयोरिवाद्यभावात्सादृश्यं प्रणिधानगम्यं तथात्रापि श्मश्रुसरघयोः । अत्र श्यामत्वविशेषः सादृश्यहेतुः । एवं च 'सादृश्यहेतू गुणक्रिये' इत्यस्योपलक्षणतया द्रव्यस्यापि साधारणधर्मत्वमवगन्तव्यम् ॥ **स्मेरमिति** ।

## विवृतिपूर्तिः

**बिम्बप्रतिबिम्बेति** । वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्याद भिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्बपदवाच्यम् । लोको हि दर्पणादौ बिम्बात्प्रतिबिम्बस्य भेदेऽपि मदीयमेवात्र वदनं संक्रान्तमित्यभेदे-नाभिमन्यते । अन्यथा हि प्रतिबिम्बस्य कृशोऽहं स्थूलोऽहमित्याद्यभिमानो नोदियांत् ॥

## विज्ञप्रिया

एकरूपत्वम् एकशब्दप्रतिपाद्यतावच्छेदकैक्यात् । तेन "त्वं सुधावन्मधुर" इत्यत्र तदुदाहरणे व्यक्त्यैक्यस्य शक्यतावच्छेदकस्याऽभावेऽपि मनोहरत्वस्य लक्ष्यतावच्छेदकस्यैक्येनैकरूप्यं बोध्यम् । भिन्नरूपत्वे तु शब्दभेदो वक्ष्यते । गुणो धर्मः । भिन्नस्य द्वैविध्यमाह—**भिन्ने** इति । बिम्बानुबिम्बत्वं व्यक्तयोर्मनसा अभेदारोपः ।

भल्लेति—स रघुस्तेषां पारसीकानां यवनानां भल्लरूपास्त्रविशेषेणाऽपवर्जितैस्त्याजितैः शिरोभिः महीं तस्तार व्यापारयामास । कीदृशैः श्मश्रुलैः (अस्त्यर्थे लच्) क्षौद्रपटलैः मधुरससमूहैरिव सरघा मधुमक्षिका । दृष्टान्तवदिति—दृष्टान्तः—सादृश्यं तच्चात्र श्यामरूपम् । तद्वत् तद्विशिष्टं तन्मूलमिति यावत् । तादृशं प्रतिबिम्बनं मनसा अभेदारोपः इत्यर्थः । क्षौद्रपटलमुखयोः सादृश्यम्-श्यामसरघाऽभिन्नश्मश्रुमत्त्वादिति बोधनात् ।

## लोचन

सरघा मधुमंक्षिका। क्षौद्रं मधु। अत्र श्मश्रुलत्वसरघाव्याप्तत्वयोः धर्मयोर्भेदेऽपि स्वगतपिङ्गलत्वादि-धर्मसाजात्येन सादृश्यादेकरूपतया समानता शिरः क्षौद्रपटलयोर्धर्मिणोः साम्यबीजम्। एवं च गुणसाधारण्यं धर्मिणोर्विरुद्धधर्मयोगेऽपि सुसङ्गतम्। दृष्टान्तप्रतिवस्तूपमे सोदाहरणे लक्षयिष्यते।

## कुसुमप्रतिमा

एकेति। साधारणो गुणः सामान्यो धर्म्मः क्वचित् एकरूप एकप्रकारो न पुनर्वस्तुत एकैक इत्याशयः, क्वापि कुत्रापि भिन्नो वस्तुतः प्रकारतश्च भेदविशिष्ट एव। ननु भिन्नत्वे तस्य सामान्यधर्म्मत्वमेव नोपपद्यते उपमानोपमेयोभयवृत्तित्वासम्भवादित्याह भिन्न इति। भिन्ने सामान्यधर्म्मे बिम्बानुबिम्बत्वं बिम्बप्रतिबिम्बत्वभा-वत्वम्। तथा च यथा मुखादिबिम्बस्य दर्पणादिप्रतिबिम्बस्य च बिम्बत्वेन प्रतिबिम्बत्वेन च भेदः सौसादृश्यवत्तया पुनरभेदः, तथात्रापि उपमानोपमेयगतधर्म्मयोर्वस्तुतो भेदः सौमादृश्यवत्तया पुनरभेद इत्याशयः। एवमन्यत्रापि। निष्कर्षस्तु—बिम्बानुबिम्बत्वं प्रणिधानगम्यसाम्यत्वम्। प्रणिधानञ्च तात्पर्य्यपर्य्यालोचनम्। वा अथवा शब्दमा-त्रेण केवलेन शब्देनैव भिदा न पुनर्वस्तुतोऽपि भिदाभेदः। एवञ्च वस्तुतो भिन्नत्वेऽपि सौसादृश्यवत्तया अभिन्नत्वात् शब्दमात्रेण भिन्नत्वेऽपि वस्तुतः चभिन्नत्वाच्च सामान्यधर्म्मत्वोपपत्तिरिति भावः।

तत्रेति। तेषु मध्य इत्यर्थः। अत्रायमाशयः—सुधायां मधुरत्वं नाम सुस्वादुत्वेन सकलप्रियत्वम्, अधरे तु चुम्बनसुखसम्पादकत्वेन कामिमात्रप्रियत्वमिति प्रियत्वरूपः प्रकार एव एव, वास्तविकस्वादांशे तु भिन्न एवेति। इदन्तु गुणस्यैकरूपत्वे उदाहरणम्। क्रियाया एकरूपत्वे यथा—"स्त्रीवद्यवहरत्वेष दुर्बलः प्रबले नरे।"

भल्लेति। रघुवंशचतुर्थसर्गेश्लोकोऽयम्। स रघुः, भल्लेन स्वनामख्यातेनास्त्रेण अपवर्जितै स्कन्धान्नि-पातितैः, श्मश्रुलैः श्मश्रुविशिष्टैः, तेषां यवनानां शिरोभिमस्तकैः, सरघाव्याप्तैर्मधुमक्षिकापूर्णैः क्षौद्रपटलैर्मधुचक्रस-मूहैरिव महीं भूमिम्, तस्तार आच्छादयामास।

उदाहृते बिम्बानुबिम्बत्वं दशयितुमाह अत्रेति। प्रतिबिम्बनं प्रणिधानपरायणपक्षे सदृशोकरणम्। तथा च यथा सरघाभिः क्षौद्राणां श्यामत्वं तथा श्मश्रुभिः शिरसां श्यामत्वमिति प्रणिधानेनैवोभयोः साम्यं गम्यमिति भावः।

## विमला

एकरूप इति।—जातिवच्चानाव्यक्तिषु एक एव गुणादिः इत्युपाधिशक्तिवादिमतेनेदम्; यद्वा—एक-जातीय इत्यर्थः, एवञ्च क्वचिदेकजातीयत्वेन, क्वचित् सादृश्यत्वेन एकोपचारादुभयवृत्तित्वं विवक्षणीयम्। गुणः,—साधर्म्यम्। भिन्ने—भिन्न-साधारणधर्मे, बिम्बानुबिम्बत्वं—बिम्बस्य—सादृश्यस्य, अनुबिम्बत्वं—प्रणिधानेन गम्यसाम्यत्वम्। एकधर्मस्यैकशब्देनोपादानं प्रायेण क्वचिच्छब्देनाप्युपादानं सम्भवतीत्याह, शब्दमा-त्रेण वेति।—भिदा—भेदः।

क्रमेणोदाहरति, मधुर इति।—एतद्गुणैकत्वे। क्रियैकत्वे यथा—"स्त्रीव गच्छति षण्ठोऽयं वक्तयेषा स्त्री पुमानिव" इति।

भल्लेति ।—रघोर्दिग्विजयवर्णनमिदम् । सः—रघुः, भल्लेन—अस्त्रविशेषेण, अपवर्जितैः—छिन्नैः, श्मश्रुलैः—श्मश्रुयुक्तैः, तेषां—यवनानां, शिरोभिः—कृत्तमस्तकैरित्यर्थः, सरघाभिः—मधुमक्षिकाभिः, व्याप्तैः क्षौद्रपटलैरिव—मधुचक्रैरिव, "मौचाक" इति प्रसिद्धैरित्यर्थः, महीं—पृथ्वीं, तस्तार—छादयामास । रघुवंशस्येदं पद्यम् ।

अत्र श्मश्रुलैरित्यस्येति ।—दृष्टान्तालङ्कारे यथा वाक्यार्थयोः सादृश्यम् इवाद्यभावात् प्रणिधानगम्यं, तथाऽत्रापि श्मश्रुसरघयोः । अत्र श्यामत्वविशेषः सादृश्यहेतुः । एवञ्च "सादृश्यहेतू गुणक्रिये" इत्यस्योपलक्षणतया द्रव्यस्यापि साधारणधर्मत्वमवगन्तव्यम् ।

## लक्ष्मी

एकरूप इति । साधारणो गुणः सामान्यो धर्मः क्वचित् कुत्रापि एकरूप एकविधो न पुनः परमार्थत एवैक इति भावः, क्वापि क्वचित् भिन्नः परमार्थतः प्रकारतश्चानेकविधः, तथा च वस्तुतो भिन्नयोरप्युपमानोपमेययोरर्थो हि साधारणो धर्मः स गुणरूपः क्रियारूपश्चेति द्विविधोऽपि क्वचिद् नानाव्यक्तिषु जातिवदेकविधः क्वचित्त्वनेकविध इति परमार्थः । ननु भिन्नत्वे तस्य साधारणधर्मत्वमेव न सम्भवितुमर्हति उपमानोपमेययोरुभयवृत्तित्वासम्भवादत आह—भिन्न इति । भिन्ने नैकविधे साधारणधर्मे बिम्बानुबिम्बत्वं बिम्बस्य सादृश्यस्य अनुबिम्बत्वं प्रणिधानगम्यत्वम्, वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्बभावः । उक्तञ्च—'अत एवात्र बिम्बप्रतिबिम्बव्यपदेशः । लोके हि दर्पणादौ विम्बात्प्रतिबिम्बस्य भेदेऽपि मदीयमेवात्र वदनं सङ्क्रान्तमित्यभेदेनाभिमन्यते । अन्यथा हि प्रतिबिम्बदर्शने कृशोऽहं स्थूलोऽहमित्याद्यभिमानो नोदियात्, भूषणविन्यासादौ च नायिका नाद्रियेरन् इति । एकधर्मस्यैकशब्देनोपादानं प्रायेण क्वचित् शब्दभेदेनाप्युपादानं सम्भवतीत्याह—**शब्दमात्रेण** वेति । वा अथवा शब्दमात्रेण केवलेन शब्देनैव भिदा भेदः । मात्रपदेन तात्पर्यस्य व्यवच्छेदः । तथा च वस्तुतो भिन्नत्वेऽपि सादृश्यत्वेन अभिन्नत्वात् शब्दमात्रेण भिन्नत्वेऽपि वस्तुतोऽभिन्नत्वाच्च साधारणधर्मत्वोपपत्तिरित्याशयः ।

एकरूप इति । साधारणे धर्म इति शेषः । अत्रायम्भावः—उपमानोपमेययोः सुधाधरयोर्मधुरत्वम् । तत्र सुधायां मधुरत्वं हि सुस्वादत्वेन सर्वप्रियत्वम्, अधरे तु चुम्बनसुखजनकत्वेन केवलकामिजनप्रियत्वमिति प्रियत्वरूपः प्रकार एक एव, परमार्थतः स्वांशे तु भिन्न एवेति । साधारणगुणस्यैकरूपत्वे ह्युदाहरणम् । क्रियाया एकरूपत्वे तु मम—

'हस्तिनीव शनैर्याति मृगीवेयञ्च पश्यति । वक्ति वाणीं कोकिलेव सर्वान् मोहयति क्षणात् ॥'

एवं धर्मैक्यमुदाहृत्य धर्मानैक्यमुदाहरति—भल्लेति । रघुवंशचतुर्थसर्गस्थपद्यमिदम् । स रघुः, भल्लेन तत्संज्ञकबाणविशेषेण अपवर्जितैः स्कन्धान्निपातितैः, श्मश्रुमुखाग्रवर्त्तिरोमसमूहः स एषामस्तीति तैः तथोक्तैः, सिध्मादित्वाल्लच्, तेषां पारसीकानां यवनानां शिरोभिर्मस्तकैः, सरघाभिर्मधुमक्षिकाभिर्व्याप्ताः पूर्णास्तैः तादृशैः 'सरघा मधुमक्षिका' इत्यमरः, क्षौद्रं मधु तस्य पटला उत्पत्तिस्थानविशेषास्तैरिव महीं पृथिवीम्, तस्तार आच्छादयामास ।

बिम्बानुबिम्बत्वमुपपादयति—अत्रेति । सरघाव्याप्तैरिति । अभिधाने इति शेषः । प्रतिबिम्बनं सदृशीकरणम् । एवञ्च यथा सरघाभिः क्षोद्राणां कृष्णवर्णत्वं तथा श्मश्रुभिः शिरसां कृष्णवर्णत्वमिति प्रणिधानेनैवोभयोः सादृश्यं प्रतीयमानमित्याशयः ।

## रुचिरा

विस्तरभयाद् दिङ्मात्रमुदाहर्त्तुकाम आह—**एकरूपे** 'साधारणे धर्मे' इति ।, शेषः । सत्यर्थेयं सप्तमी । **यथा । उदाहृतम्—'मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः ।' इत्यादि** । आदिना-'चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः ॥' इत्यस्य ग्रहणम् । व्याख्यातपूर्वमेतत् । अत्र हि—उपमानोपमेययोः सुधाऽऽद्यधराद्योर्माधुर्य्यादिः । यद्यपि—उपमानोपमेपयोः सर्वत्रैवैकविधः साधारणो धर्म्मः, अन्यथोपमाया एवासम्भव इत्येवं स्थितौ किमत्र वैचित्र्यं दर्शितमिति वक्तुं शक्यते, तथाऽपि अत्र-ऐकरूप्यं विवक्षितम्, नतु श्लेषमहिम्ना प्रतिपादितम्, अतः- 'हंसीव कृष्ण ! ते कीर्त्तिः स्वर्गङ्गामवगाहते ।' इत्यादौ 'स्वर्गङ्गामवगाहते' इत्यादिना प्रतिपादितः साधारणो धर्म्मो नैकरूपपदप्रतिपाद्य इति बोध्यम् । क्रियैकत्वे यथा मम—'गच्छति करिणीव शनैः मृगीव चकितं निरक्षते भूयः । आलपति कोकिलेव श्रयति मनोभावनेवासौ ॥' इति । यत्तूदाहृतं तर्कवागीशैः—'स्त्रीव गच्छति षण्ढोऽयं वक्त्येषा स्त्री पुमानिव ।' इति, तदकाव्यत्वात्तेषामेवोदाहरणीयम् ।

एवं धर्मैक्यमुदाहृत्य धर्म्मानैक्यमुदाहर्त्तुकाम आह—**बिम्बानुबिम्बत्वे** इत्यादिना । स्पष्टम् । 'बिम्बप्रतिबिम्बत्व' इति पाठान्तरम । 'भल्लापेत्यादि । 'स रघुः । भल्लापवर्ज्जितैर्भल्लैस्तदाकारैर्बाणविशेषैरपवर्जितानि पतितानि तैस्तयाभूतैः । **तेषां** यवनानाम् । **श्मश्रुलैः** श्मश्रुर्मुखाग्रवर्त्ती रोमपुञ्जः स एषामस्तीति तैस्तथोक्तैः । सिध्मादित्वात् इलच् । **शिरोभिर्मुण्डैः । सरघाव्याप्तैः** सरघाभिर्मधुमक्षिकाभिर्व्याप्तास्तैः । 'सरघा मधुमक्षिका ।' इत्यमरः । **क्षौद्रपटलैः** क्षौद्रं मधु तस्य पटला उत्पत्तिस्थानविशेषास्तैः । **इव** । **महीम्** । **तस्तार** छादयामास । रघुवंशस्येदं पद्यम् ॥ ९४ ॥'

लक्ष्यं सङ्गमयति-**इत्यत्र** । **'श्मश्रुलैः' इत्यस्य** । **'सरघाव्याप्तैः' इति** 'अभिधान' मिति शेषः । **दृष्टान्तवत्** । प्रतिबिम्बनमभिन्नतया स्फुरणम् । अयम्भावः—-शिरसां श्मश्रुलत्वेन प्रतिपादनीयो धर्म्मः क्षौद्रपटलानसरघाव्याप्तत्वेन प्रतिपादितः, इदं च प्रतिपादनं मुखस्य दर्पणादौ प्रतीयमानत्वमिव भिन्नत्वेऽपि साधारणधर्मस्यानुरूपतानिरूपणपरम् ।

शब्दमात्रेण भिन्नत्वे यथा—

**'स्मेरं विधाय नयनं विकसितमिव नीलमुत्पलं मयि सा।**

**कथयामास कृशाङ्गी मनोगतं निखिलमाकूतम्॥'**

**अत्रैके एव स्मेरत्वविकसितत्वे प्रतिवस्तूपमावच्छब्देन निर्दिष्टे।**

---

## विवृति

आकूतमभिप्रायम्। **एके एवेति**। संख्यार्थादिकशब्दाद् द्विवचनासंभवादयं पाठो न युक्तः। किं तु 'अत्रैकमेव प्रफुल्लत्वं प्रतिवस्तूपमावद् विभिन्नाभ्यां स्मेरविकसितशब्दाभ्यां निर्दिष्टम्' इति पाठो बोद्धव्यः।

## विज्ञप्रिया

**स्मेरं** विधायेति स्पष्टम्। अत्रेति—एके एवेति—एकधर्मावच्छिन्ने एवेत्यर्थः। यद्यपि स्मेरत्वं मुखस्यैव धर्मः न नयनस्येत्यतो विस्तारत्वमेव लक्षतावच्छेदकम्। विकसितत्वं तु नीलोत्पलधर्म इत्यवच्छेदकस्यापि भेदस्तथापि विकासस्यापि विस्तारविशेषत्वाद् अभेदो बोध्यः। **प्रतिवस्तूपमावदिति**। तत्रैकधर्मावच्छिन्नसाधारणधर्मस्य शब्दभेदो वक्ष्यते।

## लोचन

**एके एवेति**—स्मेरत्वस्य विकसितत्वस्याविशेषत्वात्।

## कुसुमप्रतिमा

स्मेरमिति। सख्युः समीपे कस्यचिज्जनस्याभीष्टरमण्या वर्णनमिदम्। सा कृशाङ्गी विकसितं नीलमुत्पलमिव मयि नयनं स्मेरं विधाय विस्फारितं कत्वा मनोगतं निखिलम् आकूतम् अभिप्रायं कथया मास कथनवत् सूचयामास

अत्रेति। एके एव उभयोरपि विस्फाररूपत्वादभिन्ने एव। अत्र एकविस्फाररूपदार्थस्य स्मेरमिति विकसितमिति च शब्दद्वयोपस्थाप्यत्वयोर्द्वित्वात् 'एके' इति द्विवचनोपपत्तिः, 'अग्नेः सम्बुद्धावित्यके' इति कातन्त्रवृत्तौ एकमतावलम्बिबहर्थत्वात् 'एके' इति बहुवचनोपपत्तिवत्, "द्वयं गतं सम्प्रति शोचनीयताम्" इति कुमारादौ द्वित्वविशिष्टयोः पार्वतीचन्द्रकलयोरेकविधशोच्यत्वार्थकत्वात् 'द्वयम्' इत्येकवचनोपपत्तिवत्, "व्यथां द्वयेषामपि मेदिनीभृताम्" इति माघादौ द्वित्वविशिष्टयो राजगण पर्वतगणयोर्बहुत्वात् 'द्वयेषाम्' इति बहुवचनोपपत्तिवच्च। अतोऽत्र "संख्यार्थादिकशब्दात् द्विवचनासम्भवात्" इत्याद्युक्ता रामचरणस्य पाठान्तरकल्पनं भ्रमविजृम्भितमेवेति सुधीभिर्भाव्यम्। शब्दभेदेन निर्दिष्टे स्मेरमिति विकसितमिति च भिन्नशब्दाभ्यामभिहिते।

## विमला

स्मेरमिति ।—कृशाङ्गी—क्षीणाङ्गी, सा—रमणी, विकसितं—प्रस्फुटितं, नीलम् उत्पलं—कमलमिव, स्मेरं नयनं, न तु नयने, वामानां तथैव स्वभावात्, मयि विधाय—अर्पयित्वा, ("निधाय" इति पाठान्तरन्तु मनोरमम्) निखिलं—समस्ते, मनोगतम् आकूतम्—अभिप्रेतं, चेष्टितमर्थमिति यावत्, कथयामास, सखीं प्रति इति शेषः; वामायाः स्वभाव एवाय यत, वल्लभं तिर्य्यक् पश्यन्ती उपसखि कथमपि स्वाभिप्रायमुद्घाटयति इति । अत्रार्य्या छन्दः ।

## लक्ष्मी

स्मेरमिति । सख्युः सविधे कस्यचिज्जनस्य स्वप्रियनायिकायाः वर्णनेयम् । सा कृशाङ्गी विकसितं प्रस्फुटितं नीलोत्पलं कुवलयमिव मयि नयनं दृष्टिं स्मेरं विस्फारितं विधाय मनोगतं मनसि स्थितं निखिलं सर्वम् आकृतम् आवेदनीयमर्थं कथयामास कथनवत् सूचयामास । आर्याच्छन्दः ॥

शब्दमात्रं भेदमुपपादयति—अत्रेति । एके एव उभयोरपि विस्फाररूपत्वात्तात्पर्यतोऽभिन्ने एव । अत्र एके इति संख्यार्थकादेकशब्दाद्द्विवचनाऽसम्भवादयं पाठो न युक्त इति **विवृतिकारा** वदन्ति । **केचित्तु**—'द्वयं गतं सम्प्रति शोचनीयताम्' इत्यादौ द्वित्वविशिष्टयोः पार्वतीचन्द्रकलयोरेकविधशोच्यत्वार्थकत्वात् 'द्वयम्' इत्येक-वचनाद्युपपत्तिवत्, एकविस्फाररूपपदार्थस्य स्मेरमिति विकसितमिति च शब्दद्वयोपस्थाप्यत्वयोर्द्वित्वात् 'एके' इति द्वि वचनोपपत्तिरिति समादधते । प्रतिवस्तूपमावत् प्रतिवस्तूपमायामिव शब्दभेदेन निर्दिष्टे स्मेरमिति विकसितमिति च भिन्नशब्दाभ्यामुक्ते ।

## रुचिरा

शब्दमात्रेण धर्मभेदमुदाहर्त्तुमुपक्रमते—शब्दमात्रेणेत्यादिना । स्पष्टम् । **'स्मेर'** मित्यादि ।

**'सा । कृशाङ्गी** कृशोदरी । अत्राङ्गपदेनोदस्यैव विवक्षा, अन्यथा तस्याश्चारुत्वद्योतनासम्पत्तेः । **विकसि-तम् । नीलम् । उत्पलम् । इव । स्मेरं** विकासशालि । **नयनं** दृष्टिम् । जातावेकवचनम् । **विधाय** तेन निरीक्ष्य स्थिता । तेनैव-**मनोगतं** मनसि स्थितम् । **निखिलं** सर्वम् । आकूतमावेदनीयमर्थम् । **मयि । कथयामास** सूचया-मास । लक्षणा तु तदतिशयद्योतनार्था । अत्रार्य्या छन्दः ॥ ९५ ॥"

शब्दमात्रेण भेदं विस्पष्टयति-**अत्र । स्मेरत्वविकसितत्वे** । एके तात्पर्य्यतोऽभिन्ने । **एव । प्रतिवस्तूपमा-वत्** प्रतिवस्तूपमायामिघ । **शब्देन** । 'भिन्नतये'ति शेषः । **निर्दिष्टे** निदर्शिते । 'अत्रैकमेव प्रफुल्लत्वं प्रतिवस्तूपमावद् विभिन्नाभ्यां स्मेरविकसितशब्दाभ्यां निर्दिष्टे' इति पाठान्तरेऽप्ययमेवार्थः । अत्र तर्कवागीशाः—'एकक्रियायाः शब्दभेदेनोपादाने यथा"प्रकाशते मुखं तस्याश्चन्द्रमा दीप्यते यथा ॥" नन्वत्र-वाक्यैक्याभावात् कथमुपमेति चेत् ! न, यथा—"अमावास्यायां श्राद्धं कुर्य्याद् रात्रौ श्राद्धं न कुर्यात्" इत्यत्र 'सम्भेदेनान्यतरवैयर्थ्य'मिति न्यायेन रात्रेरितरत्रा मावास्यायां श्राद्धं कुर्य्यादित्येकवाक्यत्वं, तथाऽत्रापि एकवाक्यत्वस्वीकारात् ।' इति ।

एवं शुद्धामुपमां निर्दिश्यास्या एव प्रकारान्तरेण भेदावतारं निर्देष्टुकाम एकदेशविवर्त्तिन्याख्यं भेदं तावत् निर्दिशति-९४ एकेत्यादिना ।

**एकदेशविवर्तिन्युपमा वाच्यत्वगम्यते ॥ २४ ॥**

**भवेतां यत्र साम्यस्य—**

**यथा—**

**'नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः ।**

**पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥'**

अत्रोत्पलादीनां नेत्रादीनां सादृश्यं वाच्यं सरःश्रीणां चाङ्गनासाम्यं गम्यम् ।

---

## विवृतिः

एकक्रियायाः शब्दभेदेनोपादाने यथा—'प्रकाशते मुखं तस्याश्चन्द्रमा दीप्यते यथा ।' नन्वत्र वाक्यैक्याभावात्कथमुपमेति चेत् । न । यथा 'अमावास्यायां श्राद्धं कुर्याद्, रात्रौ श्राद्धं न कुर्वीत' इत्यत्र संभेदेनान्यतरवैयर्थ्यमिति न्यायेन रात्रीतरत्रामावस्यायां श्राद्धं कुर्यादित्येकवाक्यत्वं तथात्राप्येकवाक्यत्वस्वीकारात् ॥ प्राचीनैरस्वीकृतामपि प्रमाणसिद्धामेकदेशविवर्तिनीमुपमामाह—**एकदेशेति** । यत्र वाक्ये कस्यचित्साम्यं वाच्यं कस्यचिद्गम्यं तत्रैकदेशवर्तिन्युपमेत्यर्थः । इयं चैकदेशविवर्तिरूपकतसाङ्गस्याङ्गिनः सादृश्य एव संभवति ॥ **नेत्रैरिवेति** । अङ्गना इव सरः श्रियः पदेपदे प्रतिवस्तु विभान्ति स्म । अत्र नेत्रादित्रयमुपमानस्य उत्पलादित्रयमुपमेयस्याङ्गम् ॥

## विज्ञप्रिया

एकदेशविवर्त्युपमामाह—**एकदेशेति** । गम्यत्वं व्यङ्ग्यत्वम्; साम्यस्य सादृश्यप्रतियोगितानुयोगितारूपाया उपमायाः ।

**नेत्रैरिवेति** । सरः श्रियः सरोवरलक्ष्म्याः पदे पदे देशे देशे उत्पलैः पद्मैश्चक्रवाकैश्च विभान्ति स्म । तत्रोत्पलादित्रयस्य नेत्रादित्रयोपमामाह—**नेत्रैर्मुखैस्तनैरिवेति** । अत्रेति । सादृश्यं सादृश्यप्रतियोगितानुयोगितारूपोपमा । सादृश्यप्रतियोगितानुयोगितारूपसम्बन्धस्य एवोपमात्वेनोपमाग्रन्थे प्रतिपादितत्वात् । तच्चात्र इवादेर्वाच्यम्व्यङ्ग्यम् । अव्यङ्ग्यत्वस्यैव वाच्यपदार्थत्वेन प्राक् प्रतिपादितत्वात् अन्विताभिधानपक्षे वाच्यमन्यथा तु संसर्गमर्य्यादागम्यम् । **सरः श्रीणामिति** । उत्पलादीनां नेत्रादिसादृश्यवशाद् गम्यं व्यङ्ग्यमित्यर्थः ।

## लोचन

वाच्यत्वगम्यत्वे एकदेशे वाच्यत्वमेकदेशे गम्यत्वमित्येकदेशे विशेषेण वर्त्तमानाद् एकदेशविवर्त्तिनीत्यन्वर्थं नाम क्वचित् रूपकवत् समस्तवस्तुविषयाप्युपमा दृश्यते । यथा गोपीनाथकवेः—

"ब्रह्माण्डं भवनायते त्वदुदरे लोकेश ! लोकः स्फुर-

न्नानांचेतनकल्पनाशबलितः साक्षात् वितानायते ।

तन्मध्येऽपि तवामरायत इयं भूमण्डलालम्बिनी

हारक्षीरपटीरसोदररुचिः स्वर्गौकसामापगाः ॥"

अत्र भवनस्याङ्गिनो वितानाद्यङ्गसहितस्य उपमानत्वेन समस्तवस्तुविषयता ।

यथोर्ध्वम् ऊर्ध्वोर्ध्वक्रमेण ।

## कुसुमप्रतिमा

शुद्धोपमानिरूपणात् परमेव उपमाविशेषस्याकाङ्क्षोदयात् काव्यप्रकाशकारादिभिरनङ्गीकृतानपि विलक्षणलक्ष्यतया युक्तियुक्तत्वादिदानीमुपमाविशेषान् लक्षयन् प्रथममेकदेशविवर्त्तिनीमुपमां लक्षयति, एकेति । यत्र स्थले साम्यस्य वाच्यत्वगम्यते भवेतां सादृश्यस्य अभिधाबोध्यत्वं व्यञ्जनाबोध्यत्वञ्च स्यात्, तत्र, एकदेशविवर्त्तिनौ नामोपमा भवेदित्यर्थः, एकदगेशे साम्यस्य वाच्यत्वभागे विवर्त्तते मूललक्षणगमनाद्विशेषेणावतिष्ठत इति व्युत्पत्तेः । एकदेशविवर्त्तिरूपकस्थल एव तेन सहास्या भेदं दर्शयिष्यामः ।

नेत्रैरिति । शरद्वर्णनियम् । सरःश्रियो जलाशयशोभाः, नेत्रैरिव उत्पलैः कुवलयैः, मुखै रिव पद्मैः, स्तनैरिव चक्रवाकैः पक्षिभिश्च पदे पदे स्थाने विभन्ति स्म । अत्र विभान्तीत्यत्र वाक्यसमाप्तावपि चतुर्थ पादेन पुनरात्तत्वात् समाप्तपुनरात्ततादोषः ।

लक्ष्ये लक्षणं सङ्गमयितुमाह अत्रेति । नेत्रादीनां नेत्रादिभिः सहेत्यर्थः । वाच्यमिति सर्वत्र इवशब्दसत्त्वादित्याशयः । गम्यं व्यञ्जनया बोध्यम्, सरः श्रिय इत्यत्र इवशब्दाभावादिति भावः । उदाहृते नेत्राद्युपमानत्वेनोत्पलादीनां प्रसिद्धसत्त्वेऽपि प्रसिद्धिसत्त्वेऽपि प्रधानानां सरःश्रीणामङ्गनोपमानत्वेन प्रसिद्ध्यभावान्नप्रतीपालङ्कारप्रसङ्गः ।

## विमला

एक एवेति ।—सङ्ग्रयार्थदेकशब्दात् द्विवचनासम्भवादयं पाठो न युक्तः, किन्तु "अत्रैकमेव प्रफुल्लत्वं प्रतिवस्तूपमावत् विभिन्नाभ्यां स्मेरविकसितशब्दाभ्यां निर्दिष्टम्" इति पाठो बोद्धव्यः । एकक्रियायाः शब्दभेदेनोपादाने यथा—"प्रकाशते सुखं तस्याश्चन्द्रमा दीप्यते यथा" । नन्वत्र वाक्येक्याभावात् कथमुपमा ? इति चेत्, न; यथा "अमावस्यायां श्राद्धं कुर्य्यात्, रात्रौ श्राद्धं न कुर्य्यात् इत्यत्र सम्भेदेनान्यतरवैयर्थ्यम् इति न्यायेन राजीतभावास्थायां श्राद्धं कुर्यात् —इत्येकवाक्यत्वं, तथाऽत्राप्येकवाक्यत्वस्वीकारात् इति सङ्क्षेपः ।

प्राचीनैरस्वीकृतामपि प्रमाणसिद्धाम् एकदेशविवर्त्तिनीमुपमामाह, एकदेशेति ।—यत्र—वाक्ये, साम्यस्य—सादृश्यस्य, वाच्यत्वगम्यते—वाच्यत्वं गमयत्वञ्च इत्यर्थः, भवेतां, कस्यचित् साम्यं वाच्यं, कस्यचित् गम्यमित्याशयः, तत्र एकदेशविवर्त्तिनी उपमा, एकदेशे स्थितत्वात् अस्या एकदेशविवर्त्तिनीति संज्ञा; इयञ्चैकदेशविवर्त्तिरूपकवत् साङ्गस्याङ्गिनः सादृश्ये एव सम्भवति इति ।

नेत्रैरिवेति ।—अङ्गना इव सरःश्रियः,—सरसीशोभाः, पदे पदे—प्रतिवस्तु, विभान्ति स्म—राजन्ते स्म । कैः हेतुभिरित्याह, नेत्रैरिति । नेत्रैरिव उत्पलैः,—नेत्रसदृशैः कुवलयैः, तथा मुखैरिव पद्मैः,—वदनोपमैः सरोजैः, तथा स्तनैरिव चक्रवाकैः,—वक्षोजसदृशैः कोकपक्षिभिश्चेत्यर्थः ।

अत्रेति ।—उक्तोदाहरणे इत्यर्थः । अत्र नेत्रादित्रयमुपमानस्य उत्पलादित्रयमुपमेयस्याङ्गम् । यद्यपि अत्र "प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् । निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते ।" इति वक्ष्यमाणदिशा नेत्राणामुपमानत्वे प्रतीपमिति वक्तुं युक्तं, तथाऽपि अङ्गनासादृश्येन सरःश्रियो वर्णयितुं प्रवृत्तेन कविना नेत्राणामुपमा-

नत्वम् उत्पलानां चोपमेयत्वं वर्णितम्; युक्तञ्च तत्, अन्यथा प्रकृतोपघातः स्य च न चाङ्गनानामुपमानत्वं, सरः श्रियां चोपमेयत्वमपि कल्पितमिति वाच्यं, तत्र नियामकानुपलब्धेः, अतस्तथा वर्णनेनोपमाक्षतिरिति समाधा प्रतिभासते ।

## लक्ष्मी

एवं शुद्धामुपमामुपपाद्यास्या एव प्रकारान्तरेण काव्यप्रकाशकारादिभिरस्वीकृतमपि युक्तियुक्तत्वात् भेदावतारमुपपादयितु कामः एकदेशविवर्त्तिन्याख्यं भेदं तावदुपपादयति—एकेति । यत्र यस्मिन् स्थले साम्यस्य सादृश्यस्य वाच्यत्वगम्यते भवेताम्, अभिधाबोध्यत्वं व्यञ्जनाबोध्यत्वं च स्यात् वाच्यत्वव्यङ्ग्यत्वोभयसाङ्कर्यं भवेदिति तात्पर्यम्, तत्र एकदेशविवर्त्तिनी नामोपमा भवेत् । 'साम्यं वाच्य'मिति लक्षितोपमैव साम्यस्य वाच्यत्व-गम्यत्वमात्रेणैकदेशविवर्तिनीति गीयते यत्र देशे साम्यस्य वाच्यत्वं तत्रास्याः सर्वात्मनाऽलङ्करणात् अन्यत्र गम्य-मानतयेति स्पष्टमेकदेशविवर्त्तनशीलत्वम्, अतएवैकदेशविवर्त्तिन्युपमेत्यन्वर्थं नाम । एकदेशविवर्त्तिरूपकेण सहास्य भेदस्तु तन्निरूपणावसरे एव स्फुटीभविष्यति ।

**नेत्रैरिवेति** । शरद्वर्णनमिदम् । सरसां जलाशयानां श्रियः सम्पदः, नेत्रैरिव उत्पलैः कुवलयैः, मुखैरिव पद्मैः, स्तनैरिव स्फुरद्भिरिति शेषः, चक्रवाकैः पक्षिभिश्च पदे पदे स्थाने स्थाने विभान्तिस्म । अत्र समाप्तपुनरात्तत्वं दोषः तृतीयपादस्थेन विभान्ति इत्यनेनैव वाक्यसमाप्तावपि चतुर्थपादेन पुनरुत्थापनात् ।

लक्ष्ये लक्षणं संयोजयितुमाह—**अत्रेति** । नेत्रादीनां नेत्रादिभिः सार्धमित्यर्थः । वाच्यमिति । सर्वत्र इवश-ब्दोपलम्भादिति भावः । गम्यं व्यञ्जनतया प्रतीयमानम्, 'सरःश्रिय' इत्यत्र इवशब्दासत्त्वादित्याशयः । तथाचात्र नेत्रादीन्युपमानानि, उत्पलादीन्युपमेयानि, अध्याहतस्फुरत्पदगम्यः साधारणो धर्मः तद्वाचक इवशब्दश्चेत्येषां विद्यमानत्वादुपमैवात्र 'अङ्गना इव सरः श्रियः' इति शब्दानुपात्तमपि सादृश्यं बोधयन्ती विवर्त्तते । ननूपमेयत्वेन प्रसिद्धानां नेत्रादीनमुपमानत्वेन प्रतिपादनामसङ्गतमिति चेत्? सत्यम्, उपमानोपमेयभावस्यानियतत्वाऽभ्युपग-मात् । अत एव—

'आदिमध्यान्तरहितं दशाहीनं पुरातनम् । अद्वितीयमहं वन्दे मद्वस्त्रसदृशं हरिम् ॥'

इत्यादौ भगवतोऽप्युमेयत्वप्रतिपादनेऽप्युपमा सङ्गच्छत इति । क्वचित् रूपकवत् समस्तवस्तुविषयाप्यु-पमा दृश्यते । यथा—

**'ब्रह्माण्डं भुवनायते त्वदुदरे लोकेश ! लोकः स्फुर-**
**न्नानाचेतनकल्पनाशवलितः साक्षात् वितानायते ।**
**तन्मध्येऽपि तवामरायत इयं भूमण्डलालम्बिनी**
**हारक्षीरपटीरसोदररुचिः स्वर्गौकसामापगाः ॥'**

अत्र भवनस्याङ्गिनो वितानाद्यङ्गसहितस्य उपमानत्वेन समस्तवस्तुविषयता ।

## रुचिरा

९४ यत्र यस्मिन् उपमाकाव्य इत्यर्थः । **साम्यस्य** साधर्म्यस्यावाच्यत्वगम्यते वाच्यत्वव्यङ्ग्यत्वोभेसाङ्क-र्य्यम् । **भवेताम्** । 'से' ति शेषः । **उपमा** 'साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः ।' इति लक्षितस्वरूपा । 'एवे'ति शेषः । **एकदेशविवर्त्तिनी** । अयम्भावः—'साम्यं वाच्य' मिति लक्षितोपमैव साम्यस्य वाच्यत्वगम्यत्वमा-

त्रेण भिद्यमानैकदेशविवर्त्तिनीति गीयते। यत्रांशे साम्यस्य वाच्यत्वं तत्रास्याः सर्वात्मनाऽलङ्करणात् अन्यत्र च व्यज्यमानतयेति स्फुटमेकदेशविवर्त्तनशीलत्वम्। अत एवेयम्—एकदेशविवर्त्तिरूपकवत् साङ्गस्याङ्गिनः सादृश्य एव सम्भवति। एकदेशे विवर्त्तत इत्येवं शीलमस्या अस्तीत्यन्वर्थेयं सञ्ज्ञा च। इति ॥ ७७ ॥

उदाहरति यथा—**यथा**—'**नेत्रैरिव**। **उत्पलैः** कमलैः। **मुखैरिव**। **पद्मैः**। **स्तनैरिव**। 'स्पफुफुर रिति शेषः। **चक्रवाकैः**। 'चे' ति शेषः। **सरःश्रिय** सरसां जलाशयानां श्रियः सम्पदः। **पदेपदे** प्रतिवस्तु। **विभान्ति**। **स्म**। अत्रेदं बोध्यम्-नेत्रादीन्युपमानानि उत्पलादीन्युपमेयानि अध्याह्रियमाणस्फुरत्पदद्योत्यो धर्म्मस्तद्वाचक इव शब्दश्चेत्येषां सद्भावादुपमैवात्र 'अङ्गना इव सरः श्रियः' इति शब्दानुपात्तमपि सादृश्यं प्रत्यायन्ती विवर्त्तात्मतामवलम्बते। इति ॥ ९६ ॥'

साम्यस्य वाच्यत्वव्यङ्ग्यत्वे एव निर्दिशति—**अत्रेत्यादिना**। स्फुटम्।

ननु-नेत्रादीनामुपमेयत्वेन प्रसिद्धानामुपमानत्वेनाभिधानमयुक्तमिति चेत्, उपमानोपमेयभावस्यानियतत्वं गृहाण, अत एव—'आदिमध्यान्तरहितं दशाहीनं पुरातनम्। अद्वितीयमहं वन्दे मद्वस्त्रसदृशं हरिम्॥' इत्यादौ भगवतोप्युपमेयत्वाभिधानेऽप्युपमा सङ्गच्छते। यद्वा-अत्रैव 'नेत्रैरिन्दीवरैस्तुल्याः पुण्डरीकैरिवाननैः। स्तनैश्चक्राङ्गवद्रम्यैस्तदाऽऽभुर्व्रजवल्लभाः॥

इति पाठं परिवर्त्त्यं लक्षणीयेयम्। नात्र विशेषो विशेषः, किन्तु पूर्वत्र नेत्रादित्रयमुपमानस्योत्पलादित्रयमुपमेयस्याङ्गम्। अत्र-इन्दीवरादित्रयमुपमानस्य नेत्रादित्रयमुपमेयस्याङ्गम्। अतः-इन्दीवरादिभिर्नेत्रादीनां साम्यं वाच्यम्, सरः श्रीभिर्व्रजाङ्गनानां पुनर्व्यङ्ग्यमिति विशेषः।

कथिता रशनोपमा ।

**यथोर्ध्वमुपमेयस्य यदि स्यादुपमानता ॥ २५ ॥**

यथा—

**'चन्द्रायते शुक्लरुचापि हंसो हंसायते चारुगतेन कान्ता ।**
**कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः ॥'**

---

## विवृतिः

रसनोपमामाह—**कथितेति**। **यथोर्ध्वमिति**। पूर्वोपमायां यदुपमेयमुत्तरोपमायां तस्योपमानता यदि स्यादित्यर्थः । इयं साधारणधर्मस्याभेदे भेदे च संभवतीति द्विधा ॥

तत्राद्या यथा—'महीभृतो वदान्यस्य भारतीवामला मतिः । चेष्टा मतिरिव स्वच्छा चेष्टेव गुणसंततिः ॥' अत्र स्वच्छत्वमेकमेव साधारणो धर्मः ॥ द्वितीयामाह—**चन्द्रायत इति**। चन्द्र इवाचरतीत्यर्थः ॥ **मालोपमामाह—मालोपमेति**। बह्वित्येकाधिकपरम् । तेन 'तां हंसमालाः शरदीव गङ्गां महौषधीर्नक्तमिवात्मभासः । स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ॥'

## विवृतिपूर्तिः

**रसनेति**। यथा खलु रसनायां पूर्वत्वमधिगतायाः क्षुद्रघण्टिकायाः परग्रथनावसरे परत्वं तथैवात्र पूर्वपूर्वोपमेयस्योपमानत्वसंपादनाय परस्परप्राप्तिरिति तत्त्वम् ॥

## विज्ञप्रिया

रसनोपमामाह—**कथितेति**। यथोर्ध्वमिति उत्तरस्येत्यर्थः ।

**चन्द्रायते** इति । चन्द्र इवाचरति इत्यादिरर्थः । शुक्लरुचाऽपीत्यत्र अपिकारस्य हंसोऽपि इत्यन्वयः । विहाय आकाशम् ।

## कुसुमप्रतिमा

कथितेति । ऊर्द्धमनतिक्रम्येति यथोर्द्धम् "शास्त्रे वृक्षवद्धयवहारः" इति न्यायात् परपरमित्यर्थः, उपमेयस्य यदि उपमानता स्यात्, तदा सा रसनोपमा कथिता । तथा च यथा रसनायां काञ्चीदाम्नि स्वर्णादिगुटिकानेकैकस्यैव आपेक्षिक पूर्वपूर्वत्वं परपरत्वञ्च, तथात्रापि पौर्वापर्य्येण एकैकपदार्थस्य आपेक्षिकमुपमेयत्वमुपमानत्वञ्चेति रसनावद्विन्यासादस्या रसनोपमेति संज्ञा ।

चन्द्रेति । हंसः, शुक्लरुचापि न केवलं शान्तमूर्त्तितया शुभ्रप्रभयापि चन्द्रायते चन्द्र इवाचरति । कान्ता कमनीयाङ्गी रमणी चारुगतेन मनोहरगमनेन हं सायते स हंस इवाचरति । वारि जलम्, स्पर्शसुखेन सुखजनकस्पर्शेन, कान्तायते सा कान्तेवाचरति । विहाय आकाशञ्च स्वच्छतया निर्म्मलतया वारीयते तद्वारीवाचरति ।

अत्र चन्द्रापेक्षया उपमेयभूतस्य हंसस्य कान्तापेक्षया उपमानत्वम्, कान्तायाश्च वार्य्यपेक्षया उपमानत्वम्, वारिणश्च विहायोऽपेक्षया उपमानत्वमिति लक्षणसङ्गतिः।

इदन्तु शुक्लरुक्प्रभृतिसाधारणधर्म्मभेदे उदाहरणम्। साधारणधर्म्मस्याभेदेऽपि रसनोपमा सम्भवति। यथा तर्कवागीशधृतम्—

"महीभृतो वदान्यस्य भारतीवामली मतिः। चेष्टा मतिरिव स्वेच्छा चेष्टे व गुणसन्ततिः॥"

अत्र स्वच्छत्वरूपः साधारणधर्म्म एक एवं। क्वचित् साधारणधर्म्मानुक्तावपीयं सम्भवति। यथा रघुवंशे—"आकारसदृशाप्राज्ञः प्रज्ञया सदृशागमः। आगमैः सदृशारम्भ आरम्भसदृशोदयः॥"

सरस्वतीकण्ठाभरणकारास्तु रसनागत-गुटिका-श्रेणीक्रमेणोत्तरोत्तरमुपमाप्रत्ययमात्रेणैव रसनोपमा स्यादिति मन्वन्ते। तथा च तन्मते इदमप्युदाहरणम्। यथा कादम्बर्य्याम्—

"कृतं मे वपुषि वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकर इव मदेन, नवयौवनेन पदम्।"

अतएवास्माभिरपि कादम्बरीटीकायामुदाहृतवाक्ये रसनोपमैव निवेशिता। वस्तुतस्तु ईदृशलक्ष्यव्यापनार्थं दर्पणकारस्यापि रसनोपमाभेदान्तराङ्गीकरणमावश्यकमेव। किञ्च उदाहृते मालोपमाप्रसिद्धलक्षवैलक्षण्यात् सातिशयवैचित्रयवैषम्याच्च मालोपमाङ्गीकारेणाकाङ्क्षानिवृत्तिः साधीयसी न स्यादिति प्रकृतवैचित्रय विज्ञैर्विवेचनीयम्।

ननु "चन्द्रायते" इत्यादौ प्रकृतोपमा अस्ति न वा? अस्ति चेत् कथं न तया व्यपदेशः। नास्ति चेत् प्रकृतलक्षणव्यापनात् कथं नास्ति?। उच्यते—यथा अगृहीतकुण्डलादिभावस्य स्वर्णस्य स्वर्णत्वेन व्यपदेशः, गृहीतकुण्डलादिभावस्य तु कुण्डलादित्वेनेव व्यपदेशो न पुनः स्वर्णत्वेन, तथात्रापि साधारणोपमाया रसनोपमाभावमापन्नत्वे असाधारणरसनोपमात्वेनेव व्यपदेशो न पुनः स्वर्णत्वेन, तथात्रापि साधारणीपमाया रसनोपमाभावमापन्नत्वे असाधारणरसनोपमात्वेनैव व्यपदेशो युक्तः। तथा चोक्तं शारीरकशाङ्करभाष्यटीकायां वाचस्पतिमिश्रैः—"असाधारणत्वेन हि व्यपदेशा भवन्ति। यथा—क्षिति-जल पवन बीजादि सामग्री समवधानजन्माप्यङ्कुरः शालिबीजत्वेन व्यपदिश्यते शाल्यङ्कुर इति न क्षित्याद्यङ्कुर इति तेषां कार्य्यान्तरेऽपि साधारण्यात्।"

## विमला

रशनोपमामाह, कश्चितेति।—यथोर्द्धम्—उत्तरोत्तरम्, उपमेयस्य यदि उपमानता स्यात्, पूर्वोपमायां यदुपमेयम्, उत्तरोपमायां तस्योपमानता यदि स्यात् इत्यर्थः, यथा काञ्चा पूर्वत्वं प्राप्तायांःक्षुद्रघण्टिकायाः अन्यग्रथनावसरे परत्वं, तथाऽत्र पूर्वपूर्वोपमेयस्योपमानत्यार्थं परपरावसरः इत्याशयः, तदा रशनोपमा कविता, रशना—काञ्ची, तत्सदृशग्रथनात् अस्या इयं संज्ञेति भावः।

साधारणधर्मस्याभेदे भेदे च द्विविधायामस्यां प्रथमं द्वितीयामुदाहरति, चन्द्रायते इति।—हंसः शुक्लरुचा—शुभ्रकान्त्या, (अधिना सौम्यभावेनेत्यस्य ग्रहणम्) चन्द्रायते—चन्द्र इवाचरतीत्यर्थः, कान्ता चारुगतेन—मनोज्ञगमनेन, [अत्र भावे क्तः] हंसायते—हंस इवाचरति, वारि—जलं, स्पर्शसुखेन—सुखसम्पादकेन स्पर्शेन, कान्तायते—कान्तेवाचरति, विहायः,—आकाशं, ("आकाशविहायसौ" इत्यमरः) स्वच्छतया—नैर्मल्येन, वारीयते—वारीवाचरति इत्यर्थः। ["कर्त्तुः क्यङ् सलोपश्च" (३/१/११ पा.) इति सूत्रेण क्यञ्] । इहेन्द्रवज्रा छन्दः।

आद्या यथा—"महीभृतो वदान्यस्य भारतीवामला मतिः। चेष्टा मतिरिव स्वच्छा चेष्टेव गुणसन्ततिः ॥" अत्र स्वच्छत्वमेकमेव साधारणो धर्मः।

## लक्ष्मी

प्रकारान्तरेणास्या एव भेदान्तरं दर्शयति—**कथितेति**। ऊर्ध्वमनतिक्रम्य यथोर्ध्वम्, ऊर्ध्वक्रमेण 'शास्त्रे वृक्षवद्व्यवहारः' इतिन्यायात् परपरमित्यर्थः, उपमेयस्य प्रथमवाक्ये यदुपमेयं तस्य यदि परवाक्ये उपमानता स्यात् तदा सा रसनोपमा कथिता। यथा खलु काञ्चीत्यपरनामधेयायां रसनायां पूर्वत्वमधिगतायाः क्षुद्र घण्टिकायाः परग्रथनावसरे परत्वं तथैवोपमायां पूर्वमधिगतस्योपमेयस्य परेणोपमेयेन सादृश्योद्भावनावसरे परपरप्राप्तिरिति रसनावद्विन्यासाद्रसनोपमेति नाम।

चन्द्रायत इति। कदाचित् शरत्समये निरूपद्रवावसरे हंससन्निहितं स्वच्छजलं सरोवरं गतवतीं काञ्चिन्नायिकामवलोक्य कस्यचन विदग्धस्योक्तिरियम्। इह स्वच्छसरोवरे हंसः जातावेकवचनम्, शुक्लरुचापि न केवलं शान्त मूर्त्तितया किन्तु शुभ्रकान्त्यापि चन्द्रायते चन्द्र इवाचरति 'कर्त्तुः क्यङ् सलोपश्च' ३/१/११ इति क्यङ् एवमुत्तरत्रापि। कान्ता कमनीयाङ्गी नायिका चारुगतेन सुन्दरगमनेन हंसायते हंस इवाचरति। वारि जलम्, स्पर्शसुखेन आनन्दविधायिना स्पर्शेन अत्र राजदन्तादित्वात् सुखशब्दस्य परनिपातः, कान्तायते सा कान्तेवाचरति। विहाय आकाशञ्च 'पुंस्याकाशविहायसी' इत्यमरः, स्वच्छतया निर्मलतया वारीयते तद्वारीवाचरति। इन्द्रवज्राछन्दस्तल्लक्षणन्तु प्रागुक्तम्।

अत्र चन्द्रः प्रथममुपमानं तदपेक्षया उपमेयभूतस्य हंसस्य कान्तापेक्षया उपमानत्वम्, कान्तायाश्च वार्यपेक्षया उपमानत्वम्, वारिणश्च विहायोऽपेक्षया उपमानत्वमिति परम्पराश्रयणेन रसनोपमत्वाल्लक्षणसमन्वयः। एषैव क्वचित् साधारणधर्मस्य भेदे क्वचिदभेदे च सम्भवति। तत्र शुक्लरुगादिसाधारणधर्मभेदे चेदमुदाहरणम्। साधारणधर्मस्याभेदे तु यथाविवृतिकृतोक्तम्—

'महीभृतो वदान्यस्य भारतीवामला मतिः। चेष्टामतिरिव स्वच्छा चेष्टेव गुणसन्ततिः ॥'

अत्र स्वच्छत्वं शब्दमात्रेण भिन्न एक एव साधारणधर्मः। क्वचित् साधारणधर्मानुपादानेऽपीयं सम्भवति, यथा **रघुवंशे**—

'आकारसदृशी प्रज्ञा प्रज्ञया सदृशागमः। आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥'

केषांचिन्मतेन तद्धितसमासवाक्यगतत्वेन त्रिविधेयम्। तत्राद्योदाहरणं मूल एव। द्वितीयोदाहरणं '**महीभृत** इति। तृतीयोदाहरणं यथा—

**'यथा बाह्यं सतां गूह्यं यथा गूह्यं तथेहितम्।**
**यथेहितं विशुद्धं च यशः शश्वत् स्वभावतः ॥'** इति।

## रुचिरा

प्रकारान्तरेणास्या एव भेदान्तरं निर्दिशति—९५ यथोर्द्धमूर्द्धमूर्द्धम्। **यदि**। **उपमेयस्योपमेयत्वेन** प्रतिपादितस्य। **उपमानता**। **स्यात्**। 'तदे'ति शेषः। **उपमा**। **रसना**। **कथिता**। यथा खलु काञ्चीत्यपरनामधेयायां रसनायां पूर्वमधिगतायाः क्षुद्रघण्टिकायाः परया क्षुद्रघण्टिकया योजनावसरे पराश्रितत्वं सम्पाद्यते, तथैव-उपमायां

पूर्वमभिधिगतस्योपमेयस्य परेणोपमेयेन सादृश्योद्भावनावसरे उपमानत्वेन पराश्रितत्वमित्यन्वर्थेयं रसनेति सञ्ज्ञेति बोध्यम् ॥ ७८ ॥

उदाहरति—**यथा**—'इह स्वच्छजलाशये । **हंसः** ! जातावेकवचनम् । **शुक्लरुचा** शुक्लया स्वकान्त्या । **चन्द्रायते** चन्द्र इवाचरतीत्यर्थः । 'कर्तुः क्यङ् सलोपश्च ।' ३/१/११ इति क्यङ् । एवं परत्रापि । **कान्ता** । **चारुगतेन** सुन्दरेण गमनेन । अत्र भावे क्तः । **हंसायते** हंस इवाचरतीत्यर्थः । **वारि जलम्** । **स्पर्शसुखेन** सुखस्य स्पर्श इति तेन, सुख (आनन्द) कारिणा स्पर्शेन । राजदन्तादित्वात् परनिपातः । **कान्तायते** कान्तेवाचरति विहाय आकाशम् । 'पुंस्याकाशविहायसी ।' इत्यमरः । **स्वच्छतया** निर्म्मलतया । **वारीयते** वारीवाचरति । कदाचित् निरुपद्रवावसरे हंससन्निहितं स्वच्छजलं जलाशयमुपयन्तीं कामपि कान्तामवलोकयमानस्योक्तिरियम् । इन्द्रवज्रावृत्तम् ॥ ९७ ॥'

इदम्बोध्यम्—अत्र हि प्रथमं चन्द्र उपमानम्, हंस उपमेयम्, पुनः—हंस उपमानम्, कान्तोपमेयम्, कान्तोपमानम्, जलमुपमेयम्, जलमुपमानम्, आकाशमुपमेयमित्येवं परपराश्रयणेन रसनोपमत्वादियमुपमा रसना । एषैव क्वचित् साधारणधर्म्मस्य भेदे क्वचिदभेदे च सम्भवति, तत्राद्योदाहृता, अन्त्या यथा—'महीमृतो वदान्यस्य भारतीवामला मतिः । चेष्टामतिरिव स्वच्छा चेष्टेव गुणसन्ततिः ॥' इति । अत्र हि स्वच्छत्वं शब्दमात्रेण भिन्नः साधारणो धर्मः । इयं च तद्धितसमासवाक्यगतत्वेन त्रिविधा । तत्राद्या मूलकृतोदाहृता, द्वितीयाऽस्माभिः । अथ तृतीया यथा-'यथा बाह्यं सतां गूह्यं यथा गूह्यं तथेहितम् । यथेहितं विशुद्धं च यशः शश्वत्स्वभावतः ॥' इति दिक् ।

**मालोपमा यदेकस्योपमानं बहु दृश्यते।**

यथा—

**'वारिजेनेव सरसी शशिनेव निशीथिनी।**

**यौवनेनेव वनिता नयेन श्रीर्मनोहरा॥'**

---

## विवृतिः

इत्यादावुपमाद्वयेऽपि मालात्वमक्षतम्। इयमपि पूर्ववद्विधा। तत्राद्यामाह—**वारिजेनेति**। अत्र मनोहरत्वमेकमेव सादृश्यहेतुः। द्वितीया यथा—'ज्योत्स्नेव नयनानन्दः सुधेव मदकारणम्। प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी॥' अत्र नेत्रानन्दजननादयो विभिन्नधर्मा एव सादृश्यानां हेतवः।

## विवृतिपूर्तिः

**मालेति**। यथा काचिन्माला सजातीयैः कुसुमैः काचिच्च विजातीयैर्निर्मीयते तथैवेयमपि सजातीयैर्विजातीयैर्वा बहुभिरुपमानैरिति भावः। एकस्य उपमेयस्येत्यर्थः॥

**इत्यादय इति**। आचार्यदण्डिना काव्यादर्शस्य द्वितीयपरिच्छेदे उपमाचक्रेऽनेकविध उपमा निरूपिताः, तत्र काश्चन भङ्ग्यो व्युत्पित्सुभिराकलनीयाः॥

## विज्ञप्रिया

मालोपमामाह-**मालोपमेति**। **वारिजेनेत्यादि** स्पष्टम्। अत्र प्रत्युपमानं मनोहरत्वमेको धर्मः। विभिन्नधर्माप्येषा सम्भवति—यथा

**"विज्ञो गुरुरिवासि त्वं कन्दर्प इव सुन्दरः।**

**पाथोधिरिव गम्भीरो गरुत्मानिव विक्रमी॥" इति।**

मालोपमाप्रसङ्गेन स्मृतमुपमाया विशेषान्तरमाह—**क्वचिदिति**। **हंस** इति। अत्र प्रकृतशरद्वर्णने तद्धर्मा हंसचन्द्रादयः सर्व एव प्रकृताः।

## लोचन

नयेनेत्यादौ मनोहरत्वमेकः साधारणो धर्मः। क्वचिद् भिन्नसाधारण धर्मा मालोपमा यथा—

**"ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम्।**

**प्रभुतेव समाविष्टसर्वलोका नितम्बिनी॥"**

एवं रसनोपमाप्यभिन्नसाधारणधर्माभिन्नसाधारणधर्मवेति द्विधा बोद्धव्या।

## कुसुमप्रतिमा

एकत्रानेकोपमायाः समावेशे वैचित्र्यवैलक्षण्यान्नामवैलक्षण्येन तामेव लक्षयति मालोपमेति। एकस्य उपमेयस्य यत् बहुलमनेकमित्यर्थः, उपमानं दृश्यते तन्मालोपमा स्यात्, मालया अनेकत्वेनोपमा मालोपमेति व्युत्पत्तेः।

वारिजेनेति। नयेन नीतिप्रयोगेन श्रीः सम्पत्, वारिजेन पद्मेन सरसौ सरोवर इव, शशिना निशीथिनी रात्रिरिव यौवनेन वनितेव च मनोहरा जायते।

अत्रोपमेयभूतायाः श्रियाः सरसौ निशीथिनी-वनितारूपबहूपमानत्वान्मालोपमा।

अत्र वह्नित्यस्य अनेकार्थपरत्वविवक्षणादुपमानद्वयमात्रदर्शनेऽपि मालोपमैव। यथा कुमारसम्भवे—

**"तां हंसमालाः शरदीव गङ्गां महौषधिं नक्तमिवात्मभासः।**

**स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः॥"**

वारिजेनेत्यादौ गुणस्य तामित्यादौ च क्रियायाः साधारणधर्म्मत्वं ज्ञेयम्।

## विमला

मालोपमामाह, मालोपमेति।—एकस्य—उपमेयस्येत्यर्थः यत् बहु—अनेकवारम्, उपमानं दृश्यते, सा मालोपमा; यथा काचित् माला तुल्यजातीयैः काचिद्वा भिन्नजातीयैः प्रसूनैर्ग्रथ्यते, इयमपि तथा तुल्यजातीयैवां भिन्नजातीयैः अनेकैरुपमानैः इति बोध्यम्। बहु इति एकाधिकपरमपि, तेन—"तां हंसमालाः शरदीव गङ्गां महौषधीर्नक्तमिवात्मभासः। स्थिरोपदेशामुपदेशकाले प्रनिरूपण प्राक्तनजन्मविद्याः॥" इत्यादौ उपमाद्वयेऽपि मालोपमा अक्षतेति बोध्यम्।

इयमपि द्विधा, तत्राद्यामाह, वारिजेनेति।—वारिजेन—पद्मेन, सरसौ—सरोवरम् इव, शशिना—चन्द्रेण, निशीथिनी—रात्रिः इव, ("निशा निशीथिनी रात्रिः" इत्यमरः) यौवनेन—तारुण्येन, वनिता—कान्ता इव, नयेन—नीत्या, नीतिप्रयोगेण इत्यर्थः, श्रीः,—लक्ष्मीः, सम्पदित्यर्थः, मनोहरा—मनोज्ञा, उत्कर्षशालिनीत्यर्थः, भवतीति शेषः। अत्र मनोहरत्वमेकमेव सादृश्यहेतुः। द्वितीया यथा—"ज्योत्स्नेव नयनानन्दः सुधेव मदकारणम्। प्रभुतेव समाकृष्ट-सर्वलोका नितम्बिनी॥" अत्र नेत्रानन्दजननादयः विभिन्नधर्मा एव सादृश्यानां हेतवः।

## लक्ष्मी

एकत्रानेकोपमायाः सत्त्वे वैचित्र्यवैलक्षण्येन भेदान्तरं लक्षयति—मालोपमेति। एकस्य उपमेयस्य यद् बहु एकाधिकमित्यर्थः, उपमानं दृश्यते तन्मालोपमा स्यात् यथा काचिन्माला सजातीयैरेव विजातीयैरेव सजातीय-विजातीयोभयविधैरेव वा पुष्पैर्निर्मीयते तथा बहुभिर्बहुविधैरेव वोपमानैर्निर्मीयमाणमालासादृश्यान्मालोपमेति नाम।

इयमपि साधारणधर्मभेदाभेदेन द्विविधा तत्र द्वितीयोदाहरणमाह—**वारिजेनेवेति।**

नयेन नीतिप्रयोगेण श्री राजलक्ष्मीः, वारिजेन कमलेन सरसी जलाशय इव, शशिना निशीथिनी रात्रिरिव 'निशा निशाथिनी रात्रिः' इत्यमरः, यौवनेन तारुण्येन वनिता कान्तेव च मनोहरा भवति । अत्र मनोहरत्वमेको धर्मः । तथाचोपमेयभूतायाः श्रियाः सरसी-निशीथिनी-वनितारूपानेकोपमानत्वाल्लक्षणसमन्वयः । **आद्योदाहरणं** यथा—

'ज्योत्स्नेव नयनानन्दः सुधेव मदकारणम् । प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥'

अत्र नेत्रानन्दजननादयोऽनेकाः । साधारणधर्माः । लक्षणे बह्वित्यस्यैकाधिकपरत्वविवक्षणात् केवलोपमानद्वयसत्त्वेऽपि मालोपमैव । यथा कुमारसम्भवे—

**'तां हंसमालाः शरदीव गङ्गां महौषधीं नक्तमिवात्मभासः ।**
**स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ॥'**

अत्र क्रियायाः साधारणधर्मत्वम् ।

## रुचिरा

भेदान्तरं लक्षयति—९६ **यद्** यदि । **एकस्य** 'उपमेयस्ये'ति शेषः । **बहु** । **उपमानम्** । **दृश्यते** । 'तर्ही'ति शेषः । **उपमा** । **माला** । अयम्भावः—यथा माला सजातीयैरेव विजातीयैरेव सजातीयविजातीयोभयविधैरेव वा कुसुमैरलङ्क्रियते, तथा—बहुभिर्बहुविधैरेव वोपमानैरलङ्क्रियमाण मालासादृश्यान्मालेत्यपराभिधेयोपमा । इति ।

उदाहरति—**यथा**—'**वारिजेन** कमलेन । **सरसी** । **इव** । यद्वा—सरसी । वारिजेनेव कमलेनेव । **शशिना** चन्द्रेण । **निशीथिनी** रात्रिः । इव । यद्वा-निशीथिनी । शशिनेव । **यौवनेन** तारुण्येन । **वनिता** कान्ता । **इव** । यद्वावनिता । यौवनेवेत्यन्वयः । **श्रीः** सम्पत् । **नयेन** । यद्वा-नयेन । श्रीरित्यन्वयः । **मनोरमा** ॥' इदम्बोध्यम्—अत्र प्रथमे पक्षे सरस्यादय उपमानभूताः, श्रीः पुनरुपमेयभूता, द्वितीये पक्षे—वारिजादीनामुपमानत्वम्, नयस्योपमानत्वम् । एवमुभयथाऽपि उपमेयैक्येऽपि उपमानानैक्यम् । सरस्यादीनामुपमानत्वे मनोरमत्वं धर्मः, वारिजादीनामुपमानत्वे चेवस्य नित्यसमासत्वं सङ्गच्छते यथा वा—"ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् । प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥" इति । अत्र च नेत्रानन्दजननादयो विभिन्नाः सादृश्यहेतवो धर्म्माः, पूर्वत्र मनोहरत्वमेको धर्म इति भेदः । इति ॥ ९८ ॥

क्वचिदुपमानोपमेययोरपि प्रकृतत्वं दृश्यते—

**'हंसश्चन्द्र इवाभाति जलं व्योमतलं यथा।**

**विमलाः कुमुदानीव तारकाः शरदागमे ॥'**

**'अस्य राज्ञो गृहे भान्ति भूपानां ता विभूतयः।**

**पुरंदरस्य भवने कल्पवृक्षभवा इव ॥'**

अत्रोपमेयभूतविभूतिभिः 'कल्पवृक्षभवा इव' इत्युपमानभूता विभूतय आक्षिप्यन्त इत्याक्षेपोपमा। अत्रैव 'गृहे' इत्यस्य 'भवने' इत्यनेन प्रतिनिर्देशत्प्रतिनिर्देश्योपमा इत्यादयश्च न लक्षिताः। एवंविधवैचित्र्यस्य सहस्रधा दर्शनात्।

---

## विवृतिः

उपमेयस्य प्रकृतत्वमुपमानस्याप्रकृतत्वं प्रायिकमित्यभिप्रायेणाह—**क्वचिदिति**। प्रकृतत्वं वर्णनीयस्योत्कर्षाधायकत्वेनाकाङ्क्षितत्वम् ॥ **हंस इति**। हंसादय इव चन्द्रादयोऽपि वर्णनीयशरत्कालस्योत्कर्षाधायकत्वेनाकाङ्क्षिताः। 'विमलाः' इति पाठो न रमणीयः, भिन्नलिङ्गतया कुमुदानीत्युपमानान्वायायोग्यत्वात्। तस्मात् 'लसन्ति' इति पाठो द्रष्टव्यः॥ प्राचीनसंमतानाक्षेपोपमादीनुपमाप्रकारान्वैचित्र्यातिशयानाधायकत्वेनोपेक्षमाण आह—**अस्य राज्ञ इति**। कल्पवृक्षभवाः कल्पवृक्षोत्पन्ना विभूतय इत्यर्थः ॥ **आक्षिप्यन्त इति**। 'कल्पवृक्षभवाः' इति विशेषणेनोपस्थिता विभूतय एवाक्षिप्यन्त इत्यर्थः। **एवंविधेति**। यथाकथंचिद्वैचित्र्यविशेषाणां परिच्छेत्तुमशक्यतया तत्प्रयोजकप्रकाराणामपि परिच्छेदो न संभवतीति भावः ॥ अनन्वयालंकारमाह—**उपमानेति**।

## विज्ञप्रिया

आक्षेपोपमा-प्रतिनिर्देश्योपमयोः सूत्रेणानुक्तिबीजं दर्शयितुं तद्द्वयमाह-**अस्य राज्ञ** इति। भूपानीताः पराजितभूपेभ्यः आनीताः। कल्पवृक्षभवास्तज्जन्या विभूतय इत्यनुषङ्गः। आक्षिप्यन्ते अनुषज्यन्ते। आक्षेपोपमा अनुषङ्गोपमा। अत्रैव प्रतिनिर्देश्योपमावत्त्वमप्याह—**अत्रैवेति**।

## लोचन

हंसश्चन्द्र इवेत्यादौ शरद्वर्णनस्य प्रकृतत्वाद्धंसचन्द्रयोर्जलव्योम्नोस्तारकाकुमुदयोश्च प्रकृतत्वम्।

भूपानीताः राजभिरुपहारीकृताः। गृहे इत्यस्य उपमेयवाक्यगतस्य भवन इत्यनेन उपमानवाक्यगतेन। **एवंविधेति**। अयमाशयः यदित्थं क्वचिदपि विच्छित्याभासमादाय विशेषतो लक्षितव्यं तेन तस्य तथाविधस्य सहस्रधासम्भवाद् ग्रन्थगौरवं विना न किञ्चित्फलमिति। तथाविधस्यापि लिखितव्यत्वे वा यद्युक्तप्रकारवैलक्ष्यण्यं तदा लक्षितव्यम्। नच तथा।

## कुसुमप्रतिमा

क्वचिदिति । प्रकृतत्वं प्रस्तुतत्वेन वर्णनायोग्यत्वमित्यर्थः । एतेन उपमेयस्यैव प्रकृतत्वम्, न पुनरुपमानस्येति प्राचां नियमाभिधानं प्रायिकमेवेति सूचितम् ।

हंस इति । शरदागमे शरत्कालप्रवृत्तौ, हंसश्चन्द्र इव आभाति परिष्कृतवर्णत्वेन प्रकाशते, व्योमतलमाकाशतलं यथा तथैव जलं निर्म्मलमित्यर्थः, तथा तारका नक्षत्राणि कुमुदानीव विमला जायन्ते । अत्र शरदो वर्णने तदङ्गानामुपमेयोपमागभूतानामुभयेषामपि हंसचन्द्रदीनां प्रकृतत्वेन वर्णनायोग्यत्वाद्वर्णनमित्याशयः । तथा "विमलाः कुमुदानीव तारकाः" इत्यत्र "सूधेव विमलश्चन्द्रः" इत्यादिवत् लिङ्गभेदे, भग्नप्रक्रमतादोषः । तथापि न किञ्चिदुद्वेजनीयम्, दोषाणामलङ्कारप्रतिबन्धकत्वाभावात् ।

मतान्तरे उपमाभेदान्तरप्रदर्शनायोदाहरति अस्येति । अस्य राज्ञो गृहे भूपानामन्वेषां राज्ञां ता युद्धजिता विभूतयः सम्पदः, पुरन्दरस्य भवने देवराजस्य गृहे, कल्पवृक्षप्तवा विभूतय इव भान्ति ।

प्राचामुपमाभेदान्तराणि दर्शयति अत्रेति । "उपमेयभूतविभूतिभिः ता विभूतयः" इत्येनोक्ताभिरित्यर्थः । आक्षिप्यन्ते शब्दानुपात्ता अपि व्यञ्जनया प्रत्याय्यान्ते, इति हेतोः, आक्षेपोपमा नामोपमाभेद इत्यर्थः । प्रतिनिद्र्देशादुपमानत्वेन प्रत्यवस्थापनात्, प्रतिनिद्र्देश्योपमा नामोपमाभेद इति तात्पर्य्यम् ।

इदानीमीदृशभेदान्तरलक्षणकरणमयुक्तमित्याशयेनाह इत्यादयश्चेति । न लक्षिता लक्षणादिभिर्न निरूपिताः । सहस्रधा असंख्यप्रकारैरित्यर्थः । तथा च तैर्यथा उक्तेतरभेदा न लक्षिताः, तथाऽस्माभिरपि तदुक्ताक्षेपोपमादिर्भेदी न लक्षिता इत्याशयः ।

## विमला

उपमेयस्य प्रकृत्वमुपमानस्याप्रकृतत्वं प्रायिकमित्यभिप्रायेणाह, क्वचिदिति ।—प्रकृतत्वं—वर्णनीयस्य उत्कर्षाधायकत्वेनाकाङ्क्षिततत्वम् ।

हंस इति ।—शरदागमे—शरत्कालप्रवृतौ, हसः चन्द्र इव, जलं व्योमतलं यथा—नभोमण्डलमिव, तारकाः,—नक्षत्राणि, विमलाः,—शुभ्राः, विशदा इत्यर्थः, कुमुदानि-कैरवाणीव, आभाति—राजते । अत्र हंसादय इव चन्द्रादयोऽपि वर्णनीयशरत्कालस्य उत्कर्षाधायकत्वेनाकाङ्क्षिताः । ["विमलाः" इति पाठो न रमणीयः, भिन्नलिङ्गतया कुमुदानीत्युपमानान्वयायोग्यत्वात्, तस्मात् "लसन्ति" इति पाठो द्रष्टव्यः] ।

प्राचीनसम्मतान् आक्षेपोप्रमादीनुपमाप्रकारान् वैचित्रयातिशयानाधायकत्वेनोपेक्षमाण :आह, अस्य राज्ञ इति ।—अस्य—प्रस्तुतस्य, वणनीयस्य वा, राज्ञः गृहे पुरन्दरस्य—इन्द्रस्य, भवने कल्पवृक्षभवाः,—कल्पवृक्षोत्पन्नाः, विभूतयः इति शेषः, इव भूपानीताः,—भूपेभ्यः,—विजितनृपेभ्यः, आनीताः,—गृहीता इत्यार्थः, विभूतयः,—सम्पदः, भान्ति—विराजन्ते । ["भूपानीताः" इत्यत्र "भूपालां ता इति पाठे ताः,—बहुमूल्यत्वेन प्रसिद्धाः इत्यर्थः] ।

आक्षिप्यन्ते इति ।—"कल्पवृक्षभवाः" इति विशेषणेनोपस्थिता विभूतय एवाक्षिपयन्ते इत्यर्थः । एवं विधेति—यथाकथञ्चिद्वैचित्रयविशेषाणां परिच्छेतुमशक्यतया तत्प्रयोजकप्रकाराणामपि परिच्छेदो न सम्भवति इति भावः ।

## लक्ष्मी

उपमेयस्य प्रकृतत्वमुपमानस्याप्रकृत्वं प्रायिकमित्याशयेनाह—क्वचिदिति। प्रकृतत्वं वर्णनीयस्योत्कर्षाधायकत्वेनाकाङ्क्षितत्वम्। एवञ्च उपमेयस्यैव प्रकृतत्वम्, नोपमानस्येति नियमकथनं प्राचां प्रायिकमेवेत्यवधेयम्।

हंस इति। शरदागमे शरदः प्रारम्भे, हंसश्चन्द्र इव आभाति शुद्धवर्णत्वेन प्रकाशते, व्योमतलं व्योम यथा अत्र तलं स्वरूपप्रतिपादकः, तथैव जलमित्यर्थः, तथा तारका नक्षत्राणि कुमुदानीव विमला भवन्ति।

अत्र हंसादय इव चन्द्रादयोऽपि वर्णनीयशरत्समयस्योत्कर्षाधायकत्वेनाकाङ्क्षिताः। तथा 'सुधेव विमलश्चन्द्रः' इत्यादिवत् 'विमलाः कुमुदानीव तारकाः' इत्यत्र लिङ्गभेदे भग्नप्रक्रमत्वं दोषः। एवं स्थितावपि दोषाणामलङ्कारप्रतिबन्धकत्वाभावेन न कापि क्षतिरिति विभाबनीयम्। **वस्तुतस्तु** 'विमलाः' इत्यस्य स्थाने स्फुरन्ति इति पाठेन भिन्नलिङ्गत्वेऽपि अन्वयोपपत्तेरयमेव पाठो रमणीयः।

प्राचीनाभिमताक्षेपोपमादीनुपमाभेदान् वैचित्र्यातिशयाधायकत्वेनोपेक्षमाण आह-अस्येति। अस्य राज्ञो महीपतेः, गृहे सदने भूपानामन्येषां क्षितिपतीनां ताः स्वयमर्पिताः विभूतयः सम्पत्तयः, पुरन्दरस्य देवेन्द्रस्य भवने गृहे, कल्पवृक्षभवा विभूतय इव शोभन्ते। यथा इन्द्रस्य भवने यथेच्छ सम्पदः सृजतां कल्पवृक्षाणां सम्पाद्याः सम्पदः सर्वतः शोभन्ते तथाऽस्य नृपतेगृहेऽपि कामं समर्प्यमाणानां वश्यानां नृपतीनां विभूतय इति भावः।

अत्र प्राचीनाभिमतेनालङ्कारान्तरं साधयति—अत्रेति। उपमेयभूतविभूतिभिः प्रकृतराजभवनविद्यमानसम्पद्भिः आक्षिप्यन्ते शब्दानुपात्ता अपि व्यञ्जनयावगम्यन्ते, इति हतोः आक्षेपोपमानामोपमाभेदः। प्रतिनिर्द्देश्यादुपमानत्वेन प्रत्यवस्थापितत्वात् प्रतिनिर्द्देश्योपमानामोपमाभेद इत्याशयः।

सम्प्रत्येतादृशभेदान्तरलक्षणविधानमयुक्तमित्यभिप्रायेणाह—**इत्यादयश्चेति**। उपमा भेदा इति शेषः। न लक्षिता लक्षणादिभिर्न प्रतिपादिताः। सहस्रधा असंख्यविधैरित्यर्थः। एवञ्च यथा प्रतिपादितातिरिक्तभेदास्तैर्न लक्षिताः, तथा तत्प्रतिपादिताक्षेपोपमादिभिर्भेदोऽस्माभिर्न लक्षितास्ते तु स्वयमेवोह्या इत्यभिप्रायः। तथाहि—

**'चन्द्रबिम्बादिव विषं चन्दनादिव पावकः।**
**परुषा वागितो वक्त्रान्निःसरेन्मतिमन्मणे ? ॥'**

## रुचिरा

अस्या अपि प्रभेदं निर्देष्टुमुपक्रमते—**क्वचित्**। **द्वयोः**। **अपि**। **उपमानोपमेययोः प्रकृतत्वम्**। इदमवगमयति—'उपमेयस्य प्रकृत्तत्वमुपमानस्याप्रकृतत्वमिति प्रवादः प्रायिकः। प्रकृतत्वं च वर्णनीयस्योत्कर्षाधायकत्वेनाकाङ्क्षितत्वम्। इति। **दृश्यते**' यथा—'**हंसः**। **चन्द्र**। **इव**। **आभाति**। यथा **व्योमतलं** व्योम। अत्र तलशब्दः स्वरूपवाचकः। 'तथे'ति शेषः। **जलम्**। **शरदागमे** शरदः प्रारम्भे। **तारकाः**। कुमुदानीव। **विमलाः**। 'स्फुरन्ती'ति पाठान्तरं साधु, भिन्नलिङ्गत्वेऽपि अन्वयोपपत्तेः ॥ ९९ ॥

एतच्च दिग्दर्शनमित्यभिप्रायेणाह—'**अस्य**। **राज्ञः**। **गृहे** प्रासादे। **भूपानां** राजान्तरान्तराणाम्। **ताः**। **विभूतयः**'। **भान्ति**। 'याः' इति शेषः। **पुरन्दरस्य** देवेन्द्रस्य। **भवने** प्रासादे। **कल्पवृक्षभवाः**। **इवः**। 'स्थिता' इति शेषः।

**इत्यत्र** । **उपमेयविभूतिभिः** प्रकृतस्य राज्ञो भवने विद्यमानाभिः सम्पद्भिः । **'कल्पवृक्षभवा इव' इत्युपमानभूताः** । **विभूतयः** । **आक्षिप्यन्ते** बलात्सादृश्यप्रतियोगिन्यः क्रियन्ते । **इत्याक्षेपोपमा** । तथा—**अत्र** । **एव** । **'गृहे' इत्यस्य** । **'भवने' इत्यनेन** । **प्रतिनिर्देशात्** । ल्यबर्थेयं पञ्चमी । **प्रतिनिर्देश्यात्मा** 'उपमे'ति शेषः । अयम्भावः—यथा-इन्द्रस्य भवने यथाऽभिलाषं सम्पदः सृजतां कल्पपादपानां सम्पाद्याः सम्पदः सर्वतो विलसन्ति, एवम् अस्य नृपतेः सद्मन्यपि कामं समर्पयमाणानां वश्यानां नृपतीनां विभूतयः । एवमिन्द्रविभूतय उपमानभूताः, प्रकृता विभूतय उपमेयभूताः । अत्र च—'ता' इत्यनेन विशेष्यतया निर्दिष्टानामुपमेयविभूतीनामुपमानविभूतयो विशेषणतां नीत एव सादृश्यप्रतियोगितयाऽऽक्षिप्यन्त इत्याक्षेपोपमेयम्। तथा—'राज्ञो गृहे' इति निर्दिश्य 'पुरन्दरस्य भुवने'इति प्रतिनिर्देशात् उभयोः सादृश्यं निर्देश्य प्रतिनिर्देश्यात्मनाऽवस्थितमिति प्रतिनिर्दिश्यात्मेयमुपमा । इति । **इत्यादयः** । 'उपमाभेदा' इति शेषः । **च** । **एवंविधवैचित्र्यस्य** । **सहस्रधा** । दर्शनात् । न । लक्षिताः, 'किन्तु ते स्वयमूहया' इति शेषः । **च** । **एवंविधवैचित्र्यस्य** । **सहस्रधा** । **दर्शनात** । **न** । **लक्षिताः**, 'किन्तु ते स्वयमूहया' इति शेषः । तथा हि—'चन्द्रबिम्बादिव विषं चन्दनादिव पावकः । परुषा वागितो वक्त्रान्निःसरेन्मतिमन्मणे ॥' इत्यसम्भावितोपमा, 'उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम्। तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥' इति कविकल्पितोपमानोपमा 'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्। एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥' इत्युपपादकोपमा, 'इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु । रजांसि समरोत्थानि तच्छोणितनदीष्विव ॥' इति समुच्चितोपमा, 'न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे । इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमैव सा ॥' इत्युक्ता तत्त्वाख्यानोपमा, 'उद्गर्भहूणतरुणीरमणोपमर्दभग्नोन्नतस्तननिवेशनिभं हिमांशोः । बिम्बं कठोरबिसकाण्डकडारमेतद्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ॥' इत्यप्रसिद्धोपमानोपमा, 'सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम्।' इति कल्पितोपमा; इत्यनेकशः किञ्चिद्वैचित्र्यविशेषा उपमाः । काव्यप्रकाशकृता तु—एकदेशविवर्त्तिन्यादयस्त्रयोऽपि नोदिता भेदाः । इति दिक् ॥ १०० ॥

एवमुपमां निरूप्यानन्वयं निरूपयति—९७ **उपमेत्यादिना** ।

**उपमानोपमेयत्वमेकस्यैव त्वनन्वयाः ॥ २६ ॥**

अर्थादेकवाक्ये ।

यथा—

**'राजीवमिव राजीवं, जलं जलमिवाजनि ।**

**चन्द्रश्च इवातन्द्रः, शरत्समुदयोद्यमे ॥'**

अत्र राजीवादीनामनन्यसदृशत्वप्रतिपादनार्थमुपमानोपमेयभावो वैवक्षिकः । 'राजीवमिव पाथोजम्' इति चास्य लाटानुप्रासाद्विविक्तो विषयः । किंत्वत्रोचितत्वादेकशब्दप्रयोग एव श्रेयान् । तदुक्तम्—

**'अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम् ।**

**अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकम् ॥'** इति ।

---

## विवृति

नन्वेतद्रसनोपमायामुपमेयोपमायां चातिव्याप्तमत आह—**अर्थादिति** । पारिशेष्यादित्यर्थः । रसनोपमायां 'यथोर्ध्वं' इत्यनेन उपमेयोपमायां 'पर्यायेण—' इत्यनेनानेकवाक्यलाभादेकवाक्य एवास्य विषय इति भावः । ननूपमेयोपमायां 'द्वयोः' इत्युपादानात्कथमतिव्याप्तिरिति चेत् । न । तत्र प्रत्येकपदार्थस्यापि पर्यायेणोपमानोपमेयसंभवात् ॥ **अतन्द्रो** निर्मलः ॥ ननूपमानोपमेयभावो भेद एव संभवति, कथमेकस्यैव स इत्यत आह—**राजीवादीनामिति** । **वैवक्षिक** आरोप्य विवक्षितः । ननु लाटानुप्रासविषयविनिर्मोकेणास्य विषयो न संभवतीति तद्बाधकोऽयमेव स्यादित्यत आह—**राजीवमिति** । **विविक्तो विषय इति** । तथा चायं संभवद्विषयान्तरत्वान्न बाधक इति भावः । **उचितत्वादुपमानोपमेयाभेदस्य** झटिति प्रतीत्युपयुक्तत्वात् । **श्रेयानतिप्रशस्तो** न तु नियतः ॥ **औचित्यात्प्राशस्त्यात्** । **आनुषङ्गिकमनियतम्** । **साक्षादेव** स्वयमेव ॥ **प्रयोजकं** वैचित्र्याधायकम् ॥

## विवृतिपूर्तिः

**अनन्वय इति** । न विद्यतेऽन्वय उपमानान्तरेणं संबन्धो यत्र सोऽनन्वयः । **स च पूर्णो लुप्तश्चेति** द्विविधः । पूर्णस्तूपमावत्षड्विधोऽपि संभवति । यथा—'गङ्गा हृद्या यथा गङ्गा गङ्गा गङ्गेव पावनी । हरिणा सदृशो बन्धुर्हरितुल्यः परो हरिः ॥ गुरुवद्गुरुराध्यो गुरुवद्गौरवं गुरोः ॥' लुप्तेऽपि धर्मलुप्तः पञ्चविधोऽपि संभवति । प्रागुक्तसार्धश्लोके 'गङ्गा राजन्यथा गङ्गा गङ्गा गङ्गेव सर्वदा । हरिणा सदृशो विष्णुर्विष्णुतुल्यः सदा हरिः ॥ गुरुवद्गुरुरास्तेऽस्मिन्मण्डले गुरुवद्गुरोः ॥' इति पदान्तरदाने तथा वाचकलुप्तः । 'रामायमाणः श्रीरामः सीता सीतामनोहरा । ममान्तः करणे नित्यं विहरेतां जगद्गुरू ॥' इत्यत्र क्यङ्समासयोः । एवम् 'लङ्कापुरादतितरां कुपितः फणीव निर्गत्य जातु पृतनापतिभिः परीतः । क्रुद्धं रणे सपदि दाशरथिं दशास्यः संरब्धदाशरथिदर्शमहो ददर्श ॥' एवं कर्तृणमुलादावप्यूह्यम् । 'अम्बरत्यम्बरं यद्वत्समुद्रोऽपि समुद्रति । विक्रमार्कमहीपाल तथा त्वं विक्रमार्कसि ॥' इत्यत्र वाक्यार्थावयवेषु त्रिष्वन्ववेषु धर्मवाचकयोर्लोपः । मुख्यवाक्यार्थस्त्वनन्वयफलेन निरूपमत्वेन समानधर्मेण

प्रयोजितो मालोपमैव । 'एतावति प्रपञ्चेऽस्मिन्सदेवासुरमानुषे । केनोपमीयतां तज्ज्ञै रामो रामपराक्रमः ॥' अत्र वाचकधर्मोपमानां लोपः ॥

## विज्ञप्रिया

अनन्वयालङ्कारमाह—उपमेति । **अर्थादिकवाच्य** इति । वाक्यभेदे उक्तरसनोपमाया वक्ष्यमाणोपमेयोपमायाश्च प्रसक्त्या तद्भेदस्याऽत्र प्रवेशात् ।

**राजीवमिति** । अतन्द्रोऽनिद्रितो घूर्णमान इति यावत् । शरत्समुदयः शरल्लक्ष्मीस्तस्या उद्यमे उपक्रमे ।

**वैवक्षिक** इति । विवक्षाशब्दात् कण् । मुखं चन्द्र इत्यत्र यथा भेदेऽभेदारोपाद् व्यधिकरणेनाऽऽरोपितेन चन्द्रत्वेन मुखप्रतीतिस्तथात्राऽभेदे भेदारोपाद् विवक्षितेन व्यधिकरणेनापि भेदघटितसादृश्येनेवार्थे नौपम्यप्रतीतिरित्यर्थः । आहार्य्यतादृशविवक्षाप्रयोजनमाह—**अनन्यसदृशत्वेति** । अत्र लाटानुप्रासोऽप्यस्ति । तदसङ्कीर्णमिममाह—**पाथोजमिति । उचितत्वादिति** । अलङ्कारद्वयेन शोभातिशयजननादौचित्यम् । **अनन्वये** चेति । आनुषङ्गिकमन्यार्थप्रयत्नेन सिद्धम् । **अस्मिंस्त्विति** । लाटानुप्रासोक्तकारिकात्वेनाऽस्मिन्नित्यनेन लाटानुप्रास उक्तः—**साक्षादेवेति** । अन्यार्थप्रयत्नाभावाद् इत्यर्थः । प्रयोजनं लाटानुप्रासस्य शब्दैक्यमित्यनुषङ्गः ।

## लोचन

तुः पुनरर्थे । उपमालक्षणस्थस्य द्वयोरित्यस्य व्यवच्छेदार्थः । न विद्यत उपमेयस्य उपमानान्तरेणान्वयः सम्बन्धोऽत्रेत्यन्वर्थनामाऽनन्वयालङ्कारः, **अर्थादिति** । वाक्यद्वये उपमेयोपमाया वक्ष्यमाणत्वादित्यर्थः ।

नन्वेकस्यैव उपमानोपमेयभावः कथं न विरुद्ध इत्यत आह—**अत्रेति** । वैवक्षिको न हि तात्त्विकः । अस्यालङ्कारस्य राजीवशब्दयोस्तात्पर्य्यमात्रभिन्नार्थत्वेन लाटानुप्रासे सम्भवत्यपि न तद्विशेषत्वमित्याशयः । तत्र विषयविवेकं दर्शयति-कथं राजीवमित्येकशब्दप्रयोगः पौनरुक्त्यापततीत्याह—**किन्त्वत्रेति** । उचितत्वं पर्य्यायक्रमंभङ्गदोषस्यावश्योपेक्षणीयत्वादिति भावः । अत्र प्राचीनसम्मति दर्शयति—**यदाहुरिति** । आनुषङ्गिकं तल्लक्षणानन्तर्गतमपि काव्योज्ज्वलीकरणार्थमुपादेयमिति भावः । साक्षादेव न तु दोषनियमात्, तल्लक्षणान्तर्गतत्वादित्यर्थः ।

## कुसुमप्रतिमा

अनन्वयं नामालङ्कारं लक्षयति उपेति । एकस्यैवं तु पदार्थस्य उपमानोपमेयत्वं युपपदेव उपमानत्वमुपमेयत्वञ्च कल्पितञ्चेत् तदा अनन्वयो नामालङ्कारः स्यात् । तथा च उपमेयत्वं नाम उपमानभिन्नत्वे सति उपमानगतसम्भाव्यमानानेकधर्म्मवत्त्वम् । तेनोभयवाप्युभयभेदास्थावश्यकत्वादेकस्मिन्नेव पदार्थे युगपदुपमानत्वोपमेयत्वयोः सत्तासम्बन्धोऽसम्भव एवेति न विद्यते अनन्वयः सत्तासम्बन्धो यस्मिन्निति व्युत्पत्त्या अनन्वय इति संज्ञासिद्धिः ।

ननु "चन्द्रायते शुक्लरुचापि हंसः" इत्यादौ एकस्यैव हंसादेश्चन्द्राद्यपेक्षया उपमेयत्वं कान्ताद्यपेक्षया चोपमानत्वम्, तथा "कमलेव-मतिर्मतिरिव कमला" इत्यादावपि एकस्यैव मत्यादेरुपमेयत्वमुपमानत्वञ्चेति रसनोपमायाम् उपमेयोपमायाञ्च अस्य अनन्वयलक्षणस्यातिव्याप्तिरित्याह अर्थादिति । सामान्यविशेष न्यायादित्यर्थः । तथा च अनेकवाक्यं विना रसनोपमाया उपमेयोपमाश्चासम्भव एवेति तयोरनेकावाक्यमेव विषयः, अस्य तु एकवाक्ये अनेकवाक्ये च सम्भवात् सामान्यविशेषन्यायेन एकवाक्यमेव विषयः कल्पात इत्याशयः ।

राजीवमिति। शरदः कालस्य समुदयेन सम्पूर्णभावेन उद्यमे प्रवृत्तौ आविर्भावे सति, राजीव राजीवमिव पद्मं पद्ममिव अतन्द्रं वर्षापङ्कादिकृतमालिम्बहीनम् अजनि; जलं जलमिव अतन्द्रं कर्दमादिमलहीनमजनि; तथा चन्द्रश्च चन्द्र इव अतन्द्रो घनावरणरूपमलशून्यः अजनि जातः।

अत्रैकैकस्यैव राजीवादेरूपमानत्वादुपमेयत्वाच्च अनन्वयः। अयन्तु उपमावदेव पूर्णो लुप्तस्तद्धितादिगततया षड्विधः पञ्चविधः क्यजादिप्रत्ययप्रतिपाद्यश्च सम्भवतीत्युन्नेयम्।

ननूक्तरीत्या उपमानोपमेययोः परस्परभेदस्यावश्यकत्वात् कथमेकस्मिन्नेवासावुपमानोपमेयभावः सम्भवतीत्याह अत्रेति। वैवक्षिकः कविना विवक्षयैवारोपितः, न पुनर्वास्तविक एव स इति भावः।

अथानन्वयस्थलमात्र एव लाटानुप्रासलक्षणव्यापनादनयोर्नियतसाङ्कर्य्यापत्तिरित्याह राजीवमिति। पाथोजमपि पद्मम्। अस्य अमन्वयस्य, लाटानुप्रासात् लाटानुप्रासविषयात्, विविक्तो विभिन्नः। तथा च "राजीवमिव पाथोजम्" इत्यादौ शब्दस्य पौनरुक्त्याभावान्न लाटानुप्रासप्रसक्तिः, उभयोरेव शब्दयोर्वाच्यस्य एकपद्मरूपपदार्थस्य तु उपमानत्वादुपमेयत्वाच्च अनन्वयप्रसक्तिरस्त्येवेति विषयभेदसम्भवान्नानयोर्नियतसाङ्कर्य्यापत्तिरित्याशयः।

ननु तर्हि कथमनन्वयस्य कुत्रापि स्थले "राजीवमिव पाथोजम्" इति वद्भिन्नशब्दप्रयोगो न दृश्यत इत्याह किन्त्विति। अत्र अनन्वये। उचितत्वादिति। तथा च शब्दयोरभेदस्थल एव श्रवणमात्रमेकस्योपमानोपमेयभावप्रतीतिः सम्पद्यते, शब्दभेदे तु अर्थानुसन्धानात् परमेवोपमानोपमेयभावप्रतीतिरिति उचितत्वमिति भावः। एकशब्दप्रयोगः अभिन्नानुपूर्वीकशब्दद्वयविन्यासः। श्रेयान् प्रशस्ततमः। अत्र प्राचीनसंवादमाह तदुक्तमिति।

अनेति। अनन्वये अलङ्कारे, औचित्यात् प्रदर्शितहेतुना सङ्गतत्वात् शब्दयोरैक्यमभिन्नानुपूर्वीकत्वम्, आनुषङ्गिकमनियतम्, "राजीवमिव पाथोजम्" इत्यादौ विषयतासम्भवादिति भावः। अस्मिन् लाटानुप्रासे तु शब्दैक्यं साक्षादेव प्रयोजकं सर्वथैव नियतम्, अन्यथा लाटानुप्राससम्भवादित्यभिप्रायः।

अथ तर्हि "राजीवमिव राजीवम्" इत्यादौ शब्दैक्ये अनन्वयस्थले लाटानुप्राससाङ्कर्य्यमनिवार्य्यमेवेति चेन्न, इवाद्यौपम्यपतिपादकसत्त्वे अनन्वयः तदसत्त्वे तु लाटानुप्रास इति विषयविभागस्य सर्वथा सुवचत्वात्।

## विमला

अनन्वयमाह, उपमानेति।—एकस्यैव—वस्तुन इत्यर्थः, उपमानोपमेयत्वम्—उपमानोपमेयभावः, अनन्वयः,—न वर्त्तते अन्वयः,—उपमानान्तरेण सम्बन्धः यस्मिन् असौ अनन्वयः। स प्रथमं पूर्णलुप्तभेदेन द्विविधः, तत्र पूर्णस्य उपमावत् षट्प्रकारत्वं, लुप्तभेदे धर्मलुप्तस्य पञ्च भेदाः, वाचकधर्मोपमादीनां लोपात्। उदाहरणानि स्वयमुन्नेयानि इति सङ्क्षेपः।

नन्वेतंदशनोपमायां मुपमेयोपमायां चातिव्याप्तम्? अत आह, अर्थादिति।—पारिशेष्यादित्यर्थः। रशनोपमायां "यथोर्द्ध्वम्—" इत्यनेन, उपमेयोपमायां "पर्य्यायेण—" इत्यनेनानेकवाक्यलाभादेकवाक्ये एवास्य विषय इति भावः। ननूपमेयोपमायां "द्वयोः" इत्युपादानात् कथमतिव्याप्तिः? इति चेत्, न; तत्र प्रत्येकपदार्थस्यापि पर्य्यायेणोपमानोपमेयसम्भवात्।

राजीवमिति।—अतन्द्रः,—निर्मलः इत्यर्थः। अन्यत् स्पष्टम्।

ननपमानोपमेयभावो भेदे एव सम्भवति, कथमेकस्यैव सः ? इत्यत आह,—अत्र राजीवादीनामिति ।—वैवक्षिकः,—आरोप्य विवक्षितः । ननु लाटानुप्रासविषयविनिर्भोकेण अस्य विषयो न सम्भवति इति तद्बाधकोऽयमेव स्यात् ? इत्यत आह— राजीवमिति । विविक्तो विषय इति ।—तथा चायं सम्भवद्विषयान्तरत्वान्न बाधकः इति भावः । उचितत्वात्—उपमानोपमेयाभेदस्य झटिति प्रतीत्युपयुक्तत्वात् । श्रेयान्—अतिप्रशस्तः, न तु नियतः ।

अनन्वये इति ।—अनन्वये— तदाख्ये अर्थालङ्कारे, औचित्यात्—प्राशस्त्यात् कारणात्, शब्दयोः,—उपमानोपमेयभूतयोरित्यर्थः, ऐक्यम् आनुषङ्गिकं—प्रसङ्गानुप्रसक्तम्; अनियतमित्यर्थः, अस्मिन् पुनर्लाटानुप्रासाख्ये शब्दालङ्कारे, साक्षादेव—स्वत एव, अत्र शब्दैक्यमिति पूर्वतोऽनुवर्त्तनीयं, प्रयोजकं—वैचित्र्याधायकम् । अयं भावः,—तव शब्दयोरैक्यं झटित्युपमानोपमेययोरैक्यावगमायैवेति न नियतम्, अत्र तु अन्यथाकरणेऽस्यासद्भाव एवेति नियतमिति विशेषः ।

## लक्ष्मी

इत्यादौ असम्भावितोपमा । एवमुत्पाद्योपमा—उपपादकोपमा—उभयोपमा-समुञ्चितोपमादय ऊहनीया ।

एवं सपरिकरमुपमां लक्षयित्वा अनन्वयं नामालङ्कारं लक्षयति—**उपमानेति** । एकस्यैव तु वर्णनीयस्य वस्तुन उपमानोपमेयत्वं युगपदेव उपमानत्वमुपमेयत्वं च कल्पितञ्चेत् तदा न विद्यते अन्वय उपमानान्तरेण सत्तासम्बन्धो यत्रेतिव्युत्पत्त्या अनन्वयो नामालङ्कारः स्यात् । एतादृशव्युत्पत्तौ बीजन्तु—उपमेयत्वं नाम उपमानभिन्नत्वे सति उपमानगतसम्भाव्यमानानेकधर्मत्वम्, तेनोभयत्राप्युभयभेदस्यावश्यम्भावित्वादेकत्रैव वस्तुनि युगपदुपमानत्वोपमेयत्वयोः सत्तासम्बन्धोऽसम्भव एवेति ।

नन्वेतल्लक्षणस्य 'चन्द्रायते शुक्लरुचापि हंसः' इत्यादौ एकस्यैव हंसादेश्चन्द्राद्यपेक्षयोपमेयत्वं कान्ताद्यपेक्षया चोपमानत्वमितिरसनोपमायाम्, तथा 'कमलेव मतिर्मतिरिव कमला' इत्यादावपि एकस्यैव मत्यादेरुपमेयत्वमुपमानत्वञ्चेति वक्ष्यमाणोपमेयोपमायाञ्चातिव्याप्तिरित्यत आह—**अर्थादिति** । पारिशेष्यादित्यर्थः । तथा च रसनोपमायां 'यथोर्ध्वम्' इत्यनेन, उपमानोपमायां पर्यायेण—इत्यनेनानेकवाक्यलाभेन तत्रैव संभवात् तयोरनेकवाक्यमेव विषयः, अस्य तु एकवाक्ये अनेकवाक्ये चोभयत्र सम्भवात्पारिशेष्यात् एकवाक्यमेव विषयः कल्प्यत इति भावः । न चोपमेयोपमायां 'द्वयोः' इत्यभिधानात्कथमव्याप्तिरिति वाच्यम्, तत्र प्रत्येकपदार्थस्यापि पर्यायेणोपमानोपमेयसम्भवात् ।

राजीवमिति । शरदः समयस्य समुदयेन समुल्लासेन उद्यमे प्रवृत्तौ आविर्भावे सति, राजीवं कमलं राजीवमिव कमलमिव अतन्द्रं वर्षापङ्कादिजनितमालिन्यरहितम् अजनि; जलं जलमिव अतन्द्रं पङ्कादिमलशून्यम् अजनि; तथा चन्द्रश्चन्द्र इव अतन्द्रो मेघाच्छादनरूपमलरहितः अजनि जातः ।

अत्रैकैकस्यापि राजीवादेः उपमानोपमेयत्वादनन्वयः ।

ननूक्तदिशा उपमानोपमेययोर्मिथो भेदस्यावश्यम्भावित्वेन कथमेकत्रैवासावुपमानोपमेयभावः सम्भवतीत्याशङ्कायामाह—अत्रेति । वैवक्षिकः कविना आरोप्य विवक्षयैव प्रतिपादितो न तु पुनः परमार्थत एव स इत्याशयः ।

ननु लाटानुप्रासविषयातिरिक्तेणास्य विषयो न सम्भवतीतिप्रकृतोदाहरणे लाटानुप्रासस्यापि सम्भावाद-नयोर्नियतसाङ्कर्यापत्तिः स्यादत आह—राजीवमिति। पाथो जलं तस्माज्जायत इति पाथोजं कमलमित्यर्थः। अस्य अनन्वयालङ्कारस्य लाटानुप्रासात् लाटानुप्रासविषयात् विविक्तोऽतिरिक्तः। एवञ्चोक्तोदाहरणे न लाटानुप्रासप्र-सक्तिः शब्दस्य पौनरुक्त्यभावात्, द्वयोरेव शब्दयोः वाच्यस्य एकपद्मरूपवस्तुनस्तु उपमानोपमेयत्वाच्च अनन्वय-प्रसक्तिर्वर्त्तत एवेतिविषयभेदोपलम्भान्नानयोर्नियतसाङ्कर्यापत्तिरितितत्त्वम्।

अथैवं तर्हि 'राजीवमिव पाथोजम्' इतिवत् क्वापि स्थले भिन्नशब्दप्रयोगोऽनन्वयस्य कथन्नोपलभ्यत अत आह—**किन्त्विति**। अत्र अनन्वये। **उचितत्वादिति**। एवञ्च शब्दयोरभेदोपपत्तिस्थल एव केवलश्रवणेनैक-स्योपमानोपमेयभावप्रतीतिरुपपद्यते, शब्दभेदोपपत्ति स्थले तु अर्थज्ञानादनन्तरमेवोपमानोपमेयभावप्रतीतेरुचितत्व-मित्याशयः। एकशब्दप्रयोगः एकविधशब्दप्रयोगः अभिन्नानुपूर्वीकशब्दद्वयस्य रचनेतियावत्। श्रेयान् अतिप्रशस्तो न तु नियतः। ननु किमत्र नियामकमत आह—तदुक्तमिति। तत् तथा उक्तं प्राचीनैरितिशेषः।

**अनन्वयेति**। अनन्वये अलङ्कारे च औचित्यात् उपदर्शितनिमित्तेन सङ्गतत्वात् शब्दैक्यं शब्दयोरैक्यम-भिन्नानुपूर्वीकत्वम् आनुषङ्गिकम् अनुषङ्गतः प्राप्तमनियतमितियावत्, 'राजीवमिव' इत्यादौ सावकाशत्वसम्भवादि-त्याशयः। अस्मिंस्तु लाटानुप्रासे तु साक्षादेव स्वयमेव प्रयोजकम् अलङ्कारत्वाधायकम्। अन्यथा लाटानुप्रासासम्भवादितिभावः। अथैवं 'राजीवम् इत्यादौ शब्दाभेदे अनन्वयोदाहरणे लाटानुप्राससाङ्कर्यवारणम-शक्यमेवेतिचेत्? मैवम्, इवाद्यौपम्यवाचकोपलम्भे अनन्वयः, तदनुपलम्भे तु लाटानुप्रास इत्यनयोर्भेदस्य प्रतिपा-दयितुं शक्यत्वात्।

## रुचिरा

९७ **एकस्य** प्रकृतस्य वर्णनीयस्य। एव 'वस्तुन' इति शेषः। **उपमानोपमेत्वमुपमानत्वमुपमेयत्वं च**। तु (इदं पूर्वतो व्यवच्छेदसूचनार्थम्)। **अनन्वयः**। अयम्भावः—न विद्यतेऽन्वय उपमानान्तरेण सम्बन्धो यत्र सोऽनन्वयः। अत एवोक्तम्—'द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयीभूतं यदेकोपमानोपमेयकं सादृश्यं तद-नन्वयः।' इति ॥ ७९ ॥

ननु-एवमुपमेयोपमादावतिव्याप्तौ क उद्धारोपाय इत्याशङ्क्य स्वयमाह—**अर्थादित्यादि**। **स्पष्टम्**। एतेन-यत्र वाक्यैक्ये सति यद्धर्मावच्छिन्नप्रतियोगिताकं सादृश्यं तत्र तद्धर्मावच्छिन्नतदनुयोगिताकत्वमनन्वय-त्वम्। एतेनोपमेयोपमारसनोपमाऽऽदौ अतिप्रसङ्गो निरस्तः। अत्राहुर्विवृतिकाराः—'ननूपमेयोपमायां 'द्वयोः' इत्यु-पादानात् कथमतिव्याप्तिरिति चेत्! न, तत्र-प्रत्येकपदार्थस्यापि पर्य्यायेणोपमानोपमेयसम्भवात्' इति।

उदाहरति—**यथा**—'**राजीवमिवे**'त्यादि।

'**शरत्समुदयोद्यमे**' शरदः समुदयं समुल्लासं यथा भवेत्तथोद्यम इति तस्मिंस्तथोक्ते। 'सती'ति शेषः। राजीवमिव कमलमिव। 'राजीवं नलिने, ना तु भेदे मीनकुरङ्गयोः।' इति गोपालः। **राजीवम्**। **जलमिव**। **जलम्**। **अजनि**। तथा—**चन्द्रः**। **इव**। **अतन्द्रोऽम्लानः**। **चन्द्रः**। 'अजनी'ति पूर्वतोऽन्वेति ॥ १०१ ॥

लक्षणं सङ्गमयते-**अत्रेत्यादिना**।

**अत्र**। **राजीवादीनाम्**। **अनन्यसदृशत्वप्रतिपादनार्थम्**। **वैवक्षिको** विवक्षया प्रतिपादितः। **उपमानोप-मेयभावः**।

ननु लाटानुप्रासादस्य कथं व्यवच्छेद इत्याशङ्क्याह—**'राजीव'** मित्यादि ।

**'राजीवमिव । पाथोजं** पाथो जलं तस्माज्जायत इति तथोक्तम् । कमलमित्यर्थः ।' **इति ।** 'एवंविधस्ये'ति । शेषः । **च । अस्य । लाटानुप्रासात् । विविक्तः । विषयः ।** अयम्भावः-लाटानुप्रासो हि—तात्पर्यमात्रतो भेदे शब्दैक्ये, अयं तु तात्पर्यतोऽभेदे शब्दभेदेऽपि सम्भवतीति । ननु कथं शब्दैक्ये उदाह्रियते-इत्याशङ्क्याह—**किन्तु । अत्राऽनन्वये । उचितत्वाच्चमत्कारविशेषकत्वात् । एकशब्दप्रयोगः** एकविधशब्दप्रयोगः । **एव । श्रेयान् ।** ननु किमत्र नियामकमित्याह—**तत्** तथा । **उक्तम्** 'आचार्य्यै'रिति शेषः ।

**'अनन्वये । च । औचित्यात् । शब्दैक्यम् । आनुषङ्गिकमनुषङ्गतः** प्राप्तमनियतमिति यावत् । **अस्मिन् । लाटानुप्रासे ।** तु । 'शब्दैक्य'मिति पूर्वतोऽन्वेति । **साक्षात्** स्वयम् । एव । प्रयोजकमुपस्कारकमलङ्कारत्वाधायकमिति यावत् ॥' इति । यथा वा—'इयति प्रपञ्चविषये तीर्थानि कियन्ति सन्ति पुण्यानि । परमार्थतो विचारे देवी गङ्गा तु गङ्गेव ॥' इति । यत्तूदाहतम्—'लोहितपीतैः कुसुमैरावृतमाभाति भूभृतः शिखरम् । दावज्वलनज्वालैः कदाचिदाकीर्णमिव समये ॥' इति, 'नखकिरणपरम्पराऽभिरामं किमपि पदाम्बुरुहद्वयं मुरारेः । अभिनवसुरदीर्घिकाप्रवाहप्रकरपरीतमिव स्फुटं चकासे ॥' इति च; तत् शिखरस्य पदाम्बुरुहस्य चैकस्यैवोपमानोपमेयत्वेऽपि 'धर्मभेदेन धर्म्मिभेद' इति नयेन पूर्वत्र कुसुमावृतत्वज्वालाकीर्णत्वाभ्याम्, परत्र नखकिरणाभिरामत्व-सुरदीर्घिकाप्रवाहपरीतत्वाभ्यां शिखरस्य पदाम्बुरुहस्य च भेदात् । अत्राहुर्गङ्गाधरकाराः—"स च पूर्णो लुप्तश्चेति तावद् द्विविधः । पूर्णस्तूपमावत् षड्विधोऽपि सम्भवति । यथा—'गङ्गा हृद्या यथा गङ्गा गङ्गा गङ्गेव पावनी । हरिणा सदृशो बन्धुर्हरितुल्यः परो हरिः ॥" गुरुवद् गुरुराराध्यो गुरुवद्गौरवं गुरोः ।' लुप्तेऽपि धर्म्मलुप्तः पञ्चविधः सम्भवति । प्रागुक्ते सार्धपद्ये धर्मवाचकपदमपहाय पदान्तरदाने । तथा वाचकलुप्तः यथा—'रामायमाणः श्रीरामः सीता सीतामनोरमा । ममान्तः करणे नित्यं विहरेतां जगद्गुरू ॥' इत्यत्र क्यङ्समासयोः । एवम् 'लङ्कापुरादतितरां कुपितः फणीव निर्गत्य जातु पृतनापतिभिः परीतः । क्रुद्धं रणे सपदि दाशरथिं दशास्यः संरब्धदाशरथिर्शमहो ददर्श ॥' एवं कर्तृ-णमुलादावप्यूह्यम् । 'अम्बरत्यम्बरं यद्वत् समुद्रोऽपि समुद्रति । विक्रमार्कमहीपाल ! तथा त्वं विक्रमार्कसि ॥' अत्र वाक्यार्थवयवेष्वनन्वणेषु धर्मवाचकयोर्लोपः । मुखवाक्यार्थस्त्व नन्वयफलेन निरूपमत्वेन समानधर्मेण प्रयोजितो मालोपमैव । एषा च ज्ञानसौकर्य्यायात्रैव दर्शिता 'एतावति प्रपञ्चेऽस्मिन् सदेवासुरमानुषे । केनोपमीयतां तज्ज्ञै रामो रामपराक्रमः ॥' अत्र वाचकधर्मोपमानां लोपः । त्र च उपमानलुप्तादयोऽन्ये भेदा असम्भवादहृद्यत्वाच्च नोदाहृताः ।' इति । अयं ध्वन्यमानो यथा—'पृष्टाः खलु परपुष्टाः परितो दृष्टाश्च विटपिनः सर्वे । भेदेन भुवि न पेदे साधर्म्यंते रसाल ! मधुपेन ॥' इत्यत्र हि 'भेदेने'त्यभिधानेनाभेदे सादृश्यमनन्वयात्मकं, तच्च प्रपेदे इति ध्वन्यते । 'ननु भुवनत्रितयेऽपि मानवैः परिपूर्णे विबुधैश्च दानवैः । न भविष्यति नास्ति नाभवन्नृप ! यस्ते भजते तुलापदम् ॥' इत्यादौ सर्वथैवोपमाननिषेधात्मकोऽसमालङ्कारः प्राचीनैरुक्तः, उपमानलुप्तोपमाऽतिव्याप्तिवारणाय 'सर्वथैवे'ति । एवं च-तद्ध्वनिनैव चमत्कारोपपत्तौ अनन्वयस्य पृथगलङ्कारत्वं किमर्थम् ? यदि तु रत्यनुकूलतया कुतश्चिदङ्गात् भूषणापसारणं यथा चमत्काराय तथा प्रकृते उपमानालङ्काराभाववर्णनमेव चमत्काराय न तु तत्रासमनामा पृथगलङ्कार इत्युच्यते, तर्हि तद्ध्वनिनैवोपपत्तिरिति चेन्न, पर्य्यायोक्तसादृश्यमूला प्रस्तुतप्रशंसादौ ध्वन्यमानार्थसत्त्वेऽपि वाच्यार्थकृतचमत्कारमादायलङ्कारत्ववदुपपतेः, अन्यथा दीपकादावपि उपमाऽभिव्यक्ततैव चमत्कारोपपत्तौ तेषामपि पृथगलङ्कारत्वं न स्यात् ।' इत्युद्द्योतकाराश्च ॥ १०२ ॥

**पर्यायेण द्वयोरेतदुपमेयोपमा मता।**

**एतदुपमानोपमेयत्वम्। अर्थाद्वाक्यद्वये।**

यथा—

**'कमलेव मतिर्मतिरिव कमला, तनुरिव विभा विभेव तनुः।**

**धरणीव धृतिर्धृतिरिव धरणी, सततं विभाति बत यस्य॥'**

**अत्रास्य राज्ञः श्रीबुद्ध्यदिसदृशं नान्यदस्तीत्यभिप्रायः।**

---

## विवृति

उपमेयोपमामाह—**पर्यायेणेति**। क्रमेणेत्यर्थः। रसनोपमायामेकस्यैव क्रमेणोपमानोपमेयभाव इति तद्वारणाय 'द्वयोः' इति। 'मुखमिव कमलम्' इत्यादौ युगपदेव द्वयोरुपमानोपमेयत्वमिति तद्वारणाय 'पर्यायेण' इति। अत्र सादृश्यहेत्वभेद इत्यपि बोध्यम्। तेन 'पल्लवमिवारुणं करतलं करतलमिव कोमलं पल्लवम्' इत्युपमाद्वय-व्यवच्छेदः। अस्यां वैचित्र्यं दर्शयति—**अस्य राज्ञ इति**।

## विवृतिपूर्तिः

**उपमेयोपमेति**। पूर्ववाक्यप्रतिपादितसाधारणधर्ममेव साधारणधर्मीकृत्य पूर्ववाक्यप्रतिपादितेनोपमेयेन पूर्ववाक्यप्रतिपादितस्योपमानस्योपमा उपमेयोपमा। उपमेयेनोपमा यत्रेति वा। इयं च तावदुक्तधर्मा व्यक्तधर्मा च। तत्रोक्तधर्मा अनुगाम्यादिधर्मैरनेकधा। धर्मस्यानुगामित्वे 'कमलेव मतिः—' इत्युदाहरणम्। इह स्पृहणीयत्वं निबिडत्वं विपुलत्वं च साधारणधर्माः। धर्मस्य बिम्बप्रतिबिम्बभावापन्नत्वे 'रमणीयस्तबकयुता विलसितवक्षोज-युगलशालिन्यः। लतिका इव ता वनिता इव रेजिरे लतिकाः॥' इत्युदाहार्यम्। अत्र रमणीयत्वविलसितत्वाभ्यां विशेषणाभ्यां युतत्वशालित्वाभ्यां विशेष्याभ्यां परस्परं वस्तुप्रतिवस्तुभावमापन्नाभ्यां संपुटितः स्तबकस्तनरूपः परस्परं बिम्बप्रतिबिम्बभावापन्नो धर्मः। 'गिरिरिव गजराजोऽयं गजराज इवोच्चकैर्विभाति गिरिः। निर्झर इव मदधारा मदधारेवास्य निर्झरः स्रवति॥' इयं व्यक्तधर्मा प्रकृताप्रकृतविषयेत्यन्यत्र विस्तरः॥

## विज्ञप्रिया

उपमेयोपमामाह—**पर्य्यायेणेति**। द्वयोरुपमानोपमेययोरित्यर्थः। तेनोपमेयोपमालङ्कार इत्यर्थः। **अर्थादिति**। वाक्यद्वयं विना पर्य्यायेणोक्त्यसम्भवात् **कमलेवेति**। अत्र सर्वत्र विभातीत्यन्वयः।

## लोचन

**उपमेयोपमेति**। उपमेयेन पूर्ववाक्यस्थेन उपमासादृश्यं द्वितीयवाक्यस्थयोपमानस्येत्यन्वर्थं नाम, एतदितरोपमानव्यवच्छेदः फलम्। एतदेव वृत्तावुक्तमस्य राज्ञ इति। धृतिर्धैर्य्यम्।

## कुसुमप्रतिमा

पर्य्यायेणेति । द्वयोः पदार्थयोः पर्य्याय्येण विपर्य्यासेन परिवर्त्तनेनेति यावत्, एतदुपमानोपमेयत्वम्, उपमेयोपमा नामालङ्कारो मता । तथा च पूर्ववाक्ये यदुपमानं परवाक्ये तच्चेदुपमेयं स्यात् एवं पूर्ववाक्ये यदुपमेयं परवाक्ये तच्चेदुपमानं स्यात् तदा उपमेयोपमा नामालङ्कारो भवेदिति सरलार्थः । अत्रएव काव्यप्रकाशे—"विपर्य्यास उपमेयोपमा तयोः" इत्यत्र विपर्य्यास इति वृत्तौ च परिवृत्तिरित्युक्तम् । पूर्ववाक्यस्थेन उपमानेन परवाक्ये उपमेयेन सता निष्पादिता उपमा उपमेयोपमा इति हिं व्युत्पत्तिः । अत्र पर्य्यायेणेयभिवानात् "मुखं तव तथा भाति यथा राजति चन्द्रमाः" इत्यादावुमानोपमेयभावपरिवर्त्तनस्थले नातिव्याप्तिः । न च "मुखमिव कमलम" इत्यादौ युगपदेव द्वयोरुपमानोपमेयत्वमिति तद्वारणाय पर्य्यायेणेति" इति रामचरणोक्त युक्तमिति वाच्यम्, मुखमिव कमलमित्यस्य एकमात्रवाक्यतया "अर्थाद्वाक्यद्वये" इति वृत्त्युक्तिविरोधात् । "चन्द्रायते" इत्यादौ रसनोपमायां वाक्यद्वयसत्त्वात् हंस इत्यादेरूपमेयोपमानभावपरिवर्त्तनसत्त्वाञ्च तत्रानिव्यांप्तिनिरासाय द्वयोरित्युक्तम् ।

"सन्निहिते बुद्धिरन्तरङ्गा" इति न्यायदुपमानोपमेयभावस्य सन्निहितपरिवृत्तिस्थल एवायमलङ्कारः । तेन "मुखं शशीव कान्ताया दिवसे मामतोषयत् । रात्रौ तोषयते सोऽयं शशी मुखमिवाधुना ॥" इत्यादौ व्यवहितपरिवर्त्तने उपमाद्वयमेव ।

"राजा सूर्य्य इवाधृष्यः सूर्य्यो राजेय राजते । कमलेव मतिस्तस्य लक्ष्मीः सापि च धीरिव ॥" इत्यादौ साधारणधर्म्मभेदे शब्दभेदे च उपमानोपमेयभावपरिवृत्तिप्रतीतिः स्थगितेव स्यादिति नोपमेयोपमा ।

अर्थादिति । योग्यत्वादित्यर्थः । तथा च वाक्यद्वयं विना द्वयोरुपमानोपमेयभावपरिवृत्तिर्न सम्भवतीति भावः । काव्यप्रकाशकारोऽप्येवम् ।

कमलेवेति । अत्र हर्षे वतशब्दः । यस्य राज्ञः सततम्, कमला राजलक्ष्मीरिव मतिर्बुद्धिः, सा मतिरिव च सा कमला, राजलक्ष्मीर्यथा असाधारणो बुद्धिरपि तथैव असाधारणीत्यर्थः, एवमन्यत्रापि । तनुः शरीरमिव विभा कान्तिः, सा विमेव च सा तनुः । धरणी आयतीकृता भूमिरिव धृतिर्धैर्य्यम्, सा धृतिरिव च सा धरणा, विभाति वर्त्तते ।

अत्र पूर्ववाक्ये कमलाया उमानत्व मतश्चोपमेयत्वम्, परवाक्ये तु तस्याः कमलाया उपमेयत्वं मतेश्चोपमानत्वमित्याद्यपमानोपमेयभावपरिवृत्तेरुपमेयोपमा ।

अत्र कवेरीदृशोपमानोपमेयभावपरिवर्त्तने अभिप्रायमाह अत्रेति । आदिशब्देन तनुविभादीनां ग्रहणम् ।

## विमला

उपमेयोपमामाह, पर्य्यायेणेति ।—पर्य्यायेण—क्रमेण, "मुखमिव कमलम्" इत्यादौ युगपदेव द्वयोरुपमानोपमेयत्वम् इति तद्वाताणाय "पर्य्यायेण" इत्युक्तम; द्वयोः,—उपमानोपमेययोः, रशनोपमायामेकस्यैव क्रमेणोपमानोपमेयभावः इति तद्वारणाय "द्वयोः" इति पदं बोध्यम्; एतत्—उपमेयोपमानत्वम् इत्यर्थः, उपमेयोपमा मता । अत्र सादृश्यहेत्वभेदे इत्यपि बोध्यम्; तेन "पल्लवमिवारुणं करतलं करतलमिव कोमलं पल्लवम्" इत्युपमाद्वयव्यवच्छेदः ।

कमलेति ।—कमला—लक्ष्मीः, सम्पदित्यर्थः, सेव मतिः,—बुद्धिः, प्रभूता इति शेषः, प्रभूतधनवती यादृशी बुद्धिः भवितुमर्हति, तादृशीति भावः, मतिरिव कमला, प्रभूता इति शेषः, अनन्यसाधारणबुद्धयनुरूपा अनन्यसाधारण सम्पदित्यर्थः, तनुः,—शरीरमिव, शारीरसौष्ठवमिवेत्यर्थः, विभा—कान्तिः, समुज्ज्वलेति शेषः, अवयवसङ्घटनसौ-

ष्ठवमिव सुन्दरकान्तिरित्यर्थः, विभेवं तनुः, समुज्ज्वला इति शेषः, लावण्यानुरूपो देहविन्यास इत्यर्थः, धरणी—पृथ्वी, सेव धृतिः,—धैर्य्यं, दृढ़ा इति शेषः, धृतिरिव धरणी—पृथ्वी, राज्यमिति यावत्, दृढ़ा इति शेषः, अविचलं धैर्य्यमिव अनपायि राज्यमित्यर्थः, वत—हर्षे, यस्य तव सततं विभाति, तस्य सद्गुणानां विषये किमन्यद्वक्तव्यमिति शेषः । गीतिश्छन्दः ।

अस्यां वैचित्रयं दर्शयति—अस्य राज्ञ इति ।

## लक्ष्मी

उपमेयोपमानामालङ्कारं लक्षयति—**पर्यायेणेति** । द्वयोः पदार्थयोः पर्यायेण व्यत्यासेन परिवर्त्तनेनेतियावत्, तदुपमानोपमेयत्वम् उपमेयोपमानामालङ्कारो मता कथिता एवञ्च पूर्वस्मिन् वाक्ये यदुपमानं भवेत् तच्चेदुत्तरस्मिन् वाक्ये उपमेयं भवेत्, एवं पूर्वस्मिन् वाक्ये यदुपमेयं भवेत् तच्चेदुत्तरस्मिन् वाक्ये उपमेयं भवेत्, एवं पूर्वस्मिन् वाक्ये यदुपमयं भवेत् तच्चेदुत्तरस्मिन् वाक्ये उपमानं भवेत् तदा पूर्ववाक्यस्थेन उपमानोत्तरवाक्ये उपमेयेन सता निष्पादिता उपमेतिव्युत्पत्त्या उपमेयोपमा नामालङ्कारः स्यादितिनिष्कर्षः । एतच्च 'विपर्यास उपमेयोपमा तयोः' इतिसूत्रयता 'विपर्यास' इत्यस्य परिवृत्तिरित्यर्थ विवृण्वता च काव्यप्रकाशकृताप्युक्तम् । पूर्ववाक्योक्तसाधारणधर्ममेव साधारणधर्मीकृत्य पूर्ववाक्योक्तेन उपमेयेन पूर्ववाक्योक्तस्योपमानस्य उपमा उपमेयोपमा तथा चोपमानन्तरव्यवच्छेदफलक उपमानोपमेययोर्विपर्यास इति उपमेयोपमालक्षणमिति तद्याख्यातारः । 'मुखं तव तथा भाति यथा राजति चन्द्रमाः' इत्यादावुपमानोपमेयभावपरिववर्त्तनस्थलेऽतिव्याप्तिवारणायात्र 'पर्यायेण' इत्युपादानम् । 'चन्द्रायते शुक्लरुचापि हंसः' इत्यादौ रसनोपमायां वाक्यद्वयोपलम्भात्, हस इत्यादेरुपमेयोपमानभावपरिवर्त्तनोपलम्भाच्च तत्रातिव्याप्तिवारणाय **द्वयो** रित्युपादानम् ।

मुखं शशीव कान्ताया दिवसे मामतोषयत् । रात्रौ तोषयते सोऽयं शशी मुखमिवाधुना ॥'

इत्यादौ व्यवहितपरिवर्त्तने नायमलङ्कारः किन्तूपमाद्वयमेव उपमानोपमेयभावस्य सन्निहिते बुद्धिरन्तरङ्ग' इति न्यायात् ।

एतदिति । स्पष्टम् । **अर्थादिति** । योग्यत्वादित्यर्थः । एकवाक्ये द्वयोरुपमानोपमेयभावपरिवृत्तेरसम्भवादित्याशयः । वाक्यद्वयमत्र शब्दमार्थं वा, तेन 'रामरावणौ मिथस्तुल्यौ' इत्यादौ नाव्याप्तिः तत्रापि रामो रावणतुल्यः, रावणो रामतुल्य इति वा वाक्यार्थभेदप्रतीतेः । 'वाक्यद्वये' इत्यनन्वयव्यवच्छेदः । ननु वाक्यद्वये एव परिवृत्तिसम्भवे सति 'मुखमिव चन्द्रः' इत्यत्रोपमेयोपमाया आभावात् कोऽलङ्कारः स्यादितिचेत् ? तत्र निन्दाभिव्यक्तौ प्रतीपालङ्कारः इति प्रदीपादौ स्पष्टम् ।

कमलेवेति । अत्र वतेति हर्षे । 'वत खेदेऽनुकम्पायां हर्षे सम्बोधनेऽद्भुते इत्यजयः । यस्य नृपतेः सततं निरन्तरम् कमलेव राजलक्ष्मीरिव मतिर्बुद्धिः सा मतिरिव च सा कमला, राजलक्ष्मीर्यथा असामान्या बुद्धिरपि तथैव असामान्येत्यर्थः । तनुरिव विभा शरीरमिव कान्तिः सा विभेव च सा तनुः शरीरं यथा असामान्यम् कान्तिरपि तथैव असामान्येत्यर्थः । धरणीव धृतिः अधीनीकृता पृथ्वीव धैर्यमं, सा धृतिरिव च सा धरणी धरणी यथा असामान्या धैर्यमतिः तथैवासामान्येत्यर्थः । विभाति शोभते । गीतिश्छन्दः तल्लक्षणं चोक्तं प्रागेव । अत्र प्रथमार्धे पूर्वस्मिन् वाक्ये कमलाया उपमानत्वं मतेश्चोपमेयत्वम्, उत्तरवाक्ये तु तस्याः कमलाया उपमेयत्वं मतेश्चोपमानत्वम्,

द्वितीयपादे पूर्वस्मिन् वाक्ये तनोरुपमानत्वं विभाया उपमेयत्वम् उत्तरवाक्ये तु तस्यैव तनोरुपमेयत्वं विभायाश्चोपमानत्वमित्याद्युपमानोपमेयभावपरिवर्त्तनादुपमेयोपमानलक्षणसङ्गतिः ।

अत्र कवयितुरेतादृशोपमानोपमेयभावपरिवृत्तावाशयं दर्शयति—अत्रेति । आदिदिपदेन तनुविभादीनां परिग्रहः ।

**अत्रेदम्बोध्यम्**—उपमेयोपमा चेयं तावत् उक्तधर्मा व्यक्तधर्मा च । तत्रोक्तधर्मा अनुगाम्यादिधर्मैरनेकधा । धर्मस्यानुगामित्वे 'कमलेव मतिः' इत्युदाहरणम्, इह स्पृहणीयत्वं प्रचितत्वं विस्तृतत्वं च साधारणधर्माः । धर्मस्य **बिम्बप्रतिबिम्बभावापन्नत्वे** यथा—

**रमणीयस्तबकयुता विलसितवक्षोजयुगलशलिन्यः ।**
**लतिका इव ता बनिता वनिता इव रेजिरे लतिकाः ॥**

अत्र रमणीयत्वविलसितत्वाभ्यां विशेषणाभ्यां युतत्वशालित्वाभ्यां विशेष्याभ्यां परस्परं वस्तुप्रतिवस्तुभावमापन्नाभ्यां संपुटितः स्तबकस्तनरूपः परस्परं विम्बप्रतिविम्बभावापन्नो धर्मः ।

इतोऽधिकं विशेषजिज्ञासुभी रसगङ्गाधरादाववलोकनीयम् ।

वाच्यसादृश्यघटितानलङ्कारान् प्रतिपाद्य सम्प्रति व्यङ्ग्यसादृश्यघटितानलङ्कारान् प्रतिपादयितुं तत्रान्यान्यालङ्कारवृत्तिव्यङ्ग्यसादृश्यापेक्षया स्मरणालङ्कारवृत्तिव्यङ्ग्यसादृश्यस्य स्फुटावगम्यमानत्वेन मुख्यत्वात्तमेव स्मरणालङ्कारं प्राथम्येन लक्षयति—सदृशेति । सदृशस्य समानगुणाकारादेर्वस्तुन अनुभवात् दर्शनादिप्रत्यक्षादुत्पद्यमाना, वस्तुतः पूर्वानुभूतपदार्थस्य स्मृतिः स्मरणं नामालङ्कार उच्यते आलङ्कारिकैरितिशेषः ।

**अरविन्दमिति** । खेलन्तौ समीपे मध्ये वा क्रीडन्तौ खञ्जनौ पक्षिविशेषौ ताभ्यां मञ्जुलं सुन्दरम्, इदमरबिन्दं पद्मं वीक्ष्य अवलोक्य, अहम्, चञ्चले चपले लोचने यत्र तत्तथोक्तम्, चारुत्वभावसुन्दरम्, तस्याः कामिन्या वदनं मुखं स्मरामि ।

## रुचिरा

एवमनन्वयं निरूप्योपमेयोपमां लक्षयति—९८ **पर्य्यायेण** क्रमेण । **द्वयोरुपमानोपमेययोः** । एतदुपमानोपमेयत्वम् । **उपमेयोपमा** । **मता** । अयम्भावः—यत्र द्वयोरुपमानोपमेययोः पर्य्यायेण तृतीयसदृशव्यवच्छेदबुद्धिफलकवर्णनविषयीभूतमुपमानोपमेयत्वम्, सोपमेयोपमा । एतच्च वाक्यद्वय एव सम्भवति, तत्र क्रमिकताया अन्यथाऽनुपपत्तेः । एवं च अस्या रसनोपमाऽनन्वयपरस्परोपमाभ्यो व्यवच्छेदः । तथा हि—रसनोपमायां न पर्य्यायेणोपमानपमेयत्वम्, अनन्वये च न द्वयोः, 'तडिदिव तन्वी भवती, भवतीवेयं तडिल्लता गौरी ।' इत्यादौ परस्परोपमायां तृतीयसदृशव्यवच्छेदकबुद्धिफलकवर्णनविषयीभूतत्वाभावान्नातिव्याप्तिः । ननु-'कमलेव मतिर्मतिरिव कमले'त्यत्र कथं पुनर्लक्षणं समन्वेति ? इति चेत् ! तत्र तानवगौरिमाभ्यां धर्माभ्यां तृतीयसदृशव्यच्छेदाभावः, अत्र च तथा धर्म्मानुल्लेखादद्वयोरुपमानोपमेयत्वेऽस्त्येव तृतीयसदृशव्यवच्छेदः । एवं च—'तडिदिव गौरी भवती भवतीव तडिद्गौरी' इत्यादौ उभयोरेकधर्मानुगमितया तृतीयसदृशव्यव्वच्छेदान्न परस्परा, किन्त्वेषैव । इदमुक्तम्—'कमलमिव वदनं रुचिर'मिति मुखे रुचिरतथा कमलसादृश्ये वर्णिते कमलेऽपि रुचिरतया मुखसादृश्यमर्थत आयाति, साधारणधर्मस्योभयानुगतत्वात् । 'वदनमिव कमलं रुचिर'मिति पुनः कमले मुखसादृश्ये वर्ण्यमाने वदनकमलयो रुचिरतया सादृश्यं परस्परमनुगतं सिध्यत्ति, न त्वन्येवेति तृतीयसदृशव्यवच्छेदः फलति । अथ-तान-

वधर्मेण भवत्पदवाच्यायां कान्तायां तडित्सादृश्ये वर्णिते तडिति पुनर्गौरिमविशिष्टभवत्पदवाच्यया सादृश्यं नार्थतः सिध्यति। तानवविशिष्टत्वगौरिमविशिष्टत्वयोर्धर्मयोरुपमाद्वये भिन्नत्वात्। अतः—एवंविधे स्थले पर्य्यायेणोपमानो पमेयभावो वर्ण्यमानो न सदृशान्तरव्यवच्छेदफलक इति परस्परोपमाया एव साम्राज्यम्। अत्र च धर्म्मः क्वचिदनुगामी, क्वचिद्बिम्बप्रतिबिम्बभावापन्नश्च। इति दिक्।

कारिकां स्पष्टयितुं तद्रदुरूहार्थतां परिहरति—एतदित्यादिना। स्पष्टम्।

उदाहरति—**यथा**-कमलेवेत्यादिना। **'यस्य**। **वत** भद्रम्। **कमलेव** सम्पदिव। 'कमला श्रीर्हरिप्रिया।' इत्यमरः। **मतिर्बुद्धिः**। 'स्पृहणीये'ति शेषः। **मतिरिव**। कमला 'स्पृहणीये'ति शेषः। **तनुरिव** शरीरमिवाकृतिरिवेति यावत्। **विभा** कान्तिः 'प्रचिते'ति शेषः। **विभेव**। **तनुः**। 'प्रचिते'ति शेषः। **धरणीव** पृथिवीव। **धृतिर्धैर्य्यम्**। **धृतिरिव**। **धरणी** 'विस्तृते'ति शेषः। **सततम्**। **विभाति**। 'सोऽय'मिति शेषः। आर्य्यागीतिश्छन्दः॥ १०३॥'

अत्र वैचित्र्यं निर्दिशति-**अत्रेत्यादिना**। स्पष्टम्। इदं बोद्धव्यम्-अत्रानुगामी धर्मः अर्थानुगृहीतः, शाब्दस्तु-'निखिले निगमकदम्बे लोकेष्वप्येष निर्विवाद्रोऽर्थः। शिव इव गुरुर्गरीयान् गुरुरिव सोऽयं सदा शिवोऽपि तथा॥' इति। बिम्बानुबिम्बत्वमापन्नो यथा—'सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः। वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः॥' अत्र सच्छायत्वेन वदनाम्बुजानां धर्म्मः। उपचरिते धर्मेऽप्येषा सम्भवति यथा—'अचला इव विद्वांसो विद्वांस इवाचला गुरुवः। शास्त्राणि तोयनिधिवत् तोयनिधिः शास्त्रवद्बहुगभीरः॥' इति। गुरुत्वगभीरत्वयोः शास्त्रेषूपचाराच्चोपचरितो धर्म्मः। न। चानुगामिन आर्थत्वे धर्मनिकत्वेऽप्यस्याः सम्भव एतेन—'कमलेव मति' रित्यादावपि-धर्मनिकत्वाङ्गीकारे परस्परोपमैवेति सूचितम्। अन्यथा-'सविता विधवति विधुरपि सवितरति दिनन्ति यामिन्यः। यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि॥' इत्यादावतिप्रसज्येत। न चेष्टम् इति वाच्यम्, सवित्रादेर्विध्वादिसदृशीभवने शीतलत्वादेः, विध्वादेश्च सवित्रादिसदृशीभवने प्रचण्डत्वादेश्च धर्मस्य विवक्षितस्य भेदात् तृतीयसदृशव्यवच्छेदफलकत्वानुपपत्तेः। इति दिक्।

**सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते ॥ २७ ॥**

यथा—

**'अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलम्।**

**स्मरामि वदनं तस्याश्चारु चञ्चललोचनम् ॥'**

'मयि सकपटं—'(१५७ पृ.) इत्यादौ च स्मृतेः सादृश्यानुभवं विनोत्थापितत्वान्नायमलंकारः। **राघवानन्दमहापात्रास्तु** वैसादृश्यात्स्मृतिमपि स्मरणालंकारमिच्छन्ति। तत्रोदाहरणं तेषामेव यथा—

**'शिरीषमृद्वी गिरिषु प्रपेदे यदा यदा दुःखशतानि सीता।**

**तदा तदास्याः सदनेषु सौख्यलक्षाणि दध्यौ गलदस्रु रामः ॥'**

---

## विवृति

स्मरणालंकारमाह—**सदृशेति**। सदृशानुभवस्य स्मृतिं प्रतिं संस्कारोद्बोधकत्वेन कारणत्वम्। संस्कारस्तु वस्त्वनुभवादुत्पन्नः। सदृशेति। संबन्धिज्ञानादिजन्यस्मृतिवारणाय। तेन 'भवदभिमतवस्तून्याकिरन्त्याः समन्तात्सरसिजदलतल्पं मर्मरं कल्पयन्त्याः। हतकरुण ! वयस्या जीवनोपायमस्याः स्मरणविरलं ते हन्त संपादयन्ति ॥

इत्यादौ संबन्धिज्ञानजन्यस्मरणस्य नालंकारत्वम्। एवं चिन्ताजन्यस्मृतेरपि नालंकारत्वमित्याह—**मयीति**।स्मृत्याख्यव्यभिचारिभावस्योदाहरणमिदम्। **वैसादृश्याद्विरुद्धानुभवात्**। **तेषां** राघवानन्दमहापात्राणाम्। **शिरीषेति**। गलदस्रु यथा स्यात्तथा दध्यौ स्मृतवान्। अत्र वैपरीत्यसंबन्धेन संबन्धिनो ज्ञानं संस्कारोद्बोधकम् ॥

## विज्ञप्रिया

स्मरणालङ्कारमाह—**सदृशेति**। **अरविन्दमिति**। अरविन्दस्यैवोपरि खेलता खञ्जनेन मञ्जुलमरविन्दं वीक्ष्य चारुचञ्चललोचनं तस्या वदनं स्मरामीत्यर्थः। अत्र अरविन्दसादृश्यान्मुखस्य, खञ्जनसादृश्याल्लोचनस्य, खेलासादृश्यात् चाञ्चल्यस्य स्मरणम्।

**मयि सकपटमित्यादाविति**। तत्र "स्मेरं स्मेरं स्मरामि तदाननम्" इति। स्मृतेश्चिन्तयैवोत्थापितत्वादित्यर्थः। "सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः" इत्युक्तत्वात्। स्मृतिबीजसंस्कारोद्बोधकबाहुल्यात्। **शिरीषेति**। शिरीषमृद्वी सीता यदा यदा गिरिषु दुःखशतानि प्रपेदे तदा तदा रामोऽस्याः सदनेषु सौख्यलक्षाणि गलदश्रु यथा स्यात्तथा दध्यावित्यर्थः। सुखध्यानमिति स्मृतिः। दुःखे सुखवैसादृश्यम्।

## लोचन

सदृशानुभवादिति प्रतीकव्यवच्छेद्यं दर्शयति—**मयि सकपटमित्यादि**। अरविन्दमित्याद्युदाहरणे स्मृति-रूपाया विप्रलम्भाङ्गत्वेन प्रेयोऽलङ्कारविषयत्वेऽपि स्मरणालङ्कारस्यापवादत्वेन तद्बाधकता। तेनानुचिन्तनीयदर्श-नोत्थापिता स्मृतिः प्रेयोलङ्कारविषयः। यथा मयि सकपटमित्यादिरेव।

सुखमेव सौख्यम्, अत्र सुखदुःखयोर्वैसादृश्यम्।

## कुसुमप्रतिमा

वाच्यसाम्यघटितानलङ्कारानभिधायेदानीं व्यङ्ग्यसाम्यघटिताभिधातुं तत्र स्मरणालङ्कारगतव्यङ्ग्य साम्यस्य अन्यान्यालङ्कारगतव्यङ्ग्यसाम्यापेक्षया स्पष्टप्रतीयमानत्वेन प्रधानत्वात्तमेव स्मरणालङ्कारं प्रथममाह सदृशेति। सदृशस्य वस्तुनः अनुभवात् दर्शनादिप्रत्यक्षात् जायमाना, वस्तुनः पूर्वानुभूतपदार्थस्य स्मृतिः स्मरणं नामालङ्कार उच्यते। अत्र स्मरणमिति भावे प्रत्ययात् व्युत्पत्तिः स्पष्टा।

अरविन्दमिति। खेलता उपरि सञ्चरता खञ्जनेन पक्षिणा मञ्जुलं सुन्दरम्, इदमरविन्दं पद्मं वैक्ष्य दृष्ट्वा, अहम्, चञ्चले लोचने यत्र तत्तादृशं चारु स्वभावसुन्दरम्, तस्याः कामिन्या वदनं स्मरामि।

अत्र खेलत्खञ्जनश्चञ्चलोचनसदृशः अरविन्दञ्च स्वभावत एव मुखसदृशमिति सर्वथैव मुखसदृशस्य अरविन्दस्य दर्शनाज्जायमानायास्तादृशमुखस्मृतेः स्मरणालङ्कारः।

ननु "सदृशज्ञानचिन्ताद्यैर्भ्रूसभुन्नमनादिकृत्। स्मृतिः पूर्वानुभूतार्थं विषयज्ञानमुच्यते॥" इति प्रागुक्तल-क्षणा सामान्यतो वस्तुस्मृतिरेव स्मरणालङ्कार उच्यताम्, किं सदृशानुभावादिति स्मृतेः कारणनिर्द्देशेनेत्याह मयीति। उत्थापितत्वत् चिन्ताजन्यसंस्कारेणाविर्भावितत्वात्। अयं स्मरणाख्यः। तथा चास्मन्मते संस्कारोद्बोधन-द्वारा सदृशवस्तुज्ञानजन्या स्मृतिरेव स्मरणालङ्कारः, न पुनश्चिन्तादिजन्या स्मृतिरपि। अतएव सदृशानुभवादिति स्मृतेः कारणनिर्देश इत्याशयः। काव्यप्रकाशकारोऽप्येवम्।

एतएवांनभिप्रेतं मतमाह राघवेति। वैसादृश्यात् विसदृशपदार्थानुभवाज्जायमानामित्यर्थः, स्मृति वैचि-त्र्यवतीमेव तेषां राघवानन्दमहापात्राणामेव।

शिरीषेति। शिरोषमृद्वी शिरीषकुसुमवत् कोमलाङ्गी सीता, गिरिषु पर्वतेषु यदा यदा दुःख शतानि सर्वेष्वेव व्यापारेषु बहुतरदुःखानि प्रपेदे प्राप। तदा तदैव रामः, मृदनेषु राजाधानीस्थगृहेषु अस्याः सीतायाः सौख्यलक्षाणि सर्वेष्वेव व्यापारेषु असंख्यसुखानि, गलन्ति निर्गच्छन्ति अश्रूणि यस्मिन् कर्म्मणि तद् यथा तथा दध्यौ सस्मार।

अत्र विसदृशानां दुःखशतानामनुभवात् तद्वैपरीत्यसम्बन्धेन सम्बन्धिनां सुखलक्षाणां स्मृतेर्वैचित्रयस-त्वाच्च स्मरणालङ्कार इति राघवानन्दमहापात्राणामाशयः।

एतन्मतेऽपि "बहु विचिन्त्य परं स्मृतवान् कथाम्" इत्यादौ वैचित्रयाभावान्नायमलङ्कार इति बोध्यम्।

## विमला

स्मरणमाह, सदृशेति।—सदृशस्य—तुल्यवस्तुनः इत्यर्थः, (सम्बन्धिज्ञानादिजन्यस्मृतिवारणाय सदृशेति पदं, तेन "भवदभिमतवस्तून्याकिरन्त्याः समन्तात् सरसिजदलतल्पं मर्मरं कल्पयन्त्याः। हतकरुण! वयस्या

जीवनोपायमंस्याः स्मरणभविरलं ते हन्त सम्पादयन्ति ॥" इत्यादौ सम्बन्धिज्ञानजन्यस्मरणस्य नालङ्कारत्वम्) अनुभवात्—दर्शनादिजन्यज्ञानात्, वस्तुनः—अन्यस्य इति भावः, स्मृतिः—अनुभव स्मरणम् उच्यते। सदृशानुभवस्य स्मृतिं प्रति संस्कारोद्बोधकत्वेन कारणत्वं, संस्कारस्तु वास्त्वनुभवादुत्पन्नः। यथा—"दिव्यानामपि कृतविस्मयां पुरस्तादम्भस्तः स्फुरदरविष्टचारुहस्ताम्। उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्तीमस्मार्षीज्ज्लनिधिमन्मथनस्य शौरिः ॥" इति। यदि तु अत्र श्रियमिवेत्युत्प्रेक्षायाः प्राधान्ये स्मृतेरतथाचारुत्वं, तर्हि "निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः। तद्भवैः कुहुरुतैः सुरनार्य्यः स्मारिनाः मुरतकण्ठरुतानाम् ॥" इति।

उदाहरति, अरविन्दमिति।—खेलता—उपरि विहरता, खञ्जनेन-तदाख्यपक्षिणा, मञ्जुलं—मनोहरम्, इदं—पुरी दृश्यमानम्, अरविन्दं—कमलं वीक्ष्य—दृष्ट्वा, तस्याः—कान्ताया इत्यर्थः, चञ्चले—विलोले, लोचने—नेत्रे यत्र तादृशं, चारु—सुन्दरं, वदनं—मुखं, स्मरामि। कमलोपरि खञ्जनं दृष्ट्वा मुखकमलोपरि नेत्रखञ्जनस्मरणमिति भावः।

चिन्ताजन्यस्मृतेर्नालङ्कारत्वमित्याह, मयीति।—स्मृत्याख्यव्यभिचारिभावस्योदाहरणमिदम्; व्याख्यातञ्च तत्रैव। मतान्तरेण तदेवाह, राघवेति।—वैसादृश्यात्—विसदृशस्य वस्तुनः अनुभवात्, विरुद्धानुभवादित्यर्थः। तेषां—राघवानन्दमहापात्राणाम् इत्यर्थः।

शिरीषेति।—शिरीषमृद्वी—शिरोषकुसुमसुकुमाराङ्गी, सीता गिरिषु—पर्वतेषु, यदा यदा दुःखशतानि—क्लेशसमूहमित्यर्थः, प्रपेदे—प्राप, रामः तदा तदा सदनेषु—गृहेषु, प्रासादेष्विति यावत्, अस्याः—सीतायाः, सौख्यलक्षाणि—सुखसन्तानान्, गलदश्रु यथा तथा दध्यौ—चिन्तयामास, सस्मारेत्यर्थः। अत्र विसदृशस्य दुःखशतस्य अनुभवात् सुखसन्तानस्मरणं वैपरीत्यसम्बन्धेन सम्बन्धिनः ज्ञानं संस्कारोबोधकम् इति ज्ञेयम्।

## लक्ष्मी

अत्र खेलत्खञ्जनश्चञ्चललोचनतुल्यः अरविन्दश्च स्वभावत एव वदनतुल्यमिति सर्वथैव वदनतुल्यस्य अरविन्दस्य दर्शनादुत्पद्यमानायास्तादृशवदनस्मृतेः स्मरणालङ्कारः। एतज्जन्मनि जन्मान्तरे वाऽनुभूतस्य संसाकरजन्यत्वेनेदं द्विधा-तत्राद्यमुदाहृतम्, अन्त्योदाहरणन्तु—

दिव्यानामपि कृतविस्मयं पुरस्तादम्भस्तः स्फुरदरविन्दचारुहस्ताम्।

उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्तीमस्मार्षीज्जलनिधिमन्थनस्य शौरिः।

अत्र कस्याश्चिदरबिन्दहस्ताया अम्भस उपायान्त्या बल्लभाया अवलोकनेन लक्ष्मीस्मरणपूर्वकं पूर्वकृतसमुद्रमन्थनसंस्कारोद्बोधात्स्मरणम्। ननु—

**सदृशज्ञानचिन्ताद्यैर्भ्रूसमुन्नमनादिकृत्।**

**स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते ॥**

इतिपूर्वोक्तस्वरूपा वस्तुस्मृतिरेव सामान्यतः स्मरणालङ्कारः प्रतिपाद्यताम्, किं स्मृतेः सदृशानुभवादितिहेतूपपादनेनात आह—**मयीति**। स्मृत्याख्यव्यभिचारिभावस्योदाहरणे व्याख्यातमिदम्। उत्थापितत्वात् चिन्ताजन्यसंस्कारेणाविष्कृतत्वात्। अयं स्मरणनामा। एवञ्चास्माकं मते संस्कारोद्बोधनद्वारा सदृशवस्तुबोधोत्पन्ना स्मृतिरेव स्मरणालङ्कारः, न तु चिन्ताद्युत्पन्ना स्मृतिरपि। अत एव स्मृतेः सदृशानुभवादितिहेतूपपादनमितिभावः।

एवं स्वमतमुपपाद्यानभिलषितं मतमुपपादयति—**राघवानन्देति**। वैसादृश्यात् विरुद्धानुभवात् जायमान-मितिशेषः। तेषामेव राघवानन्दमहापात्राणमेव।

**शिरीषमृद्वीति**। शिरीषमृद्वी शिरीषपुष्पवत् कोमलशरीरा सीता, गिरिषु, पर्वतप्रदेशेषु यदा यदा यस्मिन् यस्मिन् समये दुःखशतानि अनेकशःक्लेशानि प्रपेदे प्राप्तवती तदा तदा रामः सदनेषु राजधानीस्थभवनेषु अस्याः सीतायाः सौख्यलक्षणानि सर्वव्यापारेषु अगणितानन्दानि गलन्ति निःसरन्ति अश्रूणि नेत्रविन्दयो यत्र कर्मणि तद्यथास्यात्तथा दध्यौ स्मृतवान्।

अत्र विसदृशानां दुःखशतानां प्रतीतेः तत्रातिकूल्यसम्बन्धेन सम्बन्धिनामसंख्यसुखानां स्मृतेर्वैचित्र्योप-लम्भाञ्च स्मरणालङ्कार इति राघावानन्दमहापात्राणामभिप्रायः।

## रुचिरा

स्मरणं लक्षयति—**९९ सदृशानुभावात्** सदृशस्य समानगुणकारादेरनुभवस्तस्मात। वस्तुस्मृतिर्वस्तुनः स्मृतिः। **स्मरणम्**। **उच्यते**। अयम्भावः-गुणादिना कस्यचित् कस्मिंश्चित् प्रतिफलितस्य सादृश्यस्य दर्शनादिना त्वस्मिन् तयोरुभयोर्जातस्य संस्कारस्य महिम्नोद्भावितं सादृश्यप्रतियोग्यनुसन्धानपूर्वकं सादृश्यानुयोग्यनुस-न्धानं स्मरणम्। अत एवोक्तम्—'सदृशज्ञानोद्बोधितसंस्कारभवा मतिः स्मरणम्' इति। एवं च—'भवदभिमत-वस्तून्याकिरन्त्याः समन्तात् सरसिनदलतल्पं मर्मरं कल्पयन्त्याः। हृतकरुण! वयस्या जीवनोपायमस्याः स्मरणमविरलं ते हन्त सम्पादयन्ति॥' इत्यादौ सम्बन्धिज्ञानजन्यस्मरणस्य नालङ्कारत्वम्। चिन्ताजन्यस्मृतेश्चाल-ङ्कारत्वाभावं स्वयमुदाहरिष्यते—'मयि सकपट'मित्यादिना। इति॥ ८०॥

उदाहरति—**यथा**। **खेलत्खञ्जनमञ्जुलं** 'खेलन्तौ समीपे मध्ये वा क्रीडन्तौ खञ्जनौ पक्षिविशेषौ ताभ्यां मञ्जुलं सुन्दरम्, तत्तथोक्तम्। **इदम्**। **अरविन्दम्**। **वीक्ष्य** दृष्ट्वा। **तस्याः**। **चारु** सुन्दरम्। **चञ्चललोचनं** चञ्चले लोचने यत्र तत्तथोक्तम्। यद्वा—चारुचञ्चललोचनमिति समस्तं पदम्, तेन—चारुणी सुन्दरे चञ्चले लोचने यत्र, चारु यथा स्यात्तथा वा चञ्चले लोचने यत्र तत्तथोक्तम्। **वदनं** मुखम्। **स्मरामि**। अत्र हि—खञ्जनसान्निध्ये कमलशो-भायाः, चञ्चललोचनशालित्वे मुखस्य सदृशमिति तद्दर्शनेनास्य स्मरणं श्रृङ्गारपोषकत्वादलङ्कारतां प्राप्तम्॥' इदं द्विधा, एतज्जन्मनि जन्मान्तरे वाऽनुभूतस्य संस्कारजन्यत्वात्। तत्राद्यमुदाहृतम्। यथा वा क्रमेण—'निम्नाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः। तद्भवैः कुहुरुतैः सुरनार्य्यः स्मारिताः सुरतकण्ठरूतानाम्॥' 'दिव्यानामपि कृतविस्मयं पुरस्तादम्भस्तः स्फुरदरविन्दचारुहस्ताम्। उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्तीमस्मार्षीज्जलनिधिमन्थ-नस्य शौरिः॥' अत्र हि कस्याश्चिदरविन्दहस्ताया अम्भस उपायान्त्याः कान्ताया दर्शनेन श्रीस्मरणपूर्वकं पूर्वानु-ष्ठितसमुद्रमन्थनसंस्कारोद्बोधात्। अत्राहुः—'न चैकसम्बन्धिज्ञानमात्रस्यापरसम्बन्धिस्मारकतया नायिकादर्शनजन्यश्रीस्मरणकल्पने मानाभाव इति वाच्यम्। वास्तवश्रीपतियोगिकसादृश्यवत् कामिनीज्ञानस्य मन्थनस्मारकत्वाभावात् सादृश्यवत्त्वेन ज्ञायमानस्य कामिनीज्ञानस्य चावश्यं श्रीस्मरणजनकत्वात्। अन्यथा 'उद्वी-क्ष्यास्मार्षी' दित्यस्यासङ्गतत्वापत्तेः। अन्यसदृशदर्शनेनान्यस्मरणानुपपत्तेः। श्रीस्मरणद्वारैव दर्शनस्य समुद्रमथन-स्मरणजनकताया विवक्षितत्वात्। इति॥ १०४॥

चिन्तानन्यस्मृतेरनलङ्कारत्वमुदाहृत्य दर्शयति—'मयीत्यादिना। व्याख्यातपूर्वमिदम्। अन्यत्स्प-ष्टम्॥१०५॥

स्वपूर्वजानां मतेन प्रकारान्तरेणापि स्मरणं लक्षयितुमाह—**राघवानन्दमहापात्राः**। **तु** (इदं पूर्वतो व्यवच्छेदार्थम्)। **वैसादृश्यात्** विसदृशं सदृशविरुद्धं तस्य भाव इति तस्मात् तथोक्तात्। 'जायमाना'मिति शेषः। **स्मृतिम्**। **अपि**। **स्मरणालङ्कारम्**। **इच्छन्ति** मन्यन्ते। ननु तत्र किमुदाहरणमित्युदाहर्तुकाम आह-तत्र तथाभूते स्मरणे। **तेषां** राघवानन्दानाम्। **एव**। **उदाहरणम्**। **यथा**—'**यदायदा** यस्मिन्यस्मिन् ऋतौ इत्यर्थः। **शिरीषमृद्वी**। **सीता**। **दुःखशतानि**। **गिरिषु** पर्वतप्रदेषु। **प्रपेदे** प्राप्तवती। **तदा**तदा। **अस्याः** सीतायाः। **सदनेषु**। **सौख्यलक्षाणि**। **गलदस्रु** गदलस्रुधारं यथाभवेत्तथा। **रामः**। **दध्यौ** सस्मार। अत्र हि-रामस्य सीतायाः। प्रासादेषु अनुभूतानि सौख्यकारणभूतानि सुरतानि सीतायाः पर्वतेषु दुःखकारणभूतानां सञ्चरणादीनां दर्शनजन्यस्मृतिकानि अभिहितानि। अत्रापि—उपस्कारकतासद्भावादलङ्कारव्यपदेश्यत्वम्॥ १०६॥

**रूपकं रूपितारोपाद्वि(पो वि) षये निरपह्नवे।**

'रूपित—' इति परिणामाद् व्यवच्छेदः। एतच्च तत्प्रस्तावे विवेचयिष्यामः। 'निरपह्नवे' इत्यपह्नुतिव्यवच्छेदार्थम्।

---

## विवृति

रूपकालंकारमाह—**रूपकमिति**। अत्र 'रूपितारोपात्' इति पञ्चम्यन्तपाठः प्रामादिकः। अर्थासंगतेः। प्रथमान्तपाठस्तु रमणीयः। प्रकृतगोपनमपह्नवः, ततः शून्ये विषये उपमेये रूपितस्योपमानस्यारोपात्तादात्म्याध्यासाद्रूपकनामालंकार इत्यर्थः। ननूपमानोपमेययोर्भेदमनुभवतां कथं तादात्म्याध्यास इति चेत्। न। आहार्यस्यैव तादृशारोपस्य रूपकालंकारत्वस्वीकारात्॥ तदुक्तं **चण्डीदासेन** रूपकप्रकरणे—'अलंकारश्चात्राहार्यस्तादात्म्यारोप इत्यवधेयम्' इति। न चातिसाम्यादपह्नुतभेदयोरभेदो रूपकमिति **काव्यप्रकाशदर्शनात्तदानीं** भेदप्रतीतेरभावात्कथमाहार्यत्वम्। बाधकालीनेच्छाजन्यज्ञानस्यैवहार्यत्वाङ्गीकारादिति। वाच्यम्। शाब्दस्य भेदानुभवस्य तदानीमसत्त्वेऽपि आनुमानिकस्य मानसस्य भेदप्रत्ययस्य सत्त्वात्। ननु 'गौर्वाहीकः' इत्यादावपह्नुतभेदयोरुपमानोपमेययोस्तादात्मयारोपस्य कथं न रूपकत्वमिति न वाच्यम्। तस्य विच्छित्तिविशेषाजनकत्वेन रसाद्युपकारकत्वाभावात्। केचित्तु—'विषयस्य प्राङ्निर्देशे रूपकस्य व्यवहारः, परनिर्देशे तु गौणीव्यवहारः' इत्याहुः। तन्न। 'निर्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम्। क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा॥

इत्यादौ विषयस्य प्राङ्निर्देशाभावेऽपि रूपकव्यवहारात्। रूपित**स्य अपह्न**वभेदोपमानस्य निरपह्नवे प्रतिषेधशून्ये विषये उपमेये आरोपस्तादात्म्यारोपो रूपकमित्यर्थः। अत एवोक्तं **काव्यप्रकाशकारेण**—'रूपकं स्वादभेदो य उपमानोपमेययोः' इति। **परिणामादिति**। 'अस्य' इति शेषः। एतञ्च रूपकपरिणामयोर्वैलक्षण्यं च। परिणामे ह्यारोप्यमाणस्य प्रकृतोपयोगित्वेनाप्रकृतत्वनियतोपमानत्वस्य **बाधाद्रूपितप**देन तद्व्यवच्छेद इति भावः।

विषय इत्यस्य वाच्य इति विशेषणं बोध्यम्। तेन 'लतामूले लीनो हरिणपरिहीनो हिमकरः स्वयं हाराकारा गलति जलधारा कुवलयात्। धुनीते बन्धूकं तिलकुसुमजन्मा हि पवनो बहिर्द्वारि पुण्यं परिणमति कस्यापि कृतिनः।' इत्यादौ निगीर्णविषये मुखादौ निष्कलङ्कचन्द्राद्युपमानातादाम्यारोपरूपातिशयोक्तौ नातिव्याप्तिः।

## विवृतिपूर्तिः

**रूपकमिति**। रूपयत्युपमानोपमेययोरभेदारोपेणैकतां नयतीति रूपकम्। यथा 'मुखं चन्द्रः' इत्यादौ मुखत्वचन्द्रत्वरूपधर्मवत्तयोपस्थितयोर्मुखचन्द्रयोरभेदारोपः॥

## विज्ञप्रिया

रूपकालङ्कारमाह—**रूपकमिति**। रूपितेत्यत्र रूपणं रूपः तत इतच्प्रत्ययाद्रूपणवानित्यर्थः। तथा च रूपयिष्यमाणश्चन्द्रादिरत्र रूपितपदार्थः। उक्तप्रत्ययान्तत्वेऽतीतत्वानन्वयात्। तस्य मुखादावारोपो रूपकमित्यर्थः। केचिदत्र आरोपादिति पञ्चमी ज्ञापकतायां, स्वज्ञानद्वारा स्वस्यैव रूपकत्वप्रकारज्ञानहेतुता बोध्या इत्याहुः।

पदव्यावृत्तिमाह-**रूपितेति**। परिणामालङ्कारे रूपणाधिकरणतया रूप्यमाणस्य परिणामाद्वास्तवोऽभेदस्तथात्वाऽनारोपवत्त्वरूपं रूपितत्वम्। यथा—'स्तनोपपीडमाश्लेषः कृतो द्यूते पणस्तया" इति परिणामोदाहरणे रूपणाधिकरणाऽऽश्लेषतयैव रूप्यमाणस्य पणस्य परिणामाद्वास्तव एव पणाऽऽश्लेषयोरभेद इत्यतः पणो न रूपित इति तद्व्यवच्छेदः। अपह्नुतिव्यवच्छेदायेति—"नायं शशी कुण्डलितः फणीन्द्रः" इत्यादौ शशिनि कुण्डलितफणीन्द्रारोप एव, किन्तु शशित्वापह्नवपूर्वक इत्यतः तद्व्यवच्छेदः।

## लोचन

एवं साधर्म्येऽभेदप्राधान्ये अलङ्कारान् निर्णीय भेदप्राधान्ये लक्षयति-**रूपकमिति**। रूपितारोपवत्त्वं नच प्रकृतेऽप्युपयोगः। अनिगीर्णस्वरूपस्याऽन्यतादात्म्यप्रतीतिरारोपः। तेनाध्यवसायमूलकोत्प्रेक्षादेरपि व्यवच्छेदः; अध्यवसायोऽपि विषयनिगरणेन विषयिणोऽभेदप्रतिपत्तिः। अपह्नवो "न मुखं चन्द्र" इत्याकारः। एवं च निरपह्नवस्यानिगिर्णस्य विषयस्य विषयिणा तादात्म्याद् यद्रूपवत्त्वं तद्रूपकाख्यमलङ्करणमन्यरूपेणान्यस्य रूपवत्त्वादित्यर्थः।

## कुसुमप्रतिमा

व्यङ्ग्यसाम्येष्वलङ्कारेषु रूपकस्यान्वतमप्रधानत्वादतिप्रसिद्धत्वाञ्चेदानीं सामन्यतो रूपकं लक्षयति रूपकमिति। निरपह्नवे शब्दतस्तात्पर्य्यतो वा प्रतिषेधरहिते, विषये उपमेयपदार्थे, रूपित्रस्य निरूपितस्य रूपकघटकत्वेनावधारित उपमानाभेदस्य उपमानपदार्थतादात्म्यस्येति यावत्, आरोपः सादृश्यातिशयः वशात् प्रागुक्तया सारोपाख्यलक्षणया आरोपणं रूपवम्।

यथास्थिते उपमेये उपमानस्याभेदारोपो रूपकालङ्कार इति सरलार्थः। रूपयति उपमानोपमेययोरभेदारोपणं करोतीति रूपकमिति व्युत्पत्तिः। अस्मिन्नर्थे रूपकमिति नित्यनपुंसकलिङ्गः शब्दः कारकमितिवत्।

इदमत्रावधेयम्—"मुखचन्द्रः" इत्यादौ समासस्थले रूपके मुखमेव चन्द्र इति मयूरव्यंसकादित्वात् रूपककर्म्मधारयः; उपमायान्तु चन्द्र इवेति "उपमितं व्याघ्रदिभिः सामान्याप्रयोगे" इत्यनेन उपमितकर्म्मधारयः। तव रूपके आरोप्यमाणत्वेन विशेष्यतया उपमानपदार्थ एवोपमेय तिरोधाय क्रियायामन्वेति; उपमायान्तु आरोपभावेन वर्णनामुख्योद्देश्यत्वेन च विशेष्यतया उपमेयपदार्थ एवोपमान विरोधाय क्रियया सम्बध्यते। तेन "मुखचन्द्रः प्रकाशते" इत्यादौ प्रकाशस्य प्रभारूपतया चन्द्रे सम्भवात् मुखे चासम्भवात् प्रकाशत इति पदं रूपकस्य साधकम् उपमायास्तु बाधकमिति रूपकमेव। "युवा प्रियाया मुखचन्द्रं चुम्बति" इत्यादौ चुम्बनस्य वक्तसंयोगरूपतया मुखे सम्भवात् चन्द्रे चासम्भवात् चुम्बतीति पदमुपमायाः साधंक रूपकस्य च बाधकमित्युपमैव एवं "सुन्दरं वदनाम्बुजम्" इत्यादौ सौन्दर्य्यरूपसामान्यधर्म्मप्रयोगेण "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इत्यनेनोपमितसमासासम्भवात् सुन्दरमितिपदमुपमाया बाधकमेवेति पारिशेष्यात् रूपकमेव। "मुखचन्द्रं पश्यति" इत्यादौ तु मुखस्य चन्द्रस्य च दर्शनसम्भवेन उभयोरपि साधकबाधकाभावात् उपमा रूपकयोः सन्देहसङ्कर एव। एतञ्च वृत्तावपि किञ्चित् परस्ताद्वक्ष्यति।

उपमेये उपमानाभेदाप्रतीतेः सारोपाख्यलक्षणामूलकत्वे रूपकम्, साध्यवसानाख्यलक्षणामूलकत्वे तु अतिशयोक्तिः। अतएव द्वितीयपरिच्छेदे "विषयस्यानिगीर्णस्य" इत्यादिकारिकावृत्तौ "इयमेव रूपकालङ्कारस्य

बीजम्" इत्युक्तम् । तथा च उपमेयस्य कथञ्चिदप्यनपलापे सति उपमानाभेदारोपेण रूपकम्, उपमेयस्य कथञ्चिदप्यलोपे सति उपमानाभेदारोपेण अतिशयोक्तिरिति भेदः ।

रूपितपदव्यावृत्तिमाह रूपितेति । परिणामात् परिणामालङ्कारविषयात् व्यवच्छेदो रूपकस्य व्यावृत्तिः । तथा च रूपितस्य प्रागुक्तभावेन उपमानाभेदमात्रस्य आरोप एव रूपकम् न तु तत्र प्रकृतोपयोगित्वमपि प्रयोजकमिति भावः । एवञ्च उपमेये केवलोपमानाभेदारोप एव रूपकम्, उपमेये आरोप्यमाणस्य उपमानाभेदस्य प्रकृतोपयोगित्वे तु परिणाम इत्यनयोर्भेद इति सिद्धम् एतञ्चोपरिष्टाहत्तावपि वक्ष्यति ।

नन्वनयोर्विभिन्नत्व विवृत्याभिधीयताम्, कथमन्यथा परिणामाद्ययवच्छेदः स्पष्टमवबुध्यते इत्याह एतञ्चेति । रूपकपरिणामयोर्विभिन्नत्वेञ्चेत्यर्थः । तत् प्रस्तावे परिणामप्रकरणे । तया चेदानीमपि परिणामस्वरूपस्यानवगततया तङ्भेदप्रदर्शनसम्भवमेवेति तत्प्रकरण एवोभयोभेदं प्रदर्शयिष्याम इति भावः ।

"निरपह्नवे" इत्यस्य व्यवच्छेद्यमाह निरपह्नव इति । अपह्नुतिव्यवच्छेदार्थं करिकायामभिहितमिति शेषः । तथा च शब्दतस्तात्पर्य्यतो वा प्रतिषेधऽपह्नवः । इत्यञ्च निरपह्नवे उपमेये उपमानस्याभेदारोपो रुपकम्, सापह्नवे तूपमये उपमानस्याभेदारोपोऽपह्नुतिरित्यनयोरपि भेदः ।

## विमला

रूपकमाह, रूपकमिति ।—निरपह्नवे—प्रकृतगोपनम् अपह्नवः तद्रहिते, विषये—उपमेये इति यावत्, विषये इत्यस्य वाच्ये इति विशेषणं बोध्यम्; तेन "लतामूले लीनो हरिणपरिहीनो हिमकरः स्वयं हाराकारा गलति जलधारा कुवलयात् । धुनीते बन्धुकं तिलकुसुमजन्मा हि पवनो बहिर्द्वारि पुण्यं परिणमति कस्यापि कृतिनः ॥" इत्यादौ निगीर्णविषये मुखादौ निष्कलङ्कचन्द्राद्युपमानतादात्म्याशेपरुपतिशयोक्तो, नातिव्यप्तिः; रुपितस्य-उपमानस्य, आरोपात्-तादाम्याध्यासात् रूपकं—रूपकालङ्कारः; अध्यासश्च अत्राहार्य्यः, न तु वास्तवः । अत्र "रूपितारोपात्" इति पञ्चम्यन्तपाठः प्रामादिकः, अर्थासङ्गतेः; प्रथमान्तपाठस्तु रमणीयः, उपमेये उपमानाभेदारोपस्यैव रूपकत्वाङ्गीकारात् । तदुक्तं चण्डीदासेन रूपकप्रकरणे—"अलङ्कारश्चात्राहार्य्यस्तादात्म्यारोप इत्यवधेयम्" इति । न च "अतिसाम्यादपह्नुतभेदयोरभेदो रूपकम्" इति काव्यप्रकाशदर्शनात् तदानीं भेदप्रतीतेरभावात् कथमाहार्य्यत्वम् ? बाधकालीनेच्छाजन्यज्ञानस्यैवाहार्य्यत्वाङ्गीकारादिति वाच्य, शाब्दस्य भेदानुभवस्य तदानीमसत्त्वेऽपि आनुमानिकस्य मानसस्य भेदप्रत्ययस्य सत्त्वात् । ननु "गौर्वाहीकः" इत्यादावपह्नुतभेदयोरुपमानोपमेययोस्तादात्म्यारोपस्य कथं न रूपकत्वम्? इति न वाच्यं, तस्य विच्छित्तिविशेषाजनकत्वेनरसाद्युपकारकत्वाभावात् । केचित्तु—"विषयस्य प्राङ्निर्देशे रूपकस्य व्यवहारः परनिर्देशे तु गौणो व्यवहारः" इत्याहुः, तन्न; "निर्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम् । क्रीड़ागृहमनङ्गस्य सेयमिन्दीवरेक्षणा ॥" इत्यादौ विषयस्य प्राङ्निर्देशाभावेऽपि रूपकव्यवहारात् । ["रूपितारोपः" इति पाठे—रूपितस्य—अपह्नवभेदोपमानस्य, निरपह्नवे—प्रतिषेधशून्ये, विषये—उपमेये, आरोपः,—तादात्म्यारोपः, रूपकमित्यर्थः; अत एवोक्तं काव्यप्रकाशकारेण—"तद्रूपकमभेदो य उपमानोपमेययोः" इति बोध्यम्] ।

रूपितेति ।—परिणामे ह्यारोप्यमाणस्य प्रकृतोपयोगित्वेनाप्रकृतत्वनियतोपमानत्वस्य बाधात् रूपितपदेन तद्व्यवच्छेद इति भावः । परिणामादिति, अस्य इति शेषः । एतच्च—रूपकपरिणामयोर्वैलक्षण्यञ्च ।

## लक्ष्मी

रूपकालङ्कारं निरूपयति—रूपकमिति। प्रकृतगोपनमपह्नवः, निरस्त अपह्नवो यस्य तथोक्ते, विषये उपमानेन सार्धमभिन्नतया प्रतिपाद्यमानस्यापि यस्योपमेयस्य प्रकृततो गोपानाभावादनपह्नवस्तादृशे उपमेये सतीत्यर्थः, रूपितस्याभिन्नतया कथितस्य उपमानस्यारोप आरोपणम्, यद्वा रूपितस्य निरूपितस्य रूपकघटकत्वेन निश्चितस्य उपमानाभेदस्य उपमानपदार्थतादात्म्यस्येतियावत्, आरोपः सादृश्यातिशयमहिम्ना पूर्वप्रतिपादितया सारोपाख्यलक्षणया आरोपणं रूपकम्, रूपयत्युपमानोपमेययोरभेदमध्यवसाययति कल्पयितुमपि वास्तवमिवावगमयतीति तादृशं तन्नामालङ्कारः। यथावस्थिते उपमेये उपमानस्याभेदारोपो रूपकालङ्कार इति परमार्थः। रूपकमिति कारकमितिवन्नित्यनपुंसकलिङ्गः शब्द इत्यवधेयम्।

**अत्रेदमनुसन्धेयम्**—'मुखचन्द्रः प्रकाशते' इत्यादौ 'कान्तः प्रियतमाया मुखचन्द्रं चुम्बति' इत्यादौ च उपमारूपकं वा रूपकमुपमा वेति मीमांसायाम् 'मुख चन्द्रः' इत्यादौ समासस्थले रूपके मुखमेव चन्द्र इति विग्रहे 'मयूरव्यंसकादयश्च' इत्यनेन रूपककर्मधारयसमासः। ऽपमायान्तु 'मुखं चन्द्र इवे'तिविग्रहे 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनेन उपमितकर्मधारयसमासः। तत्र रूपके आरोप्यमाणत्वेन विशेष्यतया उपमानपदार्थ एवोपमेयमन्तर्हृत्य क्रियायां सम्बध्नाति। उपमायान्तु आरोपभावेन वर्णनामुखोद्देश्यत्वेन च विशेष्यतया उपमेयपदार्थ इवोपमानमन्तर्हृत्य क्रियया सम्बध्यते। एवञ्च 'मुखचन्द्र' इत्यादौ प्रकाशस्य दीप्तिरूपतया चन्द्रे सम्भवात् मुखे चासम्भवात् प्रकाशत इति पदम् उपमाया बाधकं रूपकस्य च साधकमितिरूपकमेव। 'कान्तः प्रियतमायाः' इत्यादौ चुम्बनस्य वदनसंयोगरूपतया मुखे सम्भवात् चुम्बतीतिपदं रूपकस्य बाधकमुपमायाः साधकमित्युपमैव। एवं 'विकसितं मुखपद्मम्' इत्यादौ विकसितत्वरूपसाधारणधर्मप्रयोगेण 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनेनोपमितसमासासम्भवात् विकसितमितिपदमुपमाया बाधकमेवेत्यवशिष्टत्वात् रूपकमेव। 'रमणीयं मुखपद्मम्' इत्यादौ तु मुखस्य पद्मस्य च रमणीयत्वसम्भवनेन उभयोरपि साधकबाधकाभावादुपमारूपकयोः सन्देहसङ्कर एव। व्यक्तीभविष्यति चैतत्किञ्चिदुपरिष्ठाद् वृत्तावपि। निगीर्याध्यवसानरूपायामतिशयोक्तौ उपमेयस्य नोपमेयगतधर्मवत्तया उपस्थितिरिति ततो भेदः। परिणामपह्नुत्योर्भेदो वृत्तावेव। एवञ्च गौणसारोपा लक्षणासम्भवस्थले रूपकम्, गौणसाध्यवसाना लक्षणास्थले त्वतिशयोक्तिरितिफलितम्। अत एव द्वितीयपरिच्छेदे 'विषयस्यानिगीर्णस्य' इतिकारिकावृत्तौ 'इयमेव रूपालङ्कारस्य बीजम्' इत्यभिहितम्। रूपके लक्षणा नेति मतं तु प्रागेव तत्रैव खण्डितमेव, एवं निदर्शनायामुपमेयस्य सत्त्वेऽपि आरोपस्यारूपितत्वात्ततो भेदः। भ्रान्तिमति भ्रान्तेरुत्थानावसरे एव विषयापह्नव इति भेदः। उत्प्रेक्षायामपि नारोपः, किन्तु अभेदेन तथा सम्भावनमितिव्यवच्छेदः। 'लोष्टः पाषाणः' इत्यभेदे नालङ्कारत्वप्रसङ्गः वैचित्र्याभावात्।

रूपितपदव्यवच्छेद्यं दर्शयति—**रूपितेति**। परिणामात् परिणामनाम्नलङ्कारात् व्यवच्छेदो रूपकस्य व्यावृत्तिः। तथा च उपमेये आरोप्यमाणस्य उमापनाभेदस्य प्रकृतोपयोगित्वे परिणामः, उपमेये उपमानाभेदमात्रस्यारोप एवं रूपकं न तु प्रकृतोपयोगित्वमपीत्यनयोर्भेदे इति सिध्यति। एतच्च वृत्तावपि परस्तात् स्फुटीभविष्यति।

ननु रूपकपरिणामयोर्भेदः स्पष्टं विवृत्या प्रतिपाद्यतां येन परिणामाद्व्यवच्छेदावबोधोऽनायासेन सेत्स्यतीत्यत आह—**एतच्चेति**। रूपकपरिणामयोर्वैलक्षण्यञ्चेत्यर्थः। तत्रप्रस्तावे परिणामप्रकरणे। तथा च सम्प्रत्यपि परिणामलक्षणस्यानधिगततया तद्भेदप्रदर्शनसम्भवमेवेति तत्रप्रस्ताव एवानयोर्भेदं प्रतिपादयिष्यत इत्यभिप्रायः।

'निरपह्नव' इतिपदस्य व्यावृत्तिमुपपादयति—**निरपह्नवः** इति रूपकविशेषणमितिशेषः, अपह्नुतिस्तन्नामा वक्ष्यमाणोऽलङ्कारस्तद्वयवच्छेदार्थं तद्भेदाय कारिकायामुक्तमितिशेषः। तथा च उपमेयागोपनेन उपमेये उपमानस्याभेदारोपो रूपकम्, उपमेयगोपनेन तु उपमेये उपमानस्याभेदारोपोऽपह्नुतिरिति स्फुटमनयोरपि भेदः।

## रुचिरा

**रूपकं** लक्षयति—**१०० विषये** उपमेये। **निरपह्नवे** निरस्तोऽपह्नवः स्वरूपतो गोपनं यस्य तादृशे। उपमानेन सममभिन्नतया प्रतिपाद्यमानस्यापि यस्योपमेयस्य स्वरूपतोऽनुपादानाभावादनपह्नवस्तथाभूते उपमेये सतीति भावः। **रूपितारोपो** रूपितस्याभिन्नतया प्रतिपादितस्योपमानस्यारोप आरोपणम्, यद्वा—रूपितो निरूपित आरोपोऽभेदाध्यवसाय उपमानस्याभेदोद्भावनमिति तथोक्तः। 'रूपितारोपा'दिति पाठे तु रूपितः कल्पितोऽसावारोप इति तमतति व्याप्नोतीति तथोक्तम्। **रूपकं** रूपयत्युपमानोपमेययोरभेदमध्यवसाययति कल्पयितुमपि वास्तवमिवावगमयतीति तथोक्तम्। तन्नामाऽलङ्कारः। तथा च—उपमानेन सममुपमेयस्याभेदारोपस्य कल्पितत्वेनोपमेयस्य स्वरूपतोभिभावनाभावः, उपमेयस्य वा उपमानेनातिसादृश्ये स्वरूपापह्नवार्हतायामपि स्वरूपापह्नवशून्यत्व एव तयोरभेदारोपणं रूपकालङ्कार इति फलितम्। अत एव पण्डितराजा अप्याहुः—उपमेयताऽवच्छेदकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकम्। तदेवोपस्कारकत्वविशिष्टमलङ्कारः।' इति। उपस्कारकत्वं चालङ्कारत्वबीजम्।

अलङ्कारान्तरादस्य व्यवच्छेदं निर्दिशति—**'रूपित' इति** 'अनेने'ति शेषः। **परिणामत्तदभिर्धेयादलङ्कारात्।** 'अस्ये'ति शेषः। **व्यवच्छेदः**। ननु एतावता कथं व्यवच्छेद इत्याशङ्क्याह—**एतत्** रूपकपरिणामयोर्वैलक्षण्यम्। **च। तत्प्रस्तावे** तस्य परिणामस्य प्रस्ताव प्रकरणं तस्मिन्। **विवेचयिष्यामो** विविच्य दर्शयिष्यामः। अयम्भावः-पारिणामे हि आरोप्यमाणस्य प्रकृतोपयोगित्वेनाप्रकृतत्वनियतोपमानताया बाधितत्वात् 'रूपिते'ति पदेन तद्व्यवच्छेदः। इति। **निरपह्नव'** इति 'विशेषण'मिति शेषः। **अपह्नुतिव्यवच्छेदार्थमपह्नुतेर्व्यवच्छेदाय।** अपह्नुतौ हि उपमेयगोपनेन भेदस्याप्यपह्नव इति स्फुटं ततोऽस्य भेदः। निर्गीर्य्याध्यवसानरूपायाममतिशयोक्तौ विषयस्य निगीर्णत्वाच्च प्रत्यक्षो भेदः। एवं निदर्शनायामुपमेयस्य सत्त्वेऽपि आरोपस्यारूपितत्वाद्भेदः। भ्रान्तिमति भ्रान्तेरुत्थानावसरे एव विषयापह्नव इत्यस्य भेदः। उत्प्रेक्षायामपि नारोपः, किन्तु-अभेदेन तथा सम्भावनमिति व्यवच्छेदः। 'विकसितं वदनकमल'मिति समासस्थले विशेषणस्य मुख्यतया, उपमानगतत्वादरूपकम्। उपमेयगतत्वे तु उपमा, यथा 'सहासं वदनकमल'मिति, उभयत्र तुल्यरूपत्वे रूपकोपमयोः सङ्करः। 'यथा रमणीयं वदनकमलम्'इति, अत्रापि—'रमणीयत्वमहो वदनेन्दोः' इत्युभयत्र रमणीयत्वस्यानुगतत्वेऽपि समासस्य मयूरव्यंसकादित्वान्न रूपकोपमयोः सङ्करः, किन्तु रूपकमेव। उपमा हि 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समाससत्त्व एव। अयमपि समास उपमानोपमेययोः समानलिङ्गत्वे सम्भवतीत्यत्र च समानलिङ्गत्वाभावादस्य चाभावाद्रूपकमेवेति बोध्यम्।

**तत्परम्परितं साङ्गं निरङ्गमिति च त्रिधा ॥ २८ ॥**

तद्रूपकम् । तत्र—

**यत्र कस्यचिदारोपः परारोपणकारणम् ।**

**तत्परम्परितं श्लिष्टा श्लिष्टशब्दनिबन्धनम् ॥ २९ ॥**

**प्रत्येकं केवलं मालारूपं चेति चतुर्विधम् ।**

---

## विवृति

रूपकभेदानाह—**तदिति** । कार्यकारणभावरूपा परम्परा संजाता अस्येति परम्परितम् । साङ्गं सावयवम् । **निरङ्गं** निरवयवम् । परम्परितरूपकमाह—**यत्रेति** । तस्यापि द्वैविध्यमाह—**श्लिष्टेति** । श्लिष्टशब्दनिबन्धनमश्लिष्टशब्दनिबन्धनं चेत्यर्थः । पुनरपि तस्य द्वैविध्यमाह—**प्रत्येकमिति** । त्रिरुक्तभेदयोरेकैकमित्यर्थः ॥ **आहव इति** । जगदुत्कृष्टदण्डं यस्मात्तत्संबोधने तथा ॥

## विवृतिपूर्तिः

**मालेति** । श्लिष्टं मालारूपपरम्परितं रूपकमित्यर्थः ॥

## विज्ञप्रिया

तस्य त्रैविध्यमाह—**तदिति** ।

**यत्र कस्यचिदिति** । यत्र रूपके गृह्यमाणे क्वचित् कस्याचिदारोप इत्यर्थः । परारोपणस्य प्रकृष्टारोपस्य मुख्यारोपस्य इत्यर्थः । कारणं साधकम् । **श्लिष्टेति**—एकशब्देनैव रूप्यरोपकोभयोपस्थापने श्लिष्टत्वनिबन्धनत्वम् । अतथात्वे तु अश्लिष्टशब्दनिबन्धनत्वम् ।

## लोचन

तद्भेदानाह—**तदिति** । त्रिधेत्यतः पूर्व प्रथममिति शेषः । अन्यभेदानाभेतदन्तरत्वात् ।

परस्य मुख्यस्य, तथाविधसम्यगर्थान्तिररूपणं विनानुपद्यमाने आरोपणे कारणं निमित्तम् । श्लिष्टः, प्रकृतरोपणोत्पादकरूपाश्रयस्यात्मनो ब्यर्थता श्लिष्टः । अश्लिष्टः पृथक्पदनिर्दिष्टरूपरूपकार्थः । तथाविधः शब्दो निबन्धनं कारणम् । अर्थात् मुख्यारोपे यस्य इत्यर्थः । केवलं सकृद्रूपणात्मकम् । मालारूपम् एकत्रैव विषयपरम्परामनपेक्ष्याऽनेकवस्त्वारोपात्मकम् । एवमन्यत्रापि । परम्परा जाताऽस्येति परम्परितं सार्थकम् ।

## कुसुमप्रतिमा

रूपकं विभजति तदिति । तत् रूपकसामान्यम् । परम्परा कार्य्यकारणभावश्रेणी अस्य सञ्जातेति परम्परितम् । तारकादित्वादितच् । अङ्गैः समस्तप्रतिपादकैः सहेति साङ्गम् । निरङ्गम् एकेनापि पतिपादकेन हीनम् ।

तत्रेति । तेषु त्रिविधेषु रूपकेषु मध्य इत्यर्थः ।

परम्परितं लक्षयन् विभजते यत्रेति । यत्र स्थले कस्यचिदेकस्य आरोपः, परस्य अन्वस्य आरोपणे आरोपे कारणं निमित्त भवति, तत्तव परम्परितं रूपकं ज्ञेयमिति शेषः । एतेन रूपकत्वे सति चारोपान्तरनिमित्तीभूत आरोपः परम्परितमिति फलितम् । तञ्च परम्परितं प्रथम द्विधा विभजते श्लिष्टेति । निबध्यते प्रयोज्यते अनेनेति निबन्धनं प्रयोजकमित्यर्थः । तथा च श्लिष्टाश्लिष्टौ शब्दौ निबन्धने प्रयोजकौ यस्य तत् । एवञ्च श्लिष्टशब्दनिबन्धनम् अश्लिष्टशब्दनिबन्धनश्चेति प्रथमं द्विविधम् । तयोश्च प्रत्येकम् एकैकमेव केवलमेकमात्रभूतं मालारूपमनेकभूतञ्चेति मिलित्वा समुदायेन परम्परितरूपकं चतुर्विधमित्यर्थः ।

## विमला

रूपकप्रभेदानाह, तदिति ।—रूपकमित्यर्थः कार्य्यकारणभावरूपा परम्परा सञ्जाता अस्येति परम्परितं, साङ्गं—सावयवं निरङ्गं—निरवयवम् इति त्रिधा, भवतीति शेषः ।

परम्परितरूपकमाह, यत्रेति ।—यत्र—यस्मिन् स्थले, कस्यचित् आरोपः—अध्यासः, परस्य—अन्यस्य, आरोपणे—आरोपविषये, कारणं, तत् परम्परितं—तदाख्यमित्यर्थः, रूपकमिति शेषः; श्लिष्टाश्लिष्टनिबन्धनं—श्लिष्टशब्दनिबन्धनमाश्लिष्टशब्दनिबन्धनञ्च इति द्विविधमित्यर्थः, ज्ञेयमिति शेषः । पुनरपि तस्य द्वैविध्यमाह, प्रत्येकमिति ।—प्रत्येकं—निरुक्तभेदयोरेकैकमित्यर्थः, केवलमालारूपभेदाभ्यां द्विविधम्; तथा हि—श्लेषाधीनतया केवलं मालारूपञ्च, अश्लेषेण च केवलं मालारूपञ्चेति चतुर्विधम् ।

## लक्ष्मी

अस्य प्रथमं भेदत्रयमुपपादयति—तदिति । तद् रूपकसामान्यम् । परम्परा कार्यकारणभावानुपूर्वी सञ्जाता अस्येति परम्परितम्, तारकादित्वादितच् । अङ्गैः समग्रोपपादकैः सहेति साङ्गम्, निरङ्गम् एकेनाप्युपपादकेन रहितम् । त्रिधेति । अन्यभेदानामेतदन्तः पातित्वादिति भावः ।

तत्पदं विवृणोति—तदिति । स्पष्टम् । तत्रेति । तेषु त्रिप्रकारेषु रूपकेषु मध्ये इत्यर्थः ।

परम्परितं निरूपयन् तद्भेदानाह—यत्रेति । यत्र रूपके गृह्यमाणे क्वचित् कस्यचिदेकस्य आरोपः, परमन्यद यदारोपणं तस्य कारणं निमित्तभूतं भवति, तत्तत्र परम्परितं तदाख्यं रूपकं बोध्यमितिशेषः । तथा च रूपकत्वे सति आरोपान्तरनिमित्तभूत आरोपः परम्परितमिति लक्षणं फलितम् । तत्परम्परितस्य द्वैविध्यं प्रथमं दर्शयति—श्लिष्टेति । श्लिष्टं श्लेषानुगृहीतम्, अश्लिष्टं श्लेषाननुगृहीतम्, निबध्यते उपपाद्यते अनेनेति निबन्धनमुपपादकम्, तथा च श्लिष्टाश्लिष्टौ शब्दौ निबन्धने उपपादकौ यस्य तत्तादृशम् । एवञ्च श्लिष्टशब्दनिबन्धनम्, अश्लिष्टशब्दनिबन्धनञ्चेति प्रथमे द्विविधम् । तयोश्च प्रत्येकम् एकैकमेव केवलमेकमात्रभूतञ्चेति सङ्कलनेन चतुर्विधं चतुष्प्रकारकं परम्परितरूपकमित्यर्थः ।

क्रमादुदाहर्त्तुकाम आह—अत्रेति । तत्र तेषु चतुर्षु भेदेषु मध्य इत्यर्थः ।

## रुचिरा

अस्य च प्रथमं भेदत्रयं निर्दिशति—तद्रूपकम्। **परम्परितम्** परम्परा कार्य्यकारणभावानुपूर्वी जाताऽस्यास्मिन् वेति तथोक्तम्। साङ्गं सावयवम्। तथा—**निरङ्गं** निरवयवम्। **इति**। **च**। **त्रिधा**॥ ८१॥

तत्पदं व्याचष्टे-**तदित्यादिना**। स्पष्टम्।

तत्रापि परम्परितं लक्षयन् तद्भेदानाह—**तत्र** तेषु त्रिविधेषु रूपकेषु मध्ये इत्यर्थः। यत्र यस्मिन् निरुक्तलक्षणाति क्रान्तेऽलङ्कारे। **कस्यचित्**। **आरोपः**। **परारोपणकारणं** परमन्यद् यदारोपणं तस्य कारणं निमित्तभूतमिति तथोक्तम्। **तत्**। **परम्परितं** कार्य्यकारणरूपाऽऽरोपपरम्परा जाताऽस्येति तथोक्तम्। 'तदस्य सञ्जातं तारकादिभ्य इतच्।' ५/२/३६ इतीतच्। तदाख्यं रूपकमित्यर्थः। एतदेव—**श्लिष्टाश्लिष्टशब्दनिबन्धनं** श्लिष्टं श्लेषानुगृहीतमश्लिष्टं श्लेषाननुगृहीतं तयोः शब्दयोः निबन्धनं वर्णनसम्पत्तिर्यस्य तत्तथाविधम्। **केवलम्**। **मालारूपम्**। **च**। **इति**। **प्रत्येकम्**'भिद्यमान'मिति शेषः। **चतुर्विधम्**। अयम्भावः। आरोपान्तरकारणकारणीभूतः कस्यचिदारोपः परम्परितं नाम रूपकालङ्कारः, असौ च केवलरूपो मालारूपश्च द्विविधः, अनयोरपि द्वयोर्विधयोः प्रत्येकं श्लिष्टनिबन्धनत्वमश्लिष्टनिबन्धत्वञ्चेति द्वैविध्ये चातुर्विध्यमिति॥ ८२॥

तत्र श्लिष्टशब्दनिबन्धनं केवलपरम्परितं यथा—

**'आहवे जगदुद्दण्ड ! राजमण्डलराहवे ।**
**श्रीनृसिंहमहीपाल ! स्वस्त्यस्तु तव बाहवे ॥'**

अत्र राजमण्डलं नृपसमूह एव चन्द्रबिम्बमित्यारोपो राजबाहौ राहुत्वारोपे निमित्तम् ।

---

## विवृति

**इत्यारोप इति** । अत्र श्लेषेण रूप्यरूपकयोर्द्वयोरेवाभिधानं शब्दसाम्यरूपसादृश्यमूलं प्रथमं रूपकम् । तेन राजमण्डलपदवाच्योपमर्दकत्वरूपसादृश्यनिबन्धनं द्वितीयं रूपकमिति भावः ॥

## विज्ञप्रिया

**आहवेति**—हे नृसिंहमहीपाल ! तव बाहवे हस्ताय स्वस्त्यस्तु । कीदृशाय—आहवे युद्धे जगत्युद्दण्डं राजमण्डलं नृपतिमण्डलमेव राजमण्डलं चन्द्रमण्डलं तदीयराहवे सैहिकेयाय तत्तिरस्कारकत्वात् । अत्र नृपतिमण्डलसम्बन्धित्वेन राहुत्वारोपोऽनुपपन्नः राहोर्नृपतिमण्डलतिरस्कारकत्वाभावात् । अतो मुख्यतदारोपसाधको नृपतिमण्डले चन्द्रमण्डलारोपः । श्लिष्टराजशब्देन च तदुभयोपस्थापनम् एतदाह—**अत्रेति**। अत्र च मुख्यरूपकनिर्वाहाय द्वयोर्नृपतिचन्द्रयोः प्राकरणिकत्वादादावेव नृपचन्द्रो राजपदवाच्यो न तु चन्द्रो व्यङ्ग्यः । एकार्थमात्रे प्रकरणत्वे एवाऽन्यार्थस्य व्यङ्ग्यत्वात् । अतो नात्र वाच्यसाधकत्वव्यङ्ग्यरूपस्य वाच्यसिद्ध्याङ्गाख्यगुणीभूतव्यङ्ग्यत्वस्य प्रसक्तिः । यत्र तु कस्यचिदारोपं विनैव प्रथमं मुख्यरूपकं सिद्ध्यति पश्चात्तादृशनिरूप्यमाणस्याऽपरपदार्थान्वयानुपपत्तिस्तत्र प्राकरणिके तादृशापरपदार्थे नियन्त्रकस्य श्लिष्टशब्दस्याऽपरार्थो मुख्यरूपमाणस्याऽपरपदार्थान्वयानुपपत्तिनिरासाय रूप्यमाणे व्यङ्ग्य एव; तत्र वाच्यसिद्ध्यङ्गतैव तस्य । यथा—

**"भ्रमिमरतिमत्वसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादं च ।**
**मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥"**

इत्यत्र श्यामत्वेनोपकारकत्वेन च जलदे भुजगरूपणं प्रथमं सिद्ध्यत्येव । पश्चाच्च रूप्यमाणस्य भुजगस्य विषपदार्थे प्राकरणिकजलजनकत्वानुपपत्त्या तन्निरासाय विषपदद्वितीयार्थो हलाहलं व्यङ्ग्यम् । तत्र रूप्यतो वृष्टिवर्णनप्रकरणाज्जलस्यैव वाच्यत्वात् । ततो भुजगस्य हलाहलजनकत्वेनानुपपत्त्यभावाद् भुजगरूपेण सिद्धिरिति विषयस्य विभागः सुधीभिरवधेयः । एवं च मुख्यरूपकसाधकविशेष्यस्य वाच्यत्वे परम्परितं रूपकं, तस्य व्यङ्ग्यत्वे तु वाच्यसिद्ध्यङ्गमिति स्थिते "दीपयन् रोदसीरन्ध्रमेष ज्वलति सर्वतः । प्रतापस्तव राजेन्द्र वैरिवंशदवानलः ।" इत्यत्र कुले वेण्वारोपणस्य व्यङ्ग्यतया वाच्यदावानलरूपसिद्ध्यङ्गत्वमिति ग्रन्थकृता प्रागुक्तं चिन्त्यम् । राजमण्डलराहवे इत्यत्र इव तत्रापि मुख्यदवानलरूपकसाधकत्वेन वेण्वारोपणस्य वाच्यत्वादेव ।

## लोचन

जगदुद्दण्डोऽतिशयोत्कटः, राजमण्डलं नृपसमूहः चन्द्रमण्डलं च ।

## कुसुमप्रतिमा

आहव इति। राजस्तुतिरियम्। जगति उत्कृष्टं दण्डं सैन्यं यस्य स जगदुद्दण्डः। हे जगदुद्दण्ड! श्रीनृसिंहमहोपाल! आहवे समरे, राजमण्डल विपक्षनृपसमूह एव राजमण्डलं चन्द्रबिम्बं तस्य राहवे विमर्द्दनात् राहुस्तरूपाय, तवत्र वाहवे भुजाय स्वस्ति कुशलमस्त। "दण्डो यमे मानभेदे लगुड़े दमेसैन्ययोः।" इत्यादिविश्वः। अत्र "हवे हवे" इति यमकस्य पादत्रयगतत्वात् "सहसालिजनैः स्निग्धैः इत्यादिवदप्रयुक्तातादोषोऽपि ज्ञेयः।

लक्ष्ये लक्षणं सङ्गमयितुमाह अत्रेति। "राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतो। यक्षे शक्रेऽपि पुंसि स्यात्" इति मेदिनी। अत्र नृपसमूहे चन्द्रबिम्बत्वारोपं विना रजबाहौ राहुत्वारोपः सादृश्या भावान्न सम्भवतीति पूर्वारोपः परारोपं प्रति निमित्तम्, राजमण्डलेति श्लिष्टशब्दप्रयोज्यश्च पूर्वारोपः कार्य्यकारणभावश्चैकमात्र इत्यतः श्लिष्टशब्दनिबन्धनं केवलपरम्परितमित्याशयः।

एवमत्र केवलपरारोपे उभयारोपे च श्लिष्टशब्दनिबन्धनत्वं सम्भवति। यथा मम—

**"रणदुर्द्दिनसम्प्राप्तौ प्रच्छन्नं राजण्डलम्।**
**इने तत्रोदयं प्राप्ते जाता च कमलोन्नतिः॥"**

अत्र दुर्द्दिनं मेघान्धकारः। इनो राजा सूर्य्यश्च। कमला सम्पत् कमलञ्च पद्मम्। तेन युद्धे दुर्द्दिनत्वारोपो नृपतिसमूहे चन्द्रमण्डलत्वारोपे निमित्तम्, राजमण्डले त श्लिष्टशब्दश्च परारोपप्रयोजकः। तथा राजनि सूर्य्यत्वारोपः सम्पदि पद्मत्वारोपं प्रति निमित्तम्, इनेति कमलेति श्लिष्टशब्दद्वयञ्च उभयारोपप्रयोजकम्। एवमुत्तरत्रापि ज्ञेयम्।

## विमला

आहवे इति।—हे श्रीनृसिंहमहीपाल! आहवे—युद्धे, जगत्सु उद्दण्डानाम्—उद्दृप्तानां, राजमण्डलानां—नृपतिगणनाम्, (आहवे—परस्परं विमर्दनावसरे, जगति गच्छतीति तस्मिन्, पान्थजने इति यावत्, तत्सन्तापोत्पादनविधाविति भावः, उद्दण्डस्य—अकरुणस्य, राजमण्डलस्य—चन्द्रमण्डलस्य इति व्यङ्ग्योऽर्थः) राहवे—राहुस्वरूपाय, तव वाहवे—भुजाय, स्वस्ति अस्तु। राहुणा चन्द्रमण्डलस्येव बाहुना राजमण्डलानां पीड़ोत्पादकत्वात् बाहौ राहुत्वारोपः बोध्यः; अत्र राजमण्डलपदं श्लिष्टम्।

इत्यारोप इति।—अत्र श्लेषेण रूप्यरूपकयोर्द्वयरेवाभिधानं शब्दसाम्यरूपसादृश्यमूलं प्रथमं रूपकं, तेन राजमण्डलपदवाच्योपमर्दकत्वरूपसादृश्यनिबन्धनं द्वितीयं रूपकमिति भावः। यथा वा—"अहितापकरणभेषजनरनाथ! भवान् करस्थितो यस्य। तस्य कुतोऽहिभयं स्यादखिलामपि मिदिनीं चरतः?" इत्यत्र अहितानामपकरणमेव अहीनां तापकरणमिति श्लेषमूलकेन आरोपेण नरनाथे भेषजत्वारोपस्य समर्थनम्।

## लक्ष्मी

**आहव** इति। राजस्तुतिरियम्। हे श्रीनृसिंहमहीपाल! जगति उत्कृष्टं दण्डं सैन्यं यस्य तत्सम्बुद्धौ हे जगदुद्दण्ड! 'दण्डो यमे मानभेदे लगुडे दमसैन्ययोः' इति विश्वः, 'जगदुद्दण्डराजमण्डलराहवे' इति समस्तपाठस्तु साधीयान्, तथा सति आहवे सङ्ग्रामे 'आहवः सङ्गरे यज्ञे' इति हैमः, जगति संसारे ये उद्दण्डा निरङ्कुशाः कुलागममर्यादातिक्रमिणः स्वपराक्रमगर्वेणान्यं तुच्छं मन्यमाना ये राजानस्तेषां मण्डलं समूह एव राजमण्डलं चन्द्रबिम्बं तस्य राहवे तत्तिरस्कारकत्वाद्विमर्द्दनाच्च राहुस्वरूपभूताय, 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ।

यक्षे शक्रे च पुंसि स्यात्' इति मेदिनी 'स्यान्मण्डलं द्वादशराजके च बिम्बे कदम्बके च' इति विश्वः, तव बाहवे हस्ताय स्वस्ति कल्याणमस्तु

अत्र 'हवे हवे' इति यमकस्य पादत्रयगतत्वात् 'न यमकं क्वचित्रिपात्' इति नियमविरोधानभ्युपगमेन 'सहसालिजनैः स्निग्धैः' इत्यादिवत्प्रयुक्तत्वं दोषोऽपि बोध्यः ।

उदाहरणे लक्षणं संयोजयितुमाह—अत्रेति । 'चन्द्रबिम्ब' मित्यारोपः 'चन्द्रबिम्ब' मित्यभेदेन प्रतिपादनम् । राज्ञो वर्णनीयमहिम्नो नृपतेर्दर्बाहुस्तस्य राजबाहोः । निमित्तं कारणम् । तथा च राजसमूहे चन्द्रबिम्बत्वारोपं विना वर्णनीयराजबाहौ राहुत्वारोपः साम्याभावान्न सम्भवितुमर्हतीति पूर्वारोपः उत्तरारोपं प्रति निमित्तम्, राजमण्डलेतिश्लिष्टशब्दोपपाद्यश्च पूर्वारोपः कार्यकारणभावश्चैकमात्र इत्यतः श्लिष्टशब्दनिबन्धनं केवलपरम्परितमित्यभिप्रायः ।

## रुचिरा

क्रमादुदाहर्तुकाम आह—**तत्र** तेषु चतुर्षु भेदेषु मध्ये । **श्लिष्टशब्दनिबन्धनं** श्लिष्टाः श्लेषानुगृहीता ये शब्दास्तैर्निबन्धनं यस्य, श्लिष्टाः शब्दा यत्र तादृसं निबन्धनं यस्येति वा तत्तथोक्तम् । **केवलपरम्परितम्** । **यथा आहवे** इत्यादि ।

'हे **श्रीनृसिंहमहीपाल ! आहवे** सङ्ग्रामे । 'आहवः सङ्गरे यज्ञे इति हैमः । **जगदुद्दण्डराजमण्डलराहवे** जगति विश्वस्मिन् विश्वे ये उद्दण्डा निरङ्कुशाः कुलागममर्य्यादोल्लङ्घिनः स्वविक्रममदेन परं तुच्छं मन्यमाना ये राजानस्तेषां मण्डलं चक्रं तस्य राहुस्तस्मै तत्स्वरूपभूतायेत्यर्थः । **तव** । **बाहवे** । **स्वस्ति** । **अस्तु** ॥ १०७ ॥'

उदाहृतमर्थे दर्शयति—**अत्रास्मिन्**नुदाहते पद्य इति यावत् । **'राजमण्डलं** राज्ञां मण्डलम् । **नृपसमूहः** । **एव** । **'चन्द्रबिम्ब'मित्यारोपः** । 'चन्द्रबिम्ब'मित्यभेदेन प्रतिपादनम् । **राजबाहो** राज्ञो वर्णनीयमहिम्नो नृपतेर्बाहुस्तस्य । **राहुत्वारोपे** । **निमित्तं** कारणम् । अयम्भावः—बाहो राहुत्वं चन्द्रमण्डलस्य मर्दनकर्मठत्वमूलकं सम्भवितुमर्हतीति 'राजमण्डल'मिति पदस्य नृपतिमण्डलार्थकस्यापि चन्द्रबिम्बा (मण्डला) भेदप्रतिपादनद्वारकम् । बाहोश्च चन्द्रबिम्बमर्दनकर्तृत्वमसम्भवमिति 'राजमण्डले'ति पदस्य 'चन्द्रबिम्बार्थकतया प्रतिपादितस्यापि 'नृपमण्डला'र्थकत्वेन कीर्तनमावश्यकमिति—राजमण्डलपदस्य नृपतिचक्रार्थकतया प्रयुक्तस्य अत एव—एतत्पदवाच्यस्य चन्द्रबिम्बत्वेन प्रतिपादनं शब्दकृताभेदद्वारकम् । 'रजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्' इति मेदिनीका रोक्तेः 'स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च ।' इति विश्वकारोक्तेश्च । एवं च—अस्याभेदस्य बाहौ राहुत्वारोपः कारणम्, एतच्चैकलस्येति परम्परितस्य श्लिष्टशब्दनिबन्धनं केवलत्वम् । इति । तर्कवागीशा अप्याहुः—'अत्र श्लेषेण रूप्यरूपकयोर्द्वयोरेवाभिधानं शब्दसाम्यरूपसादृश्यमूलं प्रथमं रूपकम्, तेन राजमण्डलपदवाच्योपमर्दकत्वरूपसादृश्यनिबन्धनं द्वितीयं रूपकम् ।' इति । प्रथमं राजमण्डलस्य राजमण्डलत्वारोपरूपम् । द्वितीयं बाहो राहुत्वप्रतिपादनरूपम् ।

मालारूपं यथा—

**'पद्मोदयदिनाधीशः सदागतिसमीरणः ।**

**भूभृदावलिदम्भोलिरेक एव भवान्भुवि ॥'**

अत्र पद्माया उदय एव पद्मानामुदयः, सतामागतिरेव सदागमनम्, भूभृतो राजान एव पर्वता इत्याद्यारोपो राज्ञः सूर्यत्वाद्यारोपनिमित्तम् ।

---

## विवृति

**पद्मायाः** संपद **उदय** उपार्जनम् । पद्मपक्षे प्रकाशः ॥ **तत्र चेति** ।

## विज्ञप्रिया

शिलष्टपरम्परितरूपकमालामाह—**पद्मोदयेति** । अस्यार्थो वृत्तावेव विवृतः । इत्याद्यारोपः सूर्य्यत्वाद्यारोपे निमित्तमिति । अत्र हि लक्ष्या उदये सूर्य्यस्य, सतामागतौ समीरणस्य, भूभृतां राज्ञामावलौ दम्भोलेश्चानुपयोगेन पद्माया उदयादौ पङ्कजोदयाद्यारोपणैव तदुपयोगात्तन्निमित्तता ।

**"विद्वन् मानसहंस ! वैरिकमलासङ्कोचदीप्तद्युते !**

**दुर्गामार्गणनीललोहित ! समित्स्वीकारवैश्वानर !**

**सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीम ! प्रभो !**

**साम्राज्यं वरवीर ! वत्सरशतं वैरिंचमुच्चैः क्रियाः ।"**

इति श्लोकः काव्यप्रकाशकृता शिलष्टपरम्परितमालारूपकोदाहरणतयैव दर्शितः । तस्यार्थो हि "हे वरवीर ! वैरिचं ब्राह्मं वत्सरशतम् उच्चैः साम्राज्यं क्रियाः कुर्य्याः । राज्ञः अन्यान्यपि सम्बोधनान्याह—**विद्वदिति** । विदुषां मानसं मनः एव मानससरः तत् हंस, कमलानामसङ्कोचो विकाशस्तत्र दीप्तद्युते सूर्य्य । दुर्गाणाममार्गणं दुर्गं विना योद्धृत्वं, तदेव दुर्गाया मार्गणं तत्र नीललोहित ! समितां युद्धानां स्वीकार एव समिधां स्वीकारः तत्र वैश्वानर ! सत्ये प्रीतिविधानमेव सत्याम् अप्रीतिविधानं तत्र दक्ष प्रजापते ! विजयः परपराभव एव विजयोऽर्जुनस्तत् प्राग्भावे पूर्वोत्पत्तौ भीमसेन ! हे प्रभो इत्यत्र राज्ञि हंसाद्यारोपमुख्यरूपकाण्यनेकानि प्रत्येकं तत्साधकानि मनआदौ मानस-सरोवरादिरूपकाण्यनेकानि । प्रकृते अपि राज्ञि दिनाधीशाद्यनेरूपकसाधकानि लक्ष्म्यादीनामुदयादौ पङ्कजोदयादि-रूपकाणीति ।

केवलशिलष्टपरम्परितरूपकोदाहरणं तु काव्यप्रकाशकृता दत्तं यथा—

**"अलौकिकमहालोकप्रकाशितजगत्त्रय !**

**स्तूयते देव ! सद्वंशमुक्तारत्नं न कैर्भवान् ॥"**

इति । अस्यार्थः—हे देव ! सद्वंशः सत्कुलमेव सद्वंशः सद्वेणुः तत्र मुक्तारत्नं भवान् कैर्न स्तूयते ? वंशे मुक्तोत्पत्तेः । राज्ञः सम्बोधनान्तरमाह—**अलौकिकेति** । अलौकिकोऽन्यलोकविलक्षणो यो महालोको महादृष्टि-

पातः स एव महालोको महाज्योतिस्तेन प्रकाशितं जगत्त्रयम् अर्थान् मुक्तामण्डितं येन हे तादृश ! अत्र हि राज्ञि मुक्तारोपो मुख्यरूपकं तत्साधकं कुले वेववारोपणम्। दृष्टिपाते ज्योतिरारोपणं च ज्योतिरभावे मुक्तोत्कर्षाभा-वात्।

## लोचन

पद्मा लक्ष्मीः पद्मं च। सतामागमनं सर्वदागमनं च। भूभृतो राजानः पर्वताश्च। पद्माया लक्ष्म्याः सर्वदा सदा च। एवं—

**"त्वमेव देव पातालमाशानां त्वं निबन्धनम्।**
**त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥"**

इत्यत्र लोकत्रयात्मकत्वमित्यादि रूपणं पातालमित्यादि रूपणं हेतुः ॥

केचिन्नतु वयमिति भावः। एतच्चात्रैव स्फोटयिष्यति।

## कुसुमप्रतिमा

मालेति। अत्रापि श्लिष्टशब्दनिबन्धनमिति परम्परितमिति च सम्बध्यते।

पद्मेति। इयमपि राजस्तुतिः। हे राजन् ! भुवि भवानेक एव, पद्मायाः, सम्पदः उदय उन्नतिरेव पद्मानामुदयो विकासस्तत्र दिनाधीशः सूर्य्यः। यथा एकः सूर्य्य एव पद्मविकासं विधत्ते, तथा एको भवानेव पृथिव्यामसाधारण-सम्पत्तिवृद्धिं करोतीति भावः। सतां सज्जनानाम् आगतिरागमनमेव सदा सर्वदा गतिर्गमनं तत्र समीरणो वायुः। "श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः" इत्यमरप्रामाण्यात् यथा वायुः सर्वदा गमनं करोति, तथा भवानपि दानमानाभ्यां साधूनामागमनं सम्पादयतीत्याशयः। तथा भूभृतो विपक्षा राजान एव भूभृतः पर्वतास्तेषाम् आवलौ समूहे दम्भोलिर्वज्रः। इन्द्रस्य वज्रो यथा पर्वतानुपमर्दितवान् भवानपि तथा विपक्षान् राज्ञ उपमर्दितवानित्यभिप्रायः। "लक्ष्मीः पद्मालया पद्मा" वा पुसि पद्मम्" इति चामरः। "भूभन्नरेन्द्रे शैले च" इति विश्वः।

अत्रेति। अत्र प्रथमादिशब्दः प्रकारार्थे। "सामीप्येऽर्थ" व्यवस्थायां प्रकारेऽवयवे तथा। चतुर्ष्वर्थेषु मेधावी आदिशब्दन्तु लक्षयेत् ॥" इति कान्तन्त्रपञ्जीप्रामाण्यात्। द्वितीयादिशब्दस्तु गणावयवार्थे। तेन च समीर-णत्वदम्भोलित्वयोर्ग्रहणम्। अत्र पूर्वपूर्वारोपः परम्परारोपं प्रति निमित्तमिति परम्परितत्वम्, पद्मोदय-सदागतिभूभृ-च्छब्दाः श्लिष्टा इति श्लिष्टशब्दनिबन्धनत्वम्, कार्य्यकारणभावाश्च त्रय इति मालारूपत्वञ्च ज्ञेयम्।

## विमला

पद्मेति।—भुवि—पृथिव्यां, भवान् एक एव पद्मायाः,—लक्ष्म्याः, उदये—उपार्जने, अन्यत्र—पद्मानामु-दये—प्रकाशे, दिनाधीशः,—सूर्य्यः, सतां—साधूनाम्, आगतौ—आगमनविषये, अन्यत्र—सदा—नित्यं, गतौ—गमनविषये, प्रबहणविषये इत्यर्थः, समीरणः,—वायुः, तथा भूभृतां—राज्ञाम्, अन्यत्र—पर्वतानाम्, आवलिषु—श्रेणिषु, दम्भोलिः,—वज्रम्। अत्र पद्मादीनि पदानि श्लिष्टानि।

## लक्ष्मी

**मालेति**। शिलष्टशब्दनिबन्धनमिति परम्परितमितिचात्राप्यनुषज्यते।

पद्मोदयेति। कस्यचिद्राज्ञः स्तुतिपरमिदम्। हे राजन्! भुवि भवान् एक एव, पद्माया लक्ष्म्याः सम्पत्तेरिति यावत् उदय उन्नतिरेव पद्मानां कमलानामुदयो विकासस्तत्र दिनाधीशः अहर्पतिः सूर्य इत्यर्थः। एको दिनपतिरेव यथा पद्मविकासं सम्पादयति, एको भवान् तथैव भूतलेऽसाधारणसम्पत्तिवृद्धिं सम्पादयतीति भावः। 'लक्ष्मीः पद्मालया पद्मा 'वा पुंसि पद्मम्' इति चामरः। सतां साधुजनानाम् आगतिरागमनमेव सदा सर्वदा गतिर्गमनं तत्र समीरणो वायुः 'समीरणः स्यात्पवने पथिके च फणिज्जके' इति मेदिनी। 'श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः' इत्यमरप्रामाण्यात् वायुर्यथा सर्वदा गमनं विधत्ते भवान् तथैव दानसत्काराभ्यां साधुजनानयनं करोतीत्यभिप्रायः। तथा भूभृता अनुज्झितमदाः प्रतिपक्षिणो नृपतय एव भूभृतः पर्वतास्तेषामावलौ पंक्तौ दम्भोलिर्वज्रः, यथा देवराजस्य वज्रः पर्वतानुच्छेदितवान् तथा भवानपि प्रतिपक्षिणो नृपतीन् उच्छेदितवानित्याशयः। 'भूभृन्नेरेन्द्रे शैले च' इति विश्वः। तथा च भवान् लक्ष्मीसञ्चयने पद्मविकासने सूर्य इव सज्जनानां दानसत्काराभ्यां सङ्ग्रहणे सदा सञ्चरण-शीलो वायुरिव, पर्वतानां भेदने वज्रमिव उन्मत्तानां विपक्षिणां समूलोन्मूलने भवानेव भुवनतले विदित इति समुदितोऽर्थः।

उक्तार्थमेव दर्शयति—**अत्रेति**। आदिशब्दस्य चत्वारोऽर्थाः। उक्तञ्च—

**'सामीप्येऽथ व्यवस्थायां प्रकारेऽवयवे तथा।**
**चतुर्ष्वर्थेषु मेधावी आदिशब्दं तु लक्षयेत्॥'**

एवञ्चात्र प्रथमादिशब्दः प्रकारार्थे। द्वितीयादिशब्दस्तु समुदायावयवार्थे। तेन समीरणत्वदम्भोलित्वयोः परिग्रहः। अत्र पूर्वपूर्वारोपः उत्तरोत्तरारोपं प्रति कारणमिति परम्परितत्वम्, पद्मोदय-सदागतिभूभृच्छब्दाः शिलष्टा इति शिलष्टशब्दनिबन्धनत्वम्, कार्यकारणभावाश्च त्रयाणां पद्मोदयादीनामिति मालारूपत्वञ्च बोध्यम्।

## रुचिरा

मालारूपमुदाहर्त्तुमना आह—**मालारूपम्**। शिलष्टशब्दनिबन्धन'मिति शेषः। 'परम्परितं रूपक'मिति तु प्रकृत प्राप्तम्। **यथा**। **'पद्मोदये'**त्यादि।

**'पद्मोदयदिनाधीशः** पद्माया लक्ष्म्यास्सम्पत्तेरिति यावत्, अन्यत्र पद्मानां कमलानामुदय उपार्जनं प्रकाशो वा तत्र दिनीधीशः सूर्य इति तथोक्तः। **सदागतिसमीरणः** सतामगतिरागमनमानयनमिति यावत्तत्र साधुजनानां गोष्ठीकरण इत्यर्थः समीरणो वायुः, अन्यत्र सदागतौ सदागमने समीरण इति तथोक्तः। 'समीरणः स्यात्पवने पथिके च फणिज्झके।' इति मेदिनी। **भूभृदावलिदम्भोलिर्भूभृतां** राज्ञामनुज्झितमदानां भूपानामिति, पर्वतानां वेति भावः आवलिः पङ्क्तिस्तत्र दम्मोलिर्वज्रम्। **एकः**। **भवान्**। **एव**। **भुवि** 'विदित' इति शेषः। अयम्भावः—कस्यचिद्राज्ञः स्तुतिपरमिदं पद्यम्, तथा च—भवान् लक्ष्मीसञ्चयने कमलविकासने सूर्य्य इव, सज्जनानां सङ्ग्रहणे सुगन्धानादाय सदा सञ्चरणशीलो वायुरिव, उन्मत्तानां राज्ञामुन्मूलने पर्वतानां विदारणे कुलिशमिंव भवानेव जगतीतले विदित इति निष्कृष्टोऽर्थः। तत्र-पद्मोदयादयः शब्दा द्वयर्थाः, एषां द्वयर्थतामादायैवात्र रूप्यरूपकभावः सिद्ध इति वेदितव्यम्। इति॥ १०८॥'

उदाहृतमर्थं निर्दिशति-अत्रेत्यादिना। स्पष्टोऽर्थः। अयम्भावः—'पद्मोदय' इत्यस्य 'पद्मायाः उदय' इत्यर्थः प्रकृतः, अस्य च राज्ञो दिनेश्वरत्वाभिधानेऽसङ्गतत्वात् 'पद्मानामुदय' इत्यर्थोऽप्रकृतोऽपि विवक्षितः, एवं प्रकृताप्रकृतयोः सङ्गतये एकस्यारोप्यत्वमपरस्यारोपकत्वम्। अत एव रूपकस्य परम्परितत्वम्। एवम्—'सदागतिः' इत्यस्य 'सतामागति'-रित्यर्थः प्रकृतः, अस्य च समीरणत्वेन राज्ञः कीर्त्तनेऽसङ्गतत्वात् 'सदागमनम्' इत्यर्थोऽप्रकृतोऽपि विवक्षितः, एवमनयोः सङ्गतये आरोप्यारोपकत्वम्। तथा—'भूभृतः' इत्यस्य पदस्य 'राजानः' इत्यर्थः प्रकृतः, अस्य च दम्भोलित्वेन राज्ञः स्तवनेऽनिमित्तत्वात् 'पर्वता' इत्यप्रकृतोऽप्यर्थः प्रकृताप्रकृतयोरारोप्यारोपकत्वामादाय विवक्षितः समर्थ्यते। इत्यथमनेकेषां क्रमेणारोप्यारोपकत्वे परम्परितस्य रूपकस्य मालारूपत्वम्। इति दिक्।

यथा वा—'विद्वन्मानसहंस! वैरिकमलासङ्कोचदीप्तद्युते! दुर्गामार्गणनीललोहित! समित्स्वीकारवैश्वानर!। सत्यप्रीतिविधानदक्ष! विजयप्राग्भावभीम! प्रभो! साम्राज्यं वरवीर! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥' इति, अत्र हि मानसादीनि श्लिष्टानि राज्ञो हंसत्वारोपेणाभिधाने श्लेषमहिम्ना मानसप्रभृतिषु सरोवरविशेषत्वारोपः कारणम्, तस्मात् परम्परितं रूपक मिदम्, एकस्मिन् सूत्रेऽनेकेषां कुसुमानामिव राज्ञि हंसादीनामारोपान्मालारूपं च।

अश्लिष्टशब्दनिबन्धनं केवलं यथा—

**'पान्तु वो जलदश्यामाः शाङ्‍र्गज्याघातकर्कशाः।**
**त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः॥'**

अत्र त्रैलोक्यस्य मण्डपत्वारोपो हरिबाहूनां स्तम्भत्वारोपे निमित्तम्।

---

## विज्ञप्रिया

अश्लिष्टं केवलमाह—**पान्तु वो जलदश्यामा** इति। चत्वारो हरिबाहवो वः पान्तु। कीदृशाः? त्रैलोक्यमेव मण्डपस्तस्य स्तम्भाः, धारकत्वात्। तथा शाङ्‍र्गस्य धनुषो व्याघातेन कर्कशाः। **स्तम्भत्वारोपे निमित्तमिति।** त्रैलोक्ये स्तम्भानन्वयात्।

## कुसुमप्रतिमा

पान्त्विति। जलदश्यामा मेघवत् श्यामवर्णाः शाङ्गज्यायाः श्रृङ्गनिर्म्मितधनुषो गुणस्य आघातेन कर्कशाः कठिनीभूताः, तथा त्रैलोक्यं त्रैभुवनमेव मण्डपं गृहविशेषस्तस्य स्तम्भाः सततमेव धारणात् स्तम्भस्वरूपाः, चत्वारो हरेर्बाहवो भुजाः, वो युष्मान् पान्तु पालयन्तु।

अत्रेति। निमित्तमिति। अतएवात्रत्यरूपकस्य परम्परितत्वम्, न कोऽपि शब्दः श्लिष्ट इत्यश्लिष्टशब्दनिबन्धनतम्, तथा कार्य्यकारणभाव एकमात्र इति केवलत्वेञ्चति भावः।

## विमला

पान्त्विति।—जलदश्यामाः,—नवनोरदश्यामवर्णाः, शाङ्‍र्गस्य—तदाख्य धनुषः, ज्यायाः,—मौर्व्याः, आघातेन—आस्फालनेन, कर्कशाः,—कठिनाः, त्रैलोक्यं—त्रिभुवनमेव, मण्डपं—गृहं, तस्य स्तम्भाः,—अवलम्बनदारुणीत्यर्थः, चत्वारः हरिवाहवः,—श्रीविष्णोः भुजचतुष्टयमित्यर्थः, वः,—युष्मान्, पान्तु—रक्षन्तु। अत्र किमपि पदं न श्लिष्टम्।

## लक्ष्मी

एवं श्लेषनिबन्धनं परम्परितमुदाहृत्याश्लेषनिबन्धनमप्युदाहर्त्तुमुपक्रमते—अश्लिष्टेति।

**पान्त्विति।** जलदश्यामाः मेघवत् कृष्णवर्णाः, शाङ्‍र्गज्यायाः श्रृङ्गरचितधनुषो गुणस्य आघातेन आहननेन कर्कशाः कठिनाः, तथा त्रैलोक्यं लोकत्रयमेव मण्डपं भवनविशेषस्तस्य स्तम्भा अजस्रं धारणात् तत्स्वरूपभूताः, चत्वारो हरेर्वाहवो हस्ताः, वो युष्मान् पान्तु रक्षन्तु।

अत्र परम्परितत्वमुपपादयन् रूपकस्व केवलत्वमुपपादयितुमाह—**अत्रेति। निमित्तमिति।** तेनात्रत्यरूपकस्य परम्परितत्वम्, कोऽपि शब्दो न श्लिष्ट इत्यश्लिष्टशब्दनिबन्धनत्वम्, तथा कार्यकारणभाव एकमात्र इति केवलत्वञ्चेत्याशयः।

## रुचिरा

एवं श्लेषनिबन्धनं परम्परितमुदाहृत्याश्लेषनिबन्धनमप्युदाहर्त्तुकाम उपक्रमते—**अश्लिष्टेत्यादिना।** स्पष्टम्। '**पान्त्वि**'त्यादि।

'**जलदश्यामां** जलदा मेघा इव श्यामाः **शार्ङ्गज्याघातकर्कशाः** शार्ङ्गस्य तदाख्यस्य धनुषो ज्या मौर्वी तयाऽऽघात आहननं तेन कर्कशाः। **त्रैलोक्यमण्डपस्तम्भास्**त्रैलोक्यं लोकत्रयमेव मण्डपस्तस्य स्तम्भास्तत्स्वरूपभूताः। **चत्वारः। हरिबाहवो** हरेर्बाहवः। **वो युष्मान्। पान्तु**॥ १०९॥'

अत्र परम्परित्वं दर्शयन् रूपकस्य केवलत्वं निर्दिशति-अत्रेत्यादिना। स्पष्टम्।

मालारूपं यथा—

**'मनोजराजस्य सितातपत्रं श्रीखण्डचित्रं हरिदङ्गनायाः।**

**विराजते व्योमसरः सरोजं कर्पूरपूरप्रभमिन्दुबिम्बम्॥'**

अत्र मनोजादे राजत्वाद्यारोपश्चन्द्रबिम्बस्य सितातपत्रत्वाद्यारोपे निमित्तम्। 'तत्र च राजभुजादीनां राहुत्वाद्यारोपो राजमण्डलादीनां चन्द्रमण्डलत्वाद्यारोपे निमित्तम्' इति केचित्।

---

## विवृति

राजमण्डलादीनां सरूपशब्दवाच्यत्वं साम्यं प्रसिद्धमारोपकारणम्। बाहुराह्वादीनां तु तादृशधर्मान्तरमप्रसिद्धमित्यस्वरसः 'केचित्' इत्यनेन सूचितः॥

## विज्ञप्रिया

**मालारूपं यथेति**—अश्लिष्टशब्दनिबन्धनमिति शेषः। **मनोजराजस्येति**। कर्पूरपूरप्रभमिन्दुबिम्बं विराजति। तत्र परम्परितरूपकनिमित्तकानि रूपकान्तराणयाह—**मनोजेति**। मनोज एव राजा तस्य सितातपत्रत्तम्। हरिद्रूपाया अङ्गनायाः श्रीखण्डस्य, चन्दनस्य चित्रम्। व्योमरूपस्य सरसः सरोजम्। एषु चतुर्षु रूपकयोर्निमित्तनैमित्तिकभाव उक्तविपरीत एवेति केषाञ्चिन्मतं दर्शयति—**एष्विति**।

## कुसुमप्रतिमा

मालेति। अश्लिष्टशब्दनिबन्धनं परम्परितमित्यनुषज्यते।

मनोजेति। मनोजः कन्दर्प एव राजा सर्वत्राप्रतिहतप्रभावान्नपतिस्तस्य, सितातपत्रं प्रायेण सहचारित्वात् श्वेतच्छत्रस्वरूपम्; हरित् स्वाश्रिता दिगेव अङ्गना लिङ्गसाम्यात् स्त्री तस्याः, श्रीखण्डचित्रं श्वेतवर्त्तुलत्वात्श्वेतचन्दनतिलकस्वरूपम्; तथा व्योम आकाशमेव सरः स्वच्छत्वात् जलाशयस्तस्य सरोजम् आह्लादकसुन्दरवर्त्तुलत्वात् पद्मम्; कर्पूरस्य पूरप्रभं स्तूपतुल्यम्, इन्दुबिम्बं चन्द्रमण्डलं विराजते।

अत्रेति। प्रथमादिपदेन हरिद्व्योम्नोः, द्वितीया दपदेन अङ्गनात्वसरस्त्वयोः, तृतीयादिपदेन च श्रीखण्डचित्रत्व सरोजत्वयोर्ग्रहणम्। निमित्तमिति। अतएव अत्रत्यरूपकस्यपि परम्परितत्वम्, सर्वं एवाश्लिष्टाः शब्दा इत्यश्लिष्टशब्दनिबन्धनत्वम्, त्रयश्च कार्य्यकारणभावा इति मालारूपत्वञ्चावधेयमित्याशयः।

अत्र परम्परितप्रकरणे मतान्तरे आरोपेषु स्वप्रदर्शितकार्य्यकारणभाववैपरीत्यमाह तत्र चेति। "तेषु आहवे जगदुद्दण्ड!" इत्याद्युदाहृतेषु सकलपद्येषु चेत्यर्थः। अत्रापि प्रथमादिपदेन "पद्मोदयदिनाधीश" इत्यादिषु राजादीनाम्, द्वितीयादिपदेन दिनाधीशत्वादीनाम्, तृतीयादिपदेन पद्माया उदयादीनाम्, चतुर्थादिपदेन च पद्मानामुदयत्वादीनां ग्रहणम्। एतन्मते अस्वरसतावीजानि तु कारणीभूतारोपाणां कारणतयैव प्राक्प्रतीत्यौवियेऽपि पाठक्रमेण परप्रतीतिविषयीकरणम्, परप्रतीतियोग्यानाञ्च कार्य्यभूतारोपाणां प्राक्प्रतीतिविषयीकरणम्, राजमण्डलादिषु च एकानुपूर्वीकशब्दवाच्यत्वरूपसादृश्यसत्त्वात् सुघट एव नृपसमूहादौ चन्द्रबिम्बत्वाद्यारोपः सादृश्याभावा-

दुर्घट राजभुजादौ राहुत्वाद्यारोपं घटयितुमर्हति, न त्वेतद्वैपरीत्यमपि, कार्य्यकारणयोः कारणस्यैव सुघटतया सिद्धत्वावश्यकत्वादिति ।

## विमला

मनोजेति ।—मनोजराजस्य—कामनृपतेः, सितातपत्रं—श्वेतच्छत्रं, हरिदङ्गनायाः,—दिगङ्गनायाः, श्रीखण्डचित्रं—चन्दनतिलकं, व्योम—आकाशमेव, सरः,—सरोवरं, तस्य सरोजं—पद्म, कर्पूरपूरप्रभ—कर्पूरपुञ्जसदृशम्, इन्दुविम्बं—चन्द्र मण्डलं, विराजते—शोभते । अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ।

अत्र मतान्तरं निर्दिशति, तत्र चेति ।—आहवे इत्युदाहृतपद्ये चेत्यर्थः, राजभुजादीनां—प्रस्तुतनृपेन्द्राबाह्वादीनाम्, [आदिपदं प्रकारताबोधकम्] राहुत्वाद्याःरोपः,—राहुत्वाद्यध्यवसायेनाभिधानं, राजमण्डलादीनां—प्रतिपन्थिनृपादीनां, चन्द्रमण्डलत्वाद्यारोपे—चन्द्रत्वाद्यध्यवसाये, निमित्तं—कारणम्, इति केचित्—आलङ्कारिकम्मन्याः, आहुः इति शेषः । अत्र केचित् इति सूचितमस्वारस्यं द्योतयति, तथा हि, राजमण्डलादीनां सरूपशब्दवाच्यत्वं साम्यं प्रसिद्धमारोपकारणं, बाहुराह्वादीनान्तु तादृशधर्मान्तरमप्रसिद्धम् इत्यस्वरसः इति बोध्यम् ।

## लक्ष्मी

तथाविधमेव मालारूपमुदाहर्त्तुमाह—मालेति । अत्रापि अश्लिष्टशब्दनिबन्धनमिति परम्परितमिति च सम्बध्यते ।

**मनोजराजस्येति** । मनोजः कामदेव एव राजा सर्वत्राप्रतिहतप्रभावाद्भूपतिस्तस्य तथोक्तस्य, सितं श्वेतं च तदातपत्रं छत्रमिति सितातपत्रम्, हरित् स्वाधिष्ठितदिगेव अङ्गना लिङ्गसादृश्यात् पत्नी तस्या तथोक्तायाः, श्रीखण्डं चन्दनं तस्य चित्रं तिलकं तत्स्वरूपभूतम्, श्वेतवर्त्तुलत्वादितिभावः, तथा व्योम आकाशमेव सरो निर्मलत्वात् तडागस्तस्य सरोजं कमलम् आनन्ददसुन्दरवर्त्तुलत्वादित्यभिप्रायः, कर्पूरस्य पूरप्रभं स्तूपसदृशम्, इन्दुविम्बं चन्द्रमण्डलं विराजते । इन्द्रवज्रोपेन्द्रवज्रयो**रुपजातिश्छन्दः** । तल्लक्षणन्तु प्रागेव प्रतिपादितम्

लक्ष्ये लक्षणं सङ्गमयितुमाह—**अत्रेति** । प्रथमादिशब्देन हरिद्व्योम्नोः, द्वितीयादिशब्देन अङ्गनात्वसरस्वत्योः, तृतीयादिशब्देन च श्रीखण्डचित्रत्वसरोजत्वयोः परिग्रहः । निमित्तमिति । तेनात्रत्यरूपकस्यापि परम्परितत्वम्, मनोजादीनां श्लिष्टत्वाभावादश्लिष्टशब्दनिबन्धनत्वम्, कार्यकारणभावाश्च त्रयाणामितिमालारूपत्वञ्च बोध्यमितिभावः ।

'आहवे' इत्यादिपरम्परितप्रस्तावे केषाञ्चित् **रूय्यकादीनां** मते आरोपणेषु स्वोपपादितकार्यकारणभाववैपरीत्यं दर्शयति—**तत्र चेति** । तेषु 'आहवे जगदुद्दण्ड' इत्याद्यूदाहृतेषु समग्रपद्येषु चेत्यर्थः । अत्रापि राजभुजादीत्यत्रादिशब्देन 'पद्मोदये दिनाधीशः' इत्यादिषु अजादीनाम्, राहुत्वाद्यारोप इत्यत्रादिशब्देन दिनाधीशत्वादीनाम्, राजमण्डलादीनामित्यत्रादिशब्देन पद्मायाः उदयादीनाम्, चन्द्रमण्डलत्वाद्यारोप इत्यत्रादिशब्देन पद्मानामुदयत्वादीनां परिग्रहः । **केचिदिति** । रूप्यकादय इत्यर्थः । उक्तञ्च **अलङ्कारसर्वस्वे** यथा—'त्वमेव हंस इत्यारोपणपूर्वको मानसमेव मानसमित्याद्यारोपः' इति । तत्र समुद्रबन्धव्याख्याने 'ज्ञप्त्यपेक्षया हंसत्वारोपं' मानसत्वारोपे निमित्तं ब्रुवतो मङ्खुकस्य उत्पत्त्यपेक्षया मानसत्वाद्यारोपं हंसत्वारोपे' निमित्तमिति वदतः काव्यप्रकाशकारस्य च न विरोधः । एतन्मतास्वीकारेऽस्वरसताबीजानि तु—कारणीभूतारोपाणां कारणतयैव पूर्वबोधौचित्येऽपि पाठक्रमेणान्यबोधवि-

षयीकरणम्, अन्यबोधसमर्थानाञ्च कार्यभूतारोपाणां पूर्वबोधविषयीकरणम्, राजमण्डलादिषु च एकानुपूर्वीकशब्द-वाच्यत्वरूपसाम्यस्य विद्यमानत्वात् सुसङ्गम एव, राजसमूहादौ चन्द्रबिम्बत्वाद्यारोपः साम्याभावाद्दुःसङ्गमं राजभुजादौ राहुत्वाद्यारोपं सङ्गमयितुमर्हति न त्वेतद्वैपरीत्यमपि कार्यकारणयोः कारणस्यैव सुसङ्गमतया सिद्धत्वावश्यकत्वादिति ।

## रुचिरा

तथाविधमेव मालारूपमुदाहर्तुमाह—**मालेत्यादि** । स्पष्टम् । **'मनोजे'**त्यादि ।

**'मनोजराजस्य** मनोजः कामदेव एव राजेति तस्य तथोक्तस्य । **सितातपत्रं** सितं च तदातपत्रं छत्रम् । **हरिदङ्गनाया** हरित् दिक् सैवाङ्गना तस्याः । **श्रीखण्डचित्रं** श्रीखण्डं चन्दनं तस्य चित्रं तिलकं तत्स्वरूपभूतम् । **व्योमसरः सरोजं** व्योमाकाशमेव सरस्तस्य सरोजं कमलं तथाभूतम् । **कर्पूरपूरप्रभं** कर्पूरस्य पूरस्तस्य प्रभा यस्मिन् कर्मणि तद् यथा भवेत्तथा । **इन्दुबिम्बम्** । **विराजते** । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ॥'

उदाहृतमर्थे दर्शयति—**अत्रेत्यादिना** । स्पष्टम् । इदम्बोध्यम्-मनोजादीनां श्लिष्टत्वाभावादश्लिष्टशब्द-निबन्धनत्वमेतस्येति ।

'आहवे' इत्यादौ केषाञ्चिन्मतं निर्दिशति—**तत्र** 'आहवे जगदुद्दण्डराजमण्डलराहवे' इत्यादौ । **च** । **राजभुजादीनाम्** । आदिपदेन हरिभुजादीनां ग्रहणम् । बहुवचनमन्यत्राप्येवमिति सूचनार्थम् । **राहुत्वाद्यारोपः** । **राजमण्डलादीनाम्** । **चन्द्रमण्डलत्वाद्यारोपे** । **निमित्तम्** । **' इति** । **केचित्** । 'आहु'रिति शेषः । अयम्भावः-अन्येषां मतेन—'आहवे' इत्यादौ राजमण्डलादौ चन्द्रमण्डलत्वाद्यारोपो राजबाहो राहुत्वारोपे कारणम्, केषाञ्चिन्मतेन पुनरन्यथा । इति ।

**अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्॥ ३० ॥**

**समस्तवस्तुविषयमेकदेशविवर्ति च।**

**तत्र—**

**आरोप्याणामशेषाणां शाब्दत्वे प्रथमं मतम्॥ ३१ ॥**

प्रथमं समस्तवस्तुविषयम्। यथा—

**'रावणावग्रहक्लान्तमिति वागमृतेन सः।**

**अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे॥'**

अत्र कृष्णस्य मेघत्वारोपे वागादीनाममृतत्वादिकमारोपितम्।

---

## विवृति

साङ्गरूपकमाह—**अङ्गिन इति**। रूपणमुपमानतादात्म्यारोपः।

तस्य द्वैविध्यमाह—**समस्तेति**। समस्तानि वस्तूनि आरोप्यमाणानि विषयाः शब्दोपात्तानि यत्र तत्। **आरोप्याणामिति**। बहुवचनमविवक्षितम्। 'सूत्रे लिङ्गं संख्या कालश्चातन्त्राणि' इति न्यायात्। तेन 'दन्तांशुकेशरालीभिस्तस्या भाति मुखाम्बुजम्' इत्यादेः संग्रहः। **शाब्दत्वे** शब्दोपात्तत्वे॥

रावण एवावग्रहो वृष्टिप्रतिबन्धकस्तेन क्लान्तम्। वागमृतेन वाग्जलेन अभिवृष्य प्रीणयित्वा, पक्षे अभिषिच्य। मरुद्देव एव सस्यं व्रीह्यादि। कृष्णो विष्णुरेव मेघः। अत्र कृष्णोऽङ्गी, वागाद्यङ्गम्। मेघत्वारोपस्य शाब्दत्ववत् अमृतत्वाद्यारोपितत्वस्य शाब्दत्वम्॥

## विज्ञप्रिया

द्विविधं साङ्गरूपकमाह—**अङ्गिन** इति। साङ्गस्य सधर्मस्य। यो रूप्यते तस्य धर्मा अपि यदि रूप्यन्ते तदा साङ्गमित्यर्थः।

## लोचन

साङ्गस्य सोपकरणस्य।

अशेषाणामङ्गतदुपकरणानाम्। शाब्दत्वे शब्देनाभिधेयत्वे।

एकदेशेति। एकस्मिन्देशेंऽशे विवर्तनाद् विशेषतो वर्तनात् अर्थादारोप्यमाणस्य सर्वत्र शब्दवशलभ्यत्वे एकांशेऽर्थवशलभ्यत्वस्य विशेषस्य सद्भावादेकदेशविवर्तीति सार्थकमभिधानम्॥

## कुसुमप्रतिमा

सविभागं साङ्गरूपकलक्षणमाह अङ्गिन इति । साङ्गस्य आकाङ्क्षिताङ्गसमेतस्य अङ्गिन प्रधानस्य उपमानस्य यदि रूपणं तथैव साङ्गे उपमेये अभेदारोपणं स्यात्, तदा तदेव साङ्गं नाम रूपकम्, साङ्गे उपमेये साङ्गस्यैवोपमानस्य अभेदारोपः साङ्गं रूपकमित्यर्थः । अङ्गिन आरोपवदाकाङ्क्षितानां तदङ्गनामप्यारोपसत्त्वादस्य साङ्गमिति संज्ञा । तच्च द्विविधम्—एकं समस्तवस्तुविषयम्, अपरञ्च एकदेशविवर्त्तीति । तत्र समस्तान्वेन वस्तुनि अङ्गाङ्गिसमुदाय एव विषयाः शाब्दत्वादाश्रया तस्य तत् समस्तवस्तु विषयम् । एकदेशे विवर्त्तते शाब्दवांशे विशेषणावतिष्ठत इति एकदेशविवर्त्ति ।

समस्तवस्तुविषयं लक्षयति आरोप्याणामिति । अशेषाणां सर्वेषामेव आरोप्याणामारोपविषयोभूतानाम् उपमेयानामुपमानानाञ्च शाब्दत्वे शब्दोपस्थाप्यत्वेन पुनः कस्यचिदप्यार्थत्व इत्याशयः, प्रथमं समस्तवस्तुविषयं नाम रूपक मतम् ।

रावणेति । रघुवंशदशमसर्गस्थमिदं पद्यम् । स कृष्णो नारायण एव मेघः श्यामलत्वाद्दयावर्षित्वाञ्च घनः, इति पूर्वोक्तप्रकारा वाग् वाक्यमेव अमृतम आर्द्रकारित्वाज्जलं तेन, रावणो लङ्काधिपतिरेव अवग्रहो रूक्षत्वात् वृष्टिबन्धस्तेन क्लान्तं शुष्कप्रायम्, मरुत् देवगण एव शस्यं स्वसेवकोपकारित्वात् धान्वादिकं तत्, अभिवृष्य संसिच्य, तिरोदधे अन्तर्दधौ । "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः ।

अत्रेति । मेघत्वारोपे कर्त्तव्ये सत्येव, वागादीनां तदङ्गानामित्यर्थः । अत्रेदमवधेयम्—वर्ष चक्रियायां यावन्त एवाङ्गाङ्गिपदार्था आकाङ्क्षान्ते, अत्र तावन्त एव यथायथं विद्यन्ते; यथा कर्त्ता करणं कर्म्म चेति । तत्र च उपमेयभूतः कृष्ण उपमानभूतो मेघश्च कर्त्तृतया स्वतन्त्रत्वादङ्गी, वानमृतादीनि तु तत्प्रयोज्यत्वात् तत्सम्पाद्यवर्षणसम्पादकत्वांच अङ्गानि, तेषाञ्चात्र सर्वेषामेव शब्दोपात्तत्वमिति ।

किञ्च, कारिकाणां सूत्ररूपत्वात् "सूत्रे लिङ्गं संख्या कालश्चातन्त्राणि" इति न्यायेनात्र "आरोप्याणाम्" इत्यादिबहुवचननविवक्षितम् । तेन अङ्गाङ्गिद्वितयमात्ररूपणेऽपि साङ्गरूपकमेव यथा—"सुन्दरि ! मुखचन्द्रस्ते वर्षतीदं स्मितामृतम् ।"

## विमला

साङ्गरूपकमाह, अङ्गिन इति ।—साङ्गस्य—अङ्गसहितस्य, अङ्गिनः यत् रूपणम्—उपमानतादाणत्म्यारोपः, तत् साङ्गं—तदाख्यरूपकम् । तत् द्विविधं—समस्तवस्तुविषयं—समस्तानि वस्तूनि—आरोप्यमाणानि, विषयाः—शब्दोपात्तानि यत्र तत्, तथा एकदेशविवर्त्ति च ।

समस्तवस्तुविषयमाह, आरोप्याणामिति ।—अशेषाणां—सर्वेषाम्, आरोप्याणाम्—उपमानानाम्, [इह बहुवचनमविवक्षितम्; "सूत्रेलिङ्गं सङ्ख्या कालश्चातन्त्राणि" इति न्यायात्; तेन "दन्तांशुकेशरालीभिस्तस्या भाति मुखाम्बुजम्" इत्यादेः सङ्ग्रहः] शाब्दत्वे—शब्दप्रतिपाद्यत्वे, प्रथमं—समस्तवस्तुविषयमित्यर्थः, मतम् ।

उदाहरति, रावणेति ।—सः कृष्णः,—विष्णुः एव, मेघः इति कृष्णमेघः, रावणः एव अवग्रहः,—वृष्टिप्रतिबन्धकः, ("वृष्टिर्वर्षं तद्विधातेऽवग्राहावग्रहौ समौं इत्यमरः) तेन क्लान्तं—पीडितं" सन्तप्तमिति यावत्, मरुत्—देवः एव, शस्यं—व्रीह्यादि तत्, इति—पूर्वोक्तेन, वागेव अमृतं—जलं, तेन, अभिवृष्य—प्रीणयित्वा, पक्षे—अभिषिच्य, तिरोदधे—अन्तर्हितः । अत्र अङ्गिनः कृष्णस्य मेघत्वारोपसम्पादनाय तदङ्गानां सर्वेषाम् अमृतादीनां वागादिषु

आरोपात् साङ्गं रूपकमिति बोध्यम् । यथा वा—"सुविमलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे । वदनपरिपूर्णचन्द्रे सुन्दरि ! राकाऽसि नात्र सन्देहः ॥" इत्यत्र सुन्दर्याः राकात्वारोपे सर्वेषामपि मौक्तिकादीनां तारात्वारोपणम् ।

## लक्ष्मी

द्विप्रभेदसहितं साङ्गरूपकस्वरूपमुपपादयति—**अङ्गिन** इति । साङ्गस्य आकाङ्क्षिताङ्गसहितस्य अङ्गिनो मुखस्य उपमानस्य यदि रूपणं तथैव साङ्गे उपमेये अभेदारोपणं भवेत्, तदा तदेव साङ्गं रूपकम्, साङ्गोपमेये साङ्गोपमानस्याभेदारोपः साङ्गसंज्ञकं रूपकमित्यर्थः । साङ्गत्वमेकैकरूपसमुदायः एकस्मिन् रूपके द्वितीयस्याङ्गत्वेनारोपस्यावस्थानात् । सावयवमित्यस्यैव संज्ञान्तरं साङ्गमिति । तच्च द्विविधम्—एकं समस्तवस्तुविषयम्, अपरञ्च एकदेशविवर्त्तीति । तत्र समस्तान्येव सकलान्येव (अङ्गानि) समुदाय एव वस्तूनि आरोप्यमाणानि विषयाः शाब्दत्वादाश्रया यस्य तत् समस्तवस्तुविषयम्, एकदेशे (रूपकसमुदायस्यावयविनः) अवयवे कस्मिंश्चिद्रूपके विशेषेण शब्दमुखेन स्फुटतया वर्त्तनात् प्रकाशनादित्यर्थः । यद्वा एकस्मिन् देशे एकस्मिन्नंशे विवर्त्तनात् विशेषेण वर्त्तनात् अर्थात् आरोप्यमाणस्य सर्वत्र वाच्यत्वे एकांशे प्रतीयमानत्वरूपस्य विशेषस्य सत्त्वात् एकदेशविवर्त्ति इत्यन्वर्थं नाम भवति ।

समस्तवस्तुविषयं निरूपयति—**आरोप्याणामिति ।** अशेषाणां समग्राणमेव आरोप्यमाणानां भेदाभावेन निरूपणीयानाम् उपमेयानामुपमानानाञ्च शब्दत्वे शब्दप्रतिपाद्यत्वे न पुनः कस्यचिदप्यार्थत्व इत्यभिप्रायः, प्रथमं समस्तवस्तुविषयं नाम रूपकं मतम् । तदुक्तम्—'समस्तवस्तु विषयं श्रौत आरोपितो यदा' इति ।

कारिकोक्तं प्रथमपदार्थं विवृणोति—प्रथममिति ।

**रावणेति ।** रघुवंशे दशमसर्गे पद्यमिदम् । सः कृष्णो विष्णुरेव मेघो वारिवाहः श्यामरूपत्वाद्यावषित्वाच्चेतिभावः, इति एवं पूर्वोक्तप्रकारा वागुपदेशवाक्यमेव अमृतम् आर्द्रविधायित्वात्तदभिन्नं जलं तेन, रावणो लङ्काधिपतिरेव अवग्रहो रूक्षत्वात् वृष्टिप्रतिबन्धको ग्रहः तेन क्लान्तं म्लानं मलिनच्छायमितियावत् तत्तादृशम्, 'वृष्टिर्वर्षं तद्विघातेऽवग्रहावग्रहौ समौ' इत्यमरः, मरुत् देवगण एव शस्यं ब्रीह्यादिकं तत्तादृशम्, अभिवृष्य अभिषिच्य प्रीणयित्वा वा तिरोदधे अन्तर्दधे ।

लक्षणं संयोजयितुमाह—**अत्रेति ।** मेघत्वारोपे विधेये सत्येव वागादीनां तदङ्गानामित्यर्थः । **अमृतत्वादिकमारोपितमिति ।** अतोऽस्य साङ्गत्वमिति भावः । **इदमत्रानुसन्धेयम्**—वर्षणक्रियायामङ्गाङ्गिभावपदार्था यावन्त एव अपेक्षिताः, यथायथं तावन्त एवात्र सन्ति । तथा हि यथा—कर्त्ता करणं कर्म चेति । अत्र च स्वातन्त्र्येण कर्तृत्वात् उपमेयभूतः कृष्णः उपमानभूतो मेघश्चाङ्गी, तदुपपाद्यत्वात् तत्सम्पाद्यवर्षणविधायकत्वाच्च वागमृतादीनि तु अङ्गानि तेषाञ्च समेषामेव शब्दोपात्तत्वमिति । अपि च कारिकाणां सूत्रस्वरूपत्वादत्र 'आरोप्यमाणानाम्' इति बहुवचनमविवक्षितम् 'सूत्रे लिङ्गं संख्या कालश्चातन्त्राणि' इति न्यायात्, तेन—

'दन्तांशुके शरालीभिस्तस्या भाति मुखाम्बुजम्'

इत्यत्र केवलशरालिद्वितयरूपणेऽपि साङ्गरूपकमेव ।

## रुचिरा

साङ्गं द्विप्रभेदं रूपकं पुनर्निर्दिधशति—**१०३ यदि। साङ्गस्य** सावयवस्याप्रधानभूतै रूपकान्तरैः सह वर्त्तमानस्येति यावत्। अत एव-**अङ्गिनः** प्रधानस्य। **रूपणम्। तत्** तर्हि। **साङ्गम्। एव।** अयम्भावः-प्रधानस्य रूपकस्य यद्यप्रधानै रूपकान्तरैःसमं निरूपणं स्यात्तर्हि साङ्गं रूपकम्। अत एवास्य सावयवमिति संज्ञान्तरम्। प्राधान्याप्राधान्ये च अपेक्षकत्वापेक्षणीयत्वकृते एव। तथा च-यदपेक्षाकृतनिरूपणकं यत्तदपेक्षयाऽप्रधानम्, तत्तु स्वयं प्रधानम्। अत एवाहुः-'परस्परापेक्षनिष्पत्तिकानां रूपकाणां सङ्घातः सावयवम्।'इति। 'साङ्गत्वमेकैकरूपक-समुदायः, एकस्मिन् रूपके द्वितीयस्याङ्गत्वेन अवस्थानात्। अङ्गशब्दो हि हेत्वर्थः।' इति। च। इदं च-**समस्तव-स्तुविषयम्। च। एकदेशविवर्त्ति।** 'इति द्विविधम्' इति शेषः ॥ ८३ ॥

एते च क्रमाल्लक्षयितुकाम आह—**तत्र** तयोर्मध्ये इत्यर्थः। समस्तवस्तुविषयमुच्यते इति शेषः। १०४ **आरोप्यत्यादिना।**

**१०४ अशेषाणाम्। आरोप्याणां** भेदाभावेन निरूपणीयानाम्। **शाब्दत्वे** शब्दप्रतिपाद्यत्वे। **प्रथमं** समस्त वस्तुविषयं समस्तं वस्तु आरोप्यमाणविषयं शब्दप्रतिपाद्यो यत्र तादृशम्। **मतम्।** तदुक्तम्। 'समस्तवस्तुविषयं श्रौत आरोपिता यदा।' इति ॥ ८४ ॥

सूत्रोक्तं प्रथमपदार्थे व्याचष्टे—**प्रथममित्यादिना।** स्पष्टम्।

उदाहरति—**यथा**—'**सः। कृष्णमेघः** कृष्णो विष्णुरेव मेघः। **रावणावग्रहक्लान्तं** रावण एवावग्रहो वृष्टिप्रतिबन्धको ग्रहस्तेन क्लान्तं म्लानं मलिनच्छायमिति यावत् तत्तथोक्तम्। **मरुत्सस्यं** मरुद्देव एव सस्यं व्रीह्यादिक्षेत्रं तत्तथोक्तम्। **इति** एवम्। **वागमृतेन** वागुपदेशवाक्यमेवामृतं तदभिन्नं जलं तेन। **अभिवृष्य** प्रीणयित्त्वाऽभिषिच्य वा। **तिरोदधेऽ**न्तर्दधे। रघुवंशस्येदं पद्यम्। अत्र हि—कृष्णे मेघत्वारोपः प्रधानभूतः, वागादावमृतत्वाद्यारोपोऽप्रधानभूतः, मेघत्वारोपस्य शाब्दत्वमिवामृतत्वाद्यारोपस्यापि। एवं च—अस्य शाब्दं समस्तवस्तुविषयत्वमिति निष्कृष्टम् ॥ १११ ॥'

लक्ष्यं सङ्गमयति—**अत्रेत्यादिना।** स्पष्टम्। अतोऽस्य साङ्गत्वमिति भावः।

**यत्र कस्यचिदार्थत्वमेकदेशविवर्ति तत्।**

कस्यचिदारोप्यमाणस्य। यथा—

**'लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम्।**

**लोकलोचनरोलम्बकदम्बैः कैर्न पीयते॥'**

अत्र लावण्यादौ मधुत्वारोपः शाब्दः, मुखस्य पद्मत्वारोप आर्थः। न चेयमेकदेशविवर्तिन्युपमा विकस्वरत्वधर्मस्यारोप्यमाणे पद्मे मुख्यतया वर्तमानान्मुखे चोपचरितत्वात्।

---

## विवृति

एकदेशविवर्तिसाङ्गरूपकमाह—**यत्रेति**। आर्थत्वमर्थवशलभ्यत्वम्। 'कस्यचित्' इत्यनेनान्यस्य शाब्दत्वलाभः। 'श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत्' इति काव्यप्रकाशदर्शनाच्छाब्दत्वस्याप्येतल्लक्षणघटकत्वं बोध्यम्॥ **रोलम्बो भ्रमरः**। 'इन्दिन्दिरस्तु रोलम्बश्चञ्चरीको मधुव्रतः' इति हारावली॥ **न चेयमिति**। समभिव्याहृतपदार्थस्य मुख्यया वृत्त्यान्वयसंभव एवैकदेशविवर्तिनोरुपमारूपकयोरन्यतराङ्गीकारे बीजम्। 'मुखपद्मं विकस्वरम्' इत्युपमाङ्गीकारे क्रियाविशेषशालित्वरूपविकस्वरत्वस्य मुखे बाधात्कान्तिविशेषे लक्षणाप्रसङ्गः। 'मुखमेव पद्मम्' इति रूपकाङ्गीकारे तु विशेष्ये पद्मे विकस्वरत्वस्य मुख्यया वृत्त्यान्वयः संभवति। 'दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी। केशपाशालिवृन्देन सुवेषा हरिणेक्षणा॥'

## विज्ञप्रिया

**रावणावग्रह** इति। रावणरूपेणाऽवग्रहेण वृष्टिविघातेन क्लान्त मरुद्रूपं शस्यं वाग्रूपामृतेन स कृष्णो विष्णुर्मेघो शस्यमभिवृष्य अभिषिच्च तिरोदधे। अन्योऽपि रुप्यमाणो मेघोऽङ्गी। तस्य धर्मो जल वाचि रुपितम्। एवं स्वजलसिच्चमानत्वसम्बन्धेन शस्यमप्यङ्म मरुत्सु तद्रूपितम्। तदाह-अत्रेति।

एकदेशविवर्त्तिरूपकमाह—**यस्य कस्येति**। **कस्यचिद्रूप्यमाणस्येति**। क्वचिदङ्गिनः क्वचिदङ्गस्य तथात्वं बोध्यम्। तत्राङ्गिन आर्थत्वमाह—**लावण्येति**। लावण्यरूपैर्मधुभिः पूर्णं विकस्वरं चास्या आस्यं लोकलोचनरूपाणां रोलम्बानां भ्रमराणां कदम्बैः कैर्न पीयते। **मुखे पद्माद्यारोप** इति। मधुपूर्णता भ्रमरनिपीयमानता अत्राङ्गम्। रूप्यमाणम पद्मादिकम् अत्राऽङ्गि। क्वचिदङ्गरूप्यमेवाऽऽर्थः। यथा—"गुणसिन्धुर्भवानिति।" अत्राङ्गिनः सिन्धोर्धर्मो जलं गुणे आरोप्यमाणमार्थम्। नचेत्यादि लावण्यं मधु इव इत्याद्युपमानसम्भवात् तदवशेन मुखेऽपि पद्मोपमाप्रतीतेः इत्याशङ्कार्थः। विकस्वरेत्याद्युत्तरम्। विकस्वरत्वं पुष्पधर्म एवेत्यतस्तद्धर्मणि पुष्पे एव मुख्यतया साक्षात् सम्बन्धेन वर्त्तमानत्वात् इत्यर्थः। मुखे चेति पद्मतुल्ये मुखे स्वाश्रयसादृश्यसम्बन्धेनेत्येवं परम्परासम्बन्धरूपादुचारादित्यर्थः।

## लोचन

वागादीना कृष्णोपकरणानाममृतत्वाद्दीति मेघोपकरणम्। इह च रूपितरूपणम्। यदाहुः—

"मुखपङ्कजरङ्गेऽस्मिन् भ्रूलतानर्त्तकी तव।
लीलानृत्यं करोतीति रम्यं रुपितरूपणम्॥"

इह हि मुखे पंङ्कजत्वरूपणानन्तरं पुना रङ्गत्वरूपणम्। इति॥ एव भूलतानर्त्तकीत्यत्रापि ज्ञेयम्। आर्थत्-वमर्थगम्यत्वम्। एकदेशे विशेषेण शाब्दतया स्फुटत्वेन वर्तितुं शीलमस्य रूपकस्येत्येकदेशविवर्ति।

**मुख्यतया वर्त्तनाद** इति। मुख्यतया विधेयतया। अयमाशयः। अत्र हि विषयस्यास्य रूपमवच्छाद्य, विषयिणः पद्मरुपेण रुपवत्तापादने तस्य विकस्वराख्यधर्मपरिग्रहः साधकं प्रमाणम्। एतच्च संकरनिरूपणप्रस्तावे सुव्यक्तं भविष्यतीति नेह तन्यते।

## कुसुमप्रतिमा

अत्रेति। यत्र रूपणे कस्यचिदारोप्यमाणस्य उपमानभेदस्य आर्थत्वमर्थवशाल्लभ्यत्वम्। एतेनान्वेषां शाब्दत्वमेवावश्यकमिति सूचितम्। तद् रूपणम् एकदेशविवर्त्ति नाम साङ्गं रूपकं मतमित्यनुषज्यते।

लावण्येति। कैः, लोकानां जनानां लोचनानि नयनान्वेव रोलम्बा भमरास्तेषां कदम्बैः समूहैः लावस्यान्वेव मधूनिः मकन्दास्तैः पूर्णं विकस्वरं हास्येन समयप्रभावेण च प्रकाशशीलम्, अस्याः कामिन्याः चास्यं वदनं न पीयते सादरं न दृश्यते? अपि तु सर्वरेव पीयत इत्यर्थः; परमरमणीयत्वादिति भावः।

अत्रेति। प्रथमादिपदेन लोचनस्य द्वितीयादिपदेन च रोलम्बत्वस्य ग्रहणम्। आर्थी विकस्वरपदप्रयोग-तात्पर्य्यलभ्यः। अत्रापि पूर्ववदेव साङ्गत्वमूहनीयम्।

नन्वत्र लावस्यानि मधुनींव लोकलोचनानि रोलम्बा इव इत्यपमितसमासाश्रयणेन तत्र तत्र साम्यस्य वाच्यत्वात् मुखे पद्मसाम्यस्य च गम्यत्वादेकदेशविवर्त्तिन्युपमैवास्तामित्याह न चेति। आरोप्यमाणे उपमानत्वना-रोपविषयीभूते। मुख्यतया अभिधाप्रतिपाद्यतया। उपचरितत्वात् लक्षणया आरोपितत्वात्। अत्रायनाशयः— विकस्वरत्वं नान प्रस्फुटितत्वम्; तञ्च प्रकाशसङ्कोचशीले पद्म एव मुख्यतया सम्भवति, न पुनः सर्वदैव एकरूपे मुखे। एवञ्च सम्भवति मुख्यार्थत्वे श्लेक्षणाया अयोगात् "मुखचन्द्रः प्रकाशते" इत्यादिवदेवात्र विकस्वरमिति पदमेव रूपकस्य साधकमुपमायाश्च बाधकमिति एकदेशविवर्त्तिरूपकमेवेति। एतेन उक्तोदाहरणे "विकस्वरम्" इत्यत्र "मनोहरम्" इति पाठे साधकबाधकप्रमाणाभावात् "मुखचन्द्रं पश्यति"इत्यादिवदेव एकदेशविवर्त्यपमारू-पकयोः सन्देहसङ्कर एवेति सूचितम्। "नेत्रैरिवोत्पलैः पद्मैः इत्यादौ तु इवादिवाचकसत्त्वेनारोपस्यैवाभावान्न एकदेशविवर्त्तिरूपकमिति बोध्यम्।

किञ्च, साम्यस्य अंशयो वाच्यत्वे अशतश्च व्यङ्ग्यत्वे एकदेशविवर्त्तिन्युपमा, साम्यस्य सर्वत्रैव व्यङ्ग्यत्वे तु एकदेशविवर्त्ति रूपकमिति भेदः। अतएव उपमालक्षणवृत्तौ "रूपकादिषु साम्यस्य व्यङ्ग्यत्वम्" इत्युक्तम्।

## विमला

एकदेशविवर्त्तिसाङ्गरूपकमाह, यत्रेति।—यत्र कस्यचित्—आरोप्यःमाणस्य इत्यर्थः, ("कस्यचित्" इत्य-नेनान्यस्य शाब्दत्वलाभः, "श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्त्ति तत्" इति काव्यप्रकाशदर्शनात् शाब्दत्वस्या-प्येतल्लक्षणघटकत्वं बोध्यम्) आर्थत्वम्—अर्थवशात् लभ्यत्वं, तत् एकदेशविवर्त्ति रूपकमिति शेषः।

उदाहरति, लावण्येति ।—अस्याः,—कान्तायाः इत्यर्थः—लावण्यानि—सौन्दर्य्यविशेषा एव, **मधूनि तैः**, पूर्णं विकस्वरं—प्रफुल्लमित्यर्थः, आस्यं—मुखं, कैः लोकानां लोचनान्येव रोलम्बकदम्बानि—**भ्रमरसमूहाः तैः**, ("इन्दिन्दिरस्तु रोलम्बः चञ्चरीको मधुव्रतः" इति हारावली) न पीयते ?—आस्वाद्यते ? सतृणं दृश्यते ? इत्यर्थः, अपि तु सर्वैरेव पीयते इति भावः । यथा वा—"रूपजला चलनयना नाभ्यावर्त्ता कचावलिभुजङ्गा । मज्जन्ति यत्र सन्तः सेयं तारुणीतरङ्गिणी विषमा ॥" इत्यत्र रूपादौ जलाद्यारोपः शाब्दः, नयनयोर्मीनत्वारोपः आक्षिप्तः, न तु तरुण्यां तरङ्गिणीत्वारोप आर्थः, अस्य साक्षादुपात्तत्वात् इति ।

न चेयमिति ।—समभिव्याहृतपदार्थस्य मुख्यया वृत्त्याऽन्वयसम्भव एव एकदेशविवर्त्तिनोरुपमारूपकयोरन्यतराङ्गीकारे बीजम्; "मुखपद्मं विकस्वरम्" इत्युषमाङ्गीकारे क्रियाविशेषशालित्वरूपविकस्वरत्वस्य मुखे बाधात् कान्तिविशेषे लक्षणाप्रसङ्गः, "मुखमेव पद्मम्" इति रूपकाङ्गीकारे तु विशेष्ये पद्मे विकस्वरत्वस्य मुख्यया वृत्त्याऽन्वयः सम्भवति; "दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी । केशपाशालिवृन्देन सुदेशा हरिणेक्षणा ॥" इत्यत्र रूपकाङ्गीकारे भूषणादिकृतशोभाविशेषस्य लतायां बाधात् शोभामात्रे लक्षणाप्रसङ्गः, उपमाऽङ्गीकारे तु मुख्यया वृत्त्याऽन्वयः सम्भवतीति; एतादृशं विशेषमवलोक्यैव केचिदेकदेशविवर्त्तिनीमुपमामेकदेशविवर्त्तिनि रूपके एवान्तर्भावयन्ति; वस्तुतस्तु विकस्वरत्वधर्मस्य—विकासस्य इत्यर्थः, मुख्यतया—प्राधान्येन, वर्त्तनात्—अवस्थानात्, मुखे च उपचरितत्वात्—आरोपितत्वात्, गुणभावेन वर्त्तनादित्यर्थः । तथा च—यत्र साधर्म्यम् उपमाने मुख्यतया स्थितं, तत्रैव रूपकं, यत्र तु उपमेये स्थितं, तत्र उपमैवेति फलितम् ।

## लक्ष्मी

एकदेशविवर्त्तिसाङ्गरूपकं निरूपयति—यत्रेति । यत्र रूपणे कस्यचित् आरोप्यमाणस्य उपमानभेदस्य आर्थत्ववशलभ्यत्वम् । **कस्यचिदित्यनेनान्येषां** शाब्दत्वमेवावश्यकत्वमितिद्योतितम् । तद्रूपणम् । एकदेशविवर्त्तिसंज्ञकं साङ्गं रूपकं मतमित्यनुषञ्जनीयम् । एतच्च स्पष्टीकृतं **पण्डितराजेन**—यत्र क्वचिदवयवे शब्दोपात्तमारोप्यमाणं क्वचिच्चार्थसामर्थ्याक्षिप्तं तदेकदेशे शब्दानुपात्तविषयिकेऽवयवरूपके विवर्त्तनात् स्वस्वरूपगोपनेनान्यथात्वेन वर्तनादेकदेशविवर्त्ति इति ।

सन्देहनिराकरणाय कस्यचिदितिपदं विवृणोति—**कस्यचिदिति** ।

उदाहरति—**लावण्यमिति** । कैः, लोकानां मनुष्याणां लोचनानि नेत्राण्येव रोलम्बा भ्रमरास्तेषां कदम्बैः पुञ्जैः 'इन्दीवरस्तु रोलम्बश्चञ्चरीको मधुव्रतः' इति हारावली, लावण्यान्येव मधूनि मकरन्दास्तैः पूर्णम्, हास्येन कालप्रभावेण च प्रफुल्लम्, 'विकासी तु विकस्वरः' इत्यमरः, अस्या रमण्याः आस्यं मुखं न पीयते सादरं नावलोक्यते अपि तु सर्वैरेव पीयत इत्यर्थः, अत्यन्तमनोहरत्वादित्याशयः ।

शाब्दमार्थं चारोपं विभज्योपपादयति—**अत्रेति** । लावण्यादावित्यत्रादिशब्देन लोचनस्य मधुत्वाद्यारोप इत्यत्रादिशब्देन च रोलम्बत्वस्य परिग्रहः । आर्थो विकस्वरपदप्रयोगतात्पर्यगम्यः । साङ्गत्वञ्चात्रापि प्राग्वदेवोपपादनीयम् ।

ननु 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति सूत्रेण लावण्यानि मधूनिव लोकलोचनानि रोलम्बा इव इत्युपमितसमासविधानेन तत्र तत्र सादृश्यस्य वाच्यत्वात् मुखे पद्मसादृश्यस्य च प्रतीयमानत्वादेकदेशविवर्त्तिन्युपमैवाङ्गीक्रियतामलमेकदेशविवर्त्तिरूपकाङ्गीकारेणात आह—न **चेयमिति** । उत्तरयति—**विकस्वरत्वेत्यादिना** ।

आरोप्यमाणे उपमानत्वेनारोपविषयीभूते। मुख्यतया अभिधावाच्यतया। उपचरितत्वात् लक्षणया आरोपितत्वात्। यद्वा मुख्यतया साक्षात्सम्बन्धेन मुखे उपचरितत्वादिति पद्मतुल्ये मुखे स्वाश्रयसादृश्यसम्बन्धेनेत्येवं परम्परासम्बन्धरूपत्वादित्यर्थः।

**अत्रायमभिप्रायः**—विकस्वरत्वं तावत् प्रफुल्लत्वम्, तच्च प्रकाशसंङ्कोचस्वभावे पद्म एव मुख्यतया भवितुं शक्नोति, न पुनः सर्वदैव एकरूपे मुखे। तथासति मुख्यार्थत्वस्य सम्भवे लक्षणाया अनुपयोगात् 'मुखचन्द्रः प्रकाशते' इत्यादिवदेवात्र विकस्वरमिति पदमेवोपमाया बाधकं रूपकस्य च साधकमिति एकदेशविवर्त्तिरूपकमेवेति। 'नैत्रैरिवोत्पलैः पद्मैः' इत्यादौ तु इवादिवाचकस्य विद्यमानत्वेनारोपाभावादेव नैकदेशविवर्त्ति रूपकमित्यवधेयम्। यदि 'लावण्यमधुभिः' इत्युदाहरणे 'विकस्वरम्' इत्यत्र 'मनोहरम्' इति पाठपरिवर्त्तनं विधीयते चेत्तदा साधकबाधकप्रमाणाभावात् 'मुखचन्द्रं पश्यति' इत्यादिवदेव एकदेशविवर्त्तिन्युपमारूपकयोः सन्देहसङ्कर एवेति विभावनीयम्।

अपि च सादृश्यस्यांशतोऽभिधेयत्वे अंशतश्च प्रतीयमानत्वे एकदेशविवर्त्तिन्युपमा, सादृश्यस्य सर्वत्रैव प्रतीयमानत्वे तु एकदेशविवर्त्तिरूपकमित्यनयोर्भेदः। उक्तं च ग्रन्थकृतैव पूर्वमुपमालक्षणस्थवाच्यपदव्यावृत्तिप्रदर्शनावसरे 'रूपकादिषु साम्यस्य व्यङ्ग्यत्वम् इति।

## रुचिरा

एकदेशविवर्त्ति लक्षयति—**१०५ यत्र**। **कस्यचित्** 'आरोप्यमाणस्ये'ति शेषः। 'नतु सर्वेषा'मिति त्वर्थतः प्राप्तम्। **आर्थत्वम्**। अर्थवशलभ्यत्वम्। **तत्**। **एकदेशविर्त्ति**। 'साङ्गं रूपक'मित्यनुषज्यते। यत्र कस्यचिदारोप्यमाणस्यार्थत्वम्, अन्येषां तु शाब्दत्वं स्यात् तत् एकदेशे शाब्दमेकदेशे चार्थमिति एकदेशविवर्त्ति रूपकमुच्यते इति भावः। तदेव स्फुटीकृतं पण्डितराजैः—'यत्र च क्वचिदवयवे शब्दोपात्तमारोप्यमाणं, क्वचिच्चार्थसामर्थ्याक्षिप्तं तदेकदेशे शब्दानुपात्तविषयिकेऽवयरूपके विवर्त्तनात्स्वस्वरूपगोपनेनान्यथात्वेन वर्त्तनादेकदेशविवर्त्ति।' इति।

कस्यचिदिति पदार्थे सन्देहापनोदाय विवृणोति—**कस्यचिदित्यादिना**। स्पष्टम्।

उदाहरति—**यथा**—**लावण्यमधुभिर्लावण्यान्येव** मधूनि तैः। **पूर्णम्**। **अस्याः**। **विकस्वरं** प्रफुल्लम्। 'विकासी तु विकस्वरः।' इत्यमरः। **आस्यं** मुखम्। **कैः**। **लोके** जगति। **लोचनरोलम्बकदम्बैर्लोचनान्येव** रोलम्बकदम्बा भ्रमरपुञ्जास्तैः। 'इन्दिन्दरस्तु रोलम्बश्चञ्चरीको मधुव्रतः।' इति हारावली। **न**। **पीयते ?** अपि तु सर्वैरिति भावः॥ ११२॥

शाब्दमार्थे चारोपं विभज्य निर्दिशति—**अत्रेत्यादिना**। स्पष्टम्।

एकदेशविवर्त्तिन्या भेदं निर्दिशति-**नचेत्यादिना**। स्पष्टम्। अयम्भावः—मुखस्य विकस्वरत्वं न साक्षात्, पुष्पधर्म्मस्य मुखसम्बन्धित्वानुपपत्तेः, 'नहि परधर्माः। परत्र सम्भवन्ती'ति न्यायात्। अतोऽस्य विकस्वरत्वसिद्ध्यर्थ पद्मत्वेन निरूपणं युज्यते, अतः—मुखस्यारोपितपद्मत्वमधिश्रित्य लावण्ये मधुत्वमप्यारोप्यमाणं सङ्गच्छते, एवं साङ्गत्वेऽपि एकदेशे शाब्दत्वादेकदेचार्थत्वादेकदेशविवर्त्तित्वं रूपकस्य। इति। विवृतं च विवृतिकारैः—'नचेयमिति। समभिव्याहतपदार्थस्य मुख्यया वृत्याऽन्वयसम्भव एवैकदेशविवर्त्तिनोरुपमारूपकयोरन्यतराङ्गीकारे बीजम्। 'मुखपद्मं विकस्वर'मित्युपमाऽङ्गीकारे क्रियाविशेषशालित्वरूपविकस्वरस्य मुखे बाधात् कान्तिविशेषे

लक्षणाप्रसङ्गः । 'मुखमेव पद्मम्' इति रूपकाङ्गीकारे तु विशेष्ये पद्मे विकस्वरत्वस्य मुख्यया वृत्त्याऽन्वयः सम्भवति । 'दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी । केशपाशालिवृन्देन सुवेषा हरिणेक्षणा ॥' इत्यत्र रूपकाङ्गीकारे भूषणादिकृतशोभाविशेषस्य लतायां बाधात् शोभामात्रे लक्षणाप्रसङ्गः, उपमाङ्गीकारे तु मुख्यया वृत्त्याऽन्वयः सम्भवतीत्येतादृशं विशेषमनवलोक्यैव केचिदेकदेशविवर्त्तिनीमुपमामनेकदेशविवर्त्तिनि रूपक एवान्तर्भावयन्ति । इति । यथा वा—'रूपजला चलनयना नाभ्यावार्त्ता कचावलिभुजङ्गा । मज्जन्ति यत्र सन्तः सेयं तरुणी तरङ्गिनी विषमा ॥' इति । अत्र हिं रूपादौ जलादेरारोपस्य शाब्दत्वेऽपि नयने मीनत्वारोपस्यार्थत्वम् ।

**निरङ्गं केवलस्यैव रूपणं तदपि द्विधा ॥ ३२ ॥**

**मालाकेवलरूपत्वात्—**

तत्र मालारूपं निरङ्गं यथा—

**'निर्माणकौशलं धातुश्चन्द्रिका लोलचक्षुषाम्।**
**क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा ॥'**

केवलं यथा—

**'दासे कृतागसि भवेदुचितः प्रभूणां**
**पादप्रहार इति सुन्दरि ! नास्मि दूये।**
**उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-**
**र्यत्खिद्यते मृदु पदं ननु सा व्यथा मे ॥'**

---

## विवृतिः

इत्यत्र रूपकाङ्गीकारे भूषणादिकृतशोभाविशेषस्य लतायां बाधाच्छोभमात्रे लक्षणाप्रसङ्गः। उपमाङ्गीकारे तु मुख्यया वृत्त्यान्वयः संभवतीति। एतादृशं विशेषमनवलोक्यैव केचिदेकदेशविवर्तिनीमुपमामेकदेशविवर्तिरूपक एवान्तर्भावयन्ति। केवलस्यैव न तु साङ्गस्य। तदपि निरङ्गरूपकमपि ॥

मालेति। मालारूपत्वात् केवलरूपत्वाच्चेत्यर्थः ॥ निर्माणकौशलं वराङ्गनासृष्टिव्युत्पत्तिः। सौन्दर्यातिशयसंपादकत्वमेवानयोः साम्यं तन्मूलक एवायमारोपः। अत्रेन्दीवरेक्षणाया एव रूपणं न तु तदङ्गस्यापि। **दासे इति**। मानिनीं प्रसादयितुस्तत्पादाहतस्य नायकस्योक्तिरियम्। अत्र पादप्रहारे। **मृदु पदमिति**। 'तव' इति शेषः। तव पादप्रहारेऽपि मम पुलको भवति, तथापि मयि तव क्रोध इति भावः ॥

## विज्ञप्रिया

**निर्माणकौशलमिति**। अत्र सारोपा लक्षणा। तत्कौशलजन्या इत्यर्थः। नाऽत्रांशे रुपकम्। चन्द्रिकाक्रीडागृहद्वयरूपणात्तु मालेत्यवधेयम्।

**दासे कृतागसीति**। उद्यतां कठोरपुलकाङ्कुररूपाणां कण्टकानामग्रैरित्यन्वयः। अत्र पुलकाङ्कुरेषु कण्टकरूपणमात्रम्।

## लोचन

केवलस्य सहयोगान्तररूपणासंयुक्तस्य। मालाकेवलरूपत्वं पूर्वोक्तवद् व्याख्येयम्।

**निर्माणेति**—अत्रैकस्यामिन्दीवरेक्षणायामनेकवस्त्वारोपात् निरवयविमाला।

**दास इति**। दासे, स्वाधीनजने, कृतागसि कृतापराधे, प्रभूणां सेव्यानाम्। अत्र प्रहारे न दूये नाभ्यसूयामि। भिद्यते विध्यते। अत्र केवलमिति निरवयवरूपं समानान्तररूपणं विना एकत्रैव निरूपणनिबन्धनात्, इहापि पुलकस्याङ्कुररूपणानन्तरं कण्टकत्वरूपणेन रूपितरूपणम्।

तेन तेन प्रकारेण अष्टौ, अन्यथा पुनर्वक्ष्यमाणा अपि भेदाः सम्भवन्तीत्याशयः।

## कुसुमप्रतिमा

सविभागं निरङ्ग रूपकं लक्षयति निरङ्गमिति। केवलस्यैव अङ्गरहितस्यैव उपमानस्य रूपणं निरङ्गे उपमेये अभेदारोपणं निरङ्गम्। तथा च निरङ्गे उपमेये निरङ्गस्यैवोपमास्य अभेदारोपो निरङ्गम्। नाम रूपकमित्यर्थः। अतएव निरङ्गमिति संज्ञाप्य पपद्यते। तन्निरङ्गं रूपकमपि मालारूपत्वादनेकारोपयुक्तत्वात् केवलरूपत्वादेकमात्रारोपयुक्तत्वाच्च द्विधा।

निर्म्मणेति। सा पूर्व दृष्टा इयमिन्दीवरेक्षणा नीलोत्पलनयना, धातुर्विधातुः निर्म्माणकौशलं वराङ्गनाकष्टेश्वरमनैपुण्यरूपा। लोकचक्षुषा जननयनानां चन्द्रिका ज्योत्सारूपा, तद्वदेवानन्दजनिकेति भावः; तया अनङ्गस्य कन्दपस्य क्रीड़ागृहं विहारभवनरूपा दर्शनमात्रेश्चातीवकामोद्दीपिकेत्याशयः।

अत्र इन्दीवरेणक्षारूपे निरङ्गे एवोपमेये निर्म्माणकौशलादीनां निरङ्गाणामेव त्रयाणामुपमानानामभेदारोपत्रयात् मालारूपं निरङ्गं रूपकम्। निर्म्माणकौशलस्योपमानत्वानङ्गीकारे तु आरोपद्वयस्याप्यनेकत्वान्मालारूपत्वनचतमेव।

दास इति। मालिन्या प्रियाया मानभङ्गाय तत्पादपतितस्य तथैव च पादेन प्रवृत्तस्य नायकस्य तां प्रत्येव पुनः सप्रेमोक्तिरियम्। हे सुन्दरि! कृतागसि विहितापराधे दासे प्रभूणां पादप्रहार उचितो न्याय्य एव भवति, इति हेतोः, अत्रे तव पादप्रहारे अहं न दूये न सन्तप्तो न व्यथितां भवामि। किन्तु उद्यन्तस्तव पादस्पर्शमात्रेणैवोत्पद्यमानाः कठोरा कठिना पुलकाङ्कुरा अङ्कुरवत् क्षुद्रक्षुद्रा रोमाञ्चा एव कण्टकानि तेषामग्रैरग्रभागैः, तव मृदु कोमलं पद चरणतलं यद्भिद्यते विदार्य्यते नन्विन्यवधारणे, सा सैव मे मम व्यथा वेदना।

अत्र पुलकाङ्कुररूपे निरङ्ग एवैकस्मिन्नुपमेये कण्टकरूपस्य निरङ्गस्यैवैकस्य उपमानस्य एकमात्राभेदारोपात् केवलरूपं निरङ्गं रूपकम्।

इदमत्रावधेयम्—एकस्य आरोपस्य कार्य्यकारणभावेन आरोपान्तरसापेक्षत्वं परम्परितम्, अङ्गाङ्गिभावेन आरोपान्तरसापेक्षत्वे साङ्गम्, सर्वथैवारोपान्तरनिरपेक्षत्वे च निरङ्गं रूपकमिति।

## विमला

निरङ्गमाह, निरङ्गमिति।—केवलस्य—एकमात्रस्यैव, न तु साङ्गस्य इत्यर्थः, अङ्गिन इति शेषः, रूपणं निरङ्गम्; तदपि—निरङ्गरूपकमपि, द्विधा—द्विविधम्। मालेति।—मालारूपत्वात् केवलरूपत्वाच्चेत्यर्थः।

तत्र मालारूपमुदाहरति, निर्माणेति।—सा इयम् इन्दीवरेक्षणा—नीलोत्पलनेत्रा, धातुः,—विधातुः, निर्माणकौशलं—सृष्टिवैचित्र्यं, वराङ्गनासृष्टिव्युत्पत्तिरिति भावः, लोकचक्षुषां चन्द्रिका—कौमुदी, कौमुदीव नेत्रोत्सवविधायिनीत्यर्थः, तथा अनङ्गस्य—कामस्य, क्रीड़ागृहं—विलाससागरस्वरूपा, स्मरोद्दीपकत्वादिति भावः।

सौन्दर्य्यातिशयसम्पादकत्वमेवानयोः साम्यं, तन्मूलक एवायमारोपः। अत्र इन्दीवरेक्षणारूपे अङ्गिनि मालारूपेण निर्माणकौशलादीनाम् आरोपः।

केवलमुदाहरति, दासे इति।—मानिनीं कान्तां प्रसादयितुं तत्पादाहतस्य नायकस्योक्तिरियम्। हे सुन्दरि! दासे—किङ्करे, कृतागसि—कृतापराधे सति, प्रभूणां—स्वामिनां, पादप्रहारः,—चरणाघातः, उचितः,—योग्यः, भवेत् इति—अस्मात् हेतोः, अस्मि—अहमित्यर्थः, ["अस्मि" इत्यत्र "अत्र" इति पाठान्तरे—पादप्रहारे इत्यर्थः] न दूये—न दुःखमनुभवामीत्यर्थः, किन्तु उद्यद्भिः,—उद्गच्छद्भिः, कठोरैः,—कर्कशैः, खरस्पर्शैरित्यर्थः, पुलकाङ्कुरैः,—अङ्कुरवत् रोमाञ्चैरेव, कण्टकाग्रैः, पादस्पर्शजनितसात्त्विकभावविशेषैरिति भावः,—मृदु—कोमलं, पदं, तवेति शेषः, यत् भिद्यते—विध्यते, ननु—भोः! सा मे—मम, व्यथा—पीड़ा। तव पादप्रहारेऽपि नभ पुलको भवति, तथाऽपि मयि तव क्रोधः इति महदनुचितम्। अत्र पुलकाङ्कुररूपे अङ्गिनि केवलस्य कण्टकाग्रस्य आरोपः।

## लक्ष्मी

एवं साङ्गं सप्रभेदं रूपकमुपपाद्य निरङ्गं सप्रभेदमुपपादयति—निरङ्गमिति। केवलस्यैव अङ्गिन एव न तु साङ्गस्य उपमानस्य रूपणं निरङ्गे उपमेये अभेदारोपणं निरङ्गं निर्गतान्यङ्गानि यत्र तत्तथोक्तम्। एवञ्च निरङ्गे उपमेये निरङ्गस्यैवोपमानस्याभेदारोपो निरङ्गमित्यन्वर्थं नाम रूपकमित्यर्थः। तदपि निरङ्गरूपकमपि मालाकेवलरूपत्वादित्यस्य 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इतिन्यायात् मालारूपत्वादनेकारोपयुक्तत्वात् केवलरूपत्वादेकमात्रारोपयुक्तत्वाच्चेत्यर्थः। द्विधा भिद्यमानं सद्द्विप्रकारकमित्यर्थः।

यथाक्रममुदाहर्त्तुमाह—तत्रेति। तत्र तयोर्मालाकेवलरूपयोर्निरङ्गयो रूपकयोर्मध्य इत्यर्थः।

निर्माणेति। सा पूर्वावलोकिता इयं प्रत्यक्षा इन्दीवरं नीलोत्पलं तद्वत् इक्षणे लोचने यस्याः सा तादृशी, धातुः सृष्टिकर्त्तुर्ब्रह्मणः निर्माणकौशलं वराङ्गनासृष्टेश्चरमनैपुण्यरूपा। लोकचक्षुषां मनुष्यलोचनानां चन्द्रिका कौमुदी आह्लादकत्वेन तथाभूतेतिभावः तथा अनङ्गस्य मदनस्य क्रीडागृहं विहारभवनरूपा केवलावलोकनेनैवात्यन्तकामोद्दीपिकेतिभावः।

अत्रैकस्यामिन्दीवरेक्षणायामेव न तु तदङ्गे उपमेये निर्माणकौशलादीनां निरङ्गाणामेव त्रयाणामुपमानानामारोपात् मालारूपं निरङ्गरूपकम्, इन्दीवरेक्षणायाः सौन्दर्यातिशयं ध्वनयितुमत्रारोपणम्। निर्माणकौशलस्योपमानत्वानभ्युपगमे तु आरोपद्वयस्याप्यनेकत्वान्मालारूपत्वमस्त्येवेतिबोध्यम्।

केवलमिति। निरङ्गं रूपकमित्यनुषज्यते।

दासे इति। मानिनीं प्रियां प्रसादयितुं तत्पादपतितस्य तयैव च पादप्रहतस्य नायकस्य तां प्रत्येव सानुनयोक्तिरियम्।

हे सुन्दरि! कृतमागोऽपराधो येन तथोक्ते कृतागसि दासे विहितापराधे किङ्कर इत्यर्थः, प्रभूणाम् अधीश्वराणां पादप्रहार उचितो न्याय्य एव भवति इति हेतोः अत्रास्मिन् पादप्रहारे अहं न दूये खिद्यामि व्यथितो न भवामीत्यर्थः, तत्कथं व्यथित इव लक्ष्यसे अत आह—उद्यदिति। यत् यस्मात्कारणात् उद्यन्तः केवलं तव पादस्पर्शेनैवोत्पद्यमानाः कठोराः कठिना ये पुलकाङ्कुरा अङ्कुरवत् क्षुद्रक्षुद्ररोमोद्गमा एव कण्टकास्तेषामग्रैः पुरोभागैः तव मृदु कोमलं पदं चरणतलं भिद्यते छिद्यते ननु सा सैव, नन्वित्यवधारणे; मे मम व्यथा वेदना।

अत्र पुलकाङ्कुररूप एव न तु तदङ्गे एकस्मिन्नुपमेये कण्टकरूपस्यैव निरङ्गस्यैकस्य उपमानस्य केवलाभेदारोपात् केवलरूपं निरङ्गं रूपकम्। परम्परितादिषु रूपकेषु परस्परभेदस्त्वित्थमत्रालोचनीयम्। तथाहि—एकस्यारोपस्य कार्यकारणभावेन अन्यरोपसापेक्षत्वे परम्परितम्, अङ्गाङ्गिभावेन अन्यारोपसापेक्षत्वे साङ्गम्, सर्वथैवान्यारोपसापेक्षत्वे च निरङ्गं रूपकमिति।

## रुचिरा

एवं साङ्गं सप्रभेदं रूपकं निर्दिश्य निरङ्गं सप्रभेदं निर्दिशति—**१०६ केवलस्याङ्गिनः** प्रधानस्येति यावत्। **एव** नतु 'साङ्गस्ये'ति शेषः। **रूपणम्**। निरङ्गं निर्गतान्यङ्गानि अप्रधानभूतान्यारोपमाणानीति यावत् यत्र तत्। 'रूपक'मित्यनुषज्यते। **तत्**। **अपि**। **मालाकेवलरूपत्वात्** 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति नयेन मालारूपत्वात् केवलरूपत्वाच्चेत्यर्थः। **द्विधा**। अयम्भावः—यत्राङ्गाङ्गित्वमपहाय केवलस्यैव रूपितत्वं तत् निरवयवं रूपम्, तदपि मालारूपत्वेन केवलरूपत्वेन च भिद्यमानं द्विप्रभेदं भवतीति ॥ ८५ ॥

उदाहरति—**तत्र** तयोर्मालाकेवलरूपयोर्निरवयवयोरूपकयोर्मध्ये इत्यर्थः। **मालारूपम्**। **निरङ्गम्**। **यथा**—'**धातुर्विधातुर्जगद्रचयितुरिति यावत्। **निर्माणकौशलं** निर्माणस्य जगदुत्पादनस्य कोशलं चातुर्य्यं तत्स्वरूपभूतेति यावत्। **लोकचक्षुषाम्**। **चन्द्रिका** कौमुदी आह्लादकत्वेन तथाभूतेति भावः। **अनङ्गस्य** कामदेवस्य। **क्रीडागृहं** तथाभूतेति भावः। **सा** प्रसिद्धा। **इयं** प्रत्यक्षभूता। **इन्दीवरेक्षणेन्दीवरं** नीलकमलं तद्वदीक्षणं यस्याः सा। इदम्बोध्यम्—अत्रेन्दीवरेक्षणाया एव सौन्दर्य्यातिशयं ध्वनयितुं रूपणं, नतु तदङ्गनामपि, तदिदं निरङ्गम्। मालारूपत्वं तु-एकस्यामेवोपमेयभूतायामिन्दीवरेक्षणायां बहूनां निर्माणकौशलादीनामुपमानानामारोपात्। यथा वा मम—'अमृतनिधित्वं शशिनो मदनत्वं वाऽपि कामदेवस्य। लक्ष्म्या वा सुभगत्वं तव वदनं लोकसर्वस्वम्॥' इति ॥ ११३ ॥

एवं मालारूपमुदाहृत्य निरङ्गमुदाहर्त्तुमाह—**केवलमित्यादि**।

**केवलं** 'निरवयवं रूपक'मिति पूर्वतोऽनुषज्यते। **यथा**। '**दासे**'इत्यादि।

'**हे सुन्दरि! कृतागसि** कृतमागोऽपराधो येन तादृशे। **दासे** किङ्करे। **प्रभूणाम्** अधीश्वराणाम्। **पादप्रहारः** पादेन प्रहरः। **उचितः**। **भवति**। **इति**। **अत्रास्मिन्** पादप्रहारे। न। 'अह'मिति शेषः। **दूये** खिद्यामि' 'टुंदु' उपतापे। तत् कथं खिन्न इवासीत्याशङ्क्याह—**यत्** यतः **उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रैरुद्यन्त** उन्मुखीभवन्तोऽत एव कठोरा ये पुलकाङ्कुरा रोमोद्गमास्ते एव कण्टका द्रुमाङ्गविशेषास्तेषामग्राणि पुरोभागास्तैः। **मृदु** कोमलम्। **पदम्**। **भिद्यते**। **सा**। **ननु**। **मे** मम। **व्यथा**। अयम्भावः—मानिन्या पादप्रहतस्यापि तामनुनयतः कामुकस्योक्तिरियम्। त्वया यः कुपितया पादः प्रह्रियते, तेनापि मम आश्लेषसुखेन रोमोद्गमः, अतोऽहं नितान्तं त्वय्यनुरक्तः, न च तत् तव पादप्रहारः स्थाने। अथापि तव प्रेमवशात् तमविगणय्य प्रार्थये यत त्वया प्रहतं तत्त्वयोपकृतमेव मन्ये। यदि पापभ्रान्त्योपदिष्टं कारितं वा केनापि प्रभुणा प्रायश्चित्तमाचरन् कश्चिदपह्नयते। अथ—त्वया पादे प्रह्रियमाणे यो रोमोद्गमो जातस्तेन तव मृदोः पादस्य कण्टकाग्रैरिव यो भेदस्तेन केवलं दूये। इति। अत्र पुलकाङ्कुरेषु कण्टकत्वारोपः केवलः तदिदं निरवयवं केवलं रूपकम्। उत्प्रेक्षाऽपह्नुती त्वत्र निरपेक्षोपस्थितिके बोध्ये॥' यथा वा—'दैवात् पश्येर्जगति विचरन् मत्प्रियां मालतीं चेदाश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम्। आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः प्राणत्राणं सपदि सुकरोत्यायताक्ष्याः स एकः॥' इति, अत्र ह्याशायास्तन्तुत्वेन रूपणम् ॥ ११४ ॥

एवमभिहितान् भेदान् गणयते—**१०७ तेनेत्यादिना**। स्पष्टम्।

**तेनाष्टौ रूपके भिदाः।**

'चिरंतनैरुक्ताः' इति शेषः। क्वचित्परम्परितमप्येकदेशविवर्ति यथा—

**'खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य ॥'**

**अत्रऽऽर्थः क्ष्मायां महिषीत्वारोपः खड्गे सौविदल्लत्वारोपे निमित्तम्।**

अस्य भेदस्य पूर्ववन्मालारोपत्वेऽप्युदाहरणं मृग्यम्।

---

## विवृतिः

सौविदल्लोऽन्तः पुरपालकः कञ्चुकी। क्ष्मायां महिषीत्वारोपो राजभोग्यत्वरूपसाम्यमूलकः॥ **मृग्यमिति**। छत्रं सितं शम्बरशात्रवस्य श्रीखण्डचित्रं हरितोऽबलायाः। विराजते चारु नभः सरोजं कर्पूरपूरप्रभमिन्दुबिम्बम्॥' अत्र शम्बरशात्रवादे राजत्वाद्यारोप आर्थश्चन्द्रबिम्बस्य सितच्छत्रत्वारोपे निमित्तम्। **करमिति**। करं किरणमेव हस्तम्॥

## विवृतिपूर्तिः

**अष्टाविति**। रूपकं तावत्त्रिविधम्—साङ्गं निरङ्गं परम्परितं चेति। तत्र साङ्गं समस्तवस्तुविषयम्, एकदेशविवर्ति चेति द्विविधम्। निरङ्गमपि केवलं मालारूपं चेति द्विविधम्। परम्परितं तु श्लिष्टाश्लिष्टशब्दनिबन्धनतया द्विविधं सत्प्रत्येकं केवलं मालारूपं चेति चतुर्विधमिति संकलनेऽष्टौ रूपकभेदाः॥

**खड्ग इति**। एतत्पादत्रयीं तु 'पर्यङ्को राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गो भग्नप्रत्यर्थिवंशोल्बणविजयकरिस्त्यानदानाम्बुपट्टः। सङ्ग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः—' इति॥

## विज्ञप्रिया

**तेनाष्टाविति**। श्लिष्टाश्लिष्टावाचकभेदे द्विविधस्य परम्परितरूपकस्य मालाकेवलभेदाच्चातुर्विध्यम्। साङ्गं च समस्तवस्तुविषयत्वैकदेशविवर्तित्वाभ्यां द्विविध निरङ्गं च केवलमालात्वाभ्यां द्विविधमित्यष्टावित्यर्थः।

**खड्गः क्ष्मेति**—खड्ग एव स्त्रीत्वेनाऽनारोपितायाः क्ष्मायाः पृथिव्याः सौविदल्लः अन्तः पुरस्थनपुंसकः। "सौविदल्लो महल्लिका" इति कोषः। **अत्रेति**। क्ष्मायाः स्त्रीत्वेनाऽऽरोपणं विना खड्गे सौविदल्लारोपस्यानुयोगेनानुपपत्तेः। उदाहरणं मृग्यमिति। यथा—

**"प्रसूनबाणस्य सितातपत्रमैन्द्रया दिशश्चन्दनबिन्दुरिन्दुः।**
**विराजते विष्णुपदारविन्दं मयूखविक्षालितभूमिपीठम्॥"** इति

अत्र हि प्रसूनबाणादेः राजत्वाद्यारोपः चन्द्रस्य सितातपत्राद्यारोपहेतुः। यदि चैकस्य वाच्यस्य रूप्यस्य साधकान्यनेकान्यन्यानि रूपकाण्येव माला इत्यभिप्रायः, तदा "राकाया नभसश्चन्द्रः पुण्डरीकं शशस्य च" इत्युदाहार्य्यम्। अत्र हि शशिनि रूप्यमाणे पुण्डरीके वाच्ये राकायाः पदहस्तलक्ष्मीत्वं गगनस्य सरोवरत्वं शशस्य भ्रमरत्वं चार्थसाधकम्।

## लोचन

सौविदल्लोऽवरोधाध्यक्षः । **अत्रेति** । अयमर्थः—अत्र क्ष्मायां महिषीत्वरूपणस्यार्थत्वाद् एकदेशविवर्तिरूपकं, तद्रूपणस्य च खड्गस्य सौविदल्लत्वरूपणहेतुत्वात् परम्परितमिति । इह च क्ष्मायां महिषीत्वरूपणं विना खड्गस्य सौविदल्लत्वरूपणं नोपपद्यते । सावयवैकदेशविवर्त्तिनि तु वाक्यरूपणं स्वयमनुपपन्नमेव । सामर्थ्यात्त्वन्यदाक्षिपतीति विवेकः । मृग्यं लक्ष्येष्वित्यर्थः । यथा—.

**"अस्ति स्वस्त्ययनं श्रियः सुचरितं द्राघीयसः श्रेयसः**
**सौन्दर्य्यस्य रसायनं निरवधेः शीलस्य लीलायितम् ।**
**विद्यानामधिदैवतं निरुपधेः शौर्य्यस्य विस्फूर्जितं**
**श्रीभानुस्त्रिकलिङ्गमङ्गलपदं गङ्गान्वये भूपतिः ।।"**

अत्र श्रीप्रभृतीनां प्राणिविशेषत्वरूपणम् आर्थं स्वस्त्ययनरूपणे हेतुः ।

क्वचिदेकदेशे आरोप्या आरोपविषयवाचके पदे व्यङ्ग्यतया निर्दिष्टाः ।

## कुसुमप्रतिमा

इदानीं शुद्धरूपकभेदनिरूपणमुपसंहरन् समुदायेन तत् सङ्कलनमाह तेनेति । उक्तविधभेद समूहसम्भवेनेत्यर्थः, रूपके शुद्धरूपकालङ्कारे अष्टौ भिदा भेदाः । तथा च—

शिष्टशब्दनिबन्धनम् केवलम् १..."आहवे जगदुद्दण्ड !" इत्यादि ।

परम्परितम् ४ मालारूपम् १..."पद्मोदयदिनाधीशः" इत्यादि ।

अश्लिष्टशब्दनिबन्धनम् केवलम् १..."पान्तु वो जलदश्यामाः" इत्यादि ।

मालारूपम् १..."मनोजराजस्य" इत्यादि

साङ्गम् २ समस्तवस्तुविषयम् १..."रावणावग्रहक्लान्तम्" इत्यादि ।

एकदेशविवर्त्ति १..."लावण्यमधुभिः पूर्णम्" इत्यादि ।

निरङ्गम् २ मालारूपम् १..."निर्म्माणकौशलं धातु" इत्यादि ।

केवलरूपम् १..."दासे कृतागसि" इत्यादि ।

क्वचिदिति । न केवलं साङ्गं रूपकमेकदेशविवर्त्ति, किन्तु परम्परितमप्येकदेशविवर्त्ति सम्भवतीत्यर्थः; तत्रापि कस्यचिदारोपस्यार्थत्वसम्भवादिति भावः । तथापि तु परम्परितस्य चतुरधिको भेदो नाशङ्कनीयः, अस्य तेष्वेवान्तर्भावात् प्राचीनैः परम्परितस्य उक्तभेदचतुष्टयमात्राङ्गीकारादिति बोध्यम् ।

खड्ग इति । अस्य पूर्वपादत्रय यथा—"पर्य्यङ्को राजलक्ष्म्या हरितमखिनयः पौरुषाब्धेस्तरङ्ग, भग्नात्वर्घिवं शीलणविन्नवकरिक्ष्यानदानाम्बु पट्टः । संग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बुबाहः' इति ।

नाखवाणण्डलस्य मालवेन्द्रस्य मालवदेशाधिपतेः, क्षाया महिषीरूपायाः पृथिव्या सौविदल्लः कञ्चुकिस्वरूपः, अन्तः पुरनियुक्तकञ्चुकिनामकवृद्धब्राह्मणेन महिष्य इव खड्गेन पृथिव्या रक्षणादिति भावः। खड्ग स्तरवारिः समिति युद्धे विजयते सर्वोत्कर्षेण वर्त्तते। "सौविदल्लाः कञ्चुकिनः" "समित्याजिसमिद्युधः" इति चामरः।

उदाहृते एकदेशविवर्त्ति परम्परितरूपकं समर्थयितुमाह अत्रेति। आर्थस्तात्पर्य्यवशाल्लभ्यः। निमित्तमिति। क्ष्मायां महिषीत्वारोप विना खड्ग सौविदल्लत्वारोपस्य तयोः सादृश्याभावेनासम्भवादित्याशयः। अत्र तु—

"खड्गः क्ष्मासौविदल्लो परिचरन्नुत्करो मालवस्य।"

इति पाठे—मालवस्य मालवदेशाधिपतेः। उत्क्षिप्तः करः किरण एव करो हस्तो येन सः। तया परिचरन् सर्वतः सञ्चरत्नेव परिचरन् परिचर्य्यां कुर्वन् इत्येवमर्थे च परम्परिताश्लिष्टसाङ्गैकदेशविवर्त्तिरूपकयोरेकाश्रयानुप्रवेशरूपः सङ्कर एवेति द्रष्टव्यम्।

अस्येति। एकदेशविवर्त्तिपरम्परितरूपकप्रकारस्येत्यर्थः। मृग्यमन्वेष्यम्। यथा—

**"कन्दपदेवस्य सितातपत्रं श्रीखण्डचित्रं हरितो मनोज्ञम्।**

**विराजते व्योमसरोजमेतत् कपूरप्रभमिन्दुबिम्बम्॥"**

अत्र कन्दर्पदेवे राजत्वारोपः, हरिति (दिशि) अङ्गनात्वारोपः व्योम्नि सरोवरत्वारोपश्च आर्थः चन्द्रबिम्बे शाब्दं सितातपत्रत्वारोपं श्रीखण्डचित्रत्वारोपं सरोजत्वारोपञ्च प्रति निमित्तमिति एकदेशविवर्त्ति मालारूपं परम्परितरूपकम्।

## विमला

तेनेति।—प्रथमतः रूपकस्य त्रयो भेदाः,—साङ्गनिरङ्गपरम्परितप्रकारेण, तत्र समस्तवस्तुविषयैकदेशविवर्त्तिभेदाभ्यां साङ्गं द्विविधम्, एवं केवलमालारूपभेदाभ्यां निरङ्गमपि द्विविधं, शिलष्टाशिलष्टशब्दनिबन्धनत्वाभ्यान्तु परम्परितं द्विविधं सत् पुनः प्रत्येकं केवल मालारूपभेदाभ्यां द्विविधमिति चतुर्विधं, सम्मेलनेन रूपकमष्टप्रकारम् इति।

क्वचिदिति।—एकदेशविवर्त्तिपरम्परितरूपके कस्यचिदार्थत्वमित्यर्थः।

उदाहरति, पर्य्यङ्क इति।—राजलक्ष्म्याः,—राजश्रियाः, हरितमणिमयः,—मरकतमणिनिर्मितः, पर्य्यङ्कः,—खट्वा, उपवेशनासनमिति यावत्; खड्गमाश्रित्य राजलक्ष्म्याः स्थिरीकरणात् तत्र पर्य्यङ्कत्वारोप इति भावः; पौरुषाब्धेः,—पौरुषं—पराक्रम एव, अब्धिः,—सागरः, केनापि अनभिभवनीयत्वादिति भावः, तस्य तरङ्गः,—ऊर्मिः, खड्गस्य लतावत् दीर्घतया ईषदान्दोलनेन चाञ्चल्यसद्भावात् सूर्य्यकरप्रतिफलनेन चाकचक्यशालितया च सूर्य्यकरप्रतिफलितचञ्चलतरङ्गसन्तानेन साम्यात् तत्र तरङ्गत्वारोपो बोध्यः; भग्नेति।—भग्नेन—पराजितेन, प्रत्यर्थिनां—शत्रूणां, वंशेन—कुलेन, शत्रुपराजयेन हेतुनेत्यर्थः, यः उल्वणः,—महान्, विजयः,—सङ्ग्रामसफलतारूप इत्यर्थः, स एव करी—हस्ती, तस्य स्त्यानं—घनीभूतं, यत् दानाम्बु—मदजलं, तस्य पट्टः,— पाषाणवत् दृढ़ाधार इत्यर्थः, मदमत्तकरी यथा रणस्थले अप्रतिहतं विचरति तद्वत् अप्रतिहतसञ्चार इत्यर्थः, खड्गस्य विस्तृततत्वात् प्रतिघातसहत्वाच्च करिगण्डसाम्य ज्ञेयम्; सङ्ग्रामेति।—सङ्ग्रामात् यः ह्रासः,—भीतिः, तेन ताम्यन्तः,—मुह्यन्तः, ये मुरलपतयः,—तदाख्यदेशनायकाः, तेषां यशः,—शौर्य्यादिजनितोज्ज्वलकीर्त्ति एव, हंसः तस्य नीलाम्बुवाहः,—कृष्णमेघः, वर्षासु

नीलमेघोदयो यथा हंसान् दूरं मानसरोवरं प्रापयति, तद्वत् पराजितसुरलपतीनां यशांस्यपि तेभ्यो दूरीकृतवान् इत्यर्थः, कृष्णमेघोदयस्य सर्वाच्छादकत्वात् खड्गेन तेषां यशसां तिरोधानाच्च खड्गे कृष्णमेघत्वारोपो बोध्यः, समिति—युद्धे, मालवाखण्डलस्य—मालवः,—देशविशेषः, तस्य आखंण्डलस्य—इन्द्रस्य, मालवाधिपतेरित्यर्थः, ["मानवाखण्डलस्य" इति पाठान्तरे तु—नरेन्द्रस्येत्यर्थः] क्ष्मासौविदल्लः,—क्ष्मायाः,—पृथिव्याः, सौविदल्लः,—कञ्चुकी, अन्तःपुररक्षकपुरुषविशेषः इत्यर्थः, ("सौविदल्लाकञ्चुकिनः" इत्यमरः) राज्ञा क्ष्मापतित्वेन क्ष्मायाः महिषीरूपत्वात् खड्गेन पृथिवीरक्षणाच्च तस्मिन् कञ्चुकित्वारोपो बोध्यः; खड्गः,—असिः, विजयते—सर्वोत्कर्षेण वर्त्तते इत्यर्थः। स्रग्धरा वृत्तम्।

अत्रेति।—क्ष्माया महिषीत्वारोपो राजभोग्यत्वरूपसाम्यमूलकः। मृग्यमिति।—"छत्रं सितं शम्बरशात्रवस्य श्रीखण्डचित्रं हरितोऽवलायाः। विराजते चारु नभः सरोजं कर्पूरपूरप्रभमिन्दुविम्बम्॥" अत्र शम्बरशात्रवादे राजत्वाद्यारोपः आर्थः चन्द्रबिम्बस्य सितच्छत्रत्वारोपे निमित्तम् इत्यवधेयम्।

## लक्ष्मी

सम्प्रति शुद्धरूपकभेदप्रतिपादनमुपसंहरन् साकल्येन तद्गणनमुपपादयति—तेनेति। उक्तविधभेदसमूहसम्भवेनेत्यर्थः रूपके शुद्धरूपकालङ्कारे अष्टौ भिदाः अष्टप्रकाराः।

अध्याहार्यं सूचयति—**चिरन्तनैरिति**। अत्रेदम्बोध्यम्—रूपकं तावत्त्रिविधम्—परम्परितं साङ्गं निरङ्गञ्चेति। तत्र परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनतया द्विविधं सत्प्रत्येकं केवलं मालारूपं चेति चतुर्विधमितिसाङ्गं समस्तवस्तुविषयम्, एकदेशविवर्त्ति चेति द्विविधम्, निरङ्गमपि केवलं मालारूपञ्चेति द्विविधमिति सङ्कलनेनाष्टौ रूपकभेदाः।

अथोदाहरणानि सङ्कलय्य सौकर्याय प्रदर्श्यते—

क्वचिदिति। न साङ्गमात्रमेव रूपकमेकदेशविवर्त्ति किन्तु परम्परितमप्येकदेशविवार्त्तिभवतीत्यर्थः। कस्यचिदारोपस्य परम्परितेऽप्यार्थत्वसम्भवादित्याशयः। नचैवमुक्तपरम्परितस्य चतुर्भेदाधिकं सङ्कलनेन स्यादितिवाच्यम्, प्राचीनैरुक्तपरम्परितस्य केवलचतुष्टयभेदस्यैवाभ्युपगमेनास्य तेष्वेवान्तर्भावात्।

**खड्ग** इति। एतत्पादत्रयी तु—

पर्यङ्को राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गो—

**भग्नप्रत्यर्थिवंशोल्वणविजयकरिस्त्यानदानाम्बुपङ्कः।**

**सङ्ग्रामत्रासताभ्यन्मुरलपतियशो हंसनीलाम्बुवाहः॥ इति।**

मालवा नामा आखण्डल इन्द्रस्तस्य मालवाखण्डलस्य 'आखण्डलः सहस्राक्षः' इत्यमरः, क्ष्मायाः पट्टराज्ञीरूपायाः पृथिव्याः सौविदल्लः अन्तःपुरपालकः कञ्चुकीस्वरूपः, अन्तःपुरपालककञ्चुकिसंज्ञकवृद्धब्राह्मणेन पट्टराज्ञ्या इव खड्गेन पृथिव्यास्त्राणादित्याशयः। 'सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते' इत्यमरः। खड्गस्तरवारिः समिति सङ्ग्रामाङ्गणे विजयते सर्वोत्कर्षेण वर्त्तते। स्रग्धराच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव।

उक्तोदाहरणे एकदेशविवर्त्ति परम्परितरूपकमुपपादयति—**अत्रेति**। आर्थः अर्थवशलभ्यः। सौविदल्लोऽन्तःपुरे स्त्रीणां रक्षायै नियुक्तो भवति क्ष्मायाश्च स्त्रीत्वमन्तरा सौविदल्लत्वासम्भव इति तदुपपादयितुमार्थ

आरोपस्तत्र स्वीक्रियते। स च क्षमायां महिष्यामिव राजभोग्यत्वसादृश्यमूलकः, अन्यथासम्भवादिति भावः। इदञ्च रूपकमश्लिष्टशब्दनिवन्धनं निरङ्गञ्च। अत्रैव यदि—

'खड्गः क्ष्मा सौविदल्लो जयति परिचरन्नुत्करो मालवस्य'

इति पाठपरिवर्त्तनं विधीयते चेत्तर्हि परम्परितश्लिष्टसाङ्गैकदेशविवर्त्तिरूपकयोरेकाश्रयानुप्रवेशरूपः सङ्कर एवेति विभावनीयम्।

अस्येति। एकदेशविवर्त्तिपरम्परितरूपकप्रकारस्येत्यर्थः। मृग्यं लक्ष्यमन्वेष्यम्। यथा—

**'अस्ति स्वस्त्ययनं श्रियः सुचरितं द्राघीयसः श्रेयसः।**
**सौन्दर्यस्य रसायनं निरवधेः शीलस्य लीलायितम्।**
**विद्यानामधिदैवतं निरवधेः शौर्यस्य विस्फूर्जितं**
**श्रीभानुस्त्रिकलिङ्गमत्तलपदं गङ्गान्वये भूपतिः।**

अत्र श्रीप्रभृतीनां प्राणिविशेषत्वारोपः आर्थः स्वस्त्ययनारोपे निमित्तम्।

अत्र 'मालारूपत्वेऽप्युदाहरणं मृग्यम्' इत्यपपाठ इति वदन्त उपेक्षणीया एव।

## रुचिरा

अध्याहार्य्यमर्थं सूचयति—**'चिरन्तनैरित्यादिना।** स्पष्टम्। इदम्बोध्यम्—रूपकं तावत्त्रिविधम्, साङ्गं निरङ्गं परम्परितं चेति भेदात्। तत्र साङ्गं समस्तवस्तुविषयम्, एकदेशविवर्त्ति चेति द्विविधम्। निरङ्गमपि मालारूपं केवलं चेति द्विविधम्। परम्परितं तु श्लिष्टशब्दनिबन्धनम्, अश्लिष्टशब्दनिबन्धनं चेति द्विविधम्। तञ्च केवलं मालारूपं चेति द्विविधम्। एषां च सम्मेलनेऽष्टविधत्वं रूपकस्य। इति।

चिरन्तनैरित्यनेनास्वरसतां ध्वनयितुमाह—**क्वचित्। परम्परितम्। अपि। एकदेशविवर्त्ति** एकोऽसौ देशोऽशस्तत्र विवर्त्तते विशेषतो वर्त्तत इति तथोक्तम्। **यथा। 'पर्य्यङ्क'** इत्यादि।

**'राजलक्ष्म्याः। हरितमणिमयो** नीलमणिरचितः। **पर्य्यङ्कः। पौरुषाब्धेरुद्यमरूपस्य** समुद्रस्य। **तरङ्गः। भग्नप्रत्यर्थिवंशोल्वणविजयकरिस्त्यानदानाम्बुपट्टो** भग्नाः प्रत्यर्थिवंशाः शत्रूणां वंशाः शत्रुरूपा वा वंशवृक्षा येन तादृश उल्बणः प्रवृद्धप्रभावो यो विजयकरी विजयरूपो हस्ती तस्य स्त्यानदानं घनीभूतो मदः स एवाम्बु तस्य पट्टस्तन्निःसरणस्थाने निबद्धवस्त्रभूतः। 'अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः।' इत्यमरः। 'वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च।' इति विश्वः। 'पट्टः पेषणपाषाणे व्रणादीनां च बन्धने। चतुष्पथे च राजादिशासनान्तरपीठयोः॥' इति मेदिनी। सङ्ग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः सङ्ग्रामस्य त्रासो भयं तेन ताम्यन्तो ये मुरलपतियशोहंसा मुरलपतीनां यशोरूपाः हंसास्तेषां नीलाम्बुवाहो घनघटाप्रादुर्भावसमयस्वरूपः। वर्षासु हि तडागेषु खिद्यन्तो हंसास्तान् परिहाय मानसं यान्तीति समयः, तथा च—यशसां स्थानानि मुरलपतयस्तानि परित्याज्य मानसरूपं स्वमधिगमयितु तथा भूत इति फलितोऽर्थः। **क्ष्मासौविदल्लः** क्ष्मायाः पृथिव्याः सौविदल्लः कञ्चुकी तत्स्वरूपः। 'सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते।' इत्यमरः। **मालवाखण्डलस्य** मालवानामाखण्डल इन्द्रस्तस्य तथा भूतस्य। 'आखण्डलः सहस्राक्षः' इत्यमरः। **खड्गः। समिति** सङ्ग्रामाङ्गणे। **विजयते।** स्रग्धराछन्दः॥ ११५॥'

उदाहृतमर्थं निर्दिशति—**अत्र**। **क्षमायां** पृथिव्याम्। 'क्षमाऽवनिर्मेदिनी मही।' इत्यमरः। **महिषीत्वारोपो** राज्ञीत्वमारोप्याभिधानम्। **आर्थोऽ**र्थवशलभ्यः। अतोऽस्यैकदेशविवर्त्तित्वमिति भावः। स च-खड्गे खड्गविषयकतया निरूपिते। **सौविदल्लत्वारोपे** कञ्चुकित्वारोपे। **निमित्तं** कारणभूतः। अतोऽस्य परम्परितत्वमिति भावः। अयम्भावः—सौबिदल्लोऽन्तःपुरे स्त्रीणां रक्षायामधिकृतो भवति, क्षमायाश्च स्त्रीत्वमन्तरा सौविदल्लत्वासम्भव इति तदुपपादयितुमार्थं आरोपस्तत्राङ्गीक्रियते। स च क्षमायां महिष्यामिव राजभोग्यत्वसादृश्यनिबन्धनः। इदं च रूपकमश्लिष्टशब्दनिबन्धनं निरङ्गं च। इति।

एवं मालारूपस्य निरङ्गस्य परम्परितत्वे उदाहरणं निर्दिश्य मालारूपस्योदाहरणान्वेषणीयतामाह—**अस्येत्यादिना**। स्पष्टम्। उदाहरणं यथा—'मधुरिमंसम्भृतरदनं सुस्मितरुचिरं सदैव रम्भोरु ! शोणिमसुस्फुरदल्पं सुभगे वदनं तवेदमाभाति॥' इति। अत्र हि रदनेषु मधुरिमसम्भृतत्वमारोप्यमाणं दाडिमबीजत्वारोपस्यार्थस्य कारणभूतम्। अतः परम्परितमेकदेशविवर्त्तीदं रूपकम्। पूर्वत्र तु खड्गे पर्य्यङ्कादीनां बहूनामारोप्यमाणत्वान्मालारूपमेव। एतेन—'मालारूपत्वेऽप्युदाहरणं मृग्य' मित्युपलभ्यमानः पाठः प्रामादिक इति सूचितम्।

**दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके ॥ ३३ ॥**

तत्रैकदेशविवर्ति श्लिष्टं यथा मम—

**करमुदयमहीधरस्तनाग्रे गलिततमः पटलांशुके निवेश्य ।**

**विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः ॥**

समस्तवस्तुविषयं यथा—अत्रैव 'विचुम्बति—' इत्यादौ 'चुचुम्बे हरिदबलामुखमिन्दुनायकेन' इति पाठे । न चात्र श्लिष्टपरम्परितम् । अत्र हि 'भूभृदावलिदम्भोलिः'—(५२३) इत्यादौ राजादौ पर्वतत्वाद्योरोपं विना वर्णनीयस्य राजादेर्दम्भोलितादिरूपणं सर्वथैव सादृश्याभावादसंगतम् । तर्हि कथं 'पद्मोदयदिनाधीशः—' इत्यादौ परम्परितम्, राजादेः सूर्यादिना सादृश्यस्य तेजस्वितादिहेतुकस्य संभवात्—इति न वाच्यम् । तथा हि—राजादेस्तेजस्वितादिहेतुकं सुव्यक्तं सादृश्यं न तु प्रकृते विवक्षितम् । पद्मोदयादेरेव द्वयोः साधारणधर्मतया विवक्षितत्वात् । इह तु महीधरादेः स्तनादिना सादृश्यं पीनोत्तुङ्गत्वादिना सुव्यक्तमेव—इति न श्लिष्टपरम्परितम् । दृश्यते ।

---

## विवृति

**पद्मोदयादेरेव** पद्मोदयादिशब्दस्यैव । **द्वयो रूप्यरूपकयो** राजादिसूर्याद्योः ॥ नन्वत्र शब्दसाम्यविवक्षावशात्प्रसिद्धतेजस्वितादिरूपसाम्यविवक्षायास्तु 'त्रैलोक्यमण्डपस्तम्भाः' इत्यादौ तु दीर्घत्वपीवरत्वादिसाम्यसंभवेनात्र तन्मूलक एव स्तम्भत्वाद्यारोपोऽस्तु त्रैलोक्यादौ मण्डपत्वाद्यारोपस्य तत्कारणत्वस्वीकारेण किमिति चेत् । न । स्तम्भा यथा मण्डपभारसहिष्णवस्तथा हरिबाहवस्त्रैलोक्यभारसहिष्णव इति साम्यस्यैव प्रकृते विवक्षितत्वात् । तच्च त्रैलोक्यादौ मण्डपत्वाद्यारोपं विना दुर्बोधम् ।

## विज्ञप्रिया

**साङ्गेऽपि रूपके इति** । समस्तवस्तुविषयैकदेशविवर्त्तित्वेन द्विविधे साङ्गे इत्यर्थः ।

**करमुदयेति** । अयं सुधांशुः अमरेशदिशः प्राच्याः, मुखं विचुम्बति । किं कृत्वा ? उदयमहीधररूपस्य स्तनस्याग्रे करं रश्मिमेव करं पाणिं निधाय, स्तनाग्रे कीदृशे गलितं तमः पटलरूपमंशुकं यत्न तादृशे । मुखं कीदृशं ? विकसितकुमुदरूपमीक्षणं यस्य तादृशम् । अत्रामरेशदिशः नायिकात्वं, सुधांशोर्नायकत्वं चार्थम् । तयोर्धर्मौ स्तनदत्तहस्तविकशितनेत्रे शाब्दौ । करपदञ्च श्लिष्टम् । द्वितीयस्योदाहरणं स्पष्टम् "चुचुम्बे हरिदबलामुखमिन्दुनायकेन" इति पाठे ।

**नचात्रेति** । श्लिष्टपदेन कररूपणस्य स्तनरूपणसाधकत्वात् । समाधत्ते-**तत्र हि इति** । परम्परितं यद् रूपकं तदेव मुख्यरूपकसाधकं नतु सादृश्यं तत्साधकम् । यत्र तु सादृश्यादपि मुख्यरूपकं सिद्ध्यति न तत्र परम्परितरूपकम् । तेन प्रकृते पर्वतसादृश्याद् उच्चत्वादेव स्तनरूपणमित्युक्तमनेन । ननु यदि सादृश्याऽसत्त्वे एव परम्परितरूपकं, तदा "पद्मोदय" इत्यादावव्याप्तिरित्याक्षिपति—तर्हि इति । अव्याप्तिमुपपादयति । **राजादेरिति** । नतु तद्विवक्षितमिति । यत्तु विवक्षितं तदाह—**पद्मोदयादेरेवेति** । पद्मोदयादिश्लिष्टपदस्यैव इत्यर्थः ।

## लोचन

करं किरणं हस्तं च। मुखमाद्यभागं, वदनं च

करादिशब्दस्य श्लिष्टत्वेन श्लिष्टपरम्परितशङ्कां निराकरोति—**नचेति**। राजादौ शात्रवादिरूपे सुव्यक्त-मित्यतः पूर्वमस्त्येवेति शेषः। पद्मोदयेत्यादौ प्रद्योतत्तेजस्वितादिकमेव सादृश्यम्। पद्मोदयादेरिव सकलकलं पुरमित्यादावुपमायां सकलकलत्वस्येव इत्यर्थः। राजदिनाधीशयोः प्रकृते योजयति—**इहि त्विति**। इह करमुदय-महीधरस्तनाग्र इत्यादौ। तुः पुनरर्थः। एवं च "भ्रमिमरति" मित्यादौ विषं जलमेव विषमित्यारोपो जलदे प्रसिद्धसादृश्यभुजगस्यारोपे निमित्तमिति श्लिष्टपरम्परितमेव। अत्र "विद्वन्मानसहंस" इत्यादौ राजादौ हंसत्वारोपो मानसे मानसत्वारोपे हेतुरिति मन्यमाना आहुः—"नेह विषशब्दस्य द्वयर्थता ''विद्वन्मानसहंस" इत्यादाविव जलदे भुजगारोपहेतुका, किन्तु एतत्पद्यावस्थितवैद्यशास्त्रप्रसिद्धभ्रमादिमरणान्ताष्टविधगरलकार्य्यविशेषोत्थापितेति द्वय-र्थतायास्तादात्म्यारोपणं विना प्रसिद्धेरिह श्लेषालङ्कार एवेति।"तदयुक्तम्। जलदे भुजगसादृश्यस्य सकलकलं पुरमित्यादाविव विषशब्दस्य द्वयर्थता विनाऽनुपपत्तेः। किञ्च जलदभुजगजं विषं जलमिति न घटते। जलदस्य भुजगताया अवास्तवत्वाद् भुजगाच्च जलजन्मानिबन्धनात्। तस्माद् विषमेव विषमिति रूपणमाक्षिप्यैव वाच्यरू-पणं संगच्छते। नच श्लेषमात्रेणास्तु वाच्यरूपणोपपत्तिरिति युक्तं, श्लेषेणतादात्म्याप्रतीतेः। श्लेषोपपादकविश-कलितप्रतीतौ वाच्यरूपणासङ्गतिः, तादवस्थ्यात्। अन्यथा "विद्वन्मानसहंस" इत्यादावपि तथाप्रसङ्गः स्यात्।

**"आभाति ते क्षितिभृतः क्षणदानिभेयं**

**निस्त्रिंशमांसलतमालवनान्तलेखा।**

**इन्दुत्विषो युधि हठेन तवारिकीर्त्ति—**

**रानीय यत्र रमते तरुणप्रतापः॥"**

इह एकदेशवर्त्तिनि रूपके क्षितिभृद् राजा एव क्षितिभृत् पर्वत इति श्लिष्टम्। तत्रालङ्कारिकचण्डिदास-पण्डितादयः राजनि पर्वतत्वारोपणं निस्त्रिंशस्य तमालवनत्वारोपणे हेतुरिति श्लिष्टपरिम्परितमाद्रियन्ते। तच्चि-न्त्यम्। तथाहि क्षितिभृतो ह्यर्थतया 'विद्वन्मानसहंस'इत्यादौ मानसत्वादे राज्ञो हंसत्वादिरूपणनिमित्तमिव, निस्त्रिंशस्य तमालवनत्वरूपणोपयोगित्वम्। अपितु हठकामुककार्य्येऽपीति प्रतापकीर्त्योर्नायिकनायिकात्वोपक-रणत्वाद् इह प्रकृतसूत्रोक्तं श्लिष्टैकदेशरूप्यं सावयवैकदेशविवर्तिरूपकमेव भवितुं युक्तं, नतु श्लिष्टपरम्परित-मिति मन्यामहे। किञ्च श्लिष्टपरम्परिते विद्वन्मानसहंसेत्यादौ राज्ञो हंसत्वं मानसस्य मानसत्वारोपणसादृश्यं विनाऽसिद्धम्। इह तु निस्त्रिंशस्य तमालवनान्तत्वं नीलिमादिनापि प्रसिद्धम्। किञ्च सावयवे रूपके क्वचिदेकैकस्य सादृश्याप्रसिद्धेरप्येकीभूयान्योन्यसाहाय्येन सादृश्यप्रतीतिः। यथा—रावणावग्रहेत्यादौ मरुदादीनां शस्यत्वादेः। अपिच परम्परितस्यावयवरूपणाभावादेव सावयवान्तः पातिता नोच्यते। केवलं मानसादिपदेषु आक्षिप्यमाणं सरोवराद्यर्थरूपं व्यङ्ग्यं हंसत्वादिसाधकमात्रम्। अतएवात्र क्षणदानिभेत्यस्यापि पदस्य रात्रिकालाक्षेपेण अनिःशेषं भातीति तमसो बहुलीभावात् हठरमणोपयोगितेति प्राच्यानामपि व्याख्या। तदेवं क्षितिभृत इत्यादि सर्वेषां रूप्यमाणानां हठरमणोपकरणत्वाद् यथोक्तमेव ज्यायः।

**"द्यामालिलिङ्ग मुखमाशुदिशां चुचुम्ब**

**रूढ्ढाम्बरः शशिकलामलिखत् कराग्रैः।**

**अन्तर्निमग्नचरपुष्पशरोऽतिपाता-**

**त्किं किं चकार तरुणो नयदीक्षणाग्निः ॥**

इत्यत्र नयनाग्रेः तरुणत्वस्य प्रौढत्वरूपमर्थमादाय प्रथममभिधाया विश्रामाद् व्यञ्जनयैव युवरूपोऽर्थः प्रतीयते। इह तु क्षितिभृत इत्यादौ बहूनां रूपणात् प्रतापस्य तरुणत्वरूपणं शाब्दम्। इतश्च रमत इत्यादिपदानां रूपकसाधकतैव, नतु द्यामालिलिङ्ग इत्यादावालिङ्गनादीनामिव समासोक्तिसाधकता। अन्यथा सर्वत्रैव एकदेश-विवर्तिरूपकेषु समासोक्तिप्रसङ्गः स्यात्। हठादानीय रमत इत्यत्र कार्य्यसाम्येऽपि न समासोक्तिः। यदि हि कार्य्यलेशसाम्यं वा समाश्रित्य समासोक्तिरङ्गीकार्य्या तदेकदेशविवर्तिरूपकस्य विषयापहार एव स्यात्, तस्याने-वंविधस्य लक्ष्यस्याप्रसिद्धेः। यत्र वाचा रूपणं नास्तिद्यामालिलिङ्गेत्यादि समासोक्त्युदाहरणवत् कार्य्यसाम्यबाहु-ल्यसम्वलितत्वम्, तत्रैव सामग्रयभावादप्रस्तुतनायिकातादात्म्यं प्रतीयते। आभातीत्यादौ च वाच्यरूपणानां बहुत्वेन कार्य्यादिसाम्यं स्वलपतया तत्साहाय्यमेवाचरति इति। अरिकीर्त्यादिस्तादात्म्य प्रतीतिहेतुत्वं सहृदयानुभवसिद्धं नतु व्यवहारसमारोपजीविता समासोक्तिः। अनयोश्च समासोक्त्येकदेशविवर्तिरूपकयोरपरमपि युक्तिजातमि-हैव समासोक्तिप्रस्तावे सुव्यक्तं भविष्यतीत्यलं बहुना।

## कुसुमप्रतिमा

उक्तवृत्तिसन्दर्भेण परम्परितरूपके एकदेशविवर्त्तितारूपां साङ्गरूपकच्छायां प्रदश्य इदानीं साङ्गरू-पकेऽपि श्लिष्टशब्दनिबन्धनत्वरूपां परम्परितरूपकच्छायां प्रदर्शयितुमाह दृश्यन्त इति। न केवलं परम्परिते रूपके, किन्तु साङ्गे रूपकेऽपि क्वचित् रोप्या आरोपणीयोपमानवाचकाः शब्दाः, श्लिष्टा अनेकार्थाः, दृश्यन्ते। अतो लक्षणादीनां लक्ष्यानुसारित्वादिदमप्यङ्गीकरणीयमेवेति भावः।

करमिति। अयं सुधांशुश्चन्द्रः अमरेशदिश इन्द्राधिपतिकायाः पूर्वस्या दिशः गलितं स्वोदयादेवापसृतं तमःतटलमन्धकारसमह एव अंशुक वसनं यस्मात्तादृशे उदयमहीधर उदयपर्वत एवोन्नतपीवरत्वात् स्तनस्तस्य अग्र उपरिभागे, करं मयूखमेव कर हस्तम्, निवेश्य विन्यस्य, विकसितं स्वोदयेनानन्दन च प्रकाशितं कुमुदमेव ईक्षणं चक्षुयत्र तत्तादृशम् मुखमाद्यभागमेव मुखं बदनम्, विचुम्बति स्पृशति निजवदनेन संयोजयति च।

अत्र नायकरूपः सुधांशुरङ्गी तमः पटलांशुकगलनादीनि च तदङ्गतया विवक्षितानीति साङ्गरूपत्वम्; तथा तमः पटले च शुक्रत्वाद्यारोपाः शाब्दाः, अमरेशदिशि नायिकात्वारोपः सुधांशौ नायकत्वारीपश्च आर्थ इत्येकदेश-विवर्त्तिता; कर मुखशब्दौ च श्लिष्टाविति श्लिष्टशब्दनिबन्धनत्वम्; इत्यतः श्लिष्टशब्दनिबन्धनमेकदेशविवर्त्तिरूपं साङ्गरूपकमलङ्कार इत्याशयः।

कारिकायां "साङ्गेऽपि रूपके" इति साङ्गरूपकसामान्याभिधानात् तदन्तर्गताविभावपि भेदौ श्लिष्टशब्द-निबन्धनयोग्यत्वे विषयीकरोतीत्याशयेनाह समस्तेति। अत्रैव "करमुदय—" इत्यादिश्लोक एव। इत्यादौ भागे इत्यर्थः। तथा च—

**"विकसितकुमुदेक्षणं चुचुम्बे, हरिदबलामुखमिन्दुनायकेन।"**

इत्येवं द्वितीयार्द्धपाठकल्पने इत्यर्थः। ईदृशपाठे तु प्रागुक्तहेतुतः सर्वेषामेवारोपाणां शाब्दत्वाच्च श्लिष्ट-शब्दनिबन्धनं समस्तवस्तुविषय साङ्गरूपकं स्यादित्यभिप्रायः।

आशङ्काविशेषमुत्थाप्य तन्निरस्यति च चेति । अत्र "करमुदय—" इत्यादिश्लोके, किरणादौ हस्तत्वाद्यारोपस्य महीधरादौ स्तनत्वाद्यारोपं प्रति कथमपि कारणत्वात् श्लिष्टपरम्परितं रूपकमिति वाच्यं न चेत्यर्थः । हि यस्मात् । तत्र श्लिष्टपरम्परितविषये राजादौ विपक्षनृपादौ । दम्भोलितादिरूपणं वज्रत्वाद्यारोपः सादृश्यासम्भवात् वज्रादिना सह वर्णनीयस्य राजादेरित्यर्थः ।

उक्तयुक्तौ पूर्वापरयोरसामञ्जस्यसन्देहस्य निरासाभिप्रायेण "तत्र हि—सादृश्यासम्भवादसङ्गतम् । इह तु महीधरादेः" इत्याद्येकप्रबन्धस्य मध्य एव आशङ्कान्तरमवतार्य्य तदपि निरस्यति तर्हीति । तेजस्वितादीत्यादिपदेन सर्वाभिभावितादेर्ग्रहणम् । सम्भवादिति । तथा च तेजस्वितादिहेतुकसादृश्येनैव राजादौ सूर्य्यत्वाद्यारोपस्य, घटिततया कारणान्तरानपेक्षणादुभयारोपण परस्परकार्य्यकारणभावाभावेन कथ "पद्मोदयदिनाधीशः" इत्यादौ परम्परितरूपकमिति भावः । न तु नहि । प्रकृते "पद्मोदयदिनाधीशः" इत्यादौ । विवक्षितमिति । तथा वे तु परस्परसंस्रंवाभावेन पद्मोदयपदप्रयोगस्य उन्मत्तप्रलापत्वप्रदङ्ग इति भावः । द्वयो राजसूर्य्याद्योः । विवक्षितत्वादिति । अत्रायमाशयः—सूर्य्यो यथा प्रकाशकरणेन पद्मानामभ्युदयं करोति, वर्णनीयो राजापि तथैव विपक्षान् विजित्य धनाद्यर्जनेन पद्माया अभ्युदयं करोति; इत्येव हि कविना विवक्षितोऽर्थः । तेन च पद्मोदय एव द्वयो राजसूर्य्ययोः साधारणधर्म्मः एवम्, इन्द्रस्य वज्रो यथा पर्वतान्विमर्द्दितवान्, वर्णनीयो राजापि तथैव विपक्षरान् जिमर्द्दयति; इत्येव च कविना विवक्षितोऽर्थः । तेन च भूभृद्विमर्द्दमेव द्वयो राजवज्रयोः साधारणर्म्मः । एवञ्च पूर्वारोपान् विना परारोपा न सम्भवन्तीत्युभयारोपाणामेव परस्परकार्य्यकारणभावसद्भावात् "भूभृदायलिदम्भोलिः" "पद्मोदयदिनाधीशः" इत्युभयत्रापि श्लिष्टपरम्परितत्वेन किञ्चदसामञ्जस्यमिति ।

प्रबन्धशेषमाह इह त्विति । "करमुदय—" इत्यादौ श्लोके त्वित्यर्थः । सुव्यक्तमेवेतीति । तथा च तादृशं सादृश्यमेव महीधरादौ स्तनत्वद्यारोपं घटयतीति । किरणादौ हस्तत्वाद्यारोपस्य तत्कारणतया नाक्षेति न श्लिष्टपरम्परितं रूपकमित्यर्थः एतेन यत्र आरोप स्वोत्पत्तौ सादृश्यमात्रमपेक्षते तत्र साङ्गं रूपकम्, यत्र तु विवक्षितसादृश्यसम्भवेन आरोपान्तरमपेक्षते तत्र परम्परित मति सूचितम् ।

## विमला

दृश्यन्ते इति ।—क्वचित् साङ्गे रूपकेऽपि आरोप्याः,—अध्यसनीयाः, उपमानानीति यावत्, श्लिष्टाः,—अनेकार्था इत्यर्थः, दृश्यन्ते ।

करमिति ।—चन्द्रोदयवर्णनमिदम् । अयं सुधांशुः,—चन्द्रः, अमरेशदिशः,—ऐन्द्रा दिशः, प्राच्या इत्यर्थः, गलितं—स्रस्तम, अपगतमित्यर्थः,—तमसां पटलं—समूह एव, अंशुकं—वस्त्रं यस्मात् तादृशे, उदयमहीधरः,—उदयाचलः एव, स्तनः तस्याग्रे—तदुपरि, करं—किरणमेव हस्तं, निवेश्य—निधाय, विकसितानि कुमुदान्येव ईक्षणानि—नयनानि यत्र तादृशं, मुखं विचुम्बति । अत्र अमरेशदिशि अङ्गनाऽऽरोपस्य सुधांशौ नायकारोपस्य च आर्थत्वात् एकदेशविवर्त्तित्वम् । पुष्पिताया वृत्तम् ।

श्लिष्टपरम्परितमिति ।—यत्र सादृश्यासम्भवेन विना आरोपणं वाक्यार्था सङ्गतिः, तत्रैव परम्परितं, यत्र च न तथा, तव साङ्गनिरङ्ग्योरवसर इति तात्पर्य्यम । पद्मोदयादेरेव—पद्मोदयादिशब्दस्यैव, द्वयोः,—रूप्यरूपकयोः, राजादिसूर्य्याद्योः इत्यर्थः । नन्वत्र शब्दसाम्यविवक्षावशात् प्रसिद्धतेजस्वितादिरूपसाम्यविवक्षाऽस्तु, "त्रैलोक्यमण्डपस्तम्भाः" इत्यादौ तु दीर्घत्वपीवरत्वादिसाम्यसम्भवेनात्र तन्मूलक एव स्तम्भत्वाद्यारोपः, तत् त्रैलोक्यादौ

मण्डपत्वाद्यारोपस्य तत्कारणत्वस्वीकारेण किम् ? इति चेत्, न स्तम्भा यथा मण्डपमारसहिष्णवः, तथा हरिवाहवः त्रैलोक्यभारसहिष्णवः इति साम्यस्यैव प्रकृते विवक्षितत्वात्, तच्च त्रैलोक्यादौ मण्डपत्वाद्यारोपं विना दुर्बोधम् ।

## लक्ष्मी

एतावता परम्परितरूपके एकदेशविवर्त्तिरूपसाङ्गरूपकच्छायामुपपाद्य सम्प्रति साङ्गरूपकेऽपि श्लिष्टशब्दनिबन्धनत्वरूपां परम्परितरूपकंच्छायामुपपादयितुमाह—**दृश्यन्ते** इति । साङ्गेऽपि न परम्परितरूपकमात्रे एव किन्तु साङ्गे रूपकेऽपीत्यर्थः, क्वचित् आरोप्या आरोपणीयोपमानप्रतिपादकाः शब्दाः श्लिष्टाः श्लेषमूला अनेकार्था दृश्यन्ते । तेन लक्षणादेर्लक्ष्यानुसारित्वादिदमपि स्वीकरणीयमेवेतिग्रन्थकर्त्तुराशयः ।

उदाहर्तुमुपक्रमते—**तत्रेति** । साङ्गेषु श्लिष्टेषु रूपकेषु मध्य इत्यर्थः ।

**करमुदयेति** । चन्द्रोदयवर्णनमिदम् । अयं सुत्रांशुश्चन्द्रः, अमरेशदिशः इन्द्राधिष्ठतायादिशः प्राच्यास्तद्रूपाया नायिकाया इति यावत्, गलितं स्वोदयादेव स्थानच्च्युतं तमः पटलम् अन्धकारसमूह एव अंशुकं वसनं यस्मात्तथोक्ते उदयमहीधर उदयाचल एवोन्नतपीवरत्वात् स्तनस्तस्याग्रै ऊर्ध्वभागे, करं किरणमेव करं हस्तम्, 'वलिहस्तांशवः करा इत्यमरः, निवेश्य स्थापयित्वा, विकसितानि स्वोदयेन प्रमोदेन च प्रकाशितानि यानि कुमुदानि तान्येव ईक्षणानि लोचनानि यत्र तत्तथोक्तम्, मुखमाद्यभाग एव मुखमाननम्, विचुम्बति स्पृशति विशेषेण स्वमुखेन संयोजयति च । पुष्पिताग्राछन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

अत्र नायकरूपसुधांशुरङ्गी तमः पटलांशुकगलनादीनि च तदङ्गतया प्रतिपिपादयिषितानीति साङ्गरूपकत्वम्, तथा तमः पटले अंशुकत्वाद्यारोपाणां शाब्दानाम्, अमरेशदिशि नायिकात्वारोपस्य सुधांशौ नायिकात्वारोपस्य चार्थत्वादेकदेशविवर्त्तित्वम्, करमुखयोः श्लिष्टत्वात् श्लिष्टशब्दनिबन्धनत्वम् । एवञ्च श्लिष्टशब्दनिबन्धनमेकदेशविवर्त्तिरूपं साङ्गरूपकमिति भावः ।

'दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके

इत्यत्र 'साङ्गेऽपि रूपके' इति साङ्गरूपकसामान्यप्रतिपादनात् तदन्तः पातिद्वयोरपि भेदयोः श्लिष्टशब्दनिबन्धनसमर्थत्वे एकदेशविवर्त्तिरूपं तत्प्रतिपाद्यसमस्तवस्तुविषयमप्युदाहर्त्तुकाम आह—**समस्तवस्तुविषयमिति** । अत्रैव 'करमुदय' इत्याद्युदाहरण एव । 'विचुम्बति इत्यादावंश इत्यर्थः । एवञ्च—

'विकसितकुमुदेक्षणं चुचुम्बे हरिदवलामुखमिन्दुनायकेन ।'

इत्येवं क्रमेणोत्तरार्द्धपाठकल्पन इत्यर्थः । एतादृशापाठे हि पूर्वोक्तनिमित्ततः सकलारोपस्य शब्दमात्रत्वात् श्लिष्टशब्दनिबन्धनं समस्तवस्तुविषयं साङ्गरूपकमलङ्कारो भवेदिति भावः ।

करादिशब्दस्य श्लिष्टत्वेन श्लिष्टपरम्परितशङ्कमुत्थाप्य निराकरोति—नचेति । अत्र 'करमुदय' इत्याद्युदाहृतपद्ये महीधरादौ स्तनत्वाद्योरोपं प्रति किरणादौ हस्तत्वाद्यारोपस्य कथमपि हेतुत्वात् श्लिष्टपरम्परितं रूपकमिति न च वाच्यमित्यर्थः । तत्र हेतुमाह—**अत्र हीति** । हि यतः । अत्र श्लिष्टपरम्परम्परिते राजादौ प्रतिपक्षिनृपादौ । दम्भोलितादिरूपणं वज्रत्वादीनामारोपः । सादृश्यासम्भवात् वज्रादिना साकं वर्णनीयस्य राजादेरित्यर्थः । असङ्गतमिति । अत्र तु न तथा महीधरादेः स्तनादिना सादृश्यस्य पीनत्वोञ्चात्वादिना सुव्यक्तत्वादिति शेषः ।

ननु यदि सादृश्यासत्त्वे एव परम्परितरूपकं तदा 'पद्मोदयदिनाधीश 'इत्यादावव्याप्तिरित्याक्षिपति—तर्हीति। परम्परितश्लिष्टपरम्परितमित्यर्थः। अव्याप्तिमुपपादयति—**राजादेरिति**। तेजस्वितेत्यादिशब्देन सर्वाभिभावितादेः परिग्रहः। सूर्यादिनेति सहार्थेयं तृतीया। सम्भवादिति। तथा च तेजस्वितादिहेतुकसादृश्येनैव राजादौ सूर्यत्वादीनामारोपस्य संयुक्ततया निमित्तान्तरापेक्षाभावादुभयारोपणं मिथः कार्यकारणभावाभावेन कथं 'पद्मोदय' इत्यादौ परम्परितरूपकमित्याक्षेप्तुराशयः। राजादेः सूर्यादिनेतिशेषः। प्रकृते पद्मोदयदिनाधीश' इत्यादौ। तत् सादृश्यमित्यर्थः। विवक्षितमिति। एवं सति मिथः संस्रवाभावेन पद्मोदयपदप्रयोगस्य उन्मत्तप्रलपितत्वापत्तेरित्याशयः। पद्मोदयादेरेव पद्मोदयादिपदार्थस्यैव न तु तेजस्वितादेरित्यर्तः। द्वयोः रूप्यरूपकयोः राजदिनाधीशाद्योः। साधारणधर्मतयेति अभेदार्थे तृतीया। **विवक्षितत्वादित। अत्रायम्भावः**—दिनाधीशो यथा प्रकाशविधानेन पद्मानामभ्युदयं विधत्ते वर्णनीयो राजापि तथैव प्रतिपक्षान् पराजित्य तद्द्रव्यादिग्रहणेन पद्माया अभ्युदयं सम्पादयति, इत्येव हि कवयित्रा विवक्षितोऽर्थः। अत एव च पद्मोदय एव द्वयोः रूप्यरूपकयोः राजदिनाधीशाद्योः साधारणधर्मः। एवं देवेन्द्रस्य दम्भोलिर्यथा पर्वतानुच्छेदितवान्, वर्णनीयो राजापि तथैव प्रतिपक्षान् उच्छेदयति, इत्येव च कवयित्रा विवक्षितोऽर्थः। अत एव च भू भृदुच्छेदनमेव द्वयो राजदम्भोल्योः साधारणधर्मः। तथा च पूर्वारोपमन्तरा परारोपो भवितुं नार्हतीत्यारोपाणामेव मिथः कार्यकारणभावसद्भावात् 'भूभृदावलिदम्भोलिः' पद्मोदयदिनाधीशः' इति द्वयोरपि श्लिष्टपरम्परितत्वे न काप्यनुपपत्तिरित्यवधेयम्।

सन्दर्भशेषमुपपादयति—**इह त्विति**। 'करमुदयमहीधरस्तनाग्रे' इत्यादिपद्ये त्वित्यर्थः। पीनोत्तुङ्गत्वादिनेत्यत्राभेदार्थे तृतीया। **सुव्यक्तमेवेतीति**। एवञ्च तथाविधं सादृश्यमेव महीधरादौ स्तनत्वाद्यारोपमवगमयतीति किरणादौ हस्तत्वाद्यारोपस्य तन्निमित्ततयापेक्षैव नास्तीति श्लिष्टपरम्परितं रूपकमित्यर्थः। तथा च यत्र आरोपो विवक्षितसादृश्यासम्भवेनान्यमारोपमपेक्षते तत्र परम्परितम्, यत्र तु स्वोत्पत्तौ केवलसादृश्यमपेक्षते तत्र साङ्गं रूपकमितिध्वनितम्।

## रुचिरा

एवं निरङ्गे विशेषं दर्शयित्वा साङ्गे विशेषं निर्देष्टुमाह—**१०८ क्वचित्**। **साङ्गे** सावयवे। **रूपके**। **अपि**। **श्लिष्टाः** श्लेषमूलाः। **आरोप्याः**। **दृश्यन्ते** ॥ ८६ ॥

उदाहर्त्तुमुपक्रमते—**तत्र** साङ्गेषु श्लिष्टेषु रूपकेषु मध्ये इति यावत्। **एकदेशविवर्त्ति**। **श्लिष्टम्**। **यथा**। **मम**—'**अयम्**। **सुधांशुः**। **गलिततमः पटलांशुके** गलितं स्थानाच्च्युतं तमः पटलांशुकं यस्य तस्मिन्निति तथोक्ते। तमसां पटलं पुञ्ज एवांशुकमिति तमः पटलांशुकम्। **उदयमहीधरस्तनाग्रे** उदयमहीधर उदयाचल एव स्तनस्तस्याग्रं तस्मिन् तदुपरीति भावः। **करं** किरणं तद्रूपं हस्तमिति भावः। 'बलिहस्तांशवः कराः।' इत्यमरः। **निवेश्य** स्थापयित्वा। **अमरेशदिश** इन्द्राधिष्ठिताया दिशः प्राच्यास्तद्रूपाया नायिकाया इति यावत्। **विकसितकुमुदेक्षणं** विकसितानि यानि कुमुदानि तान्येवेक्षणानि नयनानि यत्र तादृशम्। **मुखम्**। **विचुम्बति**। विशेषेण चुम्बति। पुष्पिताग्रावृत्तम्। अत्रामरेशदिशि नायिकात्वारोपस्य सुधांशौ नायकत्वारोपस्यार्थत्वादेकदेशविवर्त्ति करादेः श्लिष्टत्वात् श्लेषनिबन्धनं चेदम् ॥ ११६ ॥'

समस्तवस्तुविषयमुदाहर्तुकाम आह—**समस्तेत्यादि**। स्पष्टम्। अत्र हि आरोपस्य शब्दमात्रत्वात् समस्तवस्तुविषयत्वम्।

श्लिष्टपरम्परिततोऽस्य भेदं दर्शयितुमाह-**न च**। **अत्रास्मिन्नुदाहृते पद्ये**। **श्लिष्टपरम्परितम्**। 'शङ्क्य'मिति शेषः। **हि** यतः। तत्र श्लिष्टपरम्परिते। **'भूभृदावलिदम्भोलिः' इत्यादौ**। **राजादौ**। **पर्वतत्वाद्यारोपम्**। **विना**। **वर्णनीयस्य**। **राजादेः**। **दम्भोलिताऽऽदिरूपणं** वज्रत्वादिना निरूपणम्। **सर्वथा**। **एव**। **सादृश्याभावात्**। **असङ्गतम्**। 'अत्र तु न तथा, महीधरादेः स्तनादिना सादृश्यस्य पीनत्वोञ्चत्वादिना सुव्यक्तत्वा'दिति शेषः। **कथम्**। **तर्हि**। **'पद्मोदयदिनाधीशः' इत्यादौ**। **परम्परितं** श्लिष्टपरम्परितम्। हेतं निर्दिशति—**राजादेः**। **सूर्य्यादिना**। सहार्थेयं तृतीया। **तेजस्विताऽऽदिहेतुकस्य**। **सादृश्यस्य**। **सम्भवात्**। **इति**। **न**। **वाच्यम्**। तथा **हि**। **राजादेः**। 'सूर्य्यादिने' ति शेषः। **तेजस्विताऽऽदिहेतुकम्**। **सादृश्यम्**। **सुव्यक्तम्**। **नतु**। **प्रकृते** पद्मोदयदिनाधीश' इत्यादावित्यर्थः। तत् सादृश्यमित्यर्थः। **विवक्षितम्**। **पद्मोदयादेः** पद्मोदयादिपदार्थस्य। एव 'नतु तेजस्विताऽऽदे'रिति शेषः। **द्वयो** राजादिदिनाधीशाद्योः। **साधारणधर्म्मतया**। अभेदार्थेयं तृतीया। **विवक्षितत्वात्**। **इह** 'करमुदयमहीधरस्तनाग्रे, इत्यत्र। **तु**। **महीधरादेः**। **स्तनादिना**। **पीनत्वोत्तुङ्गत्वादिना**। अभेदार्थेयं तृतीया। **सादृश्यम्**। **सुव्यक्तम्**। 'विवक्षित'मिति शेषः। **एव**। **इति**। **श्लिष्टपरम्परितम्**। **न**। अयम्भावः—'पद्मोदयदिनाधीश' इत्यादौ पद्मोदयादिशब्दानां द्वयर्थतया श्लेषमहिम्ना पद्मोदयादौ (लक्ष्मीसञ्चयादौ) पद्मोदया (कमलविकासा) द्यारोपो राजादौ दिनाधीशत्वाद्यारोपस्य निमित्तभूतमिति पद्मोदयादिप्रकारकदिनाधीशादे राजादावन्वयात् पद्मोदयादी राजादिदिनाधीशाद्योः साधारणो धर्म्मः, अत एतत्कारणकमेव सादृश्यं विवक्षितम्, नतु तथाऽत्राऽपि। यदि च तत्रापि तेजस्विताऽदि हेतुकमेव नतु पद्मोदयादिश्लेषमूलकसादृश्यविवक्षिष्यत, तदाऽत्रेव न तत्रापि श्लेषपरम्परितं समभविष्यत्। नच प्रकृते, महीधरादिना हि स्तनादेर्यत् साधर्म्य विवक्षितम्, तत् पीनत्वोत्तुङ्गादिनिमित्तकमश्लिष्टम्, न चारोपान्तरोत्थापितम्। इति महान् विशेषः। इति दिक्। अत्राहुस्तर्कवागीशाः—'नन्वत्र शब्दसाम्यविवक्षावशात् प्रसिद्धतेजस्वितादिरूपसाम्यविवक्षायास्तु, 'त्रैलोक्यमण्डपस्तम्भा' इत्यादौ तु दीर्घत्वपीवरत्वादिसाम्यसम्भवेनात्र तन्मूलक एव स्तम्भत्वाद्यारोपोऽस्तु त्रैलोक्यादौ मण्डपत्वाद्यारोपस्य तत्कारणत्वस्वीकारेण किमिति चेत्, न। स्तम्भा यथा मण्डपभारसहिष्णवः, तथा हरिबाहवस्त्रैलोक्यभारसहिष्णव इति साम्यस्यैव विवक्षितत्वात। तञ्च त्रैलोक्यादौ मण्डपत्वाद्यारोपं विना दुर्बोधम्।' इति।

क्वचित्समासाभावेऽपि रूपकं दृश्यते—

**'मुखं तव कुरङ्गाक्षि ! सरोजमिति नान्यथा ।।'**

क्वचिद्वैयधिकरण्येऽपि यथा—

**'विदधे मधुपश्रेणीमिह भ्रूलतया विधिः ।।'**

क्वचिद्वैधर्म्येऽपि—

**'सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण-**
**ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा ।**
**यैरेषापि दुराशया कलियुगे राजावली सेविता**
**तेषां शूलिनि भक्तिमात्र सुलभे सेवा कियत्कौशलम् ।।'**

इदं मम । अत्र केषांचिद्रूपकाणां शब्दश्लेषमूलत्वेऽपि रूपकविशेषत्वादर्थालंकारमध्ये गणनम् । एवं वक्ष्यमाणालंकारेषु बोध्यम् ।

**अधिकारूढवैशिष्ट्य रूपकं यत्त देव तत् ।**

तदेवाधिकारूढवैशिष्ट्यसंज्ञकम् । यथा मम—

**'इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः**
**इमे नेत्रे रात्रिंदिवमधिकशोभे कुवलये**
**तनुर्लावण्यानां जलधिरवगाहे सुखतरः ।।'**

अत्र कलङ्कराहित्यादिनाधिकं वैशिष्ट्यम् ।

---

## विवृति

**समासाभावेऽपीति** । अत एव दण्डिना व्यस्तं समस्तं व्यस्तसमस्तं चेति त्रिविधं रूपकमुक्तम् । **विदध इति** । 'भ्रूलतया' इत्यभेदे तृतीया । अन्यथा तादात्म्यारोपो न स्यात् ।। **सौजन्येति** । सुचरितमेवालेख्यं चित्रम्, द्युभित्तिराकाशकुड्यम् । सरलता कौटिल्यराहित्यमेव दाक्षिण्यम् । तस्या योगे श्वपुच्छच्छटा कुक्कुरलाङ्गूलकुण्डली । भक्तिमात्रसुलभे केवलयापि भक्त्या प्राप्ये ।।

**अत्र केषांचिदिति** । साधनस्य श्लेषस्य शब्दालंकारत्वेऽपि साध्यत्वेन प्रधानस्यार्थालंकारमध्ये गणनमिति भावः । वक्ष्यमाणानां श्लेषापह्नवादीनाम् ।। अधिकारूढवैशिष्ट्यं रूपकमाह—**अधिकारूढेति** । अधिकमत्यर्थमारूढं वैशिष्ट्यं विशेषणं यत्र तदित्यर्थः ।। सुधाधाराधार इति बिम्बस्य विशेषणम् । 'कलङ्कराहित्यादिना' कलङ्करहितत्वादिविशेषणं चन्द्रादेरत्यन्तासंभवीति तत्र तदारोपणादधिकारूढवैशिष्ट्यम् । 'कलङ्कराहित्यादिना' इत्यभेदे तृतीया ।

## विवृतिपूर्तिः

**वैशिष्ट्यमिति**। अत्रेदमप्यनुसंधेयम्—'विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत्। रूपकं तात्रिधाऽऽधिक्यन्यूनत्वानुभयोक्तिभिः ॥ (१) अयं हि धूर्जटिः साक्षाद् येन दग्धाः पुरः क्षणात्। (२) अयमास्ते विना शंभुस्तार्त्तीयीकं विलोचनम् ॥ (३) शंभुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम्। (४) अस्य मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना ॥ (५) साध्वीयमपरा लक्ष्मीरसुधासागरोदिता। (६) अयं कलङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यते ॥' इति। इहोपमेयस्य राज्ञो विषयस्य पूर्दग्धृत्वविशेषणेन तस्मिन्नपमानस्य भगवतो धूर्जटेर्विषयिणोऽभेदरूपणात्, उपमानस्योपमेये न्यूनाधिकभावावर्णनाच्च **प्रथममनुभयाभेदरूपकम्**। तार्त्तीयीकविलोचनहानोक्त्या न्यूनतापादनेन द्वितीयं **न्यूनाभेदरूपकम्**। 'तीयादीकक् स्वार्थे वाच्यः' इति वार्तिकेन तृतीयार्थे ईकक् ॥ समदृष्टितास्वीकारेण विश्वावनोक्त्या भगवतो राजन्याधिक्यलाभात्तृतीयमधिकाभेदरूपकम्। अत्र समदृष्टिपदं श्लिष्टम् ॥ एवमस्या मुखेन्दुसत्त्वे प्रसिद्धेन्दोरनावश्यकत्वमापाद्य मुखेन्दोश्च नेत्रानन्दजनकत्वरूपप्रसिद्धेन्दुकार्यकर्तृत्वमात्रनिबन्धनेन न्यूनत्वाधिकत्वयोरनुपादानादनु**भयताद्प्यरूपकं** चतुर्थम् ॥ भगवत्यां लक्ष्म्याम् परेति विशेषणयोगत्ताद्रूप्यमात्रं सुधासागरोत्पत्तिमत्त्ववैकल्यं च दर्शितमिति **न्यूनताद्प्यरूपकं** पञ्चमम् ॥ अत्र काव्यालंकारसूत्रेषु **वामनः**—'एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः ॥' एकस्य गुणस्य हानेः कल्पनायां शेषैर्गुणैः साम्यं यत्तस्य दार्ढ्यं विशेषोक्तिः। रूपकं चेदं प्रायेणेति। यथा—'भवन्ति यत्रौषधयो रजन्यामतेलपूराः सुरतप्रदीपाः ॥' 'द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम् ॥' 'निद्रेयमकमलालक्ष्मीः ॥' 'हस्ती हि जङ्गमं दुर्गम् ॥' अत्रापि जङ्गमशब्दस्य स्थावरत्वनिवृत्तिप्रतिपादकत्वादेकगुणहानिकल्पनैव। एतेन 'वेश्या हि नाम मूर्तिमत्येव निकृतिः।' 'व्यसनं हि नाम सोच्छ्वासं मरणम्।' 'द्विजो भूमिबृहस्पतिः।' इत्येवमादिष्वेकगुणहानिकल्पना व्याख्याता ॥ अथ, प्रसिद्धचन्द्रान्मुखचन्द्रस्य दोषराहित्यरूपाधिक्यवर्तनादधिकताद्रूप्यरूपकं षष्ठमिति **कुवलयानन्दे** ॥ अथात्र रूपके 'द्विर्भावः पुष्पकेतो, र्विबुधविटपिनां पौनरुक्त्यं, विकल्पश्चिन्तारत्नस्य, वीप्सा तपनतनुभुवो, वासवस्य द्विरुक्तिः। द्वैतं देवस्य दैत्याधिपमथनकला केलिकारस्य, कुर्वन्नानन्दं कोविदानां, जगति विजयते श्रीनृसिंह-क्षितीन्द्रः ॥' इति **चित्रमीमांसादत्तं** परिणामोदाहरणं केचिन्निक्षिपन्ति। केचित्पुनरिदमेवं परिवर्तयन्ति—'द्विर्भावः कमलापतेर्भगवतो, वीप्सा तुषारद्युतेर्द्वैतं भानुमतो, द्विरुक्तिरमरक्षोणीरुहाणां परा। वैकल्प्यं कलिकल्मषापहरणस्वराज्यचिन्तामणेः, श्रीमान् **पञ्चमजार्ज** एष सुकृती सम्राण्महेन्द्रायते ॥' इति ॥

## विज्ञप्रिया

उक्तरूपकाणामेवान्तरविशेषान् प्रपञ्चयति—**क्वचित्त्विति**। "राजमण्डलराहवे" इत्यादिषु सर्वत्र समास एव तस्य दर्शितत्वात्। **मुखं तवेति**। स्पष्टम्। वैयाधिकरण्ये विभिन्नविभक्तिकत्वे। **विदधे** इति। तथा चात्र भ्रूलतया हेतुना मधुपश्रेणीं विधिर्विदधे इत्यर्थः। भ्रूलतां विधातुं मधुपश्रेणीं विदधे इति पर्य्यवसितोऽर्थः। इच्छाद्वारा भ्रूलतायास्तद्विधानहेतुत्वात्।

**क्वचिद् वैधर्म्येऽपि** इति। अत्र रूप्यरूपकयोर्विरुद्धधर्मो नाऽर्थः। किन्तु निर्दिष्टं यत्साधर्म्यं तदभाववत्त्वमेवात्र वैधर्म्यम्। **सौजन्याम्बिति**। अत्र कलियुगे यैर्दुराशया एषा राजावली नृपश्रेणी सेविता भक्तिमात्रसुलभे शूलिनि तेषां सेवाकियत् कौशलम्। राजावली कीदृशी? सौजन्यरूपस्याम्बुनो मरुस्थली। अत्राभिन्नत्वेन निर्दिष्टयोः सौजन्याम्बुनोरुभयधर्मता इति। तयोरभावत्वमेव द्वयोर्मरुराजावल्योर्यथोक्तं वैधर्म्यम्। एवमुत्तरोत्तरं बोध्यम्। सुचरितरूपं यदालेख्यं वस्तु, तस्य द्युरूपा गगनरूपाभित्तिराश्रयः। गुणरूपायाः ज्योत्स्नायाः कृष्णचतु-

र्दशी। सरलतायोगश्वपुच्छच्छटा। अत्र छटापदं स्वरूपार्थकम्। तथा सरलतायाः योगस्य सम्बन्धस्य कुक्कुरपुच्छस्वरूपेत्यर्थः। सर्वत्र निर्दिष्टधर्माभावो बोध्यः।

रूपकान्तरमाह—**अधिकेति**। रूप्यमाणेन व्यक्तिविशेषेणाऽपरप्रसिद्धतत्सजातीयतोऽधिकमारूढं वैशिष्ट्यं तदित्यर्थः। तदेव तन्नामकमेव। **इदं वक्त्रमिति**। कलङ्कविरहो वैशिष्ट्यं रूप्यमाणशशधरव्यक्तिविशेषेण आरूढम्। एवमुत्तरत्र सुधाधाराया आधारोऽधरश्चिरकालस्थमेव परिणतं पक्वं बिम्बम्। अत्र पक्वस्य चिरकालस्थितिर्वैशिष्ट्यम्। परार्द्धं स्पष्टम्। एवं च—

**"असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।**
**कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साऽथ वयः प्रपेदे॥"**

इत्यत्रायमप्यलङ्कारो मालारूपो बोध्यः। असम्भृतत्वानासवाख्यत्वपुष्पभिन्नत्वरूपवैशिष्ट्यारोहणात्।

## लोचन

समासाभावेऽपि रूपकमुदाहृतमपि स्पष्टप्रतिपत्तये पुनरुदाहरति-**मुखमिति**। विदध इत्यादौ तव भ्रूलता मधुपश्रेणी इत्यर्थः।

वैधर्म्येण, वैपरीत्येन, समानधर्मरूपताऽनापन्नेन। सरलता, सन्मार्गता, वक्रताविरहश्च। अत्र वैधर्म्येण परम्परितरूपकम्।

ननु पद्मोदयेत्यादौ परम्परितादेः शब्दान्वयव्यतिरेकानुविधायित्वात्कथं वाऽर्थालङ्कारमध्ये गणनमित्यत आह—**अत्रेति**। शब्दश्लेषमूलत्वेऽपि शब्दद्वयर्थतायाः शब्दान्वयव्यतिरेकानुविधानप्रयोजकत्वादुक्तरीत्या यद्यपि शब्दालङ्कारतैवोचितेति भावः। वक्ष्यमाणालङ्कारा विरोधादयः। वक्ष्यमाण इत्युपलक्षणम्। तेन उक्तायां शब्दसाधारणधर्मायामुपमायामपि ज्ञेयमिति शेषः।

अधिकारूढं वैशिष्ट्यं विशेष अर्थादारोप्यमाणादारोपविषयस्य यत्रेत्यर्थः। अवगाहे सुखतर इत्यत्र लवणोदधिर्मकरतरङ्गलवणादिसद्भावादवगाहकानां सुखावहो न भवतीत्याशयः। अधिकं वैशिष्ट्यमर्थात् सुखादेः। प्रस्थानान्तरे चेदमेक गुणहानौ विशेषोक्तिरिति।

**"असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।**
**कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे॥"**

इहाऽसम्भृतं मण्डनमित्यत्र केचिदाहुर्विभावनाख्योऽलङ्कार इति, तन्न। न खलु सम्भरणपुष्पे मण्डनास्त्रयोः कारणे, किन्तु तत्स्वरूपे। अन्ये त्वाहुः, परिणामोऽयमिति। तदप्यसत्, तत्कार्य्यस्य शरीरशोभाकरणस्य मदनोद्दीपनस्य च प्रस्तुतत्वेन केनचिद् अनुसन्धीयमानत्वाभावात्। राघवानन्दमहापात्रास्त्वाहुः—अधिकारूढवैशिष्ट्यं रूपकमिदमिति। तदपि चिन्त्यम्। आरोपविषयस्यारोप्यमाणात् केनचिदंशेन वैशिष्ट्यस्यैतत्प्रयोजकत्वात् तत्स्वरूपत्वम्। तेनात्र 'अयं राजा अपरः पाकशासनः' 'अन्यदेवाङ्गलावण्यम्' इत्यादिवद् अतिशयोक्तिरेव भवितुं युक्तेति मामकः पक्षः। अध्यवसायस्य स्फीततयानुभूयमानत्वात्। रूपकस्य च आरोपमूलत्वात्।

## कुसुमप्रतिमा

इदानीं रूपकस्य विषयविशेषेषु कादाचितकं सद्भावं क्रमादाह क्वचिदिति। प्रायेण सर्वत्रैव समासद्भावे, क्वचित् समासाभावेऽपीत्यर्थः। एतेन "समस्तं व्यस्तमुभयं सविशेषणमित्यपि" इति सरस्वतीकण्ठाभरणादौः व्यस्तसमस्तयोः सामान्यतोऽभिधानं कटाक्षितमिति बोध्यम्। एवमुत्तरत्रापि।

मुखमिति। "अधरः पल्लवदलं मृणालञ्च भुजद्वयम्॥" इति मत्पूरितपरार्द्धम्।

अत्र समासाभावेऽपि मुखे सरोजत्वारोपात् निरङ्गं केवलं रूपकम्।

क्वचिदिति। वैयधिकरण्यमत्र भिन्नविभक्तिकत्वम्। अतश्च "भ्रूलतयेत्यभेदे तृतीया अन्यथा तादात्म्यारोपो न स्यात्।" इति सूष्ठूक्तं तर्कवागीशेन।

विदध इति। "नवं सरसिजं फुल्लं चकार वदनेन यत्।" इति मत्पूरितपूर्वार्द्धमं।

विधिर्विधाता इह वदनसरसिजे भ्रूलतया मधुपश्रेणीं भ्रमरपङ्क्तिं विदधे निर्म्ममौ। अत्रापि भिन्नविभक्तिकपदोपस्थाप्यायां भ्रूलतायां मधुपश्रेणीत्वारोपात् निरङ्ग केवलं रूपकम्।

अवच्छेदभेदेनैकस्यानेकधा रूपणेऽपि रूपकमेव। यथा मम विराजसरोजिनीनाटिकायाम्—

**"शशिकला सकला तनुमण्डले नयनयोरनयोरसितोत्पले।**
**विकसितञ्च सितं कमलं मुखे समुदये च सुवर्णलता मता॥"**

सौजन्येति। सौजन्यं सज्जनतैव अम्बु जलं तत्र मरुस्थली मरुभूमिः, मरुभूमिर्यथा जलशून्या राजावल्यपि तथैव सौजन्यशून्येति भावः। सूचरितं सच्चरित्रमेव आलेख्यं चित्रं तत्र द्युभित्तिराकाशभित्तिः, आकाशे यथा चित्रं कर्त्तुं न शक्यते राजावल्यामपि तथैव सुचरितमुदाहर्त्तुं न शक्यते इत्याशयः। गुणो दयादाक्षिण्यादिरेव ज्योत्स्ना तव कृष्णा कृष्णपक्षीया चतुर्द्दशी; कृष्णचतुर्द्दश्यां ज्योत्स्ना यथा उदितमात्रैव विलुप्यते न तु लोकेदृश्यते। राजावल्यामपि दयादाक्षिण्यादिर्गुणस्तयैव उदितमात्र एव विलुप्यते, न पुनर्लोकैरनुभूयत्र इत्यभिप्रायः। गुणः खलु राजावल्यां मानुषस्वभावात् कदाचित् किञ्चिदुतपद्यत एव न तु तिष्ठतीति सूचनाय अमावस्येत्यनुक्ता चतुर्दशीत्युक्तम्। सरलतायोगे ऋजुतासम्पर्के सरलव्यवहार इत्यर्थः। श्रृपुच्छच्छटा कुक्कुरलाङ्गुलस्वरूपा, कुक्कुर्लाङ्गुल इव राजावल्या सरलताया लेशोऽपि नास्तीति भावः। एषा एवम्भ तापि कलियुगे राजावली कलियुगीयनृपतिश्रेणी, दुराशया दुष्टधनलाभलोभेन यैः सेविता, तेषां जनानां भक्तिमात्रेणैव सुलभे शूलिने महादेवे महादेवस्येत्यर्थः मेवा आराधनं कियत् कौशलं कीदृक्कौशलसाध्या? अपि तु कौशलसाध्यैव न अतीवानायासमांध्यैवेत्यर्थः। अतस्तादृशराजावलीसेवामपहाय शूलिसेवैव विधेयेति भावः।

अत्र मरुस्थल्याम्बुनः द्युभित्तावालेख्यस्य, कृष्णचतुर्द्दश्यां ज्योत्स्नायाः, श्वपुच्छे च सरलतायाः, असम्भवान्मरुस्थल्यादिषु अम्बप्रभृतीनां विधर्म्मत्वमुन्नेयम्। तेन प्रथमविशेषणत्रये अश्लिष्टशब्दनिबन्धनं मालारूपं परम्परितरूपकम्; चतुर्थविशेषणे च निरङ्ग केवलं रुपकम्।

ननु "राजमण्डलराहवे" इत्यादीनां श्लिष्टपरम्परितरूपकाणां "करमुदयमहीधरस्तनाग्रे" इत्यादौनाञ्च श्लिशटशब्दनिबन्धनानां साङ्गरूपकाणां शब्दश्लेषघटित्वात् शब्दालङ्कारमध्य एव गरनमुचितमित्याह अत्र चेति। रूपकविशेषत्वादर्थालङ्कारतया प्रसिद्धस्य रूपकस्य प्रकारविशेषत्वात्। तथा च अवयविनोऽर्थालङ्कारतया प्रसिद्धौ तदवयवविशेषस्यापि अर्थालङ्कारतयैव प्रसिद्धेरौचित्यात् सुधीसमाजे कस्यचिन्मुर्स्वस्यापि सुधीत्वेनेवेति भावः।

एतेन श्लिष्टपरम्परितरूपकादो शब्दार्थोभयालङ्कारत्वमेव वास्तविकमिति सूचितम् । सरस्वतीकण्ठाभरणे त्वमीषामुभयालङ्कारत्वेनैव गणनं दृश्यते । यथा—

**"शब्देभ्यो यः पदार्थेभ्य उपमादिः प्रतीयते ।**
**विशिष्टोऽर्थः कवीनां स उभयालङ्क्रया मता ।।**

उपमा रुपकं साम्यं संशयोक्तिरपह्नुतिः ।" इत्यादि ।

एवमिति । वक्ष्यमाणेषु श्लेषमूलकेषु अपन्हुतिव्यतिरेकादिषु । इदमुपलक्षणम् । उक्तायां शब्दश्लेषमूलायां पूर्णोपमायामप्येवं बोद्धव्यम् । तेन सरस्वतीकण्ठाभरणे उपमापदं पूर्णोपमापरम् ।

निरुक्तभेदसमुदायविलक्षणम् अधिकारूढवैशिष्टयं नाम रूपकं तदेव लक्षयति अधिकेति । यद् रूपक अधिकमत्यन्तम् आरूढं स्वस्मिन्नधिरूढं वैशिष्ट्यं चमत्कारिता यस्मिन्, तत्तादृशं भवति; तद् रूपकं तदेव अधिकारूढवैशिष्टयसंज्ञकमेव भवतीत्यर्थः । उपमाने उपमेये वा सन्तमपि यं कञ्चिद्धर्म्मवराप्य असन्तमपि च यं कञ्चिर्द्धर्म्ममारोप्य वा रूपण एवेदं वैशिष्टयमधिकमारूढं भवतीति द्रष्टव्यम् ।

इदमिति । इदमवलोक्यमानं नायिकाया वक्तं मुखम्, विरहितकलङ्कः साक्षात् सन्निधानप्रत्यक्षगोचरः शशधरश्चन्द्रः । सुधाधाराया अमृतप्रवाहस्य आधार आश्रयः अधर ओष्ठः, चिरपरिणतं चिरमेव परिपक्वं बिम्ब बिम्बफलम् । इमे दृश्यमाने नेत्रे, रात्रिन्दिवमहोरात्रमेव अधिका शोभा ययोस्तादृशे कुवलये नीलोत्पलद्वयम् । तथा तनुर्देहः अवगाहे अवगाहने सुखतरः सातिशयसुखजनकः लावण्यानां जलधिः समुद्रः ।

अत्रेति । आदिपदेन सुधाधाराधारत्वादेर्ग्रहणम् । तथा च उपमाने शशधरे सन्तमपि कलङ्कमवरोप्य मुखे तस्य रूपणम् । अधरे उपमेये असन्तमपि सुधाधाराधारत्वधर्म्ममारोप्य, तथा जन्मनश्चिरात् परमेव परिणतियोग्ये विम्बे उपमाने असन्तमपि चिरपरिणतत्वधर्म्मञ्चारोप्य तत्र तस्य रूपकम् । तथा रात्रावेवाधिकशोभे कुवलये उपमाने असन्तमपि रात्रिन्दिमधिकशोभत्वधर्म्ममारोप्य नेत्रे तस्य रूपणम् । एवमुपमाने जलधौ असन्तमपि लावण्यसम्बन्धमारोप्य तनौ तस्य रूपणम्। कण्ठाभरणकारस्तु "परम्पराऽथ रशना माला रूपकरूपकम्" इत्याचक्षाणो रशनारूपकं नाम रूपकान्तरमङ्गीकुर्वन्निदमुदाजहार—

**"किशलयकरैल तानां करकमलैमृगदृशां जगज्जयति ।**
**नलिनीनां कमलमुखै मुखेन्दुभिर्योषितां मदनः ।।"**

काव्यप्रकाशकारस्तु—"इत्यादि रशनारूपकं वैचित्रयवदिति न लक्षितम्" इत्यभिदधानस्तदिदं न मन्यते । दपणकारस्थाप्यत्र तूष्णीम्भावादिदमनभिमतमेवेति मन्तव्यम् ।

## विमला

समासाभावेऽपीति ।—अत एव दण्डिना व्यस्तं, समस्तं, व्यस्तसमस्तं चेति त्रिविधं रूपकमुक्तम् ।

मुखमिति ।—उत्तरार्द्धं त्वस्य "त्वं पुनः सरसी साक्षात् एतन्मधुकरावलिः ।।" इति । यथा वोदाहृतं गङ्गाधरकृता—"धर्मस्यात्मा भागधेयं क्षमायाः सारः सृष्टे ! जीवितं शारदायाः । आज्ञा साक्षात् ब्रह्मणो वेदमूर्त्तेराकल्पान्तं राजतामेष राजा ।।"

वैयधिकरण्ये इति ।—उपमानोपमेययोर्भिन्नविभक्तिकत्वे इत्यर्थः ।

उदाहरति, विदधे इति ।—विधिः,—विधाता, इह—अस्या नायिकायां, भ्रूलतया [इत्यभेदं तृतीया, अन्यथा तादात्म्यारोपो न स्यात्] मधुपश्रेणी—भ्रमरावलीं, विदधे । अत्र भ्रूलतायां व्यधिकरणायां मधुपश्रेण्यारोपः ।

वैधर्म्ये इति ।—विरुद्धधर्मसद्भावे इत्यर्थः ।

उदाहरति, सौजन्येति ।—सौजन्यमेव अम्बु—जलं, तस्य मरुस्थली— मरुभूमिः, सौजन्यहीनेत्यर्थः, सुचरितं—साधुचरितम्, एव, आलेख्य—चित्रकर्म, तस्य द्युभित्तिः,—आकाशरूपकुड्यं, सच्चरित्रताशून्येत्यर्थः, दुश्चरित्रेति भावः, गुणाः—गाम्भीर्यौदार्यादयः एव, ज्योत्स्नाः तासां कृष्णचतुर्दशी—गुणशून्या इत्यर्थः, सरलतायाः,—ऋजुतायाः, योगः,—सद्भावः, तस्य श्वपृच्छच्छटा—कुक्कुरलाङ्गूलकुण्डलौ, कुक्कुरलाङ्गुलं यथा शतशो मर्दनेऽपि सरलत्वं न गच्छति, तद्वत् बहुश उपास्यमानाऽपि स्वभावकुटिला इति भावः, एषा—ईदृशी अपि, राजावली—राजसमूहः, यः,—जनैरित्यर्थः, कलियुगे दुराशया—दुष्टधनतृणाया, सेविता—उपासिता, तेषां भक्तिमात्रसुलभे—केवलमात्रभक्तिलभ्ये, शूलिनि—शम्भौ, सेवा कियत् कौशलम् ?—किं नैपुण्यम् ? आशुतोषाराधनं न तेषां किमप्यायासकरमिति भावः। इह राजावल्यां मन मरुस्थल्याद्यारोपः सौजन्याम्बुशालित्वादिसाधर्म्यस्यासद्भाववशात् वैपरीत्येनाभिहितः । शार्दूलविक्रीड़ितं वृत्तम् ।

अत्र च केषाञ्चिदिति ।—शब्दश्लेषमूलत्वेऽपि—साधनस्य श्लेषस्य शब्दालङ्कारत्वेऽपि, रूपकविशेषत्वात्—रूपकस्य प्राधान्यात्, साध्यत्वेन प्रधानस्य अर्थालङ्कारमध्ये गणनमिति भावः । वक्ष्यमाणालङ्कारेषु—श्लेषापह्नवादिषु इत्यर्थः ।

अधिकारूढ़वैशिष्ट्यं रूपकमाह, अधिकेति ।—यत् रूपकम्, अधिकम्—अत्यर्थम्, आरूढं—प्राप्त, वैशिष्ट्य—वैचित्रयं, विशेषणमित्यर्थः, यत्र तत् तादृशमित्यर्थः, तत्—रूपकं, तदेव—अधिकारूढ़वैशिष्टयनामकम् ।

उदाहरति, इदमिति ।—इदं—दृश्यमानमित्यर्थः, वक्रं—मुखं, साक्षात्—प्रत्यक्षं, स्वयमित्यर्थः, विरहितकलङ्कः,—निष्कलङ्कः, शशधरः,—चन्द्रः, सुधाधाराणाम्—अमृतधाराणाम्, आधारः,—पास्पदम्, अधरः,—अधरोष्ठः, चिरपरिणतं—सम्यक्परिपक्वं, विम्ब—फलविशेषः, इमे—परिदृश्यमाने इत्यर्थः, नेत्रे रात्रिन्दिवम्—अहर्निशम्, अधिकशोभे—अधिकशोभाशालिनी इत्यर्थः, कुवलये—नीलोत्पलयुगले, ("नीलोत्पलं कुवलयम्" इत्यमरः) तनुः,—शरीरं, लावण्यानां—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । दृश्यमानं यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्युक्तलक्षणानां कान्तिविशेषाणामित्यर्थः, जलधिः,—समुद्रः, परम् अवगाहे—अवगाहनविषये, सुखतरः,—अतिसुखप्रद इत्यर्थः । अत्र शिखरिणी छन्दः ।

अत्र कलङ्केति ।—अत्र मुखादीनां निष्कलङ्कत्वादिना शशधराद्यपेक्षया आधिक्येन वैशिष्ट्यं,चन्द्रादेः अत्यन्तासम्भवस्य कलङ्करहितत्वादिविशेषणस्य तत्रारोपणात् । ["कलङ्कराहित्यादिना" इत्यभेदे तृतीया] आदिपदेन च सुधाधाराधारत्वादीनां ग्रहणं स्वयमूह्यम् ।

## लक्ष्मी

सम्प्रति रूपकस्य स्थलविशेषेषु क्वाचित्कमुपलम्भं दर्शयितुमाह—त्वचिदिति । सर्वत्रैव प्रायेण समासत्त्वे रूपकं दृश्यते क्वचिदुदाहरिष्यमाणे समासाभावेऽपि रूपकं दृश्यते इत्यर्थः । एतेन 'व्यस्तं समस्तं

व्यस्तसमस्तञ्चे'ति रूपकस्य त्रैविध्यं प्रदर्शयतो दण्डयादेः व्यस्तसमस्तयोः सामान्यतः प्रतिपादनमाक्षिप्तमित्यवगन्तव्यम्।

मुखमिति। 'कुड्मलाग्रसमा दन्ता ओष्ठो बिम्बफलं यथा' इतिमत्पूरितोत्तरार्द्धम्।

अत्र समासाभावेऽपि मुखे सरोजत्वारोपात् निरङ्गं केवलं रूपकम्।

एवं सामानाधिकरण्ये उदाहृत्य वैयधिकरण्येऽप्युदाहर्त्तुमाह—त्वविदिति। विभिन्नमधिकरणं व्यधिकरणं तस्य भावो वैयधिकरण्यं भिन्नविभक्तिकत्वमित्यर्थः तत्रापि रूपकं दृश्यत इति शेषः। अत एवोक्तमत्र **विवृतिकारेण** 'भ्रूलतयेत्यभेदे तृतीया अन्यथा तादात्म्यारोपो न स्यात्' इति।

**विदधे** इति। विधिः सृष्टिनिर्माता इह नायिकायां वदनपङ्कजे भ्रूलतायां मधुपश्रेणीं भ्रमरपङ्क्तिं विदधे निर्मितवान्। अत्रापि व्यधिकरणपदोपस्थाप्यायां भ्रूलतायां मधुपश्रेणीत्वारोपात् निरङ्गं केवलं रूपकम्।

वैधर्म्येऽपि रूपकसद्भावमुपपादयितुमाह—**क्वचिदिति**। वैधर्म्ये विरुद्धधर्मसद्भावेऽपि रूपकं दृश्यते इत्यनुषज्यते। तथा चात्र रूप्यरूपकयोर्विरुद्धधर्मो नार्थः, किन्तु निर्दिष्टं यत्साधर्म्यं तदभाववत्वमेवात्र वैधर्म्यमित्यवधेयम्।

**सौजन्येति**। सौजन्यं सुजनता एव अम्बु जलं तस्य मरुस्थली मरुप्रदेशो निर्जलदेश इति यावत् यथा मरुस्थली जलरहिता तथैव राजावल्यपि सौजन्यहीनेतिभावः। सुचरितान्येव शोभनाचरणान्येव आलेख्यानि लेखनीयानि चित्राणि येषां तेषां द्युभित्ति आकाशरूपं कुडयम्, यथा आकाशे चित्राणि न सम्भवितुमर्हन्ति तथैव राजावल्यामपि सुचरितानि नावलोक्यन्त इत्यभिप्रायः। गुणा दयादाक्षिण्यादय एव ज्योत्स्नाश्चन्द्रिकास्तासु कृष्णचतुर्दशी कृष्णपक्षीया चतुर्दशी यथा कृष्णचतुर्दश्यां चन्द्रिकाया अभावस्तथा राजावल्यामपि दयादाक्षिण्यगुणानामभावोऽवलोक्यते इति भावः। अत्रामावास्येत्यनभिधाय चतुर्दशीपदोपादानं राजावल्यां मनुष्यस्वभावेन कदाचिद्गुणाः किञ्चित्समुत्पद्यन्ते एव न तु तिष्ठन्तीति व्यञ्जनाय। सरलताया अकुटिलतायाः योगः सम्बन्धस्तत्र सरलताव्यवहोरे इत्यर्थः, स्वपुच्छच्छटा कुक्कुरुच्छाकृतिरूपा कुक्कुपुच्छ इव राजावल्यां सरलताया गन्धोऽपि नास्तीत्याशयः। एषा इत्थंभूताऽपि कलियुगे राजावली कलियुगीयराजपरम्परा, दुराशयादुरभिप्राया दुष्टधनलाभलिप्सया वा यैर्जनैः सेविता, तेषां जनानां भक्तिमात्रसुलभे केवलयापि भक्त्या प्राप्ये मात्रपदेनोपकरणान्तरस्यानावश्यकत्वं व्यञ्जयति, शूलिनि महादेवे षष्ठयर्थे सप्तमी तेन महादेवस्येत्यर्थः, सेवा आराधनं कियत् कौशलं न किञ्चिद्पीत्यर्थः। अत एव तादृशराजावलीसेवनं परित्यज्य शूलिसेवनमेवैहिकाष्मुकेष्टफललाभाय विधानमेव युक्तमिति भावः। **शार्दूलविक्रीडितं** छन्दस्तल्लक्षणञ्चोक्तं प्रागेव।

अत्र मरुस्थल्यां जलस्य, द्युभित्तौ चित्रस्य, कृष्णचतुर्दश्यां चन्द्रिकायाः, स्वपुच्छे च सरलतायाः, सम्भवितुमशक्यत्वाद् मरुस्थल्यादिषु जलादीनां वैधर्म्यमवगन्तव्यम्। अत एव पूर्वविशेषणत्रये अश्लिष्टशब्दनिबन्धनं मालारूपं परम्परितरूपकम्। चरमविशेषणे तु निरङ्गं केवलं रूपकम्।

स्वीयमेव पद्यमित्युपपादयति—इदमिति।

ननु श्लिष्टपरम्परितोदाहृतानां 'राजमण्डलराहवे' इत्यादीनां श्लिष्टशब्दनिबन्धनानां साङ्गरूपको दाहृतानां 'करमुदयमहीधरस्तनाग्रे' इत्यादीनाञ्च शब्दश्लेषयुक्तत्वेन शब्दालङ्कारान्तर्गत एवाभिधातुमुचितं तत्कथमर्थालङ्कारेषु निरूपितमत आह—**अत्र** चेति। अत्र एषु लक्षितेषु रूपकेषु मध्ये इत्यर्थः। रूपकविशेषत्वात् रूपकप्राधा-

न्यात् अर्थमूलाया रूपकप्रधानताया विद्यमानत्वादित्यर्थः । तथा च श्लेषस्येव रूपकस्यापि शब्दालङ्कारत्वमर्थालङ्कारञ्चोभयमपि सम्भवितुमर्हति तथापि श्लेषे शाब्दत्वार्थत्वोभयप्राधान्यस्यैकरूपत्वात् इह तु न्यूनाधिकत्वेन वैपरीत्यात् भेदे 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन रूपकस्यार्थालङ्कारत्वमिति भावः । एतेन श्लिष्टपरम्परित रूपकादौ शब्दार्थोभयलङ्कारत्वमेव युक्तमिति ध्वनितम् ।

न केवलं रूपक एवोक्तन्यायाः किन्त्वन्यत्रपीति दर्शयति—**एवमिति**। वक्ष्यमाणेषु श्लेषमूलकेषु अपह्नुतिव्यतिरेकालङ्कारेष्वत्यर्थः ।

पुनः प्रभेदान्तरमुक्तभेदादिविलक्षणम् अधिकारूढवैशिष्ट्यं नाम रूपकमलङ्कारं निरूपयति—**अधिकेति**। यद्ररूपकम् अधिकमत्यर्थः आरूढं वैशिष्ट्यं विशेषणं चमत्कारित्वरूपं विलक्षणत्वमिति यावत् यत्र तत्र तत्तथोक्तं भवति, तद्रूपकं तदेव अधिकारूढवैशिष्ट्यनामकमेव भवतीत्यर्थः ।

उपमेये उपमाने वा विद्यमानमविद्यमानमपि यं कञ्चनधर्ममारोप्य आरोपरूपण एव वैशिष्ट्यमिदमत्यर्थमारूढं भवतीति विभावनीयम ।

कारिकास्थकाठिन्यांशं विवृणोति—तदेवेति । स्पष्टम् ।

**इदमिति**। कस्याश्चित्कामिन्या वर्णनमिदम् । इदं दृश्यमानं कामिन्या वक्त्रं मुखम्, विरहितकलङ्कः कलङ्कादिकिल्विषरहितः साक्षात् समीपप्रत्यक्षगोचरः शशधरश्चन्द्रः । सुधाधारायाः पीयूषप्रवाहस्य आधारः स्थानम् अधर ओष्ठः, चिरपरिणतं चिरेण परिणतं फलत्वेनोद्भूतम् परिपक्वमित्यर्थः, बिम्बं बिम्बफलम्, सुधाधाराधार इति बिम्बस्य विशेषणमवगन्तव्यम् । इमे पुरोऽवलोक्यमाने नेत्रे लोचने रात्रिन्दिवम् अहर्निशमेव निरन्तरमेवेति यावत् अधिका शोभा ययोस्तथोक्ते कुवलये नीलोत्पलद्वयम् । तथा तनुः शरीरम् अवगाहे अवगाहने उपचारेणोपभोगमात्रे सुखतर अत्यन्तं सुखदायी लावण्यानां जलधिः समुद्रः । 'अवगाहे सुखतर' इत्यनेन लवणो**दधिर्मकरतरङ्गलवणादिसद्**भावादवगाहकनां सुखावहो न भवतीति सूचितम् । शिखरिणीच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

वैशिष्ट्याधिक्यमुपपादयति—**अत्रेति**। आदिशब्देन सुधाधारत्वादेः परिग्रहः ।

तथा च शशधरे उपमाने विद्यमानमपि कलङ्कमारोप्य वक्त्रे तस्यारोपः, अधरे चोपमेयेऽविद्यमानमपि सुधाधारत्वधर्ममवरोप्य, तथोत्पत्तेर्बहोः कालादनन्तरमेव परिपक्वयोग्ये उपमाने बिम्बेऽविद्यमानमपि चिरपरिणतत्वधर्मञ्चावरोप्य तत्र तस्यारोपः । तथा रात्रावेवाधिकशोभे उपमाने कुवलयेऽविद्यमानमपि रात्रिन्दिवमधिकशोभत्वधर्ममवरोप्य नेत्रे तस्यारोपः । इत्थमेव जलधावुपमानेऽविद्यमानेऽपि लावण्यसम्बन्धमवरोप्य शरीरे तस्यारोपः ।

इदञ्च ध्वन्यमानमपि दृश्यते । तत्र **शब्दशक्तिमूलं** यथा—

**'अविरलविगलद्दानोदकधारासारसिक्तधरणितलः ।**

**धनदाग्रमहितमूर्त्तिर्देव ! त्वं सार्वभौमोऽसि ॥'**

अत्र हि सार्वभौमशब्दश्चक्रवर्त्त्यर्थतया नियमितोऽपि राज्ञि 'असि' इत्यनेन दिग्गजविशेषारोपमेव बोधयति ।

अर्थशक्तिमूलं यथा—

'तिमिरं हरन्ति हरितां पुरः स्थितं तिरयन्ति तापमथ तापशालिनाम् ।

वदनत्विषस्तव चकोरलोचने ! परिमुद्रयन्ति सरसीरुहश्रियः ॥'

## रुचिरा

इदं च व्यस्तं समस्तं व्यस्तसमस्तं चेति त्रिविधं द्योतयितुमाह—**क्वचिदु**दाहरिष्यमाणे काव्ये इत्यर्थः। **समासाभावे। अपि। रूपकम्। दृश्यते**। उदाहरति—**यथा**। '**मुख**मित्यादि। स्पष्टम्। 'लावण्यं सलिलं स्वच्छं त्वं चासि सरसी प्रिये।' इति शेषः॥' यथा वा मम—'नयने मीनावूरू कदली, उदरं च मुष्टिमेयत्वम्। विकसद्वदनं कमलं, सुभगे! नासे रतीशतूणीरौ॥' इति। एवं सामानाधिकरण्य उदाहृत्य वैयधिकरण्येऽप्युदाहर्त्तुमाह—**क्वचित् वैयधिकरण्ये** व्यधिकरणस्य भावस्तत्र। सत्यर्थेयं सप्तमी। **अपि**। 'रूपकं दृश्यते' इति'शेषः। **यथा**—'**विधिर्विधाता। इहास्यां** नायिकाया'मित्यर्थः। **भ्रूलतया**। अभेदार्थेयं तृतीया. **मधुपश्रेणीं** भ्रमरावलिम्। **विदधे**। विहितवान्। 'वदनेन सुधांशुं च लावण्येन च जीवनम्॥' इति शेषः। अत्र हि भ्रूलताऽऽदौ मधुपश्रेण्याद्यारोपोव्यधिकरणः।

वैधर्म्येऽपि रूपकसद्भावं दर्शयितुमाह—**क्वचित्। वैधर्म्ये** विरुद्धधर्म्मसद्भावे। अपि। 'रूपकं दृश्यते' इति शेषः। **यथा। मम-'सौजन्ये**'त्यादि।

'**सौजन्याम्बुमरुस्थली** सौजन्यमेवाम्बु तस्य मरुस्थली मरुप्रदेशभूतेत्यर्थः। सौजन्यहीनेति भावः। **सुचरितालेख्यद्युभित्तिः** सुचरितान्येवालेख्यानि लेखनीयानि चित्राणि तेषां द्युभित्तिराकाशरूपं कुडयम्, तथाभूतेत्यर्थः। सुचरिततयाऽपि सर्वथा शून्येति भावः। **गुणज्योत्स्नाकृष्णचतुर्दशी** गुणा एव ज्योत्स्ना तासां कृष्णचतुर्दशी कृष्णपक्षीया चतुर्दशी तत्तुल्येत्यर्थः। गुणैरपि सर्वथा हीनेति भावः। **सरलतायोगश्वपुच्छच्छटा** सरलताया योगः सम्बन्धः तस्य श्वपुच्छच्छटा कुक्कुरपुच्छाकृतिभूतेत्यर्थः। सरलताया अपि सम्बन्धं त्यक्त्वा स्थिता। **एषा। दुराशया** दुरभिप्राया। **राजावली** राजपरम्परा। **यैः। कलियुगे। अपि। सेविता। तेषाम्। भक्तिमात्रसुलभे** भक्ति रेवेति भक्तिमात्रं तेन सुलभः सुखेन लब्धुं योग्यस्तत्र। मात्रपदेनोपकरणान्तरस्यानावश्यकत्वं द्योत्यते। **शूलिनि शङ्करे। सेवा। कियत्। कौशलम्**, न किञ्चिदिति भावः। शार्दूलविक्रीडितं वृत्तम्। लक्षणं चोक्तं प्राक्। अत्र सौजन्या म्ब्वादौ मरुस्थल्याद्यारोपो विधर्म्मतामूलकः॥ ११७॥'

लक्षितेषु रूपकेषु न सर्वाण्यर्थालङ्कारेषु गणनीयान्यथापि तेषां तथात्वे हेतुं निर्दिशति—**अत्रैषु** लक्षितेषु रूपकेषु मध्ये इति भावः। **केषाञ्चित्। रूपकाणाम्। शब्दश्लेषमूलत्वे। अपि। रूपकविशेषत्वात्** रूपकप्राधान्यात् अर्थमूलकाया रूपकप्रधानतायाः सद्भावादिति यावत्। **अर्थालङ्कारमध्ये। गणनम्**। अयम्भावः—यद्यपि श्लेषस्येव रूपकस्यापि शब्दालङ्कारत्वमर्थालङ्कारत्वं च वक्तुमर्हम्, तथाऽपि श्लेषे शाब्दार्थत्वोभयप्राधान्यस्य सरूपत्वात्, रूपके च न्यूनाधिकत्वेन वैषम्यात् भेदे 'प्राधान्येन व्यपदेशा भवन्ती ति नयेन रूपकस्यार्थालङ्कारत्वमूह्यम्। एतेन-केषाञ्चित् शब्दालङ्कारत्वमपि यद्यभिदधीत तर्हि तद् युक्तमेव स्यात्। इति सूचितम्। इति। न केवलं रूपक एवैष नयः सङ्गच्छत इति बोध्यमित्याह—**एवमित्यादि**। स्पष्टम्।

अस्य प्रभेदान्तरं पुनर्निर्दिशति—**१०९ यत्। अधिकरूढवैशिष्ट्य**मधिकामारूढं वैशिष्ट्यविलक्षणत्वं येन तथोक्तम्। **रूपकम्। तत्। तत्** अधिकारूढवैशिष्ट्यम्। **एव**।

कारिकांशे काठिन्यं परिहरति—**तदेवे**त्यादिना। स्पष्टम्।

उदाहरति—**यथा**। **मम** '**इदम्**। **वक्त्रं** मुखम्। **साक्षात्**। **विरहितकलङ्को** विरहितः कलङ्को यस्य तादृशः, कलङ्कारकल्माषचिन्हरहितः। **शशधरश्चन्द्रः**। **अधरः**। **चिरपरिणतं** चिरेण परिणतं फलत्वेनोद्भूतम्, परिपक्वमिति भावः। **सुधाधाराधारः** तत्स्वरूपभूतम्। **बिम्बम्**। **इमे**। **नेत्रे**। **रात्रिन्दिवमहर्निशं** निरन्तरमिति यावत्। **अधिकशोभे** अधिका शोभा ययोः तथोक्ते। **कुवलये** कुमुदपुष्पभूते। **तनुः** शरीरम्। **अवगाहे** स्नाने उपचारेणोपभोगमात्रे। **सुखतरोऽ**न्त्यन्तं सुखकारी। **लावण्यानाम्**। **जलधिः** समुद्रः। शिखरिणीवृत्तम्॥ ११८॥'

अत्र वैशिष्ट्याधिक्यं सूचयति—**अत्रेत्यादिना**। स्पष्टम्। इदं ध्वन्यमानमपि दृश्यते। तत्र शब्दशक्तिमूलं यथा-'अविरलविगलद्दानोदकधारासारसिक्तधरणितलः। धनदाग्रमहितमूर्त्तिर्दव त्वं सार्वभौमोऽसि॥' अत्र हि सार्वभौमशब्दश्चक्रवर्त्यर्थतया नियमितोऽपि राजनि'असी'त्यनेन दिग्गजविशेषारोपमेव प्रत्याययति। अर्थशक्तिमूलं यथा—'तिमिरं हरन्ति हरितां पुरः स्थितं तिरयन्ति तापमथ तापशालिनाम्। वदनत्विषस्तव चकोरलोचने परिमुद्रयन्ति सरसीरुहश्रियः॥' इत्यत्र वदनस्य चन्द्रत्वं तिमिरहरणाद्यर्थमात्रमूलम्।

**विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि ॥ ३४ ॥**

**परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा ।**

आरोप्यमाणस्यारोपविषयात्मतया परिणमनात्परिणामः ।

यथा—

**'स्मितेनोपायनं दूरादागतस्य कृतं मम ।**

**स्तनोपपीडमाश्लेषः कृतो द्यूते पणस्तया ॥'**

अन्यत्रोपायनपणौ वसनाभरणादिभावेनोपयुज्येते । अत्र तु नायकसंभावनद्यूतयोः स्मिताश्लेषरूपतया । प्रथमार्धे वैयधिकरण्येन प्रयोगः, द्वितीये सामानाधिकरण्येन । रूपके 'मुखचन्द्रं पश्यामि' इत्यादावारोप्यमाणचन्द्रादेरुपरञ्जकतामात्रम्, न तु प्रकृते दर्शनादावुपयोगः । इह तूपायनादेर्विषयेण तादात्म्यं प्रकृते च नायकसंभावनादावुपयोगः । अत एव रूपके आरोप्यस्यावच्छेदकत्वमात्रेणान्वयः । अत्र तु तादात्म्येन । 'दासे कृतागसि—' (५२६ पृ.) इत्यादौ रूपकमेव, न तु परिणामः । आरोप्यमाणकण्टकस्य पादभेदनकार्यस्याप्रस्तुतत्वात् । न खलु तत्कस्यचिदपि प्रस्तुतकार्यस्य घटनार्थमनुसंधीयते ।

---

## विवृतिः

परिणामालंकारमाह—**विषयात्मतयेति** ।

प्रकृतार्थोपयोगिनि वस्तुनि विषयतादात्म्येनारोप्ये सति परिणाम इत्यर्थः । प्रस्तुत-प्रयोजनसाधनत्वेन प्रसिद्धिरेव प्रकृतार्थोपयोगित्वम् । रूपके सदृशवस्तुनस्तादात्म्यं विषये भासते । इह तु सजातीयफलसाधनतया विषयस्य तादात्म्यमारोप्यमाणे भासत इति विशेषः ॥ **तुल्याधिकरणः** समानाधिकरणः । सच समानविभक्तिकपदद्वयेप्रयोज्यः । विभिन्नविभक्तिकपदद्वयप्रयोज्यो व्यधिकरण एव तुल्याधिकरणः ॥ संज्ञाबीजमाह—**आरोप्यमाणस्येति** । परिणमनात् परिणतबुद्धिविषयीकरणात् । बुद्धेः परिणामश्चानाहार्यत्वे सति धारावाहिकत्वम् । रूपके ह्याहार्य एव सकृदभेदबुद्धिः, अनन्तरं ताद्धर्म्यप्रतीतिरेव न त्वभेदबुद्ध्यन्तरम् । इह तु वस्तुनोरेककार्यकारित्वेनात्यन्ततिरस्कृतभेदयोरभेदप्रतीतिधारेति भावः । इह प्रायेण भवत्यर्थस्य करोत्यर्थस्य वा धातोः प्रयोगः । तत्र भवत्यर्थस्य प्रयोगो यथा—'तिरस्करिण्यो जलदा भवन्ति ।' अत्र योषिद्गात्रावरणरूपप्रस्तुतप्रयोजनसाधनत्वेन प्रसिद्धे पटविशेषे आरोप्यमाणे तत्साधनस्य जलदस्य तादात्म्यारोपः । यथा वा—'मन्दो गन्धवहः क्षारो वह्निरिन्दुश्च जायते । चर्चा चन्दनपङ्कस्य शस्त्रघातः प्रवासिनाम् ॥' अत्र देहदाहादिरूपप्रस्तुतप्रयोजनसाधनत्वेन प्रसिद्धे वस्तुनि क्षारादावारोप्यमाणे तत्साधनस्य गन्धवहादेर्विषयस्य तादात्म्यारोपः । करोत्यर्थप्रयोगे परिणाममाह—**स्मितेनेति** । तृतीयात्राभेदे । **उपायनं** मण्यादि प्रीत्यर्थं दीयमानं द्रव्यम् । **स्तनोपपीडं** स्तनावुपपीड्य । तत इत्यत्र कृत ति पाठो न रमणीयः । कथितपदत्वदोषप्रसङ्गात् । पराजये एतद्दातव्यमित्यङ्गीकृतं द्रव्यं **पणः** । आरोप्यमाणयोः प्रकृतोपयोगित्वेन प्रसिद्धिं विषयतादात्म्यारोपं चोपपादयति—**अन्यत्रेति** । संभावनान्तरद्यूतान्तरयोरित्यर्थः । उपयुज्येते हेतू भवतः । **अत्र**

**त्विति**। प्रस्तुतयोस्त्वित्यर्थः। **स्मिताश्लेषरूपतया** स्मिताश्लेषतादात्म्येन उपयुज्येते इत्यन्वयः। उपयोगित्वेन प्रतीयेते इति तदर्थः। रूपकादस्य भेदमुपपादयति—**रूपके इति**। उपरञ्जकत्वमात्रमुपलक्षणत्वमेव। यथा 'आह्लादकं चन्द्रं पश्यामि' इत्यादावाह्लादकत्वस्य दर्शनानुपयोगित्वेनोपलक्षणत्वं तथेहापीति भावः। **न त्विति**। चन्द्रस्य दर्शनयोग्यत्वेऽपि यथाह्लादादिसाधनत्वेन प्रसिद्धिर्न तथा दर्शनसाधनत्वेनेति भावः। **प्रकृते चेति**। चकारस्योपयोगश्चेत्यन्वयः। ननु 'मुखचन्द्रः प्रकाशते' इत्यादौ चन्द्रादेरारोप्यमाणस्य प्रकाशसाधनत्वेन प्रसिद्धिरस्तीति परिणामप्रसङ्ग इत्यत आह—**अत एवेति**। परिणामलक्षणे 'विषयात्मतया' इत्यस्य निवेशादित्यर्थः। **अवच्छेदकत्वमात्रेण** विषयव्यावर्तकत्वमात्रेण, न तु विषयतादात्म्येन। **अत्र त्विति**। परिणामे त्वित्यर्थः। ननु 'दासे कृतागसि—' इत्यादौ पादभेदनरूपकार्यसाधनत्वेन प्रसिद्धस्य कण्टकस्य पुलकाङ्कुरत्वेनारोप इति परिणाम एवेत्यत आह—**दासे इत्यादौ अप्रस्तुतत्वादिति**। मानभङ्गस्यैव तत्र प्रस्तुतत्वादिति भावः। ननु प्रस्तुतघटकस्यापि प्रस्तुतत्वमित्यतः पादभेदनमपि प्रस्तुतमत आह—**न खल्विति**। तत्पादभेदनं घटनार्थमपीत्यपेरन्वयः। उपपादनार्थमपीति तदर्थः। **अनुसंधीयते** प्रतीयते ॥

## विवृतिपूर्तिः

**परिणाम इति**। अत्राहुः शेखरकाराः—उपमानप्रतियोगिकाभेदो रूपकम्। उपमेयप्रतियोगिकाभेदः परिणामः। **प्रतीपवत्त्त्राभेदे** उपमेयप्रतियोगिकत्वतात्पर्यग्राहकं प्रकृतकार्योपयोगः। न तु तच्छरीरेऽस्य प्रवेशः। एवं च यत्रोपमानस्य स्वात्मनैव प्रकृतकार्योपयोगो यत्र चोदासीनता तत्र रूपकमेव। इत्थं च **परिणामो** विशेषणसमासायत्तः। **रूपकं** मयूरव्यंसकादिसमासायत्तं 'मुखचन्द्रः' इत्यादौ। यदि तु चन्द्रमुखमिति विप्रयुज्यते तदा विशेषणसमासायत्तमपि रूपकमिति। परे तु—उपमानोपमेयपदानामुपमानप्रतियोगिकाभेदसंसर्गेण बोधकानां 'मयूरव्यंसकादयश्च' इति समासेन विशेषण विशेषणसमासबाधाच्चन्द्रमुखमिति प्रयोग एव नेति वदन्ति। किंच। आरोप्यमाणो यत्र विषयात्मतयैव प्रकृतकार्योपयोगी, न स्वातन्त्र्येण स किल परिणामः। अत्र च विषयाभेद आरोप्यमाणे ह्युपयुज्यते, रूपके तु नैवमिति विशेषः। 'वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति' इत्यादितदुदाहरणे स्मरतापनाशनसामर्थ्यं मुखात्मनैवेन्दोः ग्रीष्मसंतापहारकत्वाद्रमणीयशोभाश्रयत्वाच्चेन्दुर्विषयतयोपात्त इति। तन्न चतुरस्रम्। इन्दौ वदनतादात्म्यप्रतीतेर्वर्णनीयमुखाद्यनुत्कर्षकत्वेनालंकारत्वाभावात् ॥

## विज्ञप्रिया

परिणामालङ्कारमाह—**विषयात्मतयेति**। विषयो रूपाणाधिकरणं, प्रकृतार्थोपयोगिन्यनुष्ठीयमानार्थोपयोगिनि आरोप्ये, आरोप्यस्य परिणाम इत्यर्थः। **तुल्यातुल्येति**। अभिन्नाभिन्नविभक्तिक इत्यर्थः।

**स्मितेनेति**। अत्राभेदे तृतीया। अत्र स्मिते आरोप्यमाणमुपायनं वास्तवस्मिततयैव परिणतं, तच्चानुष्ठीयमानसम्भावनोपयोगि। **स्तनोपपीडमिति**। स्तनावुपपीडयाऽऽश्लेष इत्यर्थः। अत्राऽऽश्लेषे आरोप्यमाणः पणो वास्तवाश्लेषतयैव परिणतः अनुष्ठीयमानद्यूतोपयोगी। उभयत्राऽनुष्ठीयमानार्थोपयोगं दर्शयति—**अन्यत्रेति**। सम्भावनद्यूतयोरित्यत्रोपयुज्येते इत्यस्यान्वयः। आरोप्यमाणयोरुपायनपणयोः स्मिताश्लेषरूपतयेत्यत्र परिणाम इति शेषः।

रूपके आरोप्यमाणस्यानुष्ठीयमानार्थोपयोगो नास्तीति दर्शयति—**रूपके** इति। उपरञ्जकत्वमात्रं शोभाबोधकत्वमात्रम्। **नत्विति**। उपयोगो निर्वाहकत्वं चन्द्रेण दर्शनाऽनिर्वाहात्। प्रकृते तु निर्वाहकत्वमस्त्येवेत्याह।

**इह त्विति**। तादात्म्यमित्यत्र उपयुज्यते इति शेषः। तादात्म्यस्योपयोगप्रदर्शनं परिणामतः उपायनादेरेवोपयोगप्रदर्शनपर्य्यवसन्नं बोध्यम्। उपायनेन सम्भावनस्य पणेन द्यूतस्य च निर्वाहात्। तदेव विशदयित्वा दर्शयति—**प्रकृते चेति**। उपयोगः सम्भावनद्यूतयोर्निर्वाहकत्वेनोपायनपणयोः स्मिताश्लेषाभेदेनान्वय इत्यर्थः। स चान्वयोऽनारोपित इत्यतो निर्वाहकता। आरोपे तु न निर्वाहकतेत्याह—**अतएवेति**। अनारोपे सत्येव निर्वाहकत्वादेवेत्यर्थः। अवच्छेदकत्वेन अवास्तवत्वेन। प्रकृते तु वास्तवत्वेन इत्याह—**अत्र चेति**। तादात्म्यं वास्तवोऽभेदः।

दासे कृतागसीत्यादिश्लोकीयरूपके तु परिणामाप्रसक्तिं दर्शयति—**दासे** इति। नन्वत्र कथं रूपकमेवेत्युक्तं सूक्ष्माग्रत्वेन कठोरत्वेन च पुलकाङ्कुराणां कण्टकभेदस्य वास्तवत्वादेवेत्याह—**आरोप्यमाणेति**। पादभेदः कार्य्यं यस्य तादृश स्यारोप्यमाणकण्टकस्य पुलकरूपस्येत्यर्थः। अत्र यद्यपि पुलकस्य कण्टकारोपविषयत्वमेव कण्टकत्वेनारोप्यमाणत्वं तथापि पादभेदकार्य्यकत्वेऽनारोप्यमाणस्येत्यर्थः। तथाच तत्कार्य्यनिर्वाहकत्वं यतस्तस्यारोप्यमाणमतस्तस्य कण्टकत्वमपि न वास्तवम्। किन्तु आरोप्यमाणमेवेत्यतो रूपकमेवेत्यर्थः। ननु पादभेदकार्य्यनिर्वाहकत्वमेव पुलकाङ्कुराणामस्ति। तत्कथमवास्तवत्वमित्याह—**न खल्विति**। तत्पुलकाङ्कुराग्रं कस्यचिदपि—भेदो हि प्रस्तुतं कार्यम् कस्यचिदपि पादीयभेदस्यान्यदीयभेदस्य वा कस्याचिद् घटनार्थमित्यर्थः। इत्थं रूपकाभिन्नतया परिणामः सिद्धः। एवम्—

> **"शिष्यतां निधुवनोपदेशिनः शङ्करस्य रहसि प्रपन्नया।**
> **शिक्षितं सुरतिनैपुणं तया यत्तदेव गुरुदक्षिणीकृतम्॥"**

इत्यत्रापि गुरुदक्षिणायाः सुरतिनैपुण्येन परिणामात् परिणामालङ्कार एवेति बोध्यम्।

## लोचन

विषय आरोपविषयः, तदात्मतया, तद्रूपतया नतु रूपकवत तदुपरञ्जकत्वमात्रेण। एवं चास्य विषयात्मत्वेन, प्रकृते कार्य्योपयोगित्वेन रूपकाद् व्यवच्छेदः। रूपके विद्यमानाया अपि तादात्म्यप्रतीतेर्न पर्य्यन्तं गन्तुमाकाङ्क्षा इत्याशयः। परिणामालङ्कारस्य तथाभूतो रूप्यमाणो विद्यते यद् एतद्द्विप्रकारं परिणामं नाम निर्वक्ति।

**आरोप्येति**।—परिणमनस्थाननिवेशेन तद्रूपतापत्तेः। नतु सतो धर्मिणो वै पूर्वरूपपरित्यागेन रूपान्तरापत्तेरिति भावः।

कविनिबन्धाहार्य्यतादात्म्येऽप्यारोपस्यैव रूपकप्रयोजकत्वादित्यवच्छेदकत्वमात्रेण। उपरञ्जकत्वमात्रं चारुत्वातिशयप्रकटनमात्रम्। तुश्चार्थः। तादात्म्यं तत्र निवेशः स्मितादेः उपायनत्वमस्ति तद्विशेषकत्वात्। मुखादेश्चन्द्रादित्वं न तथेति भावः।

## कुसुमप्रतिमा

रूपकनिरूपणानन्तरं तत्सजातीयतया परिणामालङ्कारं निरूपयति विषयेति। आरोप्ये आरोपणीये पदार्थे उपमाने इति यावत्, विषयात्मतया आरोपविषयतादात्म्येन उपमेयाभिन्नत्वेन हेतुना, प्रकृतार्थस्य प्रस्तुतविषयस्य उपयोगिनि साधनोपयोगिनि सति, परिणामो नामालङ्कारो भवेत्।

तथा च प्रस्तुतविषयसाधनोपयोगितया उपमेये उपमानाभेदारोपः परिणाम इत्यर्थः। स च द्विधा—तुल्याधिकरणः, अतुल्याधिकरणश्चेति। तत्र उपमानोपमेययोः समानविभक्तित्वं तुल्याधिकरणत्वम्, असमानविभक्तिकत्वञ्च अतुल्याधिकरणत्वम्। रूपकेण सहास्य भेदस्तु प्रागेव दर्शितः, वृत्तौ चात्र दर्श्यते।

परिणामशब्दस्य व्युत्पत्तिमाह आरोप्येति। आरोप्यमाणस्य उपमानस्य, आरोपविषयात्मतया उपमेयरूपत्वं न परिणमनात् पर्य्यवसितत्वात्। एवञ्च परिपूर्वकनमधातोर्भावे धञिति दर्शितम्।

स्मितेनेति। सख्युरन्तिके निजप्रियतमाया व्यवहारवर्णनेयम्। तया प्रियतमया स्मितेन ईषद्हास्येन, दूरादागतस्य मम उपायनमुपहारः कृतम्। तथा द्यूते पाशक्रीडायाम्, स्तनाभ्यामुपपीड्येति स्तनोपपीडम्, "उपपीड़रुधकर्षश्च" इति णम्। आश्लेष आलिङ्गनम्, पणः कृतः। दूरादागताय जनाय बन्धुजनेन यः कश्चिदुपहारो दीयत इति, पाशक्रीडायाञ्च यः कश्चित् पणो रक्ष्यत इति च लौकिकी रीतिः। एवञ्च दूरादेगते मयि प्रियतमया मे ईषद्हास्यरूप एव स उपहारो दत्तः, तथा "पाशक्रीड़ायां मया हारिते स्तनोपपीड़मालिङ्गनं दातव्यम्" इत्युक्त्वा पाशक्रीड़ायां स्तनोपपीड़ालिङ्गनरूप एव पणो रक्षित इति सरलार्थः।

तेनात्र उपमेयभूते स्मिते उपमानभूतोपायनाभेदारोपस्य प्रकृतनायकाभ्यर्थनासाधनोपयोगित्वात् उपमेयभूते तादृशालिङ्गने च उपमानभूतपणाभेदारोपस्य प्रकृतद्यूतक्रीड़ासाधनोपयोगित्वाच्च परिणामलङ्कारः।

तथा "कृतम्" "कृतः" "इति कृतशब्दस्यैव द्वि पठात् कथितपदतादोषः। अस्मादेव च कथितपदतादोषभयात् "कृतः" इत्यत्र "ततः" इति पाठं कल्पयतो रामचरणस्य नूपुरपूरणाय खञ्जचरणे चरणान्तरयोजनचेष्टा किमभीष्टासीत्। इदानीन्तननिखिलपुस्तकेष्वेव कृत इति पाठदर्शनात् तत इति कल्पनैव प्रतीयते।

उक्तलक्ष्ये लक्षणं सङ्गमयितुमाह अन्यत्रेति। उदाहृतेतरस्थल इत्यर्थः। वसनामरणादिभावेन वस्त्रालङ्कारादिरूपत्वेन, उपयुज्येते लोकसम्भावन द्यूतक्रीड़योः साधनोपयोगिनौ भवतः। अत्र तु 'स्मितेनोपायन' दूरात्" इत्यादौ तु, नायक सम्भावनद्यूतयोः नायकाभ्यर्थन पाशक्रीड़योः, स्मिताश्लेषरूपतया उपयुज्येते इति पूर्वाणन्वयः। अत्र उपायतपणौ यथाक्रमं स्मिताश्लेषरूपतया प्रकृतयोर्नायकसम्भावनद्यूतयोः साधनोपयोगिनौ भूताविति समुदायार्थः। अतएवोक्तलक्षणसङ्गतिरित्याशयः।

ननु परिणामोऽयं कुत्र तुल्याधिकरणः कुत्र वा अतुल्याधिकरण इत्याह प्रथमेति। वैयधिकरण्येनेति। "स्मितेनोपायनम्" इत्युपमेयोपमानयोः परस्परं भिन्नविभक्तिकत्वादिति भावः। द्वितीये अर्द्धे। वैयधिकरण्यनेति। "आश्लेषः पणः" इत्युपमेयोपमानयोः समानविभक्तिकत्वादित्याशयः।

इदानीं रूपक परिणामयोर्भेदामाह रूपक इति। आरोप्यमाणस्य मुखेन सह अभेदारोपे उपमानौक्रियमाणंस्य चन्द्रादेः, उपरञ्जकतामात्रम् अभेदारोपात् मुखादौ केवलसौन्दर्य्यप्रतिपादकत्वम्। दशनादावुपयोगोदर्शनदिसाधनोपयोगित्वम्, मुखादौ चन्द्राद्यभेदारोपं विनापि दर्शनसम्भवादिति भावः। इह तु स्मितेनेत्यादौ परिणामस्थले तु। विषयेण उपमेयेन स्मितेन आश्लेषेण च सहेत्यर्थः, तादात्म्यम् अभिन्नत्वम्, प्रकृते प्रस्तुते, नायकसम्भावनादौ नायकसंवर्द्धन द्यूतपर्णयो, उपयोगः साधनोपयोगित्वम्। अतएव रूपक इत्याद्युक्तयुक्तेरेव, आरोप्यस्य आरोपणीयस्य चन्द्रादेरुपमानपदार्थस्य, अवच्छेदकमात्रेण इताव्यावर्त्तकत्वमात्रेण, अन्वय उपमेयभूतमुखादावभेदसम्बन्धः, अत्र तु परिणामे तु तादात्म्येन प्रकृतविषयसाधनोपयोगितया अभेदेन, अन्वय इति सम्बध्यते।

अत्रायमाशयः—"मुखचन्द्रं पश्यामि" इत्यादौ रूपके उपमेयभूतमुखादौ सादृश्यवशादभेदेनारोप्यमाणोऽपि चन्द्रादिरूपमानपदार्थो वस्तुत एवाभिन्नो न प्रतीयते किन्तु कुतसितमुखादिव्यवर्त्तकतया सुन्दरादिविशे-

षणदेवावगम्यते; "स्मितेनोपायनम्" इत्यादौ परिणामे तु स्मितोपायानादिरुभयपदार्थ एव अभेदेनारोपवशात् नायकसंवर्द्धनादिरूपैककार्य्यकारित्वाच्च वस्तुत एवाभिन्न इव प्रतीयत इति।

अलङ्कारशेखरकारस्तु मन्यते—यत्रोपमानप्रतियोगिकाभेदप्रतीतिस्तत्र रूपकम्, यत्र तूपमेयप्रतियोगिकाभेदः प्रतीतिस्तत्र परिणाम इति।

अथ तर्हि "दासे कृतागसिं" इत्यादौ पुलकाङ्कुरे आरोप्यमाणस्य कण्टकस्य प्रस्तुतपादभेदनकार्य्यसाधकत्वात् परिणामस्यैव सम्भवे कथमस्य रूपके उदाहरणमित्याह दास इति। आरोप्यमाणकण्टकस्य यत् पादभेदनकार्य्यं तस्याप्रस्तुतत्वादित्यर्थः। मानिन्या मानभङ्गाय नायकानुनयनस्यैव तत्र प्रस्तुतत्वादित्याशयः।

ननु प्रस्तुतघटकस्यापि प्रस्तुतत्वमेवेत्याह न खल्विति। तत् पादभेदनकार्य्यम्। अपि शब्दस्य घटनार्थमिति परेणान्वयः। तथा च घटनार्थमपि सम्पादानार्थमपि जातमिति न खल्वनुसन्धीयते अनुसन्धायापि नैवागम्यते। तथा हि अत्रानुनय एव प्रस्तुतः तद्घटकन्तु पादपतनमेतादृग्वाक्यञ्च; पादभेदनन्तु प्रत्युतदुःखजनकत्वादनुनयप्रतिबन्धकमेवेति पादभेदनस्य प्रस्तुतघटकतयापि न प्रस्तुतत्वमिति भावः।

## विमला

परिणामालङ्कारमाह, विषयेति।—आरोप्ये—आरोप्यमाणे वस्तुनि,विषयात्मतया—आरोपविषयाभिन्नतया, विषयतादात्म्येन इत्यर्थः, प्रकृतार्थस्य—प्रस्तुतस्य कार्य्यस्य, उपयोगिनि—उपकारिणि, सम्पादके सतीत्यर्थः, परिणामः भवेत्; प्रकृतार्थोपयोगितया विषये विषयिण आरोपः परिणामः; रूपके सदृशवस्तुनः तादात्म्यं विषये भासते, इह तु सजातीयफलसाधनतया विषयस्य तादात्म्यमाराप्यमाणे भासते इति विशेषः। स च द्विधा—तुल्याधिकरणः अतुल्याधिकरणश्च—व्यधिकरणश्च। तत्र तुल्याधिकरणः,—समानाधिकरणः स च समानविभक्तिपदद्वये प्रयोज्यः, विभिन्नविभक्तिकपदद्वयोप्रयोज्यो व्यधिकरण एवातुल्याधिकरण इति सारः। अलङ्कारशेखरकाराणां त्विदमभिधानतात्पर्य्यम्—उपमानप्रतियोगिकाभेदोपमेयप्रतियोगिकाभेदाभ्यां यथाक्रमं रूपकपरिणामौ, प्रतीपवत् तत्र भेदाभावे उपमेयप्रतियोगिकत्वाभिप्रायोपपादकं प्रस्तुतार्थोपादानं न हि तदन्तरस्य निवेशः, तथा च यत्र उपमानस्य स्वस्वरूपेणैव प्रकृतार्थोपादानं यत्रौदासीन्यञ्च तत्र रूपकालङ्कार एव। एवञ्च विशेषणसमासाश्रितः परिणामः, मयूरव्यसकादिसमासतन्त्रं रूपकं, यथा "मुखचन्द्रमं" इत्याद्युदाहरणे। यदि चन्द्रमुखम् इति प्रयोगः, तदा विशेषणसमासतन्त्रमपि रूपकम् इति। अन्येषां तु उपमानोपमेयानाम् उपमानप्रतियोगिकैक्यसम्बन्धेन ज्ञापकानां "मयूरव्यंसकादयश्च" इति विशेषणवृत्तिबाधात् चन्द्रमुखमिति प्रयोग एव न स्यात् इति।

आरोप्यमाणस्येति।—परिणमनात्—परिणतबुद्धिविषयीकरणात्। बुद्धेः परिणामश्च अनाहार्य्यत्वे सति धारावाहिकत्वं, रूपके हि आहार्य्य एव सकृदभेदबुद्धिः, अनन्तरं साधर्म्यप्रतीतिरेव, न त्वभेदबुद्ध्यन्तरम्, इह तु वस्तुनोरेककार्य्यकारित्वेन अत्यन्ततिरस्कृतभेदयोरभेदप्रतीतिरिति भावः। अत्र प्रायेण भवत्यर्थस्य करोत्यर्थस्य वा धातोः प्रयोगः; तत्र भवत्यर्थस्य प्रयोगो यथा—"तिरस्करिण्यो जलदा भवन्ति—अत्र योषिद्गात्रावरणरूपप्रस्तुतप्रयोजनसाधनत्वेन प्रसिद्धे पटविशेषे आरोप्यमाणे तत्साधनस्य जलदस्य तादात्म्यारोपः। यथा वा—"मन्दो गन्धवहः क्षारो वह्निरिन्दुश्च जायते। चर्चा चन्दनपङ्कस्य शस्त्रघातः प्रवासिनाम्॥" अत्र देहदाहादिरपप्रस्तुतप्रयोजनसाधनत्वेन प्रसिद्धे वस्तुनि क्षारादौ आरोप्यमाणे तत्साधनस्य गन्धवहादे र्विषयस्य तादात्म्यारोपः।

करोत्यर्थप्रयोगे परिणाममाह, स्मितेनेति ।—सखायं प्रति कस्यचित् स्वकान्तासद्भाववर्णनमिदम्। तया—मत्कान्तया इत्यर्थः, स्मितेन—मृदुहसितेन दूरात् आगतस्य—उपस्थितस्य, मम उपायनम्—उपहारः, प्रीत्यर्थं दीयमानं मण्यादिद्रव्यमिति यावत्, कृतं,समागतं मां दृष्ट्वा स्मितमेव उपहारो दत्त इत्यर्थः; तथा द्यूते—द्यूतक्रीड़ायां, स्तनोपपीड़ं—स्तनौ स्तनयोर्वा उपपीड़ा यथा तथा इत्यर्थः, आश्लेषः,—आलिङ्गनं, पणः,—पराजये एतद्दातव्यमित्यङ्गीकृतद्रव्यमित्याशयः, कृतः । अत्र "कृतः" इति पाठो न रमणीयः, कथितपदत्वदोषप्रसङ्गात् । अयञ्च वाक्यगतः समासगत इति पुनर्द्विधा भिद्यते; क्रमेणोदाहरणे—"अपारे संसारे विषमविष्यारण्यसरणौ मम भ्रामं भ्रामं विगलितविरामं जड़मतेः । परिश्रान्तस्यायं तरणितनयातीरनिलयः समन्तात् सन्तापं हरिनवतमालस्तिरयतु ॥" "महर्षेर्व्यासपुत्रस्य श्रावं श्रावं वचः सुखाम् । अभिमन्युसुतो राजा परां मुदमवाप्तवान् ॥" पूर्वमपारस्य संसारस्यारण्यसरणित्वारोपणमसमस्तमिति एतस्य वाक्यगतत्वं, परत्र पुनर्वचसः सुधात्वारोपः समासगतः इत्यस्य समासगतत्वम् ।

आरोप्यमाणयोः प्रकृतोपयोगित्वेन प्रसिद्धिं विषयतादात्म्यारोपञ्चोपपादयति, अन्यत्रेति ।—सम्भावनान्तरद्युतान्तरयोरित्यर्थः, उपयुज्येते—हेतू भवतः । अत्र त्विति—प्रस्तुतयोस्त्वित्यर्थः, स्मिताश्लेषरूपतया—स्मिताश्लेषतादात्म्येन, उपयुज्येते इत्यन्वयः, उपयोगित्वेन प्रतीयेते इति तदर्थः । प्रथमार्द्धे इति ।—वैयधिकरण्येन—भिन्नविभक्तिकत्वेन । रूपकादस्य भेदमुपपादयति—रूपके इति । आरोप्यमाणेति ।—आरोप्यमाणस्य—उपमानस्य, चन्द्रादेरुपरञ्जकतामात्रम्—उपलक्षणत्वमेव उपमेयस्य शोभाऽऽविस्कारकत्वमात्रमिति बोध्यं, यथा "आह्लादकं चन्द्रं पश्यामि" इत्यादौ आह्लादकधर्मत्वस्य दर्शनानुपयोगित्वेनोपलक्षणत्वं, तथेहापीति निष्कृष्टोऽर्थः । न त्विति ।---प्रकृते—प्रस्तुते, उपयोगः,—उपकारित्वं, चन्द्रस्य दर्शनयोग्यत्वेऽपि यथा आह्लादादिसाधनत्वेन प्रसिद्धिः, न तथा दर्शनसाधनत्वेनेति भावः । इह तु इति ।—विषयेण—स्मितेन, तादात्म्यम्—अभेदः । प्रकृते चेति चकारस्य उपयोगश्चेत्यनेनान्वयः, प्रकृते—प्रस्तुते, नायकसम्भावनादौ—नायकसंवर्द्धनकर्मणि, उपयोगः,—उपकारित्वम् । ननु "मुखचन्द्रः प्रकाशते" इत्यादौ चन्द्रादेरारोप्यमाणस्य प्रकाशसाधनत्वेन प्रसिद्धिरस्तीति परिणामप्रसङ्गः ? इत्यत आह, अत एवेति ।—परिणामलक्षणे "विषयात्मतया" इत्यस्य निवेशादित्यर्थः । आरोप्यस्य—उपमानस्य, अवच्छेदकत्वमात्रेण—विशेषकत्वमात्रेण, विषयव्यावर्त्तकत्वमात्रेण न तु विषयतादात्म्येन इत्यर्थः । अत्र तु—परिणामे तु, तादात्म्येन—अभिन्नतयेत्यर्थः । ननु "दासे कृतागसि" इत्यादौ पादभेदनरूपकार्य्यसाधनत्वेन प्रसिद्धस्य कण्टकस्य पुलकाङ्कुरत्वेनारोपः इति परिणाम एवेत्यत आह—दासे इति । अप्रस्तुतत्वादिति ।—मानभङ्गस्यैव तत्र प्रस्तुतत्वादिति भावः । ननु प्रस्तुतघटकस्यापि प्रस्तुतत्वमित्यतः पादभेदनमपि प्रस्तुतम्? अत आह, न खल्विति ।—तत्पादभेदनं घटनार्थमपि इत्यपेरन्वयः, उपपादनार्थमपीति तदर्थः । प्रस्तुतकार्य्यस्येति ।—अत्र नायिकाया अनुनयनमेव प्रस्तुतं, पुलके कण्टकारोपस्य न खलु तदुपयोगित्वमिति भावः । अनुसन्धीयते—प्रतीयते इत्यर्थः ।

## लक्ष्मी

रूपकालङ्कारं निरूप्य तत्साजात्येन परिणामालङ्कारं लक्षयति—**विषयात्मतयेति** । आरोप्ये आरोपणीये उपमाने इति यावत्, विषयात्मतया आरोपविषयाभेदेन उपमेयतादात्म्येन कारणेन, प्रकृतार्थः प्रस्तुतं प्रयोजनं तस्योपयोगिसाधनं तस्मिंस्तथाभूते सति तथा च प्रस्तुतप्रयोजनसाधनत्वेन प्रसिद्धिरेव प्रकृतार्थोपयोगित्वम् तस्मिन् सतीत्यर्थः परिणामो नामालङ्कारो भवेत् । एवञ्च प्रस्तुतप्रयोजनसाधनोपयोगितया उपमानाभेदारोपः परिणाम इति

फलितः । स च तुल्यं समानमधिकरणं यस्य स तथोक्तः समानविभक्तिक इत्यर्थः, अतुल्यमसमानमधिकरणं यस्य स तथोक्तो व्यधिकरण इत्यर्थः, इत्येवं प्रकारेण द्विधा । तथा च उपमानोपमेययोः समानविभक्तिकत्वं तुल्याधिकरणत्वम्, तयोरेवासमानविभक्तिकत्वञ्च अतुल्याधिकरणत्वम् । अस्य रूपकाद्भेदस्तु तत्रैव निरूपितः स्फुटीभविष्यति चाग्रेऽनुपदमेव वृत्तावपि ।

परिणामस्यान्वर्थं नाम दर्शयति—**आरोप्यमाणस्येति** । आरोप्यमाणस्य उपमानस्य आरोपविषयात्मतया उपमेयरूपत्वेन परिणमनात् परिणतबुद्धिविषयीकरणात् बुद्धेः परिणामश्चानाहार्यत्वे सति धारावाहिकत्वमित्यवगन्तव्यम् ।

सौकर्यायैकत्रैवोदाहरणे तद्भेदद्वयमुदाहरति—स्मितेनेति । सखायं प्रति कस्यचित्स्वप्रियतमायाः सौजन्यवर्णनेयम् । तया सौन्दर्यादिना प्रसिद्धतया प्रियतमया स्मितेन मृदुहसितेन तृतीयात्राभेदे, दूरात् आगतस्य प्राप्तस्य मम उपायनमुपहारः कृतम्, तथा द्यूते अक्षक्रीडायाम्, स्तनाभ्यामुपपीडयेतिस्तनोपपीडम् क्रियाविशेषणमिदम् 'उपपीडरुधकर्षश्च' इति पाणिनीयसूत्रेण णमुल् । आश्लेष आलिङ्गनदानम्, पणः कृतः । दूरदेशादागताय प्रियाय स्वबन्धुजनैः कश्चिदुपायनं प्रदीयते, उपायनं नाम मण्यादिमिष्टान्नादिकं प्रीत्यर्थं दीयमानं द्रव्यम् । अक्षक्रीडायां च यः कोऽपि पणः स्थाप्यते इति च लौकिकव्यवहारः एवञ्च दूरात्संप्राप्ते मयि प्रियतमया मृदुहासरूपमेव तदुपायनं मह्यं समर्पितम्, तथा 'अक्षक्रीडायां मया पराजिते स्तनोपपीडमालिङ्गनमेव समर्पयितव्यम् इत्यभिधाय अक्षक्रीडायां स्तनोपपीडालिङ्गनरूप एव पणः स्थापित इति निर्गलितोऽर्थः ।

अतश्चात्रोपमेयभूते स्मिते उपमानभूतोपायनतादात्म्यारोपस्य प्रस्तुतनायकयाचनोपकारकत्वात्, उपमेयभूते तथाविधश्लेषे च उपमानभूतपणतादाम्यारोपस्य च प्रस्तुताक्षक्रीडोपकारकत्वाच्च परिणामलङ्कारलक्षणसङ्गतिः । 'कृत' इत्यस्य स्थाने 'तत' इत्येव पाठः साधीयान् अन्यथा कथितपदत्वदोषप्रसङ्गादितित**र्कवागीशाः** ।

उक्तोदाहरणे लक्षणं संयोजयितुमाह—अन्यत्रेति । उक्तोदाहरणातिरिक्तस्थले इत्यर्थः उपायनपणौ उपायनसमर्पणं पणनिधानं च वसनाभरणादिभावेन वस्त्रालङ्कारादिरूपत्वेन उपयुज्येते सम्भावनद्यूतयोः साधनोपयोगिनौ (हेतू) भवतः । अत्र तु 'स्मितेनोपायनं दूरात्' इत्यादौ तु नायकसम्भावनद्यूतयोः नायकयाचनाक्षक्रीडयोः स्मिताश्लेषरूपतयास्मिताश्लेषतादात्म्येन, उपयुज्येते' इति पूर्वेण सम्बन्धः, उपयोगित्वेन प्रतीयेते इति तदर्थः । तथा च उपायनपणौ यथायथं स्मिताश्लेषतादात्म्येन प्रस्तुतयोर्नायकयाचनाक्षक्रीडयोः साधनोपयोगिनौ भूताविति निकृष्टोऽर्थः, तेनैवोक्तलक्षणसमन्वय इत्यभिप्रायः ।

ननु क्व तुल्याधिकरणोऽयं परिणामः क्व वा अतुल्याधिकरण इति जिज्ञासायामांह—**प्रथमार्धेति** । **वैयधिकरण्येनेति** । 'स्मितेनोपायनम्' इत्युपमेयोपमानयोर्मिथो विभिन्नविभक्तिकत्वेनेत्यर्थः । द्वितीये उत्तरार्द्धे इत्यर्थः । **सामानाधिकरण्येनेति** । 'आश्लेषः पणः' इत्युपमेयोपमानयोर्मिथः समानविभक्तित्वेन 'प्रयोग' इति पूर्वेण सम्बन्धः । तस्माद्यथाक्रमव्यधिकरणः समानाधिकरणश्चात्र परिणाम इत्याशयः । यथा वा **पार्थक्येन**—

**'अपारे संसारे विषयविषवारण्यसरणौ मम भ्रामं भ्रामं विगलितविरामं जडमतेः !**
**परिश्रान्तस्यायं तरणितनयानीरनिलयः समन्तात्सन्तापं हरिनवतमालस्तिरयतु ॥'**

अत्र हि उपमानभूतस्य तमालस्य उपमेयभूतमगपदात्मतयैव संसारतापनिवर्त्तनक्षमत्वोपपत्तिरिति समानविभक्तिकत्वात्परिणामः ।

सम्प्रति रूपकपरिणामयोः परस्परं भेदमुपपादयति—**रूपक** इति। आरोप्यमाणो मुखेन सह तादात्म्यारोपे उपमानभूतोऽसौ चन्द्रादिस्तस्य तादृशस्य, उपरञ्जकतामात्रम् उपमेयोत्कृष्टताद्योतकत्वमात्रम् न तु प्रकृते 'मुखचन्द्रं पश्यामि' इत्यादौ तदात्म्यारोपात् मुखादौ केवलसौन्दर्यव्यञ्जकत्वमिति यावत्। मात्रपदेनोपमेयतया परिणमनस्य व्यवच्छेदः। दर्शनादौ उपमानस्योपमेयतया परिणतत्वावगमके दर्शनादिक्रियाश्रयत्वे उपयोग उपयोगित्वम् मुखादौ चन्द्रादितादात्म्यारोपं विनापि दर्शनसम्भवादित्याशयः।

एवं रूपके उपमानोपमेययोस्तादात्म्यारोपेऽपि उपमेयत उपमाने उत्कर्षस्थितिमुपपाद्य परिणामे तद्वैपरीत्यमुपपादयति—**इह त्विति**। 'स्मितेन' इत्यादौ परिणामस्थले तु विषयेण स्मिताश्लेषरूपोपमेयेन सहेत्यर्थः, तादात्म्यं तत्तथा परिणतत्वम् अभिन्नत्वमितियावत्। प्रकृते चेत्यत्र चकारस्योपयोगश्चेति सम्बन्धः। प्रकृते प्रस्तुते उपमेयभूते, नायकसम्भावनादौ नायकयाचनाक्षक्रीडयोः, उपयोगश्च साधनोपयोगित्वञ्च। एवमुभयोर्भेदमुपपाद्यापि बोध सौकर्याय फलितं प्रदर्शयति—**अत एवेति**। रूपक इत्याद्युक्तयुक्तेरेवेत्यर्थः। आरोप्यस्य उपमानस्य चन्द्रादिपदार्थस्य अवच्छेदकमात्रेण इतरनिवर्त्तकत्वमात्रेण, अन्वय उपमेयभूतमुखादौ तादात्म्यसम्बन्धः, अत्र तु परिणामे तु तादात्म्येन प्रस्तुतविषयसाधनोपयोगितया अभिन्नत्वेन, अन्वय इत्यनेनान्वयः।

**अत्र सन्दर्भस्यायमभिप्रायः**—'मुखचन्द्रं पश्यामि' इत्यादौ रूपकालङ्कार आरोपविषयभूतोपमेयमुखादौ साधर्म्यवशात्तादात्म्येनारोप्यमाणोऽपि चन्द्रादिरूपमानपदार्थः परमार्थत एवाभिन्नो नावगम्यते किन्तु निन्दितमुखादिनिवर्त्तकतया मनोज्ञादिविशेषणवदेव प्रतीयते, 'स्मितेनोपायनम्' इत्यादौ परिणामालङ्कारे तु स्मितोपायनादिरुभयपदार्थ एव तादात्म्येनारोपवशात् नायकयाचनादिरूपैककार्यविधायित्वाच्च परमार्थत एवाभिन्न इवावगम्यते इति। नन्वेवं 'दासे कृतागसि' इत्यादौ पुलकाङ्कुरे उपमानभूतस्य कण्टकस्य प्रकृतपादभेदनरूपकार्यसाधनत्वात् परिणामालङ्कारस्यैव भवितुं युक्तत्वेनास्य रूपकोदाहरणत्वं कथं सङ्गच्छत इत्यत आह—**दासे** इति। आरोप्यमाणकण्टकस्य उपमानभूतकण्टकस्य यत्पादभेदनकार्यं तस्याप्रस्तुतत्वात् प्रस्तुतातिरिक्तत्वात्। मानिन्या माननाशाय नायकानुनयस्यैव तत्र प्रस्तुतत्वादिति भावः।

ननु प्रस्तुतघटकस्यापि कार्यस्योपचारेण प्रस्तुतत्त्वोपपत्तौ पादभेदनस्यापि प्रस्तुतत्वं स्वीक्रियतां कानुपपत्तिरित्यत आह—**न खल्विति**। तत् कण्टकानां पादभेदनकार्यम्। अपिशब्दस्य घटनार्थमित्युत्तरेण सम्बन्धः। तथा च घटनार्थमपि उपपादनार्थमपि सञ्जातमिति न खल्वनुसन्धीयते अनुसन्धायापि नैव प्रतीयते। तथाहि प्रस्तुतकार्यमनुनयः तद्घटकं तु पादपतनमेतादृग्वचनं च पादभेदनं तु वैपरीत्येन दुःखोत्पादकत्वानुनयबाधकमेवेति पादभेदनस्य प्रस्तुतघटकत्वेनापि अप्रस्तुतत्वमित्याशयः।

**'शिष्यतां निधुवनोपदेशिनः शङ्करस्य रहसि प्रपन्नया।**
**शिक्षितं सुरतिनैपुणं तया यदेव गुरुर्दक्षिणीकृतम्॥'**

इत्यत्रापि गुरुदक्षिणायाः सुरतिनैपुण्येन परिणामात् परिणामालङ्कार एवेत्यवधेयम्।

## रुचिरा

परिणामं लक्षयति—११० **विषयात्मतयोपमेयाभेदेन**। **आरोपे** निरूपणीये 'उपमान' इति शेषः। **प्रकृतार्थोपयोगिनी** प्रकृतार्थः प्रस्तुतं प्रयोजनं तस्योपयोग्युपकारकं तस्मिंस्तथाभूते सतीत्यर्थः। **परिणामः**। स च-**तुल्या तुल्याधिकरणः** समानाधिकरणो व्यधिकरणश्चेत्यर्थः। 'स'न्निति शेषः। **द्विधा**। **भवेत्**॥ ८७॥

अस्यान्वर्थे नामेत्याह—**आरोप्यमाणस्येत्यादिना**। स्पष्टोऽर्थः। इदमभिहितम्—यत्र खलूपमानं स्वतः प्रकृतेऽनुपयुज्यमानं सदुपमेयात्मतया परिणमत् प्रकृत उपयुज्यते स परिणामः, रूपके तु उपमेयस्योपमानात्मतया परिणमनम्, न त्वत्रेवोपमानस्योपमेयात्मतया, अत एवानयोर्भेदः। किञ्च रूपके उपमानेनोपमेयस्योपादेयत्वम्, अत्र पुनस्तद्वैपरीत्यम्। तथा च—'मुखं चन्द्रो राजते' इत्यत्रेव 'चन्द्रो मुखं राजते' इत्यत्रापि रूपकम्। 'मुखेन चन्द्रेण चुम्ब्यते' इत्यत्रेव 'चन्द्रेण मुखेन चुम्ब्यते' इत्यत्रापि परिणामः, पूर्वत्रोपमानस्य चन्द्रस्य आत्मतया परिणतं मुखरूपमुपमेयं राजनोपयोगितां धत्ते, परत्र तूपमेयस्य मुखस्यात्मतया परिणतं चन्द्ररूपमानं चुम्बनोपयोगितां धत्ते। ननु तर्हि 'मुखं चन्द्रं पश्यामि,' 'मुखचन्द्रं पश्यामि' 'चन्द्रं मुखं पश्यामि,' 'चन्द्रमुखं पश्यामि' इत्यादौ रूपकं परिणामो वा, दर्शनकर्म्मोपयोगितायामुभयोः सामान्येन परिणतत्वात् इति चेत्, रूपकमेव 'मुखं चन्द्रः' 'मुखचंद्र' इत्यादेः श्रवणानन्तरं रूपकावगाहिन्या विच्छित्तेस्तत्र कर्म्म ताऽऽपादनपुरः सरं 'पश्यामी' त्यादिना दर्शनादिक्रिययाऽन्वयोपपादनेऽपि विरूपत्वानापत्तेः उपमानस्य प्राधान्येनोपयोगिताभावाच्च एतेनात्र रूपकपरिणामयोः सन्देहसङ्करं स्वीकुर्वन्तः प्रत्युक्ताः। अयं च परिणामोऽलङ्कारः सामानाधिकरण्ये वैयधिकरण्ये च सम्भवतीति द्विविधः। इति।

सौकर्य्यायैकत्रैव तद्भेदद्वयमुदाहर्त्तुमाह—**'यथा-तया** सौन्दर्य्यादिना प्रसिद्धया नायिकयेति भावः। **दूरात्**। **आगतस्य**। **मम**। **स्मितेन** मृदुहसितेन। अभेदे तृतीया **उपायनमुपहारः**। **कृतम्**। **द्यूते** द्यूतजये। **स्तनोपपीडम्**। क्रियाविशेषणमिदम्। **आश्लेषः** आलिङ्गनदानम्। **पणः**। **कृतः**। सखायं प्रति कस्यचित् स्वनायिकासौ जन्यवर्णनपरोक्तिरियम्॥ ११९॥'

अत्र युक्त्या परिणामं समर्थयमानस्तद्द्वैविध्यं निर्दिशति—**अन्यत्र** नायकसम्भावनद्यूताभ्यां भिन्नस्थले। **उपायनपणौ** उपहारसमर्पणं पणनिधानं च। **वस्त्राभरणादिभावेन**। **उपयुज्येते**। **अत्र**। **तु**। **नायकसम्भावनद्यूतयोः**। स्मिताश्लेषतया 'उपहारपणावुपयुज्येते' इति शेषः। **प्रथमार्धे वैयधिकरण्येन** विभिन्नविभक्तिकत्वेन। **प्रयोगः**। **द्वितीये** उत्तरार्द्धे इत्यर्थः। **सामानाधिकरण्येन** समानविभक्तिकत्वेन 'प्रयोग' इति पूर्वतोऽन्वेति। तस्मात् क्रमाद्व्यधिकरणसमानाधिकरणश्च अत्र परिणाम इति भावः। यथा वा—'अपारे संसारे विषमविषयारण्यसरणौ मम भ्रामं भ्रामं विगलितविरामं जडमतेः। परिश्रान्तस्यायं तरणितनयातीरनिलयः समन्तात्सन्तापं हरिनवतमालस्तिरयतु॥' इति, अत्र हि उपमानभूतस्य तमालस्योपमेयभूतभगवदात्मतयैव संसारतापतिरस्करणकर्तृत्वोपपत्तिरिति समानाधिकरणोऽयम्। 'अहीनचन्द्रा लसताऽऽननेन ज्योत्स्नावती चापि शुचिस्मितेन। एषा हि योषा सितपक्षदोषा तोषाय केषां न महीतले स्यात्॥' इति, अत्र चोपमेयभूताननस्मितयोरुपमानभूतचन्द्रज्योत्स्नयोश्च समानविभक्तिकत्वाभावात् परिणामो व्यधिकरणः। रूपकादस्य भेदमुपपादयति—**'मुखचन्द्रं पश्यामि' इत्यादौ**। **रूपके**। **आरोप्यमाणचन्द्रादे**रोप्यमाण उपमानभूतोऽसौ चन्द्रादिस्तस्य। उपमेये उपमानस्यैवारोपः कल्प्यते, न तूपमाने उपमेयस्येति। बोध्यम्। **उपरञ्जकतामात्र**मुपमेयोत्कृष्टताद्योतकत्वमात्रम्। मात्रपदेनोपमेयतया परिणमनस्य व्यवच्छेदः। अत एवाह-**न तु**। **प्रकृते** 'मुखचन्द्रं पश्यामि इत्यादौ **दर्शनादौ** उपमानस्योपमेयतया परिणतत्वावगमके दर्शनादिव्यापाराश्रयत्वे। **उपयोगः**। एवं रूपके उपमानोपमेययोरभेदारोपेऽपि उपमेयत उपमाने प्रकर्षस्थितिं दर्शयित्वा परिणामे तद्वैपरीत्यं दर्शयति—**इह** परिणामे 'स्मितेने'त्यादौ। **तु**। **उपायनादे**रुपायनभूतस्येति भावः। **विषयेणो**पमेयेन। **तादात्म्यं** तत्तया परिणतत्वम्। अत एव **प्रकृते** उपमेयभूते। **नायकसम्भावनादौ**। **उपयोगस्**तत्तया परिणतत्वद्योत्यनम्। च। एवमुभयोर्भेदं दर्शयित्वाऽपि बोधसौलभ्याय फलितं निर्दिशति-**अतः**। **एव**। **रूपके**। **आरोप्यस्योपमानस्य**। **अवच्छेदकत्वमात्रेण** विशेषकत्वमात्रेण। **अन्वयः**। **अत्र परिणामे**। **तु**। **तादात्म्येनोपमेयाभिन्नत्वेन**। 'अन्वयः' इत्यनुषज्यते। **'दासे कृतागसि' इत्यादौ**। **रूपकम्**। **एव न तु**। **परिणामः**।

ननु 'यत् खिद्यते' इत्यग्रिमग्रन्थस्वारस्येन पादभेदनकार्य्यस्य प्रस्तुतत्वे कथं न परिणामः, प्रतिज्ञामात्रेण कार्य्यस्या-सिद्धेः; इत्याशङ्क्य हेतुनिर्देशेन उक्तमेवार्थमुपपादयति- **आरोप्यमाणकण्टकस्यो**पमानभूतस्य कण्टकस्य। **पादभे-दनकार्य्यस्य। अप्रस्तुतत्वात्** प्रस्तुतारिक्तत्वात्। 'मानभङ्गस्यैव प्रस्तुतत्वाच्चे'ति शेषः। अयम्भावः—'दासे कृतागसी'त्यादौ उपमानभूताः कण्टकाः, उपमेयभूताश्च पुलकाङ्कुरा इति उपमानस्योपमेयतया प्रकृते परिणामस्वी-कारे पादभेदनकार्य्य प्रस्तुतं न वक्तुं शक्यम्। तस्य कार्यस्य उपमेयस्यैवोपमानतया परिणाम उपपत्तेः। पुलकाङ्कुरा हि नायकस्य नायिकायामनुरागसत्त्वे एव सम्भवन्तीति सुविदितचरं रसिकानाम्। अतः-पुलकाङ्कुराणां कार्य्यमनु-नयावेदनम्, तद् यदि कण्टककार्यत्वेनाभिहितमभपिष्यत् तर्हि प्रस्तुतमिति व्यपदिष्टमपि, न च तथा; स्फुटं तत् 'दासे कृतागसी'त्यादौ रूपकमेव नतु परिणामः। इति। ननु प्रस्तुतघटकस्यापि कार्य्यस्योपचारेण प्रस्तुतत्वोपपत्तौ पादभेदनस्यापि प्रस्तुतत्वमङ्गीक्रियतां को दोष इत्याशङ्क्याह—**न। खलु। तत्** कण्टकानां पादभेदनकार्य्यम्। **कस्यचित्। अपि** 'किं पुनः सर्वप्रकारस्ये'ति शेषः। **प्रस्तुतकार्य्यस्य। घटनार्थ**मुपपादनाय। **अनुसन्धीयते** प्रतीयते। इदमुक्तम्-प्रस्तुतकार्य्य ह्यनुनयनम्, तस्य घटकं न पादभेदनमित्यस्याप्रस्तुतत्वमेव। इति। अस्य भेदान्तरं निर्दिशति—अयमित्यादिना स्पष्टम्।

अयमपि रूपकवदधिकारूढवैशिष्टयो दृश्यते । यथा—

**'वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।**

**भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥'**

अत्र प्रदीपानामौषध्यात्मतया प्रकृते सुरतोपयोगिन्यन्धकारनाशे उपयोगोऽतैलपूरत्वेनाधिकारूढवैशिष्ट्यम् ।

**संदेहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थिः ॥ ३५ ॥**

---

## विवृतिः

अधिकारूढवैशिष्टयं परिणाममाह—**अयमपीति** । परिणामोऽपीत्यर्थः ॥ यत्र हिमालये ॥ संदेहालंकारमाह—**संदेह इति** । प्रकृते उपमेयेऽन्यस्योपमानस्य प्रतिभोत्थापितः कविप्रौढोक्तिसिद्धः । न तु वस्तुस्वभावसिद्धः । 'ससंदेहस्तु भेदोक्तौ तदनुक्तौ च संशयः इति **काव्य**प्रकाशदर्शनात्, 'अनन्वयससंदेहावुपमांस्वेव दर्शितौ' इति **दण्डि**दर्शनाञ्चास्य ससंदेह इति संज्ञान्तरम् । संदेह इति संज्ञा तु 'उपमानोपमेयसंशयः संदेहः' इति **वामन**दर्शनादवसीयते । केचित्तु **काव्य**प्रकाशकारिकामेवं व्याकुर्वन्ति—'भेदोक्तौ तु ससंदेहो भेदानुक्तौ तु संशयः इत्यलंकारद्वयमेतदिति वदन्ति । तन्न । तथार्थकत्वे विशेष्यं दुर्लभं स्यात् । उपमानोपमेययोर्भेदोक्तौ ससंदेहस्तदनुक्तौ सत्यां संशय इत्यर्थो यदि क्रियते तदा प्रथमस्य व्यतिरेके द्वितीयस्य रूपकादावतिप्रसङ्गः स्यात् संशयालंकारस्य पृथक्त्वेनाप्युपादानाञ्च ।

## विज्ञप्रिया

**वनेचराणामिति** । यत्र हिमालये औषधय एव रजन्यां वनेचराणां वनितासखानां सुरतप्रदीपा भवन्ति इत्यन्वयः । प्रदीपीभावे हेतुमाह—**दरीगृहेति** । अतैलपूराः तैलपूरणरहितास्तैलसमूहरहिता वा । अत्र प्रदीपीभावस्य प्रकृतार्थोपयोगित्वं दर्शयति—**अत्रेति** । प्रकृते सुरतोपयोग्यन्धकारनाशे प्रदीपानामौषध्यात्मतया उपयोग इत्यन्वयः । औषध्यात्मतया परिणामस्येत्यपि क्वचिच्छोभनः पाठः । औषध्यात्मतया प्रकृत इति क्वचित्प्रामादिकः पाठः । नच सुरतमेव शाब्दं प्रकृतं नान्धकारनाशः; तस्याऽशाब्दत्वादिति वाच्यम्? सुरतोपयोगित्वेन तस्यापि प्रकृतत्वात् ।

## कुसुमप्रतिमा

अयमिति । परिणामोऽपीत्यर्थः । अस्यापि पूर्ववदेवाधिकरूढवैशिष्ट्यलक्षणमूह्यम् ।

वने इति । कुमारसम्भवप्रथमसर्गे हिमालयवर्णनमिदम् । यत्र हिमालये, रजन्यां दरीगृहीत् सङ्गेषु गुहागृहाभ्यन्तरेषु निषक्ताः संलग्ना भासा दीप्तयो यासां तास्तथाविधां ओषधयो लताविशेषाः, वनितासखानां सस्त्रोकाणां वनेचराण किरातानाम्, अलैपूरास्तैलपूरणशून्याः सुरतप्रदीपा रमणसाधकदीपा भवन्ति ।

अत्रेति । प्रदीपानाम् ओषधिष्वभेदेनारोप्यमाणानामित्यर्थः, ओषध्यात्मतया ओषधिस्वरूपतया हेतुना । सुरतोपयोगिनि रतावावश्यके । उपयोगस्तत्साधनोपयोगित्वम् । अतएवात्र परिणामीऽलङ्कार इत्याशयः । ननु तथाप्यधिकारूढ़वैशिष्ट्यत्वं कुत इत्याह अतैलेति । उपमाने प्रदोषे सन्तमपि तैलपूरत्वधर्म्ममवरोप्य तस्य रूपणादिति भावः ।

## विमला

अधिकारूढ़वैशिष्ट्यं परिणाममाह, अयमपीति ।—परिणामोऽपीत्यर्थः ।

वनेचराणामिति ।—यत्र—हिमाद्रौ, रजन्यां—रात्रौ, दर्य्यः,—कन्दराः एव, गृहाणि तेषाम् उत्सङ्गेषु—अभ्यन्तरेषु निषक्ताः,—पतिताः, भासः,—प्रभाः यासां ताः, ओषधयः,—लताविशेषाः, वनितासखानां—सभार्य्याणां, वनेचराणां—वनवासिनाम्, अतैलपूराः,—नास्ति तैलस्य पूरः,—पूरणं येषु तथाविधाः, तैलरहिता इत्यर्थः, सुरतप्रदीपाः,—श्रृङ्गारकालिकदीपविशेषा इत्यर्थः, भवन्ति । उपेन्द्रवज्रा वृत्तम् । कुमारसम्भवस्येदं पद्यम् ।

## लक्ष्मी

अस्य भेदान्तरमुपपादयति—**अयमपीति** । परिणामोऽपीत्यर्थः । अस्यापि प्राग्वदेवाधिकारूढवैशिष्टयलक्षणमवगन्तवम् ।

वने चराणामिति । कुमारसम्भवे प्रथमसर्गे हिमालयवर्णनमिदम् । यत्र यस्मिन् हिमालये रजन्यां निशायाम्, दर्यः कन्दरा एव गृहास्तेषामुत्सङ्ग लक्षणया अभ्यन्तरभागास्तेषु निषक्ताः संलग्ना भासो दीप्तयो यासां ताः ~थोक्ता 'दरी तु कन्दरो वाऽस्त्री' इत्यमरः,ओषधयो लताविशेषाः, वनितासखानां सपत्नीकानां वनेचराणां वनवासिनां किरातानां न तैलपूरो यत्र तादृशा, तैलं विनैव ज्वलनशीलाः सुरतप्रदीपा रमणसाधकदीपा भवन्ति एवं रूपः स हिमालय अस्ति इति पूर्वेण सम्बन्धः । **उपेन्द्रवज्राच्छन्दस्तल्लक्षणन्तूक्तं** प्रागेव ।

अत्र प्रदीपीभावस्य प्रकृतार्थोपयोगित्वं दर्शयति—**अत्रेति** । प्रकृते सुरतोपयोग्यन्धकारनाशे प्रदीपानामौषध्यात्मतया उपयोग इत्यन्वयः । सुरतोपयोगिनि सुरतावावश्यके । प्रदीपानाम् ओषधिषु तादात्म्येनारोप्यमाणानामित्यर्थः, ओषध्यात्मतया ओषधिस्वरूपतया कारणेन, उपयोगस्तत्साधनोपयोगित्वम्, तेनैवात्र परिणामोऽलङ्कार इति भावः । न च सुरतमेव शाब्दं प्रकृतं नान्धकारनाशः तस्याऽशाब्दत्वादितिवाच्यम्, सुरतोपयोगित्वेन तस्यापि प्रकृतत्वात् । ननु तथाप्यधिकारूढवैशिष्ट्यत्वं कथमित्याशङ्कायामाह—अतैलेति । आरोप्यमाणे प्रदीपे विद्यमानमपि तैलपूरत्वधर्ममारोप्य तस्यारोपादित्याशयः ।

अयञ्च पूर्ववद् ध्वन्यमानोऽपि दृश्ते, तत्र शब्दशक्तिमूलो यथा—

**'पान्थ ! मन्दमते ! किं वा सन्तापमनुविन्दसि ।**
**पयोधरं समाशास्य येन शान्तिमवाप्नुयाः ॥'**

अत्र पयोधरशब्दमूलः पयोधरे पयोधरतया तापसमनः कार्यकारित्वेन शब्दशक्तिमूलध्वनिः । अर्थशक्तिमूलो यथा—

'इन्दुना परसौन्दर्यसिन्धुना बन्धुना विना । ममायं विषमस्तापः केन वा शमयिष्यते ॥

अत्र प्रतिपादयितुः प्रेयस्या विरहितत्वेन प्रेयसीवदनाभेदेनेन्दुरभिव्यज्यते इत्यर्थशक्ति मूलध्वनिः ।

उपमानोपमेययोः प्रस्तावात्सम्प्रति उपमानसंशययुतं सन्देहालङ्कार निरूपयति—**सन्देह** इति। प्रकृते उपमेये प्रतिभया विलक्षणया बुद्ध्योपयारात्तामुपपद्य कवेरुद्भूतया प्रौढोक्त्या उत्थित उत्थापित इति केवलविप्रौढोक्तिसिद्धो न तु वस्तुस्वभावसिद्ध इत्यर्थः, अन्यस्य उपमानस्य संशयसन्देहनामालङ्कारः 'परिणामो भवेत्' इत्यतो भवेदित्यनुषञ्जनीयम्। संशयश्चात्रोभयस्मिन् पक्षे तुल्यरूपो ग्राह्यः तेन सम्भावनाया अपि संशय-विशेषरूपतया नोत्प्रेक्षालङ्कारे सन्देहालङ्कारत्वप्रसङ्गः। संभावनाया एकस्मिन् पक्षे आधिक्येन उभयत्र तुल्यरूप-त्वाभावात्। उपमेये उपमानस्य संशय इति प्रतिपादनेन सादृश्यमूलकत्वमपेक्षितम् अत एव—

'इतो गता सा क्व गता न जाने गेहं गता मे हृदयं गता वा।'

इत्यत्र नायमलङ्कारः संशयस्य सादृश्यमूलकत्वाभावात् अस्य प्रेममात्राधिक्यत्वेऽपि वर्णनीयाधिक्यत्वा-भावाच्च असद्विषयेऽपि कस्यचित्प्रेमसम्भवात्। यद्यपि काव्यप्रकाशकृता 'ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः' इत्युक्तं तथा दण्डिनापि—

'अनन्वयससन्देहौ उपमास्वेव दर्शितौ।'

## रुचिरा

उदाहरति—**यथा**—'**यत्र** यस्मिन् हिमालये इति यावत्। **रजन्यां** निशायाम्। **दरीगृहोत्सङ्गनिषक्तभासो** दर्य्यो गर्त्ता एव गृहास्तेषामुत्सङ्गलक्षणयाऽभ्यन्तरभा गास्तेषु निषक्ता नितान्तमासक्ता भासः प्रकाशा यासां तास्तथाभूताः। 'दरी तु कन्दरो वा स्त्री' गृहाः पुंसि च भूम्योव इति चामरः। **ओषधयः**। **वनितासखानां** वनितां एव सखायो येषां ते तथोक्ताः। **वनेचराणाम्**। **अतैलपूरा** न तैलपूरो यत्र तथोक्तास्तैलमन्तरैव ज्वलनशीलाः। **सुरतप्रदीपाः**। **भवन्ति**। 'स हिमालय' इति पूर्वेणान्वयः। कुमारसम्भवस्येदं पद्यम्। उपेन्द्रवज्राछन्दः।। १२० ॥'

लक्षणीयं निर्दिशति—**अत्रेत्यादिना**। स्पष्टम्। अयं च ध्वन्यमानोऽपि सम्भवति। तत्र शब्दशक्तिमूलो यथा—'पान्थ ! मन्दमते ! किं वा सन्तापमनुविन्दसि। पयोधरं समाशास्व येन शान्तिमवाप्नुयाः ॥' अत्र 'पयोधर' शब्दमूलः पयोधरे पयोधरतया तापशमनकार्य्योपयोगिता पयोधरशब्दशक्तिमूला ध्वन्यते। अर्थशक्तिमूलो यथा—'इन्दुना परसौन्दर्य्यसिन्धुना बन्धुना विना। ममायं विषमस्तापः केन वा शमयिष्यते ॥' अत्र वक्तुः प्रियया विरहितत्वेन प्रियावदनाभिन्नत्वेनेन्दुरभिव्यज्यतेऽभिप्रेतः।

**शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा ।**

यत्र संशय एव पर्यवसानं स शुद्धः । यथा—

**'किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी**

**वेलाप्रोच्छलितस्य किं लहरिका लावण्यबारांनिधेः ।**

**उद्गाढोत्कलिकावतां स्वसमयोपन्यासविश्रम्भिणः**

**किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ॥'**

---

## विवृतिः

भेदोक्तौ तदनुक्तौ च संशयः स तु संदेहः' इति काव्यप्रकाशाभिप्रायमाकलय्य ग्रन्थकृत्तथा लक्षणं कृतवान् ॥ **वेलायां** तीरे उच्छलितस्य उद्गतस्य । **उद्गाढोत्कलिकावता**मत्यन्तोत्कण्ठाशालिनाम् । **स्वसमयस्य** स्वसिद्धान्तस्य स्वाचारस्य वा । **उपन्यासे** ज्ञापने । **विश्रम्भिणः** प्रणयिनः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । 'विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च' इति मेदिनीकरः । अनवहितशिष्यताडनाय या यष्टिः सोपदेशयष्टिः । **शृङ्गारिणः** कामस्य ॥

## विज्ञप्रिया

सन्देहालङ्कारमाह—**सन्देह** इति । प्रतिभया उत्थितोऽन्यस्याऽप्रस्तुतार्थकोटेः प्रस्तुते वस्तुनि यः संशयः स सन्देहालङ्कार इत्यर्थः ।

**किं तारुण्येति** । इयं नायिका किं लावण्यतरोः नवा वल्लरी ! लावण्यरूपतर्वाश्रिता नवा लतेत्यर्थः । कीदृशी रसभरोद्भिन्ना शृङ्गाररस एव रसो जलं तेनोद्भिन्नो जलसेकेन लतोद्भेदात् । किंवा वेलया नीरेण प्रोच्छलितस्य उच्छलितस्य लावण्यरूपस्य वारांनिधेः समुद्रस्य लहरिका तरङ्गः । "वेला स्यान्नीरतीरयोः" इति कोषः । किं वा शृङ्गारिणो देवस्य कन्दर्पस्य अर्थात् शृङ्गारार्थमुद्दामोत्कलिकावतां गाढोत्कण्ठावतां जनानां स्थाने उपदेशस्य अर्थात् शृङ्गारोपदेशस्य साक्षाद् यष्टिरालम्बनभूता यष्टिः । एनामालम्ब्य शृङ्गारोऽनुभूयतामित्युपदेशः । देवस्य कीदृशस्य स्वसमयस्य वसन्तस्य उपन्यासेन विश्रम्भिणो विश्वस्तस्य ममेदानीमुपदेशो योग्य इत्येवं विश्वासवत इत्यर्थः । असन्दिहानत्वमेव विश्वासः ।

## लोचन

सन्देहः सन्देहाख्योऽलङ्कारः । प्रकृते वर्ण्यमाने अन्यस्य आरोप्यमाणस्य । एवं च प्रकृतसन्देहेऽप्रकृतमपि सन्दिह्यत एव । एवं च प्रकृताप्रकृतविषयसंशयज्ञानं सन्देहालङ्कारः इत्यर्थः । संशयश्च व्यवस्थानाद्यनेककोटिकज्ञानम् ।

एवंच संशय इत्येतावतैव लक्षणे पर्याप्ते प्रकृते अन्यस्येति वचनं "मध्यं तव" इत्यादि वृत्त्युदाहरिष्यमाणव्यवच्छेदार्थम्। **प्रतिभोत्थित** इति, प्रतिभा कवेः, तया उत्थितः आदृतः, एवञ्च कविवर्णितस्यापि "स्थाणुर्वा पुरुषो वा" इति संशयस्य नालङ्कारता। एतदेव वृत्तौ स्फुटीभविष्यति। अप्रतिभोत्थापित इत्यादिना।

रसः तारुण्यपक्षे—भोगाभिलाषः, पक्षे सामान्यद्रवः। वेलालावण्यपक्षे-सामान्यमर्य्यादा, समुद्रपक्षे-तटम्। उच्छलितम् उत्सर्पणम् अतिक्रमः। उत्कलिका उत्कण्ठा। स्वसमयोपन्यासविश्रम्भिणः स्वसम्मतार्थकथने विश्वासप्रवर्त्तकस्य साक्षाद् उपदेशयष्टिः, यष्ट्याकारमूर्त्तिमत्त्वेन प्रत्यक्षमुद्देशः। यद्वा उपदेशार्थं यष्टिः, ताडनवेत्रादिदण्डः। तथाहि—यस्याः कस्या अपि विद्याया उपदेष्टारः बालानां चपलचित्तनिवारणाय ताडनार्थं यष्टिमाददते इति लोकप्रसिद्धः।

## कुसुमप्रतिमा

अस्य खलूपमानोपमेषघटितालङ्कारप्रकरणत्वादिदानीमुपमेये उपमानसंशयघटितं सन्देहालङ्कारं लक्षयति सन्देह इति। प्रकृते उपमेये, प्रतिभोत्थितः कविप्रौढोक्तिमात्रनिष्पन्नः, न पुनः पदार्थस्वभावसिद्ध इत्यर्थः, अन्यस्य उपमानस्य संशयः सन्देहो नामलङ्कारो भवेदित्यनुषज्यते। तुल्यरूपेणोभयपक्षज्ञानं संशयः, एकपक्षाधिक्येन उभयपक्षज्ञान सम्भावना। तेन सम्भावनारूपायामुत्प्रेक्षायां नाति व्याप्ति। "ससन्देहस्तु भेदोक्तौ च संशयः" इति काव्यप्रकाशे "अनन्वयससन्देहौ उपमास्वेव दशतौ" इति काव्यादर्शे च ससन्देह इति नामदर्शनेऽपि "उपमानोपमेयसंशयः सन्देहः" इति प्राचीनतमवामनसूत्रे सन्देह इति नामदर्शनात् ससन्देह इति नामापेक्षया लाघवाच्च सन्देह इति नामनिर्द्देशः। असौ च सन्देहस्त्रिधा—शुद्धः, निश्चयगर्भः, निश्चयान्तश्चेति।

यत्रेति। संशये सत्येव, पर्य्यवसानं वाक्यसमाप्तिः। शुद्धः केवल इत्यभिन्नोऽर्थः।

किमिति। काञ्चित् सुन्दरीमवलोक्य कस्यचिदुक्तिरूपः श्लोकोऽयं बन्धुकविकृतः। इयं दृश्यमाना तरुणी, तारुण्यं यौवनमेव तरुस्तस्य, रसभरेण क्षीरातिशयेन श्रृङ्गारातिशयेन च उद्गता नवा नूतना वल्लरी मञ्जरी किम्? । युवतिरियं यौवनोच्चसीमारूढेत्यर्थः। वेलायां तीरे प्रोच्छलितस्य पूरातरेका दुत्थतस्य, लावण्यवारां निर्लावण्यसमुद्रस्य लहरिका तरङ्गःकिम्? । अतीवलावण्यवतीयमि त तात्पर्य्यम्। अथवा उद्गाढ़ा सतिशया उत्कलिका, प्रियतमासङ्गमायोत्कण्ठा एषामस्तीति तेषां जनानां सम्बन्धे स्वसमयस्य निजप्रवर्त्तितव्यवहारस्य उपन्यासे प्रचारे विश्रम्भिणः प्रणयिनः अभिलाषिण इत्यर्थः श्रृङ्गारिणो देवस्य काम देवस्य, साक्षात् उपदेशयष्टिः शिक्षादण्डः किम्? यथा पाठशालायां शिक्षकमहाशयः शिक्षादण्डप्रदर्शनेन स्वप्रवर्त्तितव्यवहारे शिशुच्छात्रान् प्रवर्त्तयति, तथा कामदेवोऽपि अस्याः प्रदर्शनेन स्वप्रवर्त्तितव्यवहारे कामजनान् प्रवर्त्तयतीति भावः।

अत्र उपमेयभूतायां सुन्दर्य्याम् उपमानभूतानां तादृश-वल्लरी लहरिकोपदेशयष्टीनां संशयात् तस्मिन् सत्येव च वाक्यसमाप्तेः शुद्धसन्देहोऽलङ्कारः।

## विमला

सन्देहालङ्कारमाह, सन्देह इति।—प्रकृते—प्रस्तुते, उपमेये इत्यर्थः, प्रतिभोत्थितः—प्रतिभया—कविप्रौढोक्त्या, उत्थितः—सिद्धः, न तु वस्तुस्वभावसिद्धः इति भावः, अन्यस्य—उपमानस्य, संशयः—सन्देहः, सन्देहः—तदाख्यालङ्कार इत्यर्थः। "ससन्देहस्तु भेदोक्तौ तदनुक्तौ तदनुक्तौ च संशयः" इति काव्यप्रकाशदर्शनात्, "अनन्वय ससन्देहौ उपमास्वेव दर्शितौ" इति दण्डिदर्शनाच्च अस्य ससन्देह इति संज्ञान्तरं सन्देह इति संज्ञा

तु—"उपमानोपमेयसंशयः सन्देहः" इति वामनदर्शनादवसीयते । केचित्तु काव्यप्रकाशकारिकामेवं व्याकुर्वन्ति—"भेदोक्तौ तु ससन्देहो भेदानुक्तौ तु संशयः" इत्यलङ्कारद्वयमेतदिति वदन्ति, तत्र; तथाऽर्थकत्वे विशेष्य दुर्लभं स्यात् । उपमानोपमेययोर्भेदोक्तौ ससन्देहः, तदनुक्तौ सत्यां संशयः इत्यर्थो यदि क्रियते, तदा प्रथमस्य व्यतिरेके, द्वितीयस्य रूपकादौ अतिप्रसङ्गः स्यात्, संशयालङ्कारस्य पृथक्केनाप्युपादानाच्च । "भेदोक्तौ तदनुक्तौ च संशयः, स तु सन्देहः" इति काव्यप्रकाशाभिप्रायमाकलय्य ग्रन्थकृत तथा लक्षणं कृतवान् इति सङ्क्षेपः । असौ—सन्देहः शुद्धः,—केवलः, निश्चयाविमिश्रः इति यावत्, संशयपर्य्यवसायीत्यर्थः, निश्चयगर्भः,—निश्चयः,—सन्देहाभावः गर्भे—मध्ये यस्य तथाविधः, मध्ये कृतनिश्चय इत्यर्थः, निश्चयान्तः,—सन्देहानन्तरं प्रकृतावधारणञ्चेत्यर्थः, इति त्रिधा—त्रिविधः, मन्तव्य इति शेषः ।

शुद्धमुदाहरति, किमिति ।—नायिकादर्शने कामिजनस्य वितर्कोक्तिरियम् । इयं—पुरतः परिदृश्यमाना काऽपीत्यर्थः, तारुण्यतरोः,—यौवनद्रुमस्य, रसभरेण—रसातिरेकेण, उद्‌भिन्ना—निःसृता, नवा वल्लरी—मञ्जरी, किम्? वेलासु—तटेषु, प्रोच्छलितस्य—स्फीतोत्थितस्य, लावण्यवारां निधेः,—लावण्यसागरस्य, लहरिका—तरङ्गः, किम्? अथवा उद्‌गाढा—अत्युत्कटा, या उत्कलिका—उत्कण्ठा, कान्ताविषयिणी उत्सुकता इत्यर्थः, ("उत्कण्ठोत्कलिके समे" इत्यमरः) तद्वताम्, अत्यन्तोत्कण्ठाशालिनां कामिनामिति यावत्, स्वसमयस्य—निजसिद्धान्तस्य, स्वाचारस्य वा, ("समयाः शपथाचार-कालसिद्धान्तसंविदः" इत्यमरः) उपन्यासे—ज्ञापने, विश्रम्भिणः,—प्रणयिनः, ("विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च" इति मेदिनीकरः) श्रृङ्गारिणः देवस्य—मदनस्येत्यर्थः, साक्षात्—मूर्त्तिमतीत्यर्थः, उपदेशयष्टिः,—"रे ! एवमेवं कुरुत" इति उक्त्वा अनवहितशिष्यताड़नाय शिक्षादण्डः, किम्? बन्धुकवेरिदं पद्यम् । शार्दूलविक्रीड़ितं वृत्तम् । यथा वा—"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः? श्रृङ्गारैकरसः स्वयं नु मदनः? मासो नु पुष्पाकरः? । वेदाभ्यासजड़ः कथं नु विषयव्यावृत्तकौतूहलो निर्मातुं प्रभवेत् मनोहरमिदं रूपं पुराणो मुनिः ॥" इति ।

## लक्ष्मी

इति चोक्तं तथापि सन्देहस्य संज्ञान्तरं तत्, सन्देह इति संज्ञा तु 'उपमानोपमेयसंशयः सन्देह' इति वामनसूत्रदर्शनादवगम्यते । असौ सन्देहः शुद्धः आतिदावन्ते मध्ये च संशय एव उत्थाप्यमानो यत्र स्यात् स शुद्धसन्देहः, तथा यत्रादावन्ते च संशयो निश्चयो गर्भे मध्ये यस्य स तादृशो द्वितीयो निश्चयगर्भः सन्देहः, यत्रादौ मध्ये च संशयो निश्चयाऽन्तोऽवसाने यस्य स तादृशस्तृतीयो निश्चयान्तसन्देह इति एवं त्रिधा त्रिप्रकारकः सन्देह इत्यर्थः ।

शुद्धसंशयं निरूपयति—यत्रेति । यत्र संशये आदौ मध्ये चान्ते च संशये सत्येव, पर्यवसानं वाक्यपरिसमाप्तिः । शुद्धः विशेषणरहितः केवल इत्यर्थः ।

किमिति । काञ्चित्कामिनीमवलोक्य कस्यचिदुक्तिरियम् । इयं पुरोऽवलोक्यमाना रमणी तारुण्यं यौवनमेव तरुस्तस्य, रसभरेण रसातिशयेन जलसेकेन लतोद्‌भेदात् उद्‌भिन्ना उद्गता, अन्यत्र श्रृङ्गाररस एव रसो जलं तस्य भरणातिशयेन उद्‌भिन्ना पूर्णा नवा अभिनवा अम्लाना वा वल्लरी मञ्जरी किम्? तरुणीयं तारुण्योच्चसीमामारूढेत्यर्थः । वेलासु तटप्रदेशेषु प्रोच्छलितस्य पूरातिरेकादत्यन्तमुद्गतस्य लावण्यवारांनिधेः लावण्यसमुद्रस्य लहरिका लहरी तरङ्ग इति यावत् किम्? अत्यन्तलावण्ययुतेयमितिभावः । अथवा अत्युत्कटा या उत्कलिका

कान्तोत्सङ्गमायोत्कण्ठा स एषामस्तीति तेषां तादृशानां कामुकानां सम्बन्धे स्वसमयस्य स्वसिद्धान्तस्य स्वाचारस्य वा उपन्यासे ज्ञापने विश्रम्भिणः प्रणयिन अभिलाषिण इति तात्पर्यम् ।

'समयाः सपथाचारकालसिद्धान्तसंविदः' इत्यमरः ।

'विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च' इति मेदिनी ।

श्रृङ्गारिणो देवस्य प्रशस्तश्रृङ्गारिकामदेवस्य साक्षात् मूर्त्तिमती उपदेशस्य सूचिका यष्टिर्दण्डः किम् ? यथा विद्यालये यस्याः कस्या अपि विद्याया उपदेष्टारः चपलचित्तबालताडनाय यष्टिप्रदर्शनेन बालशिष्यान् प्रवर्तयति तथा कामदेवोऽपि अस्याः प्रदर्शनेन स्वसिद्धान्ते कामुकान् प्रवर्त्तयतीत्याशयः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

अत्र उपमेयभूतायां कामिन्याम् उपमानभूतानां तथाविधबल्लर्यादीनां संशयादन्ततोऽपि निश्चयाभावात् तथासत्येव हि वाक्यपर्यवसानात् शुद्धसन्देहालङ्कारः । यथा वा—

किमन्दुः ? किं पद्मं ? किमु मुकुरबिम्बं ? किमु मुखम् ?

किमब्जे ? किं मीनौ ? किमु मदनबाणौ ? किमु दृशौ ? ।

खगौ वा ? गुच्छौ वा ? कनककलशौ वा ? किमु कुचौ ?

तडिद्वा ? तारा वा ? ललितलतिका ? वा किमबला ? ॥

अत्राप्येकस्यामेवोपमाभूतायामवलायामुपमानभूतानामिन्द्वादीनां संशयात् तस्मिन्नेव च वाक्यसमाप्तेः शुद्धसन्देहः ।

## रुचिरा

एवं परिणामं लक्षयित्वा सन्देहं लक्षयति—**१११प्रकृत** उपमेये उपमाने वा । **अन्यस्याप्रकृतस्योपमेय**-स्योपमानस्य वेति यावत् । **प्रतिभोत्थितः** प्रतिभया विलक्षणया बुद्ध्योपचारात्तामुपपद्य कवेरुद्भूतया प्रौढोक्तोय-त्थित उत्थापित इति तथोक्तः । णिजोऽन्तर्भावे रूपमिदम् । **संशयोऽनिश्चयश्च** । **सन्देहः** सन्देहोऽस्मिन्नस्तीति तथोक्तः । अत एवास्य 'ससन्देह' इति संज्ञाऽन्तरम् । इदं तत्त्वम्—कविना यदि स्वप्रौढोक्त्योत्थापित उपमेये उपमानस्य उपमाने उपमेयस्य वा संशयस्तर्हि स सन्देह इति व्यपदिश्यते । उपमेयोपमानयोः संशयो भेदस्य किञ्चित् प्रतीयमानत्व एव सम्भवति, स च क्वचिदुच्यते, क्वचिच्च न । अत एवोक्तम्-'ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः ।' इति प्रकाशकृता । उपमेयोपमानयोश्च संशयहेतुको भेदः सादृश्यमूलो भवति, सादृश्यं हि तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । उपमेयोपमानयोः संशयः सन्देह इत्युक्त्या—'इतो गता सा क्व गता न जाने, गेहं गता, मे हृदयं गता वा ।' इत्यादेर्व्यवच्छेदः । संशयस्य प्रतिभोत्थापितत्वे सन्देहाङ्गीकारेण वस्तुस्वभावसिद्धस्य निरासः । अत एव वक्ष्यते 'स्थाणुर्वा पुरुषो वा'इत्यादौ न सन्देहालङ्कार इति । 'पश्यनीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः ।' इत्यादौ उपमेये उपमानस्य सर्वथाऽभेदावगमप्राधान्ये संशयतिरोभावाञ्च नातिप्रसङ्गः । उत्प्रेक्षायां च सम्भावना-प्राधान्यान्नातिपातः । तथोक्तम्—'उपमानोपमेयकोटिकस्य संशयस्याभावान्नोत्प्रेक्षायामस्यातिप्रसङ्गः, तत्र सम्भा-वनाया एव वैशिष्टयम्' इति । एवम्—'तदोजसस्तद्रयशसः स्थिताविभौ वृथेति चित्ते कुरुते यदायदा ।' इत्यादेः सुतरां व्युदासः । इति दिक् ॥ ८८ ॥

अस्य भेदत्रयं निर्दिशति—११२ **असौ** निरुक्तलक्षणः सन्देहः। **शुद्धः**। **निश्चयगर्भो** निश्चयो गर्भेऽन्तर्यत्र स तथोक्तः। तथा—**निश्चयान्तो** निश्चयोऽन्ते यत्र तथोक्तः। **इति**। **त्रिधा**। अतएवोक्तं पण्डितराजैः 'सादृश्यहेतुका निश्चयसम्भावनान्यतरभिन्ना धी रमणीया संशया (सन्देहा) लङ्कृतिः। सा च—शुद्धा, निश्चयगर्भा निश्चयान्ता चेति त्रिविधा।' इति। शुद्धं लक्षयति—**यत्र** यस्मिन् सन्देहे। **संशये**। **एव पर्य्यवसानमन्ततो** बुद्धिः। **सः**। **शुद्धस्तत्र**भेदकः सन्देह इत्यर्थः। अयम्भावः— आदावन्ते मध्ये च संशय एव प्रतिभयोत्थाप्यमानो यत्र स्यात् स शुद्धसन्देहा लङ्कारः। एवकारेण भेदान्तरतोऽस्य व्यवच्छेदः। इति।

उदाहरति—**यथा**—'**इयं** पुरतो दृश्यमाना नायिकतेति भावः। **तारुण्यतरोस्त्रा**रुण्यं यौवनमेव तरुस्तस्य। रसभरोद्भिन्ना रसभरेण रसभारेण रसातिशयेनेति यावत् उद्भिन्ना पूर्णा। **नवा**ऽभिनवाऽम्लाना। **वल्लरी** मञ्जरी। **किम्**। **वेलाप्रोच्छलितस्य** वेलासु तटप्रदेशेषु प्रोच्छलितोऽत्यन्तमुत्थितस्तस्य। लावण्यवारान्निधेर्लावण्या, न्येव वारीणि जलानि तेषां निधिस्तस्य। यद्वा-लावण्यस्य वारान्निधिस्तस्येति। **लहरिका** लहरी। **किम्**। 'इय'मित्यनुषज्यते। **अथवा**। **उद्गाढोत्कलिकावतामुद्गा**ढाऽत्युत्कटा योत्कलिकोत्कण्ठा कान्ताविषयिण्युत्सुकतेति यावत् सैषामस्तीति तेषां, तथाभूतानां कामुकानामिति भावः। **स्वसमयोपन्यासविश्रम्भिणः** स्वेषां समयः सिद्धान्तस्तस्योपन्यासो ज्ञापनं तत्र विश्रम्भोऽस्यास्तीति तस्य तथाभूतस्य। **श्रृङ्गारिणः** प्रशस्तश्रृङ्गारस्य तत्प्रधानस्येति यावत्। **देवस्य** कामदेवस्य। **साक्षात्** मूर्त्तिमती। **उपदेशयष्टि**रूपदेशस्य (सूचिका) यष्टिः। **किम्**। 'इयमित्यनुषज्यते। अत्रोपमेयभूतायां कस्याञ्चिन्नायिकायामुपमानभूतानां वल्लर्य्यादीनामनैकान्त्यम्। शार्दूलविक्रीडितं वृत्तम्। श्रृङ्गारतिलकस्येदम्॥ १२१॥'

यथा वा-'किमिन्दुः? किं पद्मं? किमु मुकुरबिम्बं? किमु मुखं? किमब्जे? किं मीनौ? किमु मदनबाणौ। किमु दृशौ?। खगौ वा? गुच्छौ वा? कनककलशौ वा? किमु कुचौ? तडिद्वा? तारा वा? ललितलतिका वा? किमबला?॥' इति। निश्चयगर्भ इत्यन्वर्थेयं सञ्ज्ञेति द्योतयन्नाह—**यत्रेत्यादि**। स्पष्टम्।

यत्रादावन्ते च संशय एव मध्ये निश्चयः स निश्चयमध्यः।

यथा—

**'अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः**

**कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम्।**

**कृतान्तः किं साक्षान्महिषवहनोऽसाविति पुनः**

**समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः॥'**

अत्र मध्ये मार्तण्डाद्यभावनिश्चयो राजनिश्चये द्वितीयसंशयोत्थानासंभवात्।

---

## विवृतिः

निश्चयगर्भ इत्यत्र गर्भपदस्य मध्यार्थत्वाभिप्रायेण व्याकरोति—**यत्रेति**। **अयं मार्तण्डः किमिति**। त्वामाजौ समालोक्य प्रतिभटाः प्रतिकूलशूराश्चिरमिति विकल्पान्विदधति। विकल्पानाह—**अयमिति**। व्यावर्तकधर्ममाह—**स खल्विति**। इतो गतः सर्वा इत्यादिकृशानुव्यावर्तको धर्मः। एष कृशानुर्नियतं सर्वा दिशः प्रसरति। वाय्वभिमुखदिङ्भात्रप्रसारितत्वात्। अयं तु सर्वदिक्प्रसारी न स इत्यर्थः। महिषवाहनत्वाभावः कृतान्तव्यावर्तको धर्मः। मार्तण्डाद्यभावनिश्चयो मार्तण्डादिभेदानुमानं न तु राजनिश्चय इति शेषः। अत्र हेतुमाह—**राजेति**। **द्वितीयसंशयानुत्थानात्** द्वितीयसंशयानुत्थानप्रसङ्गात्॥

## विज्ञप्रिया

**मध्ये च निश्चय** इति। एककोटेर्व्यतिरेकनिश्चय इत्यर्थः। **अयमिति**। आजौ युद्धे त्वां समालोक्य प्रतिभटाः प्रतिकूलवीरा इत्येवं वितर्कान् विदधति कुर्वन्ति। तान् वितर्कान् आह—**अयमिति**। इतो गतः। **सर्वा दिश** इति। कृशानुः सर्वा दिशो न प्रसरति। अयं तु सर्वदिक्प्रसारी, अतो न कृशानुरित्यर्थः। साक्षात् कृतान्त इत्यन्वयः। महिषवाहनत्वाभावान्न कृतान्त इत्यर्थः। अत्र मार्त्तण्डाद्यभावनिश्चयोमध्ये। ननु विरुद्धकोट्यभावनिश्चयाद्राजकोटिनिश्चयोऽपीत्यत आह—**राजत्व निश्चय** इति।

## कुसुमप्रतिमा

यत्रेति। यस्मिन पद्ये गद्ये वेत्यर्थः। दक्षिणेन चक्षुषा पश्यतीत्युक्ते वामेन न पश्यतीति प्रतीतिवत्—निश्चयगर्भ इत्युक्ते आदावन्ते च संशय इति प्रतीतेः स्वाभाविकत्वादाह चादावित्यादि ! गर्भशब्दस्य मध्यार्थकत्वादाह निश्चयमध्य इति।

अयमिति। कस्यचिद्राज्ञः प्रशंसेयम्। अयं दृश्यमानः पदार्थः किं मार्त्तण्डः सूर्य्यः? इति संशयः। ? स खलु मार्त्तण्डः सप्तभिस्तुरगैरश्वैः इतो गतो भवति, अयन्तु एकेनैव तुरगेण गत इति नाय" मार्त्तण्ड इति पुनर्निश्चयः। तर्हि किं कृशानुवह्निः? इति संशयः। एष कृशानुः नियतं निश्चितमेव सर्वा दियो न प्रसरति न गच्छति; अयन्तु सर्वा एव दिशः प्रसरतीति न कृशानुरपीति पुनर्निश्चयः। तर्हि किं साक्षात् कृतान्तो यमः? इति संशयः। **असौ**

कृतान्तः, महिषी वहनं वाहनं यस्य स तादृश, अयन्तु अश्ववाहन इति न कृतान्तोऽपि; तर्हि कः पुनरयमिति भावः। हे राजन्! आजौ युद्धे त्वां समालोक्य प्रतिभटा, विपक्षयोद्धारः, चिरं यावत् इति इत्थं विकल्पान् विविधसंशयान् विदधति कुर्वन्ति।

अत्र उपमेयभूते राजनि उपमानभूतानां मार्त्तण्ड-कृशानु कृतान्तानां संशयात् आदावन्ते च तस्यावस्थानात् मध्ये चोक्तविधनिश्चयात् निश्चयगर्भः सन्देहोऽलङ्कारः।

अत्रेति। मार्त्तण्डादीनामभावस्य अन्योन्याभावस्य भेदस्येति यावत् निश्चयः अनुमानेनावधारणम्। अथ राजनिश्चयः किं न स्यादित्याह राजेति। राज्ञः त्वामिति युष्मत्पदोपस्थाप्यस्य नृपतेः, निश्चये अनुमानेनावधारणे द्वितीयसंशयोत्थानासम्भवात् "कृशानुः किम्" इति द्वितीयसंशयोत्पत्त्यसम्भवात् सामग्रयभावादिति भावः। एतदुपलक्षणम्। द्वितीयेऽपि राजनिश्चये तृतीयसंशयोत्थानासम्भवात्, तृतीये च राजनिश्चये विकल्पानिति प्रयोगानुपपत्तेरित्यपि बोध्यम्। एतेनान्तेऽपि च संशयस्थितिरक्षतैवेति लक्षणसङ्गतिद्रष्टव्या।

## विमला

निश्चयगर्भ इत्यत्र गर्भपदस्य मध्यार्थत्वाभिप्रायेण व्याकरोति—यत्रेति।

निश्चयमध्यमुदाहरति, अयमिति।—राजस्तुतिरियम्। अयं मार्त्तण्डः,—सूर्य्यः, किम्? व्यावर्त्तकधर्ममाह, स खल्विति।—सः,—मार्त्तण्डः, सप्तभिः तुरगैः,—अश्वैः, इतः,—गतः, खलु, तस्य सप्ताश्ववाहनत्वादिति भावः, तस्मान्नायं सूर्य्य इति निश्चयः; कृशानुः,—अग्निः, किम्? एषः,—अग्निः, नियतं—निश्चितं, सर्वाः दिशः न प्रसरति, तस्य वायुभिमुखादिङ्मात्रप्रसारित्वात्, ऊर्द्धप्रसरस्य प्रसिद्धत्वाद्वेति भावः, अयन्तु सर्वदिक्प्रसारौ, तस्मान्नायम् अग्निरिति निश्चयः; ["सर्वाः" इत्यादि कृशानुव्यावर्तको धर्मः इति ज्ञेयम्] साक्षात्—स्वयं, कृतान्तः,—यमः, किम्? असौ—यमः, महिषवहनः, तस्मान्नायं कृतान्त इति निश्चयः; [अत्र महिषवाहनत्वाभावः कृतान्तव्यावर्त्तको धर्मः इति बोध्यम्] त्वाम् आजौ—युद्धे, समालोक्य—दृष्ट्वा, प्रतिभटाः,—प्रतियोद्धारः, चिरं—दीर्घकालं, ["चिरम्" इत्यत्र "पुनः" इति पाठे—असौ पुनः,—कृतान्तस्तु इत्यन्वयो बोध्यः] इति—इत्थं, विकल्पान्—वितर्कान्, विदधति—कुर्वन्ति। शिखरिणी वृत्तम्।

अत्रेति।—मार्त्तण्डाद्यभावनिश्चयः,—मार्त्तण्डादिभेदानुमानं, न तु राजनिश्चय इति शेषः। अत्र हेतुमाह, राजेति।—द्वितीयसंशयोत्थानासम्भवात्—द्वितीयसंशयानुत्थानाप्रसङ्गात् इत्यर्थः।

## लक्ष्मी

निश्चयगर्भसन्देहमभिधातुमुपक्रमते—**यत्रेति**। 'वामेन कर्णेन श्रृणोति' इत्यभिहितेऽर्थतो दक्षिणेन कर्णेन न श्रृणोतीत्यवगम्यते तद्वत् 'निश्चयगर्भ' इत्यभिहितेऽर्थत आदावन्ते च संशय इत्यवगम्यते इति द्योतयन्नाह—**आदावित्यादि**। मध्यार्थको गर्भशब्दस्तदाह—**निश्चयमध्य** इति।

**अयमिति**। राजानं प्रशंसतः कस्यचिदुक्तिरियम्। अयं पुरतोऽवलोक्यमानः पदार्थः मार्त्तण्डः किम्? भूलोकगतः सूर्यः किम्? इति संशयः। स प्रसिद्धो मार्त्तण्डः सप्तभिस्तुरुगैरश्वैः युतो युक्तः 'सर्व वाक्यं सावधारणं भवति' इति न्यायेन सप्तभिरेवाश्वैर्युक्तः, अयन्त्वसंख्यतुरगयुक्तत्वान्नायं मार्त्तण्ड इति पुनर्निश्चयः। तर्हि कृशानुः अग्निः किम्? इति संशयः। एष कृशानुः सर्वा दिशो नियतं यथास्यात्तथा न प्रसरति न गच्छति किन्तु वाय्वभिमुखामेव दिशं प्रसरति, अयन्तु सर्वा एव दिशः प्रसरतीति न कृशानुरपीति पुनर्निश्चयः। तर्हि साक्षात्

दृग्गोचरतां प्राप्तः कृतान्तो यमः किम्? इति संशयः। असौ सः कृतान्तो महिषवाहनः, अयन्तु कदाचिदपि महिषं नारोहति किन्तु अश्वमारोहतीति न कृतान्तोऽपि; कः पुनरयमित्याशयः। हे राजन्! आजौ सङ्ग्रामे 'आजौ स्त्री समभूमौ सङ्ग्राम' इति मेदिनी, समालोक्य सम्यक् दृष्ट्वा प्रतिभटाः प्रतिपक्षिसैनिकाः, चिरं बहुकालं यथास्यात्तथा इति एवं विधान् विकल्पान् विविधसंशयान् विदधति कुर्वन्ति। **शिखरिणीछन्दः** तल्लक्षणन्तूक्तं प्रागेव।

अत्रोपमेयभूते राजनि उपमानभूतानां मार्त्तण्डादीनां संशयात् आदावन्ते च तस्य स्थितत्वान्मध्ये च प्रदर्शितरीत्या निश्चयगर्भः सन्देहालङ्कारः।

कथमयं निश्चयगर्भ इति स्वयमुपपादयति—**अत्रेति**। उक्तोदाहरणे इत्यर्थः। मार्त्तण्डादीनामभावस्य अन्योन्याभावस्य निश्चयः अनुमानेन निर्णयः। ननु राजनिश्चयः किं न स्यादत आह—**राजनिश्चयेति**। द्वितीयोऽसौ संशयस्तस्योत्थानं तस्यासम्भवः तस्मात् तथोक्तेः। **अयम्भावः**—त्वमिति युष्मदोपस्थाप्यस्य राज्ञः अनुमानेन निश्चये कृशानुः किमिति द्वितीयसंशयोत्पत्त्यसम्भवात् सामग्रीवैकल्यादिति। नचासंख्यतुरगयुक्तत्वादिना राज्ञो-मार्तण्डाद्युपमानेभ्यः आधिक्योक्तेर्व्यतिरेकालङ्कार इति वाच्यम्, प्रथमतः सन्देहप्रतीत्यनन्तरं च वैधर्म्योपन्यासेन व्यतिरेकप्रतीतावप्युजीव्यत्वात् संशयचमत्कृतावपर्यवसानान्त् संदेहानुयायितया व्यतिरेकस्य सन्देहालङ्कारेणैव व्यपदेशौचित्यात्।

## रुचिरा

उदाहरति—**यथा**—'**अयम्**। मार्त्तण्डः सूर्य्यः। **किम्**? ननु नायं मार्तण्डः, यतः—**सः** मार्तण्डः। **खलु**। **सप्तभिः**। **तुरगैरश्वैः**। **इतो** युक्तः। अतो नायं मार्तण्ड इति भावः। कृशानुरग्निः। **किम्**? 'अय'मित्यनुषज्यते। नायमग्निरपि यतः—**एष** कृशानुः। **नियतं** खलु। क्रियाविशेषणमिदम्। **सर्वाः**। **दिशः**। नैरन्तर्य्ये द्वितीयेयम्। न **प्रसरति** उद्ध्र्वप्रसरणस्यैव निश्चितत्वात्। अतो नायं कृशानुरिति भावः। **कृतान्तो** यमः। **साक्षात्**। **किम्?** 'अय'मित्यनुषज्यते। ननु नायं कृतान्तो यतः—**असौ** कृतान्तः। **महिषवहनो** महिषवाहनः। अतो नायं यम इति भावः। इति। **त्वाम्**। **आजौ** सङ्ग्रामे। 'आजौ स्त्रीसमभूमौ सङ्ग्रामे' इति मेदिनी। **समालोक्य**। **प्रतिभटाः** प्रतियोद्धारः शत्रुसैनिकाः। **पुनः**। **विकल्पान्** नानासम्भावनाः। **विदधति**। शिखरिणीवृत्तम्॥ १२२॥'

ननु कथमयं निश्चयगर्भः सन्देह इत्याशङ्क्याह—**अत्रो**दाहृते पद्य इति भावः। **मध्ये**। **मार्तण्डाद्यभावनिश्चयः**। नच राजनिश्चय इत्याह—**राजनिश्चये**। **द्वितीयसंशयोत्थानासम्भवात्** द्वितीयोऽसौ संशयस्तस्योत्थानं तस्यासम्भवस्तस्मात्। अयम्भावः—अत्र जायमानस्य संशयस्य निराकरणपरायामपि शेमुष्यामन्ततोऽनिवृत्तिरित्यस्य सन्देहोपस्कारकत्वम्। इति।

यत्राऽऽदौ संशयोऽन्ते च निश्चयः स निश्चयान्तः। यथा—

**'किं तावत् सरसि सरोजमेतदारा-**
**दाहोस्विन्मुखमवभासते तरुण्याः।**
**संशय्य क्षणमिति निश्चिकाय कश्चि-**
**द्विब्बोकैर्बकसहवासिनां परोक्षैः॥'**

---

## विवृतिः

**किं तावदिति**। संशय्येति योजना। **बिब्बोकैर्निरुक्त** सूचकैश्चेष्टाविशेषैः। बकसहवासिनां पद्मानां परोक्षैरपरिचेयैः। बिब्बोकानभिज्ञत्वातिशयज्ञापनाय पद्मानां बकसहवासित्वेनोपन्यासः। प्रतिभोत्थित इत्यस्य व्यावृत्तिमाह—अप्रतिभेति। अत्रोञ्चैस्तरत्वादिना सादृश्यमस्त्येव॥

## विज्ञप्रिया

**किं तावदिति**। नायिकायामपि सरस्त्वाशङ्का बोध्या। आराद् एतत् किमित्यर्थः। विव्वोकैः "विव्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादर" इति। एवंलक्षणैः स्त्रीणां हावविशेषैरित्यर्थः। कीदृशैः बकसहवासिनां परोक्षैः—बका हि मत्स्यनिश्चयार्थं ध्यायिनस्तत्सहवासिनस्ततः शिक्षितध्यानात्तेषामपि परोक्षैः अप्रत्यक्षैः। अतिदुरूहत्वादत्यन्तध्यानेनैव ज्ञेयैरित्यर्थः।

## लोचन

सर्वा दिशो न प्रसरति, किन्तूर्ध्वमेव ज्वलतीति प्रसिद्धम्।

विव्वोको, भावविशेषः। यदुक्तमत्रैव "विव्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादर" इति। बकसहवासिनां पद्मानां परोक्षैरगोचरैः।

## कुसुमप्रतिमा

किमिति। शिशुपालवधाष्टमसर्गस्थमिदं पद्यम्। सरसि सरोवरे आरात् दूरे "आराद्दूरसमीपयोः" इत्यमरः, एतत् दृश्यमानम्, तावत् किं सरोजं पद्मम्? आहोस्वित् अथवा तरुण्याः कस्याश्चिद् युवत्याः, मुखम् अवभासते राजते? इति क्षण सशय्य सशयं कृत्वा कश्चित् कृष्णसहचरः, वकसहवासिनां वकपक्षिभिः सहावस्थायिनां बकसहवासित्वे सर्वथैव विलासानभिज्ञानामित्यर्थः पद्मानाम्, परक्षैरतीन्द्रियरविदितैरिति यावत् विव्वोकैः "विव्वोकस्त्वतिगवेण वस्तुनीष्टेऽप्यनादरः" इति प्रागुक्तलक्षणविव्वोकव्यञ्जकैस्तद्नतैर्भावविशेषैरित्यर्थः, निश्चिकाय "तरुण्या मुखमेवेदम्" इति निश्चितवान्।

अत्र उपमेये तरुण्या मुख आदावुपमानस्य पद्मस्य संशयदन्ते च तन्मुखत्वेन निश्चयान्निश्चयान्तः सन्देहोऽलङ्कारः।

## विमला

निश्चयान्तमुदाहरति, किमिति ।—आरात्—समीपे, पुरोवर्त्तिनीत्यर्थः, सरसि—सरोवरे, एतत्—दृश्यमानं, तावत्—(वाक्यालङ्कारे) सरोजं—पद्मं,किम् ? आहोस्वित्—अथवा, तरुण्याः—युवत्याः, मुखम् अवभासत ?—स्फुरति ? कश्चित्—जनः, इति—इत्थं क्षणं—कियत्कालं, संशय्य—सन्दिह्य, सञ्चिन्त्य इति यावत्, वकसहवासिनां—वकसहचराणां, पद्मानामित्यर्थः, [बिम्बोकानभिज्ञत्वातिशयज्ञापनाय पद्मानां वकसहवासित्वेनोपन्यास इति बोध्यम्] परोक्षैः,—अगोचरैः, अपरिचियैः इत्यर्थः, विब्बाकैः,—निरुक्तसूचकैः विलासविशेषैः, निश्चिकाय, मुखमिति शेषः, ईदृक् विलासः कुतः पद्मेषु ? तस्मात् तरुणीमुखमेवैतत् इति स्थिरौचकारेत्यर्थः । प्रहर्षिणी वृत्तम् । शिशुपालवधस्येदं पद्यम् ।

## लक्ष्मी

निश्चयान्तं लक्षयति—**यत्रादाविति** । स्पष्टम् ।

**किं** तावदिति । शिशुपालवधस्याष्टमे सर्गे पद्यमिदम् । सरसि जलाशये आरात् दूरे 'आराद्दूरसमीपयोः' इत्यमरः, एतत् अवलोक्यमानम्, किं तावत् सरोजं कमलम् ? आहो अथवा 'आहो उताहो किमुत विकल्पे किं किमूत च' इत्यमरः, स्वित् किम् 'स्वित्प्रश्ने च वितर्के च' इत्यमरः, तरुण्याः कस्याश्चिद् नवयौवनायाः, मुखं वदनम् अवभासते राजते ? इति इत्थं क्षणं क्षणावधि संशय्य तन्देहं विधाय कश्चित् कृष्णसहचरः बकसहवासिनां वकपक्षिभिः सह निवसतां सरसिजानामिति भावः । विव्वोकानभिज्ञत्वातिशयबोधनाय कमलानाम् वकसहवासित्वेनोपन्यासः । परोक्षैरिन्द्रियागोचरैः अज्ञातैरिति यावत् विव्वोकैः 'विव्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः' इत्युक्तलक्षणबोधकैः तद्वतैः स्त्रीणां भावविशेषैरित्यर्थः, निश्चिकाय निश्चयं कृतवान् 'इदं तरुण्या मुखमेव' इति निश्चयेन ज्ञातवानिति भावः । प्रहर्षिणीछन्दः तल्लक्षन्तूक्तं प्रागेव ।

अत्र उपमेये तरुण्या वदने आदावुपमानस्य कमलस्य संशयादन्ते च तद्वदनत्वेन निश्चयान्निश्चयान्तः सन्देहालङ्कारः ।

अयं लक्ष्यो व्यङ्ग्योऽपि च सम्भवति । तत्र लक्ष्यो यथा—

**'साम्राज्यलक्ष्मीरियमृष्यकेतोः सौन्दर्यसृष्टेरधिदेवता वा ।**
**रामस्य रामामवलोक्य लोकैरितिस्म दोलाऽऽरुरुहे तदानीम् ॥'**

अत्र एकदा साम्राज्यलक्ष्मीरित्यूह्यते, अथ तं पक्षं परित्यज्य सौन्दर्याधिदेवतेति वितर्क्यते इत्युभयकोटयालम्बनतया दोलासादृश्यात् संशयोऽत्र दोलाशब्देन लक्ष्यते ।

अयं व्यङ्ग्ये यथा—

**'तीरे तरुण्या वदनं सहासं नीरे सरोजं च मिलद्विकासम् ।**
**आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धालिकिशोरमाला ॥'**

अत्र पुरोवर्त्तिवदनसरोजरूपं व्यक्तिद्वयमवलोक्य 'अभेदसम्बन्धेन इदं पद्मम् ? अथवा इदम्' इत्याकारात् पद्मरूपे एकस्मिन् धर्मिणि 'इदं वा इदं वा' इति उभयकोटेः प्रकारत्वात् संशयः । इदमिदं वेत्यस्याऽशब्दबोध्यत्वाच्च व्यङ्ग्यत्वम् ।

## रुचिरा

निश्चयान्तं लक्षयति—**यत्रेत्यादिना**। स्पष्टम्।

उदाहरति—**यथा**—'**आरात्**समीपे पुरोवर्ति इति यावत्। 'आराद्दूरसमीपयोः।' इत्यमरः। **एतत्**। **सरसि**। 'विकस'दिति शेषः। **किम्**। **तावत्**। **सरोजम्**? आहो अथवा। 'आहो उताहो किमुत विकल्पे किं किमूत च।' इत्यमरः। **स्वित् किम्**। 'स्वित्प्रश्ने च वितर्के च' इत्यमरः। **तरुण्याः**। **मुखम्**। **अवभासते** स्फुरति। इति इत्थम्। **क्षणं** क्षणावधि। **संशय्य**। **कश्चित्**। **वकसहवासिनां** वकानां सहवासीति तेषाम्, सरोजानामिति भावः। **परोक्षैरगोचरैः** **विव्वोकै**र्विलासविशेषैः। **निश्चिकाय** निश्चितं कृतवान्। 'इदं मुखम्, इदं च सरोजम्' इति ज्ञातवानिति भावः। प्रहर्षिणीवृत्तम्। शिशुपालवधस्येदं पद्यम्॥ १२३॥'

इदम्बोध्यम्—अत्र संशयस्य जनविशेषनिष्ठस्यान्ते कविना निराकृतौ हेतुनिर्देशं निर्दिष्टायामपि चमत्कारित्वानपायात् सन्देहोपस्कारकत्वम्। यथा वा—'चपला जलदाच्चयुता लता वा तरुमुख्यादिति। संशये निमग्नः। गुरुनिःश्वसितैः कविर्मनीषी निरणैषीदथ तां वियोगिनीति॥' अयं लक्ष्यो व्यङ्ग्योऽपि च सम्भवति, क्रमेण यथा—'साम्राज्यलक्ष्मीरियमृष्यकेतोः सौन्दर्य्यसृष्टेरधिदेवता वा। रामस्य रामामवलोक्य लोकैरिति स्म दोलाऽऽरुरुहे तदानीम्॥', 'तीरे तरुण्या वदनं सहासं नीरे सरोजं च मिलद्विकासम्। आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धाऽऽलिकिशोरमाला॥' इति। संशयश्च क्वचिदनाहार्य्यः, क्वचिदाहार्यः। स हि यत्र परनिष्ठस्तत्र प्रायशोऽनाहार्यः, यत्र च स्वनिष्ठ एव तत्राहार्य्यः। अत्राद्यो यथा—'किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी'त्यादौ संशयानस्य निर्णयाभावात्। 'अयं मार्त्तण्डः किम्' इत्यादौ पुनरन्त्यः, अत्र वक्तुस्तत्त्वज्ञत्वात्। एवं च—'किमिन्दुः' इत्यादावनाहार्य्य एव। 'गगनाद्गलितो गभस्तिमानुत वाऽयं शिशिरो विभावसुः। मुनिरेवमरुन्धतीपतिः सकलज्ञः समशेत राघवे॥' इत्यादावाहार्य एव मुनेर्वशिष्ठस्य सकलज्ञत्वात्। अयं परम्परितोऽपि सम्भवति यथा—'विद्वद्दैन्यतमस्रिमूर्त्तिरथवा वैरीन्द्रवंशाटवीदावाग्निः किमहो महोज्ज्वलयशः शीतांशुदुग्धाम्बुधिः। किं वाऽनङ्गभुजङ्गदष्टवनिताजीवातुरेवं नृणां केषामेष नराधिपो न जनयत्यल्पेतराः कल्पनाः॥' इति दिक्।

अप्रतिभोत्थापिते तु 'स्थाणुर्वा पुरुषो वा' इत्यादिसंशये नायमलंकारः।

**'मध्यं तव सरोजाक्षि ! पयोधरभरार्दितम्।**

**अस्ति नास्तीति संदेहः कस्य चित्ते न भासते ॥'**

अत्रातिशयोक्तिरेव, उपमेये उपमानसंशयस्यैवैतदलंकारविषयत्वात्।

---

## विवृतिः

प्रकृतेऽन्यस्येत्यस्य व्यावृत्तिमाह—**मध्यमिति**। अत्रातिशयोक्तिरेवालंकारो न तु संदेहः। अत्र हेतुमाह—

## विज्ञप्रिया

एवमसादृश्यमूलकाहार्य्यसंशयाऽन्तरेऽपि नायमलङ्कार इत्याह—**मध्यं तवेति**। सन्देहः कस्य चित्ते न भासते इत्यन्वयः। तत्रातिशयोक्तिः इति वक्ष्यमाणायाः पञ्चविधाया अतिशयोक्तेर्भेदेऽप्यभेदारोपरूपप्रभेद एवात्रेत्यर्थः। नास्ति यः पदार्थः तदसत्त्वेऽपि तदभेदारोपरूपत्वात्। नन्वेवं सन्देहालङ्कारेऽप्येवमारोपोऽस्त्येवेत्यत आह—**उपमेयेति**। तथाचानयोरलङ्कारयोः परस्परभेदो निवेशनीय इति भावः।

## लोचन

अप्रतिभोत्थापिते इत्यनन्तरं काव्योपनिबद्धेऽपीति शेषः।

अतिशयोक्तिरेवाध्यवसायमूलत्वात्।

## कुसुमप्रतिमा

अथ प्रतिभोत्थित इति विशेषणं किमर्थमित्याह अप्रतीति। अप्रतिभया कविप्रौढोक्तिभिन्नेन केवलवस्तुस्वभावेनेत्यर्थः उत्थापिते उत्पादिते। नन्वत्र यथा संशयी न प्रतिभोत्थतः तथा उपमानोपमेय भावोऽपि नास्तीति ह्यङ्गविकलत्वात् कथमिदमुदाहरणं सङ्गच्छत इति चेन्न स्थाणुपुरुषयोः समानाकृतिमत्तया उपमानोपमेयभावस्य सत्त्वात् तेनैव च संशयस्वोत्थापनात् अन्यथा च संशयाभावात्। अथ तथापि "स्थाणुर्वा पुरुषो वा" एवम्भुतविषये वैचित्रयाभावादलङ्कारसामान्यलक्षणस्यैवासङ्गतेः कथं सन्देहालङ्कार इति चेत्, "तैर्धूनूंषि विनम्यन्ते शिरांसिवेति संशयः" इत्यादौ अप्रतिभोत्थापिते स्वभाविकसंशये नमनक्रियामादाश्य चोपमानपमेयमावविवक्षायामतिव्याप्तिवारणाय प्रतिभोत्थापित इति विशेषणम्। अथवा तद्वैचित्रयसत्ता सूचनार्थमेवैतद्विशेषणम्।

ननु तथापि "प्रकृतेऽन्वस्य" इति कथभिहितमित्याह मध्यमिति। हे सरोजाक्षि ! पयोधरभरेण स्तनभारेण अर्दितं पीड़ितं तव मध्यमुदरभागः, अस्ति वर्त्तत, नास्ति न वर्त्तते वा इति सन्देहः; कस्य जनस्य चित्तेन भासते प्रकाशते ? अपि तु सर्वस्यैव चित्ते भासत इत्यर्थः; निरतिशयक्षणत्वादिति भावः।

अत्रेति । चित्ते तादृशसन्देहाभासनासम्बन्धेऽपि तत्सम्बन्धोक्तेरसम्बन्धे सम्बन्धरूपा अतिशयोक्तिरेवेत्यर्थः । न पुनर्निरुक्तसन्देहालङ्कार इत्येवशब्दार्थः । तत्र हेतुमाह उपमेय इति । एतदलङ्कारः सन्देहालङ्कारः । तथा च प्रकृतपदेन उपमेयस्य अन्यपदेन चोपमानस्य ग्रहणमित्याशयः ।

## विमला

प्रतिभोत्थित इत्यस्य व्यावृत्तिमाह, अप्रतिभेति ।—अत्रोच्चैस्तरत्वादिना सादृश्यमस्त्येव ।

प्रकृतेऽन्यस्य इत्यस्य व्यावृत्तिमाह, मध्यमिति ।—हे सरोजाक्षि !—कमललोचने ! पयोधरयोः,—स्तनयोः, भरेण—भारेण, गौरवेण इत्यर्थः, पौननिविड़स्तनेन इति भावः, अर्दितं—पीड़ितम्, अदर्शनं प्राप्तमित्यर्थः, तव मध्यं—मध्यावयवः, क्षीणमुदरमिति भावः, अस्ति—वर्त्तते, नास्ति—न विद्यते वा, इति सन्देहः,—संशयः, कस्यचित्ते—मनसि, न भासते ?—न स्फुरति ? नोदेतौत्यर्थः; निविडोन्नतस्तनाभ्यां क्षीणोदरस्य आवरणेन पीड़नमिति भावः ।

अत्रेति ।—अत्रातिशयोक्तिरेवालङ्कारः, न तु सन्देहः । अत्र हेतुमाह, उपमेये इति ।—एतदलङ्कारविषयत्वात्—सन्देहालङ्कारस्वरूपत्वात् इत्यर्थः ।

## लक्ष्मी

लक्षणे प्रतिभोत्थित इति विशेषणेन व्यावृत्तिं प्रदर्शयति—**अप्रतीति** । अप्रतिभया कविप्रौढोक्तिरहितेन वस्तुस्वभावमात्रेणेत्यर्थः, उत्थापिते । ननु यथात्र संशयो न प्रतिभोत्थितः, तथोभयोरुपमानोपमेयभावस्याप्यभावो वर्त्तत इति द्वयङ्गविकलत्वादुदाहरणमिदमसङ्गतमिति चेत् ? मैवम्, स्थाणुपुरुषयोः तुल्यस्वरूपत्वेन उपमानोपमेयभावस्य विद्यमानत्वात् तन्मूलकेनैव संशयस्योत्थापनात् अन्यथा संशयानुपपत्तेः । नचैवमप्युक्तोदाहरणे वैचित्र्याभावादलङ्कारसामान्यलक्षणस्यैवानागमनात् कथमयमलङ्कार इति वाच्यम्, तद्वैचित्र्यसत्ताबोधनार्थमेव विशेषणोपादानात् ।

नन्वेवं **प्रतिभोत्थित** इत्यस्य सार्थकत्वेऽपि 'प्रकृतेऽन्यस्य' इत्यस्य किं प्रयोजनमत आह—मध्यमिति । सरोजं नीलोत्पलमिव अक्षिणी लोचने यस्याः तत्सम्बुद्धौ हे सरोजाक्षि ! पयोधरभरेण वक्षोजभारेण अर्दितं पीडितं तव मध्यमुदरो देशः, अस्ति विद्यते, नास्ति न विद्यते इति वा सन्देहः संशयः, कस्य जनस्य चित्ते स्वान्ते न भासते न प्रकाशते अपि तु सर्वस्यैव स्वान्ते भासत इत्यर्थः अत्यन्तकृशत्वादिति भावः ।

**अत्रेति** । चित्ते तादृशसंशयप्रकाशनासम्बन्धेऽपि तत्सम्बन्धप्रतिपादनादसम्बन्धे सम्बन्ध रूपा अतिशयोक्तिरेव न तु सन्देह इत्यर्थः । कुत इत्यत आह—**उपमेय** इति । एतदलङ्कारविषयत्वात् सन्देहालङ्कारजीवातुत्वात् । एवञ्च प्रकृतपदेन उपमेयस्य अन्यपदेन चोपमानस्य परिग्रह इत्यभिप्रायः ।

## रुचिरा

अथालङ्कारान्तरतोऽस्य व्यावृत्तिं दर्शयितुमाह—**अप्रतीत्यादि** । स्पष्टम् ।

उदाहरति—'हे **सरोजाक्षि** ! **पयोधरभरार्दितं** पयोधरयोर्भरो भारस्तेनार्दितं पीडितम् । **तव** । मध्यमुदरम् । **अस्ति** । न 'वे'ति शेषः । **अस्ति** । **इति** इत्येवम् । **सन्देहः** । **कस्य** । **चित्ते** । **न जायते** सम्भवति । अपि तु सर्वस्यैवेति भावः ॥ १२४ ॥

अत्र लक्ष्यं निर्दिशति—**इत्यत्रो**दाहृते पद्ये इत्यर्थः । **अतिशयोक्तिः** । **एव** । 'नतु सन्देहः' इति शेषः । कुत इत्याह-**उपमेये** । **उपमानसंशयस्य** । **एव** । **एतदलङ्कारविषयत्वात्**सन्देहालङ्कारजीवातुत्वात् । अत्र च तदभावान्नायमिति भावः । अत्रेदम्बोध्यम्-'सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः ।' इति सूत्रं 'प्रकृते उपमेयेऽन्यस्योपमानस्ये' त्यनुसङ्गमय्य 'उपमेयोपमानसंशयस्यैव' इत्यु 'पमेये उपमानसंशयस्यैवे'ति तु व्याख्यानं नोपयुक्तम्, 'आहोस्विन्मुखमवभासते तरुण्या' इत्युदाहृतो ग्रन्थकृतोऽभिप्रायाननुकूलत्वात् । अत एवाहुर्नवालङ्कारसूत्रकाराः 'ये तु उपमेये धर्म्मिण्युपमानसंशयं सन्देहालङ्कारं वदन्तः 'किं तावत्... ॥' इति निश्चयान्तसन्देहस्योदाहरणमाहुः । तेषां कथं न पूर्वापरविरोध इति त एव प्रष्टव्याः । अत्र खलु एकस्मिन् धर्म्मिण्युपमानमुपमेयं चालम्ब्य संशयो वर्णितः । न त्वयमुपमेये धर्म्मिण्युपमानसंशयः । न ह्येककोटिकः संशयो भवति ।" इति । यच्चामी अपि—'उपमानस्योपमेये संशयः सन्देहः' इति सूत्रयित्वा 'किमिन्दुः, किं पद्मं, किमु मुकुरबिम्बं किमु मुखम्' इत्युदाहृतवन्त इति 'किमु मुखम्' इत्यादौ उपमेये उपमानसंशयाभावात् स्वयं प्रष्टव्याः । एतेन—'प्रकृते तदन्यविषया सादृश्यज्ञानजन्या या बुद्धिर्निश्चयभिन्ना तामाचख्युः ससन्देहम् ॥' इत्युक्त्वा 'उपमेये उपमानविषयकः संशयः ससन्देह इत्यर्थः ।' इत्याचक्षाणा अपि दत्तोत्तराः । संशयश्चात्र निश्चयानवगाहिनी बुद्धिः, नतु नानाकोटिका बुद्धिः 'किं तावत्...' इत्युदाहरणसङ्गतेः । न चास्त्विति वाच्यम्, प्राचां सिद्धान्ततोऽनेकत्र विरोधापत्तेः । अत एव 'बुद्धिर्निश्चयभिन्ना' इत्यलङ्कारकौस्तुभकारा अपि संशयपदार्थमभिहितवन्तः । इति दिक् ।

**साम्यादतस्मिंस्तद्बुद्धिभ्रान्तिमान् प्रतिभोत्थितः ॥ ३६ ॥**

यथा—

**'मुग्धा दुग्धधिया गवां विदधते कुम्भानघो बल्लवाः**
**कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि ।**
**कर्कन्धूफलमिच्चिनोति शबरी मुक्ताफलाकाङ्क्षया**
**सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ॥'**

अस्वरसोत्थापिता भ्रान्तिर्नायमलंकारः । यथा—'शुक्तिकायां रजतम्' इति ।

---

## विवृतिः

**उपमेय इति** । एतदलंकारविषयत्वात् संदेहालंकारस्वरूपत्वात् ॥ भ्रान्तिमदलंकारमाह—**साम्यादिति** ।

अत्र तत्पदद्वयमप्राकरणिकपरम् । **प्रतिभोत्थितः** कविप्रौढोक्तिसिद्धः । ननु रूपके उपमानोपमेयनिगरण-रूपायामतिशयोक्तौ चातिप्रसङ्ग इति चेत् । न । तयोराहार्यरूपत्वाद् भ्रमस्य चाहार्यभिन्नत्वात् । भ्रमप्रमाभिन्नं तृतीयप्रकारकं ज्ञानमाहार्यमिति तत्सिद्धान्तः ॥ **मुग्धा इति** । बल्लवा गोपाः गवामधः कुम्भान्विदधत इत्यन्वयः । चन्द्रिका किरणः । अत्र कविप्रौढोक्तिसिद्धो भ्रमः साम्यातिशयव्यञ्जकः । अत्र ध्वनिसत्त्वेऽपि वैचित्र्यविशेषस्यानु-भवसिद्धत्वादलंकारत्वेनोपादानम् ॥

## विवृतिपूर्तिः

**भ्रान्तिमानिति** । अत्र भ्रान्तिमात्रमलंकारः । भ्रान्तिमानलंकार इति व्यवहारस्त्वौपचारिकः । तथा चाहुः—'प्रमात्रन्तरधीभ्रान्तिरूपा यस्मिन्ननूद्यते । स भ्रान्तिमांनिति ख्यातोऽलंकारे त्वौपचारिकः ॥' इति ॥

## विज्ञप्रिया

भ्रान्तिमदलङ्कारमाह—**साम्यादिति** । तद्बुद्धिस्तत्त्वेन बुद्धिः । **मुग्धा** इति । चन्द्रमसः सान्द्रा चन्द्रिका कस्य जनस्य चित्तविभ्रमं न कुरुते इत्यर्थः । भ्रान्तान् दर्शयति—**मुग्धा** इति । बल्लवाः गोपाः मुग्धा भ्रान्ताः सन्तः दुग्धधिया गवामधः कुम्भान् विदधते दुग्धमादातुमित्यर्थः । कैरवशङ्कया इत्यत्र शङ्काभ्रम एव **कर्कन्ध्विति** । बदरफलमि-त्यर्थः । आकाङ्क्षा चात्र भ्रममूलिका ।

## लोचन

मिथ्याज्ञानसादृश्येन सन्देहानन्तरमस्य प्रस्तावः । भ्रान्तिश्चित्तधर्मविशेषो विद्यते यत्र भ्रमप्रकारे स भ्रान्तिमान् इत्यन्वर्थनामालङ्कारः ।

कर्कन्धूर्बदरी ।

प्रतिभोत्थापितेति लक्षणपदस्य व्यावृत्तिं दर्शयति—**स्वरस** इति । स्वरसः स्वभावः ।

शुक्तिकायां रजतभ्रान्तिरित्यर्थः। स्वरस इत्यतः पूर्वं काव्येऽपीति शेषः।

साम्यादित्यस्य व्यावृत्तिर्नचेत्यादि।

## कुसुमप्रतिमा

ननु निरुक्तसन्देहवदलङ्कारान्तरमप्रमास्वरूपमस्ति न वेत्यपेक्षाया भ्रमस्वरूपं भ्रान्तिमन्तं नामालङ्कारं निरूपयति साम्यादिति। साम्यात् सादृश्यवशात् अतस्मिन् तद्भिन्नवस्तूनि, प्रतिभोत्थता कविप्रौढोक्तिमात्रनिष्पन्ना, तद्बुद्धिस्तद्वस्तुत्वप्रकारकं ज्ञानम्, भ्रान्तिमान् नाम अलङ्कारा भवेत्। नन्वेवं लक्षणे सति सन्देह इति संज्ञावत् भ्रमो भान्तिवेति संज्ञासम्भवे कथं भ्रान्तिमानति संज्ञा कल्प्यत इति चेन्न, इदृशसंज्ञाया एवास्य प्राचीनपरम्पराप्राप्तत्वात्। अतएव तादात्म्येन भ्रान्तिरस्यास्तीति भ्रान्तिमानिति व्युत्पत्तिः। तथा चोक्तम्—

"प्रमात्ररधीर्यान्तिरूपा यस्मिन्ननूद्यते।

स भ्रान्तिमानितिस्वातोऽलङ्कारे त्वौपचारिकः॥"

एकस्मिन्नन्यस्य आरोपस्थले रूपकम्, एकस्मिन्नन्वस्य अध्यवसायस्थले अतिशयोक्तिः, एकस्मिन्नस्य भ्रमस्थले तु भ्रान्तिनानिति भेदः। आरोपाध्यवसावभनानां भेदस्तु प्राप्त एवेति सरलः संक्षेपः।

मुग्धा इति। मुग्धः सरलबुद्धयः वल्लवा गोपाः, दुग्धधिया तत्र पतितायां चन्द्रिकायां दुग्धभ्रमेण गवामध धेनुनां स्तातले कुम्भा दोहनकलकान् विदधते बिम्बलन्ति। कान्ताः स्त्रियोऽपि, कैरव शङ्क्या चन्द्रिकपातात् श्वेतोत्पलभ्रमेण कर्णे कुलयं नीलोत्पलं कुर्वन्ति अर्पयन्ति। तथा शवरी किरातस्त्री, मुक्ताफलाकाङ्क्षाया मुक्तालाभाशया, कर्कन्धुफलं बदरीफलम्, उच्चनीति संगृह्णाति। अतएव सान्द्रा निविडा, चन्द्रमश्चन्द्रिका चन्द्रस्य ज्योत्स्ना, कस्य जनस्य चित्तभ्रमं न कुरुते? अपि तु सर्वस्यैव कुरुत इत्यर्थः।

अत्र चन्द्रिकायां दुग्धस्य, कुवलये कैरवस्य, वदीरफले च मुक्ताफलस्य ज्ञानात् भ्रान्तिमानलङ्कारः।

प्रतिभोत्थिता इत्यस्य व्यावृत्तिमाह अस्वरसेति। अस्वरसेन अस्वेच्छया कवेरानिच्छयेति यावत् उत्थापिता वस्तुस्वभावेनैवात्पादितेत्यर्थः। अयं भ्रान्तिमान्। इति वक्त्र। अत्रापि शुक्तिकारजतयोः समानाज्ज्वलतया साम्यसत्त्वान्न ह्यङ्गविकलत्वमिति, तथा पूर्ववदेव वैचित्रयविशेषदत्तावश्यकताद्योतनार्थमेव प्रतिभोत्वितेति विशेषणमिति चावधेयम्।

## विमला

भ्रान्तिमदलङ्कारमाह, साम्यादिति।—("अतस्मिंस्तद्बुद्धिः" इत्यत्र तत्पदद्वयमप्राकरणिकपरम्) साम्यात्—सादृश्यात् अतस्मिन्—अतथाभूते वस्तुनि, प्रतिभोत्थिता—कविप्रौढोक्तिसिद्धा, तबुद्धिः,—तद्वस्तुबोधः, भ्रान्तिमान्। ननु रूपके उपमानोपमेयनिगरणरूपायामतिशयोक्तौ चातिप्रसङ्गः? इति चेत्, न; तयोराहार्य्यरूपत्वात्, भ्रमस्य चाहार्य्यभिन्नत्वात्; भ्रमप्रभाभिन्नं तृतीयप्रकारकं ज्ञानमाहार्य्यम् इति तत्सिद्धान्तः। अयं भावः,—सादृश्यात् अन्यस्मिन् अन्यबुद्धिभ्रान्तिः, सा च प्रशस्ता अस्मिन्नस्तीति भ्रान्तिमान् इत्यन्वर्थेयं संज्ञा। भ्रान्तेः प्रशस्तत्वं च सन्ति चमत्कारकारणभूतत्वे एव, अत एव "प्रतिभोत्थिता" इत्युक्तम्, अन्यथा अलङ्कारत्वमेव नास्य वक्तुं शक्येत, "पशुरयम्" "स्थाणुरयम्," "भूतेन तेन परिपीड़ित एष आत्मा" इत्यादावपि तत्त्वापत्तेः। भ्रान्तिमात्र-

मिहालङ्कारः, भ्रान्तिमान् इत्यौपचारिको निर्देशः, यथोक्तं—"प्रभावन्तरधीभ्रान्तिरूपा यस्मिन्नूनद्यते। स भ्रान्तिमा-निति ख्यातोऽलङ्कारे त्वौपचारिकः॥" इति।

उदाहरति, मुग्धेति।—चन्द्रोदयवर्णनमिदम्। सान्द्रा—घना, निरन्तरा इत्यर्थः, प्रवाहरूपेण वर्षन्तीति भावः, यद्वा—सान्द्रा—स्निग्धा, मनोज्ञा वा, चन्द्रमसः,—चन्द्रस्य, चन्द्रिका—किरणः, कस्य—जनस्य, चित्तभ्रमं—मनसो भ्रान्तिं, न कुरुते? अपि तु सर्वस्यैवेति भावः; तथा हि, मुग्धा,—अनभिज्ञाः, वल्लवाः,—गोपाः, दुग्धधिया—दुग्धक्षरणबोधेन, गवाम् अधः,—स्तनतले इत्यर्थः, कुम्भान्—दोहनपात्राणि, विदधते—स्थापयन्ति, कान्ताः,—कामिन्यः अपि, कैरवशङ्कया—श्वेतोत्पलबोधन, कर्णे कुवलयं,—नीलोत्पलं, कुर्वन्ति—धारयन्ति, तथा शवरी—व्याधपत्नी, मुक्ताफलाकाङ्क्षया—मौक्तिकप्राप्त्यभिलाषेण, कर्कन्धूफलं—बदरफलम्, उच्चिनोति—सञ्चिनोति। अत्र सान्द्रचन्द्रिकाप्रभावेण अवास्तवदुग्धादिषु तद्बुद्धिः, कविप्रौढोक्तिसिद्धो भ्रमः साम्यातिशयव्यञ्जकः। तद्धनिसत्त्वे पुनः अलङ्कारत्वेनोपादानं वैचित्र्यविशेषस्यानुभवसिद्धत्वात्। शार्दूलविक्रीडितं वृत्तम्।

## लक्ष्मी

ननूक्तसन्देहालङ्कारवदन्यालङ्कारोऽप्ययथार्थस्वरूपोऽस्ति न वेतिविचिकित्सायां भ्रमस्वरूपं भ्रान्तिमद-लङ्कारं लक्षयति—**साम्यादिति**। साम्यात् सादृश्यवशात् अतस्मिन् तदभाववति वस्तुनि प्रतिभोत्थिता केवलक-विप्रौढोक्तिसिद्धा तद्बुद्धिस्तद्वस्तुप्रकारकं ज्ञानम्, भ्रान्तिरस्यास्तीति भ्रान्तिमान् नाम अलङ्कारो भवेदित्यनुषज्यते। अत्र भ्रान्तिमात्रमलङ्कारः भ्रान्तिमानलङ्कार इति व्यपदेशस्त्वौपचारिकः। तथा चोक्तम्—

'प्रमात्रान्तरधीभ्रान्तिरूपा यस्मिन्ननूद्यते। स भ्रान्तिमान् इति ख्यातोऽलङ्कारे त्वौपचारिका।

तथा च प्रतिभोत्थितत्वे सति सादृश्यमूलकः अतस्मिंस्तदबुद्धिभ्रमो भ्रान्तिमानिति फलितम् प्रतिभोत्थित इत्युपादानेन 'रङ्गे रजतम्' इत्यादेर्मर्मप्रहारकृतचित्तविक्षेपविरहादिकृतोन्मादादिजन्यभ्रान्तेश्च नालङ्कारत्वम् सादृ-श्यप्रयोज्यत्वाभावात्। अत एव—

'दामोदरकराघातविह्वलीकृतचेतसा।

दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्थलम्॥'

इत्यादौ नायमलङ्कार इत्यन्यत्र स्पष्टम्। एतत्प्रयोजमनुपदमेव वृत्तावपि वक्ष्यति। न च रूपकेऽतिशयोक्तौ वातिव्याप्तिरितिवाच्यम्, आरोपाध्यवसायभ्रमैः परस्परं भेदात्। तथाहि—एकस्मिन्नयस्य आरोपस्थले रूपकम्, एकस्मिन्नयस्य अध्यवसायस्थले अतिशयोक्तिः, एकस्मिनन्यस्य भ्रमस्थले भ्रान्तिमान्। संशये तु नातिव्याप्तिः, तत्र पक्षद्वयेऽनिश्चितबुद्ध्याकारोदयात्।

मुग्धा इति। मुग्धा अप्रौढा बल्लवा गोपाः, दुग्धधिया तत्र चन्द्रिकापतनात्, दुग्धमिदमितिभ्रमेण गवामधः गवां स्तनतले कुम्भान् दोहनपात्राणि विदधते स्थापयन्ति। मुग्धाः कान्ता नार्य्योऽपि कैरवशङ्कया चन्द्रिकापतनात् कुमुदमितिभ्रमेण 'सिते कुमुदकैरवे' इत्यमरः, कुवलयं नीलाब्जम्।

'श्यामं शितिकण्ठनीलं कुवलयमिन्दीवरं च नीलाब्जम्' इति नाममाला,

कर्णे श्रवणे कुर्वन्ति स्थापयन्ति। तथा मुग्धा शवरी भिल्ली चन्द्रिकापतनादेव मुक्ताफलाशङ्कया मुक्ताफलप्राप्तुमिच्छया, कर्कन्धूफलं वदरीफलम् उच्चिनोति सञ्चिनुते अत एव सान्द्रा निविडा सर्वतो वाढं

व्याप्तेतियावत्, चन्द्रमसश्चन्द्रिका विधोर्ज्योत्स्ना, कस्य जनस्य चित्तभ्रमं न कुरुते ? अपि तु सर्वस्यैव करोतीति-भावः । **शार्दूलविक्रीडितं** छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्र चन्द्रिकायां दुग्धस्य, कुवलये कुमुदस्य, वदरीफले च मुक्ताफलस्य बोधात् भ्रान्तिमानलङ्कारः ।

## रुचिरा

भ्रान्तिमन्तं लक्षयति—११३ **साम्यात्** सादृश्यात् । **अतस्मिन्न** तदिति तस्मिंस्तथोक्ते । **प्रतिभोत्थिता** प्रतिभोत्थापिता कविप्रौढोक्तिसिद्धेति यावत् । तद्बुद्धिस्तस्य बुद्धिर्निश्चय इति तथोक्ता । **भ्रान्तिमान्** । अयम्भावः कमले कमलबुद्धिस्तस्मिंस्तद्रबुद्धिः, वदने कमलबुद्धिरतस्मिंस्तद्रबुद्धिः, एषैव भ्रमः । संशयस्तु उभयत्रानिश्चित-बुद्धयाकारो भवति । अत एव—सन्देहभ्रान्तिमतोर्भेद भ्रमापरपर्य्याया चातस्मिंस्तद्बुद्धिरियं यदि प्रतिभोत्थापिता स्यात्तदा भ्रान्तिमान् । नच रूपकेऽतिशयोक्तौ वाऽतिव्याप्तिः, तयोरभेदस्याहार्य्यरूपत्वात्, भ्रमस्य चाहार्य्यभिन्न-त्वात् । नहि तत्र साम्यादतस्मिंस्तद्बुद्धिर्भवति, किन्तु—कविनैवाभेदेन तथा वर्ण्यते । इति ॥ ८९ ॥

उदाहरति-**यथा**-'**मुग्धा** अप्रौढाः । **बल्लवा** गोपाः । **दुग्धधिया** दुग्धमिदमिति निश्चयेन । भवाम् । **अधः** । **कुम्भान्** दोहनपात्राणि । **विदधते** कुर्वन्ति । **कान्ताः** । **अपि** 'मुधा' इति पूर्वतोऽनुषज्यते । **कैरवशङ्कया** कैरव (कुमुद) मिदमिति भ्रमेण । 'सिते कुमुदकैरवे' इत्यमरः । **कुवलयं** नीलाब्जम् । 'श्यामं शितिकण्ठनीलं कुवलयमिन्दीवरं च नीलाब्जम् ।' इति नाममाला । **कर्णे** । **कुर्वन्ति** । **शवरी** भिल्ली । 'मुग्धा' इत्यनुष ज्यते । **मुक्ताफलाकाङ्क्षया** एतानि—मुक्ताफलानीति निश्चीय तानि ग्रहीतुमिच्छया । **कर्कन्धूफलं** बदरीफलानि । जातोवेकत्वोक्तिः । **उच्चिनोति** सञ्चिनुते । **सान्द्रा** निबिडा सर्वतो बाढं व्याप्तेति यावत् । **चन्द्रमसः** । **चन्द्रिका** ज्योतिः । **कस्य** । **चित्तभ्रमम्** । **न** । **कुरुते** अपि तु सर्वस्यैव करोति इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥१२५ ॥

न चासादृश्यमूला । यथा—

**'संगमविरहविकल्पे वरमिह विरहो न संगमस्तस्याः ।**

**सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥'**

---

## विवृति

**अस्वरसोत्थापिता** वस्तु स्वभावजनिता । **अयं** भ्रान्तिमान् । शुक्तौ चाकचक्यविशेष **एव** रजतसाधर्म्यम् । साम्यादित्यस्य व्यावृत्तिमाह—**न चेति** । भ्रान्तिनामायमलंकार इत्यनुषज्यते ॥ **संगमेति** । संगमविरहयोरेकतरस्याभीष्टत्वविवेचन इत्यर्थः । इयं भावनातिशयजन्या भ्रान्तिः कविप्रौढोक्तिसिद्धापि न साम्यग्रहणमूला ॥

## विज्ञप्रिया

प्रतिभोत्थितेत्यस्य व्यावृत्तिमाह—स्वरसेति । असादृश्यमूलकभ्रमेऽपि नायमलङ्कार इत्याह—**नचासादृश्येति** । **सङ्गमेति** । सङ्गमविरहयोः विकल्पे वरन्त्वविचारे इत्यर्थः । वरं मनागिष्टम् । न चात्रापि त्रिभुवने तत्सादृश्यभ्रमात्तद्भ्रम इति वाच्यम् । सादृश्यांशेऽभ्रमस्यैव विवक्षित्वात् । तथाच सङ्गमाद् विरहस्याधिक्याद् व्यतिरेकालङ्कारः एवायमिति भावः । एवं च लोभादिना भ्रमेऽपि न भ्रान्तिमान् । यथा —

**"जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम् ।**

**नारायणमयं धीराः पश्यन्ति परमार्थिनः ॥" इति ।**

नचात्र धनभेदेऽपि धनाभेदारोपारूपातिशयोक्तिरेवात्रेति वाच्यम् । अतिशयोक्तिघटकस्य आरोपस्य आहार्य्यत्वे एव तथात्वात् । अत्र तु प्रथमे चिन्तारूपव्यभिचारिभावध्वनिः । द्वितीये श्रृङ्गारध्वनिः । तृतीये भावध्वनिरेव ।

## कुसुमप्रतिमा

ननु तथापि साम्यादिति किमर्थमभिहितमित्याह न चेति । असादृश्यमूला भ्रान्तिश्च नायमलङ्कार इति पूर्वानुषङ्गेणात्र सम्पूर्ण वाक्यनिष्पत्तिरुन्नेया ।

सङ्गमेति । संख्यरन्तिके कस्यचिद्विरहितः सानुतापोक्तिरियम् । तस्याः प्रियतमायाः सङ्गमविरहयोः संयोगवियोगयो, विकल्पे अन्यतरस्य वरत्वविवेचने कर्त्तव्ये सति, विरह एव वरम्, न पुनः सङ्गमः इत्येव विवेचनीयमिति भावः । कुतो विरहस्य वरत्वमित्याह सङ्ग इति । सङ्गे सङ्गमे, सा प्रियतमा, तथा प्रत्यक्षगोचरीभूता एकैव; किन्तु विरहे त्रिभुवनरूप तन्मयं प्रियतमामयं भवति । अत्रो विरहस्यैव वरत्वमिति भावः ।

अत्र विरहदशायामुतकटभावनावशात् त्रिभुवनस्यषु सर्वेष्वेव वस्तुषु कविप्रौढ़ोक्तिनात्रनिष्पन्ने प्रियतमा भ्रमे सत्यपि तस्य सादृश्यमूलकत्वाभावान्न भ्रान्तिनामलङ्कार इत्याशयः ।

## विमला

अस्वरसेति ।—अस्वरसोत्थापिता—वस्तुस्वभावजनिता । अयं—भ्रान्तिमान् । शुक्तौ चाकचक्यविशेष एव रजतसाधर्म्यम् । साम्यादित्यस्य व्यावृत्तिमाह, न चेति ।—भ्रान्तिनामायमलङ्कारः इत्यनुषज्यते ।

सङ्गमेति ।—तस्याः,—कान्ताया इत्यर्थः, सङ्गमविरहयोः,—मेलन-विच्छेदयोः, विकल्पे—एकतरस्य वरत्वनिर्द्धारणे, इह—अस्मिन् जगति, विरहः,—वियोगः, वरं—श्रेष्ठम्, अभीप्सितमित्यर्थः, न पुनः सङ्गमः, वरमिति शेषः । कुत इत्याकाङ्क्षायामाह, सङ्गे इति ।—सङ्गे—सङ्गमे जाते, सा—मनोरमा, एका एव तथा—उपलभ्यमाना स्यादित्यर्थः, विरहे त्रिभुवनम् अपि तन्मयं—कान्तात्मक मित्यर्थः । अत्र सङ्गमविरहयोः सादृश्यं नास्तीति बोध्यम्, अतोऽत्र नायमलङ्कारः । सङ्गमो विरह इव, किन्तु सङ्गमेनैव तथाऽसौ प्रतीयते, यथा विरहे इति व्यतिरेको व्यज्यते, निश्चयो वा आर्थः । इयं भावनाऽतिशयजन्या भ्रान्तिः कविप्रोढोक्ति सिद्धाऽपि न साम्यग्रहणमूला.

## लक्ष्मी

एवमुदाहरणं प्रदर्श्य 'प्रतिभोत्थित' इत्यस्य सार्थक्यं दर्शयति—अस्वरसेति । अस्वरसेन अस्वेच्छया कवेरनभिलाषयेत्यर्थः, उत्थापिता वस्तुस्वभावेनैव जनिता । अयं भ्रान्तिमान् । इति वाक्ये । नहि शुक्तिकायां जातापि रजतबुद्धिरलङ्कारतामवगमयति । नन्वयं यथा न प्रतिभोत्थितस्तथा उपमानोपमेयभावोऽपि नास्तीति द्व्यङ्गविकलत्वान्नेदमुदाहरणमिति चेत? शुक्तिरजतयोः चाकचिक्यविशेषेणैव सादृश्यावगमात । नचैवमित्थम्भूतविषये वैचित्र्याभावात्सामान्यलक्षणस्यैवाप्रवृत्त्या कथं भ्रान्तिमानिति वाच्यम्, पूर्ववदेवात्रापि वैचित्र्यविशेषसत्तावश्यकताप्रत्यायनार्थमेव तद्विशेषणोपादानात् ।

नन्वेवं भवतु **प्रतिभोत्थित** इत्यस्य सार्थक्यं साम्यादित्यस्य किं प्रयोजनमत आह—न चेति । असादृश्यमूलाभ्रान्तिश्च नायमलङ्कार इति पूर्वतोऽनुषज्य वाक्यार्थो वर्णनीयः ।

सङ्गमेति । सखायं प्रति विरहिणः कस्यचित्सखेदोक्तिरियम् । तस्या मनसाविषयीक्रियमाणायाः प्रियतमायाः, सङ्गमविरहयोः संयोगविश्लेषयोः, विकल्पे एकतरस्य श्रेष्ठत्वविवेचने कर्त्तव्ये सति, विरह एव वरं न पुनः सङ्गम इत्येव विचारणीयमित्याशयः । विरहस्य श्रेष्ठत्वे हेतुमाह—सङ्ग इति । सङ्गे संयोगे प्रियतमा तथा प्रत्यक्षविषयीभूता एकैव, किन्तु विरहे विश्लेषे त्रिभुवनं त्रलोक्यमपि तन्मयं प्रियतमामयं भवति, अतो विरहस्यैव श्रेष्ठत्वमिति भावः । आर्याछन्दः तल्लत्तणन्तूक्तं प्राक् ।

अत्र विरहावस्थायामतिशयभावनावशात् त्रिभुवनस्थेषु निखिलेष्वेव वस्तुषु केवलकविप्रौढोक्तिसिद्धे प्रियतमाभ्रमे विद्यमानेऽपि न सादृश्यमूलकत्वमित्यतो न भ्रान्तिमानलङ्कार इति भावः । एवञ्च लोभादिना भ्रमेऽपि नायं भ्रान्तिमानलङ्कारो यथा—

> **'जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम् ।**
> **नारायणमयं धीराः पश्यन्ति परमार्थिनः ॥'**

न चात्र धनभेदेऽपि धनाभेदाध्यवसायरूपातिशयोक्तिरेवेतिवाच्यम्, अतिशयोक्तिघटकाध्यवसायस्य आहार्यत्वे एव तथात्वात् । अत्र तु प्रथमे चिन्तारूपव्यभिचारिभावध्वनिः, द्वितीये श्रृङ्गारध्वनिः, तृतीये भावध्वनिरेव ।

ध्वन्यमानोऽयं यथा—

**'कनकद्रवकान्तिकान्तया मिलितं राममुदीक्ष्य कान्तया।**

**परिफुल्लपतत्रपल्लवैर्मुमुदे चातकपोतकैर्वने ॥'**

अत्र चकोराणां मेघदर्शने प्रमोदस्वाभाव्यात् केवलरामदर्शनेन प्रमोदप्रतिपादने भगवतो रामस्य मेघसादृश्यस्य प्रसिद्धत्वात् तद्दर्शने तद्दर्शनज्ञानस्यार्थिकत्वाद् भ्रान्तिः प्रतीयते।

## रुचिरा

एवमुदाहृत्य 'प्रतिभोत्थिते' त्यस्य सार्थक्यं दर्शयति—**अस्वेत्यादिना**। स्पष्टम्। नहि शुक्तिकायां जाताऽपि रजतबुद्धिरलङ्कारतां धत्ते। 'साम्या' दित्यस्य प्रकारान्तरेण सार्थक्यं दर्शयितुमाह—नचेत्यादि। स्पष्टम्। उदाहृत्य दर्शयति-**यथा**-'सङ्गमेत्यादिना।

**तस्या** मनसा विषयीक्रियमाणायाः प्रियतमाया इति भावः। इह। **सङ्गमविरहविकल्पे** सङ्गमविरहयोर्विकल्पः कल्पनाविशेषः तस्मिन्। **विरहः**। **वरं** साम्प्रतम्। **सङ्गमः**। **न**। 'वर'मिति पूर्वतोऽनुषज्यते। हेतुं निर्दिशति—**सङ्गे सङ्गमे**। **सा**। **एव**। तथा। **एका**। यद्वा-सा तथा तथाभूता एका एवेति योज्यम्। विरहे। **त्रिभुवनम्**। अपि। **तन्मयं** प्रियारूपम्। आर्य्याछन्दः। अत्र भ्रान्तेर्भावनातिशयजन्यत्वेन न सादृश्यमूलत्वम्। अतोऽस्याः प्रतिभोत्थापितत्वेऽपि नालङ्कारोपस्कारकत्वम्॥ १२६॥'

इदमवधेयम्—कयोश्चित् सादृश्यमादाय कविना यदि स्वप्रतिभोन्मेषेणान्यस्मिन् अन्यबुद्धिः कल्प्येत तदाऽसौ भ्रान्तिमानिति व्यपदिश्यते। व्यपदेशश्चायमौपचारिकः, तथोक्तम्—'प्रमात्रन्तरधीभ्रान्तिरूपा यस्मिन्ननूद्यते। स भ्रान्तिमानिति ख्यातोऽलङ्कारे त्वौपचारिकः॥' इति। तत्र-सादृश्यमादायेत्यनेन 'सङ्गम' इत्यादौ अतिप्रसङ्गो निवारितः। अत एव—'अकरुणहृदय! प्रियतम! मुञ्चामि त्वामितः परं नाहम्। इत्यालपति कराम्बुजमादायालीजनस्य विकला सा॥' इत्यादेरप्यस्य व्यवच्छेदः। अत्र हि—उन्मादोत्था तथा बुद्धिः। प्रतिभोन्मेषेणान्यस्मिन्नन्यबुद्धिः कल्प्यमाना स्वरसोत्थापितेति व्यपदेशान्तराश्रयभूता भवतीत्यत एवोक्तम्, अस्वरसोत्थापितेत्यादि। यत्वाहुः—'लक्षणे च अत्रैकत्वं विवक्षितम्, अन्यथा वक्ष्यमाणानेकग्रहीतृकानेकप्रकारकैकविशेष्यकभ्रान्तिसमुदायात्मन्युल्लेखेऽतिप्रसङ्गापत्तेः।' इति। तत् न किञ्चित् अत्रैकत्वाग्निवेशेऽपि उल्लेखेऽतिप्रसङ्गानापत्तेः, तस्यानेकप्रकारकोल्लेख एव सम्भवात्, नच तत्र साम्यमपि विवक्षितम्। अन्यथा नरैर्वरगतिप्रदेत्यथ सुरैः स्वकीयापगेत्युदारतरसिद्धिदेत्यखिलसिद्धसङ्घैरपि। हरेस्तनुरिति श्रिता मुनिभिरस्तसङ्गैरियं तनोतु मम शं तनोः सपदि शन्तनोरङ्गना॥' इत्यादावुदाहरिष्यमाणेऽपि तस्या व्याप्तिः। नत्वत्र साम्यम्, किन्तु ग्रहीतृणां केवलं भावनाभेदः। ध्वन्यमानोयं यथा—'कनकद्रवकान्तिकान्तया मिलितं राममुदीक्ष्य कान्तया। परिफुल्लपतत्रपल्लवैर्मुमुदे चातकपोतकैर्वने॥' अत्र हि चकोराणां वारिददर्शने आमोदस्वाभाव्याद्रामदर्शनमात्रेणामोदाभिधाने भगवतो रामस्य वारिदसाम्यस्य प्रसिद्धत्वात् तद्दर्शने तद्दर्शनप्रत्ययस्यार्थिकत्वाद्भ्रान्ति र्ध्वन्यते। इति।

**क्वचिद् भेदाद् ग्रहीतृणां विषयाणां तथा क्वचित्।**

**एकस्यानेकधोल्लेखो यः स उल्लेख उच्यते ॥ ३७ ॥**

क्रमेणोदाहरणम्—

**'प्रिय इति गोपवधूभिः शिशुरिति वृद्धैरधीश इति देवैः।**

**नारायण इति भक्तैर्ब्रह्मेत्यग्राहि योगिभिर्देवः ॥'**

अत्रैकस्यापि भगवतस्तत्तद्गुणयोगादनेकत्वोल्लेखे गोपवधूप्रभृतीनां रुच्यादयो यथायोगं प्रयोजकाः।

---

## विवृति

उल्लेखालंकारमाह—**क्वचिदिति**। ग्रहीतृणां बोधकानां विषयाणां हेत्ववच्छेदकादीनां तथाभेदात् अनेकधा विविधप्रकारेण उल्लेखोऽवधारणम् ॥

**प्रिय इति**। वृद्धैर्नन्दादिभिः। भक्तैरक्रूरादिभिः। अग्राहि अबोधि। योगिभिर्नारदादिभिः। देवः श्रीकृष्णः। नन्वेकस्यानेकरूपेण स्फुरणे किं प्रयोजकं सर्वेषां ग्रहीतृणां वा किमित्येकरूपेण स्फुरणं न भवतीत्यत आह—**अत्रेति**। तत्तद्गुणयोगात् प्रियत्वादितत्तत्प्रकारसंबन्धात्। रुच्यादीत्यादिपदेन वक्ष्यमाणकारिकोक्तार्थित्वव्युत्पत्त्योर्ग्रहणम्। यथायोगं यथासंभवं। प्रयोजकाः कारणानि। भगवति यावद्गुणसत्त्वेऽपि रुच्यादिभेदेन विविधप्रकारेणैव स्फुरणं न त्वेकरूपेण। रुच्यादीनामन्यतमस्य कारणस्य सर्वत्राभावादिति भावः ॥

## विवृतिपूर्तिः

**उल्लेख इति**। एकग्रहीतृकोटिकोऽनेकविषयभेदेनैकस्यानेकोल्लेखो यथा—'निःस्पृहोऽनात्मसौख्येषु श्रुतिधर्मेषु सस्पृहः। शास्त्रेषु चतुरास्यो मे नित्यं विजयते गुरुः ॥' इति। 'कातराः परदुःखेषु निजदुःखेष्वकातराः। कान्तास्वलोलुपाः सन्ति सन्तः कीर्तिषु लोलुपाः ॥' इति वा। तत्रैवाश्रयभेदेनैकस्यानेकोल्लेखो यथा—'सुहृदः पुण्यसक्तेषु दयमानाश्च दुःखिषु। सत्सु हृष्टा उदासीनाः खलेषु कति पण्डिताः ॥' इति। ननु अनात्मसौख्यादौ विषयता, पुण्यसक्तादिषु तु आश्रयता, तथा—'अकृशं कुचयोः कृशं वलग्ने विपुलं चक्षुषि विस्तृतं नितम्बे। अधरेऽरुणमाविरस्तु चित्ते करुणाशालि कपालिभागधेयम् ॥' इत्यादावपि कुचादिष्वाश्रयतैवेत्यत्र किं नियामकम् सप्तम्यन्तत्वस्य तुल्यत्वात् इति चेत्, सत्यम्। विवक्षैव नियामिकेति। अत एव रसगङ्गाधरे—'तुषारास्तापसव्राते तापिनस्तामसव्रजे। दृगन्तास्ताडकारातेर्भूयासुर्भवभूतये ॥'

## विज्ञप्रिया

उल्लेखालङ्कारमाह—**क्वचिद्भेदादिति**। एकस्य वस्तुनोऽनेकधा अनेकत्वेनोल्लेखो बुद्धिविषयत्वमित्यर्थः। तादृशबुद्धेर्हेतुद्वयमाह—**क्वचिद्भेदादिति**। क्वचिन्नानाग्रहीतृणां तत्तद्रूपेणानेकत्वबुद्धिः। क्वचित्तु तादृशबुद्धिप्रयोजकधर्मरूपाणां विषयाणां भेदादेकस्यैव ग्रहीतुस्तथात्वबुद्धिविषयत्वमित्यर्थः। तेनास्य द्वैविध्यम्।

**प्रिय इतीति**। देवः श्रीकृष्णस्तैस्तैः सममित्यग्राहीत्यर्थः। तत्तदेवाह-**प्रिय** इत्यादि। प्रियः स्वामी। सागरशायिरूपनीरूपत्वेन भेदान्नारायणब्रह्मणोर्भेदः। "आपो हि नाराः" तदयनः तत्सथो नारायणः जलशायी इत्यर्थः।

**तत्तद्गुणे** इति। तादृशबुद्धिप्रयोजकतत्तद्गुण इत्यर्थः। सच प्रिय इत्यत्र सौन्दर्यरूपः, शिशुरित्यत्र स्नेहविषयत्वम्, अधीश इत्यत्रैश्वर्य्यम्, नारायण इत्यत्र ध्यानोपयोगिमूर्त्तिमदभिन्नत्वम्, ब्रह्मेत्यत्र तद्व्यावृत्तस्वरूपाभिन्नत्वम्। रुच्यादयः प्रयोजका इति। तथाच तादृशरुचिमन्तो ग्रहीतारो भिन्ना इति दर्शितम्।

## लोचन

व्युत्पत्तिरभ्यासकृता वासना, वा प्रतीतिः। अनुसन्धानं मनसस्तद्विषये प्रविणीकरणम्। तेन साधितः विषयान्तरं व्यवच्छिद्य निर्वाहितः। एवं च प्रिय इत्यादौ भगवतः प्रियत्वे गोपवधूनां रुच्यादित्रितयमपि प्रयोजकम्। शिशुत्वे च वृद्धानां व्युत्पत्तिः। सच्चिदानन्दब्रह्मत्वे योगिनां व्युत्पत्तिः। एवमन्यत्र।

भगवतस्तत्काले तात्त्विकत्वाद् ग्रहीतृभेदाच्चेति हेतोर्द्वयमपि मालारूपकभ्रान्तिमतोर्द्वयोरपि विवेकः। तात्त्विकं वस्तुतस्तद्रूपतायाः सम्भवात्। तथा मालारूपकस्य कविनिबद्धाहार्य्यतादात्म्यारोप एव प्रयोजकः। भ्रान्तिमतश्च मिथ्याज्ञानमेव निदानम्। ग्रहीतृभेदस्य च द्वयोरपि सम्भवेऽपि अपवादत्वेन उल्लेखाख्यभिन्नालङ्कारस्य न प्रयोजकत्वमिति भावः। नचाध्यवसीयते; किन्तु तत्त्वेनैवावसीयते। अध्यवसानं विषयनिगरणेन विषयिणोरभेदप्रतिपत्तिः।

अलङ्कारान्तरविच्छित्तिर्निदानं यस्येति भावः। शिशुत्वादीनामित्यादिशब्देन प्रियत्वादेः संग्रहः। अयमर्थः—भगवतः शिशुत्वादिभेदेषु सत्स्वपि गोपवधूभिः प्रिय इत्येवायं गृह्यते न शिशुरिति। यथा प्रियत्वादौ सत्यपि वृद्धैः शिशुरित्येव गृह्यते। तदत्रानेकरूपस्यापि प्रतिग्रहीत्रैकैकभेदरूपत्वेन नियमनमिति चाभेदे भेदाध्यवसायादतिशयोक्तिः। यदि त्वयं प्रत्येतृभेदेन भेदेऽतिशयोक्तिसद्भाव एव स्यात्तदातिशयोक्तिप्रकारविशेष एव स्यात् नच तथा, अलङ्कारान्तरेऽपि सम्भवादित्याह—**श्रीकण्ठेति**।

## कुसुमप्रतिमा

तत्र गृहीतृभेदेनोदाहरणं दर्शयति प्रिय इति। गोपवधूभिर्गोपीभिः प्रियो वल्लभ इति, वृद्धैः' प्राचीनैर्नन्दादिभिः शिशुर्पालकं इति, देवैरिन्द्रादिभिः अधीशोऽधिपतिरिति, भक्तैरनुरक्तैर्नारदादिभिर्नारायण इति, तथा योगिभिः कपिलादिभिर्ब्रह्मपरमात्मेति कृत्वा देवः अग्राहि अज्ञायि।

अत्र गोपवधूप्रभृतिग्रहीतृभेदादेकस्य कृष्णस्य प्रियत्वादिना अनेकेन प्रकारेण उल्लेखादुल्लेखोऽलङ्कारः।

नन्वेकस्यैवकृष्णस्य इत्यमनेकधा प्रतीतौ किं नाम प्रयोजकमित्याह अत्रेति। भगवतः कृष्णस्य, तत्तद्गुणयोगात् प्रियत्वशिशुत्वादिधर्म्माणां सत्त्वात्। रुचिर्मनोवृत्तिः आदिशब्देन यथार्थित्त्वं यथाव्युत्पत्ति च गृह्यते। यथायोगं यथासम्भवम्। तथा च कृष्णे गोपवधूनां वल्लभत्वसत्त्वात् तत्प्रकारकरुचिप्रयुक्तं तासां प्रिय इति ज्ञानम्। एवमन्यत्राव्यूहनीयम्।

## विमला

उल्लेखालङ्कारमाह, क्वचिदिति ।—क्वचित् ग्रहीतृणां—बोधकानां, भेदात्—भिन्नत्वात्, क्वचित् वा विषयाणां—व्यवच्छेदकधर्माणां, हेत्वच्छेदकादीनाम् इत्यर्थः, तथा—भेदादित्यर्थः, एकस्य, वस्तुनः इति शेषः, अनेकधा—बहुधा, विविधप्रकारेणेत्यर्थः, यः उल्लेखः—कीर्त्तनं, स उल्लेख इष्यते ।

ग्रहीतृभेदस्योदाहरणमाह, प्रिय इति । —देवः—श्रीकृष्णः, गोपवधूभिः प्रियः—प्रेमास्पदम् इति, वृद्धैः—नन्दादिभिः, शिशुः—बालः, स्नेहपात्रमित्यर्थः, इति, देवैः—इन्द्रादिभिः, अधीशः—प्रभुः, पालक इत्यर्थः, इति, भक्तैः—ध्रुव प्रह्लादादिभिः, अक्रूरादिभिर्वा, नारायणः—विष्णुः इति, योगिभिः—सनकादिभिः, ब्रह्म—चित्स्वरूपम् इति, अग्राहि—गृहीतः, प्रतीत इति यावत् ।

नन्वेकस्यानेकरूपेण स्फुरणे किं प्रयोजकम् ? सर्वेषां ग्रहीतृणां वा किमिति एकरूपेण स्फुरणं न भवति ? इत्यत आह, अत्रेति । तत्तद्गुणयोगात्—प्रियत्वादितत्तत्प्रकारसम्बन्धात् । रुच्यादयः—अनुरागादयः,(अत्रादिपदेन वक्ष्यमाणकारिकोक्तार्थित्वव्युत्पत्त्योर्ग्रहणम्) यथायोगं—यथासम्भवं, प्रयोजकाः—कारणानि । भगवति यावद्गुहणसत्त्वेऽपि रुच्यादिभेदेन विविधप्रकारेणैव स्फुरणं, न त्वकरूपेण, रुच्यादीनामन्यतमस्य सर्वत्राभावात् इति भावः ।

## लक्ष्मी

भ्रान्तिमदलङ्कारप्रतिपादनानन्तरं प्रायेण तदनुयायितया उल्लेखालङ्कारं प्रतिपादयति—**क्वचिदिति** । क्वचिद् यत्र तत्र स्थले ग्रहीतृणां प्रतिपत्तृणां भेदात् अनैक्यात्, क्वचिद्वाविषयाणां ग्राह्यानां प्रतिपाद्यानां व्यावर्त्तकधर्मादीनामिति यावत्, तथा भेदात् अनैक्यात्, एकस्य यस्य कस्यचिद्वस्तुनः य अनेकधा विविधप्रकारेण उल्लेखोऽवधारणं स उल्लेखस्तन्नामाऽलङ्कारः । क्वचिदित्यनेन देवदत्तं देवदत्तापतिम्, दैवदत्तिः पितरम्, दैवदत्तिजं पितामहं मनुते इत्यादेर्व्यावृत्तिः ।

तत्र ग्रहीतृभेदेनोदाहरति—**प्रिय** इति देवः श्रीकृष्णः गोपबधूभिर्गोपिकाभिः प्रियः कान्त इति, वृद्धैः पुरातनैर्नन्दाद्यैवसुदेवाद्यैर्वा शिशुर्बालक इति, देवैर्महेन्द्रादिभिः अधीशोऽधिपतिरिति, भक्तैः प्रेमिभिरुद्धवनारदादिभिर्नारायण इति, 'आपो हि नाराः' तदयनस्तत्स्थो नारायणः जलशायी इत्यर्थः;योगिभिः कपिलगर्गप्रभृतिभिर्ब्रह्म परमात्मेति अग्राहि अबोधि । जलशायिरूपनीरूपत्वेन भेदान्नारायणब्रह्मणो भेदः । **आर्याछन्दस्तल्लक्षणन्तूक्तं प्राक्** ।

अत्र गोपबध्वादिग्रहीतृभेदादेकस्य श्रीकृष्णस्य प्रियत्वादिना विविधप्रकारेणोल्लेखात्प्रकृतलक्षणसङ्गतिः ।

नन्वेकस्यानेकरूपेणोल्लेखे किं प्रयोजकं सर्वेषां ग्रहीतृणां वा किमित्येकरूपेणोल्लेखो न भवतीत्यत आह—अत्रेति । उक्तोदाहरण इत्यर्थः । भगवतः श्रीकृष्णस्य तत्तद्गुणयोगात् तस्य तस्य प्रियत्वशिशुत्वादेर्गुणस्य धर्मस्य सम्बन्धात् । गोपवधूप्रभृतीत्यत्र प्रभृतिपदेन वृद्धादेः परिग्रहः । रुचिरभिलाषम्, आदिपदेन वक्ष्यमाणकारिकोक्तार्थित्वव्युत्पत्त्योः परिग्रहः । यथायोगं यथासम्भवम् । प्रयोजकाः कारणानि । तथा च भगवति श्रीकृष्णे यावद्गुणस्य विद्यमानत्वेऽपि गोपबधूप्रभृतीनां रुच्यादिभेदेन विविधप्रकारेणैवोल्लेखो न त्वेकरूपेण रुच्यादीनामन्यतमस्य कारणस्य सर्वथाविद्यमानत्वादित्याशयः । उक्तार्थे प्राचां सम्मतिं दर्शयति—**यदाहुरिति** ।

## रुचिरा

उल्लेखं लक्षयति—११४ **क्वचिद्** यत्रतत्र। **ग्रहीतृणां** बोधकानाम्। **तथा**। **विषयाणां** ग्राह्याणां बोध्यानामिति यावत्। **क्वचित्**। **भेदात्**। **एकस्य** 'यस्यकस्यचि'दिति शेषः। **यः**। **अनेकधाऽनेक**प्रकारेण। **उल्लेख** उद्भाव्याभमननम्। **सः**। **उल्लेखस्तन्नामाऽलङ्कारः**। **उच्यते**। अयम्भावः-एकस्य वस्तुनोऽनेकधोल्लेख उल्लेखाख्योऽलङ्कारः, अनेकधोल्लेखश्चोल्लेखकानामुल्लेखनीयानां वा भेदात् (अनैक्यात्) एव विवक्षितः। अतोऽस्य द्वैविध्यम्। द्विविधोऽप्ययम्, क्वाचित्कः, क्वचिदित्यनेन 'देवदत्तं देवदत्ता पतिं, दैवदत्तिः, पितरं दैवदत्तिजः पितामहं मनुते' इत्यादेर्व्यव्यवच्छेदः॥ ९०॥

उदाहर्त्तुमुपक्रान्तः प्राह—**क्रमेणे**त्यादि। स्पष्टम्। **प्रिय** इत्यादि।

'**देवः** श्रीकृष्णचन्द्रः। **गोपवधूभि**र्गोपीभिः। **प्रियः**। **इति**। **वृद्धै**र्नन्दाद्यैर्वसुदेवाद्यैर्वा। **शिशु**र्बालकः। **इति**। **देवै**रिन्द्रादिभिः। **अधीशः**। **इति**। **भक्तै**रुद्धवादिभिः। **नारायणः**। इति। **योगिभि**र्गर्गादिभिः। **ब्रह्म**। **इति**। **अग्राहि** अज्ञायि। आर्य्याछन्दः॥ १२७॥'

नन्वेकस्यानेकधोल्लेखः किन्निमित्तक इत्याशङ्क्याह—**अत्रो**दाहृते पद्ये इत्यर्थः। **एकस्य**। अपि। **भगवतः**। **तत्तद्गुणयोगात्** तस्यतस्य प्रियत्वादेर्गुणस्य सम्बन्धात्। **अनेकत्वोल्लेखे**ऽनेकत्वेनोल्लेखस्तिंस्मिस्थोक्ते। **गोपवधूप्रभृतीनाम्**। प्रभृतिपदेन वृद्धादेर्ग्रहणम्।

यदाहुः—

**'यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते।**

**आभासोऽप्यर्थ एकस्मिन्ननुसंधानसाधितः ॥'**

अत्र भगवतः प्रियत्वादीनां वास्तवत्वाद् ग्रहीतृभेदाच्च न मालारूपकम्, न च भ्रान्तिमान् न चायमभेदे भेद इत्येवंरूपातिशयोक्तिः। तथाहि—'अन्यदेवाङ्गलावण्यम्—' इत्यादौ लावण्यादेर्विषयस्य पृथक्त्वेनाध्यवसानम्। न चेह भगवति गोपवधूप्रभृतिभिः प्रियत्वाद्यध्यवसीयते। प्रियत्वादेर्भगवति तत्काले तात्त्विकत्वात्। केचिदाहुः—"अयमलंकारो नियमेनालंकारान्तरविच्छित्तिमूलः। उक्तोदाहरणे च शिशुत्वादीनां नियमनाभिप्रायात्प्रियत्वादीनां भिन्नत्वाध्यवसाय इत्यतिशयोक्तिरस्ति। तत्सद्भावेऽपि प्रत्येतृभेदेन नानात्वप्रतीतिरूपो विच्छित्तिविशेष उल्लेखाख्यभिन्नालंकारप्रयोजकः। श्रीकण्ठजनपदवर्णने—'वज्रपञ्जरमिति शरणागतैः, अम्बरविवरमिति वातिकैः' इत्यादिश्चातिशयोक्तेर्विविक्तो विषयः। इह च रूपकालंकारयोगः।" वस्तुतस्तु—'अम्बरविवरं—' इत्यादौ भ्रान्तिमत्त्वमेवेच्छन्ति न रूपकम्, भेदप्रतीतिपुरः सरस्यैवारोपस्य गौणीमूलरूपकादिप्रयोजकत्वात्।

---

## विवृति

**यथारुचीति**। रुचिरभिलाषः, अर्थित्वं प्रयोजनापेक्षित्वम्, व्युत्पत्तिर्भावनारुच्यादीनामनतिक्रमेणेत्यर्थः। भिद्यते भिन्नत्वेनोपपद्यते। आभासो ज्ञानम्। अर्थे विषये। अनुसंधानसाधितः विविधविशेषणज्ञानजनितः। एकविषये। व्यक्तिभेदेन विभिन्नप्रकारकज्ञानोत्पत्तौ तत्तद्विशेषणज्ञानसहकृतं रुच्यादिकं कारणमिति भावः॥ **वास्तवत्वाद**नारोपितत्वात् **ग्रहीतृभेदाच्चेति**। एवं च 'पिता प्रजानां शमनो रिपूणां वनीपकानाममरद्रुमश्च। कविः कवीनां सुहृदां सुधांशुः सतां गुरुर्भूमिपतिः प्रतीतः॥' इत्यादौ पितृत्वादीनां प्रकाराणामवास्तवत्वेऽपि ग्रहीतृभेदादेव न मालारूपकमिति भावः। **न च भ्रान्तिमानिति**। अत्र प्रियत्वादीनां वास्तवत्वादिति हेतुर्बोध्यः। एवं चात्र सादृश्यजनितभ्रमाभावादत्र न भ्रान्तिमानिति भावः। अयमुक्तोल्लेखः। तात्त्विकत्वाद् विद्यमानत्वात्। **केचिदिति**। अयमुल्लेखः अलंकारान्तरं विच्छित्तेर्मूलं यस्य सः। अलंकारान्तरसहकृत एवायं विच्छित्तिविशेषं जनयतीति भावः। प्रियत्वादेर्धर्मस्य शिशुत्वादीनां नियमाभिप्रायाद् व्यवच्छेदे तात्पर्याद् भिन्नत्वाध्यवसायः शिशुत्वादिभेदप्रत्ययः। नन्वत्रातिशयोक्तिरेव वैचित्र्यप्रयोजिका आस्तां किमुल्लेखस्यालंकारत्वाङ्गीकारेणेत्यत आह—**तत्सद्भावेऽपीति**। अतिशयोक्तिसद्भावेऽपीत्यर्थः। **प्रत्येतृभेदेनेति**। एकस्मिन्नीश्वरे गोपवधूप्रभृतीनां रुच्यादिभेदेन प्रियत्वादिप्रतीतिरतिशयोक्त्यलंकारस्तन्मूलकः। सभ्यानां नानात्वप्रत्यय एव विच्छित्तिविशेष इति भावः॥ **अम्बरविवर**माकाशावकाशः॥ रूपकस्य भेदप्रतीतिपुरः सरत्वे हेतुमाह—**गौणीमूलेति**। गौणी सादृश्यलक्षणा मूलमस्येत्यर्थः। **रूपकादिप्रयोजकत्वादित**। रूपकादिस्वरूपत्वादिति तात्पर्यम्॥

## विवृतिपूर्तिः

इत्युदाहृत्योक्तम् । इह त्वाश्रयानेकत्वमयुक्तमनेकविधत्वं दृगन्तानाम् । आश्रयत्वमाधारत्वमेव । अकृशमित्यत्र तु अवच्छेदकत्वापराभिधं सर्वस्मिन्नात्मास्तीत्यादाविव व्याप्यत्वमेव सप्तम्यर्थः । तत्रैव सामानाधिकरण्येभेदेनैकस्यानेकोल्लेखो यथा—'योगिनो योगिनां मध्ये मोगिनोऽपि च भोगिनाम् । विदुषामपि विद्वांसः पिशुनाः कैर्विनिश्चिता ॥' एवमनेकग्रहीतृकोटिकः स्वरूपोल्लेखो यथा—आत्मा भूमैव तत्त्वज्ञैः कर्तैवेति च कर्मठैः । देहादिसंघ एवान्यैः सर्वैरुल्लिख्यतेऽद्भुतम् ॥' तत्रैव फलोल्लेखो यथा—'यतयो भोक्तुमेवेति पातुमेवेति भीरवः । प्रकटः कर्तुमेवेति कर्मिणस्त्वां गुरो विदुः ॥' तत्रैव हेतूल्लेखो यथा—'केचित्त्यागैकनिष्ठत्वात्परे त्वैश्वर्यवत्त्वतः । एके तु संशयोच्छेदादेव साधूनभजन्त्यलम् ॥ इत्येवं षोढोल्लेखालंकारः **साहित्य**सारादौ द्रष्टव्यः ॥

## विज्ञप्रिया

रुच्यादीनां तद्बुद्धिप्रयोजकत्वे संवादमाह—**यथारुचीति**। एकस्मिन्नर्थे अनुसन्धानेन मनोनिवेशन साधित आभासः ज्ञानं बुद्धिरपि यथारुच्यादि— भेदात् भिद्यत इत्यर्थः । रुचिरिच्छा, अर्थित्वं किञ्चित् प्राप्त्यर्थमिच्छारूपा । व्युत्पत्तिः संस्कारः ।

अत्र मालारूपकप्रसक्तिं निरस्यति—**अत्र भगवत** इति। वास्तवत्वेन अहार्य्याभेदारोपात्मकरूपकाऽप्रसक्तिः ग्रहीतृभेदाच्च न तन्मालात्वप्रसक्तिः; मालाया ग्रहीतृभेदाविवक्षमाणादेव । यद्यपि वास्तवत्वेन रूपकाप्रसक्तौ मालारूपकप्रसक्तिरपि तत एव निरस्ता तथापि ग्रहीतृभेदप्रदर्शनं मालापरिणामप्रसक्तिवारणसूचनार्थम् । वास्तवत्वेन तत्प्रसक्तिसत्त्वेऽपि ग्रहीतृभेदस्य तद्बाधकत्वादिति हेतुः । अप्रसक्तमप्यतिशयोक्तिप्रभेदविशेषं वैशद्याय निरस्यति—**नचायमभेद** इति । तत्प्रभेदस्योदाहरणं प्रदर्श्यते । तत्प्रसक्तिर्नास्तीत्याह—**तत्र हीति**। तत्रातिशयोक्तिप्रभेदे पृथक्त्वेन तत्रैव तदन्यत्वेन । **नचेहेति**। इह प्रिय इत्याद्युल्लेखोदाहरणे । **प्रियतान्यथेति**। प्रियतातः अन्यथा इत्यर्थः । किन्तु प्रियत्वाद्यध्यवसीयते इति क्वचित् प्रामादिकः पाठः । स चाध्यवसीयत इत्यत्र निरस्यते इत्येवं लक्षणया समर्थनीयः । तात्त्विकत्वादित्यन्यत्वेनाऽबोधितत्वादित्यर्थः । तात्त्विकबुद्ध्या च नाहार्य्यारोपरूपं रूपकं चेत्युक्तम् ।

अलङ्कारान्तरसङ्करात् तद्भङ्गिमूल एव नियमेनायमलङ्कार इति केचिदाहुः तद्दर्शयति—केचिदिति । विच्छित्तिर्भङ्गिः । उक्तोदाहरणेषु तां विच्छित्तिं दर्शयति—**उक्तेति**। **नियमाभिप्रायादिति**। वृद्धैश्च शिशुरेवाऽग्राहि इत्येवं नियमाभिप्रायादित्यर्थः । अतिशयोक्तिरस्तीत्यग्रेऽन्वयः । तथाच यूनि देवे शिशुभिन्नेऽपि नियमतः शिश्वभेदारोपाद् भेदेऽप्यभेदारोपारूपातिशयोक्तिर्दर्शिता । अत्र च नियमप्रदर्शनं तेषां तथात्वेन भावनातिशयप्रदर्शनार्थमेव, नतु तस्यातिशयोक्तिघटनार्थतेति बोध्यम् । प्रिय इत्याद्यंशेऽपि तमेवातिशयोक्तिं दर्शयति—प्रिय इत्यादीनामिति ।

अत्र च भेदेऽप्यभेदारोपरूपाया अतिशयोक्तेरेव सम्भवः । तथा च भिन्नार्थध्यवसाय इत्यत्र भिन्नत्ववत्यध्यवसाय इत्यर्थः । कस्याध्यवसाय इत्यत्राह—प्रियत्वादीनामिति । तथा च अस्वामिनि देवे स्वामित्वारोप एव स्वाम्यभेदारोप इत्यर्थः । अत्रैव केचिदित्यनेनास्वरससूचनम् । देव इत्यनेन आरोपविषयस्योक्तिसत्त्वे तु निगरणघटितस्यातिशयोक्तिसामान्यलक्षणस्यात्राभावात् । वक्ष्यमाणे 'श्रीकण्ठजनपदे' इत्यादौ तु नास्वरस इत्यवधेयम् ।

नन्वेवमतिशयोक्तिसत्त्वे स एवात्रालङ्कारोऽस्तु नोल्लेख इत्यत आह—**तत्सद्भावेपीति**। अतिशयोक्तिसत्त्वेपीत्यर्थः। प्रतीतिरूपविच्छित्तिविशेष उल्लेखाख्यस्यातिशयोक्तिभिन्नस्यालङ्कारस्य प्रयोजक इत्यर्थः।

अतिशयोक्त्यसङ्कीर्णोऽप्युल्लेखस्य विषयोऽस्तीति दर्शयति—**श्रीकण्ठेति**। श्रीकण्ठनामा राजविशेषः तस्य नगरं शरणागतैः शत्रुतो भीतैः वज्रपञ्जरमित्यबोधीत्यर्थः। स्वप्रविष्टरक्षकत्वेन वज्रपञ्जरसादृश्याद भेदारोपरुपं रूपकमेवेत्यर्थः। ग्रहीतुर्भेदात् तत्सङ्कीर्ण उल्लेखः। नचासम्बन्धे सम्बन्धारोपरूपातिशयोक्तिरेवेयमिति वाच्यम्, स्वसादृश्यमूलकत्व एव तदवसरात्। शिशुरित्यत्र तु तात्त्विकत्वादेव न रूपकमित्युक्तमेव। **असुरविवरमितीति**। वातिकैरुन्मत्तैरप्रकाशरूपसादृश्यबुद्धया विवरमित्यर्थः। **अतिशयोक्तेर्विविक्त** इति। नगरस्यारोपावेषयस्य स्वशब्देनैवोक्तत्वेन तन्निगरणाभावादतिशयोक्त्यप्रसक्तेरिति भावः।

**गौणीमूलेति**। गौर्वाहीक इत्यादिवद् गौणीलक्षणामूलेति नात्रार्थः, रूपके लक्षणाभावात्। व्यधिकरणेनैव चन्द्रत्वेन शक्त्यैव चन्द्रपदात् मुखबोधात्। आरोपाधिकरणस्य प्राङ्निर्देशे, रूपकं यथा—अयं चन्द्र इत्यत्र। 'आरोपस्य प्राङ्निर्देशे तु गौणी लक्षणा, यथा गौर्वाहीक इत्यत्र। किन्तु आरोपाधिकरणस्यारोप्यगुणयोगात्मकसादृश्यरूपा या बुद्धिः सैवात्र गौणीपदार्थः। तादृशबुद्धिमूलकरूपकादिप्रयोजकत्वाद् भेदप्रतीतिपुरःसरारोपस्य इत्यर्थः। रूपकादीत्यादि शब्दात् सादृश्यमूलकोत्प्रेक्षाद्यनेकालङ्कारपरिग्रहः। तत्र मूलकत्वप्रदर्शनं च तत्पूर्वके परिणामालङ्कारे तथात्वाभावप्रदर्शनाय। **परशब्द** इत्यादि। परशब्दश्चन्द्रादिशब्दो गवादिशब्दश्चेत्यर्थः। परत्र मुखादौ वाहीकादौ च। **लक्ष्यमाणेति**। लक्ष्यमाणो ज्ञायमानो य आरोपस्य गुणो धर्म आरोपाधिकरणस्य तद्योगेनेत्यर्थः। परत्र वृत्तिश्च रूपके व्यधिकरणप्रकारेण शक्त्यैव। गौर्वाहीक इत्यादौ गौणीलक्षणास्थले तु लक्षणयेति विशेषः। **वर्त्तत इतीति**। संप्रतिपत्तिर्यत्र शब्दे प्रयोक्तृप्रतिपत्रोः स शब्दो गौण इत्यर्थः। **स चेति**। स गुणयोग इत्यर्थः। तादृशगुणयोगबुद्धिस्तु असुरविवरमित्यत्र नास्तीत्याह—**इह तु** इति।

## लोचन

श्रीकण्ठजनपदो नाम श्रीकण्ठदेवताधिष्ठितो देशः। असुरविवरं सिद्धविवरम् वातिकाः पवनयोगिनः। यद्वा-असुरविवरं वातरोगशान्तिकरः कोऽपि रोगविशेषः। वातिकैः वातरोगिभिः। अत्राप्यलङ्कारान्तरविच्छित्तिमूलतां दर्शयति-**इह चेति**। इच्छन्ति तत्त्वज्ञा इति शेषः। रूपकालङ्कारयोग इति तु केषाञ्चिद् मतानुसारेणोक्तमित्यर्थः। कथं न रूपकमित्यत आह—**भेदेति**। भेदप्रतीतिपुरसरस्यैव इत्येवकारेण भ्रान्त्यादेर्व्यवच्छेदः। प्रथमतोऽपि भेदप्रतीतौ भ्रान्त्यादेरभावात्। मुग्धा दुग्धधियेत्यादौ मिथ्याज्ञानस्य कविप्रतिभाहतत्वेन कविना बल्लवादिनिष्ठत्वेन सत्यत्वेनोपनिबद्धत्वाद् रूपकादीत्यादिशब्देनापह्नुत्यादिसंग्रहः। कथं तथाभूतस्यारोपस्य रूपकादिप्रयोजकत्वमित्यत आह—**गौणीमूलेति**। रूपकादेर्गौणीलक्षणाहेतुकत्वादित्यर्थः।

## कुसुमप्रतिमा

तथेति। रुचिं मनोवृत्तिमनतिक्रम्येति यथारुचि, अर्थित्वं प्रयोजनमनतिक्रम्येति यथार्थित्वम्, व्युत्पत्तिमवधारणमनतिक्रम्येति यथाव्युत्पत्ति। तथा च एकस्मिन्नपि अर्थे वस्तुनि, यथारुचि रुच्यनुसारेण, यथार्थित्वं प्रयोजनानुसारेण, यथाव्युत्पत्ति। अवधारणानुसारेण च अनुसन्धानेन भावनया साधित उत्पादितः, आभासो ज्ञानं भिद्यते भिन्नभिन्नो भवति। तथा च यथा एकस्मिन्नेन पुरुषे तत्पलया रुच्यनुकारेण भावनया प्रिय इति ज्ञानम्, स्वामिनः प्रयोजनानुसारेण भावनया दास इति ज्ञानम्, प्रतिवेशितस्तु अवधारकानुसारेण भावनया चौर इति ज्ञानम्;

तथा एकस्मिन्नेव कृष्णे गोपवधूनां नन्दादीनाञ्च रुच्यनुसारेण भावनश्या प्रिय इति शिशुरिति च ज्ञानम्, देवानां भक्तानाञ्च प्रयोजनानुसारेण भावनया अधीश इति नारायण इति च ज्ञानम्, योगिनान्तु अवधारणानुसारेण भावनया ब्रह्मेति ज्ञानमित्याशयः ।

ननु मुखपद्ममित्यत्र मुखे पद्मत्वारोपवत् प्रिय इत्यादौ निर्विकारादिरूपे कृष्णे प्रियत्वाद्यनेकारोपान्माला-रूपकम्, अथवा सर्वथा क्रियागुणविहीने ब्रह्मरूपे कृष्णे प्रीणातीति व्युत्पत्त्या गोपवधूनां प्रीतिजनकत्वस्य, जगद्वृद्धे नन्दादीनां शिशुवस्य, नन्दाद्यधीने देवानामधीशत्वस्य, वसुदेवनन्दने भक्तानां नारायणत्वस्य, मानवाकारे योगिनां ब्रह्मत्वस्य च भ्रमाद्भ्रान्तिमानलङ्कार एवास्ताम्, किमसर्वावादिसिद्धमुल्लखाख्यमलङ्कारान्तरमङ्गीक्रियत इत्याह अत्रेति । वास्तवत्वाद्यार्थत्वात्, ग्रहीतृभेदात् ज्ञातृणां भिन्नत्वात् । एतच्चोभयमुभयं प्रत्येव हेतुरिति बोध्यम् । तथा च भूमेर्भारावतारणाय जन्मविकारावलम्बिनि कृष्णं गोपवधूप्रभृत्यपेक्षया प्रियत्वादीनां सर्वेषामेव धर्म्माणां सर्वथा वास्तविकत्वं न आरोपाभावात् सादृश्यमूलकभ्रमाभावाच्च ग्रहीतृभेदाच्च न मालारूपकं न व भ्रान्तिमान् सम्भवति । नहि केनापि वस्तुत एव पद्मे पद्मत्वारोपः पद्मत्वभ्रमो वा क्रियते । न वा "मुखपद्मम्" इत्यादौ मुखे पद्मत्वरोपज्ञाने "शुक्तिकायां रजतम्" इत्यादौ च शुक्तिकायां रजतत्वप्रकारकभ्रमज्ञाने वा ज्ञातृभेदः सम्भवतीति भावः ।

अथ तर्हि अभिन्ने कृष्णे प्रियत्व शिशुत्वादिरूपभेदाध्यासायादतिशयोक्तिरेवास्तामित्याह न चेति । एवं रूपातिशयोक्तिरिति वाच्यं न चेत्यर्थः । हि यस्मात् । तत्र अभेदे भेदाध्यवसायरूपायामतिशयोक्तौ पृथक्त्वेना-ध्यवसानं सामान्यलावण्यादिभ्यो भिन्नत्वेनाध्यवसायं । तत्काले कृष्णगोपवधूप्रभृतीनां सत्तासमये, तात्त्विकत्वात् यथार्थत्वात् । तत्र नियतसत्ताकस्य वस्तुन आरोपवदध्यवसायस्याप्यसम्भवादित्याशयः ।

केचिदिति । अयमुल्लेखो नाम, नियमेन आवश्यकभावेन, अलङ्कारान्तरविच्छित्तिरन्वालङ्कारकृतं वैचि-त्रयमेव मूलं कारणं यस्य सः, अन्वेन येन केनचिदलङ्कारेण जनिताद्वैचित्रयविशेषादेवायमलङ्कारो जायते, न पुनः स्वत इति भावः । नियमाभिप्रायात् कृष्णो गोपवधूनामन्तिके प्रिय एव, वन्दादि वृद्धानामन्तिके च शिशुरेव इत्यादिनिय-माभिप्रायेणाभिधानात्, प्रियत्वादेः सकाशात् शिशुत्वादीनां भिन्नत्वस्य भेदस्य अध्यवसाय इति हेतोः, अभेदे भेदाध्यवसायमूला अतिशयोक्तिरस्तीत्यर्थः । अथ तर्हि तथैव व्यपदेश आस्तामित्याह तत्सद्भावेऽपि चेति । तादृशातिशयोक्तिसत्त्वे चेत्यर्थः । ग्रहीतृभेदेन ज्ञातृपार्थक्येन । विच्छित्तिविशेषः अन्यविधं वैचित्रयम् । अत्र "न चेह भगवति" इत्याद्युक्तयुक्तिरेव अस्वरसबीजमित्यनुसन्धेयम् ।

श्रीकण्ठेति । बाणभट्टकृतहर्षचरिते श्रीकण्ठो नाम यो जनपदो देशस्तस्य वर्णने । शरणागतैः शत्रुभये-नागत्य रक्षकत्वेनाश्रितैः वज्रपञ्जरमिति महावीररक्षिततया शत्रूणां प्रवेशासम्भवादिति भावः । वातिकैः सङ्कीर्णस्थल-स्थितया वातव्याधिविशिष्टैर्जनैः, अम्बरविवरम् आकाशात्मकमहाशून्यस्थानस्वरूपम्, इच्छानुसारेण यत्र तत्रापि विचरणसम्भवादिति भावः । अनन्यतेत्थं परक्रियया अन्वयः । "वातिकी वातजोचा वैः" इति राजनिर्वण्ट । वातिक एषामस्तीति अर्श आदित्वादतिवातिकैरिति रूपम् । विविक्तौ भिन्नः कस्यचिदप्यवसायाभावादिति भावः । ननु तर्हि "नियमेनालङ्कारान्तरविच्छित्तिमूलः" इति पूर्वोक्त व्यभिचार इत्याह इह चेति । वज्रपञ्जरमित्यादावुभयत्र चेत्यर्थः, रूपकालङ्कारयोग देशे वज्रपञ्जरत्वाम्बरविवरत्वयोरारोपादित्याशयः । तथा च वज्रपञ्जरमित्यादौ रूपक-कृतविच्छित्तिमूल एवोल्लेखालङ्कार इति तेषां मतम् ।

उदाहृते रूपकयोगमसहमान आह वस्तुतस्त्विति । आदिपदेन वज्रपञ्जरमित्यस्य ग्रहणम् । एतेनैतदभि-धायिता तदानीस्तनहर्षचरितपुस्तके 'अम्बरविवरमिति वातिकैः, वज्रपञ्जरमिति शरणागतैः' इत्थमेवोक्तविपरीतः

पाठक्रमो दृष्ट इति प्रतीयते। भ्रान्तिमन्तं भ्रान्तिमदलङ्कारम्, इच्छन्ति अलङ्कारतत्त्वज्ञा इति शेषः। गौणी सादृश्यसम्बन्धघटिता सारोपा लक्षणैव मूलं यस्य तादृशस्य रूपकादेः। आदिशब्देन परिणामग्रहणम्। प्रयोजकत्वात् तादात्म्येन घटकत्वात्। तथा च "मुखपद्मम्" इत्यादौ प्रथममुभयोरेव मुखपद्मयोः शब्दोपात्ततया परस्परं भेदप्रतीतिः परञ्च मुखमेव पद्ममित्यारोपस्तादात्म्येन रूपकं घटयति; तस्य मूलन्तु मुखरूपविषयस्य अनिगीर्णतया सादृश्यसत्तया सारोपाख्या गौणी लक्षणैव। अत्र तु देशरूप विषयस्य सन्निधाने शब्दानुपात्ततया न परस्परं भेदप्रतीतिः, तथैव च तस्य निगीर्णरूपतया न मूलीभूता सारोपास्या गौणी लक्षणापीति कथमपि न रूपकं सम्भवति; किन्तु "मुग्धा दुग्धधिया" इत्यादिवत् देशे अम्बरविवरादिभ्रमादृभ्रान्तिमानेवेति भावः।

रूपकालङ्कारमूलीभूतसारोपाख्यगौणीरूपलक्षणया एव भेदप्रतीतिपुरःसरत्वं प्रमाणयितुमात्मनश्च बहुदर्शितां प्रकटयितुं भामतीकारोक्ति प्रमाणययि यदाहुरिति। आहुः—आरम्भात् कियदनन्तरमेव अध्यासभाष्याख्याने भामयाम्। परशब्दः अन्यवाचकः शब्दः, परत्र अन्यस्मिन्नर्थ, लक्ष्यमाण उभयोः सामान्यधर्म्मतया ज्ञायमानो यो गुणो धर्म्म योगेन सम्बन्धेन, वर्त्तते उपस्थापकतासम्बन्धेनेति शेषः। यत्र यस्मिन् शब्दव्यापारे सति, प्रयोक्तृसम्प्रतिपत्रोर्वक्तृश्रोत्रोः, सम्प्रतिपत्तिः सामान्यधर्म्मस्य समानमेव सम्यग् ज्ञानं जायते, स गौणी नाम शब्दव्यापार इत्यर्थः। तथा च "गौर्वाहीकः" इत्यादौ प्रथमतो गोवाहीकयोः परस्परं भेदप्रतीतिः, परञ्च गोशब्दो जाड्यमान्द्य दिसामान्यधर्म्मयोगेन वाहीकार्थे वर्त्तते; तत्र च वक्तृश्रोत्रोस्तादृशसामान्यधर्म्मज्ञानं समानमेव जायत इति। दायभागटीकायां श्रीकृष्णतर्कालङ्कारोऽप्याह स्म—"शक्यस्य सादृश्यात्मकः सम्बन्धो गुणस्तदधीना या लक्षणा सा गौणी तद्योगाद्गौणः।"

इदानीं विवादास्पदे अम्बरविवरमित्यादौ भ्रान्तिमन्तमेवालङ्कारं समर्थयितुमाह इह त्विति। भ्रान्तिकृत एव यथेच्छसञ्चारसाम्याद्भ्रमजनित एव।

## विमला

यथारूचीति।—यथारुचि—यथाऽभिलाषं, यथाऽर्थित्वं—यथाप्रयोजनापेक्षित्वं, यथाव्युत्पत्ति—यथाज्ञानम्, अथवा—व्युत्पत्तिर्भावनारुच्यादीनामनतिक्रमेणेत्यर्थः एकस्मिन् अर्थे—विषये, वस्तुनीत्यर्थः, अनुसन्धानेन—भावनया, साधितः,—जनितः, विविधविशेषणज्ञानजनित इति यावत्, आभासः,—ज्ञानम् अपि, भिद्यते—पृथक् भवति, भिन्नत्वेनोपपद्यते इत्यर्थः। एकविषये व्यक्तभेदेन विभिन्नप्रकारकज्ञानोत्पत्तौ तत्तद्विशेषणज्ञानसहकृतं रुच्यादिकं कारणमिति भावः।

अत्रेति।—वास्तवत्वात्—तात्त्विकत्वात्, अनारोपितत्वादित्यर्थः। ग्रहीतृभेदाच्चेति—एवञ्च "पिता प्रजानां शमनो रिपूणां वनीपकानाममरद्रुमश्च। कविः कवीनां सहृदां सुधांशुः सतां गुरुर्भूमिपतिः प्रतीतः॥" इत्यादौ पितृत्वादीनां प्रकाराणामवास्तवत्वेऽपि ग्रहीतृभेदादेव इत्यर्थः। न मालारूपकमिति, रूपके आरोपस्य अवास्तवत्वादिति भावः। न च भ्रान्तिमानिति, अत्र प्रियत्वादीनां वास्तवत्वादिति हेतुर्बोध्यः, एवञ्चात्र सादृश्यजनितभ्रमाभावात् न भ्रान्तिमान् इति भावः। अयम्—उक्तोल्लेखः। अध्यवसीयते—आरोप्यते, वास्तवत्वादिति भावः, तात्त्विकत्वात्—विद्यमानत्वादित्यर्थः।

केचिदिति।—अयम्—उल्लेखः, नियमेन—अवश्यम्भावेन, अलङ्कारान्तरस्य—अन्यस्य अलङ्कारस्य, विच्छित्तिः,—वैचित्र्यं, मूलं यस्य तथोक्तः, अलङ्कारान्तरेणोत्थापित इत्यर्थः, अथवा—अलङ्कारान्तरं विच्छित्तेर्मूलं यस्य सः, अलङ्कारान्तरसहकृतं एवायं विच्छित्तिविशेषं जनयतीति भावः। शिशुत्वादीनामिति।—प्रियत्वादेर्धर्मस्य

शिशुत्वादीनां नियमाभिप्रायात्—व्यवच्छेदे तात्पर्य्यात्, अयमस्माकं प्रिय एव, नायं शिशुरिति व्यवच्छेदाभिप्रायत्वादित्यर्थः, भिन्नत्वाध्यवसायः,—शिशुत्वादिभेदप्रत्ययः, इति अभेदे भेदारोप इत्यर्थः। नन्वत्रातिशयोक्तिरेव वैचित्रयप्रयोजिका आस्तां, किमुल्लेखस्यालङ्कारत्वाङ्गीकारेण ? इत्यत आह, तत्सद्भावेऽपीति ।—तत्सद्भावे—अतिशयोक्तिसद्भावे । ग्रहीतृभेदेनेति ।—-एकस्मिन्नीश्वरे गोपवधूप्रभृतीनां रुच्यादिभेदेन प्रियत्वादिप्रतीतिः, अतिशयोक्त्यलङ्कारः तन्मूलकः इति भावः । नानात्वप्रतीतिरूपः,—विभिन्नज्ञानरूपः, विच्छित्तिविशेषः,—वैचित्र्यातिशयः, सभ्यानां नानात्वप्रत्यय एव विच्छित्तिविशेष इति भावः । श्रीकण्ठेति ।—श्रीहर्षचरिते श्रीकण्ठाह्वः जनपदः तद्वर्णनप्रसङ्गे इत्यर्थः । अम्बरविवरम्—आकाशवकाशः ।

रूपकस्य भेदप्रतीतिपुरःसरत्वे हेतुमाह, गौणीमूलेति ।—गौणी—सादृश्यलक्षणा, मूलमस्येत्यर्थः, रूपकादिप्रयोजकत्वादिति—रूपकादिस्वरूपत्वादिति तात्पर्य्यम् ।

## लक्ष्मी

**यथारुचीति** । रुचिमभिलाषमनतिक्रम्य, अर्थित्वमर्थः, प्रयोजनापेक्षाऽस्तीति तस्य भावस्तत्त्वं, तदनतिक्रम्य यथारुचि प्रयोजनापेक्षित्वमित्यर्थः, व्युत्पत्तिर्भावना तामनतिक्रम्य 'यथाऽसादृश्ये' इति पा. सूत्रेणाव्ययीभावः । तथा एकस्मिन्नपि किं पुनरनेकविधे अर्थे विषये यथारुचि रुच्यनुसारेण, यथार्थित्वं प्रयोजनानुसारेण, यथाव्युत्पत्तिभावनानुसारेण च अनुसन्धानसाधितः विविधभावनात्वेनोत्पादितः आभासो ज्ञानविशेषः, भिद्यते भिन्नभिन्नो भवति तथा च एकस्मिन्नपि विषये व्यक्तिभेदेन विभिन्नप्रकारकभावनोत्पत्तौ तत्तद्विशेषणज्ञानविशेषसहकृतं रुच्यादिकं कारणमिति भावः । एवञ्च यथा एकस्मिन्नपि पुरुषे तत्पत्न्या रुच्यनुसारेण भावनया प्रिय इति ज्ञानम्, सुहृदः प्रयोजनानुसारेण भावनया सखेतिज्ञानम्, दुष्टचेतसः अवधारणानुसारेण भावनया दुष्ट इति ज्ञानम्, तथा एकस्मिन्नेव श्रीकृष्णे गोपिकादीनां नन्दादीनां च रुच्यनुसारेण भावनया प्रिय इति शिशुरिति च ज्ञानम्, महेन्द्रादीदां देवानाम् उद्धवादीनां भक्तानाञ्च प्रयोजनानुसारेण भावनया अधीश इति नारायण इति च ज्ञानम्, योगिनां तु अवधारणानुसारेण भावनया ब्रह्मेतिज्ञानमित्यभिप्रायः ।

ननु 'मुखं चन्द्रः' इत्यत्र मुखे चन्द्रत्वारोपवत् प्रिय इत्यादौ षड्विकारादिशून्ये श्रीकृष्णे प्रियत्वाद्यनेकारोपात् मालारूपकस्य, **यद्वा** परमार्थतो गुणक्रियशून्ये तात्त्विके ब्रह्मस्वरूपे श्रीकृष्णे गोपिकादीनां प्रीत्युत्पादकत्वस्य, जगद्वृद्धे नन्दादीनां शिशुत्वस्य, देवानामधिपतित्वस्य देवकीनन्दने भक्तानां नारायणत्वस्य मनुष्यस्वरूपे योगिनां ब्रह्मत्वस्य च भ्रमाद् भ्रान्तिमतोऽलङ्कारस्य च स्वीकारेणैवेष्टसिद्धौ कथं सर्वमतासिद्ध उस्लेखाख्यालङ्कारोऽत्र स्वीक्रियत इत्यत आह—**अत्रेति** । वास्तवत्वात् अनारोपितत्वात्, ग्रहीतृभेदात् प्रतिपत्तृणां नानात्वात् एतच्चोभयमुभयं प्रत्येव कारणमितिज्ञेयम् । तथा च पृथिव्या भारोद्धरणाय जन्मादिषड्विकाराश्रये श्रीकृष्णे गोपिकाद्यपेक्षया सर्वेषामेव प्रियत्वादीनां धर्माणां सर्वथा यथार्थत्वेनारोपात् सादृश्यजनितभ्रान्तेरसत्वात् प्रतिपत्तृभेदाच्च न मालारूपकं नापि भ्रान्तिमदलङ्कारो भवितुमर्हति, न हि कोऽपि यथार्थत एव मुखे चन्द्रत्वारोपः चन्द्रत्वभ्रमो वा विधत्ते; न वा 'मुखं चन्द्रः' इत्यादौ मुखे चन्द्रत्वारोपप्रत्यये 'रङ्गे रजतम्' इत्यादौ च रङ्गे रजतत्वप्रकारकभ्रमप्रत्यये वा प्रतिपत्तृभेदः सम्भवितुमर्हतीतिभावः ।

नन्वेवं सति अभेदे श्रीकृष्णे प्रियत्वशिशुत्वादिरूपभेदाध्यवसायेनातिशयोक्तावन्तर्भाव्यतामलमतिरिक्तेनेत्याशङ्कायामाह—**न चेति** । एवं रूपातिशयोक्तिर्न च वाच्यमित्यर्थः । कुत इत्याह—तथा **हीति** । हि यतः, तत्र अभेदे भेदरूपायामतिशयोक्तावित्यर्थः । **अन्यदेवे**त्यस्य व्याख्यानमतिशयोक्तिप्रकरण एव स्फुटीभविष्यति ।

लावण्यादेस्तद्रूपस्य। पृथक्त्वेन सामान्यलावण्यादिभ्यो भिन्नत्वेन अध्यवसानं निश्चित्यप्रतिपादनम्। इह उक्तोदाहरणे। भगवति श्रीकृष्णे। तत्काले श्रीकृष्णगोपिकादीनां सत्ताकाले, तात्त्विकत्वात् वास्तविकत्वात्। तत्र निश्चितसत्ताकस्य विषयस्यारोपवदध्यवसायस्यापि संभावनायाः वक्तुमशक्यत्वादितिभावः।

अलङ्कारान्तरासङ्करात् तद्भङ्गिमूल एव नियमेनायमलङ्कार इति केचिदाहुः तदुपपादयति—केचिदिति। अयमुल्लेखाख्यः, नियमेनाव्यभिचारेण अलङ्कारान्तरविच्छित्तिः अन्यालङ्कारकृतचमत्कारविशेष एव मूलं कारणं यस्य स तादृशः, अलङ्कारान्तरबीजभूतचमत्कारविशेषमादायैवायमलङ्कारो जायते न पुनः स्वत इत्याशयः। उक्तोदाहरणे 'प्रिय' इत्यादौ चेत्यर्थः, शिशुत्वादीनामित्यत्रादिपदेन प्रियत्वादीनां परिग्रहः। नियमाभिप्रायात् श्रीकृष्णो गोपिकानां सविधे प्रिय एव, नन्दादीनां सविधे च शिशुरेवेत्यादिनियमाभिप्रायेण प्रतिपादनात्, प्रियत्वादेः सकाशात् शिशुत्वादीनां भिन्नत्वस्य अनेकत्वस्य अध्यवसाय इति अस्मात्कारणात् अभेदे भेदाध्यवसायमूला अतिशयोक्तिर्वर्तत इत्यर्थः। नन्वेवमतिशयोक्तिरेव स्वीक्रियतां किमनेनेत्यत आह—**तत्सद्भावेऽपि** चेति। तादृशातिशयोक्तेर्विद्यमानत्वेऽपि चेत्यर्थः। ग्रहीतृभेदेन प्रतिपत्तृपार्थक्येन। विच्छत्तिविशेषः अन्यविधचमत्कारविशेषः। उल्लेखाख्येन भिन्नः सङ्कीर्णोऽसावलङ्कारोऽतिशयोक्त्यलङ्कारस्तस्य प्रयोजको बोधकः। अत्र **केचिदि**त्युक्त्याऽस्वरसः सूचितस्तद्बीजन्तु—'न चेह भगवति' इत्याद्युक्तिरेवेत्यवधेयम्।

यदि त्वयं प्रतिपत्तृभेदेन भेदेऽतिशयोक्तिसद्भाव एव स्यात्तदाऽतिशयोक्तिप्रकारविशेष एव स्यात् न च तथा अलङ्कारान्तरेऽपि सम्भवादित्याह—**श्रीकण्ठेति**। बाणभट्टकृत **हर्षचरिते** श्रीकण्ठाख्यो यो जनपदस्तद्वर्णने क्रियमाणे स्थाण्वीश्वराख्यजनपदस्य वर्णनप्रसङ्गः तृतीय उच्छ्वासे इति भावः। शरणागतैः शत्रुभयेनागत्य रक्षत्वेनाश्रितैः वज्रमिन्द्रायुधं तदेव पञ्जरं तदेव निलीय वस्तुं योग्यं स्थानम्, अमोघत्वेननाप्रतिहतत्वेन स्थानस्य वज्रपञ्जरत्वेनं प्रतिपादनम् अनेन शत्रूणां तत्र प्रवेशासम्भव इति सूचितम्, वातिकैः वातप्रभूतैः देवयोनिविशेषैः, यद्वा सङ्कीर्णस्थानस्थितया वात एषामस्तीति अर्श आद्रित्वादच् तैः, वातरोगविशिष्टैर्जनैः, अम्बरविवरम् आकाशस्य गुहारूपं स्थानम्, स्वेच्छानुसारेण यत्र तत्रापि सञ्चरणसम्भवादित्याशयः। अमन्यतेत्येवमुत्तरक्रियया सम्बन्धः। विविक्तः अतिरिक्तः कस्याप्यध्यवसायस्यासत्त्वादितिभावः। नन्वेवं सति 'नियमेनालङ्कारविच्छित्तिमूल' इत्युक्तव्यभिचार इत्यत आह—**इह** चेति। वज्रपञ्जरमित्यादौ चेत्यर्थः। रूपकालङ्कारयोगः तत्र जनपदे वज्रपञ्जरत्वाम्बरविवरत्वयोरारोपादितिभावः। एवञ्च वज्रपञ्जरमित्यादिस्थले रूपकजनितचमत्कारविशेषमूल एवोल्लेखालङ्कार इति तेषाभिप्रायः।

उक्तोदाहरणे रूपकसम्बन्धं स्वीकुर्वन्नाह—**वस्तुतस्त्विति**। यद्यपि केचित्तथा प्राहुः किन्तु सिद्धान्तनये नेति भावः। आदिशब्देन वज्रपञ्जरमित्यस्य परिग्रहः। **अत्राम्बरविवर**मितिदर्शनेन तदानीन्तनहर्षचरितादिपुस्तके प्राय एतस्यैव पूर्वं पाठस्ततो **वज्रपञ्जर**मित्यस्येत्यवगम्यते। भ्रान्तिमन्तं भ्रान्तिमदलङ्कारम्, इच्छन्ति तत्त्वज्ञा इति शेषः। न रूपकमिति। रूपकालङ्कारयोग इति तु केषाञ्चिन्मतानुसारेणोक्तमित्याशयः। कथं न रूपकमित्यत आह—भेदेति। भेदप्रतीतिपुरःसरस्यैव न त्वभेदप्रतीतिपुरस्सरस्य। गौणी सादृश्यसम्बन्धयुता सारोपालक्षणैव मूलं यस्य तथोक्तस्य रूपकादेः। आदिपदेन 'मुग्धा दुग्धधिया' इत्यादौ मिथ्याज्ञानस्य कविप्रौढोक्तित्वेन कविना बल्लवादिनिष्ठत्वेन सत्यत्वेनोपनिबद्धत्वादेवापह्नुत्यादेः परिग्रह इति लोचनकारमतम्। परे तु परिणामादेर्ग्रहणमित्याहुः प्रयोजकत्वात् तादात्म्येन तत्स्वरूपत्वात्। एवञ्च 'मुखं चन्द्रः' इत्यादौ प्रथममुभयोरेव मुखचन्द्रयोः साक्षादभिधानेन परस्परं पार्थक्यप्रतीतिः किन्तु 'मुखं चन्द्र' एवेत्यारोपतादात्म्येन रूपकं बोधयति तन्मूलन्तु

मुखरूपविषयस्य अनिगीर्णस्वरूपतया सादृश्यवत्तया सारोपाख्यगौणीलक्षणैव । प्रकृते तु जनपदरूपविषयस्य समीपे साक्षाच्छब्देनाप्रतिपादनात् परस्परं भेदावगमो न, तथैव च तस्य निगीर्णस्वरूपतया जनपदरूपमूलभूतायाः सारोपाख्यगौणीलक्षणाया असम्भवात् न रूपकम्, परञ्च 'मुग्धा दुग्धधिया' इत्यादिवत् जनपदे अम्बरविवरादिभ्रमाद् भ्रान्तिमदलङ्कार एवेत्याशयः ।

## रुचिरा

**रुच्यादयः** । आदिपदेनार्थित्वव्युत्पत्त्योर्ग्रहणम् । यथायोगं यथासम्भवम् । **प्रयोजकाः** कारणनि । भगवति यावद्गुणसत्त्वेऽपि तस्यतस्य ग्राहकस्य् रुच्यादिभेदे विविधप्रकारेणैव स्फुरणमिति बोध्यम् । प्राचां संवादेनोक्तमर्थ सिद्धान्तयति—**यत्** । **आहुः** । **'यथारुचि** रुचिमभिलाषमनतिक्रम्य । **यथाऽर्थित्वम**र्थित्वमर्थः प्रयोजनापेक्षाऽस्यास्तीति तस्य भावस्तत्त्वं, तदनतिक्रम्य । **यथाव्युत्पत्ति** व्युत्पत्तिर्भावना तामनतिक्रम्य । 'यथाऽसादृश्ये ।' २/१/७ इति सूत्रेणाव्ययीभावः । **एकस्मिन्** । **अपि** 'किं पुनरनेकविधे' इत्यर्थतोऽवगम्यते । **अर्थे** पदार्थे । **आभासः** प्रत्ययविशेषः । अपि (इदम्मुभयत्रानुयोगि) । **अनुसन्धानसाधितो**ऽनुसन्धानं भावना तेन साधितः सम्पादितः । **भिद्यते** । एकस्मिन्नपि विषये व्यक्तिभेदेन विविधप्रकारकभावनासम्पत्तौ तत्तद्विशेषणकप्रत्ययविशेषसहकृतं रुच्यादिकं कारणमिति भावः ॥' **इति** । अतः—**अत्र** । **भगवतः** । **प्रियत्वादीनाम्** । **वास्तवत्वात्** आरोपितत्वाभावात् । **ग्रहीतृभेदात्**प्रत्येतृणां नानात्वात् । **च** । **न** । **मालारूपकम्** । तथा च—'पिता प्रजानां, शमनो रिपूणां, वनीपकानाममरद्रुमश्च । कविः कवीनां, सुहृदां सुधांशुः, सतां गुरुर्भूमिपतिः प्रतीतः ॥' 'यमः खलु महीभृतां हुतवहोऽसि तन्वीवृतां सतां प्रति युधिष्ठिरो धनपतिर्धनाकाङ्क्षिणाम् । गृहं शरणमिच्छतां कुटिलकोटिभिर्निर्मितं त्वमेक इह भूतले बहुविधो विधात्रा कृतः ॥' इत्यादौ पितृत्वादीनां यमत्वादीनां च वास्तवत्वे सति ग्रहीतृभेदादेव न मालारूपकमित्यपि सूचितं वेदितव्यम् । **न** । **च** । **भ्रान्तिमान्** । 'कपाले मार्जारः पय इति कराँल्लेढि शशिनस्तरुच्छिद्रप्रोतान् बिसमिति करी सङ्कलयति । रतान्ते तल्पस्थान् हरति वनिताऽप्यंशुकमिति प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ॥' इत्यादौ तु भ्रान्तिमानेव, तत्तद्रूपतायाः सादृश्यमूलकत्वात्, कराणां चानेकत्वात्तेषु जात्यभिप्रायेणैकत्वारोपेऽपि श्वेतत्वैक्येन भेदमूलकताया अनुपपत्तेश्चेत्यपि बोध्यम् । ननु तदयमभेदाध्यवसायिकायामतिशयोक्तावन्तर्भाव्यतामित्याशङ्क्याह—**न** । **च** । **अयं** निरुक्तलक्षण उल्लेखः । **अभेदे** । **भेदः** । **इत्येवंरूपाऽतिशयोक्तिः** । ननु कथं नेत्याशङ्क्य—उपपादयति, **तथाहि** । **'तस्याः** । **पद्मपलाशाक्ष्याः** पद्मस्य पलाशे ते इव विशाले चारुणी चाक्षिणी नेत्रे यस्यास्तस्यास्तथाभूतायाः । **अङ्गलावण्यम**ङ्गस्य शरीरस्याङ्गानां मुखादीनां वा लावण्यं सौन्दर्यविशेषः । अन्यत् लोकेऽनुभूयमानेभ्यः पृथक् । **एव** । **सौरभसम्पदः** सौरभस्य सौगन्ध्यस्य सम्पदः सम्पत्तयः । **अन्याः** 'एवे'ति पूर्वतोऽनुषज्यते । तथा—**सरसत्वं** रसिकत्वं श्रृङ्गारपात्रत्वं वेति भावः । **अलौकिकम्** । न लोके सम्भवीति भावः ॥ १२८ ॥

**इत्यादौ** । **लावण्यादेस्तद्रूपस्य** । **विषयस्य** । **पृथक्त्वेन** 'अन्यदेवे'त्यादिनिर्दिष्टेनासाधारणत्वेनेति भावः । **अध्यवसानं** निश्चित्य प्रतिपादनम् । **न च** । इहोदाहृते पद्ये । **भगवति** । **गोपवधूप्रभृतिभिः** । **प्रियत्वादि** । **अध्यवसीयते** । हेतुं निर्दिशति—**प्रियत्वादेः** । **भगवति** श्रीकृष्णे । **तत्काले** तदानीम् । **तात्त्विकत्वात्** स्वत एव वर्त्तमानत्वात् । अयम्भावः—तत्रातिशयोक्तौ तावत् 'अन्यदेवाङ्गलावण्यम्' इत्यादौ युवत्यामन्यत्वेन (पृथक्त्वेन) अवर्त्तमानमपि लावण्यादि पृथक्त्वेन निश्चाय्यते, उल्लेखे तु 'प्रिय'इत्यादौ प्रियत्वादिवर्त्तमानमुल्लिख्यते, नतु

अस्मादन्यत्वेन प्रत्याय्यते। इदमनयोर्भेदप्रयोजकम्। भ्रान्तौ 'मुग्धा दुग्धधिया' इत्यादौ 'कपाले मार्जार' इत्यादौ वा चन्द्रकिरणादौ वर्त्तमानस्य श्वैत्यस्य साम्यमादाय दुग्धत्वादिप्रत्ययः, अत्र तु न साम्यमादाय किञ्चित् प्रियत्वादि भगवति आवेद्यते, किन्तु तेषु सत्सु कियतां ग्रहीतृभेदेनावेदनम्। नच 'यमः खलु' इत्यादौ राजनि साम्यमादाय यमत्वाद्यावेद्यते, यत्स्याद्भ्रान्तिः किन्तु 'अष्टाभिश्च सुरेन्द्राणां मात्रभिर्निर्म्मितो नृपः।' इत्यादिमानवादिनिदेशमादायैव। इत्यनयोरपि भेदः। मालारूपके च—'मनोजराजस्य सितातपत्रम्' इत्यादौ न ग्रहीतृभेदः, न वा विषयभेदः। इत्यनयोर्भेदः। इति।

यदाहुः शारीरकमीमांसाभाष्यव्याख्याने **श्रीवाचस्पतिमिश्राः**—'अपिच परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्तते इति । यत्र प्रयोक्तृप्रतिपत्रोः संप्रतिपत्तिः स गौणः, स च भेदप्रत्ययपुरः सरः' इति । इह तु वातिकानां श्रीकण्ठजनपदवर्णने भ्रान्तिकृत एवाम्बरविवराद्यारोप इति । अत्रैव च 'तपोवनमिति `मुनिभिः कामायतनमिति वेश्याभिः' इत्यादौ परिणामालंकारयोगः ।

**'गाम्भीर्येण समुद्रोऽसि गौरवेणासि पर्वतः ।'**

इत्यादौ चानेकधोल्लेखे गाम्भीर्यादिविषयभेदः । प्रयोजकः । अत्र च रूपकयोगः । 'गुरुर्वचसि, पृथुरुरसि, अर्जुनो यशसि—' इत्यादिषु चास्य रूपकाद्विविक्तो विषय इति । अत्र हि श्लेषमूलातिशयोक्तियोगः ।

---

## विवृति

गौण्या लक्षणाया भेदप्रतीतिपुरः सरत्वे प्राचीनसंवादमाह—**यदाहुरिति** । परशब्द उपमानाभिधायकः शब्दः । **परत्र** उपमेये **लक्ष्य**माणगुणयोगेन प्रतीयमानसाधारणधर्मसंबन्धेन । **यत्र** यस्मिन्सति **प्रयोक्तृप्रतिप**न्नोः वक्तृश्रोत्रोः **संप्रतिपत्तिः** प्रमात्मकसादृश्यज्ञानं स गौणः । शब्दव्यापार इत्यर्थः । स च वक्तृतात्पर्यज्ञानविशेषरूपशब्दव्यापारश्च ॥ प्रकृते रूपकवैधर्म्यं दर्शयति—**इह त्विति** । **भ्रान्ति**कृतो विशेषदर्शनजन्यः । अत्रैव श्रीकण्ठजनपदवर्णन एव **परिणामलङ्कारयोग इति।** आरोप्यमाणयोस्तपोवनकामायतनयोस्तपःकामरूपप्रकृतप्रयोजनोपयोगित्वात्परिणाम इति भावः ॥ विषयभेदेनोल्लेखमुदाहरति—**गाम्भीर्येणेति** । 'कामदत्वाञ्च लोकानामसि त्वं कल्पपादपः ॥' इत्युत्तरार्धमस्य ॥ अत्रैकस्य पुंसो हेतुभेदेन समुद्राद्यनेकरूपेणोल्लेखः ॥ **गुरुरिति** । गुरुर्विशालो जीवश्च । पृथुर्महान् वैन्यश्च । अर्जुनः शुक्लो धनंजयश्च । अत्रैकस्य पुंसो वक्षःस्थलाद्यवच्छेदेन गुरुत्वाद्यनेकरूपेणोल्लेखः ॥

## विज्ञप्रिया

**अत्रैव चेति** । तपोवनमित्यादौ परिणामयोग इत्यन्वयः । तपोवनत्वकामायतनत्वयोस्तत्र वास्तवत्वेन परिणामालङ्कारत्वसम्भवात् । नच तपोवनत्वस्य कथं तत्र वास्तवत्वमिति वाच्यम् । वनपदस्यात्राश्रमे लाक्षणिकत्वाभिप्रायेण परिणामालङ्कारत्वकथनात् । इत्थं ग्रहीतृभेदघटितमुल्लेखमुदाहृत्य विषयभेदघटितं तमुदाहरति—**गाम्भीर्य्येणेति** । विषयभेदो धर्म्मरूपविषयभेदः । अत्र ग्रहीत्रैक्यमेव ।

रूपकासङ्कीर्णमस्य विषयं दर्शयति—**गुरुरिति** । उपदेश्यरूपे वचसि विषये गुरुरुपदेष्टा इत्यर्थः । श्लेषाच्च बृहस्पतिरित्यर्थः । **पृथुरिति** । उरसि उरोवच्छेदेन पृथुर्विस्फारः श्लेषाच्च—पृथू राजा । **अर्जुन** इति । अत्र यशसि इत्यत्र तृतीयार्थे सप्तमी । यशसाऽर्जुनो धवलः इत्यर्थः । श्लेषाच्च पाण्डवोऽर्जुनः कार्त्तवीर्य्यार्जुनो वा । **रूपकाद् विविक्त** इति । त्वं भवानित्यनयोरन्यतरस्याऽपि अनुक्तिरूपान्निगरणादतिशयोक्तेरेव विषयत्वात् । सा चात्र भेदेऽपि अभेदारोपरूपा । यदि तु त्वं भवानित्यनयोरेकतरस्य निर्देशस्तदा रूपकमेव, रूपकातिशयोक्त्योरेतन्मात्र भेदात् । **अत्र हीति** । नच दुर्गालङ्घितविग्रह इत्यादिवदुपमाध्वनिरयमिति वाच्यम् । तत्र विशेष्यस्य शिलष्टोमावल्लभपदस्येवात्र विशेष्यपदाभावात् त्वंपदसत्त्वेऽपि रूपकमेव नोपमाध्वनिस्तस्य शिलष्टत्वाभावात् ।

## लोचन

तथापि कथं तत्रारोपस्य भेदप्रतीतिपुरःसरत्वमित्यत्राचार्य्यसम्मतिं शारीरमीमांसाभाष्यं श्रीमदाचार्य्यशङ्करभगवत्पादकृतम्। परशब्दोऽग्निर्माणवक इत्यादौ माणवकादिशब्दः परत्र माणवकादौ तन्मते लक्ष्यमाणो गुणस्तैक्ष्ण्यपिङ्गलादि। प्रयोक्ता वाक्यप्रयोजकः। प्रतिपत्ता तदर्थज्ञाता। स च गौणीवृत्त्या बोध्योऽर्थः। प्रकृते योजयति—**इह तु** इति। भ्रान्तिकृत एव प्राच्यानां मते भ्रान्तिकृतत्वाभावे पुना रूपकमस्ति इति भावः। अत्र भ्रान्तिमतोऽलङ्कारेत्वेऽपि नालङ्कारान्तरविच्छित्तिमूलत्वं हीयत इति प्रकृते न काचित् क्षतिः।

अत्रैव श्रीकण्ठजनपदवर्णने परिणामालङ्कारयोगः। श्रीकण्ठजनपदे तपोवनत्वाद्यारोपस्य मुन्यादेः प्रकृते तपःप्रभृतावुपयोगात्। नचेह रूपकं तपोवनत्वाद्यारोपस्य सादृश्यमूलत्वाभावात्। मुन्यादीनां तु तपोवनादिभिन्नरूपस्य तद्रूपताप्रतीतेरिह भ्रान्तिमानिति येऽप्याहुः तेषामयमाशयः—

श्रीकण्ठजनपदे एकदेशस्य तपोवनादित्वेप्यवयवावयविनोरभेदात्समुदायस्य तथात्वप्रतीतिरिह न तात्त्विकीति न परिणाम इति। एवमत्र एषु सर्वेषु अलङ्कारान्तरविच्छित्तिसम्भवेऽपि ग्रहीतृभेदेनानेकधोल्लेखस्य विच्छित्तिविशेषस्य सम्भवात् तत्प्रयोजितस्य उल्लेखालङ्कारस्यापलापो न शक्यक्रिय इत्यर्थः।

एवं ग्रहीतृभेदे उदाहृत्य विषयभेदे उदाहरति—गम्भीर्य्येणेति। श्लेषमूलातिशयोक्तिः। गुरुरुपदेष्टैव गुरुर्बृहस्पतिरिति भेदेऽप्यभेदाध्यवसायात् श्लेषमूलातिशयोक्तिरिति। पृथुर्विशालो वैण्यश्च। अर्जुनो धवलः, पक्षे कार्त्तवीर्य्यः, पार्थो वा। नचात्र शब्दशक्तिमूलो ध्वनिः, नच रूपकम् उपदेष्टृत्वादीनां बृहस्पतित्वादित्वेनाध्यवसानात्।

प्रकृतमारोपविषयम् अन्यस्थापनम् आरोप्यविषयत्वस्थापनम्।

हिण्डीरः फेनः। अत्र कैतवपदेन कपटार्थेन न प्रकटलाञ्छनमिति प्रतीतेरपह्नव आर्थः।

## कुसुमप्रतिमा

क्वचिदुदाहृतवैषम्यं दर्शयितुमाह अत्रैव चेति। हर्षचरितस्थश्रीकण्ठजनपदवर्णन एव चेत्यर्थः। परिणामालङ्कारयोग इति। आरोप्यमाणयोस्तपोवनत्वकामायतनत्वयोः प्रकृततपस्याकामोपभोगसाधनोपयोगित्वादित्याशयः।

विषयभेदादुल्लेखालङ्कारं दर्शयति गाम्भीर्य्येणेति। तर्कवागीशधृतमस्योत्तरार्द्धं यथा—

"कामदत्वाच्च लोकानामसि त्वं कल्पपादपः॥" इति।

इत्यादाविति। अनेकधा उल्लरव एकस्यैव राज्ञः समुद्राद्यनेकप्रकारेणोपादाने गाम्भीर्य्यादिविषयाणां समुद्रत्वाद्यारोपप्रयोजकधर्म्माणां भेदः, प्रयोजक उल्लेखालङ्कारस्येति शेषः। रूपकयोग इति। राजनि समुद्रत्वाद्यारोपस्य भेदप्रतीतिपुर सरत्वात् सारोपाख्यगौणौरूपलक्षणामूलत्वाञ्चेति भावः। अत्र असीत्यनेनोपस्थापितस्य राज्ञः अनिर्गौणरूपतया लक्षणायाः सारोपात्वं गाम्भीर्य्यादिसादृश्यसम्बन्धाच्च गौणीरूपत्वमित्यवधेयम्।

प्रकारान्तरेण विषयभेद एवोदाहरणान्तरमाह गुरुरिति। वचसि वाक्ये गुरुर्महानेव गुरु वृहस्पतिः, उरसि वक्षसि पृथुर्विशाल एव पृथुस्दाख्यो राजा, यंशसि अर्जुनो धवल एवार्जुतृनतीयपाण्डवः कार्त्तवीर्य्यो। इत्यादि

वाक्यञ्चेत्यर्थः, अस्य उल्लेखालङ्कारस्य, रूपकात् रूपकालङ्कारविषयात्, विविक्तो विभिन्नः, विषयः स्थलम् । गुरुप्रभृतीनां विषयाणां निगीर्णरूपतया रूपकमूलीभूतसारोपाख्यलक्षणाया एवासम्भावादिति भावः ।

तर्हि किमत्र न कश्चिदपरालङ्कारै इत्याह अत्रेति । हि तथाहि, अत्र गुरुरित्यादौ । श्लेषेति । महद्बृहत्पत्यादीनां भेदेऽपि श्लेषेणाभेदाध्यवसायादित्याशयः । एतेन विषयभेदेनोल्लेखालङ्कारस्थले नियमेनालङ्कारान्तरयोग इत्यात्मनोऽपि मतमिति सूचितम् ।

## विमला

गौण्या लक्षणाया भेदप्रतीतिपुरःसरत्वे प्राचीनसंवादमाह—यदाहुरिति । अपि चेति ।—परशब्दः,—अन्यशब्दः, उपमानाभिधायक इत्यर्थः, परत्र—अन्यत्र, उपमेये इत्याशयः, लक्ष्यमाणगुणयोगेन—प्रतीयमानसाधारणधर्मसम्बन्धेन, वर्त्तते, यथा—"मुखचन्द्रं मनोहरं पश्यति" इत्यत्र मुखे यश्चन्द्रत्वारोपः, स लक्ष्यमाणेन मनोहरत्वरूपेण गुणेन योगादित्याशयः । यत्र—यस्मिन् आरोपे सति, प्रयोक्तृसम्प्रतिपत्रोः,—वक्तृबोद्धव्ययोः, सम्प्रतिपत्तिः,—सम्यक्ज्ञानं, प्रमात्मकसादृश्यज्ञानमित्यर्थः, सः गौणः,—शब्दव्यापार इत्यर्थः, स च—वक्तृतात्पर्य्यज्ञानविशेषरूपशब्दव्यापारश्च । प्रकृते रूपकवैधर्म्यं दर्शयति, इह त्विति ।—भ्रान्तिकृतः,—विशेषदर्शनजन्यः । अत्रैव—श्रीकण्ठजनपदवर्णने एव । परिणामालङ्कारयोग इति ।—आरोप्यमाणानां तपोवनकामायतनसङ्गीतशालानां तपः कामसङ्गीतरूपप्रकृत प्रयोजनोपयोगित्वात् परिणाम इति भावः ।

विषयभेदेनोल्लेखमुदाहरति, गाम्भीर्य्येणेति ।—"कामदत्वाच्च लोकानामसि त्वं कल्पपादपः ॥" इत्युत्तरार्द्धमस्य । अत्र गाम्भीर्य्यादिविषयभेदेन एकस्य पुंसः समुद्राद्यनेकरूपेण उल्लेखः ।

गुरुरिति ।—वचसि गुरुः,—महान्, सुवक्तेत्यर्थः, वृहस्पतिश्च, उरसि—वक्षसि, पृथुः,—विशालः, तादाख्यो वैण्यभूपतिश्च, यशसि अर्जुनः,—धवलः, धनञ्जयश्च कार्त्तवीर्य्यश्च वा । अत्र एकस्य पुंसः वचनाद्यवच्छेदेन गुरुत्वाद्यनेकरूपेणोल्लेखः । इत्यादि च अस्य—उल्लेखस्य, विषयः रूपकात् विविक्तः,—विभिन्नः । अत्रेति ।—अत्र—गुरुरित्यादौ, श्लेषमूलातिशयोक्तियोगः, तस्यैव प्राधान्यादिति भावः ।

## लक्ष्मी

गौण्या लक्षणाया भेदप्रतीतिपुरस्सरत्वे प्राचीनसम्वादमाह—यदाहुरिति । ब्रह्मसूत्राणां श्रीशङ्कराचार्यभगवत्पादैः कृतं भाष्यं शारीरकभाष्यं तस्य व्याख्या तत्रैतादृश 'अथातो ब्रह्मजिज्ञासा' इति प्रथमसूत्रस्य भाष्यव्याख्यानावसरे इति भावः, श्रीवाचस्पति मिश्राः तद्भाष्यविघृतिभामतीकाराः 'परशब्द अन्यवाचकः शब्दः, यथा—'एतत्तैलम्' इत्यादौ तिलभवस्नेहवाचकस्तैलशब्द इति भावः, पत्र अन्यस्मिन्नर्थे एतत्पदवाच्ये सार्षपादिस्नेहे इति भावः लक्ष्यमाण उभयोः साधरणधर्मतया ज्ञायमानो यो गुणो धर्मस्तस्य योगेन सम्बन्धेन, यथा लक्ष्यमाणो गुणो घृतादिभिन्नद्रवत्वरूपस्तस्य योगेन वर्त्तते उपस्थापकतासम्बन्धेनेत्याशयः । यत्र यस्मिन् शब्दव्यापारे सति प्रयोक्तृसम्प्रतिपत्रोः, एतत्तैलमित्यादेरुच्चारिता प्रयोक्ता तद्वाक्यार्थाभिज्ञः प्रतिपत्ता चेति तयोः सम्प्रतिपत्तिः साधारणधर्मस्य तुल्यमेव सम्यग् ज्ञानमुत्पद्यते स गौणो गौणीलक्षणाविषयः शब्दव्यापार इत्यर्थः । तथा च गौणीलक्षणा हि सादृश्यमूला भवति, सादृश्यं च भेदे सत्येवेति एतत्तैलमित्यादौ तैलादिशब्दा एतदादिषु लक्ष्यमाणगुणसम्बन्धेन विद्यन्ते, तादृशी च सम्प्रतिपत्तिस्तद्वक्तृबोध्योरवतिष्ठते । यथा वा 'गौर्वाहीक'इत्यादौ प्रथमतो गोवाहीकयोः परस्परं

पार्थक्यप्रतीतिः, किन्तु गोशब्दो जाड्यमान्द्यतिष्ठन्मूत्रपुरीषत्वसाधारणधर्मयोगेन वाहीकार्थे वर्त्तते तत्र च वक्तृश्रोत्रोस्तादृशसाधारणधर्मज्ञानं तुल्यमेवोत्पद्यते इति ।

सम्प्रति कोऽलङ्कार अम्बरविवरमित्यादाविति निश्राययितुं तावद् भ्रान्तिमदलङ्कारमेवेति द्रढयति—**इह त्विति**। भ्रान्तिकृत एव स्वेच्छया सञ्चरणसमानत्वाद् भ्रमोत्पादित एव अम्बरविवराद्यारोप अम्बरविवराद्यभेदाध्यवसायः। अत्र भ्रान्तिमतोऽलङ्कारत्वेऽपि नालङ्कारान्तरचमत्कारविशेषत्वं हीयत इति प्रकृते न काचित् क्षतिः।

क्वचिदुदाहृते वैपरीत्यमुपपादयति—**अत्रैव चेति**। हर्षचरिते श्रीकण्ठजनपदवर्णनप्रस्ताव एव चेत्यर्थः। **परिणामालङ्कारयोग** इति। आरोप्यमाणयोस्तपोवनकामायतनत्वयोः प्रस्तुततपस्याकामोपभोगनिष्पादनोपयोगित्वादित्यभिप्रायः।

एवं ग्रहीतृभेदेनोल्लेखमुदाहृत्य विषयभेदेन तदुदाहरति-**गाम्भीर्येणेति**। अस्योत्तरार्द्धन्तु—

'कामादत्वाच्च लोकानामसि त्वं कल्पपादपः।' इति।

इत्यादाविति। अनेकधा उल्लेखे एकस्यैव नृपतेः समुद्रादिविविधप्रकारेण ग्रहणे गाम्भीर्यादिविषयाणां समुद्रत्वाद्यारोपप्रयोजकधर्माणां भेदः पार्थक्यम्, प्रयोजक उल्लेखाख्यालङ्कारस्येति शेषः। **रूपकयोग** इति। नृपतौ समुद्रत्वाद्यारोपस्य भेदावगमपुरस्सरेण सारोपाख्यगौणीरूपलक्षणामूलकत्वेन चेत्याशयः। लक्षणायाः सारोपात्वं गौणीरूपत्वं च असीत्यनेनोपस्थापितस्य नृपतेः यथाक्रममनिगीर्णस्वरूपत्वेन गाम्भीर्यादिसादृश्यसम्बन्धत्वेन चेत्यनुसन्धेयम्।

नन्वेवं 'गुरुर्वचसि' इत्यादावपि किं रूपकमेवेत्यत आह—**गुरुर्वचसीति**। उपदेश्यरूपे वचसि विषये गुरुरुपदेष्टा इत्यर्थः, श्लेषाच्च वृहस्पतिरित्यर्थः। उरसि उरोऽवच्छेदेन पृथुर्विशालः श्लेषाच्च पृथूराजा। यशसीत्यत्र तृतीयार्थे सप्तमी। यशसा अर्जुनो धवल इत्यर्थः श्लेषाञ्च पाण्डवोऽर्जुनः कार्त्तवीर्यार्जुनो वा। अस्योल्लेखस्य रूपकात् रूपकालङ्कारविषयात् विविक्तः पृथग्भूतो विषयः स्थलम्।

'त्वं भवान्' इत्यनयोरेकतरस्याप्यनुक्तिरूपत्वेन विषयनिगरणस्वरूपतया रूपकमूलभूतसारोपाख्यलक्षणाया एवासम्भवात्तस्माद्रूपकासङ्कीर्ण एवास्य विषयः।

ननु किं रूपकादतिरिक्तो न कोऽप्यन्योऽलङ्कार इत्याह—अत्रेति। हि तथा हि, अत्र गुरुरित्यादौ। **श्लेषमूलेति**। गुरुरुपदेष्टैव गुरुर्वृहस्पतिरितिभेदेऽप्यभेदाध्यवसायात् श्लेषमूलातिशयोक्तिरित्यर्थः। यदि तु त्वं **भवानित्यन**योरेकतरस्य निर्द्देशस्तदा रूपकमेव तत्रानिगीर्णस्वरूपत्वेन रूपकमूलभूतसारोपाख्यलक्षणायाः सम्भवात्। न च 'दुर्गालङ्घितविग्रहः' इत्यादिवदुपमाध्वनिरयमितिवाच्यम्, तत्र विशेष्यस्य शिलष्टोमावल्लभपदस्येवात्र विशेष्यपदाभावात्, त्वंपदसत्त्वेऽपि रूपकमेव नोपमाध्वनिस्तस्य शिलष्टत्वाभावात्। एवञ्च विषयभेदेनोल्लेखालङ्कारोदाहरणे नियमेनान्यालङ्कारयोग इति स्वस्याऽपि मतमित्यभिव्यक्तं भवति।

अयञ्चानेकविधस्तत्र, एकग्रहीतृकोटिकोऽनेकविषयभेदेनैकस्यानेकोल्लेखः शुद्धो यथा—

'दीनव्राते दयार्द्रा निखिलरिपुकुले निर्दया किञ्च मृद्वी
काव्यालापेषु तर्कप्रतिवचनविधौ कर्कशत्वं दधाना।
लुब्धा धर्मेष्वलुब्धा वसुनि परविपद्दर्शने कां दिशीका
राजन्नाजन्मरम्या स्फुरति बहुविधा तावकी चित्तवृत्तिः॥'

## रुचिरा

मतान्तरं निर्दिशति—**केचित्**। **आहुः**। '**अयमुल्लेखनामा**। **अलङ्कारः**। **नियमेनाव्यभिचारेण**। **अलङ्कारान्तरविच्छित्तिमूलोऽ**लङ्कारान्तरस्य विच्छित्तिरुपस्कारकत्वमलङ्कारत्वबीजभूतश्चमत्कारविशेष इति यावत् मूलं यस्य तादृशः। अलङ्कारान्तरस्य बीजभूतां चमत्कृतिमुपादायैवायं सम्भवतीति भावः। कथमित्याह—**उक्तोदाहरणे** 'प्रिय इति' इत्यादौ। **च**। **शिशुत्वादीनाम्**। आदिपदेन 'प्रियत्वा'दीनां ग्रहणम्। **नियमाभिप्रायात्** व्यवच्छेदतात्पर्य्यमङ्गीकृत्येति भावः। **प्रियत्वादीनाम्**। आदिना 'शिशुत्वा' दीनां ग्रहणम्। **भिन्नत्वाध्यवसायः** शिशुत्वादिभेदप्रत्ययः। **इति**। **अतिशयोक्तिः**। **अस्ति**। अयम्भावः—'प्रिय'इत्यादौ गोपीवृद्धदेवभक्तयोगिजनानां क्रमेण प्रियशिशुस्वामिनारायणब्रह्मत्वैः प्रत्ययाभिधानात् तदन्यतमस्यैतदन्यतमत्वप्रत्यये क्रमनैयत्यमिति 'गोपवधूभिः प्रियः एव, देवैरधीश एवे'त्येवं प्रतीतत्वे वर्ण्यमाने तदन्यतमस्यैतदन्यतरभिन्नत्वाध्यवसायः स्फुटः, स्फुटं चेत्थमेतस्यातिशयोक्तिसम्भिन्नत्वम्। इति। ननु एवमतिशयोक्तिरेवमङ्गीक्रियताम्, किमेतेनेत्याशङ्क्याह—**तत्सद्भावे** तस्याः सद्भावे। **अपि**। **प्रत्येतृभेदेन** प्रत्येतृणां ग्रहीतृणां भेदो नानात्वं तेन। **नानात्वप्रतीतिरूपः** प्रियशिशुत्वादिनाऽनेकत्वज्ञानात्मा। **विच्छित्तिविशेषः**। **उल्लेखभिन्नालङ्कारप्रयोजक** उल्लेखेन भिन्नः सङ्कीर्णोऽसावलङ्कारोऽतिशयोक्त्यलङ्कारस्तस्य प्रयोजकः प्रत्यायकः। यद्वा-उल्लेख एव भिन्नालङ्कारोऽतिशयोक्तीतरालङ्कारस्तस्य प्रयोजक इति पूर्ववत्। न चैवमयमतिशयोक्तयैव सङ्कीर्ण इति दर्शयन्नाह—**श्रीकण्ठजनपदवर्णने** बाणकविना रचिते हर्षचरिते श्री कण्ठाख्यस्य जनपदस्य वर्णने क्रियमाणे स्थाण्वीश्वरनामधेयस्य जनपदस्य वर्णनप्रसङ्ग इति भावः। 'तृतीय उच्छ्वास'इति शेषः। '**वज्रपञ्जरं** वज्रमिन्द्रायुधं तदेव पञ्जरं निलीय स्थातुं योग्यं स्थानमिति तथोक्तम्। वज्रस्य पञ्जरमिति समासेऽप्ययमेव भावः। अमोघत्वेनाप्रतिहतत्वेन स्थानस्य वज्रपञ्जरत्वेनाभिधानम्। **इति**। **शरणागतैः**। **विटगोष्ठी** चतुरसमाज इति भावः। इति। **विदग्धैश्**चतुरैः। **सुकृतपरिणामः** पुण्यफलम्। **इति**। **पथिकैः**। **अम्बरविवरम**म्बरस्य गुहारूपं स्थानम्। **इति**। **वातिकैर्वा**तप्रभूतैर्देवयोनिविशेषैः। 'योऽगृह्यते'ति शेषः।' **इत्यादिः**। च। **अतिशयोक्तेः**। **विविक्तः** संपर्कविहीनः। **विषयः**। **इह** 'वज्रपञ्जर' इत्यादौ। **च**। **रूपकालङ्कारयोगः**। नतु उल्लेख एवेति भावः।' **इति**। एवं केषाञ्चिन्मतं दर्शयित्वाऽत्रापि परमतं दर्शयति—'**वस्तुतस्तु** यद्यपि केचित्तथा प्राहुः—किन्तु सिद्धान्तनयेन इति भावः। '**अम्बरविवरम्**।' **इत्यादौ**। **भ्रान्तिमान्**। **एव**। **न**। **रूपकम्**। 'भ्रान्तिमन्तमेवेच्छन्ति, न रूपकम्' इति पाठे "ऽस्मदादय' इति शेषः, स्पष्टमन्यत्। हेतुं निर्दिशति—**भेदप्रतीतिपुरःसरस्य**। **एव** 'न त्वभेदप्रतीतिपुरः सरस्ये' ति शेषः। **आरोपस्य**। **गौणीमूलरूपकादिप्रयोजकत्वात्**। आदिपदेन परिणामादेर्ग्रहणम्। अत्राप्तवाक्यं प्रमाणमिति निर्दिशति—**यत्**। **शारीरकमीमांसाभाष्यव्याख्याने** वेदान्तसूत्राणां श्रीशङ्कराचार्य्यभगवत्पादैः कृतं भाष्यं शारीरकभाष्यं तस्य व्याख्यानं व्याख्या तत्रेति तथोक्ते। 'अथातो ब्रह्मजिज्ञासा' इति प्रथमसूत्रस्य भाष्यव्याख्यानावसर इति भावः। **श्रीवाचस्पतिमिश्राः**। **आहुः**। **अपि**। च। **परशब्दः यथा**—'एतत्तैलम्'इत्यादौ तिलभवस्नेहवाचकस्तैलशब्द इति भावः। **परत्र**। एतत्पदवाच्ये सार्षपादिस्नेहे। **लक्ष्यमाणगुणयोगेन** लक्ष्यमाणो गुणो घृतादिभिन्नद्रवत्वरूपस्तस्य योगस्तेन। **वर्त्तते**। इति अस्मात् हेतोः। **यत्र**। **प्रयोक्तृप्रतिपत्रोः** 'एतत्तैलम्'इत्यादेरुच्चरिता प्रयोक्ता, तद्वाक्यार्थाभिज्ञः प्रतिपत्ता चेति तयोः। **सम्प्रतिपत्तिर्निश्चयः**। **सः**। **गौणो** गौणीलक्षणाविषयः। **सः**। **च**। **भेदप्रत्ययपुरःसरः**।' अयम्भावः—गौणीलक्षणा हि सादृश्यमूला भवनति, सादृश्यं च सति भेद एवेति 'एतत्तैल'मित्यादौ तैलादिशब्दाः एतदादिषु लक्ष्यमाणगुणसम्बन्धेन वर्त्तन्ते, तादृशी च सम्प्रतिपत्तिस्तत्तद्वक्तृबोद्धव्ययोरवतिष्ठते। रूपकं च गौणीमूलम् 'अम्बरविवरमित्यगृह्यते'त्यादौ भेदप्रत्ययाभावादभेदप्रत्ययस्य मिथ्यात्वेन भ्रमरूपत्वादत्र

भ्रान्तिमानेव । **इति** । तदेव विशदयन्नाह—**इह** । **तु** । **वातिकानाम्** । **श्रीकण्ठजनपदवर्णने** श्रीकण्ठजनपदान्तर्गत-स्थाण्वीश्वरजनपदवर्णनप्रसङ्गे । **भ्रान्तिकृतः** । **एव** । **अम्बरविवराद्यारोपः** । अम्बरविवराद्यभेदाध्यवसायः । अत्रास्मिन् प्रस्तावे । **एव** । **च** । **तपोवनम्** । **इति** । **मुनिभिः कामायतनम्** । **इति** । **वेश्याभिः** । 'योऽगृह्यते'ति शेषः ।' इत्यादौ । **परिणामालङ्कारयोगः** परिणामसङ्कीर्णोल्लेख इति भावः । इदमभिहितम्—अम्बरविवरत्वेनाभिमतोऽपि स्थाण्वीश्वरजनपदो न तथा परिणत इति तत्र भ्रान्तिरेव, तदौचित्यं च वातिकानाम्, अतस्तत्र भ्रान्तिमानेव । तपोवनत्वादिना तु स तथा क्रियोपयोगितया परिणत इति परिणामः । उल्लेखस्त्वेकस्मिन् जनपदे अनेकधोल्लेखनमूलः । **इति** ।' **इति** । **च** । **परे** । 'आहु'रिति शेषः ।

द्वितीयमुदाहरति—'**गाम्भीर्य्येण** । **त्वम्-समुद्रः** । **असि** । **गौरवेण** । **पर्वतः** । **असि** । **लोकानाम्** । **कामदत्वात्** कामपूरकत्वात् । **च** । **कल्पपादपः** कल्पवृक्षः । **त्वम्** । **असि** । अत्र हि गाम्भीर्य्यादिविषयभेदेनैकस्य राज्ञोऽनेकधोल्लेखनादुल्लेखः ॥ १२९ ॥'

लक्ष्यं स्पष्टार्थयति—**इत्यत्रेत्यादिना** । स्पष्टम् । अत्रापि केषाञ्चिन्मतं निर्दिशति-**अत्र चेत्यादिना** । स्पष्टम् । नन्वेवं 'गुरुर्वचसि' इत्यादावपि रूपकं किमित्याशङ्क्याह—'**वचसि** । **गुरुर्बृहस्पतिर्गरीयाश्च** । **उरसि** । **पृथुर्वैन्यः** पृथुलश्च । **यशसि** । **अर्जुनः** सहस्रबाहुर्धवणश्चेत्यर्थः । **इत्यादिषु** । च । **अस्योल्लेखस्य** । **रूपकात्** । **विविक्तः** पृथग्भूतः । **विषयः** । अत्र । **श्लेषमूलातिशयोक्तियोगः** । 'उल्लेखस्ये'ति शेषः । इति । अयं संशयसङ्कीर्णः 'भानुरग्निर्यमो वाऽयं बलिः कर्णोऽथवा शिबिः । प्रत्यर्थिनश्चार्थिनश्च विकल्पन्त इति त्वयि ॥' अत्र प्रथमद्वितीयपादप्रतिपाद्ययोः प्रत्येकं संशयत्वम् । अयं फलोल्लेखो यथा—'अर्थिनो दातुमेवेति त्रातुमेवेति कातराः । जातोऽयं हन्तुमेवेति बीरास्त्वां देव जानते ॥' हेतूल्लेखो यथा—'हरिचरणनखरसङ्गादेके हरमूर्धसंस्थितेरन्ये । त्वां प्राहुः पुण्यतमामपरे सुरतटिनि वस्तुमाहात्म्यात् ॥'अयं ध्वन्यमानो यथा—'अनल्पतापाः कृतकोटिपापा गदैकशीर्णा भवदुःखजीर्णाः । विलोक्य गङ्गां विचलत्तरङ्गामग्नी समस्ताः सुखिनो भवन्ति ॥' अत्र हि—पूर्वार्धोक्तानां सुखित्वोक्त्या तापपापरोगभवनाशकत्वप्रकारकाणि ग्रहणान्याक्षिप्यन्ते । अयं च शुद्धस्य ध्वनिः । सङ्कीर्णस्य यथा—'स्मयमानाननां तत्र तां विलोक्य विलासि नीम् । चकोराश्चञ्चरीकाश्च मुदं परतरां ययुः ॥' अत्र हि ध्वन्यमानयैकैकग्रहणरूपया भ्रान्त्या तदुभयसमुदायात्मोल्लेखः । यथा वा—'भासयति व्योमगता जगदखिलं, कुमुदिनीर्विकासयति । कीर्तिस्तव धरणिगता सगरसुताया, समफलतां नयते ॥' अत्र ह्यधिकरणभेदप्रयुक्तमेकस्यामेव कीर्त्तौ चन्द्रिकाचन्द्रिकात्वाद्यनेकधोल्लेखो रूपसङ्कीर्णो ध्वन्यते ।

**प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः ।**

इयं द्विधा । क्वचिदपह्नवपूर्वक आरोपः, क्वचिदारोपपूर्वकोऽपह्नव इति । क्रमेणोदाहरणम्—

**'नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः ।**

**नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः ॥**

---

## विवृति

अपह्नुत्यलंकारमाह **प्रकृतमिति** । उपमेयमित्यर्थः । निषिध्य स्वभिन्नत्वेनारोप्य **अन्यस्थापनमुपमानारोपः** । **इयं** चापह्नुतिश्च । अस्या उभयारूपत्वे विनिगमनाभाव एव प्रयोजक इति भावः ॥ फेनभङ्गाः फेनखण्डानि ।

## विवृतिपूर्ति

**श्रीकण्ठेति** । बाणकृते हर्षचरिते श्रीकण्ठाख्यो जनपदस्तद्वर्णने ॥

**अपह्नुतिरिति** । कुवलयानन्दे त्वियं षोढा दृश्यते—"**शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः** । नायं सुधांशुः, किं तर्हि ? व्योमगङ्गासरोरुहम् ॥" "स एव युक्तिपूर्वश्चेदुच्यते **हेत्वपह्नुतिः** । नेन्दुस्तीव्रो, न निश्यर्कः, सिन्धोरौर्वोऽयमुत्थितः ॥" "अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः । नायं सुधांशुः, किं तर्हि ? सुधांशुः प्रेयसीमुखम् ॥" "भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे । तापं करोति सोत्कम्पं, ज्वरः किं ? न सखि ! स्मरः ॥" "**छेकापह्नुतिरन्यस्य** शङ्कातस्तस्य निह्नवे । प्रजल्पन्मत्पदे लग्नः, कान्तः किं ? नहि नूपुरः ॥" "**कैतवापह्नुतिर्व्यक्तौ** व्याजाद्यैर्निह्नुतेः पदैः । निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥" वर्णनीये तत्सदृशधर्मारोपफलकस्तदीयधर्मनिहन्वः कविप्रतिभोत्प्रेक्षितधर्मान्तरस्यापि निह्नवः **शुद्धापह्नुतिः** । यथा-सुधांशौ व्योमगङ्गासरोरुहत्वारोपफलकस्तदीयधर्मस्य सुधांशुत्वस्यापह्नव इति । (२) स एव शुद्धापह्नवो हेतुपूर्वकश्चेह हेत्वपह्नुतिः । यथा-इन्दावेव तीव्रत्वनैशत्वहेतुभ्यामिन्दुत्वार्कत्वापह्नव और्वत्वारोपार्थ इति । (३) क्वचिद् वस्तुनि तदीयधर्मनिह्नवोऽन्यत्र वर्णनीये वस्तुनि तद्धर्मारोपार्थः **पर्यस्तापह्नुतिः** । यथा-सुधांशो तत्तापह्नवो वर्णनीये मुखे तदा रोपार्थ इति । (४) भ्रान्तिवारके तत्त्वाख्याने सति भ्रान्तापह्नुतिः । यथा-तापकारित्वरूपे स्मरवृत्ते कथिते, ऋजुबुध्या किं ज्वर इति शङ्किते, न सखि स्मर इति कामिन्या तत्त्वाख्यानेन भ्रान्तिवारणं कृतमिति । दण्डी तु "न पद्मं, मुखमेवेदं; न भृङ्गौ, चक्षुषी रमे । इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमा मता ॥" इत्याह स्मा । छेको विदग्धः तत्कृता अपह्नुतिः **छेकापह्नुतिः** । (६) कैतवेन कपटेन अपह्नुतिः **कैतवापह्नुतिः** ।

## विज्ञप्रिया

अपह्नुत्यलङ्कारमाह—**प्रकृतमिति** । प्रकृतं प्रक्रान्तम्, अन्यस्थापनम्, अप्रकृतस्थापनम् । **इत्यञ्चेति** । प्रकृतापह्नवो अन्यस्थापनञ्चेत्येतन्मात्रविलक्षणे सतीत्यर्थः । प्रकृतापह्नवाऽप्रकृतस्थापनयोः पौर्वापर्य्यव्यत्यासाद् द्वैविध्यमिति दर्शयति **क्वचिदिति** । नच निषिध्येति क्त्वानिर्देशादपह्नवपूर्वकत्वमेव लभ्यते कथं द्वैविध्यमिति वाच्यम् । निषेधबुद्धिं विषयीकृत्य इत्येव तदर्थात् । तद्विषयीकरणस्य चोभयथाऽपि सम्भवात् ।

**नेदं नभ** इति । नभआदिनिषेधेन सफेनसमुद्रे फणिशयितमुरारिस्थापनमिदम् । अम्बुराशिरित्यादौ सर्वत्र किन्तु इति बोध्यम् ।

## कुसुमप्रतिमा

उपमानोपमेयघटितालङ्कारनिरूपणस्य प्रकृतत्वात् प्रकारान्तरेण तद्घटितमेवापह्नुत्यलङ्कारं निरूपयति प्रकृतमिति । प्रकृतं वर्णनायां प्रस्तुतम् उपमेयमित्यर्थः, प्रतिषिध्य शब्दतस्तात्पर्य्यतो वा अपीद्य, अन्वस्य प्रकृतभिन्नस्य उपमानस्येत्यर्थः, स्थापनं विन्यासः, अपह्नुतिर्नाम अलङ्कारः स्यात् । वास्तविकस्यैवोपमेयस्यापङ्क्वादस्य अपह्नुतिरिति संज्ञा ।

कारिकायां प्रतिषिध्येति क्ताच् प्रत्यार्थस्य आनन्तर्य्यस्य सौत्रिकत्वादविवक्षिततत्वमभिप्रेत्याह इयं द्विधेति । अपह्नवपूर्वक आरोप उपमेयप्रतिषेधकपूर्वकमुपमानस्थापनम् । आरापपूर्वकोऽपह्नव उपमानस्थापनपूर्वक उपमेयप्रतिषेषः । तथा मालारूपत्वात् केवलरूपत्वाच्च पुनर्द्विधेति समुदायेन चतुर्विधा अपह्नुतिर्लक्ष्यानुसारात् ।

तत्रापह्नवपूर्वकारोपे मालारूपामुदाहरति नेदमिति । इदं दृश्यमान नभोमण्डलमाकाशमण्डलं न, किन्तु अम्बुराशिः समुद्र एव समानादेव विशालत्वनिर्म्मलत्वाञ्चेति भावः । एता दृश्यमानाश्च तारा नक्षत्राणि न, अपि तु नवफेनभङ्गा नूतनाः समुद्रफेनखण्डाः, तुल्यादेव शुभ्रक्षुद्रत्वादित्याशयः । अयमवलोक्यमानः पदार्थः, शशी चन्द्रो न, किन्तु कुण्डलितः सञ्जाताकुण्डलीभावो मण्डलीकृतदेह इत्यर्थः फणीन्द्रो मुरारेरेव शय्याभूतः अनन्तनागः, समानादेव शुभ्रत्वद्गेलाकारत्वच्चेत्यभिप्रायः । असौ तन्मध्ये दृश्यमानः कृष्णवर्णः, पदार्थः, कलङ्कश्चनद्रगते हरिणचिन्हं न, अपि तु शयितः शयानी मुरारिः कृष्णः समानकृष्णवर्णत्वात् सम्भवपरत्वाच्चेति भावः ।

अत्र नभोमण्डलाद्युपमेयप्रतिषेधेन अम्बुराश्याद्युपमानस्थापनात्, तस्य चानेकत्वान्मालारूपापह्नुतिरलङ्कारः । तथा नञ्चतुष्टयोपादानात् शब्दत एव प्रकृतप्रतिषेध इति द्रष्टव्यम् ।

## विमला

अपह्नुतिमाह, प्रकृतमिति ।—प्रकृतं—प्रस्तुतम्, उपमेयमित्यर्थः, प्रतिर्षिध्य—स्वभिन्नत्वेनारोप्य, अन्यस्य—अप्रकृतस्य, उपमानस्येत्यर्थः, स्थापनम्—आरोप इत्यर्थः, अपह्नुतिः स्यात् । अस्या एव "शुद्धापह्नुतिः" इत्यभिधानान्तरम् । तथा हि जयदेवः,—"शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः । नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम् ॥" इति । अत्र हि साक्षाद्वर्त्तमानमपि सुधांशु सुधांशुत्वेन प्रतिषिध्य आकाशगङ्गायाः कमलपुष्पत्वेन तर्कितः ।

इयमिति ।—इयम्—अपह्नुतिः । अस्या उभयरूपत्वे विनिगमनाभाव एव प्रयोजकः इति भावः ।

अपह्नुपूर्वकारोपस्य उदाहरणमाह, नेदमिति ।—इदं नभोमण्डलम्—आकाशं, न, अम्बुराशिः,—समुद्रः, एताश्च ताराः,—नक्षत्राणि, न, नवाः फेनभङ्गाः,—फेनच्छेदाः, अयं शशी—चन्द्रः, न, कुण्डलितः,—मण्डलाकारेण स्थितः, फणीन्द्रः,—शेषनाग; असौ कलङ्कः, चन्द्रस्थित इति शेषः, न, शयितः,—शयनं गतः, मुरारिः,—कृष्णः । उपजातिः वृत्तम् । अत्र प्रकृतानां नभोमण्डलादीनां प्रथमं स्वभिन्नत्वेन पश्चादम्बुराशित्वादिनाऽऽरोप इति बोध्यम् । अत्र शुद्धापह्नुतिः । अस्या एव परस्य भ्रान्त्यपह्नुत्यर्थतायां भ्रान्त्यपह्नुतिरित्यभिधानान्तरम् । तथाऽऽहुःकेशव-

मिश्राः,—"भ्रान्त्यपह्नुतिरन्यस्याः शङ्कातस्तन्निह्नवात्" इति। उदाहरणं यथा—"नागरिक ! समधिकोन्नतिरिह महिषः कोऽयमुभयतः पुच्छः ? । न हि न हि करिकलभोऽयं शुण्डादण्डोऽयमस्य न तु पुच्छम् ॥" इति।

## लक्ष्मी

अत्र दीनव्रातादीनां विषयाणामनेकत्वाच्चित्तवृत्तेरनेकविधत्वम्। एवमाश्रयभेदेनानेकधोल्लेखादीनामुदाहरणान्यूह्यानि।

उपमानोपमेयघटितालङ्कारप्रतिपादनस्य प्रक्रान्तत्वात् प्रकारान्तरेण तद्धटितापह्नुत्यलङ्कारं प्रतिपादयति—**प्रकृतमिति।** प्रकृतं वर्णनप्रक्रान्तम् उपमेयमित्यर्थः प्रतिषिध्य शब्दतोऽर्थतो वा असत्यतया व्यवस्थाप्य, अन्यस्य अप्रकृतस्य उपमानस्येत्यर्थः स्थापनं सत्यतया साधनम् आहार्यनिश्चयविषयीकरणमितियावत् अपह्नुतिर्नामलङ्कारः स्यात्। प्रतिषिध्येत्यत्र क्त्वाप्रत्ययार्थः पूर्वकालिकत्वमविवक्षितम्, तेन पूर्वं पश्चाद्वा उपमेयस्वरूपप्रतिषेधसहितमुपमेयस्योपमानतारूपव्यवस्थापनमपह्नुतिरितिफलितम्। प्रतिषिध्यान्तेन रूपकव्यवच्छेदस्तत्र प्रकृतनिषेधाभावात्। प्रकृतं प्रतिषिध्यैतावन्मात्रोक्तौ वक्ष्यमाणे आक्षेपालङ्कारेऽतिव्याप्तिस्तद्वारणाय—**अन्यस्थापनमिति।** सन्देहे संशयः, अत्र तु निश्चय इत्युभयोर्भेदः। **प्रकृतमित्य**जहत्स्वार्थलक्षणयान्योपलक्षणम्, तथासति किञ्चिदपह्नुत्य कस्यचित्प्रदर्शनमित्येतावन्मात्रं लक्षणम्। एतच्च 'केसेसु वलामोडिअ' इत्याद्युदाहरणे चतुर्थोल्लासे काव्यप्रकाशकृता स्पष्टमुक्तम्, तथाहि—'स्वयं न पलाय्य गतास्त्वद्वैरिण अपि तु ततः पराभवं सम्भाव्य तान् कन्दरानत्यजन्तीत्यपह्नुतिर्व्यज्यत' इति। यद्युपमानोपमेयभावसत्त्व एवापह्नुतिस्तदात्रोपमानोपमेयाभावादपह्नतेः प्राप्तिरेव नास्तीति तदसङ्गत्यापत्तेः। एवञ्च 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इत्यादावुपमाननिषेधेऽपि अपह्नुतिरेव, ग्रन्थकृदपि गोपनीयमित्यादिनाग्रे स्वयं वक्ष्यति।

कारिकायां प्रतिषिध्येत्यत्र क्त्वाप्रत्ययार्थः पूर्वकालिकत्वमविवक्षितमित्याशयेनैव विभजते—**इयं द्विधेति।** क्वचित् कस्याञ्चिदपह्नुत्याम् अपह्नवपूर्वक आरोप उपमेयप्रतिषेधपूर्वकमुपमानस्थापनम्। क्वचित् कस्याञ्चिदपह्नुतौ, आरोपपूर्वकोऽपह्नव उपमानस्थापनपूर्वक उपमेयप्रतिषेधः।

तत्रापह्नवपूर्वकारोपे उदाहरणं दर्शयति—**नेदमिति।** गगने पूर्णचन्द्रं दृष्ट्वा कस्यचिदुक्तिरियम्। इदम् अवलोक्यमानं नभोमण्डलम् गगनमण्डलं न, किन्तु अम्बुराशिः क्षीरसमुद्र एव तुल्यादेव विशालत्वादतिस्वच्छत्वाच्चेत्याशयः। ननु ताराणां प्रत्यक्षोपलम्भात् कथं समुद्र इत्युच्यत अत आह—**नैताश्चेति।** एताः पुरोऽवलोक्यमानाश्च तारा नक्षत्राणि न, किन्तु नवफेनभङ्गा अभिनवसमुद्रफेनखण्डाः समानादेव किञ्चिच्छुभ्रत्वादित्यभिप्रायः। नन्वत्र चन्द्रस्य स्थितत्वात् कथं समुद्र इति लोकानां प्रत्ययो भवेदत आह—नायमिति। अयं दृश्यमानः पदार्थः शशी चन्द्रो न, अपि तु कुण्डलितः कुण्डलाकारेणावस्थितः मण्डलीकृतवपुरित्यर्थः, फणीन्द्रः मुरारेरेव शय्याभूतः शेषनागः एकाकारादेव श्वेतत्वाद्गोलाकारत्वाच्चेति। भावः। ननु यदि कुण्डलाकारेण शेष एव तर्हि तन्मध्ये कलङ्कः कथम्भवेदत आह—नासाविति। असौ तन्मध्येऽवलोक्यमानः श्यामवर्णः पदार्थः कलङ्कश्चन्द्रगतं मृगचिह्नं न, किन्तु शयितः शयानो मुरारिर्लक्ष्मीपतिर्भगवान् तुल्यश्यामरूपत्वात्सम्भवपरत्वाच्चेति भावः। **इन्द्रवज्राछन्दः** तल्लक्षणन्तूक्तमेव।

तथा च उच्छलत्फेने क्षीरसमुद्रे शेषशायिविष्णोरिव तारासङ्कुलिते गगनमण्डले लाञ्छनश्रियं धारयंश्चन्द्रमा इत्युपमालङ्कारो व्यज्यते।

अत्र नभोमण्डलाद्युपमेयप्रतिषेधपूर्वकाम्बुराश्याद्युपमानस्थापनादपह्नुतिरलङ्कारः। साक्षान्नञ्चतुष्टयोपादानेन शाब्द एव प्रकृतिप्रतिषेध इति बोध्यम्। यदि मण्डलाद्युपमेयप्रतिषेधे अम्बुराश्याद्यनेकोपमानस्थापनेन मालारूपापह्नुतिरितिविभाव्यते तदाह—

'अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये ! कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि।

अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे रतिश्रान्ता शेते रजनि रमणीगाढमुरसि॥'

इत्यपह्नवपूर्वकारोपे शुद्धोदाहरणमवगन्तव्यम्।

## रुचिरा

अपह्नुतिं लक्षयति—११५ **प्रकृतमुपमेयम्**। **प्रतिषिध्य** निषिध्य। **अन्यस्थापनमन्यस्योपमानस्य स्थापनम्**। **अपह्नुतिः**। **स्यात्**। तथा च—उपमेयनिषेधपूर्वकमुपमानस्योपमेयतादात्म्येनोपपादनमपह्नुतिरिति फलितोऽर्थः। अस्यां चोपमेयस्य निषेधादुपमेयोपमानयोर्विरोधः, रूपके तु सामानाधिकरण्यम्; इत्यनयोर्भेदः।

अस्यां द्वैविध्यमाह—इयमपह्नुतिः। **द्विधा**। **हि यतः**। **क्वचित्** कस्याञ्चिदपह्नुत्याम्। **अपह्नवपूर्वकः**। 'उपमेयस्ये'ति शेषः। **आरोपः**। 'उपमानस्ये'ति शेषः। **क्वचित्** कस्याञ्चिदपह्नुतौ। **च**। **आरोपपूर्वक** 'उपमानस्ये'ति शेषः। **अपह्नव** 'उपमेयस्ये'ति शेषः। **इति** 'द्विधा' इत्यनेन सम्बन्धः। तथा च—उपमेयापह्नवपूर्वकोपमानारोपात्मिका, उपमानारोपपूर्वकोपमेयापह्नवात्मिका चेति द्विविधापह्नुतिरलङ्कार इति निष्कृष्टम्।

उदाहरति—**क्रमेण**। **उदाहरणम्**। 'इदम्। **नभोमण्डलम**ाकाशम्। **न**। किन्तु-**अम्बुराशिः** समुद्रः क्षीरसमुद्र इति यावत्। **एताः**। **ताराः**। **च**। **न**। किन्तु—**नवफेनभङ्गा** नवाश्च ते फेनभङ्गा इति तथोक्ताः। **अयम्**। **शशी** चन्द्रः। **न**। किन्तु-**कुण्डलितः** कुण्डलाकारेणावस्थितः। **फणीन्द्रः** शेषः। असौ। **कलङ्कः**। **न**। किन्तु—

**शयितः**। **मुरारि**र्लक्ष्मीपतिर्भगवान्। **एवं** च—उच्छलत्फेने क्षीरसमुद्रे शेषपर्य्यङ्कस्थः श्रीपतिरिव तारासङ्कुलिते नभोमण्डले लाञ्छनश्रियं बिभ्रच्चन्द्रमां इत्युपमा ध्वन्यते इति बोध्यम्। अत्र नभआदीनामुपमेयानां निषेधपूर्वकमम्बुराश्यादीनामुपमानानामारोपः। अत उपमेयापह्नवपूर्वकोपमानारोपात्मिकेयम्। इन्द्रवज्रावृत्तम्॥ १३०॥

**एतद्विभाति चरमाचलचूडचुम्बि**

**हिण्डीरपिण्डरुचि शीतमरीचिबिम्बम्।**

**उज्ज्वालितस्य रजनीं मदनाऽनलस्य**

**धूमं दधत्प्रकटलाञ्छनकैतवेन ॥'**

इदं मम।

एवम् 'विराजति व्योमवपुःपयोधिस्तारामयास्तत्र च फेनभङ्गाः'इत्याकारेण च प्रकृतनिषेधो बोध्यः।

---

## विवृति

अत्र नभोमण्डलादीनां प्रथमं स्वभिन्नत्वेन पश्चादम्बुराशित्वादिनारोपः ॥ **एतदिति**। 'हिण्डीरोऽब्धिकफः फेनः' इत्यमरः लाञ्छनकैतवेनेति कलङ्के स्वभेदव्यञ्जकमिदम्। निषिध्येत्यानन्तर्यमविवक्षितमिति भावः ॥ प्रकारान्तरेणापह्नुत्यलंकारमाह—**गोपनीयमिति**। द्योतयित्वा बोधयित्वा। कथंचन शब्देन सादृश्यादिना वा। अन्यथा श्लेषभिन्नेन कालस्वभावादिना। अन्यथयेत् भिन्नत्वेन ख्यापयेत् ॥

## विज्ञप्रिया

अन्यस्थापनपूर्वकं निषेधमाह—**एतद् विभातीति**। एतद् बिम्बम् अर्थाच्चन्द्रस्य। हिण्डीरं कर्पूरः। उज्ज्वालितस्येति। निर्वापितस्येत्यर्थः। निर्भरस्वकान्तसम्भोगेन रजन्या मदनानलनिर्वाणाद् धूमोद्गमः। कैतवेनेति। नायं लाञ्छनः किन्तु यथोक्तधूम इति निषेधप्रतीतिः पश्चात् कैतवपेदन।

भङ्ग्यन्तरेणापि निषेधप्रतीतावाह—**विराजतीति**। अत्र वपुःपदमयट्प्रत्ययाभ्यां व्योमादिनिषेधप्रतीतिः।

## कुसुमप्रतिमा

अपह्नवपूर्वकारोपे केवलरूपा यथा काव्यप्रकाशे—

"अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये ! कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि।

अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥"

आरोपपूर्वकापह्नवे केवलरूपामुदाहरति एतदिति। चरमाचलचूड़चुम्बि अस्ताचलशिखरावलम्बि, हिण्डीरपिण्डस्य फेलस्तृपस्य रुचिरिव रुचिर्दीप्तिर्यस्य तत्तादृशम्, पतदृश्यमानम्, शीतमरीचिबिम्बं चन्द्रमण्डलम्, प्रकटलाञ्छतकैतवेन सुस्पष्टहरिणचिन्हच्छलेन रजनीं रात्रिं व्याप्य विधिना प्रज्वालितस्य मदनानलस्य धूमं दधत् धारयत् सत्, विभाति प्रकाशते। "हिण्डोरोऽब्धि फः फेन" इत्यमरः।

अत्र प्रथमं धूमरूपमुपमानमारोप्य पश्चात् कलङ्करूपोपमेयापह्नवादपह्नुतिः; सा चारोपस्यैकमात्रावात् केवलरूपा। तथा कैतवेनेत्यभिधानात् नञश्चानुपादानात् तात्पर्य्यत एव प्रकृतप्रतिषेध इत्युन्नेयम्।

आरोपपूर्वकापह्नवे तात्पर्य्यतः प्रकृतप्रतिषेधे मालारूपा यथा मम—

"सरोजमेतन्मुखवैतवाश्रितं मधुव्रतौ लोचनरूपधारिणौ ।

तिलप्रमूनं किल नासिकात्मना स्थितं मृणालञ्च भुजच्छलादिदम् ॥"

प्रकारान्तरेण तात्पर्य्यत एव प्रकृतप्रतिषेधे उदाहर्त्तुमाह एवमिति ।

विराजतीत्रि । "फणीश्वरोऽयं द्विजराजमूर्त्तिन वाम्बुदश्चेर्ननु तस्य लक्ष्म ।।" इत्युत्तरार्द्धम् । व्योम आकाशमेव वपुः शरीरमाकारो यस्य स तादृशः पयोधिः समुद्रो विराजति प्रकाशते; तत्र तादृशे च पयोधौ, तारामया नक्षत्राकाराः फेनभङ्गाः फेनखण्डा विद्यन्त इति शेषः ।

इतीति । इत्याद्याकारेण एवमादिप्रकारेण । तथा च उदाहृते वपुः शब्दप्रयोगेण मयट् प्रत्यय विधानेन च प्रकृतयोर्व्योमतारयोरपह्नवे वक्तुस्तात्पर्य्यात् पयोधिफेनभङ्ग्योरुपमानयोः स्थापनाच्च अपह्नुतिरेव; न तु रूपकम्, तत्र "विषये निरपह्नवे" इत्यभिधानादित्याशयः ।

## विमला

आरोपपूर्वकापह्नवमुदाहरति, एतदिति ।—चरमाचलस्य—अस्ता—चलस्य, चूड़ं—शिखरं, चुम्बतीति तथोक्तम्, अस्ताचलचूड़ावलम्बीत्यर्थः, हिण्डीरपिण्डरुचि—फेनपुञ्जनिभं, ("हिण्डीरोऽब्धिकफः फेनः" इत्यमरः) एतत् शीतमरीचिबिम्बं—चन्द्रमण्डलं, प्रकटलाञ्छनकैतवेन—मुव्यक्तकलङ्कव्याजेन, (कलङ्केष्व भेदव्यञ्जकमिदं, प्रतिषिध्येत्यानन्तर्य्यमविवक्षितम् इति भावः) रजनीं व्याप्य प्रज्वालितस्य—उद्दीपितस्य, मदनानलस्य—कामाग्नेः, धूमं दधत्—धारयत्, विभाति—विराजते । अत्र लाञ्छने धूमत्वारोपः प्रकृतस्य प्रागपह्नवात् इति आरोप पूर्वत्व-मपह्नवस्य इति बोध्यम् । इह कैतवेन इति सूचनपूर्वकत्वात् कैतवापह्नुतिरियमित्यन्ये । "तदोजसस्तद्‌यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा । तनोति भानोः परिवेशकैतवात् तदा विधिः कुण्डलनां विधोरपि ॥" इत्यत्र तु नायमलङ्कारः, किन्तु प्रतीपमेवेति विभाव्यम् ।

विराजतीति ।—व्योमवपुः,—आकाशाकारम, आकाशसदृशमित्यर्थः, पयोधिः,—समुद्रः, विराजते—शोभते; पयोधेर्व्योमसादृश्यं, दर्शयितुमाह, तारेति ।—तत्र—पयोधौ, फेनभङ्गाः,—फेनखण्डानि, तारामयाः,—नक्ष-त्रस्वरूपाः, चन्द्र किरणोद्भासिताः फेनभङ्गाः तारारूपा दृश्यन्ते इति भावः । ननु व्योम्नि चन्द्रो विद्यते, पयोधौ तत्सादृश्यं कुत्र ? इत्याह, फणीति ।—अयं—सागरवासीत्यर्थः, फणीश्वरः, शेषनागेन्द्रः, द्विजराजमूर्त्तिः,—चन्द्र-स्वरूपः, ("द्विजराजः शशधरः" इत्यमरः) फणिपतेः तुषारधवलदेहत्वात् कुण्डलितावस्थायां चन्द्रसादृश्यम्; ननु चन्द्रे लक्ष्म अस्ति, तच्चात्र कुतः ? इत्यत आह, नवेति ।—तस्य—द्विजराजरूपफणीश्वरस्य, लक्ष्मलाञ्छनं, नवाम्बु-दश्रीः,—नवाम्बुदस्य—नूतनजलधरस्य इव, श्रीः,—कान्तिः यस्यस तथाभूतः, श्रीकृष्ण इत्यर्थः, ननु—निश्चये, श्रीकृष्णस्य शेषोत्सङ्गशायित्वात् इति भावः ।

## लक्ष्मी

आरोपपूर्वकापह्नवे उदाहरणं दर्शयति—एतदिति । चरमाचलस्यास्ताचलस्य चूडश्चूडाशिखरमिति यावत् तं चुम्बतीत्येवं शीलम्, हिण्डीराः फेनाः तेषां पिण्डं तस्य रुचिरिव रुचिः कान्तिर्यस्य तत्तादृशम् 'हिण्डीरोऽब्धिकफः फेनः' इत्यमरः, एतत् अवलोक्यमानम्, शीताः शीतलाः मरीचयो रश्मयो यस्य (चन्द्रस्य) तस्य

बिम्बं मण्डलम्, प्रकटं यत् लाञ्छनं लक्ष्म तस्य कैतवेन व्याजेन रजनीं रात्रिं व्याप्य विधिना उज्ज्वालितस्य निर्वापितस्य मदनानलस्य कामरूपस्याग्नेः धूमं दधत् धारयत् सत् विभाति प्रकाशते। निर्भरस्वकान्तसम्भोगेन रजन्यां मदनानलनिर्वाणाद् धूमोद्गमः। **वसन्ततिलकं** छन्दस्तल्लक्षणन्तूक्तमेव।

अत्र प्रथमं धूमरूपोपमानमारोप्यानन्तरं लाञ्छनरूपोपमेयापह्नवादपह्नुतिः। सा चारोपस्य केवलत्वात्केवलरूपा कैतवेनेत्युक्तेर्नञोऽनभिधानाच्चार्थत एव प्रकृतप्रतिषेध इत्यवधेयम्। एवमारोपपूर्वकापह्नवेऽर्थतः प्रकृतप्रतिषेधे मालारूपापह्नुतेरुदाहरणमूह्यम्।

भङ्ग्यन्तरेणार्थत एव प्रकृतिप्रतिषेधे उदाहरणान्तरं दर्शयितुमुपक्रमते—एवमिति।

विराजतीति। एतदुत्तरार्द्धन्तु—

'फणीश्वरोऽयं द्विजराजमूर्त्तिर्नवाम्बुदश्रीर्न तु तस्य लक्ष्म'।

व्योम आकाशं तदेव वपुः शरीरं यस्य तथोक्तः, पयोधिः क्षीरोदो विराजति प्रकाशते, तत्र तथाविधे च पयोधौ तारामया ऋक्षाकाराः फेनभङ्गा फेनखण्डा उपलभ्यन्त इतिशेषः। **इन्द्रवज्रोपेन्द्रवज्रयोरुपजाति**श्छन्दः तल्लक्षणन्तूक्तमेव।

**इतीति**। इत्याद्याकारेण एवमादिभङ्ग्यन्तरेण। तथा च उक्तोदाहरणे वपुःपदप्रयोगेण मयट्प्रत्ययकरणे उपमेययोर्व्योमतारयोर्गोपने वक्तुरभिप्रायात् उपमानयोः पयोधिफेनभङ्गयोः स्थापनाच्चापह्नुतिः। नञोऽनुपादानादर्थत एव प्रकृतप्रतिषेध इति पूर्ववदेवावधेयम्। न चात्र रूपकं शङ्क्यम्, तत्र 'विषये निरपह्नवे' इत्युपादानात्।

## रुचिरा

'**एतत्**। **प्रकटलाञ्छनकैतवेन** प्रकटं यत् लाञ्छनं कलङ्कस्तस्य कैतवं छलस्तेन। **रजनीं** रात्रिं याप्य। नैरन्तर्य्ये द्वितीया। **उज्ज्वालितस्योद्गता** ज्वालेत्युज्ज्वाला, सा जाताऽस्य, तादृशस्य। **मदनानलस्य** कामरूपस्याग्नेः। **धूमम्**। **दधत्**। **चरमाचलचूडचुम्बि** चरमाचलस्यास्ताचलस्य चूडश्चूडा शिखरमिति यावत् तं चुम्बतीत्येवंशीलम्। **हिण्डीरपिण्डरुचि** हिण्डीराः फेनास्तेषां पिण्डं तस्येव रुचिर्यस्य तथोक्तम्। 'हिण्डीरोऽब्धिकफः फेन' इत्यमरः **शीतमरीचिबिम्बं** शीताः शीतला मरीचयः किरणा यस्य तस्य (चन्द्रस्य) बिम्बम्। **विभाति**। अत्र धूमत्वारोपपूर्वकमुपमेयभूतस्य लाञ्छनस्यापह्नव इत्यारोपपूर्वापह्नवात्मिकेयम्। वसन्ततिलकं वृत्तम् ॥ १३१ ॥

इदं पद्यं च कविराजानां कृतिः। अतः स्वयमेवाहुः—**इदम्**। **मम**। नेयं शाब्द्येव, किन्त्वार्थ्यपि सम्भवतीति ध्वन्यन्नाह—**एवम्**—

'**व्योमवपुर्व्योमा**काशं तदेव वपुर्यस्य तादृशः। **पयोधिः** क्षीरोदः। **विराजति** विराजते। **तत्र** तस्मिन् अयोधौ। **च**। **तारामयाः**। **फेनभङ्गाः**। फेनखण्डाः। **सुधांशुमूर्त्तिः** सुधांशोर्मूर्त्तिः। तथा—**सान्द्राङ्कभामाच्युतभासितान्तः** सान्द्रो निबिडोऽसौ अङ्कश्चन्द्रलक्ष्म तदिव भाम यस्य सोऽसावच्युतः श्रीपतिस्तेन भासितमन्तर्मध्यभागो यस्य तादृशः। **फणीन्द्रः** शेषः। **शयितः**। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ॥ १३२ ॥'

**इति**। **च**। **प्रकृतनिषेधः** प्रकृतापह्नवपूर्वकोपमानारोपात्मिकाऽपह्नुतिरिति भावः। **बोद्धव्यः**। इयं चार्थी, निषेधस्यार्थतो लभ्यमानत्वात्, 'नेद'मिति तु शाब्दीशब्देनोपात्तत्वात्। इदमवधेयम्—अपह्नुतिस्तावत् प्रकृतापह्नवपूर्वकाप्रकृतारोपात्मिकाऽप्रकृतारोपपूर्वकप्रकृतापह्नवात्मिका चेति द्विविधा, एषाऽपि शाब्दी आर्थी चेति द्विविधेति

चतुर्विधत्वमेतस्याः। अत्र शाब्दी द्विविधाऽप्युदाहृता, आर्थी तु पूर्वैव। परा यथा मम—'कमलं वदनच्छलतो लावण्ये क्षीरपूरसम्पूर्णे। विकसदिदं तत् सुभगे दर्शदर्श मुधाजनाश्चकिताः॥' इति। इयमेव कैतवापह्नुतिरित्यपि गीयते। इयं च हेतुर्निर्देशं चेद्धेत्वपह्नुतिरिति व्यपदिश्यते, यथा—श्यामं सितं च सुदृशो न दृशोः स्वरूपं, किन्तु स्फुटं गरलमेतदथामृतं च। नो चेत् कथं निपतनादनयोस्तदैव मोहं मुदं च नितरां दधते युवानः॥' इति। एतदुभयात्मिकाऽप्येषा—'वदने विनिवेशिता भुजङ्गी पिशुनानां रसनामिषेण धात्रा। अनया कथमन्यथाऽवलीढा नहि जीवन्ति जना मनागमन्त्राः॥' इति। इयं चोत्प्रेक्षासङ्कीर्णाऽपि, यथा—'अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये! कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि। अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि॥' इति। इयं मालरूपाऽपि, यथा—'क्वापि क्षीरनिधिच्छलात्, क्वचिदपि प्रोत्फुल्लकुन्दच्छलात्, कुत्रापीन्द्रगजच्छलात्, क्वचिदपि प्रालेयरश्मिच्छलात्। कुत्रापि स्मरवैरिदेहमिषतः, कुत्रापि शेषच्छलात्, त्रैलोक्यं हिमतुल्यकीर्त्तिरटति श्रीवाजचन्द्रप्रभोः॥' अत्र क्षीरनिधिप्रभृतीन् निषिध्यैकस्याः कीर्त्तेस्तेषु बहुष्वारोपः क्वाप्येषा-एकापह्नवपूर्वकबह्वारोपात्मिका दृश्यते, यथा—'नारीणामनुरञ्जनानुयनुनात् पञ्चाशुगस्याशुगान्, शत्रूणामवधीरणापकरणव्यापारतः पाण्डवान्। कामानामनुपूरणात् सुरतरून् भीतार्त्तसञ्जीवनात् प्राणान् पाणिरयं बिभर्त्ति नृपतेः पञ्चाङ्गुलीव्याजतः॥' अत्र वाजचन्द्रनृपतेरङ्गुलिनिषेधपूर्वकं बहूनां कामबाणादीनामारोपः। अथ ध्वन्यमाना यथैषा—'दयिते! रदनत्विषां मिषादयि तेऽमी विलसन्ति केसराः। अपि चालकवेषधारिणो मकरन्दस्पृहयालवोऽलयः॥' इति। अत्र हि—'नेमा रदनत्विषः, किं तु किञ्जल्कपरम्पराः, न चामी अलकाः, किन्तु अलयः' इति पूर्वोत्तरभागाभ्यामपह्नुतिद्वयं स्फुटं, तेन च 'न त्वं सुदती युवती, किन्तु पद्मिनी'इति तृतीयाऽपह्नुतिः प्राधान्येन ध्वन्यते। इति। चित्रमीमांसाकारास्तु—'त्वदालेख्ये कौतूहलतरलतन्वीविरचिते विधायैका चक्रं विलिखति सुपर्णीसुतमपि। अपि स्विद्यत्पाणिस्त्वरितमपसृज्यैतदपरा करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति॥' इत्यपह्नुतिध्वनिरुदाहृतः। अत्र 'अयं न साधारणः कश्चित् पुरुषः, किन्तु नारायणः, इति चक्रादिलेखनद्वारा कयाचिद् व्यञ्जितम्। अन्यथा पुनः—तस्यापि एतादृशं रूपं न सम्भवतीत्यभिप्रायेण 'नायं नारायणोऽपि, किन्तु कामदेव' इति तदुभयमपमृज्य पुष्पचापमकरध्वजलेखनमुखेन ध्वनितम्। अत्र गङ्गाधरकृतः—'अपह्नुतेर्द्वौ भागौ, उपमेयनिषेधः, उपमानारोपश्चेति, तयोस्तावदुपमानारोपभागः 'पुण्डरीकाक्षोऽय' मित्याकारश्चक्रसुपर्णलेखनेन अभिव्यङ्क्तुं शक्यः,

चक्रसुपर्णयोस्तत्सम्बन्धित्वात्। ननु 'नायं साधारणः पुरुषः' इत्युपमेयनिषेधभागोऽपि।व्यञ्जकस्यारोपमात्रव्यञ्जनसमर्थस्य तादृशनिषेधव्यञ्जने सामर्थ्याभावात्। नाप्यनुभवसिद्धः सः, येन तद्रव्यञ्जनोपायो गवेष्येत। नापि गवेष्यमाणोऽपि तद्रव्यञ्जनोपायः शब्दोऽर्थो वोपलभ्यते। येनानुभवकलहोऽपि स्यात्। न च साधारणपुरुषनिषेधमन्तरेण पुण्डरीकाक्षतादात्म्यारोपो दुर्घट इति सोऽपि व्यज्यत इति वाच्यम्। रूपकोच्छेदापत्तेः। 'मुखं चन्द्र' इत्यादौ मुखनिषेधमन्तरेण चन्द्रत्वं दुरारोपमित्यस्यापि सुवचत्वात्। तत्रापि मुखनिषेधावगमे जितमपह्नुत्या। अथ 'मुखं चन्द्र' इति रूपके मुखत्वसामानाधिकरण्येन चन्द्रताद्रूपस्यारोप्यमाणतया न मुखनिषेधापेक्षेति चेत्, प्रकृतेऽपि तर्हि तादृशसाधारणपुरुषत्वसामानाधिकरण्येन पुण्डरीकाक्षतादात्म्यारोपरूपमसौ राजा पुण्डरीकाक्ष इत्याकाररूपकमेव भवितुमीष्टे, नापह्नुतिः। यदपि च उच्यते 'नायं पुण्डरीकाक्षः, अपि तु मन्मथः' इत्यादि। तत्र यद्यपि चक्रसुपर्णदूरीकरणेन'नायं पुण्डरीकाक्ष' इति निषेधः पुष्पचापध्वजगतमकरयोर्लेखनेन च 'मन्मथोऽय' मित्युपमानारोपश्च व्यङ्ग्यो भवितुमर्हति। तथाऽपि नासावपह्नुतिः। 'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्।' इति त्वत्कृतलक्षणस्याप्यत्रासत्त्वात्। अत्र हि निषेध्यस्य भगवतः पुण्डरीकाक्षस्यावर्ण्यत्वेनाप्रकृततया प्रकृतनिषेधाभावात्। नहि पूर्वारोपिततामात्रेण प्रकृतत्वं वक्तुं शक्यम्। प्रकृतपदस्यारोपविषयपरतया निषिध्य विषयमित्यादिना 'क्त्वा'

प्रत्ययफलं ब्रुवता भवतैव तत्र स्फुटीकरणात्। काव्यप्रकाशकृताऽपि 'प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः।' इति सूत्रं व्याचक्षाणेन 'उपमेयमसत्यं कृत्वा'-इत्यादिना प्रकृतपदस्योपमेयपरतयैव व्याख्यानाच्च। प्राचीनमतसिद्धेयमपह्नुतिर्व्यङ्ग्यत्वेनास्माभिरिहोच्यत इत्यपि कुशकाशावलम्बनमात्रम्। 'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्।' इति लक्षणं कुर्वता भवतैव तस्या बहिः करणात्। एवमपि उक्तपद्ये कोऽलङ्कारो व्यङ्ग इति चेत्! विच्छित्तिवैलक्षण्येऽतिरिक्तः (रूपकाख्यः)। अन्यथा त्वपह्नुति रेवास्तु, लक्षणं तु तदा-'प्रसक्तयत्किञ्चिद्वस्तुनिषेधसामानाधिकरण्येन क्रियमाणवस्त्वन्तरारोपमेवापह्नुतित्वम्। 'इति प्राहुः, कौस्तुभकारास्तु-'वस्तुतस्तु-'मुखं चन्द्र' इत्यादौ मुखत्वं धर्मितावच्छेदकीकृत्य चन्द्रतादात्म्यारोपस्यानुभवसाक्षिकत्वादभ्युपगमेऽपि प्रकृते पुण्डरीकाक्षभेदव्याप्यचक्राद्यभावस्य साधारणपुरुषधर्मस्य च चक्रादिभिरपसारणे साधारणपुरुषनिषेधमन्तरेण पुण्डरीकाक्षतादात्म्यस्य व्यञ्जयितुमशक्यत्वात् तन्निषेध आवश्यक इति दीक्षिताशयः।' इत्याहुः। मर्मप्रकाशकाराः पुनः—'अत्रेदं चिन्त्यम्—दीक्षितैर्हि 'दण्डी तु अपह्नुतेः साधर्म्यमूलत्वनियमममनादृत्य 'अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम्।' इति लक्षयित्वोदाजहार'न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणां यतः। चन्दनं चन्द्रिका मन्दो गन्धवाहश्च दक्षिणः॥' इत्याद्युपक्रम्य'त्वदालेख्ये' इत्याद्युक्तमिति तदनुसारेणैव तत्रापह्नुतिध्वनिरुदाहृत इति न कञ्चिदहृदयङ्गमम्। प्रकाशविरोधोऽपि न, तत्रोपमेयपदस्य पदार्थोपलक्षणपरत्वात्। अन्यथा—'केसेसु बलामोडिअ तेण अ समरम्मि जअसिरी गहिआ। जह कंदराहिं विहुरा तस्स दढं कंठअम्मि संठविआ॥' इत्यत्र स्वयं न प्रपलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं सम्भाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिर्व्यज्यते' इति प्रकाशग्रन्थासङ्गतिः स्यादिति बोध्यम्।' इति समादधते। इति।

**गोपनीयं कमप्यर्थं द्योतयित्वा कथंचन ॥ ३८ ॥**

**यदि श्लेषेणाऽन्यथा वान्यथयेत्साप्यपह्नुतिः ।**

श्लेषेण यथा—

**'काले वारिधराणामपतिततया नैव शक्यते स्थातुम् ।**

**उत्कण्ठितासि तरले ! नहि नहि सखि ! पिच्छिलः पन्थाः ॥'**

अत्र 'अपतितया' इत्यत्र पतिं विनेत्युक्त्वा पश्चात्पतनाभावेनान्यथा कृतम् ।

---

## विवृतिः

**काल इति** । प्रथमार्धं विरहिण्याः, तृतीयपादः सख्याः, चतुर्थपादो विरहिण्या उक्तिः । **अपतितया** पतिहीनत्वेन, अथ च अस्खलिततया । नहि नहीति सखीवाक्यार्थप्रतिषेधः । पिच्छिल इति स्खलनाभावतात्पर्य-ग्राहकम् ॥ **इहेति** ।

## विज्ञप्रिया

द्वितीयापह्नुतिमाह—**गोपनीयमिति** । श्लेषेण द्योतनं शक्त्यैव । अन्यथा द्योतनन्तु व्यञ्जनया । अन्यकथ-नन्तु श्लेषेण श्लिष्टपदवाच्यार्थेन चेति बोध्यम् । **काले** इति । अत्र वारिधराणां कालस्य कामोद्दीपकत्वेन पतिशू-न्यतया स्थित्यशक्यत्वं गोपनीयमर्थमुक्त्वा तद् बोद्धयाः सख्याः प्रश्नानन्तरं तदन्यथयतिनहि नहीति । वर्षाकाले पथः पिच्छिलत्वेन पतितभिन्नतया इत्युक्तवाक्यश्लेषेण अन्यथा कृतं तदाहाऽत्रेति ।

## लोचन

**अन्यथयेदिति** । अन्यार्थे घटयेत् । कश्चिदिति शेषः । **सापीति** । अपिशब्देन समनन्तरोक्तप्रकारभिन्ना-पह्नुतिः इत्यर्थः ।

अपतितया न विद्यते पतिर्यस्याः सा अपतिः तस्या भावस्तत्ता पतनरहितयेत्यर्थः । अन्यथाकरणमेतदे-वाह । वक्रोक्तौ "के यूयं स्थल एव" इत्यादौ । व्याजोक्तौ शैलेन्द्रप्रतिपाद्यमानेत्यादौ गिरिजाकरस्पर्शजन्यस्य रोमाञ्चादेर्नाभिधानम् ।

## कुसुमप्रतिमा

उपमेयनिषेवोपमानस्थापनयोरभावेऽपि अपह्नुतिप्रकरणादेव निरुक्तविलक्षणां काञ्चिदपह्नुति लक्षयति गोपनीयमिति । यः कोऽपि वक्ता गोपनीयं लज्जादिना गोपनयोग्यम्, कमपि अथ विषयम्, कथञ्चन केनापि प्रकारेण व्यञ्जनयेत्यर्थः; द्योतयित्वा सूचयित्वा, यदि श्लेषेण, अन्यथा अश्लेषेण वा अन्वययेत् अन्यथा कुर्य्यात् द्योतितभि-न्नरूपं विदध्यादित्यर्थः, तदा सापि अपह्नुतिर्नामालङ्कारो भवेत्; आत्मनेव द्योतितविषयस्य आत्मनैव पुनरपह्नवात् ।

काल इति । वर्षाकाले सख्या सह पथि गच्छन्त्यः कस्याश्चिद्विरहिण्या उक्तिरियम् । वारिधराणां मेघानां काले अस्मिन् वर्षासमये, अपतितया पतिरहिततया हेतुना, मया स्थातुं नैव शक्यते, दारुणमदतवेदनावशादिति भावः; अन्यत्र तु अपतितया अस्मिन् पथि गमनसमये अस्खलितया मया स्थातुं नैव शक्यते, पयः पिच्छिलत्वादिति भावः । इदमाकर्ण्यसहचारिण्याह उत्कण्ठितेति । हे तरले ! चपले ! त्वं किं पतिनिमितमुत्कण्ठितासि । इत्युक्ता विरहिणी पुनराह नहीति । हे सखि ! नहि न पतिनिमित न खलु उत्कण्ठितास्मीत्यर्थः । तर्हि कथमिदमुक्तमित्याह पिच्छिल इति । पन्था आवयोग्य गमनपयः पिच्छिलो जलपातेन स्निग्ध । अतएवावश्यपतनसम्भावादपतितयेत्या-द्युक्तमिति भावः ।

उदाहृते लक्षणं सङ्गमयति अत्रेति । इत्युक्ता उक्तिवत् स्पष्टं द्योतयित्वेत्यर्थः । तथा च न सन्निधौ विद्यते पतिर्यस्याः सा अपतिः । "बहुब्रीहो" इत्यत्र "सपूर्वस्य वा" इत्यतो वाधिकारात् "पत्युर्नश्चोढ़ायाम्" इतीप्रत्ययस्य नकारस्य चाभावः । तस्या भावः अपतिता तया । अन्यत्र तु न पतिता अपतिता तयेति श्लेषः ।

## विमला

प्राकात्तरेण अपह्नुतिमाह, गोपनीयमिंति । गोपनीयं—रहस्यं, कमपि अर्थं कथञ्जन सादृश्यादिना वा इत्यर्थः; द्योतायेत्वा प्रकटट्य यदि श्लेषेण वा अन्यथा अश्लेषेण, श्लेषाभावेऽपि कालस्वभावादिना इत्यर्थः, अन्यथयेत् अन्यथा कुर्य्यात, भिन्नत्वेन ख्यापयेत् इत्यर्थः, साऽपि अपह्नुतिः । एवस्या एव छेकापह्नुतिरिति अभि-धानान्तरम् ।

तत्र श्लेषमूलामपह्नुतिमुदाहरति, काले इति ।—वारिधराणां—मेघानां, काले—समये, जलवर्षणावसरे इति यावत्, वर्षाकाले इति भावः, अपतितया—प्रतिशून्यतया, अथ च अस्खलिततयेत्यर्थः, स्थातुं नैव शक्यते । [इति सखीं प्रति कयाचिदुक्तम्] । तरले !—हे चञ्चले ! उत्कण्ठिता — पतिविरहेण उत्मुका इत्यर्थः अति ? [इति सख्या प्रत्युक्तम्] हे सखि !न हि न हि—नैव नैव, [इति सखीवाक्यार्थप्रतिषेधः] पतिशून्यतया स्थातुं नैव शक्यते इति मया नोक्तमित्यर्थः, पन्थाः,—वर्त्म, पिच्छिलः, । इति नायिकया पुनर्गोपितं, पिच्छिलपटं स्खलनाभा-वतात्पर्य्यग्राहकम् । अत्र अपतितयेति श्लिष्टम् । आर्य्या छन्दः । यथा वा—"पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले नीले मुह्यति किं करोमि भहितैः क्रौतोऽस्मि ते विभ्रमैः, इत्युत्स्वप्नप्लवचो निशम्य सरूषा निर्भत्सितो राधया कृष्णस्तत्परमेव तद्व्यपदिशन् क्रीड़ाविटः पातु वः ॥" इति ।

अश्लेषमूलामपह्नुतिमुदाहरति, इहेति ।—इह—वर्षाकाले, पुरः,—अग्रतः, अनिलेन—वायुना, कम्पितः,—आधूतः, विग्रहः,—शरीरं यस्याः तादृशी, का लता—व्रततिः, वनस्पतिना—महामहीरुहेण, (यद्यपि अपुष्पफलवति वृक्षे वनस्पतिशब्दः प्रयुज्यते, तथाऽपि अत्र वृहदृक्षमात्रस्योपलक्षणं बोध्यम्) न मिलति ?—न सङ्गच्छते ? अपि तु सर्वैवेति । [इति कयाचित् सखीं प्रति उक्तम्] । हे सखि ! कान्तस्य—पत्युः, रतोत्सवं—सुरतकालिकानन्दव्यापारमित्यर्थः, स्मरसि किम् ? [इति सख्या प्रत्युक्तम्] । न हि—नैव, कान्तरतोत्सवं न स्मरामीति भावः, घनागमस्य—-वर्षाकालस्य, रीतिः,—स्वभावः, उदाहृता—उक्ता । अत्र कान्तसुरतोत्सवस्मरणं वर्षा कालस्य, रीतिः,—स्वभावः, उदाहृता—उक्ता । अत्र कान्तसुरतोष्पवस्मरणं नायिकया अश्लेषेण गोपितम् । द्रुतविलम्बितं वृत्तम् । यथा वा-–"शौत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् । नागरिकः किं मिलितः ? न हि न हि सखि ! हेमनः पवनः ॥" इति ।

## लक्ष्मी

उपमेयनिषेधोपमानस्थापनयोरसत्त्वेऽप्यपह्नुतिरलङ्कारो भवतीति तामुपपादयति—**गोपनीयमिति**। यः कोऽपि वक्ता गोपनीयं लज्जादिना अप्रकाश्यम्, कमपि अर्थं प्रयोजनम्, कथञ्चन केनापि प्रकारेण व्यञ्जनयेत्यर्थः द्योतयित्वा प्रकाशयित्वा, यदि श्लेषेण, अन्यथा प्रकारान्तरेणाश्लेषेणेति यावत अन्यथयेत् अभिप्रायान्तरेण सङ्गमयेत् द्योतितारिक्तरूपं कुर्यादित्यर्थः, तदा सापि अपह्नुतिर्नामालङ्कारो भवेत्; स्वेनैव प्रकाशितप्रयोजनस्य स्वेनैव पुनरपह्नवात्।

एवञ्चैषा द्विविधा, तत्राद्या श्लेषरूपातावदुदाहरति—**काले** इति। वर्षासमये सख्या सह मार्गे व्रजन्त्याः कस्यश्चिद्वियोगिन्या उक्तिरियम्। वारिधराणां मेघानां काले अस्मिन् वर्षाकाले इत्यर्थः, न पतिर्मदनज्वालाप्रशमितृतया रक्षको यस्यास्तस्या भावस्तत्ता तया अपतितया हेतुना, मया स्थातुमवस्थातुं नैव शक्यते वारिधराणां कालस्यात्यन्तकामोद्दीपकत्वेन पतिशून्यता स्थातुमशक्यमिति भावः। अन्यत्र तु अपतितया मार्गेऽस्मिन् गमनकाले अस्खलिततया मया स्थातुं न शक्यते मार्गस्य पिच्छिलत्वादित्याशयः। एवं प्रस्फुटमर्थं बुध्वा तत्सखीं पृच्छति हे तरले चञ्चले! पातिव्रत्यतो भ्रश्यमानहृदय इत्यर्थः, किं परसङ्गस्य विधानाय उत्कण्ठितासि अभिलाषिण्यसि, एवमवगतायाः सख्याः प्रश्नानन्तरं तदन्यथयति—**नहि नहीति**। हे सखि नहि नहि कामुकनिमित्तं नैव खलु उत्कण्ठितास्मीत्यर्थः, तर्हि कथमेवमुक्तेत्यत आह—**पिच्छिल** इति। पन्थाः आवयोरयं गमनमार्गः पिच्छलः जलपातेन चिक्कणः। अतोऽवश्यं स्खलनसम्भवादेवमभिहितमिति भावः। आर्याछन्दः।

उक्तोदाहरणे लक्षणं संयोजयितुमाह—**अत्रेति**। इत्युक्त्वा उक्तिवत्स्फुटं व्यञ्जयित्वेत्यर्थः। तथा च न समीपे वर्त्तते पतिर्यस्याः सा अपतिः (नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः) इत्यनेनात्रोत्तरपदलोपः। सपूर्वस्य पतिशब्दान्तस्य वैकल्पिकनत्वविधानेन तदभावपक्षे रूपमिदं बोध्यम्।

'सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम्।

## रुचिरा

प्रकरान्तरेणैनां लक्षयति—११६ **कमपि**। **गोपनीयम**प्रकाश्यम्। **अर्थ** प्रयोजनम्। **कथञ्चन** प्रमादादिवशात्। **द्योतयित्वा** प्रकाश्य। **यदि** 'अथ कस्यचिद् भीत्ये'ति शेषः। **श्लेषेण**। **अन्यथा** प्रकारान्तरेणाश्लेषेणेति यावत्। वा। **अन्यथयेत्** अभिप्रायान्तरेणासङ्गमयेत्। 'प्रथयेत्।' इति पाठान्तरम्। **सा**। **अपि**। **अपह्नुतिः**। अयम्भावः—यं कमपि स्वभावतो गोपनीयमप्यर्थे यदि प्रमादादिवशात् गोपायितुं न शक्नुयात्, तं प्रकाश्यापि श्लेषमहिम्ना कारणान्तरपरतया सङ्गमय्य परकर्तृकतत्कर्म्मकप्रबोधपरायणतामपह्नुवीत सा द्वितीयप्रकाराऽपह्नुतिः। इति॥ ९१॥

एवं द्विविधाऽप्येषा तत्राद्या तावदुदाह्रियते-**श्लेषेण**। **यथा**—'**वारिधराणां** मेघानाम्। **काले** समये। वर्षासमय इति फलितोऽर्थः।' **अपतितया** न पतिर्मदनज्वालाप्रशमितृतया रक्षको यस्यास्तस्या भावस्तत्ता तया। **स्थातुमवस्थातुम्**। **नैव**। **शक्यते**। मदनोद्दीपकस्याऽस्य समयस्य सहाय्येन प्रचण्डतरतां प्रतिपन्नेन स्वभावतो वियोगिनीजनान्तकेन मदनेन पीडयमानाऽहमिति पत्युश्च परदेशगततया तथाभूतस्यान्यस्य कस्यचित्तरुणवरसुकृतिन आश्रयमन्तरा न मम जीवनास्था सम्भवति इति भावः। एवं प्रस्फुटमर्थ बुद्ध्वा तत्सखी पृच्छति—हे **तरले** चञ्चले पातिव्रत्यतो भ्रश्यमानचित्ते इति यावत्। **उत्कण्ठिता** 'परसङ्गस्ये'ति शेषः। उत्कण्ठिताऽभिलाषिणी। **असि**

(अत्र काकुः, अतः—'कि'मित्यर्थो लभ्यते) **एवं** सख्या ज्ञातमपि तथ्यं भावमपह्नोतुमाह—**नहिनहि** (सम्भ्रमे द्विरुक्तिरियम्) हे **सखि** ! 'यथा तयाऽऽशङ्क्यते तथा न, किन्त्वि'ति भावः । **पन्थाः** । **पिच्छिलः** 'कर्दमातिशया'दिति शेषः । अतः—'अपतितया' इत्यस्य पतितत्वमन्तरेति भावः । अत्र 'अपतितये'ति श्लिष्टम् । आर्य्याछन्दः ॥१३३॥

बोधसौकर्य्यायोदाहृतमर्थ सूचयति—**अत्रे**त्यादिना । स्पष्टम् ।

अश्लेषेण यथा—

**'इह पुरोऽनिलकम्पितविग्रहा**

**मिलति का न वनस्पतिना लता।**

**स्मरसि किं सखि! कान्तरतोत्सवं**

**नहि घनागमरीति रुदाहृता ॥'**

वक्रोक्तौ परोक्तेरन्यथाकारः, इह तु स्वोक्तेरेवेति भेदः। गोपनकृता, गोपनीयस्यापि प्रथममभिहित्वाच्च व्याजोक्तेः।

---

## विवृतिः

घनागमरीतिर्वर्षाकालस्वभावः॥ **व्याजोक्तेरिति**। भेद इत्यनेनान्वितम्। व्याजोक्तौ गोपनीयस्य प्रथमं स्वयमभिधानं नास्तीति भावः॥

## विज्ञप्रिया

**इह पुरोनिलेति**। इह देशे पुरः सम्मुखे का लता। वनस्पतिपदमहिम्ना व्यञ्जनया साध्वसवन्नायिकायां सङ्गतनायकप्रतीतिः समासोक्तिरूपा संख्या तत्प्रतीत्या स्मरसीत्यादिप्रश्ने कृते वक्त्री वाच्यार्थेनैव तदन्यथयति—नहि घनागमेति।

अस्या वक्रोक्तितो भेदमाह—**वक्रोक्ताविति**। व्याजोक्तितोऽप्यस्या भेदमाह—**गोपनेति**। गोपनीयार्थो वक्ता व्याजोक्तौ प्रथमं नोच्यते। यथा—

**"पृथुना जलकुम्भेन श्रमोऽयं श्वासकृन्मम।**

**विश्राम्यामि क्षणं तस्माद् वयस्ये! तव सन्निधौ॥"**

इत्यत्र जलाहरणस्य पथि उपनायकसम्भोगजन्यः श्रमो वक्त्रया प्रथममनुक्तोऽपि सखिप्रतीतिभिया निगूहितः। व्याजोक्तेरिति भेद इत्यन्वयः।

## लोचन

निश्चयाख्यः। अपह्नुतिवैधर्म्यात्॥

## कुसुमप्रतिमा

इहेति। वर्षाकाले सख्या सह विरहिण्या उक्तिप्रत्युक्तिरूपमिदं पद्यम्। इह वर्षासमये, अनिलेन वायुना कम्पितो देहो यस्याः सा तादृशी का नाम लता, वनस्पतिना वृक्षेण सह, पुरोऽग्रतः सम्मुखत इत्यर्थः, न मिलति न संयुज्यते? अपि तु सर्वैव मिलतीत्यर्थः; "वनस्पतिर्वृक्षमात्रे" इति विश्व। कामाविर्भावात् कम्पाख्यसात्त्विकभाववती का नाम कामिनी कान्त न सह न मिलतीति च द्योत्यते। इदमाकर्ण्य सखी पृच्छति स्मरसीत। हे सखि! किं

कान्तस्य पत्य: रतोत्सर्वसुरतामोदम्, स्मरसि लतावनस्पत्योरिदं मिलनं दृष्टेति भाव: । इति पृष्टा विरहिणी पुनराह नहीति । कान्तरतोत्सर्व नहि स्मरामीत्यर्थ: । तर्हि किमिदमुक्तमित्याह घने त । घनागमस्य वर्षासमयस्य रीतिरवस्था उदाहृता अभिहिता ।

अत्र प्रथमार्द्धेन स्वयमेव द्योतितस्य कान्तरतोत्सवस्मरणस्य अश्लिष्टेन घनाम्मेयादिना पुन: स्वयमेवा न्यवाकरणादपह्नुति: ।

ननूदाहृतपथमलक्ष्ये अन्यार्थकवाक्यस्य श्लेषेणान्वया योजनात् प्रागुक्त्या क्रोक्त्या सह, नियतसाङ्कर्य्या-पत्तिरित्याह वक्रोक्ताविति । अन्यथाकार: परकर्तृकमन्यथाकरणम् । इह द्वितीयापह्नुतौ भेद इति । अतएव वक्रो-क्तिलक्षणे "अन्यस्य" इति "अन्य:" इति चान्यपदद्वयं प्रयुक्तम्, इह चैककर्तृत्वलाभाय "द्योतयित्वा" इति क्त्वच्प्रत्यय: कृत इति भाव: ।

अथ तर्हि उद्‌भिन्नस्य पतिरहिततयेत्यर्थस्य कान्तरतोत्सवस्मरणस्य च "नहि नहि सखि !" इत्यादिना "नहि घनागम—" इत्यादिना, चं व्याजेन गोपनात् "व्याजोक्तिर्गोपन व्याजादुद्भन्नस्यापि वस्तुन:" इति वक्ष्यमा-णलक्षणया व्याजोक्त्या सह उभयत्रापि नियतसाङ्कर्य्यमापद्यत एवेत्याह गोपनेति । गोपनकृता गोपनकारिणा वक्तृजनेन, गोपनीयस्यापि एतिरहिततयेत्यर्थस्य कान्तरतोत्सवम्भरणस्य च । अभिहितत्वात् अभिहितवत् स्पष्टं द्योतितत्वात्, व्यजोक्तेर्भेद इत्यनुषज्यते । तथा च व्याजोक्तौ गोपनकारिणा गोपनीयविषय: प्रथमं नाभिधीयते, इह त्वसावभिधीयत एवेति भेदादनयोर्न नियतसाङ्कर्य्यापत्तिरित्याशय: ।

अर्थप्रकृत निषिध्यान्यस्थापनेन पतिह्नुवत् अन्यन्निषिध्य प्रकृतस्थपनेनन किञ्चिदलङ्कारान्तरं भवति न वेयाकाङ्क्षायामप्राचीनसम्मतमपि युक्तिसिद्धत्वात् प्रसिद्वालङ्कारभिन्नत्वाच्च निश्चयाख्यं नूतनकञ्चिदलङ्कारमाह अन्यदिति । अतएव चात्रापह्नुतिवैपरीत्यद्योतनाथ: पुन शब्दप्रयोग इत्य । अन्यत् वर्णनीयादितरद्वस्तु उपमानमिति तात्पर्य्यम्, निषिध्य आपोद्य, प्रकृतस्य वर्णनायां प्रस्तुतस्य उपमेयस्येत्यर्थ: । स्थापनं विन्यासो निश्चय नामालङ्कार: स्यांत् । प्रकृतस्यैव निश्चयादस्य निश्चय इत्येव संज्ञा । अत्रापि क्वाच्प्रत्यार्थाविवक्षणात् पूर्ववदयमपि द्विविध एव प्रकृतस्थापनपूर्वकोऽन्यनिषेध: अन्यनिषेधपूर्वकं प्रकृतस्थापनञ्चेति ।

## विमला

व्याजोक्तेरिति ।—भेद इत्यनेनान्वितं, व्याजोक्तौ गोपनीयस्य प्रथमं स्वयमभिधानं नास्तीति भाव: ।

## लक्ष्मी

नागरिक: किमु मिलितो नहि नहि सखि ! हैमन: पवन: ॥'

इत्याद्यधिकमुदाहरणमत्र केचित् पठन्ति ।

द्वितीयोदाहरणमाह—**इह पुर** इति । वर्षासमये सहचारिण्या सह वियोगिन्या उक्तिप्रत्युक्तिरूपमिदम् । इह अस्मिन् वर्षाकाले अनिलेन पवनेन कम्पित आन्दोलितो विग्रहो देहो यस्या: सा तथोक्ता का नाम लता, वनस्पतिना वृक्षेण सह, पुरोऽग्रत: सम्मुखत इत्यर्थ:, न मिलति न संयुज्यते अपि तु सर्वैव संयुज्यत इत्यर्थ: । 'वनस्पतिर्वृक्षमात्रे' इति विश्व:, मदनाविर्भावेण कम्पाभिधेयसात्त्विकभावयुता का नाम वनिता प्रियेण सह न संयुज्यत इति च व्यज्यते । इत्युदीर्यमाणां श्रुत्वा सखी पृच्छति—**स्मरसीति** । हे सखि ! किं कान्तस्य स्वामिन:

रतोत्सवं सुरतजन्यानन्दं स्मरसि लतावृक्षयोः संयोगमेनमवलोक्येतिभावः। इत्यवगतं स्वमर्थं विज्ञाय तद्गोपयन्नाह—नहीति। कान्तरतोत्सवं न हि स्मरामिं यदपि त्वया शङ्क्यते तदपि नेत्यर्थः। तर्हि कथमेवमभिहितमत आह—**घनेति**। घनागमस्य वर्षाकालस्य रीतिरवस्था उदाहृता कथिता। **द्रुतविलम्बितं** छन्दः।

अत्र प्रथमार्द्धेन स्वयमेव व्यञ्जितस्य कान्तसुरतोत्सवस्मरणस्य अश्लेषण घनागमेत्यादिना पुनः स्वयमेवान्यथाविधानादि्द्वतीयपह्नुतिः।

ननु प्रथमोदाहरणे अन्यार्थकपदसन्दर्भस्य श्लेषेणान्यथाकरणात् पूर्वप्रतिपादितया वक्रोक्त्या सह साङ्कर्यमापद्येतेत्यत आह—**वक्रोक्ता**विति। वक्रोक्तौ 'के यूयं स्थल एव' इत्यादौ। अन्यथाकारः परकर्तृकमन्यथाविधानम्। इह द्वितीयापह्नुतावित्यर्थः। भेद इति। अत एव वक्रोक्तिलक्षणे 'अन्ये'तिपदद्वयस्योक्तिः, अत्र तु समानकर्तृकयोः पूर्वकाले क्त्वा' इति क्त्वाप्रत्ययो विहितः।

ननु 'काले वारिधराणाम् इत्युदाहरणे 'इह पुरोऽनिलकम्पितविग्रहा' इत्युदाहरणे च—

'व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः।'

इति वक्ष्यमाणलक्षणस्य व्याजोक्तयलङ्कारस्य प्रसङ्गः स्यात् प्रथमे उद्भिन्नस्य पतिविहीनतयेत्यर्थस्य द्वितीये कान्तरतोत्सवस्य च 'नहि नहि सखि' इत्यादिना 'न हि घनागम' इत्यादिना च व्याजेन गोपनादत आह—**गोपनकृतेति**। गोपनकृता गोपनविधायिना वक्त्रा गोपनीयस्यापि पतिविहीनेतयेत्यर्थस्य कान्तरतोत्सवस्मरणस्य च। अभिहितत्वात् स्फुटं व्यञ्जितत्वाद् व्याजोक्तेर्भेद इति पूर्वेणानुषङ्गः। तथा च गोपनीयार्थो वक्त्रा प्रथमं नाभिधीयते, यथा—'पृथुना जलकुम्भेन श्रमोऽश्वासकृन्मम।

विश्राम्यामि क्षणं तस्मात् वयस्ये ! तव सन्निधौ॥'

इत्यत्र जलाहरणस्य मार्गे उपपतिसम्भोगजन्यः श्रमो वक्त्रया प्रथममनुक्तोऽपि सखिप्रतीतिभिया निगूहितः, इह तु असावुच्यत एवेतिस्फुटमनयोर्भेदः।

## रुचिरा

द्वितीयोदाह्रियते—**अश्लेषेण**। **यथा**—**इहास्मिन्** वर्षासमये। **पुरोनिलकम्पितविग्रहा** पुरोग्रतोऽनिलेन वायुना कम्पितो विग्रहः शरीरं यस्याः सा। **का**। **लता**। **वनस्पतिना**। साहार्थेयं तृतीया। **न**। **मिलति** संयुज्यते। 'अपि तु सर्वैवे'ति शेषः। इत्युदीर्य्यमाणं श्रुत्वा सखी पृच्छति—हे **सखि! किम्**। **कान्तरतोत्सवं** कान्तस्य सुरतजन्यमुत्सवम्। **स्मरसि**? इत्यवगतं स्वमर्थे ज्ञात्वाऽपह्नुते—**नहि** यत्त्वया कथ्यते शङ्क्यते वा तन्नेति भावः। किन्तु-**घनागमरीतिर्**वर्षाप्रभावः। **उदाहृता**। द्रुतविलम्बितं वृत्तम्॥ १३४॥

व्याजोक्तेरस्या व्यवच्छेदं लक्षयति—**वक्रोक्ता**वित्यादिना। स्पष्टम्। व्याजोक्तेरस्या भेदं लक्षयति-**गोपने**त्यादिना। 'भेद' इति शेषः। स्पष्टमन्यत्।

**अन्यन्निषिध्य प्रकृतस्थापनं निश्चयः पुनः ॥ ३९ ॥**

निश्चयाख्योऽयमलङ्कारः । अन्यदित्यारोप्यमाणम् ।

यथा मम—

**'वदनमिदं न सरोजं नयने नेन्दीवरे एते ।**

**इह सविधे मुग्धदृशो भ्रमर ! मुदा किं परिभ्रमसि ॥'**

यथा वा—

**'हृदि बिसलताहारो, नायं भुजंगमनायकः**

**कुवलयदलश्रेणी कण्ठे, न सा गरलद्युतिः ।**

**मलयजरजो, नेदं भस्म, प्रियारहिते मयि**

**प्रहर न हरभ्रान्त्यानङ्ग !, क्रुधा किमु धावसि ॥'**

नह्ययं निश्चयान्तः संदेहः, तत्र संशयनिश्चययोरेकाश्रयत्वेनावस्थानात् । अत्र तु भ्रमरादेः संशयो नायकादेर्निश्चयः । किंच न भ्रमरादेरपि संशयः । एककोट्यनधिके ज्ञाने तथा समीपगमनाऽसंभवात् । तर्हि भ्रान्तिमानस्तु । अस्तु नाम भ्रमरादेर्भ्रान्तिः । न चेह तस्याश्चमत्कारविधायित्वम् । अपि तु तथाविधनायकाद्युक्तेरेवेति सहृदयसंवेद्यम् । किंचाविवक्षितेऽपि भ्रमरादेः पतनादौ भ्रान्तौ वा नायिकाचाटुवादिरूपेणैव संभवति तथाविधोक्तिः । न च रुपकध्वनिरयम्, मुखस्य कमलत्वेनानिर्धारणात् । न चापह्नुतिः, प्रस्तुतस्यानिषेधात् । इति पृथगेवायमलंकारश्चिरंतनोक्तालंकारेभ्यः । शुक्तिकायां रजतधिया पतति पुरुषे शुक्तिकेयं न रजतमिति कस्यचिदुक्तिर्नायमलंकारो वैचित्र्याभावात् ।

---

## विवृतिः

निश्चयालंकारमाह—**अन्यदिति** । उपमानं निषिध्य भिन्नत्वेनाख्याय प्रकृतस्य उपमेयस्य स्थापनं तत्त्वेनावधारणम् । आरोप्यमाणं सादृश्यातिशयेन आरोपविषयतां नीयमानम् । अयमपि द्विधा । क्वचिदारोप्यमाणनिषेधपूर्वकं प्रकृतस्थापनम्, क्वचिच्च प्रकृतस्थापनपूर्वक आरोप्यमाणनिषेधः । तत्राद्यो यथा—'न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।' द्वितीयमाह—**वदनमिति** । दृढप्रतिपत्तये प्राचीनोदाहरणाह—**हृदीति** । विरहिण उक्तिरियम् ॥ एकाश्रयत्वेन **एकात्मवृत्तित्वेन** । तथा चात्र संशयनिश्चययोर्व्यधिकरणत्वान्नायं निश्चयान्तःसंदेह इति भावः । ननु तत्र तयोः सामानाधिकरण्यनियमे किं मानमत आह—**किंचेति** । एककोट्यनधिके एककोटिमात्रावगाहिनि । **तथा समीपगमनासंभवात्** संदेहप्रसङ्गयोगात् । तर्हि एककोटिमात्रावगाहिज्ञानकनिश्चयत्वस्वीकारे भ्रान्तिमानिति । भ्रान्तेर्निश्चयरूपत्वादिति भावः । **नायकाद्युक्तेरिति** । चमत्कारविधायित्वमित्यनेनान्वितम् । **उक्तिर्निश्चयः** । ननु संबोध्यभ्रान्तिं विना तथाविधोक्तेरसंभव एव । एवं चास्य भ्रान्तिमूलकत्वं नियतम् । तथा च प्रकृते सैव चमत्का-

रविधायिनी। तथाविधोक्तिस्तु भ्रमव्यञ्जिकैवेत्यत आह—**किं चेति**। **पतनादाविति**। भ्रमव्यञ्जकोपादानं तस्य नियतत्वादाह—**भ्रान्ताविति**। अविवक्षितायामिति लिङ्गव्यत्ययेनान्वयः। **चावादिरूपेण** चाट्वादिप्रकारेण। **मुखस्य** मुखादेः, **कमलत्वेन** कमलत्वादिना, **अनिर्धारणात्** अनारोपात्, प्रत्युत भिन्नत्वेन निर्णयात्। पतति रजतार्थं वर्तमाने। तथा च वस्तुतत्त्वमेव नालंकारत्वप्रयोजकमपि तु वैचित्र्याधायकत्वमेवेति भावः॥

## विज्ञप्रिया

निश्चयालङ्कारमाह—**अन्यन्निषिध्येति**। अपह्नुतौ प्रकृतनिषेधेन अन्यस्थापनम्, इह तु तद्वैपरीत्यमित्यर्थः। **वदनमिदमिति**। हे मधुकर इह मुग्धदृशः सविधे मुधा न परिभ्राम्य। भ्राम्येत्यत्र वैकल्पिकदिवादिश्यनन्तता। पद्मादिबुद्ध्या यद् भ्राम्यसि तन्मुधेत्यर्थः। मुधात्वमुपपादयति—**वदनमिदमिति**। हृदि बिसलताहार इत्यादिका विरहिण उक्तिः। एवम्—"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः, सुरधनुरिदं दूराकृष्टं न तस्य शरासनम्। अयमपि पटुधारासारो न बाणपरम्परा, कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी।" इत्यादावप्ययमलङ्कारो बोध्यः।

**न ह्ययमिति**। वार्थो हिकारः। नवायमित्यर्थः। भ्रमरादेरित्यादि पदादनङ्गस्य नायिकादेरित्यादिपदात् तत्तद्बोधकपुरुषस्य च परिग्रहः। ननु निश्चययान्तसन्देहे तदैक्यं न विवक्षितमित्यत आह—एककोट्यनधिके ज्ञाने इत्यर्थः। तज् ज्ञानं च एककोटौ उत्कटत्वेन तद्वृत्तिकोटेरेव निश्चये च भवति, तादृशनिश्चयश्च भ्रम एवेति तां कोटिमादायाशङ्कते—**तर्हीति**। **अस्तु नामेति** समाधानम्। **तथाविधनायकाद्युक्तेरेवेति**। नायिकासुखोत्कर्षस्य द्वितीयश्लोके वक्तुर्विप्रलम्भोत्कर्षस्य च प्रतिपादनादेव चमत्कारादिति भावः। तस्मिन्नर्थे सहृदयाः प्रमाणमित्याह—**सहृदयेति**। मुग्धा दुग्धधिया" इत्यादौ अपि चन्द्रोत्कर्षप्रतिपादनादेव चमत्कार इति तुल्यमित्यत आह—**किञ्चेति**। तत्र तु भ्रान्तिमति भ्रमाधीनकुम्भपातादिक्रिया, अत्र तु भ्रमरस्य नतु भ्रमाधीनपातक्रियेति समाधानसम्भवेऽपि तादृशक्रियाभावेऽपि भ्रान्तिमदलङ्कारादित्युपपत्तृन् प्रत्याह। **अविवक्षितेऽपीति**। तुष्यतु इति न्यायात्। तथात्वाभ्युपपत्तौ आह—नायिका चाट्विति। तथाच भ्रान्तिमदलङ्कारसङ्कीर्ण एव निश्चयालङ्कार इति स्वीकृतम्।

अप्रसक्तमपि रूपकध्वनित्वं स्पष्टत्वाय निषिध्यति—**नच रूपकेति**। **कमलत्वेनानिर्द्धारणादिति**। न सरोजमिति तद्विरोधिनिर्देशादनिर्द्धारणम्। अपह्नुतिस्तु न सम्भवत्येव इत्याह—नचेति। **चिरन्तनेति**। न केवलमयलङ्कारः किन्तु—

**"दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम्।**

**दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः॥'**

इत्येकसंख्यालङ्कारः।

**एकं विष्णुं द्वे तदीये च नेत्रे**

**त्रींस्तान् देवान् दोश्चतुष्कं च विष्णोः**

**पञ्चेशास्यान्यग्निभूषणमुखानि**

**सप्तार्चिष्कं नौमि साष्टाङ्गपातम्॥**

इति क्रमिकसंख्यालङ्कारः। अन्येऽपि वैचित्र्यावहा अलङ्कारा अनुक्ता अपि स्वयमूह्याः। प्रायशः सर्वेषामेव अलङ्काराणामाहार्य्यारोपबुद्धिविषयत्वे एवालङ्कारत्वं नतु वास्तवत्वे इत्यत आह—**शुक्तिकायामीति**।

## लोचन

मुग्धदृशो मनोहराक्ष्याः। अस्यालङ्कारस्य पूर्वाचार्य्याप्रकाशितत्वाद् विषयव्याप्तये पुनरुदाहरति—**यथा वेति**। भुजङ्गमनायको वासुकिः।

एकाश्रयत्वेनावस्थानात् संशयितुरेव निश्चेतृत्वाद्यथा—किं तावत् सरसीत्यादौ। एककोटिः सरोजादिः। तथा समीपगमनादिसम्भवश्च शास्त्रयुक्तिसिद्ध एव। आदिशब्देन हृदि बिसलताहार इत्यादौ प्रहारादेः संग्रहः। **तर्हीति**। यद्येकं कोट्यनधिकं मिथ्याज्ञानमित्यर्थः। तस्याः यथाकथञ्चिद् अङ्गीकृताया भ्रान्तेस्तथाविधायाः 'तव वदनं सरोजसदृशमेव' इत्यादेर्नायिकाद्युक्तेर्विशेषणं, तत्र किं प्रमाणमित्याह—सहृदयसंवेद्यं सहृदयानामनुभव इत्यर्थः। भ्रमरादेः पतनादिसद्भावे तद्भावेऽपि वा भ्रान्तिज्ञानस्य तेषां हृदयग्राह्यत्वे भ्रान्तिमदलङ्कारो वक्तुं युक्तः। नच तथेति। युक्त्यन्तरदर्शनेनापि तदभावं दृढयति—**किञ्चेति**। तथाविधवदनमिदं सरोजरूपम्। एवं च भ्रान्तेः स्वरूपस्याभावात्। तदभावे च कथं भ्रान्तिमदलङ्कार इत्यर्थः। कमलत्वेन अनिर्द्धारणादित्यतः पूर्वं व्यङ्ग्ययोरपीति शेषः।

**अयमस्माभिः प्रकाशितो निश्चयाख्योऽलङ्कारः।**
**वैचित्र्यमलङ्कारबीजभूता लोकोत्तरा विच्छित्तिः॥**

## कुसुमप्रतिमा

ननु प्राचीनालङ्कारग्रन्थेषु निश्चयनामकालङ्कारादर्शनात् भवदुक्तलक्षणे निश्चयो नाम किमित्याह निश्चयाख्योऽयमलङ्कार इति। नूतन इति शेषः। अलङ्कारप्रकरणेऽभिधानादिति भावः। आरोप्यमाणं सोसादृश्यमहिम्ना आरोपयोग्यतां नीयमानमुपमानमित्यर्थः।

तत्र प्रकृतस्थापनपूर्व कान्यनिषेधे उदाहरति वदनमिति। सुन्दरीवदनसमीपे भ्रमन्तं कञ्चिद्भ्रमरमवलोक्य कस्यचित् रसिकस्योक्तिरियम्। हे भ्रमर! इदं दृश्यमानं वस्तु वदनम्, किन्तु सरोजं तत्र पानयोग्यमधुविशिष्टं पद्मं न। तथा एते दृश्यमाने वस्तुनी नयने किन्तु इन्दीवरे तस्यैव नीलोत्पलयुगलं न। अतएव मुग्धदृशः सुन्दरनयनाया अस्या नायिकायाः, इह वदननयनसम्बन्धिनि सविधे समीपे किं कथं मुधा व्यर्थं परिभ्रमसि? अनयोः पद्मत्वेन्दीवरत्वाभावेन तव पानयोग्यमध्वभावादिति भावः।

अत्रोपमेयभूत वदन नयन पूर्वकादुपमानभूत सरोजेन्दीवरनिषेधान्निश्चयोलङ्कारः।

ननु नूतनं कञ्चिदलङ्कारं प्रचारयितुं भूयसा प्रयासेन स्वकल्पितं लक्ष्यं न खलु प्राचीनलक्षणविलक्षणं किमपि लक्षणं प्रयोजति, अप्रमाणत्वात्; सति तु प्रसिद्धे लक्ष्ये तत्सदृशतया स्वकल्पितमपि लक्ष्यं तादृशं लक्षणं प्रयोजयत्येव तत्प्रामाण्येन तस्यापि प्रामाण्यदित्यतः प्रसिद्धं लक्ष्यं दर्शयितुमाह यथा वेति।

हृदीति। कामार्त्तस्य कस्यचिद्वियोगिनः खेदेनोक्तिरियम्। हे अनङ्ग! मन्मथ! अयं मम हृदि वक्षसि विसलताहारो मृणालल्लोनिर्म्मितो हारः, किन्तु भुजङ्गमनायको मृणालतुल्यशुभ्रवर्णोऽनन्तनागो न; कण्ठे गलदेशे कुवलयदलश्रेणी नीलोत्पलपत्रमाला, किन्तु सा प्रसिद्धा गरलद्युतिः कालकूटविषस्य कृष्णवर्णा दीप्तिर्न; तथा इदं

गात्रे दृश्यमानं मलयजरजः श्वेतचन्दनरेणः, किन्तु भस्म न। अतएव प्रियया रहिते वियुक्ते मयि हरभ्रान्त्या शिवभ्रमेण स प्रहर न स्वशरैस्ताड़य। तथा हरत्वाभावान्मां प्रति क्रुधा कोपेन किमु कथं प्रहर्तुं धावसि।

अत्रापि विसलतादीनामुपमेयानां स्थापनपूर्वकात् भुजङ्गमनायकादीनामुपमानानां निषेधान्निश्चयोऽलङ्कारः।

अन्यनिषेधपूर्वकप्रकृतस्थापने यथा मम—

**"न मृणाले, भुजावेतो; तिलपुष्पं न, नासिका।**
**नेदं पल्लवमोष्ठोऽयम्; न विल्वे च, कुचाविमौ॥"**

इदानीमस्य प्रसिद्धालङ्कारान्तरभिन्नत्वं दर्शयितुं सम्भाव्यमानेष्वलङ्कारान्तरेषु सन्देहालङ्कारस्यैवाद्यत्वादादौ तद्भिन्नत्वमेव दर्शयति न हीति। अयं नवनिरुक्तो निश्चयो नामालङ्कारः। "वदनमिदं न सरोजम्" इत्यादौ निश्चयसत्त्वात् मध्ये निश्चयाभावाच्च शुद्ध निश्चयगर्भरूपयोः सन्देहालङ्कारभेदयोरसम्भवादाह निश्चयान्तः सन्देह इति। वदने भ्रमरस्य सरोजसंशयं नायकस्य च वदननिश्चयमादाय निश्चयान्तसन्देहालङ्कारो नहीत्यर्थः। अत्र सन्देहालङ्कारे। एकाश्रयत्वेनावस्थानात् एकस्मिन्नधिकरण एवावस्थाननियमात्। अत्र तु "वदनमिदं न सरोजम्" इत्यादौ तु। तथा चात्र संशयनिश्चययोर्भिन्नाधिकरणावस्थानान्न निश्चयान्तः सन्देह इत्याशयः।

ननु निश्चयान्तसन्देहालङ्कारे संशयनिश्चययोरेकाधिकरणावस्थाननियमे प्रमाणाभावाद्वदनमित्यादौ निश्चयान्तसन्देहालङ्कारो निर्बाध एवेत्याह किञ्चेति। नायकादेः संशयः कथमपि न, किन्तु भ्रमरादेरपि न संशय इत्यर्थः। आदिपदेन अनङ्गादेर्ग्रहणम्। एककोट्यधिके द्विकोटिके वदनसरोजभयविषके ज्ञाने भ्रमरस्य संशय इत्यर्थः। तथा समीपागमनासम्भवात् वदननयनयोन्त्यन्तनिकटे तस्य भ्रमरस्य गमनासम्भवात्। तथा च न खलु "इदं वदनं सरोज वा" इति संशयानो मधुपिपासुभ्रमरस्तस्यात्यन्तमन्तिकमुपैति; नहि "तृष्णातुरः कश्चित् जलं मरीचिका वा" इति सन्दिहानस्तदन्तिकं याति; प्रार्थितप्राप्तिनिश्चयाभावेन गमनप्रयासस्वीकारासम्भवात् किन्तु सरोजमेवेदमित्यादिभ्रमवशेनैव तदन्तिके तस्य गमनसम्भवादिति भावः। अत्र रामचरणव्याख्यानं सुधीभिरेव सदसत्तया विवेचनीयम्।

"सरोजमेवेदम्" इत्यादिभ्रमरादिभ्रमाङ्गीकारमाश्रित्याशङ्कते तर्हीति। वदनादौ भ्रमरादीनां सरोजादिभ्रमस्यैवाङ्गीकार इत्यर्थः। भ्रान्तिमानस्तु तल्लक्षणव्याप्तेर्भ्रमस्य निश्चयरूपतया भ्रमरादेस्तत्समीपगमनादिसम्भवाच्चेति भावः। तथाविधा वदनमिदमित्यादिरूपा या नायकाद्युक्तिस्तस्या एवं चमत्कार विधायित्वमिति पूर्वेणान्वयः। नायिकासन्तोषकत्वात् कौतुकव्यञ्जकत्वाच्चेति भावः। तेन तादृशभ्रान्तिमादथ भ्रान्तिमानलङ्कारो न सम्भवति चमत्कारविधायिन एवालङ्कारत्वौचित्यादिति चाशयः।

अथ न स्वल्विदं दृष्टं श्रुतं वा, यद्भ्रमरादयः सरोजादिसंशयेन नायिकावदनाद्युपरि पतन्ति, तत्र सरोजादित्वेन भ्रमं वा कुर्वन्तीति। ततश्च वक्तु नायकेन भ्रमरादीनां पतनादिकं तदभ्रान्तिर्वा न विवक्षितैवेति तन्मूला तथा विधाक्तिरेव न सम्भवति, कुतस्तत्र चमत्कारविधायित्वं कुतो वा तच्चमत्कारतूलको निश्चयाख्यो नवीनालङ्कार इत्याह किञ्चेति। अविवक्षितेऽपि नायकेनेति शेषः। प्रथमादिपदेन द्वितीयश्लोकोक्तानङ्गादेर्ग्रहणम्। द्वितीयादिपदेन च तदनङ्गकृतप्रहारादेः परिग्रहः। भ्रान्तौ वा अविवक्षितायामित्यन्वयः। चाटुः। प्रियभाषणम्। तृतीयादिपदेन स्ववेदनाधिक्यप्रकाशादीनां ग्रहणम्। तथाविधा "वदनमिदम्" इत्यादिरूपा "हृदि विसलताहारः" इत्यादिरूपा च। तथा च नायिकाया वदनादेः सरोजादितुल्यत्वव्यञ्जकतया नितान्तसन्तोषकरत्वात् "वदनमिदम्" इत्यादिरूपा

स्वकीयमदनवेदनातिशयव्यञ्जकत्वाच्च "हृदे विसलताहार" इत्यादिरूपा चोक्तिः सम्भवतीति तदीयचमत्कारिता-मूलको निश्चयालङ्कारोऽपि सम्भवत्येवेति भावः।

ननु तर्हि वदनादौ सरोजत्वाद्यारोपाणां व्यञ्जनागम्यत्वादयं रूपकालङ्कारध्वनिरेवास्तामित्याह न चेति। अनिर्द्धारणादनिश्चयात्। इदमुपलक्षणम्, नयनादीनामिन्दीवरादित्वेनानिर्द्धारणादित्यपि बोध्यम्। तथा च "मुख-कमलम्" इत्यादौ श्रोतारो मुखादीन् कमलादिरूपत्वेन निर्द्धारयन्ति, अत्र तु तन्निर्द्धारणं दूर एवास्ताम्, प्रत्युत न सरोजमित्याद्यभिधानात् सरोजादिभिन्नत्वेनैव वदनादीन् निर्द्धारयन्तीति न रूपकगन्धोऽपीत्याशयः।

अथ तदा सरोजादिनिषेधेन वदनादिस्थापनादपह्नुतिरेवेयं भवत्वित्याह पुनर्नचेति। प्रस्तुतस्य प्रकृतस्य उपमेयस्येत्यर्थः। तथा च पह्नुतौ उपमेयस्यैव निषेधनियमादत्र तु उपमानस्यैव निषेधादुपमेयस्य चानिषेधादपह्नुते-रपि प्रसङ्गो नास्तीति भावः। पृथक् अतिरिक्तः, अयं निश्चयनाम्ना नवनिरूक्तः। चिरतनाः प्राचीनाः।

क्वचिदतिव्याप्तिमाशङ्क्य निरस्यति शुक्तिकायामिति। रजतधिया रौप्यभ्रमेण, पतति तद्ग्रहणाय गच्छति। अयमलङ्कार एतदलङ्कारविषयः वैचित्र्याभावात्, वैचित्र्यस्यैव चालङ्कारत्वादित्याशयः।

## विमला

निश्चयालङ्कारमाह, अन्यदिति।—अन्यत्—अप्रकृतम्, उपमानमित्यर्थः, निषिध्य—भिन्नत्वेनाख्याय, प्रकृतस्य—प्रस्तुतस्य, उपमेयस्येत्यर्थः, स्थापनं—तत्त्वेनावधारणं, पुनः निश्चयः।

आरोप्यमाणमिति।—आरोप्यमाणं—सादृश्यातिशयेन आरोपविषयतां नीयमानम्।

अयमपि द्विधा—क्वचिदारोप्यमाणनिषेधपूर्वकं प्रकृतस्थापनं, क्वचिच्च प्रकृतस्थापनपूर्वक आरोप्यमा-णनिषेधः। तत्र द्वितीयमुदाहरति, वदनमिति।—मधुकर!—हे भ्रमर! इदं वदनम्—आननं, सरोजं—पद्मं, न, एते नयने—चक्षुषी, न इन्दीवरे—नीलोत्पले, (तस्मात्) इह—अत्र, मुग्धदृशः,—कान्तायाः इत्यर्थः, सविधे—सन्निधौ, मुधा—निरर्थकं, मा परिभ्राम्य—न परिभ्रमणं कुरु। अत्र सरोजादिकमप्रकृतं निषिध्य प्रकृतस्य वदनादेः स्थापनम्। आद्यो यथा—"न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे।"

दृढप्रतिपत्त्यर्थं प्राचीनोदाहरणमाह, हृदीति।—विरहिण उक्तिरियम्। हे अनङ्ग! हृदि—वक्षसि, अयं—परिदृश्यमान इत्यर्थः, विसलताहारः,—मृणालहारः, न भुजङ्गमनायकः,—पन्नगपतिः, वासुकिरित्यर्थः, कण्ठे (इयं) कुवलयदलानां—नीलोत्पलपत्राणां, श्रेणी, सा—प्रसिद्धा, गरलद्युतिः,—कालकूटप्रभा, न, इदम्—अङ्गे लिप्त-मित्यर्थः, मलयजरजः,—चन्दनचूर्णं, न भस्म, (तस्मात्) प्रियारहिते—कान्तावियुक्ते, मयि हरभ्रान्त्या—शिवभ्रमेण, न प्रहर—न ताड़य, क्रुधा—कोपेन, किमु—किमर्थं, धावसि?—द्रुतमागच्छसि? अत्र भुजङ्गमनायकादीनामप्र-कृतानां निषेधः, प्रकृतानां विसलताहारादीनां स्थापनञ्च। हरिणी छन्दः, तल्लक्षणं यथोक्तं—"नसमरसला गः षड्वेदैर्हयैर्हरिणी मता" इति।

न ह्यमिति। तत्रेति।—एकाश्रयत्वेन—एकात्मवृत्तित्वेन, तथा चात्र संशयनिश्चययोर्व्यधिकरणत्वात् नायं निश्चयान्तः सन्देहः इति भावः। ननु तत्र तयोः सामानाधिकरणनियमे किं मानम्? अत आह, किं चेति।—उभयकोटिकज्ञानं हि संशयः, यदि भ्रमरादेः तादृक् संशयः स्यात्, तदा कथं समीपागमनं सम्भवेत्? निश्चित एव "इदं सरोजम्" इति ज्ञाने समीपागमनं सम्भवतीति भावः। एककोट्यनधिके इति।—एककोटिमात्रावलम्बिनि, तथा समीपागमनासम्भवात्, सन्देहप्रसङ्गायोगात् इति भावः, तर्हि—एककोटिमात्रावगाहिज्ञानकनिश्चयत्वस्वीकारे,

भ्रान्तिमान् अस्तु, भ्रान्तेर्निश्चयरूपत्वात् इति भावः। तथाविधनायकाद्युक्तेः [अप्रकृतं निषिध्य प्रकृतस्थापनात् उक्तिरत्र निश्चयः] एव, चमत्कारविधायित्वम् इत्यनेनान्वितम्। ननु सम्बोध्यभ्रान्तिं विना तथाविधोक्तेरसम्भव एव, तदस्य भ्रान्तिमूलकत्वं नियतम्;—प्रकृतेऽपि सैव चमत्कारविधायिनी, तथाविधोक्तिस्तु भ्रमव्यञ्जिकैवेत्यत आह, किञ्चेति।—पतनादाविति भ्रमव्यञ्जकोपादानम्। तस्य नियतत्वात् आह, भ्रान्तौ इति।—अविवक्षितायामिति लिङ्गव्यत्ययेनान्वयः। नायिकेति।—नायिकायाः चाट्वादिरूपेण—प्रियोक्तया रञ्जनाभिप्रायेणैव, तथाविधा—"वदनमिदम्" इत्यादिरूपा, उक्ति,—नायकवचनं, सम्भवति। रूपकध्वनिरिति।—मुखस्य—मुखादेः, कमलत्वेन—कमलत्वादिना, अनिर्द्धारणात्—अनारोपात्, प्रत्युत भिन्नत्वेन निर्णयात्। तत्र मुखे कमलत्वारोपस्य निर्द्धारणम्, अत्र तु न तथा इति भावः। पृथक्—भिन्नः। रजत धिया—रजतबुद्धया, पतति—धावति, रजतार्थं प्रवर्त्तमाने इत्यर्थः। तथा च, वस्तु सत्त्वमेव नालङ्कारत्वप्रयोजकम्, अपि तु वैचित्र्याधायकत्वमेवेति भावः।

## लक्ष्मी

ननु यथा प्रकृतं निषिध्यान्यस्थापनेनापह्नुतिर्भवति तथैव अन्यन्निषिध्य प्रकृतस्थापनेन कश्चिदन्योऽलङ्कारो भवति न वेतिजिज्ञासायां प्राचीनासम्मतमपि युक्तियुक्तत्वात् प्रसिद्धान्यालङ्कारतो भिन्नत्वाच्च निश्चयनामाभिधमभिनवं कञ्चनालङ्कारं निरूपयति—**अन्य**दिति। अत्रापह्नुतिभिन्नक्रमव्यञ्जनार्थः पुनः पदप्रयोग इत्यवगन्तव्यम्। अन्यत् वर्णनीयाद्भिन्नं प्रक्रान्तं वस्तु उपमानमित्यर्थः निषिध्य असत्यतया व्यवस्थाप्य प्रकृतस्य वर्णनप्रक्रान्तस्य उपमेयस्येतितात्पर्यम् स्थापनं सत्यतया विन्यासः निश्चयाख्योऽलङ्कारः स्यात्। प्रकृतस्य निश्चयादस्य निश्चय इत्येवं नाम। अत्रापि निषिध्येत्यत्र क्त्वाप्रत्ययार्थः पूर्वकालिकत्वमविवक्षितम्। तेन पूर्ववदेवायमपि प्रकृतस्थापनपूर्वकोऽन्यनिषेधः, अन्यनिषेधपूर्वकं प्रकृतस्थापनञ्चेति द्विप्रकारक एव।

ननु निश्चयसंज्ञकालङ्कारस्य क्वापि प्राचीनालङ्कारग्रन्थेष्वनुपलम्भात् भवदभिहितलक्षणे को नाम निश्चय इत्याशङ्कायामाह—**निश्चयाख्योऽयमलङ्कार** इति। अभिनव इति शेषः। अलङ्कारोपक्रमे कथनादित्याशयः। सन्देहायाकरणाय अन्यत्पदं व्याचष्टे—**अन्यदिति**। आरोप्यमाणं सादृश्यातिशयेन आरोपविषयतां नीयमानमुपमानमित्यर्थः।

ननु प्रकृतस्थापनपूर्वकान्यनिषेधे उदाहरणं दर्शयति—**वदन**मिति। रमणीमुखान्तिके परिभ्रमन्तं कञ्चिन्मधुकरं दृष्ट्वा कस्यचिद् विदग्धस्योक्तिरियम्। हे भ्रमर मधुकर! इदम् अवलोक्यमानं वस्तु वदनं मुखम् अस्ति, किन्तु सरोजं तव पानयोग्यमधुविशिष्टं कमलं न, तथा एते पुरोऽवलोक्यमाने वस्तुनी नयने लोचनयुगलम् इन्दीवरे नीलकमले न, अत एव मुग्धदृशः सुन्दरलोचनायाः अस्या रमण्याः इह वदननयनसम्बन्धिनि सविधे अन्तिके किं कथं मुदा हर्षेण परिभ्रमसि वदननयनयोः कमलत्वनीलोत्पलत्वाभावेन तव पानयोग्यमध्वसत्त्वादित्यभिप्रायः।

अत्र रमण्याः उपमेयभूतवदननयनस्थापनपूर्वकादुपमानभूतसरोजेन्दीवरनिषेधान्निश्चयः। एवम्—'नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः।' इत्यादावप्ययमलङ्कारो बोध्यः।

ननु भवद्भिः स्वकल्पितमेव लक्षणं लक्ष्यं च निर्माय स्थापयितुं प्रयत्यते किन्तु प्राचीनालङ्कारकृद्भिरनुल्लेखात्कथमेतस्य प्रामाण्यं स्यादित्यतोऽत्र दृढत्वप्रतिपत्तये प्राचीनोदाहरणं दर्शयितुमाह—**यथा** वेति।

उदाहरति—हृदीति। कामपीडितस्य कस्यचिद्विरहिणः सखेदोक्तिरियम्। हे अनङ्ग मन्मथ! अयं मम हृदि वक्षःस्थले विसलताहारो मृणालतन्तुनिर्मितो हारः अस्ति, किन्तु भुजङ्गमनायकः बिससदृशस्वच्छरूपः शिवह-

दिस्थित: फणिराजो वासुकिर्न, कण्ठे गलप्रदेशे विरहतापशान्त्यर्थं कुवलयदलश्रेणी नीलकमलपत्रपंक्ति:, किन्तु सा प्रसिद्धा गरलद्युति: हालाहलविषस्य श्यामरूपा दीप्तिर्न सा तु शिवस्यैव कण्ठस्थिता; तथा इदं शरीरेऽवलोक्यमानं मलयजरज: मलयगिरिसम्भूतश्वेतचन्दनधूलि:, किन्तु शिवस्य शरीरस्थं भस्म न अतो न शिवरूपतेत्यर्थ:, अत एव प्रियया रहिते वियुक्ते विरहिणीत्यर्थ: मयि हरभ्रान्त्या स्वदाहकशिवभ्रमेण प्रहरस्व बाणैर्न ताडय। तथा हरत्वाभावान्मां प्रति क्रुधा कोपेन किमु कथं प्रहर्त्तुं धावसि ताडनाय उद्यतोऽसीत्यर्थ:। **हरिणीछन्द**स्तल्लक्षणन्तूक्तमेव।

अत्रापि उपमेयभूतबिसलतादिस्थापनपूर्वकादुपमानभूतभुजङ्गमनायकादिनिषेधा-न्निश्चयाख्योऽलङ्कार:।

सम्प्रति अस्य प्रसिद्धान्यालङ्कारातिरिक्तत्वमुपपादयितुं सम्भाव्यमानेष्वन्यालङ्कारेषु सन्देहालङ्कारस्यैव प्राथम्यात् प्रथमं तदतिरिक्तत्वमेवोपपादयति—**नहीति**।

अयमभिनवो निश्चितो निश्चयाख्योऽलङ्कार:। 'वदनमिदं न सरोजम्' इत्यादौ निश्चयस्य विद्यमानत्वात् मध्ये निश्चयस्य विद्यमानत्वाच्च शुद्धनिश्चयगर्भरूपयो: सन्देहालङ्कारभेदयो: सम्भवाभावादाह—**निश्चयान्त: सन्देह** इति। मुखे मधुकरस्य कमलसंशयं वक्तुश्च मुखनिश्चयमादाय निश्चयान्तसन्देहालङ्कारो नहीत्यर्थ:। तत्र सन्देहालङ्कारे। एकाश्रयत्वेन एकात्मवृत्तित्वेन अवस्थानात् अवस्थाननियमात्। अत्र तु 'वदनमिदं न सरोजम्' इत्यादौ तु। तथाचात्र संशयनिश्चययो: सामानाधिकरण्येनावस्थानाभावान्न निश्चयान्त: सन्देह इत्यभिप्राय:।

ननु संशयनिश्चययो: निश्चयान्तसन्देहालङ्कारे सामानाधिकरण्येनावस्थाननियमे मानाभावात् 'वदनमिदम्' इत्यादावुक्तालङ्कारत्वोपगमेनैव निर्वाहेऽतिरिक्तनिश्चयालङ्कारो नाङ्गीकरणीय इत्यत आह—**किञ्चेति**। कथञ्चिदपि वक्तृनायकादेर्न संशय: परन्तु भ्रमरादेरपि न संशय इत्यर्थ:। आदिशब्देन अनङ्कविप्रभृतीनां परिग्रह:। एककोट्यधिके कोटिद्वयावगाहिनि वदनसरोजोभयविषयके ज्ञाने, तथा समीपगमनासम्भवात् वदननयनयोरत्यन्त समीपे तस्य भ्रमरस्य गमनसम्भवाभावात्; तथा च न खलु 'इदं वदनं सरोजं वा' इति सन्दिहानो मधुपानेच्छुर्भ्रमरस्तस्यात्यन्तनिकटं प्राप्नोति, न च 'अत्यन्तपिपासु: कश्चित् मृगमरीचिकासु जलं मरीचिका वा' इति संशयानस्तत्समीपमुपैति अभिलषितमनोरथलाभनिश्चयाभावेन गमनप्रयासाङ्गीकारसम्भवाभावात्, परन्तु सरोजमेवेदमित्यादिसन्देहवशेनैव तत्समीपे तस्य गमनाङ्गीकारसम्भवादित्याशय:।

नन्वेवमपि वदने 'सरोजमेवेदम्' इत्यादिभ्रमरादिभ्रान्तेरङ्गीकाराद्भ्रान्तिमानलङ्कारएवास्तामित्याशङ्क्ते—**तर्हीति**। वदनादौ भ्रमरादीनां सरोजादिभ्रान्तेरेव स्वीकार इत्यर्थ:। **भ्रान्तिमानस्त्विति**। भ्रान्तेर्निश्चयरूपत्वादभ्रमरादेस्तदन्तिकगमनसम्भवाच्चेतिभाव:। समाधत्ते—**अस्त्विति**। नाम यथेष्टम्। एवं केवलभ्रान्तिसत्त्वेनात्र भ्रान्तिमदङ्कार इत्याह—**नचेति**। इह भ्रमरादावित्यर्थ:, तस्या भ्रान्ते:, चमत्कारविधायित्वं, वैचित्र्याधायकत्वम्, अपि तु किन्तु तथाविधा वदनमिदमित्यादिरूपा या वक्तृनायकाद्युक्तिस्तस्या एव चमत्कारविधायित्वमितिपूर्वत: सम्बध्यते। नायिकातुष्टिकरत्वात् कुतूहलसूचकत्वाच्चेतिभाव:। अतएव तादृशभ्रान्तिमाश्रित्य भ्रान्तिमलङ्कारो भवितुं नार्हति चमत्कारविधायिन एवालङ्कारत्वस्वीकारादित्याशय:।

ननु सम्बोध्य भ्रान्तिं विना तथाविधोक्तेरसम्भव एव। एवञ्चास्य भ्रान्तिमूलकत्वं निश्चितम्, तथाच्च प्रकृते सैव चमत्कारविधायिनी, तथाविधोक्तिस्तु भ्रमव्यञ्जिकैवेत्यत आह—किञ्चेति। अविवक्षितेऽपि नायकेनेति शेष:। भ्रमरादेरित्यादिशब्देन द्वितीयपद्योक्तानङ्गादे: परिग्रह:। पतनादौ वदनोपरि पतने आदिशब्देन तदनङ्गकृतप्रहारादे: परिग्रह:। भ्रान्तौ वेति अविवक्षितायामित्यनेनान्वितम्। नायिकायाश्चटूवादि: प्रियभाषणादिस्तद्रूपेण

अत्रादिशब्देन स्ववेदनातिशयप्रकाशादीनां परिग्रहः। तथाविधा 'वदनमिदम्' इत्यादिरूपा 'हृदि विलसिताहारः' इत्यादिरूपा च उक्तिर्निश्चयः। तथा च नायिकाया वदननयनयोः सरोजेन्दीवरसमानत्वबोधकतया अत्यन्ततुष्टिकरत्वात् 'वदनमिदं न सरोजम्' इत्यादिरूपा, स्वीयकामवेदनाधिक्यबोधकत्वाच्च 'हृदि विलसिताहार' इत्यादिरूपा चोक्तिः सम्भवितुमर्हतीति तदीयचमत्कारस्यावश्यम्भावात् निश्यालङ्कारोऽपि नूनमेव स्यादितिभावः।

नन्वेवं सन्देहाद्यलङ्काराणामसम्भवेऽपि वदनादौ सरोजत्वाद्यारोपाणां व्यञ्जनयाऽवगमाद् रूपकध्वनिरेवायमित्यङ्गीक्रियतामत आह—**नचेति**। रूपकध्वन्यभावे हेतुं दर्शयति—**मुखस्येति**। कमलत्वेन उपलक्षणेन विरहिणो हरत्वेन चेत्यर्थः, अनिर्द्धारणादनिर्णयात्। तथा च रूपके 'मुखकमलम्' इत्यादौ बोद्धारो मुखादीन् पद्मादिरूपत्वेन निश्चिन्वन्ति, अत्र तु तन्निश्चयो दूर एव तिष्ठतु प्रत्युत न सरोजमित्यादिप्रतिपादनात् सरोजाद्यतिरिक्तत्वे नैव वदनादीन् निश्चिन्वतीति न रूपकलेशोऽपीतिभावः।

ननु तर्हि सरोजादिनिषेधेन वदनादिस्थापनादपह्नुत्यलङ्कार एवास्तामित्यत पुनराह—न चेति। प्रस्तुतस्य प्रक्रान्तस्य उपमेयस्येतितात्पर्यम्। तथा च अपह्नुत्यलङ्कारे उपमेयस्यैव निषेधनिश्चयात् अत्र तु उपमानस्यैव निषेधादुपमेयस्य च निषेधाभावादपह्नुत्यलङ्कारस्य सम्भवो नेति भावः। पृथक् भिन्नः, अयं निश्चयाख्योऽभिनवोक्तः चिरन्तनैः प्राचीनैः काव्यप्रकाशकारादिभिः।

प्रायशः सर्वेषामेवालङ्काराणामाहार्यारोपबुद्धिविषयत्व एवालङ्कारान्तरत्वं न तु वास्तविकत्व इत्याशयेनाह—**शुक्तिकायामिति**। रजतधिया रजतमिदमिति भ्रमेण। पतति तल्लाभाय गच्छति सतीत्यर्थः। अयं निश्चयाख्यः। वैचित्र्याभावात् वैचित्र्यस्यैवालङ्कारत्वादिति भावः।

## रुचिरा

एवमपह्नुतिं निरूप्य निश्चयं लक्षयति—११७ **अन्यत्** अप्रकृतमुपमानमिति यावत्। **निषिध्य**। **प्रकृतस्थापनं** प्रकृतस्योपमेयस्य स्थापनम्। **पुनः** (इदमपह्नुतेर्भिन्नक्रमद्योतनार्थम्) **निश्चयस्तदाख्योऽलङ्कारः**। अयम्भावः—अपह्नुत्यां यथोपमेयनिषेध उपमानारोपः, तथा यत्रोपमाननिषेध उपमेयस्थापनं स प्रकृतदृढकरणहेतुकतया निश्चयनामाऽलङ्कारः॥ ९२॥

सन्देहापकरणाय निश्चयपदं व्याचष्टे—**निश्चयाख्य** इत्यादिना। स्पष्टम्।

अन्यतपदं व्याचष्टे—**अन्यदित्य** 'स्ये'ति शेषः। **आरोप्यमाणमुपमानम्**। इत्यर्थः।

उदाहरति—**यथा**। **मम**। **'हे मधुकर! इदम्**। **वदनं** मुखम्। **सरोजं** कमलम्। **न**। **एते**। **नयने नेत्रे**। **इन्दीवरे** नीलकमले। न। **इहास्मिन्** प्रदेशे। **मुग्धदृशो** मुग्धे लज्जया नशिते दृशौ यस्यास्तस्याः। **सविधे** समीपे। **मुधा** व्यर्थम्। **न**। **परिभ्राम्य** परिभ्रम। अत्र कान्तायाः मुखस्य नयनयोश्चोपमेयभूतानां सादृश्यातिशयेन कमलेन्दीवरैः प्रतीयमानमभेदं निषिध्य स्थापनमिति निश्चयाख्योऽयम्। आर्याछन्दः॥ १३५॥

उदाहरणान्तरं दर्शयति—**यथा वा**। 'हे **अनङ्ग**कामदेव !**हृदि** वक्षसि। **बिसलताहारो** मृणालतन्तुनिर्मितो हारः। **अयम्**। **भुजङ्गमनायकः** फणिराजो वासुकिः। **न**। **कण्ठे**। **कुवलयदलश्रेणी** कुवलयस्य दलानि पत्राणि तेषां श्रेणी माला। 'इय'मिति शेषः। **सा**। **गरलद्युतिर्गरलस्य** द्युतिः। **न**। **इदम्**। **मलयजरजो** मलयगिरिसम्भूतस्य चन्दनस्य रजः। **भस्म** विभूतिः। न। **प्रियारहिते** विरहिणि। **मयि**। **हरभ्रान्त्या** स्वदाहकभ्रमेण। **न**। **प्रहर**। **किमु**।

**क्रुधा** कोपेन। **धावसि** प्रहर्तुमुद्यतसे। अत्र हरिणीछन्दः। भुजङ्गमनायकादीन्निषिध्य बिसलताहारादीनां स्थापनात् निश्चयः॥ १३६॥

एवमुदाहृत्यास्यालङ्कारतो व्यवच्छेदं दर्शयति—**अयं** निरुक्तलक्षणो निश्चयालङ्कारः। **निश्चयान्तस्त**त्रभेदः। **सन्देहस्त**न्नामालङ्कारः। **नहि** नैवेत्यर्थः। हेतुं निर्दिशति—**तत्र** तस्मिन् सन्देहालङ्कारे। **संशयनिश्चययोः**। **एकाश्रयत्वे**नैकाधिरणकत्वेन। **अवस्थानात्**। अत्र निश्चयालङ्कारे। **तु**। **भ्रमरादेः**। आदिना कामदेवादेग्रहणम्। **संशयः**। **नायकादेः**। आदिना कविप्रभृतीना ग्रहणम्। **निश्चयः**। ननु भ्रमरादेः संशयमूलक एव सोऽस्तु इत्याशङ्क्योक्तमर्थमाक्षिपति—**किञ्च**। **भ्रमरादेः**। **अपि**। **संशयः**। **न**। हेतुं निर्दिशति-**एककोट्यधिके** एका कोटिर्विषयस्तस्या अधिकं तत्र, उपचारात्तदवगाहिनीत्यर्थः। अनेककोटिके इत्यर्थः। 'एककोट्यनधिके' इति पाठस्तु न साधीयान्। **ज्ञाने**। **तथा**। **समीपगमनासम्भवात्**। संशयो हि अनेककोटिकं ज्ञानम्, तत्सत्त्वे च मधुकरादेर्वदनसरोजयोरुभयोरेव समीपे भ्रमणं युक्तम्, तयोरेकतरस्य सरोजत्वेनानिश्चयात्, अत्र तु वदनादेः सविधे स्पष्टं गमनमभिहितमिति नायं संशय इति भावः। आशङ्कते-**तर्हि**। **भ्रान्तिमान्**। अस्तु 'भ्रान्तिमुपजीव्यैवास्य प्रवृत्तत्वा' दिति शेषः। उत्तरयति—**अस्तु**। **नाम** यथेष्टम्। **भ्रमरादेः**। **भ्रान्ति**। एवं भ्रान्तिमात्रसत्त्वे न भ्रान्तिमानत्रेत्याह--**नच**। **इह** भ्रमरादौ। **तस्या** भ्रान्तेः। **चमत्कारविधायित्व**मलङ्कारत्वाधायकत्वम्। **अपितु** किन्तु। **तथाविधनायकाद्युक्तेस्तथाविधो** विरहिसदृशोऽसौ नायकादिस्तस्योक्तिः तस्याः, यद्वा-तथाविधाया नायकाद्युक्तिस्तस्याः। **एव**। 'चमत्कारविधायित्व'मिति पूर्वतोऽन्वेति। **इति**। **सहृदयसंवेद्यम्**। ननु तथाविधोक्तिस्तु भ्रान्तिव्यञ्जिकैवेत्यत आह—**किञ्च**। **भ्रमरादेः**। **पतनादौ** वदनोपरि पतने विरहिणं प्रति धावने वा। **अविवक्षिते**। **अपि**। **भ्रान्तौ**। **वा**। 'अविवक्षिताया' मिति शेषः। भ्रमरादेर्वदनाद्यु परिपतनादौ विरहिप्रभृतीन् प्रति वा धावनादौ अविक्षितेपि तथा भ्रान्ताविवक्षितायामपीति भावः। **नायिकाचाट्वादिरूपेण** नायिकायाश्चाट्वादिः प्रियताऽऽपादनादिस्तद्रूपेण। **एव**। **तथाविधा**। **उक्तिः**। **सम्भवति**। ननु रूपकं ध्वन्यमानमस्तु नामेत्याशङ्क्योत्तरयति—**नच**। **अयम्**। **रूपकध्वनिस्तद्रूप** इति भावः। हेतुं निर्दिशति—**मुखस्य**। **कमलत्वेन**। उपलक्षणेन विरहिणो हरत्वेन चेत्यर्थः। **अनिर्धारणात्**। **नच**। **अपह्नुतिः**। **प्रस्तुतस्योपमेयस्य**। **अनिषेधात्**। **इति** इत्थम्। **अयम्**। **चिरन्तनोक्तालङ्कारेभ्य**श्चिरन्तनाः प्रकाशकारादयस्तैरुक्ता ये अलङ्कारास्तेभ्यः। **पृथक्**। **एव**। **अलङ्कारः**। उपस्कारकत्वस्यैवालङ्कारत्वमिति पुनः प्रकृते दर्शयति—**शुक्तिकायाम्**। **रजतधिया** रजतमिदमिति भ्रमेण। **पुरुषे**। **पतति** लब्धुमिच्छति सतीति भावः। शुक्तिका। **इयम्**। **रजतम्**। **न**। **इति**। **कस्यचित्**। **उक्तिः**। **अयं** निश्चयाख्यः। **अलङ्कारः**। न। **वैचित्र्याभावात्**। वैचित्र्यं हि उपस्कारकत्वापरनामधेयमलङ्कारत्वाधायकं भवति, अतोऽस्याभावात्। इदमवसेयम्—अपह्नुतिवदस्यापि अपह्नवपूर्वकत्वादारोपपूर्वकत्वाच्च भेदद्वयम्, तत्राद्य उदाहृतः, द्वितीयो यथा ममः—'कमलं न, किन्तु वदनं, न विकासः किन्तु सुस्मितं तन्व्याः। नेमे त्वदीयगोष्ठी, भ्रुकुटी किमले मुधोपैषि॥' इति। यदेनमेव भ्रान्त्यपह्नुतिमन्ये प्राहुः, तन्न रुचिरम्, 'न चापह्नुतिः प्रस्तुतस्यानिषेधात्' इत्यनेन प्रथममेव तद्भ्रमस्यापकरणात्। न चाविषयैव भ्रान्त्यपह्नुतिरास्तामिति वाच्यम्' न वदनमेतत् कमलं, न मन्दहसितं, तदीयमुत्स्फुरणम्। 'मधुकर! किमिति विमुग्धो भ्रमसि परस्यान्तिकं भूयः॥' इत्यादौ तद्विषयावशेषात् कमलं नायिकाया वदनमिदमिति भ्रमेणापहाय तत्रैवावगाहमानायाःकस्याश्चित् ततोऽपि सुन्दरं मुखं समुपव्रजन्तं मधुकरं प्रति तत्त्वज्ञस्य कस्यापि कवेरुक्तिरियम्। न चात्रापि निश्चय एवास्तु इति वाच्यम्, उपमेयं निषिध्योपमानस्यात्र स्थापनात्। न चारोप्यमाणत्वेन वदनादेरेवोपमानता स्वीक्रियतामिति, प्रसिद्ध्यनुरोधेन वदनादेरुपमेयतया कमलादेरुपमानतयैव चाङ्गीकर्त्तुमौचित्यात्। प्रसिद्ध्यनुरोधापहानौ व्यतिरेकादौ विच्छित्तेर्मूलोच्छेदापाताच्च। इति।

**भवेत्संभावनोत्प्रेक्षा प्रकृतस्य परात्मना।**
**वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता॥ ४०॥**
**वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः।**
**जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि॥ ४१॥**
**तदष्टधापि प्रत्येकं भावाभावाभिमानतः।**
**गुणक्रियास्वरूपत्वान्निमित्तस्य पुनश्च ताः॥ ४२॥**
**द्वात्रिंशद्विधतां यान्ति—**

---

## विवृतिः

उत्प्रेक्षालंकारमाह—**भवेदिति**। संभावना उत्कटैककोटिकः संशयः। **प्रकृतस्य** उपमेयस्य। **परात्मना** उपमानरूपेण। तादात्म्यसंबन्धलाभायात्मपदोपन्यासः। प्रकारत्वं तृतीयार्थः, तथा च तादात्म्यसंसर्गकोपमानप्रकारकोपमेयविशेष्यकोत्कटैककोटिकः संशयः उत्प्रेक्षेत्यर्थः। संदेहालंकारवारणाय उत्कटैककोटिक इति। रूपकभ्रान्तिमदतिशयोक्तीनां निश्चयरूपत्वासंशयपदेन वारणम्। उपमानं च क्वचित्संभवि क्वचित्प्रौढोक्तिसिद्धम।

आद्यं यथा—'गुणा गुणानुबन्धित्वात्' इति। अत्र प्रसवपदार्थः संभवत्येव।

**निमित्तस्य** संभावनाजनकज्ञानविषयसाधारणधर्मस्य। **ता** उत्प्रेक्षाः॥

## विवृतिपूर्तिः

**उत्प्रेक्षेति**। उत् उर्ध्वं गता प्रेक्ष दृष्टिः प्रतिभा वा यस्यां सोत्प्रेक्षा। वितर्कयतः प्रेक्षा हि प्रायेणोक्तविधा जायत इति॥

**द्वात्रिंशदिति**। वाच्या प्रतीयमाना चेत्युत्प्रेक्षा द्विविधा। इवादिप्रयोगे वाच्या, तदभावे प्रतीयमाना। तत्र जातिगुणक्रियाद्रव्याणामप्रकृतानामध्यवसेयता चतुर्विधा। तेषां च प्रत्येकं भावाभावाभिमानरूपतया द्वैविध्येनाष्टविधा। भेदाष्टकस्य च प्रत्येकं निमित्तस्य गुणक्रियारूपत्वे षोडश भेदाः। तेषां च प्रत्येकं निमित्तस्य पुनरुपदानानुपानाभ्यां द्वात्रिंशदिति॥

## विज्ञप्रिया

उत्प्रेक्षालङ्कारमाह—**भवेदिति**। प्रकृतस्य परात्मनाऽप्रकृत—तादात्म्येन सम्भावनमुत्कटकोटिकः संशय इत्यर्थः। तेनानुत्कटकोटिकसन्देहनिश्चययोः रूपकादौ च नातिप्रसङ्गः।

अस्या विभक्तविभागबाहुल्येन षट्सप्तत्युत्तरैकशतविधतां पर्यवस्थापयितुमादौ द्वैविध्यमाह—**वाच्येति**। प्रतीयमाना चात्र न व्यङ्ग्या, तदा उत्प्रेक्षाध्वनित्वापत्तेः, यथा दर्शयिष्यमाणे महिलासहस्रेत्यादौ, किन्तु अध्याह्रियमाणा इत्येवेत्यर्थः। परा अध्याह्रियमाणा द्वयोरपीति वाच्योत्प्रेक्षायामध्याह्रियमाणोत्प्रेक्षायां चेत्यर्थः।

तेन जात्यादिचतुष्कोत्प्रेक्षा वाच्या अध्याह्रियमाणा च इत्यष्टधेत्यर्थः। जात्यादिचतुष्काभावोत्प्रेक्षाप्येवमष्टधेत्याह—**तदष्टधापीति**। भावस्य जात्यादिभावचतुष्कस्य प्रत्येकमभावाभिमानतोऽभावोत्प्रेक्षणादपि तदष्टधा तस्या उत्प्रेक्षायाः अष्टधा अष्टप्रकारभाव इत्यर्थः। अपिकारस्य दर्शितरीत्या भिन्नक्रमेण योजना। एवं च जात्यादिभावोत्प्रेक्षाष्टकं तदभावोत्प्रेक्षाष्टकं चेति षोडशप्रकाराः षोडशत्वानुक्तावपि पर्य्यवसिताः, तद्द्वैगुण्येन द्वात्रिंशत्वमाह—**गुणक्रियते**। निमित्तस्य उत्प्रेक्षाया हेतोर्गुणक्रियास्वरूपत्वात् ताः षोडशविधाः उत्प्रेक्षाः पुनर्द्वात्रिंशद्विधतां यान्तीत्यर्थः। ते वाच्यप्रतीयमानत्वभेदादष्टौ जात्यादिभावोत्प्रेक्षा अष्टौ च तदभावोत्प्रेक्षाश्च इति षोडशैव गुणक्रियाहेतुवत्त्वेन द्वैगुण्याद् द्वात्रिंशदित्यर्थः। हेतुश्च उत्प्रेक्षाजनकः।

## लोचन

एवमभेदप्राधान्येनारोपगर्भालङ्कारान् लक्षयित्वाऽध्यवसायगर्भान् लक्षयति—**भवेदिति**। प्रकृतस्य सम्भविनो वर्णनीयस्य परः सदृशतयोपकल्पितः। अर्थाद् असम्भवी योऽर्थः तदात्मना तत्स्वरूपेण सम्भावना। मिथ्याज्ञानविशेष उत्प्रेक्षालङ्कार इत्यर्थः।

## कुसुमप्रतिमा

प्रकृतस्थापनात्मकनिश्चयालङ्कारनिरूपणादनन्तरं निश्चयात्मकालङ्कारान्तरे जिज्ञासीदयात् कथञ्चिन्निश्चयात्मकमुतप्रेक्षालङ्कारं निरूपयति भवेदिति। अत्र सम्भावना नाम द्वयोरंशयोरेकतरस्मिन्नंशे कथमपि दृढ़ं ज्ञानम्। यथा—"सम्भावयामि स्थाणुरेवायम्" इति। अत्र हि केनापि कारणेन ज्ञानस्य स्थण्वंशे दृढ़ता पुरुषांशे तु दुर्बलता। अतएव सम्भावना, अंशविशेषे किञ्चिन्निश्चयरूपः समुदाये तु स शयविशेष एव। शुद्धसंशयस्तु द्वयोरेवांशयोः समानबलमेव ज्ञानम्। यथा—"स्थाणुर्वा पुरुषो वा" इति। अत्र हि ज्ञानस्य स्थाणवंशे पुरुषांशे च समानबलतैन। तेन सम्भावनम्, मनसि करणम्, मननम्, धारणा, धारणा इत्यादयः सम्भावनायाः पर्य्यायाः। तथा च प्रकृतस्य वर्णनायां प्रस्तुतस्य उपमेयस्येति तात्पर्य्यम्, परात्मना तद्भिन्नभावेन उपमानरूपेणेत्यर्थः सम्भावना मनसि करणम् उत्प्रेक्षा नामालङ्कारो भवेत्। उत् उर्द्धदिग्गामिनी प्रेक्षा दृष्टिर्यस्यां सा उत्प्रेक्षा। यं कञ्चिदपि पदार्थं सम्भावयती जनस्य हि दृष्टेः प्रायेणोर्हुगमनदर्शनादीदृशी नाम व्युत्पत्तिरित्यवधेयम्।

एतेन उपमेयस्योपमानरूपेण सम्भावना उत्प्रेक्षेति लक्षणनिष्कर्षः।

उपमायामुपमानपदार्थस्य वास्तविकतया निरुक्तसम्भावनाया अभाव एव, इह तूपमानपदार्थस्य अवास्तविकतया तादृशसम्भावनायाः सद्भाव एवेति भेदः। अतएवास्या अभूतोपमेति ग्रन्थान्तरे नामान्तरम्, "चन्द्र इव मुखम्" इत्यादौ च नातिव्याप्तिः। रूपके आरोपस्य, भ्रान्तिमति भ्रमस्य, अतिशयोक्ताध्यवसायस्य च निश्चयरूपताः, इह तु सम्भावनायाः संशयरूपता। किञ्च, रूपकं सारोपाख्यलक्षणामूलम्, अतिशयोक्तिश्च साध्यवसानाख्यलक्षणामूला, इयन्तु न लक्षणामूला। सन्देहः केवलसंशयरूपः इदन्तु सम्भावनात्मकसंशयरूप इत्येते भेदाः समुन्नेयाः। ग्रन्थकारस्तु अन्यथैव भेदान् दर्शयिष्यति। अतएव रूपकादिष्वपि नातिव्याप्तिः।

एवं लक्षयित्वोत्प्रेक्षां विभजते वाच्येति। वाच्या शाब्दौ प्रतीयमाना आर्थी इत्येवं सा उत्प्रेक्षा प्रथमं द्विविधा मता। तत्र इवादीनां वक्ष्यमाणानां वाचकानां शब्दानां प्रयोगे वाच्या स्यात्, इवादीनामप्रयोगे पुनः परा प्रतीयमाना स्यात्। यद्यस्मात् द्वयोरपि वाच्यप्रतीयमानयोरुत्प्रेक्षाभेदयोर्विषये जातिर्जातिविशिष्टो यः कश्चिदर्थः गुणः, क्रियः, द्रव्यञ्च, एतत् सर्वमेव उत्प्रेक्ष्यमुत्प्रेक्षणीयं सम्भावनीयं सम्भवति; तत्तस्मात् एतावता समुदायेनोत्प्रेक्षा अष्टधा

अष्टप्रकारा स्यात्। चतुर्णां द्वैगुण्येन अङ्गानां सम्भवात्। अपि च तेषामष्टानामेव प्रकाराणां प्रत्येकमेव प्रकारः भावाभावयोरभिमानतः जात्यादानां चतुर्णां प्रत्येकमेव भावरूपाणां सम्भावनया तेषाञ्च प्रत्येकमेवाभावसम्भावनया च द्विधा द्विधा भवतीति समुदायेनैतावता षोड़शप्रकारा उत्प्रेक्षाः। ताश्च पुनः षोड़शप्रकारा उत्प्रेक्षाः, निमित्तस्य उत्प्रेक्षणकारणस्य गुण क्रियास्वरूपत्वात् गुणस्वरूपत्वात् क्रियास्वरूपत्वाच्च प्रत्येकप्रकारस्यैव द्वैविध्येन समुदायेन द्वात्रिंशद्विधतां यान्ति प्राप्नुवन्ति।

## विमला

तत्रेति। तासु द्वात्रिंशद्विधासु उत्प्रेक्षासु मध्ये इत्यर्थः। दिङ्मात्रमेकैकमात्रम्।

उत्प्रेक्षाऽलङ्कारमाह, भवेदिति।—प्रकृतस्य—प्रस्तुतस्य, उपमेयस्येत्यर्थः, परात्मना—अप्रकृतस्वरूपेण, उपमानरूपेण इति यावत्, (तादात्म्यसम्बन्धलाभायात्मपदोपन्यासः, प्रकारत्वं तृतीयार्थः) सम्भावना—उत्कटैककोटिकः संशयः इत्यर्थः, उत्प्रेक्षा—उत्—ऊर्ध्वं प्राप्ता, प्रेक्षा—दृष्टिः प्रज्ञा वा यस्यां सा तथाविधा, भवेत्। संशयापन्नस्य दृष्टिः प्रायः तथाविधा भवतीति ज्ञेयम्। तथा च—तादात्म्यसंसर्गकोपमानप्रकारकोपमेयविशेष्यकोत्कटैककोटिकः संशयः उत्प्रेक्षेत्यर्थः; सन्देहालङ्कारवारणाय उत्कटैककोटिक इति, रूपकभ्रान्तिमदतिशयोक्तीनां निश्चयरूपत्वात् संशयपदेन वारणम्, उपमानञ्च क्वचित् सम्भवि क्वचित् प्रौढ़ोक्तिसिद्धम्। आद्यं यथा—"गुणा गुणानुबन्धित्वात्" इति; अत्र प्रसवपदार्थः सम्भवत्येव। द्वितीयं यथा—"ऊरुः" इत्यादि; अत्र सुरतेच्छारूपस्मरस्य कनकमयविजयस्तम्भः शशविषाणवदलीकः प्रौढ़ोक्त्यैव सिद्धः। प्रथमं सा—उत्प्रेक्षा, वाच्या प्रतीयमाना च इति द्विविधा—द्विप्रकारा, मता—कथिता, इवादीनाम्—उत्प्रेक्षावाचकानामित्यर्थः, प्रयोगे—व्यवहारे, वाच्या, अप्रयोगे, इवादीनामिति शेषः, पुनः परा—प्रतीयमाना इत्यर्थः, स्यात। यत्-यस्मात् द्वयोः, वाच्यप्रतीयमानयोः, जातिः— जातिवाचकपदप्रतिपाद्योऽर्थः, गुणः क्रिया द्रव्यं (गुणादीनामपि जातिशब्दवदर्थो बोध्यः) एतच्चतुष्टयम् उत्प्रेक्ष्यं— सम्भावनीयं, तत्-तस्मात्, अष्टाधाऽपि— वाच्यप्रतीयमानयोः प्रत्येकं जात्यादिचतुष्टयोत्प्रेक्ष्यत्वेन अष्टप्रकाराऽपि, सा भावाभावाभिमानतः,—भावाभिमानेन—जात्यादिरूपभावसम्भावनेन, अभावाभिमानेन च—जात्यादिप्रतियोगिकाभावसम्भावनेन च, प्रत्येकं द्वैविध्यात् षोड़शधा इत्याशयः; पुनश्च ताः,—षोड़शप्रकाराः उत्प्रेक्षाः, प्रत्येकं निमित्तस्य—उत्प्रेक्षाकारणस्य, सम्भावनाजनकज्ञानविषयसाधारणधर्मस्य इति यावत्, गुणक्रियास्वरूपत्वात्—कुत्रचित् गुणस्वरूपत्वात्, कुत्रचित् क्रियास्वरूपत्वात्, द्वैविध्येन द्वात्रिंशद्विधतां यान्ति—द्वात्रिंशद्भेदा भवन्ति। अत्रैवं बोध्यं, तथा हि, प्रथमं वाच्या प्रतीयमाना च इति द्वौ भेदौ, तत्र इवादिप्रयोगे वाच्या, तदप्रयोगे प्रतीयमाना; तत्रापि वाच्या जातिगुणक्रियाद्रव्याणाम् अप्रस्तुतानां निश्चेयत्वेन चतुःप्रकाराः तेषाच्च प्रत्येकं भावाभावाभिमानरूपत्वेन द्वैविध्यादष्टप्रकारत्वम्; अष्टप्रकारस्य च प्रत्येकं निमित्तस्य गुणक्रियारूपभेदाभ्यां षोडश प्रकारा; तेषाञ्च षोडशप्रकाराणां प्रतिभेदं निमित्तस्य पुनरुपादानानुपादानमूलत्वेन द्वैविध्ये द्वात्रिंशत् प्रकाराः इति।

## लक्ष्मी

एवं प्रकृतस्थापनस्वरूपं निश्चयालङ्कारमुपपाद्य निश्चयस्वरूपालङ्कारान्तरे जिज्ञासोदयात् यथा कथञ्चिन्निश्चयस्वरूपमुत्प्रेक्षालङ्कारमुपपादयति—**भवेदिति**। प्रकृतस्य सम्भविनो वर्णनीयस्य उपमेयस्येत्यर्थः, परः सदृशतयोपकल्पितः अर्थात् असम्भवीयोऽर्थस्तदात्मना तत्स्वरूपेण सम्भावना उत्प्रेक्षा उत् ऊर्ध्वं गता प्रेक्षा दृष्टिः

प्रतिभा च यस्यां सोत्प्रेक्षा। यं कञ्चित्पदार्थं विसम्भावयत: प्रेक्षा हि प्रायेणोक्तरूपा भवतीत्यत एतादृशी नामव्युत्पत्ति:। अत्र सम्भावना च उत्कटैककोटिक: संशय:, संशये हि कोटिद्वयं वर्त्तते यथा—'अयं स्थाणु: पुरुषो वा' 'इत्यादावेका कोटि: स्थाणोर्विधानरूपा, अपरा च 'पुरुषो वा' इति पुरुषस्य पुनर्विधानरूपा। 'अयं पुरुषो न वा' इत्यादौ च प्रथमा कोटि: पुरुषस्य विधानरूपा द्वितीया पुन: 'न वा' इति पुरुषस्य निषेधरूपा। यस्मिन् संशये कोटिद्वयमध्ये एकस्या: कोटे: उत्कटत्वं (निश्चितप्रायत्वं न तु निश्चय:) सैव (आद्या) संशयस्य कोटि: सम्भावनापदव्यपदेश्या, यथा—प्रायेण पुरुषोऽयं भवेदिति सादृश्यात् उपमेयस्य वर्णनीयस्य उपमानत्वेन सम्भावना। तथा च उपमेयस्योपमानतया निश्चितप्राया सम्भावनोत्प्रेक्षेति फलितम्। दोलायमानाया अपरस्या: कोटेर्निश्चितप्रायत्वेन निरास:। अत्र च संशयस्योत्कटैककोटिकतया सन्देहालङ्कारे नातिव्याप्ति:। रूपकभ्रान्तिमदतिशयोक्तिषु आरोपभ्रमाध्यवसायानां निश्चयरूपत्वात् संशयपदेन वारणम्। उपमायामुपमानपदार्थस्य वास्तविकतयानिरुक्तसम्भावनाया अभाव एव, अत्र तूपमानपदार्थस्य अवास्तविकतया तथाविधसम्भावनाया विद्यमानत्वमेवेतिभेद:। उपमानं च क्वचित्सम्भावि, क्वचित्प्रौढोक्तिसिद्धम्। आद्यं यथा—'गुणा गुणानुबन्धित्वात्तस्य सप्रवसवा इव।' अत्र प्रसवपदार्थ: सम्भवत्येव।

इत्यादौ नोत्प्रेक्षात्वप्रसङ्ग:। रमणीयसाधारणधर्मनिबन्धना प्रतिभोत्थापितैव हि सम्भावना चमत्कारोतीति सैवालङ्कार:।

पुनरपि तद्द्वैगुण्यमुपपादयति—**गुणक्रियेति।** ताश्च पुन: षोडशप्रकारा उत्प्रेक्षा:, निमित्तस्य उत्प्रेक्षणकारणस्य गुणक्रियास्वरूपत्वात् गुणस्वरूपात्वात् क्रियास्वरूपपत्वाच्च प्रत्येकप्रकारस्यैव द्विप्रकारकत्वेन समुदायेन द्वात्रिंशद्विधतां यान्ति सम्पद्यन्ते। इत्थञ्च उत्प्रेक्षा तावत् द्विविधा, वाच्या प्रतीयमाना चेति। इवादिप्रयोगे वाच्या तेषामप्रयोगे पुन:प्रतीयाना। एवं द्विविधाऽप्येषा जातिगुणक्रियाद्रव्याणामप्रकृतानामध्यवसेयतया प्रत्येकं चातुर्विध्येनाष्टविधा, अष्टविधाऽपि प्रत्येकं भावाभावाभिमाने च द्विविधा सती षोडशप्रकारा, तादृश्यपि निमित्तस्य जातिक्रियास्वरूपत्वेन च द्विधा भिद्यमाना द्वात्रिंशद्विधेतिसरलार्थ:।

एवं द्वात्रिंशद्विधाया एतस्या: पृथगुदाहरणप्रदर्शने ग्रन्थगौरवभयमाशङ्कयाह—तत्रेति। तासु द्वात्रिंशद्विधासु उत्प्रेक्षासु मध्य इत्यर्थ:। दिङ्मात्रमेकैकमात्रमित्यर्थ:।

## रुचिरा

उत्प्रेक्षां लक्षयति—**११८ प्रकृतस्य** प्रस्तुतस्य स्वरूपेणावस्थितस्येति यावत्। **परात्मना**ऽप्रस्तुतरूपेण। **सम्भावना। उत्प्रेक्षा** तन्नामाऽलङ्कार:। **भवेत्।** अयम्भाव:—उत्कटा प्रकृष्टस्य (उपमानस्य) ईक्षा ज्ञानमित्युत्प्रेक्षापदस्यार्थ:। सम्भावना चोत्कटकोटिक: संशय:। प्रकृतं यदधिकृत्य वर्ण्यते तदुपमेयमिति भाव:। परमुत्कृष्टमुपमानं तस्यात्मा स्वरूपमिति परात्मशब्दार्थश्च। तथा च—प्रकृतस्योपमेयस्य परेणोत्कृष्टेनोपमानेन समं तादात्म्येन सम्भावनोत्प्रेक्षेति कारिकार्थ:। प्रकृतस्योपमेयस्य परेणोपमानेन तादात्म्ये वर्ण्यमाने प्रकृतविषयकमुत्कटोपमानकोटिकं संशयापरपर्य्यायं ज्ञानमुत्प्रेक्षेति भाव:। यद्वा-उत्कटैककोटिक: संशय: सम्भावना, संशयो हि द्विकोटिको भवति, यथा—'अयं स्थाणु: पुरुषो वा' इत्यादौ प्रथमा कोटि: स्थाणोर्विधानरूपा, द्वितीया 'पुरुषो वा' इति पुरुषस्य पुनर्विधानरूपा, 'अयं पुरुषो, न वा' इत्यादौ च प्रथमा कोटि: पुरुषस्य विधानरूपा, द्वितीया पुन: 'नवा' इति पुरुषस्य निषेधरूपा। एवं च यस्यां कोटौ निश्चितप्रायत्वं सैव (प्रथमा) संशयस्य कोटि: सम्भावनापदवाच्या। उपमेयस्योपमानतया निश्चितप्राया सम्भावनोत्प्रेक्षेति फलितम्। निश्चितप्रायेत्यनेन दोलायमानाया द्वितीयाया: कोटेर्निरास:।

सन्देहे संशयस्य तुल्यकोटिकतया, अत्र च उत्कट(टैक)कोटिकतया नास्य तत्रातिप्रसङ्गः। 'रामं स्निग्धतरश्यामं विलोक्य वनमण्डले। प्रायो धाराधरोऽयं स्यादिति नृत्यन्ति केकिनः॥' इत्यत्र सम्भावनायां, परार्द्धव्यत्यासेनास्मिन्नेव'धाराधरधिया धीरं नृत्यन्ती स्म शिखावलाः॥' इति पठिते भ्रातौ च नातिप्रसङ्गः' पूर्वत्र संशयस्य प्रकृतविषयकत्वाभावात्, परत्र प्रकृतस्य परात्मतया प्रथमत एव गृहीतत्वेन तथा सम्भावनाया एवानुदयाच्च। अलङ्काराश्च विच्छित्तिमूला भवन्तीति प्रकृतस्य परात्मतया रमणीयं सम्भावनमुत्प्रेक्षेति देवदत्त इव दूरस्थोऽयं भातीत्यादेश्चास्य व्यवच्छेदः। रमणीयत्वसम्भावनं च प्रकृताप्रकृतयोः साधारणधर्मत्व एवेति बोध्यम्, एतेन 'प्रायः पतेद् द्यौः शकलीभवेद् ग्लौः सहाचलैरम्बुधिभिः स्खलेद् गौः। नूनं ज्वलिष्यन्ति दिशः समस्ता यद्द्रौपदी रोदिति हा हतेति॥' 'वदनकमलेन बाले! स्मितसुषमालेशमावहसि यदा। जगदिह तदैव जाने दशार्धबाणेन विजितमिति॥' इत्यादेरपि च व्यवच्छेदः। विवृत्तिकारा अप्याहुः—'सम्भावना उत्कटैककोटिकः संशयः। प्रकृतस्य संशयस्य, परात्मनोपमानरूपेण। तादात्म्यसम्बन्धलाभायात्मपदोपन्यासः। प्रकारत्वं तृतीयाऽर्थः। तथा च-तादात्म्यसंसर्गकोपमानप्रकारकोपमेयविशेष्यकोत्कटैकः संशय उत्प्रेक्षेत्यर्थः। सन्देहालङ्कारवारणाय उत्कटैककोटिक इति। रूपकभ्रान्तिमदतिशयोक्तीनां निश्चयरूपत्वात् संशयपदेन वारणम्।' इति।

११९ अस्या भेदानाह—**सा** निरुक्तलक्षणोत्प्रेक्षा। **प्रथमम्**। **वाच्या**। तथा—**प्रतीयमाना**। इति—**द्विविधा**। **मता** ननु का वाच्या? का वाऽन्या? इत्याशङ्क्याह—**इवादिप्रयोगे**। आदिना नूनं ध्रुवमित्यादेर्ग्रहणम्। **वाच्या**। **स्यात्**। **अप्रयोगे** द्योतकस्य पदस्य प्रयोगस्याभावे इति भावः। **पुनः**। परा प्रतीयमानोत्प्रेक्षा मतेत्यर्थः। ननु प्रथममिति किमर्थमुक्तमित्याशङ्क्याह—**द्वयोर्द्विविधयोः**। **अप्येतयोः**। **यत्** यस्माद्धेतोः। **जातिः**। **गुणः**। **क्रिया**। **द्रव्यम्**। 'इत्येतच्चतुष्टय'मिति शेषः। **उत्प्रेक्ष्यं** सम्भावनीयम्। **तत्**तस्मात्। **अष्टधा**। **अपि**। **भावाभावाभिमानतः**। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते'इति नयेन-भावाभिमानतोऽभावाभिमानतश्चेत्यर्थः। प्रत्येकम्। 'भिद्यते' इति शेषः। **ताः** षोडशविधाः। **च**। **निमित्तस्य**। पुनः। **गुणक्रियास्वरूपत्वात्** गुणस्वरूपत्वात् क्रियास्वरूपत्वाच्चेत्यर्थः। **द्वात्रिंशद्विधताम्**। **यान्ति**। इदमुक्तम्—उत्प्रेक्षा तावद् द्विविधा, वाच्या, प्रतीयमाना चेति। इवादीनां प्रयोगे वाच्या, तेषामप्रयोगे पुनः प्रतीयमाना। एवं द्विविधाऽप्येषा जातिगुणक्रियाद्रव्याणामप्रकृतानामध्यवसेयतया प्रत्येकं चातुर्विध्येनष्टविधा, अष्टविधाऽप्येवं प्रत्येकं भावाभिमानेन अभावाभिमानेन च द्विधा षोडशविधा सम्पद्यते। एषेत्थं षोडशविधाऽपि निमित्तस्य जातिस्वरूपत्वेन क्रियास्वरूपत्वेन चेति द्विधा भिद्यमाना द्वात्रिंशद्विधा सम्पद्यते। इति॥ ९३॥ ९४॥ ९५॥

एवं द्वात्रिंशद्विधाया एतस्या, विविक्तोदाहरणप्रदर्शने विस्तरभयमाशङ्क्याह—**तत्र** तासु मध्ये। **वाच्योत्प्रेक्षायाम्**। सत्यर्थे सप्तमी।

तत्र वाच्योत्प्रेक्षायामुदाहरणं दिङ्मात्रं यथा—

**'उरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति।**
**सपताकः कनकमयो विजयस्तम्भः स्मरस्येव ॥'**

अत्र विजयस्तम्भस्य बहुवाचकत्वाज्जात्युत्प्रेक्षा।

---

## विवृत्तिः

द्वितीयं यथा—ऊरुरित्यादि। अत्र सुरतेच्छारूपस्मरस्य कनकमयविजयस्तम्भः शशविषाणवदलीकः प्रौढोक्त्यैव सिद्धः। **परा** प्रतीयमाना। सा **द्वयोर्वाच्य**प्रतीयमानयोः। **जाति**र्जातिवाचकपदप्रतिपाद्योऽर्थः। एवं गुणादयोऽपि। **भावेति**। भावाभिमाने जात्यादिरूपभावसंभावनायाम्। अभावाभिमाने जात्यादिप्रतियोगिकाभावसंभावनायाम्। एवं च षोडशप्रकारत्वमुपपन्नम् ॥

**ऊरुरिति**। शत्रुमभिभूय तद्विषये धीरैर्यः स्तम्भ आरोप्यते स विजयस्तम्भः। **विजयस्तम्भपदस्य बहुवाचकत्वादिति**। अनेकवृत्तिनित्यसामान्यजातित्वस्वीकारादिति भावः ॥

## विज्ञप्रिया

दिङ्मात्रम् अल्पमात्रम्। **ऊरुरिति**। चञ्चलचेलाञ्चलः चलवस्त्रैकदेशः। कुरङ्गकदृशः ऊरुः स्मरस्य सपताकः कनकमयो विजयस्तम्भ इव भात्तीत्यर्थः। स्तम्भो हेमयष्टिः। पताका तदुपरिवस्त्रम्, चलचेलाञ्चलस्थाने तत्र। अत्र जात्युत्प्रेक्षात्वं ग्राहयति—अत्रेति। **विजयस्तम्भस्येति**। तद्वाचकपदस्येत्यर्थः, प्रक्रान्तस्य बहुवाचकत्वाद् बहुव्यक्तिवाचित्वात्, तथाच स्तम्भत्वस्य जातित्वमुपपादितम्। स्तम्भोत्प्रेक्षायाश्च तत्प्रकारकत्वात् तस्या अप्युत्प्रेक्षा। एवं सर्वत्र विधेयम्। इदमुदाहरणं न गुणक्रियानिमित्तोत्प्रेक्षायाः किन्तु वक्ष्यमाणाया अनुक्तनिमित्तोत्प्रेक्षाया एव। अतोऽत्र विजयस्तम्भोत्प्रेक्षाहेतु कामोद्दीपकत्वमनुक्तम्।

## कुसुमप्रतिमा

ऊरुरिति। चञ्चलं वायुवेगेन चलाचलीभूतं चेलाञ्चलं वसनप्रान्तो यस्य स तादृशः कुरङ्गकदृशी वालहरेणन्नयतायाः, ऊरुः, पताकया सहेति सपताकः, कनकमयः स्वर्ण निर्म्मितः स्मरस्य कामस्य विजयस्तम्भ इव भाति शोभते; कामोद्दीपकत्वादिति भावः। विजयिना वीरेण विजितदेशे विजयचिन्हस्वरूपो यः स्तम्भः समारोप्यते, स विजयस्तम्भः। कुरुङ्क इत्यत्पार्थे कप्रत्ययः।

अत्रेति। विजयस्तम्भस्य विजयस्तम्भशब्दस्य, बहुवाचकत्वाद्विजयस्तम्भसामान्यबोधकत्वात् जात्युत्प्रेक्षा जातिविषयक्रोत्प्रेक्षालङ्कारः; विजयस्तम्भत्वजातिविशिष्टं स्मर सम्बन्धि विजयस्तम्भोत्प्रेक्षणादिति भावः। अत्रेदमवधेयम्—ऊरुरुपमेयं विजयस्तम्भश्चोपमानम्, तथा कामस्यैव सुरताभिलाषमात्ररूपत्वाद्वीरत्वे अलोकत्वेन तद्विजयस्तम्भव्याप्यलीकत्वमेवेति उपमानपदार्थस्य अवास्तविकत्वम्; इव शब्दप्रयोगादुत्प्रेक्षाया वाच्यरूपता, विजयस्तम्भरूपभावपदार्थोत्प्रेक्षणाद्भावाभिमानिता, नायिकाया ऊरुदेशस्य रूपस्वरूपो गुणश्च निमित्तमिति। एवमन्यत्राभ्युह्यम्।

## विमला

जात्युत्प्रेक्षामुदाहरति, ऊरुरिति ।—कुरङ्गकदृशः,—हरिणाक्ष्याः, चञ्चलं—स्वस्थानभ्रष्टमित्यर्थः, चेलाञ्चलं—सूक्ष्मवस्त्रप्रान्तः यस्मिन् तादृशः, ऊरुः स्मरस्य—कामस्य, सपताकः,—पताकासहितः, (चेलाञ्चलस्य वातेन उड्डायनात् पताकारूपत्वं बोध्यम्) कनकमयः,—काञ्चनमयः, विजयस्तम्भः,—शत्रून् विजित्य तन्नगरे यः स्तम्भः वीरैः आरोप्यते स विजयस्तम्भः स इव, भाति—राजते । अत्र च इवप्रयोगात् वाच्योत्प्रेक्षा, स्तम्भस्य बहुशः सद्भावाच्च जातिरूत्प्रेक्षा, नित्यानेकसमावयिनो जातिरिति स्तम्भत्वजातेरनेकसमवेतत्वादित भावः । स्तम्भश्च भावपदार्थ इति भावाभिमानिन्युत्प्रेक्षेयम् । उत्प्रेक्षानिमित्तञ्च नायिकोरुरुपं गुणः । अत्र उपगितिश्छन्दः, तल्लक्षणं यथोक्तम्—"आर्य्या द्वितीयकेऽर्द्धे यद्गदितं लक्षणं तत् स्यात् । यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रुते ॥" इति ।

अत्र विजयेति ।—बहुवाचकत्वात्—अनेकवृत्तिनित्यसामान्यजातित्वस्वीकारात् इत्यर्थः ।

## लक्ष्मी

द्वितीयं यथा—'ऊरुः कुरुङ्गकदृशः'इत्यादौ । अत्र सुरतेच्छारूपस्मरस्य कनकमयविजयस्तम्भः शशविषाणवदलीकः प्रौढोक्त्यैव सिद्धः । अलङ्काराणां चमत्कारमूलत्वेन प्रतिभानुत्थापिताया वास्तविकसम्भावनाया रमणीयसाधारणधर्ममूलायाः सम्भावनायाश्च चमत्काराजनकतया अलङ्कारत्वाभावेन—

**'प्रायः पतेद्द्यौः शकलीभवेद्ग्लौः सहाचलैरम्बुधिभिः स्खलेद्गौः ।**
**नूनं ज्वलिष्यन्ति दिशः समस्ता यद्द्रौपदी रोदिति हा ! हतेति ॥'**
**'वदनकमलेन बाले ! स्मितसुषमा लेशमावहसि यदा ।**
**जगदिह तदैव जाने दशार्धबाणेन विजितमिति ॥'**

अस्या विभक्तविभागबाहुल्येन षट्सप्तत्युत्तरैकशतविधतां पर्यवस्थापयितुं प्रथमंद्वैविध्यमुपपादयति—**वाच्येति ।** वाच्या इवादिंवाचकपदनिबन्धनात् झटिति प्रत्येया शाब्दीत्यर्थः, प्रतीयमाना वाचकपदविरहेण वाच्यार्थपर्यालोचनानुसन्धेया आर्थीत्यर्थः, इत्येवं सा निरुक्तलक्षणोत्प्रेक्षा प्रथमं द्विविधा मता । ननु का वाच्या का च प्रतीयमाना ? इत्याशङ्कायामाह—**वाच्येवादिप्रयोग** इति । इवादीत्यादिपदेन नूनं ध्रुवमित्यादेः परिग्रहः । तथा च इवादीनां वक्ष्यमाणानां वाचकानां पदानां प्रयोगे वाच्या स्यात्, इवादीनामप्रयोगे वाचकपदाभावे पुनः परा प्रतीयमाना स्यादित्यर्थः । प्रतीयमाना चात्र न व्यङ्ग्यरूपा तथासति वक्ष्यमाणोदाहरणे 'महिलासहस्रभरित' इत्यादावुत्प्रेक्षाध्वनित्वापत्तेः, किन्तु अध्याह्रियमाणा इत्येवार्थः । ननु किमर्थं प्रथममित्युक्तमित्यत आह—यद यस्मात्कारणात द्वयोरपि द्विविधयोरपि वाच्यप्रतीयमानोत्प्रेक्षाभेदयोर्विषये जातिः एकधर्मवन्नानाधर्मवाचकोपमेयोऽर्थः, गुणः सामानाधिकरण्येन सिद्धतानिर्देश्यो धर्मः, क्रिया साध्यताकारनिर्द्देश्यो धर्मः, द्रव्यं श्रृङ्गग्राहिकया निर्द्देश्यो धर्मः, इत्येतच्चतुष्टयमिति शेषः, उत्प्रेक्ष्यमुत्प्रेक्षणीयं सम्भावनीयं सम्भवति, तत्तस्मात् एतावता समुदायेनोत्प्रेक्षा अष्टधा अष्टप्रकारा स्यात्, जात्यादिचतुष्कोत्प्रेक्षाणां च द्वैगुण्येनाष्टानां सम्भावात् । अपि च तेषामष्टानामेव भेदानां भावस्य जात्यादिचतुष्कस्य प्रत्येकमभावाभिमानतोऽभावोत्प्रेक्षणादपि द्विधा सम्भवति । एवञ्च जात्यादिभावोत्प्रेक्षष्टकं तदभावोत्प्रेक्षाष्टकञ्चेति समुदायेन षोडशप्रकारा उत्प्रेक्षाः षोडशत्वानुक्ता अपि पर्यवसिताः ।

**ऊरु**रिति । अल्पः कुरङ्गो मृग इति कुरङ्गकस्तस्य दृशौ नयने इव दृशौ यस्यास्तस्याः, बालमृगनयनाया इत्यर्थः अल्पार्थे कप्रत्ययः चञ्चलं वायुवेगेन चलाचलीभूतं चेलाञ्चलं वस्त्रैकदेशो यस्य स तथोक्त ऊरुः, स पताकः

पताकासहितः कनकमयः सुवर्णनिमितः स्मरस्य मदनस्य विजयस्तम्भ इव भाति शोभते, मदनोद्दीपकत्वादित्याशयः। विजयिना विजित्य शत्रून् तद्देशे स्वसर्वजेतृत्वसूचनाय समारोपितो यः स्तम्भविशेषः स विजयस्तम्भ इत्युच्यते। **आर्याछन्द**स्तल्लक्षणन्तूक्तमेव।

कथमियं जात्युत्प्रेक्षेति दर्शयति—**अत्रेति**। विजयस्तम्भस्य विजयस्तम्भपदस्य बहुवाचकत्वात् बहुव्यक्तिवाचकत्वात् जात्युत्प्रेक्षा जातिविषयकोत्प्रेक्षालङ्कारः, विजयस्तम्भत्वजातिविशिष्ट-स्मर-सम्बन्धिविजयस्तम्भोत्प्रेक्षणादित्याशयः। **अत्रेदम्बोध्यम्**। ऊरुरुपयमेयं विजयस्तम्भश्चोपमानम्, तथा स्मरस्यैव केवलसुरताभिलाषरूपत्वाद्वीरत्वे मिथ्यात्वेन तद्विजयस्तम्भस्यापि मिथ्यात्वमेवेति उपमानपदार्थस्य अयथार्थत्वम्, इवशब्दप्रयोगाच्चेयं वाच्या, विजयस्तम्भूश्च भावपदार्थ इति भावोत्प्रेक्षणाद्भावाभिमानिन्येषा, उत्प्रेक्षानिमित्तं च नायिकोरोः सौन्दर्यं गुणश्च। अत्रेवशब्दस्योपमोपकारत्वं तु न शङ्क्यम्,—

'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः॥'

इत्यादिदण्डयुक्तदिशेवास्य सम्भावनावाचकत्वस्याऽप्यक्षतत्वात्। अत एव 'इवादिप्रयोग' इत्याद्युक्तं ग्रन्थकृता। एवमन्यत्राप्युसन्धेयम्।

## रुचिरा

**दिङ्मात्रम्**। **उदाहरणम्**। **यथा**—'**कुरङ्गकदृशोऽल्पः** कुरङ्गो मृग इति कुरङ्गकस्तादृशाविव दृशौ यस्यास्तस्याः, मृगशावाक्ष्या इति भावः। **चञ्चलचेलाञ्चलश्चञ्चलं** चेलाञ्चलं सूक्ष्मवस्त्रं यत्र तथोक्तः। **ऊरुः**। **स्मरस्य**। **सपताकः** पताकासहितः। **कनकमयः** सुवर्णघटितः। **विजयस्तम्भः** शत्रून् विजित्य स्वसर्वजेतृत्वसूचक आरोपितः स्तम्भविशेषः। **इव**। **भाति**। आर्य्याछन्दः॥ १३७॥

कथमियं जात्युत्प्रेक्षेत्याह—**अत्र**। **विजयस्तम्भस्य**। **बहुवाचकत्वात्**। **जात्युत्प्रेक्षा**। अयम्भावः—स्तम्भानां बहुत्वात् स्तम्भत्वं जातिः, 'एकत्वे सत्यनेकसमवेतत्वं जातिः' इति नियमात्। इवप्रयोगाच्चेयं वाच्या, स्तम्भश्च भावपदार्थ इति भावाभिमानिन्येषा, उत्प्रेक्षानिमित्तं च नायिकोरोः सौन्दर्य्यं गुणश्च। नचेवशब्दस्योपमोपकारकत्वमेवेति शङ्क्यम्, 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः॥' इत्यादिदण्डयुक्तदिशेवास्य सम्भावनावाचकत्वस्याप्यक्षतत्वात्। अत एव—'इवादिप्रयोग'इत्यादि कविराजैप्युक्तम्।

**'ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।**
**गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥'**

अत्र सप्रसवत्वं गुणः।

---

## विवृतिः

गुणोत्प्रेक्षामाह—**ज्ञाने इति**। शास्त्रादिज्ञाने सत्यपि मौनं जल्पवितण्डाराहित्यम्। क्षमा पराभवानर्हस्यापराधसहिष्णुता। श्लाघा आत्मप्रशंसा, तस्या विपर्ययोऽभावः। गुणानुबन्धितत्वात् गुणप्रयोजकत्वात्। प्रकर्षप्रयोजकधर्मोऽत्र गुणः। तस्य दिलीपस्य। कुक्षिगर्भयोर्विभागः प्रसवः तत्सहिताः सप्रसवाः। ज्ञानादीनां मौनाद्युत्पादने प्रसवसंभावना। ज्ञानादिसत्त्वे एव मौनादीनां गुणत्वमिति ज्ञानादीनां मौनादिप्रयोजकत्वम्॥

## विज्ञप्रिया

वाच्यगुणोत्प्रेक्षामाह—**ज्ञाने मौनमिति**। तस्य दिलीपस्य गुणाः गुणानुबन्धित्वात्सप्रसवा इवेत्यर्थः। गुणानां गुणान्तरानुबन्धित्वं दर्शयति—ज्ञानमिति। ज्ञानादौ सति मौनादिकमित्यर्थः—**अत्रेति**। प्रसवो योनिबहिर्भावः। उत्पादने प्रकृतेऽप्रकृततदुत्प्रेक्षा। प्रसवपदस्य कृदन्तत्वेन नामत्वप्राप्त्या तदर्थो न क्रियेत्यतो गुण एव। अत्र गुणानुबन्धित्वमुत्प्रेक्षाहेतुरुक्त एव।

## कुसुमप्रतिमा

ज्ञान इति। रघुवंशप्रथमसर्गे दिलीपवर्ण पदम्। तस्य दिलीपस्य ज्ञाने स विषयक बोधशक्तौ सत्यपि मौनम् अनावश्यके विषये मौनावल नम्, न पुनर्वाञ्चालवत्तत्रापि बहुभाषितेति भावः। शक्तौ सामर्थ्ये सत्यपि क्षमा सहिष्णुता, तथा त्यागे दत्यपि श्लाघाविपर्य्यय आत्मप्रशंसाराहित्यम्, आसौ दिति शेषः। अतएव तस्यैते ज्ञानादयो गुणाः, गणनुबन्धित्वात् लोकप्रियत्वादिगुणान्तरप्रयोजकत्वात् समान एकस्मादेवोदराज्जाततया तुल्यः प्रसवो येषां ते सप्रसवाः सहोदरा इव आसन्निति शेषः। तथैवोपकारित्वा दिति भावः।

अत्रेति। मत्वर्थीयप्रत्ययादिव बहुब्रीहेरनन्तरमपि भावविहितप्रत्ययस्य सम्बन्धिसम्बन्धान्यतरबोधकताया व्युत्पत्तिसिद्धत्वेनात्रापि सप्रसवत्वशब्दस्य प्रसवरूपसम्बन्धिबोधकत्वात् प्रसवस्य च भ्रूणोदरयो र्विभागरूपत्वात् विभागस्य च "संयोगश्च विभागश्च" इत्यनेन गुणतया गणनादित्याशयः। सप्रसत्वं गुण इति तस्य चोत्प्रेक्षणादत्र गुणोत्प्रेक्षेति तात्पर्य्यम्। एवमुत्तरत्रापि बोध्यम्। इदन्तु शक्यतावच्छेदकमादाय गुणोत्प्रेक्षायामुदाहरणम्। शक्यार्थ मादायोदाहरणन्तु—"विश्लेषदुःखादिव बद्धमौनम्" इति। अत्र दुःखमेव गुणः।

## विमला

गुणोत्प्रेक्षामुदाहरति, ज्ञाने इति।—तस्य—दिलीपस्य, ज्ञाने—शास्त्रादिज्ञाने सत्यपि इत्यर्थः, मौनं—तुष्णीम्भावः, मितभाषित्वमिति यावत्, जल्पवितण्डाराहित्यमिति भावः, शक्तौ—सामर्थ्ये सत्यपि, क्षमा—पराभवानर्हस्यापराधसहिष्णुता, त्यागे—दाने, तत्कर्तृत्वे सतीति भावः, श्लाघाविपर्य्ययः—अनात्मप्रशंसनमित्यर्थः,

आसीदिति शेषः अतः (तस्य) गुणाः गुणानुबन्धित्वात्—गुणप्रयोजकत्वात्, परस्परसहचारित्वादिति भावः, प्रकर्ष-प्रयोजकधर्मोऽत्र गुणः, सप्रसवाः इव—सहोदराः इव, आसन्निति शेषः। अत्र इवयोगात् वाच्योत्प्रेक्षा, उत्प्रेक्षणीयो गुणः, सप्रसवत्वं, कुक्षिगर्भयोर्विभागस्यैव प्रसवपदार्थत्वात् विभागस्य च गुणत्वेनोक्तत्वात्; तदुक्तं भाषापरि-च्छेदे—"अथ गुणा रूपं रसो गन्धस्ततः परम्। स्पर्शः सङ्ख्या परिमितिः संयोगश्च विभागश्च" इति। तथा हि;—ज्ञानादीनां मौनाद्युत्पादने प्रसवसम्भावना, ज्ञानादिसत्त्वे एव मौनादीनां गुणत्वमिति ज्ञानादीनां मौनादिप्रयोज-कत्वम् इति ज्ञेयम्। भावाभिमानित्युत्प्रेक्षेयं, प्रसवस्य भावपदार्थत्वात्। उत्प्रेक्षाया निमित्तञ्च गुण इत्यवधेयम्। रघुवंशस्येदं पद्यम्। यथा वा—"स वः पायादिन्दुर्नवविसलताकोटिकुटिलः स्मारारेर्यो मूर्द्धनि ज्वलनकपिशे भाति निहितः। स्रवन्मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव॥" इति।

## लक्ष्मी

वाच्यगुणोत्प्रेक्षामुदाहरति—**ज्ञाने** इति। रघुवंशे प्रथमसर्गे दिलीपवर्णनेयम्। तस्य दिलीपस्य ज्ञाने समस्तविषयकबोधशक्तौ सत्यपि मौनम् अनावश्यके विषये तूष्णीम्भावावलम्बनम्, न पुनर्वाचालवत्तत्रापि बहुव-क्तृतेतितात्पर्यम्, यद्वा ज्ञाने शास्त्रादिज्ञाने सत्यपि मौनं जल्पवितण्डाराहित्यम् 'ज्ञाने'इत्यादौ सत्यर्थे सप्तमी शक्तौ सामर्थ्ये सत्यपि क्षमा पराभवानर्हस्यापराधसहिष्णुता, तथा त्यागे दाने सत्यपि श्लाघाविपर्ययः आत्मप्रशंसोत्सुक-त्वाभावः, आसीदितिशेषः। इत्येवं तस्य दिलीपस्य गुणा मौनादयः गुणानुबन्धित्वात् ज्ञानादिगुणानुयायित्वात् समान एकस्मादेवोदरादुत्पन्नतया सदृशः प्रसवो योनिबहिर्भावो येषां ते सप्रसवाः सहोदरा इव आसन्निति शेषः, तथैवो-पकारादिसम्पादानादितिभावः।

अत्र पूर्वतो वैलक्षण्यमुपपादयति—**अत्रेति**। इवशब्दप्रयोगादियं वाच्या। बहुव्रीहिसमासान्तरं विहित-स्यापि भावप्रत्ययस्य मत्वर्थीयप्रत्ययादिव सम्बन्धिसम्बन्धान्यतर बोधकताया व्युत्पत्तिसिद्धत्वेनात्रापि सप्रसवत्व-पदस्य प्रसवरूपसम्बन्धिबोधकत्वात् प्रसवस्य च भ्रूणोदरयोर्निभागरूपत्वात् विभागस्य च—

> **'...अथ गुणा रूपं रसो गन्धस्ततः परम्।**
>
> **स्पर्शः संख्या परिमितिः संयोगश्च विभागकः॥'**

इत्युक्तदिशा गुणतया गणनादितिभावः। सप्रसवत्वं गुण इति तदुत्प्रेक्षणादत्र गुणोत्प्रेक्षेत्याशयः। ज्ञानादीनां मौनादिजनकत्वे प्रसवसम्भावना, ज्ञानादिसत्त्व एव मौनादीनां गुणत्वमितिज्ञानादीनां मौनादिप्रयोजकत्व-मवन्तव्यम्। अतएवाभिहितम्—'**गुणा गुणानुबन्धित्वादिति**। शक्यतावच्छेदकमाश्रित्य गुणोत्प्रेक्षायामुदाहरण-ञ्चेदम्। शक्यार्थमाश्रित्य गुणोत्प्रेक्षाया उदाहरणन्तु 'विश्लेषदुःखादिव बद्धमौनम्' इति। अत्र दुःखमेव गुणः।

## रुचिरा

गुणोत्प्रेक्षामुदाहरति—'**ज्ञाने**। सत्यर्थे सप्तमी। **मौनम्**। **शक्तौ**। **क्षमा**ऽपराधसहत्वम्। **त्यागे** दाने। **श्लाघाविपर्यय** आत्मप्रशंसोत्सुकत्वाभावः। इत्येवम्—**तस्य** दिलीपस्य। **गुणा** मौनादयः। **गुणानुबन्धित्वात्** ज्ञानादिगुणानुयायित्वात्। **सप्रसवाः** प्रसवाः सन्तयस्तैः सहिताः। इव। 'आस'न्निति शेषः। रघुवंशस्येदं पद्यम्॥ १३८॥'

अत्र पूर्वतो वैलक्षण्यं दर्शयति-**इत्यत्रे**त्यादिना। स्पष्टोऽर्थः। अयम्भावः-अत्र इवप्रयोग इति वाच्येयम्, उत्प्रेक्षणीयो गुणः सप्रसत्वम्। प्रसवस्य च भावरूपत्वाद्भावाभिमानिनीयमुत्प्रेक्षा, अस्या निमित्तं च गुण इति गुणनिमित्ता च। प्रसवस्य कुक्षिगर्भविभागरूपत्वात् विभागस्य च 'अथ गुणा रूपं रसो गन्धस्ततः परम्। स्पर्शः संख्या परिमितिः संयोगश्च विभागकः॥' इत्युक्तदिशा गुणत्वमेव। ज्ञानादीनां मौनाद्युत्पादने प्रसवसम्भावना, ज्ञानादिसत्त्व एव मौनादीनां गुणत्वमिति ज्ञानादीनां मौनादिप्रयोजकत्वमवधेयम्। अत एवोक्तम् 'गुणानुबन्धित्वा'दिति।

**'गङ्गाम्भसि सुरत्राण ! तव निःशाननिस्वनः ।**
**स्नातीवारिवधूवर्गगर्भपातनपातकी ॥'**

अत्र स्नातीति क्रिया ।

---

## विवृतिः

क्रियोत्प्रेक्षामाह—**गङ्गेति** । सुरत्राणेति प्रसिद्धस्य राज्ञः संबोधनम् । प्रयाणकालीनवाद्यं **निःशानः** । अरिवधूवर्गस्य गर्भपातनमेव पातकं पापजननयोग्यकर्म, तद्वान् । पापकर्मा हि गङ्गास्नानं करोति । शब्दोऽपि पापकर्मवानिति तदीयगङ्गाजलसंबन्धे स्नानसंभावना ॥

## विज्ञप्रिया

वाच्यां क्रियोत्प्रेक्षामाह—**गङ्गाम्भसीति** । **सुरत्राणेति**—पाश्वात्त्ययनवनृपतीनामुत्कर्षबोधकः परिभाषाविशेषः सुलतान इति पदस्याऽपभ्रंशः । हे तादृश तव निःशाणस्य सैन्यवाद्यस्य निःस्वनः अरिवधूवर्गगर्भपातनपातकी यतः अतस्तत्पातकक्षयार्थं गङ्गाम्भसि स्नातीवेत्यर्थः । गङ्गायाः पाश्चात्यनृपतिसैन्यदूरवर्त्तित्वात्तत्पर्य्यन्तमपि सैन्यनिःस्वन आयात इति भावः । अत्र हेतुं ग्रन्थकृदेव प्रदर्शयिष्यति ।

## कुसुमप्रतिमा

गङ्गेति । कृष्णस्य प्रतापप्रशंसेयम् । हे सुरत्राण ! दैत्यानां बधेन देवानां रक्षक ! अरिवधूवर्गस्य शत्रुस्त्रीसमूहस्य गर्भपातनेन भयजननद्वारा गर्भपातकरणेन पातकमस्यास्तीति स तादृशः, तव निर्याणनिस्वनः शत्रुनगराक्रमणाय निर्गमनकालीनदुन्दुभिप्रभृतिशब्दः, गङ्गाया अम्भसि जले स्नातीव, तत् पताकक्षालनायेति भावः ।

अत्रेति । निर्याणनिस्वनस्य गङ्गापर्य्यन्तगमनक्रिया स्नानक्रियारूपेणोप्रेक्षितेति क्रियोत्प्रेक्षेत्यर्थः । अतएव काव्यप्रकाशेऽपि—"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।" इत्यादौ व्यापनादि लेपनादिरूपतया सम्भावितम्" इत्युक्तम् ।

## विमला

क्रियोत्प्रेक्षामुदाहरति, गङ्गेति ।—दैत्यारेर्भगवतः स्तुतिरियम् । सुरान्—देवान्, त्रायते—रक्षति, असुरेभ्यः इति शेषः, तत्सम्बुद्धौ हे सुरत्राण !—असुरनिकरनिकृन्तनपरो भूत्वा देवजनानामाश्रयदायिन्निति भावः; अथवा सुरत्राणेति प्रसिद्धस्य राज्ञः सम्बोधनम्; अरिवधूनां—शत्रुनारीणाम्, असुररमणीनामिति यावत्, वर्गः,—समूहः, तस्य गर्भपातनेन पातकी—पातकवान्, अथवा गर्भपातनमेव पातकं—पापजननयोग्यकर्म तद्वान्, तव निर्याणस्य—युद्धार्थं प्रयाणवाद्यस्य, ["निःशान" इति पाठे—निःशानस्य—प्रयाणकालीनवाद्यस्येत्यर्थः] निस्वनः,—शब्दः, गङ्गाऽम्भसि स्नातीव; पापकर्मा हि गङ्गास्नानं करोति, निस्वनोऽपि पापकर्मवान् इति तदीयगङ्गाजलसम्बन्धे स्नानसम्भावना इति ज्ञेयम् । स्नानक्रियाया भावपदार्थत्वात् भावाभिमानिन्युत्प्रेक्षा । यथा वा—"पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम् । तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गना ॥" इति ।

## लक्ष्मी

इत्थं वाच्यगुणोत्प्रेक्षोदाहरणं प्रदर्श्य वाच्यक्रियोत्प्रेक्षोदाहरणं प्रदर्शयति—**गङ्गाम्भसीति**। श्रीकृष्णप्रताप-प्रशंसावर्णनमिदम्। सुराणां त्राता तत्सम्बुद्धौ हे सुरत्रात दैत्यसंहारेण देवपालक! अरिवधूवर्गस्य वैरिस्त्रीसमूहस्य गर्भपातेन भयोत्पादनद्वारा गर्भपातविधानेन पातकमस्यास्तीति स तथोक्तः तव भवतः निर्याणस्य वैरिनगराक्रमणाय प्रयाणस्य निस्वनस्तत्कालीनदुन्दुभिप्रभृतिशब्दः, गङ्गाम्भसि गङ्गाजले स्नातीव तत्पातकापनोदायेतिभावः। पातकी जनो गङ्गास्नानं करोति शब्दोऽपि तादृगितितदीयगङ्गाजलसम्बन्धे स्नानसम्भावना।

अत्र क्रियोत्प्रेक्षां निर्दिशति—अत्रेति। निर्याणशब्दस्य गङ्गापर्यन्तगामित्वं स्नानक्रियारूपेणोत्प्रेक्षितेक्रियोत्प्रेक्षेत्यर्थः। स्नानक्रियाया अपि भावपदार्थत्वात् भावाभिमानिनीयं क्रियोत्प्रेक्षा, इवशब्दप्रयोगाच्च वाच्या।

## रुचिरा

एवं गुणोत्प्रेक्षामुदाहृत्य क्रियोत्प्रेक्षामुदाहरति—'**सुरत्रातः** सुराणां त्रातेति तत्सम्बुद्धौ तथोक्त! **अरिवधूवर्गगर्भपातनपातकी** अरीणां शत्रूणां वध्वो नार्य्यस्तासां गर्भस्तस्य पातनं तेन पातकी। **तव**। निर्य्याणनिःस्वनो निर्य्याणस्य प्रयाणस्य निःस्वनः शब्दः। अत्र प्रयाणशब्द उपचारात् स्वसम्बन्धिवाद्यादीनामुपलक्षकः। **गङ्गाऽम्भसि** गङ्गाजले। **स्नाति**। **इव**। राजस्तुतिरियम्॥ १३९॥'

अत्र क्रियां निर्दिशति—**अत्रेत्यादिना**। स्पष्टम्। इदं बोध्यम्—स्नानक्रियाया अपि भावपदार्थत्वात् भावाभिमानिनीयं क्रियोत्प्रेक्षा। इवशब्दप्रयोगाच्च वाच्या। इति।

**'मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः ।'**

अत्र चन्द्र इत्येकद्रव्यवाचकत्वाद्रव्यशब्दः । एते भावाभिमाने अभावाभिमाने यथा—

**'कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ ।**
**अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥'**

अत्रापश्यन्ताविति क्रियाया अभावः । एवमन्यत् । निमित्तस्य गुणक्रियारूपत्वे यथा—'गङ्गाम्भसि इत्यादौ स्नातीवेत्युत्प्रेक्षानिमित्तं पातकित्वं गुणः । 'अपश्यन्तौ—' इत्यादौ क्षामतागमनरूपं निमित्तं क्रिया ।

---

## विवृतिः

द्रव्योत्प्रेक्षामाह—**मुखमिति** । अपरः प्रसिद्धातिरिक्तः । अयं प्रौढोक्तिसिद्धः । एते दर्शितप्रकारोत्प्रेक्षाप्रकाराः । **कपोलेति** । तथाविधौ अतिसुन्दरौ । क्षामतां कृशत्वम् । ननु कपोलयोः परस्परदर्शनाभावः सिद्ध एव कथमत्र संभावनेति चेत् । न । विरहजनितकृशत्वे परस्परदर्शनाभावजन्यकृशत्वसंभावनायां तात्पर्य्यात् । पातकित्वं पापजननयोग्यत्वं गुणक्रियातिरिक्तो धर्मः यथाश्रुतस्य शब्देऽसंभव इति ध्येयम् । एतेन 'निष्पन्दमरविन्दाक्षि नेत्रद्वन्द्वमिदं तव । चिरविच्छिन्नमेकान्तं कान्तमाध्यायति ध्रुवम् ॥' इत्यादौ गुणक्रियाभिन्नस्य निष्पन्दत्वादेरपि निमित्तस्य संग्रहः । यद्वा निमित्तस्यापि भावाभावरूपत्वं द्वैविध्यं बोध्यम् ॥

## विज्ञप्रिया

द्रव्योत्प्रेक्षामाह—**मुखमिति** । इयमपि अनुक्तहेतुका ।

अभावाभिमाने जात्याद्यभावोत्प्रेक्षायां तत्र क्रियाभावोत्प्रेक्षामाह—**कपोलफलकाविति** । अस्याः कपोलफलकौ कपोलरूपस्फारदेशौ तथाविधौ पुष्टस्वरूपौ भूत्वा ईदृक्षामीदृशीं क्षामतां क्षीणतां गतौ इति कष्टमित्यर्थः । इष्टादर्शनात् क्षीणत्वप्राप्तिः । अत्र क्षामत्वहेतौ विरहे प्रकृते तद्धेतुत्वेन परस्परदर्शनक्रियाभाव उत्प्रेक्षितः । अत्र हेतूक्तिः ग्रन्थकृतैव अग्रे दर्शयिष्यते—**एवमन्यदिति** । अत्र जात्यभावोत्प्रेक्षा यथा—"न सन्ध्यां कुरुते भास्वान् द्विजत्वाभावतः किमु" इत्यातपल्कान्तोक्तौ सन्ध्याकरणहेतौ मन्दगमने प्रकृतेऽप्रकृतश्लिष्टसन्ध्यापदार्थाकरणहेतुत्वेन द्विजत्वजात्यभाव उत्प्रेक्षितः । सन्ध्याकरणञ्च उत्प्रेक्षाहेतुरुक्तः । अनुक्तहेतुका जात्यभावोत्प्रेक्षा यथा—

**"आगच्छन्नेव पुरुषो न विप्र इति लक्ष्यते ।"** इति ।

अत्र तु विप्रत्वव्यञ्जकसंस्थानाभावो हेतुरनुक्तः । एवं रीत्याऽन्यत्रापि हेतूक्त्यनुक्ती बोध्ये ।

**"कीर्त्तिस्ते श्रीमतो दूरं प्रयाताऽनादृतेव किम् ।"**

इत्यत्र कीर्त्तिरनादरो गुण उत्प्रेक्षितः । तत्सपत्नीत्वेन अध्यासित्वं श्रीमत्त्वं हेतुरुक्तः ।

**"अस्तं जगाम रजनी तदीशेन्दुमृतेरिव ॥"**

इत्यत्र द्रव्यस्य इन्दोरभाव उत्प्रेक्षितः । रजन्यस्तगमनं तद्धेतुरुक्तः ।

एषु हेतूनां क्रियात्वगुणत्वे स्वयमेव अवधातव्ये। पातकित्वं हेतुरिति। "प्रभाते हसतीवेयम्" इत्यत्र तु प्रियसूर्य्यदर्शनं हेतुरनुक्तः। **एवमन्यदिति**। उत्सुकेव हसत्येषा ज्योत्स्नामिन्दोः कुमुद्वती।" इत्यत्रोत्सुकत्वोत्प्रेक्षायामिन्दुज्योत्स्ना गुणः।

## कुसुमप्रतिमा

मुखमिति। "ससंक्तमिव नीलाब्जं नेत्रञ्चात्र विराजते॥" इति मत्पूरितपरार्द्धम्। एणादृशी हरिणीनयनसदृशनयनायाः।

अत्रेति। एकव्यक्तिवाचित्वादेकमात्रव्यक्तिवाचित्वेनानेकव्यक्तिनियतजातिवाचित्वाभादित्यर्थः। द्रव्यशब्द इति। अतएव तदुपस्थाप्यद्रव्यीत् प्रेक्षा इत्याशयः।

एतं इति। उदाहृता विजयस्तम्भादयः प्रयोगा इत्यर्थः, भावाभिमाने भावपदार्थसम्भावनायाम्, अवगन्तव्या इति शेषः; तेषां भावरूपत्वादिति भावः।

अभावे। अभावाभिमाने जाति गुण-क्रिया द्रव्याणामभावनायाम्।

कपोलेति। पत्युः समीपे तद्विरहिण्याः प्रियाया अवस्थावर्णनियं कस्यचित्। अस्या आलोच्यमानाया रमण्याः, कपोलफलकौ गण्डयुगलम्, तथाविधौ परमसुन्दरी भूत्वापि अन्योन्यं परस्परम् अपश्यन्ताविव उन्नतनासिकया व्यवधानादनवलोकयन्ताविव सन्तौ, ईदृक्षामीदृशी क्षामता क्षीणतां गतौ प्राप्तौ, विन्धोरदर्शने बन्धवन्तरस्य क्षीणताया अवश्यम्भावादिति भावः। इत्य तदेव कष्टमित्यर्थः।

अत्रेति। क्रियाया दर्शनक्रियायाः, अभावः सम्भावित इति शेषः। अतएवात्र अभावाभिमानिनी क्रियोत्प्रेक्षा इत्याशयः।

एवमिति। अन्यत्—जातिगुण-द्रव्याणां प्रत्येकमभावाभिमाने उदाहरणम्, एवमनुसन्धेयमित्यर्थः। तत्र जातेरभावाभिमाने यथा मम—

> **"अभावादिव पद्मिन्या हेमन्तेऽस्मिन् हिमच्छलात्।**
> **नितान्तकातराकारो विवस्वानश्रु मुञ्चति॥"**

अत्र पद्मिनीति बहुव्यक्तिवाचित्वाज्जातिशब्दः।

गुणस्याभावाभिमानेऽपि यथा ममैव—

> **"इन्दोरयोगादिव लुण्ठिताङ्गीं दिने द्विरेफो मधु पातुमिच्छन्।**
> **कुमुद्वतीं मुद्वियुतामुपैति प्रायो वियुक्तां हि विटः प्रयाति॥"**

अत्र इन्दोः संयोगरूपगुणस्याभाव उत्प्रेक्षितः।

द्रव्यस्याभावाभिमानेऽपि यथा मम वियोगवैभवखण्डकाव्ये—

> **"समुचितनवसन्ध्यारक्तवासो वसाना मलिनमुखसरोजा लब्धताराक्षमाला।**
> **विगलितशिशिराश्रुः सा दिनश्रीरभावात् सवितुरिव विषणा मर्त्यधाम व्यमुञ्चत्॥**

अत्रैकव्यक्तिमात्रवाचकसवितृशब्दवाच्यस्य सूर्य्यरूपद्रव्यस्याभाव उत्प्रेक्षितः।

एवं जात्यादीनां चतुर्णां भावाभिमाने भेदचतुष्टयमभावाभिमाने च भेदचतुष्टयमित्यष्टौ वाच्योत्प्रेक्षाया भेदान् दर्शयित्वा इदानीं तेषामेव प्रत्येकतो गुणनिमित्तकत्वेन क्रियानिमित्तकत्वेन च प्रत्येकत एव पुनर्द्वौ द्वौ भेदौ दर्शयितुमाह निमित्तस्येति । गुणरूपत्वे क्रियारूपत्वे च क्रमाद्यथेत्यर्थः । पातकित्वं नाम पातकं तच्च पतनजनकत्वात् पापमेव, पापञ्च गुणविशेष एव "अदृष्टं शब्द एव च" इत्यनेन गुणत्वेन गणनात् "धर्म्माधर्म्मावदृष्ट स्यात्" इति तद्विभागाच्च । तस्य च पापस्य ज्ञानसम्बन्धेन गङ्गास्नानक्रियाया हेतुत्वादित्याशयः । क्षामतेति । क्षामताप्राप्तिहेतुकादेव "अपश्यन्ताविव" इत्युत्प्रेक्षणादित्याभिप्रायः ।

**"निष्पन्दमरविन्दावि ! नेत्रद्वन्द्वमिदं तव ।**

**चिरविच्छिन्नमेकान्तं कान्तमाध्यायति ध्रुवम् ॥"**

इत्यत्रापि विभागात्मकचिरविच्छेदरूपो गुण एव ध्यानक्रियोत्प्रेक्षाया निमित्तं निर्बाधमेव । अतो रामहरणस्य गुणक्रियेतरपदार्थस्यापि उत्प्रेक्षानिमित्तत्वकल्पनमनावश्यकतया हेयमेव ।

एवमुह्यमित्यर्थः । तथा च "ऊरुः कुरङ्गकदृशः" इत्यादौ ऊरो रूपं गुणः, "ज्ञाने मौनम्" इत्यादौ गुणान्तरजनरूपा क्रिया । "मुखमेणीदृशः" इत्यादौ सौन्दर्य्याद्यतिशयरूपो गुणः, स चानुक्तः । एवमन्यत्राप्यूह्यम् ।

## विमला

द्रव्योत्प्रेक्षामुदाहरति, मुखमिति ।—एणीदृशः,—हरिणाक्ष्याः, मुखम् अपरः,—प्रसिद्धातिरिक्तः, (अयं प्रौढ़ोक्तिसिद्धः इत्याशयः) पूर्णचन्द्र इव भाति । नेयमुपमा, प्रसिद्धोपमानसद्भावे एव तस्या अधिकारात्, न खलु अपरस्य चन्द्रस्य प्रसिद्धत्वमिति बोध्यम् । चन्द्रस्य च भावपदार्थत्वात् भावाभिमानिनी, इवप्रयोगात् वाच्या च । अत्रोत्प्रेक्षानिमित्तं सुखस्य रूपं वेदितव्यम् । एते इति ।—एते—जात्यादयः, दर्शितप्रकाराया उत्प्रेक्षाया भेदा इत्यर्थः ।

अभावाभिमानिनीमुदाहरति, कपोले इति ।—अस्याः,—कान्ताया इत्यर्थः, कपोलफलकौ—गण्डदेशौ, तथाविधौ—अतिसुन्दराविति भावः, भूत्वा अन्योऽयं—परस्परम्, अपश्यन्ताविव—अनालोकयन्तौ इव, ईदृक्षाम्—एतादृशीं, क्षामतां—कृशतां, गतौ—प्राप्तौ, एतत् कष्टमिति खेदे । पूर्वं प्रफुल्लतया स्फीतत्वात् उभौ अन्योऽन्यं ददृशतुः, इदानीं विरहे कार्श्यातिशयात् अवनतत्वेन उन्नतनासाव्यवधानेन च दर्शनाभावः सम्भवति, परन्तु अचेतनतया दर्शनस्यासम्भवात् दर्शनमुत्प्रेक्षितमिति सुधीभिरवधेयम् । ननु कपोलयोः परस्परदर्शनाभावः सिद्ध एव, कथमत्र सम्भावना? इति चेत्, न; विरहजनितकृशत्वे परस्परदर्शनाभावजन्यकृशत्वसम्भावनायाः तात्पर्य्यात् । अत्रादर्शनस्य अभावपदार्थत्वात् अभावाभिमानिनीयं क्रियोत्प्रेक्षा, इवप्रयोगात् वाच्या च ।

गङ्गेति ।—पातकित्वं—पापजननयोग्यत्वं, गुणक्रियाऽतिरिक्तो धर्मः यथा श्रुतस्य शब्देऽसम्भव इति ध्येयम् । एतेन "निष्पन्दमरविन्दाक्षि ! नेत्रद्वन्द्वमिदं तव । चिरविच्छिन्नमेकान्ते कान्तमाध्यायाति ध्रुवम् ॥" इत्यादौ गुणक्रियाभिन्नस्य निष्पन्दत्वादेरपि निमित्तस्य सङ्ग्रहः । यद्वा—निमित्तस्यापि भावाभावरूपत्वं द्वैविध्य बोध्यम् ।

## लक्ष्मी

अथ द्रव्योत्प्रेक्षामुदाहरति—**मुखमेणीदृश** इति ।

'अधरः पल्लवतुल्यो नासिका तिलपुष्पवत्' ॥ इति मदुत्तरार्द्धम् ।

एणीदृशौ हरिणलोचने एव दृशौ यस्यास्तस्या एणीदृशः।

द्रव्यं निर्दिशति—**अत्रेति**। एकव्यक्तिवाचित्वात् केवलैकव्यक्तिवाचित्वेन नानाव्यक्तिनियतजातिवाचित्वाभावादित्यर्थः। **द्रव्यशब्द** इति। चन्द्रादेर्द्रव्यत्वाद्द्रव्योत्प्रेक्षेयम्। चन्द्रादेर्भावपदार्थत्वाद्भावाभिमानिनी इवप्रयोगाच्च वाच्या।

इत्थं जात्याद्युत्प्रेक्षां समुपपाद्य भावाभिमानित्वेन विशिनष्टि—**एते** इति। एते दर्शितप्रकारोत्प्रेक्षाप्रकारा इत्यर्थः भावाभिमाने भावपदार्थसम्भावनायाम्, बोद्धव्या इति शेषः, तेषां भावस्वरूपत्वादित्याशयः।

अभावाभिमानेनोत्प्रेक्षामुदाहर्तुमाह—**अभावाभिमान** इति। जाति-गुण-क्रिया-द्रव्याणामभावसम्भावनायामित्यर्थः।

तत्र क्रियाभावोत्प्रेक्षामुदाहरति—**कपोलेति**। स्वामिनोऽन्तिके तद्वियोगिन्याः कामपि दशामवलोकयतः कस्यचिदुक्तिरियम्। अस्या आलोच्यमानाया रमण्याः कपोलफलकौ गण्डदेशौः, तथाविधौ तथाऽनुभूतमनोहरौ भूत्वापि अन्योन्यं परस्परम् अपश्यन्ताविव नासिकोन्नतत्वेन व्यवधानादनवलोकयन्ताविव विद्यमानौ ईदृक्षामेवंविधां क्षामतां कृशतां गतौ प्राप्तौ। पूर्वं संयोगे स्फीतत्वादुभौ परस्परं ददृशतुः, सम्प्रति पुनर्वियोगे कार्श्यातिशयात्तयोरवनतत्वेन नासिकायश्चोन्नतत्वेन व्यवधानाद्दर्शनाभावः सम्भवति, बन्धोरदर्शने बन्ध्वन्तरस्य कृशताया अवशयम्भवादितिभावः। इत्येतदेव कष्टं क्लेशमित्यर्थः।

क्रियोत्प्रेक्षामुपपादयति—**अत्रेति**। क्रियायां दर्शनक्रियाया अभाव उत्प्रेक्षित इति शेषः। कपोलफलकयोरचेतनत्वेन दर्शकत्वासम्भवेऽपि दर्शनमुत्प्रेक्षितम्, इवपदप्रयोगाद्वाच्या, दर्शनस्याभावरूपत्वादभावाभिमानिनी।

उदाहरणान्तरविषये आह—**एवमिति**। अन्यत्—जाति-गुण-द्रव्याणां प्रत्येकमभावाभिमाने उदाहरणम् एवमूहनीयमित्यर्थः।

तत्र जातेरभावाभिमाने यथा—

'न सन्ध्यां कुरुते भास्वान् द्विजत्वाभावतः किमु।'

इत्यत्रातपक्लान्तोक्तौ सन्ध्याकरणहेतौ मन्दगमने प्रकृतेऽप्रकृतश्लिष्टसन्ध्यापदार्थाकरणहेतुत्वेन द्विजत्वजात्यभाव उत्प्रेक्षितः। सन्ध्याकरणञ्च उत्प्रेक्षाहेतुरुक्तः।

इत्थं जात्यादिचतुष्कानां भावाभिमाने भेदचतुष्कम्, भावाभिमाने च तेषां भेदचतुष्कमित्यष्टौ वाच्योप्रेक्षाया भेदानुपपाद्य सम्प्रति प्रत्येकतस्तेषामेव गुणनिमित्तकत्त्वेन क्रियानिमित्तकत्वेन च प्रत्येकत एव पुनर्द्वौ द्वौ भेदावुपपादयितुमाह—**निमित्तस्येति**। गुणक्रियारूपत्वे क्रियारूपत्वे चेत्यर्थः। पातकित्वं नाम पापजननयोग्यत्वं तच्च पतनकारणत्वात् पापमेवादृष्टरूपम्, पापञ्च 'अदृष्टं शब्द एव च' 'धर्माधर्मावदृष्टं स्यात्' इत्याद्युक्तदिशा गुणविशेष एव। तस्य च पापस्य ज्ञानसम्बन्धेन गङ्गास्नानक्रियायां निमित्तत्वादितिभावः। क्षामतेति। कृशताप्राप्तिकारणकत्वादेव 'अपश्यन्ताविव' इत्युत्प्रेक्षणादिति भावः।

उदाहरणान्तरं दर्शयितुमाह—**एवमिति**। अन्यत् वाच्योत्प्रेक्षाया गुणनिमित्तकं क्रियानिमित्तकञ्चातिरिक्तमुदाहरणम्, एवमूहनीयमित्यर्थः। यथा—

'उत्सुकेव हसत्येषा ज्योत्स्नामिन्दोः कुमुद्वती।'

इत्यत्रोत्सुकत्वोत्प्रेक्षायाम् इन्दुज्योत्स्ना गुणः । 'ऊरुः कुरङ्गकदृशः' इत्याद्युक्तोदाहरणे च ऊरोरूपं गुणः, 'ज्ञाने मौनम्' इत्यादौ गुणान्तरोत्पादनरूपा क्रिया । 'मुखमेणीदृशः' इत्यादौ मनोहरत्वाद्यतिशयरूपो गुणः स चानभिहित एव । एवमन्यत्रापि स्वयमूहनीयम् ।

## रुचिरा

द्रव्योत्प्रेक्षामुदाहरति—'**एणीदृश** एणीदृशौ मृगीनेत्रे इव दृशौ यस्यास्तस्याः । **मखम्** । **अपरः** । **पूर्ण-चन्द्रः** । **इव** । **भाति** । **इयम्** । **वेणी** । च । **यमुना** । **इव** । 'भाती'ति पूर्वतोऽनुवर्त्तते । **रि**  ंम् । **राका** पूर्णमासी । इव । **दृश्यते** । परार्द्धे प्रायः पुस्तकान्तरे न दृश्यते ॥ १४० ॥'

एवमन्यत्। प्रतीयमानोत्प्रेक्षा यथा—

**'तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम्।**
**हाराय गुणिने स्थानं न दत्तमिति लज्जया॥'**

अत्र लज्जयेवेतीवाद्यभावात्प्रतीयमानोत्प्रेक्षा। एवमन्यत्। ननु ध्वनिनिरूपणप्रस्तावेऽलंकाराणां सर्वेषामपि व्यङ्ग्यत्वं भवतीत्युक्तम्। संप्रति पुनर्विशिष्य कथमुत्प्रेक्षायाः प्रतीयमानत्वम्। उच्यते—व्यङ्ग्योत्प्रेक्षायां 'महिलासहस्स—'(२१९ पृ.) इत्यादावुत्प्रेक्षणं विनापि वाक्यविश्रान्तिः। इह तु स्तनयोर्लज्जाया असंभवाल्लज्जयेवेत्युत्प्रेक्षयैवेति व्यङ्ग्यप्रतीयमानोत्प्रेक्षयोर्भेदः।

---

## विवृतिः

**तन्वङ्ग्या** इति। कालिम्ना वृतत्वात्। मुखप्रकटीकरणाभाव इति भावः। गुणिने सूत्रवते, अथ च विद्यादिगुणशालिने। दानाभावो हि लज्जासंपादकः स्तनयोरिति सान्द्रत्वेन हारस्यावकाशाप्राप्तिस्तत्रेयमुत्प्रेक्षा। उत्प्रेक्षां विनापि तव हृदये वस्तुमिवेति फलोत्प्रेक्षां विनापि। उत्प्रेक्षयैव उत्प्रेक्षावाचकेवाद्यध्याहारेणैव वाक्यविश्रान्तिरित्यन्वयः। अनयोरुत्प्रेक्षाध्वनिप्रतीयमानोत्प्रेक्षयोः। **स्वरूपेति**। तादर्थ्यचतुर्थ्यन्तेन तुमुनन्तेन वा पदेन यत्रोत्प्रेक्षा सा फलोत्प्रेक्षा। हेतुविभक्तयन्तपदेन उत्प्रेक्षा हेतूत्प्रेक्षा। ताभ्यामितरा स्वरूपोत्प्रेक्षा संभवतीति फलहेतुभावेन द्रव्यसंभावनाया वैचित्र्याजनकत्वादिति भावः। **पूर्वोदाहरणेषु** 'ऊरुः—' इत्यादिषु॥

## विज्ञप्रिया

**तन्वङ्ग्या** इति। मुखाप्रकटनं वस्त्रावृतत्वात्। हाराय स्थानादानं निबिडसान्निध्येन सन्धिराहित्याच्च। स्थानादानमत्र गुणो हेतुरुक्तः। **एव मन्यादिति।**

"विक्रीय बिस्पष्टमुखेन बाला, मालाकृतः कैरवकोरकाणि। विक्रेतुकामा विकचाम्बुजानि चेलाञ्चलेनाननमावृणोति।" इत्यत्राप्यम्बुजविक्रयेच्छाया मुखावरणहेतुत्वाभावाद् विक्रेतुकामेव "इत्युत्प्रेक्षाऽध्याहारः। तदैव मुखचन्द्रादर्शनात् पद्मनिमीलनस्य वारणमिति भावः। क्रियोत्प्रेक्षाध्याहारे तु हसत्यर्कोदयेऽम्बुजमिति जात्युत्प्रेक्षाध्याहारे "चाण्डालोऽन्यो द्विजः पापी" इति। द्रव्योत्प्रेक्षाध्याहारे—चन्द्रोऽन्यमुखमेतस्या इत्यनयोरन्यपदसत्त्वान्न रूपकम्।

ननु इत्याद्याशङ्का स्पष्टैव। वाक्यार्थबोधस्योत्प्रेक्षाध्याहारं विनानुपपत्तौ तदध्याहारे प्रतीयमानोत्प्रेक्षा तदध्याहारं विनापि वाक्यार्थबोधसम्भवे पश्चात्तात्पर्य्यवशाद् उत्प्रेक्षाव्यञ्जने उत्प्रेक्षाध्वनिरिति सिद्धान्तयितुमुत्प्रेक्षाध्वनि विषयं दर्शयति—**उच्यत** इति। **महिलेति**। प्राग् व्याख्यातम्। नायकस्यानेकनायिकानुरागात् कृशीभवन्त्यास्तत्पत्न्या अवस्थां तस्मिन् आवेदयन्त्यास्तत्सख्या उक्तिरियम्। सा तव पत्नी अमान्ती अवकाशमलभमाना दिवसं व्याप्य तनयति तनूकरोति। नामकारितान्तस्य तनुशब्दस्य रूपमिदम्। **इत्यादाविति**। विश्रान्तिर्बोधः। भाव्यमानत्वसम्बन्धेन स्थानप्राप्तेरभावस्याभाव्यमानत्वादेव बोधसम्भवात्। परन्तु अङ्गतनूकरणतात्पर्य्यानुसन्धानेन संयोगसम्बन्धेन मनसि स्थानाप्राप्तिरेवाङ्गतनूकरणहेतुतया प्रतीयते। तच्च बाधितमित्यतः स्थानाप्राप्त्युत्प्रेक्षा-

ध्वनिः । तन्वङ्ग्या इत्यत्र तु न तथेत्याह—**इह तु** इति । इत्युत्प्रेक्षयेव इत्यत्र । विश्रान्तिरिति अनुषङ्गः । **उत्प्रेक्षयोर्भेद** इति । उत्प्रेक्षयोरध्याहार्य्यत्वव्यङ्ग्यत्वाभ्यां भेद इत्यर्थः ।

**वाच्योत्प्रेक्षायाः षोडशसु** इति । जात्यादिचतुष्कस्य तच्चतुष्काभावस्य च उत्प्रेक्षा वाच्या अष्टविधाः तदष्टकस्यैव गुणक्रियाहेतुकत्वाद् द्वैविध्येन षोडशत्वम् । एवं प्रतीयमानायामपि षोडशत्वं प्रागुक्तं स्मर्त्तव्यम् ।

## कुसुमप्रतिमा

तन्वङ्ग्या इति । तन्वङ्ग्याः स्वभावत एव कृशदेहाया अस्या रमण्याः स्तनयुग्मेन गुणिने गुणवते नूत्रग्रथितायेत्यर्थः विद्या-गौरवादिगुणाविशिष्टाय जनायेति च व्यज्यते, स्थानं न दत्तं नितान्तघनसंन्नवेशादवस्थि-तिप्रदेशो न दत्त इति हेतोर्लज्जयेव, मुखं वदनम् अग्रदेशद्वयञ्च न प्रकटीकृत न प्रकाशित लोकसमाजे न दलितमित्यर्थः, एकत्र उक्तया लज्जया अन्यत्र तु वसनावृततयेति भावः । अन्योऽपि विद्यादिगुणवते जनाय कुतोऽपि कारणात् स्थानमदत्वा लज्जया लोकसमाजे मुखं न प्रकाशयति ।

अत्रेति । आदिशब्देन मन्वेप्रभृत्युत्प्रेक्षावाचकान्तराणां ग्रहणम् । प्रतीयमानोत्प्रेक्षेति । सा च लज्जाया गुणविशेषत्वाद्भावरूपत्वात् हेतुरूपत्वाच्च हेतुभूतगुणोत्प्रेक्षणरूपा भावाभिमानिनौ ।

एवमिति । अत्र प्रतीयमानायां जातिरूपहेतूतप्रेक्षायां यथा मम—

**"सार्द्धं युवोरसा युद्धे कठिनात्मा जयार्जितात् ।**
**वीरत्वाल्लभतेऽत्यन्तं तुङ्गत्वं तरुणोस्तनः ॥"**

अत्र इवाद्यभावात् वीरत्वादिवेति हेतुभूतवीरत्वजातेरुत्प्रेक्षणाच्च प्रतीयमाना जात्युत्प्रेक्षा ।

प्रतीयमानगुणोत्प्रेक्षायान्तु "तन्वङ्ग्या" इत्याद्युदाहृतमेव । "रावणस्यापि" इत्यादौ "इव" इत्यत्र "किल" इति पाठे प्रतीयमाना आख्यातुमिति फलभूतक्रियोत्प्रेक्षा । प्रतीयमाना द्रव्योत्प्रेक्षा यथा मम—

**"यामिन्याः प्रथमे यामे द्रुतं प्रवसता सता ।**
**एकान्तस्मरसन्तप्ता त्वया सा भुवि शायिता ॥"**

अत्रापि इवाद्यभावात् त्वयेत्येकव्यक्तिवाचित्वात् हेतूभूतत्वाच्च त्वयेवेति प्रतीयमाना हेतूभूतद्रव्यो-त्प्रेक्षा । प्रतीयमाना स्वरूपात्प्रेक्षा तु न सम्भवतीति परस्ताद्वक्ष्यति । एवमभावाभिमानेऽपि प्रतीयमानोत्प्रेक्षा समुन्नेया ।

ननु "तन्वङ्ग्याः स्तनयुग्मेन" इत्यादावुत्प्रेक्षालङ्कारध्वनेङ्गीकारेणैवोपपत्तौ किमर्थ मुत्प्रेक्षायाः प्रतीयमा-नाख्यभेदसामान्यमेवाङ्गीक्रियत इत्याशङ्कते नन्विति । उक्तमिति । "वस्तु वालङ्कतिर्वाऽपि" इत्यनेनेति शेषः । उच्यते सिद्धान्त इत्यर्थः । व्यङ्ग्योत्प्रेक्षायामुत्प्रेक्षालङ्कारध्वनौ "इत्यादावुत्प्रेक्षणं विनापि वाक्यविश्रान्तिः" इति परेणान्वयः ।

महिलेति । चतुर्थपरिच्छेदो एवे तदनूदितं व्याख्यातञ्च द्रष्टव्यम् (२३७ पृष्ठे) । अत्र अमान्तीवेति अभावाभिमानि प्रतीयमान-क्रियोत्प्रेक्षाध्वनिरवगन्तव्यः । किञ्चात्र, विशेषोक्तिध्वनिरपि तत्रप्रस्तावे दर्शितः ।

इत्यादाविति । उत्प्रेक्षणम् "अमान्तीव" इति सम्भावनाम् । वाक्यस्य विश्रान्तिः समाप्तिः, सम्भवतीति शेषः । अनुपपत्तिलेशस्याप्यभावादिति भावः । इह तु "तन्वङ्ग्याः स्तनयुग्मेन" इत्यादौ तु । असम्भवादिति ।

स्तनयोरचेतनत्वादिति भावः। उत्प्रेक्षयैवेति।उत् प्रेक्षावाचकस्य इवशब्दस्य अध्याहार कल्पनयैवेत्यर्थः, वाक्यविश्रान्तिरिति पूर्वणान्वयः। व्यङ्ग्य प्रतीयमानीत् व्यङ्ग्य-प्रतीक्षायोरुत्प्रेक्षाध्वनि-प्रतीयमानोत्प्रेक्षयोः। तथा च तत्रोत्प्रेक्षणं विना अन्वयानुपपत्तिस्तत्र प्रतीयमानोत्प्रेक्षा, यत्र तु अन्वयीपपत्तिस्तत्र उत्प्रेक्षाध्वनिरिति भेदात् प्रतीय नानीत् प्रक्षासा मानोत्प्रेक्षासामान्यमङ्गीकर्तव्यमेवेति भावः।

## विमला

प्रतीयमानामुदाहरति, तन्वङ्ग्या इति।—तन्वङ्ग्याः,—कृशाङ्ग्याः, स्तनयुग्मेन—पयोधरयुगलेन, गुणिने—सूत्रवते, सूत्रगुम्फिताय इत्यर्थः, अन्यत्र—विद्यादयादाक्षिण्यादिगुणशालिने, हाराय स्थानम्—अवकाशः, न दक्षम् इतिं लज्ज्या—त्रपया, (दानाभावो हि लज्जासम्पादकः) मुखं न प्रकटीकृतं—प्रकाशीकृतं, मुखस्य कालिम्नाऽऽवृतत्त्वादप्रकटनमिति भावः।

महिलेति।—["महिलासहस्रभरिते तव हृदये सुभग! सा अमान्ती। अनुदिनमनन्यकर्मा अङ्गं तनुकमपि तनयति।" इति संस्कृतम्] अस्य व्याख्या चतुर्थे परिच्छेदे ३०० पृष्ठे द्रष्टव्या।

उत्प्रेक्षणं विनाऽपीति।—तव हृदये वस्तुमिवेति फलोत्प्रेक्षामन्तरेणापीत्यर्थः, वाक्यविश्रान्तिः,—वाक्यार्थसङ्गतिरित्यर्थः; तथा च—यत्र वाक्यार्थविश्रान्तेः परं तातपर्य्यालोचनया अलङ्काराणां प्रतीतिः, तत्र तेषां व्यङ्ग्यत्वं, यत्र तु यदलङ्कारसद्भावमन्तरेण वाक्यार्थविश्रान्तिस्तत्र तत्प्रतीयमानत्वम्। स्तनयोरिति।—सान्द्रत्वेन हारस्यावकाशाप्राप्तिः, तत्रेयमुत्प्रेक्षा इत्याशयः, उत्प्रेक्षयैव—उत्प्रेक्षावाचकेवाद्यध्याहारेणैव, वाक्यविश्रान्तिरित्यन्वयः। व्यङ्ग्येति।—उत्प्रेक्षाध्वनिप्रतीयमानोत्प्रेक्षयोः इत्यर्थः।

## लक्ष्मी

एवं वाच्यां दिङ्मात्रमुदाहृत्य प्रतीयमानोत्प्रेक्षामुदाहरति—**तन्वङ्ग्या** इति। तन्वङ्ग्याः स्वभावत एव कृशाङ्ग्या अस्याः प्रियतमायाः स्तनयुग्मेन पयोधरयुगलेन गुणिने सूत्रग्रन्थिताय अन्यत्र विद्यादयादाक्षिण्यादिगुणशालिने हाराय स्थानं न दत्तं नितान्तसान्द्रसन्निवेशादवस्थानदेशो न दत्त इति हेतोर्लज्जयेव मुखम् आननम् चूचुकापरपर्यायम् अग्रभागद्वयञ्च न प्रकटीकृतं प्रकाशितं जनसमाजे न दर्शितमित्यर्थः, एकत्रोपर्शितया लज्जया अन्यत्र तु वस्त्रावृतत्वेनेतिभावः। अन्योऽपि विद्यादिगुणशालिने पुरुषाय कुतोऽपि हेतोः स्थानमप्रदाय लज्जया जनसमाजे मुखं न प्रकटयति।

लक्ष्ये लक्षणं योजयति—**अत्रेति**। आदिपदेन मन्ये शङ्के, ध्रुवं, नूनं, प्राय, अवैमि, ऊहे तर्कयामि, जाने, उत्प्रेक्षे, इत्याद्युत्प्रेक्षावाचकान्तराणां परिग्रहः। **प्रतीयमानोत्प्रेक्षेति**। सा च लज्जाया गुणविशेषत्वाद्भावरूपत्वान्निमित्तरूपत्वाच्च निमित्तभूतगुणोत्प्रेक्षणरूपो भावाभिमानिनी।

उदाहरणान्तरविषये आह—एवमिति। अत्र दिङ्मात्रं प्रतीमानायां गुणरूपहेतूत्प्रेक्षायां यथा—

**'विक्रीय विस्पष्टमुखेन बाला मालाकृतः कैरवकोरकाणि।**

**विक्रेतुकामा विकचाम्बुजानि चेलाञ्चलेनानमावृणोति॥'**

इत्यत्राम्बुजविक्रयेच्छाया मुखावरणहेतुत्वाभावात् इवाद्यभावात् विक्रेतुकामेवेतिगुणरूपहेतूत्प्रेक्षणाच्च प्रतीयमाना गुणोत्प्रेक्षा, तदैव मुखचन्द्रादर्शनात् पद्मनिमीलनस्य वारणमितिभावः। एवमन्यदुदाहरणं स्वयमूह्यम्।

ननु 'तन्वङ्ग्याः स्तनयुग्मेन' इत्यादावुत्प्रेक्षालङ्कारध्वनेः स्वीकारेणैवेष्टसिद्धावलमभिनवोत्प्रेक्षायाः प्रतीयमाननामकभेदसामान्यस्वीकारेणेत्याशङ्कामुत्थापयति—**नन्विति**। उक्तमिति। 'वस्तु वाऽलङ्कृतिर्वाऽपि' इत्यादिना ध्वनिनिरूपणावसरे इति शेषः। उच्यते युक्तियुक्तसिद्धान्तः प्रतिपाद्यत इत्यर्थः। व्यङ्ग्योत्प्रेक्षायाम् काव्यस्य ध्वनित्वप्रयोजकस्य व्यङ्ग्यभूतस्योत्प्रेक्षायाम् उत्प्रेक्षालङ्कारध्वनावित्यर्थः, इत्यादावुत्प्रेक्षणं विनाऽपि वाक्यविश्रान्तिरित्युत्तरेणास्याः सम्बन्धः।

समाधत्ते—**उच्यत** इति। महिलेति। चतुर्थपरिच्छेदे ध्वनिनिरूपणावसरेऽनूदितं तत्रैव व्याख्यातञ्चावलोकनीयम्। नायकस्यानेकानायिकानुरागात् कृशीभवन्त्यास्तत्पत्न्या अवस्थां तस्मिन् आवेदयन्त्यास्तत्सख्या उक्तिरियम्। अत्र **अमान्तीवेति**। अभावाभिमानिनीप्रतीयमानक्रियोत्प्रेक्षाध्वनिरित्यवधेयम्। तथा विशेषोक्तिध्वनिरप्यस्तीत्यपि तत्रैवोपपादितः। **इत्यादाविति**। उत्प्रेक्षणम्, 'अमान्तीव' इति सम्भावनाम्। वाक्यविश्रान्तिः वाक्यसमाप्तिः सम्भवतीतिशेषः, अमान्तीतिपदस्य 'तव हृदयानुरागपात्रतामप्राप्य' इत्यर्थेनाभिधेये विश्रान्तेस्तत्र कस्यापि विप्रतिपत्तेरदर्शनादितिभावः। इह तु 'तन्वङ्ग्याः स्तनयुग्मेन' इत्यादौ प्रकृतोदाहरणे त्वित्यर्थः। **असम्भवादिति**। रतनयोश्चेतनत्वाभावादित्याशयः। **उत्प्रेक्षयैवेति**। उत्प्रेक्षावाचकेवादिपदाध्याहारकल्पनयैवेत्यर्थः, वाक्यविश्रान्तिरितिपूर्वेणैव सम्बन्धः, व्यङ्ग्यप्रतीयमानोत्प्रेक्षयोरुत्प्रेक्षाध्वनिप्रतीयमानोत्प्रेक्षयोरित्यर्थः। एवञ्च यत्रोत्प्रेक्षणं विनापि अन्वयोपपत्तिरतत्रोत्प्रेक्षाध्वनिः, यत्र तूत्प्रेक्षणं विना अन्वयानुपपत्तिस्तत्र प्रतीयमानोत्प्रेक्षेति पार्थक्यात् उत्प्रेक्षाध्वनेरतिरिक्तं प्रतीयमानोत्प्रेक्षासामान्यमकामेनाऽप्यवश्यं स्वीकर्तव्यम्, एवञ्च यत्कैश्चित्त 'महिलासहस्रे'त्यादिप्रतीयमानोत्प्रेक्षायामुदाहृतं तदापातरमणीयमितिभावनीयम्।

## रुचिरा

द्रव्यं निर्दिशति—**अत्र**। **चन्द्रः**। **इति**। **एकव्यक्तिवाचित्वात्**। **द्रव्यशब्दः**। एतदुपलक्षणं यमुनाऽऽदेः। तथा च—चन्द्रादेर्द्रव्यत्वाद्द्रव्योत्प्रेक्षेयम्। चन्द्रादेर्भावपदार्थत्वाद्भावाभिमानिनीव शब्दप्रयोगाच्च वाच्या। न चेयमुपमा, चन्द्रस्यापरत्वे यमुनायाः राकायाश्चोपमानताया अप्रसिद्धेः। यथा वा—'कलिन्दशैलादियमाप्रयागं केनापि दीर्घा परिखा निखाता। मन्ये तलस्पर्शविहीनमस्यामाकाशमानीलमिदं विभाति ॥' इति, अत्र हि आकाशत्वस्य स्वरूपात्मकत्वात् द्रव्योत्प्रेक्षा।

एवं जात्याद्युत्प्रेक्षां निर्दिश्यात्र भावाभिमानित्वेन विशेषयति—**एते** इत्यादिना। स्पष्टम्। अभावाभिमानेनोत्प्रेक्षामुदाहर्तुमाह—**अभावाभिमाने**। **यथा**—'**कष्टं** हन्त। **अस्याः** कान्तायाः। **कपोलफलकौ** गण्डदेशौ। **तथाविधौ** तथाऽनुभूतसौन्दर्य्यौ। **भूत्वा**। **अन्योऽन्यं** परस्परम्। **अपश्यन्तौ**। **इव**। **इदृशामी**दृशीमेवंविधामिति यावत्। **क्षामतां** कृशताम्। **गतौ**। वियोगावस्थायां कामपि दष्टवत उक्तिरियम्। पूर्वे संयोगे स्फीतत्वादुभौ परस्परं ददृशतुः, संप्रति पुनः प्रवासे कार्श्यातिशयात्तयोरवनतत्वेन नासाया उन्नताया व्यवधायिकात्वेन दर्शनाभावः सम्भवति, कपोलफलकयोरचेतनतया दर्शकत्वासम्भवेऽपि दर्शनमुत्प्रेक्षितमिव प्रयोगाद् वाच्या दर्शनस्याभावरूपत्वादभावाभिमानिनी दृशेश्च क्रियात्वात् क्रियोत्प्रेक्षेयम् ॥ १४१ ॥'

क्रियोत्प्रेक्षां निर्दिशति—**अत्रे**त्यादिना। स्पष्टम्। उदाहरणान्तरविषये प्राह—**एवमित्यादि**। स्पष्टम्। यथा वा—'बाहुजानां समस्तानामभाव इव मूर्तिमान्। जयत्यतिबलो लोके जामदग्न्यः प्रतापवान् ॥' इत्यत्र बाहुजत्वावच्छिन्नानामभावो विरोधित्वनिमित्तेनोत्प्रेक्ष्यते। 'समस्तलोकदुःखाना'मिति प्रथमपादपाठे गुणस्याभावाभिमानिन्युत्प्रेक्षा। 'द्यौरञ्जनकालीभिर्जलदालीभिस्तथा वव्रे। जगदखिलमपि यथाऽऽसीन्निर्लोचनवर्गसर्ग-

मिव ॥' अत्र चाक्षुषज्ञानसामान्यशून्यतया पार्य्यन्तिकः क्रियाऽभावो धर्म्मः। मन्मथस्याभावमिव दृक्पातं तव मन्महे। समुद्धर दयासिन्धो नानाऽर्थाभासतर्षणात् ॥' इत्यत्र मन्मथस्य द्रव्यत्वात्तस्य विरोधित्वेन निमित्तेनाभाव-तादात्म्येनोत्प्रेक्षणम्। निमित्तभेदेन भिद्यमानामेतामुदाहरति—**निमित्तस्येत्**यादिना। स्पष्टम्। एवं वाच्यां दिङ्मा-त्रमुदाहृत्य प्रतीयमानामुत्प्रेक्षामुदाहरति**प्रतीयमाना**। **उत्प्रेक्षा**। यथा—**तन्वङ्ग्याः** कृशोदर्य्याः। **स्तनयुग्मेन** पयोधरयुगलेन। गुणिने गुणः सूत्रम्, अन्यत्र दयादाक्षिण्यादिस्तद्वते। **हाराय**। स्थानमवकाशम् अन्यत्रोपभोगक-त्वेनाश्रयम्। **न**। **दत्तम्**। **इति**। **लज्जया**। **मुखम्**। **न**। **प्रकटीकृतं** विकासितम्। कलिम्नावृत्तत्वात् निर्मलाभाव एवात्राप्रकटनम्। दानाभावश्च लज्जायाः कारणम्। स्तनयोः सान्द्रत्वेन हारस्यावकाशाभावे चोत्प्रेक्षेयम् ॥ १४२ ॥

लक्ष्यं समर्थयते-**अत्रे**त्यादिना। स्पष्टम्। इदम्बोध्यम्-लज्जा गुणस्तन्निमित्तेयं चोत्प्रेक्षा। उदाहरणान्त-रविषये प्राह—**एवम्**। **अन्यत्**। 'उदाहरणीयमपि बोध्यमिति शेषः। यथा—'निष्कलङ्कं तव यशः पश्यन् स्वं च कलङ्कितम्। न कश्चन दिवा लोकं विभावयति चन्द्रमाः ॥' इत्यत्र 'नूनं मन्ये'इत्यादेरभावात्। 'स्वं न दर्शयतीति मन्ये' इत्यर्थस्य च प्रतीयमानत्वेनेयं प्रतीयमानोत्प्रेक्षा। इति दिक्।

अस्याः प्रतीयमानात्वाङ्गीकारे आशङ्कते—**नन्वि**त्यादिना। स्पष्टम्। व्याख्यातपूर्वे च पद्यमिदं चतुर्थे परिच्छेदे।

अयम्भावः—'तव हृदये वस्तुमिवे'त्युत्प्रेक्षामन्तरापि'महिला'इत्यत्र वाक्यार्थावगमः सम्पन्नमूर्तिः, अत्र तु उत्प्रेक्षावाचकस्येवाद्यन्यतमस्याध्याहारे एव लज्जायास्तत्र वस्तुतोऽसम्भवात्। इति।

अत्र वाच्योत्प्रेक्षायाः षोडशसु भेदेषु मध्ये विशेषमाह—

**तत्र वाच्याभिदाः पुनः।**

**विना द्रव्यं त्रिधा सर्वाः स्वरूपफलहेतुगाः ॥ ४३ ॥**

तत्रोक्तेषु वाच्यप्रतीयमानोत्प्रेक्षयोर्भेदेषु मध्ये ये वाच्योत्प्रेक्षायाः षोडश भेदास्तेषु च जात्यादीनां त्रयाणां ये द्वादश भेदास्तेषां प्रत्येकं स्वरूपफलहेतुगम्यत्वेन द्वादशभेदतया षट्त्रिंशद्भेदाः। द्रव्यस्य स्वरूपोत्प्रेक्षणमेव संभवतीति चत्वार इति मिलित्वा चत्वारिंशद्भेदाः। अत्र स्वरूपोत्प्रेक्षा यथा पूर्वोदाहरणेषु 'स्मरस्य विजयस्तम्भ' इति। 'सप्रसवा इव' इत्यादयो जातिगुणस्वरूपगाः। फलोत्प्रेक्षा यथा—

**'रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः।**

**विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम्॥'**

अत्राख्यातुमिति भूप्रवेशस्य फलं क्रियारूपमुत्प्रेक्षितिम्। हेतूत्प्रेक्षा यथा—

---

## विवृतिः

रामास्तो रामविक्षिप्तः। बाणस्य भूतलप्रवेशो रामवीर्यातिशयं ख्यापयति। तत्र प्रियाख्यानसंभावना॥ **सैषेति**। सीतां प्रति श्रीरामस्योक्तिरियम्। **विचिन्वता**। अन्विष्यता। अत्र सीताचरणासंबन्धः सीताचरणविश्लेषदुःखत्वेन संभावितः॥ **मिलित्वेति**। 'चतुर्विंशतिप्रकारफलहेतूत्प्रेक्षाभिः' इति शेषः।

## विज्ञप्रिया

**तत्र वाच्येति**। वाच्याया उत्प्रेक्षाया भिदाः भेदाः। जात्यादिचतुष्कस्य भावाभावरूपत्वेन द्वैगुण्यं प्रत्येकं च गुणक्रियाहेतुकत्वेन द्वैगुण्याच्चतुर्विधत्वमिति वाच्योत्प्रेक्षाया यत्तत् षोडशविधत्वमुक्तं तत्र द्रव्योत्प्रेक्षाचतुष्कं विना द्वादशानामेव त्रैगुण्यं भवतीत्याह—**विना द्रव्यमिति**। द्रव्योत्प्रेक्षाचतुष्कं विनेत्यर्थः। **स्वरूपेति**। उत्प्रेक्षितस्य वस्तुनः कस्यापि फलत्वेन हेतुत्वोक्तौ तत्स्वरूपविषया उत्प्रेक्षास्वरूपोत्प्रेक्षा। तद्द्वयान्यतरत्वेन उक्तौ तु तद्द्वयान्यतरगा।

व्याचष्टे—तत्रेति। **ये द्वादश भेदा** इति। चतुष्कत्रयस्य द्वादशत्वात्। तेषां प्रत्येकं द्वादशभेदतयेत्यर्थः। एकैकचतुष्कस्य त्रैगुण्याद् द्वादशत्व्-**षट् त्रिंशदिति**। द्वादशत्रयस्य षट्त्रिंशत्वात्। **चत्वारिंशदिति**। द्रव्यो प्रेक्षाचतुष्कस्य षट्त्रिंशत्साहित्यात्। तत्र जातिगुणयोः स्वरूपोत्प्रेक्षाद्वयं पूर्वोक्तमेव दर्शयति—**अत्र स्वरूपेति**। जातिगुणस्वरूपा इत्यत्र जातिगुणादिस्वरूपा इत्यर्थः। आदिपदात् क्रियाद्रव्योत्प्रेक्षापरिग्रहः। अत्रैव जातिगुणेत्यत्र क्रियागुणेति क्वचित्प्रामादिक एव पाठः। क्रियोत्प्रेक्षाया अनुक्तत्वेन आदिपदग्राह्यत्वादेव, तत्क्रियास्वरूपोत्प्रेक्षा स्नातीवेति, द्रव्यस्वरूपोत्प्रेक्षा पूर्णचन्द्र इवापर इति पूर्वोक्तद्वयमेव।

इत्थं स्वरूपोत्प्रेक्षाया द्रव्येऽपि सम्भवादादिपदग्राह्याभ्यां सह जात्यादिचतुर्ष्वेव दर्शयित्वा फलोत्प्रेक्षां हेतूत्प्रेक्षाञ्च द्रव्यं विहाय जात्यादित्रिषु दर्शयितुं क्रियागामिनीं फलोत्प्रेक्षामाह—**रावणस्यापीति**।

रामास्तो रामक्षिप्तः आशुगोऽपि रावणस्य हृदयं भित्त्वा उरगेभ्यः प्रियमाख्यातुमिव भुवं विवेश इत्यन्वयः। **अत्रेति**। आख्यानक्रियारूपं प्रवेशस्य फलमुत्प्रेक्षितमित्यर्थः। तुमर्थेच्छाविषयस्य फलत्वप्रतीतेः।

## लोचन

तद्भेदानाह—**वाच्येति**। वाच्या इवादिद्योतकपदनिबन्धनाद् झटिति प्रत्येया। प्रतीयमाना द्योतकपदविरहेण वाच्यार्थपर्य्यालोचनानुसन्धेया। तदेवाह—**वाच्ये वादेरिति**। एकधर्म्मवन्नानाधर्मवाचकोपमेयोऽर्थो जातिः। गुणः सामानाधिकरण्येन सिद्धतानिर्देश्यो धर्मः। क्रिया साध्यताकारनिर्द्देश्यो धर्मः। द्रव्यं शृङ्गग्राहिकया निर्देश्यो धर्मः। उत्प्रेक्ष्यमध्यवसेयम्। प्रकृतस्यापि एतद् भेदयोगेऽपि वैचित्र्यानावहत्वान्न भेदगणनम्, सम्भावनप्राणस्य अस्यालङ्कारस्य सम्भाव्यमानविशेषादेव विशेषोपालम्भात्। द्वयोरुक्तभेदयोः। भावोजात्यादिरेव। अभावस्तेषामेवासत्ता। निमित्तस्य उत्प्रेक्षणकारणस्य विषयधर्मस्य ता उक्तषोडशप्रकाराः। उत्प्रेक्ष्यते प्रकाश्यते, अर्थात् सजातीयमनेकमनया स्वल्पयापीत्युत्प्रेक्षा।

जात्युत्प्रेक्षा। जातिस्वरूपोत्प्रेक्षणात्।

एवं वक्ष्यमाणे गुण इत्यनन्तरमुत्प्रेक्ष्यते इति शेषः। एवमन्यत्र।

तथाविधौ रूपवन्तौ। क्रियाया दर्शनरूपायाः।

मुखं चूचुकापरपर्य्यायं वदनञ्च। गुणः सूत्रं विज्ञत्वविनयादिश्च। अत्र गुणोत्प्रेक्षा प्रतीयमाना। भावाभिमानश्च अन्यत्र यथा मम तातपादानाम्।

**विकसितमुखीं रागासङ्गाद् गलत्तिमिरांशुकां**
**दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः।**
**जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः**
**श्रयति हरितं प्रातः प्राचेतसीं तुहिनद्युतिः॥**

अत्र निरीक्ष्येवेति निरीक्षणक्रियोत्प्रेक्षा प्रतीयमाना। एवमन्यत्र।

एवं च उत्प्रेक्षाध्वनेर्विवेकं दर्शयितुकाम आशङ्कते—**ननु** इति। सिद्धान्तमाह—**उच्यत** इति। व्यङ्ग्योत्प्रेक्षायां काव्यस्य ध्वनित्वप्रयोजकस्य व्यङ्ग्यभूतस्योत्प्रेक्षायाम्। गाथार्थः पूर्वं व्याख्यात एव उत्प्रेक्षां विना अपि वाक्यविश्रान्तेरिति। अयमाशयः। अमान्तीति पदस्य एव हृदयानुरागपात्रतामप्राप्य" इत्यर्थेनाभिधेये विश्रान्तेरिति। इह प्रकृतोदाहरणे व्यङ्ग्यप्रतीयमानोत्प्रेक्षयोर्भेद इति। अयमाशयः। प्रतीयमानस्य वाच्यसिद्ध्यङ्गत्वादित्यादिना यथान्येषामपि बहूनामलङ्काराणामलङ्कार विशेषता तथोत्प्रेक्षाया अपीति न काचित् क्षतिः। यत्र तु काव्यध्वनित्वहेतुर्व्यङ्ग्यता न तत्रालङ्कारता युक्तेति। एवं यत्कैश्चित् महिलासहस्रेत्यादि प्रतीयमानोत्प्रेक्षायामुदाहृतं तदयुक्तमिति भावः।

स्वरूपफलहेतुगाः। स्वरूपोत्प्रेक्षा, फलोत्प्रेक्षा, हेतूत्प्रेक्षा चेति। स्वरूपं धर्म्मान्तरम्, विषयसमसंख्यतयाभिहितौ धर्म्मश्च।

रामास्तो रामेण क्षिप्तः । प्रियमाख्यातुमिवेति सम्बन्धः ।

## कुसुमप्रतिमा

वाच्योत् प्रेक्षाः पुनर्विभजते तत्रेति । तत्र तेषु वाच्योत्प्रेक्षा प्रतीयमानोत्प्रेक्षयोर्भेदेषु मध्ये, द्रव्यं वाच्यां द्रव्योत्प्रेक्षा विना अन्याः सर्वा वाच्याया उत्प्रेक्षाया भिदा भेदाः स्वरूप फल हेतुगाः सत्यः, पुनस्त्रिधा त्रिविधा भवन्ति । स्वरूपञ्च फलञ्च हेतुञ्च गच्छन्तीति तास्तथोक्ताः । "तादर्थ्यचतुर्थ्यन्तेन तुमुनन्ते न वा पदेन यत्रोत्प्रेक्षः सा फलोत् प्रेक्षा । हेतुविभक्तन्तपदेनोत्प्रेक्षा हेतूत्प्रेक्षा । ताभ्यामितरा स्वरूपोत् प्रेक्षा" इति तर्कवागीशः ।

स्फुटमेव कारिकार्थं विवृणोति तत्र ति । त्रयाणां जाति-गुण-क्रियारूप-पदार्थानाम् । "विना द्रव्यम्" इत्यस्य हेतुगर्भ निष्कर्षमाह द्रव्यस्येति । स्वरूपोत्प्रेक्षणमेव, न तु फलतया हेतुतया वा उत्प्रेक्षणम्, इत्यवशब्दार्थः, तथात्वे वैचित्र्यासम्भवादित्याशयः । इदन्तु वाच्योत्प्रेक्षामात्रनियतम्, प्रतीयमानोत्प्रेक्षायान्तु स्वरूपोत्प्रेक्षणमेव न सम्भवति, किन्तु फलोत्प्रेक्षणं हेतूत्प्रेक्षञ्च सम्भवत्येव; वैचित्र्यसम्भवात् "प्रतीयमानाभेदाश्च प्रत्येकं फलहेतुगा" इति वक्ष्यमाणात् "स्वरूपोत्प्रेक्षाप्यत्र न भवति" इत्यभिधास्यमानाञ्च ।

अत्रेति । पूर्वोदाहरणेषु "ऊरुः कुरङ्गकदृशः" इत्यादिषु । आदिशब्देन "स्नातीव" पूर्णचन्द्र इवापरः" इत्यनयोर्ग्रहणम् । तेन जाति गुण इत्यनन्तरमप्यादिशब्दान्तरमध्याहर्तव्यम् ।

रावणस्येति । रघुवंशद्वादशसर्गे श्लोकोऽयम् । रामेण अस्तो विक्षिप्तः, आशुगो बाणः, रावणस्य हृदयं भित्त्वापि, उरगेभ्यः, पातालवासिभ्यः सर्पेभ्यः प्रिय रावणवधरूपं प्रीतिजनकवृत्तान्तम्, रावणस्य पातालवासिष्वपि कृतात्याचारत्वादिति भावः, आख्यातुं वक्तुमिव भुवं विवेश ।

अत्रेति । उत्प्रेक्षितमिति । केवलं एव भूपवेश आख्यानफलकत्वेन सम्भावित इत्यर्थः ।

सेषेति । रघुवंशत्रयोदशसर्गे श्लोकोऽयम् । एषा दृश्यमाना सा स्थली स्थानम्, यत्र स्थल्याम्, त्वां सीतां विचिन्वता अन्विष्यता मया, उर्व्यां भूनले भ्रष्टं तव चरणारविन्दादेव विच्युतम्, एकं नूपुरम्, तव चरणारविन्दाद्रयो विश्लेषो विच्छेदस्तेन यत् दुःखं तस्मादिव हेतोः, बद्धमौनं मौनावलम्बि निःशब्दमिति यावत्, अदृश्यत् दृष्टम् ।

अत्रेति । हेतुत्वेन बद्धमौनत्वस्येत्यर्थः । उत्प्रेक्षितः सीताचरणविश्लेष एव तज्जनन्यदुःखत्वेन सम्भावितः ।

एवमिति । तत्र गुणरूपफलोत्प्रेक्षा यथा काव्यप्रकाशे—

"उन्मेषं यो मम न सहते जातिवैरी निशायामिन्दोरिन्दीवरलदृशां तस्य सौन्दर्य्यदर्पः ।

नीतः शान्तिं प्रसभमनया वक्तकान्त्येति हर्षात् लग्ना मन्यं ललिततनु ! ते पादयोः पद्मलक्ष्मीः ॥" अत्र, हर्षफलं पादसंयोगात्मकगुणरूपमुत्प्रेक्षितम् ।

## विमला

तत्रेति ।—तत्र—तयोर्वाच्यप्रतीयमानयोर्मध्ये, विना द्रव्यं—द्रव्यभिन्नाः, सर्वाः,—द्वादशेत्यर्थः, वाच्याभिदाः,—वाच्योत्प्रेक्षाभेदाः, स्वरूपफलहेतुगाः,—स्वरूपञ्च फलञ्च हेतुश्चेति तान् गच्छन्तीति तथोक्ताः, ["अन्यत्रापि दृश्यते इति वक्तव्यम्" (वा.) इति डः] तत्र फलेहतुभ्यामितरा उत्प्रेक्षा स्वरूपगा, फलहेतुभावेन

द्रव्यसम्भावनाया: वैचित्र्याजनकत्वात् इति भावः; तादर्थ्यचतुर्थ्यन्तेन तुमुनन्तेन वा पदेन उत्प्रेक्षाफलगा, हेतुविभक्त्यन्तपदेन उत्प्रेक्षा हेतुगा इति त्रिधा—त्रिप्रकाराः, भवन्तीति शेषः।

पूर्वोदाहरणेषु—"उरुः" इत्यादिषु इत्यर्थः।

फलोत्प्रेक्षामुदाहरति, रावणस्येति।—रामेण अस्तः,—निक्षिप्तः, आशुगः,—शरः, रावणस्य हृदयं—वक्षः स्थलं, भित्त्वाऽपि—विदार्य्यापि, उरगेभ्यः,—नागेभ्यः, पातालनिलयेभ्य इति भावः, प्रियं—पीतिजननव्यापारं, रावणनिधनरूपमित्यर्थः, आख्यातुं—कथयितुमिव, तेषामपि रावणेनोत्पीड़ितत्वात् तत्र प्रियाख्यानसम्भावना इति भावः, भुवं—पृथिवीं, विवेश। बाणस्य भूतलप्रवेशो रामबाह्वोः वीर्य्यातिशयं ख्यापयति। अत्र तुमन्प्रत्ययान्तेन "आख्यातुम्" इति पदेन राम वीर्य्यातिशयद्योतनरूपस्य फलस्योत्प्रेक्षा। रघुवंशस्येदं पद्यम्।

## लक्ष्मी

वाच्योत्प्रेक्षाया भेदान्तरं दर्शयितुमुपक्रमते—**अत्रेति**। स्पष्टम्।

अत्रापि विशेषं दर्शयति—**तत्रेति**। तत्र तेषु वाच्योत्प्रेक्षाप्रतीयमानोप्रेक्षयोर्द्वात्रिंशद्भेदेषु मध्ये इत्यर्थः। द्रव्यं द्रव्यमूलकवाच्योत्प्रेक्षां विना अन्याः सर्वा वाच्याभिदा वाच्योत्प्रेक्षाभेदाः जातिगुणक्रियामूला द्वादशप्रकारा इत्यर्थः स्वरूपफलहेतुगाः सत्यः, पुनस्त्रिधास्त्रिविधा भवन्ति। स्वरूपञ्च फलञ्च हेतुञ्च गच्छन्ति ये ते तादृशाः स्वरूपगा फलगा हेतुगाः। **स्वरूपेति** प्रतीकमादाय **तर्कवागीशः**—'तादर्थ्यं चतुर्थ्यन्तेन तुमुनन्तेन वा पदेन यत्रोत्प्रेक्षा सा फलोत्प्रोक्षा, हेतुविभक्तयन्तपदेनोत्प्रेक्षा हेतूत्प्रेक्षा' इत्याह। फलहेतुभावेन द्रव्यसम्भावनायाश्च चमत्कारातिशयजनकत्वान्न द्रव्योत्प्रेक्षाया ताभ्यामितरा स्वरूपोत्प्रेक्षा' अपि जातिगुणक्रियोत्प्रेक्षाणामिव फलहेत्वात्मना भेदान्तरभागित्वम्, अत एव विवृतौ केवलं स्वरूपेण द्रव्योत्प्रेक्षाया भेदान्तरभागित्वमुक्तम्।

कारिकार्थं स्पष्टयति—**यत्रेति**। त्रयाणां जातिगुण-क्रियारूप-पदार्थानामित्यर्थः।

**द्वादश भेदा** इति। एकैकचतुष्कस्य त्रैगुण्यात् द्वादशत्वमगन्तव्यम्। **षट्त्रिंशद्भेदा** इति। द्वादशत्रयस्य मेलनात् षट्त्रिंशत्वम्।

**'विना द्रव्यम्'** इत्यस्य हेतुगर्भसारमभिव्यनक्ति—**द्रव्यस्येति**। स्वरूपोत्प्रेक्षणमेव, न तु फलत्वेन हेतुत्वेन वा उत्प्रेक्षणम् इत्येवकारार्थः तत्र चमत्कारातिशयासम्भवादित्तिभावः।

इदञ्च केवलावाच्योत्प्रेक्षायामेव नियतम्। प्रतीयमानोत्प्रेक्षायान्तु स्वरूपोत्प्रेक्षणमेव भवितुं न शक्नोति किन्तु फलोत्प्रेक्षणहेतूत्प्रेक्षणं च भवितुं शक्नोत्येव, चमत्कारातिशयसम्भवात् 'प्रतीयमाना भेदाश्च प्रत्येकं फलहेतुगाः इति प्रतिपादयिष्यमाणत्वात् 'स्वरूपोत्प्रेक्षाऽप्यत्र न भवति' इति वक्ष्यमाणत्वाच्च। चत्वारिंशदिति। द्रव्योत्प्रेक्षा चतुष्कस्य षट्त्रिंशत्साहित्यादितिभावः।

तत्र जातिगुणयोः स्वरूपोत्प्रेक्षाद्वयं पूर्वोक्तमेव दर्शयति—**अत्रेति**। पूर्वोदाहरणेषु 'ऊरुः कुरङ्गकदृशः' इत्यादिषु। आदिपदेन 'स्नातीव' 'पूर्णचन्द्र इवापरः' इत्यनयोः परिग्रहः। एवं सति 'जातिगुणस्वरूपगाः' इत्यत्र जातिगुणादिस्वरूपगा इत्यर्थो विधातव्यः। तथा च 'स्मरस्य विजयस्तम्भ' इत्यत्र जातिस्वरूपोत्प्रेक्षा, 'सप्रसवा' इत्यत्र गुणस्वरूपोत्प्रेक्षा चेति स्पष्टोऽर्थः प्रतिफलति।

इत्थं स्वरूपोत्प्रेक्षाया द्रव्येऽपि सम्भवादादिपदग्राह्याभ्यां सह जात्यादिचतुर्ष्वेवोपपाद्य, फलोत्प्रेक्षां हेतूत्प्रेक्षाञ्च द्रव्यं त्यक्त्वा जात्यादित्रिषूपपादयितुं क्रियागामिनीं फलोत्प्रेक्षामाह—**रावणस्यापीति**। रघुवंशे द्वादशसर्गे पद्यमिदम्। रामेण दशरथापत्येन अस्तः आहतः 'असु क्षेपणे' इत्यस्मात् क्तः, आशुगो बाणः 'आशुगौ वायुविशिखौ' इत्यमरः, रावणस्य लङ्कापतेः निशाचरराजस्य हृदयम् उरो भित्वा विदीर्याऽपि, उरगेभ्यः पातालवासिभ्यः पन्नगेभ्यः 'उरगः पन्नगो भोगी' इत्यमरः, प्रियं 'रावणो युष्माकं कन्यापहर्त्ता मयाद्य निहित' इति रावणवधरूपं प्रीतिकरं वृत्तान्तम्' आख्यातुं कथयितुमिव भुवं **'भित्त्वा'** इति पूर्वतोऽनुषञ्जनीयम्, विवेश प्रविवेश। अनेन रामबाणस्य वीर्यातिशयो व्यञ्जितः।

उत्प्रेक्षितं फलं दर्शयति—अत्रेति। **उत्प्रेक्षितमिति**। आख्यानक्रियारूपं प्रवेशस्य फलं सम्भावितमित्यर्थः। तुमर्थेच्छाविषयस्य फलत्वप्रतीतेः।

## रुचिरा

अस्या भेदान्तरं लक्षयितुमुपक्रमते—अत्रेत्यादिना। स्पष्टम्। अत्रापि विशेषं लक्षयति—१२० तत्र तासु द्वात्रिंशद्भिदासु उत्प्रेक्षासु मध्ये इत्यर्थः। **वाच्याभिदा** वाच्योत्प्रेक्षाया भेदा इति भावः। पुनः। **द्रव्यं** तन्मूलामुत्प्रेक्षामिति भावः। **विना**। **सर्वा** जातिगुणक्रियामूलाः अत एव-द्वादशप्रकारा इति भावः। **स्वरूपफलहेतुगाः** स्वरूपगा गुणगा हेतुगाश्च सत्य इति भावः। **त्रिधा**। 'भिद्यन्ते' इति शेषः॥ ९६॥

तदेव स्वयं व्याचष्टे—**तत्रेत्यादि**। स्पष्टोऽर्थः। इदं तु बोध्यम्—तादर्थ्यचतुर्थ्यन्तेनतुमुनन्तेन वा पदेन यत्रोत्प्रेक्षा, सा फलोत्प्रेक्षा, हेत्वर्थबोधकेन पदेन यत्रोत्प्रेक्षा सा हेतूत्प्रेक्षा, एताभ्यामितरा स्वरूपोत्प्रेक्षा च सम्भवति। फलहेतुभावेन द्रव्यसम्भावनायाश्च विच्छित्यनाधायकत्वान्न द्रव्योत्प्रेक्षाया अपि जातिगुणक्रियोत्प्रेक्षाणामिव फलहेत्वात्मना भेदान्तरभागित्वम्। अत एव—स्वरूपेण द्रव्योत्प्रेक्षाया अपि भेदान्तरभागित्वमभिहितम्। इति।

विस्तरभयाद् उदाहर्तुं प्रवृत्तोऽप्याह—**तत्रेत्यादि**। स्पष्टम्। इदम्बोध्यम्—'स्मरस्य विजयस्तम्भ' इत्यत्र जातिस्वरूपोत्प्रेक्षा, 'सप्रसवा' इत्यत्र गुणस्वरूपोत्प्रेक्षा च। अत एवोक्तम्—**इत्यादय** इत्यादि। इति।

फलोत्प्रेक्षामुदाहरति—**फलोत्प्रेक्षा**। यथा—'**रामास्तो** रामेण रामचन्द्रेणास्तः प्रहृत इति तथोक्तः। 'असु क्षेपणे इत्यस्मात् क्तः। **आशुगो** बाणः। 'आशुगौ वायुविशिखौ' इत्यमरः। रावणस्य लङ्कापते राक्षसराजस्य। **हृदयं** वक्षः। **भित्त्वा**। **अपि**। **उरगेभ्यः** सर्पेभ्यः। 'उरगः पन्नगो भोगी...' इत्यमरः। **प्रियं** 'रावणो युष्माकं कन्याहर्त्ता मायाऽद्य व्यापादित' इति प्रीतिकरं वाक्यम्। **आख्यातुम्**। **इव**। **भुवम्** 'भित्त्वे'ति पूर्वतोऽनुवृत्तम्। **विवेश** प्रविवेश। रघुवंशस्येदं पद्यम्॥ १४३॥'

उत्प्रेक्षितं फलं निर्दिशति-**अत्रेत्यादिना**। स्पष्टम्। इदम्बोध्यम्—रामबाणस्य पातालप्रवेशो रामस्य वीर्य्यातिशयद्योतनार्थस्तत्र प्रियाख्यानमुत्प्रेक्षितम्। इति।

**'सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम्।**
**अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम्॥'**

अत्र दुःखरूपो गुणो हेतुत्वेनोत्प्रेक्षितः। एवमन्यत्।

---

## विवृतिः

**हेतुफलयोस्त्विति**। हेतूत्प्रेक्षाफलोत्प्रेक्षयोस्त्वित्यर्थः। हेतूत्प्रेक्षायामुत्प्रेक्ष्यमाणस्य फलमेव निमित्तं फलोत्प्रेक्षायां तु हेतुरेवेत्यवधेयम्। **असंगतमेवेति**। विभक्त्याद्युपस्थापितस्य हेतुत्वस्य कार्यत्वस्य वा अन्वयानुपयोग्यलाभेनान्वयबोधविधुरं स्यादित्यर्थः।

## विज्ञप्रिया

**सैषा स्थलीति**—पुष्पकस्थां सीतां प्रति रामस्योक्तिरियम्। त्वां विचिन्वता विचारयता मया, यत्र भ्रष्टमर्थात्त्वच्चरणात्पतितमेकं नूपुरमदृश्यत सैषा स्थली। निःशब्दस्य नूपुरस्य मौनहेतुमुत्प्रेक्षते—**त्वच्चरणेति**। अत्रेति। हेतुत्वाभावादित्यर्थः। **एवमन्यदिति**। क्रियोत्प्रेक्षायाः फलगामित्वमेवोक्तं न हेतुगामित्वम्, गुणोत्प्रेक्षाया हेतुगामित्वमेवोक्तं न फलगामित्वम्, जात्युत्प्रेक्षायास्त्वनेकगामित्वमप्युक्तम्। एवं रीत्या तदूह्यमित्यर्थः। तत्र क्रियोत्प्रेक्षाया हेतुगत्वं यथा—

**'यशस्तव महीपाल! मार्जनादिव निर्मलम्।'**

इत्यत्र नैर्मल्यहेतुत्वेन मार्जनक्रियोत्प्रेक्षिता। गुणस्य फलगामित्वं यथा—

**'सदा कीर्तिमुखं पद्मं पुण्यार्थमिव तिष्ठति।'**

अत्र पुण्यं गुणश्च फलत्वेनोत्प्रेक्षितम्। जात्युत्प्रेक्षायाः फलगामित्वं यथा—

**"कामुकस्य रतौ वामा कन्दर्पशरपीडिता।**
**नखक्षतकृतं दुःखं सुखत्वायेव वाञ्छति॥"**

अत्र नित्याया अपि सुखत्वजातेर्दुःखे आरोप्यत्वरूपवाञ्छायाः फलमुत्प्रेक्षितम्। जात्युत्प्रेक्षाया हेतुगामित्वं यथा—

**'राहुग्रस्तोऽपि शीतांशुर्द्विजत्वादिव पुण्यकृत्।' इति**

**अत्र पुण्यजननत्वेन द्विजत्वजातिरुत्प्रेक्षिता। यद्यपि—**

**'कोकयूनोर्मनोदुःखं चन्द्रादिव समुत्थितम्।'**

इत्यादिषु द्रव्योत्प्रेक्षाया अपि हेतुगामित्वं सम्भवति तथापि विरलत्वाद् वैचित्र्यविशेषानावहत्वाच्च तदसम्भवो दर्शितः।

## लोचन

सैषेत्यत्र चलनद्रव्यसंयोगाभावाद् नूपुरस्य मौनित्वम्, तदेवं दुःखहेतुकमौनित्वाभावेनाध्यवसितम् । यद्वा नूपुरमौनित्वहेतुश्चलद्द्रव्यसंयोगाभाव एवं दुःखतादात्म्येन अध्यवसितः । तत्र च पक्षेऽतिशयोक्तिवद् विषयस्य गम्यमानता । एतच्चाग्रे स्फुटीभविष्यति ।

## कुसुमप्रतिमा

हेतूभूतजात्यत्प्रेक्षा यथा—

**"सार्द्धं युवोरसा युद्धे कठिनात्मा जयार्जितात् ।**
**वीरत्वादिव सम्प्राप्तेस्तुङ्गत्वं तरुणीस्तनः ॥"**

अत्र तुङ्गत्वप्राप्तिहेतुर्वीरत्वजातिरुत्प्रेक्षिता । एवमन्यदप्यनुसन्धेयम् ।

तत्रापि स्वरूपोत्प्रेक्षाः पुनर्विभजते उक्तीति । तत्र प्रागुक्तेषु प्रकारेषु मध्ये स्वरूपगा उत्प्रेक्षाप्रकाराः, निमित्तस्य स्वस्वकारणस्य उक्तौ अनुक्तौ च द्विधा पुनर्द्विप्रकारा भवन्ति ।

## विमला

हेतूत्प्रेक्षामुदाहरति, सैषेति ।—रावणं हत्वा पुष्पकेण अयोध्यामागच्छतः श्रीरामस्य पथि सीतां प्रत्यक्तिरियम् । अत्र "प्रिये !" इति सम्बोधनपदमध्याहार्य्यम्; सा एषा—परिदृश्यमाना, स्थली—वनभूमिः, यत्र—स्थल्यां, त्वां विचिन्वता—अन्विष्यता, मया उर्व्यां—पृथीव्यां, भ्रष्टं—च्युतम्, एकं नूपुरं—चरणभूषणं, तव चरणारविन्दात्—पादपद्मात्, सः विश्लेषः—वियोग, तेन यत् दुःखं तस्मादिव, [इत्येव हेतूत्प्रेक्षा, अत्र सीताचरणासम्बन्धः सीताचरणविश्लेषदुःखत्वेन सम्भावितः इति ज्ञेयम्] बद्धमौनं—निःशब्दम्, अदृश्यत—दृष्टम् । रघुवंशस्येदं पद्यम् । इह इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ।

## लक्ष्मी

एवं क्रियोत्प्रेक्षामुदाहृत्य हेतूत्प्रेक्षामुदाहरति—**सैषेति** । रघुवंशे त्रयोदशसर्गे रावणं निहत्य पुष्पकेणागच्छतः श्रीरामस्य सीतां प्रति तन्नूपुरलाभदेशप्रदर्शनपरं वचनमिदम् । प्रिये ! इत्यध्याहार्यम् । एषा पुरोऽलोक्यमाना सा स्थली स्थानम्, यत्र स्थल्याम्, त्वां सीतां विचिन्वता अन्वेषयता मया, उर्व्यां भूमौ भ्रष्टं तव पादारविन्दादेव विच्युतम्, एकम् (विशिष्य ज्ञापनार्थमिदम्) नूपुरं तदाख्याभरणम्, तव चरणारविन्दात् पादसरोरुहाद् यो विश्लेषो वियोगस्तेन यद् दुःखं तस्मादिव हेतोः, बद्धं दृढप्रतिज्ञं गृहीतं मौनं तूष्णीं भवनं येन तादृशं निःशब्दमितियावत्, अदृश्यत अवलोकितम् । इन्द्रवज्रोपेन्द्रवज्रयो**रुपजातिश्छन्दः** तल्लक्षणन्तूक्तमेव प्राक् ।

उत्प्रेक्षितमर्थं दर्शयति—**अत्रेति** । हेतुत्वेन बद्धमौनत्वस्येत्यर्थः । उत्प्रेक्षितः सीताचरणासम्बन्धः सीताचरणविश्लेषदुःखत्वेन सम्भावित इत्यर्थः ।

उदाहरणान्तरविषय आह—**एवमन्यदिति** । क्रियोत्प्रेक्षायाः फलगामित्वमेवोक्तं न हेतुगामित्वम्, गुणोत्प्रेक्षाया हेतुगामित्वमेवोक्तं न तु फलगामित्वम्, जात्युप्रेक्षायास्त्वनेकगामित्वमप्युक्तम्, एवंरीत्या तदूह्यमित्यर्थः ।

तत्र क्रियोत्प्रेक्षाया हेतुगत्वं यथा—

'यशस्तव महीपाल ! मार्जनादिव निर्मलम्'

इत्यत्र नैर्मल्यहेतुत्वेन मार्जनक्रियोत्प्रेक्षिता ।

गुणस्य फलगामित्वं यथा—

'सदा कीर्त्तिमुखं पद्मं पुण्यार्थमिव तिष्ठति ।'

अत्र पुण्यं गुणश्च फलत्वेनोत्प्रेक्षितम् । एवं जात्युत्प्रेक्षादीनां फलगामित्वादावुदाहरणानि स्वयमूहनीयानि ।

## रुचिरा

हेतूत्प्रेक्षामुदाहरति-**हेतूत्प्रेक्षा । यथा**-'प्रिये ! (इदमध्याहार्य्यम्) **यत्र । त्वाम् । विचिन्वता**ऽन्वेषयता । **मया । उर्व्यां** पृथिव्याम् । 'वसुधोर्वी वसुन्धरा ।' इत्यमरः । **भ्रष्टं** च्युतम् । **एकम्** । (विशिष्यबोधनार्थमिदम्) नूपुरं तदाख्यं चरणाभरणम् । **त्वच्चरणारविन्दविश्लेषदुःखात्** तव चरणारविन्दं तस्य विश्लेषस्तस्य दुःखं तस्मात् । **इव । बद्धमौनं** बद्धं दृढप्रतिज्ञं गृहीतं मौनं तूष्णीम्भवनव्रतं येन तथोक्तम् । **अदृश्यत** दृष्टम् । **सा । एषा । स्थली** भूमिः । रघुवंशस्येदं पद्यम् । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः । रावणं निहत्य पुष्पकेणागच्छतो रामस्य सीतां प्रति सीतानूपुरलाभदेशप्रदर्शनपरमिदं वचः । अत्र सीताचरणविश्लेषदुःखत्वेन सीताचरणासम्बन्ध उत्प्रेक्षितः ॥१४४ ॥

**उक्त्यनुक्तयोर्निमित्तस्य द्विधा तत्र स्वरूपगाः**

तेषु चत्वारिंशत्संख्याकेषु भेदेषु मध्ये ये स्वरूपगायाः षोडश भेदास्ते उत्प्रेक्षानिमित्तस्योपादानानुपादानाभ्यां द्वात्रिंशद्भेदा इति मिलित्वा षट्पञ्चाशद्भेदा वाच्योत्प्रेक्षायाः। तत्र निमित्तस्योपादानं यथा पूर्वोदाहृते 'स्नातीव' इत्युत्प्रेक्षायां निमित्तं पातकित्वमुपात्तम्। अनुपादाने यथा—'चन्द्र इवापरः' इत्यत्र तथाविधसौन्दर्याद्यतिशयो नोपात्तः। हेतुफलयोस्तु नियमेन निमित्तस्योपादानमेव। तथाहि—'विश्लेषदुःखादिव' इत्यत्र यन्निमित्तं बद्धमौनत्वम् 'आख्यातुमिव' इत्यत्र च भूप्रवेशस्तयोरनुपादानेऽसंगतमेव वाक्यं स्यात्।

---

## विज्ञप्रिया

वाच्योत्प्रेक्षायाश्चत्वारिंशद्विधत्वं गुणक्रियारूपनिमित्तद्वयघटितं दर्शितमेव। संप्रति तु निमित्तानुक्तिवशादेव षोडशप्रकारप्रवेशात् षट्पञ्चाशद्विधत्वं दर्शयितुमाह—**उक्त्यनुक्त्योरिति**। जात्यादित्रयस्य फलहेतुगत्वेन निमित्तानुक्त्यसम्भवस्य वक्ष्यमाणत्वात् त्रयस्य द्रव्यगोत्प्रेक्षायाः स्वरूपगामित्व एव निमित्तानुक्तिसम्भवादाह—**द्विधेति**। **स्वरूपगा** इति। नतु फलहेतुगा इत्यर्थः।

व्याचष्टे—**तेष्विति**। ये स्वरूपगायाः षोडश भेदाः जातिगामिन्योजात्या चतस्रो, भावाभावविषयत्वेनाष्टौ, गुणक्रियानिमित्तद्वैविध्यात् षोडशप्रकारत्वं स्वरूपोत्प्रेक्षाया बोध्यम्। **उपादानानुपादानाभ्यामिति**। उपादानघटिताश्च षोडश चत्वारिंशद्गणनाप्रविष्टा एव। अनुपादानघटिता षोडशमात्रवृत्तिर्बोध्या। नच निमित्तानुपादाने कथं तद्द्वैविध्यघटितं षोडशत्वम् अष्टत्वस्यैवौचित्यादिति वाच्यम्। क्वचिन्निमित्तभूता क्रियैव तस्या अनुक्तिः। क्वचित्तादृशस्य गुणस्यानुक्तिः। अनुक्तावपि द्वैविध्यसम्भवात्। **मिलित्वेति**। अनुक्तनिमित्तकषोडशभिः सह मिलित्वेत्यर्थः। इत्थं स्वरूपोत्प्रेक्षायामेव हेत्वनुक्तिसम्भवात् षट्पञ्चशत्त्वं नतु फलयोगोत्प्रेक्षायामित्याह—**हेतुफलयोस्त्विति**। भूप्रवेश इत्यत्रापि यन्निमित्तमित्यन्वयः। **असङ्गतमेवेति**। तुमन्तपञ्चम्यन्तयोराकाङ्क्षानिवृत्तिरेवासङ्गतिः।

## लोचन

उक्तिर्वाचकपदप्रयोगः, अनुक्तिस्तदभावेऽप्यर्थलभ्यता। **असङ्गतमेवेति**। साकाङ्क्षत्वादिति भावः।

## कुसुमप्रतिमा

तेष्विति। षोड़शभेदा इति। जातेर्भावाभिमाने एकः अभावाभिमाने चैकः, तयोश्च प्रत्येकं गुणनिमित्तकत्वात् क्रियानिमित्तकत्वाच्च पुनर्द्वैविध्य न चत्वारः, एव गुणस्य चत्वारः, क्रियायाश्चत्वारः, द्रव्यस्य च चत्वार इति मिलित्वा स्वरूपोत्प्रेक्षाः षोड़शभेदाः। प्राक्प्रदर्शितचत्वारिंशद्भेदेभ्यश्च तेषां षोड़शभेदानां पृथक्करणे चतुर्विंशतिभेदाः अवशिष्यन्त इत्यवधेयम्। ततश्च पुनस्तेषां षोड़शानां स्वरूपोत्प्रेक्षाणां निमित्तस्योपादानेन अनुपादानेन च प्रत्येकं द्वैविध्यात् द्वात्रि शङ्केदतया तेषाञ्च द्वात्रिंशद्भेदानां, तैचतुर्विंशतिभेदैः सह मेलने षट्पञ्चाशद्भेदा भवन्तीति।

तत्रेति। तथाविधो मुखचन्द्रोभयगतः। आदिपदेनाह्लादकत्वादेर्ग्रहणम्।

हेत्विति। हेतुफलयोस्तु उत्प्रेक्षणे इति शेषः। नियमेन अवश्यम्भावेन। तत्र हेतूत्प्रेक्षायां फलमेव निमित्तम्, फलोत्प्रेक्षायाञ्च हेतुरेवेति बोद्धव्यम्। "येन विना यत्र भवति तत्तस्य निमित्तम्" इति लक्षणात् फलं विना हेतूत्प्रेक्षणस्य हेतुं विना च फलोत्प्रेक्षणस्य सर्वथैवासम्भवात्। निमित्तसुत्प्रेक्षणकारणीभूतं यद्वद्धनौनत्वमित्यर्थः। भूप्रवेश इत्यत्रापि यच्छब्दस्य लिङ्गव्यत्येन यन्निमित्तमित्यनुषज्यते। तथा च आख्यातुमिवेत्युत्प्रेक्षणनिमित्तीभूती यश्च भूप्रवेश इत्यर्थः। तयोर्बद्धमी त्वभूप्रवेशर्याः। असङ्गतमेवेति। तथा च "त्वच्चरणारविन्दविश्लेषदुःखादिव अदृश्यत" इति मात्रस्य "आशुग उरगेभ्यः प्रियमाख्यातुमिव" इति मात्रस्य चोक्तौ आकाङ्क्षितपदाभावेन वाक्यमभिप्रेतार्थबोधनासमर्थमेव स्यादिति भावः।

## विमला

पुनः स्वरूपोत्प्रेक्षाभेदानाह, उक्तीति।—तत्र—तेषु मध्ये, स्वरूपगाः, उत्प्रेक्षाः इति शेषः, निमित्तस्य—गुणक्रियारूपस्य इत्याशयः, उक्त्यनुक्त्योः,—उक्तौ अनुक्तौ च, इति द्विधा—द्विप्रकाराः, भवन्तीति शेषः।

मिलित्वेति।—'चतुर्विंशतिप्रकारफलहेतूत्प्रेक्षामि' इति शेषः। हेतु फलयोरिति—हेतूत्प्रेक्षायां फलोत्प्रेक्षायाञ्च इत्यर्थः, हेतूत्प्रेक्षायान्तु उत्प्रेक्ष्यमाणस्य फलमेव निमित्तं, फलोत्प्रेक्षायान्तु हेतुरेव इत्यवधेयम्; नियमेन—अवश्यमेव।

असङ्गतमेवेति।—विभक्त्यद्युपस्थापितस्य हेतुत्वस्य कार्य्यत्वस्य वा अन्वयीपयोग्यलाभेन अन्वयबोधविधुरं स्यात् इत्यर्थः।

## लक्ष्मी

तत्रापि स्वरूपोत्प्रेक्षाया भेदान्तरं दर्शयति—**उक्तीति**। तत्र प्रागुक्तासु उत्प्रेक्षासु मध्ये स्वरूपगा स्वरूपोत्प्रेक्षाः, निमित्तस्य स्वस्वकारणस्य गुणक्रियारूपस्य प्रयोजनस्येत्यर्थः, उक्त्यनुक्त्योः उक्तावनुक्तौ चेत्यर्थः, द्विधा पुनर्द्विप्रकारा भवन्तीतिशेषः।

एतदेव व्याचष्टे—**तेष्विति। षोडशभेदा** इति। जातेर्भावाभिमाने एकः अभावाभिमाने चैकः, उभयोरपि प्रत्येकं गुणनिमित्तकत्वात् क्रियानिमित्तकत्वाच्च पुनर्द्विप्रकारकत्वेन चत्वारः, एवं गुणस्य क्रियायाश्च चत्वारः, द्रव्यस्य च चत्वार इति समुदायेन स्वरूपोत्प्रेक्षाः षोडशप्रकारा इत्यर्थः। पूर्वोपदर्शितचत्वारिंशद्भेदेभ्यः स्वरूपोत्प्रेक्षाणां निष्काशने चतुर्विंशतिभेदा अवशिष्यन्त इत्यवगन्तव्यम्। **उपादानानुपादानाभ्यामिति**। उपादानघटिताश्च षोडश चत्वारिंशद्गणनाप्रविष्टा एव, अनुपादानघटिता षोडशमात्रवृत्तिर्बोध्या। तथा च पुनः षोडशानां स्वरूपोत्प्रेक्षाणां निमित्तस्योपादानेन अनुपादानेन च प्रत्येकं द्विप्रकारकत्वाद द्वात्रिंशद्भेदा इति भावः। न च निमित्तस्योपादानेन कथं तद् द्वैविध्यघटितं षोडशत्वम् अष्टत्वस्यैवौचित्यादिति वाच्यम्, क्वचिन्निमित्तभूतक्रिययैव तस्या अनुक्तिः, क्वचित्तादृशस्य गुणस्यानुक्तिः एवञ्चानुक्तावपि द्वैविध्यसम्भवात्। **मिलिवेति**। अनुक्तनिमित्तषोडशभिः सह मिलित्वेत्यर्थः **षट्पञ्चाशद्भेदा** इति। द्वात्रिंशद्भेदानां चतुर्विंशतिभेदैः सह मेलने समुदायेन षट्पञ्चाशद्भेदा जायन्त इति भावः।

दिङ्मात्रमुदाहरणं दर्शयति—तत्रेति। तथाविधो मुखचन्द्रोयगत इत्यर्थः। आदिशब्देनाह्लादकत्वादेः परिग्रहः।

नन्वेवं हेतुफलोत्प्रेक्षास्वपि निमित्तस्योक्तावनुक्तत्वे षट्त्रिंशद्भेदाः कुतो नेत्यत आह—**हेतुफलयोस्त्विति**। हेतूत्प्रेक्षायां फलोत्प्रेक्षायां चेत्यर्थः। जातवेकवचनम्। नियमेन अवश्यम्भावेन। तत्र हेतूत्प्रेक्षायां फलमेव निमित्तम्, फलोत्प्रेक्षायां हेतुरेवेत्यवधेयम्। 'येन विना यन्न भवति तत्तस्य निमित्तम्' इति लक्षणात् हेतूत्प्रेक्षायामुत्प्रेक्षमाणस्य फलरूपस्य निमित्तस्य फलोत्प्रेक्षायां तु हेतुरूपस्य चावश्यं वाच्यत्वादित्यवधेयम्। तदेवोपपादयति—तथाहीति। **'विश्लेषदुःखादिव'** इत्यत्र हेतूत्प्रेक्षायामितिशेषः। निमित्तमुत्प्रेक्षणकारणीभूतं यद्बद्धमौनत्वमित्यर्थः। **'आख्यातुमिव'** इत्यत्र फलोत्प्रेक्षाक्षायामिति शेषः। **भूप्रवेश** इति। यन्निमित्तमिति पूर्वतोऽनुषज्यते तत्र यच्छब्दस्य लिङ्गव्यत्ययोऽवगन्तव्यः, तथा च आख्यातुमिवेत्युत्प्रेक्षणनिमित्तीभूतो यश्च भूप्रवेश इत्यर्थः। तयोर्बद्धमौनत्वपातालप्रवेशरूपयोर्निमित्तयोरित्यर्थः अनुपादानेऽनुक्तौ। सति सप्तमीयम्। **असङ्गतमेवेति**। अयमाशयः—'त्वच्चरणारविन्दविश्लेषदुःखादिव अपश्यत्' इत्यस्य केवलस्य 'आशुगः उरगेभ्यः प्रियमाख्यातुमिव' इत्यस्य च केवलस्याभिधाने जिज्ञासितपदासत्त्वेन वाक्यमभिप्रेतार्थप्रत्यायनाक्षममेव भवेदिति।

## रुचिरा

उत्प्रेक्षितमर्थं निर्दिशति—**अत्रेत्यादिना**। स्पष्टम्। उदाहरणान्तरविषये प्राह—**एवमन्यदिति**। स्पष्टम्। तथा च-द्रव्यस्य स्वरूपोत्प्रेक्षा यथा—'पातालमेतन्नयनोत्सवेन विलोक्य शून्यं शशलाञ्छनेन। इहाङ्गनाभिः स्वमुखच्छलेन कृताऽम्बरे चन्द्रमयीव सृष्टिः॥' इत्यत्र 'चन्द्रमयीवे'ति चन्द्रस्यैकत्वेन द्रव्योत्प्रेक्षा इति। अत्रान्ये तु प्राहुः—जात्यादेरिव द्रव्यस्यापि स्वरूपादिकृतं भेदत्रयम्। तत्र स्वरूपोत्प्रेक्षोदाहृतेव, फलोत्प्रेक्षा, यथा—'मध्ये सलिलमादित्यसम्मुखं धूलिधूसराः। कुमिदिन्यस्तपस्यन्ति चन्द्रायेव दिने दिने॥' अत्र हि 'चन्द्रायेवे'ति। हेतूत्प्रेक्षा यथा—'जयति शिशिरतायाः कारणं सा हिमांशोस्त्रिपुरहरकिरीटादापतन्ती द्युसिन्धुः। सततसहनिवासी क्षीरसिन्धो प्रसूतो हिमकर इव हेतुः श्वैत्यशैत्यस्य यस्याः॥' अत्र हिमकरस्य हेतुत्वेनोत्प्रेक्षितम्।

स्वरूपोत्प्रेक्षाया भेदान्तरं निर्दिशति—**१२१ तत्र** तासु निरुक्तासूत्प्रेक्षासु मध्ये। **स्वरूपगाः** स्वरूपोत्प्रेक्षा। **निमित्तस्य** गुणक्रियारूपस्य प्रयोजकस्य। **उक्तयनुक्त्योः** उक्तावनुक्तौ चेत्यर्थः। **द्विधा** द्विप्रभेदाः। 'स्यु'-रिति शेषः।

तदेव विवृणोति-**तेष्वित्यादिना**। स्पष्टम्। इदम्बोध्यम्-तथा च-द्वात्रिंशद्भेदा वाच्याः स्वरूपोत्प्रेक्षाः, चतुर्विंशतिभेदाश्च वाच्याः फलहेतूत्प्रेक्षा इति मिलित्वाऽमी यथोक्तप्रकाराः सम्पद्यन्ते। इति।

दिङ्मात्रमुदाहरति—**तत्रेत्यादिना**। स्पष्टम्। नन्वेवं हेतुफलोत्प्रेक्षास्वपि निमित्तस्योक्तानुक्तत्वं कुतो नेत्याह—**हेतुफलयोर्हे**तूत्प्रेक्षायां फलोत्प्रेक्षायां चेत्यर्थः। जात्यभिप्रायेणैकत्वम्। **तु**। **नियमेना**व्यभिचारेण। **निमित्तस्य**। **उपादानमुक्तिः**। एव, 'हेतूत्प्रेक्षायां फलरूपस्य निमित्तस्य फलोत्प्रेक्षायां हेतुरूपस्य चावश्यवाच्यत्वा'दिति शेषः। तदेवोपपादयति—**तथाहि**। **'विश्लेषदुःखादिव' इत्यत्र** 'हेतूत्प्रेक्षाया'मिति शेषः। यत्। **बद्धमौनत्वम्**। **निमित्तम्**। **'आख्यातुमिव'** इत्यत्र 'फलोत्प्रेक्षाया'मिति शेषः। चं। **भूप्रवेशः**। 'यन्निमित्त'मिति पूर्वतोऽनुषज्यते। **तयोर्बद्धमौनत्वपातालप्रवेशरूपयोर्निमित्तयोरि**ति भावः। **अनुपादानेऽनुक्तौ**। सत्यर्थे सप्तमीयम्। **वाक्यम्**। **असङ्गतम्**। **एव**। **स्यात्**। 'अन्वयवैकल्यापत्ते'रिति शेषः।

प्रतीयमानायाः षोडशसु भेदेषु विशेषमाह—

**प्रतीयमानाभेदाश्च प्रत्येकं फलहेतुगाः ॥ ४४ ॥**

यथोदाहृते 'तन्वङ्ग्याः स्तनयुग्मेन' इत्यत्र लज्जयेवेति हेतुरुत्प्रेक्षितः । अस्यामपि निमिक्षस्यानुपादानं न संभवति । इवाद्यनुपादाने निमित्तस्य चाकीर्तने उत्प्रेक्षणस्य प्रमातुर्निश्चेतुमशक्यत्वात् । स्वरूपोत्प्रेक्षाप्यत्र न भवति । धर्म्यन्तरतादात्म्यनिबन्धनायामस्यामिवाद्यप्रयोगे विशेषणयोगे सत्यतिशयोक्तेरभ्युपगमात् । यथा—'अयं राजा परः पाकशासनः' इति । तदेवं द्वात्रिंशत्प्रकारा प्रतीयमानोत्प्रेक्षा ।

---

## विवृतिः

**धर्मान्तरतादात्म्यनिबन्धनायां** धर्मान्तरतादात्म्यविषयिण्यामस्यामुत्प्रेक्षायां विशेषणस्यासंभवित्वसंपादकधर्मस्य योगे इत्यर्थः । अध्यवसीयमानस्य प्रौढोक्तिसिद्धत्वेनोत्कृष्टत्वमिति विषयस्यापकृष्टत्वरूपमधःकरणमतिशयोक्तिप्रयोजकम् । **अभ्युपगमादिति** । इवाद्ययोगे संभावनायाः सिद्धत्वेनावभासादिति भावः । **रूपकस्येति** । अभ्युपगमादित्यन्वयः । विषयस्याधः करणाभावाद् रूपकस्यैव प्रसर इति भावः । प्रस्तुतस्य विषयस्य ता निरुक्ताष्टविंशतिप्रकारा उत्प्रेक्षाः ॥

## विज्ञप्रिया

**प्रतीयमानायाः षोडशस्विति**—भावाभावविषयकत्वेन जात्यादिचतुष्कोत्प्रेक्षा अष्टौ, गुणक्रियानिमित्तद्वयवशाच्च षोडशेति प्रागेव दर्शितम् । **फलहेतुगा** इति । नतु स्वरूपेणेति वक्ष्यते । तथा च फलगामित्वहेतुगामित्वद्वैविध्याद् द्वात्रिंशत्प्रकारा इति वक्ष्यते ।

ननु निमित्तानुपादानकृता परषोडशवृद्धिः कथं न प्रदर्श्यते इत्याह—**अस्यामपीति** । अस्यां प्रतीयमानोत्प्रेक्षायामित्यर्थः । फलहेतुगत्वे वाच्योत्प्रेक्षायामिवास्यामपीत्यर्थः । तदसम्भवमुपपादयति—**इवाद्यनुपादान** इति । तथा हि "तन्वङ्ग्याः" इत्यादौ हाराय स्थानादानं लज्जोत्प्रेक्षाया हेतुः, तदनुपादाने तु लज्जाहेत्वदर्शनाल्लज्जोत्प्रेक्षा प्रमात्रा बोद्धा निश्चेतुमशक्यैवेत्यर्थः । तदनिश्चयेऽचेतनस्य स्तनयुग्मस्य लज्जासम्भवात् तदन्वयो बाधित एव स्यादित्यर्थः । नच बाधवशादुत्प्रेक्षा निश्चीयतामिति वाच्यम् । हेत्वभावे कुतो लज्जेत्याकाङ्क्षासत्त्वान्निश्चयासम्भवात् ।

अस्या हेतुफलगामित्वमेवोक्तम्, स्वरूपगामित्वेनापरप्रभेदवृद्धिश्च कथं न दर्शितेत्यत्राह—**स्वरूपोत्प्रेक्षाप्यत्रेति** । तदसम्भवमुपपादयति—**धर्म्यन्तरेति** । प्रकृते धर्मिण्यप्रकृतधर्म्यन्तरतादात्म्यं यत्र निबध्यते, तन्निबन्धनं यस्यां तादृश्यामस्यामुत्प्रेक्षायामित्यर्थः । **विशेषणयोग** इति । उत्प्रेक्षणीयचन्द्रादेरपरत्वादिविशेषणोपादान इत्यर्थः । तथात्वेतिशयोक्तिं दर्शयति—**यथायं राजेति** । अत्र भेदेऽप्यभेदारोपरूपातिशयोक्तिः । तदनुपादाने तु रुपकस्याभ्युपगमादित्याह—**विशेषणस्येति** । तद्दर्शयति—**राजेति** । **द्वात्रिंशत्प्रकारेति** । वाच्योत्प्रेक्षाया मेलने त्वष्टाशीतिप्रकारेति बोध्यम् ।

## लोचन

षोडशसु—समनन्तरोक्तेषु।

न भवति—तद्विषयेऽलङ्कारान्तराङ्गीकारादित्यर्थः। तदेवाह—**धर्म्यन्तरेति**।

## कुसुमप्रतिमा

प्रतीयेति। चतुर्णां जाति गुण क्रिया द्रव्याणां भावाभिमाने चत्वारः अभावभिमाने च चत्वार इत्यष्टौ भेदाः, तेषाञ्च पुनर्गुणनिमित्तकत्वात् क्रियानिमित्तकत्वाच्च प्रत्येकमेव द्वैविध्येन प्रतीयमानीत् प्रेक्षाया अपि मौलिकाः षोड़शभेदा इत्यवधेयम्।

तानपि भेदान् पुनर्विभजते प्रतीयमानेति। प्रतीयमानाया उत्प्रेक्षाया उक्ताः षोड़शभेदाश्च प्रत्येकमेव, फलं हेतुश्च गच्छन्तीति फलहेतुगाः फलगता हेतुगताश्च ति द्विविधाः सन्तः समुदायेन द्वात्रिंशद्भेदा भवन्तीत्यर्थः।

यथेति। तत्र प्रतीयमानोत्प्रेक्षा फलगता यथा—"रावणस्यापि" इत्यादौ "उरगेभ्यः किल प्रियम्" इति पाठे। तथा चात्र इवाद्यभावात् प्रतीयमानता आख्यातुमिवेति फलीप्रेक्षणाच्च फलगतेति द्रष्टव्यम्।

अस्यामिति। न केवलं वाच्यायां हेतुफलयोरुत्प्रेक्षायाम्, अस्यां प्रतीयमानायामपि हेतुफलयोरुत्प्रेक्षाया-मित्यर्थः। उत्प्रेक्षणस्य सम्भावनायाः प्रमातुर्बोद्धः, श्रोतुरिति यावत्। तथा च—"तन्वङ्ग्या स्तनयुग्मेन मुखं न प्रकटीकृतम्। हाराय गुणिने स्थानं पीवरेण न चार्पितम्॥" इति पाठे काचिदपि सम्भावनास्तीति केनापि निश्चेतुं न शक्यत एवेति भावः।

ननु पूर्ववदत्र कारिकायामपि स्वरूपेति कथं नोक्तमित्याह स्वरूपोत्प्रेक्षापीति। अत्र प्रतीयमानोत्प्रेक्षा-याम्। धर्मन्तरस्य उपमानभूतस्य अपरस्य विशेष्यपदार्थस्य यत्तादात्म्यम् उपमेयभूतविशेष्येणं सहाभेदस्तदेव निबन्धनं प्रयोजकं यस्यास्तस्याम्। इदन्तु अतिशयोक्ते रभ्युपगमं प्रति हेतुभूतं विशेषणम्। अस्यामुत्प्रेक्षायाम्। विशेषयोगे असम्भवाथ कविशेषणपदसमभिव्याहारे। अभ्युपगमादङ्गीकारात्। तथा च उपमानोपमेययोरभेदप्र-तिपत्तिनिबन्धना रूपकोत्प्रेक्षातिशयोक्त्यस्तिस्त्र एव; तत्र इवाद्यभावे असम्भवविशेषणाभावे च आरोपमात्रप्रतीते रूपकमेव, संशयविशेषरूपायाः सम्भावनायावाचकानामिवादीनां योगे असम्भवविशेषणयोगे च सम्भावनाया एव प्रतीतेरूत्प्रेक्षैव, तादृशसम्भावनावाचकानामिवादीनामयोगे असम्भवविशेषणयोगे च सिद्धरूपतया निश्चयरूप-स्याध्यवसायस्यैव प्रतीतेरतिशयोक्तिरेव, स्वस्वलक्षणव्याप्तेरितरस्य चाव्याप्तेरित्याशयः।

तादृशस्थले अतिशयोक्तिमुदाहर्त्तुमाह यथेति। अत्र राजेत्युपमेयम्, पाकशासन इत्युपमानम्, द्वितीयस्य पाकशासनस्याभावादपर इति चासम्भवं विशेषणम्। एवञ्चात्र सम्भावनावाचकानामिवादीनामभावात् असम्भव-विशेषश्चयोगाच्च अध्यवसायस्यैव प्रतीतेरतिशयोक्तिरेवेति भावः।

विशेषणेति। विशेषणभावे असम्भवविशेषणभावे चकारादिवाद्यभावे च; रूपकस्य अभ्युपगमादिति पूर्वेणान्वयः। तत्र तूकादेव हेतोरारोपमात्रप्रतीते रूपकमेवेत्यभिप्रायः। एवञ्च इवाद्ययोगे सम्भवपरविशेषणयोगेऽपि च रूपकमेव। यथा—"अयं राजा पाकशासनः" "राजा महाप्रभावः पाकशासनः" इति। पाकशासनस्तु इन्द्रः।

वाच्य प्रतीयमानयोरुभयोरपि सवनिव भेदान् पुनरपि द्वैविध्येन विभजते उक्तीति। ताः पूर्वोक्तभेदभिन्नाः सर्वा अपि उत्प्रेक्षाः प्रत्येकमेव, प्रस्तुतस्य प्रकृतस्य उपमेयस्येत्यर्थः, उक्तयनुक्तयोः उपादानानुपादान्योः सम्भव-

न्तीति द्विधा पुनर्द्विविधा भवन्तीत्यर्थः। तेन षट्पञ्चाशत्प्रकारा वाच्योत्प्रेक्षाः, द्वात्रिंशत्प्रकाराश्च प्रतीयमानोत्प्रेक्षा इति मिलित्वा अष्टाशीतिप्रकारा उत्प्रेक्षाः, पुनश्च प्रस्तुतस्य उपादानानुपादानाभ्यां प्रत्येकमेव द्वैविध्येन समुदाये एकशतषट्सप्ततिप्रकाराः, सम्पन्नाः। एतेन काव्य प्रकाशकृतः "सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्" इत्येकप्रकारमात्राभिधानं कटाक्षितम्। न च ता इत्यनेन सन्निहिताः प्रतीयमानोत्प्रेक्षा एव ग्राह्या इति वाच्यं "ता उत्प्रेक्षा" इति वृत्तौ सामान्योत् प्रेक्षया एवाभिधानात् "ऊरुः कुरङ्गकदृशः" इति वाच्योत् प्रेक्षाया उदाहरणाच्च।

उक्ताविति। प्रस्तुतस्येति शेषः। अत्रनायिकाया ऊरुः प्रस्तुत उपमेयं उक्तः।

अनुक्ताविति। अत्रापि प्रस्तुतस्येति शेषः। प्रतिदिगन्तं सर्वा दिश इत्यर्थः। तिमिरपटलेन अन्धकारसमूहेन हेतुनेत्यर्थः।

## विमला

यथेति। इवादीति।—प्रमातुः,—प्रतिपत्तुः। धर्मान्तरेति।—धर्मान्तरेण—अन्येन धर्मेण, यत् तादात्म्यम्—अभेदप्रतीतिः, तदेव निबन्धनं—कारणं यस्याः तथाभूतायां धर्मान्तरतादात्म्यविषयिण्यामित्यर्थः, अस्याम—उत् प्रेक्षायाम्। विशेषणस्य—असम्भवित्वसम्पादकधर्मस्य इत्यर्थः, योगे। अध्यवसीयमानस्य प्रौढोक्तिसिद्धत्वेन उत्कृष्टत्वम् इति विषयस्य अपकृष्टत्वरूपम् अधःकरणमतिशयोक्ति प्रयोजकम्। अभ्युपगमादिति।—अभ्युपगमात्—स्वीकारात्, प्राचीनैरिति शेषः, इवाद्यप्रयोगे सम्भावनायाः सिद्धत्वेनावभासात् इति भावः। अभ्युपगमादित्यन्वयः; ततश्च यत्र प्रसिद्धमुपमानं, तत्रैव विषयस्याधः करणाभावात् रूपकस्यावसरः, यत्र तु उपमानस्य अप्रसिद्धत्वं, तत्रातिशयोक्तिरिति रूपकातिशयोक्तयोर्भेदः। तत्रापि यदि फलस्य हेतोश्च सद्भावः स्यात्, तदा प्रतीयमानोत्प्रेक्षेति परस्परं भेदः इति बोध्यम्।

## लक्ष्मी

एवं वाच्योत्प्रेक्षां निरूप्य प्रतीयमानोत्प्रेक्षां विशिष्य निरूपयति—**प्रतीयमानाया** इति। **षोडशस्विति**। जात्यादिचतुष्कोत्प्रेक्षाणां भावाभावविषयकत्वेन द्विचत्वार इत्यष्टौ भेदाः, तेषाञ्च पुनर्गुणक्रियानिमित्तवशात् प्रत्येकमेव द्विप्रकारकत्वेन प्रतीयमानोत्प्रेक्षाया अपि मौलिकाः षोडशभेदा इति प्रागेव दर्शितमवगन्तव्यम्। विशेषं भेदम्।

तानपि भेदान् पुनर्विभज्य दर्शयति—**प्रतीयमानेति**। प्रतीयमानायाः प्रतीयमानोत्प्रेक्षाया उक्ता षोडशभेदाश्च प्रत्येकं भेदं भेदं प्रति फलहेतुगाः फलगता हेतुगताश्च द्विधा भिद्यमानाः सन्तो मिलित्वा द्वात्रिंशद्भेदा सम्पद्यन्त इत्यर्थः, न तु स्वरूपेणेत्यग्रे वक्ष्यति। तत्र प्रतीयमानोत्प्रेक्षा फलगताद्या यथा—'रावणस्यापि' इत्यादौ 'उरगेभ्यः किल प्रियम्' इति पाठे परिवर्त्तने। तथा च इवाद्यनुक्तत्वात् प्रतीयमानता आख्यातुमिवेतिफलोत्प्रेक्षणाञ्च फलगता। यथा वा—

'राहुणा ग्रस्यते पूर्णः पान्थः हिंस्रः कलानिधिः। दीनेष्वायतमार्गेण वर्त्तितव्यं सुघोषितुम्॥'

अत्रापि इवाद्यनुक्तत्वात् प्रतीयमानता सुघोषितुमिति ग्रसनस्य च फलमिति फलोत्प्रेक्षणात्फलगता। प्रतीयमानोत्प्रेक्षा हेतुगता स्वयमुदाहरति—यथेति। स्पष्टम्।

ननु निमित्तानुपादानकृता परषोडशवृद्धिः कथं प्रदर्श्यत इत्यत आह—अस्यामिति। फलहेतुगतत्वे वाच्योत्प्रेक्षायामिव अस्यां प्रतीयमानोत्प्रेक्षायामपीत्यर्थः। तदसम्भवे हेतुमुपपादयति—**इवाद्यनुपादान** इति। उत्प्रेक्षणस्य सम्भावनायाः। सम्बन्धसामान्यविवक्षयेयं षष्ठी। प्रमातुर्बोद्धुः श्रोतुरिति यावत्। तथा च 'तन्वङ्ग्याः' इत्यादौ हाराय स्थानदानं लज्जोत्प्रेक्षायां हेतुः, तत्र—

तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम्। हाराय गुणिने स्थानं पीवरेण न चार्पितम्॥

इति पाठे लज्जाहेत्वदर्शनाल्लज्जोत्प्रेक्षा प्रमात्रा निश्चेतुं न शक्यत इत्यर्थः। तदनिश्चयेऽचेतनस्य स्तनयुग्मस्य लज्जासम्भवात् तदन्वयो बाधित एव स्यादिति भावः। न च बाधवशादुत्प्रेक्षानिश्चयो जायतामिति वाच्यम्, हेत्वभावे कुतो लज्जेत्याकाङ्क्षासत्त्वेनानिश्चयासम्भवात्।

नन्वनया कारिकया अस्या हेतुफलगामित्वेमेवोक्तम्, स्वरूपगामित्वेनान्यप्रभेदवृद्धिश्च कृतो नोपपादितेत्याकाङ्क्षायामाह—**स्वरूपोत्प्रेक्षाऽपीति**। अत्र प्रतीयमानोत्प्रेक्षायाम्। तदसम्भवमुपपादयति—**धर्मान्तरेति**। धर्मान्तरमन्यो धर्मः उपमानभूतापरविशेष्यपदार्थः तेन तस्य वा यत्तादात्म्यम् उपमेयभूतविशेष्येण सहाभेदस्तदेव निबन्धनं कारणं यस्यास्तस्यां तथाभूतायाम्। इदन्तु अतिशयोक्तेः स्वीकरणं प्रति हेतुभूतं विशेषणम्। 'धर्म्यन्तरतादात्म्यनिबन्धनाया' मितिपाठान्तरं स्पष्टार्थम्। अस्यामुत्प्रेक्षायाम्। विशेषणयोगे असम्भवार्थकविशेषणपदसमभिव्याहारे उत्प्रेक्षणीयचन्द्रादेरपरत्वादिविशेषणोपादाने इत्यर्थः। अतिशयोक्तेस्तदाख्यालङ्कारस्य। अभ्युपगमात् स्वीकारात्। एवञ्च उपमानोपमेययोस्तादात्म्यप्रतिपत्तिनिबन्धना रूपकोत्प्रेक्षातिशयोकत्यस्तिस्त्र एवालङ्कृतयः, तत्र इवाद्यनुपादाने असम्भवविशेषणानुपादाने च केवलारोपप्रतीतेः रूपकमेव, संशयविशेषात्मिकायाः सम्भावनाया वाचकानामिवादीनामुपादाने असम्भवविशेषणोपादाने च सम्भावनाया एव प्रतीतेरुत्प्रेक्षैव, तथाविधसम्भावनावाचकानामिवादीनामनुपादाने असम्भवविशेषणोपादाने च सिद्धरूपत्वेन निश्चयात्मकाध्यवसायस्यैव प्रतीतेरतिशयोक्तिरेवेति नैषां स्वस्वलक्षणाव्याप्त्यतिव्याप्तीतिभावः।

तथाविधस्थले अतिशयोक्तिं दर्शयितुमाह—**यथेति**। अपरो द्वितीयः। पाकशासन इन्द्रः 'इन्द्रो मरुत्वान् मघवा विडौजाः पाकशासनः' इत्यमरः। अत्र राजेत्युपमेयम्, पाकशासन इत्युपमानम्, द्वितीयस्य पाकशासनस्यानुपलम्भात् 'अपर' इति चासम्भवं विशेषणम्। तथाचात्र सम्भावनावाचकानामिवादिपदानामनुपादनात् असम्भवविशेषणोपादानाच्च अध्यवसायस्यैवावगमादतिशयोक्तिरेवेत्याशयः।

असम्भवविशेषणाद्यनुपादाने रूपकमिति दर्शयति—**विशेषणाभाव** इति। असम्भवविशेषणानुपादाने चकारादिवाद्यनुपादाने च रूपकस्य अभ्युपगमादितिपूर्वोक्तेन सम्बन्धः। तत्र तूक्तादेव हेतोः केवलारोपप्रतीतेः रूपकमेवेति भावः। इत्थञ्च इवाद्यनुपादाने सम्भवपरविशेषणोपादानेऽपि च रूपकमेव, यथा 'अयं राजा पाकशासनः' 'राजा सर्वातिशायी पाकशासनः' इति। **त्रिंशत्प्रकारा** इति। यथा उक्तप्रकारास्तथा दर्शिताः। वाच्योत्प्रेक्षाया मेलने त्वष्टाशीतिप्रकारा भवन्तीत्यवधेयम्।

## रुचिरा

एवं वाच्योत्प्रेक्षां निरूप्य प्रतीयमानोत्प्रेक्षां विशिष्य लक्षयितुमाह—**प्रतीयमानायाः षोडशसु। भेदेषु। विशेषं भेदम्। आह**—१२२ **प्रतीयेत्यादिना**।

१२२ **प्रतीयमानाभेदाः** प्रतीयमानोत्प्रेक्षायाः प्रभेदाः । **च** । **प्रत्येकं** भेदंभेदं प्रतीति भावः । **फलहेतुगाः** । फलगा हेतुगाश्चेति द्विधा भिद्यमाना द्वात्रिंशद्भेदाः सम्पद्यन्ते । तत्राद्या यथा—'राहुणा ग्रस्यते पूर्णः पान्थहिंस्रः कलानिधिः । दीनेष्वार्येण मार्गेण वर्तितव्यं सुघोषितुम् ॥' इति, अत्र हीवाद्यभावात्प्रतीयमाना 'सुघोषितु'मिति ग्रसनस्य च फलमिति फलरूपा च ॥ ९७ ॥

अन्त्यां स्वयं निर्दिशति-यथेत्यादिना । स्पष्टम् । अस्या अनुक्तनिमित्तात्वाभावमुपपादयति—**अस्यां** प्रतीयमानायां फलाद्युत्प्रेक्षायाम् । **अपि** । 'न केवलं वाच्याया'मिति शेषः । **निमित्तस्य** । **अनुपादानमुपादानाभावः** । **न** । **सम्भवति** । हेतुं निर्दिशति-**इवाद्यनुपादाने** इवादेरनुपादानं तस्मिन् सतीति भावः । **निमित्तस्य** । वा । अकीर्त्तने । 'सती'ति शेषः । **उत्प्रेक्षणस्य** सम्भावनायाः । सम्बन्धसामान्यविवक्षयेयं षष्ठी । **प्रमातुः** । **निश्चेतुम्** । **अशक्य-त्वात्** । अयम्भावः—यत्रेवादेरनुपादानं तत्र यदि निमित्तस्याप्यनुपादानं स्यात् तर्हि उत्प्रेक्ष्यमाणस्यार्थस्य प्रमातृज-नहृदयङ्गमत्वं नोपपद्येत, प्रमातृजनहृदयङ्गमो ह्युत्प्रेक्ष्यमाणोऽर्थः, असौ एव प्रतीयमानायां निमित्तत्वेनावस्थितः अथास्यानुपादाने स्वतः प्रमातृजनहृदयङ्गमत्वाभावः । अत एव प्रागपि हेतुफलयोस्तु-'नियमने निमित्तस्योपादान-मेव' इत्युपदिष्टम् । इति । ननु प्रतीयमानायाः स्वरूपगात्वं कुत इत्याशङ्क्याह-**अत्रास्यां** प्रतीयमानायाम् । **स्वरूपो-त्प्रेक्षा** । **अपि** । 'न केवलमनुपात्तनिमित्ते' ति शेषः । **न** । **सम्भवति** । हेतुं निर्दिशति—**धर्म्मान्तरता दात्म्यनिबन्धनायां** धर्म्मान्तरमन्यो धर्म्मस्तेन तस्य वा तादात्म्यमभेदः तन्निबन्धनं कारणं यस्यास्तस्यां तथाभूता-याम् । प्रकृतधर्म्मापेक्षयाऽप्रकृतधर्म्मो धर्म्मान्तरमिति प्रकृतस्याप्रकृततादात्म्यापादाने धर्म्मान्तरतादात्म्यनिबन्धनं व्यक्तमिति बोध्यम् । 'धर्म्यन्तरतादात्म्यनिबन्धताया' मिति पाठान्तरं स्पष्टार्थम । **अस्यामुत्प्रेक्षायाम्** । **इवाद्यप्र-योगे** । 'सती'ति शेषः । **विशेषणयोगे** विशेषणस्यासम्भवित्वेऽपि सम्भवित्वेन सम्भावकस्य धर्म्मस्य योगस्त-स्मिन् । **सति** । **अतिशयोक्तेस्तदाख्यस्यालङ्कारस्य** । **अभ्युपगमात्** स्वीकारात् । उदाहरति-**यथा-'अयम्** । राजा । **अपरो** द्वितीयः । **पाकशासन** इन्द्रः ।' **इति** । इदमुक्तम्-इवाद्यभावे हि 'अयं राजाऽ परः पाकशासनः' इत्युत्प्रेक्षाया अनुपात्तनिमित्ताया उदाहरणं स्यात्, एतदेवाभेदे भेदरूपायां अतिशयोक्तेः । अतोऽनयोः साङ्कर्यमापद्येतेति । तत् । **एवम्** । **द्वात्रिंशत्प्रकारा** । **प्रतीयमाना** । **उत्प्रेक्षा** । अयम्भावः—जातिगता गुणगता क्रियागता द्रव्यगता चेति चतुर्विधा प्रतीयमानोत्प्रेक्षा, सा च भावाभिमानिन्यभावाभिमानिनी चेति अष्टविधा, एषा च गुणनिमित्ता क्रियानिमित्ता चेति षोडशविधापि फलरूपा हेतुरूपा चेति द्विधा भिद्यमाना यथोक्तप्रकारा । इति ।

प्रकारान्तरेण भेदं निर्दिशति—१२३ ता अष्टाशीतिविधा उत्प्रेक्षाः । **अपि** । **प्रत्येकम्** । **प्रस्तुतस्योपमे-यस्य** । **उक्तयनुक्तयोरुक्तावनुक्तौ** च सत्यामित्यर्थः । **द्विधा** द्विविधा भवन्ति । एवं रसनगविधुमिताः सर्वा वाच्याः प्रतीयमानाश्चोत्प्रेक्षा ज्ञेया इति निष्कृष्टोऽर्थः ।

**उक्तयनुक्तयोः प्रस्तुतस्य प्रत्येकं ता अपि द्विधा।**

ता उत्प्रेक्षाः। उक्तौ यथा—'ऊरुः कुरङ्गकदृशः—' इति। अनुक्तौ यथा मम प्रभावत्याम्— '**प्रद्युम्नः**—इह हि संप्रति दिगन्तरमाच्छादयता तिमिरपटलेन—

**घटितमिवाञ्जनपुञ्जैः पूरितमिव मृगमदक्षोदैः।**
**ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनम्॥'**

अत्राञ्जनेन घटितत्वादेरुत्प्रेक्षणीयस्य विषय व्याप्तत्वं नोपात्तम्।

---

## विवृतिः

**लिम्पतीवेति**। गाढान्धकार वर्णनमिदम्॥ तमः संपात इति विषयो नोपात्त इत्यन्वयः। अतिबहुलत्वं अतिबहुत्वप्रयुक्तनिबिडसंयोगः। एवं सति साधारणधर्मत्वमुपपन्नम्। **धारारूपेणेति**। तमस इति योजना। **अधः संयोगश्चेति**। तमसो द्रव्यत्ववादिमतमाश्रित्योक्तम्। **व्यापनं चेति**। निबिडसंयोगानुकूलव्यापारश्चेत्यर्थः। **एवमिति**।

## विवृतिपूर्तिः

**लिम्पतीवेति**। 'असत्पुरुषसेवेव दृष्टिर्विफलतां गता॥' इति तूत्तरार्धम्। अत्र 'लिम्पति—वर्षति' इत्याख्यानाभ्यां 'गौर्जल्पति' इत्यत्र वाहीकवत् साध्यवसानलक्षणया उपमानस्य तमसोऽञ्जनस्य च, उपमेयं व्यापनमधः प्रसरणं चोपतिष्ठते।

## विज्ञप्रिया

अष्टाशीतिप्रकाराया अस्या द्वैगुण्येन षट्सप्त्युत्तरैकशतरूपतमाह-**उक्तयनुक्तयोरिति**। प्रस्तुतस्य प्राकरणिकस्य। वाच्यप्रतीयमानसमस्तमेलनेनाष्टाशीतिरूपोत्प्रेक्षा। नच प्राकरणिकानुक्तौ तस्य निगरणरूपातिशयोक्तिरेवेति वाच्यम्। स्वरूपोत्प्रेक्षायामेव तत्प्रसक्तेः। प्रतीयमानोत्प्रेक्षायां तु स्वरूपोत्प्रेक्षाऽसम्भवस्य दर्शितत्वादेव। वाच्योत्प्रेक्षायामिवादिसत्त्वादेव नातिशयोक्तिप्रसक्तिः। वाच्योत्प्रेक्षायां प्रकृतोक्तिं दर्शयति— **ऊरुरिति**।

**घटितमिवेत्यादि**—तिमिरपुञ्जेनैवमेवं कृतमिवेत्यर्थः। तत्तत्करणं दर्शयति-**घटितमिवेति**। भुवनमञ्जनपुञ्जैर्घटितं निर्मितमिवेत्यर्थः। ततं व्याप्तम्। वृतमाच्छादितम्। **विषय** इति-प्रस्तुतरूपः।

## लोचन

प्रस्तुतस्य-उत्प्रेक्षाविषयस्य। ताः—समनन्तरोक्तप्रकाराः।

## कुसुमप्रतिमा

घटितमिति। भुवनं जगन्मण्डलम्, अञ्जनपुञ्जैः कज्जलस्तूपैः, घटितं विहितमिव; मृगमदक्षोदैः कस्तूरीरेणुभिः पूरितं सम्भृतमिव; तमालतरुभिस्ततं व्याप्तमिव; तथा नीलांशुकैर्नीलवर्णवसनैः, वृतमावृतमिव।

अत्रेति। उत्प्रेक्षणीयस्य अञ्जनघटितत्वादेरित्यन्वयः, उपमानभूतस्येत्यर्थः। विषयः प्रकृतमुपमेयमिति यावत् यद्व्याप्तत्वं तन्न उपात्तमुक्तम्। तथा च उक्तपद्ये तिमिरपटलेन भुवनव्यापनरूपमुपमेयं नोक्तमिति सरलार्थः।

## विमला

उक्तेति।—प्रस्तुतस्य—प्रकृतस्य, विषयस्येत्यर्थः, उक्त्यनुक्तयोः,—उक्तौ अनुक्तौ च, ताः अपि—अष्टाशीतिप्रकाराः पूर्वोक्ता उत्प्रेक्षाः इत्यर्थः, प्रत्येकं द्विधा, भवन्तीति शेषः, ततश्च षट्सप्तत्यधिकशतसङ्ख्यका उत्प्रेक्षा इति बोध्यम्।

घटितमिति।—भुवनं—जगत, अञ्जनपुञ्जैः,—कज्जलराशिभिः, घटितमिव—निर्मितमिव, मृगमदक्षोदैः,—कस्तूरीचूर्णैः, पूरितमिव—पूर्णमिव, तमालतरुभिः ततं—व्याप्तमिव, नीलांशुकैः,—नीलवसनैः, वृतमिव—आच्छादितमिव। अत्रोपगीतिश्छन्दः।

विषयः,—प्रकृतं, व्याप्तत्वं—व्यापनरूपम्।

## लक्ष्मी

अष्टाशीतिप्रकारयोर्वाच्यप्रतीयमानयोरुभयोरपि समस्तानेव भेदान् पुनरपि द्वैविध्येन प्रदर्शयति—**उक्तयनुक्तयोरिति**। ताः पूर्वोक्ता अष्टाशीतिविधाः उत्प्रेक्षाः प्रत्येकमेव, प्रस्तुतस्य प्राकरणिकस्य उपमेयस्येत्यर्थः, उक्तयनुक्तयो उपादानानुपादानयोः सम्भवन्तीति द्विधा पुनर्द्विप्रकारा भवन्तीत्यर्थः। एवञ्च षट्पञ्चाशत्प्रकारा वाच्योत्प्रेक्षाः द्वात्रिंशत्प्रकाराश्च प्रतीयमानोत्प्रेक्षा इति समुदायेन अष्टाशीतिप्रकारा उत्प्रेक्षाः, पुनश्च प्रस्तुतस्य उपादानानुपादानाभ्यां द्विप्रकारकत्वेन मिलित्वा रसनगविधुमिताः (एकशतषट्सप्ततिप्रकाराः) सञ्जाता इति निकृष्टोऽर्थः। एतेन 'सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इत्यनेनास्या एकविधमेव प्रतिपादनं काव्यप्रकाशकृत अननुमतमिति ध्वनितम्। अत्र 'ता' इत्यनेन समीपवर्त्तिनीनां प्रतीयमानोत्प्रेक्षणामेव ग्रहणं तु न शङ्क्यम्, 'ता उत्प्रेक्षा' इतिविवरणेन समान्योत्प्रेक्षाया एव प्रतिपादनात् 'ऊरुः कुरुङ्गकदृशः' इति वाच्योत्प्रेक्षाया उदाहरणाभिधानाच्च।

कारिकायाः सन्देहांशं परिहर्त्तुं तत्पदं विवृणोति—**ता** इति। उक्ताविति। प्रस्तुतस्येतिशेषः। **ऊरु**रिति। अत्रोरुर्विजयस्तम्भत्वेनोत्प्रेक्षित इत्युरुरुपमेयभूतः, एतस्य चोक्तत्वात् उक्तप्रस्तुतेयमुत्प्रेक्षा। अनुक्ताविति। अत्रापि प्रस्तुतस्येतिशेषः। इह अस्मिन् युद्धप्रदेशे। आच्छादयता तिरोदधानेन, तिमिरपटलेन अन्धकारसमूहेन कारणेनेत्यर्थः।

**घटिता**मिवेति। भुवनं जगन्मण्डलम्, अञ्जनस्य कज्जलस्य पुञ्जैः समूहैः, 'अञ्जनं कज्जले चोक्तौ सौवीरे च रसाञ्जने' इति मेदिनी। घटितं निर्मितमिव मृगमदक्षोदैः कस्तूरीचूर्णैः 'चूर्णे क्षोद' इत्यमरः, पूरितं पूर्णमिव, तमालतरुभिस्तमालद्रुमैः ततं व्याप्तमिव, तथा नीलांशुकैः नीलवर्णवस्त्रैः घृतम् आवृतमिव। अत्रोपगीतिश्छन्दः।

लक्ष्यं सङ्गमयति—**अत्रेति**। अस्मिन्नुदाहृते पद्ये इत्यर्थः। उत्प्रेक्षणीयस्य अञ्जनघटितत्वादेरित्यनेन सम्बन्धः उपमानभूतस्येत्यर्थः। विषयः प्रस्तुतमुपमेयमित्यर्थः। यद्व्याप्तत्वं व्याप्तिः तमस इति शेषः तन्न उपात्तं कथितम्। तथाचोक्तोदाहरणे तिमिरपटलेन भुवनव्यापनरूपमुपमेयं नाभिहितमितिनिकृष्टोऽर्थः।

ननु शिष्टजनैरनादृतमभिनवं भवत्कृतमिदमुदाहरणं प्रमाणत्वेन कथमुपेयादित्याक्षेपे परकीयपद्यमप्युदाहर्तुमाह—**यथा वेति**।

## रुचिरा

कारिकायाः कठिनांशं परिहर्त्तु तत्पदं व्याचष्टे—ता इत्यादिना। स्पष्टम्। उदाहरति-**उक्तौ**'प्रस्तुतस्ये'ति शेषः। यथा'उत्प्रेक्षे'ति शेषः। **'ऊरुः कुरङ्गकदृशः'** इति। अयम्भावः—अत्रोरुर्विजयस्तम्भत्वेन सम्भावित इत्यूरुरुपमेयभूतः, एतस्य चोक्तत्वात् उक्तप्रस्तुतेयमुत्प्रेक्षा। इति दिक्। **अनुक्तौ**। 'प्रस्तुतस्ये'ति शेषः। **यथा**। **मम**। **प्रभावत्याम्**'**प्रद्युम्नः**'आहे'ति शेषः। **इहास्मिन्** रणप्रदेशे। **हि**। **सम्प्रति**। **दिगन्तरम्**। **आच्छादयता** तिरोदधानेन। तिमिरपटलेनान्धकारपुञ्जेन 'सर्व मलिनीकृतं यतः' इति शेषः।

**अञ्जनपुञ्जै**रञ्जनस्य कज्जलस्य पुञ्जास्तैः। 'अञ्जनं कज्जले चाक्तौ सौवीरे च रसाञ्जने।' इति मेदिनी। **घटितं** निर्म्मितम्। इव। **मृगमदक्षोदैः** कस्तूरीचूर्णैः। 'चूर्णे क्षोद' इत्यमरः। **पूरितं** पूर्णम्। **इव**। **तमालतरुभिस्त**मालवृक्षैः। **ततं** विस्तृतम्। **इव**। **नीलांशुकैर्नी**लवस्त्रैः। **वृतमा**वृतम्। **इव**। **भुवनं** लोकः। अत्रोपगीतिश्छन्दः ॥१४५॥'

यथा वा—

'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।

अत्र तमसो लेपनस्य व्यापनरूपो विषयो नोपात्तः। अञ्जनवर्षणस्य तमः संपातः। अनयोरुत्प्रेक्षानिमित्तं च तमसोऽतिबहुलत्वं धारारूपेणाधःसंयोगश्च यथासंख्यम्। केचित्तु—'अलेपनकर्तृभूतमपि तमो लेपनकर्तृत्वेनोत्प्रेक्षितं व्यापनं च निमित्तम्, एवं नभोऽपि वर्षणनक्रियाकर्तृत्वेन' इत्याहुः।

---

## विवृतिपूर्तिः

तथाच तमः कर्तृकमङ्गकर्मकं व्यापनम्, नभः कर्तृकमञ्जनकर्मकमधः प्रसरणम्, चेति तमसो व्यापनेन निमित्तेन, नभसो भूतलपर्यन्तं गाढनीलिमप्रसरेण निमित्तेन च लेपन–वर्षणनरूपाभ्यां संभावितम्। अथवा, अचेतनस्य तमसो व्यापनात्मकविषयो लेपनत्वेन, अधः संपातो वर्षणत्वेन च संभावितः। विषयानुपादानं तूभयत्रैव। ननूक्तनिमित्तेन लेपनवर्षणकर्तृतादात्म्योत्प्रेक्षे एव स्ताम्, इति न भ्रमितव्यम्। लिम्पति-वर्षतीत्याख्यातयोः कर्तृवाचकत्वेऽपि 'भावप्रधानमाख्यातम्' इति **निरुक्त**स्मृतेर्धात्वर्थक्रियाया एव प्राधान्येन तदुपसर्जनत्वेनान्वितस्य कर्तुरुत्प्रेक्षणीयतया अन्यत्रान्वयासंभावादिति **कुवलयानन्दे** व्यक्तमेव। आख्यातं तिङन्तम्, एतदर्थापेक्षया भावो धात्वर्थः क्रिया प्रधानम्, इति **निरुक्त**स्मृतितात्पर्यम्। अधिकं तु निरुक्ततद्भाष्यादौ निरूक्षणीयम्। एवमाख्यातार्थस्य कर्तुः क्रियोपसर्जनत्वेनान्वयायोगादेवास्योपमायामुपमानत्वेनान्वयो **दण्डिना** काव्यादर्शे निराक्रियते— 'कर्ता यद्युपमानं स्यान्नयग्भूतोऽसौ क्रियापदे। व्यापाराश्रयः यदि उपमानं स्यात् तमस उपमानत्वेन प्रतिपाद्येत, तर्हि असौ कर्ता क्रियापदे लिम्पति–प्रभृति क्रियापदेन विशेष्यतया प्रतिपाद्ये लेपनव्यापारे न्यग्भूतो विशेषणीभूतः। 'फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥' इति वैयाकरणोक्तेः। लेपनव्यापारे विशेषणत्वेनान्वितस्य कर्तुः कथमुपमानतया तमसा सहान्वयित्वमिति भावः। अतएव स्वक्रिया स्वाश्रयकलेपनव्यापारः तस्याः साधनं सिद्धिः, विशेष्यत्वेनावबोध इति परमार्थः। तत्र व्यग्रो व्यापृतः, प्रकारतां प्राप्त इति परमार्थः। अन्यत् पदार्थान्तरं व्यपेक्षितुं स्वप्रकारकान्वयबोधे विशेष्यत्वेनाकाङ्क्षितुं, पदार्थान्तरविशेष्यकबोधे पुनः प्रकारीभवितुमिति भावः। नालं न समर्थः। अयं भावः—एकत्रान्वितस्यान्यत्रान्वितत्वं युज्यत एव। परमेकत्र विशेषणतया अन्वितस्य अन्यत्रापि विशेषणतयैवान्वयो न युज्यत इति। प्रकृते तु स्वव्यापारे विशेषणतया अन्वितस्य कर्तुः उपमानत्वाभ्युपगमे उपमेये तमस्यपि विशेषणत्वेन अन्वितत्वमभ्युपेयमित्यसंगतम्। एतदेवोक्तं **दीधितिकारैः**—इतरेतरविशेषणत्वेनोपस्थितस्याप्यन्यत्र विशेषणत्वेनान्वयायोगात्' इति। तस्मान्नात्र कर्तुरप्युपमानत्वमिति भावः॥

## विज्ञप्रिया

परकीयश्लोकमपि दर्शयति-**लिम्पतीवेति**। तमः सम्पात इत्यनुपात्त इत्यन्वयः। सम्पातश्चाधः संयोगहेतुपतनक्रिया, नत्वधःसंयोगः। अतोऽत्र निमित्तत्वेन वक्ष्यमाणाधः संयोगस्य भेदः। अनयोरनुक्तं निमित्तं दर्शयति-अनयोरिति। इयं क्रियास्वरूपोत्प्रेक्षा। केचित्त्वत्र कर्तृस्वरूपद्रव्योत्प्रेक्षामाहुः। तद् दर्शयति-केचित्विति। अत्र

केचिदित्यस्वरससूचनम्। क्रियोत्तरमिवकारात्तमोनभसोर्वास्तवत्वेनानुत्प्रेक्षणीयत्वाच्च। लेपनवर्षणकर्तृत्वमवास्तवमिति चेत्तदा लेपनवर्षणयोरेवोत्प्रेक्षापर्यवसानात्।

संयोगविशेषस्येव हि व्याप्तिनाम्नोरतिशयस्थगनसाम्येन रूपसम्भावना उत्प्रेक्षाभेद: प्रतीयते। विषयस्य गम्यता हेतुफलोत्प्रेक्षयोरङ्गीक्रियते। स च यदि स्वरूपोत्प्रेक्षायामेव स्यात्तदा को दोष इत्यलं बहुना।

## लोचन

क्षोदैश्चूर्णै:। अनयोर्घटितमिवेत्यादेर्लिम्पतीवेत्यादेश्चोदाहरणयोरुत्प्रेक्षानिमित्तमित्यत: पूर्वं व्यापनस्याञ्जनघटनादिति शेष:। "वर्षतीवाञ्जनं नभ:" इत्यत्र च धारारूपेणाध:संयोग इत्यर्थ:। केचिदलङ्कारसर्वस्वकारादय: इत्याहुरिति सम्बन्ध:। लेपनकर्तृत्वेनोत्प्रेक्षितं लिम्पतीति तत: कर्तृताभिधानात्तस्य च तमसि सामानाधिकरण्येन तद्गतताप्रत्ययादित्यभिसन्धि:। तेषामेषा युक्ति:—तमोगतत्वेन लेपनक्रियाकर्तृत्वोत्प्रेक्षायां लेपनादिनिमित्तं गम्यमानम्। व्यापनादावुत्प्रेक्षाविषयत्वे निमित्तमन्यदन्वेष्यं स्यात्। नच विषयस्य गम्यमानत्वं युक्तम्, तस्योत्प्रेक्षाधारत्वेन प्रस्तुतस्याभिधातुमुचितत्वात्। अत्र केचिदित्यनेनात्मनोऽरुचिप्रकटनम्। तथा हि अतिशयोक्तौ कमलमनम्भसीत्यादाविवात्र विषयनिमित्तयोर्द्वयोरप्यत्र गम्यमानत्वमेव। व्यापनकर्तर्येव तमसि लेपनकर्तृत्वसम्भावनस्य तमसो लेपनकर्त्रा सादृश्यविरहाच्च। संयोगविशेषस्येव हि व्याप्तिनाम्नोरतिशयस्थगनसाम्येन रूपसम्भावना उत्प्रेक्षाभेद: प्रतीयते। विषयस्य गम्यता हेतुत्फलोत्प्रेक्षयोरङ्गीक्रियते। स च यदि स्वरूपोत्प्रेक्षायामेव स्यात्तदा को दोष इत्यलं बहुना।

## कुसुमप्रतिमा

ननु शिष्टैरपरिगृहीतमर्वाचीनं भवत्कृतपद्यमप्रमाणमित्याह यथा वेति।

लिम्पतीति। "असत्पुरुषसेदेव दृष्टिर्विफलतां गता॥" इति मृच्छकटिकप्रकरणे-परार्द्धम्। तमोऽन्धकार:, अङ्गानि लिम्पतीव; तथा नभ आकाश:, अञ्जनं कज्जलं वर्षतीव।

अत्रेति। लेपनस्य उपमानस्य, व्यापनरूप: सर्वेष्वङ्गेषु निबिड़सम्बन्धरूप:, प्रस्तुतमुपमेयम्। अञ्जनवर्षणस्य च उपमानस्य, तम:सम्पात: अन्धकारपतनरूपो विषय: प्रस्तुतमुपमेयमिति यावत्, नोपात्त इति पूर्वेणानुषज्यते।

ननु किं तावदनयोरुत्प्रेक्षणनिमित्तमित्याह अनयोरिति। "लिम्पतीव" इत्यस्य "वर्षतीव" इत्यस्य चेत्यर्थ:। यथासंख्यमिति। "लिम्पतीव तमोऽङ्गानि" इत्यत्र उत्प्रेक्षानिमित्तं तमसोऽतिबहुलत्वम् अतिबहुलत्वाद्घनभावेन अङ्गसंयोग:, "वर्षतीवाञ्जनं नभ:" इत्यत्र च तमसो धारारूपेण अविच्छिन्नभावेन अध:संयोष इत्यर्थ:। इदन्तु अन्धकारस्य द्रव्यत्ववादिमतमाश्रित्याभिहितमिति बोध्यम्; अन्धकारस्य आलोकसामान्याभावरूपत्ववादिमते तु तस्य संयोगसम्भवात्, "गुणादिर्निर्गुणक्रिय:" इत्यभिधानात्। तथा चोक्तम्—

"तमस्तमालवर्णाभं चलतीति प्रतीयते। रूपवत्त्वात् क्रियावत्त्वात् द्रव्यन्तु दशमं तम:॥" इति।

केचिदिति। अलेपनकर्त्तृभूतमपीति। तैलादिवत्तमसस्तरलत्वाभावेन तत्कर्तृकलेपना सम्भवादिति भाव:। व्यापनं तमस: सर्वाङ्गसम्बन्ध:। नभोऽपीति निष्क्रयत्वादसम्भवाच्च अनञ्जनवर्षणकर्त्तृभूतमपि नभ इत्यर्थ:। अञ्जनस्य वर्षक्रियाकर्त्तृत्वेन उत्प्रेक्षितमिति पूर्वेणान्वय:। अत्र तेषामयमाशय:—लिम्पतीत्यत्र वर्षतीत्यत्र च धातूपस्थापिता लेपनक्रिया वर्षणक्रिया च, तिङ्पस्थापितश्च तयो: कर्त्ता, कर्त्तुश्चप्रयोजकत्वात प्राधान्यम्। तेन

क्रियाकर्त्रोर्द्वयोरेवोत्प्रेक्षणसम्भवे "अव्यक्तं प्रधानगामि" इति पूर्वमीमांसासूत्रन्यायेन उभयत्रापि कर्त्तुरेवोत्प्रेक्षणमिति जात्युत्प्रेक्षैवेति; ग्रन्थकारस्तु मन्यते कर्तुः कारकान्तरप्रयोजकत्वात् तेभ्य एव प्राधान्यम्, न तु क्रियातः । किञ्च, क्रियायाः प्रतीतिपर्य्यवसानस्थानत्वात्तस्या एव विशेष्यत्वेन शाब्दबोधे प्राधान्यमिति लेपनवर्षणयोरुत्प्रेक्षणस्यैव न्याय्यत्वात् क्रियोत्प्रेक्षैवेति । तदयमेवास्वरसः केचिदित्यनेन सूचितः । काव्यप्रकाशकृतापि "व्यापनादि लेपनादिरूपतयासम्भावितम्" इत्युक्ता क्रियोत्प्रेक्षैव स्वाभिमतेति द्योतितम् । रामचरणतर्कवागीशस्तु—"नभसोऽञ्जनवर्षण कर्त्तृत्वेन सम्भावनायां प्रकृतस्योपमेयस्य तमसो बोधो दुर्घट इत्यस्वरसः केचिदित्यनेन सूचितः" इत्याह स्म ।

## विमला

लिम्पतीति ।—गाढ़ान्धकारवर्णनमिदम् । तमः,—अन्धकारम्, अङ्गानि—गात्राणि, लिम्पतीव, नभः,—आकाशम्, अञ्जनं—कज्जलं, वर्षतीव । अस्योत्तरार्द्धन्तु—"असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥" इति । अत्रोपमेति उपेक्षितं ग्रन्थकृतेति विभावनीयम् । मृच्छकटिकस्येदं पद्यम् ।

अत्रेति ।—उदाहृते पद्ये इत्यर्थः । अञ्जनेति ।—तमः सम्पातः इति विषयो नोपात्तः इति पूर्वोक्तेनान्वयः । अतिबहुलत्वम्—अतिबहुत्वप्रयुक्तनिविड़संयोगः, एवं सति साधारणधर्मत्वमुपपन्नम् । धारारूपेणेति ।—तमस इति योजना । अधः संयोगश्चेति ।—तमसो द्रव्यत्ववादिमतमाश्रित्योक्तम् । केचिदिति ।—अत्र धारारूपेणाधः सम्पातो निमित्तं नभसोऽञ्जनवर्षणकर्त्तृत्वेन सम्भावनायां प्रकृतस्योपमेयस्य तमसो बोधो दुर्घट इत्य स्वरसः "केचित्" इत्यनेन सूचितः, अपरे तु—"तमोऽञ्जनत्वेनोत्प्रेक्षितं नीलत्वमत्र निमित्तम्" इत्याहुः । व्यापनञ्चेति—निविड़संयोगानुकूलव्यापारश्चेत्यर्थः । एवमिति—अवर्षणक्रियाकर्त्तृभूतमपीत्यर्थः, उत्प्रेक्षितमित्यनुषज्यते ।

## लक्ष्मी

प्राचीनोदाहरणं दर्शयति—**लिम्पतीवेति** ।

'असत्पुरुषसेवेव दृष्टिर्विफलतां गता ।'

इति **मृच्छकटिकप्रकरणे** उत्तरार्द्धम् । तमोऽन्धकारः (कर्तृपदम्) अङ्गानि गात्राणि लिम्पति लिप्तानि करोतीव, नभ आकाशम्, अञ्जनं कज्जलं वर्षति वर्षणं करोतीव ।

अत्रेति । लेपनस्य उपमानस्य व्यापनरूपः सर्वगात्रेषु सान्द्रसम्बन्धरूपः, प्रस्तुतमुपमेयमितियावत् । अञ्जनवर्षणस्य च उपमानस्य तमः सम्पातः अन्धकारपतनरूपो विषयः प्रस्तुतमुपमेयम्, नोपात्त इति पूर्वेणान्वयः । सम्पातश्चाधः संयोगहेतुपतनक्रियैव ग्राह्यो न त्वधः संयोगः, अतोऽत्र निमित्तत्वेन वक्ष्यमाणाधःसंयोगस्य भेदः ।

अनयोरनुक्तं निमित्तं दर्शयति—**अनयोरिति** । 'लिम्पतीव' 'वर्षतीव' इत्युभयोरित्यर्थः । यथासङ्ख्यं यथाक्रमम्—'लिम्पतीव तमोऽङ्गानि' इत्यत्रोत्प्रेक्षानिमित्तं तमसोऽतिबहुलत्वम्, अत्यधिकत्वात्सान्द्रभावेन अङ्गसंयोगः, एवं सति साधारणधर्मत्वमुपपन्नम् । 'वर्षतीवाञ्जनं नभ' इत्यत्र च तमसो धारारूपेण अनिरुद्धभावेन अधःसंयोग इत्यर्थः । तथा च क्रियास्वरूपोत्प्रेक्षैवेयमित्यवधेयम् ।

केचित्त्वत्र कर्त्तृस्वरूपद्रव्योत्प्रेक्षामाहुस्तद्दर्शयति—**केचित्त्विति** । अलङ्कारसर्वस्वकारादयः इत्याहुरित्युत्तरेण सम्बन्धः । **अलेपनकर्त्तृभूतमपीति** । तैलादिवत्तमसश्चिक्वणत्वाभावेन तत्कर्तृकलेपनासम्भवादित्याशयः । **लेपनकर्त्तृत्वेनोत्प्रेक्षितं** लिम्पतीत्यतः कर्त्तृताभिधानात्तस्य च सामानाधिकरण्येन तद्गततात्प्रत्ययादित्यभिसन्धिः

व्यापनं तमंसोनिखिलाङ्गसम्बन्धः। एवं नभोऽपीति। निष्क्रियत्वादसम्भवाच्च अञ्जनवर्षणकर्त्तृभूतमपि नभ इत्यर्थः। अञ्जनवर्षणक्रियाकर्त्तृत्वेनेत्यस्य उत्प्रेक्षितमितिपूर्वतोऽनुषज्यसम्बन्धो विधेयः। एवञ्च तेषां मते कर्त्तृस्वरूपद्रव्योत्प्रेक्षेत्यवगतं भवति। केचिदित्यनेनास्वरसं सूचयति, क्रियोत्तरमिवकारात्तमसो नभसोर्वास्तवत्वेनानुत्प्रेक्षणीयत्वाच्च। किञ्च क्रियायाः प्रतीतिपर्यवस्थानत्वात्तस्या एव विशेष्यत्वेन शाब्दबोधे प्राधान्यमिति लेपनवर्षणयोरुत्प्रेक्षणस्यैव युक्तत्वात् क्रियोत्प्रेक्षैव। **प्रकाशकृताऽपि** 'व्यापनादिलेपनादिरूपतया सम्भावितम्' इत्यभिधाय क्रियोत्प्रेक्षैव स्वाभिमतेतिध्वनिम्। **तर्कवागीशस्तु** 'नभसोऽञ्जनवर्षणकर्त्तृत्वेन सम्भावनायां प्रकृतदस्योपमेयस्य तमसो बोधो दुर्घट इत्यस्वरसः केचिदित्यनेन सूचितः' इत्युक्तवान्।

## रुचिरा

तमसा व्याप्तमित्युपक्रम्य'घटितमिवाञ्जनपुञ्जै'रित्याद्युत्प्रेक्षितमिति तमसो व्याप्तिः प्रस्तुता, अञ्जनपुञ्जादिना घटितत्वाद्युत्प्रेक्ष्यमाणमप्रस्तुतं चेत्येवं स्थितौ तमसो व्याप्तेरुदाहृतपद्येऽनभिधानादनुपात्तप्रस्तुताऽत्रेत्याह—**अत्रास्मिन्नुदाहृते पद्ये। अञ्जनादिना।** 'अञ्जनेने'ति पाठे त्वादिपदमुपलक्षणीयम्। **घटितत्वादेर्घ**टितत्वादिरूपस्य। **उत्प्रेक्षणीयस्य। विषयव्याप्तत्वं** विषय एव व्याप्तत्वं व्याप्तिः। 'तमस' इति तु शेषः। **न। उपात्तम्।** ननु'तिमिरपटलेने'त्यादिना विषय उपात्त एवेति चेदिदमुदाहार्य्यमित्याशयेनाह—**यथा** वेत्यादि। **यथा। वा तमो**ऽन्धकारः। **अङ्गानि** गात्राणि। **लिम्पति** लिप्तानि करोति। **इव। नभ** आकाशम् (कर्त्तृपदम्) अञ्जनं कज्जलम्। **वर्षति** वृष्टं करोति। इव। अतः—**दृष्टिर्नेत्रम्।** जातावेकवचनम्। **असत्पुरुषसेवा**ऽसन्तो दुष्टाः कदर्य्या इति यावत् ये पुरुषास्तेषां सेवा। **इव। निष्फलतां** व्यर्थताम्। **गता।** मृच्छकटिकस्येदं पद्यम्॥ १४६॥'

अस्योत्तरेऽर्द्धे तूपमेति तञ्चर्गा विहायाह—**अत्रे**त्यादि। स्पष्टम्। **यथासङ्ख्यं** यथाक्रमम्। अयम्भावः—'लिम्पतीव तमोऽङ्गानी'त्यत्र तमसो व्याप्तिविषयः, स एव लेपनत्वेनोत्प्रेक्षितः 'वर्षतीवाञ्जनं नभः' इत्यत्र तमसः सम्पातो नभः कर्त्तृकाञ्जनकर्मकवर्षणत्वेनोत्प्रेक्षितो विषयः। उभयोरप्यनुपादानमिति अनुपात्तविषयो (प्रस्तुतो)त्प्रेक्षेयमुभयत्र। अत एवोक्तम्—'अत्र...तमः। सम्पातः' इति। तमः कर्त्तृकं सम्भाव्यमानं लेपनं च तमसो भूयस्त्वनिमित्तकम्, तमोभूयस्त्वे हि तमः कर्त्तृकेन लेपनेन भुवनमलिनीकरणत्वोपपत्तिः। नभः कर्त्तृकमञ्जनवर्षणं च सम्भाव्यमानं तमसोऽधः प्रसारनिमित्तकम्, तमसोऽधः प्रसारे हि नभः कर्त्तृकाञ्जनकर्म्मकवर्षणसम्भावनाया उपपत्तिः। अत एवोक्तम्—**अनयोरि**त्यादि। परमतेन समाधत्ते-**केचिच्चि**त्यादिना। स्पष्टम्। अयम्भावः—अचेतनं तमः, तस्य लेपनकर्त्तृत्वमसम्भवम्, अथाप्येतदुत्प्रेक्षितम्, इति तमसो लेपनाकर्त्तृत्वेऽपि तमोलेपनकर्त्तृकत्वोत्प्रेक्षणे तमसो व्यापनं विषयः, स च नोक्तः। तथा—नभसो वर्षणक्रियाकर्त्तृत्वम्, अञ्जनस्य च वर्षणक्रियाकर्म्मत्वमसम्भवम्, अथाऽप्येतदुभयमुत्प्रेक्षितम्, इति नभसोऽञ्जननार्षकत्वेऽपि अञ्जनवर्षकत्वोप्रेक्षणे तमसोऽधः संयोगो विषयः, स च नोक्तः। एवम्—अञ्जनस्य नभःकर्त्तृकवर्षणकर्मकत्वासम्भववेऽपि नभः कर्त्तृकवर्षणकर्मकत्वोत्प्रेक्षणे तमसो निबिडीभवनं विषयः, सोऽप्यनुपात्तः। अत एवात्रानुक्तप्रस्तुतो(विषयो)त्प्रेक्षा। इति। अत्र विवृतिकारा आहुः—'नभसोऽञ्जनकर्तृत्वेन सम्भावनायां प्रकृतस्योपमेयस्य तमसो बोधो दुर्घट इत्यस्वरसः 'केचि'दित्यनेन सूचितः। अपरे तु—'तमोऽञ्जनत्वेनोप्रेक्षितम्, नीलत्वमत्रोत्प्रेक्षितम्' इत्याहुः।' इति।

**अलंकारान्तरोत्था सा वैचित्र्यमधिकं भजेत् ॥ ४५ ॥**

तत्र सापह्नवोत्प्रेक्षा यथा मम—

**'अश्रुच्छलेन सुदृशो हुतपावकधूमकलुषाक्ष्याः ।**
**अप्राप्य मानमङ्गे विगलति लावण्यवारिपूर इव ॥'**

---

## विवृतिः

अवर्षणक्रियाकर्तृभूतमपीत्यर्थः । उत्प्रेक्षितमित्यनुषज्यते । अत्र धारारूपेणाधःसंपातो निमित्तं नभसोऽञ्जनर्षणकर्तृत्वेन संभावनायां प्रकृतस्योपमेयस्य तमसो बोधो दुर्घट इत्यस्वरसः केचिदित्यनेन सूचितः । अपरे तु 'तमोऽञ्जनत्वेनोत्प्रेक्षितं नीलत्वमत्र निमित्तम' इत्याहुः । सा उत्प्रेक्षा सापह्नवा अपह्नुत्यलंकारमूला ॥

## विज्ञप्रिया

**अलङ्कारान्तरोत्थेति** । सा दर्शितसमस्तप्रकारोत्प्रेक्षाऽलङ्कारान्तरोत्था अलङ्कारान्तरनिष्पन्ना चेत्तदाधिकं वैचित्र्यं भजेदित्यर्थः ।

**अश्रुच्छलेनेति** । पत्यौ जुह्वति तत्सन्निधिस्थाया नायिकाया अश्रुनिर्गमवर्णनमिदम् । हुतपावकधूमकलुषाक्ष्याः सुदृशोऽङ्गे मानमवकाशमप्राप्य लावण्यवारिपूर इव अश्रुच्छलेन विगलतीत्यर्थः । अत्र छलपदादश्रवपह्नवो विगलल्लावण्यवारिपूरात्मकस्वरूपोत्प्रेक्षानिष्पादकः । अश्रवपह्नवं विना तदसम्भवादश्रुणि लावण्यरूपकस्यैवापत्तेः । अत्र च वारिपूरकसत्त्वेपि न तदुत्प्रेक्षानिष्पादकम् । तद्धि नापि लावण्यमित्युक्तावप्युत्प्रेक्षानिष्पत्तेः ।

## लोचन

सापह्नवोत्प्रेक्षेत्यनेन सहार्थनिर्देशेनापह्नुतेरङ्गभावः । सम्भावनाया एव उद्रेकावभासात् । हुतः पावको विवाहकालीनः ।

गुणः सूत्रं महार्घ्यतादिश्च । अत्र श्लेषहेतुकत्वं श्लिष्टशब्दान्वयव्यतिरेकानुविधानादेव ।

## कुसुमप्रतिमा

इदानीं कञ्चित् फलितार्थमाह अलङ्कारेति । सा उत्प्रेक्षा, अलङ्कारान्तरात् उत्थमुत्थानमुत्पत्तिर्यस्याः सा तादृशी सती, अधिकं वैचित्रयं बहेत् विभृयात् ।

तत्रेति । अपह्नवेन अपह्नुत्या सहेति सापह्नवा अपह्नुत्यलङ्कारमूलेत्यर्थः ।

अश्विति । यज्ञे प्रवृत्तस्त सपत्नीकस्य कस्यचित् पत्या अश्रुपातमवलोक्योक्तिरियम् । हुतपावकस्य प्राप्तघृताहुतेयज्ञीयवह्नेः धूमेन कलुषे आविले अक्षिणी चक्षुषी यस्यास्तस्यास्तथोक्तायाः सदृशः सुलोचनाया अस्याः, अश्रुच्छलेन नयनजलव्याजेन लावण्यवारिणः पूरः प्रवाहः, अङ्गे मानम् अवस्थितिस्थानम्, अप्राप्येव विगलति ।

अत्र प्रकृतमश्रु प्रतिषिध्य उपमानभूतलावण्यवारिपूरस्थापनादपह्नुतिः, तन्मूला चेयं क्रियोत्प्रेक्षा अधिक-वैचित्र्यावहेत्यनुभाव्यम्।

## विमला

अलङ्कारेति।—अलङ्कारान्तरात्—अन्यस्मादलङ्कारात्, उत्थिता—अलङ्कारान्तरमूलेत्यर्थः, सा—उत्प्रेक्षा, अधिकं वैचित्र्यं—शोभाऽऽतिशय्यं, वहेत्—प्राप्नुयात्। ["भजेत्" इति पाठान्तरम्]।

तत्रेति।—सापह्नवा—अपह्नुत्यलङ्कारमूलेत्यर्थः।

अश्रविति।—हुतस्य—प्राप्तघृताहुतेरित्यर्थः, पावकस्य—अग्नेः, धूमेन कलुषे—आविले, अक्षिणी—नयने यस्यास्तथाभूतायाः, सुदृशः,—सुनयनायाः, सुन्दर्य्या इति शेषः, अश्रुच्छलेन—नेत्राम्बुव्याजेन, लावण्यवारि-पूरः,—लावण्य जलप्रवाहः, अङ्गे—शरीरे, मानम्—इयत्ताम्, अप्राप्य इव—अलब्ध्वेव, विगलति—स्रवति। अत्राश्रुजलम् अपह्नुत्य लावण्यवारित्वेन उत्प्रेक्ष्यते, इत्यपह्नुत्युपस्कृतेय मुत्प्रेक्षा। उपगीतिश्छन्दः।

## लक्ष्मी

अस्यां चमत्कारातिशयाधानायोपायं दर्शयति—**अलङ्कारेति**। सा दर्शितसमस्तप्रकारोत्प्रेक्षा अलङ्कारा-न्तरोत्था अलङ्कारान्तरमाश्रित्य निष्पन्ना सती अधिकं वैचित्र्यं विच्छित्तिम्, भजेत् समाश्रयेत्। तथा च यद्यस्याश्च-मत्कारातिशयोऽभिमतस्तर्हि अलङ्कारान्तरेणैनां संयोजयेदितिनिर्गलितोऽर्थः।

उदाहर्त्तु—तत्रेति। तत्र तेषु उत्प्रेक्षालङ्कारेषु मध्ये, अवह्नवेन अपह्नुत्यलङ्कारेण सहेति सपाह्नवा अपह्नुत्य-लङ्कारमूलेत्यर्थः।

उदाहरति—अश्रुच्छलेनेति। सपत्नीके पत्यौ जुह्वति तत्समीपवर्त्तिन्या नायिकाया अश्रुनिर्गमनमवलोक्य कस्यचिदुक्तिरियम्। हुतः कृतहोमो यः पावकस्तस्य धूमस्तेन कलुषे आविले अक्षिणी लोचने यस्यात्सस्याः तथोक्तायाः, सुदृशः सुलोचनायाः, अश्रुच्छलेन लोचनजलमिषेण, लावण्यवारिणः, पूरः प्रवाहः।

'पूरो जलप्रवाहे स्यादव्रषसंशुद्धिखाद्ययोः' इति मेदिनी, शरीरे 'अङ्कात्ते...त्रिष्वङ्गवति चान्तिके' इति च मेदिनी।

अङ्गे मानमियत्ताम् अवस्थितिस्थानमित्यन्ये, अप्राप्य अलब्ध्यवेव विगलति प्रस्रवति। **उपगीति**श्छन्दः।

अत्र प्रस्तुतमश्रुकैतवार्थकछलशब्दोपादानेन प्रतिषिध्य उपमानभूतलावण्यवारिपूरस्थापनादपह्नुतिः, त-न्मूला चेयं क्रियोत्प्रेक्षा चमत्कारातिशयाधायिनीतिविभावनीयम्।

इत्यपह्नुतिमूलामुदाहृत्य श्लेषहेतूभयमूलामुदाहर्त्तुमाह—श्लेषेति। श्लेष एव हेतुरुत्थापकस्तं गच्छ-तीति श्लेषहेतुर्गच्छतीतिवा तादृशी। श्लेषहेतुमूलेत्यर्थः। उत्प्रेक्षेति पूर्वतोऽनुषञ्जनीयम्।

**मुक्तोत्कर** इति। काञ्चिन्नायिकामवलोक्य कस्यचिदुक्तिरियम्। सङ्कटं स्ववर्गपरिपूर्णत्वादवकाशर-हितं सङ्कीर्णमितियावत् यत् शुक्तिमध्यं शुक्तेरभ्यन्तरदेशस्तस्मात् तदध्युस्येतिभावः, विनिर्गतः अन्यत्र कारागार-मनुभूय निस्तीर्णप्रत्यवायक्लेशः, मुक्तानां मौक्तिकानाम् उत्करः पुञ्जः, सारसे कमले इव लोचने नयने यस्यास्तस्या अस्याः पुरो दृश्यमानाया रमण्याः (अत्रार्द्धान्तैकपदत्वम्) कमनीया मनोहरा या कम्बुग्रीवा शङ्खतुल्यो गण्डदेश-स्तस्यामधिवासात् निवासात् गुणवत्वं तन्तुवत्वम् अन्यत्र उत्कृष्टस्थानेऽधिवासादुत्कर्षप्रयोजकधर्मयोगित्वञ्च आप

प्राप्तवान् इति जानीमहे वयं सम्भावयाम इत्यर्थः। अस्थानस्थितिदिःखोत्तीर्णस्य गुणवत्स्थानवासादिव गुणवत्व-प्राप्तिरित्याशयः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणस्तूक्तं प्रागेव।

लक्ष्यं संयोजयति—**अत्रेति**। गुणवत्वे गुणवत्वमितिपदमित्याशयः, श्लेषः 'गुणो मौर्व्यामप्रधाने...' 'त्यागशौर्यादिसत्त्वादिसन्ध्याद्यावृत्तिरज्जुषु' इति मेदिनीकोशाद्गुणपदस्यानेकार्थवाचितया च तन्तुवत्वोत्कर्षव-तरूपार्थ द्वययोग इत्यर्थः। हेतुरिति। तन्तोर्वास्तवत्वान्न तत्प्राप्तिहेतूत्प्रेक्षा सम्भवतीत्यतो गुणपदश्लेषादुत्कर्षवि-शेषप्राप्तिहेतूत्प्रेक्षा तस्या एवोत्थापकत्वादित्यतः श्लेषनिर्वाह्या इयमुत्प्रेक्षा। **कम्बुग्रीवाधिवासादिवेत्यत्र** चेति शेषकरणात् हेतुमूलाऽपीत्यतस्तदुभयमूलेयमुत्प्रेक्षेतिभावः। तथा च हारस्य (मुक्तोत्करस्य) गुण (तन्तु) वत्वप्राप्तौ स्वभावत एव सिद्धम्, अथापि उत्कर्षाश्रयवशाद् गुणशालित्वं भवतीति बोधयितुं श्लेषमुपजीव्य गुणवत्वमुत्प्रेक्षि-तमितिश्लेषमूलात्वमस्याः। तत्र च हेतुर्वासादिति पञ्चम्याभिहितः, शुक्तिमध्यापेक्षया कम्बुग्रीवाया महत्वात्तत्राधि-वासस्य गुणवत्वलाभे च हेतुत्वं न्याय्यमेवोत्प्रेक्ष्यमाणम्।

नन्वत्रोत्प्रेक्षामहे इत्यादेरसत्त्वात् कथमियमुत्प्रेक्षेत्याशङ्क्य समाधत्ते—**अत्रेति**। अतएवात्र वाच्योत्प्रेक्षा इति भावः।

न केवलमेतदेवेत्याह—एवमिति। जानीमहे इतिवत् उत्प्रेक्षावाचकाः शब्दा इत्यर्थः। **मन्ये** इति। इत्येवमादय इत्यादय इत्यर्थः। उत्प्रेक्षावाचका ज्ञेया इति शेषः।

## रुचिरा

अस्यां चमत्कारातिशयाधानायोपायं निर्दिशति—**१२४ सा** निरुक्तोत्प्रेक्षा। **अलङ्कारान्तरोत्था**ऽलङ्का-रान्तरादुत्थोत्थितेति तथोक्ता। अलङ्कारान्तरमाश्रित्योत्पादितेति भावः। **अधिकम्**। **वैचित्र्यं** विच्छित्तिम्। **भजेत्**। 'वहे' दिति पाठान्तरम्। एवं च-अस्या यदि चमत्कारातिशयोऽभिमतो भवेत्, तर्हि अलङ्कारान्तरेणैनां संमिश्रयेत्। इति फलितोऽर्थः॥

उदाहरति—**तत्र** तासूत्प्रेक्षासु मध्ये। **सापह्नवा**। **उत्प्रेक्षा**। **यथा**। **मम**। **हुतपावकधूमकलुषाक्ष्या** हुतः कृतहोमो यः पावकोऽग्निस्तस्य धूमस्तेन कलुषे आविले अक्षिणी यस्यास्तस्या इति तथोक्तायाः। **सुदृशः**। **अश्रुच्छलेन** जलोद्गममिषेण। **लावण्यवारिपूरो** लावण्यमेव वारि तस्य पूरः प्रवाहः। 'पूरो जलप्रवाहे स्याद्व्रणसंशु-द्धिखाद्ययोः।' इति मेदिनी। **अङ्गे** शरीरे। 'अङ्गं गात्रे...त्रिष्वङ्गवति चान्तिके' इति मेदिनी। **मानमियत्ताम्**। **अप्राप्यालब्ध्वा**। **इव**। **विगलित**। अत्रोद्गीतिश्छन्दः॥ १४७॥

उदाहरति—**तत्र** तासूत्प्रेक्षासु मध्ये। **सापह्नवा**। **उत्प्रेक्षा**। **यथा**। **मम**। **हुतपावकधूमकलुषाक्ष्या** हुतः कृतहोमो यः पावकोऽग्निस्तस्य धूमस्तेन कलुषे आविले अक्षिणी यस्यास्तस्या इति तथोक्तायाः। **सुदृशः**। **अश्रुच्छलेन** जलोद्गममिषेण। **लावण्यवारिपूरो** लावण्यमेव वारि तस्य पूरः प्रवाहः। 'पूरो जलप्रवाहे स्याद्व्रणसंशु-द्धिखाद्ययोः।' इति मेदिनी। अङ्गे शरीरे। 'अङ्गं गात्रे...त्रिष्वङ्गवति चान्तिके' इति मेदिनी। मानमियत्ताम्। **अप्राप्यालब्ध्वा**। **इव**। **विगलति**। अत्रोद्गीतिश्छन्दः॥ १४७॥

अत्रेदम्बोध्यम्—छलशब्दस्य कैतवार्थकतया तेनाश्रूणामपह्नवश्चेति कैतवापह्नुतिः, नेत्रयोः कलुषाभिधा-नेन अश्रूद्गमयोग्यतायाश्च समर्थनमिति परिकरः, लावण्यस्य वारिपूरत्वेन परिणामोक्तेः परिणामश्चेत्येवं यद्यपि केवलया नापह्नुत्येयमुत्प्रेक्षा सङ्कीर्णा, किन्तु परिकरपरिणामाभ्यामपि, अथापि अश्रूण्यपह्नूय लावण्यवारिपूरत्वेनो-

त्प्रेक्षणे एव परिकरपरिणामयोरन्तः, साचिव्यम्। इति सापह्नवा (अपह्नुत्यलङ्कारमूला) एवोत्प्रेक्षा चमत्कुरुते। इति यथोक्तं ज्यायः।

एवमपह्नुतिमूलामुदाहृत्यश्लेषहेतूभयमूलामुदाहरति—**श्लेषहेतुगा** श्लेषहेतू गच्छतीति तथोक्ता। श्लेषहेतुमूलोत्प्रेक्षेति भावः। **यथा। सङ्कटशुक्तिमध्यात्सङ्कटं** सङ्कीर्णं यत् शुक्तिमध्यं शुक्तिगर्भभागस्तस्मात् तदध्युष्येति भावः। **विनिर्गतः**। 'कारागारमनुभूय निस्तीर्णप्रत्यवायवलेश' इति तु ध्वन्योऽर्थः **मुक्तोत्करो** मुक्तानां मौक्तिकानामुत्करः समूहः। 'मुक्तानां बन्धनतो निस्तीर्णाना'मिति तु ध्वन्योऽर्थः। **अस्याः**। **सारसलोचनायाः** कमलनेत्रायाः। (अत्रार्द्धान्तरैकपदत्वम्)। **कमनीयकम्बुग्रीवाऽधिवासात्** कमनीयो रमणीयो यः कम्बुः शङ्खस्तद्व-द्ग्रीवा (तस्य ग्रीवेति तु ध्वन्योऽर्थः) तस्या अधिवास आश्रयः तस्यामधिवासो निवास इति वा तस्मात्। **गुणवत्त्वं** सुकृतफलभूतयशस्विताऽऽदिशालित्वम्' सूत्रवत्त्वं वा। **आप** प्राप्तवान्। इति—**जानीमहे** वयं भावयाम इति भावः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः॥ १४८॥'

लक्ष्यं सङ्गमयति—अत्र गुणक्त्वे 'गुणवत्त्वं'मिति पद इति भावः। **श्लेषः**। 'गुणो मौर्व्यामप्रधाने....त्याग-शौर्य्यादि सत्त्वादिसन्ध्याऽऽद्यावृत्तिरज्जुषु।...' इति मेदिनीकराद्युक्तया गुणशब्दस्यानेकार्थवाचितयाऽत्र च प्रयु-क्तत्वादिति शेषः। **कम्बुग्रीवाऽधिवासादिवेति**। 'चे'ति शेषः। **हेतूत्प्रेक्षायाः**। **हेतूः**। अतस्तदुभयमूलेयमुत्प्रेक्षेति भावः। इदं बोध्यम्-हारस्य (मुक्तोत्करस्य) गुण (सूत्र) वत्त्वं स्वतः सिद्धम्, अथापि—अपकृष्टकुलभवानामप्युत्कृ-ष्टकुलभवाश्रयवशाद् गुण (यशस्विताऽऽदि) शालित्वं भवतीति सूचयितुं श्लेषमुपजीव्यगुणवत्त्वमुत्प्रेक्षितमिति श्लेषमूलात्वमेतस्याः। तत्र च हेतु'र्वासा'दिति पञ्चम्युक्तः। शुक्तिमध्यापेक्षया कम्बुग्रीवाया महत्त्वात्तत्राधिवासस्य गुणवत्त्वलाभे च हेतुत्वमुचितमेवोत्प्रेक्ष्यमाणम्। इति।

ननूत्प्रेक्षामहे इत्यादेरभावात् कथमियमुत्प्रेक्षेत्याशङ्क्याह—**अत्रत्यादि**। स्पष्टम्।

न केवलमेतदेवेत्याह—**एवं** यथेदं तथेति भावः।

१२५ **मन्ये**। **शङ्के**। **ध्रुवम्**। **प्रायः**। नूनम्। **इत्येवमादय** इत्यादय इत्यर्थः। 'उत्प्रेक्षावाचका' इति शेषः। आदिपदेन—'जानीमहे, सम्भावयामः, उत्प्रेक्षामहे, खलु, किल, इव, किमु, ननु' प्रभृतीनां ग्रहणम्। अत एवाहुश्चि-त्रमीमांसाकाराः—"मन्ये, शङ्के, ध्रुवं, प्रायो, नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवाशब्दोऽपि तादृशः। इत्यत्रादिशब्देन'तर्कयामि, सम्भावयामि, जाने, उत्प्रेक्षे, स्यात्, इत्येवमादीनां सङ्ग्रहः।" इति।

श्लेषहेतुगा यथा—

**'मुक्तोत्करः संकटशुक्तिमध्याद्विनिर्गतः सारसलोचनायाः।**
**जानीमहेऽस्याः कमनीयकम्बुग्रीवाधिवासाद्गुणवत्त्वमाप॥'**

अत्र गुणवत्त्वे श्लेषः कम्बुग्रीवाधिवासादिवेति हेतूत्प्रेक्षाया हेतुः। अत्र 'जानीमहे' इत्युत्प्रेक्षा-वाचकम्। एवं मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः।

---

## विवृतिः

मानमियत्ताम्॥ **संकटेति** कारणस्य गुणवत्त्वप्राप्तिकारणत्वाभावसूचकम्। गुणवत्त्वमुत्कर्षप्रयोजकध-र्मयोगित्वम्, अथ च सूत्रवत्त्वम्। अपकृष्टजातानामप्युत्तमस्थानवासेन गुणवत्त्वं भवतीति भावः। हारस्य गुणवत्त्व-प्राप्तौ स्वभाव एव हेतुस्तत्रेयमुत्प्रेक्षा। अथ च शुक्तिमध्यापेक्षया कम्बुग्रीवाया महत्त्वमुचितमेव। **एवमिति**। उत्प्रेक्षावाचका इत्यर्थः। आदिपदात्खलु-किमु-प्रभृतीनां ग्रहणम्। यथा—'रुचयोऽस्तमितस्य भास्वतः स्खलिता यत्र निरालयाः खलु। अभिसायमतो विलेपनापणकाश्मीरजपण्यवीथयः॥', 'पृथुवर्तुलतन्नितम्बकृन्मिहिरस्यन्दन-शिल्पशिक्षया। विधिरेककचक्रचारिणं किमु निर्मित्सति मान्मथं रथम्॥' इवशब्दस्योत्प्रेक्षावाचकत्वं प्रसिद्धमिति तन्नोक्तम्। आदिपदेन वा तस्यापि ग्रहणम्॥

## विवृतिपूर्तिः

मन्य इति दण्डिनः काव्यादर्शे। तत्रैवम्—'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः॥' एतच्च कारिकात्वेन मूलकारस्य नाभिमतमंतस्तत्र कारिकांशभ्रमो न कर्तव्य इति कणेहत्य निरीक्षणीयम्॥

## विज्ञप्रिया

**मुक्तोत्कर** इति। आवरणयन्त्रितत्वेन संकटाद् दुःखदायकात् शुक्तिमध्याद् विनिर्गतो मुक्तोत्करः सारसाक्ष्या अस्या कमनीयकम्बुग्रीवाधिवासाद् गुणवत्त्वं तन्तुमत्त्वमेव, गुणवत्त्वं ज्योतिराधिक्यमापेति जानीमहे उत्प्रेक्षामहे इत्यर्थः। अस्थानस्थितिदुःखोत्तीर्णस्य गुणवत्स्थानवासादिव गुणवत्त्वप्राप्तिरित्यर्थः। त्रिलेखाविशिष्टा ग्रीवा कम्बुः। अत्र तन्तोर्वास्तवत्वान्न तत्प्राप्तिहेतुत्प्रेक्षा सम्भवतीत्यतो गुणपदश्लेषाज् ज्योतिर्विशेषप्राप्तिहेतूत्प्रेक्षा इत्यतः श्लेषनिर्वाह्या इयमुत्प्रेक्षा।

## लोचन

जानीमहे इति मन्ये इत्यादयोऽप्युत्प्रेक्षावाचका ज्ञेया इत्यर्थः। आदिशब्देन किमादयः। तत्र किंशब्दस्य प्रयोगे यथा गोपीनाथस्य गङ्गावर्णने—

**"वलिप्रसूनावलिमूर्मिहस्तैः सञ्चारयन्ती भजतां सुदूरम्।**
**विक्रीय कैवल्यममुष्य मूल्यं वराटसंख्यां किमियं करोति॥"**

## कुसुमप्रतिमा

श्लेषेति । श्लेष एव हेतुरुत्थापकस्तं गच्छतीति श्लेषहेतुगा श्लेषमूलेत्यर्थः । उत्प्रेक्षेत्यनुषज्यते ।

मुक्तोत्कर इति । सङ्कटं स्ववर्गपरिपूर्णत्वादवकाशशून्यं यत् शुक्तेर्मध्यमध्यन्तरदेशस्तस्मात, विनिर्गतो मुक्तानामुत्करः पुञ्जः, सारसे पद्मे इव लोचने यस्यास्तस्याः अस्या दृश्यमानायाः कामिन्याः, कमनीया मनोज्ञा या कम्बुग्रीवा शङ्खसदृशी गलदेशस्तस्याम् अधिवासादवस्थानात्, गुणवत्त्वं सूत्रवत्त्वम् उत्कृष्टस्थाने निवासादुत्कर्ष-धर्म्मवत्त्वञ्च आप लब्धवान् इति जानीमहे वयं सम्भावयामः ।

अत्रेति । गुणवत्त्वे गुणवत्त्वशब्दे श्लेषः सूत्रवत्त्वोत्कर्षवत्त्वरूपार्थद्वययोः । हेतुरिति । तादृशहेतूत्प्रेक्षाया उत्थापकत्वादिति भावः ।

अत्रेति । अतएवात्र वाच्योत्प्रेक्षा इत्याशयः ।

एवमिति । "जानीमहे" इतिवत् उत्प्रेक्षावाचकाः शब्दा इत्यर्थः ।

मन्य इति । अत्रादिशब्दात् इव, किम्, न खलु इत्यादीनां ग्रहणम् ।

## विमला

मुक्तोत्कर इति ।—सङ्कटं—सङ्कीर्ण, [कारणस्य गुणवत्वप्राप्तिकारणत्वा भावसूचकम्] यत् शुक्तिम-ध्यं—मुक्तागृहगर्भः, तस्मात् विनिर्गतः,—बहिर्गतः, मुक्तानाम् उत्करः,—समूहः, अस्याः सारसलोचनायाः,—सरसि—जलाशये भवम् इति सारसं—कमलं ("सारसः पक्षिभेदेन्द्वोः क्लीवन्तु सरसीरुहे" इति मेदिनी) तद्वत् आश्रते सुन्दरे च इति भावः, लोचने-नयने यथाः तथाभूतायाः, कान्तायाः इत्यर्थः, कमनीया—रम्या, या कम्बुग्रीवा—कम्बुवत्—कम्बुरिव, शङ्ख इवेति यावत्, ग्रीवा—रेखात्रयरमणीया कन्धरा, लक्षणया कण्ठ इति भावः, तस्याम् अधिवासात्—अवस्थानात्, गुणवत्त्वं—सूत्रवत्त्वं, सत्सङ्गजनितोत्कर्षप्रयोजकधर्मयोगित्वञ्च, अपकृष्ट जातानाम-प्युत्तमस्थानवासेन गुणवत्त्वं भवतीति भावः, आप—प्राप्तवान्, इति जानीमहे—मन्यामहे । हारस्य गुणवत्त्वप्राप्तौ स्वभाव एव हेतुस्तत्रेयमुत्प्रेक्षा, अथ च शुक्तिमध्यापेक्षया कम्बुग्रीवाया महत्त्वमुचितमेव । उपजातिः वृत्तम् ।

एवमिति ।—उत्प्रेक्षावाचका इत्यर्थः ।

मन्ये इति ।—मन्ये, शङ्के, ध्रुवं, प्रायः, नूनम् इत्येवमादयः, शब्दाः उत्प्रेक्षावाचका इति शेषः । आदिपदात् खलु किमुप्रभृतीनां ग्रहणम् । यथा—"रुचयोऽस्तमितस्य भास्वतः स्खलिता यत्र निरालयाः खलु । अभिसायमतो विलेपनापणकाश्मीरजपण्यवीथयः ॥" "पृथुवर्त्तुलतन्नितम्बकृत् मिहिरस्यन्दनशिल्पशिक्षया । विधिरेककचक्रचा-रिणं किमु निर्मितसति मान्मथं रथम् ! ! ॥" इवशब्दस्योत्प्रेक्षावाचकत्वं प्रसिद्धम् इति तन्नोक्तम्, आदिपदेन वा तस्यापि नन्वित्यादीनाञ्च ग्रहणम् ।

## लक्ष्मी

अत्रादिपदात् खलु-किमु-किम्-प्रभृतीनां परिग्रहो बोध्यः । इवशब्दस्योत्प्रेक्षावाचकत्वं प्रसिद्धमिति तन्ना-भिहितम् । 'मन्ये' इत्यादि तु बहुषु पुस्तकेषु कारिकारूपेण पठितमितिग्रन्थकार्तुर्नात्र सम्मिहितम् । 'मन्ये' इत्यादि तु बहुषु पुस्तकेषु कारिकारूपेण पठितमितिग्रन्तकर्तुर्नात्र सम्मतिरित्यवधेयम् । काव्यादर्शे दण्डिना हि 'मन्ये' इत्यादिपदचतुष्टयेनोक्तम् । तथाहि—

'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।

उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥' इति ।

तत्र 'खलु-किमु-किम्' इत्येतेषां दिङ्मात्रमुदाहरणं प्रदर्श्यते—

रुचयोऽस्तमितस्य भास्वतः स्खलिता यज्ञनिरालयाः खलु ।

असायमतो विलेपनापणकाश्मीरजपण्यवीथयः ॥'

पृथुवर्त्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया ।

विधिरेककचक्रचारिणं किमु निर्मित्सति मान्मथं रथम् ॥

वलिप्रसूनावलिमूर्मिहस्तैः सञ्चारयन्ती भजतां सुदूरम् ।

विक्रीय कैवल्यममुष्य मूल्यं तापं हरन्ती किमियं करोति ॥

गङ्गावर्णनेयम् ।

उपमामूलामुदाहर्त्तुमाह—**क्वचिदिति** । उपमा उपक्रमे प्रारम्भे (मूलत्वेन स्थिता) यस्याः सा तादृशी उत्प्रेक्षा ।

## रुचिरा

उपमामूलामुदाहरति—**क्वचित्** । उपमोपक्रमोपमोपक्रमे आरम्भे (मूलत्वेन स्थिता) यस्यास्तथोक्ता । **उत्प्रेक्षा** । **यथा** । '**मुरारिः** श्रीकृष्णचन्द्रः । **नीरनिधेः** समुद्रस्य । **पारेजलं** जलस्य पारे । 'पारे मध्ये षष्ठया वा' २/१/१८ इत्यव्ययीभावः, तत्सम्बन्धात् पारशब्दस्यैदन्तत्वं निपातसिद्धम् । **आनीलपलाशराशी**रासमन्तान्नीला इत्यनीलाः पलाशराशयः (पलाशानां पत्राणां राशयः पुञ्जाः) यासां ताः तथोक्ताः । 'पत्रं पलाशं छदनम्' इत्यमरः ।

क्वचिदुपमोपक्रमोत्प्रेक्षा यथा—

**'पारेजलं नीरनिधेरपश्यन्मुरारिरानीलपलाशराशीः।**

**वनावलीरुत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः॥'**

इत्यत्राभाशब्दस्योपमावचकत्वादुपक्रमे उपमा। पर्यवसाने तु जलधितीरे शैवालस्थितेः संभावनानुपपत्तौ संभावनोत्थापनमित्युत्प्रेक्षा। एवं विरहवर्णने—'केयूरायितमङ्गदैः—' इत्यत्र 'विकासिनीलोत्पलति स्म कर्णे मृगायताक्ष्याः कुटिलः कटाक्षः' इत्यादौ च ज्ञेयम्।

---

## विवृतिः

**उत्कलिकासहस्रेण** तरङ्गसमूहेन प्रतिक्षणमुत्कूलिताः कूलं प्रापिताः ये शैवालास्तत्तुल्या इत्यर्थः। 'कथितोत्कलिकोत्कण्ठाहेलासलिलवीचिषु' इति मेदिनी॥ **उपक्रम इति**। प्रथममुपमाप्रतीतिरित्यर्थः। **संभावनोत्थापनं** संभावनाप्रतीति॥ **केयूरायितमिति**। अङ्गदैः कंकणैः। अनयोरायतल्लुकोरुपमावाचकत्वादुपक्रमे उपमाप्रतीतिः। पर्यवसाने तु भुजमध्ये कर्णे च कंकणकटाक्षयोरसंभवात्संभावनोत्थानमित्युत्प्रेक्षा।

## विवृतिपूर्तिः

**केचिदिति**। अलंकारसर्वस्वकारादयः॥

## विज्ञप्रिया

**क्वचिदुपमोपक्रमोत्प्रेक्षा** इति। उपक्रान्ताया उपमाया एवोत्प्रेक्षेत्यर्थः। **पारेजलमिति**—मुरारिः श्रीकृष्णः नीरनिधेःसमुद्रस्य पारेजलं जलस्य पारे कूले वनावलीरपश्यत्। कीदृशीः? आनीलः पलाशानां पत्राणां राशिर्यासु। पुनः कीदृशीः? उत्कलिकासहस्रेण तरङ्गसहस्रेण प्रतिक्षणोत्कूलितानां शैवलानामाभा इवेत्यर्थः। अत्रोपमाया एवोत्प्रेक्षां ग्राहयति—**अत्राभाशब्दस्येति**। शैवलस्येव आभा यत्रेति बहुव्रीहिसमासवशादुपमाप्रतिपादकस्येत्यर्थः। अनेन उपमोपक्रमो दर्शितः। ततस्तस्या उपमाया उत्प्रेक्षामुपपादयति—**पर्यवसाने त्विति**। 'शैवलाभा' इत्यनेनैवोपमापर्यवसानसम्भवे उत्कूलत्वकथनमनुपयुक्तमत उत्कूलितशैवलाभा इवेति पर्यवसाने उत्प्रेक्षेत्यन्वयः। तादृशोत्प्रेक्षाया उत्थानमुपपादयति—**जलधितीर** इति। वनान्तर उत्कूलितशैवलासम्भवात् तत्र न तत्सम्भावनोत्थानम्। जलनिधितीरे शैवलस्थितेः सम्भवस्योपपत्तेरनुपपत्त्यभावात् सम्भावनोत्थानमुत्कूलितशैवलसम्भावोत्थानमित्यर्थः। ततस्तदाभा इवेत्युत्प्रेक्षेत्यत आह—**उत्प्रेक्षेति**। तत्सम्भावनोत्थानाभावे उत्कूलितविशेषणवैयर्थ्यमिति भावः एवं चोत्प्रेक्षाया उपक्रान्तोपमाविषयत्वादुपमानिष्पाद्येयमुत्प्रेक्षेत्यर्थः।

**केयूरायितमिति**। केयूरैरिवाचरितमिवेत्यर्थः। केयूरं कङ्कणम्। विरहकार्श्यादङ्गदैः केयूरस्थानं प्राप्तमित्यर्थः। तत्रापि प्रत्ययवशात् प्राप्तोपमा अङ्गदस्याऽऽचाराभावादुत्प्रेक्ष्यते। श्रौत्युपमोत्प्रेक्षां दर्शयित्वा आर्थ्युपमोत्प्रेक्षां दर्शयति—**विकासीति**। अत्रापि क्विब्लोपादार्थी लुप्तोपमा उत्प्रेक्ष्यते।

## लोचन

उपमोपक्रमोत्प्रेक्षा—उपमोपक्रमे पदार्थान्वयवेलायां तद्रवाचकशब्दोपादानाद् यस्यास्तथाभूता। वाक्यप्रतीत्यनन्तरं सम्भावनाकर्तुरभिमानव्यापारस्याविर्भावाद् विश्रान्तावुत्प्रेक्षा। उत्कलिका वीचयः। उत्कूलितानि—कूलमुद्गतानि।

## कुसुमप्रतिमा

क्वचिदिति। उपमा उपक्रमे प्रारम्भे यस्याः सा तथोक्ता उत्प्रेक्षा।

पारे इति। पद्यमिदं शिशुपालवधतृतीयसर्गे। मुरारिहरिः नीरनिधेः सागरस्य पारेजलं जलस्य पारे तीरे इत्यर्थः, आनीली गाढनीलवर्णः पलाशराशिः पत्रपुञ्जो यासां ताः, तथा उत्कलिकासहस्रेण तरङ्गसमूहेन, प्रतिक्षणं क्षणे क्षणे उत्कूलितानां कूलमुन्नीतानां शैवलानाम् आभेव आभा यासां तास्तथोक्ताः वनानामावलीः श्रेणीः अपश्यत्।

इतीति। सम्भावनाया मनसि करणस्य अनुपपत्ते रसम्भवात्, शैवालाना जल एवावस्थानादिति भावः। सम्भावननाया उत्प्रेक्षाघटिकाया इत्यर्थः, उत्थानमाविर्भावः। तथा च जलस्थितानां शवालानां तीरस्थिततया सम्भावनेति भावः।

एवमिति। अङ्गदैवलयैः केयुरायितं भुजमध्यभागधारणीयकेयूरवदाचरितम्। अत्र आयिप्रत्ययस्य उपमावाचकतया उपक्रमे उपमा, पर्य्यवसाने तु अङ्गदानां भुजमध्यभागे धारणासम्भवेन सम्भावनाया उत्थानादुत्प्रेक्षेत्याशयः।

विकासीति। मृगस्येव आयते दीर्घे लोचने यस्यास्तस्याः, कुटिली वक्रः कटाक्षी दृष्टिपातः, कर्णे, विकासि प्रस्फुटितं यन् नीलोत्पलं तद्वदाचरति स्म।

अत्रापि क्विप्प्रत्ययस्य आयिलोपस्य च उपमावचकतया उपक्रमे उपमा, परन्तु कर्णे कटाक्षावस्थितेरसम्भवात् सम्भावनाया उत्थानेन उत्प्रेक्षेति भावः।

## विमला

क्वचिदिति।—कस्मिंश्चित् काव्ये इत्यर्थः, उपमा उपक्रमे—आरम्भे यस्याः तादृशी उत्प्रेक्षा।

पारे इति।—मुरारिः,—कृष्णः, नीरनिधेः,—समुद्रस्य, पारेजलं—जलस्य पारे इत्यर्थः, ["पारे मध्ये षष्ठया वा" (२/१/१८ पा.) इति साधुः] आनीलाः,—आ—सम्यक् नीलाः, गाढ़नीलवर्णाः इत्यर्थः, पलाशानां—पत्राणां, राशयः,—समूहाः यासां तथोक्ताः, तथा उत्कलिकानां—तरङ्गाणां, ("कथितोत्कनिकोत्कण्ठा हेलासलिलवीचिषु" इति मेदिनी) सहस्रैः,—समूहैः, प्रतिक्षणं—क्षणे क्षणे, उत्कूलिताः,—कूलमुद्गताः, ये शैवलाः तेषाम् आभेव आभा यासां तादृशीः, वनावलीः,—काननराजीः, अपश्यत्—व्यलोकयत्। उपजातिः वृत्तम्। शिशुपालवधस्यैतत्पद्यम्।

उपक्रमे इति।—प्रथममुपमाप्रतीतिरित्यर्थः। सम्भावनोत्थानं—सम्भावनाप्रतीतिः। केयूरायितमिति।—अङ्गदैः,—कङ्कणैः, केयूरायितं—केयूरो भुजमध्यदेशालङ्कारविशेषः, तद्वदाचरितम्। अत्र आयप्रत्ययस्य उपमावाचकत्वात् उपक्रमे उपमायाः प्रतीतावपि पर्य्यवसाने भुजमध्ये कङ्कणधारणस्यासम्भवात् सम्भावनोत्थानमिति उत्प्रेक्षैव।

## लक्ष्मी

**पारेजलमिति**। शिशुपालवधे तृतीयसर्गे पद्यमिदम्। मुरारिः श्रीकृष्णः नीरनिधेः समुद्रस्य पारेजलं जलस्य पारे तीरे 'पारे मध्ये षष्ठ्या वा' २/१/१८ इत्यव्ययीभावः, तत्सम्बन्धात्पारशब्दस्य निपातनादेदन्तत्वम्। आ समन्तान्नीला गाढनीलवर्णाः पलाशानां पत्राणां राशयः पुञ्जा यासां ताः तादृशाः, 'पत्रं पलाशं छदनम्' इत्यमरः, उत्कलिकासहस्रेण तरङ्गसमूहेन प्रतिक्षणं क्षणे क्षणे उत्कूलिताः कूलं प्रापिता ये शैवालाः शेवालानि तेषामाभेव आभा यासां ताः तथोक्ताः। 'कथितोत्कलिकोत्कण्ठा हेलासलिलवीचिषु' इति मेदिनी। 'ऊर्मिरुत्कलिकोल्लल-कल्लोललहरिस्तथा' इति हलायुधोऽपि॥ 'जलनीली तु शेवालं शैवालः' इत्यमरः।

उत्कूलिता इति 'तत्करोति तदाचष्टे' इतिण्यन्तात् उत्कूलशब्दात् कर्मणि क्तः। वनानाम् आवलीः पङ्क्तीः अपश्यत् अवलोकयत्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणा तूक्तं प्रागेव।

अत्रोपमाया एवोत्प्रेक्षामुपपादयति—**इत्यत्राभाशब्दस्येति**। शैवलस्य आभेव आभा यासामिति बहुव्रीहिसमासवशादुपमाप्रतिपादकस्येत्यर्थः। अनेन उपमोपक्रमो दर्शितः। ततस्तस्या उपमाया उत्प्रेक्षां दर्शयति—**पर्यवसाने** त्विति। 'शैवलाभा इत्यनेनैवोपमापर्यसानसम्भवे उत्कूलत्वकथनमनुपयुक्तमत उत्कूलितशैवलाभा इवेतिपर्यवसाने उत्प्रेक्षेत्यग्रिमेण सम्बन्धः। तादृशोत्प्रेक्षाया उत्थानमुपपादयति—**जलधितीर** इति। वनान्तर उत्कूलितशैवलानामसम्भवात्तत्र न तत्सम्भावनोत्थानम्, जलधितीरे शैवालस्थितेः सम्भवस्योपपत्तेरनुपपत्त्यभावात् सम्भावनोत्थानमुत्कूलितशैवलसम्भावनाया उत्थानमाविर्भाव इत्यर्थः। ततस्तदाभा इवेत्युत्प्रेक्षेत्याशयेनाह—उत्प्रेक्षेति। तत्सम्भावनोत्थानमाविर्भावे उत्कूलितविशेषणवैयर्थ्यमिति भावः। एवञ्च उत्प्रेक्षाया उपक्रान्तोपक्रमाविषयत्वादुपमानिष्पाद्येयमुत्प्रेक्षेत्याशयः। ननु जलाशयप्रदेशे प्रायः शैवलः सम्भवति न तु समुद्रस्य प्रदेशे, अत्र च दूरवर्त्तिनोऽवलोकनेन समुद्रजलस्य प्राकृतिका नीलिमैव शैवलत्वेनावधार्यते, अतोऽवधारणेयं भ्रान्तिरूपेति चेत्? मैवम्, प्रकृते शैवलस्य जलीयस्त्वेन अन्यजलाशयवत् समुद्रस्यापि जलाशयत्वेनात्र तत्सम्भवो भवेदिति नास्या भ्रान्तिरूपत्वम्, किन्तूक्तेनोत्प्रेक्षाया उपस्कारकत्वमेवेत्याशयात्।

अन्यस्थलेष्वप्येवमेवोह्यमिति दर्शयति—**एवमिति**। विरहवर्णने उपक्रमे इति शेषः। अङ्गदैः कटकैः केयूरायितं भुजगमध्यभागधारणीयकेयूरैः कङ्कणैरिवाचरितम्। विरहकार्श्यादङ्गदैः केयूरस्थानं प्राप्तमित्यर्थः। अस्य पादत्रयन्तु—

'प्रयास्यन्तं प्रियं श्रुत्वा गोविन्दं व्रज योषिताम्। तत्क्षणाज्जातमौनानाम्'—इति

अत्र क्यङ्प्रय्ययस्योपमावाचकतया उपक्रमे प्राप्तोपमायाः प्रतीतावपि पर्यवसाने भुजमध्यभागे अङ्गदानां स्थितेरसम्भावात् सम्भावनाया आविर्भावादुत्प्रेक्षेति भावः। श्रौत्युपमोत्प्रेक्षां प्रदर्श्य आर्थ्युपमोत्प्रेक्षां प्रदर्शयति—**विकासीति**।

'नासाऽग्रमुक्तामधरप्रसारिरोचिर्निनायेव च विद्रुमाणम्।'

इत्युत्तरार्द्धम्।

मृगस्येव आयते दीर्घे लोचने नयने यस्याः तस्याः तथोक्तायाः, कुटिलो वक्रः कटाक्षो दृष्टिपातः, कर्णे, विकासि विकसनशीलं नीलोत्पलं नीलकमलमिव आचरतिस्म। **उपजातिश्छन्दस्तल्लक्षणन्तूक्तम्**।

अत्रापि क्विप् प्रत्ययस्योपमावाचकत्वेन क्विपो लोपादार्थीलुप्तोपमाया उपक्रमे प्रतीतावपि, कर्णे कटाक्षावस्थितेरसम्भवात्तत्वेन सम्भावनाया उत्थानेनोत्प्रेक्षेत्यभिप्रायः ।

अस्याः क्वचिन्मालारूपात्वमपि दृश्यते यथा—

**'द्विनेत्र इव वासवः करयुगो विवस्वानिव द्वितीय इव चन्द्रमाः श्रितवपुर्मनोभूरिव ।**

**नराकृतिरिवाम्बुधिर्गुरुरिव क्षमामागतो नुतो निखिलभूसुरैर्जयति कोऽपि भूमीपतिः ॥'**
**इति ।**

## रुचिरा

**उत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभा** उत्कलिकानामूर्म्मीणां सहस्रं तेन प्रतिक्षणमुत्कूलिता उद्गताः कूलं कूलदेशं प्रापिता इति यावत्, ये शैवलाः शेवालानि तेषामाभेवाभा यासां ताः तथोक्ताः । 'ऊर्म्मिरुत्कलिकोल्लोलकल्लोललहरिस्तथा ।' इति हलायुधः । 'तत्करोति तदाचष्टे ।' इति ण्यन्ताद् उत्कूलशब्दात् कर्म्मणि क्तः । 'जलनीली तु शेवालं शैवालः' इत्यमरः । **वनावलीर्वनापङ्क्तीः** । **अपश्यत्** । शिशुपालवधस्येदं पद्यम् । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ॥ १४९ ॥'

उदाहृतमर्थे सम्भावयति—इत्यत्रोदाहृते पद्ये । **आभाशब्दस्य**'शैवलाभा' इत्यंशभूतस्येति शेषः । **उपमावाचकत्वात्** । **उपक्रमे** आरम्भे । **उपमा** । **पर्य्यवसाने** विचारदशायाम् । तु । **जलधितीरे** । **शैवालस्थितेः** । सम्भावनानुपपत्तेरसम्भव इत्यस्माद्धेतोरित्यर्थः । **सम्भावनोत्थानमुत्प्रेक्षणोद्भावनम्** । **इति** । **उत्प्रेक्षा** । अयम्भावः—साम्यमाश्रित्यानिदम इदमा सम्भावनमुत्प्रेक्षा, यद्यपि जलाशयप्रान्ते शैवलः प्रायः सम्भवति, किन्तु न समुद्रस्य प्रान्ते, अत्र हि दूरस्थितस्य दृष्ट्या समुद्रजलस्य स्वाभाविको नीलिमैव शैवलत्वेन प्रतीयते, अतः प्रतीतिरियं यद्यपि भ्रान्तिरूपा, तथाऽपि प्रकृते शैवलस्य जलीयत्वेन जलाशयान्तरवत्समुद्रस्यापि जलाशयत्वेनात्र तत्सम्भवः स्यादिति नास्या भ्रान्तिरूपत्वम्, किन्तु तथोत्प्रेक्षाया उपस्कारकत्वमेव । इति ।

अन्यत्राप्येवमूह्यमित्याह—**एवम्** । **विरहवर्णने** 'उत्क्रान्त' इति शेषः । **'अङ्गदैः** कङ्कणैः । 'अङ्गदं करभूषायां केयूरे सुहृदि त्रिषु । अङ्गदो वालिपुत्रे ना हस्तिनीदिग्भिदोः स्त्रियाम् ॥' इति गोपालः । **केयूरायितं** केयूरैरिवाचरितम् । 'प्रयास्यन्तं प्रियं श्रुत्वा गोविन्दं व्रजयोषिताम् । तत्क्षणाज्जातमौनाना' मिति पूर्व पादत्रयमिति बोद्धव्यम् । 'कङ्कणैरङ्गदायित'मिति पाठान्तरम् ।' **इत्यत्र** 'आय'प्रत्ययस्योपमावचकत्वेनोपक्रमे उपमायाः प्रतीतावपि भुजमध्ये कङ्कणस्थितेरसम्भवात् सम्भावनोपयोगितायां पर्य्यवसानादुत्प्रेक्षा इति शेषः । **मृगायताक्ष्या** मृगाक्षिणी इवायते अक्षिते अक्षिणी यस्यास्तस्याः । **कुटिलः** । **कटाक्षः** । **कर्णे** । **विकासिनीलोत्पलति** विकसनशीलं नीलकमलमिवाचरति । **स्म** । 'नासाऽग्रमुक्तामधरप्रसारिरोचिर्निनायेव च विद्रुमाभाम् ॥' इत्युत्तरमर्द्धमिति बोध्यम् । उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिश्छन्दः ॥ **इत्यादौ** । **च** । 'क्विप्' प्रत्ययस्योपमावाचकत्वेनोपमाया उपक्रमे प्रतीतावपि कर्णे कटाक्षस्यासम्भवात्तत्वेन सम्भावनादुत्प्रेक्षैवेति । ज्ञेयम् ।

अस्या मालारूपात्वमपि दृश्यते यथा—'द्विनेत्र इव वासवः करयुगो विवस्वानिव द्वितीय इव चन्द्रमाः श्रितवपुर्मनोभूरिव । नराकृतिरिवाम्बुधिर्गुरुरिव क्षमामागतो नुतो निखिलभूसुरैर्जयति कोऽपि भूमीपतिः ॥' इति ।

भ्रान्तिमदलंकारे 'मुग्धा दुग्धधिया—' इत्यादौ भ्रान्तानां बल्लवादीनां विषयस्य चन्द्रिका-देर्ज्ञानमेव नास्ति। तदुपनिबन्धनस्य कविनैव कृतत्वात्। इह तु संभावनाकर्तुर्विषयस्यापि ज्ञानमिति द्वयोर्भेदः।

---

## विवृतिः

इदानीं भ्रान्तिमदादिभ्य उत्प्रेक्षाया भेदमुपपादयति—**भ्रान्तिमदिति**। तदुपनिबन्धनस्य चन्द्रिकादिवर्ण-नस्य। **विषयस्य चेति**। चकाराद्विषयिणश्च संग्रहः।

## विवृतिपूर्तिः

**अतिशयोक्तिरिति**। अतिशयोऽतिशयिता प्रसिद्धिमतिक्रान्ता उक्तिरतिशयोक्तिः। विषयिणा विष-यस्य निगरणमतिशयस्तस्योक्तिरिति **रसगङ्गाधरकाराः**॥

## विज्ञप्रिया

भ्रान्तिमदलङ्कारे निश्चयोऽत्र तु उत्कटकोटिकः संशय इति भेद सम्भवेऽपि भेदकान्तरमाह—**भ्रान्तिम-दलङ्कार** इति। ज्ञानमेव नास्तीत्यर्थः। तत्सत्त्वे दुग्धधिया गवामधः कुम्भदानानुपपत्तेः। ज्ञानमेव नास्ति चन्द्रिका-त्वेन। ननु, "न कस्य कुरुते चित्तभ्रमं चन्द्रिका" इत्युक्तितश्चन्द्रिकात्वेन ज्ञानमस्तीत्यत आह—**तदुपनिबन्धस्येति**। चन्द्रिकायां बल्लवानां भ्रमोपनिबन्धस्येत्यर्थः। तथा च कव्युक्त्या श्रोतृणां बल्लवादीनां न चन्द्रिकात्वेन ज्ञानमि-त्यर्थः। उत्प्रेक्षायामस्यां तद्वैलक्षण्यमाह—**इह त्विति**। सम्भावनाकर्तुः कवेस्तदुपनिबद्धजनस्येवेत्यर्थः। विषय-स्यापि विषयस्यानुत्कटतया तत्कोटेरपि ज्ञानात्।

## लोचन

सम्प्रति प्रत्ययस्योपमावाचकत्वे उदाहरति—**केयूरायितमिति**। प्रत्ययलोपे उदाहरति—**विकासीति**।

विषयस्य वर्ण्यमानस्य। चन्द्रिकादेरित्यादिशब्दाच्चन्द्रिकाशबलितकुवलयादिः तदुपनिबन्धस्य काव्ये शब्देनोपनिबन्धस्य इह—उत्प्रेक्षायां कोटिद्वयस्य विषयविषयिरूपात्मकस्य।

## कुसुमप्रतिमा

ननु "उरुः कुरङ्गकदृशः" इत्यादौ नायिकोरुप्रभृतौ स्मरविजयस्तम्भप्रभृतिभ्रमाद्भ्रान्तिमानलङ्कारः किं न स्यादित्याह भ्रान्तिमदिति। भ्रान्तानां भ्रमविशिष्टानाम्। विषयस्य उपमेयस्य। नास्तीति। शुक्तिकादौ रजतादि-भ्रान्तिमतः शुक्तिकादिज्ञानवदिति भावः। अथ तर्हि कृतोस्माभिश्चन्द्रिकादिर्ज्ञान्त इत्याह तदुपनिबन्धनस्येति। विषयभूतचन्द्रिकादेरुल्लेखस्येत्यर्थः। इह तु उत्प्रेक्षायान्तु। विषयस्यापि न केवलं विषश्रिण उपमानस्य स्मरवि-जयस्तम्भप्रभृतेः, किन्तु ऊरुप्रभृतेरुपमेयस्यापीत्यर्थः। तथा च शुक्तिकामवलोक्य 'रजतमिदम्' इति ज्ञानरूपे भ्रमे केवलं रजतमेवावभासते, न त शुक्तिका; भ्रमस्य निश्चयरूपतया एकमात्रविषयकत्वात्। स्थाणुपुरुषोभयरूपतया सन्दिह्यमानं पदार्थं दूरतो विलोक्य कुतश्चित् कारणात् "मन्ये स्थाणुरेवायम्" इति ज्ञानरूपायां सम्भावनायान्तु

स्थाणुः कथमपि निश्चितरूपत्वेनावभासते पुरुषस्तु अनिश्चिरूपतत्वेन, सम्भावनायाः संशयविशेषरूपतया अनेकविषयकत्वात्। तेन च भ्रमसम्भावनयोभेदेन यत्र वाक्योपात्तस्य प्राणिनो भ्रमस्तत्र भ्रान्तिमान् यत्र तु सम्भावना तत्रोत्प्रेक्षेत्याशयः।

## विमला

विकासीति।—मृगायत्ताक्ष्याः,—हरिणायतलोचनायाः, कुटिलः,—वक्रः, कटाक्षः,—अपाङ्गदृष्टिः, कर्णे विकासि—प्रस्फुटितं, यत् नीलोत्पलम्—इन्दीवरं, तदिवाचरति स्म। अत्र क्विप्प्रत्ययस्य आयलोपस्य च उपमावाचकत्वादुपक्रमे उपमायाः प्रतीतावपि पर्य्यवसाने कर्णे कटाक्षस्यासम्भवात् सम्भावनोत्थानमिति उत्प्रेक्षैवेति बोध्यम्। इदानीं भ्रान्तिमदादिभ्यः उत्प्रेक्षाया भेदमुपपादयति—भ्रान्तिमदिति। तदुपनिबन्धनस्येति—तद्वर्णनस्य, चन्द्रिकादिवर्णनस्येत्यर्थः। विषयस्य—प्रकृतस्य, (अपिशब्दात् विषयिणः ग्रहणम्) समकक्षतया—तुल्यस्वरूपतया। उत्कटा—निश्चितप्राया, सम्भाव्यभूता—अनिर्द्धारितस्वरूपा, कोटिः,—प्रकारः। एककोटिकज्ञानस्यापि यत् संशयत्वमुच्यते, तदनिर्द्धारणत्वरूपसंशयधर्मयोगात् गौणमेव। विषयिणः,—आरोप्यमाणस्य, प्रतीतस्य—ज्ञातस्य, पर्य्यवसाने—अभिनिवेशे, शाब्दबोधानन्तरमित्यर्थः, असत्यता—अवास्तवत्वम्। इह तु—उत्प्रेक्षायामित्यर्थः। प्रतीतिकाले एवेति।—रूपकवदाहार्य्य एवान्यतादात्म्य प्रत्ययः सम्भावनेति भावः।

## लक्ष्मी

ननु 'ऊरुः कुरुङ्गकदृश' इत्यादौ नायिकादौ स्मरविजयस्तम्भादिभ्रमाद्भ्रान्तिमानलङ्कारः कथं न स्वीक्रियत इत्यत आह—**भ्रान्तिमदिति**॥ भ्रान्तानां भ्रमयुतानाम्। विषयस्य उपमेयभूतस्य। चन्द्रिकादेरित्यत्रादिपदेन चन्द्रिकाशवलितकुवलयादेः परिग्रहः। ज्ञानमेव नास्ति चन्द्रिकात्वेनेतिशेषः, शुक्तिकादौ रजतत्वादिभ्रान्तिमतः शुक्तिकादिज्ञानवदित्याशयः, चन्द्रिकात्वेन ज्ञाने तु दुग्धधिया गवामधः कुम्भदानानुपपत्तेः। ननु 'न कस्य कुरुते चित्तभ्रमं चन्द्रिका' इत्युक्तिश्चन्द्रिकात्वेन ज्ञानमस्तीत्यत आह—**तदुपनिबन्धनस्येति**। तस्य चन्द्रिकाद्यज्ञानस्योपनिबन्धनं वर्णनम्। कृतत्वात् दर्शितत्वात्। तथा च कव्युक्त्या श्रोतृणां वल्लवादीनां न चन्द्रिकात्वेन ज्ञानमिति भावः। उत्प्रेक्षायामस्यां यद्वैलक्षण्यन्तदुपपादयति—**इह त्विति**। इह तु उत्प्रेक्षायान्तु। सम्भावनाकर्त्तुरुत्प्रेक्षकस्य कवेस्तदुपनिबद्धजनस्य वा विषयस्यापि उपमेयभूतस्य 'ऊरुः कुरङ्गकदृशः' इत्यादावूर्वादेर्न केवलं विषयिण उपमानभूतस्य स्मरविजयस्तम्भादेरित्यर्थः। द्वयोर्भ्रान्तिमदलङ्कारोत्प्रेक्षालङ्कारयोः। **अत्रायमाशयः**—शुक्तिकां दृष्ट्वा 'रजतमिदम्' इतिज्ञानरूपे भ्रमे शुक्तिका नाऽवभासते किन्तु केवलं रजतमेवाऽवभासते, भ्रमस्य निश्चयरूपतया एकमात्रविषयकत्वात्। 'स्थाणुः पुरुषो वा' इत्यत्र स्थाणुपुरुषोभयरूपतया संशयविषयीभूतं पदार्थं दूरतो दृष्ट्वा कस्मादपि हेतोः 'सम्भावये स्थाणुरेवायम्' इति ज्ञानात्मिकायां सम्भावनायान्तु 'स्थाणुर्हि कथञ्चिदपि निश्चितरूपत्वेनावभासते पुरुषस्तु अनिश्चितरूपत्वेनैव, सम्भावनायाः संशयविशेषरूपत्वेन नानाविषयकत्वात्। इत्थञ्च भ्रमसम्भावनयोर्व्यतिरेकेण यत्र वाक्यगृहीततस्य पुरुषस्य भ्रमस्तत्र भ्रान्तिमानलङ्कारः यत्र तु सम्भावना तत्रोत्प्रेक्षालङ्कार इति।

## रुचिरा

बोधसौकर्य्यायास्या अलङ्कारान्तरतः साम्यभ्रमं निराकर्त्तुमुपक्रमते - भ्रान्तिमदलङ्कारेमुग्धादुग्धधिया' इत्यादौ मुग्धा —गवां विदधते कुम्भानधो बल्लवाः कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि। कर्कन्धूफ-

लमुञ्चिनोति शबरी मुक्ताफलाकाङ्क्षया सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ॥' इत्यत्रेत्यर्थः। **भ्रान्तानाम्**। **बल्लवादीनाम्**। **विषयस्योपमेयभूतस्य**। **चन्द्रिकाऽऽदेः**। **ज्ञानम्**। **न**। **अस्ति**। **तदुपनिबन्धनस्य** तस्य चन्द्रिकाऽऽद्यज्ञानस्योपनिबन्धनं वर्णनम्। **कविना**। एव। **कृतत्वात्** दर्शितत्वात्। **इहास्यामुत्प्रेक्षायाम्**। **तु**। **सम्भावनाकर्तुरुत्प्रेक्षकस्य** कवेरन्यस्य वेति भावः। **विषयस्योपमेयभूतस्य** 'ऊरुः कुरुङ्गकदृश' इत्यादावूर्वादेरिति भावः। **ज्ञानम्**। **अपि** एव (निपातानामनेकार्थत्वम्)। इति। **द्वयोर्भ्रान्तिमदुत्प्रेक्षयोः**। **भेदः**। **सन्देहे**। 'किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी'इत्यादाविति शेषः। **कोटिद्वयस्योपमेयोपमानयोः**। समकक्षतया समानावस्थाकत्वेन। अभेदे तृतीया। **प्रतीतिः**। **इहास्यामुत्प्रेक्षायाम्**। **तु**। **उत्कटा** निश्चितप्राया। सम्भाव्यभूतोत्प्रेक्षणीया अनिर्धारितस्वरूपेति यावत्। **एकोपमानरूपा**। **कोटिः** प्रकारः। 'कोटिः स्त्री धनुषोऽग्रेऽश्रौ सङ्ख्याभेदप्रकर्षयोः।' इति मेदिनी। 'अतोऽनयोर्भेद'इति। शेषः। **अतिशयोक्तौ** 'कथमुपरि कलापिनः कलाप' इत्यादौ। **प्रतीतस्य** ज्ञातस्य। **विषयिण** उपमानस्य। **पर्य्यवसाने** विचारान्तिमदशायाम्। **असत्यता प्रतीयते**। **इहोत्प्रेक्षायाम्**। **तु**। **प्रतीतिकाले**। **एव**। असत्यता प्रतिष्ठितेति शेषः। **इति**। **भेदः**। अयम्भावः—आहार्य्योऽन्यतादात्म्यप्रत्ययः सम्भावना, एषैवोत्प्रेक्षाया मूलम्। अनाहार्य्योऽन्यतादात्म्यप्रत्ययोऽध्यवसानम्, एतदेवातिशयोक्तेर्बीजम्। अतः—पूर्वत्र न निश्चितोऽन्यतादात्म्यप्रत्ययः। अतिशयोक्तौ तु निश्चित इत्यनयोर्भेदकम्। इति।

संदेहे तु समकक्षतया कोटिद्वयस्य प्रतीतिः। इह तूत्कटा संभाव्यभूतैका कोटिः। अतिशयोक्तौ विषयिणः प्रतीतस्य पर्यवसानेऽसत्यता प्रतीयते। इह तु प्रतीतिकाल एवेति भेदः।

**रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु।**
**पूरिता नु विषमेषु धरित्री संहता नु ककुभस्तिमिरेण ॥'**

---

## विवृतिः

**समकक्षतया** तुल्यस्वरूपतया। उत्कटा निश्चितप्राया। **संभाव्यभूता** अनिर्धारितस्वरूपा। **कोटिः** प्रकारः। एककोटिकज्ञानस्यापि यत्संशयत्वरूपसंशयधर्मयोगाद् गौणत्वमेव। **पर्यवसाने** शाब्दबोधानन्तरम्। **प्रतीतिकाल एवेति**। रूपकवदाहार्य एवान्यतादात्म्यप्रत्ययः संभावनेति भावः ॥ **रञ्जिता** नीलद्रव्येण लिप्ताः। **नामितं** प्रह्वीकृतम्। **स्थगितं** संवृतम्। **विषमेषु** निम्नभागेषु। **सहता** अपनीताः ॥ **प्रतिसंबन्धिभेद इति**। तथा चैकविषयानेककोटिज्ञानत्वाभावादस्य संशयत्वमनुपपन्नमिति भावः।

नन्विदं तमसा तरुशैलादिव्यापनं न तु रञ्जनमित्याद्याकारा नानासंदेहा एवेत्यत आह—**व्यापनादेरिति**। निगरणेन अधः करणेन। **एककोट्याधिकेऽपीति**। भावप्रधानो निर्देशः। एककोटेरुत्कटत्वेऽपीति तदर्थः। **निगीर्णेति**। निगीर्णत्वमधःकृतत्वं तच्च विच्छित्तिविशेषं प्रत्यकिंचित्करत्वमेव न तु शब्दानुपात्तत्वमात्रम्। तथा सति 'ऊरुः कुरङ्गकदृशः—' इत्यादौ विषयोपादानादव्याप्तिः स्यात्। **अन्यतादात्म्यप्रतीतिरु**पमानतादात्म्यारोपः। प्रतीतिरत्र निर्धारणरूपा प्रत्येतव्या। तेनातिशयोक्तिव्युदासः ॥

## विवृतिपूर्तिः

**भेद इति**। भेदेऽभेदः, अभेदे भेदः, संबन्धेऽसंबन्धः, असंबन्धे संबन्धः, कार्यकारणपौर्वापर्यव्यत्यास इति पञ्चविधातिशयोक्तिः। **कुवलयानन्दे** त्वेवं लक्षणविभागोदाहरणानि—(१) "रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः। पश्य, नीलोत्पलद्वन्द्वान्निः सरन्ति शिताः शराः ॥" (२) "यद्यपह्नुतिगर्भत्वं सैव सापह्नवा मता। त्वत्सूक्तिषु सुधा राजन्भ्रान्ताः पश्यन्ति तां विधौ ॥" (३) "**भेदकातिशयोक्तिस्तु** तस्यैवान्यत्ववर्णनम्। अन्यदेवास्य गाम्भीर्यमन्यद् धैर्यं महीपतेः ॥" (४) "**संबन्धातिशयोक्तिः** स्यादयोगे योगकल्पनम्। सौधाग्राणि पुरस्यास्य स्पृशन्ति रविमण्डलम् ॥" (५) "योगेऽप्ययोगो**ऽसंबन्धातिशयोक्ति**रितीर्यते। त्वयि दातरि राजेन्द्र ! स्वर्द्रुमान्नाद्रियामहे।" (६) "**अक्रमातिशयोक्तिः** स्यात्सहत्वे हेतुकार्ययोः। आलिङ्गन्ति समं देव ! ज्यां शराश्च पराश्च ते ॥" (७) "**चपलातिशयोक्तिस्तु** कार्ये हेतुप्रसक्तिजे। यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका ॥" (८) "**अत्यन्तातिशयोक्तिस्तु** पौर्वापर्यव्यतिक्रमे। अग्रे मानो गतः पश्चादनुनीता प्रियेण सा ॥" अत्रोपमानवाचकाभ्यां नीलोत्पलशरपदाभ्यामुपमेययोरक्ष्णोस्तथा कटाक्षाणां च निरूपणं निगरणम्। निगरणपुरस्सरमुपमेयस्योपमानत्वेन अध्यवसानमाहार्यज्ञानम्। ततो रूपकातिशयोक्तिः।

## विज्ञप्रिया

तर्हि सन्देहालङ्काराभेद इत्यत आह—**सन्देह** इति। एककोटेरुत्कटत्वतुल्यत्वाभ्यां भेद इत्यर्थः। अतिशयोक्तितो भेदमाह—**अतिशयोक्ताविति**। विषयिण आरोप्यमाणस्य पर्यवसानें उत्तरकाले, 'कथमुपरि कलापिनः कलाप' इत्यत्र कलापभ्रमानन्तरमेव केशत्वविशेषदर्शनात् कलापेऽसत्यता प्रतिपाद्यत इत्यर्थः। **इह त्विति**—सप्रसवा इवेत्याद्युत्प्रेक्षाकाल इत्यर्थः। एतच्चानुभववैलक्षण्यमभिप्रेत्यापातत एवोक्तम्। वस्तुतस्तु योनिबहिर्भावरूपप्रसवबाधस्येव नायिकाशिरसि कलापबाधस्यापि सत्त्वे एवाहार्यतदुभयबुद्धिसत्त्वेनोभयत्र साम्यमेव। किन्तूत्प्रेक्षा उत्कटकोटिकसन्देहरूपा, अतिशयोक्तिस्तु निश्चयरूपेति भेदः। "कथमुपरि" इत्यत्र हि कलापस्याहार्यनिश्चय एव कथंपदबोध्यः सन्देहः।

## लोचन

उत्कटा—विषयनिगरणेन प्रतीयमानत्वात्। एककोटिविषयरूपा।

रञ्जनादीत्यादिशब्देन नमनादिः। एको विषयः, "स्थाणुर्वा पुरुषो वेत्यादौ स्थाणवादिः। अयं मार्तण्डः किमित्यादौ राजादिः। समानबलतया-चैककोटितया, इह—प्रकृतोदाहरणे, तुः—पुनरर्थः। तर्वादिव्याप्तेः—तरुगगनादौ तमसो व्यापनस्य सम्बन्धिनस्तरुगगनादयः, तद्भेदाद् व्यापनस्यापि भेदः। ततश्च विषयभेदात्कथमुक्तरूपः संशय इत्यर्थः। नच समानबलतयोनेककोटिस्फुरणमपीत्याह**व्यापनदेरिति**। अन्ये—एकदेशिनः। अनिर्धारणम्—संशयबीजैकदेशः कथमयुक्तमित्याह—**निगीर्णेति**। अन्यद् विषयात्। तस्याः सम्भावनायाः। अदृष्टन्यायविद्भिरित्यर्थः। सन्देहप्रकारोऽनेकविषयनिष्ठ एककोट्यधिकस्फुरणाकारश्च।

## कुसुमप्रतिमा

ननु सम्भावनायाः संशयरूपत्वे "उरुः कुरङ्गकदृशः" इत्यादौ सन्देहालङ्कार एवास्तामित्याह सन्देहे त्विति। समकक्षतया समानभावेन, कोटिद्वयस्य विषयद्वयस्य। इह तु उत्प्रेक्षायान्तु, उत्कटा कथञ्चिन्निश्चितरूपा। एतदेव परिष्कर्त्तुमाह सम्भाव्यभूतेति। सम्भवपरत्वेन ज्ञायमानेत्यर्थः। एका कोटिरेको विषयः। अतः सन्देहोत्प्रेक्षयोर्भेदात् "उरुः कुरङ्गदृशः" इत्यादौ स्मरविजयस्तम्भादिरूपे एकस्मिन्नेव विषये उत्कटप्रतीतेश्च उत्प्रेक्षैवेति भावः।

अथ तर्हि अध्यवसायस्यापि सम्भावनारूपतया ऊरुरित्यादावतिशयोक्तिक्तिरस्त्वित्याह अतिशयोक्ताविति। विषयिण उपमानस्य, प्रतीयस्य अन्वयबोधकाले सत्यतया ज्ञातस्य सतः पर्य्यवसाने सम्पूर्णान्वयबोधादनन्तरमित्यर्थः, असत्यता प्रतीयते; साक्षादसत्यताप्रतिपादकानामिवादिशब्दानामन्वयानुपपत्तेश्चाभावात् परन्तु पर्य्यालोचनया असम्भवबोधादिति भावः। इह तु उत्प्रेक्षायान्तु, प्रतीतकाल एव विषयिणः असत्यता प्रतीयत इति पूर्वेणान्वयः; वाच्यात्पेक्षायां साक्षादसत्यताप्रतिपादकानामिवादिशब्दानां प्रतीयमानोत्प्रेक्षायान्तु अन्वयानुपपत्तेः सत्त्वादित्याशयः। अतश्च भेदात् "ऊरुः कुरङ्गकदृशः" इत्यादौ शाब्दबोधसमानकाल एव स्मरविजयस्तम्भादेवसत्यताप्रतीतेरूत्प्रेक्षैवेति बोध्यम्।

अलङ्कारसर्वस्वकारमतं निरसितुमुदाहरति रञ्जितेति। किरातार्ज्जुनीयनवमसर्गस्थमिदं पद्यम्। तिमिरेण अन्धकारेण, विविधास्तरुशैला उच्चनीचादिनानाप्रकारा वृक्षपर्वताः, रञ्जिता नु लिप्ताः किम्? गगनमाकाशं नामितं

नु भूतलपर्य्यन्तं पातितं किम्? अथवा स्थगित नु संवृतं किम्? । धरित्री भूमण्डलं विषमेषु उच्चनीचदेशेषु पूरिता नु पूरणेन समीकृता किम्? । ककुभो दिशश्च संहृता नु सङ्कोचिताः किम्? ।

इत्यत्रेति । यत् आहुरिति परेणान्वयः रञ्जनादिरूनेणेति । "अयं मार्त्तण्डः" किम्?" इत्यादौ राजा मार्त्तण्डादिरूपेणेवेति भावः । कैचिदलङ्कारसर्वस्वकारादयः । एकस्मिन् विषये स्थले । अनेककोटिस्फुरणस्येव अनेकपक्षकज्ञानस्यैव । तर्वादिव्याप्तेस्तिमिरकर्त्तृकतरुप्रभृतिव्यापनस्य, प्रतिसम्बन्धिषु तरु-शैलप्रभृतिप्रत्येकसम्बन्धिपदार्थेषु भेदो रञ्जनाद्येकैकरूपेणैव भिन्नत्वम्, न पुनर्ज्ञानस्य कुत्राप्यनेककोटिकत्वमित्यती नायं सन्देह एवेति भावः । ननु "व्याप्ता नु रञ्जिता नु" "व्याप्तं नु नामितं तु" इत्याद्यनेककोटिकज्ञानरूपा बहव एवामी सन्देहा इति मालोपमादिवत् मालासन्देहालङ्कार एवास्ता मित्याह व्यापनादेरिति । निगरणेन अनुक्तिवशादपलापेत् । स्फुरणं प्रकाशो ज्ञानमिति यावत् । मुख्यसन्देहे एकस्याः कोटेर्निगरणम् अपरस्याश्च स्फुरणमित्येव वैषम्येव न भवति, तत्र हि कोटिद्वियस्य ममानभावेनैव प्रतीतिनियमात् । अतश्चात्र न सन्देहः, किन्तु सम्भावनैवेत्याशयः ।

अन्येत्विति । अनेकत्वेन रञ्जन नामनादिबहुतरप्रकारेण निर्द्धारणरूपा ज्ञानरूपा या विच्छित्तिश्चमत्कारिता तस्या आश्रयत्वेन हेतुना । अयन्तु अलङ्कारावश्यकतां प्रति हेतुरिति बोध्यम् । एकस्यां कोटौ रञ्जनादिपक्षे अधिकोऽपि प्रबलोऽपि, भिन्नः साधारणसन्देहाद्विजातीयः । अत्रायं सरलार्थः—समानभावेन द्विकोटिकं ज्ञानमेव संशय इति वयमप्यङ्गीकुर्म्म एव, "रञ्जिता नु" इत्यादौ तु ज्ञानस्य व्यापनादिपक्षे दुर्बलत्वात् रञ्जनादिपक्षे च प्रबलत्वात् तादृशसंशयरूपः सन्देहालङ्कारां न भवत्येव इत्यपि स्वीकुर्म्म एव, किन्तु तथापि नानाप्रकारं विकल्प्यापि अनिश्चित्वेन चमत्कारिताविशेषावगमात् कस्यचिदलङ्कारस्यावश्यकत्वात् अन्यस्य चासम्भवात् एकस्यां कोटौ प्रबलीभूतसंशयरूपः कश्चिजातीय एवात्र सन्देहालङ्कार इति ब्रूम इति ।

एतन्मतमपि दूषयति तदपीति । निगीर्णस्वरूपस्य येन केनापि प्रकारेण तिरस्कृतस्य अप्रधानीकृतस्य उपमेयस्येत्यर्थः, अन्यताद्वात्म्यप्रतीतिरुपमानेन सहाभेदज्ञानम् । अयन्तु उत्प्रेक्षाघटिकाया एव सम्भावनायाः परिचयः, सामान्यसम्भावनाया लक्षणन्तु प्रागेवाभिहितमिति द्रष्टव्यम् । स्फुटतया सद्भावात् स्पष्टरूपेण विद्यमानत्वात् । तथा च "रञ्जिता नु" इत्यादौ उपमेयभूतं तिमिरकर्तृकव्यापनम् उपादानाभावान्निगीर्णस्वरूपम्, उपमानभूतं रञ्जनादिकन्तु शब्देनोपानात् प्रधानम्, तयोश्चाभेदप्रतीतिरूपा सम्भावना स्पष्टमेवानुभवगम्येति भावः । द्योतनादिति । एतेनातिशयोक्तिनिरासः सूचितः । न दृष्टः कुत्रापि नावलोकितो यः सन्देहप्रकार एककोटिप्रबलरूपो विजातीयः सन्देहस्तस्य कल्पनया अलम् । क्लृप्तेनैवोपपत्तौ नूतनकल्पनाया अनावश्यकत्वाद्गौरवाच्चेति भावः ।

सरस्वतीकण्ठाभरणकारमतं दूषयितुं तद्धृतमेवोदाहरति यदेतदिति । चन्द्रस्य अन्तर्मध्ये यदेतदृश्यमानं मलिनं वस्तु, जलदलवलीलां क्षुद्रमेघखण्डविभ्रमम्, वितनुते प्रसारयति; लोको जनः तद्वस्तु शशक इति आचष्टे ब्रवीति; मां प्रति तु तथा आख्यानं नो मम तु तथा न प्रतीतिरित्यर्थः । अहन्तु इन्दुं चन्द्रम्, तव अरीणां वैरिणां विरहेण वियोगवेदनया आक्रान्तका अभिभूता यास्तरुण्यस्तासां कटाक्षा एव उल्का रेखाकारास्तेजः पदार्थविशेषास्तासां पातेनः पतनेन यो व्रणः क्षतं तस्य यः किणश्चिन्हं स एव च कलङ्कां लाञ्छनं तेन अङ्किता तनुर्देहो यस्य तं तादृशं मन्ये मनसि करोमि । इति राज्ञः स्तुतिः ।

"अयं मताभिधाने उत्प्रेक्षाया एव प्रकारः" इति सरस्वतीकण्ठाभरणम् ।

इत्यत्रेति । उक्तरूपाया "निगीर्णस्वरूपस्य अन्यतादात्म्यप्रतीतिर्हि सम्भावना" इति प्रागुक्तायाः । अप्रतीतेरिति । उदाहृते शशक तादृशकिरणकलङ्कयोरुपमेयोपमानभावाभावात् निगीर्णस्वरूपस्योपमेयस्य उपमा-

नेन सह तादात्म्यप्रतीतेरेव सम्भावनापदार्थत्वादिति भावः। वितर्क मात्रं केवलो वितर्काख्यव्यभिचारौ भावः। नासावपह्नवोत्प्रेक्षेति। तथा च शशक-तादृशकिरणकलङ्कयोरुपमेयोपमानानभावाभावात् शशकप्रतिषेधेन तादृश-कलङ्कस्थापनेऽपि नापह्नुते प्रसङ्गः सम्भावनाया अभावाच्च नोत्प्रेक्षाया इत्याशयः। किन्तु वितर्काख्यव्यभिचारिभावो राजविषयरतिभावस्याङ्गमिति रसवदलङ्कारः।

अथोत्प्रेक्षाभेदसङ्कलनम्।

प्रथमं वाच्या प्रतीयमाना चेति द्वौ भेदौ। तत्र—

भावाभिमाने एकः, अभावाभिमाने चैक इति द्वौ; तयोश्च प्रत्येकमेव गुणनिमित्तकत्वात् क्रियानिमित्तक-त्वाच्च द्वैविध्येन चत्वारः। ४

निरुक्तसम्भावनारूपामुत्प्रेक्षां निरूप्येदानीं किञ्चिद्विभिन्नतत्सम्भावनारूपामेवातिशयोक्तं निरूपयति सिद्धत्व इति। अध्यवसायस्य यथार्थे वस्तुनि अयथार्थवस्तुरूपेण निरूक्तसम्भावनाया एव सिद्धत्वे निश्चयरू-पतया निष्पन्नत्वे कविप्रोढौक्तिवशात् संशयभागे विलीन इव केवलनिश्चयरूपतया परिणतत्वे सतीत्यर्थः, अतिशयोक्तिर्नाम अलङ्कारो निगद्यते। अतएव च अतिशयेन सम्भवातिरेकेण योग्यतातिक्रमेण वा उक्तिरतिश-योक्तिरिति व्युत्पत्तिः। तथा चोक्तं काव्यादर्शे—

"विवक्षा या विशेषस्य लोकसीमातिवर्त्तिनी। असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा॥"

अग्निपुराणे च—"लोकसीमातिवृत्तस्य वस्तुधर्म्मस्य कीर्त्तनम्।

भवेदतिशयो नाम सम्भवोऽसम्भवो द्विधा॥"

एतेन यथार्थस्य अयथार्थरूपेण निश्चयरूपा सम्भावना अतिशयोक्तिरिति लक्षणं फलितम्।

यथार्थस्य निगीर्णस्वरूपस्य। सम्भावनाया निश्चयरूपत्वञ्च प्रतीतिकाल एवेति शाब्दबोधादनन्तरं, मिथ्यात्वप्रतीतावपि न दोषः। सा चात्र सम्भावना साध्यवसानाख्यलक्षणयैव सम्पद्यत इति चावधेयम्। तेन सारोपाख्यलक्षणामूलके रूपके नातिव्याप्तिः। उत्प्रेक्षायां वाच्यायामिवादिशब्दसद्भावात् प्रतीयमानायाञ्च अन्व-यानुपपत्तेः सम्भावना संशयरूपा, इह तु इवादिशब्दाभावादन्वयोपपत्तेश्च सम्भावना निश्चयरूपेत्युत्प्रेक्षायां नाति-प्रसङ्गः। निश्चयान्तसन्देहे प्रथमं संशयसद्भावः, इह तु कविप्रौढोक्तिवशेन सर्वदैव संशयाभाव इति तादृशसन्देहालङ्कारेऽपि नातिव्याप्तिः। "मुग्धा दुग्धाधिया" इत्यादौ भ्रमस्य एककोटिकतया भ्रान्तानां वल्लवादीनां चन्द्रिकादेयथार्थ पदार्थस्य ज्ञानं नास्त्य व, इह तु सम्भावनाया द्विकोटितया सम्भावनाकर्त्तुर्यथार्था यथार्थयोरुभयोरेव पदार्थयोर्ज्ञानमस्तीति भ्रान्तिमदलङ्कारेऽपि नातिप्रसङ्ग इत्यवधेयम्।

अध्यवसायं निरूपयति विषयेति। यस्मिन्नध्यवसीयते स विषयी यथार्थं वस्त्वित्यर्थः, तस्य निगरणेन अधः करणेन यथा कथञ्चिदप्रधानीकरणेनेति यावत्, यः खल्वध्यवसीयते स विषयी अयथार्थं वस्त्वित्यर्थः, तस्य अभेदप्रतिपत्तिरभेदसम्भावना अध्यवसायः, निगीर्णरूपेण यथार्थस्तुना सह अयथार्थस्य वस्तुनः अभेदज्ञानमध्यव-साय इत्यर्थः।

सिद्धत्वे इत्यस्य व्यावृत्तिप्रदर्शनमुखेन उत्प्रेक्षातः अस्या भेदान्तरं प्रदर्शयति अस्येति। अध्यवसायस्य चेत्यर्थः। विषयिणः अयथार्थवस्तुनः अनिश्चिततत्वेन, संशयविशेषरूपसम्भावनाप्रतिपादकानां मिवादिशब्दानां सत्त्वात् संशयिततत्वेन निर्द्देशात् व्यवस्थापनात्, साध्यत्वं युक्त्यादिना निष्पाद्यत्वम्; इह तु अतिशयोक्तौ तु,

निश्चितत्वेनैव प्रतीतिर्विषयिण इति सम्बन्धः, इति हेतोः, सिद्धत्वं स्वयमेव निष्पन्नत्वम्। यथा च लोके दूरतः पुरुषवद्दृश्यमाने वस्तुनिः "अयं पुरुषो न वा" इति सन्देहे क्रमिक करचरणादिदर्शनेन "अयं पुरुष एव" इत्यभेदप्रतिपत्तिः प्रागसिद्धा साध्यते, लिन्तु शुक्तिकामवलोक्य "इदं रजतम्" इति निश्चये तु अभेदप्रतिपत्तिः सिद्धैवेति न तस्याः साधनापेक्षा, तद्वदिहापीति भावः। एतेन अभेदप्रतिपत्तेः साध्यत्वसिद्धत्वाभ्यामुत्प्रेक्षातिशयोक्त्योरुक्तातिरिक्तः कश्चिद्भेदोऽपि दर्शितः।

ननु उत्प्रेक्षायां विषयनिगरणाभावादेव विषयनिगरणघटितस्य अस्य लक्षणस्यातिव्याप्तिर्न भविष्यति किं पुनः सिद्धत्व इति विशेषणेनेत्याह विषयेति। विषयस्य यथार्थ पदार्थस्य, अधःकरणामात्रण केवलेनाप्रधानाकरणेन। इयमभेदे तृतीया। तथा च विषयस्याधः करणरूपं विषयनिगरणम् उत्प्रेक्षत्यां "मुखं द्वितीयश्चन्द्र" इत्यादौ इह अतिशयोक्तावपि य विद्यत एवेत्यर्थ। एवञ्च समानविषयतया उत प्रेक्षायामतिव्याप्तिसम्भवात् तद्वारणाय सिद्धत्व इति विशेषण देयमेवेति भावः। अत्रेयमवधेयम्—यथा घटे पल्लवारोपेणे घटस्याधःकरणं सम्पद्यते, तथा यथार्थे वस्तुनि अयथार्थ वस्तुनः सम्भावनायाम् अध्यवसाये च सति यथार्थवस्तुनः अध करणमुपजायते; तच्च "ऊरुः कुरङ्गकदृशः" इत्यादौ नायिकाया ऊरुरूपे यथार्थे वस्तुनि "सम्भावयामि यदयं स्मरस्य विजयस्तम्भः" इत्येव रूपम्, "मुखं द्वितीयश्चन्द्रः" इत्यादौ च नायिकाया मुखरूपे यथार्थे वस्तुनि "मन्ये यदयं द्वितीयश्चन्द्र एव" इत्येव रूपञ्च।

विषयस्याधःकरणमेव विषयनिगरणमित्यर्थेः प्राचीनसंवादं दर्शयितुमाह यदाहुरिति।

विषयस्येति। सूरयः पण्डिताः, विषयस्य यथार्थपदार्थस्य अनुपादाने अनुल्लेखेऽपि उपादाने उल्लेखेऽपि वा सति, अध करणमात्रेण केवलेन विषयस्य अप्रधानीकरणेनैव, इयमपि पुर्व पदभेद एव तृतीया, निगीर्णत्वं विषयस्य निगरणं प्रचक्षते ब्रुवन्ति।

## विमला

रञ्जितेति।—अन्धकारवर्णनमिदम्। तिमिरेण—अन्धकारेण, विविधाः,—नानाप्रकाराः, तरुशैलाः,—वृक्षपर्वतादयः, रञ्जिताः नु?—नीलद्रव्येण लिप्ताः किम्? अलङ्कृताः किम्? इत्यर्थः, गगनम्—आकाशं, नामितं नु?—ऊर्द्धदेशात् अधःपातितं किम्? वा स्थगितं नु?—आच्छादितं किम्? धरित्री—पृथ्वी, विषमेषु—उन्नतानतेषु स्थानेषु पूरिता नु?—पूर्णतां नीता किम्? ककुभः,—दिशः, संहता नु?—एकत्र समावेशिताः, अपनीताः वा किम्? किरातार्जुनीयस्येदं पद्यम्।

केचिदिति।—अलङ्कारसर्वस्वकारादय इत्यर्थः. एकविषये इति—एकस्मिन् वस्तुनि इत्यर्थः, समानबलतया—तुल्यकक्षतया, अनेककोटिस्फुरणस्य—बहुकोटिकप्रतीतेः एव, यथा—"स्थाणुर्वा पुरुषो वा" इति। इह—अस्मिन् उदाहरणे, तर्वादिव्याप्तेः,—तरुशैलगगनपृथ्वीदिशां व्याप्तेः, प्रतिसम्बन्धिभेदः,—नानासम्बन्धिवशात् भिन्नत्वमित्यर्थः, तथा चैकविषयानेककोटिज्ञानत्वाभावादस्य संशयत्वमनुपपन्नमिति भावः। ननु इदं तमसा तरुशैलादिव्यापनं, न तु रञ्जनम् इत्याद्याकारनानासन्देहात्मकः प्रतिसम्बन्धिभेदस्तावत् आस्तां, तत्र सन्देहस्य का क्षतिः? इत्याशङ्क्य दोषान्तरमाह, व्यापनादेरिति।—निगरणेन—अध करणेन; तथा च—यदि व्यापनं वा रञ्जनं वा इत्येवं समबलत्वं स्यात्, तदैव सन्देहप्रसरः, अत्र तु व्यापनमधःकृत्य रञ्जनस्यैव स्फुरणात् न सन्देहालङ्कार इति भावः।

अन्ये त्विति ।—एककोट्यधिकोऽपि—अधिकबलैककोटिरपीत्यर्थः, अत्र नु व्यापनरूपा कोटिः हीन-बला, रञ्जनरूपा कोटिरधिकबलेति द्रष्टव्यम् "[एककोट्यधिकेऽपि" इति पाठे भावप्रधानो निर्देशः एककोटेरुत्क-टेत्वेऽपीति तदर्थः] । निगीर्णस्वरूपस्य—अधः कृतस्वरूपस्य विषयस्य, तस्य विच्छित्तिविशेषं प्रत्यकिञ्चित्करत्वमेव, न तु शब्दानुपात्तत्वमात्रं, तथा सति "ऊरुः कुरङ्गकदृशः" इत्यादौ विषयोपादानादव्याप्तिः स्यात्; अन्येन—अपकृतेन, यत् तादात्म्यम्—अभेदः, तस्य प्रतीतिः—अवबोधः, उपमानतादात्म्यारोप इत्यर्थः, प्रतीतिरत्र निर्द्धारणरूपा प्रत्येतव्या, तेनातिशयोक्तिव्युदासः । तस्याः—सम्भावनायाः, स्फुटतया—स्पष्टतया । द्योतनात्—प्रकाशनात् । अदृष्टेति ।—अदृष्टस्य—क्वचिदपि ग्रन्थे अनालोकितस्य, सन्देहप्रकारस्य कल्पनया—रचनया ।

## लक्ष्मी

ननु यदि सम्भावनायाः संशयविशेषरूपत्वं तर्हि 'ऊरुः कुरङ्गकदृशः' इत्यादौ सन्देहालङ्कार एव स्वीक्रि-यतामित्यत आह—**सन्देहे त्विति** ।

'किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा बल्लरी' इत्यादौ त्वित्यर्थः ।

समकक्षतया समानावस्थाकत्वेन, अभेदे तृतीया, कोटिद्वयस्य विषयद्वयस्य उपमानोपमेययोरित्यर्थः । इह तु अत्रोत्प्रेक्षायान्तु, उत्कटा किञ्चिन्निश्चितप्राया, सम्भाव्यभूता उत्प्रेक्षणीया अनिर्धारितस्वरूपेति यावत्, एका कोटिः एको विषयः, इति द्वयोर्भेद इति शेषः । तथाचोक्तदिशा सन्देहोत्प्रेक्षयोर्व्यतिरिकात् 'ऊरुः' इत्यादौ स्मरविजयस्त-म्भादिरूपे एकविषय एव उत्कटावगमाच्च उत्प्रेक्षैवेत्यशयः ।

अथैवमपि अध्यवसायस्य सम्भावनारूपत्वेनोक्तोदाहरणादावतिशयोक्तिरेवास्तामित्यत आह—**अति-शयोक्ता**विति । 'कथमुपरि कलापिनः कलापाः' इत्यादावित्यर्थः । विषयिण उपमानस्य, प्रतीतस्य अन्वयज्ञानसमये यथार्थतया ज्ञातस्य सतः, पर्यवसाने शाब्दबोधादनन्तरम् असत्यता अयथार्थता प्रतीयते साक्षादयथार्थत्वबोधका-नामिवादिपदानामन्वयानुपपत्तेरसत्त्वात्, किन्तु पर्यालोचनेन असम्भवज्ञानादित्याशयः । इह तु अत्रोत्प्रेक्षायान्तु तत्प्रतीतिकाल एव अन्वयज्ञानसमय एव 'विषयिणः असत्यता प्रतीयत इति पूर्वेण सम्बन्धः, वाच्योत्प्रेक्षायां साक्षादयथार्थत्वबोधकानामिवादिपदानां प्रतीयमानोत्प्रेक्षायान्तु अन्वयानुपपत्त्यानुपलम्भादितिभावः । इत्थञ्चान्व-यव्यतिरेकात् 'ऊरु' रित्यादौ शाब्दबोधसमकाल एव स्मरविजयस्तम्भादेरयथार्थत्वावगमादुत्प्रेक्षैवेत्यवधेयम् ।

उत्प्रेक्षालङ्कारस्यैव विषये क्वचिदुदाहरणे सन्देहालङ्कारम् अलङ्कारसर्वस्वकारादयः प्राहुः तद्रदूषयितुमु-दाहरति—रञ्जेतेति । किरातार्जुनीये नवमसर्गे गाढतमो वर्णनमिदम् । तिमिरेण अन्धकारेण, विविधा अनेकप्रकाराः तरुशैलास्तरवः शैला इवेति, तरव एव शैला इति वा तरुभिरुपलक्षिताः शैला इति वा, उच्चनीचाद्यनेकप्रकारा वृक्षपर्वता इत्यर्थः रञ्जिता नु कृष्णवर्णीकृताः किम् ? गगनमाकाशं नामितं नु अधः पातितं किम् ? अथवा स्थगितं नु आच्छादितं किम् ? धरित्री पृत्वी विषमेषु उच्चनीचप्रदेशेषु पूरिता नु पूरणेन समीकृता किम् ? कुभो दिशश्च 'दिशस्तु ककुभः काष्ठाः' इत्यमरः, संहता नु एकत्र सङ्कुचिताः किम् ? । **स्वाकता** छन्दस्तल्लक्षणन्तु—'स्वागता नौ भूभौग्' इति ।

अत्र परमतेन सन्देहालङ्कारं दर्शयति—**इत्यत्रेति । यत्** आहुरित्युत्तरेण सम्बन्धः । तिमिराक्रान्तता अन्ध-काराच्छादितता, रञ्जनादिरूपेण 'अयं मार्त्तण्डः किम्' इत्यादौ राजा मार्त्तण्डादिरूपेणेत्यर्थः । केचित् अलङ्कारसर्व-

स्वकारादयः । दूषयति—**तनेति** । तत्र युक्तिं दर्शयति—**एकविषय** इति । एकस्मिन् विषये उपमेये समानबलतया उपमानतुल्यकक्षतया, अनेककोटिकस्फुरणस्यैव अनेकपक्षकावगाहिज्ञानस्यैव सन्देहत्वात् सन्देहपदार्थत्वात् । इह उत्प्रेक्षायामित्यर्थः तर्वादिव्याप्तेः तरुशैलादौ तिमिरकर्तृकव्यापनस्य प्रतिसम्बन्धिषु तरुशैलगगनदिक्प्रत्येकसम्बन्धिपदार्थेषु भेदो रञ्जनाद्येकैकरूपेणैवं भिन्नत्वम्, न तु ज्ञानस्य क्वाप्यनेककोटिल्यम् । तथा स—एकविषयकानेककोटिकावगाहिज्ञानत्वाभावात् नायं सन्देह एवेति भावः। नन्विदं तमसा तरुशैलादिव्यापनं न तु रञ्जनमित्याद्यनेककोटिकज्ञानरूपा अनेक एवामी सन्देहा इति सन्देहालङ्कार एवेत्यत आह—**व्यापनादेरिति** । विषयस्य, अत्रादिपदमुदाहरणान्तरविवक्षया । निगरणेन अधःकरणेन अनुक्तिवशादपलापेनेत्यर्थः । **रञ्जनादेरिति** । अत्रादिपदेन नामनादेः परिग्रहः । स्फुरणं प्रकाशो ज्ञानमितियावत् । सन्देहे विषयविषय्युभयकोटिकतुल्यभावेनैव प्रतीतिरिति नियमात् एकस्य विषयस्य निगरणम्, अपरस्य विषयिणः स्फुरणमित्येवं वैषम्यमेव न भवति, अत्र तु तथेति न सन्देहः किन्तु सम्भावनैवेतिभावः ।

अत्र मतान्तरं दूषयितुं तन्मतं दर्शयति—**अन्ये त्विति** । 'अस्य 'वदन्ति' इत्यग्रिमेणान्वयः । अन्ये 'रञ्जिता नु विविधा' इत्यादौ सन्देहविशेषमङ्गीकुर्वन्त एकदेशिन इत्यर्थः । अनेकत्वेन रञ्जननामनाद्यनेकप्रकारेण निर्धारणरूपा ज्ञानात्मिका या विच्छित्तिश्चमत्कारः तस्या आश्रय आधारस्तस्य भावस्तत्त्वं तेन हेतुना अलङ्कारावश्यकतां प्रति अयं हेतुरित्यवगन्तव्यम् । **एककोटयाधिकेऽपीति** । भावप्रधानो निर्देशः । एककोटेरुत्कटत्वेऽपीत्यर्थः भिन्नो द्वितीयः सामान्यसन्देहाद्विजातीयः सन्देहविशेष इत्यर्थः । **तेषामयमाशयः**—तुल्यभावेनोभयकोटिकं ज्ञानमेव सामान्यसंशयः, यत्रायमेवैक इति न निर्धारणं भवेत्, तत्कृतां विच्छित्तिमादायानेककोटयवगाहिज्ञानं तत्सन्देहविशेषः इति 'रञ्जिता नु' इत्यादौ ज्ञानस्य रञ्जनादिपक्षे प्रबलात् व्यापनादिपक्षे दुर्बलत्वात् सामान्यसंशयो न भवति किन्तु रञ्जिता एव नामितमेवेत्येवमेकस्य निर्धारणस्यासत्त्वात् रञ्जननामनाद्यनेककोटिकस्य ज्ञानस्य च सद्भावात् सन्देहविशेष एव वक्ष्म इति नात्र सन्देहः किन्तूत्प्रेक्षैवेति व्यवस्थापयितुं दूषयति-**तदयुक्तमिति** । निगीर्णस्वरूपस्य येन केनापि विधिना प्रधानीकृतस्वरूपस्य विषयस्य (उपमेयस्य) अन्यतादात्म्यप्रतीतिः विषयभेदज्ञानम् । **सम्भावनेति** । अयं हि उत्प्रेक्षाघटिकायाः सम्भावनायाः स्वरूपप्रत्यायनम्, सामान्यसम्भावनायाः स्वरूपं तु प्रागेवोक्तम् । तस्या सम्भावनायाः, स्फुटतया सद्भावात् स्पष्टरूपेणोपलम्भात् । तथा च 'रञ्जिता नु' इत्यादौ विषयरूपं तिमिरकतृकं व्यापनम् अनुपात्तत्वान्निगीर्णस्वरूपम्, विषयिरूपं रञ्जनादिकन्तु शब्देनोपात्तत्वात् प्रधानम्, उभयोश्च तादात्म्यप्रतीतिरूपा सम्भावना स्फुटमेवानुभववेद्येत्याशयः । नन्वेवं निगरणसत्त्वादतिशयोक्तित्वप्रसक्तिरित्यत आह—**नुशब्देन चेवशब्दवदिति** । नुशब्देन उत्प्रेक्षावाचकत्वेनाभिमतेनेतिशेषः । तस्याः सम्भावनायाः, द्यतनादुद्बोधनात् । इयम् 'रञ्जिता नु' इत्यादौ सन्देहोपस्कारकत्वेन भवन्मताप्रतीतिरित्यर्थः । एतेनातिशयोक्तिव्युदासः सूचितः । अदृष्टः परैः क्वाप्यनलोकितः, अनालोचित इति भावः (अत एवान्यथाऽसिद्धान्तितः) यः सन्देहप्रकारः एककोटेर्ज्ञानस्य प्राबल्येऽपि निर्धारणाभावादेव विजातीयः सन्देहविशेषस्तस्य कल्पनया अलम् क्लृप्तेनैव साधारणसन्देहेनोपपत्तौ अभिनवकल्पनाया अनावश्यकत्वाद्गौरवाच्चेत्यभिप्रायः ।

## रुचिरा

क्वच्चिदाचार्य्याणमपि भ्रमः सम्भवतीति नितान्तं गवेषणीयमित्युपदेष्टुकाम आह—**यत्** । **तु** । **केचित्** । अलङ्कारसर्वस्वकारादय इति भावः । **आहुः** । '**तिमिरेण**ान्धकारेण । **विविधा** अनेकविधाः । **तरुशैला**स्तरवः शैला इवेति, तरव एव शैला इति वा, तरवश्च शैलाश्चेति वा, तरुभिरुपलक्षिताश्शैला इति वेति तथोक्ताः । **रञ्जिताः** ।

**नु किमु ! गगनमाकाशम्** । **नामितमधः**पातितम् । **नु किमु ! स्थगित**माच्छादितम् । **नु किमु ! विषमेषून्**नातानतेषु प्रदेशेषु । **धरित्री** पृथ्वी **पूरिता** पूर्णतां नीता । **नु** ! 'विषमेषु धरित्री'ति समस्तपाठे तु विषमेषोर्मदनस्य धरित्रीभूमिः आश्रयभूता रात्रिरिति यावत्, इत्यर्थः । अन्यत्पूर्ववत् । **ककुभो** दिशः । "दिशस्तु ककुभः काष्ठा" इत्यमरः । **संहता** एकत्र समावेशिताः । **नु !** किरातार्जुनीयस्येदं पद्यम् । स्वागताछन्दः । 'स्वागता र्नौ भूगौ ग् ।' इति च तल्लक्षणम् ॥१५० ॥

**इत्यत्र** । **तर्वादौ** । **तिमिराक्रान्तता**ऽन्धकाराच्छादितता । **रञ्जनादिरूपेण** । **सन्दिह्यते** । इति । **सन्देहालङ्कारः** । **इति** । **तत्** । **न** । 'युक्त'मिति शेषः । हेतुं निर्दिशति-**एकविषये** एकस्मिन् प्रस्तुते (उपमेये) । समानबलतयोपमानसदृशकक्षतया । **अनेककोटिस्फुरणस्या**नेककोटिकावगाहिज्ञानस्य । **एव** । **सन्देहत्वात्**सन्देहपदार्थत्वात् । 'स्थाणुर्वा पुरुषो वा' इत्यादौ यथैकस्मिन् विषये स्थाणुपुरुषाद्यनेककोटिकावगाहि ज्ञानं तुल्यकक्षकमित्यस्य सन्देहपदवाच्यत्वम् इति भावः । **इह**ोत्प्रेक्षायामित्यर्थः । **तु** । **तर्वा**दिव्याप्तेस्तरुशैलादौ तिमिरव्याप्तेः । प्रतिसम्बन्धि**भेदस्त**रुशैलगगनधरणिदिशः तमोव्याप्तेः सम्बन्धिभूताः, तासां प्रत्येकं रञ्जनादिना तत्तदवगाहि ज्ञानं भिन्नम् । तथा च—एकविषयकानेककोटिकावगाहिज्ञानत्वाभावात् अत्र सन्देहपदवाच्यताऽनुपपन्नेति निष्कृष्टोऽर्थः । उक्तमर्थं द्रढयितुमन्यदप्याह—**व्यापनादेः** (अत्रादिपदमुदाहरणान्तरविवक्षया) विषयस्य । **निगरणेनाधः** करणेन । **रञ्जनादेः** । आदिना नामनादेर्ग्रहणम् । **स्फुरणम्** । **च** । अयम्भावः—अत्र विषयस्तमोव्याप्तिः, असौ तथाऽनभिधाय रञ्जनादिना अभिधीयते, अतोऽत्र रञ्जनादेर्यथा प्राधान्यं, न तथा तमोव्याप्तेः । सन्देहे तु—विषयस्य विषयिणश्च समकक्षत्वं नतु विषयविषयिणोः प्राधान्याप्राधान्याभ्यां भेदः । अतोऽत्रोत्पेरक्षैव, नतु सन्देहः । इति ।

अत्र सन्देहं मन्वानानां युक्त्यन्तरं खण्डयितुमाह-**यत्** । **च** । **अन्ये** 'रञ्जिता नु विविधा' इत्यादौ सन्देहं स्वीकुर्वन्तः । **अनेकत्व निर्धारणरूपविच्छितत्याश्रयत्वेन** एकत्वस्य निर्धारणं तदभावोऽनेकत्वनिर्धारणमेव रूपं यस्याः साऽसौ विच्छित्तिश्चमत्कारस्तस्या आश्रय आधारभूतस्तस्य भावस्तत्त्वं तेन । **एककोटयधिकोऽनेक**कोटिकः । **अपि** । **अयम्** । **भिन्नो** द्वितीयः । **सन्देहप्रकारः** ।' **इति** । **वदन्ति** । **स्म** । एषामयभिप्रायः—यत्रैष एवैक इति निर्धारणं न स्यात्, तत्कृतां विच्छित्तिमाश्रित्यानेककोट्यवगाहिज्ञानमपि सन्देहविशेषः । तथा च—'रञ्जिता नु' इत्यादौ रञ्जिता एव नामितमेवेत्येवमेकस्य निश्चयस्याभावाद् रञ्जननामनाद्यनेककोटिकस्य ज्ञानस्य च सद्भावात्सन्देह इति फलितम् । इति । निराकरोति—**तत्** । **अपि** । **अयुक्तम्** । तदेवोपपादयति—**हि** यतः । **निगीर्णस्वरूपस्याधः** कृतस्वरूपस्य विषयस्य । **अन्यतादात्म्यप्रतीति**रन्येन विषयिणा तादात्म्यं तस्य प्रतीतिः । **सम्भावना** । **तस्याः** सम्भावनायाः । **च** । **अत्र** । **स्फुटतया** । **सद्भावात्** । **'नु' शब्देन** 'उत्प्रेक्षावाचकत्वेनाभिमतेने'ति शेषः । **च** । **'इव' शब्देन** । **इव** । **तस्या** । सम्भावनायाः । द्योतनादुद्बोधनात् । **इयम्** 'रञ्जिता नु' इत्या दौ सन्देहोपस्कारकत्वेन तवाभिमता प्रतीतिरिति भावः । **उत्प्रेक्षा** । **एव** । **भवितुम्** । **युक्ता** । अयम्भावः—'तरुशैलेषु तिमिरं व्याप्त'मित्याद्यर्थः प्रस्तुतः, तं च निगीर्य रञ्जनादिना साम्यप्रतीतिः 'रञ्जिता' इत्यादिनोद्भाविता, तस्याश्च 'नु' शब्देनोत्प्रेक्षोपस्कारकतां प्रतिनीतत्वम् । अतोऽत्रोत्प्रेक्षैव । इति एवमलङ्कारान्तरतो व्यतिरिक्तविषयतयोत्प्रेक्षां निर्धाय विवेचनमुपसंहरन्नाह—इति । **अदृष्टसन्देहप्रकारकल्पनयाऽ**दृष्टः परैरनालोचितः (अत एवान्यथाऽसिद्धान्तितः) यः सन्देहप्रकार उत्प्रेक्षाया अलङ्कारान्तरेण साङ्कर्य्यमस्ति न वेति सन्देहावस्थापनं तस्य कल्पना तया । **अलम्** ।

इत्यत्र यत्तर्वादौ तिमिराक्रान्तता रञ्जनादिरूपेण संदिह्यत इति संदेहालंकार इति केचिदाहुः। तन्न। एकविषये समानबलतयानेककोटिस्फुरणस्यैव संदेहत्वात्। इह तु तर्वादिव्याप्तेः प्रतिसंबन्धिभेदो व्यापनादेर्निगरणेन रञ्जनादेः स्फुरणं च। अन्ये तु—'अनेकत्वनिर्धारणरूपविच्छित्त्याश्रयत्वेनैककोट्यधिकेऽपि भिन्नोऽयं संदेहप्रकारः' इति वदन्ति स्म। तदप्ययुक्तम्। निगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिर्हि संभावना। तस्याश्चात्र स्फुटतया सद्भावानुशब्देन चेवशब्दवत्तस्या द्योतनादुत्प्रेक्षैवेयं भवितुं युक्ता। अलमदृष्टसंदेहप्रकारकल्पनया।

**'यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते**
**तदाचष्टे लोकः शशक इति नो मां प्रति तथा।**
**अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-**
**कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम्॥'**

इत्यत्र मन्येशब्दप्रयोगेऽप्युक्तरूपायाः संभावनाया अप्रतीतेर्वितर्कमात्रं नासावपह्नवोत्प्रेक्षा।

---

## विवृतिः

**यदेतदिति**। वस्त्विति शेषः। जलदलवलीलां मेघखण्डसादृश्यं। वितनुते धारयति। तथा शशकवचनम्। तद्वस्तुनः शशकवचनं न ममेत्यर्थः॥ **वितर्क**मात्रं प्रौढोक्तिसिद्धकोटयुपस्थितिमात्रम्। तथा च यदेतदित्यनेन किमप्यनिर्दिष्टस्वरूपं वस्तु प्रस्तुतमं, तस्यात्र शशरूपत्वं प्रतिषिध्य किरणकलङ्करूपत्वं व्यवस्थापितं न तूपमानतादात्म्यं संभावितमिति भावः॥

## विवृतिपूर्तिः

रूपकविशेषणेन तदुक्तानां प्रकाराणामित्यतिशयस्योक्तावपि संभवोऽतिदित्यत इति **दीक्षितानामा**शयः। इयमतिशयोक्तिर्वेदेऽपि दृश्यते—'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥'

## विज्ञप्रिया

उत्प्रेक्षालङ्कारस्यैव विषये क्वचिच्छ्लोके सन्देहालङ्कारं केचिदाहुः, तद्दूषयितुं श्लोकमाह—**"रञ्जिता नु"** इत्यादि। गाढतमोवर्णनमिदम्। **रञ्जिता न्विति**—कृष्णवर्णीकृतेत्यर्थः। सर्वत्र तिमिरेणेत्यन्वयः। स्थगितमाच्छादितम्। विषमेषु—गभीरोच्चस्थलीषु। संहता नाशिताः।

अत्र कैश्चिदुक्तं सन्देहालङ्कारं दर्शयति—**इत्यत्रेति**। **एकविषय** इति। एकधर्मिणि। **तर्वादिव्याप्तिः**—तर्वादिकर्मकरञ्जनादिव्याप्तिः। प्रतिसम्बन्धितर्वादिरूपं विशेष्यं प्रतीत्यर्थः। ननु प्रतिविशेष्यं सन्देहा एव बहवः स्युरित्यत्र उत्प्रेक्षाप्रापकहेतुविशेषश्चास्तीत्याह—**व्यापनादेरिति**। तिमिरव्यापनादेरित्यर्थः। आदिपदात्तिमिरकृतोच्चनीचादर्शनपरिग्रहः। तस्य निगरणमत्रानुत्कटकोटिकरणम्। अन्ये तु सन्देहालङ्कारविशेष इत्याहुः, तद्दर्श-

यति—**अन्ये त्विति**। अत्रोत्प्रेक्षामेव व्यवस्थापयितुमाह---**तदप्ययुक्तमिति**। निगीर्णस्वरूपस्यानुत्कटकोटि-विशेषीकृतस्वरूपस्यान्यतादात्म्यमनुत्कटान्यकोटिमभेदः। नन्वेवं निगरणसत्त्वादतिशयोक्तित्वप्रसक्तिरित्यत आह—**नुशब्देन चेवशब्दवदिति**।

'यदेतच्चन्द्रान्तः इत्यादिश्लोके सापह्नवोत्प्रेक्षाप्रसक्तिं निरस्यापह्नुत्यलङ्कारमात्रं व्यवस्थापयितुमाह—यदेतदित्यादि। राज्ञि कस्यचिदुक्तिरियम्। चन्द्रस्यान्तर्यदेतद्वस्तु, जलदलवस्य जलदखण्डस्य सादृश्यरूपां लीलां वितनुते तद् वस्तु, लोकः शशक इति आचष्टे। अन्यजनं प्रति तदाचष्टां, मां प्रति तु न तथाचष्टे इत्यर्थः। मम तथात्वाभावनिश्चयादिति भावः। तर्हि तव कीदृशो निश्चय इत्यत्राह—**अहन्त्विति**। त्वया वन्दीकृतानामरीणां विरहेणाक्रान्तानां तदीयतरुणीनां कटाक्षोल्कापातैर्जातो यो व्रणस्तस्य किणो व्रणस्थाने प्रकटभागः, स एव कलङ्को दोषः, तच्चिह्निता तनुर्यस्य तादृशम्।

**उक्तरूपायाः सम्भावनाया** इति। उत्कटानुत्कटकोटिद्वयरूपाया इत्यर्थः। तदप्रतीतिश्च नो मां प्रति तथेत्यर्थः। तेन वक्तुः शशकोट्यभावनिश्चयस्य प्रतीतेः। **नासावपह्नवेति**—तथा चापह्नवमात्रमत्रेति भावः।

अतिशयोक्त्यलङ्कारमाह—**सिद्धत्व** इति। अध्यवसायस्यारोपस्य सिद्धत्वे निश्चयरूपत्वे सति अति-शयोक्तिरित्यर्थः। एवं चानिश्चयरूपयोः सन्देहोत्प्रेक्षालङ्कारयोर्वारणम्। परन्तु निश्चयालङ्कारापह्नुत्यलङ्काररूप-कालङ्कारेष्वतिव्याप्तिरवशिष्यते, तदलङ्कारत्रये आरोप्यस्य निश्चयरूपत्वात्। तद्वारणार्थमारोपविषयनिगरणपूर्वकत्वं विशेषणं दत्त्वाऽऽरोपविशेष्यपरत्वं, निबध्नन् व्याचष्टे—**विषयनिगरणे-नेति**। विषयिणोऽभेदप्रतिपत्तिरर्थाद् विषये अध्यवसाय इह विवक्षित इत्यर्थः। यत्रारोप्यते स विषयः। य आरोप्यते स विषयी। निगरणं चाधःकरणं व्याख्यास्यते। तदप्यविस्पष्टार्थमतो विशेषार्थकं शब्दं विना व्यञ्जनयैव विषयनि-षेधबुद्धिरधःकरणम्। तच्च सर्वविधातिशयोक्तौ तदवसरे दर्शयिष्यते। अपह्नुतिनिश्चयालङ्कारयोर्निषेधार्थकशब्द एवास्ति इत्यतो न तत्र निषेध-व्यञ्जना। रूपके तु चन्द्रतादात्म्येनैव मुखप्रतीतिर्नतु मुखनिषेधप्रतीतिः। अपह्नुतेर्व्य-ङ्ग्यत्वे तु नासावलङ्कारः किन्तु तद्ध्वनिः। तत्रालङ्कारपदप्रयोगस्तु ब्राह्मणश्रमणन्यायादौपचारिक एव। किन्तु अप-ह्नुतिध्वनौ अपह्नुतावेवातिव्याप्तिरिति, अतिशयोक्तौ तु अपह्नुतिपूर्वकेऽन्यतादात्म्यारोप इत्यनयोर्भेदः।

सिद्धत्व इत्यस्य व्यावृत्तिं दर्शयति—**तस्य चेति**। साध्यत्वमनिश्चयत्वम्। सिद्धत्वं निश्चयत्वम्। उत्प्रेक्षावारणं निश्चयत्वविवक्षयैव न तु निगरणपूर्वकत्वविक्षयेति दर्शयति—**विषयनिगरणं** चेति। अधः करण-पदार्थो विवृतएव। उत्प्रेक्षायां च विषयतावच्छेदककोटेः क्वचिदनुक्तिवशात् क्वचिचोक्ताया अपि अनुत्कटत्व-वशान्निषेधव्यञ्जना। यथा—"गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव।" इत्यत्र गर्भबहिर्भावरूपप्रसवकोट्या उत्कटाया अनुत्कटाया गुणानुबन्धकोट्या उक्ताया एव निषेधव्यञ्जना। "गङ्गाम्भसि स्नातीव" इत्यादौ त्वनुक्ताया गङ्गासम्बन्धकोटेर्निषेधव्यञ्जना। अतिशयोक्तिविशेषेऽपि न तदसम्भव इत्यत आह—**इहापि मुखं द्वितीयः** इत्यादि। द्वितीयचन्द्रोक्तिवशादेव मुखत्वकोटिनिषेधव्यञ्जनेत्यर्थः। द्वितीयचन्द्राभावान्नेदं मुखमयमेव द्वितीय-चन्द्र इति प्रतीतेः। द्वितीयपदाभावे तु नेदृशी निषेधप्रतीतिरिति तत्र रूपकमेव।

**यदाहुरिति**—अनिगीर्णस्योपात्तस्य निगीर्णस्यानुपात्तस्य अधःकरणं तु विवृतमेव।

## लोचन

जलदस्य मेघस्य लवः । कलङ्काङ्कितम्—कलङ्कचिन्हितम् । 'मन्ये' शब्दः क्वचित् क्वचिदुत्प्रेक्षाद्योतकः । उक्तरूपायाः—अध्यवसायसाध्यतापदवाच्यायाः । वितर्कः-ऊहनम् ।

पुराणो मुनिः विधिः । अत्र च प्रथमार्द्धे नुशब्देनाध्यवसायस्य सिद्धतानिरासादुत्प्रेक्षा ।

## विमला

यदिति ।—राजस्तुतिरियम् । चन्द्रान्तः,—चन्द्रस्य मध्ये, यत् एतत्, वस्तु इति शेषः, जलदलवलीलां—मेघखण्डविलासं, वितनुते—विस्तारयति, लोकः,—जनः, तत्—वस्तुरित्यर्थः, शशक इति आचष्टे—कथयति, मां प्रति यथा—शशक वचनमित्यर्थः, नो, प्रतिभातीति शेषः, तद्वस्तुनः शशकवचनं न ममेत्यर्थः, अहन्तु इन्दुं—चन्द्रं, तव अरीणां—शत्रूणां, विरहाक्रान्ता—विरहेण—कान्तविच्छेदेन, आक्रान्ता—अभिभूता इति यावत्, विरहिण्यः इत्यर्थः, याः तरुण्यः,—युवतयः, तासां कटाक्षोल्कापातेन—कटाक्षाः,—अपाङ्गवीक्षणानि एव, उल्काः,—नभोमण्डलात् पतन्तः, रेखाकाराः तेजः पदार्थविशेषाः, तासां पातेन—पतनेन, अङ्गे इति शेषः, यत् व्रणं—क्षतविशेषः, तस्य किणः,—चिन्हविशेषः एव, कलङ्कः,—लाञ्छनं, तेन अङ्किता—चिन्हिता, तनुः—शरीरं यस्य तादृशमिव, मन्ये—सम्भावयामि । शिखरिणी वृत्तम् ।

उक्तरूपाया इति ।—उत्कटैककोटिकायाः इत्यर्थः । वितर्कमात्रं—सम्भावनमात्रं, प्रौढोक्तिसिद्धकोट्युपस्थितिमात्रम् इत्यर्थः, सामान्येन सम्भावनं, न तु उत्कटैककोटिकत्वेनेति भावः; तथा च—"यदेतत्" इत्यनेन किमप्यनिर्दिष्टस्वरूपं वस्तु प्रस्तुतं, तस्यात्र शशरूपत्वं, प्रतिषिध्य किणकलङ्करूपत्वं व्यवस्थापितं, न तु उपमानतादात्म्यं सम्भावितम इति भावः ।

## लक्ष्मी

'यदेतच्चन्द्रान्तः' इत्यादिपद्ये उत्प्रेक्षावाचकनिवेशमात्रेणोत्प्रेक्षैवेतिसरस्वतीकण्ठाभरणकारमतं निरसितुमाह—**यदेतदिति** । कस्यचिद्राज्ञः स्तुतिरियम् । चन्द्रस्य अन्तश्चन्द्रमण्डलस्य मध्ये तत् एतद् दृश्यमानं मलिनं वस्तु, जलदलवलीलां क्षुद्रमेघखण्डशोभाम्, वितनुते विस्तारयति, लोको जनः 'लोकस्तु भुवने जने' इत्यमरः, तद्वस्तु शशकः शशसंज्ञः प्राणिविशेष इति आचष्टे ब्रवीति मां प्रति तु तथाकथनं नो अन्यजनं प्रति तत्प्रतीतिर्भवतु मां प्रति तु न भवति तथाप्रतीतिः मम तथात्वाभावनिश्चयादित्यर्थः । ननु तर्हि तव कीदृशो निश्चय इत्यत आह—अहन्त्विति । अहन्तु इन्दुं चन्द्रम्, तव अरीणां शत्रूणां विरहेण वियोगवेदनया आक्रान्ता अभिभूता पराजिता इति यावत् यास्तरुण्यः (त्वया रणे विनाशितानां शत्रूणां या रमण्यः) तासां कटाक्षा एव उल्का रेखाकारास्तेजोविशेषास्तासां पातन पतनेन यो व्रणः क्षतं तस्य यः किणश्चिन्हः स एव च कलङ्को लाञ्छनं तेन अङ्किता चिन्हिता तनुः शरीरं यस्य तं तथोक्तम्, मन्ये मनसि सम्भावयामि । **शिखरिणी**च्छन्दस्तल्लक्षणं चोक्तं प्रागेव ।

तात्पर्यमुपपादयति—**इत्यत्रेति** । 'मन्ये' शब्दप्रयोगेऽपि 'मन्ये' इति क्रियापदस्य प्रयोगे कृतेऽपि, उक्तरूपायाः 'निगीर्णस्वरूपस्य अन्यतादात्म्यप्रतीतिर्हि सम्भावना' इति पूर्वोदितायाः अप्रतीतेः प्रतीत्यभावात्, उक्तोदाहरणे शशकतथाविधकिणकलङ्कयोर्विषयविषयि(उपमेयोपमान) भावाभावात्, निगीर्णस्वरूपस्य विषयस्य विषयिणा सह तादात्म्यप्रतीतिरेव सम्भावनापदार्थत्वादितिभावः । वितर्कमात्रं केवलो वितर्को नाम व्यभिचारीत्या-

शयः । ननु यदेतत्पदाभ्यां बोध्यं वस्त्वपह्नुत्यान्यारोपादपह्नुतिमूला स्पष्टैवेयमितिचेदत्राह—**नासावपह्नवोत्प्रेक्षेति** । असौ अपह्नवोत्प्रेक्षा अपह्नुतिमूलोत्प्रेक्षा न । तथा च यदेतदित्यनेन किमपि अनिर्दिष्टस्वरूपं वस्तु प्रस्तुतत्वेनाभिमतं तस्यैव शशकरूपत्वेन प्रतिषिध्य तथाविधकलङ्करूपत्वेन स्थापनेऽपि शशकतथाविधकिणकलङ्कयोर्विषयविषयि (उपमेयोपमान) भावाभावात् नापह्नुतेः प्रसङ्गः सम्भावनाया असत्त्वाच्च नोत्प्रेक्षाया इत्यभिप्रायः । किन्तु वितर्को नाम व्यभिचारिभावो राजविषयकरतिभावस्याङ्गमिति रसवदलङ्कार एवेतिसुधीभिर्विभावनीयम् ।

बोधसौकर्यायोत्प्रेक्षाभेदः सङ्कलय्यते—

वाच्यप्रतीयमानत्वेन प्रथमं भेदद्वयम् । तत्र—

द्वात्रिंशत्प्रकाराणाञ्चैषां प्रत्येकमेव प्रागवत् प्रस्तुतस्य प्रतिपादनया अप्रतिपादनया च पुनर्द्वैविध्यात् चतुःषष्टिप्रकारा जायन्ते ।

इत्थमुक्तसम्भावनारूपामुत्प्रेक्षां लक्षयित्वा सम्प्रति किञ्चित्तत्सम्भावनातिरिक्तरूपामेवातिशयोक्तिं लक्षयति—**सिद्धत्व** इति । अध्यावसायस्य सत्ये वस्तुनि असत्यात्मना निरुक्तसम्भावनाया एव सिद्धत्वे निश्चयरूपत्वेन सम्पत्तौ कविरचनाचातुर्येण संशयांशे अन्तर्भूत इव निश्चयमात्ररूपत्वेन परिणतत्वे सतीतियावत्, अतिशयोऽतिशयितां प्रसिद्धिमतिक्रान्ता उक्तिरतिशयोक्तिर्नामालङ्कारो निगद्यते । तथाचोक्तम् ।

**'विवक्षा या विशेषस्य लोकसीमातिवर्त्तिनी ।**

**असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा ॥'**

इत्थं च सत्यस्य असत्यात्मना निश्चयरूपा सम्भावनातिशयोक्तिरिति लक्षणमायातम् । सत्यस्य निगीर्णस्वरूपस्य । निश्चयरूपत्वं हि सम्भावनायाः शाब्दबोधकाल एवातस्तदनन्तरमसत्यत्वावगमेऽपि न क्षतिः । सम्भावना चात्र साध्यवसानाख्यलक्षणयैव सञ्जायत इति बोध्यम् । अतएव रूपके नातिव्याप्तिः तस्य सारोपाख्यलक्षणामूलकत्वात् । वाच्योत्प्रेक्षायामिवादिपदसत्त्वात् प्रतीयमानोत्प्रेक्षायाञ्च अन्वयानुपपत्तेः संशयात्मिका सम्भावना, अत्र तु इवादिपदासत्त्वादन्वयोपपत्तेश्च निश्चयात्मिका सम्भावनेत्युत्प्रेक्षायां नातिव्याप्तिः । निश्चयान्तसन्देहालङ्कारे प्रथमं संशयोपलम्भः, अत्र तु सर्वदैव कविरचनाचातुर्येण सशयानुपलम्भ इति न निश्चयान्तसन्देहालङ्कारेऽप्यतिप्रसक्तिः । भ्रान्तिमदलङ्कारे भ्रमस्य एककोटिकतया भ्रान्तानां सत्यपदार्थस्य ज्ञानं भवत्येव न, अत्र तु सम्भावनाया द्विकोटिकत्वेन सम्भावयितुः, सत्यात्ययोर्द्वयोरेव पदार्थयोर्ज्ञानं भवतीति न तत्राप्यतिव्याप्तिरितिबोध्यम् ।

## रुचिरा

न चोत्प्रेक्षावाचकनिवेशमात्रेणोत्प्रेक्षैवेति दर्शयितुमाह—**यत्** । **एतत्** दृश्यमानं वस्तु इति भावः । चन्द्रान्तश्चन्द्रस्यान्तश्चन्द्रमण्डलस्य मध्य इति भावः । **जलदलवलीलां** जलदो मेघस्तस्य लवः खण्डस्तस्य लीला विलासः शोभेति यावत् तां तथोक्ताम् । **वितनुते** विस्तारयति । **लोको** जनः । 'लोकस्तु भुवने जने ।' इत्यमरः । तत् (वस्तु) **शशकः** शशशब्दो जन्तुविशेषः । **इति** । **आचष्टे** कथयते । किन्तु-नो । माम् । **प्रति** । **तथा** 'भासत' इति शेषः । किं त्वां तत्प्रतिभासत इत्याशङ्कायामाह **अहम** । **तु** । **इन्दुं** चन्द्रम् । **त्वदरिविरहाकान्ततरुणी......तनुं** तवारयः शत्रुजनास्तेषां विरहेणाक्रान्ताः पीडिता या तरुण्यः (त्वया युद्धे समापितानां शत्रूणां या रमण्यः) तासां कटाक्षा

एवोल्कपातास्तैः (कृतं) यद् व्रणं छिद्रं तस्य किणोऽशः स एव कलङ्कस्तेनाङ्किता चिह्निता तनुः शरीरं यस्य तं तथोक्तम् । **मन्ये** । शिखरिणीवृत्तम् ॥ १५१ ॥

तात्पर्य्ये निर्दिशति—**इत्यत्र** । '**मन्ये**' **शब्दप्रयोगे** 'मन्ये' इति क्रियापदस्य प्रयोगे कृते । **अपि** । **उक्तस्वरूपाया** 'निगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिर्हि सम्भावना' इत्यनन्तरोदितायाः । **सम्भावनायाः** । **अप्रतीतेः** प्रतीत्याभावात् । **वितर्कमात्रं** वितर्क एव । ननु यदेतत्पदाभ्यां बोध्यं वस्त्वपह्नूयान्यारोपादपह्नुतिमूलैवेयमास्तामिति चेन्नेत्याह-**असौ** । **अपह्नवोत्प्रेक्षा** अपह्नुतिमूलोत्प्रेक्षा । **न** । अयम्भावः—यदेतदित्यनेन किमपि अनिर्दिष्टस्वरूपं वस्तु प्रस्तुतत्वेनाभिमतम्, तस्यैव शशरूपत्वं प्रतिषिध्य कलङ्करूपत्वेन व्यवस्थापितम्, ननूपमानसारूप्यमुद्भावितम् । अतोऽत्र नोत्प्रेक्षा । इति ।

**सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ॥**

विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः। अस्य चोत्प्रेक्षायां विषयिणोऽनिश्चित्वेन निर्देशात्साध्यत्वम्। इह तु निश्चितत्वेनैव प्रतीतिरिति सिद्धत्वम्। विषयनिगरणं चोत्प्रेक्षायां विषयस्याधःकरणमात्रेण इहापि मुखं द्वितीयश्चन्द्र इत्यादौ। यदाहुः—

"विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः।

अधः कारणमात्रेण

---

## विवृतिः

अतिशयोक्त्यलंकारमाह—**सिद्धत्वे इति**। निश्चितविषयिग्राहकत्वे इत्यर्थः। निश्चयरूपत्व इति पर्यवसितोऽर्थः॥ अध्यवसायपदार्थमाह—**विषयेति**। विषयिणोऽध्यवसायप्रकारस्य अभेदप्रतिपत्तिस्तादातम्यारोपः। सिद्धत्व इत्यस्य व्यावृत्तिमाह—**अस्य चेति**। अध्यवसायस्य चेत्यर्थः। **निर्देशाद्** विषयीकरणात्। **साध्यत्वं** व्यक्ताप्रामाण्यत्वम्। प्रतीतिरिति विषयिण इत्यन्वयः। ननु शब्देनानुपादान निगरणम्, एवं सत्युक्तप्रस्तुताया मुत्प्रेक्षायामतिशयोक्तौ चोक्तविषयाणां कथं लक्षणगमंनमत आह—**निगरणं चेति**। अधःकरणमात्रेण विच्छित्तिविशेषं प्रत्यकिंचित्करत्वेनापकर्षमात्रेण न तु शब्दानुपादानेनापि॥

## लोचन

**यद्यर्थेति**। इह यद्यपि चन्द्रमण्डलस्येन्दीवरद्वयेन सम्बन्धो न सम्भवति तथापि कविना निबद्धस्य वा सम्भावनारूपेणाऽसावस्तीत्यर्थः। एतेन "यद्यर्थोक्तौ च कल्पन"मिति कैश्चिदुक्तोऽतिशयोक्तेर्भेद उदाहृतः, एकस्यैव नानाभावोल्लेखश्च। अत्र प्रथमे ग्रन्थकृतैव उदाहृतम्, अन्यदेव इत्यादौ। द्वितीये केशपाशादेरित्यादिशब्देन ललाटनयननासाधराणां संग्रहः। एवं मुखं द्वितीयश्चन्द्रः।

तथा च—

**"चूताङ्कुरास्वादकषायकण्ठः**<br>
**पुंस्कोकिलो यन्मधुरं चुकूज।**<br>
**मनस्विनीमानविघातदक्षं**<br>
**तदेव जातं वचनं स्मरस्य॥"**

नचेह तस्या मुखं चन्द्र इतिवदारोपमूलं रूपकम्। तादात्म्यदृढतायामध्यवसायस्वरूपोत्थानात्। अत्र हि मदनस्य उद्यमं विनापि कोकिलरुतमात्रेण जगद्वशमासीदित्यर्थः। यथा—"अत्यारूढो हि नारीणामकालज्ञो मनोभवः।" एवं "न कामवृत्तिर्वचनीयमीक्षते" अत्र करणयोर्मनोभवकामवृत्त्योः क्रियाकर्तृभेदेऽप्यभेदेनोक्तिः। 'इयं कान्ता युवजनन्मनसो वशीकरण" मित्यादौ च हेत्वलङ्कारो वक्ष्यते। स तस्या एवासम्बन्धे सम्बन्धरूपेण भेदेन सङ्गृह्यत इत्यर्थः। अत्र शुद्धोदाहरणं विरहवर्णने—'दाहोऽम्भः प्रसृतिं पचः प्रचयवान् बाष्पः प्रणालोचित' इत्यादि। अत्र दाहादीनाम् अम्भः प्रसृतिपाकाद्यैः असम्बन्धेऽपि सम्बन्धः सिद्धत्वेनोक्तः।

उत्कलिका, उत्कण्ठा, उद्गतकोरकश्च ।

लौकिकः स्वाभाविकः । अलौकिकत्वेनाध्यवसायफलभूताऽलौकिकातिशयत्वेनाङ्गलावण्यमित्यादिशब्देन "प्रिय इति गोपवधूभि" रित्यादेरुपसंग्रहः । अव्याप्तिलक्षणस्य इत्ययमाशयः = उपमेयवस्तुनः उपमानवस्तुतादात्म्ये एवाध्यवसायरूपोत्थापनम् । इह चान्यादिशब्दाख्यं लावण्यादेः किमपि प्रतिनिधिवस्त्वन्तरं नास्ति । तदेवमादिषूदाहरणेषु लक्षणस्याव्याप्तिरिति सिद्धान्तमाह **तन्नेति** । कथमन्यत्वेनाध्यवसाय इत्यत आह—**तथा हीति** ।

## विमला

अतिशयोक्तिमाह, सिद्धत्वे इति ।—अध्यवसायस्य—अध्यासस्य, सिद्धत्वे—सिद्धवत् निर्देश्यत्वे, निश्चितविषयिग्राहकत्वे इत्यर्थः, निश्चयरूपत्वे इति पर्य्यवसितोऽर्थः, अतिशयोक्तिः निगद्यते—कथ्यते । सिद्धवन्निर्दिष्टोऽध्यवसायः, स एवातिशयोक्तिरिति फलितार्थः ।

अध्यवसायपदार्थमाह, विषयेति ।—विषयस्य—प्रकृतस्य, निगरणेन—अधःकरणेन, विषयिणः—आरोप्यमाणस्य, अध्यवसायप्रकारस्येत्यर्थः, अभेदप्रतिपत्तिः—अभेदज्ञानं, तादात्मारोप इति यावत्, विषयादिति शेषः । सिद्धत्वे इत्यस्य व्यावृत्तिमाह, अस्य चेति ।—अध्यवसायस्य चेत्यर्थः । अनिश्चिततत्वेन—अनिर्द्धारितत्वेन, निर्देशात्—आरोपात्, विषयीकरणात् इति भावः, साध्यत्वं—साधनीयत्व, व्यक्ताप्रामाण्यत्वम इत्यर्थः । प्रतीतिरिति ।—विषयिणः प्रतीतिरित्यभिप्रायः । ननु शब्देनानुपादानं निगरणम् एवं सति उक्तप्रस्तुतायामुत्प्रेक्षायाम् अतिशयोक्तौ चोक्तविषयायां कथं लक्षणगमनम्? अत आह, निगरणञ्चेति ।—अधः करणमात्रेण—विच्छित्तिविशेषं प्रत्यकिञ्चित्करत्वेनापकर्षमात्रेण, न तु शब्दानुपादानेनापि इति ज्ञेयम् ।

विषयस्येति—सूरयः—विद्वांसः, विषयस्य—प्रस्तुतस्य, अनुपादाने—अप्रयोगे, अपि, तथा उपादाने—प्रयोगे अपि, अधः करणमात्रेण—अपकर्षमात्रेण, विषयस्येति शेषः निगीर्णत्वं—निगरणं, प्रचक्षते—वदन्ति, निगरणमेवाधःकरणमिति फलितार्थः ।

## लक्ष्मी

अध्यवसायपदार्थ दर्शयति—**विषयनिगरणेनेति** । यत्र अध्यवसीयते आरोप्यते स विषयः सत्यं वस्त्वित्यर्थः तस्य निगरणेन स्वरूपप्रकटनाभावेन अधः करणेनेत्यर्थः, यथाकथञ्चिद्गुणीभूतविधानेनेतियावत् यः खल्वध्यवसीयते स विषयी असत्यं वस्त्वित्यर्थः, तस्य अभेदप्रतिपपत्तिः अभेदस्य सम्भावना अध्यवसायः, निगीर्णरूपेण सत्यवस्तुना सह असत्यवस्तुनः अभेदस्तादात्म्यज्ञानमध्यवसायपदवाच्योऽर्थ इति भावः ।

**अलङ्कारसर्वस्वकारास्तु**—'अध्यवसायो द्विविधः साध्यः सिद्धश्चेति । साध्यो यत्र विषयिणोऽसत्यतया प्रतीतिः, असत्यत्वं च विषयिगतस्य धर्मस्य विषय उपनिबन्धे विषयिसम्भवित्वेन विषयासम्भवित्वेन च प्रतीतिः । धर्मो गुणक्रियारूपः, तस्य सम्भवासम्भवप्रतीतौ सम्भवाश्रयस्य तत्रापरमार्थतयाऽसत्यत्वं प्रतीयते इतरस्य तु परमार्थतया सत्यत्वम्; यस्यासत्यत्वं तस्य सत्यत्वप्रतीतावध्यवसायः साध्यः, अतश्च व्यापाराप्राधान्यम् । सिद्धो यत्र विषयिणो वस्तुतोऽसत्यस्यापि सत्यतया प्रतीतिः, सत्यत्वञ्च पूर्वकस्य असत्यत्वनिमित्तस्याभावात्, अतश्चाध्यवसिताप्राधान्यम्' इत्याहुः ।

'सिद्धत्व' इत्यस्य व्यावृत्त्युपपादनपूर्वकेण उत्प्रेक्षालङ्कारत अस्या भेदान्तरमुपपादयति **अस्य चेति**। विषयिण असत्यवस्तुनः (उपमेयस्य) अनिश्चितत्वेन संशयविशेषरूपसम्भावनावाचकानामिवादिपदानां विद्यमानत्वात् सन्देहविषयीभूतत्वेन, निर्द्देशात् प्रतिपादनात् साध्यत्वं प्रमाणादिना सम्पाद्यत्वम्। इह तु अतिशयोक्तौ तु निश्चितत्वेनैव प्रतीतिः 'विषयिण' इत्यनुषज्यते। इति अस्मात्कारणात् सिद्धत्वं प्रमाणाद्यनपेक्ष्येणैव स्वयं सम्पाद्यत्वम्। तथा च यथा कश्चित् लोके दूरेण पुरुषाकारं वस्त्वलोक्य अयं पुरुषो न वेति सन्दिहानेन, यथाक्रमं हस्तपादाद्यवलोकनेन अयं पुरुष एवेतितादात्म्यबुद्धिः पूर्वमनिष्पन्ना निष्पाद्यते, परन्तु शुक्तिकां दृष्ट्वा 'रजतमिदम्' इति निर्णये तु तादात्म्यबुद्धिर्निष्पन्नैवेति तस्या हेत्वपेक्षा न तथैवात्रापीत्याशयः। इत्थञ्च उत्प्रेक्षातिशयोक्त्यलङ्कारयोः तादात्म्यबुद्धेः साध्यत्वसिद्धत्वाभ्यां कश्चनोक्तभिन्नो भेदान्तरोऽपि बोधितः।

ननु यदि उत्प्रेक्षायां विषयनिगरणं भवेत्तदैव तद्वारणाय सिद्धत्वविशेषेणं युक्तं स्यात् न च तथा, तत्र विषयनिगरणाभावात् एवञ्चातिप्रसक्तिवारणाय सिद्धत्वविशेषणमयुक्तमेवेत्यत आह—**विषयनिगरणञ्चेति**। विषयस्य सत्यपदार्थस्य अधःकरणमात्रेण केवलगुणीभूतविधानेन। तृतीया चेयमभेदे। एवञ्चोत्प्रेक्षायां विषयस्याधःकरणरूपं विषयनिगरणम्, इह अतिशयोक्तावपि च 'मुखं द्वितीयश्चन्द्रः' इत्यादौ वर्त्तत एवेत्यर्थः। तथा च तुल्यविषयत्वेनोत्प्रेक्षायामतिप्रसक्तिसम्भावात्तद्वारणाय 'सिद्धत्व' विशेषणमुपादेयमेवेत्याशयः। मतान्तरेण विशेषार्थकं शब्दं विना व्यञ्जनयैवं विषयनिषेधबुद्धिरधः करणमित्यधःकरणपदार्थे निरुक्तेऽपि सिद्धत्वविशेषणमुपादेयमेव। तथाहि उत्प्रेक्षायां विषयतावच्छेदककोटेः क्वचिदनुक्तिवशात् क्वचिच्चोक्ताया अपि अनुत्कटत्ववशान्निषेधव्यञ्जना। यथा—

'गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव।'

इत्यत्र गर्भबहिर्भावरूपप्रसवकोट्या उत्कटाया अनुत्कटाया गुणानुबन्धकोटया उक्ताया एव निषेधव्यञ्जना। 'गङ्गाम्भसि स्नातीव' इत्यादौ त्वनुक्ताया गङ्गासम्बन्धिकोटेर्निषेधव्यञ्जना। 'मुखं द्वितीयश्चन्द्रः' इत्यादौ अतिशयोक्तिविशेषेऽपि न तदसम्भवः। द्वितीयचन्द्रोक्तिवशादेव मुखत्वकोटिनिषेधव्यञ्जना, द्वितीयचन्द्राभावान्नेदं मुखमयमेव द्वितीयश्चन्द्र इति प्रतीतेः। द्वितीयपदाभावे तु नेदृशीनिषेधप्रतीतिरिति तत्र रूपकमेवेतिस्पष्टं **विज्ञप्रियादौ**।

विषयनिगरणस्य विषयाधः करणमात्रत्वस्वीकारं प्राचां सम्वादेन द्रढयितुमाह—**यदाहुरिति**।

**विषयस्येति**। सूरयः कृतिनः विद्वांस इत्यर्थः। 'धीमान् सूरिः कृती' इत्यमरः। विषयस्य सत्यवस्तुनः अनुपादाने शब्देनाप्रतिपादनेऽपि उपादाने शब्देन प्रतिपादनेऽपि वा सति, अधः करणमात्रेण विषयस्य केवलेन गुणीभूतविधानेनैव प्राग्वदिहाप्यभेदे तृतीयाऽवगन्तव्या, निगीर्णत्वं विषयस्य निगरणं प्रचक्षते ब्रुवते।

## रुचिरा

अतिशयोक्ति लक्षयति—१२६ **अध्यवसायस्य** विषयं निगीर्य्य तेन सहाभिन्नत्वेनावस्थितो यो विषयी तस्य थः प्रत्ययस्तस्येति भावः। **सिद्धत्वे** सिद्धौ सत्यामनिश्चयसम्भावनाभ्यामनालिङ्गितायां सम्पत्ताविति यावत्। **अतिशयोक्तिरतिशयेन** विषयनिगरणसम्पादितविषयिप्रकर्षेणोक्तिरिति तथोक्ता। अत एव तथा प्रसिद्धोऽलङ्कार इत्यर्थः। **निगद्यते**। अयम्भावः—अत्र विषयिणो विषयनिगरणपूर्वकं विषयेण सह निश्चितमभेदसिद्धत्वमभिधीयते साऽतिशयोक्तिरलङ्कारः। इति ॥ ९९ ॥

अध्यवसायपदार्थमाह—**विषयनिगरणन** विषयस्य प्रस्तुतस्य निगरणं स्वरूपेण प्रकटनाभावस्तेन तदभिन्नेनेति भावः। विषयिणोऽप्रस्तुतस्येति भावः। **अभेदप्रतिपत्तिर**भेदस्य निश्चयः। **अध्यवसायस्ततपद**-वाच्योऽर्थ इति भावः। ननु सिद्धत्वं साध्यतामतिक्रम्यावस्थिततत्वम्, तत् किंनाम साध्यात्वमित्याशङ्क्याह-अस्या-ध्यवसायस्य। **च**। **उत्प्रेक्षायां**सम्भावनाऽवस्थायां तदाख्येऽलङ्कारे वा। **विषयिण** उपमेयस्य। **अनिश्चिततत्वेन**। **निर्देशात्**। **साध्यत्वम**सम्पन्नसिद्धत्वम्। **इहास्यामतिशयोक्तौ** सत्याम्। **तु**। **निश्चिततत्वेन**। **एवं**। **प्रतीतिर्वि-श्वासः**। **इति** अस्मात् कारणात्। **सिद्धत्वं** सम्पन्नस्वरूपत्वम्। ननु शब्देन विषयस्यानुपादानमेव तस्य निगरणम्, तञ्च-उपात्तप्रस्तुतायामुत्प्रेक्षायामतिशयोक्तौ च न सम्भवति, तत् कथमनयोर्विषयनिगरणं, कथं वाऽनयोर्भेद इति चेत्, अत्र विषयनि, गरणमधःकरणमात्रेण तञ्चोभयत्र, उभयोश्च भेदो विषयनिगरणस्य साध्यत्वसिद्धत्वाभ्यामिति द्योतयितुमाह**विषयेत्यादि**।

**विषयनिगरणम्**। च। **उत्प्रेक्षायाम्**। **इहास्यामतिशयोक्तौ**। **'मुखम्**। **द्वितीयोऽपरः**। **चन्द्रः**।' **इत्यादौ**। **अपि**। **विषयस्य**। **अधः करणमात्रेणा**पकर्षकत्वेनैव 'नतु शब्दानुपादानेनैवेति नियम' इति शेषः। एवं विषयनिगरणस्योभयत्र साधारण्येनोपात्तप्रस्तुतात्वसाधारण्येऽपि विषयनिगरणस्य साध्यत्वसिद्धत्वाभ्यां प्राङ्नि-दिष्टाभ्यामेव भेदः, उत्प्रेक्षायां च विषयनिगरणं यदि, तर्हि शब्देन तस्योपादानेऽपि विषयिणाऽधःकरणमात्रेण; अथातिशयोक्तौ यदि, तर्हि शब्देन तस्योपादानेऽनुपादानेऽपि चेत्युभयथेत्यपि एनयोर्भेदः। अत एवास्या अनुपा-त्तविषयात्वमपि सङ्गच्छते। इति निष्कृष्टोऽर्थः। विषयनिगरणस्य विषयाधः करणमात्रत्वस्वीकारं प्राचां संवादेन द्रढयितुमाह—यत् यतः कारणात्। **आहुः**। **'सूरयो** विद्वांसः। 'धीमान् सूरिः कृती...' इत्यमरः। **विषयस्य**। **अनुपादाने** 'शब्देने'ति शेषः। **अपि**। **उपादाने**। **अपि**। **अधःकरणमात्रेण** विषयिणा विषयस्य न्यूनत्वप्रत्यायनमा-त्रेणेति भावः। **निगीर्णत्वं** निगरणम्। **प्रचक्षते** ब्रुवते॥' **इति**।

निगीर्णत्वं प्रचक्षते ॥' इति। निगीर्णत्वं प्रचक्षते ॥' इति।

**भेदेऽप्यभेदः संबन्धेऽसंबन्धस्तद्विपर्ययौ ॥ ४६ ॥**

पौर्वापर्यात्ययः कार्यहेत्वोः सा पञ्चधा ततः।

तद्विपर्ययौ अभेदे भेदः, असंबन्धे संबन्धः। सातिशयोक्तिः। अत्र भेदेऽभेदो यथा मम—

**'कथमुपरि कलापिनः कलापो**

**विलसति तस्य तलेऽष्टमीन्दुखण्डम्।**

**कुवलययुगलं ततो विलोलं**

**तिलकुसुमं तदधः प्रवालमस्मात् ॥'**

अत्र कान्ताकेशपाशादेर्मयूरकलापादिभिरभेदेनाध्यवसायः। यथा वा—'विश्लेषदुःखादिव बद्धमौनम्'। अत्र चेतनगतमौनित्वमन्यदचेतनगतं चान्यदिति द्वयोर्भेदेऽप्यभेदः। एवम्—

**'सहाधरदलेनास्या यौवने रागभाक्प्रियः।'**

अत्राधरस्य रागो लौहित्यम्, प्रियस्य रागः प्रेम, द्वयोरभेदः।

---

## विवृतिः

**भेद इति**। भेदे सत्यप्यभेदप्रतिपत्तिरित्यर्थः। एवमग्रेऽपि। **पौर्वापर्यात्ययः** पौर्वापर्यविपर्यासः। स च पूर्वोत्पन्ने परोत्पन्नत्वारोपः परोत्पन्ने पूर्वोत्पन्नत्वारोप इत्युभयस्वरूप एकः प्रकारः। क्रमोत्पन्ने च समकालोत्पन्नत्वारोप इति द्वितीयः ॥

केशपाशादेरित्यादिपदेन भालनेत्रनासाधरग्रहणम्। सादृश्यनिबन्धनाभेदारोपरूपातिशयोक्तिमुदाहृत्य एकशब्दप्रतिपाद्यत्वनिबन्धनाभेदारोपरूपामुदाहरति—**यथा वेति**। अत्र युगपद्वृत्तिद्वयस्य स्वार्थोपस्थापकत्वाङ्गीकारेण शक्यलक्ष्ययोरेकदैवैकशब्दोपस्थाप्यत्वमित्यभिप्रायेणाह—**अत्रेति**। चेतनगतं मौनित्वं वचनाभावरूपम्, अचेतनगतं च ध्वन्यभावरूपम्। आद्ये शक्तिर्द्वितीये लक्षणा। ताभ्यामेकदैव उभयमुपस्थाप्यते श्लेषेण। एकशब्दप्रतिपाद्यत्वनिबन्धनाभेदारोपरूपामतिशयोक्तिमुदाहरति—**एवमिति**। अत्र द्वयोरप्येकत्वनिबन्धनकार्यसाधनत्वरूपातिशयोक्तिरवधेया ॥

## विज्ञप्रिया

अस्याः पञ्चविधत्वमाह—**भेदेऽप्यभेद** इति। अभेद आरोप्यमाणश्चेत्तदा स आरोपोऽतिशयोक्तिरित्यर्थः। एवमुत्तरत्रापि। कार्यहेत्वोः पौर्वापर्यात्ययः—पौर्वापर्यविपर्यय इत्यर्थः।

**कथमुपरीति**—नायिकाया उपरीत्यर्थः। तदपि तदवयवरूपतयेति बोध्यम्। ततो विलोलमित्यत्र तत्स्थानमित्यनुषङ्गः। तिलकुसुममित्यत्रापि तत्स्थानमित्यनुषङ्गः। प्रवालं—नवपल्लवम्। अत्रारोपविषयाणां केश-

पाशादीनामनुपादानादेव निषेधव्यञ्जनरूपाधः करणम्। एवमुत्तरोत्तरमपि विषयानुपादाने बोध्यम्। उपादाने तु रूपकमेवेति बोध्यम्।

**अचेतनगतं चान्यदिति**—उत्तरकरणसामर्थ्येऽपि तदकरणरूपान्मौनादन्यदित्यर्थः। तच्च शब्दाकरणरूपम्। स च विषयोत्रानुपात्तः।

अस्या यौवने अस्या एवाधरदलेनेत्यन्वयः। **द्वयोरभेद** इति। रागपदश्लेषादिति भावः। एककालोत्पत्तिकत्वरूपसाहित्यमात्रप्रतीतौ तु अरुणाधरेण सह रागवान् इत्यतोऽधिकस्य वैचित्र्यस्यानुभूयमानस्यानुपपत्तिप्रसङ्गात्।

## कुसुमप्रतिमा

इदानीमतिशयोक्तिं विभजते भेद इति। भेदेऽपि अभेदः यथार्थादयथार्थस्य भिन्नत्वेऽपि तदभिन्नत्वं न सम्भावना, यथार्थस्य सम्बन्धेऽपि असम्बन्धः असम्बन्धसम्भावना, तयोर्विपर्ययौ वैपरीत्यद्वयम्, तथा च यथार्थायथार्थयोरभेदेऽपि भेदसम्भावना, यथार्थस्य असम्बन्धेऽपि सम्बन्धसम्भावनेत्यर्थः, तथा कार्य्यहेत्वोः कार्य्यकारणयोः पौर्वापर्य्यात्ययः पूर्ववर्त्तित्व परवर्त्तित्वयोर्वैपरीत्यम्, अत्र आसक्तिक्रमेणैवान्वयो न तु यथासंख्येनेति बोध्यम्। तथा च कारणस्य पूर्ववर्त्तित्वं कार्य्यस्य च परवर्त्तित्वं नियतमेव तत्र यदि कारणात् कार्य्यस्य पूर्व वर्त्तित्वसम्भावना समकालवर्त्तित्वसम्भावना वा स्यात् तदेत्यर्थः; ततः कारणात् सा अतिशयोक्तिः पञ्चधा पञ्चप्रकारा स्यात्। तथा च भेदे अभेदः, अभेदे भेदः, सम्बन्धे असम्बन्धः, असम्बन्धे सम्बन्धः कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययश्चेति।

अत्रेति। एषु पञ्चसु भेदेषु मध्ये इत्यर्थः।

कथमिति। कस्याश्चिन्नायिकायाः केशादिवर्णनमिदम्। उपरि भागे मस्तक इत्यर्थः, कला पिनो मयूरसा कलापः पुच्छं कथम्, केशपाशं मयूरपुच्छमेव सम्भावामीत्यर्थः। कथमिति सम्भावनार्थक मन्वयम्। तथा च मेदिनी—"कथं हर्षे च गर्हायां प्रकारार्थं च सम्भ्रमे। प्रश्ने सम्भावनायाञ्च।" तस्य कलापस्य तले अधोभागे अष्टम्यास्तिथेः इन्दुखण्डं चन्द्रस्यार्द्धभागः, विलसति शोभते कथम्, ललाटदेशम् अर्द्धचन्द्रमेव सम्भावयामीत्यर्थः। ततस्तस्मादधोदेशे च विलोलं चञ्चलम्, कुवलययुगलस्य अधः, तिलकुसुमं कथम, नासिकायां तिलकुसुममेव सम्भावयामीति तात्पर्य्यम्। अस्मात् तिलकुसुमादधश्च प्रबालं विद्रुमः कथम्, ओष्ठञ्च प्रबालमेव सम्भावयाभीत्यर्थः।

अत्रेति। उदाहृते नायिकायाः केशपाशादिरूपेणैव प्रत्यक्षगोचरतया केशपाशादय एव यथार्थाः कलापादिरूपेण तु अप्रत्यक्षया ते पुनरयथार्था इति केशपाशदीनां कलापादिरूपेणाध्यवसायान्मूललक्षण सङ्गतिः। तथा केशपाशादिभ्यः कलापादीनां भेदेऽपि अभेदाध्यवसायात् भेदे अभेदाध्यवसायरूपातिशयोक्तिरिति च बोध्यम्।

स्वरचितस्याप्रामाण्याशङ्कया प्राचीनमुदाहर्त्तुमाह यथा वेति।

अत्रेति। अत्र परस्परात्यन्तभेदद्योतनाय अन्यशब्दोद्वयोपादानम्। तथा च मुनेर्भावो मौनं तदस्वास्तीति मौनी तस्य भावी मौनित्वं तदपि च मौनमेव, "तद्धितस्य त्व-तल्भ्यां क्वचित् सम्बन्धाभिधान क्वचित् सम्बन्धिनश्च" इत्यभिधानात् अतो बद्धमौनमित्यनेन सह नोक्तिवैषम्यम्। एवञ्च मनुष्यात्मकचेतन मतं मौनित्वं नाम वाक्यशून्यत्वं तच्च अभिधयैव प्रतिपाद्यम्, नूपुराद्यचेतनगतं मौनित्वञ्च शब्दमात्रशून्यत्व तच्च लक्षणवा बोध्यम्;

ततश्चोभयोर्भेदेऽपि श्लेषादिस्थले युगपद्वृत्तिद्वयाङ्गीकारेण शब्दबोध्यस्यैव यथार्थस्य शब्दशून्यत्वरूपमौनित्वस्य शब्दबोध्येनैव अयथार्थेन वाक्यशून्यत्वलक्षमौनित्वरूपेण सम्भावनया अभेदाध्यवसाया: दतिशयोक्तिरिति भावः।

इत्यञ्च शक्तिलक्षणीभयनिष्पादितश्लेषेणोदाहृत्य केवलशक्तिनिष्पादितश्लेषेणाप्युदाहर्त्तुमाह एवमिति।

सहेति। "सुस्मितेन सम प्रायो मानसे शुचिमानपि॥" इति मत्पूरिपरार्द्धम्।

प्रियी वल्लभः, यौवने अस्या नायिकायाः, अधरदलेन ओष्ठपल्लवेन सह रागं लौहित्य प्रेम च भजत इति रागभाक्, ओष्ठदलं यथा रक्तं प्रियोऽपि तथैव रक्त इत्यर्थः।

अत्रेति। लौहित्यप्रेम्णोर्भेदेऽपि शक्तिप्रतिपाद्यरागशब्दश्लेषेण प्रिये यथार्थस्य प्रेमरूपरागस्य प्रिये अयथार्थेन लौहित्यलक्षणरागरूपेण सम्भावनया अभेदाध्यवसायादतिशयोक्तिरित्याशयः।

## विमला

तद्भेदानाह, भेदे इति।—सा—अतिशयोक्तिः, भेदेऽपि अभेदः,—भेदे सत्यपि अभेदप्रतिपत्तिरित्यर्थः, एवमग्रेऽपि; सम्बन्धेऽपि असम्बन्धरुपा, तद्विपर्य्ययौ—तयोर्विपरीतौ, अभेदेऽपि भेदरूपा, असम्बन्धेऽपि सम्बन्धरूपा इत्यर्थः, तथा कार्य्यहेत्वोः,—कार्य्यकारणयोः, पौर्वापर्य्यात्ययः,—पौर्वापर्य्यविपर्य्यासरूपा चेति भावः, ततः,—तेभ्यः, भेदेभ्यः, पञ्चधा—पञ्चप्रकारा, भवतीति शेषः। इह पौर्वापर्य्यात्ययः, द्विविधः, यथा—पूर्वोत्पन्ने परोत्पन्नत्वारोपः, परोत्पन्ने पूर्वोत्पन्नत्वारोपः इत्युभयस्वरूपः एक प्रकारः, क्रमोत्पन्ने च समकालोत्पन्नत्वारोपः इति द्वितीयः प्रकारः। अलङ्कारसर्वस्वकारा अपि—"अध्यवसितप्राधान्ये त्वतिशयोक्तिः" इत्यभिधाय "अध्यवसाने त्रयं सम्भवति, स्वरूपं विषयो विषयी च। विषयस्य हि विषयिणाऽन्तर्निगीर्णत्वे अध्यवसायस्य स्वरूपोत्थानं, तत्र साध्यत्वे स्वरूपप्रधान्यं, सिद्धत्वे तु अध्यवसितत्वप्राधान्यं, विषयप्राधान्यमध्यवसाये नैव सम्भवति, अध्यवसितप्रधाना एव अतिशयोक्तिः। अस्याश्च पञ्च प्रकाराः,—भेदे अभेदः, अभेदे भेदः, सम्बन्धे असम्बन्धः, असम्बन्धे सम्बन्धः, कार्य्यकारणपौर्वापर्य्यविध्वसश्च" इत्याहुः।

भेदे अभेदमुदाहरति, कथमिति।—नायिकावर्णनमिदम्। उपरिशिरसीत्यर्थः, कलापिनः,—मयूरस्य, कलापः,—वर्हं, कथम् इति सर्वत्र योज्यम् कलापस्य पुच्छवर्त्तित्व सर्वत्र दृष्टम्, इह तु उपरि कथमिति भावः, (केशवर्णनमिदम्) तस्य—कलापस्य, तले—अधः, अष्टम्यास्तथेः इन्दुखण्डं—चन्द्रशकलम्, अष्टम्यां तिथौ हि चन्द्रः अष्टाभिः कलाभिः सम्पन्नो भवति, तस्मात् अर्द्धचन्द्र इत्यर्थः, उपचारात् तत्सदृशमिति भावः, विलसति—विराजते, (भालवर्णनमिदम्) ततः,—तस्मात्, अध इति शेषः, विलोलं—चपलं, कुवलययुगलं—नीलोत्पद्वयं, राजत इति शेषः, (नेत्रद्वयवर्णनमिदम्) तदधः,—तस्मात् अधः, नेत्रोत्पलतले इत्यर्थः, तिलकुसुमं, विराजते, इति शेषः, (नासिकावर्णनमिदम्) अस्मात्—तिलकुसुमात, अध इति शेषः, प्रबालं—नवपल्लवं, भातीति शेषः, (ओष्ठवर्णनमिदम्।) अत्र कान्ताकेशपाशादिर्भिन्नोऽपि मयूरकलापाद्यभेदेनाध्यवसीयते।

अत्रेति।—केशपाशादेः इत्यादिपदेन भालनेत्रनासाऽधरग्रहणम्।

सादृश्यनिबन्धनाभेदारोपरूपातिशयोक्तिमुदाहृत्य एकशब्दप्रतिपाद्यत्वनिबन्धनाभेदारोपरूपामुदाहरति—यथा वेति। अत्र युगपद्वृत्तिद्वयस्य स्वार्थोपस्थापकत्वाङ्गीकारेण शक्यलक्ष्ययोरेकदेव एकशब्दोपस्थाप्यत्वम्

इत्यभिप्रायेणाह, अत्रेति ।—चेतनगतं मौनित्वं वचनाभावरूपम्, अचेतनगतञ्च ध्वन्यभावरूपम्; आद्ये शक्तिः, द्वितीये लक्षणा, ताभ्यामेकदैव उभयमुपस्थाप्यते श्लेषेण ।

एक शब्दप्रतिपाद्यत्वनिबन्धनाभेदारोपरूपामतिशयोक्तिमुदाहरति, एवमिति ।—अत्र द्वयोरप्येकत्वनिबन्धनकार्य्यसाधनत्वरूपाऽतिशयोक्तिरवधेया ।

## लक्ष्मी

सम्प्रत्ययस्याः पञ्चविधत्वं प्रदर्शयति—**भेद** इति । भेदेऽपि सत्यादसत्यार्थस्यातिरिक्तत्वेऽपि अभेदः तदनतिरिक्तत्वेन सम्भावना सत्यस्य पदार्थस्य सम्बन्धेऽपि असम्बन्धः असम्बन्धसम्भावना तयोर्भेदेऽप्यभेदस्य सम्बन्धेऽप्यसम्बन्धस्य च विपर्ययौ विपरितौ अर्थात् अभेदेऽपि भेदसम्भावना, असम्बन्धेऽपि सम्बन्धसम्भावना तथा कार्यहेत्वोः कार्यकारणयोः पौर्वापर्यात्ययः पौर्वापर्ययोः पूर्ववर्त्तित्वपरवर्त्तित्वयोरत्यय उल्लङ्घनम् । अत्र यथासङ्ख्यक्रमेण नान्वयः किन्तु आसत्तिक्रमेणैवेत्यवधेयम् । एवञ्च कारणस्य पूर्ववर्त्तित्वं कार्यस्य परवर्त्तित्वं निश्चितमेव, तत्र यदि कारणात् कार्यस्य पूर्ववर्त्तित्वसम्भावना तत्तुल्यसमयस्थायित्वसम्भावना वा भवेत् तदेत्यर्थः, ततस्तस्माद्धेतोः सा अतिशयोक्तिः पञ्चधा पञ्चविधा भवेत् । एवञ्च भेदे अभेदः, अभेदे भेदः, सम्बन्धे असम्बन्धः, असम्बन्धे सम्बन्धः कार्यकारणयोः पौर्वापर्यव्यत्यासश्चेति पञ्चविधातिशयोक्तिः फलिता ।

कारिकायाः कठिनांशं स्फोरयति—**तद्विपर्ययाविति** । स्पष्टम् । उदाहर्त्तुमुपक्रमते—अत्रेति । एषु पञ्चसु भेदेषु मध्य इत्यर्थः ।

**कथमुपरीति** । कस्याश्चित् कामिन्याः केशादिवर्णनेयम् । उपरि शिरसि कलापो बर्हमस्यास्तीति कलापी तस्य मयूरस्येत्यर्थः, कलापो बर्ह कथम् ? अस्याश्च कथमुपरिभागशिरसीतिमहदाश्चर्यमित्याशयः । तस्य कलापस्य तले अधोभागे अष्टम्यास्तिथेरिन्दुश्चन्द्रस्तस्य खण्डम् अर्धपूर्णचन्द्रस्य खण्डमित्यर्थः, विलसति शोभते कथम् ? अर्द्धश्चन्द्रो महेश्वरस्य ललाटदेशे दृष्टिचरः अथ कथं बर्हस्याधोभाग ? इति महदाश्चार्यमितिभावः । ततस्तस्याष्टमीन्दुखण्डस्य 'तले' इति पूर्वतोऽनुषञ्जनीयम्, विलोलं विशेषेण चञ्चलं कुवलययुगलम् इन्द्रीवरद्वयम् ।

'श्यामं शितिकण्ठनीलं कुवलयमिन्दीवरञ्च नीलाब्जम्' इति नाममाला,

विलसति कथम् ? नीलकमलं सरोवरजले दृष्टचरम् अथ कथं चन्द्रखण्डस्याधोभाग इति महदाश्चर्यमित्याशयः । यस्य च कुवलययुगलस्य च अधोऽधस्तात् कुवलययुगलस्याधोभाग इत्यर्थः तिलकुसुमं तिलपुष्पं विलसति कथम् ? तिलपुष्पं हि प्रायस्तिलद्रुमोपरि दृष्टचरम् अथ कथं कुवलस्याधोभाग इति महदाश्चार्यमितिभावः । अस्मात् तिलकुसुमात् अधश्च प्रवालं विद्रुमो नवपल्लवो वा विलसति कथम् ? तिलकुसुमस्याधोभागे वृन्तस्यैव दृष्टचरत्वम् अथ कथं प्रवालमिति महदाश्चर्यमिति भावः । 'प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे' इति हैमः, पुष्पिताग्राच्छन्दस्तल्लक्षणञ्चोक्तं प्रागेव ।

लक्ष्ये लक्षणं संयोजयितुमाह—**अत्रेति** । **कान्ताकेश**पाशादेरित्यत्रादिपदेन ललाटलोचननासिकाधराणां परिग्रहः । **मयूरकलापा**दिभिरित्यत्रादिपदेन अष्टमीन्दुखण्डकुवलयतिलकुसुमप्रवालानां परिग्रहः । सहार्थे चेयं तृतीया । अभेदेनेति । तृतीयेयमभेदार्थे । अत्र कामिन्याः केशपाशादिरूपेणैव प्रत्यक्षदृष्टचरत्वेन केशपाशादय एव सत्यभूताः, कलापादिरूपेण तु प्रत्यक्षदृष्टचरत्वाभावेन ते पुनरसत्यभूता इति केशपाशादीनां कलापादिरूपेणाध्यवसानाल्लक्षणसमन्वयः । **अध्यवसाय** इति । तथा च कलापित्वे प्रशस्तकेशा कामिनी, कलापत्वेन केशपाशः,

अष्टमीन्दुखण्डत्वेन ललाटम्, कुवलययुगलत्वेन लोचनद्वन्द्वम्, तिलकुसुमत्वेन नासिका प्रवालत्वेनाधरश्चाध्यवसितः, केशपाशादिभ्यः कलापादीनां परस्परं भेदेऽपि सादृश्यातिशयेनाभेदाध्यवसायाद्भेदे अभेदाध्यवसायरूपातिशयोक्तिरिति चावधेयम्। अत्रारोपविषयाणां केशपशादीनामनुपादानादेव निषेधव्यञ्जनरूपाधःकरणम्। एवमुत्तरोत्तरमपि विषयानुपादाने बोध्यम्। विषयोपादाने तु रूपकमेवेति तत्त्वविदो वदन्ति।

इत्थं सादृश्यनिबन्धनाभेदरोपातिशयोक्तिमुदाहृत्य एकशब्दप्रतिपाद्यत्वनिबन्धनाभेदरूपामतिशयोक्तिमुदाहरति—**यथा** वेति। (यद्वा) स्वनिर्मितपद्यस्याप्रामाण्यशङ्कयारुचिं मन्वानः प्राचीनोदाहरणमुदाहर्त्तुमाह—**यथा** वेति। (यद्व) **विश्लेषदुःखदिति**। व्याख्यातपूर्वमिदम्। अत्र युगपद्वृत्तिद्वयस्य स्वार्थोपस्थापकत्वस्वीकारेण शक्यलक्ष्ययोरेकदैवेकशब्दोपस्थाप्यत्वमित्याशयेनाह—**अत्रेति**। अत्र परस्परात्यन्तभेदसूचनाय अन्यशब्दद्वयोपादानम्। अन्यत्सर्वं सुगमम्। तथा च मनुष्यात्मकचेतनगतमौनित्वं हि वस्तुतोऽवचनमत्वम्, नूपुराद्यचेतनगतं तद्धि शब्दमात्रशून्यत्वयोश्चोभयोर्भेदेऽपि ध्वन्याभावरूपमिति यावत्। आद्ये शक्तिर्द्वितीये लक्षणा श्लेषेण युगपद्रवृत्तिद्वयं ताभ्यामेकदैवोपस्थाप्यते ततश्चोभयोर्भेदेऽपि अभेदाध्यवसायादतिशयोक्तिरित्याशयः।

एवं शक्तिलक्षणोभयोपपादिताश्लेषेणोदाहरणं प्रदर्श्य केवलशक्त्युपपादितश्लेषेणाऽप्युदाहरणं प्रदर्शयितुमाह—**एवमिति**। **सहाधरेति**।

'समुन्नतं कुचद्वन्द्व वीक्ष्य जातः स्मरार्दितः।' इतिमत्पूरितोत्तरार्द्धम्।

प्रियः कान्तः, यौवने तारुण्ये अस्याः कान्ताया अधर ओष्ठमेव दलं पल्लवं तेन सह रागं लौहित्यं रक्तं च भजते इति रागभाक्, यथायथाऽधरदलं लौहित्यं सञ्जातं तथा तथा कान्तोऽपि तस्यां रक्तो जात इति भावः।

लक्ष्यं संयोजयति। **अत्रेति**। **द्वयोरभेद** इति। रागपदश्लेषादितिशेषः। तथा च लौहित्यप्रेम्णोर्भेदेऽपि शक्तिप्रतिपाद्यरागपदश्लेषेण प्रिये सत्यस्य प्रेमात्मकरागस्य प्रिये असत्येन लौहित्यलक्षणरागरूपेण सम्भावनया अभेदाध्यवसायादतिशयोक्तिरिति भावः।

अभेदे भेदातिशयोक्तिमुदाहर्त्तुमाह—**अभेद** इति।

## रुचिरा

अस्याः प्रभेदाँल्लक्षयति—१२७ **भेदे**। 'विषयविषयिणो'रिति शेषः। **अपि**। **अभेदः**। तथा-**सम्बन्धे**। 'अपी'ति शेषः। **असम्बन्धः**। तथा-**तद्विपर्य्ययौ** तयोर्भेदेऽप्यभेदस्य सम्बन्धेऽप्यसम्बन्धस्य च विपर्य्ययो विपरीतौ। एवम्-**कार्य्यहेत्वोः** कार्य्यकारणयोः। **पौर्वापर्यात्ययः** पौर्वापर्य्यस्य पूर्वपश्चाद्भावस्यात्यय उल्लङ्घनम्। 'यतोऽस्या' मिति शेषः। **ततः**। **साऽतिशयोक्तिः**। **पञ्चधा**॥ १००॥

कारिकायाः कठिनांशं सुगमयति—**तदित्यादिना**। स्पष्टम्। इदं बोध्यम्-अध्यवसायस्य सिद्धत्वमतिशयोक्तिः, सा च पञ्चविधा, भेदेऽप्यभेदप्रतिपत्तिरूपा, सम्बन्धेऽप्यसम्बन्धप्रतिपत्तिरूपा, अभेदेऽपि भेदप्रतिपत्तिरूपा, असम्बन्धेऽपि सम्बन्धप्रतिपत्तिरूपा, कार्य्यकारणयोः पूर्वपश्चाद्भावत्वेऽपि पूर्वपश्चाद्भावस्य विपर्य्ययस्तत्त्वप्रतिपत्तिरूपा चेति। अध्यवसायस्य सिद्धावस्था व विषयिणा विषयस्य विषयस्य निगरणं, तच्चाधःकरणम्। अथ-अत्र विषयस्य विषयिणा भेदेऽप्यभेदप्रतिपत्तिस्तत्र विषयस्य विषयितया पर्य्यवसाने विषमस्य निगरणं स्पष्टम् एवम् यत्र विषयस्य विषयिणाऽभेदेऽपि भेद प्रतिपतिस्तत्र विषयस्य विषय्यभिन्नत्वेऽपि विषयितो भेदप्रत्यायनं विषयस्य निगरणम्। यत्र च यस्य कस्यापि वस्तुनो येन केनापि वस्तुना यस्मिन्

कस्मिंश्चित्सम्बन्धसद्भावेऽपि तस्य वस्तुनस्तेन वस्तुना तस्य सम्बन्धस्याप्रत्यायनं, तत्र यस्य सम्बन्धस्य तस्य तदेव निगरणमिति स्फुटं विषयनिगरणम्। एवम्-यत्र यस्य कस्यापि वस्तुनो येन केनापि वस्तुनां यस्य कस्यचित्सम्बन्धस्याभावेऽपि तस्य तेन तस्य सम्बन्धस्य प्रत्यायनम्, तत्र तस्याभावस्य निगरणं विषयनिगरणम्। अथ-यस्य कार्य्यस्य यत् कारणं तस्य तत् पूर्वभावि, अस्य च तत् पश्चाद्भावीति नियमः, अस्य च यत्र विपर्य्ययः कारणात् प्राक् कार्य्यस्य, कारणस्य समकाले वा कार्य्यस्य सद्भावः, तत्र तादृशनियमभङ्ग एव विषयनिगरणम्। इति। सर्वेष्वप्येषु पञ्चसु भेदेषु सामान्यलक्षणानुगतेर्न काऽपि अनुपपत्तिः, तथा च—यत् पञ्चधैव लक्षणलक्षणं, तज्झटित्यवबोधार्थमेव। अत एव तत्तद्व्याख्यातारः—अतिशया उक्तिरित्यतिशयोक्तिरित्येवं सामान्यं लक्षणं व्याचक्षाणा आसामन्योऽन्यं सजातीयत्वं समादधते। इति दिक्।

उदाहर्त्तुमुपक्रमते—**अत्रैषु** पञ्चसु भेदेषु मध्ये इति यावत्। **भेदे**। **अभेदः**। **यथा**। **मम**। **'कलापिनोमयूरस्य**। कलापो बर्हमस्यास्तीति कलापी। 'अत इनिठनौ।'५/२/११५ इतीनिः। **उपरि** शिरसीति भावः। **कलापो** बर्हम्। 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च।' इत्यमरः। **कथम्**। **विलसति**! मयूरस्य बर्ह पुच्छवर्त्त्येव दृष्टचरम्, अस्य च कथमुपरिभागे इत्याश्चर्य्यमिति भावः। **तस्य** कलापस्य। **तलेऽ**धोभागे। **अष्टमीन्दुखण्डमष्टम्या** इन्दुश्चन्द्रस्तस्य (अष्टकलस्यात एवार्द्धपूर्णस्य चन्द्रस्य) खण्डम्। 'कथं विलसती'ति पूर्वतोऽनुषज्यते। अर्द्धश्चन्द्रः शिवस्य भाले दृष्टचरः, अथ कथं बर्हस्याधोभाग इत्याश्चर्य्यमिति भावः। **तत**स्तस्याष्टमीन्दुखण्डस्येति भावः। 'तले'इति पूर्वतोऽनुषज्यते। **विलोलं** विशेषेण चञ्चलम्। **कुवलयुगलं** कुवलयस्य नीलोत्पलस्य युगलं युग्मम्। 'कथं विलसती'ति पूर्वतोऽनुषज्यते। 'श्यामं शितिकण्ठनीलं कुवलयमिन्दीवरं च नीलाब्जम्।' इति नाममाला। नीलकमलं सरोवरस्य जले दृष्टचरम्, अथ कथं चन्द्रखण्डस्याधोभागे इत्याश्चर्यमिति भावः। तत्तस्मात्। अधोऽधस्तात्। कुवलययुगलस्याधोभागे इति भावः। **तिलकुसुमं** तिलपुष्पम्। 'कथं विलसती'ति पूर्वतोऽनुषज्यते। तिलवृक्षस्योपरि तदीयं पुष्पं प्रायो दृष्टचरम्, अथ कथं कुवलययुगलस्याधोभागे इत्याश्चर्य्यमिति भावः। **अस्मात्** तिलकुसुमात्। 'अध'इति देहलीदीपकन्यायेन काकाक्षिगोलकन्यायेन वाऽनुषज्यते। **प्रवालं** विद्रुमो नवपल्लवो वा। 'कथं विलसी'ति पूर्वतोऽनुषज्यते। 'प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे।' इति हैमः। तिलपुष्पस्याधोभागे वृन्तस्यैव दृष्टचरत्वम्, अथ कथं प्रवालमित्याश्चर्य्यमिति भावः। पुष्पिताऽग्रावृत्तम्॥ १५२॥

लक्ष्यं समर्थयते-**अत्र**। **कान्ताकेशपाशादेः**। आदिपदेन ललाटलोचननासिकाऽधराणां ग्रहणम्। **मयूरकलापादिभिः**। आदिपदेनाष्टमीन्दुखण्डकुवलयतिलपुष्पप्रवालानां ग्रहणम्। सहार्थे तृतीयेयम्। **अभेदेन**। अभेदार्थेयं तृतीया। **अध्यवसायः**। इदं तत्त्वम्-अत्र कलापित्वेन प्रशस्तकेशा कान्ता, कलापत्वेन केशपाशः, अष्टमीन्दुखण्डत्वेन ललाटम्, कुवलययुगलत्वेन लोचनद्वन्द्वम्, तिलकुसुमत्वेन नासिका, प्रवालत्वेनाधरश्चाध्यवसितः, एषां परस्परं भेदेऽपि सादृश्यातिशयेनाभेदोऽध्यवसितः। अत एव कान्ताऽऽदेर्निगरणम्। एतञ्च शब्दानुपादानमूलम्। इति।

उदाहरणान्तरं दर्शयति—**यथा वा**—**'सैषेत्यादिना**। व्याख्यातपूर्वमिदम्। उदाहरणफलं दर्शयति—अत्रेत्यादिना। स्पष्टोऽर्थः। अयम्भावः—मौनं हि वस्तुतोऽवचनत्वम्, तञ्च यद्यपि चेतनविशेषधर्म्मः, तथाऽपि तस्याचेतन(नूपुर) धर्मेण (ध्वन्यभावेन) सममभेदेनाध्यवसितत्वम्। इति।

पुनरुदाहरणान्तरं दर्शयति—**एवम्**—'**अस्याः** कान्तायाः । **अधरदलेनाधर** एव दलं तेन । **सह** । **यौवने** । **प्रियः** । **रागभाक्** । यथायथाऽधरदलं रक्तं, तथातथा कान्तस्तस्यां रक्तो जात इति भावः ।' 'कान्तायाश्चोन्नातो जातः स्तनद्वन्द्वेन च स्मरः ॥' इति शेषः ।'

उदाहार्य्य निर्दिशति-**अत्रे**त्यादिना । स्पष्टोऽर्थः । अयम्भावः—अधरस्य रागो लोहितवर्णत्वम्, तस्यैव तत्र सम्भवात्, प्रियस्य तु न लोहितवर्णत्वमुपयुक्तम्, किन्तु प्रेमैव रागशब्दवाच्यम्, अस्यैवात्र सम्भवात्। इत्येवम्प्रेमित्वापरपर्य्यायस्य रागभाक्त्वस्य प्राधान्येन प्रियगतत्वेनैवोपपत्तौ तस्य च लोहितवर्णत्वेनाध्यवसीयमानत्वे भेदेऽप्यभेदः सम्पद्यते । अयं च श्लेषमूलः । इति ।

अभेदे भेदो यथा—

**'अन्यदेवाङ्गलावण्यमन्याः सौरभसंपदः ।**

**तस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकम् ॥'**

---

## विवृतिः

**अन्यदेवेति** । सरसत्वं रसबोद्धवृत्वम् ॥

## विज्ञप्रिया

**अन्यदेवेति** । अङ्गलावण्यादेर्वैलक्षण्यात्तत्रैव तद्भेदारोपः । **सरसत्वमिति** । रसिकत्वमित्यर्थः । लौकिके तस्मिन्नलौकिकभेदारोपः । अत्रान्यत्वाद्यारोपानुक्तस्यापि तद्विषयलावण्यस्य निषेधव्यञ्जना ।

## कुसुमप्रतिमा

अन्यदेवेति । तस्याः पद्मस्य पलाशे दले इव अक्षिणौ चक्षुषौ यस्यास्तस्याः नायिकायाः, अङ्गानां लावण्यम् अन्यत् साधारणनायिकालावण्यतो भिन्नम्; सौरमसम्पदः अङ्गानां सौगन्ध्यमसमृद्धयः, अन्याः साधारणविलक्षणाः, सरसत्वं रसिकता च अलौकिकं मर्त्यलोकातीतम् ।

अत्र अन्यासु नायिकासु यज्जातीयं लावण्यादिकं तस्या नायिकायामपि तज्जातीयमेव लावण्यादिकमिति लावण्यदेरभेदेऽपि यथार्थस्य साधारणलावण्यादेरयथार्थेन असाधारणलावण्यादिरूपेण सम्भावनया भेदाध्यवसायादतिशयोक्तिरिति भावः ।

## विमला

अभेदे भेदमुदाहरति, अन्यदिति ।—तस्याः पद्मपलाशाक्ष्याः,—कमलदललोचनायाः, अङ्गलावण्य—देहकान्तिः, अन्यदेव—असाधारणमेवेत्यर्थः, सौरभसम्पदः,—गुणपरम्पराः, अन्याः,—असाधारण्यः इत्यर्थः, एवेति पूर्वतोऽन्वेति; तथा सरसत्वं—रसिकत्वं, रसबोद्धृत्वमित्यर्थः, अलौकिकं—लोकातीतम्, अन्यदेवेति यावत् । अत्र अभिन्नमपि अङ्गलावण्यादिकं भिन्नत्वेनाध्यवसीयते ।

## लक्ष्मी

उदाहरति—**अन्यदेवेति** । तस्याः पद्मपलाशाक्ष्याः पद्मपत्रसदृशायतसुन्दरनयनाया नायिकायाः अङ्गलावण्यं शरीरसौन्दर्यविशेषः अन्यत् साधारणनायिकालावण्यतो भिन्नम् अलौकिकमित्यर्थः, सौरभसम्पदः अङ्गानां सौरभसम्पत्तयः, अन्याः साधारणविलक्षणा अलौकिका इत्यर्थः, रसोऽनुरागस्तेन सह वर्त्तते इति तस्या भावस्तवम् अलौकिक मर्त्यलोकातिक्रान्तमेव एवकारः पूर्वतोऽनुपञ्जनीयः ।

अत्र अन्यनायिकासु यादृशं लावण्यादिकं तस्यां नायिकायामपि तादृशमेव लावण्यादिकमिति लावण्याद्यभेदेऽपि असाधारणलावण्याद्यात्मना भेदाध्यवसायादतिशयोक्तिरित्याशयः। **'सौरभसम्पद'** इत्यत्र तु भेदेऽभेदातिशयोक्तिः, माधुर्यादिगुणसमूहस्य सौरभसम्पत्तेर्भिन्नत्वेऽपि अभिन्नत्वेनाध्यवसानात्।

सम्बन्धेऽप्यसम्बन्धमुदाहरति—**सम्बन्ध** इति।

## रुचिरा

अभेदे भेदातिशयोक्तिमुदाहर्त्तुमाह—**अभेदे** इत्यादि। स्पष्टम्। '**तस्याः**। **पद्मपलाराक्ष्याः** पद्मपत्रसदृशायतसुन्दरनेत्रायाः। **अङ्गलावण्यं** शरीरस्य सौन्दर्य्यविशेषः। **अन्यत्** भिन्नमलौकिकमिति यावत्। **एव**। **सौरभसम्पदः** सौरभस्य सम्पदः सम्पत्तयः। **अन्या** भिन्ना अलौकिकाः। 'एवो ति पूर्वतोऽन्वेति। तथा-**सरसत्वं** रसोऽनुरागस्तेन सह वर्त्तत इति तस्या भावस्तत्त्वम्। **अलौकिकं** लोकेऽदृष्टचरमिति भावः। 'एवे'ति पूर्वतोऽन्वेति। अत्र लोकप्रसिद्धलावण्याद्यभेदेऽपि भेदो वर्णितः, एवं सति 'अन्यदेवे'त्याद्युक्तदिशाऽस्या लावन्यादौ लावण्याद्यन्त्रादतिशयोऽवगम्यत इति स्फुटो लावण्याद्यन्तरतोऽभेदेऽपि भेदाध्यवसायः। 'सौरभसम्पद' इत्यत्र तु भेदेऽप्यभेदातिशयोक्तिः, माधुर्य्यादिगुणपुञ्जस्य सौरभसम्पत्तेर्भिन्नत्वेऽपि अभिन्नत्वेनाध्यवसानात्॥' यथा वा मम-'स्मितमपरं रुचिरपरा, नयनयुगस्यापरं च चापल्यम्। अपरैव नासिकेयं मुखरचना ते ह्यलौकिकी कान्ते॥' इति॥ १५३॥

संबन्धेऽसंबन्धो यथा—

**'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः**
**शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।**
**वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो**
**निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥'**

अत्र पुराणप्रजापतिनिर्माणसंबन्धेऽप्यसंबन्धः।

---

## विवृतिः

**अस्या इति**। सर्गविधौ सृष्टिकर्मणि। चन्द्रः प्रजापतिरभूत्। नु वितर्के। चन्द्रस्य कान्तिमयत्वात्कान्तिप्रदत्वं संभाव्योक्तम्। मदन इति प्रजापतिरभूदित्यन्वयः। अत्र हेतुः—शृङ्गारेति। पुष्पाकरश्चैत्रः। अत्र सौरभ्यसौकुमार्यास्पदत्वं हेतुर्बोध्यः। अस्य प्रसिद्धत्वान्न निर्हेतुकत्वदोषः। यद्वा शृङ्गारैकरस इति चैत्रस्यापि विशेषणम्। ननु विधिरेव कस्मादस्या निर्माता नेत्यत आह—**वेदेति**। वेदाभ्यासेन परमतात्पर्यपर्यालोचनेन जडो विषयोपभोगाचतुरः, अत एव विषयव्यावृत्तकौतूहलः। पुराण इति प्रजापतिरिति संबन्धः। मुनिर्मननशीलः। एतेन सृष्टिकर्मणि चित्तैकाग्रत्वं नास्तीति सूचितम्। तद्विनैतादृशरूपसृष्टिर्न भवतीति भावः। इदं **काव्यप्रकाशे** शुद्धसंदेहोदाहरणत्वेनोपन्यस्तम्। तन्मते विधेर्निर्मातृत्वव्यावृत्तिरपि **संशयितैवेति** न निश्चयान्तत्वमस्य॥

## विज्ञप्रिया

**अस्याः सर्गविधौ** इति। नु वितर्के। अस्या निर्माणविधौ प्रजापतिर्निर्माता चन्द्रः यतोऽसौ कान्तिप्रदः कान्तिमत्त्वेनैव तस्य कान्तिप्रदत्वं सम्भाव्योक्तम्। स्वयं मदनो नु यतोऽसौ शृङ्गारैकरसः। इयं हि शृङ्गारिणी। पुष्पाकरे चैत्रमासे अपि शृङ्गारैकरसत्वाऽन्वयः। मूलविधातृभावं कथं खण्डयसीत्यत्राह—**वेदाभ्यासेति**। पुराणो जीर्णः। मुनिः मुनिधर्मा तपस्वीत्यर्थः अत्र। चन्द्रादेर्विधातृत्वकथनादारोपविषयस्य विधातृसम्बन्धस्य निषेधव्यञ्जना।

## कुसुमप्रतिमा

अस्या इति। विक्रमोर्वशीत्रोटके उर्वशीमवलोक्य पुरुरवसो वितर्कोऽयम्। अस्या उर्वश्याः, सर्गविधौ सृष्टिकार्य्ये, कान्तिप्रदः सौन्दर्य्याधायकः, चन्द्रो नु किं प्रजापतिः सृष्टिकर्त्ता अभूत्? कथमन्यथा ईदृशमस्याः सौन्दर्य्य भवेदिति भावः। अथवा शृङ्गारः एव एको रसो यस्मात्तादृशः स्वयं मदनः कामदेवो नु किं प्रजापतेरभूत्? इतरथा कथमियमीदृशी शृङ्गारोद्दीपिनी स्यादित्याशयः। अथवा पुष्पाकरो मासश्चैत्रो नु किं प्रजापतिरभूत्? अन्यथा तु कथमस्या अङ्गानामीदृशी पुष्पवलोभनीयता सम्भवेदित्यभिप्रायः। ननु भगवान् नारायण ऋषिरेवैनां निजादूरुदेशादुत्पादितावानिति पुराणप्रसिद्धिसत्त्वे कथमीदृक् वितर्क्यत इत्याह वेदेति। वेदानामभ्यासेन सर्वदा तत्तात्पर्य्यपर्य्यालोचनेनेत्यर्थः जड़ो विषयान्तरेषु मूर्खः, अतएव च विषयेभ्यो भोग्यपदार्थेभ्यो व्यावृत्तं निवृत्तं कौतूहलं कौतुकं

यस्य तादृशः, पुराणो वृद्धतमः, एतेन चिरविलुप्तरसानुभवशक्तिरिति सूचितम्, मुनिर्नारायण ऋषिः इदं मनोहरं रूपं निर्म्मातुं कथं प्रभवेत् शक्तुस्यात् अपि तु कथमपि नेत्यर्थः । नहि गुणानभिज्ञो गुणवन्तं निर्म्मातुमर्हतीति भावः ।

अत्रेति । यथार्थस्य पुराणप्रजापतिनिर्म्माणसम्बन्धस्य अयथार्थेन तन्निर्म्माणासम्बन्धरूपेण सम्भावनया मूललक्षणसङ्गतिरपि द्रष्टव्या । अत्र अन्वस्य निर्म्माणकर्त्तृत्वे दृढनिश्चयाभावादेव परार्द्धेन प्रजापते निर्म्माणकर्त्तृत्वव्यावृत्तिरपि सन्दिग्धैवेति काव्यप्रकाशकृता शुद्धसन्देहालङ्कारे इदमुदाहृतमपि युक्तमेव । तेन शुद्धसन्देहातिशयोक्त्योरेकाश्रयानुप्रवेशरूपः सङ्कर एवेति तत्त्वम् ।

## विमला

सम्बन्धे असम्बन्धमुदाहरति, अस्या इति ।—उर्वशीं दृष्ट्वा पुरुरवसो वितर्कवर्णनमिदम् । अस्याः,—उर्वश्याः, सर्गस्य—उत्पत्तेः, विधिः,—विधानं तत्र, सृष्टिकर्मणीत्यर्थः, चन्द्रः नु (इदं वितर्के) कान्तिं—शोभां, सौन्दर्य्यमिति यावत्, प्रददातीति तथाभूतः, (चन्द्रस्य कान्तिमयत्वात् कान्तिप्रदत्वं सम्भाव्योक्तम्) प्रजापतिः,—स्रष्टा, अभूत् ? चन्द्राख्येण प्रजापतिना सौन्दर्य्यमुत्पादितमिति भावः; श्रृङ्गाररस्य एकः,—मुख्यः, असौ रसो यस्य तथाविधः, मदनः,—कामेदवः, स्वयं नु—साक्षात् खलु, प्रजापतिरभूत् ? इत्यन्वयः; अन्यथा कथमेवं कुसुमवत् अङ्गान सौकुमार्य्यमिति भावः; पुष्पाणामाकरः तथाभूतः,—वसान्तः, चैत्र इत्यर्थः, मासः, नु प्रजापतिरभूत् ? इति पूर्वतोऽन्वेति; यद्वा—अस्याः,—उर्वश्याः, सर्गविधौ चन्द्रो नु कान्तिप्रदः,—सौन्दर्य्याधायकः, प्रजापतिरभूत् ? किंवा श्रृङ्गारमात्रपरः खलु मदनः, कामः, कान्तिप्रदः प्रजापतिरभूत् ? आहोस्वत् पुष्पाकरः उपचाराच्चैवाख्यः, खलु मासः कान्तिप्रदः प्रजापतिरभूत् ? (सौरभ्यसौकुमार्य्यास्पदत्वमत्र हेतुर्बोध्यः) अस्य प्रसिद्धत्वान्न निर्हेतुश्चत्वदोषः; यद्वा—श्रृङ्गारैकरसः" इति चैत्रस्यापि विशेषणं, तस्य वासन्तभासत्वत् वसन्तस्य च स्मरोद्दीपकत्वात् । ननु प्रसिद्धं प्रजापतिं तथाऽनवधार्य्य किमन्यमेवं कल्पसे ? इत्याहशङ्क्याह, वेदेति ।—वेदानाम् अभ्यासेन—पुनः पुनरनुशीलनेन परमतात्पर्य्यपर्य्यालोचनेनेत्यर्थः, जड़ः,—कर्त्तव्यविमूढ़, विषयोपभोगाचतुर इति यावत् कामयव्यापारानभिज्ञ इति भावः, अत एव विषयेभ्यो व्यावृत्तं—निवत्तं, कौतूहलम्—औत्सुक्य यस्य तथाभूतः, पुराणः,—वृद्धः, अत एव विकल इति यावत्, मुनिः,—मननशील; नारायण-ऋषिः इत्यर्थः, [एतेन सृष्टिकर्मणि चित्तैकाग्रत्वं नास्तीति सूचितम्] तद्भिनैतादृशरूपसृष्टिर्न भवतीति भावः; इदम्—ईदृशं, मनोहरं—सौन्दर्य्यातिशयेन सर्वेषां चेतोवृत्तेराकर्षकमिति भावः, रूपं निर्मातुं—रचयितुं, कथं नु—केन प्रकारेण, केनोपायेन वा, प्रभवेत् ?—समर्थो भवेत् ? पुरा किल नारायणं भगवन्तं तपः परं विलोक्य, तपसा विजित्य स्वर्गाधिपत्यमयं कामयते इति त्रस्तैः देवैस्तं तपसो निवर्त्तयितुं सवसन्ताप्पुरस्कः कामदेवः आज्ञप्तः, स च तत्सविधे वसन्तेन स्वप्रभावे प्रदर्शिते अप्सरसः प्रवर्त्तितवान्, ताश्च स्वविलासवैभवेन तं मोहयितुं प्रवृत्ता अपि यदा न प्रभवन्ति स्म, तदा भीतास्ताः सन्तोषयितुं भगवान् नारायणः स्वकीयादूरोरनेका अद्‌भुतसौन्दर्य्या अप्सरस उद्‌भाव्य ता ग्रहीतुमाज्ञप्तवान्, ताश्च तासां यामेकामादाय निर्जग्मः, सैवेयमुर्वशीति पौराणिकी गाथाऽत्रानुसन्धेया । इदं काव्यप्रकाशे शुद्धसन्देहोदाहरणत्वेन उपन्यस्तं, तन्मते विधेर्निर्मातृत्वव्यावृत्तिरपि संशयितैवेति न निश्चयान्तत्वमस्य इति ज्ञेयम् । शार्दूलविक्रीड़ितं वृत्तम् । विक्रमोर्वश्याः पद्यमेतत् ।

अत्र पुराणेति ।—एवञ्च पुराणमुनेर्निर्मातृत्वेऽपि तदनिर्मातृत्वसम्बन्धेनाध्यवसानात् सम्बन्धातिशयोक्तिरियम् ।

## लक्ष्मी

अस्याः **सर्गविधाविति**। विक्रमोर्वशीयत्रोटके प्रथमेऽङ्के उर्वशीं प्रकृत्य पुरूरवसो वितर्कोऽयम्। अत्र 'नु प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयोः' इति**हेमचन्द्रकौशात्** पूर्वार्धनुशब्दा वितर्कार्थाः। अस्या सुन्दर्या उवर्श्याः, सर्गविधौ सृष्टिकार्ये निर्मितिसम्पादन इत्यर्थः कान्तिप्रदः सौन्दर्यदायकः चन्द्रो नु किं प्रजापतिः सृष्टिकर्त्ता अभूत्? अपूर्वकान्तेश्चन्द्रत एव सम्भवात् कथमन्यथैवंविधा कान्तिर्भवेदिति भावः। किं वा श्रृंगार एव एकः प्रधानो रसो यस्मात्तादृशः स्वयं साक्षात् मदनः कामदेवो नु किम् प्रजापतिरभूत्? श्रृङ्गारोद्दीपकरूपलावण्यादेस्तत्र एव सम्भवात् कथमन्यथेयमेवंविधा श्रृङ्गारोद्दीपनी स्यादित्याभिप्रायः। अथवा पुष्पाकरो वसन्त इत्यर्थः, अत्रैव पुष्पाणां विकासातिशयात्, न मा लक्ष्मीरित्यमा 'इन्दिरा लोकमाता मा' इत्यमरः, 'मास्त्री पद्मालयायां स्यात्' इति मेदिनी अमाम् अलक्ष्मीं दुर्भगत्वादिदोषं स्यत्येकपदं हरतीति तादृशः, 'षोऽन्तकर्मणि' अस्मात् 'आतोऽनुपसर्गे कः' इत्यनेन कः; सुभगत्वातिशयस्यान्यथासम्भवादित्याशयः। वसन्तस्य पुष्पाणामिवाङ्गनां सौभगभाजनत्वविधानं कविनिबद्धवक्तृप्रौढोक्तिसिद्धम्। एतेन अङ्गनां पुष्पाणामिव सौकुमार्याद्यतिशयमपि व्यञ्जितम्। तथा च अस्याः कान्तिश्चन्द्रप्रजापतिनिर्मिता, श्रृङ्गाररसिकत्वं साक्षान्मदनप्रजापति निर्मितम्, न त्वन्यप्रजापतिनिर्मितमितिनिष्कर्षः। ननु कथमनेकप्रजापतिकर्तृकमस्या निर्माणमुपपाद्यते? प्रसिद्धब्रह्मणैव तद्विधातुं शक्यत्वादित्यत आह—**वेदाभ्यासजड** इति। वेदानाम्, अभ्यासेन पुनः पुनराम्रेडनेन तत्तात्पर्यलोचनेन वा जडः कुण्ठितधीः कर्मान्तरानर्ह इत्यर्थः, अत एव विषयेभ्यो भोग्यपदार्थेभ्यो वनितादिभ्यो व्यावृत्तं निवृत्तं कौतूहलं कौतुकम् औत्सुक्यमितियावत् यस्य स तादृशः, पुराणो वृद्धो जरठ इति यावत् मुनिर्मननशीलो ब्रह्मेत्यर्थः इदं मनोहरं रूपं स्वरूपं निर्मातुं स्रष्टुं कथं नु प्रभवेत् शक्नुयात् कथमपि समर्थो नैव भवेदित्यर्थः। अतश्चन्द्रातिकर्तृकत्वमेवास्याः सर्गविधानं न तु प्रसिद्धप्रजापतिकर्तृकम्, नहि गुणानभिज्ञो गुणवन्तं निर्मातुं शक्नोतीति भावः। अत्र—

नारायणोरुं निर्भिद्य सम्भूता वरवर्णिनी। ऐलस्य दयिता देवी योषिद्रत्नं किमुर्वशी? ॥

इति हरिवंशवचनात्, 'ऊरुद्भवा नरसखस्य मुनेः सुरस्त्री' इत्यादिविक्रमोर्वशीयसन्दर्भाच्च—'मुनि'पदस्य नारायण इत्यर्थकरणं सर्वथापातरमणीयम् वेदाभ्यासजडत्वादेरुपपत्त्यभावात् नारायणस्य मुनित्वेऽपि पुराणत्वाभावात् उत्पादकत्वेऽपि निर्मातृत्वाभावाच्च, प्रकृते मुनिनिष्ठनिर्मातृत्वव्यवच्छेदस्यैव विवक्षितत्वेन 'ब्रह्मा' इत्येवार्थः न तु नारायण इत्यवधेयम्। अथ एव प्रजापतिपदस्वारस्यमपि। अत एव चामरेण प्रजापतिपर्यायपरिगणनावसरे 'ब्रह्मात्मभूः सुरज्येष्ठः पमेष्ठी पितामहः' इतिग्रन्थेन पितामह इति नाम परिगणितम्। एतेन कुसुमप्रतिमोक्तमप्यनुपादेयमेवेति। **शार्दूलविक्रीडितं** छन्दस्तल्लक्षणन्तूक्तं प्रागेव।

लक्ष्यं समर्थयति—अत्रेति। उदाहृते पद्य इत्यर्थः, पुराणो दक्षाद्यपेक्षया प्राचीनोऽसौ प्रजापतिस्तस्य निर्माणं कृतिस्तस्य सम्बन्धस्तस्मिन् तथोक्ते पुराणप्रजापतिकर्तृकनिर्माणस्य सम्बन्धे इत्याशयः। तथा च सकलजगत्सृष्टिकर्तृकत्वेन प्रजापतेः। जगदन्तःपातितयौर्वश्याश् सृज्यसर्जकत्वेन सम्बन्धः तस्य च वेदाभ्यासजडत्वादिना तादृशसर्जनासम्भवोपपादनेनासम्बन्धो दर्शित इति स्फुट एवायं सम्बन्धेऽप्यसम्बन्धः। काव्यप्रकाशकृद्द्वारा भेदानुक्तौ सन्देहालङ्कारे इदमुदाहृतमपि युक्तियुक्तमेव। तथाहि—'अस्याः सृष्टौ यः प्रजापतिः (निर्माता) अभूत स किं चन्द्रः किं वा मदनः किं वा वसन्त इति प्रजापतिधर्मिकश्चन्द्रत्वादिरूपविरुद्धनानाभावकोटिकः संशयः। एवञ्चात्रोपमेयभूतस्य प्रजापतेरुपमानभूतस्य चन्द्रादेर्वा कस्यापि वैधर्म्य नोक्तमिति भेदानुक्तौ सन्देहालङ्कारः। 'वेदाभ्यासजड' इत्यादिना जाडयादेधर्मस्योक्तावपि जाडयादेर्न भेदकधर्मत्वम्, तस्योपमानोपमेयान्यतरधर्मत्वा-

भावात्। परन्तु जडयादयो हि ब्रह्मणः चतुर्मुखस्य सृष्टिकर्तृत्वं निराकुर्वन्तश्चन्द्रादीनां सृष्टिकर्तृत्वसंशयमेव पुष्णन्ति। प्रसिद्ध सृष्टिकर्त्ता ब्रह्मा वेदाभ्यासजड इति सा नास्याः सृष्टिकर्त्तृतया सम्भवति अत एव सन्दिह्यते अस्याः सृष्टिकर्त्ता कः चन्द्रो वा मदनो वा वसन्तो वेति सन्देह एव वर्त्तत इति पूर्वार्द्धे सन्देहालङ्कार उत्तरार्द्धे चारिशयोक्ति-रित्यनयोरेकाश्रयानुप्रवेशरूपः सङ्कर एवेतिहृदयम्। **शुद्धोदाहरन्तु**—

**'पीयूषयूषकल्पामल्पामपि ते गिरं निपीतवताम्।**

**तोषाय कल्पते नो योषाधरबिम्बमधुरिमोद्रेकः॥'**

अत्र तोषसम्बन्धेऽप्यसम्बन्धः।

## रुचिरा

सम्बन्धेऽप्यसम्बनधमुदाहर्त्तुमाह—**सम्बन्ध** इत्यादि। स्पष्टम्। '**अस्या** उर्वश्याः। **सर्गविधौ** सर्ग उत्पत्तिस्तस्य विधिर्विधानं सम्पादनमिति यावत्तस्मिन्। विषये सप्तमीयम्। **चन्द्रः**। **कान्तिप्रदः** कान्तिं स्वशोभां प्रददाति समर्पयत इति तथोक्तः। 'आतश्चोपसर्गे।' ३/१/१३६ इति कः। **प्रजापतिर्**विधाता। **अभूत्। नु पुरा।** अत्र 'अभू'दित्यस्यैवातीतार्थवाचकत्वेऽपि पुराऽर्थ (अतीतार्थ) कस्य नुशब्दस्य प्रयोगोऽतीतार्थस्य दाढयार्थ इति बोध्यम्। एतेन 'नु प्रश्ने विकल्पे वेति ससन्देह' इति यद्रव्याख्यातं तदपास्तम्। 'नु प्रश्नोनुनयेऽतीतार्थे विकल्प-वितर्कयोः।' इति हैमः। अपूर्वकान्तेरन्यथाऽसम्भवादिदमुक्तम्। **स्वयं** साक्षात्। **मदनः** कामदेवः। **श्रृङ्गारैकरसः** शृङ्गारस्यैवानुभावयितेति भावः। श्रृङ्गारस्यैको मुख्यो रस आस्वादयितेति तथोक्तः। रसयत्यास्वादयतीति रसः। पचादित्वादच्। 'अस्याः सर्गविधौ प्रजापतिरभूत्'इत्यनुषज्यते। **नु** ('अत्रापि अतीतार्थमेवेदम्, तथैवातीतार्थस्य दाढर्य द्योतयते च)। श्रृङ्गाररसिकस्वातिशयस्यान्यथाऽसम्भवादिदमुक्तम्। **पुष्पाकरो** वसन्तः, अत्रैव पुष्पाणां विकासातिशयात्। **अमासो**ऽमामलक्ष्मीदुर्भगत्वादिदोषं स्यत्येकपदं हरतीति तथोक्तः। न मा लक्ष्मीरिति अमा। 'मा स्त्री पद्मालयायां स्यात्' इति मेदिनी। 'षो' अन्तकर्मणि इत्यस्मात् 'आतोऽनुपसर्गे कः।' ३/२/३ इति कः। 'अस्याः...' इति पूर्ववदनुषज्यते। **नु** (अत्राप्यतोतार्थकमिद 'मभू' दित्यर्थे द्रढयितुम्)। सुभगत्वातिशयस्या-न्यथाऽसम्भवादिदमुक्तम्। वसन्तस्य पुष्पाणामिवाङ्गनां सौभगभाजनत्वविधानं कविनिबद्धप्रौढोक्तिसिद्धम्। एतेन अङ्गानां पुष्पाणामिव सौकुमार्य्यादि अपि द्योतितम्। एवं च-अस्याः कान्तिश्चन्द्रप्रजापतिनिर्मिता, श्रृङ्गाररसि-कत्वं साक्षान्मदनप्रजापतिनिर्मितम्, सौभगत्वं च वसन्तप्रजापतिनिर्मितम्, न त्वन्यप्रजापतिनिर्मितमिति फलितोऽर्थो, द्योतितश्च सौन्दर्य्यातिशयश्च तस्याः। नन्वेवमनेकप्रजापतिकर्त्तृकमस्या निर्माणं किमित्यध्यवसीयते? प्रसिद्धेनै-केनैव ब्रह्मणा तत्सम्पादयितुं शक्तत्वादित्याह-**वेदाभ्यासजडो** वेदानामभ्यासः पुनः पुनराम्रेडनमनुशीलनं वा तेन जडः कर्मान्तरानर्हः। अतएव-**विषयव्यावृत्तकौतूहलो** विषयेभ्यश्चक्षुरादिग्राह्येभ्यो व्यावृत्तं निवृत्तं कौतूहलं कौतुकं चक्षुरादिप्रवर्त्तको मनोव्यापार इति यावत् यस्य तादृशः। **पुराणो** वृद्धो जरठ इति यावत्। **मुनिर्**मननशीलो ब्रह्मेति यावत्। **इदम्। मनोहरम्। रूपं** स्वरूपम्। **निर्मातुम्। कथम्।** नु (इदं वितर्के)। **प्रभवेत्।** न कथमपि प्रभवेत्। अतश्चन्द्रादिकर्त्तृकमेवास्याः सर्गविधानं, नतु असिद्धप्रजापतदिकर्त्तृकमिति भावः। अत्र 'मुनिरि'त्यस्य 'ब्रह्मे'त्येवार्थः, नतु 'नारायण'इति, एतस्य मुनित्वेऽपि पुराणत्वाभावात्, उत्पादकत्वेऽपि निर्मातृत्वाभावाच्च। अतः प्रकृते निर्मातृत्वव्यवच्छेदस्य विवक्षिततत्वेन ब्रह्मणः पुराणत्वमुनित्वादि अध्यवसितम्। यत्तु व्याख्यातम् 'उरूद्भवा नरसखस्य मुनेः सुरस्त्री।' इति विक्रमोर्वशीयसन्दर्भात्, 'नारायणोरुं निर्भिद्य सम्भूता वरवर्णिनी। ऐलस्य दयिता देवी योषिद्रत्नं किमुर्वशी॥' इति हरिवंशीयवचनाच्च 'मुनि' रित्यस्य 'नारायण' इति भावः। इति। तन्मदम्,

वेदाभ्यासजडत्वादेरन्यथाऽनुपपत्तेः। विक्रमोर्वशीयं पद्यम्। उर्वशीं प्रकृत्य पुरूरवस उक्तिरियम्। शार्दूलविक्रीडितं वृत्तम्॥ १५४॥'

उदाहृतमर्थं निर्दिशति—**अत्रास्मिन्नुदाहृते** पद्य इति भावः। **पुराणप्रजापतिनिर्माणसम्बन्धे** पुराणो दक्षाद्यपेक्षया प्राचीनोऽसौ प्रजापतिस्तस्य निर्माणं रचना तस्या सम्बन्धस्तत्र। पुराणप्रजापतिकर्त्तृकस्य निर्माणस्य सम्बन्धे इति भावः। **अपि। असम्बन्धः**। अयम्भावः—सकलजगत्सृष्टिकर्तृकत्वेन प्रजापतेः, जगदन्तर्गततयोर्वश्याश्च सृज्यसर्जकत्वेन सम्बन्धः, अस्य च प्रजापतेर्वेदाभ्यासजडत्वादिना तादृशसर्जनासम्भवनिदर्शनेनाभावो निदर्शितः। स्पष्टश्च सम्बन्धेऽप्यसम्बन्धः। अस्य च चन्द्रादेः कान्तिप्रदत्वादिना प्रजापतित्वे निरूप्यमाणेऽतिशयित्वम्। पूर्वार्द्धेप्रयुक्तस्य नुत्रयस्य 'अभू'दिति क्रियया बोध्यस्यैवार्थस्य द्योतकतया 'पुराऽभू' दित्यादाविवानुगुण्येनावस्थितत्वम्। यद्वा—तेष्वाद्यस्य 'अयी' त्यर्थकतयाऽन्त्ययो 'रभू' दित्यर्थकतया 'अभू' दित्यनाध्याहरणीयं तेषां नूनां सन्देहपरत्वमपहरणीयम्। एतेन-'नु' शब्दस्य प्रश्नपरतयाऽध्यवसायकताऽभाव इति, दत्तोत्तरम्। इति।

असंबन्धे संबन्धो यथा—

**'यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम्।**

**तदोपमीयते तस्या वदनं चारुलोचनम्॥'**

अत्र यद्यर्थबलादाहृतेन संबन्धेन संभावनया संबन्धः !

---

## विवृतिः

**यदि स्यादिति**। इयमद्भुतोपमेति **दण्डी**। नन्विन्दीवरद्वयस्येन्दुमण्डले व्यतिरेकप्रतीतिरेव जायते कथं संबन्धाध्यवसाय इत्यत आहु—**यद्यर्थेति**। **यद्यर्थबलाद्** यद्यर्थसामर्थ्यात् **आहृतेन** कल्पितेन **संबन्धेन** पदार्थेन **संभावनया** अध्यवसायेन संबन्धः। 'गृह्यते' इति शेषः। यद्यर्थप्रयोग एवायं प्रकारः संभवति आहार्य एव संबन्धाध्यवसाय इति भावः। अत एवोक्तं **काव्यप्रकाशे**—'यद्यर्थोक्तौ च कल्पनम्' इति। **द्वयोः** कार्यकारणयोः समकालत्वे समकालोत्पन्नत्वे॥

## विज्ञप्रिया

**यदि स्यादिति**। चारुलोचनस्थाने इन्दीवरद्वयं वदनस्थाने इन्दुमण्डलम्। **आहृतेन सम्बन्धेन** इति। इन्दुमण्डले इन्दीवरस्य सम्बन्ध एव स्यादित्येवं सम्बन्धसम्भावना। अत्रापि सम्बन्धसम्भावनयैव आरोपविषयस्याऽसम्बन्धस्य निषेधव्यञ्जना।

## कुसुमप्रतिमा

यदीति। यदि इन्दोश्चन्द्रस्य मण्डले, इन्दीवरद्वयं कुवलययुगलं सक्तं कुतोऽपि कारणात्। लग्नं स्यात्, तदा चारुणो सुन्दरे लोचने चक्षुषी यत्र तत्तादृश तस्या नायिकाया वदनम्, उपमीयते तेन इन्दुमण्डलेन उपमाविषयीक्रियते, इतरथा तु नेत्याशयः।

नन्विन्दुमण्डले इन्दीवरद्वयस्य सक्तत्वाभावप्रतीतिः सर्वदैव स्वाभाविकीति कुतस्तत्र सम्बन्धः, येनासम्बन्धे सम्बन्धस्येदमुदाहरणमुपपद्यत इत्याह अत्रेति। यद्यर्थ बलात् यदिशब्दार्थ सामर्थ्यात्, आहृतेन आनीतेन कल्पितेनेत्यर्थः, सम्बन्धेन सक्तत्वसम्बन्धेन सम्भावनया अध्यवसायेन सम्बन्धः प्रतीयत इति शेषः। तथा च इन्दुमण्डले यथार्थस्य इन्दीवरासक्तत्वस्य अयथार्थेन सक्तत्वरूपेणाध्यवसायान्मूललक्षणसङ्गतिः।

## विमला

असम्बन्धे सम्बन्धमुदाहरति, यदीति।—यदि इन्दोः,—चन्द्रस्य, मण्डले—विम्बे, इन्दीवरद्वयं—नीलोत्पलयुगलं, सक्तं—युक्तं, स्यात्, तदा तस्याः,—कान्ताया इत्यर्थः, चारुलोचनं—चारुणी—मनोहरे, लोचने—नेत्रे यत्र तादृशं, सुन्दरनयनसमन्वितमित्यर्थः, वदनम् उपमीयते, सेन्दीवरद्वयेन चन्द्रमण्डलेनेति भावः। इयमद्भुतोपमेति दण्डी।

## लक्ष्मी

असम्बन्धे सम्बन्धमुदाहरति—**यदीति**। यदि इन्दोश्चन्द्रस्य मण्डले बिम्बे इन्दी वरद्वयं नीलकमलयुगलं सक्तं कुतोऽपि कारणात् संश्लिष्ट स्यात्, तदा चारुणी मनोहरे लोचने नयने यत्र तत्तथोक्तं तस्याः कामिन्या वदनं मुखम् उपमीयते तेन इन्दुमण्डलेनोपमाविषयीक्रियते नान्यथेति भावः।

नन्विन्दीवरद्वयस्य इन्दुमण्डले संश्लिष्टप्रतीतेरभावस्य सर्वदैवोपलम्भात् कथं तत्र सम्बन्धः येनासम्बन्धे सम्बन्धाध्यवसायस्योदाहरणमिदं भविष्यतीत्यत आह—**अत्रेति**। यद्यर्थबलात् 'यदी'त्यस्यार्थसामर्थ्यात्, आहृतेन आरोपितेन, सम्बन्धेन संश्लिष्टत्वसम्बन्धेन सम्भावनया अध्यवसायेन उभयत्राभेदे तृतीया, सम्बन्धः कल्प्यते इति शेषः। एवञ्च इन्दुमण्डले सत्यस्य इन्दीवरासंश्लिष्टत्वस्य असत्येन संश्लिष्टत्वरूपेणाध्यवसायादसम्बन्धे सम्बन्धरूपातिशयोक्तिः**केचित्तु**—कल्पितोपमामेनामेव स्वीकुर्वन्ति तन्मते चेदमुदाहरणम्-'धीरध्वनिभिरलं ते नीरद ! मे मासिको गर्भः। उन्मदवारणबुद्धया मध्ये जठरं समुच्छलति ॥'

अत्र सिंह्या मेघं प्रत्युक्तौ मासिकगर्भस्य समुच्छलनासम्बन्धेऽपि शौर्यातिशायिका समुच्छलनसम्बन्धाध्यवसायादतिशयोक्तिः।

## रुचिरा

असम्बन्धेऽपि सम्बन्धमुदाहरति-**असम्बन्धे** इत्यादिना। स्पष्टम्। **'यदि**। **इन्दोश्चन्द्रस्य**। **मण्डले** बिम्बे। इन्दीवरद्वयमिन्दीवरयोर्नीलकमलयोर्द्वयम्। **सक्तं** संश्लिष्टम्। **स्यात्**। **तदा**। **तस्या** नायिकायाः। **चारुलोचनं** चारुणी सुन्दरे लोचने यत्र तत्तादृशम्। **वदनं** मुखम्। **उपमीयते** नान्यथेति शेषः ॥ १५५ ॥'

कार्यकारणयोः पौर्वापर्यविपर्ययश्च द्विधा भवति। कारणात्प्रथमं कार्यस्य भावे, द्वयोः समकालत्वे च। क्रमेण यथा—

**'प्रागेव हरिणाक्षीणां चित्तमुत्कलिकाकुलम्।**

**पश्चादुद्भिन्नबकुलरसालमुकुलश्रियः॥'**

**'सममेव समाक्रान्तं द्वयं द्विरदगामिना।**

**तेन सिंहासनं पित्र्यं मण्डलं च महीक्षिताम्॥'**

इह केचिदाहुः—'केशपाशादिगतो लौकिकोऽतिशयोऽलौकिकत्वेनाध्यवसीयते। केशपाशादीनां कलापादिभिरध्यवसाये 'अन्यदेवाङ्गलावण्यं—' इत्यादिप्रकारेष्वव्याप्तिर्लक्षणस्य' इति तन्न। तत्रापि ह्यन्यदङ्गलावण्यमन्यत्वेनाध्यवसीयते। तथाहि 'अन्यदेव' इति स्थाने 'अन्यदिव' इति पाठेऽध्यवसायस्यासाध्यत्वमेवेत्युत्प्रेक्षाङ्गीक्रियते। 'प्रागेव हरिणाक्षीणां—' इत्यत्र बकुलादिश्रीणां प्रथमभावितापि पश्चाद्भावित्वेनाध्यवसिता। अत एवात्रापीवशब्दप्रयोगे उत्प्रेक्षा। एवमन्यत्र।

---

## विवृतिः

**प्रागेवेति**। उत्कलिकाकुलं उत्कण्ठाव्याप्तं जातम्। उद्भिन्नानामुत्फुल्लानां बकुलाम्रमुकुलानां च श्रियो जाता इत्यर्थः॥ **सममेव** एकदैव समाक्रान्तमारूढं वशीकृतं च। पित्यं पितुरागतम्। अनयोः कारणस्यात्यन्तशीघ्रकारित्वं व्यज्यते। केतितु "सममेवेत्यादिद्वितीयप्रकारः 'धुनोति चासिं तनुते च कीर्तिम्' इतिवत् समुच्चयालंकारस्यैव विषयः" इति वदन्ति। तन्न। विरूपशब्दाभ्यामेव क्रिययोरुपादाने हि समुच्चयस्वीकारात्। कलापादिभिरध्यवसाये विवक्षिते इति शेषः। **अव्याप्तिरिति**। अन्यदेवेत्यत्र लावण्यान्तरस्य भेदसत्त्वेनाध्यवसायरूपत्वाभावादिति भावः। एवमन्यत्रापि यथायथं ज्ञेयम्। **अन्यदिति**। अतिशयप्रतीयते एतद्यक्तेरेव भेदस्तत्राध्यवसीयत इत्यर्थः। **तथाहीति**। निरुक्ताध्यवसायस्वीकारेऽनुभवसिद्धोत्प्रेक्षा न स्यादिति भावः। **बकुलादिश्रीणामिति**। एवमुत्कलिकायाः पश्चाद्भावितापि पूर्वभावित्वेनाध्यवसितेति बोध्यम्। **एवमिति**। उक्तदिशा। अन्यत्र तृतीयचतुर्थप्रकारयोरव्याप्त्युद्धारो बोद्धव्य इत्यर्थः।

तथाहि—तादृशरूपस्य निर्माता विधिरनिर्मातृत्वेन इन्दुमण्डलासक्तमिन्दीवरद्वयमिन्दुमण्डलसक्तत्वेनाध्यवसीयत इति भावः॥

## विज्ञप्रिया

पञ्चमातिशयोक्तिप्रभेदमुदाहर्त्तुमाह—**कार्य्यकारणयोरिति प्रागेवेति**—उत्कलिका उत्कण्ठा। बकुलरसालयोर्द्वन्द्वः। तयोरुद्भिन्नमुकुलश्रियः पश्चादित्यर्थः। अत्र मुकुलश्रीदर्शनस्य कारणस्य जन्योत्कण्ठोत्तरोपपन्नत्वेन निर्देशाद्विपर्य्ययः। आहार्यबुद्धिविषयेण तेन कारणस्य शीघ्रकारित्वं व्यज्यते। अत्राप्युत्तरोपन्नत्वादारोपविषयस्य पूर्वोत्पन्नस्य निषेधव्यञ्जना। एवमुत्तरत्रापि बोध्यम्।

**सममेवेति**—तेन रघुणा। पितृसिंहासनाक्रमणरूपकारणस्य महीक्षिन्मण्डलाक्रमणरूपकार्य्यस्य समकालोपपन्नत्वकथनात्पौर्वापर्य्यविपर्य्ययः।

ग्रन्थकृदुक्तस्यातिशयोक्तिसामान्यलक्षणस्य अन्यदेवाङ्गलावण्यमित्यादावव्याप्तिं केचिदाहुस्तद्दूषयितुमाह—**इह केचिदिति**। विषये विषयिणोऽभेदेनाध्यवसायो हि भवत्कृतलक्षणार्थः, विषयविषयिभावश्च भेदघटितः। तथा च "कथमुपरि कलापिनः" इत्यत्र केशकलापयोर्भेदसत्त्वात्तल्लक्षणार्थसम्भवेऽपि 'अन्यदेवाङ्गलावण्यम्' इत्यत्र तत्रैव तद्भेदारोपे भेदघटितविषयविषयभावाभावादव्याप्तिरिति केषाञ्चिदुक्तिं दर्शयति—**केशपाशादिगत** इति। अतिशयः सौन्दर्ये लौकिकोऽन्यलोककेशसाधारणः अलौकिकत्वेन लोकविलक्षणकलापनिष्ठसौन्दर्य्यत्वेनाध्यवसीयत इत्यर्थः। तयोःसौन्दर्ययोरभेदाध्यासमूलककेशपाशकलापयोर्भिन्नयोरभेदाध्यासः सम्भवतीत्याह—**केशपाशादीनामिति**। अध्यवसाये इत्यनन्तरं सम्भवत्यपीति पूरणीयम्। तथापि अन्यदेवेत्यादिप्रकारेष्वव्याप्तिरित्याह—**अन्यदेवेति**। आरोप्यमाणारोपविषयलावण्ययोर्भेदाभावादिति भावः। अभेदे भेदारोपोऽस्मदुक्तलक्षणार्थोऽत्राप्यस्तीति ब्रुवन् समाधत्ते-**तन्न**। **तत्र** हीति। अनन्यदङ्गलावण्यमभिन्नमङ्गलावण्यमन्यत्वेन भिन्नत्वेनाऽध्यवसीयत इत्यर्थः। तथा च भिन्नत्वेनाध्यवसायादारोपविषयेऽभेदे तद्भिन्नस्य भेदस्यारोपाद् भेदघटितो विषयविषयिभावोऽत्राप्यस्तीति साधितम्। उत्प्रेक्षायां विषयविषयभेदघटित आरोपस्तवापि सम्मतः। अत्रैवोत्प्रेक्षासम्भवाद् भेदघटितारोपः त्वन्मतेऽपीत्याह—**तथा** हीति—अतिशयोक्तितो व्यावृत्तिदर्शनाय साध्यत्वप्रदर्शनम् 'प्रागेव हरिणाक्षीणाम्' इत्यत्रापि भेदघटितो विषयविषयिभावोऽस्तीति दर्शयति। अत्राप्युत्प्रेक्षासम्भवं दर्शयति—**अत** एवेति। भेदघटितविषयविषयिभावसत्त्वादेवेत्यर्थः।

## कुसुमप्रतिमा

कार्य्येति। कारणात् कारणोत्पत्तेः, प्रथमं पूर्वम्। भावे उत्पत्तौ। द्वयोः कार्य्यकारणयोः, समकालत्वेन एककालीनत्वेन च भावे इति पूर्वेणान्वयः। नन्वित्थं कार्य्यकारणयोः पौर्वापर्य्यविपर्य्यस्य द्वैविध्याङ्गीकारे संमुदायेनातिशयोक्तेः षड्विधत्वसम्भवेऽपि "सा पञ्चधा"इति पञ्चविधत्वोक्तिः कथं सङ्गच्छत इति चेन्न, प्राचीनमतानुरोधेन तयोः पौर्वापर्य्यविपर्य्यत्वरूपेण एकविधत्वस्यैव ग्रहणात्।

कारणात् पूर्वं कार्य्यस्योत्पत्तादुदाहरति प्रागेवेति। हरिणाक्षीणां तरुणीनां चित्तम्, प्रागेव उत्कलिकया सुरतोत्कण्ठया आकुलं विह्वलं भवति, पश्चात्तु उद्भिन्नानां प्रस्फटितानाम्, बकुलरसालयोर्वकुलावयोः, मुकलानां कुड्मलानां श्रियः शोभाः प्रसरन्तीति शेषः।

वकुलाश्रयीः प्रस्फुटितमुकुलदशनेनैव कामिनीनां चित्ते सुरतोत्कण्ठा उत्पद्यत इति तादृशमुकुलश्रीणां कारणतया पूर्वभावित्वं तदुत्कण्ठायाश्च कार्य्यतया परमावित्वमेव हि यथार्थम्। ततश्च यथार्थायाः परभाविण्यास्तदुत्कण्ठायाः कवेः प्रौढ़ाक्तिवशादेव अयथार्थेन पूर्वभावित्वेनाध्यवसायादव कार्य्यकारणयोः पौर्वापर्य्यविपर्य्यरूपा अतिशयोक्तिः। अत्र कारणस्य परभावित्वेनाध्यवसायोऽपि एवमेवोहनीयः।

कार्य्यकारणयाः समकालोत्पत्तावुदाहरति सममिति। रघुवंशचतुर्थसर्गस्थमिदं पद्यम्। हिरदगामिना हस्तिवत् सलीलमन्दगमनशीलेन, तेन रघुणा, पित्र्यं पितृत आगतं सिंहासनम्, महीक्षितां रात्रां मण्डलं चक्रञ्च, एतत् द्वयं समं युगपदेव समाक्रान्तं गृहीतमायात्तीकृतञ्च।

राजानो हि पैतृकं सिंहासनं गृहीत्वैव क्रमशस्तद्बलेन परराजमण्डलमायत्तीकुर्वन्तीति पैतृकसिंहासनग्रहणस्य कारणतया पूर्वभावित्वं परराजमण्डलायत्तीकरणस्य च कार्य्यतया परभावित्वमेव यथार्थम्। ततस्तु तयोः पूर्वापरभावित्वेनेव यथार्थयोः कवेः प्रौढोक्तिवशादयथार्थेन समकालभावित्वेनाध्यवसायादत्रापि कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययरूपा अतिशयोक्तिः

"धुनोति चासिं तनुते च कीर्त्तिम्" इत्यन्वपि ईदृगेवातिशयोक्तिन्मूलस्य समुच्चय इति समुच्चयालङ्कारप्रकरणे स्वयमेव वृत्तौ वक्ष्यते। तेन "केचित्तु" इत्यादिरामचरणोक्तिस्तद्दूषितोक्तिश्च तद्वृत्तिग्रन्थापर्य्यालोचनयैव सञ्जातेति तद्द्वयमपि द्वेयम्।

इहेति। "कथमुपरि कलापिनः कलापः" इत्यादिश्लोके केशपाशादिगत इत्यर्थः, लौकिकस्तत्तन्नायिकालोकयोग्यः, अतिशयो लम्बितत्वमसृणत्वाद्यतिरेकः, अलौकिकत्वेन कलापादिसौसादृश्यवशात् तत्तन्नायिकालोकायोग्यत्वेन स्वर्गीयत्वेनेत्यर्थः। अतएवात्रापि अभेदे भेदाध्यवसायरूपैवातिशयोक्तिः, न पुनर्भवदुक्ता भेदे अभेदाव्यवसायरूपेति तेषामाशयः। ग्रन्थकृता तु भेदे अभेदाध्यवसायरूपायामेव "कथमुपरि कलापिनः कलापः" इत्यादिकमुदाहृतमिति पूर्वत्र द्रष्टव्यम्। ननु तत्र भेदे अभेदाध्यवसाये की दोष इत्याह केशेति। कलापादिभिः सह अभेदाध्यवसाये अभिमते इत्यर्थः। आदिशब्देन "अन्वल्लावण्यमन्वेव च कापि वर्तनच्छाया" इति काव्यप्रकाशोदाहृतादेरभेदे भेदाध्यवसायस्थलामात्रस्यैव ग्रहणम्। लक्षणस्य अभेदे भेदाध्यवसायस्थले अतिशयोक्तिलक्षणस्य। अत्र तेषामयमाशयः—"अन्यदेवाङ्गलावण्यम्" इत्यादौ तन्नायिकालावण्यादिषु नायिकान्तरलावण्यादीनां भेदस्यैव सत्त्वे न अभेदाभावात् अभेद एव भेदाध्यवसायी न स्यादित्यव्याप्तिर्दुर्वारैव; किन्तु लौकिकत्वेनाभिन्ने तन्नायिकालावण्यादौ अलौकिकत्वेन भिन्नानां लावण्यादीनामध्यवसाये तु लक्षणसङ्गतिः स्यादेव। अतो भेदे अभेदाध्यवसायस्थले च लौकिकत्वालौकिकत्वाभ्यामेव भेदाभेदयोग्रहणस्यौचित्यात् "कथमुपरि—" इत्यादावपि तथैव अभेदे भेदाध्यवसायरूपाया एवातिशयोक्त रौचित्यमिति।

उक्तमतं दूषयति तन्नेति। तत्रापि "अन्यदेवाङ्गलावण्यन्" इत्यादावपि। अन्यत् नायिकान्तरसाधारणम्। अन्यत्वेन नायिकान्तरासाधारणत्वेन केवलतन्नायिकानिष्ठत्वेनेत्यर्थः। एवञ्च, उक्तस्थले अभेदे भेदाध्यवसायरूपातिशयोक्तेर्लक्षणसङ्गतेर्नाव्याप्तिरिति भावः।

नन्वस्तु, तथापि मदुक्तरीत्यङ्गीकारे का क्षतिरित्याह तथाहीति। साध्यत्वेन इवशब्दोपादानात् संशयद्योतनेन प्रागुक्तरीत्याः निष्पाद्यत्वमेव। पश्चान्नावित्वेनेति। एवं चित्तोत्कलिकायाः परभावितापि पूर्वभावित्वेनाध्यवसितेत्यपि बोध्यम्। 'प्रागिव' 'पश्चादिव' इत्थमिवशब्दप्रयोग इत्यर्थः। अत्र ग्रन्थकर्त्तुरयमभिप्रायः—उत्प्रेक्षातिशयोक्त्योः समान एव विषयः सर्वसम्मतः; अतएवोक्तरीत्या तत्र तत्र इवशब्दप्रयोगे उत्प्रेक्षापि सर्वसम्मतैव। तेन "अन्यदेव" इत्यादौ "अन्यदिव" इति पाठे मन्मते 'असाधारणमिव' इत्याद्यर्थकतयेव भवन्मतेऽपि 'अलौकिकमिव' इत्याद्यर्थकतया उत्प्रेक्षा सम्भवत्येव; किन्तु "उपरि कलापिनः कलाप इव" इति पाठे "अलौकिक इव" इत्यर्थ स्यानुपस्थित्या उत्प्रेक्षातिशयोक्त्योर्विषयभेदापत्तिर्दुवारेवेति भवदुक्तरीत्यङ्गीकारे महत्येव क्षतिरिति।

एवमिति। अन्यत्राप्येवमुत्प्रेक्षा ऊह्येति शेषः। तथा च "सममेव समाक्रान्तम्" इत्यादावपि "सममिव" इति पाठे उत्प्रेक्षैवेति भावः।

## विमला

नन्विन्दीवरद्वयस्येन्दुमण्डले व्यतिरेकप्रतीतिरेव जायते, कथं सम्बन्धाध्यवसायः ? इत्यत आह, अत्र यद्यर्थेति ।—यदिशब्दस्य अर्थबलात्—अर्थसामर्थ्यात्, आहृतेन—आरोपितेन, सम्बन्धेन—पदार्थेन, इन्दीवरसं-योगेन इत्यर्थः, सम्भावनया—अध्यवसायेन, सम्बन्धः, गृह्यते इति शेषः; इन्दीवरासम्बद्धमपि वदनं तत्सम्बधत्वेना-ध्यवसीयते इति भावः । यद्यर्थप्रयोगे एवायं प्रकारः सम्भवति, आहार्य्य एव सम्बन्धाध्यवसायः इत्याशयः । अत एवोक्तं काव्यप्रकाशे—"यद्यर्थोक्तौ च कल्पनम्" इति । द्वयोः—कार्य्यकारणयोः, समकालत्वेन—समकालोत्प-न्नत्वेन इत्यर्थः ।

कारणात् प्रथमं कार्य्यस्य भावमुदाहरति, प्रागेवेति ।—हरिणाक्षीणां—मृगलोचनानां, चित्तं—चेतः, प्रागेव—पूर्वमेव, उत्कलिकया—उत्कण्ठया, आकुलं—व्याप्तं, जातमिति शेषः, पश्चात् उद्भिन्नाः—प्रफुल्लाः, बकुलानां रसालानाम्—आम्राणाञ्च, मुकुलानां श्रियः—शोभाः, यद्वा—उद्भिन्नानाम्—उत्फुल्लानां, वकुलाना-माम्रमुकुलनाञ्च, श्रियः—शोभाः, यद्वा—उद्भिन्ननाम—उत्फुल्लनां, बकुलानामाम्रमुकुलानाञ्च, श्रियः, जाता इति शेषः । अत्रोत्कण्ठायाः कारणात् बकुलरसालमुकुलश्रीणामुद्भेदात् प्राक् कार्य्यस्य उत्कण्ठारूपस्य उत्पत्तिः । प्रफुल्लबकुलरसालादीन् अवलोक्य हरिणाक्षीणां मदनोद्रिक्ततया चेतोव्याकुलत्वं युक्तं, किन्तु आसां प्रफुल्लव-कुलाद्यवलोकनतः पूर्वमेव यज्जातं, तेन कार्य्यकारणयोः स्फुटं पौर्वापर्य्याभाव इति तन्मूलेयमतिशयोक्तिरिति भावः ।

सममिति ।—द्विरदः—गजः, तद्वत् गमनशीलेन, तेन—रघुणा इत्यर्थः, पित्र्यं—पितृसम्बन्धिः, पितृराग-तमित्यर्थः, पितुरागतमित्यर्थः, सिंहासनं महीक्षितां—राज्ञां, मण्डलं—चक्रञ्च, ["अखिलं चारिमण्डलम्" इति पाठे—अखिलं—समस्तम्, अरीणा—शत्रूणां, मण्डलं—राज्यञ्चेत्यर्थः] इति द्वयं सममेव—एककालमेव, समा-क्रान्तम्—आरूढं वशीकृतञ्च, न तु राज्ञो विजित्य राजासनमधिष्ठतम् । [अनयोः कारणस्यात्यन्तशीघ्रकारित्वं व्यज्यते] । केचित्तु—"सममेवेत्यादिद्वितीयप्रकारः "धुनोति चासिं तनुते च कीर्त्तिम्" इतिवत् समुच्चयालङ्कारस्यैव विषयः" इति वदन्ति, तन्न विरूपशब्दाभ्यामेव क्रिययोरुपादाने हि समुच्चयस्वीकारात्; एवञ्च राजमण्डलाक्रमण-रूपस्य कारणस्य राजासनाधिरोहणरूपस्य कार्य्यस्य च एककालित्वाभिधानात् पौर्वापर्य्यव्युत्क्रममूलेयमतिश-योक्तिः । रघुवंशस्येदं पद्यम् ।

इह केचिदाहुरिति ।—कलापादिभिरध्यवसाये, विवक्षिते इति शेषः, अन्यदेवाङ्गलावण्यमित्यादिप्रकारेषु अव्याप्तिर्लक्षणस्येति—अन्यदेवेत्यत्र लावण्यान्तरस्य भिन्नत्वेन अध्यवसायरूपत्वासम्बन्धादिति भावः । एवम-न्यत्रापि यथायथं ज्ञेयम् । अन्यदिति ।—अतिशयप्रतीतये एतद्वयक्तेरेव भेदः तत्र अध्यवसीयते इत्यर्थः । तथा हीति ।—निरुक्ताध्यवसायस्वीकारे अनुभवसिद्धोत्प्रेक्षा न स्यात् इति भावः । अन्यदिवेति पाठे उत्प्रेक्षाऽङ्गीक्रियते, तन्न; अत्र हि अन्यदङ्गलावण्यमन्यत्वेनाध्यवसितम् । वकुलादिश्रीणामिति ।—एवमुत्कलिकायाः पश्चाद्भा-विताऽपि पूर्वभावित्वेनाध्यवसितेति बोध्यम् । एवमिति ।—उक्तदिशा इत्यर्थः, अन्यत्र—उदाहरणान्तरेऽपि, तृती-यचतुर्थप्रकारयोरव्याप्तृयद्धारो बोद्धव्यः इति भावः; तथा हि—तादृशरूपस्य निर्माता विधिः अनिर्मातृत्वेन इन्दुमण्डलासक्तमिन्दीवरद्वयम् इन्दुमण्डलसक्तत्वेनाध्यवसीयते इति भावः ।

## लक्ष्मी

कार्यकारणयोः पौर्वापर्यात्ययमुदाहर्त्तु प्रथमं विभागमाह—**कार्यकारणयोरिति**। कारणात् कारणाप्रादुर्भावात्, प्रथमं पूर्वम्, भावे आविर्भावे जायमाने इत्यर्थः द्वयोः कार्यकारणयोः, समकालत्वेन च एककालिकत्वेन भावे इति पूर्वेण सम्बन्धः। यद्यपि कार्यकारणयोः पौर्वापर्यविपर्यस्य द्विप्रकारकत्वाभ्युपगमेऽस्याः साकल्येन षट्प्रकारकत्वमायाति ततश्च 'सा पञ्चधा' इति प्रतिज्ञाभङ्गस्तथापि प्राचीनमतानुरोधेन कार्यकारणयोः पौर्वापर्यविपर्ययत्वात्मना एकप्रकारकत्वस्यैव ग्रहणमित्यवधेयम्।

तत्र कारणात्वपूर्व कार्यस्य भावे उदाहरति—**प्रागेवेति**। हरिणाक्षीणा मृगलोचनानां कामिनीनां चित्तम्, प्राक् प्रथममेव उत्कलिकया उत्कण्ठया सुरतेच्छयेतियावत् आकुलं विह्वलं जातमिति शेषः। 'कथितोत्कलिकोत्कण्ठाहेलासिलवीचिषु'इति मेदिनी। पश्चात्तदनन्तरं तु उद्भिन्नानां विकसितानाम्, वकुलरसालयोः वकुलाम्रयोः मुकुलानां कुड्मलानां श्रियः शोभाः जाता इति शेषः।

अत्र वकुलरसालयोः विकसितमुकुलदर्शनानन्तरं कामिनीनां हृदये रिरंसा समुत्पद्यते। अतोऽत्र तादृशमुकुलश्रीदर्शनमेव पूर्वभावित्वेन उत्कण्ठायाः कारणम् कार्यञ्च तदुत्कण्ठा तस्याश्च परभावित्वमेव हि सत्यरूपम्, ततः सत्यरूपायाः परभाविन्यास्तदुत्कण्ठायाः कविप्रौढोक्तिवशादेव असत्येन पूर्वभावित्वेनाध्यवसायात्स्पष्टमेव कारणात्पूर्वं कार्यस्य वर्णनं जातमिति कार्यकारणयोः पौर्वापर्यविपर्ययरूपाः अतिशयोक्तिः। एवं कारणस्य परभावित्वेनाध्यवसाये स्वयमेवोदाहरणीयम्।

कार्यकारणयोः समकालोद्भवे उदाहरणं दर्शयति—**सममेवेति**। रघुवंशे चतुर्थसर्गे रघोः राज्यप्राप्तिवर्णनपरद्यमिदम्। द्विरदो गजराजस्तद्वत् गन्तुं शीलमस्यास्तीति तेन द्विरदगामिना सलीलमन्दगमनशीलेनेत्यर्थः, तेन रघुणा, पित्र्यं पितृतो लब्धम्, सिंहासनं राजासनम्, महीक्षितां राज्ञाम्, 'राज्ञि राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः' इत्यमरः, मण्डलं च देशः समुदायो वा 'मण्डलं देशबिम्बयोः। भुजङ्गभेदे परिधौ शुनि द्वादशराजके' इतिकोशः, एतद्द्वयम्, सममेकदैव समाक्रान्तं सभ्यगारुह्य गृहीतं जित्वा वशीकृतञ्च। पार्थिवा हि पैत्र्यिकं सिंहासनामादायैव क्रमशस्तद्बलेन अन्य सामन्तराष्ट्रं जित्वा वंशीकुर्वन्तीति पैत्र्यिकसिहासनादानस्य कारणत्वेन पूर्वभाविवम् अन्यसामन्तराष्ट्रवशीकरणस्य च कार्यत्वेन परभावित्वमेव सत्यरूपम्। ततस्तु तयोः पूर्वापरभावित्वेनैव सत्यरूपयोः कविप्रौढोक्तिवशादसत्येनैककालभावित्वेनाध्यवसादादत्र कार्यकारणयोः पौर्वापर्यविपर्य्यरूपा अतिशयोक्तिरिति भावः।

'धुनोति चासिं तनुते च कीर्त्तिमं' इत्यादौ।

वक्ष्यमाणसमुच्चयालङ्कारोऽपि कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्तिमूलक एवेति तत्प्रकरणे वृत्तौ स्वयमेव प्रदर्शयिष्यति। तथा च तद्वदत्र समुच्चयो न शङ्क्या विरूपशब्दाभ्यामेव क्रियाऽनैक्ये तत्स्वीकारात्।

अत्रालङ्कारसर्वस्वकारो हि काव्यप्रकाशकृदुक्ताभेदे भेदरूपातिशयोक्तोदाहरणस्य 'कमलमनम्भसि' इत्यादेः अभेदे भेदरूपायामतिशयोक्तावव्याप्तिमाहेरिति स्वकीयोदाहरणेऽपि तमाक्षेपं मन्यमानस्तन्मतमुत्थाप्य दूषयितुमाह—**इह केचिदिति**। अलङ्कारसर्वस्वकारादयः। **केशपाशादिगत** इति। भेदे अभेदाध्यवसायरूपायाम् 'कथमुपरि कलापिनः कलापाः' इत्यादिपद्ये केशपाशादिगत इत्यर्थः, आदिपदेन नेत्रादीनां परिग्रहः। लौकिकः तत्तन्नायिकालोकप्रसिद्धः अतिशयः लम्बितत्वमसृणत्वाद्युत्कर्षः, अलौकिकत्वेन कविप्रतिभासमर्पितेन स्वर्गीयत्वेनेत्यर्थः। इत्थञ्चात्रापि अभेदे भेदाध्यवसायरूपैवातिशयोक्तिर्न तु भेदे अभेदाध्यवसाय रूपा। अत्र च भेदे

अभेदाध्यवसायाभ्युपगमेऽऽपत्तिमुद्भावयति—**केशपाशादीनामिति**। कलापादिभिः सह, आदिपदेन कुवलयादीनां परिग्रहः, अभेदाध्यवसाये अभेदप्रत्यायने अभिमते इत्यर्थः। **अन्यदेवाङ्गलावण्यमित्यादिष्विति**। आदिपदेन 'अन्यल्लावण्यमन्यैव च कोऽपि वर्त्तनच्छायां' इतिकाव्यप्रकाशकृदुक्ताभेदे भेदाध्यवसायादेःपरिग्रहः। **लक्षणस्येति**। अभेदे। भेदाध्यवसायस्थले 'सिद्धित्वेऽध्यवसायस्यातिशयोक्तिः' इत्यस्य अतिशयोक्तिस्वरूपस्येत्यर्थः।

**अव्याप्तिरिति**। तेषामयम्भावः—'अन्यदेवाङ्गलावण्यम्' इत्यादौ तन्नायिकालावण्यादिषु अन्यनायिकालावण्यादीनां भेदस्यैव विद्यमानत्वेन अभेदासत्त्वात् अभेद एव भेदाध्यवसायरूपत्वाभावात्, प्रत्युत लौकिकत्वेन भेदाभावे तन्नायिकाल्लावण्यादौ अलौकिकत्वेनातिरिक्तानां लावण्यादीनामध्यवसाये तु लक्षणसम्बन्धो भवत्येव। इत्यञ्च भेदेऽभेदाध्यवसायोदाहरणे च लौकिकत्वालौकिकत्वाभ्यामेव भेदाभेदयोः स्वीकारस्य युक्तत्वात् 'कथमुपरि' इत्यादावपि तथैव अभेदे भेदाध्यवस्यारूपाया एवातिशयोक्तेः स्वीकारो युक्त इति।

तन्मतं दूषयति—**तन्नेति**। हि यतः, तत्रापि अभेदे भेदाध्यवसायरूपायाम् 'अन्यदेवाङ्गलावण्यम्' इत्यादावपि। अन्यत् अन्यनायिकासाधारणम्। अन्यत्वेन अन्यनायिकासाधारणत्वेन केवलतन्नायिकावृत्तित्वेनेत्यर्थः। तथा च प्रकृतोदाहरणे अभेदे भेदाध्यवसायरूपातिशयोक्तेर्लभणसमन्वयान्नाव्याप्तिरित्याशयः।

तदेव प्रकारान्तरेणोपपादयति—**तथाहीति**। अध्यवसायस्य अभेदप्रत्यायनस्य असाध्यत्वम् अनुद्भावनीयत्वमेव इति अस्माद्धेतोः। **पश्चाद्भावित्वेनेति**। एवं चित्तोत्कलिकायाः पश्चाद्भावितापि पूर्वभावित्वेनाध्यवसितेतिज्ञेयम्। **इवशब्दप्रयोग** इति। प्रागिव, पश्चादिव, इत्थमिवशब्दप्रयोग इत्यर्थः। **समाधातुरयमाशयः**—सर्वसिद्धान्तेन उत्प्रेक्षातिशयोक्त्योस्तुल्य एव विषयः, अतएवोक्तदिशा यत्र तत्र इवशब्दप्रयोगस्तत्र तत्र सर्वसिद्धान्तेन उत्प्रेक्षाऽपि भवत्येव। तेन 'अन्यदेव' इत्यादौ 'अन्यदिव' इतिपाठे अस्मन्मते 'असाधारणमिव' इत्याद्यर्थकत्वेनेव त्वन्मतेऽपि 'अलौकिकमिव' इत्याद्यर्थकत्वेन उत्प्रेक्षा स्यादेव, परन्तु 'उपरिकलापिनः कलाप इव' इति पाठे अलौकिक इव' इत्यर्थोपस्थितेरभावादुत्प्रेक्षातिशयोक्त्योर्विषयभेदः स्यादितिसर्वसिद्धान्तसिद्धोऽनयोस्तुल्यविषयापलापः स्यादितित्वन्मताभ्युपगमे महाननर्थः सम्पद्येतेति।

इत्थमेवान्यत्राऽप्यूहनीयमित्युपदिशति—एवमिति। एवम् उक्तदिशा अन्यत्राप्युत्प्रेक्षा ज्ञातव्या इत्यर्थः। तथाहि—'अस्याः सर्गविधौ प्रजापतिरभून्मन्ये विधुः कान्तिदः' इति पाठे उत्प्रेक्षा, एवं 'सममेव समाक्रान्तम्' इत्यत्रापि 'सममिव' इति पाठे उत्प्रेक्षैव।

**ध्वन्यमानेयं** यथा—

'देव ! त्वद्दर्शनादेव लीयन्ते पुण्यराशयः। किंच्वादर्शनतः पापमशेषमपि नश्यति॥'

अत्र पुण्यपापयोः सुखदुःखभोगमात्रनाश्यतया दर्शनादर्शनाभ्यां तज्जन्यसुखदुःखयो राश्यशेषशब्दाभ्यां च जन्मशतोपभोग्ययोस्तयोरेवाक्षेपादग्रिमाभ्यां पूर्वयोरध्यवसायो व्यज्यते।

**'गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः।**

**यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकम्॥'**

इत्यत्राध्यवसायाभावान्नायमलङ्कारः। ननु तिर्हि कोऽलङ्कारेऽत्राङ्गीक्रियते इति चेत्? न कोऽपि किन्तु तेषां तेषां तथाज्ञानानि भगवद्विषयकभावे उद्दीपनानि भवन्तीत्यभ्युपगमात्। न च सर्वोऽप्युद्दीपनप्रपञ्चोऽलङ्कारेष्वे-वेतिवाच्यम्, तत्र नियमाभावात्। एवम्—

**'अकृशं कुचयोः कृशं वलग्ने विपुलं चक्षुषि विस्तृतं नितम्बे।**

**अधरेऽरुणमाविरस्तु चित्ते करुणाशालिकपालिभागधेयम्॥'**

इति पदेऽपि नायमलङ्कार एत्यवधेयम्।

## रुचिरा

अत्र सम्बन्धयवसायं दर्शयति-**अत्र। यद्यर्थबलात्** 'यदि'त्यस्यार्थसामर्थ्यात्। आहृतेनारोपितेन कल्पि-तेनेति यावत्। **सम्बन्धेन**। अभेदे तृतीया। **सम्भावनया**ऽध्यवसायेन। अत्राप्यभेदेऽपि तृतीया। **सम्बन्धः**। तथा च—यद्यपि मुखं निरुपममेव, तथाऽपि यदि चन्द्रमण्डल एवेन्दीवरद्वयमुदियात् तदा तेनेदमुपमीयेतेत्येवं तत्सादृ-श्यस्य सम्बन्धासत्त्वेऽपि यद्यर्थसामर्थ्यादारोपितः सम्भावनाऽभिन्नः सम्बन्धोऽध्यवसित इति बोध्यम्। ये तु कल्पितोपमामेनामेवाङ्गीकुर्वन्ति, तन्मते 'धीरध्वनिभिरलं ते नीरद! मे मासिको गर्भः। उन्मदवारणबुद्ध्या मध्ये जरठं समुच्छलति॥' इत्युदाहरणम्। अत्र हि सिंह्या मेघं प्रत्युक्तौ मासिकगर्भस्य समुच्छलनासम्बन्धेऽपि शौर्य्यातिशायिका समुच्छलनसम्बन्धाध्यवसायरूपाऽतिशयोक्तिः। कार्य्यकारणयोः पौर्वापर्य्यात्ययमुदाहर्त्तुकाम आह—**कार्य्येत्यादि**। स्पष्टम्। **'हरिणाक्षीणां** मृगलोचनानां नायिकानाम्। **प्राक्** प्रथमम्। **एव**। **चित्तम्**। **उत्कलिकाऽऽकुल**मुत्कलिकयोत्कण्ठया रिरंसयेति यावत्, आकुलमिति तथोक्तम्। 'जात'मिति शेषः। 'कथितो-त्कलिकोत्कण्ठाहेलासलिलवीचिषु।' इति मेदिनी। **पश्चा**त्तदनन्तरम्। **उद्भिन्नबकुलरसालमुकुलश्रिय** उद्-भिन्ना विकसिताश्च ता वकुलरसालमुकुलश्रियो बकुलानां रसाल (आम्र) मुकुलानां च श्रियः सम्पत्तय इति तथोक्ताः। "जाता" इति शेषः। बकुलादीनां सम्पत्तयः किल मदनोन्नेत्र्य इति बकुलादिश्रीणामुद्भेदानन्तरं रिरंसो-द्भावनाया वाच्यत्वेऽपि अन्यथावचनं रिरंसाया अतिशयं द्योतयितुमिति बोध्यम्॥ १५६॥'

**'तेन। द्विरदगामिना** द्विरदो गजराजस्तद्वद्गन्तुं शीलमस्यास्तीति तेन। 'रघुणा' इति शेषः। **सममेकदा**। **एव। पित्र्यं पितुः** प्राप्तम्। **सिंहासनं** राजासनम्। **महीक्षितां** राज्ञाम्। 'राज्ञि राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः।' इत्यमरः। **मण्डलं** देशः समुदायो वा। 'मण्डलं देशबिम्बयोः। भुजङ्गभेदे परिधौ शुनि द्वादशराजके। सङ्घाते कुष्ठभेदे चे'ति कोशः। **च। द्वयम्। समाक्रान्तं** सम्यगारुह्याधिकृतं, जित्वा वशीकृतं चेति भावः। रघुवंशस्येदं पद्यम्। अत्र राजासनाधिरोहणं कारणं राजमण्डलवशीकरणं च कार्य्यमित्यनयोरेककालत्वेनाध्यवसानम्। न च 'धुनोति चासिं तनुते च कीर्त्तिम्।' इत्यादिवत् 'सम'मिति प्रयोगवशात् समुच्चयः शङ्क्यः, विरूपशब्दाभ्यामेव क्रियाऽनैक्ये तत्स्वीकारात्॥ १५७॥'

अलङ्कारसर्वस्वकाराणां धर्ममात्रगतमध्यवायं स्वीकुर्वतां मतं दूषयितुमाह—**इहा**स्मिन्प्रकरणे। **केचित्** 'आलङ्कारिका' इति शेषः। **आहुः। केशपाशादिगतः**। आदिपदेन नेत्रादीनां ग्रहणम्। लौकिको लोकप्रसिद्धः। **अतिशयः** तत्तेषां सादृश्यमूल उत्कर्षः। **अलौकिकत्वेन** 'कविप्रतिभासमर्पितेने'ति शेषः। **अध्यवसीयते**ऽभेदेन प्रत्याय्यते। अयमेषां भावः—केशपाशादीनां कलापादिभिभेदेऽपि लौकिकं (वास्तवं) सौन्दर्य्यमं (अतिशयितत्वम्) कविप्रतिभासमर्पितेन सौन्दर्य्येण (अतिशयितत्वेन) अभेदेनाध्यवसीयते, तदेव तेषां भेदेऽपि अभेदाभिधाने निर्मि-

त्तम्। तथा च धर्मगताभेदाध्यवसायो धर्म्मिगतभेदस्य तिरोधायकः। इति। एवमस्वीकारे आपत्तिमुद्भावयति— **केशपाशादीनाम्। कलापादिभिः।** आदिपदेन कुवलयादीनां ग्रहणम्। सहार्थेयं तृतीया। **अध्यवसायेऽभेदाप्र-त्यायने। विवक्षिते।** 'सती'ति शेषः। **'अन्यदेवाङ्गलावण्य'मित्यादिषु। प्रकारेषु** अभेदादिषु भेदाद्यध्यवसायाभिधानमूलेषु भेदषु इति भावः। **लक्षणस्य** 'सिद्धत्वेऽध्यवसायस्यातिशयोक्ति'रित्युक्तस्य स्वरूपस्य। **अव्याप्तिरनुगमाभावः।** अयम्भावः—अथ यदि धर्मिणोर्भेदेऽपि धर्मिणोरेवाध्यवसायोऽतिशयोक्ति-प्रयोजकः स्वीक्रियेत, तदा अभेदे भेदाध्यवसायमूलायामसम्बन्धे सम्बन्धाध्यवसायमूलायां चातिशयोक्ताव-व्याप्तिः, नहि तत्र धर्म्मिणोर्भेदोध्यवसीयते। अतः—धर्माध्यवसाय एवातिशयोक्तौ स्वीकार्य्यः। इति इति। 'य'दिति शेषः। **तत्। न। हि** यतः। **तत्राभेदे** भेदाध्यवसायमूलायामसम्बन्धे सम्बन्धमूलायामतिशयोक्तौ च। **अपि। अङ्गलवण्यम्। अन्यत्वेन** लावण्यान्तरत्वेन। **अध्यवसीयते।** तदेव प्रकारान्तरेण सिद्धान्तयति—**तथाहि। 'अन्यदेवे' ति स्थाने। अन्यदिवेति पाठे। अध्यवसायस्याभेदप्रत्यायनस्य। असाध्यत्वमनुद्भावनीयत्वम्। एव। इति** अस्मात् कारणात्। **उत्प्रेक्षा। अङ्गीक्रियते।** स्पष्टमन्यत्। इदमाकूतम्—'एषु पञ्चसु भेदेषु भेदेऽभेदादिवचनं लोकातिक्रान्तगोचरम्। अत्र चातिशयाख्यं यत् फलं प्रयोजकत्वान्निमित्तं, तत्राभेदाध्यवसायः तथा हि—'कमल-मनम्भसि, कमले च कुवलये, तानि कनकलतिकायाम्। सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्॥' इत्यादौ वदनादीनां कमलाद्यैर्भेदेऽपि वास्तवं (लौकिकम्) सौन्दर्य्यं (अतिशयितत्वम्) कविसमर्पितेन सौन्दर्य्येण (अतिश-यितत्वेनाभेदेनाध्यवसितं भेदेऽभेदवचनस्य निमित्तम्। तत्र च सिद्धोऽध्यवसाय इत्यध्यवसितप्राधान्यम्, ननु वदनादीनां कमलादिभिरभेदाध्यवसायो योजनीयः। अभेदे भेदे इत्यादिषु प्रकारेष्वव्याप्तेः। तत्र हि 'अण्णं लउहत्तणअं, अण्णा वि अ का वि वत्तणच्छाआ। सामा सामण्णपआवइणो रेह च्चि अ ण होई॥' इत्यादौ सातिशयं सुकुमारत्वं निमित्तभूतमभेदेनाध्यवसितम्, एवमन्यत्रापि ज्ञेयम्; तदभिप्रायेणैवाध्यवसितप्राधान्यम्।' इत्यलङ्कारस-र्वस्वकाराः प्राहुः। कविराजाः पुनः—धर्मिणां धर्माणां वाऽध्यवराये न कोऽपि विशेषः, 'कथमुपरि कलापिनः कलापः।' 'कमलमनम्भसि' इत्यादौ हि धर्मिणोर्भेदेऽभेदाध्यवसायः सम्भवत्येव, 'अन्यदेवाङ्गलावण्यं' अण्णं लडहत्तणअं' इत्यादौ पुनर्धर्मिण एवाभेदे भेदाध्यवसायाङ्गीकारेऽपि न कश्चिद्विशेषः। प्रत्युत 'अन्यदेवे' त्यादौ 'अन्यदिवे'ति पाठे उपमा स्यात्, अस्ति चोत्प्रेक्षा। अभेदे भेदेऽध्यवसीयमाने धर्मिण एकत्वेऽपि 'धर्मभेदेन धर्मिभेद' इति नयेन धर्मिभेदापत्तौ उपमानपमेयत्वमापद्येत, धर्म्मिणोऽभिन्नत्वे तस्यैव भिन्नत्वाध्यवसायेऽपि अभिन्नताया अपि सर्वथाऽनिरासः। अत्र हि भिन्नत्वं कविप्रतिभामात्रोत्तम्भितम्, ननु तत्र तथा। इति, जयरथास्त्व-लङ्कारसर्वस्वव्याख्यायां 'यावताह्यध्यवसितप्राधान्यमस्या लक्षणम्। तच्च धर्म्मिणामस्तु धर्माणां वेति को विशेषः? येनाव्याप्तिः स्यात्, प्रत्युत धर्मयोरभेदाध्यवसायाभ्युपगमे उपमाऽऽदीनामप्यतिशयोक्तिप्रसङ्गः स्यात्, तत्रापि धर्माणामेव भेदेऽभेदविवक्षणात्। एवं च विजातीयत्वेन भेदे धर्मयोरप्यव्याप्तिः प्रसज्यत इत्यलमसङ्गतग्र-न्थार्थोदीरणेन।' इति।

पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् ॥ ४७ ॥

एकधर्माभिसंबन्धः स्यात्तदा तुल्ययोगिता ।

अन्येषामप्रस्तुतानाम् । धर्मो गुणक्रियारूपः । उदाहरणम्—

**'अनुलेनेमानि कुसुमान्यबलाः**

**कृतमन्यवः पतिषु दीपदशाः ।**

**समयेन तेन सुचिरं शयित-**

**प्रतिबोधितस्मरमबोधिषत ॥'**

अत्र संध्यावर्णनस्य प्रस्तुतत्वात्प्रस्तुतानामनुलेपनादीनामेकबोधनक्रियाभिसंबन्धः ।

---

## विवृतिः

तुल्ययोगितालंकारमाह—**पदार्थानामिति** । **अनुलेपनानीति** । चन्दनद्रवानित्यर्थः । कुसुमानि शुक्लपुष्पाणि । तेन तमस्विना समयेन । पतिषु कृतमन्ययोऽबलाः सुचिरं शयितप्रतिबोधितस्मरं यथा स्यात्तथा अनुलेपनादीनि अबोधितषत । बोधिता इत्यर्थः । तमस्यनुलेपनादीनां शुभ्रस्फूर्तिरस्ति, ततश्च स्मरद्बोधो जायते, मृगमदादीनां तमोग्रस्ततया स्फूर्तिर्न संभवतीति भावः ॥ **अत्रेति** । प्रस्तुते तमसि स्फुरद्रूपत्वादनुलेपनादीनामपि प्रस्तुतत्वमित्यभिप्रायः ॥

## विवृतिपूर्तिः

**तुल्ययोगितेति** । तुल्यः योगितान्वयो यत्रेति ॥ **कुवलयानन्दे** तु "हिताहिते वृत्तितौल्यमपरा **तुल्ययोगिता** । प्रतीयते पराभूतिर्मित्रशात्रवयोस्त्वया ॥"

## विज्ञप्रिया

तुल्ययोगितालङ्कारमाह—**पदार्थानामिति** । **अन्येषां वेति** । वाकारेण पृथक् स्वातन्त्रयबोधनात् प्रस्तुताऽप्रस्तुतयोर्मिश्रणनिषेधो बोध्यः । तन्मिश्रणे तु दीपकालङ्कारो वक्ष्यते ।

**अनुलेपनानीति** । तमिस्रायां तत्कालीनवस्तूनां कामुककामोद्दीपकवर्णनमिदम् । सुचिरं शयितं तेन समयेन तादृशरात्रिरूपेण प्रतिबोधितं जागरितं स्मरम् अनुलेपनादयो अबोधिषत क्रीडार्थं बोधयामासुरित्यर्थः । **तमोवर्णनस्येति** । तमसः कामोद्दीपकत्वात् तस्मिन् प्रस्तुते तत्कालीनानामन्येषामुद्दीपकानामनुलेपनादीनामपि प्रस्तुतत्वमिति भावः ।

## लोचन

**पदार्थानामिति** । बहुवचनमतन्त्रम् । तेन पदार्थयोरपीति ज्ञेयम् । प्रस्तुतानां प्राकरणिकानाम् । अप्रस्तुतानाम् अप्राकरणिकानाम् ।

**अनुलेपनानीति** । सुचिरं शयितं स्मरं प्रतिबोधितस्मरम् अबोधिषतेत्यर्थः ।

## कुसुमप्रतिमा

अथ सादृश्यमूलकालङ्काराभिधानस्य प्रकृतत्वात् विशेषातिदिष्टया चातिशयोक्त्या तद्बाधाया असम्भवात् सादृश्यवत्तयैवानुभवात् "यो दीपकतुल्ययोगितादिषु उपमाद्यलङ्कारो व्यङ्ग्य" इति चतुर्थपरिच्छेदे ग्रन्थदुक्तत्वाच्चसादृश्यमूलकावेन तुल्ययोगितादीपकालङ्कारावभिधातुं तयोः प्रसिद्धत्वात् प्रथमे तुल्ययोगितामभिधत्ते पदार्थानामिति । यदा प्रस्तुतानां पदार्थानामेकधर्म्माभिसम्बन्धो भवेत्, वा अथवा अप्रस्तुतानां पदार्थानामेकधर्म्माभिसम्बन्धो भवेत्, इति लक्षणद्वयम्, तदा तुल्ययोगिता स्यात् । तथा च यदि प्रस्तुतैरेव पदार्थैः सह प्रस्तुतानामेव पदार्थानाम् एकेन धर्म्मेण गुणरूपेण क्रियारूपेण वा अभिसम्बन्धः कर्त्तृतया कर्म्मतया करणतादिरूपेण वा सम्पर्को भवेत्, अथवा यदि अप्रस्तुतैरेव पदार्थैः सह अप्रस्तुतानामेव पदार्थानां तथैव एकधर्म्माभिसम्बन्धो भवेत्, तदा तुल्ययोगिता नाम अलङ्कारः स्यादित्यर्थः ।

अतएव अप्रस्तुतेन सह प्रस्तुतस्य प्रस्तुतेन सह अप्रस्तुतस्य वा एकधर्म्माभिसम्बन्धरूपादीपकादस्य भेदः ।

तुल्यो योग उक्तरूप एकधर्म्माभिसम्बन्धः अस्यास्तीति तुल्ययोगौ कथं तस्य भावस्तुल्ययोगितेति व्युत्पत्तिः ।

कारिकायाः सूत्ररूपत्वात् "सूत्रे लिङ्गं संख्या कालश्चातन्त्राणि" इति न्यायेन पदार्थानामिति बहुवचननविवचितम् । तेन द्वयोरपि तादृशयोः पदार्थयोरेकधर्म्माभिसम्बन्धे तुल्ययोगिता ज्ञेया ।

प्रस्तुतैः सह प्रस्तुतानामेकक्रियासम्बन्धे उदाहरति अनुलेपनानीति । शिशुपालवधनंवमसर्गे सन्ध्यावर्णनेयम् । तेन समयेन सन्ध्याकालेन अनुलेपनानि कुङ्कुमचन्दनादीनि, कुसुमानि पुष्पाणि, पतिषु कृतमन्वयो विहितप्रणयकोपाः अबलाः स्त्रियः तथा दीपानां दशा वर्त्तिकाश्च, सुचिरं शयितः पूर्वं सुप्तो निवृत्तव्यापारः परञ्च प्रतिबोधितो जागरितः प्रवृत्तव्यापारः स्मरः कामो यस्मिन् कर्म्मणि तद्यथा तथा, अबोधिषत बोधिताः । अबोधिषतेत्यस्य यथासङ्गतमर्था अनुसन्धेयाः ।

अत्रेति । प्रस्तुतानामिति । भोगिजनस्य अनुलेपनादीनां सन्ध्याकालीनोपकरणत्वादिति भावः । अभिसम्बन्धः कर्म्मतासम्बन्ध न सम्बन्ध इत्यर्थः ।

## विमला

तुल्ययोगितामाह, पदार्थानामिति ।—प्रस्तुतानां—प्रकृतानां, वा अन्येषाम्—अप्रस्तुतानां, पदार्थानां—विषयाणां, यदा एकधर्माभिसम्बन्धः,—एकेन धर्मेण—गुणक्रियाऽन्यतररूपेण, संयोगः भवेत्, तदा तुल्ययोगिता—तदाख्यौऽलङ्कारः, स्यात् ।

क्रियारूपधर्मसम्बन्धमुदाहरति, अनुलेपनानीति ।—सन्ध्यावर्णनमिदम्, तेन समयेन—सन्ध्याकालेन, तमस्विना इति भावः, अनुलेपनानि—अङ्गरागद्रव्याणि, चन्दनादीनि इत्यर्थः, कुसुमानि—माल्यादीनि, तथा पतिषु—भर्त्तुषु कृतमन्यवयः,—मानवत्य इत्यर्थः, अबलाः,—नार्य्यः, तस्या दीपशिखाः,—दीपज्वालाश्च, इत्येतानि सर्वाणि चिरं सुप्तस्य—पूर्वं लब्धस्य, मनोभवस्य—कामस्य, बोधनम्—उद्दीपनं यस्मिन् कर्मणि तद्रयथा तथा, तत्पूर्वक-

मित्यर्थः, इतरथा अनुलेपनादिबोधनस्य वैफल्यसम्भवाच्च इति भावः, समं—-सहैव, अबोधिषत—बोधितानि । प्रमिताक्षरा वृत्तम् । तल्लक्षणं चोक्तं यथा—"प्रमिताक्षरा सजसैः कथिता" इति । शिशुपालवधस्यैदं पद्यम् ।

अत्रेति ।—प्रस्तुतत्वात्—प्रस्तुते तमसि स्फुरद्रूपत्वात्, अनुलेपनादीनामपि प्रस्तुतत्वम् इत्यभिप्रायः, एवं हि गन्धमाल्यादीनां प्रस्तुतानामवबोधनरूपैकधर्म सम्बन्ध इति तुल्ययोगिता । एषा च—गन्धनाल्यसम्पादनस्त्रीमनः प्रसाददीपशिखोत्पादनानाम् अबोधिषतेत्यकेन श्लिष्टशब्देनाभिधानात् श्लेषमूलाभेदाध्यवसायरूपाऽतिशयोक्तिरेका, तथा सुप्तमनोभवबोधनमिति क्रियाविशेषणसामर्थ्यात् सममिति यौगपद्याभिधानाच्च मनोभवबोधनया कार्य्यकारणभूतयोस्तद्विपर्य्यरूपा अपरा, तदुभयापेक्षया गन्धमाल्यादीनां प्रस्तुतानामवबोधनरूपैकधर्मसम्बन्धात् तुल्ययोगिताभेदश्चेति सङ्करः इति मल्लिनाथादयः ।

## लक्ष्मी

अथ सादृश्यमूलकालङ्कारनिरूपणस्य प्रकरणत्वात्, ध्वनिपरिच्छेदे 'यो दीपकतुल्ययोगितादिषु उपमाद्यलङ्कारो व्यङ्ग्यः' इत्युक्तत्वात्सादृश्यवत्तयैवानुभवाच्च विशेषातिदिष्टया चातिशयोक्त्या तद्बाधाया असम्भवेनोभयोर्मध्ये प्रथमं तुल्ययोगितालङ्कारं लक्षयति—**पदार्थाना**मिति । यदा प्रस्तुतानां प्रकरणप्राप्तानां पदार्थानाम्, वा अथवा अन्येषामप्रस्तुतानाम् अप्रकरणप्राप्तानामित्यर्थः, पदार्थानामेकधर्माभिसम्बन्धः एकधर्मेणान्वयो भवेत् तदा तुल्ययोगिता तदाख्योऽलङ्कारः स्यात् । अत्र 'वा' शब्दः प्रस्तुतानामप्रस्तुतानां व्यवच्छेदकः । तथा च यदि प्रस्तुतैरेव पदार्थैः सह प्रस्तुतानामेव पदार्थानाम् एकेन धर्मेण गुणरूपेण क्रियारूपेण कर्त्तृत्वेन कर्मत्वेन करणतादिरूपेण वा अभिसम्बन्धः, अथवा यदि अप्रस्तुतैरेव पदार्थैः सह अप्रस्तुतानामेव पदार्थानां तादृगेव एकधर्माभिसम्बन्धो भवेत्तदा तुल्ययोगितेतिसरलार्थः । अत्र तुल्यश्चासौ योगः सम्बन्धश्च अन्वयश्च तुल्ययोगः एकधर्मान्वय इत्यर्थः, सोऽस्ति येषां ते तुल्ययोगिनस्तेषां भावस्तुल्ययोगितेतिव्युत्पत्तिः । औपम्यं चात्र व्यङ्ग्यम्, तत्प्रयोजकसमानधर्मोपादानात् इवादिवाचकाभावाच्च धर्मवाचकपदैस्तत्तद्रूपेण धर्मभानेऽपि सादृश्यत्वरूपेणाभानात् । उक्तञ्च **प्रतापरुद्र**कृताऽपि—

**'प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः ।**

औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥' इति ।

कारिकायाः सूत्ररूपत्वेन 'सूत्रे लिङ्गवचनमतन्त्रम्' इति नियमोक्त्या पदार्थानामित्यत्र बहुवचनविवक्षितम्, द्वयोर्धर्मैक्येनाऽप्यन्वयेऽस्याः सम्भवात् । अतएव—

'सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च ।'

इत्यादौ कुलयानन्दकारोक्ततुल्ययोगितालङ्कारसिद्धिः । अतएव च—

**'प्रिये ! विषादं विजहीहि वाचं प्रिये सरागं वदति प्रियायाः ।**

**वारामुदारा विजगाल धारा विलोचनाभ्यां मनसश्च मानः ॥'**

इति रसगङ्गाधरकृत उदाहरणञ्च सङ्गच्छते ।

अत्र मानिन्या वर्ण्यत्वात् तदीयत्वेन प्रस्तुतयोः क्रत्रोरश्रुमानयोर्विगलनक्रियैकधर्माभिसम्बन्धेनोपात्तेतितुल्ययोगितालङ्कारः । नचास्यामलङ्कृती सादृश्यस्य व्यङ्ग्यत्वेन व्यङ्ग्योपमयैव गतार्थः स्यादितिवाच्यम्-तावन्मा-

त्रकृतचमत्काराभावात्। एकधर्मान्वयकृतस्यापि विद्यमानत्वात् व्यज्यमानस्यापि सादृश्यस्यासुन्दरसाधारणधर्मकत्वेनासुन्दरत्वात्। दीपके अप्रस्तुतेन सह प्रस्तुतस्य प्रस्तुतेन वा सहाप्रस्तुतस्य पदार्थस्य सादृश्यवाचकवैधर्म्ययोरभावे सत्येकधर्म्माभिसम्बन्धः, अत्र च प्रस्तुतैः सह प्रस्तुतानामप्रस्तुतैः सह चाप्रस्तुतानामेकधर्माभिसम्बन्ध इति परस्परं भेदः।

कठिनांशं स्पष्टयति—**अन्येषामिति**। इत्यस्य इति शेषः। अप्रस्तुतानाम् इत्यर्थ इति शेषः। **गुणक्रियारूप इति**। गुणक्रिये रूपं यस्य तादृशः। इदञ्चोपलक्षणम्। तेन कर्त्रादीनामपि परिग्रहः।

तत्र प्रस्तुतैः सह प्रस्तुतानामेकक्रियासम्बन्धे उदाहरणमाह—**अनुलेपनानीति**। शिशुपालवधे नवमसर्गे सन्ध्यावर्णनपद्यमिदम्। तेन समयेन सन्ध्याकालेन, अनुलेपनानि अङ्गरागद्रव्याणि, कुसुमानि शुक्लपुष्पाणि, पतिषु स्वामिजनेषु कृतमन्वयः कृतप्रणयकोपाः, अबला नायिकाः तथा दीपदशा दीपवर्त्तिकाश्च सूचिरम् अतिचिरकालपर्यन्तम्, शयितः प्रथमं सुप्तो निवृत्तव्यापारः पश्चात् प्रतिबोधितो जागरितः प्रवृत्तव्यापारः स्मरः कामदेवो यत्र तद् यथास्यात्तथा क्रियाविशेषणमिदम्, अबोधिषत क्रीडार्थं बोधयामासुरित्यर्थः। **प्रमिताक्षराच्छन्दस्तल्लक्षणन्तु**—'प्रमिताक्षरा सजससैरुदिता' इति।

लक्ष्यं सङ्गमयति—**अत्रेति**। स्पष्टोऽर्थः। **अयमाशयः**—सायङ्कालस्य कामोद्दीपकत्वेन प्रस्तुतत्वात् अनुलेपनादीनामपि कामोद्दीपकत्वेन मानभञ्जनसाधनत्वात् प्रस्तुतत्वमित्येतेषां 'शयितप्रतिबोधितस्मरम्' इति क्रियाविशेषणेन 'अबोधिषत' इति बोधनार्थैकक्रिययाभिसम्बन्धात्तुल्ययोगितालङ्कार इति।

एकगुणरूपधर्माभिसम्बन्धा प्रस्तुता तुल्ययोगिता यथा—

**'न्यञ्चति वयसि प्रथमे, समुदञ्चति किञ्च तरुणिमनि सुदृशः।**
**उल्लसति कापि शोभा वचसां च दृशा विभ्रमाणाञ्च॥'**

अत्र स्मराक्रान्तत्वेन तारुण्यस्येव वचनादीनामपि प्रस्तुतत्वात् शोभारूपेणैकेन गुणेनाभिसम्बन्धात्तुल्ययोगिता।

## रुचिरा

तुल्ययोगितां लक्षयति—१२८ **यदा**। **प्रस्तुतानां** प्रकरणप्राप्तानाम्। **वा**। **अन्येषामप्रस्तुतानां** प्रकरणमप्राप्तानाम् इति यावत्। **पदार्थानाम्**। **एकधर्माभिसम्बन्धः** एकोसौ धर्मस्तेनाभिसम्बन्धोऽन्वयः। **भवेत्**। **तुल्ययोगिता** तुल्यानां समानानां योगिता सम्बन्धित्वमिति तथोक्ता। तन्नामाऽलङ्कारः। **स्यात्**। अयम्भावः—अत्र 'वा'शब्दः प्रस्तुतानामप्रस्तुतानां व्यवच्छेदकः, तथा च प्रस्तुतानामेव, अप्रस्तुतानामेव वेति फलितोऽर्थः, साधर्म्यं व्यङ्ग्यं, तत्प्रयोजकस्योपादीयमानत्वेऽप्यवाच्यत्वात्। तथोक्तम् 'प्रस्तुतानां तथाऽन्येषां केवलं तुल्यधर्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगिता॥' इति। अत्र च बहुवचनमविवक्षितम्, द्वयोर्धर्मैक्येनाप्यन्वयेऽस्याः सम्भवात्। एवं च—'सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च।' 'प्रिये! विषादं विजहीति वाचं प्रिये सरागं वदति प्रियायाः। वारामुदारा विजगाल धारा विलोचनाभ्यां, मनसश्च मानः॥' इत्याद्युदाहरणानि सङ्गच्छन्ते। इति। न चात्र सादृश्यस्य व्यङ्ग्यतया व्यङ्ग्योपमयैव निर्वाहः स्यादिति वाच्यम्, तावन्मात्रकृतचमत्काराभावात्, एकधर्मान्वयकृतस्यपि सद्भावात्; यज्यमानस्यापि सादृश्यस्यासुन्दरसाधारणधर्मकत्वेनासुन्दरत्वात्। इति॥ १०१॥

कारिकाया: कठिनांशं सुगमयति—**अन्येषाम्** 'इत्यस्ये'ति शेष: । **अप्रस्तुतानाम्** । 'इत्यर्थ:' इति शेष: । **धर्म: । गुणक्रियारूपो** गुणक्रिये रूपं यस्य तादृश: । गुणक्रिये, इत्यत्र गुणपदमेककालत्वादेरप्युपलक्षकम् । अत एवाहु: पण्डितराजा: 'प्रकृतानामेवाप्रकृतानामेव वा गुणक्रियादिरूपैकधर्मान्वयस्तुल्ययोगिता ।' इति । एतेन- 'निर्दिशन युधि रुषा निजाधरं दंशयत्यरिजनं पिशाचकै: । प्रार्थ्यमान उदरम्भरैरपि प्रार्थयत्यमंरनायकैश्च तान् ॥' इत्यादावपि तुल्ययोगितैव, अत एव—'गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य य: । ओष्ठविद्रुमदलन्यमोचयन् निर्दशन् युधि रुषा निजाधरम् ॥' इत्यत्र विरोधालङ्कारेणाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता इति प्रकाशोऽपि सङ्गच्छते । इत्यन्ये प्राहु: । वस्तुतस्तु—'निर्दशन्...' इत्यादौ नास्ति तुल्ययोगिता किन्तु कार्य्यकारणयो: पौर्वापर्य्यात्ययरूपाऽतिशयोक्तिरेव, 'गाढ' मित्यत्र तु समुच्चय: । अत एव—'तुल्ययोगितेति पदस्य तुल्ययोगिताऽलङ्कार इत्यर्थस्तु न, 'नियतानां सकृद्धर्म: सा पुनस्तुल्ययोगिता ।' इति सूत्रेण लक्षिताया: प्रकृतानामप्रकृतानां वा एकधर्म्मसम्बन्धरूपतुल्ययोगिताया: प्रकृतेऽसम्भवात्; तुल्ययोगितायां धर्म्मस्य गुणक्रियाऽन्यतररूपस्यैव ग्रहणात् । किन्तुतुल्ययोगिपदस्याधरो निर्दष्टश्च शत्रवो व्यापादिताश्चेति तुल्यकालं योगो ययोस्तौ तुल्ययोगिनौ तयोर्भावस्तुल्ययोगितेति व्युत्पत्त्या समुच्चयालङ्कार:, अधरनिर्दशन—शत्रुव्यापादानक्रिययोर्यौगपद्यप्रतीतै: । इति प्रदीपकारा: प्राहु: ।

उदाहरन्नाह—**उदाहरणम्** 'यथे'ति शेष: । **'तेन । समयेन** सन्ध्याकालेन । **अनुलेपनान्यङ्गरागद्रव्याणि । कुसुमानि** पुष्पाणि । **पतिषु** स्वामिजनेषु । **कृतमन्यव:** कृतकोपा: । **अबला** नायिका: । तथा—**दीपदशा** दीपानां दशा वर्त्तय इति तथोक्ता: । **सुचिरमतिचिरकालावधि । शयितप्रतिबोधितस्मरं** शयित: प्रथमं कृतशयन: पश्चात् प्रतिबोधितो जागरित: स्मर: कामदेवो यत्र तद् यथा तथा (इदं क्रियाविशेषणम्) **अबोधिषत्** बोधिता: । शिशुपालवधस्येदं पद्यम् । अत्रानुलेपनानां कुसुमानां सायङ्कालस्य च कामोद्दीपकत्वेन मानभञ्जनसाधनत्वात्, दीपदशानां सुरतसामग्रीत्वाञ्चाप्रबुद्धकामप्रबोधकत्वम्, इति 'अबोधिषते'ति बोधनार्थकक्रियया सम्बन्धात्तुल्ययोगिता । प्रमिताक्षरावृत्तम् । 'प्रमिताक्षरा सजससैरुदिता' इति च तल्लक्षणम् ॥ १५८ ॥'

उदाहृतमर्थ स्वयमपि दर्शयति—**अत्रेत्यादिना** । स्पष्टोऽर्थ: । अयम्भाव:—सन्ध्याकालस्य कामोद्दीपकस्य प्रस्तुत्वात् अनुलेपनादीनामपि कामोद्दीपकत्वेन प्रस्तुतत्वमित्येषां 'शयितप्रतिबोधितस्मर' मिति क्रियाविशेषणेन 'अबोधिषते' ति क्रियायामन्वयात्तुल्ययोगत्वम् ।अतोऽत्र बोधनक्रिया समानधर्मत्वेनोपात्ता । इति

**'तदङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते।**

**मालतीशशभृल्लेखाकदलीनां कठोरता॥'**

इत्यत्र मालत्यादीनामप्रस्तुतानां कठोरतारूपैकगुणसम्बन्धः।

एवम्—

**'दानं वित्ताहृतं वाचः कीर्त्तिधर्मौ तथायुषः।**

**परोपकरणं कायादसारात्सारामाहरेत्॥'**

अत्र दानादीनां कर्मभूतानां सारतारूपैकगुणसंबन्धः एकाहरणक्रियासंबन्धः।

---

## विवृतिः

**तदङ्गमिति**। अत्र वर्णनीयतया नायिका प्रस्तुता। मालत्यादीनां तूपमानत्वेनाप्रस्तुतत्वम्॥ गुणक्रियोभयाभिसंबन्धे तुल्ययोगितामुदाहरति—**दानमिति**।

## विवृतिपूर्तिः

"गुणोत्कृष्टैः समीकृत्य वचोऽन्यां **तुल्ययोगिता** लोकपालो यमः पाशी श्रीदः शक्रो भवानपि॥" इति विशेषः। अत्र हिते मित्रे परा भूतिः उत्कृष्टा संपत्, अहिते शात्रवे पराभूतिः पराभवः, इति पराभूतिः पदश्लेषेण वृत्तितौल्यम्। मित्रशात्रवयोरिति संबन्धसामान्ये षष्ठी पराभवस्य मुख्यदानासंभवात्।

## विज्ञप्रिया

अप्रकृतानामेकगुणसम्बन्धमाह—**त्वदङ्गमार्दवं द्रष्टुरिति**। तद्द्रष्टुः कस्य जनस्य चित्ते मालत्यादीनां कठोरता न भासते। तन्मार्दवाधिक्येनात्र कठोरताभासनात्। अत्र त्वदङ्गोपमानत्वेन मालत्यादयोऽप्रकृताः।

प्रकृतानामेकगुणसम्बन्धोऽप्रकृतानामेकक्रियासम्बन्धश्चानुदाहृत एकश्लोकेन उदाह्रियते—एवं दानं वित्तादिति। वित्तादितोऽसाराद्दानादिकं सारमुद्धरेदित्यन्वयः। अत्र प्रकृतानामेकगुणक्रियासम्बन्धं दर्शयति—**अत्र दानादीनामिति**। उपार्जनीयत्वेन दानादीनि प्रकृतानि। अत्र प्रकृतानामपादानभूतानामेकसारतागुणसम्बन्धोऽप्यत्रैवास्ति। ग्रन्थगौरवापत्त्या न प्रदर्शितः।

## लोचन

कारकान्तरेऽपि उदाहरति—**दानमिति**। अत्र न केवलं दानादीनामुद्धरणक्रियासम्बन्धो वित्तादीनामप्यसारतारूपैकगुणसम्बन्धः। इह च तुल्ययोगितायां 'हंसश्चन्द्र इवाभाती'त्यादिवद् द्वयोः प्रकृतत्वेऽप्युपमानोपमेयभावो वैवक्षिकः। इहेवाद्यभावाद् औपम्यस्य गम्यत्वम्।

## कुसुमप्रतिमा

अप्रस्तुतानामेकगुणाभिसम्बन्धे उदाहरति त्वदङ्गेति। तत्र अङ्गानां मादवं कमोलतां द्रष्टुः साधुदर्शनकारिणः कस्य जनस्य चित्ते, मालती शशभृल्लेखाकदलीनां जातीकुसुमं चन्द्रलेखा रम्भास्तम्भानां कठोरता कठिनत्वं न भासते न प्रकायते अपि तु सर्वस्यैव भासत इत्यर्थः। तवाङ्गानां कोमलता मालत्यादिभ्योऽप्यधिकेति भावः। द्रष्टुरिति साधुकारिण्यर्थे तृन्प्रत्ययात्।त्वदङ्गमार्दवनित्यत्र "न निष्ठादिषु" इति पष्ठीनिषेधात् द्वितीयैव।

इत्यत्रवेति अप्रस्तुतानामिति। नायिकावर्णनस्यैव प्रस्तुतत्वादिति भाव। कठोवतारूपेण एकेन गुणेन सम्बन्धः अधिकरत सम्बन्धेबाभिसम्बन्ध इत्यर्थः।

एतौ च गुणक्रिययोरेकैकाभिसम्बन्धे उदाहत्य इदानीं तभ्यां द्वाभ्यामेव युगपदभिसम्बन्धे उदाहर्त्तुमाह एवमिति।

दानमिति। असारादिति ईषदर्थे नञ् अभावार्थकत्वे तु सारमाहरेदिति नोपपद्यते सर्वथा साररहितपदार्थतः साराहरणासम्भवात्। तथा च असारात् दानोपयोगितारूपकिञ्चिदुत्कृष्टांशविशिष्टात् वित्तात् धनात् सारं तद्वत्कृष्टांशप्रयोज्यं दानम्, आहरेदुहरेत्। एवममन्वप्युन्नेयम्। असारात् कायात् शरीरात् सारं परोपकरणं परोपकारम् आहरते। सर्वत्र बुद्धिमान् जन इति शेषः।

अत्रेति। दानादीनां प्रस्तुतानामप्रस्तुतानां वा। सारतारूपेण एकेन गुणेन सम्बन्धे अधिकरणतासम्बन्धेन सम्बन्ध सतीत्यर्थः, एकया आहरणक्रियया सम्बन्धः कर्म्मतासम्बन्धेन सम्बन्धः। असारादिति ईषदर्थे नञोऽङ्गीकारेण असारतारूपेकगुणसम्बन्ध बोध्यः। एतेन युगपदेकधर्म्मसम्बन्धेऽपि तुल्ययोगिता स्यादेव बाधकाभावादिति सूचितम्। द्वयोः प्रस्तुतयोः पदार्थयोरेकधर्म्माभिसम्बन्धे यथा नैषधे—

**"जितस्त्वयास्य न विधुः स्मरः श्रिया कृतप्रतिज्ञौ मम तौ वधे कुतः।**

**तवेति कृत्वा यदि तज्जितं मया न मोघसङ्कल्पधराः किलामराः॥**

अत्र "प्रसूनबाणोपनिषन्निशम्यतम्" इति पूर्वमभिहितत्वात् स्मरस्य तदुपकरणत्वाद्विधोश्च प्रस्तुतत्वमिति प्रस्तुतयोर्विधुस्मरयोर्जित इत्येकक्रियया कर्म्मतासम्बन्धेन सम्बन्धात् तुल्ययोगिता एवमप्रस्तुतयोरप्यूह्यम्। "मैत्री मैत्रश्च गच्छतः" इत्यादौ तु चैत्रमत्रयोरेकगमनक्रियासम्बन्धेऽपि वैचित्र्याभावान्न तुल्ययोगिता।

## विमला

गुणरूपधर्मसम्बन्धमुदाहरति, त्वदिति।—तव अङ्गस्य मार्दवं—सौकुमार्य्य, ["तदङ्गमार्दवम् इति पाठान्तरं, तत्र—तस्याः अङ्गानां मार्दवं—मदिमा, तत्तथोक्तम्। "न लोकाव्ययनिष्ठाखलर्थतृनाम्" (२/३/६९ पा.) इति सूत्रेण षष्ठया निषेधात् द्वितीया। क्वचित् समस्तपाठोऽपि दृश्यते] द्रष्टुः,—पश्यत इत्यर्थः, कस्य, जनस्य इति शेषः, चित्ते—मनसि, मालतीशशभृल्लेखाकदलीनां—जातीपुष्पचन्द्ररेखारम्भाकाण्डानामित्यर्थः, कठोरता—कार्कश्यं, न भासते ?—न प्रतिभाति ? अपि तु सर्वस्येत्यर्थः। अत्र मालत्यादीनाम् उपमानत्वेनाप्रस्तुतानां कठोरताऽऽत्मकेनैव गुणेन सम्बन्धः। यत्तु "अत्र वर्णनीयतया नायिका प्रस्तुता, मालत्यादीनां तूपमानत्वेनाप्रस्तुतत्वम्" इत्युक्तं तर्कवागीशैः, तस्यायं भावः,—नायिकां प्रस्तूय मालत्यादीनामप्रस्तुतानां कठोरतारूपेण एकेन धर्मेण सम्बन्धः इति।

गुणक्रियोभयाभिसम्बन्धे तुल्ययोगितामुदाहरति, दानमिति ।—असारात्—ईषत्सारो यत्र तस्मादित्यर्थः, न तु न सारो यत्र तस्मात्, तथाऽसम्भवात्; वस्तुनः इति शेषः, सारम्—उत्कृष्टांशम्, आहरेत्—सङ्गृह्णीयात्, तथा हि—वित्तात्—धनात्, असारादिति शेषः, वित्तस्य दानैकप्रयोजनत्वात्, दानं, सारमिति सर्वत्रान्वेतव्यम्; असारायाः वाचः, वाचोऽसारत्वञ्च सत्यपरत्वाभावे, ऋतं—सत्यम्, आयुषः—जीवनकालात्, असारादिति शेषः, कीर्त्तिधर्मौ, "येन कीर्त्तिर्धर्मौ वा नोपार्जितस्तस्य जीवनं मरणादधमम्" इति नयेन जीवनस्य कीर्त्तिधर्मैकफलत्वमूह्यं, तथा कायात्—देहात्, परोपकरणं—परेषामुपकारम्, आहरेदित्यन्वयः, अन्यथाऽस्य वैफल्य, "कायेन वाचा मनसा च ये नराः परोपकाराय सदैव दीक्षिताः । त एव धन्याश्च त एव जीविताः" इत्याद्युक्तदिशाऽवसेयम् ।

## लक्ष्मी

अप्रस्तुतानामेकगुणभिसम्बन्धे उदाहरणमाह—**तदङ्गमार्दव**मिति । तस्याः अङ्गानां मार्दवं सौकुमार्यं द्रष्टुः साधुवस्त्ववलोकयितुः कस्य लोकस्य चित्ते, मालती जातीकुसुमं शशभृल्लेखा चन्द्रलेखा कदली रम्भा तासां तथोक्तानाम्, मालतीपदञ्चात्र कोकनदेन्दीबराणामप्युपलक्षकम्, कठोरता कठिनत्वं न भासत इत्यर्थः ।

द्रष्टुरित्यत्र तृनः कृदन्तत्वात् 'कर्त्तृकर्मणोः कृति' इति षष्ठी तु न शङ्कनीया न **लोकाव्ययेति**तिनिषेधात् । तथा च नायिकाया अङ्गमात्रापेक्षया मालत्यादीनां न सौकुमार्यमिति वाच्योऽर्थः । प्रतीयमानस्तु नायिकाया दर्शनापेक्षया मालत्याः, हस्तपादलोचनाद्यपेक्षया कोकनदादीनां वदनापेक्षया शशलाञ्छितत्वेन दूषितस्य चन्द्रस्य, जङ्घापेक्षया कदल्याश्च च किञ्चिदपि सौकुमार्यं प्रत्युतात्यन्तं कठिनत्वमेव, मालत्यादेर्विद्यमानत्वेऽपि नायकस्य तां विना वैरस्यावहत्वात् प्रत्युत कामानलसन्दीपकत्वादिति ।

लक्ष्ये लक्षणं योजयति—**इत्यत्रेति** । **अप्रस्तुतानामिति** । नायिकावर्णनस्यैव प्रस्तुतत्वात् मालत्यादीनान्तूपमानत्वेनाप्रस्तुतत्वादितिभावः । कठोरतारूपैकेन गुणेन सम्बन्धः अधिकरणतासम्बन्धेनान्वय इत्यर्थः ।

गुणक्रिययोरेकैकाभिसम्बन्धे पृथक् पृथगुदाहरणं प्रदर्श्य सम्प्रति ताभ्यां द्वाभ्यामेवैकत्र युगपदभिसम्बन्धे उदाहरणं प्रदर्शयितुमाह—**एव**मिति ।

उदाहरति—**दान**मिति असारात् दानोपयोगित्वरूपकिञ्चिदुत्कर्षांशविशिष्टात् वित्तात् धनात् सारं तदुत्कर्षांशप्रयोज्यं दानम् आहरेत् उद्धरेत्, बुद्धिमान् जन इति शेषः । एवमग्रेऽपि । यद्यसारादित्यत्र अभावार्थकनञो योगे सर्वथा साररहितादित्यर्थः स्यात् तदा तेन सारमाहरेदित्यस्य सम्बन्धो न स्यात् सर्वथा निःसारपदार्थतः साराहरणासम्भवादतः ईषदर्थेऽत्र नञितिबोध्यम् । एवमन्यत्राऽप्यनुसन्धेयम् । वाच इत्यस्य विशेषणोपपत्तये असारादित्यस्य असाराया इति कल्पनीयम् । तथा च असाराया वाचो वाक्यात् सारम् ऋतं सत्यम्, आहरेत् सञ्चिनुयात्, असारादायुषो जीवनात् कीर्त्तिधर्मौ कीर्त्तिरूपं धर्मरूपञ्च सारौ आहरेत्, तथा असारात् कायात् शरीरात् पुनः सारं तत्त्वं परोपकरणं परोपकारम् आहरेत् ।

लक्ष्यं समर्थयति—**अत्रेति** । कर्मभूतानाम् 'आहारे'दितिक्रियाया इति शेषः, सारता रूपैकेन गुणेन सम्बन्धे अधिकरणत्वसम्बन्धेनान्वये सतीत्यर्थः, एकया आहरणक्रियया सम्बन्धः कर्मत्वसम्बधेनान्वयः । एवञ्च प्रतिबन्धकाभावाद् युगपदेकधर्माभिसम्बन्धेऽपि तुल्ययोगिता भवत्येवेतिव्यञ्जितम् । अत्र पुरुषस्येतिकर्तव्यतायां प्रस्तूयमानायां दानादीनामितिकर्त्तव्यतात्वेन प्रस्तुतत्वमित्यपि ज्ञातव्यम् ।

अप्रस्तुतानां गुणक्रिययोर्युगपदेवैकधर्माभिसम्बन्धे यथा—

**'न्यञ्चति बाल्यसुदृशः समुदञ्चति गण्डसीम्नि पाण्डिमनि।**

**धवलीभवत्यनुदिनं लवनीकनकं कलानिधिश्चायम्॥'**

अत्र नायिकाया गण्डयोः पाण्डिमोदये प्रस्तुतेऽप्रस्तुतानां धवल्यादीनां धवलीभवनरूपैकगुणविशिष्टक्रियायां युगपदेवाभिसम्बन्धः। 'चैत्रो मैत्रश्च गच्छतः' इत्यादौ चैत्रमैत्रयोरेकगमनक्रियाभिसम्बन्धेऽपि नायमलङ्कारः वैचित्र्याभावात् तद्भिनालङ्कारानभ्युपगमात्। श्लेषानुप्राणितापीयं दृश्यते यथा—'प्रदीयते परा भूतिर्मैत्रशात्रवयोस्त्वया।'

अत्र पराभूतिशब्दस्य नानार्थकत्वेन पराभूतिप्रदानक्रियारूपैकधर्माभिसम्बन्धः।

## रुचिरा

एकगुणरूपधर्माभिसम्बन्धा यथा—'न्यञ्चति वयसि प्रथमे, समुदञ्चति किं च तरुणिमनि सुदृशः। उल्लसति काऽपि शोभा वचसां च दृशां च विभ्रमाणां च॥' अत्र मदनाक्रान्तत्वेन यौवनस्येव वचनादीनामपि प्रस्तुतत्वात् शोभारूपेणैकेन गुणेन योगः।

अप्रस्तुतानां गुणरूपैकधर्मसम्बन्धानुदाहरति—**तदङ्गमार्दवं** तस्या अङ्गानि तेषां मार्दवं सौकुमार्य्यं तत्तथोक्तम्। 'नलोकाव्ययनिष्ठाखलर्थतृनाम्।' २/३/६९ इति सूत्रेण षष्ठया निषेधः। **द्रष्टुः**। **कस्य**। चित्ते। **मालतीशशभृल्लेखाकदलीनां** मालती च शशभृत् (चन्द्रः) च कदली चेति तासाम्। **कठोरता**। न। **भासते** प्रतीतिं प्रतिपद्यमाना भवतीत्यर्थः। नायिकाया अङ्गमात्रपेक्षया न मालत्यादीनां सौकुमार्य्यमिति स्थूलोऽर्थः, सूक्ष्मस्तु—नायिकाया रदनापेक्षया मालत्याः, मालतीपदस्य च कोकनदेन्दीवरादीनामुपलक्षकत्वेन करचरणनयनाद्यपेक्षया कोकनदादीनां च, मुखापेक्षया शशलाञ्छितत्वेन दूषितस्य चन्द्रस्य, ऊर्वपेक्षया कदल्याश्च न किमपि सुकुमारत्वम्, प्रत्युतात्यतिशयितं कठोरत्वमेव, तां विना नायकस्य मालत्यादिसत्त्वेऽपि विरसत्वावहत्वात् प्रत्युतासह्यमदनानलज्वालकत्वात्। इति॥ १५९॥'

लक्षणीयं निर्दिशति—**इत्यत्रेत्यादिना**। स्पष्टोऽर्थः। वर्णनीयतया नायिका प्रस्तुता, मालत्यादीनां तूपमानत्वेनाप्रस्तुतत्वम्; इति बोध्यम्। क्रियारूपैकधर्मसम्बन्धाऽसावेव यथा—'न्यञ्चति बाल्ये सुदृशः समुदञ्चति गण्डसीम्नि पाण्डिमनि। न्यञ्चति राकाऽधिपतिर्लवलीपुरटं पुण्डरीकं च॥' इत्यत्र-न्यञ्चनक्रियारूपस्य धर्मस्य लवल्यादिभिरुपमानभूतैः सम्बन्धः। असौ गुणविशिष्टक्रियारूपधर्मसम्बन्धाचारीयस्तामावहति, तत्र प्रस्तुतानां स्वयमुदाहर्त्तुमाह—**एवं**-'**वाचो** वचनात् (लिङ्गविपरिणामेन 'असारा' दिति 'असाराया' इति विशेषणत्वेन योज्यम्)। वित्तादृतं वित्तानुकूलं 'वित्तशाठयं विवर्जयेत् इति।' निषेधानास्पदभूतमिति यावत्। **दानम्**। **तथा**। **आयुषो** जीवनात् 'असारा'दिति शेषः। **कीर्त्तिधर्मौ** कीर्त्तिरूपं धर्मरूपं चेत्यर्थः। **असारात्**। **कायाच्छ**रीरात्। 'पुन'रिति शेषः। **परोपकरणं** परोपकाररूपमिति भावः। **सारं** तत्त्वम्। **आहरेत्** सञ्चिनुयात्॥ १६०॥'

**अत्र**। **दानादीनाम्**। **कर्मभूतानाम्**। 'आहरे'दिति क्रियाया इति शेषः। **सारतारूपैकगुणसम्बन्धे** सारता रूपं यस्य तादृशोऽसावेकगुणस्तस्य सम्बन्धो योगस्तत्र। **एकाहरणक्रियासम्बन्ध** एकाऽसावहरणक्रियातस्याः सम्बन्धः। इदमुक्तम्-पुरुषस्य कर्त्तव्यतायां प्रस्तूयमानायां कर्त्तव्यत्वेन दानादीनां प्रस्तुतत्वम्, एषां च सारतारूपैकगुणविशिष्टाहरणैकक्रियया सम्बन्धः। इति। यथा वा—'न्यञ्चति वयसि प्रथमे समुदञ्चति किञ्च तरुणिमानि सदृशः। दधति स्म मधुरिमाणं वाचो गतयश्च विभ्रमाश्च भृशम्॥' इत्यत्र मधुरिमरूपैकगुणविशिष्टधातिरूपैक-

क्रियासम्बन्धः। अप्रस्तुतानां यथा—'न्यञ्चाते बाल्ये सुदृशः समुदञ्चति गण्डसीम्नि पाण्डिमनि। धवलीभवत्यनुदिन लवनी कनकं कलानिधिश्चायम्॥ इत्यत्र नायिकाया गण्डयोः पाण्डिमोदये प्रस्तुतेऽप्रस्तुतानां धवल्यादीनां धवलीभवनरूपैकगुणविशिष्टक्रियायोगः। इयं श्लेषानुगुणिताऽपि सम्भवति, यथा—'प्रदीयते पराभूतिर्मैत्राशात्रवयोस्त्वया॥' इति। अत्र पराभूतिपदस्यानेकार्थकतया पराभूतिप्रदानक्रियारूपैकधर्मसम्बन्धः। इयं रसनारूपाऽपि, यथा—'दधीचिबलिकर्णेषु हिमहेमाचलाब्धिषु। अदातृत्वमधैर्य्य च दृष्टे भवति भासते॥' इति, अर्थान्तरन्यासानुगताऽप्येषा यथा—'दूरीकरोति कुमतिं, विमलीकरोति, चेतश्चिरन्तमघं चुलकीकरोति। भूतेषु किं च करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति।' इति, अत्र ह्यर्थान्तरन्यासानुगता कारकतुल्ययोगिताऽनेकासां क्रियाणामेकत्रान्वयात्। यथा वा—'वसु दातुं यशो धातुं विधातुमरिमर्दनम्। त्रातुं च सकलां पृथ्वीमतीव निपुणो भवान्॥' अत्र निपुणत्वरूपैकधर्मयोगः। यथा वा—'केऽपि स्मरन्त्यनुसरन्ति च केचिदन्ये पश्यन्ति पुण्यपुरुषाः कति च स्पृशन्ति। मार्तमुरारिचरणाम्बुजमाध्वि! गङ्गे! भाग्याधिकाः कतिपये भवतीं पिबन्ति॥' इति, अत्र स्मरणादिक्रियाणां गङ्गायाः कर्म्मतारूपैकधर्मेण सम्बन्धः। व्यङ्ग्या यथा—'अये लीलाभग्नत्रिपुरहरकोदण्डमहिमन् कथा यत्रोदञ्चत्यतुलबलधैर्य्यस्य भवतः। अयं को वा तत्र प्रसृमरफणाकोणनिहितक्षितिः शेषः श्रीमान् कमठकुलचूडामणिरपि॥' इति, अत्र 'को वा' इत्यनेन वाच्यलक्ष्यताऽनालिङ्गितस्यागणनीयत्वस्य शेषकमठाभ्यां योगः प्रतीयते। इति।

**अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते ॥ ४८ ॥**

**अथ कारकमेकं स्यादनेकासु क्रियासु चेत्।**

क्रमेणोदाहरणम्—

**'बलावलेपादधुनापि पूर्वव-**

**त्वप्रबाध्यते तेन जगज्जिगीषुणा।**

**सतीव योषित्प्रकृतिः सुनिश्चला**

**पुमांसमभ्येति भवान्तरेष्वपि ॥'**

अत्र प्रस्तुतायाः सुनिश्चलायाः प्रकृतेरप्रस्तुतायाश्च सत्या योषित एकानुगमनक्रियासंबन्धः।

---

## विवृतिः

दीपकालंकारमाह—**अप्रस्तुतेति**। ननु 'कमलमिव मुखं मनोज्ञं—' इत्यादावतिव्याप्तिरिति चेत्। न। साम्यवाचकपदाभावे सतीत्यस्य विवक्षणीयत्वात्। एवं वैधर्म्यैक्तयभावे सतीत्यपि बोध्यम्। तेन 'त्वं समुद्रश्च दुर्वारौ महासत्वौ सतेजसौ। अयं तु युवयोर्भेदः स जडात्मा पटुर्भवान् ॥'

इत्यादि व्यतिरेकालंकारे नातिव्याप्तिः ॥ प्रकारत्रयेण दीपकमाह—**अथेति**। अथवेत्यर्थः। अनेकासु क्रियास्वेकं कारकं यदि संबद्धं स्यात्तदापि दीपकं स्यादित्यर्थः। **बलावलेपात्**। सामर्थ्यगर्वात्। **अधुनापि** अस्मिन् जन्मन्यपि। **पूर्ववत्**पूर्वजन्मनीव। **तेन** शिशुपालेन। **भवान्तरेषु** जन्मान्तरेषु ॥

## विवृतिपूर्तिः

**दीपकमिति**। प्रकृतार्थमुपात्तो धर्मः प्रसङ्गादप्रकृतमपि दीपयति प्रकाशयति सुन्दरीकरोतीति दीपकम्। अथवा। दीप इव दीपकम्। संज्ञायां कन्। दीपसादृश्यं च प्रकृताप्रकृतप्रकाशकत्वेनावसेयम् ॥

गुणेति। दण्डयादिग्रन्थं लक्ष्यीकृत्येयमुक्तिः। तथा चाचार्य**दण्डी**—'जातिक्रियागुणद्रव्यवाचिनैकत्र वर्तिना। सर्ववाक्योपचारश्चेत्तमाहुर्दीपकं, यथा ॥ इत्येवमादिदीपकचक्रमाह स्म। आचार्यरुद्रटोऽपि—'आदौ मध्येऽन्ते वा वाक्ये तत्संस्थितं च दीपयति। वाक्यार्थानिति भूयस्त्रिधैतदेवं भवेत्षोढा ॥' इत्यादि। **कुवलयानन्दे** तु 'अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरेव च। दीपकस्थान एवेष्टमलंकारत्रयं यथा ॥ इत्यावृत्तिगणोक्तदिशा—'त्रिविधं दीपकावृत्तौ भवेदा**वृत्तिदीपकम्**। वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी। उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः। माद्यन्ति चातकास्तृप्ता माद्यन्ति च शिखावलाः।' इत्युपनिबद्धम्। प्रथमे वर्षतीति शब्दावृत्तिः तत्र शर्वरी उद्दीपकत्वाद् वर्षमिवाचरति वर्षतीति श्लिष्टम्। द्वितीये उन्मीलन-स्फुटनयोरर्थस्य विकासरूपस्यावृत्तिः। तृतीये माद्यन्तीतिपदस्य तदर्थस्य हर्षस्यावृत्तिरिति। एवं 'क्रमिकैकगतानां तु गुम्फः **कारकदीपकम्**।'गच्छत्यागच्छति पुनः पान्थः पश्यति पृच्छति ॥'

## विज्ञप्रिया

दीपकालङ्कारमाह—अप्रस्तुतप्रस्तुतयोरित्यनयोरेकधर्म्माभिसम्बन्ध इत्यनुषङ्गः। अन्यविधं दीपकमाह—**अथेति**।

**बलावलेपादिति**। अवलेपोऽहङ्कारः। पूर्ववद्धिरण्यकशिपुरूपपूर्वजन्मवत् जिगीषुणा शिशुपालेनापि जगद् बाध्यत इत्यन्वयः। अर्थान्तरं न्यस्यति **सती चेति**। भवान्तरेषु जन्मान्तरेषु

## लोचन

अप्रस्तुतप्रस्तुतयोरेकधर्माभिसम्बन्ध इत्यर्थः। इह च द्वयोः प्रकृताऽप्रकृतत्वादिवाद्यभावादौपम्यस्य गम्यत्वं स्फुटमेव।

**तपस्विनीति**—शोच्या। इह दीपकप्रकारे क्रियाणां प्रस्तुतत्वादुपमानोपमेयभावो वैवक्षिकः। तत्रादिमध्यान्तवाक्यगतत्वेन धर्मस्य प्रवृत्तौ आदिमध्यान्तदीपकास्त्रयोऽस्य भेदाः। तत्रादिदीपकं यथा—

**'रहेइ मिहिरेण णहं रसेण कव्विं सरेण जोव्वणअं।**

**अमएण धुणिधवओ तुमए णरणाह भुअणभिणं।'**

मध्यदीपकं यतोदाहृते बलावलेपादित्यादौ। एवमन्यत्।

## कुसुमप्रतिमा

उक्त्ययुक्तंरविशिष्ट दीपकालङ्कार—लक्षयति अप्रस्तुतेति। अप्रस्तुततयोस्तु पदार्थयोरेकधर्म्माभिसम्बन्ध इत्यनुकृष्यते दीपकं नामालङ्कारो निगद्यते। अत्र"तु" इत्यत्ययनिपातस्य नानाथ तथा साम्यवाचक वैधर्म्ययोरभावे सतीति विशेषणञ्च लभ्यते। एवञ्च,

अप्रस्तुतेन सह प्रस्तुतस्य प्रस्तुतेन वा सहाप्रस्तुतस्य पदार्थस्य साम्यवाचकवैधर्म्यायोरभावे सत्येकधर्म्मभिसम्बन्धो दीपकमिति लक्षणं पर्य्यवसितम्।

तेन प्रस्तुतैः सह प्रस्तुतानामप्रस्तुतैः सह चाप्रस्तुतानामेकधर्म्माभिसम्बन्धरूपायां तुल्ययोगिताः। नातिव्याप्तिः। तथा "कमलमिव मुख मनोज्ञम्" इत्यादौ अप्रस्तुतप्रस्तुतयोः कमलमुखयोर्मनोज्ञत्वरूपैकगुणसम्बन्धेऽपि साम्यवाचकस्य इवशब्दस्य सत्त्वन्नातप्रसङ्गः। "पौरं जनं सुतीयसि" इत्यादौ यो यत्र प्रत्ययो जातः समासो यत्र वा भवेत्। स एन वक्ति इति न्यायेन साम्यवाचकस्य क्यच प्रत्ययस्य "विराजते चन्द्रमुखी किलेयम्" इत्यादौ च साम्यावाचकस्य उपमितसमासस्य सत्त्वान्नातिप्रसक्तिः। एवं "तृष्णापहारौ विमलो द्विजावासो जनप्रियः। इदः पद्माकरः किन्तु बुधस्त्वं स जलाशयः॥" इत्यादौ वैधर्म्यास्यापि सत्त्वान्नातिव्याप्तिः।

विशिष्टं लक्षणान्तरमाह अथेति। अथशब्द एव तद्वैशिष्ट्यं सूचयति। चेद्यदि अनेकासु क्रियासु एकं यत् किञ्चित् कारकं स्यात्, तदा तदपि दीपकमेव निगद्यत इत्यर्थः।

तथा च दीपयति अप्रस्तुतमपि पदार्थं बुद्धाववभासयतीति दीपकम्। अस्मादेव च प्रमाणादत्रार्थ दीपकशब्द एव कारकशब्द इव नित्यक्तीवलिङ्ग इति बोध्यम्।

आद्यमुदाहरति बलेति। शिशुपालवधप्रथमसर्गस्थमिदं पद्यम्। जिगीषुणा जेतुमिच्छुना तेन शिशुपालेन, बलस्य स्वसामर्थ्यस्य आवलेपाछर्पात्, अधुनापि अस्मिन् जन्मन्पि पूर्ववत् पूर्व पूर्व जन्मनीव, जगत् प्रबाध्यते अतीव पीद्यते। कथमेतदित्याह सतीति। सती योषत् स्त्री च, निश्चला सुस्थिरा प्रकृतिः स्वभावशश्च, भवान्तरेष्वपि जन्मान्तरेष्वपि पुमांसं पुरुषम् अभ्यति प्राप्नोति।

अत्रेति। प्रस्तुताया इति। शिशुपालवधस्य प्रस्तुतत्वेनैव तत्प्रकृतेरपि प्रस्तुतत्वमिति भावः।

## विमला

दीपकमाह, अप्रस्तुतेति।—अप्रस्तुतप्रस्तुतयोः,—अप्रकृतप्रकृतयोः, एकधर्माभिसम्बन्धः इति पूर्वतोऽवानुवर्त्तनीयं, दीपकं—दीपयति—प्रकाशयति, प्रकृतार्थमुपात्तो धर्मोऽद्भुततां नयतीति तथोक्तम्; यद्वा—दीप इव दीपकं [संज्ञार्थे कन्। दीपतुल्यत्वं हि प्रस्तुताप्रस्तुताभासकत्वेन ज्ञेयम्] निगद्यते। ननु "कमलमिव मुखं मनोज्ञम्" इत्यादौ अतिव्याप्तिः इति चेत् न; साम्यवाचकपदाभावे सतीत्यस्य विवक्षणीयत्वात्; एवं वैधर्म्योक्त्यभावे सतीत्यपि बोध्यम्; तेन "त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ। अयन्तु युवयोर्भेद स जड़ात्मा पटुर्भवान्॥" इत्यादि व्यक्तिरेकालङ्कारे नातिव्याप्तिः। प्रकारान्तरेण दीपकमाह, अथेति।—अथ—किंव, चेत्—यदि, अनेकासु क्रियासु एकं कारकं सम्बद्धं स्यात्, तदाऽपि दीपकं स्यादित्यर्थः।

प्रथमं दीपकमुदाहरति, बलेति।—जिगीषुणा—जयेच्छुना, तेन—शिशुपालेन इत्यर्थः, बलाबलेपात्—सामर्थ्यगवात्, अधुनाऽपि—अस्मिन् जन्मनि अपि, पूर्ववत्—पूर्वजन्मनीव, जगत् प्रबाध्यते—प्रपीड्यते; तथा हि—सती—साध्वी, योषिच्च—स्त्री च, निश्चला—सुदृढ़ा, कदाऽपि अनपायिनीत्यर्थः, प्रकृतिश्च—स्वभावश्च, [अत्र चकाराधिक्यं समुच्चयार्थम् एतेन प्रस्तुतायाः प्रकृतेः अप्रस्तुतायाः सत्याश्च "अभ्येति" इत्येकया क्रियया सम्बन्धः सूचितः] भवान्तरेषु—जन्मान्तरेषु अपि, पुमांसं—जन्मान्तरीणाश्रयभूतमिति भावः, अभ्येति—प्राप्नोति। तथा च मनुः,—"पतिं या नाभिचरति मनोवाक्कायसंयता। सा भर्तुर्लोकमाप्नोति सद्भिः साध्वीति चोच्यते॥" इति। ["सतीव योषित् प्रकृतिः सुनिश्चला" इति शिशुपालवधधृतपाठे उपमानोपनेयपुरष्कृतोऽर्थान्तरन्यासालङ्कारः]। वंशस्थविलं वृत्तम्। शिशुपालवधस्येदं पद्यम्।

## लक्ष्मी

उपयुक्तेः शेषं दीपकालङ्कारं निरूपयति—**अप्रस्तुतेति**। सूत्रे लिङ्गवचनमतन्त्रम्' इति नियमस्योक्तत्वात् अप्रस्तुतप्रस्तुतयोरित्यत्र द्विवचनमविवक्षितम्, तेन अप्रस्तुतप्रस्तुतानामित्यपि लभ्यते, 'यदा भवेदेकधर्माभिसम्बन्धः तदा' इत्यस्य पूर्वकारिकातोऽनुषङ्गो विधेयः। तथा च अप्रस्तुतानां प्रस्तुतानां च सम्मिलितानां यदा एकधर्माभिसम्बन्धः स्यात्तदा तु दीपकं नामालङ्कारो निगद्यते। धर्मश्चात्रापि गुणक्रियान्यतररूप एव बोध्यः। अत्र 'तु' इति निपाताव्ययस्यानेकार्थत्वेन सादृश्यवाचकवैधर्म्ययोरसत्त्वे सतीतिविशेषणञ्च प्रतीयते। सादृश्यस्य व्यङ्ग्यत्वं तुल्ययोगितायामिवात्रापि। तथाच अप्रस्तुतैः सह प्रस्तुतानां प्रस्तुतैर्वा अप्रस्तुतानां पदार्थानां सादृश्यवाचकवैधर्म्ययोरसत्त्वे सत्येकधर्माभिसम्बन्धो दीपकमितिलक्षणं फलितम्। अतएव तुल्ययोगितायां नातिव्याप्तिः तत्र प्रस्तुतैः सह प्रस्तुतानामप्रस्तुतैः सह चाप्रस्तुतानामेकधर्माभिसम्बन्धात्। सत्यन्तदलघटक 'सादृश्यवाचकै'त्युक्त्या 'कमलमिव मुखं मनोज्ञम्' इत्यादौ अप्रस्तुतप्रस्तुतयोः कमलमुखयोर्मनोज्ञत्वरूपैकगुणसम्बन्धेऽपि सादृश्यवाचकस्य इवशब्दस्य विद्यमानत्वेऽपि नातिव्याप्तिः। एवमेव—

**'त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसी।**

**अयं तु युवयोर्भेदः स जडत्मा पटुर्भवान्॥'**

इत्यादौ वैधर्म्यस्यापि विद्यमानत्वान्नातिव्याप्तिः।

द्वितीयं लक्षणान्तरं दर्शयति—**अथेति**। अथवेत्यर्थः। चेद् यदि अनेकासु क्रियासु विद्यमानासु इति शेषः। क्रिया चात्र तिङन्तादिवाच्या सत्त्वभूता गृह्यते असत्त्वभूतायाश्चोपमानत्वाभावः सन्विधायके 'धातोः कर्मणः समानकर्त्तृकादिच्छायां वा' ३/१/१७ इति पा. सूत्रभाष्ये 'न वै तिङन्तेनोपमानमस्ति' इति ग्रन्थेन प्रतिपादितः। एवं

**'कर्त्ता कर्म च करणं सम्प्रदानं तथैव च।**

**अपादानाधिकरणमित्याहुः कारकाणि षट्॥**

इत्युक्तेषु षट्सु कारकेष्वेकतममित्यर्थः, कारकं स्यात्, तदपि दीपकमेव निगद्यते इति दोषः। एवञ्च एकस्थस्यैव सर्ववाक्यप्रकाशकत्वेन दीपसाम्याद्दीपकमित्यर्थः। दीपयति अप्रस्तुतमपि पदार्थ बुद्धौ प्रकाशयति (सुन्दरीकरोति) इति व्युत्पत्तिः। 'दीपी दीप्तौ इति दिवादिगणपठिताद्दीपधातोर्णिजन्तात्—'ण्वुल्तृचौ' पा. ३/१/१३३ इति सूत्रेण कर्त्तरि ण्वुल्प्रत्ययः 'युवोरनाकौ' ७/१/१ इति पा. सूत्रेणाकादेशे रूपम्। यद्यच्प्रत्ययः सम्भाव्यते तदा दीप इव दीपकम् 'संज्ञाया कन्' ५/३/५७ इति पा. सूत्रेण संज्ञायां कन्। सादृश्यं च प्रस्तुताप्रस्तुतप्रकाशकत्वेनेति बोध्यम्।

तत्राद्यमुदाहरति—**बलावलेपादिति**। शिशुपालवधस्य प्रथमसर्गे पद्यमिदम्। जिगीषुणा जेतुमिच्छुना नित्योत्साहवतेतियावत्, तेन शिशुपालेन बलस्य स्वसामर्थ्यविशेषस्य अवलेपात् गर्वात् बलगर्व प्राप्तेत्यर्थः अधुनापि अस्मिन् जन्मन्यपि पूर्ववत् पूर्वपूर्वजन्मनीव जगत् संसारं प्रबाध्यते नितरां पीडयते। ननु कथमेवंविधं करोतीत्यत आह—**सतीवेति**। सती साध्वी—

**'पतिं या नाभिचरति मनोवाक्कायसंयता।**

**सा भर्त्तुर्लोकमाप्नोति सद्भिः साध्वीति चोच्यते॥'**

इत्यादिप्रसिद्धमाहात्म्यात्पतिव्रतेतियावत्। योषित् स्त्रीव सुनिश्चला सुस्थिरा प्रकृतिः स्वभावश्च भवान्तरेषु अन्यजन्मस्वपि किं पुनस्तस्मिन्नेव जन्मनीत्याशयः, पुमांसं पुरुषम् अभ्येति प्राप्नोति। **वंशस्थं** छन्दस्तल्लक्षणन्तूक्तं प्राक्।

उदाहरणसङ्गतिमुपपादयति—**अत्रेति**। **प्रस्तुताया** इति। शिशुपालवधस्य प्रस्तुतत्वेनैव तत्प्रकृतेरपि **प्रस्तुतत्वमिति बोध्यम्।**

अत्र प्रस्तुतैकत्वमिवाप्रस्तुतैकत्वमपि। प्रस्तुताप्रस्तुतानां बहुत्वे पुनरिदमेव यथा—

(क) 'किवणाणं धणं णाआणं फणमणी केसराइँ सीहाणं।

कुलवालिजाणं त्थणआ कुत्तो छिप्पंति अमुआणं॥'

अत्र वर्णनीयत्वेन प्रस्तुतानां कुलवधूस्तनानां स्पर्शेन क्रियैकरूपधर्मान्वयित्वेन कृपणधनादीनां वर्णनादप्रस्तुतत्वमितिक्रियालङ्कारोऽयम्।

संस्कृते उदाहरणं यथा—

'भूष्यन्ते प्रमदवनानि बालपुष्पैः, कामिन्यो मधुमदमांसलैर्विलासैः ।

(ख) ब्रह्माणः श्रुतिगदितैः क्रियाकलापैः राजानो विरलितवैरिणः प्रतापैः ॥'

अत्र प्रतापकर्तृकराजकर्मकभूषणक्रियारूपैकधर्माभिसम्बन्धात् बालपुष्पादिप्रमदवनादीनां वर्णन प्रस्तुतमिति क्रियादीपकम् ।

धर्मस्य गुणक्रियान्यतरत्वेनास्य द्वैविध्याभ्युपगमादन्त्योदाहरणं प्रदर्शितम् । अथाद्ये यथा—

**'मृतस्य लिप्सा कृपणस्य दित्सा विमार्ग गायाश्च रूचि स्वकान्ते ।**

**सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ नहि दृष्टपूर्वा ॥'**

अत्र कुटिलस्य मैत्र्या असम्भवत्वे प्रस्तुते मृतलिप्सादेरुपमानभूतस्योपादानमितिकुटिलमैत्री प्रस्तुता मृतलिप्सादिप्रस्तुता, अभावो गुणश्च, तथाचाभावगुणरूपैकधर्माभिसम्बन्धात् गुणदीपकालङ्कारोऽयम् । यत्त्वत्र—

**'श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः ।**

**भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः ॥'**

इत्युदाहृतम्, तन्न—तत्र प्रावृष उपक्रमे जीमूतपङ्क्तीनामिव शाद्वलराजीनामपि **प्रस्तुतत्वात् तुल्ययोगिताया** एव स्वीकारस्य युक्तत्वात् ।

## रुचिरा

दीपकं लक्षयति—**१२९ दीपकम्** । तु । **अप्रस्तुतप्रस्तुतयोः** । द्विवचनमविवक्षितम्, तेन-अप्रस्तुतप्रस्तुतानामित्यपि लभ्यते । अप्रस्तुतानां प्रस्तुतानां च सम्मिलितानामिति भावः । एतेन-तुल्ययोगिताया व्यवच्छेदः । 'यदा भवेत् एकधर्म्मभिसम्बन्धः तदा' इति पूर्वसूत्रादनुवर्त्तनीयम् । **निगद्यते** । धर्मश्चात्रापि गुणक्रियाऽन्यतररूप एवेति बोध्यम् । **अथ** अथवेति भावः । **चेत्** । **अनेकासु** । **क्रियासु** । 'सतीषु' इति शेषः । **एकं** 'कर्त्ता कर्म च करणं सम्प्रदानं तथैव च । अपादानाधिकरणमित्याहुः कारकाणि षट् ॥' इत्युक्तेषु षट्स्वेकतममिति भावः । **कारकम्** । **स्यात्** । तदाऽपि दीपकं निगद्यते इति शेषः । दीपं द्विविधम् एकस्य धर्मस्यैकत्रैवाप्रस्तुतानां प्रस्तुतानां च सम्बन्धित्वेनोपात्तत्वात्, एकस्यैव कारकस्य वा एकत्रानेकासां क्रियाणां सम्बन्धित्वेनोपात्तत्वात् । अत्र च यासां क्रियाणामेकं कारकमपेक्ष्यते, ता अप्रस्तुतप्रस्तुता ज्ञेयाः, यत्र प्रस्तुतासु अप्रस्तुतास्वेव वा क्रियासु सतीष्वेकं कारकं तत्र कारकोपाधिका तुल्ययोगितैव, यत्र तु अप्रस्तुतासु प्रस्तुतासु च सम्मिलितासु क्रियासु सतीष्वेकं कारकं तत्र कारकोपाधिकं दीपकं ज्ञेयम् । दीपकत्वं च प्रकृताप्रकृतप्रकाशकत्वम् । अतएवास्य 'दीप इवेति, दीपयतीति वा घटादिमिव सर्व वाक्य' मिति अन्वर्था सञ्ज्ञा । अत्रापि तुल्ययोगितायामिव सादृश्यं व्यङ्ग्यम् । तुल्ययोगितायां प्रस्तुतानामप्रस्तुतानामेव वेति तुल्यत्वमपेक्षितम्, अत्र तु प्रस्तुताप्रस्तुतोभयसाधारणत्वमिति विवेकः ॥ १०२ ॥

उदाहर्त्तुकाम आह—क्रमेणेत्यादि । स्पष्टम् । **'जिगीषुणा** जेतुमिच्छुना नित्योत्साहवतेति यावत् । **तेन** शिशुपालेन । **बलावलेपाद्बलस्य** सामर्थ्यविशेषस्यावलेपस्तत्प्रयोज्यो गर्वस्तस्मात्तं प्राप्येति भावः । **अधुना** साम्प्रतं वर्त्तमाने जन्मनीति यावत् । **अपि** । **पूर्ववत्** पूर्वजन्मनीव । **जगत्** । **प्रबाध्यते** तदेवोपपादयति—**सती** पतिव्रता 'पतिं या नाभिचरति मनोवाक्कायसंयता । सा भर्त्तुर्लोकमाप्नोति सद्भिः साध्वीति चोच्यते ।' इत्यादिप्रसिद्धमाहात्म्येति

यावत् । **योषित्** । **च** । **निश्चला** दृढा । **प्रकृतिः** स्वभावः । **च** । **भवान्तरेषु** जन्मान्तरेषु । **अपि**, किं पुनस्तस्मिन्नेव जन्मनीति भावः । पुमांसं पुरुषम् । अभ्येति अन्वेति । शिशुपालवधस्येदं पद्यम् । वंशस्थविलं छन्दः ॥ १६१ ॥'

उदाहरणसङ्गतिं दर्शयितुमाह—**अत्रेत्यादि** । स्पष्टोऽर्थः । इदम्बोध्यम्-प्रकृतौ प्रस्तूयमानायां सत्या अप्यनुगमनक्रियारूपैकधर्मान्वयोपपादनमिति ।क्रियादीपकमिदम्, तथा च—सतीव प्रकृतिरित्यर्थो व्यज्यते । अत्र च प्रस्तुतैकत्वमिवाप्रस्तुतैकत्वमपि, प्रकृताप्रकृतानां बहुत्वे पुनरिदमेव यथा—'किवणाणँ धणं णाआणँ फणमणी केशराइँ सीहाणं । कुलवालिआणँ त्थणआ कुत्तो छिप्पंति अमुआणं ॥' इति, अत्र कुलवधूस्तनानां प्रस्तुतत्वे स्पर्शक्रियैकरूपधर्मान्वयित्वेन कृपणधनादीनां वर्णनादप्रस्तुतत्वम् । यथा वा—'भूष्यन्ते प्रमदवनानि बालपुष्पैः, कामिन्यो मधुमदमांसलैर्विलासैः । ब्रह्माणः श्रुतिगदितैः क्रियाकलापैः, राजानो विरलितवैरिभिः प्रतापैः ॥' इति, अत्र हि प्रतापकर्तृकराजकर्मकभूषणक्रियारूपैकधर्मान्वयित्वेन बालपुष्पादिप्रमदवनादीनां वर्णनप्रस्तुतमिति । धर्मस्य गुणक्रियाऽन्यतरत्वेनाङ्गीकारात् अस्य च द्वैविध्यम्, तत्रान्त्यमुदाहृतम्, आद्यं यथा—'मृतस्य लिप्सा कृपणस्य दित्सा विमार्गगायाश्च रुचिः स्वकान्ते । सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ नहि दृष्टपूर्वा ॥' इति । अत्र कुटिलस्य मैत्र्या असम्भवत्वे प्रस्तूयमाने मृतलिप्सादेरुपमानभूतस्योपादानम् इति कुटिलमैत्री प्रस्तुता, मृतलिप्सादिरप्रस्तुता, अभावो गुणश्च; एवम्—अभावगुणरूपैकधर्मान्वयं दीपकमिदम् । नच 'श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः । भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः ॥' इत्युदाहार्य्यम् प्रावृष उपक्रमे जीमूतपङ्क्तीनामिव शाद्वलराजीनामपि प्रस्तुतत्वेन तुल्ययोगिताया एवाङ्गीकारौचित्यात् । इति ।

कारकदीपकमुदाहरति—**'त्वयि** । **जीवनाथे** प्राणनाथे प्राणेभ्योऽप्यतिप्रिये । **दूरम्** असन्निहितत्वम् । **समागतवत्यागच्छति** सतीति भावः । **सा** त्वेदकाधारा । **मनोभवशरेण** कामबाणप्रहारेण । **भिन्ना** । **तपस्विनी** दुःखिता, तथाऽपि त्वदनुग्रहाभिलाषैकव्रतपरेति वा भावः । **उत्तिष्ठति** 'त्वामायान्तमिव सम्भाव्ये'ति शेषः । **स्वपिति** 'त्वत्सङ्गानिर्वृतेवे'ति शेषः । **त्वदीयम्** । **वासगृहं** निवासभवनम् । **आयाति** 'कदाचिन्निलीय मद्वञ्चनार्थं नात्र स्थित इति द्रष्टु'मिति शेषः । **याति** । 'त्वां तत्र अप्राप्ये'ति शेषः । **हसति** 'त्वन्नर्मोक्ति स्मृत्वेवे' ति शेषः । **क्षणेन** । पुनः—**श्वसिति** उच्छ्वासं प्रकटयति 'तव वस्तुतो दूरं प्रयाणं निश्चित्ये'ति शेषः । वसन्ततिलकं वृत्तम् ।

**'दूरं समागतवति त्वयि जीवनाथे**
**भिन्ना मनोभवशरेण तपस्विनी । सा ।**
**उत्तिष्ठति स्वपिति वासगृहं त्वदीय-**
**मायाति याति हसति श्वसिति क्षणेण ॥'**

इदं मम । अत्रैकस्या नायिकाया उत्थानाद्यनेकक्रियासंबन्धः । अत्र च गुणक्रिययोरादिमध्यावसानसद्भावेन त्रैविध्यं न लक्षितम् । तथाविधवैचित्र्यस्य सर्वत्रापि सहस्रधा संभवात् ।

---

## विवृतिः

द्वितीयं दीपकमुदाहरति—**दूरमिति** ।

## विवृतिपूर्तिः

इति **कारकादीपकम्** । गच्छत्यागच्छति पुनः पान्थः पश्यति पृच्छति ॥ इति कारकदीपकम् । अत्रैकस्य कर्तृकारकस्य गमनादिक्रियास्वन्वयः । एवं कारकान्तराण्यपि । तत्र—'स्वामयं यस्य निजं जगासु जनितैष्वादौ ततः पालनं व्युत्पत्तेः करणं हिताहितविधिव्याधेः सुसंभावनम् । भूतोक्तिः सहसा कृपा निरूपधिर्यलस्तदर्थात्मकस्तस्मै पूर्वगुरूत्तामाय जगतामीशाय पित्रे नमः ॥' इति संबन्धिन उदाहरणम् । यद्यपि कारकपदस्य विभक्त्यर्थद्वारा क्रियान्वयिनि शक्तया षष्ठ्यर्थस्य च नामार्थं एवान्वयेन क्रियान्वयविरहाद् 'यस्य' इति पदस्य न कारकत्वम्, तथापि पालनादिसमभिव्याहारे 'कर्तृकर्मणोः कृति' इति षष्ठीविधानात्तत्र कर्मत्वलक्षणावश्यकत्वेन तस्य क्रियान्वयादस्यौदाहरणत्वमविरुद्धम् ॥

## विज्ञप्रिया

अनेकक्रियास्वेककारकान्वयमाह—**दूरमिति** । प्रवासादागते नायके तत्पत्नीसख्या तद्विरहावस्थाकथनमिदम् । समागतवति—आगतवति । तपस्विनी दुःखान्विता सा तव प्रिया वासगृहगमनं, त्वत्प्राप्तिसम्भावनया ।

## कुसुमप्रतिमा

द्वितीयमुदाहरति दूरमिति । पत्युरन्तिके नायिकादूत्या उक्तिरियम् । जीवनाथे प्राणेश्वरे त्वयि, दूरं समागतवति सति, सा तपस्विनी शोच्या तव कान्तेत्यर्थः, मनोभवशरेण मदनबाणेन भिन्ना विदीर्णा सती, क्षणेन उत्तिष्ठति दण्डायमाना भवति, क्षणेन स्वपिति शेते, क्षणेन त्वदीयं वासगृहम् आयाति, पुनः क्षणेनैव याति ततो वासगृहाद्गच्छति, क्षणेन हसति, क्षणेन च श्वसिति श्वासान् मुञ्चति ।

अत्रापि प्रागुक्तयुक्तेरप्रस्तुतयोरिति प्रत्येकगतैकत्वेन द्वित्वायिवक्षितम् । तेन तयोः प्रत्येकगतानेकत्वेऽपि दीपकमेव । यथा मम रुक्मिणीहरणमहाकाव्ये—

**"विदधदपि जयं यत्तत्र कश्चिपश्चियुवतिजनमपश्यन्नाल्यशः सोऽस्य दोषः ।**
**हरति हि नवनारौ कौमुदी पद्मिनी वा नयनमवह्तितानामस्याकस्मात् स्वभावात् ॥"**

अत्र नवनारी प्रस्तुता कौमुदीपद्मिन्यौ तु अप्रस्तुते, तामाञ्च सर्वासां हरतीत्येकक्रियासम्बन्धाद्दीपकम् । किञ्चात्र कौमुदीपद्मिन्यौरप्रस्तुतयोर्हरतीत्येकक्रियासम्बन्धात्तुल्ययोगिता चेत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः ।

अत्र चेति । सर्वत्रापि सर्वेष्वेवालङ्कारेष्वपि ।

## विमला

द्वितीयं दीपकमुदाहरति, दूरमिति ।—दूत्या नायकं प्रत्युक्तिरियम् । जीवनाथे—प्राणवल्लभे, त्वयि—भवति इत्यर्थः, दूरं—देशान्तरमित्यर्थः, समागतवति—प्रस्थितवति सति, सा तपस्विनी—वराकी, मनोभवशरेण—कामबाणेन, भिन्ना—विद्धा सती, क्षणेन उत्तिष्ठति, स्वपिति—निद्राति, त्वदीयं—तव इत्यर्थः, त्रासगृहम् आयाति—आगच्छति, याति—गच्छति, हसति, श्वसिति—निश्वासान् त्यजति । ["जीवनाथ" इति पाठान्तरं, तथात्वे—हे जीवनाथ ! इति सम्बुद्धिः] । वसन्ततिलकं वृत्तम् । यथा वा—"खिद्यति कूणति वेल्लति विचलति निमिषत्रिविलोकयति तिर्य्यक् । अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥" अत्रार्य्यागीतिश्छन्दः ।

## लक्ष्मी

द्वितीयं कारकदीपकमुदाहरति—**दूरमिति** । कस्यश्चिन्नायिकाया नायकं प्रति तद्दूत्या विरहावस्थावर्णनमिदम् । जीवनाथे प्राणेश्वरे प्राणेभ्योऽतिप्रिये त्वयि, दूरमसन्निहितं समागतवति आगच्छति सति, सा तपस्विनी त्वदेकाश्रया दुःखिता तव प्रियेत्यर्थः, मनोभवशरेण कामबाणेन तत्प्रहारेणेत्यर्थः भिन्ना विदीर्णा सती, क्षणेन उत्तिष्ठेति त्वामागच्छन्तमिव सम्भाव्य दण्डायमाना भवति, क्षणेन स्वपिति त्वत्सङ्गान्निर्वृतेव शेते, क्षणेन त्वदीयं वासगृहं निवासभवनम् आयाति कदाचिन्निलीय मत्प्रतारणार्थं नात्र स्थित इत्यवलोकयितुमागच्छतीत्यर्थः, क्षणेनैव याति त्वां तत्रानसाद्य ततो निवासभवनाद्बहिर्गच्छतीत्यर्थः, क्षणेन त्वन्नर्मोक्ति स्मृत्वेव हसति, क्षणेन च श्वसिति तव वस्तुतो दूरं प्रयाणमवधार्य उच्छाङ्गं प्रकाशयति । **वसन्ततिलकं** छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

उक्तपद्यमन्यदीयं नेति प्रकाशयितुमाह—**इदं ममेति** । लक्ष्ये लक्षणं योजयति—**अत्रेति** । अयम्भावः—अत्रोत्थानादीनां सर्वासां क्रियाणां तत्पदप्रतिपाद्या नायिकैवैकं कर्तृकारकमिति कारकदीपकम् । नन्वत्र नायिकाया विरहावस्थाया एव वर्णनीयत्वेन तत्राखिलानामेव क्रियाणां प्रस्तुतत्वात्प्रस्तुताप्रस्तुतयोरभावात् कथं लक्षणसमन्वय इति चेत् ? सत्यम्, नायकागमनालिङ्गनादीना सम्भाव्यमानानां परस्परं विजातीयत्वेनैकस्याः क्रियायाः प्रस्तुतत्वम् अन्यस्याश्च तस्या अप्रस्तुतत्वमित्यङ्गीकारेणोक्तदोषाभावात् ।

दण्डयाद्युक्तावान्तरप्रकारान् दूषयितुमुत्थापयति—**अत्र चेति** । तथाचाचार्थदण्डी—

**'जातिक्रियागुणद्रव्यवाचिनैकत्र वर्त्तिना ।**
**सर्ववाक्योपचारश्चेत्तमाहुर्दीपकं यथा ॥'** इति ।

आचार्यरुद्रटोऽपि—

**'आदौ मध्येऽन्ते वा वाक्ये तत्संस्थितं च दीपयति ।**

**वाक्यार्थानितिभूयस्त्रिधैतदेवं भवेत्षोढा ॥'**

इत्यादिलक्षणमभिधायोदाहरणान्याह—

**'न भाति रमणीयोऽपि वैराग्येण विना यतिः ।**
**वैदुष्येण विना विप्रो नरलोकस्त्वया विना ॥'**

**लावण्येन प्रमदा मदातिरेकेण वारणाधिपतिः ।**

**भाति विभवेन भवकान् राजन्! भवता च वसुमतीवलयम् ॥**

**आखण्डलेन नाकः कुण्डलिकुलकुण्डलेन पातालम् ।**

**नरमण्डन ! रिपुखण्डन ! भवता भूमण्डलं विभातितमाम् ॥'**

एषु धर्मस्यादिमध्यान्तगत्वम् । **सहस्रधासम्भाववदिति** । तथा चैतेष्वतिशयविच्छित्तेरभावाद्विच्छित्त्यतिशयस्यैवालङ्कारत्वेन सर्वत्र स्वीकारादितिभावः ।

## रुचिरा

अत्र कस्या अपि नायिकादूत्या नायकं प्रति तद्दुःखावस्थावर्णनम् ॥' अत्र परकीयत्वभ्रममपनेतुमाह—**इदमित्यादि** । स्पष्टम् ॥ १६२ ॥'

उदाहरणं सङ्गमयितुमाह—**अत्रेत्यादि** । स्पष्टोऽर्थः । इदम्बोध्यम्-अत्रोत्थानादीनामनेकासां क्रियाणां तत्पदवाच्या नायिकैवेकं कर्तृकारकम् । अथ—यद्यपि नायिकाया विरहावस्थायां वर्ण्यमानायां सर्वासामेव क्रियाणां प्रकृतत्वमिति वक्तुं शक्यते, तथाऽपि-नायकागमनालिङ्गनादीनां सम्भाव्यमानानां परस्परं विजातीयत्वेनैकस्याः क्रियायाः प्रस्तुतात्वम्, अपरस्या अप्रस्तुतात्वमित्यासां प्रस्तुताप्रस्तुतात्वं समाधेयम् । यथा वा—'वासयति हीनसत्वानतिसत्त्वानुद्धतान् विवासयति । त्रासयति सकलशत्रून् नीतिविदामग्रणीर्नराधिपतिः ॥' इति, अत्र हि-कस्यचित् हीनसत्त्वस्य, सत्त्वाधिकं वाऽसहमानस्य, शत्रुणा पीडितस्य वा; राजानं प्रत्युक्तौ सामान्यविशेषात्मिकायामप्रस्तुतप्रशंसायामेकस्याः क्रियायाः प्रकृतात्व इतरयोरप्रकृतात्वम् । यथा वा—'वसु दातुं यशो धातुं विधातुमरिमर्दनम् । त्रातुं च मादृशान् राजन्नतीव निपुणो भवान् ॥' इति, अत्र हि कस्यचिद्वृत्तिहीनस्य दीनस्योक्तौ वसुदानस्वत्राणलक्षणयोः क्रिययोः प्रकृतयोः सत्योररिमर्दन-यशोधानलक्षणयोः क्रिययोरप्रकृतात्वम् । इति । अत्र रसगङ्गाधरमतं निराकुर्वन्तोऽलङ्कारसर्वस्वकाराः प्राहुः 'अत्र वदन्ति—दीपकमपि तुल्ययोगितायामेवान्तर्भवति, धर्मस्य सकृद्वृत्तेरुभयत्राविशेषात् । प्रकृताप्रकृतत्वादिविशेषस्य चावान्तरभेदसाधकत्वेऽपि अलङ्कारतायामसाधकत्वात् । अन्यथा श्लेषस्य तद्भेदयोरपि भिन्नालङ्कारत्वापत्तेः । तस्मात् प्रकृतानामेवाप्रकृतानामेव प्रकृताप्रकृतानां चैकधर्मान्वय इति तुल्ययोगिताया एव त्रयो भेदा वक्तुमुचिताः, तथा सति दीपकस्य तुल्ययोगिताया भेदं वदतां प्राचीनानां दुराग्रह एवेति, तच्चिन्त्यम् 'नानाऽधिकरणस्थानां शब्दानां सम्प्रदीपकः । एकवाक्येन संयोगो यस्तु दीपकमुच्यते ॥' यथा—'सरांसि हंसैः कुसुमैश्च वृक्षा मत्तैर्द्विरेफैश्च सरोरुहाणि । गोष्ठीभिरुद्यानवनानि चैव यस्मिन्नशून्यानि सदा क्रियन्ते ॥' इति भगवता भरतमुनिना दीपकस्याङ्गीकारात्तत्रैव तुल्ययोगिताऽन्तर्भावस्यौचित्यात् ।' इति, अन्ये तु 'न

च दीपके तुल्ययोगिताया अप्यन्तर्भावः स्थाने, अन्वर्थतायाः उच्छेदात्। दीपकं हि दीप इवेत्यर्थकम्, दीपस्य च अभेदेन सर्वेषां प्रकाशकत्वम्। न चैततुल्ययोगितायाः। तुल्यानां योगितेत्यन्वर्थताया अपहानात्।' इति। यदपि 'न भाति रमणीयोऽपि वैराग्येण विना यतिः। वैदुष्येण विना विप्रो, नरलोकस्त्वया विना ॥' 'लावण्येन प्रमदा मदातिरेकेण वारणाधिपतिः। भाति विभवेन भवकान्, राजन् भवता च वसुमतीबलयम् ॥' 'आखण्डलेन नाकः कुण्डलिकुलकुण्डलेन पातालम्। नरमण्डन रिपुखण्डन भवता भूमण्डलं विभातितमाम् ॥' इत्यादौ धर्मस्यादिमध्यान्तगततयाऽस्य भेदान्तरं न चमत्कारित्युपेक्षमाण आह—अत्रेत्यादि। स्पष्टम्। बिम्बप्रतिबिम्बभावेऽपि इदं दृश्यते, यथा—'शीलभारवती कान्ता, पुष्पभारवती लता। अर्थभारवती वाणी, भजते कामपि श्रियम् ॥' इति।

**प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः ॥ ४९ ॥**

यथा—

**'धन्यासि वैदर्भि ! गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि ।**

**इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ॥'**

अत्र समाकर्षणामुत्तरलीकरणं च क्रियैकैव पौनरुक्त्यनिरासाय भिन्नवाचकतया निर्दिष्टा ।

---

## विवृतिः

प्रतिवस्तूपमालं कारणमाह—**प्रतीति** ।

वाक्ययोर्वाक्यार्थयोः गम्यसाम्ययोः प्रतीयमानोपमानोपमेयभावयोः । तेन 'पद्मं मनोज्ञं रुचिरः शशाङ्कः' इत्यादौ नातिव्याप्तिः । तत्र वाक्यार्थयोरुपमानोपमेयभावप्रत्ययाभावात् । 'प्रकाशते मुखं तस्याश्चन्द्रमा दीप्यते यथा' इत्याद्युपमावारणाय गम्येति । न चात्र प्रागुक्तरीत्यैकवाक्यत्वमेवेति वाच्यम् । अत्र गम्य इत्युपादानादेव तत्र तथा कल्पनात् । अन्यथा भिन्नवाक्ये उपमाप्रसक्तयभावेन प्रतिवस्तूपमैव न स्यात् । दृष्टान्तवारणायाह—**एकोऽपीति** । 'एकरूपः क्वचित्क्वापि भिन्नः साधारणो गुणः' इत्युक्तदिशा प्राप्तस्य भिन्नसामान्यधर्मस्य व्यवच्छेदः पृथग्भिन्नशब्दाभ्यां तेन दीपकस्य व्यवच्छेदः ॥ **धन्यासीति** । दमयन्तीं प्रति हंसस्योक्तिरियम् ॥ **पौनरुक्त्येति** । कथितपदत्वेनेत्यर्थः । **भिन्नवाचक** तया विभिन्नवाचकत्वेन ॥

## विवृतिपूर्तिः

प्रतीति । प्रतिवस्तु प्रत्यर्थमुपमा यस्यामिति ॥

## विज्ञप्रिया

प्रतिवस्तूपमालङ्कारमाह—**प्रतिवस्त्विति** । अत्र गम्यसाम्ययोरुक्तिवशाद् उपमेयोपमानयोरिति लभ्यते । तेन वाक्यद्वये ये उपमेयोपमाने, तयोरेकोऽपि सामान्यो धर्मः पृथक्शब्दभेदेन यत्रालङ्कारे निर्दिश्यते सा प्रतिवस्तूपमेत्यर्थः । गम्यसाम्ययोरिति बोध्यसाम्ययोरित्यर्थः । बोध्यता च क्वचिच्छब्दद्वयेन शक्तिलक्षणाभ्यां क्वचिच्चोपमेयगतस्य शब्दशक्त्या धर्मान्तरे तद्वैधर्म्येण व्यञ्जनया । तच्चोदाहरणे दर्शयिष्यति ।

**धन्यासीति** । प्रसिद्धजितेन्द्रियत्वेन धीरो नैषधोऽपीत्यर्थः । अत्र प्रतिवस्तूपमाह—**अत्रेति** । अत्र दमयन्ती उपमेया चन्द्रिका उपमानं तयोर्धीराकर्षणमेको धर्मः । **आकृष्यत** इति । शब्दशक्त्या उत्तरलीकरोति इत्यत्र उत्तरलताजनकाकर्षणविशिष्टीक्रियते इत्यर्थः । **उत्तरलीकरणं** चेति । उत्तरलीकरणजनिका चेत्यर्थः । **एकैवेति** । आकर्षणरूपकैवेत्यर्थः । भिन्नवाचकतयेति भिन्नप्रातिपदिकतयेत्यर्थः ।

## कुसुमप्रतिमा

अथ सादृश्यमूलकालङ्कारनिरूपणस्य प्रकृतत्वात् प्रकारान्तरसादृश्यमूलकं प्रतिवस्तूपमालङ्कार निरूपयति प्रतीति । यत्रेति यदित्यर्थक्रमव्ययम् । तथा च गम्यं तात्पर्य्यालोचनयैव बोध्यं न पुनर्वाच्यमित्यर्थः साम्यं

सादृश्यं ययोस्तयोस्तादृशयोः वाक्ययोर्वाक्यार्थद्वयस्य एकोऽपि अभिन्नोऽपि सामान्यः साधारण उपमानोपमेयो-भयवृत्तिरित्यर्थः । धर्म्मी गुणः क्रिया वा, यत्र यत् पृथक् निर्दिर्दश्यते एकार्थकस्मिन्नातु पूर्वोकशब्देन प्रत्यायते, सा प्रतिवस्तूपमा नाम अलङ्कार स्यात् ।

प्रतिवस्तुप्रतिपदार्थम् उपमा सादृश्यमिति प्रतिवस्तूपमा । तथाहि उदाहरणे चन्द्रिकाया सह दमयन्त्याः अब्धिना सह च नैषधम्य सादृश्यादुक्तव्युत्पत्तिसिद्धिः ।

अत्र गम्यसाम्ययोरित्यभिधानात् "अन्य भृद्, मुखञ्च कोमलम्" इत्यादौ साम्यप्रतीत्यभावान्नातिप्रसङ्गः । गम्येत्यभिधानात् "सुखं तव तथा भाति यथा राजति चन्द्रमाः' इत्यादौ वाच्यसाम्ये नातिव्याप्तिः । एकोऽपीत्यभि-धानात् अनेकधर्म्मे दृष्टान्ते न प्रसक्तिः । पृथगित्यभिधानाञ्च न कथितपदतादोषः ।

धन्येति । नैषधचरिततृतीयसर्गस्थमिद् पद्यम् । हे वैदर्भि ! दमयन्ति ! त्वं धन्वासि, यथा त्वया, उदारैर्म-हद्भिर्गुणैः सौन्दर्य्यादिभिः नैषधी नलोऽपि समकृष्यत सम्यगाकृष्टः । तथा च चन्द्रिकाया ज्योत्स्नायाः, इतः अस्या उच्यमानाया अधिकेत्यर्थः का खलु स्तुतियोग्यो महिमा सम्भवतीति शेषः यत् अब्धि समुद्रमपि उत्तरलीकरोति लज्जलं करोति ।

अत्रेति । एकैवेति । नैषधस्य समाकर्षणमपि कामोत्पादनेन अस्थिरीकरणम, समुद्रस्य उत्तरलोकरणमपि च पूरोत्पादनेन तदस्थिरीकरणमेवेति भावः । पौनरुक्त्यनिरासाय कथितपदतादोषाप्रसङ्गाय, भिन्नवाचकतया भिन्नानुपूर्वीकशब्देन । तथा दमयन्तीचन्द्रिकयोर्नलसमुद्रयीश्च साम्य तात्पर्य्यपर्य्यालोचनया प्राप्तमित्यपि बोध्यम् ।

## विमला

प्रतिवस्तूपमाह, प्रतीति ।—गम्यं—प्रणिधानवेद्यं, साम्यं—सादृश्यं ययौः तादृशयोः प्रतीयमानोपमानो-पमेयभावयोः इत्यर्थः, वाक्ययोः—वाक्यार्थयोः; (तेन"पद्मं मनोज्ञं रुचिरः शशाङ्कः" इत्यादौ नातिव्याप्तिः, तत्र वाक्यार्थयोरुपमानोपमेयभावप्रत्ययाभावात् । "प्रकाशते मुखं तस्याश्चन्द्रमा दीप्यते यथा" इत्याद्युपमावारणाय गम्येति; न चात्र प्रागुक्तरीत्यैकवाक्यत्वमेवेति वाच्यम्, अत्र गम्य इत्युपादानादेव तव तथा कल्पनात्, अन्यथा भिन्नवाक्ये उपमाप्रसक्त्यभावेन प्रतिवस्तूपमैव न स्यात्) । दृष्टान्तरवारणायाह, एकोऽपीति ।—एकोऽपि ["एक-रूपः क्वचित् क्वापि भिन्नः साधारणो गुणः" इत्युक्तदिशा प्राप्तस्य भिन्नसामान्यधर्मस्य व्यवच्छेदः पृथग्भिन्न शब्दाभ्यां, तेन दीपकस्य व्यवच्छेदः] सामान्यः,—साधारणः, धर्मः,—गुणक्रियारूपः, पृथक्—पर्य्यायशब्देन, यत्र निर्दिश्यते, सा प्रतिवस्तूपमा—प्रतिवस्तु—प्रत्यर्थम्, उपमा यस्यां तथाभूता, स्यात् ।

धन्याऽसीति ।—दमयन्तीं प्रति हंसस्योक्तिरियम् । वैदर्भि !—हे विदर्भ राजनन्दिनि ! दमयन्ति ! त्वं धन्याऽसि—साधुवादार्हाऽसीत्यर्थः, यया, त्वयेति शेषः, नैषधोऽपि—निषधाधिपः नलोऽपि, उदारैः,—महद्भिः, गुणैः,—सौन्दर्य्यादिभिः, समाकृष्यत—सम्यक् आकृष्ट इत्यर्थः [समाकर्षणक्रियायाः करणत्वोपयोगिताया गुणपदं श्लिष्टं, तेन गुणैरिव गुणैरित्युपमा व्यज्यते इति बोध्यम्] चन्द्रिकायाः,—ज्योत्स्नायाः, इतः,—अस्मात् अधिका, स्तुतिः,—महिमा, का खलु ? यत् अब्धिमपि—समुद्रमपि, उत्तरलीकरोति—चपलयति । उपजातिः वृत्तम् । इदं नैषधीयचरितस्य पद्यम् ।

पौनरुक्त्येति ।—कथितपदत्वदोषनिराकरणायेत्यर्थः, भिन्नवाचकतया—विभिन्नवाचकत्वेन । इयं—प्रतिवस्तूपमा इत्यर्थः ।

## लक्ष्मी

अथ सादृश्यमूलकालङ्काराभिधानस्य प्रस्तुतत्वात् अन्यविधसादृश्यमूलकं प्रतिवस्तूपमालङ्कारं लक्षयति—**प्रतिवस्तूपमेति** । यत्र यस्मिन् काव्ये गम्यं प्रतीयमानं न पुनर्वाच्यमित्यर्थः साम्यं सादृश्यं यत्र (प्रतिपाद्यमानं) तयोस्तथोक्तयोः, सादृश्यञ्चोपमानोपमेयत्वम्, तथा च प्रतीयमानोपमानोपमेयभावयोरितिफलितोऽर्थः वाक्ययोर्वाक्यार्थयोः उपमानोपमेयसम्बन्धिनोरित्यर्थः, उपमानगतञ्चैकं वाक्यम् उपमेयगतञ्चापरं वाक्यमितिवाक्यार्थद्वयमात्रावधार्यम्, एकोऽपि अपृथग्भूतोऽपि अभिन्नोऽपीतियावत्, सामान्य उपमानोपमेयोभयगतसाधारणः धर्मो गुणक्रिया वा पृथग् भिन्नतया निर्दिश्यते अभिन्नार्थकभिन्नापूर्वीकशब्देन प्रतिबोध्यते सा प्रतिवस्तु प्रतिपदार्थम् उपमा सादृश्यं प्रतीयमाना इति शेषः, इति यादृशी तद्व्ययपदेश्योऽयमलङ्कारो भवेदित्यर्थः ।

अत्र पूर्ववदेव वाक्ययोरित्यत्र द्विवचनमनेकोपलक्षकं मालानुरोधात् । तेन वाक्यार्थयोर्वाक्यार्थानां वा उपमानिष्पादकस्यैकस्यापि धर्मस्य विभिन्नशब्दोपात्तत्वं प्रतिवस्तूपमेतिफलितम् । एवञ्च 'पद्मं मनोज्ञं रुचिरः शशाङ्कः' इत्यादौ एकस्यैव धर्मस्य पृथग्निर्देशेऽपि वाक्यार्थयोरुपामानोपमेयभावप्रत्ययाभावान्नातिव्याप्तिः ।

'प्रकाशते मुखं तस्याश्चन्द्रमा इव दीप्यते ।'

उदाहरति—**धन्यासीति** । नैषधीयचरिते तृतीयसर्गे दमयन्तीं प्रति हंसस्योक्तिरियम् । हे वैदर्भि विदर्भराजनन्दिनि दमयन्ति ! त्वं धन्यासि प्रशंसनीयासि, यया त्वया, उदाहरैर्महनीयैर्गुणैः सौन्दर्यादिभिः, नैषधो निषधाधिपतिर्नलोऽपि समाकृष्यत स्ववशं प्रापितः, अपिना नलस्य गभीरतातिशयत्वेन 'समाकृष्यत' इति क्रियायाः कर्मत्वायोग्यत्वं सूचयति । तथा च चन्द्रिकायाः ज्योत्स्नायाः 'चन्द्रिका कौमुदी ज्योत्स्ना इत्यमरः, इति अस्मादुच्यमानादपेक्षयाधिकेत्यर्थः, का खलु स्तुतिः प्रशंसा न काऽपीतिशेषः, यत् अब्धि गभीरतया प्रख्यातं समुद्रमपि उत्तरलीकरोति समाकर्षति चञ्चलं करोतीतियावत् इन्द्रवज्रोपेन्द्रयो**रूपजाति**श्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

लक्ष्ये लक्षणं योजयति—**अत्रेति** । एकैवेति । नैषधस्य समाकर्षणामपि कामाविर्भावनेन चञ्चलीकरणम्, उत्तरलीकरणमपि पूराविर्भावनेन तच्चञ्चलीकरणमेवेत्याशयः । पौनरुक्त्यनिरासाय कथितपदत्वदोषनिराकरणाय, भिन्नवाचकतया विभिन्नवाचकशब्देन । पूर्वमेव दमयन्तीचन्द्रिकयो नैषधसमुद्रयोश्चोपमेयोपमानयोः साम्यं स्फुटं प्रतीयमानमित्यपि विभावनीयम् । तथा च समुद्रोत्तरलीकरणमिव नैषधमाकर्षणमित्युपमा प्रतीयमानाऽपि वाक्यद्वयगतत्वेन व्यङ्ग्योपमान्तरतो व्यवच्छेदो भवतीतिफलितम् ।

## रूचिरा

प्रतिवस्तूपमां लक्षयति—१३० **यत्र** यस्मिन् काव्ये । **गम्यसाम्ययो**र्गम्यं व्यङ्ग्यं साम्यं साधर्म्य यत्र (प्रतिपाद्यमानं) तयोस्तथोक्तयोः । साधर्म्य चोपमानोपमेयत्वम्, तथा च—यत्रोपमानोपमेयभावो व्यज्यते तादृशयोरिति फलितोऽर्थः । **वाक्ययोर्वा**क्यद्वय इत्यर्थः । अत एव-'वाक्यद्वये' इति प्रकाशोऽपि । उपमानोपमेययोरिति शेषः । उपमानोपमेयसम्बन्धिनोरित्यर्थः । तथा च-उपमानवाक्यमेकम्, अपरं चोपमेयवाक्यम्; इति वाक्यद्वयं च बोध्यम् । **एको**ऽपृथग्भूतः । **अपि** । **सामान्य** उपमानोपमेयोभयसाधारणः । **धर्मः** । **पृथक्** भिन्नतया । **निर्दिश्यते** । **सा** । **प्रतिवस्तूपमा** प्रतिवस्तु प्रत्यर्थमुपमासादृश्यं व्यज्यमानेति शेषः, इति तथोक्ता, तद्व्ययपदेश्योऽलङ्कार इति

भावः । **स्यात्** । एवं च—'पद्मं मनोज्ञं, रुचिरः शशाङ्क' इत्यादौ एकस्यैव धर्मस्य पृथङ्निर्देशेऽपि वाक्यद्वयगतत्वाभावान्नातिप्रसङ्गः । 'प्रकाशते मुखं तस्याश्चन्द्रमा दीप्यते यथा ।' इत्यादौ पुनः साम्यस्य वाच्यत्वमिति व्यवच्छेदः । दीपकादावप्येवं धर्मस्य पृथङ्निर्देशाभावात् न साङ्कर्य्यमिति सूचितम् ॥ १०३ ॥

उदाहरति—**यथा**—'हे वैदर्भि विदर्भराजनन्दिनि दमयन्ति ! इति भावः । **यया** (त्वया) । **नैषधो** निषधाधिराजो नलः । अपि (एतेनास्य गभीरताऽतिशयतया 'समाकृष्यते'ति क्रियायाः कर्मत्वायोग्यत्वमावेद्यते) । **उदारैः** । **गुणैः** । **समाकृष्यत** स्ववशं प्रापितः । सा त्वम्—**धन्या** प्रशंसनीया । **असि** । तदेव विशदयति—**इतोऽस्मादपे**क्षया । **चन्द्रिकायाश्**चन्द्रसुषमायाः । 'चन्द्रिका कौमुदी ज्योत्स्ने'त्यमरः । **का** । **खलु** । **स्तुतिः** प्रशंसा 'न काऽपी'त्यवसितोऽर्थः । **यत्** । **अब्धिं** (गभीरतया प्रसिद्धम्) **अपि** । **उत्तरलीकरोति** समाकर्षति चञ्चलयतीति यावत् । नैषधचरितस्येदं पद्यम् । दमयन्तीं प्रति हंसस्योक्तिरीयम् । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ॥१६३ ॥'

लक्ष्यं समर्थयते—**अत्रे**त्यादिना । स्पष्टम् । अयम्भावः—'समाकृष्यते'ति, 'उत्तरलीकरोती'ति च क्रियाद्वयं स्वरूपतः परम्, न त्वर्थभेदात्; इति तात्पर्य्यबलात्समाकर्षणोत्तरलीकरणैक्येन नैषधसमुद्रायोरुपमेयोपमानभावौ प्रत्याय्यमानौ सम्भवतः, अनयोश्चैवं साम्यं स्फुटं प्रतीयमानम् । तथा च—समुद्रोत्तरलीकरणमिव नैषधसमाकर्षणमित्युपमा व्यज्यमानाऽपि वाक्यणद्वयगततया व्यङ्ग्योपमान्तरतो व्यवच्छिद्यत इति फलितम् । इति ।

इयं मालयापि दृश्यते यथा—

**'विमल एव रविर्विशदः शशी**

**प्रकृतिशोभन एव हि दर्पणः ।**

**शिवगिरिः शिवहाससहोदरः**

**सहजसुन्दर एव हि सज्जनः ॥'**

अत्र विमलविशदादिरर्थत एक एव ।

---

## विवृतिः

**इयं** प्रतिवस्तूपमा । **विमल इति** । शिवगिरिः कैलासः शिवस्य हासस्य च सहोदरस्तुल्यः ॥ नन्वत्र प्रतिवाक्यं धर्मभेद एवेति कथं प्रतिवस्तूपमेत्यत आह—**अत्रेति** । अर्थतस्तात्पर्यात् विमलादिपदानां विभिन्नार्थ-वाचकत्वेऽपि पर्यवसाने तात्पर्यबलाद्वैमल्यरूपैकार्थबोधकत्वमिति भावः ॥

## विज्ञप्रिया

**विमल एवेति** । शिवगिरिः कैलासः । शिवहासः शिवस्य अट्टहासः हासान्तरापेक्षया विलक्षणः । अत्र सज्जन एव वाक्ये उपमेयः । वाक्यान्तरेषु उपमानानि । निर्मलत्वम् एको धर्मः शब्दभेदेन प्रतिपादितः ।

## लोचन

वस्तुवाक्यार्थः । एवं च प्रतिनिर्दिष्टेन वाक्यार्थेन वाक्यार्थस्य उपमासादृश्यं यस्यामित्यनेन वाक्यार्थ-स्योपमासादृश्यं यस्यामित्यन्वर्था प्रतिवस्तूपमा । सामान्यः साधारणः । पृथक् पर्य्यायादिना निर्दिश्यते प्रतिपाद्यते पौनरुक्त्यनिरासाय इत्यर्थः । एकैकोपचाराश्रयेण नैकार्थपर्य्यवसानात् ।

विमल एवेत्यादौ चतुर्थपादः प्रकृतः ।

## कुसुमप्रतिमा

इयञ्चेति । प्रतिवस्तूपमा चेत्यर्थः । मालयापि एकत्रानेकत्वेनापीति तात्पर्य्यम् । एतेन कारिकायां "वाक्ययोः" इति द्विवचनमनेकोपलक्षणमिति सूचितम् ।

विमल इति । रविः सूर्य्यो विमल एव तेजोमयतया निर्म्मल एव; शशी चन्द्रो विशद एव तेजोमयतयैव निर्म्मल एव; दर्पण आदर्शोऽपि प्रकृत्या स्वभावेन शोभन एव हि अत्यन्तोज्ज्वलतया अत्यन्तनिर्म्मल एव; शिवगिरिः कैलासपर्वतः शिवस्य महादेवस्य यो हासो हास्यं तस्य सहोदरः सदृश एव, तत्सदृशतया निर्म्मल एवेत्यर्थः; तया सज्जनोऽपि सहजसुन्दर एव स्वभावती निर्म्मल एव । अत्र "यः कौमारहरः स एव हि वरः" इत्यादितवत् एवहीति-शब्दद्वयमत्यन्तमेव नियमं द्योतयति । किन्तु शिवशब्दस्य द्विः पाठात् कथितपदतादोषः ।

अथोदाहृते प्रत्येकवाक्य एव भिन्नभिन्नो धर्म्म इति कथं लक्षणसङ्गतिरित्याह अत्रेति । विमल विशद-दिविमलविशदादिशब्दप्रतिपाद्य धर्म्म इत्यर्थः, अर्थतस्तात् पर्य्यतः, एक एव अभिन्न एव, सर्वेषामेव निर्म्मलतारू-पत्वादिति भावः । किन्तु केवलकथितपदतादोषनिरासाय भिन्नभिन्नशब्देन निर्द्दिष्ट इति वाक्यशेषः । अत्रापि रविप्रभृतीनां साम्यं तातपर्य्यपर्य्यालोचनयैव प्राप्तमित्यवधेयम् ।

## विमला

विमल इति ।—रविः,—सूर्य्यः, विमलः एव—स्वच्छः एव, प्रकाशमय एव इति यावत्, शशी—चन्द्रः, विशदः,—उज्ज्वलः, दर्पणः,—मुकुरः, प्रकृतेः,—स्वभावात, शोभनः एव, शिवस्य गिरिः,—पर्वतः, कैलाश इति यावत्, शिवस्य हासस्य च सहोदरः,—सदृशः, सज्जनः,—सतपुरुषः, सहजसुन्दरः,—प्रकृत्या साधुः एव, भवतीति शेषः । यथा वा—"यदि दहत्यनलोऽत्र किमद्भुतं ! यदि च गौरवमद्रिषु किं ततः ? । लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥" इति ।

नन्वत्र प्रतिवाक्य धर्मभेद एव, कथं प्रतिवस्तूपमा ? इत्यत आह, अत्रेति ।—अर्थतः,—तात्पर्य्यात्, विमलादिपदानां विभिन्नार्थवाचकत्वेऽपि पर्य्यवसाने तात्पर्य्यबलाद्वैमल्यरूपैकार्थबोधकत्वमिति भावः ।

## लक्ष्मी

मालारूपाऽपीयं भवतीत्युपदेष्टुमाह—**इयञ्चेति**। प्रतिवस्तूपमा चेत्यर्थः। मालयापि एकत्रानेक-त्वेनाऽपीत्याशयः । मालयेत्यभिधानादेव कारिकायां 'वाक्ययोः' इत्यत्र द्विवचनमनेकोपलक्षकमित्युक्तं पूर्वमेव ।

उदाहरति—**विमल** एवेति । रविः सूर्यो विमल एव तेजोमयतया स्वच्छप्रकाश एवेतिप्रसिद्धम्, शशी चन्द्रो विशद एव तेजोमयतयैव विपुलसुप्रकाश एव, एवेतिपूर्वतोऽनुवर्त्तनीयम् । दर्पणो मुकुरोऽपि 'दर्पणो मुकुरादर्शे' इत्यमरः, प्रकृत्या स्वभावेन शोभन एव हि अत्यन्तस्वच्छतया अत्यन्तरमणीय एव। शिवगिरिः कैलाशपर्वतः शिवस्य शङ्करस्य यो हासो हास्यं तस्य सहोदरः सजन्मा एव तत्तुल्यत्वेन स्वच्छ एवेत्याशयः तथा सज्जनोऽपि सहज आजन्मसिद्धः सुन्दर पवित्रान्त करण एव । अत्र 'यः कौमारहरः स एव हि वरः' इत्यादाविव **एव** हीतिपदद्वयमत्यन्तं नियमं सूचयति, परन्तु शिवपदस्य द्विरभिधानात् कथितपदत्वं दोषः । **द्रुतविलम्बितं** छन्दस्त-ल्लक्षणन्तूक्तं प्रागेव ।

नन्वत्र प्रतिवाक्यं धर्मभेद एवेति कथमयमलङ्कार इत्यत आह—**अत्रे**ति । विमलविशदादिर्विमलविश-दादिपदप्रतिपाद्यो धर्मः, अर्थतस्तात्पर्यात्, एक एव अनतिरिक्त एव तथा च विमलादिपदानां भिन्नार्थवाचकत्वेऽपि पर्यवसाने तात्पर्यबलात् स्वच्छत्वरूपस्यैकस्यैवार्थस्य बोधकत्वमितिभावः । किन्तु कथितपदत्वदोषनिराकरणाय पृथक्पृथक्पदेन निर्दिष्ट इति वाक्यशेषः । अत्रापि रविशशीप्रभृतीनां साम्यं स्फुटमेव प्रतीयमानमितिबोध्यम् ।

## रुचिरा

इयं मालारूपाऽपीत्युपदिशन्नुदाहरति-**इयमि**त्यादिना । स्पष्टम् । **'रविः** सूर्य्यः । **विमलः** । स्वच्छप्र-काशः । **एवेति**प्रसिद्धमिति भावः । **शशी** चन्द्रः । **विशदो** विपुलसुप्रकाशः । 'एवे'ति पूर्वतोऽनुषज्यते । दर्पणः । **प्रकृतिशोभनः** प्रकृत्या स्वभावेन शोभनो रमणीयः । **एव । हि । शिवगिरिः** कैलासः । **शिवहाससहोदरः** शिवं

कल्याणं, तञ्च हासश्च तयोः सहोदरः सजन्मा तत्तया यथाऽर्थमनुगत इति यावत्। **सज्जनः।** **सहजसुन्दरः** सहज आजन्मसिद्धः सुन्दरः पवित्रात्मा। **एव।** **हि।** अत्र द्रुतविलम्बितं वृत्तम्, 'द्रुतविलम्बितमाह नभौ भरौ।' इति च तल्लक्षणम्॥ १६४॥'

लक्ष्यं निर्दिशति—**अत्रेत्यादिना।** स्पष्टम्। विमलादीनां पदानां भिन्नार्थतया प्रतीयमानत्वेऽपि तात्पर्य्येण विमलतारूपस्यैकस्यैवार्थस्य बोधकत्वमिति भावः।

वैधर्म्येण यथा—

**'चकोर्य एव चतुराश्चन्द्रिकाचामकर्मणि।**
**विनावन्तीर्न निपुणाः सुदृशो रतनर्मणि॥'**

---

## विवृतिः

अवन्तीरवन्तिदेशोत्पन्ना नारीः। विनाशब्दोऽत्र भिन्नार्थः॥

## विज्ञप्रिया

**वैधर्म्येण यथेति**—उपमेये निर्दिष्टधर्मविपरीताद् धर्म्यन्तरे निर्दिष्टाद्धर्माद् व्यञ्जनया लभ्येनोपमाननिष्ठ-साधर्म्येण इत्यर्थः। **चकोर्य एवेति**। आवन्त्योऽवन्तीदेशीयाः स्त्रीर्विना, रतिकर्मणि नान्याः सुदृशो निपुणा इत्यर्थः। अत्र स्वकर्मचातुर्यस्य उपमेयासु चकोरीषु निर्दिष्टस्य विपरीतो धर्मः अवन्तीयस्त्रीभिन्नस्त्रीषु निर्दिष्टो रत्यनैपुण्यरूपः ततो व्यञ्जनया उपमानेषु अवन्तीस्त्रीषु स्वकर्मचातुर्य्यं साधर्म्यं प्रतीयते।

## लोचन

सधर्मस्य साधारणगुणक्रियासहितस्य वस्तुनो वाक्यार्थस्य।

## कुसुमप्रतिमा

चकोर्य्य इति। चन्द्रिकाया ज्योत्स्नायास्तद्गतजलबिन्दूनामित्यर्थः। पानकर्म्मणि चकोर्य्यस्तदाख्याः, पक्षिणीविशेषा एव चतुरा दक्षाः। तथा च आवन्तीः अवन्तिदेशोद्भवा रमणीर्विना अन्याः सुदृशी रमण्याः, रतनर्म्मणि रतिलीलायां न निपुणा न दक्षः, केवलमायन्त्य एव दक्षा इत्यर्थः।

अत्र चातुर्य्यरूपां नैपुण्यरूपस्य धर्म्म एक एव, किन्तु कथितपदतादोषनिरासाय केवलं शब्दभेदेन निर्दिर्दष्टः; तत्र च नञ उपादानात् नैपुण्ये चातुर्य्यवैपरीत्यं सञ्जातमिति वैधर्म्मयम्। अथवा "विनावन्तीर्न निपुणाः" इत्युक्तिभङ्ग्या आवन्त्य एव निपुणा इत्येव प्रतीयत तन्नैपुण्यं चातुर्य्यञ्च एक एव धर्म्मः शब्दभेदेन निर्दिष्टः, तत्र च "न निपुणाः" इत्यनैपुण्यं नाम वैधर्म्यम्; तात्पर्य्यपर्य्यालोचनया च चकोरीणामावन्तीनाञ्च साम्यमुपलब्धमिति प्रतिवस्तुपमेत्याशयः।

## विमला

वैधर्म्येणेति।—विपरीतधर्मेणेत्यर्थः।

चकोर्य्य इति।—चकोर्य्यः एव चन्द्रिकायाः,—उपचारात् चन्द्रमण्डलात् क्षरन्त्याः सुधायाः, पानकर्मणि—पानक्रियायां, ["चन्द्रिकाचामकर्मणि" इति पाठान्तरेऽप्ययमेव अर्थः। आचामः,—पानम्] चतुराः,—निपुणाः, अवन्तीः,—अवन्तिदेशीयाः कामिनीः, विना—भिन्ना इत्यर्थः, सुदृशः,—सुन्दर्य्य इत्यर्थः, रतनर्मणि—सुरतविलासे, न निपुणाः। अत्र चतुरा इति न निपुणा इति विपरीतधर्मत्वम्।

## लक्ष्मी

इत्थं साधर्म्येणैनामुदाहृत्य वैधर्म्येऽप्यस्याः सम्भव इति बोधयन्नुदाहरति—**चकोर्य** इति । बालरामायणस्थपद्यमिदम् । चन्द्रिकायाः कौमुद्यास्तदवृत्तिजलबिन्दूनामित्यर्थः, पानकर्मणि पानकर्मविषये विषयसप्तमीयम्, चकोर्यस्तदाख्याः पक्षिविशेषा एव चतुरा निपुणाः । तथा च अवन्तीः अवन्ति (उज्जयिनी) देशोद्भवाः नारीर्विना अन्याः सुदृशो नायिकाः विनापदञ्चात्रान्यार्थकम्, रतनर्मणि सुरतक्रीडायाम् 'क्रीडा खेला च नर्म च' इत्यमरः, निपुणा न भवन्ति केवलमावन्त्य एव निपुणा इत्यर्थः, तथा च यथाऽऽवन्त्य एव सुरतकेलिविषये निपुणास्तथा चकोर्यश्चन्द्रिकापानकर्मणि निपुणा इति भावः ।

अत्र चातुर्यरूपो नैपुण्यरूपश्च धर्म अभिन्न एव किन्तु कथितपदत्वादाविव निराकरणाय केवलं पृथक्पदेन निर्दिष्टः । तत्र च निषेधार्थकनञः सत्त्वात् नैपुण्ये चातुर्यवैपरीत्यं समुत्पन्नमितिवैधर्म्यम् । **यद्वा** आवन्त्य एव सुदृशो रतिनर्मणि निपुणा इत्येवं रूपे वैधर्म्यविपर्यये साधर्म्यपर्यवसानम्, चकोराणामावन्तीनाञ्च साम्यं स्फुटं प्रतीयमानमितिप्रतिवस्तूपमा ।

## रुचिरा

वैधर्म्येऽप्यस्याः सम्भव इति सूचयन्नुदाहरति—**वैधर्म्येणे**त्यादिना । स्पष्टम् । **'चन्द्रिकाचामकर्मणि** चन्द्रिकायाश्चामः पानमिति तस्य कर्म तत्र । विषये सप्तमीयम् । 'चामे'त्यत्र 'पाने ति पाठान्तरे स्पष्टोऽर्थः । **चकोर्य्यः** । **एव** । **चतुराः** कुशलाः । **अवन्तीरवन्ति** (उज्जयनी) देशोत्पन्ना नारीरिति भावः । **विना** । **सुदृशो** नायिकाः । **रतनर्मणि** सुरतक्रीडायाम् । 'क्रीडा खेला च नर्म च ।' इत्यमरः । **निपुणाः** प्रवीणाः । न । 'भवन्ती'ति शेषः । किन्तु-यथाऽन्वन्त्य एव रमणकेलिविषये चतुरास्तथा चकोर्य्यः (चकोराङ्गनाः) चन्द्रिकापानकर्मणिनिपुणा इति भावः । बालरामायणस्येदं पद्यम् ॥ १६५ ॥

**दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ॥ ५० ॥**

सधर्मस्येति प्रतिवस्तूपमाव्यवच्छेदः। अयमपि साधर्म्यवैधर्म्याभ्यां द्विधा। क्रमेणोदाहरणम्—

**'अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।**
**अनधिगतपरिमलपि हि हरति दृशं मालतीमाला ॥'**

---

## विवृतिः

दृष्टान्तालंकारमाह—**दृष्टान्त इति**। सधर्मस्य सदृशस्य वस्तुनः सामान्यधर्मस्य प्रतिबिम्बनं प्रणिधानगम्यसाम्यत्वम्। अत्रापि वाक्ययोरित्यनुवर्त्तते। तेन 'भल्लापवर्जितैः' इत्यत्र नातिव्याप्तिः। एकवाक्यत्वात् ॥

## विवृतिपूर्तिः

**दृष्टान्त इति**। तदुक्तम्—'दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्' इति। त्वयि दृष्ट इत्युदाहरणस्य मूलभूता तु—'त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम्। आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्धत्याः ॥' इति **प्रकाशो**दाहृता आर्या। अंत्र नायकहिमांश्वोर्नायिकाकुमुद्वत्योस्तद्रूपयोः संबन्धिपदार्थयोस्तथा मनःकुसुमयोरुपमेयोपमानयोर्निर्वाणविकासयोश्च बिम्बप्रतिबिम्बभाव इति साधर्म्येण दृष्टान्तः। एवं च कार्य इति प्रतिवस्तूपमोदाहरणे तृतीयचरणे 'आवन्त्य एव निपुणाः' इत्याकरस्य पाठे तु साधर्म्यमेव ॥

## विज्ञप्रिया

दृष्टान्तलङ्कारमाह—**दृष्टान्तस्त्विति**। सधर्मस्य साधारणैकधर्मस्य, प्रतिबिम्बनमुभयत्र निर्दिष्टाभ्यां परस्परसमानाभ्यां धर्माभ्यामेकस्य तस्य व्यञ्जनमित्यर्थः।

सधर्मः प्रसिद्ध एव विवक्षित इत्यप्रस्तुतप्रशंसायां व्यक्तिर्भविष्यति। प्रतिवस्तूपमायां तूपमेयनिर्दिष्टो धर्मो वाच्य एव उपमाननिर्दिष्टशब्दस्य लक्षणया क्वचिच्छत्तया वा स बोध्य इति भेदः। तस्य व्यञ्जनया बोधे तु दृष्टान्तः। **साधर्म्यवैधर्म्याभ्यामिति**। साधर्म्यव्यञ्जनार्थं निर्दिष्टाभ्यां साधर्म्याभ्यां साधर्म्यवैधर्म्याभ्यां चेत्यर्थः।

**अविदितगुणापीति**। वर्णमाधुर्य्यादिवेति भावः। अत्र कर्णे मधुधारावमननेत्रहरणे धर्मौ भिन्नौ प्रीतिजनकतया परस्परसमानौ। प्रीतिजनकत्वरूप एको धर्मः ताभ्यां व्यङ्ग्यः।

## कुसुमप्रतिमा

दृष्टान्तस्यापि प्रस्तुतसमर्थकतया प्रतिवस्तूपमाजातीयत्वा प्रतिवस्तूपमानिरूपणान्तरं दृष्टान्त निरूपयति दृष्टान्त इति। तुशब्दः प्रतिवस्तूपमाभेदद्योतनार्थः। समानः सदृश एव न पुनः प्रतिवस्तूपमा वदभिन्न इत्यर्थः धर्म्मो गुणः क्रिया वा यस्य स सधर्म्मस्तस्य सधर्म्मस्य सदृशस्येत्यर्थः वस्तुनः पदार्थस्य, प्रतिबिम्बनं प्रतिबिम्बभावेन स्थापनं प्रस्तुतसमर्थनाय तात्पर्य्यलभ्यसाम्यकतया वाक्यान्तरेणोपादानमित्यर्थः, दृष्टान्तौ नामालङ्कारः स्यात्। एतेन—

समानधर्म्मिणः प्रणिधानगम्यसाम्बकतया वाक्यान्तरेणोपादानं दृष्टान्त इति लक्षणं फलितम् ।

अत्र समानत्वं नाम समर्थनीयसमर्थकयोरुभयोरेव सामान्यत्वेन विशेषत्वेन वा सजातीयत्वं बोध्यम् । इत्थञ्च, प्रतिवस्तूपमायामभिन्नो धर्म्मः, इह तु भिन्नां धर्म्म सम्भवद्वस्तुसम्बन्धरूपायां निदर्शनायामर्थान्तरन्यासे च कदाचित् समर्थनीयस्य सामान्यत्वं समर्थकस्य तु विशेषत्वम्, कदाचिद्वा समर्थनीयस्य विशेषत्वं समर्थ कस्य तु सामान्यत्वम्; इह तु समर्थनीयसमर्थकयोरुभयोरेव कदाचिदेकं सामान्यत्वमेव कदाचिदेकं विशेषत्वमेव वा । तेन च समानधर्म्मिण इत्युपादानादुक्तेषु प्रतिवस्तूपमादिषु नातिव्याप्तिः । प्रणिधानगम्य साम्यकतयेत्यभिधानात् "मुख तव तया भाति यथा राजति चन्द्रमाः' इत्यादौ वाच्यसाम्यायामुपमायां नातिप्रसक्तिः । वाक्यारेणेत्युक्तश्च "सुखं धाम्नि विबुर्त्योम्नि भाति भाग्येन साम्प्रतम्" इत्यादावेकवाक्ये प्रणिधानगम्यसाम्ये दीपके नातिप्रसङ्गः । न च "अत्रापि वाक्ययोरित्यनुवर्त्तते । तेन भल्लापवर्जितैरित्यत्र नातिव्याप्तिरेकवाक्यत्वात्" इति रामचरणोक्तमंपि युक्तमिति वाच्यम्, "भल्लापवर्जितैस्तेषाम्" इत्यादौ इव शब्दोपादानेन साम्यस्य वाच्यतया प्रणिधानगम्यत्वाभावादेवातिव्याप्तेर्वारणात् ।

दृष्टोऽवगतः अन्तः समर्थनीये समर्थकस्य स्वरूपं सादृश्य यस्मिन् स द्रष्टान्त इति व्युत्पत्तिः । तथा च मेदिनी—"अन्तः स्वरूपे नाशे ना न स्त्रीशेशेऽन्तिके त्रिषु ।"

प्रतिबिम्बस्य करणमिति प्रतिबिम्बनं करोत्यर्थे नन्तात् प्रतिबिम्बशब्दाङ्गवे युट् ।

ननु प्रतिबिम्बनमित्यनेनैवोपपत्तौ किमर्थ सधर्म्मस्येत्युपादानमित्याह सधर्म्मस्येति । इति अनेन विशेषणेनेत्यर्थः, प्रतिवस्तूपमाया व्यवच्छेदो व्यावृत्तिः । तथा च प्रतिवस्तूपमायां समर्थ्यसमर्थकयौ, निरुक्तरूपेण अभिन्न एव धर्म्मः; इह तु समानत्वेन भिन्न एव धर्म्मः, तद्भिन्नत्वे सति तद्गतभूयोश्चर्म्मवत्त्वस्य समानपदार्थत्वादिति भावः ।

साधर्म्ये उदाहरति अविदितेति । वासवदत्तास्थमिदं पद्यम् । सतां श्रेष्ठानां कवीनां भणितिरुक्तिः, अविदितगुणापि अज्ञातरसभावादिरपि श्रुतमात्रपीत्यर्थः, कर्णेषु मधुनो धारां वमति उद्गिरति । तथाहि मालतीमाला मालतीकुसुमस्रक्, अनधिगतपरिमलापि अलब्धसौरमापि दृशं नयनं हरति आकर्षति ।

अत्र दृग्हरणरूपधर्म्मेण समानधर्म्मिरूपया मालतीमालया द्वितीयार्द्धे वाक्येनोपादानात् तया च मालतीमालया सहवाक्यगतसत्कविभणितेः साम्यस्य वाचकाभावात्, प्रणिधानेनैव गम्यत्वाच्च दृष्टान्तः । तथा वमनहरणयोरुभयोरेव भावपदार्थतया साधर्म्मयाम् । एवं समर्थनीयं पूर्वार्द्धं समर्थकमुत्तरार्द्धञ्चेत्युभयमपि विशेषरूपमेवेति बोध्यम् ।

## विमला

दृष्टान्तमाह, दृष्टान्त इति ।—सधर्मस्य—समानधर्मवतः, सदृशस्येत्यर्थः, वस्तुनः—विषयस्य, सामान्यधर्मस्येति भावः, प्रतिविम्बनं—प्रणिधानगम्यसाम्यत्वम्, (अत्रापि "वाक्ययोः" इत्यनुवर्त्तते, तेन "भल्लापवर्जितैः" इत्यत्र नातिव्याप्तिः, एकवाक्यत्वात्) दृष्टान्तः ।

सधर्मस्येति ।—अत्र धर्मस्य साम्यं न तु एकरूपत्वं, प्रतिवस्तूपमायाम् एकरूपत्वं न तु साम्यमित्यनयोर्भेद इति भावः । अयमपि—दृष्टान्तोऽपीत्यर्थः ।

अविदितेति ।—सतां कवीनां भणितिः,—वाणी, अविदितगुणा अपि अर्थबोधविरहादिति भावः, कर्णेषु मधुधारां वमति—उद्गरति, माधुर्य्यादिगुणसम्पत्तेरिति तात्पर्य्यं, मालतीमाला अनधिगतः,—अप्राप्तः, परिमलो

यस्यास्तादृशी अपि, दृशं—नेत्रं, हरति—आकर्षति, सौन्दर्य्यातिशयादिति भावः; अत्र मधुधारावमनस्य नेत्रहरणस्य च नैकरूपत्वं, परं प्रणिधानेन गम्यसाम्यत्वमस्तीति द्रष्टव्यम्। आर्य्या छन्दः। वासवदत्तायाः पद्यमेतत्। यथा वा—"त्वयि दृष्ट एव तस्या निर्वाति मन्ये मनोभवज्वलितम्। आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः॥" इति।

## लक्ष्मी

दृष्टान्तालङ्कारस्यापि प्रकृतसमर्थकत्वेन प्रतिवस्तूपमालक्षणानन्तरं दृष्टान्तालङ्कारं लक्षयति—**दृष्टान्त** इति। प्रतिवस्तूपमाभेदव्यञ्जनार्थमत्र 'तु' पदोपादानम्। धर्मस्य सदृशस्यैव न तु पुनः प्रतिवस्तूपमावदनतिरिक्तस्येत्यर्थः, वस्तुनः सामान्यधर्मस्य प्रतिबिम्बनं प्रतिबिम्बभावेन स्थापनं प्रस्तुतसमर्थनाय प्रणिधानगम्यसाम्यक्तया विभिन्नवाक्येनोपपादनमित्यर्थः, प्रतिबिम्बनमिति भावे ल्युट्, दृष्टो ज्ञातप्रामाण्यकोऽन्तो दार्ष्टान्तिकवाक्यार्थनिश्चयसमर्थनीये समर्थकस्वरूपं सादृश्यमितियावत् यत्र स दृष्टान्त अत एव तदाख्यया प्रसिद्धोऽलङ्कारः स्यात्। अत्रापि पूर्वतो 'वाक्ययो'रित्यनुवर्त्तते वाक्यद्वयस्येति तदर्थः, उपमानोपमेययोरिति शेषः। तथा च यत्रोपमानोपमेयवाक्ययोः सतोस्तदुभयवर्तिनः समानधर्मिणः तात्पर्यलभ्यसाम्यकतया विभिन्नवाक्येनोपादानं दृष्टान्त इति लक्षणं फलितम्। समानत्वञ्चात्र (क) समर्थ्यसमर्थ्यकयोर्द्वयोरेव व्यापकत्वेन वा सजातीयत्वमवगन्तव्यम्। निदर्शनायामर्थान्तरन्यासे च नातिव्याप्तिः तत्र कदाचित् समर्थस्य व्यापकत्वं सामान्यत्वं समर्थकस्य तु व्याप्यत्वं (विशेषत्वम्) कदाचिद्वा समर्थ्यस्य व्याप्यत्वं समर्थकस्य तु व्यापकत्वमित्युपगमात्।

'मुखं तव तथा भाति यथा राजति चन्द्रमाः'

इत्यादौ वाच्यसाम्यायामुपमायामतिप्रसङ्गवारणाय तात्पर्यलभ्यसाम्यकतयेत्युक्तम्। एवं 'भल्लापवर्ज्जितैस्तेषाम्' इत्यादौ इवपदस्य विद्यमानत्वेन साम्यस्य वाच्यतया तात्पर्यलभ्यत्वाभावान्नातिव्याप्तिरित्यपि बोध्यम्।

'मुखं धाम्नि विधुर्व्योम्नि भाति भाग्येन साम्प्रतम्'

इत्यादावेकतात्पर्यलभ्यासाम्ये दीपकेऽतिप्रसक्तिवारणाय वाक्यान्तरेणेत्यस्याभिधानम्।

ननु प्रतिबिम्बनमित्यनेनैवेष्टसिद्धौ सधर्मस्येतिपदोपादानस्य किं प्रयोजनमत आह—**सधर्मस्येति**। सधर्मस्य उपमानोपमेयवर्त्तिनः साधारणधर्मस्येत्यर्थः, इति अनेन विशेषणेनेत्यर्थः, प्रतिवस्तूपमाया व्यवच्छेदो भेदः। तथा च तत्र उपमेयोपमानयोः (समर्थ्यसमर्थकयोः) निरुक्तदिशा एक एव धर्मः, अत्र तु सदृशत्वेन पृथगेव धर्मः, तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वस्य सदृशपदार्थत्वादित्याशयः।

प्रतिवस्तूपमावदस्यापि भेदमुपपादयति—**अयमपीति**। दृष्टान्तोऽपीत्यर्थः।

तत्र प्रथमं साधर्म्ये उदाहरति—**अविदितेति**। स्वप्नवासवदत्तायाः पद्यमिदम्। सतां श्रेष्ठानां कवीनां भणितिर्वचनम्, न विदिता ज्ञाता गुणा माधुर्यादयो यस्याः सा तथोक्ता अपि किं पुनर्विदितगुणेतिशेषः, कर्णेषु श्रोतृणामितिशेषः, मधुनो धाराम् उपचारात् रमणीयतातिशयं वमति उद्गिरिति प्रकटयतीतितात्पर्यम्। तथाहि मालतीमाला मालतीपुष्पस्रक् अनधिगतोऽप्राप्तः परिमलः सौरभविशेषो यस्याः सा तथोक्ताऽपि 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः, दृशं नयनं हरति स्ववशं नयति। **आर्याच्छन्दस्तल्लक्षणं** चोक्तं प्रागेव।

अत्र द्वितीयार्द्धे दृग्हरणरूपधर्मे तुल्यधर्मितया मालतीमालया वाक्येन प्रतिपादानात्, तया च मालतीमालया सह पूर्वार्द्धवाक्यगतसत्कविभणितेः साम्यस्याभिधायकाभावात् तात्पर्यवशेनैव प्रतीयमानत्वाच्च दृष्टान्तः । वमनहरणयोर्द्वयोरेव भाववस्तुतया स्फुटं साधर्म्यम् । एवञ्च पूर्वार्द्धं समर्थनीयम् उत्तरार्धञ्च समर्थकमिति द्वयमपि विशेषरूपमेवेत्यवधेयम् ।

## रुचिरा

दृष्टान्तं लक्षयति—१३१ **दृष्टान्तो** दृष्टो ज्ञातप्रामाण्यकोऽन्तो दार्ष्टान्तिकवाक्यार्थनिश्चयो यत्र तथोक्तः, अत एव तन्नाम्ना प्रसिद्धोऽलङ्कार इति भावः । **तु** । 'वाक्ययो' रिति पूर्वतोऽनुवर्त्तनीयम् । वाक्यद्वयस्येत्यर्थः, उपमानोपमेययोरिति शेष इत्यावेदितपूर्वम् । **सधर्मस्य** समानो धर्म इति तस्य, तद्रूपस्येति भावः । 'समानस्य च्छन्दस्य मूर्धप्रभृत्युदर्केषु ।' ६/३/८४ इति 'समानस्ये'ति योगविभागे सादेशः । 'सदृशस्ये'ति तु नार्थः । 'धर्मादनिच् केवलात् ।' ५/४/१२४ इत्यनिजापतेः । **वस्तुनः** । **प्रतिबिम्बनं** प्रतिरूपणम् । एवं च-यत्रोपमानोपमेयवाक्ययोः सतोस्तदुभयवर्त्तिनः साधारणधर्मस्य प्रतिरूपतया निर्देशोऽवतिष्ठेत स दृष्टान्त इति स्थूलार्थः । सति वाक्यद्वये उपमानोपमेययोः साधारणधर्मस्य च (बिम्बभूतस्य) प्रतिबिम्बतया निर्देशो दृष्टान्त इति फलितोऽर्थश्च । तथोक्तम्—'प्रकृतवाक्यार्थघटकानामुपमानादीनां साधारणधर्मस्य च बिम्बप्रतिबिम्बभावे दृष्टान्त' इति गङ्गाधरकारैः ।

नन्वस्य प्रतिवस्तूपमातः को भेदः ? यत् 'दृष्टान्तस्त्वि'ति तु नाव्यवच्छेदः सूचितः इत्याशङ्क्याह—**सधर्मस्योपमानोपमेयवर्त्तिनः** साधारणधर्मस्येति भावः । **इति** 'अनेने'ति शेषः । **प्रतिवस्तूपमाव्यवच्छेदः** प्रतिवस्तूपमाया व्यवच्छेदो भेदः । अयम्भावः—प्रतिवस्तूपमायां न साधारणो धर्मः प्रतिरूपतया निर्दिश्यते, किन्तु भिन्नतयैवेत्यनयोः पार्थक्यम् । इति । प्रतिवस्तूपमाया इवास्यापि भेदं निर्दिशति—**अय**मित्यादिना । स्पष्टम् । उदाहर्तुकाम आह—**क्रमेणे**त्यादि । स्पष्टम् ।

'**अविदितगुणा** न विदिता गुणा माधुर्यादयो यस्यास्तादृसी । अपि । 'किं पुनर्विदितगुणे'ति शेषः । **सत्कविभणितिः** सत्कवेर्भणितिर्वचनम् । **कर्णेषु** । श्रोतृणामिति शेषः । **मधुधारां** मधुन उपचारात्तदुपमरमणीयताया धारोपचारादतिशयस्ताम् । रमणीयताऽतिशयमिति निष्कृष्टोऽर्थः । **वमति** उपचारात् प्रकटयति । **हि** यतः । **अनधिगतपरिमला**ऽनधिगतोऽप्राप्तः परिमलः सौरभविशेषो यस्यास्तादृशी । 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे ।' इत्यमरः । **अपि** । **मालतीमाला** मालतीनां तत्पुष्पाणां मालेति तथोक्ता । **दृशं** दृष्टिम् । **हरति** स्ववशं नयति । वासवदत्तायाः पद्यमिदम् । अत्रार्य्याछन्दः, तल्लक्षणं च प्रागुक्तम् ॥ उदम्बोध्यम्—अत्र भणितिमालयोर्गुणपरिमलयोः कर्णविषयकमधुधारावमन-दृग्घरणयोश्च बिम्बप्रतिबिम्बत्वमिति अनधिगतपरिमलाऽपि मालतीमाला यथा दृशं हरति तथाऽविदितगुणाऽपि सुकविभणितिः कर्णेषु मधुधारां वमतीत्युपमा प्रतीयते । स्फुटश्चैवं साधर्म्यनिबन्धनोऽयमिति ॥ १६६ ॥'

**'त्वयि दृष्टे कुरङ्गाक्ष्याः स्त्रंसते मदनव्यथा।**

**दृष्टानुदयभाजीन्दौ ग्लानिः कुमुदसंहतेः॥'**

---

## विवृतिः

अयमपि दृष्टान्तोऽपि। **स्त्रंसते** नश्यति। ग्लानिः संकोचः। मदनव्यथाग्लान्योः संतोषविरोधित्वात्साम्यम्। अनयोः सत्त्वासत्त्वाभ्यां वैधर्म्यम्।

## विज्ञप्रिया

साधर्म्यवैधर्म्याभ्यां व्यञ्जनेत्याह—**त्वयि दृष्टेति**। दृष्टानुदयेति। दृष्टो योऽनुदय इन्दौ तद्भाजि सतीत्यर्थः। उदयसत्त्वेऽपि मेघात्तददर्शनात्। क्लान्तिप्रतिपादनार्थं दृष्टेत्युक्तम्। अत्र व्यथास्रंसनस्य विपरीतो धर्मः क्लान्तिः, उपमेयोपमानगताभ्यां ताभ्यां स्वस्वप्रियदर्शने स्वार्थप्राप्तित्वमेको धर्मः व्यज्यते। नच वैधर्म्यव्यङ्ग्यप्रतिवस्तूपमातोऽस्या को भेद इति वाच्यम्। तत्र वैधर्म्यं धर्मान्तरनिष्ठम्, अत्र तूपमाननिष्ठं तथा च तत्र वैधर्म्येणैव व्यञ्जना। अत्र तु उभयनिष्ठाभ्यां साधर्म्यवैधर्म्याभ्यां व्यञ्जनेति। भेदात्।

## कुसुमप्रतिमा

वैधर्म्मा उदाहरति त्वधीति। नायकं प्रति नायिकादूत्या उक्तिरियम्। त्वयि नायके दृष्टे सति कुरङ्गाक्ष्या हरिणनयास्त. कान्ताया इत्यर्थः, मदनव्यथा कामवेदना, स्त्रसंते अपैति। तथा च इन्दौ चन्द्रे अनुदयभाजि उदयमलब्धवति सति, कुमुदस हतेः वैरवगणस्य ग्लानिः प्रफुल्लताहानिः दृष्टा।

अत्रापि नायकदर्शनेन प्रफुल्लतया समानधर्म्मिरूपायाः कुमुदसंहतर्द्वितीयार्द्धवाक्येनोपादानात् तया च कुमुदसंहत्या सह कुरङ्गाक्ष्याः साम्यस्य वाचकाभावात् प्रणिधानेनैव गम्यत्वाच्च दृष्टान्तः। पूर्वार्द्धे मदनव्यथाया भ्रंश, परार्द्धे तु ग्लानिरित्यभावभावाभ्यामुभयोर्वैधर्म्ययम्। तथा पूर्ववदुभयमपि विशेषमेव। तेन चेदमुभयोवोदाहरणं समर्थ्य समर्थकयोर्विशेषरूपत्व एव ज्ञेयम्।

उभयोरेव सामान्यरूपत्वे यथा मम रुक्मिणीहरणमहाकाव्ये—

**"अपरप्रथितं निजं यशो न यशस्वी स्वयमेव भाषते।**

**स्वविबोधकप्रत्ययोदये प्रविपर्य्येति विभक्तिरर्थभाक्॥"**

इदं साधर्म्ये। वैधर्म्ये तूह्यम्।

## विमला

त्वयीति।—त्वयि दृष्टे सति कुरङ्गाक्ष्याः,—हरिणनेत्रायाः, मदनव्यथा—स्मरपीड़ा, संसते—भ्रश्यति, नश्यतीति यावत्, ["स्त्रंसु अधः पतने" इत्यस्य लटि प्रथमपुरुषैकवचनरूपमिदम्] इन्दौ—चन्द्रे, अनुदयभाजि—उदयमप्राप्ते सति, कुमुदसंहतेः,—कैरवसमूहस्य ग्लानिः,—मालिन्यं, सङ्कोच इत्यथेः, दृष्टा-नेत्रविषयीकृता। अत्र मदनव्यथास्त्रंसनस्य ग्लानिदर्शनस्य च वैपरीत्येन प्रणिधानगम्यसाम्यत्वमस्ति, सन्तोषविरोधित्वात्; अनयोः सत्त्वा-

सत्त्वाभ्या वैधर्म्यम् इति बोध्यम् । श्लोकश्छन्दः;—"श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुःपादयोर्ह्रस्वं गुरु सप्तममन्ययोः ॥" इति च तल्लक्षणम् ।

## लक्ष्मी

इत्थं साधर्म्येणोदाहरणं प्रदर्श्य वैधर्म्येण प्रदर्शयति—**त्वयति** । कान्तं प्रति कान्तादूत्या उक्तिरयम् । त्वयि कान्ते दृष्टे सति, कुरङ्गाक्ष्याः मृगलोचनायास्तव प्रियतमाया इत्यर्थः, मदनव्यथा कामपीडा त्वद्विरहमूलेतिशेषः, स्रंसते भ्रश्यति विनश्यतीतियावत् । तथा च इन्दौ चन्द्रे अनुदयभाजि अस्त सेवमाने सति उदयप्राप्तवति सतीत्यर्थः, कुमुदानां नक्तं प्रस्फुटितानां पद्मानां संहतेः पुञ्जस्य ग्लानिः प्रस्फुटनाभावः सङ्कोच इति यावत् दृष्टा अत्रापि कान्तदर्शनेन प्रस्फुटतया समानधर्मिणः कुमुदपुञ्जस्योत्तरार्द्धवाक्येन प्रतिपादनात्, तेन च कुमुदपुञ्जेन सह कुरङ्गाक्षाः सादृश्यस्याभिधायकाभावात् तात्पर्यवशनैव प्रतीयमानत्वाच्च दृष्टान्तः । पूर्वार्द्धे मदनव्यथाया नाश उत्तरार्द्धे तु सङ्कोच इत्यसत्त्वसत्त्वाभ्यां द्वयोवधर्म्यम् । एवञ्च प्राग्वदेव द्वयमपि विशेष एवेत्यवधेयम् । नच वैधर्म्यव्यङ्ग्यप्रतिवस्तूपमातोऽस्याः को भेद इति वाच्यम्, तत्र वैधर्म्यं धर्मान्तरगतम्, अत्र तूपमानगतम् । तथा च तत्र वैधर्म्येणैव व्यञ्जना, अत्र तूभयगताभ्यां साधर्म्यवैधर्म्याभ्यां व्यञ्जनेतिभेदात् ।

अत्र समर्थ्यसमर्थकयोर्विशेषरूपत्व एव 'अविदित' 'त्वयि दृष्टे' इत्युभयमुदाहरणमवगन्तव्यम् । समर्थ्यसमर्थकयोः साधर्म्यवैधर्म्ययोरुदाहरणे स्वयमूहनीये ।

## रुचिरा

'**त्वयि** कान्ते नरवर इति यावत् । **दृष्टे** । सति सप्तमीयम् । **कुरङ्गाक्ष्याः** । **मदनव्यथा** 'त्वद्विरहमूले'ति शेषः । स्रंसते भ्रश्यति विनश्यतीति यावत् । **इन्दौ** चन्द्रमसि । **अनुदयभाजि** अस्तं सेवमाने सति । अस्तमिते सतीति भावः । **कुमुदसंहतेः** कुमुदानां नक्तं विकासिनां सरोजानां पुञ्जस्य । **ग्लानिर्विकासाभावः** । **दृष्टा** । अत्र—'इन्दावुदयमाने कुमुदसंहतेर्ग्लानिर्नश्यती'त्येवं वैधर्म्यविपर्य्यये साधर्म्यपर्य्यवसानमिति कान्तदर्शने—हृदययोर्मदनव्यथा—कुमुदसंहतिग्लान्योश्च बिम्बप्रतिबिम्बत्वम् । मदनव्यथाकुमुदसंहतिग्लान्योरन्तः सन्तापजन्यबहिर्विकारविशेषरूपेण साम्यम् । दूत्याः सख्या वा कमपि स्वस्वामिनीवयस्याऽन्तरेशं प्रति उक्तिरियम् ॥ १६७ ॥'

**'वसन्तलेखैकनिबद्धभावं परासु कान्तासु मनः कुतो नः।**
**प्रफुल्लमल्लीमधुलम्पटः किं मधुव्रतः काङ्क्षति वल्लिमन्याम्॥'**

इदं पद्यं मम। अत्र 'मनः कुतो नः' इत्यस्य 'काङ्क्षति वल्लिमन्याम्' इत्यस्य चैकरूपतयैव पर्यवसानात्प्रतिवस्तूपमैव। इह तु कर्णे मधुधारा वमनस्य नेत्रहरणस्य च साम्यमेव, न त्वैकरूप्यम् अत्र सामर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभावोऽर्थान्तरन्यासः। प्रतिवस्तूपमादृष्टान्तयोस्तु न तथेति भेदः।

---

## विवृतिः

**इह त्विति**। प्रीतिजनन एव पर्यवसानादैकरूप्येऽपि प्रतिवैंलक्षण्याद्वैलक्षण्यमिति भावः।

## विज्ञप्रिया

यत्र तु समानधर्मप्रतिपादकशब्दाभ्यामेको धर्मो व्यञ्जनां विनैव प्रतिपाद्यते तत्र प्रतिबिम्बाभावात् प्रतिवस्तूपमैवेति। अत्र स्वकीयं श्लोकमुदाहरति—वसन्तलेखैकेति—वसन्तलेखा नायिकाविशेषः। राज्ञश्चेयमुक्तिः।

**एकरूपतयैव पर्य्यवसानादिति**। वाच्यप्रश्नरूपैकधर्मविषयतया एकत्वारोपादित्यर्थः। अत्र हि परनायिका उपमेया अन्या बह्वयश्च उपमानानि तासां मनोविषयत्वाकाङ्क्षाविषयत्वयोर्हेतुप्रश्नैकधर्मविषयतया एकत्वारोपरूपपर्य्यवसानम्। अविदितगुणापीत्यत्र तु नैकत्वपर्यवसानम्। किन्तु समानधर्माभ्यामुभयसाधारणैकधर्मव्यञ्जनमेवेत्याह—**इह त्विति**।

अर्थान्तरन्यासाद् द्वयोः प्रतिवस्तूपमादृष्टान्तयोर्भेदमाह—**समर्थ्येति**। वाक्ययोरित्यत्र वाक्यार्थयोरित्यर्थः। अनयोरपि उपमेयं सामर्थ्यमुपमानं समर्थनमित्यतोऽभेदप्रसक्तिः। **न तथेति**। न सामान्यविशेषभाव इत्यर्थः।

## कुसुमप्रतिमा

स्थलविशेषे दृष्टान्तप्रतिवक्तूपमयोः सन्देहनिरासायोदाहरति वसन्तेति। वसन्तलेखायां तदाख्ये नायिकाविशेषे एकं केवलं निबद्धो भावोऽनुरागो येन तत्तादृशं नः अस्माकं मनः, परासु वसन्तलेखाभिन्नासु कान्तासु सुन्दरीषु, कुतः कथं गच्छति? अपि तु कथमपि नेत्यर्थः। तथाहि प्रफुल्लायाः प्रस्फुटितायाः मल्लया मल्लिकाकुसुमस्य, मधुलम्पटो मधुपानलोभो, मधुव्रती भ्रमरः, किम् अन्यां वल्लिं लतां काङ्क्षति? अपि तु कथमपि नेत्यर्थः।

नन्वत्र प्रदर्शितेनार्थापत्तिद्वयेन एकस्मिन्नभाव एव वाक्यार्थपर्य्यवसानात् किं प्रतिवस्तूपमा? किं वा मनोगमन मधुव्रताकाङ्क्षयोर्धर्म्मयीः साम्यद्भेदाच्च दृष्टान्त इत्याशङ्क्यामाह अत्रेति। एकरूपतयेवेति। तथा च तादृशपरकान्ताविषयकमनोगमनाकाङ्क्षयोः प्रतियोगिनोरभेदात्तदभावयोरप्यभेद एवाङ्गीक्रियते लाघवादित्याशयः। एतेन प्रतिवस्तूपमालक्षणे धर्म्मपदं वृत्तिमत्पदार्थमात्रोपलक्षणमिति सूचितम्।

दृष्टान्ते धर्म्मस्य साम्यमेव न त्वभेद इति दर्शयति इह त्विति । "अविदितगुणापि" इत्यादौत्वनित्यर्थः । साम्यमेवेति । कर्णावच्छेदेन नेत्रावच्छदेन चात्मनि प्रीतिजनकत्वस्यात्र साधारणधर्म्मत्वादिति भावः । न त्वेकरूप्यं न त्वभिन्नधर्म्मत्वं वस्तुत एव कारकक्रिययोर्भेदादित्याशयः ।

ननु प्रतिवस्तूपमायां दृष्टान्ते अर्थान्तरन्यासे च सर्वत्रैव प्रथमवाक्यं प्रति द्वितीयवाक्यस्य समर्थकत्वदर्शनादर्थान्तरन्यासेन सह प्रतिवस्तूपमादृष्टान्तयोः को भेद इत्याहु अत्रेति । युक्तिप्रदर्शनद्वारा वाक्यान्तरेण यद्वाक्यं दृढ़ीक्रियते तत् समर्थ्यं वाक्यम्; यच्च वाक्यं युक्तिप्रदर्शनद्वारा वाक्यान्तर दृढ़ीकरोति तत् समर्थकं वाक्यम् । सामान्यविशेषभावो व्यापकव्याप्यभावः । तथा चार्थान्तरन्यासे समर्थ्यवाक्यस्य सामान्वत्वम् इतरस्य विशेषत्वम्, किं वा समर्थकवाक्यस्य सामान्यत्वमितरस्य तु विशेषत्वम् आवश्यकमित्यर्थः । किन्तु प्रतिवस्तुपमादृष्टान्तयीः समर्थ्यसमर्थकवाक्योः, न तथा न सामान्यविशेषभावः । तथा च प्रतिवस्तूपमादृष्टान्तयोरपि अर्थान्तरन्यासवदेव वाक्यद्वयस्य परस्परं समर्थ्यसमर्थकभावो विद्यत एव; किन्तु अर्थान्तरन्वासवत् तयोर्वाक्ययोराद्यस्य सामान्यत्वं द्वितीयस्य विशेषत्वम्, किं वा आद्यस्य विशेषत्वं द्वितीयस्य सामान्यत्वम् इति न विद्यते; अपि तु द्वयोरेव वाक्ययोः सामान्यत्वं किं वा विशेषत्वमित्येव विद्यत इति सरलार्थः । एतेन "न तथा न सामान्यविशेषाभावो न वा सामर्थ्यसमर्थकभावः" इति रामचरणोक्तमपास्तम् । प्रतिवस्तूपमादृष्टान्तरयोरपि वाक्यद्वये समर्थ्यसमर्थकभावस्य स्पष्टमेव प्रतीयमानत्वात्, अन्यथा चोपमानवाक्यस्य वैयर्थ्यापत्तेर्दुर्निवारत्वात्, अस्याञ्च वृत्तिपङ्क्तौ "न तथा" इत्यनेन प्रथमान्ततया "सामान्यविशेषभावः" इत्यस्यैव सम्बन्धयोग्यत्वेन ग्रन्थकारस्यापि तथैवाभिप्रायावधारणाच्चेति सुधीभिर्विभावनीयम् ।

## विमला

वसन्तेति ।—वसन्तलेखायां—तदाख्यायां कान्तायाम्, एकनिबद्धभावं—केवलानुरक्तमित्यर्थः, नः,—अस्माकं, मनः,—चेतः, परासु—अन्यासु, कान्तासु—रमणीषु, कुतः ?—कस्मात् ? अभिलाषि भवेदिति शेषः, प्रफुल्लायाः,—विकसितायाः मल्लयाः,—मल्लिकायाः, मधुलम्पटः,—रसलब्धः, मधुव्रतः,—भ्रमरः, अन्याम्,—अपरां, मल्लिकाऽतिरिक्तामित्यर्थः, वल्लिं—लतां, काङ्क्षति—अभिलषति, किम् ? नैवाभिलषतीत्यर्थः । अत्रोपेन्द्रवज्रा, वृत्तं, तल्लक्षणञ्च यथोक्तम्—"उपेन्द्रवज्रा जतजा गगौ चेत्" इति ।

इह त्विति ।—प्रीतिजनन एव पर्य्यवसानात् ऐकरूप्येऽपि प्रीतेर्वैलक्षण्यात् वैलक्षण्यम इति भावः । अत्रेति—प्रतिवस्तूपमादृष्टान्तयोरित्यर्थः । समर्थ्येति ।—समर्थ्यस्य—दृढ़ीकार्य्यस्य, समर्थकस्य—दृढ़ीकारकस्य, वाक्यद्वयस्य इत्यर्थः । सामान्यविशेषभावे इति—उभयोरेकस्य सामान्यत्वे अपरस्य विशेषत्वे इत्यर्थः । प्रतिवस्तूपमादृष्टान्तयोस्तु न तथा—-न सामान्यविशेषाभावः, न वा समर्थ्यसमर्थकभावः इति अस्यास्ततो भेदः ।

## लक्ष्मी

इत्थं द्विविधं दृष्टान्तमुदाहृत्य स्थलविशेषे दृष्टान्तप्रतिवस्तूपमयोः संशयनिराकरणायोदाहरति—**वसन्तलेखैकेति** । राज्ञ उक्तिरियम् । वसन्तलेखायां तदाख्यायां स्ववेश्यायाम् एकोमुख्यो भावोऽनुरागो यस्य तथोक्तम्, न अस्माकं मनश्चित्तम्, परासु वसन्तलेखातिरिक्तासु कान्तासु रमणीषु विषये कुतः कथं गच्छति ? अपि तु कथमपि नेत्यर्थः । तथाहि प्रफुल्लता प्रस्फुटा या मल्ली मल्लिकाकुसुमं तस्य मधु रसः तत्र मधुपाने इत्यर्थः लम्पट

समासक्तचित्तः, मधुव्रतो भ्रमरः, किम् अन्यां वल्लिं लतां 'वल्ली तु व्रततिर्लता' इत्यमरः, काङ्क्षति अभिलषति अपि तु कथमपि नेत्यर्थः । **उपेन्द्रवज्राच्छन्दस्तल्लक्षणन्तूक्तम्** ।

अन्यदीयपद्यमाशङ्कमान आह—**इदं पद्यं ममेति** ।

नचात्रोदाहरणे एकत्राभाव एवोक्तार्थापत्तिद्वयेन वाक्यार्थनिश्चयात् प्रतिवस्तूपमालङ्कार उताहो मनोगमनमधुव्रताकाङ्क्षयोधर्मयोः सादृश्यात् पार्थक्याच्च दृष्टान्तलङ्कार इति संशयं निराकर्त्तुमाह—**अत्रेति** । 'मनः कुतो नः' इत्यस्य 'वाक्यस्ये'ति शेषः । 'काङ्क्षति वल्लिमन्याम्' इत्यस्य 'वाक्यस्ये'तिशेषः । एकरूपतयैव 'स्वरूपतो भेदेऽपीतिशेषः । पर्यवसानात् निश्चयात् । प्रतिवस्तूपमैव 'न तु दृष्टान्त' इति शेषः । तथा च तथाविधपरनायिकाविषयकमनोगमनाकाङ्क्षयोः प्रतियोगिनोस्तात्पर्येऽन्विष्यमाणे ऐक्यात् दभावयोरप्यैक्यमेव स्वीक्रियते लाघवादिति भावः । इत्थञ्च प्रतिवस्तूपमायां धर्मपदं शक्तिमतपदार्थस्योपलक्षकमित्यवगन्तव्यम् ।

दृष्टान्ते धर्मस्य सादृश्यमेव च त्वैक्यमित्युपपादयति—**इह त्विति** 'अविदितगुणापि' इत्यादौ त्वित्यर्थः । कर्णे जातावेकवचनम् । **साम्यमेवेति** । प्रेमोत्पादकस्य साधारणधर्मस्य कर्णावच्छेदेन चात्मनि विद्यमानत्वादितिभावः । एतद्द्वयवच्छेद्यं दर्शयति—**न त्वेकरूप्यमिति** । न त्वनतिरिक्तधर्मत्वं यथार्थत एव क्रियाकारकयोर्भिन्नत्वादित्यभिप्रायः ।

अर्थान्तरन्यासाद् द्वयोः प्रतिवस्तूपमादृष्टान्तयोर्भेदमुपपादयति—**अत्रेति** । समर्थ्यसमर्थकवाक्ययोः समर्थनीयसमर्थकयोर्वाक्ययोः पूर्वापरवाक्ययोरितियावत् । अर्थान्तरन्यास 'इति बोध्यम्' इति शेषः । प्रतिवस्तूपमादृष्टान्तयोस्तु 'समर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभाव इति पूर्वतोऽनुवर्तनीयम् । न तथा 'यताऽर्थान्तरन्यास' इति शेषः, इति अर्थान्तरन्यासाद् भेद 'इति बोध्यमितिशेषः । तथाचार्थान्तरन्यासे समर्थ्यवाक्यस्य सामान्यत्वं (व्यापकत्वम्) अन्यस्य विशेषत्वं (व्याप्यत्वम्) अथवा समर्थकवाक्यस्य सामान्यत्वम् अन्यस्य तु विशेषत्वमावश्यकम्, एवमेव प्रतिवस्तूपमादृष्टान्तयोरप्युभयोर्वाक्ययोः । परस्परं समर्थ्यसमर्थकभावो यद्यपि विद्यत एव किन्तु अर्थान्तरन्यासवत् वाच्यद्वयमध्ये एकस्य समान्यत्वम् अपरस्य विशेषत्वम् अथवा एकस्य विशेषत्वम् अपरस्य सामान्यत्वं न विद्यते, उभयोरपि वाक्ययोः सामान्यस्य विशेषत्वमेव स्वीकारादित्याशयः ।

## रुचिरा

इत्येवं द्विविधं दृष्टान्तमुदाहृत्य प्रतिवस्तूपमातो व्यतिरेकं दर्शयितुं तामुदाहरति—'**वसन्तलेखैकनिबद्धभावं** वसन्तलेखायां तदाख्यायां सुरगणिकायामेको मुख्यो निबद्धो भावो वृत्तिविशेषो यस्य तादृशम् । **नोऽस्माकम्** । **मनश्चित्तम्** । **परासु** अन्यासु । **कान्तासु** । विषये सप्तमीयम् । **कुतः** । **प्रफुल्लमल्लीमधुलम्पटः** प्रफुल्ला विकसितपुष्पा या मल्ली मल्लिका तस्या मधु रसस्तत्र लम्पटः समासक्तचित्तः । **मधुव्रतो** भ्रमरः । **अन्याम्** । **वल्लिं** लताम् । **किम्** । **काङ्क्षति** । उपेन्द्रवज्रावृत्तम् ॥ १६८ ॥'

परपद्यशङ्कामपहरति-**इदमित्यादिना** । स्पष्टम् ॥

प्रयोजनं निर्दिशति-अत्रेत्यादिना । **अत्र** । **'मनः कुतो नः' इत्यस्य** 'वाक्यस्ये'ति शेषः । **'काङ्क्षति वल्लिमन्या' मित्यस्य** 'वाक्यस्ये'ति शेषः । **च** । **एकरूपतया** । **एव** । 'स्वरूपतो भेदेऽपी'ति शेषः । **पर्य्यवसनात्** निश्चयात् । **प्रतिवस्तूपमा** । **एव** 'नतु दृष्टान्त' इति शेषः । अयम्भावः—'मनः कुतो नः' इति वाक्यं, 'किं काङ्क्षति वल्लिमन्या'मिति वाक्यं च तातपर्य्येऽन्विष्यमाणे एकमेव, एकस्यैव-परत्र मनः प्रतिहतत्वस्य धर्मस्य पृथक्त्वेन

प्रतिपादनात्। इति। नन्वत्र किं वैलक्षण्यमित्याह—**तत्र** 'अविदितगुणे'त्याद्युदाहृते। च। **कर्णे**। जातावेकवच-नम्। **मधुधारावमनस्य**। **नेत्रहरणस्य**। **च**। **साम्यम् एव**। एतद्द्वयवच्छेद्यं दर्शयति—**न तु**। **ऐकरूप्यम्**। अयम्भावः—धर्मस्यैकरूप्येऽपि भिन्नतयाऽभिधाने प्रतिवस्तूपमा, धर्मस्य साम्यमात्रनिर्देशे दृष्टान्तम्, साम्यं च सति द्वयोर्भेद एवेति तत्त्वज्ञाः, अतः पूर्वत्र नेयम्, उत्तरत्र पुनरयमपि न। इति। अथ प्रसङ्गात् अर्थान्तरन्यासाद्भेदं निर्दिशति—**अत्रा**स्मिन् सन्देहनिराकरणप्रस्तावे। **सामर्थ्यसमर्थवाक्ययोः** समर्थनीयसमर्थकयोर्वाक्ययोः पूर्वाप-रवाक्ययोरिति यावत्। **सामान्यविशेषभावः**। **अर्थान्तरन्यासः** 'इति बोध्य'मिति शेषः। **प्रतिवस्तूपमादृष्टान्तयोः**। **तु**। **तथा** 'यथाऽर्थान्तरन्यासे' इति शेषः। 'समर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभाव' इति पूर्वतोऽनुषज्यते। **न**। **इति** 'अर्थान्तरन्यासा'दिति शेषः। **भेदः**। 'इति बोध्य'मिति शेषः। अयम्भावः—यदपि **प्रतिवस्तूपमादृष्टान्तो-**दाहरणयोर्वाक्यद्वयमिति तत्र पूर्वस्य समर्थनीयत्वमुत्तरस्य समर्थकत्वमित्यर्थान्तरन्यासत्वं संशयितुं शक्यते, तदपि प्रतिवस्तूपमादृष्टान्तयोर्वाक्ययोर्धर्मस्यैकस्यापि शब्दमात्रेण पृथक्तया तात्पर्य्यतो वा प्रतिरूपतया निर्देशमुखेनैव चमत्कारः, अर्थान्तरन्यासे पुनर्वाक्ययोः सामर्थ्यसमर्थकतयैवेत्येषां भेदोऽवधार्यः। अत एवार्थान्तरन्यासे पूर्वापर-वाक्ययोः सामान्यविशेषभावः। प्रतिवस्तूपमायां धर्मस्यैकस्यैव पृथक्तयाऽभिधातुं वाक्यद्वयावतारः, दृष्टान्ते पुनर्धर्मस्य बिम्बप्रतिबिम्बतया निर्देष्टुम्; इति।

**संभवन्वस्तुसंबन्धोऽसंभवन्वापि कुत्रचित्।**

**यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना ॥ ५१ ॥**

तत्र संभवद्वस्तुसंबन्धनिदर्शना यथा—

**'कोऽत्र भूमिवलये जनान्मुधा तापयन्सुचिरमेति संपदम्।**

**वेदयन्निति दिनेन भानुमानाससाद चरमाचलं ततः ॥'**

अत्र रवेरीदृशार्थवेदनक्रियायां वक्तृत्वेनान्वयः संभवत्येव। ईदृशार्थज्ञापनसमर्थचरमाचलप्राप्तिरूपकर्मवत्त्वात्। स च रवेरस्ताचलगमनस्य परितापिनां विपत्प्राप्तेश्च बिम्बप्रतिबिम्बभावं बोधयति। असंभवद्वस्तुनिदर्शना त्वेकवाक्यानेकवाक्यगतत्वेन द्विविधा।

---

## विवृतिः

**अत्रेति**। प्रतिवस्तूपमादृष्टान्तयोरित्यर्थः। न तथा न सामान्यविशेषभावो न वा सामर्थ्यसमर्थकभावः ॥ निदर्शनालंकारमाह—**संभवन्निति**। असंभवन् बाधितः। बिम्बानुबिम्बत्वमुपमानोपमेयभावं बोधयेत्। 'व्यञ्जनया' इति शेषः ॥

**कोऽत्रेति**। मुधा निष्प्रयोजनम्। ततो दिनान्तरे ॥ **ईदृशार्थेति**। पूर्वार्धेत्यर्थः। स च वेदनक्रियान्वयः। बिम्बानुबिम्बभावं सादृश्यम्। तत्रचादर्शनप्रयोजकत्वेनेति बोध्यम् ॥

## विवृतिपूर्तिः

**निदर्शनेति**। निश्चित्य दर्शनं सादृश्याविष्करणं निदर्शना। दृशेर्ण्यन्तात्स्त्रियां भावे युच् ॥ **कुवलयानन्दे** त्वेवं लक्ष्यते—"वाक्यार्थयोः सदृशयोरैक्यारोपो **निदर्शना**। यद्दातुः सौम्यता सेयं पूर्णेन्दोरकलङ्कता।" अत्र यद् दातुः सौम्यतेत्युपमेयवाक्यार्थे सेयं पूर्णेन्दोरकलङ्कतेत्युपमानवाक्यार्थस्य यत्तद्भ्यामभेदारोपः। यदित्यव्ययम्। इयं वाक्यार्थवृत्तिनिदर्शना। "पदार्थवृत्तिमप्येके वदन्त्यन्यां **निदर्शनाम्**। त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः ॥" इयं पदार्थवृत्तिनिदर्शना **ललितोपमेति चन्द्रालोके**। "अपरां बोधनं चाहुः क्रिययाऽसत्सदर्थयोः। नश्येद्राजविरोधीति क्षीणं चन्द्रोदये तमः ॥ उदयन्नेव सविता पद्मेष्वर्पयति श्रियम्। विभावयन् समृद्धीनां फलं सुहृदनुग्रहः ॥" **इत्यसदर्थ-सदर्थे** निदर्शने। असदर्थनिदर्शनायां राजशब्दः श्लिष्टः ॥

## विज्ञप्रिया

निदर्शनालङ्कारमाह—**सम्भवन्निति**। वस्तुनोः क्वचित् क्रियाकारकयोः। क्वचिद् यत्तद्पदार्थयोः सम्बन्धः असम्भवन्, क्वचिद् असम्भवन्, वाचकयोर्यत्र कुत्रचिद् बिम्बानुबिम्बत्वं सादृश्यं बोधयेदित्यर्थः।

**कोऽत्रेति**। अत्र भूमिवलये मुधा निरर्थकं जनांस्तापयन् कः सुचिरं सम्पदमेति। **भानुमानिति**। वेदयन् ज्ञापयन् दिनेन चरमाचलं ततो नभोमध्यादाससादेत्यर्थः। दिनेनेत्यत्र दिनस्य पूर्ववर्त्तित्वरूपकारणतायां तृतीया।

**अत्रेति**। अत्र कर्तृत्वान्वयो जनकत्वान्वयः स्वस्तिगमनेन तादृशवदस्यानुमितिरूपस्य जनकत्वात्। जनः सुचिरं न सम्पदमेति परतापकत्वास्तगामिरविवदित्यनुमितसम्भवात्। सादृश्यव्यञ्जनरूपं प्रतिबिम्बानुबिम्बबोधकत्वं तस्य दर्शयति—**स चेति**। स च सम्बन्धः इत्यर्थः। परतापिनो रवेरस्तगमनवदन्येषामपि परतापिनां विपत्प्राप्तिरित्येवं हि तत्।

## लोचन

**एकरूपतयैव पर्य्यवसानादिति**। 'मनः कुतो न' इत्यस्य पर्य्यवसाने नान्यां कान्तां काङ्क्षामि इत्येतदर्थत्वाद् इह दृष्टान्ते तु पुनः बिम्बप्रतिबिम्बभावः।

वस्तुसम्बन्धो धर्मधर्मिभाव इत्यर्थः। असम्भवन् बाधप्रतिभासादित्यर्थः। बिम्बानुबिम्बत्वं, बिम्बप्रतिबिम्बभावः। निदर्शनं प्रतिबिम्बीकरणम्। तदस्यां भणितावस्तीति निदर्शना।

दिनेनेत्यपवर्गे तृतीया। तृतीयार्थः परितापिनां विपत्प्राप्तिरूपः।

अवगमयत्-प्रत्याययत्। ललितव्यक्तेः सजातीयत्वेनात्यन्तासङ्गतिविरहेणाऽदूरविप्रकर्षादिभावः। एवं लीलादावपि ज्ञेयम्।

कल्प्यत इत्यतः पूर्वं प्रथममिति शेषः। उपलक्षणं चैतत्। एवमाननेन शशिद्युतिरित्यत्रापि ज्ञेयम्।

इदं वपुः तपः क्षमं साधयितुमिच्छति योऽनेन शकुन्तलाया वपुषा तपो निर्वाहयितुमिच्छतीति भावः। न केवलं यत्तदोर्द्वयोः शाब्दत्वे वाक्यनिदर्शना। एकस्यार्थत्वेऽपि यथा—

**"शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।**
**दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः॥"**
**एवम्—"मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम्।**
**निर्वाणस्य प्रदीपस्य स्नेहः संवर्द्धयेच्छिखाम्॥"**
**"यच्चकार विवरं शिलाघने**
**ताडकोरसि स रामसायकः।**
**अप्रविष्टविषयस्य रक्षसां**
**द्वारतामगमदन्तकस्य तत्॥"**

इत्यत्र तु निदर्शना अलङ्कार्य्या। नहीह "द्वारता" मिवेति सामर्थ्याप्तिरस्ति। उपमेयादिसम्भवादिह प्रतीयमानोत्प्रेक्षेति राघवानन्दमहापात्राः—

**"मुनेस्तत्र मनोभेदे दुर्लभे सुरकाङ्क्षिते**
**कटाक्षा एवमेणाक्ष्याः प्रययुः स्मरबाणताम्।"**

इत्यादिषु तु परिणामादय एव।

## कुसुमप्रतिमा

प्राकरणिकसादृश्यप्रयुक्तमेव निदर्शनालङ्कारं लक्षयति सम्भवन्निति। अत्रापि यत्रेति यदित्यर्थकमव्ययम्। तथा च वस्तुसम्बन्धः पदार्थानामन्वयः कुत्रचित् सम्भवन् कस्या अपि बाधाया अभावा दुपपद्यमानः सन्, कुत्रचिद्वापि असम्भवन् कयाचिद्बाधया अनुपपद्यमानः सन्, यत्र तत् बिम्बानुबिम्बत्वं बिम्बवतिबिम्बभावम् उपमानोपमेयभावमिति यावत्, बोधयेद्व्यञ्जनया प्रतिपादयेत् सा निदर्शना नाम अलङ्कारः स्यात्।

एतेन सादृश्यकल्पनायां पर्य्यवसितो वाक्यार्थो निदर्शनेति संक्षिप्तसरलार्थः।

तथा च सम्भवस्तुसम्बन्धा असम्भवद्वस्तुसम्बन्धा चेति द्विविधा निदर्शना। तत्र दृष्टान्ते वाक्ययोर्नसामान्यविशेषभावः सम्भवद्वस्तुसम्बन्धरूपनिदर्शनायामर्थान्तरन्यासे च वाक्ययोः सामान्यविशेषभावः। अर्थान्तरन्यासे द्वितीयवाक्यं पूर्ववाक्यसमर्थकम्, सम्भवस्तुसम्बन्धायान्तु न तथा। असम्भवद्वस्तुसम्बन्धनिदर्शनायान्तु वाक्यार्थानुपपत्तिः, दृष्टान्ते अर्थान्तरन्यासे च न तथेति भेदः। ग्रन्थकृता त्वन्यथा भेदोऽपि दर्शयिष्यते।

निदर्शयति निश्येनोपमानोपमेयभावं बोधयतीति निदर्शना। निपूर्वकदृशधातो 'ईषिश्चन्यासौ'त्यादिना स्त्र्यधिकारे युप्रत्ययः।

क इति। अत्र भुमिवलये पृथिवीमण्डले को जनः, मुधा अनर्थकं जनान् तापयन् सन्, सुचिरं बहुकालं सम्पदं समृद्धिम् एति प्राप्नोति, अपि तु कोऽपि नेत्यर्थः। भानुमान् सूर्य्यः, दिनेन इति वेदयन् बोधयन् सन्, ततो दिनावसाने चरमाचलम् अस्तम्, आससाद जगाम्।

उदाहृते लक्षणं सङ्गमयितुमाह अत्रेति। ईदृशार्थस्य कोऽपि जनो निरर्थकं जनान् तापयन् दीर्घकालं सम्पदं न प्राप्नोति इति प्रथमार्द्धोक्तस्य अर्थस्य, वेदनक्रियायां बोधनक्रियायाम्। ननु रवेरचेतनत्वात् कथं वेदनक्रियायां कर्त्तृत्वेनान्वयः सम्भवतीत्याह ईदृशार्थेति। ईदृशार्थस्य उक्तपूर्वार्द्धार्थस्य ज्ञापनसमर्थो बोधनयोग्यो यश्चरमाचलप्राप्तिरूपो धर्म्मस्तद्वत्त्वात् रवेरित्यर्थः। स च वेदनक्रियायां सम्भवन् कत्तृत्वेनान्वयश्च। बिम्बप्रतिबिम्बभावम् उपमानोपमेयभावम्। तथा च "यथा रविनर्थकं परान् तापयन्नस्तं प्राप्नोति, तथा परेऽपि परानन्र्थकं तापयन्ती विपदं प्राप्नुवन्ति" इत्युपमानोपमेयभावं सोऽन्वयः सूचयतीत्यर्थः।

## विमला

निदर्शनामाह, सम्भवन्निति।—कुत्रचित् सम्भवन्—अवाधितः, कुत्रचिद्वा असम्भवन्—बाधितः, वस्तुसम्बन्धः यत्र बिम्बानुबिम्बत्वं—प्रणिधानगम्यसाम्यत्वम्, उपमानोपमेयभावमित्यर्थः, बोधयेत्, व्यञ्जनया इति शेषः, सा निदर्शना। अलङ्कारसर्वस्वकारेणाप्युक्तं—"सम्भवताऽसम्भवता वा वस्तुसम्बन्धेन गम्यमानं प्रतिबिम्बकरणं निदर्शना" इति।

कोऽत्रेति।—अत्र भूमिवलये—भूमण्डले, कः,—जनः, जनान्—लोकान्, मुधा—निरर्थकं, तापयन्—पीड़यन्, सुचिरं—दीर्घकालं व्याप्येत्यर्थः, सम्पदं—श्रियम्, एति?—प्राप्नोति? न कोऽपीत्यर्थः; भानुमान्—सूर्य्यः, दिनेन—अह्ना, इति वेदयन्—ज्ञापयन्, ततः,—दिनान्ते इत्यर्थः, चरमाचलम्—अस्ताचलम्, आससाद—प्राप। इन्द्रवज्रा वृत्तम्।

अत्रेति।—ईदृशार्थस्य—उक्तरूपार्थस्य, पूर्वार्द्धनिर्दिष्टस्यत्यर्थः, वेदनक्रियायां—ज्ञापनव्यापारे। ईदृशार्थेति।—ज्ञापनसमर्थ—ज्ञापननिष्पादकं, यत् चरमाचलप्राप्तिरूपं कर्म तद्वत्वात्—तच्छालित्वादित्यर्थः। स

च—वेदनक्रियान्वयः, बिम्बप्रतिबिम्बभावं—गम्यसादृश्यं, (तच्चादर्शनप्रयोजनकत्वेनेति बोध्यम्) बोधयति—प्रत्याययति। न सम्भवन् वस्तुसम्बन्धो यत्र तादृशी या निदर्शना सा तु एकवाक्यञ्च अनेकवाक्यञ्च, तानि गता, तस्या भावस्तत्त्वं तेन, एकवाक्यगतत्वेनानेकवाक्यगतत्वेन चेति भिद्यमाना द्विविधा।

## लक्ष्मी

सादृश्यमूलकालङ्कारस्य प्रकृतत्वात्तन्मूलकमेव निदर्शनालङ्कारं निरूपयति—**सम्भवन्निति**। यत्र काव्ये वस्तुसम्बन्धः वाक्यार्थयोः पदार्थयोर्वान्वयः धर्मधर्मिभावः इत्यर्थः कुत्रचित् सम्भवन् कस्या अपि विप्रतिपत्तेरभावादुपपद्यमानः वा अथवा कुत्रचिदप्यसम्भवन् बाधप्रतिभासात् अनुपपद्यमानः सन् यत्र तत् बिम्बानुबिम्बत्वं बिम्बप्रतिबिम्बभावं सादृश्य मितियावत् बोधयेत् व्यञ्जनावृत्त्या निरूपयेत् न तु अभिदध्यात् न वा लक्षयेदित्यर्थः सा निदर्शयति निश्चयेन सादृश्यम् उपमानोपमेयभावं बोधयतीति निदर्शना नाम अलङ्कारः। निदर्शनेति निपूर्वकाद्शेर्ण्यन्तादृस्त्रियां भावे युच्। तथा च उपमानोपमेयभावजल्पनायां पर्यवसितो वाक्यार्थो वा निदर्शनेतिनिष्कर्षः।

इयं च सम्भवद्वस्तुसम्बन्धा, असम्भवद्वस्तुसम्बन्धा चेति द्विविधा।

तत्र सम्भवद्वस्तुसम्बन्धरूपायां निदर्शनायां वाक्ययोः सामान्यविशेषाभावः, दृष्टान्ते तु न तथेति ततो भेदः। यद्यपि अर्थान्तरन्यासेऽपि वाक्ययोःसामान्यविशेषभाव इत्यभेदः प्रतीयते तथापि तत्र द्वितीयवाक्यं पूर्ववाक्यसमर्थकः, अत्र तु न तथेति ततोऽपि भेद एव। असम्भवद्वस्तुसम्बन्धरूपायां निदर्शनायान्तु वाक्यार्थोपपत्त्यभावः, दृष्टान्तार्थान्तरन्यासयोस्तु वाक्यार्थोपपत्तिर्भवत्येवेति परस्परं भेदः प्रकरान्तरेण त्वन्यथाभेदोऽपि स्वयं वक्ष्यति।

क्रमादुदाहरणं दर्शयति—**कोऽत्रेति**। अत्र अस्मिन् भूमिवलये क्षोणीमण्डले कः किंस्वरूपः किन्नामा जनः, मुधा व्यर्थ जनान् प्राणिनः तापयन् सन्तापं जनयन् सन् सुचिरं चिरकालं सम्पदम् अभ्युदयम् एति प्राप्नोति न कोऽपीत्यर्थः। भानुमान् रश्मिमान् तेजस्वी सूर्य इत्यर्थः 'भानूरश्मिदिवाकरौ' इत्यमरः, दिनेन दिनद्वारा अपवर्गे तृतीया इति वेदयन् ज्ञापयन्, चरमाचलम् अस्ताचलम्, आससाद प्राप्तवान्। **रथोद्धताच्छ**न्दस्तल्लक्षणन्तूक्तं प्रागेव।

उक्तोदाहरणे लक्षणं योजयति—**अत्रेति**। उदाहृते पद्य इत्यर्थः, ईदृशार्थस्य 'कोऽत्रे'त्यादिपादद्वयात्मकः 'कोऽपि जनो व्यर्थ जनान् तापयन् चिरकालं सम्पदं नाप्नोति' इत्यर्थस्य वेदनक्रियायां ज्ञापनक्रियायाम्। अन्वयः सम्बन्धः। अन्वयस्यावश्यम्भावे हेतुमुपपादयति—**ईदृशार्थज्ञापने**त्यादिना। ईदृशार्थस्य उक्तपादद्वयात्मकवाक्यतात्पर्यार्थस्य ज्ञापनं वेदनं तत्र समर्थो योग्यो यश्चरमाचलप्राप्तिरूपो धर्मस्तद्वत्वात् रवेरित्यर्थः, स च ईदृशार्थवेदनक्रियायां सम्भवन् कर्तृत्वेनान्वयश्च, रवे रविसम्बन्धिनः। परितापिनां परितापकारिणाम् बिम्बप्रतिबिम्बभावं सादृश्यम् उपमानोपमेयभावमितियावत्। एवञ्च 'यथा रविरुदयं प्राप्यात्यन्तं तेजसा प्रकाशमानोऽपि निरर्थकमन्यान् तापयन्नस्तं याति, तथाऽन्येऽपि 'अन्यान्निरर्थकं क्लेशयन्तो विपदं लभन्ते' इति सादृश्यम् (उपमानोमेयभावम्) सोऽन्वयो व्यञ्जयतीत्यर्थः।

## रुचिरा

निदर्शनां लक्षयति—१३२ **यत्र**। **कुत्रचित्**। **सम्भवन्** उपपद्यमानः। वाऽथवा। **अपि**। **असम्भवन्** अनुपपद्यमानः। **वस्तुसम्बन्धो** वस्तुनोर्वाक्यार्थयोः पदार्थयोर्वा सम्बन्धोऽन्वयः। **बिम्बानुबिम्बत्वं** बिम्बप्रतिबिम्बभावम्। **बोधयेत्** व्यञ्जयेत्, 'नतु अभिदध्यात्, न वा लक्षयेत्;' इति शेषः। सा। **निदर्शना** निदर्श्यते सूच्यते व्यञ्जना

प्रत्याय्यते इति यावत् अनया (सम्भवदसम्भवदन्यतरवस्तुसम्बन्धस्य बिम्बप्रतिबिम्बत्वम्) इति, तथोक्ता विच्छित्तिरलङ्कारस्तादृशी विच्छित्तिरेव तन्नामाऽलङ्कार इति यावत्। अयम्भावः—कयोश्चित्सम्बन्ध उपपद्यते, कयोश्चिच्च न; इति लोकस्थितिः। अथ कविर्यदि यत्रोपपद्यमानस्यानुपमानस्य वा कयोश्चित् वाक्यार्थयोः सम्बन्धिनः सम्बन्धस्य रूपप्रतिरूपत्वं व्यञ्जनया निदर्शयेत्, तर्हि सा (वस्तुनोस्तयोः सादृश्यव्यञ्जिका विच्छित्तिः) निदर्शनेनेत्युच्यते। इयं च द्विविधा, सम्भवद्वस्तुसम्बन्धा, असम्भवद्वस्तुसम्बन्धा च। ययोर्वस्तुनोश्च सम्बन्ध, उपात्तयोरेव स इति बोध्यम्। अत एव—रूपकातिशयोक्त्योर्व्यवच्छेदः॥ इति॥ १०४॥'

क्रमादुदाहर्त्तुमिच्छुराह—**तत्रे**त्यादि। स्पष्टम्। '**अत्रास्मिन्**। **भूमिवलये**। **कः** किंस्वरूपः किन्नामा वेति भावः। **जनान्** प्राणिनः। मुधा व्यर्थम्, विनाऽपराधप्रतिकारेच्छामिति यावत्। **तापयन्** सन्तापं नयन्। **सुचिरं** चिरकालम्। **सम्पदमभ्युदयम्**। **एति** प्राप्नोति न कोऽपि परमनपराधिनं सन्तापं प्रापयन् जनः सम्पन्नैश्वर्य्यो भवति इति भावः। **इति**। **दिनेन** दिनद्वारा। **वेदयन्** ज्ञापयन्। भानुमान् रश्मिमान् तेजस्वी (सूर्यः) इति यावत्। 'भानू रश्मिदिवाकरौ।' इत्यमरः। **तत** उदयाचलात्। **चरमाचलमस्ताचलम्**। **आससाद** प्राप। अत्र रथोद्धतावृत्तम्, 'रथोद्धता नौं लौं ग्।' इति च तल्लक्षणम्॥' 'सूर्य्य उदयं प्राप्यात्यन्तं तेजसा तपन्नपि शनैः शनैः क्षीणतेजस्त्वं प्रापुवन् अस्ताचलं सर्वथा प्रापेत्यत्र बीजं निदर्शयति—यथाऽहं पान्थान् अनपराधिनः सन्तापये तथाऽन्योऽप्येवं कश्चित् सन्तापयिष्यति, स कियन्तमप्यभ्युदयं किमिति नेयात्, किन्तु यथा मम तेजसां धाम्नोऽपि ततोऽवश्यं भवति पतनम्, तथा सर्वस्याप्यन्यस्येति बाढं विभाव्यम्। इति बोधयति तांतां स्वीयां परिवर्त्यमानामवस्थां दर्शयन् सूर्य्य, इति कविः॥ १६९॥'

स्फुटा चैवं निदर्शनेत्येव निर्दिशति-**अत्रो**दाहृते पद्य इत्यर्थः। **रवेः** सूर्य्यस्य। **ईदृशार्थवेदनक्रियायाम्** ईदृशः 'कोत्रे'त्यादिपादद्वयात्मकवाक्यतात्पर्य्यरूपोऽसावर्थस्तस्य वेदनं ज्ञापनं तदेव क्रिया तस्याम्। **वक्तृत्वेन**। **अन्वयः** सम्बन्धः। **सम्भवति**। **एव**। हेतुं निर्दिशति-**ईदृशार्थज्ञापनसमर्थचरमाचलप्राप्तिरूपकर्मवत्त्वात्** ईदृशार्थस्य पूर्वापादद्वयात्मकवाक्यतात्पर्य्यार्थस्य ज्ञापनं तत्र समर्था या चरमाचलप्राप्तिरस्ताचलेऽवस्थानं सैव रूपं यस्य तादृशं यत् कर्म तदस्यास्तींति तस्य (तादृशस्य सूर्य्यस्य) भावस्तत्त्वं तस्मात्। स ईदृशार्थवेदनक्रियायां वक्तृत्वेनान्वयः। च। रवे रविसम्बन्धिनः। **अस्ताचलगमनस्य**। **च** तथा। **परितापिनां** परितापकारिणां तत्सम्बन्धिन्या इति यावत्। **विपत्प्राप्तेः**। **बिम्बप्रतिबिम्बभावं** स्वरूपप्रतिरूपत्वं सादृश्यमिति यावत्। **बोधयति**। अयम्भावःएति क्रियाप्रतिपाद्यस्य कार्य्यस्य तापनक्रियाप्रतिपाद्यं कारणमित्यनयोः सम्बन्धः। स चासादनक्रियया प्रतिपाद्यते;

तत्रैकवाक्यगा यथा—

**'कलयति कुवलयमालाललितं कुटिलः कटाक्षविक्षेपः ।**

**अधरः किसलयलीलामाननमस्याः कलानिधिविलासम् ॥'**

**अत्रान्यस्य धर्मं कथमन्यो वहत्विति कटाक्षविक्षेपादीनां कुवलयमालादिगतललितादीनां कलनमसंभवत्तल्ललितादिसदृशं ललितादिकमवगमयत्कटाक्षविक्षेपादेः कुवलयमालादेश्च बिम्ब-प्रतिबिम्बभावं बोधयति ।**

---

## विवृतिः

**कलयतीति** । अत्र धर्मधर्मिणोरुपमाकल्पनम् ॥ धर्मयोरुपमाकल्पने निदर्शनालंकारमुदाहरति—**यथा वेति** । **मुक्ता** त्यक्ता ॥ **तयोः** पदयोस्तत्**संबन्धः** राजहंसगतिसंबन्धः ॥

## विज्ञप्रिया

**कलयतीति** । अस्याः कुटिलः कटाक्षविक्षेपः कुवलयमालाया ललितं विन्यासं कलयति दधाति । एवमुत्तरत्रापि कलयतीत्यस्यान्वयः—**अत्रेति** । कटाक्षविक्षेपादीनां कर्तृणां ललितादीनां कर्मणां धर्मतया धर्मिणोरप्यत्र प्रतिबिम्बानुबिम्बं दर्शयति; तद्वल्ललितादिकमवगमयत्कटाक्षविक्षेपादेश्चेति । अत्रैकवाक्यगतयोरुपमेयोपमानयोः प्रतिबिम्बानुबिम्बनम् । एवमुत्तरत्रापि ।

## कुसुमप्रतिमा

कलयतीति । अस्या नायिकायाः, कुटिलोवक्रः, कटाक्षविक्षेपो नयनप्रान्तेन दृष्टिपातः कुवलयमालाया नीलोत्पलश्रेण्याः ललितं सौन्दर्य्यम्, अधर ओष्ठः किसलयस्य पल्लवस्य लीलां विलासम्, तथा आननं मुखम्, कलानिधेश्चन्द्रस्य विलासं शोभां कलयति दधाति ।

अत्रेति । "अन्यस्य धर्म्मं कथमन्यो वहत्" इति कलनं प्रति बाधायाः प्रदर्शनम् । कटाक्षविक्षेपादीनामिति कर्त्तरि षष्ठी । ललितादीनामिति च कर्म्मणि षष्ठी कलनं धारणम्, असम्भवत् अनुपपद्य मानं सत् । अवगमयत् बोधयत् सत् । बिम्बप्रतिबिम्बभावं सादृश्यम् । बोधयति सूचयति ।

भाव उदाहृत्य इदानीमाभावेप्युदाहर्त्तुमाह यथा वेति ।

## विमला

कलयतीति ।—अस्याः;—कामिन्या इत्यर्थः, कुटिलः;—वक्रः, कटाक्षविक्षेपः;—अपाङ्गदर्शनं, कुवलया-मालायाः;—नीलोत्पलस्रजः, ललितं—सौन्दर्य्यम्, अधरः किसलयस्य—पल्लवस्य, लीलां—शोभां, तथा आननं कलानिधेः;—चन्द्रस्य, विलासं—विभ्रमं, कलयति—धारयति । इह धर्मधर्मिणोरुपमाकल्पनम् । गीतिश्छन्दः ।

## लक्ष्मी

एकवाक्यगतामसम्भवद्वस्तुनिदर्शनामुदाहरति—**कलयतीति**। कस्याश्चिन्नायिकाया वर्णनमिदम्। अस्या नायिकायाः, कुटिलो वक्रः, कटाक्षविक्षेपः नेत्रप्रान्तेन दृष्टिपातः, कुवलयानि नीलाम्बुजानि तेषां माला पंक्तिस्तस्या ललितं सौन्दर्यम्, यद्वा ललितं विलासः 'लड् विलासे' अस्माद्भावे क्तप्रत्यये डलयोरभेदाल्लेन निर्देशश्च, अधर ओष्ठकिसलयस्य पल्लवस्य 'पल्लवोऽस्त्री किसलयम्' इत्यमरः' लीलां विलासम्, यथा आननं मुखं कलानिश्चेश्चन्द्रस्य विलासं शोभां कलयति रचयति दधातीत्यर्थः। **गीतिश्**छन्दस्तल्लक्षणं तूक्तं प्रागेव।

अत्र सम्बन्धासम्भवमुपपादयन् लक्षणं सङ्गमयति—**अत्रेति**। कलनं प्रति 'अन्यस्य धर्म कथमन्यो वहतु' इति प्रतिबन्धस्य प्रदर्शनम्। कटाक्षविक्षेपादीनां कर्तृणाम्, ललितादीनां कर्मणाम्, एकत्र कर्त्तरि द्वितीये च कर्मणि षष्ठी। कलनं साधारणम्, असम्भवत् अनुपपद्यमानं सत्, अवगमयत् ज्ञापयत् सत्। बिम्बप्रतिबिम्बभावं सादृश्यम् उपमानोपमेयभावमतियावत् बोधयति ज्ञापयति।

## रुचिरा

तदेवम्—सूर्य्यकर्तृकास्ताचलकर्मकासादनस्य जनकर्मकमृषातापनकर्तृकर्तृकसम्पत्कर्मकचिरकालावधिकालाभस्य च सादृश्यं वेदनक्रियया निदर्श्यते। इति।

असम्भवद्वस्तुनिदर्शनामुदाहर्त्तुकाम आह—**असम्भवदित्यादि**। स्पष्टम्। '**अस्या** नायिकायाः। **कुटिलः**। **कटाक्षविक्षेपः**। **कुवलयमालाललितं** कुवलयानि नीलाम्बुजानि तेषां माला तस्या ललितं विलासस्तत्। 'लड' विलासे इत्यस्माद्भावे क्तः, डलयोरभेदाल्लेन निर्देशश्च। **अधरः**। **किसलयलीलां** किसलयं नवपत्रं तस्य लीला व्रीडा ताम्। अथ—**आननं** मुखम्। **कलानिधिविलासं** कलानिधिश्चन्द्रस्तस्य विलासस्तम्। **कलयति** रचयति। गीतिश्छन्दः, तल्लक्षणं चोक्तं प्राक्॥ १७०॥'

अत्र सम्बन्धासम्भवं दर्शयन् लक्षणं सङ्गमयते—**अत्रेत्यादिना**। स्पष्टम्।

यथा वा—

**'प्रयाणे तव राजेन्द्र ! मुक्ता वैरिमृगीदृशाम्।**

**राजहंसगतिः पभ्द्यामाननेन शशिद्युतिः ॥'**

अत्र पादाभ्यामसंबद्धराजहंसगतेस्त्यागोऽनुपपन्न इति तयोस्तत्संबन्धः कल्प्यते, स चासंभवन्राजहंसगतिमिव गतिं बोधयति।

---

## विवृतिः

**इदमिति।** शकुन्तलामालोक्य दुष्यन्तस्योक्तिरियम्। अव्याजमनोहरं स्वभावसुन्दरम्। अर्थादनेन तपःक्लमं साधयितुं य इच्छतीत्यर्थः। ऋषिः कण्वः। व्यवस्यति इच्छति ॥

## विज्ञप्रिया

**प्रयाणे तवेति।** तव प्रयाणे यात्रायां सत्यां वैरिमृगीदृशां पद्म्यां राजहंसगतिर्मुक्ता द्रुतपलायमानत्वात्। आननेन च शशिद्युतिर्मुक्ता म्लानत्वात्। **असम्बद्धेति।** सम्बन्धस्यैव त्यागसम्भवात्। **सम्बन्धः कल्प्यत** इति। प्रतियोग्यारोपपूर्वकत्वादभावग्रहस्य। प्रतिबिम्बिनं दर्शयति—**स चेति।**

अत्रेति। असम्बद्धा पादयोरस्थिता या राजहंसगतिस्तस्याः। अनुपपन्नः असम्भवः त्यागस्य स्वत्वमूलकत्वेन स्वकीयस्यैव तत्सम्भवात् अत्र तु राजहंसगतेः राजहंसीयत्वेन परकीयत्वादिति भावः। तयोः पादयो, तत्सम्बन्धो राजहंसगतिसम्बन्धः, कल्प्यते कल्पयितुं युज्यते, स च पादयो राजहंसगतिसम्बन्धश्च, असम्भवन्, अन्यत्र अन्यदीयगतेः स्थित्ययोगादित्याशयः। एवं शशिद्युतिरित्यत्राप्यूह्यम्।

## कुसुमप्रतिमा

प्रयाण इति। हे राजेन्द्र ! तव प्रयाणे आक्रमणाय यात्रायां सत्याम्, वैरिमृगीदृशां शत्रु स्त्रीणाम्, पद्यां पदाभ्यां राजहंसगतिः तथा आननेन मुखेन शशिद्युतिश्चन्द्रकान्तिः मुक्ता परित्यक्ता। भयेन शत्रुस्त्रीणां सलीलं मन्दमन्दगमनं मुखोज्ज्वलत्वञ्च नष्टमित्यर्थः।

## विमला

धर्मयोरुपमाकल्पने निदर्शनालङ्कारमुदाहरति, प्रयाणे इति।—हे राजेन्द्र ! तव प्रयाणे—युद्धयात्रायां, वैरिणां—शत्रूणां, या मृगीदृशः,—कामिन्यः, तासां, पद्म्यां—चरणाभ्यां, राजहंसगतिः,—राजहंसानां गतिरिति तथोक्ता, तथा आननेन—मुखेन, शशिद्युतिः,—शशिनः,—चन्द्रस्य, द्युतिरिति तथोक्ता, मुक्ता—त्यक्ता; त्वद्भयात् पलायमानेषु वैरिषु तेषां या रमण्यस्तासामपिताननु पलायने कर्त्तव्यत्वे राजहंसानामिव मन्दं मन्दं गमनं, मुखस्य च म्लानत्वे चन्द्रस्येव तस्य सौन्दर्य्यशालित्वं विनष्टमिति भावः।

## लक्ष्मी

भाव उदाहरणमुपपाद्य सम्प्रत्यभावेऽप्युदाहरणमुपपादयितुमाह—**यथा** वेति । **प्रयाण** इति । राजस्तुतिरियम् । हे राजेन्द्र ! तव प्रयाणे विजययात्रायां सत्याम्, वैरिणां शत्रूणां या मृगीदृशः स्त्रियस्तासां **पद्भ्यां** चरणाभ्यां राजहंसगतिः 'राजहंसास्तु ते चञ्चुचरणैर्लोहिताः सिताः' इत्यमरः, तथा आननेन मुखेन शशिनश्चन्द्रस्य द्युतिः कान्तिः, मुक्ता परित्यक्ता । त्वामायान्तमाकर्ण्यैव त्रासेन शत्रुस्त्रीणां सलीलं स्थिरेण गमनं मुखोज्ज्वलत्वञ्च विलीनमितिभावः ।

उदाहृतमर्थमुपपादयति—**अत्रेति** । उक्तोदाहरण इत्यर्थः, पादाभ्यां 'वैरिमृगीदृशाम्' इति शेषः, असम्बद्धाऽनुपपन्ना अन्यधर्मस्य अन्यत्रासम्भवात् असौ राजहंसगतिस्तस्याः । अनुपपन्नः असम्भवः युक्त्याऽसिद्ध इत्यर्थः, इति हेतुना तयोः पादयोः तत्सम्बन्धो वैरिमृगीदृशां राजहंसगतिसम्बन्धः कल्प्यते कल्पयितुं शक्यते, स च वैरिमृगीदृशां पादयोः राजहंसगतिसम्बन्धश्चेत्यर्थः, असम्भवन् अन्यधर्मस्य अन्यत्र सम्बन्धासम्भवादितिभावः । एवम् आननेन शशिद्युतेस्त्यागोऽनुपपन्न इति तयोस्तत्सम्बन्धः कल्प्यते स चासम्भवन् शशिद्युतिमिव द्युतिमवगमयति' इत्यपि बोध्यम् ।

## रुचिरा

उदाहरणान्तरं निर्दिशति—यथा वा—'**हे राजेन्द्र ! तव** । **प्रयाणे** विजययात्रायां सत्याम् । **वैरिमृगीदृशां** वैरिणां या मृगीदृशस्तासाम् । **पद्भ्यां** चरणाभ्याम् । **राजहंसगतिः** । तथा—आननेन मुखेन । **शशिद्युतिश्**शशिनो द्युतिश्शोभामुक्ता परित्यक्तात्वामायान्तं श्रुत्वैष म्लानवदनाभिः शत्रुस्त्रीभिः सर्व परित्यज्य पलायितमिति भावः ॥१७१ ॥'

उदाहृतमर्थे निर्दिशति—**अत्रोदाहृते** पद्ये । **पादाभ्यां** 'वैरिमृगीदृशा'मिति शेषः । **असम्बद्धराजहंसगते**रसम्बद्धाऽनुपपन्ना परधर्मस्य परत्रासम्भवात् असौ राजहंसगतिस्तस्याः । **त्यागः** । **अनुपपन्नो** न युक्त्या सिद्धः । **इति** । **तयोः** पदयोः । **तत्सम्बन्धस्**तया राजहंसगतेः सम्बन्धः । **कल्प्यते** । **स**ः वैरिमृगीदृशां पदयोः राजहंसस्य गतेः सम्बन्धः । च । **असम्भवन्** । **राजहंसगतिम्** । **इव** । **गतिं** 'वैरिमृगीदृशां पदयो'रिति शेषः । **बोधयति** । अयम्भावः—अन्यस्य धर्ममन्यः कथं वहतु इति वैरिमृगीदृशां पद्भ्यां राजहंसगतिर्वोढुमंसम्भवन्ती तद्गतिसदृशीं गतिमवगमयति । पूर्वत्र ललितादेर्धर्मस्य कुवलयादेश्च धर्मिण औपम्यम् । अत्र तु गतेर्धर्मस्य, गतेर्धर्मस्य च; इत्यत एवेदमुदाहरणान्तरमिति बोध्यम् । एवम्-आननेन शशिद्युतेत्यागोऽनुपपन्न इति तयोस्तत्सम्बन्धः कल्प्यते, स चासम्भवान् शशिद्युतिमिव द्युतिं बोधयति । इत्यपि बोध्यम् ।

अनेकवाक्यगा यथा—

**'इदं किलाव्याजमनोहरं वपुस्तपः क्लमं साधयितुं य इच्छति।**
**ध्रुवं स नीलोत्पलपत्रधारया समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥'**

अत्र यत्तच्छब्दनिर्दिष्टवाक्यार्थयोरभेदेनान्वयोऽनुपपद्यमानस्तादृशवपुषस्तपः क्लमत्वसाधनेच्छा नीलोत्पलपत्रधारया समिल्लताछेदनेच्छेवेत् बिम्बप्रतिबिम्बभावे पर्यवस्यति।

---

## विज्ञप्रिया

**इदं किलेति**—आश्रमे तपस्योचितवेशां शकुन्तलां दृष्ट्वा दुष्मन्तस्योक्तिरियम्। अव्याजेन याथार्थ्येन। मनोहरमिदं वपुर्यो मुनिस्तपः क्षमं साधयितुम् इच्छति ध्रुवं निश्चितं स मुनिर्नीलोत्पलपत्रधारया कोमलया कठिनां शमीलतां छेतुं व्यवस्यतीत्यर्थः।

**अत्र यत्तच्छब्देति**। वाक्यार्थयोरित्यत्र वाक्यद्वयार्थयोरित्यर्थः। वाक्यार्थौ तु तपःक्षमत्वसाधनेच्छुः शमीलताच्छेदनेच्छुश्च। व्यवसायस्याऽपीच्छार्थकत्वात्तयोरभेदान्वयोऽनुपपद्यमान इत्यर्थः। यत्तदोरेकधर्मिबोधकत्वेनाऽभेदान्वय एव व्युत्पत्तिसिद्धः। स चेच्छाद्वययोरभेदाभावादनुपपद्यमान इत्यर्थः।

## कुसुमप्रतिमा

इदमिति। शकुन्तलाप्रथमाऽस्थमिदं पद्यं प्रागेव व्याख्यातम् (३७२ पृष्ठे)।

अत्रेति। यत्तच्छन्दनिर्द्दिष्टवाक्यार्थयोः पूर्वार्द्धराद्धगतवाक्यद्वयान्तर्गतयोः "यः सः" इत्यनयोः, अभेदेन ऐक्येन, अन्वयः सम्बन्धः, अनुपपद्यमानः असम्भवन्, नीलोत्पलपत्रधारया शमीलताच्छेदनसायस्याकरणात् कण्वमुनेरनुन्मत्तत्वादिति भावः। तादृशवपुषः शकुन्तलाया नितान्तसुकुमारदेहस्य। तपःक्रमत्वमिति स्वार्थे त्वप्रत्ययः। शमीलताच्छेदनेच्छेव अनुचितेति शेषः। बिम्बप्रतिबिम्बभावे उपमानोपमेयभावे।

प्रकारान्तरेण वस्तुसम्बन्धस्यासम्भवतां दर्शयितुमाह यथा वेति।

## विमला

अत्रेति।—तयोः,—पदयोः, तत्सम्बन्धः—राजहंसगतिसम्बन्ध इत्यर्थः।

इदमिति।—शकुन्तलाया रूपं दृष्ट्वा राज्ञो दुष्मन्तस्योक्तिरियम्। यः किल (एतत् अरुचौ, तथा हि हैमः,—"किल सम्भाव्यवार्त्तयोः। हेत्वरुच्योरलीके च" इति) अव्याजेन—व्याजं—छलं विना, मनोहरं—सुन्दरं, स्वभावरमणीयमिति भावः, इदं—पुरः स्थितं, वपुः,—शरीरं, शकुन्तलाया इति शेषः, तपसि—तपश्चर्य्यायां, यत् क्रमं—क्लेशं, साधयितुं—सम्पादयितुम्, इच्छति, अर्थादनेन तपः कृमं साधयितुं य इच्छति इति भावः, ["तपः क्षमम्" इति पाठे—तपसः,—तपश्चर्य्यायाः, क्षमं—योग्यमित्यर्थः] स ऋषिः,—कण्वमुनिरित्यर्थः नीलञ्च तदुत्पलं—कमलं, तस्य पत्रं तस्य धारया—प्रान्तभागेन, शम्येव लता तां तथोक्ताम्, [उपमेये शकुन्तलावपुषिकोमलत्वसौभाग्यवत्त्वादिसाधारणधर्मसद्भावसूचनार्थं, तरुपदोपादाने लिङ्गव्यत्ययेन अनौचित्यदोषप्रसङ्गाच्च शम्यां

लतात्वारोप इति विभावनीयम्] छेतुं व्यवस्यति—यतते, इच्छति इति यावत्, एतत् ध्रुवं—निश्चितम् । वंशस्थविलं वृत्तम् । अभिज्ञानशाकुन्तलस्येदं पद्यम् ।

अत्रेति ।—यच्छब्दनिर्दिष्टवाक्यम्—इदमित्यादि इच्छतिपर्य्यन्तं, तच्छब्दनिर्दिष्टवाक्य—ध्रुवमित्यादि व्यवस्थतीत्यन्तं, तयोरर्थयोः अभेदेन—अभिन्नतया, अन्वयः,—सम्बन्धः, अनुपपद्यमानः,—असम्भवन् । बिम्बप्रतिबिम्बभावे—गम्यसादृश्ये, पर्य्यवस्यति—परिणमति ।

## लक्ष्मी

अनेकवाक्यगतामसम्भवद्वस्तुनिदर्शनामुदाहरति—**इदमिति** । शकुन्तलायां प्रथमेऽङ्के पद्यमिदम् । तपस्विनीमिव विपिने शकुन्तलामंवलोक्य 'असाधुदर्शी खलु भवान् कण्वः' इत्युक्तं समर्थयमानस्य दुष्यन्तस्योक्तिरियमिति वेदितव्यम् । व्याख्यातपूर्वञ्च ।

लक्ष्यं समर्थयति—**अत्रेति** । यत्तच्छब्दनिर्दिष्टवाक्यार्थयोः पूर्वार्धोत्तरार्धगतवाक्यद्वयान्तः पातिनोः तपःपरतासाधकशमीलताछेदकरूपयोरुपमेयोपमानभूतयोऋषितक्षकविशेषयोः यः सः पदयोरित्यर्थः, अभेदेन अभिन्नत्वेन, अन्वयः सम्बन्धः, अनुपपद्यमान असम्भवन्, नीलोत्पलपत्रधारया शमीलताच्छेदनोद्योगस्याविधानात् कण्वऋषेरनुन्मत्तत्वादित्याशयः । तादृशमव्याजं यद्वपुरस्तस्य तादृशवपुषः शकुन्तलाया अत्यन्तमृदुशरीरमं । **तपः क्लमत्वमित्यत्र** त्वप्रत्ययः स्वार्थेऽवगन्तव्यः । शमीलताच्छेदनेच्छेव अयुक्तेति शेषः । बिम्बप्रतिबिम्बभावे सादृश्ये उपमानोपमेयभाव इत्यर्थः । अनेकवाक्यार्थगतत्वमेतस्या यत्तत्पदयोरनेकत्वादित्यावधेयम् ।

पुनरपि असम्भवद्वस्तुसम्भवनिदर्शना प्रक्रान्तरेणोदाहर्त्तुमाह—**यथा** वेति ।

## रुचिरा

द्वितीयामेनामुदाहरति—**अनेके**त्यादिना । स्पष्टम् । '**किल** (इदमरुचौ) 'किल सम्भाव्यावार्त्तयोः । हेत्वरुच्योरलीके चे'ति हैमः । **अव्याजमनोहर**मव्याजेन व्याजं कपटं (कृत्रिमताम्) विना मनोहरं रमणीयम्, स्वभावसुन्दरमिति भावः । **इदम्** । **वपुः** शरीरम् 'शकुन्तलाया' इति शेषः । **यः** । **तपः क्लमं** तपसा क्लमं दुःखानुभवपरम् इति तत्तथोक्तम् । क्राम्यतीति क्रमम् । पचादित्वादच् । 'तपः क्षम'मिति पाठान्तरम् । **साधयितुं** सम्पादयितुम् । **इच्छति** । सः । **ऋषिः** (कण्वः) । **नीलोत्पलपत्रधारया** नीलं च यदुत्पलं कमलं तस्य पत्रं तस्य धाराऽग्रभागस्तया । **ध्रुवं** नूनम् । **शमीलतां** शमीवृक्षम् । कोमलत्वातिशयं दर्शयितुं लतात्वारोपेणाभिधानमिदम् । **छेत्तुम्** । **व्यवस्यति** उद्यतते कमलपत्रधारया शम्याश्छेदनं यथाऽसम्भवम्, तथाऽनेन वपुषा तपसे प्रवर्त्तनमित्यसम्भवन् वस्तुसम्बन्धः । तपस्विनीमिव वने शकुन्तलां निरीक्ष्य दुष्यन्तस्य 'असाधुदर्शी खलु भगवान् कण्व' इत्युक्तं समर्थयमानस्येयमुक्तिः । शाकुन्तलस्येदं पद्यम् । वंशस्थवृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ १७२ ॥'

उदाहृतमर्थं निर्दिशति-**अत्रो**दाहृते पद्य इत्यर्थः । **यत्तच्छब्दनिर्दिष्टवाक्यार्थयो** 'स्तपःपरतासाधक—शमीलताछेदकरूपयोरुपमेयोपमानभूतयोर्ऋषितक्षकविशेषयो'रिति शेषः । **अभेदेन** 'अनिन्नत्वा (एकत्वा) भावात्' इति शेषः । **अन्वयः** । **अनुपपद्यमानः** । **तादृशवपुषः** तादृशमव्याजमनोहरं यत् वपुस्तस्य ।

यथा वा—

**'जन्मेदं बन्ध्यतां नीतं भवभोगोपलिप्सया ।**

**काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ।।'**

अत्र भवभोगलोभेन जन्मनो व्यर्थतानयनं काचमूल्येन चिन्तामणिविक्रय इवेति पर्यवसानम् ।

---

## विवृतिः

**जन्मेदमिति ।** वीतरागस्योक्तिरियम् । बन्ध्यतां निष्फलताम् ॥

## विज्ञप्रिया

**जन्मेदमिति ।** व्यर्थतानयनं चिन्तामणिविक्रयश्चेति जन्मापि चिन्तामणिरिवेति बोध्यम् ।

## कुसुमप्रतिमा

जन्मेति । शान्तिशतकस्यायं श्लोकः । मया भवभोगोपलिप्सया च्छसांसारिकसुखभोगलोभेन, इदं जन्म बन्ध्यतां निष्फलत्वं नीतं प्रापितम् । हन्त खेदे । काचमूल्ये चिन्तामणिस्तदाख्यो दुर्लभमहामूल्यरत्रविशेषो विक्रीतः ।

अत्रेति । व्यर्थतानयनं निष्फलताप्रापणम् । अत्र वक्तुः काचमूल्येन चिन्तामणिविक्रयस्या करणात् विक्रीत इति विक्रयसम्बन्धऽसम्भव इति द्रष्टम् ।

## विमला

जन्मेति ।—वीतरागस्योक्तिरियम् । मया भवस्य—संसारस्य, भोगः,—सुखं, ("भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः) तस्य उपलिप्तवा—लालसया इत्यर्थः, इदं—वर्त्तमानं, जन्म बन्ध्यतां—विफलतां, नीतं, हन्त—खेदे, काचमूल्येन—तदाख्यसुलभमणिविशेषमूल्येन, चिन्तामणिः,—तदाख्यदुष्प्राप्यमणि विशेषः, विक्रीतः ।

## लक्ष्मी

उदाहरति—**जन्मेदमिति** । शान्तिशतके वीतरागस्योक्तिरियम् । मया भवः संसारस्तत्र यो भोगो विषयानन्दस्तस्योपलिप्सया लोभेन, इदं जन्म बन्ध्यतां निष्फलतां नीतं प्रापितम् । हन्त ! खेदे । 'हन्त ! हर्षेऽनुकम्पायां विषादेऽपि' इत्यमरः, काचमूल्येन चिन्तामणिस्तदाख्यो मनोरथपूरको दुष्प्राप्यमहामूल्यरत्नविशेषो विक्रीतो विक्रयः कृतः ।

समर्थयति—**अत्रेति** । व्यर्थतानयनं निष्फलत्वप्रापणम् । अत्र प्रतिपादयितुः काचमूल्येन चिन्तामणिविक्रयस्य विधानात्, 'विक्रीत' इति विक्रयसम्बन्धो दुष्कर इत्यवधेयम् । **यद्वा** अयमपि विशेषः—'इदं किलाव्याज.'

इत्यत्र यद्वाक्यार्थस्य तद्वाक्यार्थस्य च विद्यमानत्वेनानेकवाक्यगतत्वम्, अत्र पुनर्यत्तदोरसत्त्वेऽपि पूर्वार्धपरार्धयोर्वाक्ययोरेवानैक्यमिति ।

## रुचिरा

**तपः क्लमत्वसाधनेच्छा । नीलोत्पलपत्रधारया । शमीलताछेदनेच्छा । इव । इति । बिम्बप्रतिबिम्बभावे । पर्य्यवस्यति ।** इदं तु बोध्यम्-यत्तद्वाक्यार्थयोरनेकत्वात् अनेकवाक्यार्थगतत्वमेतस्याः । इति ।

प्रकारान्तरेणोदाहर्त्तुमाह—**यथा । वा**—'**इदम् । जन्म । भवभोगोपलिप्सया** भवः संसारस्तस्य भोगस्तस्य उपलिप्सा लम्पटता तया । **वन्ध्यतां** निष्फलताम् । **नीतम् । हन्त । मया** तथा जन्म वन्ध्यतां नीतवतेति भावः । **काचमूल्येन । चिन्तामणिस्तदाख्यं** मनोरथपूरकं रत्नम् । हन्त कष्टम् । **विक्रीतः** । वीतरागस्येयमुक्तिः ॥ १७३ ॥'

उदाहृतमर्थे निर्दिशति—**अत्रेत्यादिना** । स्पष्टम् । इदं तु बोध्यम्-पूर्वत्र यद्वाक्यार्थस्य तद्वाक्यार्थस्य च सत्त्वेनानेकवाक्यगतत्वम्, अत्र पुनर्यत्तदोरभावेऽपि पूर्वार्धोत्तरार्द्धयोर्वाक्ययोरेवानैक्यम् । इति ।

एवम्—

**'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।**

**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥'**

अत्र मन्मत्या सूर्यवंशवर्णनमुडुपेन सागरतरणमिवेति पर्यवसानम् । इयं च क्वचिदुपमेयवृत्तस्योपमानेऽसंभवेऽपि भवति । यथा—

---

## विवृतिः

**एवमिति । उडुपेन** क्षुद्रनौकया ॥

## विज्ञप्रिया

**क्व सूर्येति** । रघुवंशं वर्णयितुमिच्छोः कालिदासस्य उक्तिरियम् । मतिरित्यत्र ममेति शेषः । अत्र पूर्वार्द्धे वक्ष्यमाणो विषमालङ्कारः । परार्द्धं तु प्रकृतोदाहरणम् । तद् ग्राहयति—**अत्र मन्मत्येति** । नच तितीर्षुपुरुषरूपकमेव कथं नाऽत्रेति वाच्यम्; तादृशपुरुषाप्रसिद्धेः; कस्यचिदुन्मत्तस्य तादृशस्य सत्त्वेऽपि तस्य बुद्ध्यनारोहात; किन्तु वक्तर्येव तितीर्षायाः स्फुटमवभासः । तस्य बोधेन रघुवंशवर्णनतितीर्षयोः सादृश्यमवगम्यते ।

## लोचन

सागरतरणमिवेत्यनन्तरं बिम्बप्रतिबिम्बभाव इति शेषः ।

पूर्ववत् पूर्वोदाहरणवत् । एवं "सोऽपि त्वदाननरुचं विजहाति चन्द्रः" इत्यत्र "प्रयाणे तव राजेन्द्र" इत्युदाहरणवन्निदर्शनैव, निदर्शनालङ्कारलक्षणस्य तथाविधपर्यवसितबिम्बप्रतिबिम्बभावस्य सम्भवात् । अन्यथा योऽनुभूत इत्यादौ समनन्तरोक्तोदाहरणेऽपि निदर्शनाभावप्रसङ्गाच्च ।

## कुसुमप्रतिमा

उक्तस्यापि वैषम्येणासम्भवद्वस्तुसम्बन्धतां दर्शयितुमाह एवमिति ।

क्वेति । रघुवंशप्रथमसर्गस्थमिदं पद्यम् । सूर्य्यात् प्रभव उत्पन्नो वंशः कुलं क्व कुत्र, अल्पविषया स्तोकमात्रविषयावगाहिनौ मतिर्मम बुद्धिश्च क्व कुत्र । तथा च मोहाच्चितवैकल्यात्, उडुपेन प्लवेन क्षुद्रतरण्याः, दुस्तरं सागरं तितीर्षुस्तर्त्तुमिच्छुरस्मि ।

अत्रेति । उडूपमादाय कालिदासो न खलु सागरं तितीर्षु रासीदिति अस्मीत्यनेन तितीर्षुरित्यस्य कर्त्तृत्वसम्बन्धोऽसम्भवन्नीदृशं सादृश्यं बोध्यम् ।

## विमला

क्वेति ।—सूर्य्यः प्रभवति अस्मादिति प्रभवः,—उत्पत्तिस्थानं यस्य, अथवा—सूर्य्यात् प्रभवः,—उत्पत्तिर्यस्य तादृशः, वंशः,—सूर्य्यवंशः इत्यर्थः, क्व ?—कुत्र ? अल्पविषया—यत्किञ्चिद्धारणक्षमा इत्यर्थः, मतिः,—बुद्धिश्च क्व ? क्वद्वयं महदन्तरं सूचयति, अल्पमतिसूर्य्यवंशयोः महदन्तरमिति भावः, तथा हि, मोहात्—अज्ञानात्, उडुपेन—भेलेन, क्षुद्रनौकयेत्यर्थः, दुस्तरं—दुष्पारं, सागरं तितीर्षुः,—तर्त्तुमिच्छुः, अस्मि—भवामि । रघुवंशस्येदम् ।

## लक्ष्मी

प्रतिपादितस्यापि वैपरीत्येनासम्भवद्वस्तुसम्बन्धतामुपपादयितुमाह—**एवमिति** ।

तत्र प्रसिद्धोदाहरणमाह—क्व **सूर्येति** । रघुवंशे प्रथमसर्गे स्वकीयमौद्धत्यमपहर्त्तुकामस्य कालिदासस्योक्तिरियम् । सूर्यः प्रभवः उत्पत्तिस्थानं यस्य तादृशो वंशः कुलं क्व कुत्र, अल्पविषया स्तोकमात्रविषयावगाहिनी मतिर्बुद्धिर्मम क्व कुत्र द्वौ क्वौ महदन्तरं सूचयतः । तथा च मोहात् अज्ञानात् उडुपेन चर्मावनद्धवंशपात्रेण 'चर्मावनद्धमुडुपं प्लवः काष्ठकरण्डवत्' इति सज्जनः, क्षुद्रनौकयेत्यर्थः, दुस्तरं सागरं तितीर्षुः तरितुमिच्छुरस्मि ।

समर्थयति—**अत्रेति** । **अयम्भावः** सूर्यवंशीयरघुवंशस्यात्यन्तबहुलतया सर्वथा तत्संख्यातुमपि न सम्भवति, तत्पुनः तस्य मामकीनयाऽनया कोमलया मत्या वर्णनमत्यन्तम सम्भवमित्येवं प्रस्तूय 'तितीर्षु' रित्यादिप्रस्तुतम्, द्वयोश्च मिथोऽसम्बन्धत्वमेव उडुपेन सागरतरणमिव मन्मत्या सूर्यवंशीयवर्णनसम्भवमितीदृशं सादृश्यं बोधयतीति ज्ञेयम् ।

## रुचिरा

प्रसिद्धोदाहरणमपि स्मारयति—**एवम्**—'**सूर्य्यप्रभवः** सूर्य्यः प्रभव उत्पत्तिस्थानं यस्य तादृशः । वंशः । **क्व ? अल्पविषयाऽल्पो** विषयो ज्ञेयोऽर्थो यस्याः सा । **मतिर्बुद्धिः** । **च** । **क्व ?** (क्वशब्दद्वयमिदं महदन्तरसूचकम्) । **दुस्तरम्** । **सागरम्** । **मोहात्** अज्ञानात् । **उडुपेन** चर्मावनद्धवंश पात्रेण पद्यम्, स्वौद्धत्यमपहर्त्तुकामस्य कालिदासस्येयमुक्तिः ॥ १७४ ॥'

उदाहृतमर्थं निर्दिशति-**अत्रेत्यादिना** । स्पष्टम् । इदं तत्त्वम्-सूर्य्यप्रभवस्यास्य रघुवंशस्यातिविस्तृततया सर्वथा गणनमपि न सम्भवति, तत्पुनः तस्य मदीययाऽनया सुकुमारया बुद्धया वर्णनं नितान्तमसम्भवम्; इत्येवं प्रस्तूय 'तितीर्षु' रित्यादि प्रस्तुतम्, अनयोश्च परस्परमसम्बद्धत्वमेव उडुपेन सागरतरणमिव मदीयया बुद्धया सूर्य्यप्रभव (रघु) वंशवर्णनसम्भवमिति बिम्बप्रतिबिम्बत्वं कल्पयति । इति ।

**'योऽनुभूतः कुरङ्गाक्ष्यास्तस्या मधुरिमाधरे ।**
**समास्वादि स मृद्वीकारसे रसविशारदैः ॥'**

अत्र प्रकृतस्याधरस्य मधुरिमधर्मस्य द्राक्षारसेऽसंभवात्पूर्ववत्साम्ये पर्यवसानम् ।

---

## विवृतिः

**उपमेयवृत्तस्य** उपमेयधर्मस्य उपमेये बाधादुपमाकल्पनमिति विशेषः ॥ एवं 'मुखं ते चन्द्रमाःस्पर्धि पङ्कजद्वेषि लोचनम् ।' अत्र स्पर्धाद्वेषयोश्चेतनधर्मत्वान्मुखलोचनयोरसंभवादुपमायां पर्यवसानम् ॥

## विज्ञप्रिया

**इयं चेति ।** इयं निदर्शना उपमेयवृत्तस्योपमेयधर्मस्य "कलयति कुवलय" इत्यादौ तूपमानधर्मस्यैवोपमेयाऽसम्भवाद्दर्शिता । **असम्भवेऽपीति ।** उपमानगतंत्वेनोक्तस्याऽसम्भवेऽपि तत्सादृश्यबोधनादित्यर्थः । **योऽनुभूत** इति । मधुरिमा । मृद्वीका द्राक्षा, तस्या रसे द्रवे ।

## कुसुमप्रतिमा

इयञ्चेति । असम्भवद्वस्तुसम्बन्धा निदर्शना चेत्यर्थः । उपमेये वृत्तस्य स्थितस्य ।

य इति । तस्याः कुरङ्गाक्ष्या हरिणनयनायाः अधरे ओष्ठे यो मधुरिमा माधुर्य्यम्, अनुभूतः, रसविशारदै-रसास्वादाभिज्ञैः, स मधुरिमा, मृद्वीकारसे द्राक्षारसे, समास्वादि सम्यगनुभूतः ।

अत्रेति । प्रकृतस्य प्रकृत्वेन उपमेयस्येत्यर्थः, अधरस्य यो मधुरिमधर्म्मस्तस्य द्राक्षारसे उपमाने, असम्भवात् स्थित्ययोगात्, अन्वधर्म्मस्यान्वत्र वृत्तित्वासम्भवादिति भावः । साम्ये पर्य्यवसानमिति । तथा च मृद्वीकारसे सः अधरमधुरमेति अभेदसम्बन्धः असम्भवन अधरमधुरिमेव मधुरिमेति सादृश्यं बोधयतीति भावः ।

मालेति । मालारूपापि एकत्रानेकापि असम्भवद्वस्तुसम्बन्धा निदर्शनित्यर्थः ।

## विमला

इयञ्चेति ।—उपमेयवृत्तस्य—उपमेयधर्मस्य, उपमाने सर्वथा बाधादुपनांकल्पनम् इति विशेषः । एवं "मुखं ते चन्द्रमः स्पर्द्धि पङ्कजद्वेषि लोचनम्" अत्र स्पर्द्धा द्वेषयोः चेतनधर्मत्वात् मुखलोचनयोरसम्भवात् उपमायां पर्य्यवसानम् इति ज्ञेयम् ।

य इति ।—तस्याः कुरङ्गाक्ष्याः,—मृगलोचनायाः, अधरे यः मधुरिमा—माधुर्य्यम, अनुभूतः,—आस्वादगोचरोकृतः, सः,—मधुरिमा इत्यर्थः, रसविशारदैः,—रसास्वादाभिज्ञैः मृद्वीकारसे—द्राक्षारसे, समास्वादि—सम्यक् आस्वादितः । "न ह्यन्यधर्मा अन्यत्र सम्भवन्ति" इति नयेन उपमेयाधरगतामाधुर्य्यस्य उपमानमृद्वीकारसगतत्वासम्भवेऽपि उपमानभूतमृद्वीकारसगतसम्भवोक्त्येदमुक्तमित्यवसेयम् ।

## लक्ष्मी

इत्थं भेदद्वयमुदाहृत्य भेदान्तरमुदाहर्तुमाह—**इयञ्चेति**। असम्भववद्वस्तुसम्बन्धनिदर्शना **चेत्यर्थः**। उपमेयवृत्तस्य उपमेये स्थितस्य धर्मस्येत्यर्थः।

**योऽनुभूत** इति। तस्याः कुरङ्गाक्ष्या मृगलोचनायाः कान्तायाः अधरे ओष्ठे या मधुरिमा माधुर्यम्, अनुभूतः रसविशारदै रसास्वादाभिज्ञैः स मधुरिमा मृद्वीकारसे द्राक्षारसे समास्वादि सम्यगनुभूतः। 'मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च' इत्यमरः।

उदाहृतमर्थ समर्थयति—**अत्रेति**। प्रकृतस्य प्रस्तुतत्वेन उपमेयस्य, अधरस्य 'तत्सम्बन्धितः' इति शेषः, **यो मधुरिमधर्मस्तस्य, द्राक्षारसेऽ**प्रस्तुते उपमाने, **असम्भवात्** स्थित्यसम्बन्धात् अन्यधर्मस्य अन्यत्र **स्थातुमशक्य**त्वादित्याशयः। पूर्ववत् पूर्वमुदाहृते पद्य इव, साम्ये उपमानोपमेयभावकल्पने। **पर्यवसान**मिति। तथा च मृद्वीकारसे सः अधरमधुरिमेति अभेदान्वयः अनुपपद्यमानः अधरमधुरिमेव मधुरिमेति उपमानोपमेयभावं बोधयतीत्यभिप्रायः। उपमेयवृत्तस्यैव तूपमेयेऽसम्भवे नेयं, किन्तूपमैव यथा—

'लोचनं पङ्कजद्वेषि चन्द्रमःस्पर्द्धिते मुखम्' इति।

अत्र द्वेषस्पर्द्धयोश्चेतनविशेषधर्मत्वान्मुखनेत्रयोरनुपपद्यमानत्वादुपमायाः पर्यवसानम्।

## रुचिरा

एवं प्राचां निर्देशानुसारं भेदद्वयमुदाहृत्य नव्यसिद्धान्तेन भेदान्तरमुदाहर्त्तुकामस्तावदाह—**इयं** निदर्शना। **च**। **क्वचित्**। **उपमेयवृत्तस्यो**पमेयस्य वृत्तं धर्मस्तस्य। **उपमाने**। **असम्भवे**। **अपि**। **भवति** सम्भवति। **यथा**—'**तस्याः**। **कुरुङ्गाक्ष्या** मृगलोचनायाः कान्तायाः। **अधरे**। **यः**। **मधुरिमा** माधुर्य्यम। **अनुभूतः**। स 'मधुरिमे'ति शेषः। **रसविशारदै** रसे आस्वादने विशारदाश्चतुरास्तै, रसमर्मज्ञैरिति भावः। **मृद्वीकारसे** मृद्वीकाया द्राक्षाया रसस्तत्र। 'मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च।' इत्यमरः। **समास्वादि**॥ १०५॥'

उदाहृतमर्थं सूचयति—**अत्र**। **प्रकृतस्यो**पमेयस्य। **अधरस्य**'तत्सम्बन्धिन' इति शेषः। **मधुरिमधर्मस्य**। द्राक्षारसे'ऽप्रस्तुते (उपमाने)' इति शेषः। **असम्भवात्**। **पूर्ववत्** पूर्वमुदाहृते पद्य इव। **साम्ये** बिम्बप्रतिबिम्बत्वकल्पने। **पर्य्यवसानम्**। इदं तत्त्वम्—अधरद्राक्षामधुरिम्णोर्भिन्नत्वेनाधरमधुरिम्णो द्राक्षारसमधुरिमरूपेणासम्भवेऽपि रसानुभवितृसूचितरीत्या सम्भवसूचनमसम्बद्धं माभूदित्यनयोः साम्यं कल्पयति। इति।

उपमेयवृत्तस्यैव तूपमेयेऽसम्भवे नेयं, किं तूपमैव; यथा—'मुखं ते चन्द्रमः स्पर्धि पङ्कजद्वेषि लोचनम्॥' इति। अत्र हि स्पर्द्धाद्वेषयोश्चेतनविशेषधर्मत्वान्मुखलोचनयोरसम्भवादुपमायां पर्य्यवसानम्।

मालारूपापि यथा मम—

**'क्षिपसि शुकं वृषदंशकवदने मृगमर्पयसि मृगादनरदने।**

**वितरसि तुरगं महिषविषाणे निदधच्चेतो भोगविताने॥'**

इह बिम्बप्रतिबिम्बताक्षेपं विना वाक्यार्थापर्यवसानम्। दृष्टान्ते तु पर्यवसितेन वाक्यार्थेन सामर्थ्याद्बिम्बताप्रत्यायनम्। नापीयमर्थापत्तिः। तत्र 'हारोऽयं हरिणाक्षीणां—' इत्यादौ सादृश्यपर्यवसानाभावात्।

---

## विवृतिः

वृषदंशको मार्जारः। **मृगादनस्तरक्षुः**। **वितरसि** क्षिपसि। अत्र वैषयिकसुखानुभवसंताने चेतोनिधानं वृषदंशकवदनादौ शुकाद्यर्पणमिवेत्युपमायां पर्यवसानम्॥ दृष्टान्तादेर्निदर्शनाभेदमुपपादयति—**इहेति**। निदर्शनायामित्यर्थः। ननु 'कोऽत्र भूमिवलये—' इत्यादौ जनतापकरः सूर्योऽप्यस्तं याति किमुतान्य इति दण्डापूपन्यायादर्थान्तरप्रतीतिरस्तीतीयमर्थापत्तिरित्यत आह—**नापीयमिति**।

**सादृश्येति**। तथा सादृश्यपर्यवसानस्थले निदर्शनैव, विशेषत्वादन्यत्र त्वर्थापत्तिरिति भावः॥

## विवृतिपूर्तिः

**केषांचिदिति**। अलंकारसर्वस्वकारणाम्॥

## विज्ञप्रिया

**क्षिपसीति**। भोगासक्तपुरुषं प्रति शान्तपुरुषस्योक्तिरियम्। हे पुरुष! त्वं भोगविताने भोगसमूहे चेतो विदधद् वृषदंशकस्य मार्जारस्य मुखे शुकं क्षिपसि। यथा मार्जारः शुकं हिनस्ति तथा भोगवितानोऽपि नरकपातेन हिंसिष्यति। अतः शुकस्य तत्र क्षेप इव भोगे चेतोविधानमित्यर्थः। एवमुत्तरत्रापि। मृगादनो व्याघ्रः।

दृष्टान्तनिदर्शनयोर्भेदं दर्शयति—**इह बिम्बेति**। **वाक्यार्थापर्यवसानं** बाधादिति भावः। **पर्यवसितेनेति**। तत्र बाधाभावादित्यर्थः। **सामर्थ्यादिति**। प्रयुक्तानुपयुक्तकथनापत्तिपरिहार एव सामर्थ्यम्। **''हारोऽयं हरिणाक्षीणा'**मिति—

**"हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले।**

**मुक्तानामप्यवस्थेयं क्व वयं स्मरकिंकराः।"**

इति श्लोकेऽस्माकं स्तनमण्डले सुतरां लुठनमुचितमित्येव हि पर्यवसानम्। न तु सादृश्यस्येत्यर्थः। एककथनाद् दण्डापूपन्यायाद् अन्यपर्यवसानस्यैवार्थापत्तित्वात्।

## लोचन

एवं "सम्भवन् वस्तुसम्बन्ध उपमापरिकल्पकः निदर्शने"ति लक्षणे चोपमाशब्दः सादृश्यमात्रार्थो न तूपमालङ्कारार्थः। अत एवालङ्कारसर्वस्वकृताऽपि प्रतिबिम्बकारणं निदर्शनेत्युक्तम्।

मृगादनस्तरक्षुः। वाक्यार्थस्यापर्यवसानमन्वयानुपपत्तेः, पर्यवसितेनान्वयानुपपत्त्यभावादुपमेयवाक्येनोपमानवाक्येन च प्रत्येकं स्वस्वबोधनविश्रान्तेन। अपर्यवसानस्य सादृश्येऽभावः। किन्तु नियतसमानन्यायेनार्थान्तरस्यापतनमात्रेण।

## कुसुमप्रतिमा

क्षिपसीति। कस्यचिज्ज्ञानिनः संसारासक्तजनं प्रति तत्त्वथेयम्। भोगविताने सांसारिक सुखभोगबाहुल्ये, चेतश्चित्तं निदधत् स्थापयन् त्वम्, वृषदं शकस्य मार्जारस्य वदने मुखे शुकं पक्षिणं क्षिपसि अर्पयसि; मृगादनस्य व्याघ्रविशेषस्य रदने दन्ते मृगं हरिणम् अर्पयसि ददासि; तथा महिषस्य विषाणे श्रृङ्गे; तुरगं घोटकं वितरसि अर्पयसि।

अत्र भोगविताने वित्तं निदधानो जनो न खलु वृषद शकवदनादौ शुक्तादिकमर्पयन्तीति कर्तृणामभेदसम्बन्धोऽसम्भवन् भोगविताने चित्तनिधानं वृषद् शकवदनादौ शुकक्षेपादिकमिव अनर्थमूलमिति बिम्बप्रतिबिम्बभावं बोधयतीत्यसम्भवद्वस्तुसम्बन्धा निदर्शना। तस्य च बिम्बप्रतिबिम्बभावबोधनस्यानेकत्वात् सा निदर्शनात्र मालरूपा।

ननु दृष्टान्तवदस्या निदर्शनायामपि एकविधैव साम्यस्य, प्रणिधानगम्यतेत्यनयोः को भेद इत्याह इहेति। असम्भवद्वस्तुसम्बन्धरूपायां निदर्शनायामित्यर्थः। बिम्बप्रतिबिम्बताक्षेपम् उपमानोपमेयभावकल्पनां विना, वाक्यार्थस्य अपर्य्यवसानमनुपपद्यमानत्वादपरिसमाप्तिः। पर्य्यवसितेन उपपद्यमानत्वात् स्वयमेव परिसमाप्तेन। सामर्थ्यद्योग्यत्वात्, बिम्बताप्रत्यायनम् उपमानोपमेयभावबोधनम्। तथा चासम्भव द्वस्तुसम्बन्धरूपाया स्वतः स्थितानुपपत्तिवशादुपमानोपमेयभावकल्पनयैव वाकार्थोपपत्तिः, दृष्टान्ते तु अनुपपत्त्य भावात् स्वयमुपपद्यमानेनैव वाक्यार्थेन योग्यतया उपमानोपमेयभावकल्पनेति उपमानोपमेयभावकल्पनायाः पौर्वापर्य्येणैवानयोर्भेद इत्याशयः। दृष्टान्तेन सह सम्भवद्वस्तुसम्बन्धरूपायाः निदर्शनाया भेदस्तु प्रागेव दर्शितः।

अथ तदा वाक्यार्थानुपपत्तिवशेनैव बिम्बप्रतिबिम्बभावरूपस्यार्थस्य आपतनादियमर्थापत्तेरेवास्ता मित्याह नापीति। इयं निदर्शना। तत्र अर्थापत्तौ। सादृश्यपर्य्यवसानाभावात् अत्र तु सादृश्यपर्य्यवसानादिति वाक्यशेषः। तथा च सादृश्यरूपार्थस्य आपतने निदर्शना, तदितरार्थस्य आपतने तु अर्थापत्तिः सामान्यविशेषन्यायादित्याशयः।

## विमला

क्षिपसीति।—कस्यचिन्महात्मनः स्वशिष्यं प्रति सांसारिकसुखासक्तेः निवृत्त्युपदेशोऽयम्ः। भोगविताने—संसारसुखसमूहे, चेतः निदधत्—अर्पयत्, त्वं वृषदंशकस्य—विडालस्य ("ओतुर्विडालो मार्जारो वृषदंशक आखुभुक्"इत्यमरः) वदने शुकं—तन्नामानं पक्षिणं, क्षिपसि—न्यस्यसि, मृगादनस्य—तरक्षोः, व्याघ्रविशेषस्य इति यावत्, ("तरक्षुस्तु मृगादनः इत्यमरः) रदने—दन्ते, मृगम् अर्पयसि—ददासि महिषस्य

विषाणे—शृङ्गे; तुरगम्—अश्वं, वितरसि—ददासि। अत्र भोगवितानेचेतोनिधानस्य वृषदंशकवदनादिषु शुकादिक्षेपणस्य च अभेदेनान्वयः अनुपपद्यमानः परस्परं बिम्बप्रतिबिम्बभावं गमयति, तथा च—विषयभोगजन्यसुखानुभवसन्ताने चेतोनिधानं वृषदंशवदनादौ शुकाद्यर्पणमिवेत्युपमायां पर्य्यवसानम् इति बोध्यम्। पज्झटिका वृत्तं, तल्लक्षणञ्च यथोक्तं—"प्रतिपदयमकितषोड़शमात्रा नवमगुरुत्वविभूषितगात्रा। पज्झटिकाया एष विवेकः क्वापि न मध्यगुरुर्गण एकः॥" इति। "आर्य्यागीतिरियम्" इत्येके, "पादाकुलकम्" इत्यन्ये।

दृष्टान्तादेर्निदर्शनाभेदमुपपादयति, इहेति।—इह—निदर्शनायां, बिम्बप्रतिबिम्बतायाः आक्षेपं—प्रतीतिं, विना वाक्यार्थस्य अपर्य्यवसानम्—असङ्गतिः। पर्य्यवसितेन—सङ्गततां प्राप्तेन। सामर्थ्यात्—योग्यतावशात्। बिम्बेति। गम्य सादृश्यावगतिरित्यर्थः। ननु "कोऽत्र भूमिवलये—" इत्यादौ "जनतापकरः सूर्य्योऽप्यस्तं याति, किमुतान्यः?" इति दण्डापूपन्यायात् अर्थान्तरप्रतीतिरस्ति इतीयमर्थापत्तिः इत्यत्र आह, नापीयमिति।—"हारोऽयम्" इत्यादौ वक्ष्यमाणश्लोके सादृश्यस्य—साम्यस्य, पर्य्यवसानं—निश्चयः, तदभावात्, न हि मुक्तेतिपदवाच्यानां मोक्तिकानां प्राप्तापवर्गाणाञ्च सादृश्यं पर्य्यवसीयते, अतो नात्र निदर्शना; तथा च सादृश्यपर्य्यवसानस्थले निदर्शनैव, विशेषत्वादन्यत्र त्वर्थापत्तिः इति भावः।

## लक्ष्मी

प्रकारान्तरं दर्शयितुमाह—**मालरूपाऽपीति**। एकस्मिन्नुदाहरणे अनेकाऽपि असम्भवद्वस्तुसम्बन्धा निदर्शनेत्यर्थः।

**क्षिपसीति**। भोगासक्तपुरुषं प्रति शान्तपुरुषस्योक्तिरियम्। हे पुरुष! भोगविताने सांसारिकसुखभोगप्रपञ्चे, चेतश्चित्तं निदधत् स्थापयन् त्वम्, वृषदंशकस्य विडालस्य 'वृषदंशक आखुभुक्' इत्यमरः, वदने मुखे शुकं तदाख्यं पक्षिणं क्षिपसि अर्पयसि; मृगादनस्य मृगभक्षकस्य तरक्षोर्व्याघ्रविशेषस्य 'तरक्षुस्तु मृगादनः' इत्यमरः, रदने दन्ते मृगं हरिणम् अर्पयसि क्षिपसि; तथा महिषस्य विषाणे श्रृङ्गे तुरगम् अश्वं वितरसि ददासि। **पज्झटिकाच्छन्दस्तल्लक्षणन्तु प्रागेवोक्तम्।**

अत्र वैषयिकसुखानुभवसंताने चित्तं स्थापयन् पुरुषो न खलु वृषदंशकवदनादौ शुकमपर्यतीति कर्त्तृणां तादात्म्येनान्वयोऽनुपपद्यमानः वैषयिकसुखानुभवसंताने चित्तस्थापनं वृषदंशकवदनादौ शुकक्षेपादिकमिव अनर्थकारणमिति उपमानोपमेयभावमवगमयतीत्यसम्भवद्वस्तुसम्बन्धा निदर्शना। तस्य चोपमानोपमेयभावबोधनस्य नानात्वात् सा मालारूपात्र निदर्शना।

ननु प्रस्तुताप्रस्तुतयोरुपमानोपमेयभावस्य तात्पर्यगम्यत्वं दृष्टान्तेऽपि स्वीकारात्ततोऽस्याः को भेद इत्यत आह—इहेति। असम्भवद्वस्तुसम्बन्धरूपायां निदर्शनायामित्यर्थः। बिम्बं प्रस्तुतमुपमेयं वैषयिकसुखोपभोगेषु चित्तनिधानरूपम्, प्रतिबिम्बं प्रस्तुतमुपमानं मृगादनवदनादिषु शुकक्षेपादिकं च तयोर्भावस्तत्ता तस्याः आक्षेपः कल्पना स्वीकारस्तं तादृशं विना, वाक्यार्थस्योदाहतपद्यरूपवाक्यप्रणिधानस्य अपर्यवसानमनुपपद्यमानत्वादपरिसमाप्तिः पर्यवसितेन उपपद्यमानत्वात् स्वयमेव परिसमाप्तेन। वाक्यार्थेन तदभिन्नादितियावत् तृतीयेयमभेदे। सामर्थ्यात् योग्यत्वात्, बिम्बप्रतिबिम्बताप्रत्यायनम् उपमानोपमेयभावबोधनम्। तथा च सम्भवद्वस्तुसम्बन्धरूपायां स्वतः स्थित्यसम्भववशात् बिम्बप्रतिबिम्बभावकल्पनयैव वाक्यार्थः सङ्गच्छते, दृष्टान्ते तु असम्भवाभावात् स्वयं सम्भाव्यमानेनैव वाक्यार्थेन योग्यतया, बिम्बप्रतिबिम्बभावकल्पनेतिबिम्बप्रतिबिम्बभावकल्पनायाः पौर्वापर्येणैवानयोर्भेद इति तात्पर्यम्। सम्भवद्वस्तुसम्बन्धरूपनिदर्शनाया दृष्टान्तेन सह भेदस्तु पूर्वमेवोपपादितः।

नन्वेवं वाक्यार्थोपपत्त्यभाववशेनैव उपमानोपमेयभावरूपस्यार्थस्य आपतनादर्थापत्तिरेव स्वीक्रियतामित्याशङ्क्याह—**नापीति**। इयं निदर्शना अर्थापत्तिरपि नेत्यन्वयः। हेतुमुपपादयति—**तत्रेति**। तस्यामर्थापत्तावित्यर्थः। 'हारोऽयं हरिणाक्षीणाम् इत्यादावित्यत्रादिपदेन—

'लुठति स्तनमण्डले। मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः॥'

इत्यस्य ग्रहणम्। सादृश्यपपर्यवसानाभावात् अस्माकं स्तनमण्डलं सुतरां लुठनमुचितमित्यस्यैव पर्यवसानेन सादृश्यपर्यवसानाभावादित्यर्थः। अत्र तु सादृश्यपर्यवसानादिति वाक्यशेषः। एवञ्च सादृश्येतरार्थित्वस्य आपतने अर्थापत्तिः, सादृश्यरूपार्थस्य आपतने तु निदर्शनेति स्पष्टं भेद इति भावः।

## रुचिरा

भेदान्तरं दर्शयितुं प्रवृत्त आह—**एषा**। **मालारूपा**। अपि 'इय'मिति शेषः। **यथा**। **मम-भोगवितानें** भोगानां विषयाणां वितानं विस्तारस्तत्र। **चेतः**। **निदधत्**। 'त्व'मिति शेषः। **शुकं** तदाख्यं पक्षिणम्। **वृषदंशकवदने** वृषदंशकस्य बिडालस्य वदनं मुखं तत्र। वृषदंशक आखुभुक्।' इत्यमरः। **क्षिपसि**। **मृगादनरदने** मृगादनस्य मृगभक्षकस्य तरक्षो रदनं तत्र। 'तरक्षुस्तु मृगादनः।' इत्यमरः। **मृगम्**। **अर्पयसि**। **महिषविषाणे** महिषशृङ्गे। **तुरगम्**। **वितरसि**। कस्यापि महतः शिष्यं संसारत उपरमयितुमिच्छोरुक्तिरियम्। पज्झटिकावृत्तम्, 'प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभूषितगात्रा। पज्झटिकाया एष विवेकः क्वापि न मध्यगुरुर्गण एकः॥' इति च तल्लक्षणम्॥ १७६॥'

उदाहृते निदर्शनां निरूपयति—**इहोदाहृते पद्ये**। **बिम्बप्रतिबिम्बताऽऽक्षेपं** बिम्बं प्रकृतमुपमेयं भोगेषु चित्तनिधानरूपम्, प्रतिबिम्बमप्रकृतमुपमानं मृगादनवदनादिषु शुकक्षेपादिरूपं च तयोर्भावस्तत्ता तस्या आक्षेपः कल्पनयाऽङ्गीकारस्तम्। **विना**। **वाक्यार्थपर्य्यवसानं** वाक्यार्थस्योदाहृतपद्यरूपवाक्यतात्पर्य्यस्यापर्य्यवसानं सम्बन्धोपपत्त्याऽसिद्धान्तः। 'अतो निदर्शनेय'मिति शेषः। यत्रयत्र बिम्बप्रतिबिम्बभावस्य सत्यां कल्पनायामेव वाक्यार्थः सङ्गच्छते तत्रैव निदर्शनायाः स्वीकारादिति तत्त्वम्। ननु प्रकृताप्रकृतयोर्बिम्बप्रतिबिम्बत्वेन दृष्टान्त एवायं किन्न स्यादित्याशङ्क्याह-**दृष्टान्ते**। **तु**। **पर्य्यवसितेन** समुपपन्नसम्बन्धतयाऽभिमतेन। **वाक्यार्थेन** तदभिन्नादिति यावत्। अभेदे तृतीयेम्। **सामर्थ्यात्**। **बिम्बप्रतिबिम्बताप्रत्यायनं** सादृश्यस्य ज्ञापनम्। तथा च-यत्र प्रकृताप्रकृतयोर्बिम्बप्रतिबिम्बत्वमाक्षिप्यैव वाक्यार्थोपपत्तिः सा निदर्शना, यत्र पुनर्वाक्यार्थोपपत्त्यनन्तरमेव प्रकृताप्रकृतयोर्बिम्बप्रतिबिम्बत्वोपपत्तिः स दृष्टान्त इत्यनयोर्भेदात्, प्रकृते च दृष्टान्तलक्षणासम्भवात् एतल्लक्षणसम्भवाच्च निदर्शनैवेति निष्कृष्टोऽर्थः। नन्वेवं दण्डापूपन्यायेन अर्थापत्तिरेव स्वीक्रियतामित्याशङ्क्याह-**इयं** निदर्शना। **अर्थापत्तिः**। **अपि**। न। हेतुं निर्दिशति-**तत्र** तस्यामर्थापत्तावित्यर्थः। **'हारोऽयं हरिणाक्षीणाम्' इत्यादौ**। आदिपदेन 'लुठति स्तनमण्डले। मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः॥' इति ग्रहणम्। **सादृश्यपर्य्यवसानाभावात्**। अत्र च सादृश्यपर्य्यवसानामिति निदर्शनैवेयम्, इति सिद्धम्। अथ-अत्रैकस्य प्रकृतस्यानेकेषां प्रकृतानामन्वयित्वेन मालारूपात्वमित्यपि बोध्यम्।

**आधिक्यमुपमेयस्योपमानान्न्यूनताथ वा ।**

**व्यतिरेकः—**

स च—

**एक उक्तेऽनुक्ते हेतौ पुनस्त्रिधा ॥ ५२ ॥**

**चतुर्विधोऽपि साम्यस्य बोधनाच्छब्दतोऽर्थतः ।**

**आक्षेपाच्च द्वादशधा श्लेषेऽपीति त्रिरष्टधा ॥ ५३ ॥**

**प्रत्येकं स्यान्मिलित्वाष्टचत्वारिंशद्विधः पुनः ।**

उपमेयस्योपमानादाधिक्ये हेतुरुपमेयगतमुत्कर्षकारणमुपमानगतं निकर्षकारणं च । तयोर्द्वयोरप्युक्तावेकः प्रत्येकं समुदायेन वानुक्तौ त्रिविध इति चतुर्विधेऽप्यस्मिन्नुपमानोपमेयत्वस्य निवेदनं शब्देनर्थेन आक्षेपेण चेति द्वादशप्रकारोऽपि श्लेषेऽपीत्यपिशब्दादश्लेषेऽपीति चतुर्विंशतिप्रकारः । उपमानान्न्यूनतायामप्यनयैव भङ्ग्या चतुर्विंशतिप्रकारतेति मिलित्वाष्टचत्वारिंशत्प्रकारो व्यतिरेकः ।

---

## विवृतिः

व्यतिरेकालंकारमाह—**आधिक्यमिति** । व्यतिरिच्यते उपमानवैलक्ण्येनानोपलभ्यते उपमेयमनेनेति व्यतिरेकपदव्युत्पत्तिरवधेया । आधिक्यपक्षं विकल्पयति—**एक इति** । नोक्त इति हेतावित्यनुषङ्गः । **शब्दत** इवादिशब्दात् ।

**अर्थतस्**तुल्यादिपदार्थानुसंधानात् । **आक्षेपाद्** व्यञ्जनातः । श्लेषेऽपीत्यादिना श्लेषाभावसमुच्चयः । **त्रिरष्टधा** चतुर्विंशतिप्रकारा ॥ **निकर्षो**ऽपकर्षः । **प्रत्येकमिति** । उत्कर्षकारणानुक्तावपर इत्यर्थः । **अनयैव भङ्ग्येति** । निरुक्तक्रमेणेत्यर्थः । तथाहि—उपमेयस्योपमानान्नयूनतायां हेतुरुपमेयगतं निकर्षकारणमुपमानोत्कर्षकारणं च । तयोर्द्वयोरप्युक्तावेकः । प्रत्येकं समुदायेन वानुक्तौ त्रिविध इत्याद्युक्तप्रकारेण चतुर्विंशतिविधत्वं बोध्यम् । **जयतीति** । जयः पराभवः स चापकृष्टत्वेन ज्ञानं तस्य च मुखेऽसंभवात्सादृश्ये पर्यवसानमित्याक्षेप इति भावः । **द्वयोरिति** ।

## विवृतिपूर्तिः

**हनूमदिति** । 'स्वनाम यन्नाम मुधाभ्यधामहो महेन्द्रकार्य महदेतदुज्झितम्' इति पूर्वार्धम् ।

## विज्ञप्रिया

व्यतिरेकालङ्कारमाह—**आधिक्यमिति**। उपमेयस्योपमानादाधिक्यं न्यूनताऽथवा वर्ण्यते स व्यतिरेकालङ्कार इत्यर्थः। तस्य विभक्तविभागेनाऽष्टचत्वारिंशद्विधत्वम्। **स चेति**। क्वचित्तु एक उक्तेऽनुक्ते हेतौ पुनः त्रिधेति कारिका। एक इत्यादेरुत्थापिकावृत्तिः। हेतावित्युत्कर्षानुपकर्षतया हेतुद्वये इत्यर्थः।

कारिकार्थं स्वयमेव विशदयति—**उपमेयस्येति**। **प्रत्येकमिति**। उत्कर्षहेतोर्निकर्षहेतोर्वाऽनुक्तौ द्वौ। समुदायानुक्तौ चैक इत्यनुक्तित्रयमित्याह—**त्रिविध** इति। हेतुद्वयोक्तिसाहित्यादाह—**चतुर्विधेऽप्यस्मिन्निति**। निवेदनं ज्ञापनम्। **शब्देनेति**। उपमायाः श्रौतीत्वे इत्यर्थः। **अर्थेनेति**। उपमाया आर्थीत्वे इत्यर्थः। **आक्षेपेणेति**। उपमाप्रतिपादकानम् इवादीनां तुल्यादिपदानां चाभावे कल्पनेनेत्यर्थः। इति **द्वादशविधोपीति**। हेतुद्वयोक्त्यनुक्तित्रयवशाच्चतुर्विधस्य उपमायाः शब्दार्थाक्षेपवशात्त्रिगुणत्वेन द्वादशविध इत्यर्थः। तदा द्वादशकस्य श्लेषाश्लेषयोः सम्भवं कारिकोक्तादपिशब्दाद् दर्शयति—**श्लेषेऽपीति**। भङ्ग्या प्रकारेण।

## लोचन

**हेताविति**। जात्यपेक्षयैकवचनम्। यदुक्तं वृत्तौ हेतुरुपमेयगतमित्यादि। **शब्दत** इति। यदुक्तमत्रैव—श्रौती यथेववाशब्दा इति। **अर्थत** इति। यदुक्तमत्रैव-आर्थी तुल्यसमानाद्या इत्युक्तन्यायात्।

## कुसुमप्रतिमा

प्रकृतसादृश्यमूलकत्वादेव व्यतिरेकालङ्कारं लक्षयति आधिक्यमिति। उपमानादुपमेयस्य आधिक्यं येन केनापि प्रकारेणोत्कर्षः, अथवा उपमानादुपमेयस्य न्यूनता येन केनापि प्रकारेण निकर्षो निकृष्टता व्यतिरेको नामालङ्कार स्यात्। एतेन—

उपमानोपमेययोषत्किञ्चिद्वैधर्म्यं व्यतिरेकं इति लक्षणं फलितम्।

वैधर्म्यञ्च उपमानापेक्षया उपमेयस्य उत्कर्षेण चापकर्षेण वा भवतीति बोध्यम्। अतएवोपमायामवैधर्म्यम्, इह तु वैधर्म्यमेवेति भेदः। तथा व्यतिरिच्यते उपमानादुपमेयं किञ्चिद्वैषम्येणावगम्यते येन व्यतिरेक इति व्युत्पत्तिसिद्धिश्च। स च प्रथमं द्विविधः—उपमानापेक्षया उपमेयस्याधिक्ये एकः, उपमानापेक्षया उपमेयस्य न्यूनतायाञ्चापर इति।

तयो प्रत्येकमेव पुनर्विभजते एक इति। तत्र उपमानादुपमेयस्याधिक्यप्रकारे स व्यतिरेकश्च हेतौ उपमेयोत्कर्षकारणे च उक्ते एकः तयोरुभयोरेवोक्तत्वरूपेणैकविधः; तथा हेतौ नोक्ते त्रिधा हेतोरनुक्तत्वरूपेण त्रिविधः—तथा च केवले उपमेयोत्कर्षकारणे अनुक्ते एकविधः, केवले उपमानपकर्षकारणे अनुक्ते एकविधः, तयोरुभयोरेव उत्कर्षापकर्षकारणयोरनुक्तयोश्चैकविध इति त्रिविध इत्यर्थः। एवञ्च हेतौरुक्तत्वसम्पन्नेन एकविधेन सह हेतोरनुक्तत्वसम्पन्नस्य त्रिविधस्य मेलने एतावता चतुर्विधः सम्पद्यत इति सरलार्थः। तेन च त्रिभिः शब्दार्थाक्षेपैः प्रतिपाद्यानां हेतूनां सम्भवात् "प्रत्येकं व्यतिरेकस्यापि त्रैविध्यमिति वर्णनमज्ञानविजृम्भितमेव, तादृशत्रैविध्यात्रैविध्यात् तदनुक्तौ समुदायेन वानुक्तौ त्रिविधः" इति वृत्तिविरोधाच्च। उक्तरीत्या चतुर्विधोऽपि व्यतिरेकः, साम्यस्य सादृश्यस्य शब्दतः शब्दात्, अर्थतः समानसदृशादिशब्दानामर्थवशात् आक्षेपाद्व्यञ्जनावशाच्च बोधनात् प्रतीतेः, द्वादशधा द्वादशविधः, चतुर्णा त्रिभिर्गुणने द्वादशसम्भवात्। स च द्वादशविधः, श्लेषे, अपिशब्दा-

दश्लेषे च सम्भवतीति पुनर्द्वैविध्येन त्रिरष्टधा चतुर्विंशतिविधः। उक्तरीत्या उपमानादुपमेयस्य न्यूनताप्रकारेऽपि व्यतिरेकश्चतुर्विंशतिविधः समुन्नेयः। तेन च प्रत्येकमुभयं प्रथमोक्तं द्विविधं इत्यर्थः व्यतिरेकः पुनर्मिलित्वा समुदायेन अष्टचत्वारिंशद्विधः स्यात्, चतुर्विंशतेर्द्वैगुण्ये अष्टचत्वारिंशत् सम्भवात्।

उमेयस्येति। निकर्षो निकृष्टता तत्कारणश्च।

तयोरिति। प्रत्येकमिति। केवलोपमेयगतोत्कर्षकारणस्य केवलोपमानगतनिकर्षकारणस्य वेत्यर्थः। समुदायेन तयोरुभयोरेव वा इति तात्पर्य्यम्। अस्मिन् व्यतिरेकसामान्ये। निवेदनं बोधनम्। अर्थेन समानसदृशादिशब्दानामर्थेन, आक्षेपेण व्यञ्जनयाः।

उपमानादिति। उपमेयस्येति शेषः। भङ्ग्या रीत्या।

## विमला

व्यतिरेकमाह, आधिक्यमिति।—उपमेयस्य उपमानात् आधिक्यम् अथवा न्यूनता व्यतिरेकः,—व्यतिरिच्यते—उपमानवैलक्षण्येनोपलभ्यते उपमेयमनेन इति व्यतिरेकः, उपमानात् उपमेयम्, उपमेयात् उपमानं वेति हि तदर्थः, तथा च—उपमानापेक्षया उपमेयस्य वैलक्षण्येन प्रत्ययो व्यतिरेकः उपमेयापेक्षया उपमानस्य वैलक्षण्येन प्रत्ययो वा व्यतिरेक इति फलितम्। वैलक्षण्येन प्रत्ययश्च आधिक्येन न्यूनत्वेन वेति द्विधैव सम्भवति, अतः उपमानापेक्षया उपमेयस्य अधिकतया वैलक्षण्ये प्रतीयमाने एकः, न्यूनतयेति द्वितीयः, उपमानस्य अधिकः तथा वैलक्षण्ये प्रतीयमाने तृतीयः, न्यूनतयेति चतुर्थः व्यतिरेक इति बोध्यम्। आधिक्यपक्षं विकल्पयति, एक इति।—स च हेतौ उक्ते एकः,—एकविध एव हेतौ नोक्ते—अकथिते, त्रिधा; अयम्भावः,—हेतुस्तावत् शब्दकृतः, अर्थकृतः आक्षेपकृतश्च इति त्रिविधः, तथा सति तस्य तस्य उक्तयभावे व्यतिरेकस्य त्रैविध्य। स्पष्टम् इति। तथा चतुर्विधोऽपि साम्यस्य—सादृश्यस्य, शब्दतः,—इवादिशब्दात् अर्थतः,—तुल्यादिपदार्थानुसन्धानात्, आक्षेपाच्च—व्यञ्जनातश्च, बोधनात्—प्रत्यायनात्, द्वादशधा—इति प्रत्येकं त्रिधा भूत्वा द्वादशविधो भवतीति भावः। श्लेषेऽपीति अपिना श्लेषाभावसमुच्चयः, तेन द्वादशविधोऽपि सः श्लेषनिबन्धनत्वात् अश्लेषत्वाद्वैविध्येन इति भावः, त्रिरष्ट।—चतुर्विंशतिप्रकारः। प्रत्येकम्—आधिक्यन्यूनतयोश्च, मिलित्वा पुनः अष्टचत्वारिंशत्प्रकारः स्यात् इति।

उपमेयस्येति।—निष्कर्षः,—अपकर्षः। प्रत्येकमिति।—उत्कर्षकारणानुक्तौ अपर इत्यर्थः। अनयैव भङ्ग्येति—निरुक्तक्रमेण इत्यर्थः, तथा हि—उपमेयस्योपमानन्न्यूनतायां हेतुः उपमेयगतं निकर्षकारणमुपमानोत्कर्षकारणञ्च, तयोर्द्वयोरप्युक्तावेकः, प्रत्येकं समुदायेन वाऽनुक्तौ त्रिविधः इत्याद्युक्तप्रकारेण चतुर्विंशतिविधत्वं बोध्यम्।

## लक्ष्मी

प्राकरणिकसादृश्यप्रयुक्तमेव व्यतिरेकालङ्कारं निरूपयति—आधिक्यमिति। उपमानात् उपमानापेक्षया उपमानञ्चात्र प्रसिद्धमेव ग्राह्यम्, उपमेयस्य आधिक्यं गुणविशेषकृत उत्कर्षः, अथवा उपमानादुपमेयस्य न्यूनत्वान्यूनत्वम् अपकर्ष इति यावत् व्यतिरेको विशेषेणातिरिच्यते उपमानादुपमेयं वैषम्येणावगम्यते येन स तथोक्तस्तन्नामालङ्कारो भवेत्। तथा च उपमानोपमेययो वैषम्यं (वैधर्म्य) व्यतिरेक इति लक्षणं फलितम्।

वैषम्यञ्च उपमानापेक्षया उपमेयस्य आधिक्येन न्यूनत्वेन वा भवतीत्यवधेयम् । उत्कर्षापकर्षभावश्च न रूपके, न वोपमायां नाप परिणामादावितिविभावनीयम् ।

नन्वस्यालङ्कारस्य वैधर्म्यमूलकत्वेन साधर्म्यमूलाया उपमाया प्रतिकूलत्वात् कथमुपमामूलकत्त्वम्, न च मास्तु उपमामूलकत्वमिति वाच्यम्, सर्वालङ्कारिकमते व्यतिरेकस्य सादृश्यमूलकत्वस्यैव स्वीकारेण सिद्धान्तभङ्ग-प्रसङ्गादिति चेत्? सत्यम्, यद्रगुपुरस्कारेण यस्य यत्सादृश्यनिषेध उत्कर्षपर्यवसायी तस्य तद्रगुणपुरस्कारेण तत्सादृश्याप्रतिष्ठानेऽपि गुणान्तरेण सादृश्यप्रत्ययस्य दुर्वारत्वात् । यदि च तत्सादृश्यसामान्यनिषेधो विवक्षितः स्यात् तदा गुणविशेषपुरस्कारोऽनर्थकः स्यात्, 'धनेनायमस्मादधिकः' इत्यभिहिते विद्यया रूपेण कुलेन च सम इति सर्वजनीनप्रत्ययात् । ननु तर्हि वैधर्म्यमूलोऽयमलङ्कार इति व्यपदेशो न स्यादितिचेत्? मैवम्, अत्र प्रतीयमानमपि सादृश्यं गुणान्तरकृतनिषेधोत्थापितेनोत्कर्षेण हतप्रभमिव बन्दीकृतमिव न चमत्कारविशेषमाधातुं प्रभवतीति तस्मात् वैधर्म्यप्रत्ययोऽत्रावश्यं तिष्ठतीतिवैधर्म्यमूलकत्वेन स्वीकारे क्षतेरभावात् । एवञ्चात्र उपमानादुपमेयस्य येन केनापि प्रकारेणोत्कर्षः येन केनापि प्रकारेणापकर्ष इति व्याचक्षाणां **सिद्धान्तवागीशानां** मतमनुपादेयमेव । अत एव 'उपमानादुपमेयस्य गुणविशेषवत्वेनोत्कर्षो व्यतिरेकः' इति नव्यादीनां लक्षणं सङ्गच्छते ।

उक्तलक्षणेन व्यतिरेकहेतुस्तावद्द्विविधः—उपमानपेक्षया उपमेयस्याधिक्ये एकः, उपमानापेक्षया उप-मेयस्य न्यूनतायाञ्चापर इति फलति ।

द्विविधहेतुयुतमपि व्यतिरेकं विभजितुमाह—**स** चेति । उक्तदिशा द्विविधहेतुयुतो व्यतिरेकश्चेत्यर्थः ।

विभजते—एक इति । हेतौ उपमानादुपमेयस्याधिक्यसाधके उपमानादुपमेयस्य न्यूनत्वसाधके वा उक्ते अभिहिते सति एक एकविधः, तथा हेतौ उपमेयादुपेयस्याधिक्यन्यूनत्वसाधके वा अनुक्ते अनभिहिते त्रिधा आधिक्यसाधकमात्रस्य न्यूनत्वसाधकमात्रस्य वा एतयोर्द्वयोर्वा अनुक्तौ त्रिप्रकारा इत्यर्थः । एवञ्च हेतोरुक्तत्वस-म्पन्नेन एकविधेन सह हेतोरनुक्तत्वसम्पन्नस्य त्रिविधस्य संयोजने, चतुर्विधोऽपि स व्यतिरेकः साम्यस्य सादृश्यस्य उपमानोपमेयभावस्येत्यर्थः शब्दतः इवादिशब्दात्, अर्थतः तुल्यसदृशादिशब्दानामर्थवशात् आक्षेपाद् व्यञ्जनाव-शाच्च बोधनात् ज्ञापनात् इवादेः प्रयोगे शब्देन साम्यबोधनात्, तुल्यादेश्च प्रयोगे आर्थेन, जयत्यादेश्च प्रयोगे आक्षेपेण बोधनादित्यर्थः, द्वादशधा द्वादशविधाः, चतुर्णां त्रिभिर्गुणने द्वादशोपपत्तेः । स च द्वादशविधश्लेषे अपिशब्दादश्लेषे च सम्भवतीति पुनर्द्वैविध्येन त्रिरष्टधा चतुर्विंशतिविधः अष्टानां त्रिभिर्गुणने चतुर्विंशत्युपपत्तेः । उपमानादुपमेयस्याधिक्ये चैते चतुर्विंशतिप्रकाराः, उपमानादुपमेयस्य न्यूनत्वे उक्ते एकः अनुक्ते त्रिधेति चतु-र्विधोऽपि पूर्ववदेव चतुर्विंशतिप्रकारा इति, तेन च प्रत्येकं व्यतिरेकस्य भेदयोरेकैकमपेक्ष्य मिलित्वा पूर्ववदेव चतुर्विंशतिप्रकारा इति, तेन च प्रत्येकं व्यतिरेकस्य भेदयोरेकैकमपेक्ष्य मिलित्वा चतुर्विंशतिविधानामुपमेयाधिक्य-निबन्धनव्यतिरेकाणां तावतामेवोपमेयन्यून्वनिबन्धनव्यतिरेकाणां चैकत्र व्यतिरेकाभिन्नत्वेनाकलनादिति भावः, अष्टचत्वारिंशद्विधः स्यात् चतुर्विंशतेर्द्वैगुण्ये अष्टचत्वारिंशदुपपत्तेः ।

कारिकार्थं विवृणोति—**उपमेयस्येति** । निकर्षकारणश्च अपकर्षसाधकञ्च । तयोरिति । **प्रत्येकमिति** । केवलोपमेयगताधिक्यसाधकस्य केवलोपमानगतन्यूनत्वसाधकस्य वेत्यर्थः । समुदायेन तयोर्द्वयोर्वा इत्याशयः । अस्मिन् व्यतिरेकसामान्ये (निवेदनं ज्ञापनम्) अर्थेन तुल्यसदृशादिशब्दानामर्थेन । आक्षेपेण व्यञ्जनया । **उपमाना-**दिति । उपमेयस्येति शेषः । भङ्ग्या दिशा । ननु द्वयोरपि हेत्वोरनुक्तौ कथमुपमेयाधिक्यमितिचेत्?

'इन्दीवरपलाशाक्ष्यास्तस्या नाम्बुजवद्रगुणाः ।'

इत्यत्र **नाम्बुजवदित्यनेन** बोधितस्य अम्बुजाभावस्यैवोत्कर्षपर्यवसायितयाधिक्यरूपत्वात्।

## रुचिरा

व्यतिरेकं लक्षयति—१३३ **उपमानात्** उपमानापेक्षया। उपमानं चात्र प्रसिद्धमेव ग्राह्यम्। **उपमेयस्य आधिक्यम्**। **अथवा**। **न्यूनता** न्यूनत्वम्। **व्यतिरेकः**। व्यतिरेचनं व्यतिरिक्तत्वेन भवनम् इति व्यतिरेकः, प्रकृते च उपमानात् उपमेयस्य, उपमेयाद्वोपमानस्य, सोऽपि आधिक्यकृतो न्यूनत्वकृतश्च, तत्र-यत्र उपमानादुपमेयस्याधिक्ये व्यतिरेकस्तत्रोपमेयापेक्षयोपमानस्य न्यूनत्वम्, यत्रोपमानादुपमेयस्य न्यूनत्वे व्यतिरेकस्तत्र उपमेयापेक्षयोपमानस्याधिक्यम्, इति लाघवात्सुष्ठूक्तम्-आधिक्यमित्यादि। उत्कर्षापकर्षभावश्च न रूपके, न वोपमायां, नापि परिणामादाविति विभाव्यम्॥ १०५॥

अस्य प्रभेदान्निर्दिशति—स व्यतिरेकः। च। १३४ **हेतौ** उपमानादुपमेयस्योपमेयाद्वोपमानस्योत्कर्षसाधके। **उक्ते**। एक एकविधः। **अनुक्ते**। **पुनः त्रिधा**, उपमेयाधिक्ये तस्योपमेयमात्रोत्कर्षसाधकत्वेनोपमानमात्रापकर्षसाधकत्वेनोपमेयोत्कर्षपूर्वकोपमानापकर्षसाधकत्वेन च; उपमानाधिक्ये पुनरुपमानमात्रोत्कर्षसाधकत्वेनोपमेयमात्रसाधकत्वेनोपमानोत्कर्षपूर्वकोपमेयापकर्षसाधकत्वेन च; त्रिविधत्वात्। इत्येवम्—**चतुर्विधः**। अपि। **शब्दतः** शब्दात्। अर्थतोऽर्थात्। **आक्षेपात्**। च। **साम्यस्य**। **बोधनात्**। साम्यबोधकस्य शब्दार्थाक्षेपत्रैविध्येन त्रैविध्यादिति भावः। **द्वादशधा**। एष च—श्लेषे श्लेषसद्भावे। अपि 'श्लेषाभावे तु भवत्येवे'ति शेषः। **इति** एवं द्विविधः सन्नित्यर्थः। त्रिः त्रिवारं कृत्वा। **अष्टधा**। चतुर्विंशतिधा भवतीति निष्कर्षः। **प्रत्येकं** व्यतिरेकस्य भेदयोरेकैकमपेक्ष्येति भावः। पुनः। 'चतुर्विंशतिविधत्वात्' इति शेषः। **मिलित्वा** चतुर्विंशतिविधानामुपमेयाधिक्यनिबन्धनव्यतिरेकाणां, तावतामेवोपमानाधिक्यनिबन्धनव्यतिरेकाणां चैकत्र व्यतिरेकाभिन्नत्वेनाकलनादिति भावः। **अष्टचत्वारिंशद्विधः**। 'व्यतिरेक' इत्यनुक्रमप्राप्तः। **स्यात्**॥ १०६॥ १०७॥

कारिकाऽर्थं विवृणोति-**उपमेयस्ये**त्यादिना। स्पष्टम्।

उदाहरणम्—

'अकलङ्कं मुखं तस्या न कलङ्की विधुर्यथा ।'

अत्रोपमेयगतमकलङ्कत्वमुपमानगतं च कलङ्कित्वं हेतुद्वयमप्युक्तम्, यथाशब्दप्रतिपादनाच्च शाब्दमौपम्यम् । अत्रैव 'न कलङ्किविधूपमम्' इति पाठ आर्थम् । 'जयतीन्दुं कलङ्किनम्' इति पाठे त्विववत्तुल्यादिपदविरहादाक्षिप्तम् । अत्रैवाकलङ्कपदत्यागे उपमेयगतोत्कर्षकारणानुक्तिः । कल-ङ्किपदत्यागे चोपमानगतनिकर्षकारणानुक्तिः । द्वयोरनुक्तौ द्वयोरनुक्तिः ।

---

## विवृतिः

अकलङ्किलङ्किपदयोरित्यर्थः । द्वयोरनुक्तिः उत्कर्षनिकर्षकारणयोरनुक्तिः मुखे चन्द्रसादृश्यनिषेधेनैवा-धिक्यं प्रतीयते ।

## विज्ञप्रिया

**अकलङ्कमिति** । कलङ्की विधुर्यथा तस्या मुखं तथा न, किन्तु ततोधिकम् । यतोऽकलङ्कमित्यर्थः ।

तत्रैवानेकप्रकारसम्भवं दर्शयति—**अत्रैवेति** । **द्वयोरनुक्तिरिति** । 'तस्या मुखं न विधुर्यथे'त्येवं कारणम् इत्यर्थः ।

## लोचन

द्वयोरकलङ्ककलङ्किपदयोर्द्वयोर्हेत्वोः ।

## कुसुमप्रतिमा

अकलङ्कमिति । "अशोतञ्च भुजद्वन्द्व न शीतन्तु मृणालवत् ॥" इति मत्पूरितपरार्द्धम् ।

अत्रेति । हेतुद्वयं मुखोत्कर्षस्य विधुनिकर्षस्य च यथासंख्यं कारणद्वयम् । यथाशब्देन प्रतिपादनादभि-धानात्, शाब्दं शब्दप्रतिपाद्यम् । अस्य युक्तिस्तु उपमाप्रकरणे दर्शिता ।

संक्षेपार्थमुदाहृतमेव पाठपरिवर्त्तिनोदाहरति अत्रैवेत । अकलङ्कं मुखमित्यादावेवेत्यर्थः । आर्यमयं वशा-दुपलभ्यम्, औपम्यमिति पूर्वेणान्वयः । अस्या युक्तिरप्युपमापकरणे दशिता ।

जयतीति । इवादिवत् शाब्दौपम्यप्रतिपादकस्य इवप्रभृतिशब्दस्येव, तुल्यादिपदस्य आर्थौपम्यप्रतिपाद-कतुल्यादिशब्दस्य विरहादभावात् आक्षिप्तमाकृष्टं व्यञ्जनयोपलभ्यमित्यर्थः, अत्रापि औपम्यमिति पूर्वेणान्वयः । तथा च जयो नामायत्तीकरणम्; तेन मुखकर्तृकचन्द्रायत्तीकरणस्यासम्भवात् जयत्यर्थवैशिष्टयेन व्यञ्जनया औपम्य-माक्षिप्यते इति भावः ।

हेतोरुक्तावेतावदुदाहृत्य इदानी संक्षेपेणैव हेतोरनुक्तावप्यु दाहर्त्तुमाह अत्रैवेति । अकलङ्क पदत्यागे "एतद्भाति मुखं तस्या न कलङ्की विधुर्यथा" इति पाठ इत्यर्थः । उपमेयगतोत्कर्षकारणस्य अकलङ्कत्वस्य

अनुक्तिरित्येकविधः। कलङ्किपदत्यागे "अकलङ्कं मुखं तस्या भाति नैष विधुर्यथा" इत्येवं पाठ इत्यर्थः। उपमायगतनिकर्षकारणस्य कलङ्कित्वस्य अनुक्तिरिति द्वितीयविधः। द्वयोरकलङ्कपदकलङ्किपदयोः, अनुक्तौ त्यागे "एतद्भाति मुखं तस्या न त्वाकाशे विधुर्यथा" इत्येवं पाठ इत्यर्थः, द्वयोरुपमेय गतोत्कर्षं कारणोपमागतनिकर्षकारणयोरनुक्तिरिति तृतीयविधः। तथा चोक्तरूपपाठेऽपि उपमानभूत चन्द्रसादृश्यप्रतिषेधादेव उपमेयभूतमुखस्य आधिक्यमवगम्यत एवेति ध्येयम्।

अतीति। "स्थिरा भूतिमहादेव्या नास्थिरा हरमूर्त्तिवत्।" इति मत्पूरितपूर्वार्द्धम्।

## विमला

अकलङ्कमिति।—तस्याः,—सुन्दर्य्या इत्यर्थः, मुखम् अकलङ्कं—कलङ्कविरहितं, न कलङ्कि इति भावः, विधुः,—चन्द्रः, यथा कलङ्की—मालिन्यसादृश्येन कलङ्कीति प्रतीयमानः, तथा न।

अत्रेति। जायतीति।—जयः,—पराभवः, स चापकृष्टत्वेन ज्ञानं, तस्य च मुखे असम्भवात् सादृश्ये पर्य्यवसानमित्याक्षेपः इति भावः। द्वयोरिति—अकलङ्ककलङ्किपदयोः इत्यर्थः। द्वयोरनुक्तिः,—उत्कर्षनिकर्षकारणयोरनुक्तिः, मुखे चन्द्रसादृश्यनिषेधेनैवाधिक्यं प्रतीयते इत्याशयः।

## लक्ष्मी

उदाहरति—**अकलङ्कमिति**। तस्या नायिकाया कलङ्की विधुर्यथा मुखं (पश्यति) तथा न (अहं पश्यति) किन्तु ततोऽधिकम्, यत् अकलङ्कं मालिन्यांशशून्यम्।

अनेकान् भेदानत्रैवोपपादयितुमाह—**अत्रेति**। उपमेयगतं मुखनिष्ठम्, उपमानगतं विधुनिष्ठम्। हेतुद्वयं मुखोत्कर्षकस्य विधुनिकर्षस्य च यथासङ्ख्यं साधकद्वयम्। इत्यसावुपमेयाधिक्यहेतुको व्यतिरेकः। यथाशब्देन प्रतिपादनात् कथनात्, साम्यस्येति शेषः, शाब्दं शब्दप्रतिपाद्यम्। उपमाप्रस्तावेऽस्य युक्तिरुपपादिता। अयञ्च श्लेषं विनैवेत्यवधेयम्।

विस्तरभियोदाहृतमेव पाठान्तरेणोदाहरणाह—**अत्रैवेति**। 'अकलङ्कं मुखं तस्या' इत्यादावेवेत्यर्थः। पाठे परिवृत्ते इति शेषः। आर्थम् अर्थवशादुपलभ्यम् औपम्यमिति पूर्वेण सम्बन्धः। अस्या युक्तिरपि उपमाप्रस्ताव उपपादिता.

**जयतीति**। इववत् शाब्दौपम्याभिधायकस्य इवादिशब्दस्येव, तुल्यादिपदविरहात् आर्थौपम्याभिधायकतुल्यादिशब्दस्याभावात् आक्षिप्तं व्यङ्ग्यम् औपम्यमितिपूर्वेण सम्बन्धः। एवञ्च जयश्चात्र स्वाधीनविधानम्, तेन मुखकर्तृकचन्द्राधीनविधानस्यासम्भवात् जयः त्यर्थबलेन व्यञ्जनाया औपम्यमाक्षिप्यत इत्याशयः।

इत्थं हेतोरुकतावुदहरणं प्रदर्श्य सम्प्रति संक्षेपणैव हेतोरनुकतावप्युदहरणं दर्शयितुमाह **अत्रैवेति**। अकलङ्कपदत्यागे—

**'शोभते च मुखं तस्या न कलङ्की विधुर्यथा'**

इति पाठे इत्यर्थः। उपमेयगताधिक्यसाधकस्य अकलङ्कित्वस्य अनुक्तिरनभिधानमित्येकप्रकारः। कलङ्किपदत्यागे 'अकलङ्कं मुखं तस्याः शोभां नैति विधुर्यथा' इत्येवंपाठे इत्यर्थः उपमानगतस्य विधिनिष्ठन्यूनत्वसाधकस्य कलङ्कित्वस्य अनुक्तिरभिधनमिति द्वितीयः प्रकारः, द्वयोरुपमेयगताधिक्यसाधकाकलङ्कपदस्योपमान-

गतन्यूनत्वसाधककलङ्किपदस्य चेत्यर्थः, अनुक्तौ अनुपादाने 'मनोहरं मुखं तस्याः शोभां नैति विधुर्यथा' इत्येवं पाठे इत्यर्थः द्वयोरकलङ्कपदकलङ्किपदयोरनुक्तिरनुपादानमिति तृतीयः प्रकारः। अत्र चैवंरीत्या पाठेऽपि उपमेयभूतमुखस्योत्कर्षः उपमानभूतविधुसादृश्यप्रतिषेधादेव प्रतीयते इत्यवधेयम्।

## रुचिरा

उदाहर्तुमाह—**उदाहरणमिति**। 'दिङ्मात्रं यथे'ति शेषः। '**तस्या** नायिकायाः। **मुखम्**। **अकलङ्कं** कलङ्क (मालिन्यांश) शून्यम्। **विधुः**। **यथा**। **कलङ्की**। तथा-**न**। 'अकठोरा तनू तन्व्या नामृद्वी हेममूर्तिवत्।' इति शेषः॥

अनेकान् भेदानत्रैव निर्देष्टुमाह-अत्रोदाहृते पद्यांशे इति भावः। **उपमेयगतं** मुखनिष्ठम्। **अकलङ्कत्वम्**। **उपमानगतं** चन्द्रनिष्ठम्। **च**। **कलङ्कित्वम्**। इति-**हेतुद्वयम्**। **अपि**। **उक्तम्**। इत्यसावुपमेयाधिक्य उक्तहेतुको व्यतिरेक इति बोध्यम्। **यथाशब्दप्रतिपादनात्** 'साम्यस्ये'ति शेषः। **च**। **शाब्दम्**। **औपम्यम्**। अयं च श्लेषमन्तरैवेत्यूह्यम्। **अत्रोदाहृतपद्यांशे**। **एव**। '**विधूपमं** विधुरिव। **कलङ्कि**। **न**।' **इति**। **पाठे**। 'परिवृत्त' इति शेषः। **आर्थम्**। 'साम्य'मिति शेषः। '**कलङ्किनम्**। **इन्दुम्**। **जयति**।' **इति**। **पाठे**। **तु**। **इववत्तुल्यादिपदविरहात्**। आक्षिप्तम्। 'साम्य'मिति शेषः। अथ-**अत्र**। **एव**। **अकलङ्कपदत्यागे**। 'किन्तु-'ललनाया मुखं तस्या' इति पाठे' इति शेषः। **उपमेयगतोत्कर्षकारणानुक्तिः**। **कलङ्किपदत्यागे**। च। न विभाति विधुर्यथा' इति पाठे पुनः इति भावः। **उपमानगतनिकर्षकारणानुक्तिरु**पमानगतो विधुनिष्ठो यो निकर्षोऽपकर्षस्तस्य कारणं (कलङ्कित्वं) तस्यानुक्तिरिति तथोक्ता। **द्वयोरु**पमेयगतोत्कर्षकारणस्याकलङ्कित्वस्योपमानगतापकर्षकारणस्य कलङ्कित्वस्य चेत्यर्थः। **अनुक्तौ**। **द्वयोः** 'पुन'रिति शेषः। **अनुक्तिः**। 'यथा—'रमणीयं मुखं तस्या न विभाति विधुर्यथा।' इत्यत्रे'ति शेषः। **श्लेषे**। 'सती'ति शेषः। **यथा** व्यतिरेकः इति शेषः। '**अतिगाढगुणाया** अत्यन्तं गाढा दृढा गुणा अनुरागादयो धर्मा यस्यास्तथाभूतायाः। 'तस्या' इति शेषः। च। **अब्जवदब्जं** कमलं तस्येव। 'अब्जं पद्मे विधावब्ज' इति गोपालः। 'तत्र तस्येव।' ५/१/११६ इति वतिः। **भङ्गुराः** क्षयशीलाः। **गुणा** अनुरागादयस्तन्तुविशेषा वा। **न**। 'वामायाभ्रुकुटी वामे नावामे मधुपालिवत्।' इति तत्पूर्वार्द्धम्॥' अत्र इवार्थे। वतिः। इति।

श्लेषे यथा—

'अतिगाढगुणायाश्च नाब्जवद्भङ्गुरा गुणाः'

अत्रैवार्थे वतिरिति शाब्दमौपम्यम् । उत्कर्षनिकर्षकारणयोर्द्वयोरप्युक्तिः । गुणशब्दः श्लिष्टः । अन्ये भेदाः पूर्ववदूह्याः । एतानि चोपमेयस्योपमानादाधिक्य उदाहरणानि । न्यूनत्वे दिङ्मात्रं यथा—

'क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते सत्यम् ।

विरम प्रसीद सुन्दरि ! यौवनमनिवर्ति यातं तु ॥'

---

## विवृतिः

**अतिगाढेति** । अतिगाढगुणशालित्वमुपमेयगतोत्कर्षकारणं भङ्गुरगुणभागित्वमुपमानाब्जापकर्षकारणम् । **पूर्ववदिति** । 'तस्या नाब्जवद्भङ्गुरा गुणाः' इति, 'अतिगाढगुणायाश्च नाब्जवद्गुणाः' इति, 'तस्या नाब्जवद्गुणाः' इति प्रकारत्रयमूह्यम् ॥

## विज्ञप्रिया

श्लेषेऽप्येवं रीत्या द्वादशविधानाह—**अतिगाढेति** । **अत्रैवार्थ** इति । अब्जस्येवेति षष्ठ्यन्तोपात्तत्वात् । **उत्कर्षेति** । गुणगतगाढत्वाभङ्गत्वे उत्कर्षनिकर्षहेतू ।

## कुसुमप्रतिमा

अतिगाढा अतीवदृढाश्चिरस्थायिन इत्यर्थः, गुणाः, सौन्दर्य्यविनयादयः सूत्राणि च यस्यास्तस्या नायिकायाः, गुणास्त एव सौन्दर्य्यविनयादयः सूत्राणि च, अजयत् पद्मस्येव न भङ्गुरा न च्छिदुराः ।

अत्रेति । उत्कर्षनिकर्षकारणयोः उपमेयभूतनायिकागतोत्कर्षकारणस्य अतिगाढगुणत्वस्य, उपमानभूतपद्मगतनिकर्षकारणस्य भङ्गुरत्वस्य चेत्यर्थः ।

## विमला

अतीति ।—अतिगाढा,—अतिघनाः, गुणाः यस्याः तथाभूतायाः तस्याः, कान्तायाः इति भावः, गुणाः,—दयादाक्षिण्यादयः सूत्राणि च, अब्जवत्—पद्मस्येव, भङ्गुराः,—भङ्गप्रवणाः, छिदुरा इत्यर्थः, न भवन्तीति शेषः । अत्रोपमेयं नायिका, उपमानं पद्मम्, उपमेयस्य उत्कर्षकारणम् अतिगाढगुणशालित्वम्, उपमानस्य अनादेः निकर्षकारणं भङ्गुरगुणभागित्वमिति बोध्यम् ।

अत्रेति ।—पूर्ववत्—"तस्या नावजवद्भङ्गुरा गुणाः" इति, "अतिगाढगुणायाश्च नाब्जवद्गुणाः" इति, "तस्या नालवद्गुणाः" इति प्रकारत्रयमूह्यम् ।

## लक्ष्मी

एवमश्लेष उदाहृत्य श्लेषेऽप्युदाहरति—**अतिगाढेति**। अत्यन्तं गाढा दृढाश्चिरस्थायिन इत्यर्थः, गुणाः सौन्दर्यानुरागादयः तन्तुविशेषा वा यस्यास्तस्या नायिकाया गुणास्त एव सौन्दर्यानुरागादयः तन्तुविशेषा वा 'अब्जं'कमलं तस्येव 'अब्जं पद्मं विधावब्जम्' इति गोपालः, न भङ्गुरा न क्षयशीलाः।

समर्थयति—**अत्रेति**। उत्कर्षनिकर्षकारणयोः उपमेयभूतनायिकानिष्ठाधिक्यसाधकोपमानभूतनायिकानिष्ठन्यूनत्वसाधकातिगाढगुणत्वभङ्गुरत्वयोश्चेत्यर्थः।

श्लेषे शाब्दमौपम्यमुपपाद्यार्थौपम्याद्युदाहरणमुपपादयितुमाह—**अन्ये** इति। अर्थाक्षिप्तौपम्ये हेत्वनुक्तिनिबन्धनास्त्रयश्चेत्यर्थः। ऊह्याः स्वयमूहनीयाः।

एवमुदाहृत्य कस्यैतान्युदाहरणानीति बोधयितुमाह—**एतानीति**। उदाहरणानि बोध्यानीति शेषः।

उपमेयादुपमानस्याधिक्यमुदाहर्तुमाह—**न्यूनत्वे** इति। उपमेयस्योपमानादितिशेषः। दिङ्मात्रमेकप्रकारमात्रमित्यर्थः। प्रकारान्तरोदाहरणानि तु स्वयमुन्नेयानीति भावः।

## रुचिरा

**शाब्दम्**। **औपम्यम्**। **उत्कर्षनिकर्षकारणयोः**। **द्वयोः**। **अपि**। **उक्तिः**। तथाऽत्र-**गुणशब्दः**। **श्लिष्टः**। अथ-**अन्ये** हेत्वनुक्तिनिबन्धनास्त्रय इति भावः। **भेदाः**। **पूर्ववत्**। **ऊह्याः**। ते हि क्रमेण यथा—'कुरङ्गायतनेत्राया नाब्जवद्‌भंगुरा गुणाः' इति, 'अतिगाढगुणायाश्च नाब्जवत्सुमते ! गुणाः।' इति, 'कुरङ्गायतनेत्रायास्तन्वङ्ग्या नाब्जवद्गुणाः।' इति च।

एवमुदाहृत्य कस्यैतान्युदाहरणानीति बोधसौकर्य्यायाह-**एतानि**। **उदाहरणानि**। च। **उपमेयस्य**। **उपमानात्**। **आधिक्ये** 'ऊह्यानी'ति शेषः।

अत्रोपमेयभूतयौवनास्थैर्यस्याधिक्यम्। तेनात्र 'उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः' इति केषांचिल्लक्षणे 'विपर्यये वेतिपदमनर्थकम्' इति यत्केचिदाहुः। तन्न विचारसहम्। तथाहि—अत्राधिक न्यूनत्वे सत्त्वासत्त्वे एव विवक्षिते। अत्र च चन्द्रापेक्षया यौवनस्यासत्त्वं स्फुटमेव। अस्तु वात्रोदाहरणे यथाकथंचिद्गतिः।

'हनूमदाद्यैर्यशसा, मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः।'

इत्यादिषु का गतिरिति सुष्ठूक्तं 'न्यूनताथवा' इति।

---

## विवृतिः

**क्षीणः क्षीण** इति। मानिनीं प्रत्युक्तिरियम्। **विरमेति**। **'मानात्'** इति शेषः। यातं यौवनं तु अनिवर्ति। यौवनं पुनर्न वर्धत इति तात्पर्यार्थः। अत्र पुनर्वर्धनमुपमानचन्द्रोत्कर्षकारणम्। अपुनर्वर्धनमुपमेययौवननिकर्षकारणम्। उपमानन्यूनतायां व्यतिरेकमस्वीकुर्वतां मतं दूषयति—**अत्रोपमेयेति**। चन्द्रास्थैर्यमत्रोपमानं बोध्यम्। तेन 'क्षीणः क्षीणः—' इत्यादावाधिक्यव्यतिरेकेनैव संग्रहसंभवेन विपर्यये वा न्यूनतायां वा। **तथाहीति**। **सत्त्वासत्त्वे** उत्कृष्टत्वापकृष्टत्वे। ननु यौवनास्थैर्यस्याधिक्यस्य निवेदनं प्रकृतस्य मानभङ्गस्योपकारकमिति तस्यैव वैचित्र्याधायकत्वम्, न तु यौवनासत्त्वस्येत्यत आह—**अस्तु वेति**॥ **हनूमदाद्यैरिति**। दमयन्तीं प्रति दूतत्वेनन्द्रादिभिः प्रेषितस्य नलस्य तत्प्रयोजनासिद्धौ विषादोक्तिरियम्। अत्र प्रभुप्रयोजननिष्पादकत्वेन हनूमदादेरुपमानस्योत्कृष्टत्वं तद्व्यतिरेकेणोपमेयस्य नलस्यापकृष्टत्वं च प्रतीयते। अत्र दूतयोरुपमानोपमेयभावविक्षणेऽपि उपमानस्यैवाधिक्यम्, न तूपमेयस्येति।

## विज्ञप्रिया

**अन्ये भेदा** इति। तत्र हेतुद्वयस्य प्रत्येकं समुदायानुपादाने शाब्दौपम्ये यथा—'चन्द्रमुख्याः कुरङ्गाक्ष्या नाब्जवद भङ्गुरा गुणा' इत्युत्कर्षनिमित्तानुपादाने, 'अतिगाढगुणायाश्च तस्या नाम्बुजवद् गुणा' इति निकर्षहेत्वनुपादाने, 'इन्दीवरपलाशाक्ष्यास्तस्या नाम्बुजवद्गुणा' इत्युभयानुपादाने। आक्षिप्तौपम्ये यथा—'अतिगाढगुणा बाला नाब्जतुल्यस्खलद्गुणा' इत्युभयोपादाने, 'अतिगाढगुणा बाला नाब्जतुल्यगुणा किल' इति निकर्षनिमित्तानुपादाने, 'असौ चन्द्रमुखी बाला नाब्जतुल्यगुणा किल' इति उभयानुपादाने। आर्थौपम्ये यथा—'अतिगाढगुणा बाला नाब्जतुल्यस्खलद्गुणा इत्युभयोरुपादाने, 'अतिगाढगुणा बाला नाब्जतुल्यगुणा किल' इति निकर्षनिमित्तानुपादाने, 'असौ चन्द्रमुखी बाला नाब्जतुल्यस्खलद्गुणा' इत्युत्कर्षहेत्वनुपादाने, 'असौ चन्द्रमुखी बाला नाब्जतुल्यगुणा किल' इति उभयानुपादाने। आक्षिप्तौपम्ये यथा—'अतिगाढागुणास्तस्याः पद्मस्य भङ्गुरा गुणा' इत्युभयोपादाने, 'पङ्कजं गुण वत्सत्यं गुणास्तस्यास्तु भङ्गुरा' इति निकर्षहेत्वनुपादाने, 'पङ्कजं गुणवज्जिग्ये गुणवत्या तया ध्रुवम्' इति उभयानुपादाने।

**न्यूनत्व** इति। उपमेयस्येति शेषः। **क्षीणः क्षीण** इति। मानिनीं प्रतिकामुकस्योक्तिरियम्। **विरमेति**। मानादिति शेषः। यौवनं त्वित्यन्वयः। यातं गतम्। **अस्थैर्य्यस्याधिक्यमिति**। तथा चास्थैर्यस्यापकर्षकहेतुत्वेन उपमेयस्य न्यूनत्वं चन्द्रस्यैवाधिक्यमिति मया व्याख्यायते, तेनात्र यत्किञ्चिदाहुः तन्न विचारसहम् इत्याह—**तेना-**

त्रेति। केचित्काव्यप्रकाशकाराः। किमाहुरित्यत्राह—**उपमानादिति**। व्यतिरेक इत्यन्तेयं प्राचीना कारिका। तल्लक्षणे 'विपर्यये वेति' पदमनर्थकमित्याहुरित्यर्थः। सत्त्वासत्त्वे तत्रत्यातत्रत्ये, यौवनस्यातत्रत्वमाह-**अत्र चन्द्रापेक्षयेति**। ननूद्देश्यार्थस्याधिक्यमेव विवक्षितं प्रकृते च मानिन्यां यौवनास्थैर्य्यं प्रदर्शयितुमुद्देश्यं तदाधिक्यं चोपमेयाधिक्यमेवेत्यत आह—**अस्तु वेति**।

**हनुमदाद्यैरिति**। नलस्य देवदूतभूतस्य दौत्यफलासिद्ध्या विषादोक्तिरियम्। **का गतिरिति**। दूतपथस्य यशसा सीतिकर्तृणां हनुमदादीनामुपमानानामेवाधिक्यादिति भावः। इदमुपलक्षणम्।

> **"चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं**
> **रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।**
> **करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं**
> **वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती॥" इत्यभिज्ञाने**
> **"पादाहतं यदुत्थाय मूर्द्धानमधिरोहति।**
> **स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः॥"**

इति माघे चोपमानभूततया मधुकररजसोः कृतिपदवरपदाभ्यामेवाधिक्यस्योक्तत्वात् काव्यप्रकाशस्य मतमत्रानुपादेयमेव।

## कुसुमप्रतिमा

अन्य इति। ऊह्याः स्वयमुन्नेयाः। तया च अजवदिति तुल्यार्थे वतिप्रत्यये आर्थमौपम्यम्। "जयत्येषा गाढगुणा विनश्यदगुणसम्बुजम्" इति पाठे इवादितुल्यादिपदाभावादोपम्यमाक्षिप्तम्। "अस्या नृपतिकान्ताया नावञ्भङ्गुरा गुणाः" इति पाठे उपमेयगतोत्कर्षकारणानुक्तिः। "अतिगाढगुणायाश्च दृश्यन्ते नाञवद्गुणाः" इति पाठे उपमानगतनिकर्षकारणनुक्तिः। "अस्या नृपतिकान्ताया दृश्यन्ते नाञ्जवद्गुणा" इति पाठे च उपमेयोपमानगतयोरुत्कर्षकारणयोर्द्वयोरप्युनक्तिरित्यनुसन्धेयम्।

न्यूनत्व इति। उत्मेयस्योपमानादपकर्षे इत्यर्थः। दिङ्मात्रमेकप्रकारमात्रमिति तात्पर्य्यं प्रकारान्तरोदाहरणानि तूह्यानीत्यभिप्रायः।

क्षीण इति। काव्यालङ्कारग्रन्थे रुद्रटधृतं पद्यमेतत्। मानेन विमुखी प्रियां प्रति पत्युरुक्तिरियम्। हे सुन्दरि! शशी चन्द्रः, कृष्णपक्षे नित्यं प्रतिदिनमेव क्षीण, क्षीणः सन्नपि, पुनः, शुक्लपक्षे भूयो भूयः पुनः पुनरभिवर्द्धते। किन्तु यौवनं यातं गतं गच्छत्येवेत्यर्थः, किन्तु अनिवर्त्ति अपुनःप्रत्यावर्त्ति अतएव विरम प्रणयकोपाद्विरता भव, प्रसीद मां प्रति प्रसन्ना च भव।

अत्र उपमानभूतस्य चन्द्रस्य पुनः पुनर्वृद्धिराधिक्यहेतुः, उपमेयभूतस्य यौवनस्य च अपुर्वृद्धिर्न्यूनत्वहेतुरिति द्वितीयप्रकारो व्यतिरेक इति ग्रन्थकारस्याशयः। अत्र द्वयोरप्युत्कर्षनिकर्षकारणयोरुक्तिः। तदनुक्तौ तु वैविध्यम् अपरभेदादिकञ्चोहनीयम्।

उक्तस्वकीयव्यतिरेकलक्षणस्य अलङ्कारसर्वस्वकृतकृतव्यक्तिरेकलक्षणनुरूपतया तत्रालङ्कारकौस्तुभकृद्दतदूषणं स्वीकयलक्षणेऽपि प्रसजतीति तामलङ्कारकौस्तुभकृदुक्ति दूषयितुमुत्थापयति अत्रोपमेयेति। अत्र

"क्षीण क्षीणः" इत्यादिश्लोके। आधिकम् उपमातभूतचन्द्रस्थैय्यपिक्षयेति शेषः, यौवनास्थैर्य्यस्य दीर्घ कलवर्त्तित्वात् चन्द्रास्थैर्य्यस्य तु कतिपयदिनमात्रस्थायित्वादिति भावः। तेन उपमानादुपमेयस्यधिक्यमात्रोक्तावेव सर्वत्र सामञ्जस्येन, अत्र व्यतिरेकप्रसङ्गे। विपर्य्यये तदाधिक्यवैपरीत्ये न्यूनत्वे इत्यर्थः। केषाञ्चिदलङ्कारसर्वस्वकृताम्। केचिदलङ्कारकौस्तुभकारा।

दूषयति तन्नेति। विचारसहं वितर्काभारवहनक्षमम्, अयुक्तेत्वेन दुर्बलत्वादिति भावः। अत्र व्यतिरेकलक्षणे, अधिकन्यूनत्वे आधिक्यं न्यूनत्वञ्च, सत्त्वासत्त्वे एव उत्कर्षापकर्षाविव, विवक्षिते अलङ्कारसर्वस्वकृता मया चेति शेषः। अथ तथाप्युदाहृते स सत्त्वयोः किमस्तीत्याह अत्र चेति। 'क्षीण क्षीणः' इत्यादौ चेत्यर्थः। असत्त्वमपकर्षः। स्पष्टमेवेति। अपुनर्वृद्धिक्षयशालित्वादिति भावः।

ननु विवक्षाया अनियतत्वात् युष्माकमुत्कर्षरूपेणाधिक्यविवक्षावत् अस्माकमस्थेर्य्यादि धर्म्मन्तरेणाप्याधिक्यविवक्षा सम्भवति। तथा च "क्षीणः क्षीणः—" इत्यादौ यौवनस्थैर्य्यस्यैव प्रकृतमानभङ्गोपयोगितया आधिक्यरूपेण विवक्षाया औचित्यमित्याह अस्तु वेति। अत्रोदाहरणे "क्षीणः क्षीणः—" इत्यादौ, यथाकथञ्चित् यौवनस्यास्थैर्य्य पेणाधिक्यविवक्षया, गतिर्लक्षणसदङ्गमनोपायः।

हनूमदिति। नैषधचरितनवमसर्गे दमयन्तीसनिनिधावात्मानं प्रकाशयती नलस्य सनिर्वेदोक्तिरियम्। "स्वनाम यन्नाम सुधाभ्यधामाह महेन्द्रकार्य्य महदेतदुज्झितम्।" इति प्रथमार्द्धम्। हनमदाद्यैर्दूतैः दुतपथो दौत्यविषयः, यशसा सितीकृतो धवलीकृतः मया पुनर्दूतेन, द्विधां हसैः शत्रूणां हास्यैः स दूतपथः सितीकृतः।

इत्यादिष्वित। का गतिर्व्यतिरेकप्रवेशस्य क उपायः? तथा चात्र उपमानभूतहनुमदाद्यपेक्षया उपमेयभूतस्य नलस्यापकर्षप्रतीतेरेव व्यतिरेको वक्तव्यः स ञ्च "विपर्य्यये वा" इत्युक्तिं विना न सम्भवतीति भावः। इति हेतोः "न्यूनताथवा" इति सुष्ठुक्तं युक्तिसङ्गततया साधूक्तम्, "विपर्य्यये वा" इत्यनुसारादित्याशयः।

तदेवं व्यतिरेकभेदमङ्गलम्।

## विमला

क्षीण इति।—मानिनीं प्रत्युक्तिरियम्। हे सन्दरि! शशी—चन्द्र, क्षीणः क्षीणः अपि भूयः भूयः,—पुनः पुनः, अभिवर्द्धते—अभितो वर्द्धते, सर्वतो लभ्यमानप्रकाशो भवतीति यावत्, एतत् सत्यं, विरम—निवर्त्तस्व, मानात् इति शेषः, प्रसीद—प्रसन्ना भव, यातं—गतं, तु—पुनः, यौवनम् अनिवर्त्ति—न निवर्त्ति, न निवर्त्तते इत्यर्थः, गतं यौवनं गतमेव, न पुनः वर्द्धते इति भावः। अत्र पुनः वर्द्धनम् उपमानचन्द्रोत्कर्षकारणम्, अपुनः वर्द्धनम् उपमेययौवननिकर्षकारणम् इति ज्ञेयम्। आर्य्या छन्दः। काव्यालङ्कारस्य पद्यमेतत्।

उपमानन्यूनतायां व्यतिरेकमस्वीकुर्वतां मतं दूषयति, अत्रोपमेयेति।—चन्द्रास्थैर्य्यमत्रोपमानं बोध्यं, तेन "क्षीणः क्षीणः इत्यादावाधिक्यव्यतिरेकेणैव सङ्ग्रह सम्भवेन, विपर्य्यये वा—न्यूनतायां वेत्यर्थः। तथा हीति।—सत्त्वासत्त्वे—स्थायित्वास्थायित्वे, उत्कष्टत्वापकृष्टत्व इत्यर्थः। ननु यौवनस्थैर्य्यव्याधिक्यस्य निवेदनं प्रकृतस्य मानभङ्गस्य उपकारकमिति तस्यैव वैचित्र्याधायकत्वं, न तु यौवनासत्त्वस्य, एवं दोषः इत्याशङ्क्य अनुपपत्त्यन्तरं दर्शयति—अस्त्विति।

हनूमदाद्यैरिति।—दमयन्तीं प्रति दौत्येन इन्द्रादिभिः प्रेरितस्य तत्र च अकृतार्थस्य नलस्य विषादोक्तिरियम्। हनूमादाद्यैः,—हनूमत्प्रमुखैः, दूतपथः यशसा सितीकृतः,—उज्जवलीकृतः, मया पुनः द्विषां—शत्रूणां,

हसैः,—हास्यैः दूतपथः सितीकृतः, मां दौत्ये अकृतकार्य्यं दृष्ट्वा शत्रवो हसन्तीति तेषां हास्यसितिम्ना स एव मार्गोऽलङ्कृत इति भावः। अत्र प्रभुप्रयोजननिष्पादकत्वेन हनूमदादेरुपमानस्योत्कृष्टत्वं, तद्व्यतिरेकेणोपमेयस्य नलस्यापकृष्टत्वञ्च प्रतीयते; इह दूतयोरुपमानोपमेयभाव विवक्षणेऽपि उपमानस्यैवाधिक्यं, न तूपमेयस्य इति ज्ञेयम्। अलङ्कारकौस्तुभकारास्तु—"उभयोः साम्यप्रोक्तौ विशेष उपमेयगे व्यतिरेकः" इति लक्षयित्वा, "ननु तथाऽपि क्वचिदुपमानादुपमेयापकर्षेऽप्ययं दृश्यते, यथा—'हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः' अत्र हि नलेन हनूमदादिदौत्यापेक्षया स्वकृतदौत्ये हीनत्वं प्रदर्श्यते इति चेत्, न; उत्कर्षापकर्षौ ह्यत्र न वास्तवाभिमतौ, किन्तु प्रकृतार्थातिज्ञापकत्वानतिशायकत्वस्वरूपौ, प्रकृतश्चात्र नलनिर्वेदः, तदुत्कर्षकत्वञ्च दौत्यनिष्ठौक्तपकर्ष-स्याप्यस्तीति न दोषः" इत्याहुः। वंशस्थविलस्य पादद्वयमेतत्—"वदन्ति वंशस्थविलं जतौ जरौ" इति तल्लक्ष-णम्। नैषधीयचरितस्येदं पद्यार्द्धम्।

## लक्ष्मी

**क्षीयः क्षीणोऽपीति**। **काव्यालङ्कारे** पद्यमिदम्। मानिनीं प्रति प्रियहितकारिणः कस्यचित्सुहृद उक्तिरि-यम्। हे सुन्दरि ! शशी चन्द्रः कृष्णपक्षे सत्यं निश्चितमेव क्षीणः क्षीणोऽपि अत्यन्तकृशोऽपि पुनः शुक्लपक्षे भूयो भूयः पुनः पुनः अभिवर्तते, किन्तु यातं गतं यौवनं तु अनिवर्त्ति अपरावृत्तिशीलम् अतो हेतोः विरमनादिति शेषः मानं मुञ्चेत्यर्थः प्रसीद् प्रसन्ना च भव, केवलं मानमोचनं नात्रोद्देश्यमित्याशयः। **आर्याच्छन्द**स्तल्लक्षणन्तूक्तं प्राक्।

(अत्रोपमानभूतस्य शशिनः क्षयेऽपि पुनर्वृद्धिरित्याधिक्यम्, उपमेयभूतस्य यौवनस्य तु न पुनरावर्त्तनमि-तिन्यूनत्वम् इत्युपमेयापेक्षयोपमानस्योत्कर्षरूपो व्यतिरेकालङ्कार इति ग्रन्थकृतामाशयः। तथा चात्र द्वयोरप्याधि-क्यन्यूनत्वकारणयोः पुनः पुनर्वृद्धिरपुनर्वृद्धयोरुक्तिः। तदनुक्तौ तु त्रैविध्यम्, अन्यप्रकारान्तरादिकञ्च स्वयमुदाहरणीयम्।

प्राचा अलङ्कारसर्वस्वकृता हि व्यतिरेकलक्षणम्—'उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेक इति व्यधायि तदनुसारेणैवात्र व्यतिरेकलक्षणं ग्रन्थकृताऽपि विहितम्। तत्रालङ्कारसर्वस्वकृतामुपरि अलङ्कारकौस्तुभ-कृता यद्दूषणं दत्तं तत्स्वकीयलक्षणेऽप्यापद्यत इति तामलङ्कारकौस्तुभकृदुक्तिं निरसितुमुत्थापयति—**अत्रोपमेय-भूतेति**। अत्र 'क्षीणः क्षीणोऽपि इत्याद्युपमेयभूतं यदयौवनं तस्यास्थैर्यम् उपमानभूतचन्द्रापेक्षया न्यूनत्वावसायि चाञ्चल्यं तस्य आधिक्यमुत्कर्षः यौवनास्थैर्यस्य चिरकालस्थायित्वात्, चन्द्रास्यथैर्यस्य तु कतिपयदिनमात्रवर्त्तित्वा-दितिभावः। तेन उपमानादुपमेयस्योत्कर्षमात्रोक्तावेव क्वापि दोषाप्रसक्त्या, अत्र व्यतिरेकप्रकरणे। विपर्यये अनाधिक्ये न्यूनत्वे इतियावत्। केषाञ्चित् अलङ्कारसर्वस्वकाराणाम्। अनर्थकमनुपयुक्तम् उपमानाधिक्ये उपमे-यन्यूनत्वे व्यतिरेकस्यैवानङ्गीकारादित्याशयः। केचित् अलङ्कारकौस्तुभकाराः।

निराकरोति—**तन्नेति**। विचारसहं वितर्कभारधारणयोग्यम्। असमीचीनत्वेन दुर्बलत्वादित्याशयः। अत्र व्यतिरेकलक्षणे, अधिकन्यूनत्वे उत्कर्षापकर्षे उपमानोपमेययोरितिशेषः; सत्त्वासत्त्वे एव स्थैर्यास्थैर्य एव विवक्षिते अलङ्कारसर्वस्वकृता तदनुसारिणा मया चेति शेषः। नन्वेवमपि उक्तोदाहरणे सत्त्वासत्त्वयोः किमस्तीति-जिज्ञासायामाह—**अत्र चेति**। 'क्षीणः क्षीणः' इत्यादौ चेत्यर्थः। चन्द्रापेक्षयोपमानापेक्षया, यौवनस्योपमेयस्य असत्त्वमस्थैर्यम्, स्फुटमेव अपुनर्वृद्धिनाशशालित्वादित्यभिप्रायः।

ननु विवक्षायां नियमनभावेन यथा भवद्भिश्चन्द्रयौवनयोः सादृश्यं विवक्षितं तथा नास्ति किन्तु तत्क्षययोः, तत्र चन्द्रक्षयस्य त्वबाध्यतयाधिक्यम्, मानप्रसादानुगुणतया प्रतकृतवाक्यार्थानुगुणत्वात्। तथा चात्रायं

हि समुदितोऽर्थः—'चन्द्रो हि पुनः पुनरागमनेन लोके सुलभः अतो न तादृशमाहात्म्यशाली, इदं पुनर्यौवनमपुनरागमनेनातिदुर्लभमिति मानादिभिरन्तरायैः परमचतुरया भवत्या मुधा गमयितुं न युक्तम्' इति अन्यथा चन्द्रस्यैवाधिक्ये 'किमित्यस्य क्षुद्रस्य यौवनस्यार्थे मया मानाद्विरंस्यते गच्छतु नाम यौवनम् इति विपरीतेनार्थेन प्राकारणिकार्थस्यापुष्टतापत्तेस्तस्मादत्रोपमानस्याधिक्ये व्यतिरेकालङ्कार इत्युक्तमित्याशयेनोदाहरणान्तरं प्रदर्शयितुमाह—**अस्तु** वेति। अत्रोदाहरणे 'क्षीणः क्षीणोऽपि' इत्यादौ यथाकथञ्चित् यौवनास्थैर्यरूपेणोत्कर्षविवक्षया गतिर्निर्वाहः लक्षणसमन्वयोपायः।

**हनूमदाद्यैरिति**। नैषधनवसर्गे दमयन्तीं प्रति देवदूतभूतस्य नलस्य दौत्यफलासिद्धया विषादोक्तिरियम्। अस्य पूर्वार्धन्तु—

'स्वनाम यन्नाम मुधाभ्यधामहं महेन्द्रकार्यं महदेतदुज्झितम्' इति।

हनूमदाद्यैर्हनूमत्प्रभृतिभिर्दूतैः दूतपथो दौत्यविषयः यशसा स्वस्वामिनो यथाभिमतार्थानुष्ठानजन्यया प्रशंसया सितीकृत उज्ज्वलीकृतः, मया पुनर्दूतेन द्विषां हसैः शत्रूणां हास्यैर्न तु यशसेतिशेषः स दूतपथः सितीकृत इत्यर्थः। वंशस्थं छन्दस्तन्तल्लक्षणं चोक्तं प्राक्।

**इत्यादिष्विति**। का गतिर्व्यतिरेकसद्भावस्य क उपायः? । तथा च दूतपथस्य हनूमदाद्युपमानापेक्षया उपमेयभूतस्य नलस्य न्यूनत्वप्रतीतेरेव व्यतिरेकवाच्यत्वात् तस्य च 'विपर्यये वा' इति कथनमन्तरा न सम्भवतीत्याशयः। इति हेतोः न्यूनताऽथवा' इति सुष्ठूक्तम् औचित्येन समीचीनं प्रतिपादितम्, 'विपर्यये वा' इत्युक्तानुसारादितिभावः।

## रुचिरा

उपमेयादुपमानाधिक्यमुदाहर्तुं प्रवृत्त आह—**न्यूनत्वे** 'उपमेयस्योपमाना'दिति शेषः। उपमानादुपमेयन्यूनत्वमुपमेयादुपमानस्याधिक्यं तस्मिन् सति व्यतिरेक इति भावः। **दिङ्मात्रम्**। **यथा**—

'**क्षीणः क्षीणोऽ**त्यन्तं कृशः। **अपि**। **शशी** चन्द्रः। **भूयोभूयः** पुनःपुनः। **अभिवर्द्धते**। इति-**सत्यम्**। हे **सुन्दरि**! मानात्-**विरम्**। **प्रसीद**। **यातं** गतम्। **यौवनम्**। **तु** पुनः। अनिवर्त्ति न प्रत्यागन्तृ। रुद्रटालङ्कारस्येदं पद्यम्। अत्रार्य्याछन्दः॥ १७७॥'

सङ्गमयति। **अत्रोदाहृते** पद्ये। **उपमेयभूतयौवनास्थैर्य्यस्योप**मेयभूतं यद् यौवनं तस्यास्थैर्य्यमुपमानभूतचन्द्रापेक्षया न्यूनत्वावसायि चाञ्चल्यं तस्य। **आधिक्यमतिशयः**। अयम्भावः—चन्द्रस्योपमानभूतस्यास्थैर्य्यरूपदोषन्यूनत्वेनोत्कृष्टत्वम्, यौवनस्योपमेयभूतस्यास्थैर्य्यरूपदोषाधिक्येनापकृष्टत्वम्; अत एवात्र व्यतिरेक उपमानाधिक्यनिबन्धनः। इति।

अस्यानुषङ्गिकमपि फलं दर्शयति—**अत्र**। **तेनो**पमानाधिक्येन (उपमेयन्यूनत्वेन च)। '**उपमानात्**। **उपमेयस्य**। **आधिक्ये** उत्कर्षे। **विपर्य्यये**ऽनाधिक्येऽ**नुत्कर्ष** इति यावत्। **वा**। **व्यतिरेकः**।' **इति**। **केषाञ्चिदलङ्कारसर्वस्वकारादीनाम्**। **लक्षणे** व्यतिरेकलक्षणे। '**विपर्य्यये**ऽनाधिक्ये। **वा, इतिपदम्**। **अनर्थकमनुपयुक्ताम्** 'उपमानाधिक्ये (उपमेयन्यूनत्वे) व्यतिरेकस्यैवास्वीकारा'दिति शेषः।' **इति**। **यत्**(कर्म)। **केचित्** प्रकाशकारानुबन्धिन इति भावः। **आहुः**। **तत्**। **न**। **विचारसहम्**। **तथाहि** 'उपपाद्यते' इति शेषः। **अत्र**। **अधिकन्यूनत्वे** 'उपमानोपमेययो'रिति शेषः। **सत्त्वासत्त्वे स्थैर्य्यास्थैर्य्ये**। **एव**। **विवक्षिते**। **अत्र**। **च** पुनः। **चन्द्रापेक्षयोपमाना**-

पेक्षया । **यौवनस्योपमेयस्य** । **असत्त्वमस्थैर्य्यम्** । **स्फुटम्** । **एव** 'अत उपमेयस्य न्यूनत्वमुपमानस्य चाधिक्यमिति भावः । ननु आधिक्यमात्रस्य व्यतिरेकानुबन्धित्वं स्वीकृत्य यौवनास्थैर्य्याधिक्यस्यैवोपमेयाधिक्यं स्वीक्रियतां को दोषः । इत्याशङ्क्याह—**अस्तु** । वा । **अत्र** । **उदाहरणे** । **यथाकथञ्चित्** । गतिर्निर्वाह उपमेयाधिक्यस्वीकारः । **किन्तु** ।—'**हनूमदाद्यैर्हनुमत्प्रभृतिभिः** । **यशसा** स्वस्वामिनो यथाऽभिमतार्थानुष्ठानजन्यया प्रशंसया । **दूतपथो** दूतमार्गः । **सितीकृत** उज्ज्वलीकृतः । **मया** । **पुनः** । **द्विषां** शत्रूणाम् । **हसैर्हास्यैः** । 'नतु यशसे'ति शेषः । सितीकृत इति पूर्वतोऽन्वेति ।' स्वनाम यन्नाम मुधाभ्यधामहो महेन्द्रकार्य्य महदेतदुज्झितम् ।' इति तत्पूर्वार्द्धम् । दमयन्तीं प्रति दौत्येन प्रेषितस्य दौत्येऽकृत्तार्थत्वेन विषण्णस्य नलस्योक्तिरियम् । वंशस्थं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥' **इत्यादिषु** । **का** । **गतिः** 'न काऽपि गति'रिति भावः । **इति** । **सुष्ठु** । **उक्तम्** 'विपर्य्यये वा । इति परिष्कुर्वद्भिरस्माभि'रिति शेषः । '**न्यूनताऽथवा' इति** । विवृतिकाराः प्राहुः—'अत्र प्रभुप्रयोजननिष्पादकत्वेन हनूमदादेरुपमानस्योत्कृष्टत्वम्, तद्व्यतिरेकेणोपमेयस्य नलस्यापकृष्टत्वं च प्रतीयते। अत्र दूतयोरुपमानोपमेयभावविलक्षणत्वेऽप्युपमानस्यैवाधिक्यम्, नतूपमेयस्य ।' इति ।

अयं पर्य्यालोकः—'क्षीणः क्षीणोऽपी'ति पद्यमुपमानाधिक्यव्यतिरेकानुगृहीतमित्यलङ्कारसर्वस्वकाराणां सिद्धान्तः, एते हि—शशिनः क्षैण्येपि पुनर्वृद्धिरित्यस्योपमानस्योत्कर्षः, यौवनस्य क्षैण्येऽसत्त्वमेव, किं पुनस्तस्योत्थानम्; इत्यस्योपमेयस्यापकर्षः । एवं सत्युपमानापेक्षयोपमेयन्यूनत्वमुपमेयापेक्षयोपमानाधिक्यं चेति तद्रूपोऽत्र व्यतिरेकः । इत्याहुः । प्रकाशानुयायिनां पुनः—उपमेयादुपमानाधिक्यरूपो व्यतिरेक एव न, का पुनस्तत्सत्त्वासत्त्वचर्चा ? 'क्षीणः क्षीणोपी'त्यपि पद्यमुपमेयाधिक्यव्यतिरेकानुगृहीतमेवेति सिद्धान्तः, एते हि—अत्र न शश्युपमानभूतः, न वा यौवनमुपमेयभूतम्, उभयोः सादृश्यस्यैवाविवक्षितत्वात् । किन्तु तत्ततदोः क्षीणत्वे उपमानोपमेयभूते, शशिक्षीणत्वस्योपमानत्वेन यौवनक्षीणत्वस्योपमेयत्वेन च विवक्षितत्वात् । एवं यौवनक्षीणत्वस्यापुनरावर्त्तनशीलतयाऽऽधिक्यं, शशिक्षीणत्वस्य पुनर्निवर्त्तनीयतया न्यूनत्वम् । इत्युपमेयस्यैवोपमानापेक्षयाऽऽधिक्यम् । इत्याहुः । क्षीणत्वं दोषास्तस्याधिक्यमपकर्षावहत्वेन स्वानुगृहीतस्य न्यूनत्वम् । इत्युपमेयस्यैवोपमानापेक्षयाऽऽधिक्यम् । इत्याहुः । क्षीणत्वं दोषस्तस्याधिक्यमपकर्षावहत्वेन स्वानुगृहीतस्य न्यूनत्वकृते एवेत्युपमेयस्य यौवनस्य न्यूनत्वम्, नचात्र यौवनमुपमेयभूतमेव नेति वाच्यम्, क्षीणत्वस्य यौवनसम्बन्धित्वेन पृथङ्निर्देशाभावात्, क्षीणत्वशालितयैव यौवनस्य च निर्देशात् । अत्रैवापित्वोरप्यानुकूल्यम् । इति कविराजानुसारिण आहुः । वयं तु ब्रूमः—अस्तु वा तत्र सर्वत्रानैकान्त्यम्, किं तु—'असौरभं मुखं तस्या नाब्जवत् सुरभि श्रितम् ।' 'सुचारुरूपं वदनं मृगीदृशां सुधानिधित्वेन कलाऽब्धिरभ्यभूत् । कुचौ सुवर्णावपि नामलाननौ सुवर्णकुम्भाविव हन्त सर्वतः ॥' 'सुरम्यमपि ते वक्रं चन्द्रश्चन्द्रः सुविश्रुतः ।' इत्यादौ न कथमपि सहृदयेतरेणोपमेयाधिक्यमभिधातुं शक्यते । इत्युपमेयमात्राधिक्येऽस्य स्वीकारः सर्वथाऽऽग्रहमूलः । इति दिक् ।

**सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः ॥ ५४ ॥**

**सा सहोक्तिर्मूलभूतातिशयोक्तर्यदा भवेत्।**

अतिशयोक्तिरप्यत्राभेदाध्यवसायमूला कार्यकारणपौर्वापर्यविपर्ययरूपा च । अभेदाध्यवसायमूलापि श्लेषभित्तिकान्यथा च ।

---

## विवृतिः

सहोक्त्यलंकारमाह—**सहार्थस्येति** । सहार्थश्च साकं-सार्ध-समं-सजु: प्रभृतिः । **एकं** वस्तुवाचकमन्वयि । **अभेदाध्यवसाय**मूला अभेदाध्यवसायरूपा । **श्लेषभित्तिका** श्लेषप्रतिपन्नभेदमूला । **अन्यथा** अश्लेषभित्तिका । संबन्धिभेदादवगतभेदमूलेति यावत् ॥

## विवृतिपूर्तिः

**सहोक्तीति** । 'सहभावस्योक्तिः सहोक्तिः' इति **हेमचन्द्रेण** सूत्रितम् । एतेनान्वर्थसंज्ञापि दर्शिता ॥

## विज्ञप्रिया

सहोक्त्यलङ्कारमाह—**सहार्थस्येति** । **वाचकं द्वयोरिति** । उभयत्र स्वार्थान्वयबोधकमित्यर्थः । भिन्नविभक्तिकमपि पदं सहार्थस्य बलात्समानविभक्तिकभिन्नविभक्तिपदार्थयोरभेदेन स्वार्थान्वयबोधकमित्यर्थः ।

**अभेदाध्यवसायमूलेति** । नच भेदाध्यवसायस्यैव अतिशयोक्तित्वेन सा कथं तन्मूलेति वाच्यम्, शब्दस्यैवाध्यवसायस्यातिशयोक्तित्वेन तस्या वक्तृतदध्यवसायमूलत्वात् । भित्तिराश्रयः श्लेषाश्रितेत्यर्थः ।

## लोचन

गुणः सौन्दर्य्यादिः, सूत्रं च ।

सत्त्वासत्त्वे, शोभनाशोभनत्वे ।

हनूमदाद्यैरित्यादि दमयन्तीं प्रति देवदूतस्य नलस्य वचनम् । द्विषां हसैर्दूतत्वं परित्यज्य स्वयं नायकत्वप्रतिग्रहादिति भावः ।

सहार्थस्य सहपर्य्यायशब्दस्य । एकं क्रिया, गुणो वा । मूलभूता, बीजभूता ।

अन्यथाऽश्लेषभित्तिका । रागो लौहित्यम्, अनुरागश्च । श्लेषोह्यर्थता । उपमानोपमेयभावोऽत्र वैवक्षिकः । द्वयोः प्रकृतत्वात् । प्रकृतत्वं च द्वयोः प्रज्ञाविशेषत्वात् । अत्र तृतीयान्तनिर्दिष्टस्य गुणभावेनोपमानविवक्षा । किञ्चात्रोदाहरणे अभेदाध्यवसायोऽपि कार्य्यकारणैककालीनतासंपृक्तः अधरदलस्य रागभजनानन्तरमेव प्रियस्य रागदर्शनात्; तेनात्रातिशयोक्तिद्वयमप्यवस्थितं, सम्बन्धिभेदाद् आश्रयभेदाद् । यदुक्तं राघवानन्दैः—"एकोऽपि धर्म आरोपमाश्रित्य सहार्थबलादन्यधर्मण्यपि सम्बद्धश्चेत्तदा सहोक्तिरिति, तदसङ्गतम् । अस्यातिशयोक्तिमूलत्वस्य तैरपि स्वयमुपगमात् । अध्यवसायमूलायामतिशयोक्तौ पृथग्बीजस्यारोपस्यासम्भवः । तदाहुश्चण्डीदास-

प्रभृतयः—अनिगीर्णस्य विषयस्यान्यतादात्म्यप्रतीतिरारोपः । निगीर्णस्य त्वध्यवसाय इति । अलङ्कारसर्वस्व-कृताऽऽरोपे रूपकादिरध्यवसाये चोत्प्रेक्षादिरेवेति विवेकः कृतः ।

## कुसुमप्रतिमा

यथाकथञ्चित् सादृश्यमूलामेव सहोक्तिं लक्षयति सहार्थस्येति । अत्रापि यत्रेति यदर्थकमव्ययम् । तथा च यदा अतिशयोक्तिः भेदे अभेदाध्यवसायमूला कार्य्यकारणयोः पौर्वापर्य्यविपर्य्यरूपा चातिशयोक्तिः, मूलभूता प्रयोजिका भवेत्, तदा सहार्थस्य सह साकं प्रभृति-सहार्थवाचकशब्दस्य बलात् सामर्थ्यात्, एकं वस्तु पदार्थः, द्वयोः पदार्थयो यत्र यत् वाचकमन्वयि भवेत्, सा सहोक्तिर्नाम अलङ्कारो भवेत् ।

तथा च अतिशयोक्तिमूलकत्वे सति सहार्थकशब्दप्रयोज्य एकपदाथस्यानेकपदार्थेऽन्वयः सहोक्तिरिति फलितम् ।

मृत्यन्तदलात् "लक्ष्मणेन समं रामः कननं गहनं ययौ" इत्यादौ नातिव्याप्तिः । एतञ्च वृत्तावपि वक्ष्यते । एतेन "सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्" इति काव्यप्रकाशलक्षणं कटक्षितम् । वस्तुतस्तु "लक्ष्मणेन समम्" इत्यादौ वैचित्र्याभावादलङ्कारसमान्यलक्षणागमनेनैव विशेषलक्षणस्यापि गमनासम्भवादतिव्याप्त्यसम्भव एवेति "मूलभूतातिशयोक्तिर्यदा भवेत्" इति मूलवत् सत्यन्यदलस्य स्वरूपमात्रकथनम् । सहार्थकशब्दप्रयोज्य इत्यभिधानात् "कमलमिव मुखं मनोज्ञम्" इत्यादौ एकमनोज्ञत्वपदार्थस्य कमलमुखयोरन्वयेऽपि नातिव्याप्तिः ।

सह सहार्थकशब्दस्योक्तिः सहोक्तिरिति व्युत्पत्तिः ।

लक्षणे अतिशयोक्तिपदं नातिशयोक्तिसामान्यपरम् असम्भवात् किन्त्वति शयोक्तिविशेषपरं तथैव सम्भवादित्याह अतिशयोक्तिरिति । अभेदाध्यवासायमूला भेदे अभेदाध्यवसायघटिता । श्लेषभित्तिका श्लेषप्र-युक्तभेदमूला, अन्यथा अश्लेषप्रयुक्तभेदमूला च ।

## विमला

सहोक्तिमाह, सहेति ।—यत्र सहार्थस्य बलात्—सामर्थ्यात्, एकं, वस्तु इति शेषः, द्वयोः वाचकं स्यात्, तथा यदा—यदि, तत्र अतिशयोक्तिः मूलभूता—कारणभूता, भवेत्, तदा सा सहोक्तिः । तथाऽहि—सहार्थश्च सह, साकं, समं, सार्द्धं, सजुः अनुप्रभृतिः, तस्य एकं वस्तु वाचकम्, अभेदाध्यवसानमूलामभेदाध्यवसायमूलां वाऽतिश-योक्तिमुपजीव्य प्रधानाप्रधानायोर्द्वयोरपि कथमपि यवान्वयि स्यात्, सा सहोक्तिरिति फलितम् । अलङ्कारकौस्तु-भकारास्त्वाहुः;—"धर्मयोरभेदाध्यावसायमूलत्वस्थले एव सहोक्तिर्भवितुमर्हति, कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययात्मकातिशयोक्तिमूलभेदस्तु प्राचीनोक्तो न युक्तः, तत्रातिशयोक्तेरेवालङ्कारत्वसम्भवात् । "तव कोपोऽरिनाशश्च जायते युगपन्नुप !" इत्यतिशयोक्त्यपेक्षया "तव कोपोऽरिनाशञ्च सहैव नृप ! जायते" इति सहोक्तौ विच्छित्तिविशेषाननुभवात्, तस्यैव च अलङ्कारपार्थक्यव्यवस्थापकत्वात् । न चैवं धर्मयोरभेदाध्यवसान-स्थलेऽप्यतिशयोक्तिसत्त्वात् । कथं पार्थक्यमिति सहोक्त्यच्छेद इति वाच्यं, तत्राभेदाध्यवसायस्य सहोक्त्यम्ब-कारकत्वेन गुणतया सहोक्तितिरस्काराभावात् । पौर्वापर्य्यविपर्य्ययस्थले च सहोक्तेरेवातिशयोक्त्युप स्थापकत्वेन वैषम्यात् । किञ्च, उपमानेनोपमेयनिगरणमेवातिशयोक्तिरलङ्कारः, निगरणमात्रन्तु न तथा, अतोऽत्रातिशयोक्तिवि-षयाभावात् सहोक्तिरेवेति । वस्तुतः दीपके तुल्ययोगितायां वा तदन्तर्भावः । तत्रैकरूपेण सर्वत्र धर्मान्वयः, अत्र तु

गुण प्रधानभावेन इति विशेषस्तु तदवान्तरभेदत्वमेव साधयति, न त्वतिरिक्तत्वं, विच्छित्तिविशेषानाधायकत्वात् तस्मात् प्राचीनानुभवमात्रप्रमाणकमेवास्याः पार्थक्यम्" इति ।

अतिशयोक्तिरिति ।—अभेदाध्यवसायमूला—अभेदाध्यवसायरूपा इत्यर्थः, श्लेषभित्तिका—श्लेषनिबन्धना, श्लेषप्रतिपन्नभेदमूला इत्यर्थः, अन्यथा—अश्लेषभित्तिका, श्लेषमनुपजीव्यैव समार्थता इति यावत्, सम्बन्धिभेदादवगतभेदमूलेत्यर्थः ।

## लक्ष्मी

कथमपि प्रकृतसादृश्यमूलकत्वादेव सहोक्त्यलङ्कारं लक्षयति—**सहार्थस्येति** । अत्र यत्रेतिपदं यदार्थकमव्ययम् । यदा अतिशयोक्तिः भेदे अभेदाध्यवसायमूला कार्यकारणयोः पौर्वापर्यविपर्ययरूपा चातिशयोक्तिरित्यर्थः मूलभूता चमत्कारविशेषाधायकतया प्रयोजिका भवेत्, तदा सहार्थस्य साहित्यार्थकस्य शब्दस्य साकं सार्धं समं सजुरित्याद्यन्तमस्य पदस्येति यावत् बलात् सामर्थ्यात् एकं पदम् द्वयोःपदार्थयोः यत्र यद्वाचकं लक्षणया अन्वयिभवेत्, सा सहोक्तिर्नाम अलङ्कारो भवेत् ।

एवञ्च—मूलभूतातिशयोक्तेर्विद्यमानत्वे सति सहार्थकशब्दप्रयोज्य एकपदार्थस्याने कपदार्थे संम्बन्धः सहोक्तिरितिलक्षणं फलितम् । 'लक्ष्मणेन समं रामः काननं गहनं ययौ'इत्यादावतिव्याप्तिवारणाय सत्यन्तदलोपादानम् । एतच्च वृत्तावपि स्फुटीभविष्यति । 'सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्' इति **काव्यप्रकाशकृ**ल्लक्षणमेतेनाननुमतं भवतीतिध्वनितम् । यदि चोक्तस्थले विच्छित्तिविशेषाभावेनालङ्कारसामान्यलक्षणस्यैवाप्रवृत्तेः विशेषलक्षणस्यापि प्रवृत्त्यसम्भवादतिव्याप्त्यसम्भव एवेति विभाव्यते तदा स्वरूपमात्रप्रतिपादनार्थमेव सत्यन्तदलोपादानम्'कमलमिव मुखं मनोज्ञम्' इत्यत्र एकमनोज्ञत्वपदार्थस्य कमले मुखे च सम्बन्धेऽपि अतिव्याप्तिवारणाय सहार्थकशब्दप्रयोज्य इत्युपादानम् । सह सहार्थकस्य उक्तिः सहोक्तिरित्यन्वर्थेयं संज्ञा ।

अत्र सहशब्दार्थः साहित्यम् तच्चैकजातीयैककालिकक्रियाद्यन्वयित्वसमनियतम् । यथा 'पुत्रेण सहागतः पिता' इति । अत्र 'आगत' इतिपदं पितापुत्ररूपोभयान्वयागमनबोधकम् । पुत्रप्रतियोगिकसाहित्यवान् पिता आगत इतिशाब्दबोधः । पुत्रवृत्त्यागमनसमानकालिकसमानदेशागमनवान् पितेतिमानसो बोधः । तत्र तृतीयान्तस्य 'पुत्रेण' इत्यस्य विशेषणतया गुणत्वम्, प्रथमान्तस्य विशेष्यतया प्रधानत्वम् ॥ एवञ्च प्रथमान्ते आगमनस्य । शाब्दोऽन्वयः, तृतीयान्ते तु तस्य सहार्थसामर्थ्यादार्थः । तथा च यत्र 'सह युक्तेऽप्रधाने' २/३/१९ इति पा. सूत्रेण सहार्थ योगेऽप्रधाने तृतीयाविहिता तत्रैवायमलङ्कारः गुणप्रधानभावावच्छिन्नयोः शाब्दार्थमर्यादयो रेकधर्मसम्बन्धस्य तत्रैवोपस्थितेः । वक्ष्यमाणे समुच्चये तूभयत्र प्राधान्यम्, एकान्वये च शाब्द एवेति ततो भेदः । 'चैत्रमैत्रैः सह गच्छतः' इत्यादावपि तथैवेति नास्य विषयः । 'चैत्रमैत्री गच्छत' इत्यादौ तु शब्दशक्त्यैवोभयाभिधानमिति तत्रापि नास्य विषयः । एतेन—

**'शशिना च निशा निशया च शशी निशया च विभाति नभः ।**

**पयसा कमलं कमलेन पयः पयसा कमलेन विभाति सरः ॥'**

इत्यादौ कुतो नायमलङ्कार इति शङ्का परास्ता, शशिनेत्यादेर्हि 'हेतौ' २/३/२३ इति सूत्रेण 'पुण्येन दृष्टो हरिः' इत्यादिवत् हेत्वर्थे तृतीयाविधानात् । एवञ्च कोऽलत्रालङ्कार इतिजिज्ञासायां वक्ष्यमाणान्योन्यालङ्कारस्यैव स्वीकर्त्तुमुचितत्वात् अतएव कुवलयानन्देऽन्योन्यालङ्कारस्योदाहरणम्—

'त्रियामा शशिना भाति शशो भाति त्रियामया'

इति दत्तमित्यवधेयम्। स्पष्टञ्चेदमुद्योतवामनीयादिषु।

नन्वेतावता 'पुत्रेण सहागतः पिता' इत्यादावयामलङ्कारः स्यादेवेति चेत्! सर्वत्र विच्छित्तिविशेषत्वस्यैवालङ्कारत्वाभ्युपगमादित्युक्तं मुहुर्मुहुरस्माभिः। विच्छित्तिविशेषश्चास्य। श्लेषाश्रयकाभेदाध्यवसानात्मकेन केवलाभेदाध्यवसानेन वातिशयेन भवतीत्यदोषः।

लक्षणे अतिशयोकितपदमतिशयोक्तिविशेषपरमेव तथैव सम्भवात्, न तु अतिशयोक्तिसामान्यपरम् असम्भवादितिसूचयितुमाह—**अतिशयोक्ति**रिति। अभेदाध्यवसायमूला भेदे अभेदाध्यवसायरूपा श्लेषभित्तिका भित्तिराश्रयः श्लेषाश्रितेत्यर्थः श्लेषप्रतिपन्नभेदमूलेतितात्पर्यमं, अन्यथा अश्लेषभित्तिका सम्बन्धिभेदादवगतभेदमूलेत्यर्थः।

## रुचिरा

सहोक्तिं लक्षयति—**१३५ यत्र। सहार्थस्य** सहार्थकस्य शब्दस्य सह समं सार्धं साकमित्याद्यन्यतमस्य पदस्येति यावत्। **बलात्** सामर्थ्यात्। **एकं** 'पद'मिति शेषः। **द्वयो**'रर्थयो'रिति शेषः। **वाचकं** लक्षणया बोधकम्। तेन-एकस्यार्थस्य वाचकम् अपरस्यार्थस्याक्षेपकमिति फलितोऽर्थः। यद्वा—एकं 'वस्तु' इति शेषः, द्वयोः प्रधानाप्रधानयोः, वाचकं लक्षणयाऽनुबन्धि। अन्यत्पूर्ववत्। इत्यर्थः। **स्यात्**। सा। **यदा मूलभूतातिशयोक्तिर्मूल**भूता विच्छित्तिविशेषाधायकतयोपस्कारिकातिशयोक्तिर्यस्यास्तादृशी। तदा-**सहोक्तिः**। 'अलङ्कृतिरिति व्यपदिश्यत' इति शेषः। **भवेत्**॥ १०८॥

अस्या उपस्कारिकामतिशयोक्तिं विशिष्य निर्दिशति—अतीत्यादिना। स्पष्टम्। अत एवोक्तं पण्डितराजैः—'गुणप्रधानभावावच्छिन्नसम्बन्धः सहोक्तिः।' इति सूत्रयित्वा 'हृद्यत्वं चालङ्कारसामान्यलक्षणगतं सकलालङ्कारसाधारणमेवेत्यसकृदुक्तम्। तच्चात्र—'कार्य्यकारणपौर्वापर्य्यविपर्य्ययात्मिकया श्लेषाभित्तिकाभेदाध्यवसानात्मिकया केवलाभेदाध्यवसानात्मिकया चातिशयोक्त्याऽनुप्राणने भवतीति वदन्ती'ति। एवं च-अत्रातिशयोक्तिमूलक एव चमत्कार इति सूचितम्। अत्रेदं तत्त्वम्—'सहयुक्तेऽप्रधाने।' २/३/१९ इति सूत्रेण यत्र तृतीया विधीयते, यत्र वा 'वृद्धो यूना....।' १/२/६५ इति निर्देशात् तत्रास्य सम्भवः, गुणप्रधानभावावच्छिन्नयोः शाब्दार्थमर्य्यादयैकधर्माभिसम्बन्धस्य तत्रैवावस्थितेः। एतेन-'शशिना च निशा निशया च शशी शशिना निशया च विभाति नभः। पयसा कमलं कमलेन पयः पयसा कमलेन विभाति सरः॥ मणिना वलयं वलयेन मणिर्मणिना वलयेन विभाति करः। भवता च सभा सभया च भवान् भवता सभया च विभाति गृहम्॥' इत्यादौ नायं। तेन तृतीयाया अनुपपत्तेः, 'हैतौ'। २/३/२३ इति सूत्रेण उपपत्तेः। 'पुत्रेण सहागतः पिता' इत्यादौ पुनश्चमत्काराधायिकाया अतिशयोक्तेरभावान्नायम्। 'चैत्रमैत्रौ सह गच्छतः' इत्यादौ अपि नायम्, सहार्थसामर्थ्याभावेऽपि उभयान्वयित्वोपपत्तेः। इति दिक्।

उदाहरति-**क्रमेणे**त्यादिना। स्पष्टम्। 'सहेत्यादि। व्याख्यातपूर्वमिदम्॥'

उदाहार्यं दर्शयति—**अत्रे**त्यादिना। स्पष्टम्।

क्रमेणोदाहरणम् ।—

**'सहाधरदलेनास्या यौवने रागभाक्प्रियः ।'**

अत्र रागपदे श्लेषः ।

---

## विवृतिः

**सहाधरेति** । सहशब्दस्य राज भजनेमर्थ, तृतीयाः सम्बन्धित्वं तस्य च सहार्थेऽन्वयः । सहशब्दस्याव्ययत्वात्तदर्थस्य द्वारीभूतविभक्त्यर्थ विनापि समकालीनत्वसंबन्धेन रागभाक्सहार्थैकदेशे रागभजनेनान्वयः । यौवन इति सतिसप्तम्याः समकालीनत्वमर्थः, अस्यापि रागभजनेनान्वयः । अस्या इति तात्पर्यबलादधरदलेन प्रियेण चान्वयः । तथा चास्याः प्रिय इदमधरदलसंबन्धियौवनकालीनरागाश्रय इत्यन्वयबोधः । रागः प्रेम लौहित्यं च, तयोरभेदारोपः । अन्यथा एकत्वाभावादेकस्योभयान्वयासंभवेन लक्षणमसंगतं स्यात् ॥

## विवृतिपूर्तिः

**विनोक्तिरिति** । इयं च न केवलं विनाशब्दस्य सत्त्व एव भवति । अपि तु विनाशब्दार्थवाचकमात्रस्य । तेन नञ्-निर्-वि-अन्तरेण-ऋते-रहितेत्यादिप्रयोगे विनोक्तिरेव । अलंकार**भाष्यकारस्तु** 'नित्यसंबन्धानामसंबन्धवचनं विनोक्तिः' इति लक्षणमाह । तत्र 'मृणालमन्दानिलचन्दनानामुशीरशेवालकुशेशयानाम् । वियोगदूरीकृतचेतनाया विनैव शैत्यं भवति प्रतीतिः ॥' इत्युदाहार्यम् । अत्र शैत्यस्याविनाभावेऽपि विनाभावो निबद्धः ॥

## विज्ञप्रिया

**सहाधरेति** । अत्र तृतीयान्तपदार्थेऽधरदले प्रथमान्तपदार्थे प्रिये च रागवानितिपदम् अभेदेन स्वार्थबोधकम्; अधरदलमपि रागवदिति प्रतीतेः । रागपदार्थयोरभेदाध्यासरूपातिशयोक्तिश्च मूलम् ।

## विमला

सहेति ।—अस्याः,—पुरतो विलसन्त्या बिम्बोष्ठयाः कालाया इति यावत्, अधरदलेन सह प्रियः,—कान्तः, यौवने रागभाक्—अनुरक्तः । अधरदले तु रागभाक्तं रक्तिमवत्त्वमिति बोद्यम् । एवम् "....अस्तं भास्वान् प्रयातः सममरिभिरयं संह्रियन्तां बलानि" इत्यादावपि अस्तादीनां श्लिष्टत्वात् । अत्र सहशब्दस्य रागभजनमर्थः तृतीयायाः सम्बन्धित्वं, तस्य च सहार्थेऽन्वयः सदृशब्दस्याव्ययत्वात् तदर्थस्य द्वारीभूतविभक्त्यर्थं विनाऽपि समकालीनत्वसम्बन्धेन रागभाक् सहार्थैकदेशे रागभजनेनान्वयः; यौवने सति इति सप्तम्याः समकालीनत्वमर्थः, अस्यापि रागभजनेनान्वयः; अस्या इति तात्पर्य्यबलादधरदलेन प्रियेण चान्वयः, तथा चास्याः प्रिय इदमधरदलसम्बन्धियौवनकालीनरागाश्रयः इत्यन्वयबोधः । रागशब्दः द्वयोर्लौहित्यानुरागयोर्वाचकः, तयोरभेदारोपात्, अन्यथा एकत्वाभावात् एकस्योभयातन्वयासम्भवेन लक्षणमसङ्गतं स्यात् इति सङ्क्षेपः । अतिशयोक्तिश्च भेदेऽप्यभेदरूपा इति बोध्यम् ।

## लक्ष्मी

तत्र श्लेषप्रतिपन्नभेदे अभेदाध्यवसायरूपातिशयोक्तिमूलां सहोक्तिमुदाहरति—**सहाधरेति**। अस्य पूरणं व्याख्यानञ्च पूर्वमेवोपपादितम्। सहशब्दयोगे अधरदलेनेत्यत्र तृतीया, रागभाक् इतिपदं वस्तु वा अधरप्रिययोरन्वयिरागभजनबोधकम्, यौवन इति सतिसप्तम्याः समानकालीनत्वमर्थः। एवञ्च अधरदलप्रतियोगिकयौवनसमानकालीनसाहित्याशाली प्रियो रागभाक् इति शाब्दबोधः। अत्र तृतीयान्तस्य विशेषणतया गुणत्वम्, प्रथमान्तस्य विशेष्यतया प्रधानत्वम्, तथा च प्रथमान्ते रागभजनस्य शाब्दः तृतीयान्ते सहार्थसामर्थ्यादार्थः।

उदाहरणार्थं दर्शयति—**अत्रेति**। अधरदलस्य रागो लौहित्यम्, प्रियस्य रागश्च अनुरागः प्रेम इति यावत्, इति रागपदे श्लेषः। तेन लौहित्यानुरागयोर्भेदेऽपि अभेदाध्यवसायादतिशयोक्तिः तद्वशात् सहशब्दार्थवशाच्च एकरागभाक्पदस्यार्थः अधरदलेन न प्रियेण च सह सम्बध्यत इति श्लेषप्रतिपन्नभेदे अभेदाध्यवसायरूपातिशयोक्तिमूला सहोक्तिः। यथा—

**'बहु मन्यामहे राजन्न वयं भवतः कृतिम्।**
**विपद्भिः सह दीयन्ते सम्पदो भवता यतः॥'**

अत्र हि 'दीयन्त' इति श्लिष्टम्।

## रुचिरा

इदं तु बोध्यम्—'सहाधरदलेनास्या यौवने रागभाक् प्रियः। कान्तायाश्चोन्नतो जातः स्तनद्वन्द्वेन दर्पकः॥' इत्यत्र पूर्वार्द्धे सहयोगे परत्र सहार्थे तृतीया। 'रागभाक्' 'उन्नत' इति (पदं वस्तु वा) च अधरप्रिययोः स्तनद्वन्द्वकामदेवयोश्चान्वयिरागभजनोन्नमनबोधकम्। तथा च—अधरदलप्रतियोगिकसाहित्यशाली प्रियः स्तनद्वन्द्वप्रतियोगिकसाहित्यशाली कन्दर्पश्च क्रमेण 'रागभाक्' 'उन्नत' इति शाब्दबोधः। अथ-अधरदलवृत्तिरागभजनसमानकालभवसमानकालभवरागभजनवान् प्रिय इति, स्तनद्वन्द्वत्युन्नमबसमानकालभवसमानकालभवोन्नतिमान् कन्दर्प इति च मानसो बोधः। अत्र तृतीयाऽन्तस्य विशेषणतयाऽप्रधानत्वम्, प्रथमान्तस्य विशेष्यतया च प्रधानत्वम्। एवं च प्रथमान्ते रागभजनोन्नमनयोः शाब्दः, तृतीयान्ते सहार्थसामर्थ्यादार्थः। एवं पुरस्तादन्यत्र च। रागशब्दः श्लिष्टः, तेन-प्रेमलौहित्ययोरभेदारोपः, एवमुन्नतशब्दः श्लिष्टः, तेनोच्छ्रितोद्धतत्वयोरभेदारोपः। इति। यथा वा—'बहु मन्यामहे राजन्न वयं भवतः कृतिम्। विपद्भिः सह दीयन्ते सम्पदो भवता यतः॥' इति, अत्र हि 'दीयन्ते' इति श्लिष्टम्।

**'सह कुमुदकदम्बैः काममुल्लासयन्तः**
**सह घनतिमिरौघैर्धैर्यमुत्सारयन्तः ।**
**सह सरसिजषण्डैः स्वान्तमामीलयन्तः**
**प्रतिदिशममृतांशोरंशवः संचरन्ति ॥'**

---

## विवृतिः

**सह कुमुदेति** । कुमुदकदम्बस्योल्लासो विकासः, कामस्योल्लासो वर्धनम्, तयोः सादृश्येनैवाभेदारोपः । तेजः संसर्गाभावरूपस्य तिमिरस्योत्सारणं तद्देशे संबन्धाभावः, धैर्यस्योत्सारणं विनाशः, तयोः सादृश्येनैवाभेदारोपः । सरसिजषण्डानामामीलनं संकोचः, स्वान्तस्यामीलनं विषयान्तरादाकर्षणम्, तयोरपि सादृश्येनैवाभेदारोपः । एवं चात्रोल्लासादयः सहशब्दानामर्थाः, कर्मत्वं तृतीयानामर्थः, तस्य सहार्थान्वयः । सहार्थस्य च समकालीनत्वसंबन्धेन उल्लासयन्त इत्यादिपदार्थैकदेशे उल्लासादावन्वयः । तथा कुमुदकदम्बादिकर्मकोल्लासादिसमकालीनोल्लासादिकर्तारश्चन्द्रांश्च इत्यन्वयबोधः ।

अत्राभेदाध्यवसायमूलभूतं भेदमुपपादयति—**अत्रोल्लासादीनामिति** । मदुक्तदिशा संबन्धिभेदाद्भेदो बोध्यः ॥

## विज्ञप्रिया

श्लेषं विना त्वाह—**सह कुमदेति** । अमृतांशोरंशवः प्रतिदिशं सञ्चरन्ति । अंशूनां विशेषणान्याह—**सह कुमुदेति** । कदम्बः षण्डः, समूहः । आमीलयन्तः सङ्कोचयन्तः । स्वान्तस्य विषयान्तराद् व्यावर्त्तनमेव सङ्कोचः । **अत्रेति** । भेद इत्यनन्तरमभेदस्याध्यवसाय इति पूरणीयम् । तथा च सोऽध्यवसायो नतु श्लिष्टतयेत्यन्वयः ।

## कुसुमप्रतिमा

तत्र श्लेषप्रयुक्तभेदे अभेदाध्यवसायरूपातिशयोक्तिमूलां सहोक्तिमुदाहरति सहाधरेति । अस्य पूरणं व्याख्यानञ्च प्रागेवाभिहितम् (६७० पृष्ठे) अत्राधरदलस्य रागो लौहित्यं प्रियस्य रागश्च इति रागपदे श्लेषः । तेन च लौहित्यप्रेम्णोर्भेदेऽपि अभेदाध्यवसायादतिशयोक्तिः तद्वशात् सहशब्दार्थ वशाच्च एकरागे भाक्पदस्यार्थः अधरदलेन प्रियेण च सह अन्वीयत इति श्लेषप्रयुक्ताभेदाध्यवसायरूपातिशयोक्तिमूला सहोक्तिः ।

अश्लेषप्रयुक्तभेदे अभेदाध्यवसायरूपातिशयोक्तिमूलां सहोक्तिमाह सहेति । कुमुदकदम्बैः कैरवसमूहैः सह कामं कन्दर्पम् उल्लासयन्तं प्रकाशयन्तः, घना निविडा ये तिमिरौघा अन्धकारसमूहास्तैः सह धैर्य्यं चित्तस्थितरताम् उत्सारयन्तो दूरीकुर्वन्तः, तथा सरसिजषण्डैः पद्मसमूहैः सह स्वान्त चित्तम् आमीलयन्तः कामवेगेन सङ्कोचयन्तः, अमृतांशोरंशश्चन्द्रस्य किरणाः प्रतिदिशं सर्वासु दिक्षु सञ्चरन्ति प्रसरन्ति ।

नन्वत्र उल्लासादीनां भेदः कुतः, येन मूलभूता अभेदाध्यवसायरूपातिशयोक्तिः स्यादित्याह अत्रेति । आदिपदेन उत्सारणामीलनयोः संग्रहः । सम्बन्धिनां कुमुदकदम्ब कामादीनाम् । श्लिष्टतया रागपदवत् श्लेषेण । तथा च कुमुदकदम्बानामुल्लासः प्रकाशः, कामस्योल्लमस्तु आविर्भाव इति सम्बन्धि भेदेन उल्लासयोर्भेदेऽपि

एकशब्दोपस्थाप्यत्वरूपसादृश्येन अभेदाध्यवसायादतिशयोक्तः, तद्वशात् सहशब्दार्थ वशाच्च एवोल्लासपद-स्यार्थ कुमुदकदम्बैः कमेन सह अन्वीयत इति अश्लेषप्रयुक्त भेदाध्यवसायरूपातिशयोक्तिमूला सहोक्तिः। एवं तिमिरौघानामुत्सारणं ततस्ततोऽपमारणम्, धैर्य्यस्योत्सारणन्तु विध्वंसः। सरसिजषण्डनामामीलनं सङ्कोचनम्, स्वान्तस्यामीलनन्तु एकमात्रकामप्रवृत्तिमत्करणम्। अपरन्तु पूर्ववदूह्यम्।

## विमला

सहेति।—चन्द्रवर्णनमिदम्। अमृतांशोः,—चन्द्रस्य, अंशवः,—किरणाः, कुमुदानां—कैरवाणां, कदम्बैः,—समूहैः, सह कामं—मदनम्, उल्लासयन्तः,—विकाशयन्तः, वर्द्धयन्त इति यावत्, घनैः,—सान्द्रैः, तिमिराणाम्—अन्धकाराणाम्, ओघैः,—समूहैः, सह धैर्य्य—निरुद्वेगत्वं, कामिजनानामिति शेषः, उत्सारयन्तः,—विध्वसंयन्तः, मदनस्य प्रकाशस्य च आधायकत्वादिति भावः, सरसिजानां—पद्मानां, षण्डैः,—समूहैः, ("षण्डं पद्मादिसङ्घाते न स्त्री स्यात् गोपतौ पुमान्" इति मेदिनी) सह स्वान्तं—मनः, ("स्वान्तं हृन्मानसं मनः" इत्यमरः) आमीलयन्तः,—सङ्कोचयन्तः, प्रतिदिशं—दिशि दिशि, सञ्चरन्ति। ["सञ्चरन्ति" इत्यनुक्त्वा "भान्ति यन्तः" इति पाठान्तरे तु यन्तः,—गच्छन्तः, सञ्चरन्त इति यावत्, भान्ति—संस्फरन्तीत्यर्थः, तथा अन्त्यानुप्रासाभावप्रयुक्तौ दोषोऽपि न सम्भवतीति विभावनीयं सूक्ष्मदृशा]। अत्रेदं बोध्यम्—कुमुदकदम्बस्योल्लासो विकाशः, कामस्योल्लासो वर्द्धनं, तयोः सादृश्येनैवाभेदारोपः। तेजः संसर्गाभावरूपस्य तिमिरस्योत्सारणं तद्देशे सम्बन्धाभावः, धैर्य्यस्योत्सारणं विनाशः, तयोः सादृश्येनैवाभेदारोपः। सरसिजषण्डानामामीलनं सङ्कोचः, स्वान्तस्यामीलनं विषयान्तरादाकर्षणं, तयोरपि सादृश्येनैवाभेदारोपः एवञ्चात्रोल्लासादयः सदृशब्दानामर्थाः, कर्मत्वं तृतीयानामर्थः, तस्य सहार्थेनान्वयः, सहार्थस्य च समकालीनत्वसम्बन्धेन उल्लासयन्तः इत्यादिपदार्थैकदेशे उल्लासादावन्वयः; तथा कुमुदकदम्बादिकर्मकोल्लासादिसमकालीनोल्लासादिकर्त्तारः चन्द्रांशयः इत्यन्वयबोधः। अत्र मालनी वृत्तं, "ननमययुतेयं मालिनी भोगिलोकैः" इति तल्लक्षणम्। यथा वा—"छाया संश्रयते तलं विटपिनां श्रान्तेव पान्थैः समं मूलं याति सरो जलस्य जड़ता म्नानेव मीनैः सह। आचामत्यहिमांशुदीधितिरपस्तुप्तेव साकं जनैः निद्रा गर्भगृहं सह प्रविशति क्रान्तेव क्रान्ताजनैः।" इति।

अत्राभेदाध्यवसायमूलभूतं भेदमुपपादयति, अत्रोल्लासादीनामिति।—मदुक्तदिशा सम्बन्धिभेदात् भेदो बोध्यः।

## लक्ष्मी

एवं श्लेषप्रतिपन्नभेदमूलामुदाहृत्य सम्बन्धिभेदादवगभेदमूलामुदाहरति—**सहकुमुदकदम्बैरिति**। कुमुदानां रात्रिविकसनशालिनां कमलानां कदम्बानि समूहास्तैः कैरवपुञ्जैरित्यर्थः सह कामं कन्दर्पम् उल्लासयन्तो विकाशयन्तो वर्धयन्तश्च, घनाः सान्द्रा ये तिमिरौघा अन्धकारपुञ्जास्तैः सह धैर्यम् चितस्थिरताम् उत्सारयन्तः सम्बन्धाभावं विनाशं वा नयन्तः, तथा सरसिजषण्डैः पङ्कजसमूहैः 'अब्जादिकदम्बे षण्डमस्त्रियाम्' इत्यमरः, सह स्वान्तं हृदयं 'स्वान्तं हृन्मानसं मनः' इत्यमरः, आमीलयन्तः सङ्कोचयन्तः कामवेगेन विषयान्तरादाकर्षयन्तो वा अमृतांशोरशाश्चन्द्रस्य रश्मयः प्रतिदिशं सर्वासु दिक्षु सञ्चरन्ति प्रसरन्ति। **मालिनीच्छ**न्दस्तल्लक्षणन्तूक्तं प्राक्।

पद्यस्य अन्यदीयत्वं निरसितुमाह—**इद**मिति। ननु प्रकृतोदाहरणे उल्लासादीनामभेदारोपंदर्शयितुं भेदं दर्शयति—**अत्रे**ति। उल्लासादीनामित्यत्रादिपदेन उत्सरणामीलनयोः परिग्रहः। सम्बन्धिभेदात् कुमुदकदम्बका-

मादिभेदात्। एवकारव्यवच्छेद्यं दर्शयति—**न त्विति**। श्लिष्टतया रागपदवत्श्लेषेण। कुमुदकदम्बानामुल्लासो विकासः, कामस्योल्लासस्तु पुनर्वर्धनम्, इति सम्बन्धिभेदेन उल्लासयोर्भेदेऽपि विकास इव वर्धनमिति एकपदोपस्थाप्य त्वरूपसादृश्येन अभेदाध्यवसायादतिशयोक्तिः, तद्वशात् सहशब्दार्थवशाच्च एक एवोल्लासपदस्यार्थः कुमुदकदम्बैः कामेन च सह सम्बध्यत इति सम्बन्धिभेदादवगतभेदमूलाऽतिशयोक्तिरूपा सहोक्तिः। एवं तिमिरौधानामुत्सारणं तद्देशे सम्बन्धाभावाः, धैर्यस्योत्सारणन्तु विनाशः सरसिजषण्डानामामीलनं सङ्कोच, स्वान्तस्यामीलनन्तु विषयान्तरादाकषणम्। अन्यसर्वं पूर्ववदेवोह्यम्।

## रुचिरा

एवं श्लेषभित्तिकतयोदाहृत्य तद्वैपरीत्येऽप्युदाहरति—**'कुमुदकदम्बैः** कुमुदानि रात्रिविकासीनि कमलानि तेषां कदम्बानी पुञ्जास्तैः। 'कदम्बं निकुरम्बे स्यान्नीपसर्षपयोः पुमान्।' इति मेदिनी। **सह**। **कामं** मदनम्। **उल्लासयन्तो** विकासयन्तो वर्धयन्तश्चेति भावः। घनतिमिरौघैर्घनानि निबिडानि यानि तिमिराणि तेषामोघास्तैरिति तथोक्तैः। **सह**। **धैर्यम्**। **उत्सारयन्तः** सम्बन्धाभावं विनाशं वा नयन्तः। **सरसिजषण्डैः** सरसिजानि कमलानि तेषां षण्डानि समुदायास्तैः। 'अब्जादिकदम्बे षण्डमस्त्रियाम्।' इत्यमरः। **सह**। **स्वान्तं** चित्तम्। 'स्वान्तं हृन्मानसं मनः।' इत्यमरः। **आमीलयन्तः**। सङ्कोचयन्तो विषयान्तरादाकर्षयन्तो वा। **अमृतांशोश्चन्द्रमसः**। **अंशवः**। **प्रतिदिशं** सर्वासु दिक्षु। **सञ्चरन्ति**। अत्र मालिनीछन्दः॥ १७८॥'

अस्य पद्यस्य स्वकीयत्वं सम्भावयति—**इदममेति**। स्पष्टम्।

अत्राभेदारोपं दर्शयितुं भेदं दर्शयति—**अत्रेत्यादिना**।

**अत्रोदाहृते** पद्ये। **उल्लासादीनाम्**। आदिपदेनोत्सारणमीलनयोर्ग्रहणम्। **सम्बन्धिभेदात्** कुमुद-कामादिसम्बन्धिभेदात्। **एव**। **भेदः**। एवकारव्यवच्छेद्यं निर्दिशति-**न तु**। **श्लिष्टतया**। अतोऽत्राभेदारोपः सादृश्यमूल इति भावः। इदमभिहितम्-कुमुदस्योल्लासो विकासः, कामस्य पुनर्वर्द्धनम्; तिमिरस्योत्सारणं तद्देशे सम्बन्धाभावः, धैर्य्यस्य पुनर्विनाशः; सरसिजस्यामीलनं सङ्कोचः, स्वान्तस्य पुनर्विषयान्तरादकर्षणम्; इत्येवं कुमुदकामादीनां भेदादेवोल्लासादेर्भेदः, तस्मिन् सत्यपि विकास इव वर्धनमिति सादृश्यमूलोऽभेदारोपः। इति।

यथा वा—'सह दिअसणिसाहिं दीहरा सासदंडा सह मणिवलयेहिं बाप्पधारा गलंति। तुह सुहअ विओए तीअ उव्विग्गिरीए सह अ तुणुलदाए दुब्बला जीविदासा॥' अत्र हि दीर्घत्वादेः श्वासादिनाऽन्वयः शाब्दः, दिवसनिशादिना त्वन्वयसामार्थ्यादार्थः, दीर्घादेश्च सम्बन्धिभेदादेव भेद इति दिवसनिशादीनां दीर्घत्वाभेदाध्यवसायः। तथा हि-दिवसादेर्दीर्घत्वमनायासमनपनेयत्वम्, श्वासस्य पुनर्दूरप्रसारित्वमतिवेगशालित्वं वा, मणिवलयस्य गलनं पतनं, नेत्राम्बुनः पुनः प्रवहणम्, तनुलतायां दौर्बल्यं कार्श्यमकर्मण्यत्वं वा, जीविताशायाः पुनः कादाचित्कत्वम् इति भेदेऽप्यभेदाध्यवसायः। इति। एतेन-यदुक्तं विवृतिकारैः—'वस्तुतस्तु यत्र वैचित्र्यमनुभूयते तत्रैवास्यालङ्कारत्वमङ्गीकरणीयम्। अन्यथा—'सह मणिवलयेहिं बाप्पाधारा गलति' इति काव्यप्रकाशदत्तोदाहरणमसङ्गतं स्यात्। अत्र स्वस्थानाच्च्यवनरूपं गलनमेकमेव। न च गलनयोरेकजातीयत्वेऽपि व्यक्तिभेदाद् भेद इति वाच्यम्, 'लक्ष्मणेन समं रामः काननं गहनं ययौ॥' इत्यादावपि तथाकल्पनस्य सम्भवात्, व्यावृत्त्यभावेन तद्विवक्षणस्याकिञ्चित्करत्वात्।' इति, तद्दत्तोत्तरम्। अन्यथा—'इयं धर्मयोरभेदाध्यवसायममूला' इति विरुध्येतोद्द्योतोऽपि।

**'लक्ष्मणेन समं रामः काननं गहनं ययौ।'**

**इत्यादौ चातिशयोक्तिमूलाभावान्नायमलंकारः।**

इदं मम। अत्रोल्लासादीनां संबन्धिभेदादेव भेदः, न तु श्लिष्टतया।

**'सममेव नराधिपेन सा गुरुसंमोहविलुप्तचेतना।**

**अगमत्सह तैलबिन्दुना ननु दीपार्चिरिव क्षितेस्तलम्॥'**

इयं च मालयापि संभवति। यथोदाहृते 'सह कुमुदकदम्बैः—' इत्यादौ।—

---

## विवृतिः

कार्यकारणपौर्वापर्यरूपातिशयोक्तिमूलां सहोक्तिमुदाहरति—**सममेवेति**। एकदैवेत्यर्थः। नराधिपेन अजेन। सा इन्दुमती। अत्राजस्य पतनमिन्दुमतीपतनजन्यमपि समकालीनत्वेनाध्यवसितम्। **इयं च** सहोक्तिश्च। मूलभूतेत्यादिविवक्षायाः फलमाह—**लक्ष्मणेनेति**। वस्तुतस्तु यत्र वैचित्र्यमनुभूयते तत्रैवालंकारत्वमङ्गीकरणीयम्। अन्यथा 'सह मणिवलयेहिं बाप्प(ष्प)धारा गलन्ति—' इति काव्यप्रकाशकारदत्तोदाहरणमसंगतं स्यात्। अत्र स्वस्थानाच्च्यवनरूपं गमनमेकमेव। न च गमनयोरेकजातीयत्वेऽपि व्यक्तिभेदाद्भेद इति वाच्यम्। 'लक्ष्मणेन समं रामः काननं गहनं ययौ' इत्यादावपि तथाकल्पनस्य संभवात् व्यावृत्तभावेन तद्विवक्षणस्याकिंचित्करत्वात्। एवं 'वर्धते सह पान्थानां मूर्च्छया चूतमञ्जरी' इति **दण्डि**दत्तोदाहरणे तृतीयार्थो वृत्तित्वम्। मूर्च्छावृत्तिवृदग्धिसमकालीनवृद्ध्याश्रया चूतमञ्जरीत्यन्वयः॥

## विज्ञप्रिया

कार्यकारणपौर्वापर्यविपर्ययरूपातिशयोक्तिमूलिकामाह—**सममेवेति**। गुरुसम्मोहविलुप्तचेतना सा इन्दुमती नराधिपेन अजेन सममेव क्षितेस्तलं पृष्ठम् अगमत्। तनुतैलबिन्दुना सह दीपार्चिरिवेत्यर्थः। अत्र नराधिपोऽपि क्षितेस्तलमगमदिति सहार्थस्य समं पदबलाद् बोध्यम्। इन्दुमतीपातः कारणं नराधिपपातः कार्य्यं, तयोः समकालत्वकथनरूपः पौर्वापर्यविपर्ययः।

## कुसुमप्रतिमा

कार्य्यकारणयोः पौर्वापर्य्यविपर्य्यरूपातिशयोक्तिमूलां सहोक्तिं प्रदर्शयति सममिति। रघुवंशाष्टमसर्गस्थमिदं पद्यम्। सा इन्दुमती, गुरुणा अत्यन्तेन सम्मोहेन मूर्च्छया विलुप्ता चेतना चैतन्यं यस्याः सा तादृशी सती, तैलबिन्दुना तनुदीपार्च्चिः सूक्ष्मदीपशिखेव, नराधिपेन राज्ञा अजेन सह सम मेव समकालमेव युगपदेव क्षितेस्तलं भूतलम् अगमत् पतितवतीत्यर्थः।

अत्र इन्दुमत्याः पतनं दृष्टैव अजः पतित इति इन्दुमत्याः पतन कारणम् अजस्य पतनन्तु तत्कार्य्यमिति तयोः पौर्वापर्य्यमावश्यकम्; किन्तु अजपतनस्य शीघ्रताद्योतनार्थ सममेवेत्यभिहितम्; तेन कार्य्यकारणयोः पौर्वापर्य्यवि-

पर्य्यरूपातिशयोक्तिः, तद्वशात् सहशब्दार्थवशच्च एक एवागमदिति पदस्यार्थ इन्दु मत्या नराधिपेन च सह अन्वीयत इति सहोक्तिः ।

सम्भवयोग्यमाह इयञ्चेति । सहोक्तिश्चेत्यर्थः, मालयापि एकत्रानेकत्वेनापि ।

"मूलभूतातिशयोक्तिर्यदा भवेत्" इत्यस्य व्यावृत्तिमाह लक्ष्मणेनेति । एतद्विस्तरस्तु प्रागेवभिहितः ।

प्रायेण स्वाश्रयवाक्ये यथाकथञ्चित् सादृश्यदर्शनात् उक्तिशब्दान्ततासाम्याच्च सहोक्तेः परं विनोक्ति लक्षयति विनोक्तिरिति । अन्यद्वस्तु अन्येन विनायत् असाधु अशोभनं न भवति, वा अथवा अन्यद्वस्तु अन्येन विना यत् असाधु शोभनं भवति, सा विनोक्तिः । तथा च—

एकस्याभावे अपरस्य अशोभनत्वाभावः शोभनत्वाभावो वा विनोक्तिरित्यर्थः । अतएवेयं द्विविधा । अत्र एकस्याभावप्रतिपादनञ्च विनार्थकशब्दमात्रेण । तेन अन्तरेण ऋते निर्-निस्-रहित वर्जित शून्य नञ् प्रभृतिना येन केनापि विनार्थकशब्देन तदभावप्रतिपादनेऽपि विनोक्तिः स्यादेवेति बोध्यम् ।

## विमला

कार्य्यकारणपौर्वापर्य्यरूपातिशयोक्तिमूला सहोक्तिमुदाहरति, सममिति ।—इन्दुमत्या भुवि पतनवर्णनमिदम् । सा—इन्दुमती, गुरुणा—महता, सम्मोहेन विलुप्तं चतनं यस्यास्तथाभूता सती, तनुदीपार्चिः,—क्षीणा दीपशिखा, ["तनु" इत्यत्र "ननु" इति पाठान्तरं, तत्र निश्चयोऽर्थः] तैलबिन्दुना सह इव नराधिपेन—अजेन, तन्नाम्ना स्ववलम्भेनेति यावत्, सममेव—सहैव, एकदैवेति यावत्, क्षितैः,—भुवः, तलम् अगमत्, भुवि पतितेति भावः । अत्राजस्य पतनम् इन्दुमतीपतनजन्यमपि समकालीनत्वेनाध्यवसितम् । अत्र कार्य्यकारणपौर्वापर्य्यरूपाऽतिशयोक्तिः । वैतालीयं वृत्तम् । रघुवंशस्येदं पद्यम् ।

इयमिति ।—इयञ्च—सहोक्तिश्चेत्यर्थः ।

मूलभूतेत्यादिविवक्षायाः फलमाह—लक्ष्मणेनेति । वस्तुतस्तु यत्र वैचित्रयमनुभूयते, तत्रैवास्यालङ्कारत्वमङ्गीकरणीयम्, अन्यथा "सह मणिवलयेहि वाष्पधारा गलन्ति—" इति काव्यप्रकाशकारदत्तोदाहरणमसङ्गतं स्यात्, तत्र स्वस्थानाच्चयवनरूपं गमनमेकमेव । न च गमनयोरेकजातीयत्वेऽपि व्यक्तिभेदाद्भेद इति वाच्य, प्रस्तुते "लक्ष्मणेन" इत्याद्युदाहरणेऽपि तथाकल्पनस्य सम्भवात्, व्यावृत्त्यभावेन तद्विवक्षणस्य अकिञ्चित्करत्वात् । एवं "वर्द्धते सह पान्थानां मूर्च्छया चूतमञ्जरी" इति दण्डिदत्तोदाहरणे तृतीयार्थी वृत्तित्वं, मूर्च्छावृत्तिवृद्धिसमकालीनवृद्धयाश्रया चूतमञ्जरीत्यन्वयः ।

## लक्ष्मी

एवमभेदाध्यवसायमूलामुदाहृत्य कार्यकारणयोः पौर्वापर्यरूपातिशयोक्तिमूलां द्वितीयां सहोक्तिमुदाहरति—**सममेवेति** । रघुवंशे अष्टमसर्गे पद्यमिदम् । सा इन्दुमती गुरुर्महानसौ सम्मोहो मूर्च्छा तया विलुप्ता चेतना चैतन्यं यस्याः सा तथाभूता सती, तैलबिन्दुना सह तनुदीपार्चिः अल्पदीपशिखेव, नराधिपेन राज्ञा अजेन सममेव एकदैव क्षितेस्तलं पृथ्वीतलम् अगमत् पतितवतीत्यर्थः । वैतालीयं छन्दस्तल्लक्षणञ्चोक्तं प्राक् ।

अत्र इन्दुमतीपातः कारणं नराधिपपातः कार्यम्, इन्दुमतीपतनमवलोक्यैव नराधिपस्य पतनात् इति तयोः समकालत्वकथनरूपः पौर्वापर्यविपर्ययः। तेन कार्यकारणयोः पौर्यापर्यविपर्ययरूपातिशयोक्तिः, तद्वशात् सहशब्दार्थवशाच्च एक एवागमदितिपदस्यार्थः इन्दुमत्या नराधिपेन च सह सम्बध्यत इति सहोक्तिः।

इत्थं द्वितीयामपि सहोक्तिमुदाहृत्यास्याः सम्भवन्तं काव्यप्रकाशाद्यनुदाहृतमपि भेदमुदाहर्त्तुमाह—**इयञ्चेति**। सहोक्तिश्चेत्यर्थः, मालयापि एकत्र बहुत्वेनापि। **इत्यादाविति**। आदिपदेन **सरस्वतीतीर्थाद्युक्तोदाहरण**परिग्रहः। तद्यथा—

**'उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्धं मुखैर्नामितं**
**भूपानां जनकस्य संशयधिया साकं समास्फालितम्।**
**वैदेह्या मनसा समं तदधुना कृष्टं ततो भार्गव-**
**प्रौढाहङ्कृति कन्दलेन च समं भग्नं तदैसं धनुः॥'** इति।

## रुचिरा

एवमभेदाध्यवसायमूलामुदाहृत्य द्वितीयामुदाहरति—'ननु कष्टमाश्चर्य्ये वा। **तैलबिन्दुना**। सह॥ **दीपार्चिर्दीपरोचिः**। **इव**। **सा** इन्दुमती। **नराधिपेन** राज्ञाऽजेन। **समम्** एकदा। **एव**। **गुरुसम्मोहविलुप्तचेतना** गुरुर्महानसौ सम्मोहस्तेन विलुप्ता चेतना बुद्धिर्यस्याः सा, तथाभूता सतीति भावः। **क्षितेः** पृथिव्याः। **तलम्**। **अगमत्**। रघुवंशस्येदं पद्यम्। अत्राजस्य पतनमिन्दुमतीपतनजन्यमपि समकालत्वेनाध्यवसितम्। वैतालीयं वृत्तं, तल्लक्षणं चोक्तं प्राक्॥ १७९॥'

एवं कार्य्यकारणपौर्वापर्य्यविपर्य्यरूपातिशयोक्तिमूलामपि सहोक्तिमुदाहृत्यास्याः सम्भवन्तं प्रकाशाद्यनुदाहृतमपि भेदमुदाहर्त्तुमाह—**इयं चेत्यादि**। स्पष्टम्। अत एवान्येऽप्याहुः—"इयं मालारूपाऽपि सम्भवति, यथा—'उत्क्षिप्तं सह कौशिकस्य पुलकैः, सार्धं मुखैर्नामितं भूपानां, जनकस्य संशयधिया साकं समास्फालितम्। वैदेह्या मनसा समं तदधुना कृष्टं, ततो भार्गवप्रौढाहङ्कृतिकन्दलेन च समं भग्नं तदैशं धनुः॥' इति।"

**विनोक्तिर्यद्विनान्येन नासाध्वन्यदसाधु वा ॥ ५५ ॥**

नासाधु अशोभनं न भवति । एवं च यद्यपि शोभनत्व एव पर्यवसानं तथाप्यशोभनत्वाभाव-मुखेन शोभनवचनस्यायमभिप्रायो यत्कस्यचिद्वर्णनीयस्याशोभनत्वं तत्परसंनिधेरेव दोषः । तस्य पुनः स्वभावतः शोभनत्वमेवेति ।

यथा—

**'विना जलदकालेन चन्द्रो निस्तन्द्रतां गतः ।**
**विना ग्रीष्मोष्मणा मञ्जुर्वनराजिरजायत ॥'**

---

## विवृतिः

विनोक्त्यलंकारमाह—**विनोक्तिरिति** । यत् यदि । एकपदार्थाशोभनत्वाभावादिप्रयोजकापरपदार्थव्य-तिरेककथनं विनोक्तिरित्यर्थः । **यद्यपीति** । 'नासाध्वित्यस्य' इति शेषः । **पर्यवसानं** तात्पर्यम् । तथा च साधुत्वस्य साधुशब्देनैव प्रतिपादनमुचितमिति भावः । **अशोभनत्वाभावमुखेन** अशोभनत्वाभावप्रतिपादनद्वारा । तस्य परसं-निधिजातदोषस्य वस्तुनः । पुनर्दोषविगमे सति स्वभावत एव न तु दोषविगमरूपोपाधेः शोभनत्वमित्यन्वयः । दोषविगमेन यत्र शोभनत्वं भवति सामान्यविषय इति भावः ॥ **विनेति** । निस्तन्द्रतां निर्मलत्वम् । अत्र स्वतः सुन्दरयोश्चन्द्रवनराज्योर्मेघग्रीष्मसंनिधानरूपदोषविगमेन शोभनत्वं प्रतिभातीत्यर्थः ॥

## विज्ञप्रिया

विनोक्त्यलङ्कारमाह—**विनोक्तिरिति** । व्याचष्टे—**नासाध्विति** । नञ्द्वयमुखेनोक्ते भावार्थं वक्तु-माह—**एवं चेति** । **परसन्निधेरेव दोष** इति । परसन्निधेर्यो दोषस्तदेवाऽशोभनत्वमित्यर्थः ।

**विना जलदकालेनेति** । निस्तन्द्रतां निर्मलताम् । अत्र जलदकालादेव चन्द्रो मलिनो ग्रीष्मर्तौ च वनरा-जिरमञ्जुरिति प्रतीतेः ।

## लोचन

शोभन एव पर्यवसानम् "अभावस्य तु योऽभावो भाव एवाऽवशिष्यते' इति न्यायादित्यर्थः ।

निस्तन्द्रतां निर्मलताम् । अत्र चन्द्रवनराज्योरनिर्मलत्वाऽमञ्जुलत्वे जलदकालग्रीष्मकालहेतुके, निर्मल-त्वमञ्जुलत्वे पुनः सहजधर्मादित्याशयः ।

## कुसुमप्रतिमा

विना विनार्थकशब्दस्य उक्तिर्विनोक्तिरिति व्युत्पत्तिः ।

विवृणोति नेति । पर्य्यवसानं चरमप्रतीतिः, कारिकायां "नासाधु" इत्यस्येति शेष । "द्वौ नञौ प्रकृतार्थं गमयत" इति न्यायात् "अभावविरहात्मत्वं वस्तुनः प्रतियोगिता" इति न्यायाच्च । तेन "नासाधु" इत्यत्र "साधु" इत्य

व वक्तुमुचितमित्याशयः। अशोभनत्वाभावमुखेन असुन्दरत्वाभावबोधनद्वारा, शोभनवचनस्य सुन्दरत्वोक्तः। तत्परस्य वर्णनीयेतरपदार्थस्य सन्निधेः सम्बन्धादेव, दोषो दोषमध्ये गण्यम्। पुनः किन्तु, तसा वर्णनीयपदार्थस्य।

तत्र अशोभनत्वाभावे उदाहरति विनेति। जलदकालेन वर्षाकालेन विना चन्द्रो निस्तन्द्रतां निर्म्मलत्वं शोभनत्वं गतः प्राप्तः। ग्रीष्मोष्मणा ग्रीष्मकालीनसन्तापेन विना वनानां राजिः श्रेणिः, मञ्जुः, शोभनो अजायत। स्वभावत एव शोभनस्य चन्द्रस्य जलदकालेन यदशोभनत्वं विहितम्, तद्जलदकालस्यायगमेनापगतमिति चन्द्रस्य तत् शोभनत्वं पुनरस्यायातम्। तथा स्वभावत एव शोभनाया वनराजेग्रीष्मोष्मणा यदशोभनत्वं कृतम्, तद्ग्रीष्मोष्मणीऽपगमेनापगतमिति वनराजेरपि तत्स्वाभाविकं शोभनत्वं प्रत्यावृत्तमिति भावः।

## विमला

विनोक्तिमाह, विनोक्तिरिति।—यत्—यदि, अन्येन विना अन्यत् न अपाध—अशोभनं न भवति, तथा अन्येन विना अन्यत् असाध वा भवति, मा विनोक्तिः, एवं हि एकपदार्थशोभनत्वाभावादिप्रयोजकापरपदार्थव्यतिरेककथनं विनोक्तिरित्यर्थः। एषा च विनाशब्दयोगे एव भवति इति नाङ्गीकरणीयं नञ् निर्-वि-अन्तरेण-ऋते-रहितेत्यादिप्रयोगे तद्दर्शनात्। "नित्यसम्बन्धानामसम्बन्धवचनं विनोक्तिः" इत्यलङ्कारभाष्यकाराः; तेषां मते इदमुदाहरणं, तथा हि—"मृणालमन्दानिलचन्दनानामुशीरशेवालकुशेशयानाम्। वियोगदूरीतचेतनाया विनैव शैत्यं भवति प्रतीतिः।" इहाविनाभावेऽपि शैत्यस्य विनाभावः प्रतिपन्नः इति सङ्क्षेपः।

यद्यपीति।—'नासाध्वित्यस्य' इति शेषः। पर्य्यवसानं—तात्पर्य्यं, तथा च साधुत्वस्य साधुशब्देनैव प्रतिपादनसूचितम् इति भावः। अशोभनत्वाभावमुखेन—अशोभनत्वाभावप्रतिपादनद्वारा। तस्य—परसन्निधिजातदोषस्य वस्तुनः, पुनर्दोषविगमे सति स्वभावत एव, न तु दोषविगमरूपोपाधेः शोभनत्वमित्यन्वयः, दोषविगमेन यत्र शोभनत्वं भवति सामान्यविषय इति भावः।

विनेति। चन्द्रः जलदकालेन—जलदा,—मेघाः, तेषां कालः,—सम्भवसमयः, वर्षर्त्तुरित्यर्थः, तेन विना निस्तन्द्रवा—निर्मलता, गतः, ग्रीष्माष्मणा विना वनराजिः मञ्जुः,—मनोहारिणी, अजायत। अत्र स्वतः सुन्दरयोः चन्द्रवनराज्याः मेघग्रीष्मात्मसन्निधानरूपदोषविगमेन शोभनत्वं प्रतिभाति इति निष्कृष्टोऽथः; जलदकालापगमाच्चन्द्रमस इव आतपकालापगमाद्वराजेरशोभनत्वापगमः संवृत्त इत्यौपम्यञ्च व्यङ्ग्यमिति बोध्यम्।

## लक्ष्मी

'मूलभूतातिशयोक्तिर्यदा भवेत्' इत्यस्य व्यवच्छेद्यमाह—**लक्ष्मणेनेति**। अत्र यद्वक्तव्यं तत्पूर्वमेवोपपादितम्।

अथोक्तिशब्दान्तसादृश्यात् प्रायेण यथाकथञ्चित् सादृश्यावगमाच्च सहोक्तेरनन्तरं विनोक्तिं निरूपयति—**विनोक्तिरिति**। अन्यद्वस्तु अन्येन विना यत् असाधु अशोभनं न प्रतिपद्यते किन्तु शोभनम्, वा अथवा अन्यद्वस्तु अन्येन विना यत् असाधु अशोभनं प्रतिपद्यते सा विनोक्तिः। तथा चैकस्य अन्यद्वस्तु अशोभनत्वाभावः शोभनत्वाभावो वा प्रतिपाद्यते सा विनोक्तिरित्यर्थः। विनाशब्दार्थस्योक्तिर्विनोक्तिरित्यवन्वर्थेयं संज्ञा। इयं च न केवलं विनाशब्दस्य सद्भाव एव भवतीति नियमः किन्तु विनाशब्दार्थवाचकमात्रस्य। अत एव नञ्-निर-वि-अन्तरेण-ऋते-रहित-विकलेत्यादिप्रयोगेऽपि विनोक्तिरेव।

दुर्बोधतां परिजिहीर्षुः 'नासाधु' इति दुर्बोधं पदं विवृणोति—**नासाध्विति**। नासाधु 'इत्यस्ये' ति शेषः। भवति इत्यर्थ इति शेषः। अस्य भावार्थमुपपादयति—**एवञ्चेति**। यद्यपि 'नासाध्वित्यस्ये'ति शेषः। एवं न त्वशोभनत्व इति शेषः। पर्यवसानम् 'अभावस्य तु योऽभावो भाव एवाऽवशिष्यते' इति न्यायात् 'द्वौ नञौ प्रकृतार्थमवगमयतः' इति न्यायाच्च अन्ततोऽवस्थानम्। तेन 'नासाधु' इत्यत्र 'साधु' इत्येवं प्रतिपादयितुं युक्तमिति भावः। अशोभनत्वाभावमुखेन 'न असाधु किन्तु साधु, इत्यसाधुत्वप्रतिषेधद्वारा शोभनवचनस्य 'साधु' इति प्रतिपादनस्य। वर्णनीयस्य प्रस्तुतपदार्थस्य। तत्परस्य वर्णनीयेतरवस्तुनः सन्निधेः संयोगादेव दोषो दोषमध्ये गणनम्, पुनः किन्तु तस्य वर्णनीयवस्तुनः, शोभनत्वं साधुत्वम् **इतीत्यस्य** 'अयमभिप्रायः' इत्यनेन सम्बन्धः। तथा च विनार्थकं पदं प्रयोज्य यस्य साधुत्वं प्रतिपाद्यते तस्य स्वाभाविकं साधुत्वमेव, यस्य विनार्थकेन पदेन सन्निधानं निषिध्यते तस्य तत्कृतमेवासाधुत्वमिति भावः। अतएव—

**'दुःखदत्वं विना पापमविद्यामोहमन्तरा।**
**विना दुःखं च निरयः साधुः कस्य च सम्मतः॥'**

अत्र दुःखदत्वादिं विना पापादित्यस्यैवानभिप्रेतत्वान्नायालङ्कारः।

तत्र अशोभनत्वाभावे उदाहरणं दर्शयति—**विनेति**। जलदकालेन वर्षाकालेन विना चन्द्रो निस्तन्द्रतां निरालस्यमुपचारादुज्ज्वलप्रकाशत्वम् शोभनत्वमितियावत् गतः प्राप्तः। ग्रीष्मकालीनधर्मेण विना वनानां राजिः पङ्क्तिः, मञ्जुः मनोहरा 'मनोज्ञं मञ्जु मञ्जुलम्' इत्यमरः, अजायत। तथा च प्रकृतत एव शोभनस्य चन्द्रस्य यदशोभनत्वं वर्षाकालेन कृतं तद्वर्षाकालनिवृत्त्या निवृत्तमिति चन्द्रस्य तत् शोभनत्वं पुनः प्रत्यावृत्तम्। तया प्रकृतत एव मनोहराया वनराजेग्रीष्मधर्मेण यदमनोहरत्वं विहितम्, तद्ग्रीष्मघर्मेण निवृत्त्या निवृत्तमिति वनराजेरपि तत्प्राकृतिकं मनोहरत्वं पुनरप्यापन्नमित्याशयः। **जलदकालेनेत्यादौ** विनायोगे 'पृथविनानानाभिस्तृतीयाऽन्यरस्यामिति। २/३/३२ इत्यनेन तृतीयाऽवगन्तव्याः।

अत्र वर्षाकालस्य ग्रीष्मधर्मस्य चाभावे चन्द्रस्य वनराजेश्च अशोभनत्वाभावाद्विनोक्तिः। द्वयोरुपमानोपमेयभावस्य च व्यञ्जनयावगमः। यद्यपि ग्रीष्मघर्माभावे वनराजेस्तु शोभनत्वं भवत्येव तथाप्युक्ताशयेन दोषाभावात्।

## रुचिरा

विनोक्तिं लक्षयति—**यत्** यदि यत्र वेति भावः। **अन्येन**। **विना**। **अन्यत्**। **असाधु** अशोभनम्। न, **किन्तु शोभनम्**। **वाऽथवा**। अन्यत्-**असाधु** अशोभनम्। 'न साध्वन्यदसाधु वा' इति पाठे तु-यत्। अन्यत्। साधु शोभनम्। न। वाऽथवा। यत् अन्यत् असाधु अशोभनम्। 'नेति पूर्वतोऽन्वेति। इति योज्यम्। तर्हि। सेति वा शेषः। **विनोक्तिः**। अन्येन विनाऽन्यस्य यदि शोभनत्वम्, अशोभनत्वं प्रतिपाद्येत प्रतिपद्येत वा। तर्हि यद्वा-अन्येन विनाऽन्यस्य यच्छोभनत्वमशोभनत्वं वा सेति विनोक्तिरिति भावः।

दुर्बोधतां परिहर्त्तुं कारिकायाः 'नासाधु' इति दुर्बोधं पदं विवृणोति-**नासाध्वित्यादिना**।

**नासाधु**'इत्यस्ये'ति शेषः। **अशोभनम्**। **न**। **भवति**'इत्यर्थ' इति शेषः। अस्य तात्पर्य्यं निर्दिशति-**एवं**। **च**। **यद्यपि** 'नासाध्वित्यस्ये'ति शेषः। **शोभनत्वे**। **एव**, न त्वशोभनत्व इति शेषः। **पर्य्यवसानं**'द्वौ नञौ प्रकृतमर्थमवगमयत' इति नयेनान्ततोऽवस्थानम्। **तथाऽपि**। **अशोभनत्वाभावमुखेन** 'न असाधु, किन्तु साधु'

इत्यसाधुत्वप्रतिषेधद्वारेति' भावः। **शोभनवचनस्य** 'साधु' इति प्रतिपादनस्य। **अयम्**। **अभिप्रायः**। **यत्**। **कस्यचित्**। **वर्णनीयस्य** प्रकृतस्य वस्तुनः। **अशोभनत्वमसाधुत्वम्**। 'प्रतिपाद्यते' 'प्रतिपद्यते' इति वा शेषः। **तत्**। परसन्निधेः परस्य दोषवहस्य सन्निधिः सन्निधानं तस्येति तथोक्तस्य। **एव**। **दोषः**। ननु वर्णनीयस्याशोभनत्वमेव किन्नाङ्गीक्रियताम्? किं वा परसन्निधानेन शोभनत्वमित्याशङ्क्याह—**तस्य** परसन्निधिजातदोषस्य। **पुनः**। **स्वभावतः**। **शोभनत्वं** साधुत्वम्। **एव**। **इति** ('अभिप्राय'इत्यनेनास्य सम्बन्धः)। इदमुक्तम्—विनार्थकं पदं प्रयोज्य यस्य साधुत्वं प्रतिपाद्यते, तस्य स्वाभाविकं साधुत्वमेव, असाधुत्वं तु यस्य विनाऽर्थकेन पदेन सन्निधानं निषिध्यते तत्कृतमेव। एतेन—'दुःखदत्वं विना पापमविद्यामोहमन्तरा। विना दुःखं च निरयः साधुः कस्य न सम्मतः?' इत्यादौ नायमिति सूचितम्, दुःखदत्वादि विना पापादित्यस्यैवानभिमतत्वात्। इति।

उदाहरति-**यथा**-**विने**त्यादिना।

'**जलदकालेन** वर्षाकालम्। 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्।' २/३/३२ इति तृतीया। **विना**। **चन्द्रः**। **निस्तन्द्रतां** निरालस्यमुपचारादुज्ज्वलप्रकाशत्वम्। **गतः**। **ग्रीष्मोष्मणा** ग्रीष्मघर्मेण। **विना**। **वनराजिर्व**-नानां राजिः पङ्क्तिः। **मञ्जुः** सुन्दरा। 'मनोज्ञं मञ्जु मञ्जुलम्।' इत्यमरः। **अजायत**। अत्र स्वतः सुन्दर योश्चन्द्रव-नराज्योर्मेघग्रीष्मोष्मसन्निधानरूपदोषापगमेन साधुत्वसिद्धिः॥' यथा वा—'निशयेव विना सरोजिनी सरसी प्रावृषमन्तरा यथा। विशदत्वमुपैति भारती जडभावेन विना विपश्चिताम्॥' इति॥ १८०॥'

असाध्वशोभनं यथा—

**'अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम्।**

**का दिनश्रीर्विनार्केण का निशा शशिना विना ॥'**

**'निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम्।**

**उत्पत्तिरिन्दोगोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन ॥'**

अत्र परस्परविनोक्तिभङ्ग्या चमत्कारातिशयः। विनाशब्दप्रयोगा भावेऽपि विनार्थविवक्षायां विनोक्तिरेवेयम्। एवं सहोक्तिरपि सहशब्दप्रयोगाभावेऽपि सहार्थविवक्षाया भवतीति बोध्यम्।

---

## विवृतिः

**जनातीतं** मृतम्। **का** कुत्सिता **विनिद्रा**। प्रफुल्ला। परस्परस्य दर्शनं विना परस्परजन्मनिरर्थककत्वमुखेनाशोभनत्वमिति भङ्ग्येत्युक्तम्॥ **एवं सहोक्तिरिति**। अत एव 'सममेव नराधिपेन सा' इदमित्युदाहरणमुपपन्नम्॥ समासोक्त्यलंकारमाह—**समासोक्तिरिति**। समैः प्रस्तुताप्रस्तुतसाधारणैः। यत्रेत्यव्ययं य इत्यर्थे। लिङ्गं स्त्रीत्वादि। व्यवह्रियते विशेषेण प्रतीयतेऽनेनेति व्यवहारोऽवस्थाभेदः। 'इह तु स्वावस्थासमारोपेण इत्यादिवक्ष्यमाणस्वरसाद् अत्र व्यवहारसमारोपे कृतप्रकृतविशेषाधानस्यानुभवसिद्धतया व्यवहारः।

## विज्ञप्रिया

**अनुयान्त्येति**। सीतां प्रति अनसूयावाक्यमिदम्। जनानीतं परिजनरहितम्।

विनाशब्दाभावेऽपि तदर्थपर्यवसानेऽप्ययमलङ्कार इत्याह—**निरर्थकमिति**। **अत्रेति**। परस्परादर्शनादेव परस्परविनोक्तिभंङ्गिलाभ इत्यर्थः। **एवं सहोक्तिरपीति**। तृतीयामात्रबलादित्यर्थः।

## लोचन

जनातीतं लोकान्तिकान्निर्जनस्थानं गतमिति यावत्।

विभाता-विकसिता।

विनाशब्दाभावादत्र कथं विनोक्तिरित्याशङ्क्याह—**विनाशब्देति**।

सहशब्दाभावे सहार्थविवक्षा, यथा 'ततो भार्गवप्रौढाहङ्कृतिकन्दलेन सहसा तंद्भग्नमैशं धनु'रिति।

**"वनश्रियं वसन्तेन ज्योत्स्नया तुहिनद्युतिम्।**

**कान्तया शून्यमालोक्य कस्य चेतो न दूयते ॥"**

इत्यत्र न दूयत इत्यनेनासाधुत्वमुक्तप्रायमिति विनोक्तिरेव।

## कुसुमप्रतिमा

अतएवात्र जलदकालस्य ग्रीष्मोष्मणश्चाभावे चन्द्रस्य वनराजेश्च अशोभनत्वाभावाद्विनोक्तिः ।

उभयोरूपमानोपमेयवस्तु व्यज्यते ।

(क) असाधुपद व्याचष्टे असहिक्ति । अशोभनं भवतीति शेषः ।

शोभनचाभावे उदाहरति अन्विति । वनवासकाले सीतां प्रति मुनिपत्नीनामुक्तिरियम् । हे सीते ! जनातीतं सर्वलोकोत्तरचरित्रम्, कान्तं भर्त्तारं रामम्, अनुयान्त्या अन्वागच्छन्त्या त्वया, साधु उचितमेव कृतम् । तथा च अर्केण सूर्य्येण विना दिनस्य श्रीः शोभा का कीदृशी अशोभनैवेत्यर्थः, तथा शशिना चन्द्रेण विना निशा रात्रिः का अशोभनैवेति तात्पर्य्यम् ।

अत्र सूर्य्येण विना दिनश्रियः चन्द्रेण विना निशायाश्च शोभनत्वाभावावह्निनोक्तिः । तथा दिनश्रिया निशया च सह सीताया व्यतिरेकेणोपमानोपमेयागे ध्वन्यते ।

विनार्थकनञ्प्रयोगे शोभनत्वाभावे उदाहरति निर्थकमिति । अत्र पूर्वार्द्धं विहुणराजेन उत्तरार्द्धञ्च राजकुमार्य्या उक्तम् । नलिन्याः पद्मिन्या जन्म निरर्थकं गतम्, यया नलिन्या तुहिनांशुबिम्बं चन्द्रमण्डलं न दृष्टम्, चन्द्रोदयकाले रात्रावात्मनः सङ्कोचात् आत्मप्रकाशकाले दिवसे च चन्द्रोदयभावादिति भावाः । इन्द्रोश्चन्द्रस्यापि उत्पत्तिर्जन्म निष्फलैव, येन इन्दुना विनिद्रा प्रस्फुटिता नलिनी सा पद्मिनी न दृष्टा; पद्मिनीप्रकाशकाले दिवसे आत्मन उदयाभावात् आत्मन उदयकाले रात्रौ च पद्मिन्याः प्रकाशाभावादित्याशयः ।

अत्र चन्द्रबिम्बदर्शनं विना पद्मिन्याः शोभनत्वाभावात् प्रस्फुटितपद्मिनीदर्शनं विना चन्द्रस्यापि शोभनत्वाभावाच्च विनोक्तिः । नलिनीचन्द्रयोजन्मनिष्फलदृश्यन्तु व्यङ्ग्यम् ।

अत्रेति । परस्परं नलिनीचन्द्रयोरन्योन्यं विनोक्तिभङ्ग्या विनाशब्दप्रयोगाभावेऽपि नञ्प्रयोगादेव तत्प्रयोगप्रकारेण ।

नन्वास्तां चमत्कारातिशयस्तथापि विनाशब्दप्रयोगाभावे विनोक्तिर्न भवितुमर्हति तदन्वर्थायोगादित्याह विनेति । एतेन विनार्थकशब्दमावस्यैव प्रयोगे विनोक्तिरिति ग्रन्थकारस्याप्याशयः सूचितः ।

इमञ्च न्यायं सहोक्तावप्यतिदिशति एवमिति । अतएव—

**"आशयोत्तोलयामासहरकार्म्मुकम् । वभञ्ज च सनिर्घोषं संशयेन मम प्रियः ।।"**

इत्यादौ सहार्थकशब्दप्रयोगोभावेऽपि सहोक्तिरेव ।

## विमला

अनुयान्त्येति ।—जनातीतं—लोकातिशायिनं, मृतं वा, कान्तं—प्रियम्, अनुयान्त्या—अनुगच्छन्त्या, त्वया साधु—सम्यक्, कृतम्; तथा हि, अर्केण—सूर्येण, विना दिनश्रीः,—दिवसशोभा, तथा शशिना—चन्द्रेण, विना निशा च वा ?— कुत्सिता इत्यर्थः ।

निरर्थकमिति ।—नलिन्याः,—पद्मिन्याः, जन्म—उत्पत्तिः,निरर्थकं—विफलं, गतं, यया—नलिन्या इत्यर्थः, तुहिनांशुबिम्बं—चन्द्रबिम्बं, न दृष्टम्, इन्दौः,—चन्द्रस्यापि, उत्पत्तिः निष्फलैव—निष्प्रयोजनैव, येन—इन्दु-

ना, विनिद्रा—विकसिता, प्रफुल्लेति यावत्, नलिनी—कमलिनी, न दृष्टा। अत्र पूर्वं विलक्षणस्य उत्तरञ्च राजकुमार्य्या उक्तिरिति बोध्यम्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिच्छन्दः।

अत्रेति।—परस्परस्य दर्शनं विना परस्परजन्मनिरर्थकत्वमुखेनाशोभनत्वम् इति भङ्गेत्युक्तम्। एवं सहोक्तिरिति।—अत एव "सममेव नराधिपेन सा" इहमित्युदाहरणमुपपन्नम्।

## लक्ष्मी

**असाध्विति**। एवशोभनत्वाभावे विनोक्तिमुदाहृत्य शोभनत्वाभावे उदाहर्त्तुमाह—**असाध्विति**। असाध्वित्यस्य विवरणं दर्शयति—**अशोभन**मिति। एतेन द्वैविध्यं विनोक्तेरिति दर्शितम्।

उदाहरणं दर्शयति—**अनुयान्त्येति**। वनवाससमये सीतां प्रति अनसूयावाक्यमिदम्। हे सीते! जनातीतं सर्वं लोकोत्तरचरित्रम्, कान्तं स्वामिनं श्रीरामचन्द्रम्, अनुयान्त्यानुव्रजन्त्या त्वया, साधु समीचीनमेव कृतं विहितम्। तथा च अर्केण दिवाकरेण विना दिनस्य श्रीः शोभा का कीदृशी अकिञ्चित्करा अशोभनैवेत्यर्थः तथा शशिना चन्द्रेण विना निशा रात्रिः का अकिञ्चत्करा अशोभनैवेत्यर्थः। एवञ्च पतिमन्तरा योषितो व्यर्थत्वमेवेति। सूचयति।

अत्र अर्केण विना दिनश्रियः चन्द्रेण विना रात्रेश्च शोभनत्वाभावाद्विनोक्तिः। तथा दिनश्रिया निशया च सह सीताया भेदेनोपमानोपमेयभावस्तु व्यज्यते।

अथ विनार्थकनञःसत्त्वे शोभनत्वाभावे उदाहरणं दर्शयति—**निरर्थक**मिति। विह्णराजकन्ययोरुक्तिप्रत्युक्तिरियम्। नलिन्याः कमालिन्याः जन्म उत्पत्तिः निरर्थकं व्यर्थं गतं व्यतीतम्, यया कमलिन्या तुहिनांशुबिम्बं चन्द्रमण्डलं न दृष्टम्, चन्द्रोदयसमये निशि स्वस्य मुद्रितत्वात् स्वविकसनसमये दिवसे च चन्द्रोदयाभावादित्याशयः। इति पूर्वार्द्धं विह्णस्योक्तिः। इन्दोश्चन्द्रस्यापि उत्पत्तिर्जन्म निष्फलैव व्यर्थमेव, येन इन्दुना विनिद्रा विकाशवती नलिनी सा कमलिनी न दृष्टा, कमलिनीप्रस्फुटसमये दिवसे स्वस्य उदयसमये निशि च कमलिन्याः प्रस्फुटनाभावादितिभावः। उपेन्द्रवज्रेन्द्रवज्रयो**रुपजाति**श्छन्दः, तल्लक्षणन्तूक्तं प्राक्।

अत्र चन्द्रमण्डलदर्शनमन्तरेण कमलिन्या अशोभनत्वात् विकसितकमलिनीदर्शनमन्तरेण चन्द्रस्याप्यशोभनत्वाच्च विनोक्तिः। कमलिनीचन्द्रमसोर्जन्ममयर्थसाम्यञ्च ध्वन्यते।

अत्र विनाशब्दानुपादाने वैलक्षण्यमुपपादयति—**अत्रेति**। परस्परविनोक्तिभंङ्ग्या कमलिनीचन्द्रमसोरन्योन्यविनाशब्दाऽनुपादानेऽपि नञुपादानादेव तदुपादानविधिना। **चमत्कारातिशय** इति। तथा च यथा चन्द्रबिम्बप्रदर्शनं विना कमलिन्या जन्म निरर्थकम्, तथा विकसितकमलिनीदर्शनं विना चन्द्रस्यापि जन्म निष्फलमिति परस्परजन्मनिरर्थकत्वाभिधानद्वारा चमत्कारातिशय इत्याशयः।

ननु भवतु नाम चमत्कारातिशयस्तथापि विनाशब्दानुपादानात्कथमियं विनोक्तिरित्याशङ्क्यामाह—**विनाशब्देति**। विनाशब्दप्रयोगाभावेऽपि विनाशब्दानुपादानेऽपीत्यर्थः। एतेन विनार्थकशब्दमात्रस्यैवोपादाने विनोक्तिरितिग्रन्थकर्त्तुराशयः। एवं—

**'वनश्रियं वसन्तेन ज्योत्स्नया तुहिनद्युतिम्।**
**कान्तया शून्यमालोक्य कस्य चेतो न दूयते॥'**

इत्यत्र 'न दूयते' इत्यनेनाशोभनत्वमुक्तप्रायमिति विनार्थकनञुपादानेऽपीयमेव।

उक्तमर्थमन्यत्राप्यतिदिशति—**एवमिति**। सहोक्तिरपि तृतीयामात्रबलादित्यर्थः। अतएव—

**'प्राणैश्च कोशैर्द्विषतां नरेन्द्र! मौर्व्याः समाकृष्टिमुदाहरन्ति।**
**टङ्कारपूर्त्या सुहृदां जनानां प्रमोदपूर्त्तिं च तव प्रतिज्ञाः॥'**

इत्यादौ सहशब्दानुपादानेऽपि सहार्थविवक्षया तृतीयाविधानासहोक्तिरेव।

## रुचिरा

एवं साधुत्वप्रत्यायिकां विनोक्तिमुदाहृत्यासाधुत्वप्रत्यायिकामुदाहरति—**असाध्वित्यादिना**।

**असाधु** अशोभनमुपचारात्तत्प्रत्यायिका विनोक्तिरित्यर्थः। एतेन-विनोक्तेर्भेदद्वयंम दर्शितम्। **यथा**—**'अनुयान्त्ये**त्यादि। व्याख्यातपूर्वमिदम्। पतिमन्तरा योषितो व्यर्थत्वं सूचयितुमिदमुक्तम्। अत एवात्र असाधु (अशोभन) त्वम्॥ १८१॥'

उदाहरणान्तरं निर्दिशति—'**यया**। **तुहिनांशुबिम्बं** तुहिनांशुश्चन्द्रस्तस्य बिम्बं मण्डलम्। **न**। **दृष्टम्**। तस्याः—**नलिन्याः** पद्मिन्याः। **जन्म**। **निरर्थकं** व्यर्थम्। **गतं** व्यतीतम्। चन्द्रदर्शनं विना नलिनीसमुत्पन्नाऽपि व्यर्थेति भावः। **येन**। **विनिद्रा** विकाशवती। **नलिनी**। **न**। **दृष्टा**। तस्य-**इन्दो**श्चन्द्रस्य। **उत्पत्तिर्जन्म**। **अपि**। **निष्फला**। **एव**। विह्वण-राजकन्ययोरुक्तिप्रत्युक्तिपरमिदं पद्यम्। उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक्॥ १८२॥'

ननूदाहरणान्तरनिर्देशस्य किं निमित्तमित्याशङ्क्याह—**अत्रे**त्यादि।

**अत्रो**दाहृते पद्ये। **परस्परविनोक्तिभङ्ग्या** परस्परं विनोक्तिर्दर्शनाभावाभिधानविशेषस्तया। **चमत्कारातिशयः**। यथा चन्द्रदर्शनं विना कमलिन्या जन्म निरर्थं, तथा विकसितकमलिनीदर्शनमन्तरा चन्द्रस्यापि जन्म व्यर्थमिति परस्परजन्मनिरर्थकत्वाभिधानद्वारा चमत्कारातिशय इत्यर्थमुदाहरणान्तरमिदमिति भावः।

ननु विनाशब्दप्रयोगाभावात् कथमियं विनोक्तिरित्याह—**विने**त्यादि। स्पष्टम्। अयम्भावः—नायं शब्दालङ्कारः, किन्तु—अर्थालङ्कारः, अत एवात्र विनाशब्दप्रयोगाभावेऽपि विनाऽर्थकस्य नञ एव प्रयोगात् तुहिनांशुदर्शनं विना नलिनीजन्मनः, नलिनी विकासदर्शनमन्तरा तुहिनांशुजन्मनोऽशोभनत्वप्रतिपत्तेः। इति। उक्तमर्थमन्यत्राप्यतिदिशति—**एव**मित्यादिना। स्पष्टम्। अतः—'प्राणैश्च कोशैर्द्विषतां नरेन्द्र! मौर्व्याः समाकृष्टिमुदाहरन्ति। टङ्कारपूर्त्या सुहृदां—जनानां प्रमोदपूर्तिं च तव प्रविज्ञाः॥' इत्यादावपि सहोक्तिः, सहप्रयोगाभावेऽपि 'वृद्धो यूना...।' १/२/६५ इवि निर्देशेन सहार्थे तृतीयाया एवोपपत्तेरिति स्थितम्।

**समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः ।**

**व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥ ५६ ॥**

अत्र समेन कार्येण प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपः । यथा—

**'व्याधूय यद्वसनम्बुजलोचनाया**

**वक्षोजयोः कनककुम्भविलासभाजोः ।**

**आलिङ्गसि प्रसभमङ्गमशेषमस्या**

**धन्यस्त्वमेव मलयाचलगन्धवाह ! ॥'**

**अत्र गन्धवाहे हठकामुकव्यवहारसमारोपः ।**

---

## विवृतिः

अथवा 'तत्त्वमौपम्ये यत्प्रतीयते' इति प्राचीनोक्तानुसारेण च व्यवहारसमारूपैव समासोक्तिरनेनाङ्गीकृता । ननु 'परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः' इति **काव्यप्रकाश**लक्षणानुसारेण प्रकृतवाचिना श्लिष्टविशेषणबलादप्रकृतव्यञ्जनरूपद्वितीयार्थस्योपमानत्वानङ्गीकारेणासंगतिप्रसङ्गात् । अन्यस्याप्रस्तुतस्य समासेन सकृदुच्चारणरूपसंक्षेपेणावस्थाद्वयप्रतीतिः समीसोक्तिरिति संज्ञाव्युत्पत्तिरवधेया । यद्वा समस्य कार्यदेरासेन उपन्यासेन उक्तिरप्रस्तुतावस्थाव्यञ्जनम् ॥ **व्याधूयेति** । अत्र नायिकायाः स्तनवसनाक्षेपपूर्वकालिङ्गनमेव कार्य प्रकृतस्य वायोरप्रकृतस्य नायकस्य चेति समानम् । यदि पुनर्नायिकायास्तदृशालिङ्गनमप्राप्नुवतः कस्यचिदात्मनोऽधन्यत्वनिवेदनमेतत्स्यात्तदा वायोरप्रकृतत्वान्नेयं समासोक्तिः । किंतु 'धन्याः खलु वने वाताः—' इत्यादिवक्ष्यमाणवद्वैधर्म्येणाप्रस्तुतप्रशंसैव । अहमधन्य इति प्रस्तुतस्य गम्यत्वात् । एवं च 'नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्दशीकरैः' इत्याद्युदाहरणमस्यावगन्तव्यम् । यत्र वायुर्वर्णनीयत्वेन प्रकृतस्तत्र चुम्बनरूपकार्यसाम्येन श्रृङ्गारित्वरूपनायकावस्थासमारोपश्चारुत्वमावहति ॥

## विवृतिपूर्तिः

समेति । समासेन संक्षेपेणोक्तिरर्थद्वयकथनं समासोक्तिः ॥

## विज्ञप्रिया

समासोक्त्यलङ्कारमाह—**समासोक्तिरिति** । अन्यस्य अप्रस्तुतस्य वस्तुनो व्यवहारस्य अर्थाद् व्यङ्ग्यस्य प्रस्तुते वस्तुनि समारोप इत्यर्थः । तद् व्यञ्जनं च समैः प्रस्तुताऽप्रस्तुतसमानैः कार्यलिङ्गविशेषणैरित्यर्थः ।

**व्याधूयेति** । वक्षोजयोर्वसनं व्याधूय दूरीकृत्येत्यर्थः । अत्रालिङ्गनं कार्यम् । सम्बोध्यत्वेन मलयानिलः प्रकृतः । यथा वा मम—

"उल्लास्य लास्यनिलयं विपुलोरुयुग्मं
प्रोत्क्षिप्य बाहुलतिकामतिकान्तगात्र्यः ।
यं साभिलाषमनसः प्रमदा भजन्ते
पुण्यात्मने शिशिरपावन ते नमोऽस्तु ॥

## लोचन

समासोक्तिरिति । समैस्तुल्यैर्व्यवहारस्य कृतस्य न तु रूपकवत् स्वात्मनः । अन्यस्याऽप्रस्तुतस्य ।

व्याधूयेत्यत्र गन्धवाहे हठकामुकव्यवहारसमारोपे लिङ्गसाम्यस्यापि प्रयोजकत्वे वसनव्याधूननादिकार्य-साम्यप्राधान्यादन्योदाहरणम् । एवमन्येष्वपि समासोक्त्युदाहरणेषु । कार्य्यलिङ्गविशेषणानां क्वचिद् द्वयोः क्वचित्त्रयाणां वा समावेशेऽपि बोध्यम् ।

## कुसुमप्रतिमा

सादृश्यमूलकत्वादक्तिशब्दान्तसाम्याच्च विनोक्तिं निरूप्य दानीं समासोक्तिं निरूपयति समासोक्ति-रिति । अत्रापि इत्यर्थे यत्रेत्यव्ययम् । तेन समैः प्रस्तुताप्रस्तुतयोः समानैः कार्य्यं कर्म्म, लिङ्गं स्त्री पुनर्पुंसकात्मकम्, विशेषणं भेदकधर्म्मश्च तैः, प्रस्तुते प्रकृते वस्तुनि, अप्रस्तुतस्य अप्रकृतस्य वस्तुनः पदार्थस्य यत्र यः, ध्यवहारसमारोप आचरणारोपः समासोक्तिः ।

तथा च समान कार्य्य लिङ्ग विशेषणान्वतमहारा प्रस्तुतपदार्थै अप्रस्तुतपदार्थस्य व्यवहाररोपः समासो-क्तिरिति संक्षिप्तः सरलार्थः ।

अनश्चा सहान्व षां भेदस्तु वृत्तावेव वक्ष्यते । समासेन एकोच्चारणपसक्षेपेण उक्तिः प्रस्तुताप्रस्तुतयोर-भिधानं सूचनं समासोक्तिरिति व्युत्पत्तिः ।

व्याधूश्येति । हे मलयाचलगन्धवाह ! दक्षिणवायो ! अस्या दृश्यमानायाः, अम्बुजलोचनायाः पद्मनय-नाया रमण्याः, कनककुम्भयोः स्वर्ण कलसयोः विलासं शोभां भजेते इति तयोस्तथोक्तयोः, वक्षोजयोः वक्षसि जातयोः कुवयोरित्यर्थः, वसने वस्त्रं प्रसभं बलेन व्याधूय अपसार्य्य, यत् अशेषं सर्वम् अङ्गम्, अलिङ्गसि; अतस्त्वमेव धन्यः पुण्यवान् । ईदृश्या ईदृशालिङ्गनलाभः पुण्येनैव भवतीति भावः ।

अत्रेति । गन्धवाहे प्रस्तुते वायौ, हठकामुकस्य अप्रस्तुतस्य बलपूर्वकरमणीसङ्गमशीलस्य पुरुषस्य, व्यवहारसमारोप आचरणारोपः; तस्यापीदृशादेव व्यवहारात्, अतएवात्र समासोक्तिरिति भावः । अत्र "यदि पुनः" इत्यादिना वायोः प्रकृतस्वाप्रकृतत्वसंशयोत्थानमेव रामचरणस्यानुपपन्नम् । "अत्र समेन कार्य्यण प्रस्तुते" इत्या-दिना ग्रन्थकृतैव वायोः प्रकृतत्वस्य निश्चयेन निर्द्देश्यात् ।

## विमला

समासोक्तिमाह, समासोक्तिरिति ।—समैः—प्रस्तुताप्रस्तुतसाधारणैः, रित्यर्थः, कार्य्यलिङ्गविशे-षणैः—कार्य्याणि च लिङ्गानि च विशेषणानि चेति तैः तथोक्तैः, कार्य्यैः, लिङ्गैः—पुलिङ्गस्त्रीलिङ्गनपुंसकलिङ्गवाचि-त्वप्रत्यायकैः प्रत्ययैः, विशेषणैश्चेत्यर्थः, यत्र [यद्वा—यत्रेत्यव्ययं य इत्यर्थे] प्रस्तुते अन्यस्य—अप्रस्तुतस्य,

वस्तुन:,—विषयस्य, व्यवहारसमारोप:,—व्यवह्रियते—विशेषेण प्रतीयते अणैव इति व्यवहार:,—अवस्थाभेद:, तस्य समारोप:, इह तु स्वास्थासमारोपेणेत्याहि वक्ष्यमाणस्वरसात् अत्र व्यवहारसमारोपे कृतप्रकृतविशेषाधानस्यानुभवसिद्धतया व्यवहार:; अथवा "तत्त्वमौपम्ये यत् प्रतीयते" इति प्राचीनोक्तानुसारेण च व्यवहारसमारोपरूपैव समासोक्तिरनेनाङ्गीकृता, न तु "परोक्तिर्भेदकै: श्लिष्टै: समासोक्ति:' इति काव्यप्रकाशलक्षणानुसारेण प्रकृतवाचिना श्लिष्टविशेषणबलात् अप्रकृतव्यञ्जनरूपद्वितीयार्थस्योपमानत्वानङ्गीकारेणासङ्गतिप्रसङ्गात्, सा समासोक्ति:,—समासेन—सकृदुच्चारणरूपसङ्क्षेपेणावस्थाद्वयप्रतीति: समासोक्तिरिति संज्ञाव्युत्पत्तिरवधेया; यद्वा—समस्य कार्य्यादे:, आसेन—उपन्यासेन, उक्ति:,—अप्रस्तुतावस्थाव्यञ्जनम् इति सङ्क्षेप: ।

व्याधूयेति ।—हे मलयाचलगन्धवाह ! यत्—यस्मात्, त्वम् अस्या: अम्बुजलोचनाया:,—पद्मसदृशनपनाया:, कनककुम्भविलासभाजो:,—कनकं—सुवर्णं, तस्य कुम्भौ—सुवर्णमयौ घटावित्यर्थ:, तयोर्विलास:,—शोभा, तं भजेते इति तयोस्तयोक्तयो:, ("विलासो हावभेदे स्यात् शोभालीलाप्रभेदयो:" इति गोपाल:) सुवर्णमयकलससदृशशोभाशालिनीरिति भाव:, ["भजो ण्वि:"(३/२/६२ पा.) इति ण्वि:] वक्षोजयो:,—वक्षसि जायेते इति तयोस्तथोक्तयो:, ["सप्तम्यां जनेडः" (३/२/९७ पा.) इति ड:] स्तनयो:, वसनं—वस्त्रं, व्याधूय—अपसार्य्य, अशेषं—समस्तम्, अङ्गं प्रसभं—बलात्, आलिङ्गसि—आलिङ्ग्यानन्दानुभवं करोषीति भाव:, तस्मात् त्वमेव धन्य:,—श्लाघ्य: । अत्र नायिकाया: स्तनवसनाक्षेपपूर्वकालिङ्गनमेव कार्य्यं प्रकृतस्य वायोरप्रकृतस्य नायकस्य चेति समानम्; यदि पूनर्नायिकायास्तादृशालिङ्गनम्ग्प्राप्नुवत: कस्यचित् आत्मन: अधन्यत्वनिवेदनमेतत् स्यात्, तदा वायोरप्रकृतत्वात् नेयं समासोक्ति:, किन्तु "धन्या: खलु वने वाता:—" इत्यादिवक्ष्यमाणवद्वैधर्म्येणाप्रस्तुतप्रशंसैव, अहमधन्य: इति प्रस्तुतस्य गम्यत्वात् । एवञ्च "नवा लता गन्धवहेन चुम्बिता करन्विताङ्गी मकरन्दशीकरै:" इत्याद्युदाहरणमस्यावगन्तव्यम् । यत्र वायुर्वर्णनीयत्वेन प्रकृत:, तस्य चुम्बन रूपकार्य्यँसाम्येन श्रृङ्गारित्वरूपनायकारस्थासनारोप: चारुत्वभावहति इति ज्ञेयम् । वसन्ततिलकं वृत्तम् ।

## लक्ष्मी

सादृश्यप्रयुक्त्वादुक्तिशब्दान्ततातौल्याच्च विनोक्तिं लक्षयित्वा सम्प्रति समासोक्तिं लक्षयति—समासोक्तिरिति । अत्रेत्यव्ययं य इत्यर्थे, समै: प्रस्तुताप्रस्तुतसाधारणै:, कार्य कर्म, लिङ्गं पुं-स्त्री-नपुंसकत्वव्यञ्ज्यकचिन्हम्, विशेषणं भेदकधर्मश्च तैस्तथोक्तै: तद्द्वारेतिभाव:, प्रस्तुते प्राकरणिके वस्तुनि, अन्यस्य अप्राकरणिकस्य वस्तुन: पदार्थस्य य: व्यवह्रियते विशेषेण प्रतीयतेऽनेनेति व्यवहारोऽवस्थाविशेषस्तस्य समारोप: सम्यगारोपोऽभेदप्रत्यायनम्, सा समासोक्ति: समासेन एकोच्चारणरूपसङ्क्षेपेण उक्ति: प्राकरणिकाप्राकरणिकयोरभेदप्रत्यायिकानिदर्शनिति तथाप्रसिद्धेतिव्युत्पत्ति: । तथाच समान—कार्य—लिङ्ग—विशेषणान्यतमद्वारा प्राकरणिकपदार्थे अप्राकरणिकपदार्थस्य व्यवहारसमारोप: समासोक्तिरिति सङक्षिसोऽर्थ: । अन्यांलङ्कारेण सहास्या भेदस्तु स्वयमेव वृत्तौ स्पष्टीभविष्यति ।

अत्र **विवृतिकारास्तु**—समासोक्तिरितिप्रतीकमुपादाय सम: प्रस्तुताप्रस्तुतसाधारणै: । यत्रेत्यव्ययं य इत्यर्थे । लिङ्गं स्त्रीत्वादि । व्यवह्रियते विशेषेण प्रतीयतेऽनेनेति व्यवहारोऽवस्थाभेद: । 'इह तु स्वावस्थासमारोपेण' इत्यादिवक्ष्यमाणस्वरसाद् अत्र व्यवहारसमारोपे कृतप्रकृतविशेषाधानस्यानुभवसिद्धतया व्यवहार: । अथवा 'तत्त्वमौपम्ये यत्प्रतीयते' इति प्राचीनोक्तानुसारेण च व्यवहारसमानरूपैव समासोक्तिरनेनाङ्गीकृता, न तु 'परोक्तिर्भेदकै: श्लिष्टै: समासोक्ति:' इति **काव्यप्रकाश**लक्षणानुसारेण प्रकृतवाचिना श्लिष्टविशेषणबलादप्रकृतव्यञ्जनरूपद्विती-

यार्थस्योपमानत्वानङ्गीकारेणासङ्गतिप्रसङ्गात्। अन्यस्याप्रस्तुतस्य समासेन सकृदुच्चारणरूपसङ्क्षेपेणावस्थाद्वय-प्रतीतिः समासोक्तिरितिसंज्ञाव्युत्पत्तिरवधेया। यद्वा समस्य कायादेरासेन उपन्यासेन उक्तिरप्रस्तुतावस्थाव्यञ्जनम्' इत्याहुः।

इत्थं चेयं त्रिविधा चतुर्विधा वा भवति। तथाहि समकार्यमूला, समलिङ्गमूला, समभेदकधर्ममूलेतित्रि-विधा। यदि च 'कार्यलिङ्गविशेषणैरित्यस्य कार्यं च लिङ्गं च विशेषणं चेति कार्यलिङ्गविशेषणानि तानि च तानि चेति तैस्तथोक्तैः' इत्येकशेषमत्र स्वीक्रियते तदा कार्यलिङ्गविशेषणमूला चेति चतुर्विधा। तत्र कार्यसाम्येनामुमु-दाहर्तुमाह—**अत्रेति**।

उदाहरति—**व्याधूयेति**। पवनेनोन्नीयमानवसनां काञ्चित्तरुणीं नायिकामवलोक्य पवनं स्तुवतः कस्य-चिन्नायकस्योक्तिरियम्। हे मलयाचलगन्धवाह दक्षिणपवन! अस्याः पुरोऽवलोक्यमानायाः अम्बुजलोचनायाः कमलनयनायास्तरुण्याः कनककुम्भयोः स्वर्णघटितकलशयोः विलासं शोभां भजेते इति ययोस्तथोक्तयोः 'भजो ण्विः' इति ण्विः। वक्षोजयोः वक्षसि जातयोः स्तनयोरित्यर्थः, वसनं वस्त्रं प्रसभं हठात् व्याधूय विशेषेण कम्पयित्वा दूरीकृत्येति यावत्, यत् अशेषं सर्वम् अङ्गं गात्रम् आलिङ्गसि; अतस्त्वमेव न त्वन्य इति शेषः, धन्यः कृतार्थः, एवंरूपाया एवं विधालिङ्गनप्राप्तिः पुण्यातिशयेनैव भवतीति भावः। **वसन्ततिलकं** छन्दस्तल्लक्षणन्तूक्तं प्राक्।

लक्ष्यं समर्थयति—**अत्रेति**। गन्धवाहे प्राकरणिके पवने, हठकामुकस्य अप्राकरणिकस्य बलपूर्वकतरु-णीसङ्गमशीलस्यं पुरुषस्य व्यवहारसमारोपः अवस्थाविशेषस्य सम्यगारोपः, 'नायिकायाः स्तनवस्त्रापसरणपूर्वका-लिङ्गरूपकार्यस्य प्राकरणिकाप्राकरणिकोभयसम्बन्धि त्वसाधारण्यात्' इतिशेषः, अतएवात्र समासोक्तिरिति भावः।

अत्र विवृतिकारास्तु 'यदि पुनर्नायिकायास्तादृशालिङ्गनमप्राप्नुवतः कस्यचिदात्मनोऽध न्यत्वनिवेदनमे-तत् स्यात्तदा वायोरप्रकृतत्वान्नेयं समासोक्तिः, किन्तु 'धन्याः खलु वने वाता' इत्यादिवक्ष्यमाणवद्वैधर्म्येणाप्रस्तुत-प्रशंसैव अहमधन्य इति प्रस्तुतभ्य गम्यत्वात्। एवञ्च—

'नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्दसीकरैः।'

इत्याद्युदाहरणमस्या अवगन्तव्यम्। अत्र वायोर्वर्णनीयत्वेन प्रकृतस्तत्र चुम्बनरूपकार्यसाम्येन श्रृङ्गारि-त्वरूपनायकावस्थासमारोपश्चारुत्वमावहति इति वदन्ति। तत्र **सिद्धान्तवागीशाः** खन्डयन्ति तन्न विचारसहम्। उक्ताभिप्रायस्य ग्रन्थकर्त्तुरनभिमतत्वे तु युक्तमेवोदाहरणम्, तस्याऽप्यनुमतित्वे तु विवृतिकारोक्तिः सम्यगेवेति विवेचनीयं भावुकैः।

## रुचिरा

समासोक्तिं लक्षयति—**१३७ यत्र** यस्मिन् काव्ये। **समैः** प्रस्तुताप्रस्तुतसाधारणैः। **कार्य्यालिङ्गविशेषणैः** कार्य्याणि (व्याधुवनादीनि) च लिङ्गानि (पुंस्त्रीपुंसकत्वद्योतकानि चिन्हानि) च विशेषणानि (विकसितमुखीप्रभृतीनि) चेति तैस्तथोक्तैः तद्द्वारेति भावः। **प्रस्तुते** प्रकृतधर्मिणि। अन्यस्याप्रकृतधर्म्मिणः। **वस्तुनः**। **व्यवहारसमारोपो** व्यवहारस्य (व्यवह्रियते विशेषेण प्रतीयतेऽनेनेति तस्य) अवस्थाविशेषस्य समारोपः सम्यगारोपोऽभेदप्रत्यायनम्। सा—**समासोक्तिः** समासेन संक्षेपेण नतु सर्वथा उक्तिः प्रस्तुताप्रस्तुतयोरभेदप्रत्यायिकानिदर्शनेति तथा प्रसिद्धेति भावः। 'अलङ्कार' इति प्रकृतानुप्रसक्तम्। अयम्भावः—प्रस्तुतेऽप्रस्तुतत्वप्रत्यायनमात्रं समासेनोक्तिरिति समा-सोक्तिः। असौ च प्रस्तुताप्रस्तुतयोः साधारणैः कार्य्यादिभिरेव सम्भवतीति समकार्य्यमूला समलिङ्गमूला समव्य-

वहारमूला चेति त्रिविधेति । अन्ये तु—'कार्य्यलिङ्गविशेषणैरित्यस्य 'कार्य्याणि च लिङ्गानि च विशेषणानि चेति, तानि च तानि चेति तैस्तथोक्तैः' इत्येकशेषमङ्गीकृत्य 'कार्य्यलिङ्गविशेषणमूला चे'ति चतुर्विधाममुं प्राहुः । एवं च—प्रस्तुतेऽप्रस्तुतव्यवहारारोपः समासोक्तिः, असौ च केनापि कार्य्यसाम्यादिना स्यात्, न तत्राग्रहः । 'समै'रित्यादिना तु केवलं तत्सम्भावनमिति द्योतितम् । इति । अत एव रसगङ्गाधरकाराः प्राहुः—'यत्र प्रस्तुतधर्मिको व्यवहारः साधारणमात्रोपस्थापिताप्रस्तुतधर्म्मिकव्यवहाराभेदेन भासते सा समासोक्तिः ।' इति ॥ १०९ ॥

अत्र विवृतिकाराः—समासोक्तिरिति । समैः प्रस्तुताप्रस्तुतसाधारणैः । यत्रेत्यव्ययं य इत्यर्थे । लिङ्गं स्त्रीत्वादि । व्यवह्रियते विशेषेण प्रतीयतेऽनेनेति व्यवहारोऽवस्थाभेदः । 'इह तु स्वावस्थासमारोपेण'त्यादिवक्ष्यमाणस्वरसादत्र व्यवहारसमारोपे कृतप्रकृतविशेषाधानस्यानुभवसिद्धतया व्यवहारः । अथवा—'तत्त्वमौपम्ये यत्रतीयते' इति प्राचीनोक्तानुसारेण च व्यवहारसमारूपैव समासोक्तिरनेनाङ्गीकृता । ननु 'परोक्तिर्भेदकैः श्लिष्टैः समासोक्ति'रिति काव्यप्रकाशलक्षणानुसारेण प्रकृतवाचिना श्लिष्टविशेषणवशादप्रकृतव्यञ्जनरूपद्वितीयार्थस्योपमानत्वानङ्गीकारेणासङ्गतिप्रसङ्गात् । अन्यस्याप्रस्तुतस्य समासेन सकृदुच्चारणरूपसङ्क्षेपेणावस्थाद्वयप्रतीतिः समासोक्तिरिति सञ्ज्ञाव्युत्पत्तिरवधेया । यद्वा—समस्य कार्य्यादेरासेनोपन्यासेनोक्तिरप्रस्तुतावस्थाव्यञ्जनम् ।' इत्याहुः ।

कार्य्यसाम्येनामुमुदाहर्त्तुमुपक्रमते—**अत्रे**त्यादिना । स्पष्टम् । '**व्याधूये**त्यादि ।

'हे **मलयाचलगन्धवाह** मलयाचलस्य चन्दनोत्पत्तिस्थानतया प्रसिद्धस्य मलयनाम्नः पर्वतस्य गन्धवाहो वायुस्तत्सम्बुद्धौ तथोक्त ! **अम्बुजलोचनायाः** कमलनेत्रायाः कान्ताया इति यावत् । **कनककुम्भविलासभाजोः** कनककुम्भयोः स्वर्णघटितघटयोर्विलासः शोभा तं भजत इति तयोस्तथोक्तयोः । 'भजो ण्विः ।' ३/२/६२ इति ण्विः । **वक्षोजयोः** कुचयोः । **वसनं** वस्त्रम् । **व्याधूय** विशेषेण कम्पयित्वाऽपसार्य्येति यावत् । **यत्** । प्रसभं बलात्कारेण । **अस्याः** । **अशेषं** सर्वम् । **अङ्गं** गात्रम् । यत्—**आलिङ्गसि** । तत्-**त्वम्** । **एव** 'न त्वन्य' इति शेषः । **धन्यः** कृतार्थः । वायुनोन्नीयमानवस्त्रां नायिकामवलोक्य वायुं स्तुवतो जनस्य कस्याप्युक्तिरियम् । वसन्ततिलकं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ १८३ ॥'

अत्रास्मिन् प्रस्तुते किमारोप इत्याशङ्क्याह-**अत्रेत्यादि** ।

**अत्रो**दाहृते पद्ये । **गन्धवाहे** (प्रस्तुते) । **हठकामुकव्यवहारसमारोपो** हठेन कामुकः कामी परस्त्रीचञ्चलमना इति यावत् तस्य (अप्रस्तुतस्य) व्यवहारस्तदारोपः । 'नायिकायाः स्तनवस्त्रापक्षेपपूर्वकालिङ्गनरूपकार्य्यस्य प्रस्तुताप्रस्तुतोभयसम्बन्धित्वसाधारण्या'दिति शेषः ।

अत्राहुस्तर्कवागीशाः—'यदि पुनर्नायिकायास्तद्दशालिङ्गनमप्राप्नुवतः कस्यचिदात्मनोऽधन्यत्वनिवेदनमेतत् स्यात्तदावायोरप्रकृतत्वान्नेयं समासोक्तिः, किंतु 'धन्याः खलु वने वाता' इत्यादिवक्ष्यमाणवद्वैधर्म्येणाप्रस्तुतप्रशंसैव, 'अहमधन्य' इति प्रस्तुतस्य गम्यत्वात् । एवं च—'नवा लता गन्धंवहेन चुम्बिता करम्बिताङ्गी मकरन्दशीकरैः ।' इत्याद्युदाहरणमस्यावगन्तव्यम् । अत्र वायोर्वर्णनीयत्वेन प्रकृतत्वाच्चुम्बनरूपकार्य्यसाम्येन श्रृङ्गारित्वरूपनायिकावस्थासमारोपश्चारुत्वमावहति ।' इति ।

यथा वा—'देव ! त्वां परितः स्तुवन्तु कवयो लोभेन किं तावता स्तव्यस्त्वं भवितासि यस्य तरुणश्चापप्रतापोऽधुना । क्रोडान्तः कुरुतेतरां वसुमतीमाशाः समालिङ्गति द्यां चुम्बत्यमरावतीं च सहसा गच्छत्यगम्यामपि ॥' इति । अत्र हि राज्ञि दुराचारित्वव्यवहारारोपहेतुरुत्तरार्द्धोक्तकार्य्यसाधारण्यम् ।

लिङ्गसाम्येन यथा—

**'असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः ।**

**अनाक्रम्य जगत्कृत्स्नं नो संध्यां भजते रविः ॥'**

अत्र पुंस्त्रीलिङ्गमात्रेण रविसंध्ययोर्नायकनायिकाव्यवहारः । विशेषणसाम्यं तु श्लिष्टतया, साधारण्येन, औपम्यगर्भत्वेन च त्रिधा ।

---

## विवृतिः

**असमाप्तजिगीषस्येति** । मनस्विनो नीतिवेदिनः । अत्र दृष्टान्त्वेनाप्रकृतयोरपि रविसंध्ययोः प्रकृताङ्गत्वेनैव प्रकृतत्वमवधेयम् । न चायं समासोक्तिमूलकोऽर्थान्तरन्यास इति वाच्यम् । प्रथममप्रकृतार्थप्रतीतेरसंभवात्प्राथमिकप्रतीतिविषयस्यैव समर्थकत्वाङ्गीकारात् । आरोपितस्त्रीपुंसभावयोः स्त्रीपुंसविशेषत्वाभावेन सामान्यसमर्थकत्वायोगाच्च ॥

## विज्ञप्रिया

अत्र नायिकाव्यवहाररोपभजनं कार्य्यं सम्बोध्यत्वेन पावनः प्रकृतः ।

**असमाप्तेति** । स्पष्टार्थः । परार्द्धे दृष्टान्तः । सन्ध्यां सायंसन्ध्याम् । नायकव्यवहार इत्यत्रैकशेषः । यद्यप्यत्र जिगीषुरेव प्रकृततयोपमेयभूतो रविरप्रकृतः, तथापि व्यङ्ग्यनायिकापेक्षया वाच्यो रविरापेक्षिकः प्रकृतः ।

## लोचन

**पुंस्त्रीलिङ्गत्वमात्रेणेति** । प्राधान्यतो हेतुभूतेनेत्यर्थः । श्लिष्टतया ह्यर्थतया । साधारण्येन सम्बन्धभेदभिन्नैकधर्मवत्त्वेन ।

## कुसुमप्रतिमा

असमाप्तैति । राजतरङ्गिणीस्थमिदं पद्यम् । न समाप्ता जिगीषा जेतुमिच्छा यस्य तस्य तादृशस्य मनस्विनी बुद्धिमती जनस्य कां नाम स्त्रीचिन्ता, अपि तु कापि नेत्यर्थः । तथा च रविः सूर्य्यः कृतकं समस्तं जगत् अनाक्रम्य अनतिक्रम्य, सन्ध्यां नो न भजते ।

अत्रेति । पुंस्त्रीलिङ्गमात्रेण केवलाभ्यां पुलिङ्ग स्त्रीलिङ्गाभ्यां न पुनर्वस्तुत एव पुंस्त्रीभ्याम्, रवेस्तेजोमात्ररूपत्वात् सन्ध्याश्च कालविशेषणत्वादिति मात्रपदप्रयोगाशयः । रविसन्ध्ययोः प्रस्तुतपूर्वार्द्धसमर्थकत्वेन प्रस्तुतयारित्यर्थः, नायकनायिकयोरप्रस्तुतयोः पुरुषविशेषः स्त्रीविशेषयोः, व्यवहारो यथासंख्येन व्यवहारसमारोप इति समासोक्तिरिति भावः । तथा तत्समासोक्तिमूलको विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यास एव न पुनः "अत्र दृष्टान्तत्वेनाप्रकृतयोः" इत्यादिना रामचरणेनोक्तो दृष्टान्तः; "सामान्यविशेषभावोऽर्थान्तरन्यासे प्रतिवस्तूपमादृष्टान्तयोस्तु न तथा" इति दृष्टान्तप्रकरणे ग्रन्थकृतैव समर्थ्यसमर्थकयोः सामान्यविशेषभावे सत्यर्थान्तरन्यासस्यैवाङ्गीकारात् समर्थनीयवाक्ये स्त्रीमनस्विनीः सामानत्वे निर्विवादात् समर्थकवाक्ये च रविसन्ध्ययोः

समासोक्तिघटकेनारोपेणापि पुंविशेषस्त्रीविशेषप्रतीतेरेव स्वाभाविकत्वात् आरोपविषयारोप्यमाणयोः सर्वत्रैव समानतादर्शनात्।

यदि पुनः प्रस्तुतसमर्थकत्वेन रविसन्ध्ययोः प्रस्तुतत्वं नाङ्गीक्रियते, तदेदमुदाहरणं मम वियोगवैभव खण्डकाव्ये—

**"अथ कृततिलकां वा सान्द्रसिन्दूरतैलैर्दिनपतिरूपयातो यत्र सन्ध्यां क्रमेण।**

**नयनमिव धुवन्तो भ्रान्तभृङ्गच्छलेन सह खलु दिनकान्त्याः पद्मिनी मुद्रिताऽभूत्॥"**

अत्र सन्ध्यावर्णनस्य प्रस्तुततयां तदङ्गत्वेन प्रस्तुते दिनमणौ प्रस्तुततयोश्च सन्ध्यापद्मिन्योः केवलपुंस्त्रीलिङ्गाभ्याम् अप्रस्तुतस्य पत्युः अप्रस्तुतयोश्च तत्पत्न्योर्व्यवहारसमारोपात् समासोक्तिः।

## विमला

असमाप्तेति।—असमाप्तः—समाप्तिमप्राप्ता, जिगीषा—जयेच्छा यस्य तादृशस्य, मनस्विनः,—नीतिवेदिनः, महाऽनुभावस्य जिगीषोरित्यर्थः, स्त्रीचिन्ता—कान्ताऽभिलाषः, का ? न काऽपीत्यर्थः, तथा हि, रविः,—सूर्य्यः, कृत्स्नं—समग्रं, जगत् अनाक्रम्य सन्ध्यां नो भजते। अत्र दृष्टान्तत्वेनाप्रकृतयोरपि रविसन्ध्ययोः प्रकृताङ्गत्वेनैव प्रकृतत्वमवधेयम्। न चायं समासोक्तिमूलकोऽर्थान्तरन्यास इति वाच्यं, प्रथममप्रकृतार्थप्रतीतेरसम्भवात्, प्राथमिकप्रतीतिविषयस्यैव समयकत्वाङ्गीकारात्, आरोपितस्त्रीपुंसभावयोः स्त्रीपुंसविशेषत्वाभावेन सामान्यसमर्थकत्वायोगाच्च इति बोध्यम्। विह्लणस्येदं पद्यम्।

## लक्ष्मी

द्वितीयां लिङ्गसाधारण्यमूलामुदाहरति—**असमाप्तेति**। रजततरङ्गिण्यां पद्यमिदम्। न समाप्ता पूर्णा जिगीषा जेतुमिच्छा यस्य तादृशयस्य मनस्विनो नीतिज्ञस्य जनस्य का नाम स्त्रीचिन्ता स्त्रीविषयिणी चिन्ता अपि तु क्वापि नेत्यर्तः। यथा च रविः सूर्यः कृत्स्नं समस्तं 'विश्वमशेषं कृत्स्नं समस्तनिखिलानि निश्शेषम्' इत्यमरः, जगत् संसारम् अनाक्रम्य अनतिक्रम्य सन्ध्यां सायंसन्ध्यां नो न भजते सेवते।

लक्ष्यं समर्थयति—**अत्रेति**। पुंस्त्रीलिङ्गमात्रेण रवेः पुंस्त्वेन सन्ध्यायाः स्त्रीत्वेन चेत्यर्थः रविसन्ध्ययोः प्राकरणिकपूर्वार्धसमर्थकत्वेन प्राकरणिकवयोरित्यर्थः, नायकनायिकयोः पुरुषविशेषस्त्रीविशेषयोः व्यवहारः यथाक्रमेण व्यवहारसमारोप इति समासोक्तिरित्याशयः। यद्यप्यत्र जिगीषुरेव प्रस्तुतयोपमेयभूतो रवि प्रस्तुतस्तथापि व्यङ्ग्यनायिकापेक्षया वाच्यो रविरापेक्षिकः प्रस्तुत इत्यवधेयम्।

## रुचिरा

लिङ्गसाधारण्यमूलामुदाहरति—**लिङ्गेत्यादिना**। स्पष्टम्। **असमाप्तेत्यादि**।

'**असमाप्तजिगीषस्य** न समाप्ता पूर्णा जिगीषा जेतुमिच्छा यस्य तादृशस्य। **मनस्विनो** नीतिज्ञस्य। का। **स्त्रीचिन्ता** स्त्रीविषयिणी चिन्ता। 'श्रीचिन्ता' इति पाठान्तरे 'लक्ष्मीप्राप्तिकामना' इत्यर्थः। **कृत्स्नं** समस्तम्। 'विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निश्शेषम्।" इत्यमरः। **जगत्**। **अनाक्रम्य**। **रविः** सूर्य्यः। **सन्ध्याम्**। **नो**। **भजते** सेवत इति भावः। राजतरङ्गिण्याः पद्यमिदम्॥ १८४॥'

लिङ्गसाम्येन व्यवहारारोपं निर्दिशति—**अत्र**। **पुंस्त्रीलिङ्गमात्रेण** रवेः पुस्त्वेन सन्ध्यायाः स्त्रीत्वेन चेति भावः । **रविसन्ध्ययोः** । **नायकनायिकाव्यवहारः** । 'आरोपित' इति शेषः । 'दृष्टान्तत्वेनाप्रकृतयोरपि रविसन्ध्ययोः प्रकृताङ्गत्वेनैव प्रकृतत्वमवधेयम् ।' इति विवृतिकाराः । यथा वा—'मनस्त्वया न गन्तव्याः सङ्कल्पनविकल्पनाः । किं करिष्यसि गत्वाऽपि ततस्तूष्णीं क्षणं भव ।' इति, नपुंसकस्त्रीलिङ्गाभ्यां मनोविकल्पनानां क्लीबत्वनायिकात्व-प्रत्ययः ।

तत्र शिलष्टतया यथा मम—

**'विकसितमुखीं रागासङ्गाद गलत्तिमिरावृतिं**

**दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः ।**

**जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः**

**श्रयति हरितं हन्त प्राचेतसीं तुहिनद्युति ॥'**

अत्र मुखरागादिशब्दानां शिलष्टता । अत्रैव हि 'तिमिरावृतिम्' इत्यत्र 'तिमिरांशुकाम्' इति पाठे एकदेशस्य रूपणेऽपि समासोक्तिरेव नत्वेकदेशविवर्ति रूपकम् । तत्र हि तिमिरांशुकयो रूप्यरूपकभावो द्वयोरावरकत्वेन स्फुटसादृश्यतया परसाचिव्यमनपेक्ष्यापि स्वमात्रविश्रान्त इति न समासोक्तिबुद्धिं व्याहन्तुमीशः ।

---

## विवृति

**साधारण्येन** वाच्यव्यङ्ग्यगतत्वेन ॥ **विकसितेति** । मुखमेकदेशो वक्त्रं च । रागो रक्तिमा सुरतेच्छा च । गलन्ती नश्यन्ती तिमिरावृतिर्यस्यास्ताम्, पक्षे—गलन्ती स्खलन्ती सुरतेच्छा च । गलन्ती नश्यन्ती तिमिरावृत्तिर्यस्यास्ताम्, पक्षे—गलन्ती स्खलन्ती तिमिरमेवावृतिर्वसनं यस्यास्ताम् । पक्वलवलीफलस्येव पाण्डुच्छाया कान्तिर्यस्य । कलुषान्तरः कलङ्कमलिनाभ्यन्तरः, पक्षे—ईर्ष्याकषायितचित्तः ॥ अत्र प्राच्यां बन्धकीव्यवहारश्चन्द्रे नायकव्यवहारश्च प्रतीयते ॥

## विज्ञप्रिया

**श्लिष्टतयेति** । शिलष्टशब्दस्यैवोभयविशेषणत्वेन इत्यर्थः । **साधारण्येनेति** । आर्थीरूपविशेषणस्योभयसाधारण्येनेत्यर्थः । औपम्यगर्भत्वमौपम्यप्रतीत्यनन्तरमप्यप्रस्तुतत्वव्यवहारारोपः । तस्य च त्रिधात्वं वक्ष्यते ।

**विकसितमुखीमिति** । प्रभातवर्णनमिदम् । हन्त खेदे । ऐन्द्रीं दिशं दिनकरकरस्पृष्टां पुरः सम्मुखे निरीक्ष्य जरठस्य कठिनस्य लवलीफलस्येव पाण्डुच्छायः सन् तुहिनद्युतिः कलुषान्तरः कलङ्कमलिनान्तरः प्राचेतसीं प्रतीचीं हरितं श्रयति । लवलीफलस्य पक्वत्वे सति काठिन्यं पाण्डुरत्वं च । शशिनः पाण्डुरत्वदर्शनात् । ऐन्द्रीं कीदृशीं विकसितमुखीं, प्राप्तप्रकाशसम्मुखीम् । रागासङ्गात्, किरणरक्तिमासङ्गाद् गलत्तिमिररूपावरणाम् । हन्तेत्यनेन खेदप्रकाशनम् । स्वाक्रान्तां दिशं विरोधिनाऽऽक्रान्तां दृष्ट्वा दुःखेन पाण्डुरःसन् दिगन्तरमाश्रयतीति वाक्यार्थाभिप्रायः । अप्रस्तुतस्य व्यञ्जना रविचन्द्रयोरैन्द्रीप्राचेतसीदिशोश्चारोपः । तथा हि—स्वनायिकां स्मेरमुखीम् अनुरागेण गलिताङ्गवरणां करेण स्पृशन्तं परनायकं दृष्ट्वा दुःखात् पाण्डुरच्छायो नायकस्तां त्यक्त्वा नायिकान्तरमाश्रयतीत्येवं व्यवहारस्य प्राचीरव्योः प्रतीचीचन्द्रयोश्चारोपः । तत्र च सम्मुखमुखोभयाशिलष्टमुखपदरागकरपदानां शिलष्टतेत्याह—**अत्र मुखेति** ।

## लोचन

**विकसितेति**। मुखमारम्भो वदनं च। रागो लौहित्यमासक्तिश्च। करः किरणो हस्तश्च। शिलष्टतेत्यमाशयः श्लेषाच्चातिशयोक्तिप्रयोजने नायकव्यवहारे बीजम्।

स्फुटसादृश्यतया मुखचन्द्रयोरिवेत्यर्थः। परसाचिव्यं, परस्य शब्दार्थस्य वा रोपणस्य साचिव्यं साहाय्यम्। स्वमात्रे नतु शब्दान्यापेक्षी।

## कुसुमप्रतिमा

विशेषणेति। शिलष्टतया विशेषणपदस्य श्लेषवशादुभयार्थबोधकतयाः, साधारण्येन विशेषणपदस्याश्लेषेऽपि तद्वाच्यस्य प्रस्तुताप्रस्तुतोभयवृत्तित्वेन, औपम्यगमत्वेन विशेषणस्यान्तर्निविष्टसादृश्यकत्वेन। अत्र ओपम्यगर्भत्वेनेति परमतमादायैव विधेत्यभिहितम्। स्वमते तु शिलष्तया साधारण्येन चेति द्विधैव। एतच्च परस्ताद्व्यक्तौभविष्यति।

विकसितेति। प्रभातवर्णनेयम्। तुहिनद्युतिरुचन्द्रः, पुरः अग्रतः, रागस्य रक्तिज्वः अनुरागस्य च आसाङ्गादुपस्थितेर्हेतोः, विकसितमुखीं प्रकाशितप्रथमभागां प्रफुल्लवदनाञ्च, तथा गलन्ती नश्यन्ती च तिमिरावृत्तिरन्धकारावरणं तिमिरवत् कृष्णवर्णा आवृतिरुस्त्वञ्च यस्यास्ताम्, ऐन्द्रीं पूर्वा दिशम्, दिनकरस्य सूर्य्यस्य पुरुषान्तरस्य च करेण किरणेन हस्तेन च स्पष्टां संयुक्तां धृताञ्च निरीक्ष्य दृष्ट्वा, भृशमत्यन्तं कलुषान्तरः शशचिन्हेन मलिनमध्यदेशः ईर्ष्यया अप्रसन्नमनाञ्च, तथा जरठा परिणता या लवली फलविशेषः तद्वत् पाण्डुः छाया दीप्तिर्यस्य स तादृशः सन् एकत्र प्रभातवशादन्यत्र विरहादिति भावः, हन्त खेदेन, प्राचेतसीं पश्चिमां हरितं दिशं श्रयति भजते।

अत्रेति। तथा च प्रभातवर्णनायाः प्रस्तुततया तदङ्गत्वेन प्रस्तुतायां पूर्वस्यां दिशि मुखरागादिश्लिष्टविशेषणसाम्यादप्रस्तुतया व्यभिचारिण्या नायिकाया व्यवहारसमारोपः, तथैव प्रस्तुतयोर्दिनकरचन्द्रयो शिलष्टविशेषणसाम्यादप्रस्तुतयोर्द्वयोरुपपत्योर्व्यवहारसमारोपश्चेति समासोक्तिरित्याशयः।

## विमला

साधारण्येन—वाच्यव्यङ्ग्यगतत्वेनेत्यर्थः।

विकसितेति।—हन्तेति खेदसूचकमव्ययं, तुहिनद्युतिः—तुहिनमिव शीतला द्युतिः—कान्तिर्यस्य तथोक्तः, चन्द्र इत्यर्थः पुरः—अग्रतः, रामगस्य—लौहित्यस्य अनुरागस्य च, ("रागस्तु मात्सर्य्ये लोहिंतादिषु। क्लेशादावनुरागे च गान्धारादौ नृपेऽपि च॥" इति मेदिनी) आसङ्गात्—आवेशात्, विकसितमुखीं—प्रकाशितैकदेशां प्रसन्नमुखीञ्च, तथा गलन्ती—नश्यन्ती, तिमिरावृतिर्यस्यास्तां,पक्षे—गलन्ती—निर्गच्छन्ती, तिमिरमेव आवृतिः—आवरणं, वसनमित्यर्थः यस्याः तथाभूतां, दिनकरस्य—सूर्य्यस्य, [तदभिधेयस्योपनायकस्य चेति ध्वनिः] करेण—किरणेन हस्तेन च, ("बलिहस्तांशवः कराः" इत्यमरः) स्पष्टाम् ऐन्द्रीं—पूर्वा, दिशं निरीक्ष्य—दृष्ट्वा, जरठा—परिणता, परिपक्वेति यावत्, या लवली—"नीयाड़" इत्याख्या वृक्षः, उपचारात्, तत्फलं, तद्वत् पाण्डु, छाया—कान्तिः यस्य तथाभूतः, भृशम्—अत्यर्थं, कलुषान्तरः—कलङ्कमलिनान्तःकरणः, पक्षे—ईर्ष्याकषायितचितसन्, प्राचेतसीं—पश्चिमां, लक्षणया बन्धकीञ्च, हरितं—दिशं, श्रयति—अवलम्बते। अत्र प्राच्यां बन्ध-

कीव्यवहारः चन्द्रे नायकव्यवहारश्च प्रतीयते। हरिणो वृत्तं—"नसमरसला गः षड्वैदेर्हयैर्हरिणो मता" इति च तल्लक्षणम्।

## लक्ष्मी

विशेषणसाम्यस्य त्रैविध्यं प्रतिपादयति—**विशेषणेति**। श्लिष्टतया विशेषणपदस्य श्लेषवशादुभयार्थ-प्रतिपादकतया, साधारण्येन विशेषणपदस्य श्लेषभिन्नत्वेऽपि तदभिधेयस्य प्रकृताप्रकृतोभयगतत्वेन, औपम्यग-र्भत्वेन विशेषणस्यान्तर्निविष्टसाम्यकत्वेन। अत्र स्वमते श्लिष्टतया साधारण्येनेति चेति द्वैविध्यमेव, त्रिधेत्यभिधानं तु मतान्तरमाश्रित्येत्यवगन्तव्यम्। एतच्चोपरिष्टात् स्पष्टीभविष्यति।

तत्राद्यमुदाहरति—**विकसितेति**। प्रभातवर्णनमिदम्। तुहिनद्युतिश्चन्द्रः, पुरोऽग्रतः, रागस्य किरणर-क्तिम्न सुरतेच्छायाश्च आसङ्गात् उपस्थितेर्हेतोः, विकसितं सप्रकाशं प्रसन्नं च मुखमेकदेशो वदनं च यस्यास्तां तथोक्ताम्, तथा गलन्ती नश्यन्ती संवलन्ती च तिमिरावृतिरन्धकारकृतावरणं तिमिरवत् श्यामवर्णा आवृतिर्वसनञ्च यस्यास्तां तथोक्ताम्, ऐन्द्रीं पूर्वां दिशम्, दिनकरस्य सूर्यस्य नायकान्तरस्य च करेण किरणेन पाणिना च स्पृष्टां संयुक्तां वृतां च, निरीक्ष्य अवलोक्य, भृशमत्यन्तं कलुषं कलङ्कितत्येर्ष्याकषायिततया च मलिनम् आन्तरं मध्यदेशश्चित्तं च यस्य तथोक्तः, तथा जरठा पक्वा लवली फलविशेषः तद्वत् पाण्डुः छाया कान्तिर्यस्य स तथोक्तः सन्, एकत्र प्रभातवशात् अन्यत्र वियोगादित्याशयः, हन्त! खेदे 'हन्त हर्षेऽनुकम्पायां विषादेऽपि' इत्यमरः, प्राचेतसीं पश्चिमां हरितं दिशं 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः, श्रयति भजते। स्वाक्रान्तां दिशं विरोधिनाक्रान्तामवलोक्य दुःखेन पाण्डुरः सन् दिगन्तरमाश्रयतीतिवाक्यार्थाभिप्रायः। **हरिणीप्लुतं** छन्दस्तल्लक्षणं चोक्तं प्राक्।

समासोक्तिमुपपादयति—**अत्रेति**। तथा च प्रभातवर्णनायाः प्राकरणिकत्वात् तदङ्गत्वेन प्राकरणिकायां प्राच्यां दिशि मुखरागादिश्लिष्टविशेषणसादृश्यादप्राकरणिकायाः कुलटाया नायिकाया व्यवहारसमारोपः, तथैव प्राकरणिकयोर्दिनकरतुहिनद्युत्योः श्लिष्टविशेषणसादृश्यादप्रकारणिकयोरुभयोरुपनायकयोर्व्यवहारसमारोपश्चे-तिसमासोक्तिरितिभावः।

अस्या एकदेशविवर्त्तिरूपकतः को भेद इत्युपपादयितुमुत्थापयति—**अत्रैवेति**। 'विकसिते' त्यादिपद्य **एवेत्यर्थः**। तिमिरावृतिमित्यत्र 'अंशे' इति शेषः। तिमिरांशुकमितिपाठे 'परिवर्त्तिते' इति शेषः। रूपणेऽपि तिमिररूपे उपमेये अंशुकरूपस्योपमानस्यारोपेऽपीत्यर्थः। **न त्वेकदेशविवर्त्तिरूपकमिति**। ऐन्द्रीप्रधाननायिका-निरूपणं व्यङ्ग्यम्। तद्धर्मरूपस्यांशुकरूपस्यैकदेशस्य तिमिररूपस्य वाच्यत्वेन तत्प्रसक्तिर्बोध्या। तदभावे हेतुमुपपादयति—**अत्रेति**। तत्र तिमिरांशुकमितिस्थाने, रूप्यमारोपविषयस्तिमिरम् रूपकमारोप्यमाणमशुकं च तयोर्भाव इति तथोक्तः, आरोपस्थलीय उपमेयोपमानभाव इतियावत्, द्वयोस्तिमिरांशुकरूपयो रूप्यरूपकयोः आवरकत्वेन आच्छादकत्वरूपव्यापकधर्मेण स्फुटसादृश्यतया मुखचन्द्रयोरिवेत्यर्थः, परसाचिव्यम् ऐन्द्रयां नायि-काया रूपणानुसन्धानानुकूल्यम् स्वमात्रे केवले तिमिरांशुकयोः रूप्यरूपकत्वरूपे स्वस्मिन् विश्रान्त उपक्षीणः अवस्थितः स्वत इति हेतोः समासोक्तिबुद्धिं समासोक्त्यलङ्कारप्रतीति व्याहन्तुम् एकदेशविवर्त्तिरूपकानश्रयप्रति-पादनेन बाधितुं न ईशो न समर्थः। शाब्दबोधेन रूपकवृत्त्यारोपस्यापेक्षाभावादितिभावः।

## रुचिरा

विशेषणसाम्यस्य त्रैविध्यं ब्रुवन्नाद्यमुदाहरति—**विशेषणे**त्यादिना । स्पष्टम् । '**विकसितेत्यादि** ।

'**तुहिनद्युतिश्चन्द्रः** । **पुरो**ऽग्रतः । **रागासङ्गा**द्रागस्य रक्तिम्नोऽनुरागस्य वाऽऽसङ्गः शालित्वमावेशो वा तस्मात् । **विकसितमुखीं** विकसितं सप्रकाशं प्रसन्नं वा मुखमेकदेशो वक्त्रं वा यस्यास्तां तथोक्ताम् । **गलत्तिमिरावृतिं** गलन्ती नश्यन्ती संवलन्ती वा तिमिरावृतिस्तिमिरकृतमावरणं तिमिररूपं वाऽऽवरणं यस्यास्तां तथोक्ताम् । **दिनकरकरस्पृष्टां** दिनकरः सूर्यस्तस्य करः किरणः पाणिर्वा तेन स्पृष्टा तां तथोक्ताम् । **ऐन्द्रीं** पूर्वाम् । **दिशम्** । **निरीक्ष्य** । **जरठलवलीपाण्डुच्छायो** जरठा पक्वा लवली 'हरफारेवड़ी' ति प्रसिद्धं फलं तद्वत् पाण्डुः छाया यस्य स इति तथोक्तः । **भृशम**त्यन्तम् । कलुषान्तरः कलुषं कलङ्किततयेर्ष्याकषायिततया वा मलिनमान्तरं मध्यदेशश्चित्तं वा यस्य तथोक्तः । 'स'न्निति शेषः । **हन्तः** । **प्राचेतसीं** पश्चिमाम् । **हरितं** दिशम् । **श्रयति** । हरिणीप्लुतं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १८५ ॥'

समासोक्तिं निर्दिशति—**अत्रे**त्यादिना । स्पष्टम् । अयम्भावः—एषां श्लिष्टानां प्रस्तुताप्रस्तुतोभयानुकूलत्वेनैन्द्र्या बन्धकीत्वं, चन्द्रस्य च नायकत्वं चाप्रस्तुतमारोप्यते । इति ।

यत्र तु रूप्यरूपकयोः सादृश्यमस्फुटं तत्रैकदेशान्तररूपणं विना तदसंगतं स्यादित्यशाब्दमप्येकदेशान्तररूपणमार्थमपेक्षत एवेति तत्रैकदेशविवर्तिरूपकमेव। यथा—

**'जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअम्।**

**रससंमुहीवि सहसा परम्मुही होइ रिउसेणा॥'**

अत्र रणान्तःपुरयोः सादृश्यमस्फुटमेव। क्वचिच्च यत्र स्फुटसादृश्यानापि बहूनां रूपणं शाब्दमेकदेशस्य चार्थं तत्रैकदेशविवर्तिरूपकमेव। रूपकप्रतीतेर्व्यापितया समासोक्तिप्रतीतितिरोधायकत्वात्। नन्वस्ति रणान्तःपुरयोरपि सुखसंचारतया स्फुटं सादृश्यमिति चेत्, सत्यमुक्तम्। अस्त्येव। किन्तु वाक्यार्थपर्यालोचनसापेक्षम्, न खलु निरपेक्षम्। मुखचन्द्रादेर्मनोहरत्वादिवद्रणान्तः पुरयोः स्वतः सुखसंचारत्वाभावात्।

---

## विवृतिः

एकदेशविवर्तिरूपकेण सहास्या विषयविभागं करोति—**तत्र हीति**। परस्य नायिकारूपणस्य साचिव्यमानुकूल्यम्। स्वमात्रेण सुखसामर्थ्येनैव विश्रान्तः वैचित्र्यविशेषे कार्ये उपक्षीणः॥ **जस्स इति**। 'यस्य रणान्तःपुरे करे कुर्वाणस्य मण्डलाग्रलताम्। रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥' इति संस्कृतम्। मण्डलाग्रलतां खड्गलताम्। रसेन समरेच्छया, सुरतेच्छया च। संमुखी अभिमुखगामिनी। अत्र यदि लिङ्गसाम्येन मण्डलाग्रलतायां नायिकाव्यवहारः पराङ्मुखत्वरूपकार्यसाम्येनापि रिपुसेनायां प्रतिनायिकाव्यवहारः प्रतीयते, तथापि तदुभयं रणेऽन्तः पुररूपणस्यासंगतिप्रसङ्गसापेक्षमित्येकदेशविवर्तिरूपकमेवेदमिति भावः॥

## विज्ञप्रिया

**न त्वेकदेशविवर्त्तिरूपकमिति**। ऐन्द्रीप्रधाननायिकानिरूपणं व्यङ्ग्यम्। तद्धर्मरूपस्यांशुकरूपस्यैकदेशस्य तिमिररूपस्य वाच्यत्वेन तत्प्रसक्तिर्बोध्या। तद्भावे हेतुमाह—**अत्र हीति**। रूपकान्तरस्याऽऽक्षेपे एव यत्र वाच्यो रूप्यरूपकभावो, न तु स्वस्य स्फुटसादृश्यात्तत्रैव वाच्यरूपकान्तरस्य आक्षेपत्वेन एकदेशविवर्त्तिरूपकम्। तदुदाहरणं च "जस्स रणन्ते" इति दर्शयिष्यते। प्रकृते तु अंशुकतिमिरयोः स्फुटसादृश्यादार्थरूपकनिरपेक्षः स्वतो रूप्यरूपकाभाव इत्यतो नैकदेशविवर्त्तितेत्यर्थः। स्वमात्रविश्रान्तः स्वतन्त्रः। एकदेशविवर्त्तिनो विषयं दर्शयति। अशाब्दमित्यस्य विवरणस्य व्यङ्ग्यमित्यर्थः।

**जस्स रणन्ते** इति।

**"यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्।**

**रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥"**

इति सं.। मण्डलाग्रलतां खड्गलताम्। रसो युद्धरस एव। व्यङ्ग्यप्रतिनायिकापक्षे श्रृङ्गाररसः। भीत्या पराङ्मुखी, तयैव लज्जया पराङ्मुखता मुखस्य पराश्रयत्वेन। रण एव अन्तःपुरं तत्र स्त्रिलिङ्गशब्दार्थत्वेन

मण्डलाग्रलतया रूप्यमाणनायिकाव्यञ्जनात्। स्वकरे कुर्वतो राज्ञोऽपि नायकत्वं व्यङ्ग्यम्। तद्भ्रष्टायां रिपुसेनायामपि स्त्रीलिङ्गशब्दार्थत्वेन रूप्यमाणा प्रतिनायिका व्यङ्ग्या अत्र रणेऽन्तःपुररूपणमेकदेशविवर्त्ति।

नन्वेवमस्फुटसादृश्यसत्त्व एव एकदेशविवर्त्तित्वं, तत्कथम्

**"लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम्।**

**लोकलोचनरोलम्बकदम्बैः कैर्न पीयते॥"**

इत्येकदेशविवर्त्युदाहरणं दत्तम्। तत्र लावण्यमधुनो माधुर्यस्य उपादेयत्वपर्य्यवसन्नस्य सादृश्यस्य लोचनभ्रमरयोश्च चाञ्चल्यरूपसादृश्यस्य स्फुटत्वादित्यत आह—यत्रेति।

ननु स्फुटसादृश्यादीनां बहुत्वे एकदेशविवर्त्तित्वमित्यत्र का युक्तिरित्यत्र आह—**रूपकप्रतीतेरिति**। व्यापितया बहुत्वेन तस्याश्च बहुत्ववशात् प्रथमोत्पन्नत्वेन समासोक्तिविरोधकत्वम्।

रणान्तःपुरयोरपि स्फुटसादृश्यत्वमाशङ्कते—**नन्वस्तीति**। **वाक्यार्थपर्य्यालोचनसापेक्षमिति**। नृपदर्शनाद् रिपुसेनापराङ्मुखत्वं प्रत्यर्थतात्पर्य्यालोचनेन राज्ञः शूरत्वस्य ततो रणेऽभीतत्वस्य च लाभेन तत एव सुखसञ्चारलाभ इत्यर्थः। **रणान्तःपुरयो स्वतः सुखसञ्चारालाभादिति**। नहि मुखचन्द्रयोर्मनोहरत्वमिव राज्ञो रणे भीतत्वबुद्धिं विना प्रत्यक्षादिना सुखसञ्चारत्वं गम्यमिति भावः। अत्र रणान्तः पुरयोरिति सञ्चारालाभादित्यत्र सञ्चारत्वाभावादिति क्वचित् प्रामादिक एव पाठः।

## लोचन

तर्हि कः पुनरेकदेशविवर्त्तिरूपकस्य विषय इत्याशङ्क्याह—**तत्र त्विति**। "जस्स रणन्तउर" इत्यादौ रणान्तःपुरादिकयो रूप्यरूपकयोरेकदेशान्तररूपणं मण्डलाग्रलतादिषु राजनायिकात्वाद्यारोपं विनाऽस्फुटमेव। जस्सेति।

**"यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्।**

**रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥"**

## कुसुमप्रतिमां

एकदेशविवर्त्तिरूपकसमासोक्त्योर्विषयभेदं दर्शयितुमाह अत्रेवेति। विकसितेत्यादिश्लोक एवेत्ययः। रूपणेऽपि तिमिररूपे उपमेये अंशुकरूपस्योपमानस्यारोपेऽपि। हि यस्मात्। तत्र तिमिरांशुकामिति स्थाने, रूप्यरूपकभाव आरोपस्थलीय उपमेयोपमानभावः, द्वयोस्तिमिरस्य अंशुकस्य चेत्यर्थः, आवरकत्वेन आच्छादकत्वरूपसामान्यधर्म्मेण। परसाचिव्यं प्राच्यां नायिकात्वारोपानुसन्धानसाहाय्यम् स्वमात्रविश्रान्तः केवले स्वस्मिन्नवस्थितः स्वत एव सिद्ध इत्यर्थः, इति हेतोः, समासोक्तिबुद्धिं समासोक्त्यलङ्कारप्रतीतिम्, व्याहन्तं बाधितुम्, न ईशो न समर्थः। शाब्दबोधेन रूपकघटकस्यारोपस्य अनपेक्षितत्वादिति भावः।

यत्रेति। रूप्यरूपकयोरारोपस्थलीययोरुपमेयोपमानयोः। एकदेशान्तररूपणं कस्मिंश्चिदेकदेशे आरोपम्। तत् वाक्यम्, असङ्गतम् अनुपपन्नार्थकम् अशाब्दमपि शब्देनाप्रतिपादितमपि आर्थम् अर्थवशात् प्राप्यम्,

एकदेशान्तररूपणं कस्मिंश्चिदेकदेशे आरोपम्। रूपकमेवेति। तादृशस्थले शाब्दबोधेन रूपकघटकस्यारोपस्य अवश्यमेवापेक्षितत्वादित्याशयः।

जस्स इति। "यस्य रणान्तःपुरके करे कुर्वाणस्य मण्डलाग्रलताम्। रससम्मुखी अपि सहसा पराङ्मुखी भवति रिपुसेना ॥" इति संस्कृतानुवादः। राजस्तुतिरियम्। रणो युद्धस्थलमेव अन्तःपुरकं तस्मिन्, अत्रानुकम्पायां कप्रत्ययः; मण्डलाग्रलतां तरवारिवल्लीं काञ्चित् कामिनीञ्च, करे कुर्वाणस्य हस्ते धारयतः; यस्य राज्ञः, रसेन युद्धानुरागेण सुरतानुरागेण च सम्मुखी अभिमुखी अपि रिपुसेना शत्रुसैन्यम् अन्या कामिनी च, सहसा तत्क्षणात् पराङ्मुखी विमुखी भवति, भयात् ईर्ष्यातश्चेति भावः। "कौक्षेयको मण्डलायः करपालः कृपाणवत्" इत्यमरः।

अत्रेति। अस्फुटमेवेति। रणस्य भयङ्करस्थानत्वेन अन्तःपुरस्य च सुखविहारदेशत्वेन नितान्तवैलक्षण्यादिति भावः। अत्रेदमवधेयम्—प्रस्तुते राजनि अप्रस्तुतस्य नायकस्य व्यवहारसमारोपः, तथा प्रस्तुतायां मण्डलायलतायामप्रस्तुताया एकस्या रिपुसेनायाश्चापरस्य नायिकाया लिङ्गसाम्याद्व्यवहारसमारोपश्च ति कि समासोक्तिः, अथवा रणे अन्तःपुरत्वारोपः शाब्दः, राजनि नायकत्वारोपः मण्डलाग्रलतारिपुसेनयोर्नायिकाद्वयत्वारोपञ्च आर्थ इत्येकदेशविवर्त्ति रूपकम्, इति सन्देहे रणान्तःपुरयोरस्फुटसादृश्यतया विभाव्य सादृश्यकल्पनया रणे अन्तःपुरत्वारोपमन्तरेण वाक्यार्थसङ्गतिरिति तदारोपस्यावश्यमपेक्षणीयतया एकदेशविवर्त्तिरूपकमेवेति।

क्वचिदिति। बहूनामधिकस्येत्यर्थः, व्यपितयेति हेतोरविशेषात्। रूपणमारोपः, शाब्दं शब्दप्रतिपाद्यम्, आर्थम् अर्थतात्पर्य्याल्लभ्यम्। तत्र "लावण्यमधुभिः पूर्णम्" इत्यादौ। व्यापितया बहुस्थानवर्त्तितया।

"विकसितमुखीम्" इत्यादौ "तिमिरांशुकाम्" इति पाठेऽपि स्फुटसादृश्यतया समासोक्तिवत् "जस्सरणन्तेउरए" इत्यादावपि स्फुटसादृश्यतां प्रदर्श्य समासोक्तिमाशङ्कते नन्विति। सुखेन सञ्चारो यस्मिन् तत्तया सुखविचरणस्थानत्वरूपसामान्यधर्म्मस्य स्पष्टतेत्यर्थः, एकत्रात्मनो महावीरत्वेन शत्रुभिर्वारयितुमशक्यत्वात् अन्यत्र तु स्वकीयविलासालयत्वादिति भावः। स्फुटसादृश्यमस्ति "रणन्तेउरए" इत्यत्रेति शेषः। अत एवात्रापि समासोक्तिरेवास्तामित्याशङ्कार्थः। अस्येव स्फुटसादृश्यमित्यन्वयः। वाक्यार्थ पर्य्यलोचनसापेक्षं "जन्म रणतेउरए" इत्यादिसम्पूर्णवाक्यार्थानुसन्धानानन्तरमेव बोध्यम्, न खलु निरपेक्षं तिमिरांशुकामितिवत् तादृशसम्पूर्णवाक्यार्थानुसन्धानात् पूर्वमेव न खलु बोध्यं तत् स्फुटसादृश्यमित्यर्थः रिपुसेनायाः पराङ्मुखीभवनपर्य्यन्तज्ञानाभावे रणे सुखसञ्चारज्ञानासम्भवादिति भावः। मुखचन्द्रादेर्मनोहरत्वादिवत् "मुखचन्द्रः" इत्यादौ मनोहरत्वादिरूपसादृश्यत्वत्। स्वतः स्वभावतः सुखसञ्चारत्वाभावात् रणे यस्य कस्यचित् सुखसञ्चारत्वाभावेन रणान्तःपुरयोरुभयोरेव तदभावादित्यर्थः, एकत्राभावे उभयत्रैवाभावस्य तार्विकैरङ्गीकृतस्वादिति भावः।

एतेन यत्र रूप्यरूपकयोः सादृश्यमस्फुटम्, यत्र वा बहूनां शाब्दम् एकदेशस्य रूपणञ्च आर्थम्, तत्रैकदेशविवर्त्तिरूपकम्। यत्र तु सादृश्यंस्फुटम्, यत्र वा बहूनः न रूपणम्, तत्र समासोक्तिरिति सिद्धान्तितम्।

साधारण्य नेति। विशेषणसाम्ये तस्य प्रस्तुताप्रस्तुतोभयवृत्तत्वं नेत्यर्थः।

## विमला

अत्रेति।—एकदेशविवर्त्तिरूपकेण सहास्या विषयविभागं करोति, तव हीति।—तत्र—"विकसितमुखीं—" इत्युदाहरणे, रूप्यरूपकभावः,—रूप्यम्—आरोपविषयः तिमिरं, रूपकम्,—आरोप्यमाणम् अंशुकं तयोर्भावः, द्वयोः,—तिमिरांशुकयोः, आवरकत्वेन—आच्छादकत्वेन, परसाचिव्यं—नायिकारूपणानुकूल्य,

वाक्यार्थपर्य्यालोचनसाहाय्यमित्यर्थः, अनपेक्ष्य—अगृहीत्वाऽपि, स्वमात्रेण—सुखसाधनसामर्थ्येन, विश्रान्तः,—वैचित्र्यविशेषे कार्य्ये उपक्षीणः, सादृश्यावबोधकतया स्वतः सिद्धः इत्यर्थः, इति हेतोः समासोक्तिबुद्धिं व्याहन्तुं—खण्डयितुं, न ईशः,—न शक्तः ।

यत्रेति ।—यत्र, वाक्ये इति शेषः, अस्फुटम्—अस्पष्टं, तत्र एकदेशान्तरस्य रूपणं विना तत्—वाक्यम्, असङ्गतम्—अनुपपन्नम् । अशाब्दं—शब्दाप्रतिपाद्यम् । आर्थम्—अर्थबललभ्यम् ।

जस्सेति ।—["यस्य रणान्तःपुरे करे कुर्वाणस्य मण्डलाग्रस्ताम् । रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥' इति संस्कृतम्] रण एव अन्तःपुरं तत्र, करे मण्डलाग्रलताम्—असिलाताम् [अपरां नायिकामिति ध्वनिः] कुर्वतः यस्य रससम्मुखी—रसेन—समरेच्छया सुरतेच्छया च, सम्मुखी—अभि,मुखगामिनी, उत्साहाभिमुखी अनुरागवती चेत्यर्थः, रिपुसेना—शत्रुबलं, [कान्ताचेति ध्वनिः] सहसा पराङ्मुखी भवति । अत्र यदि लिङ्गसाम्येन मण्डलाणलतायां नायिकाव्यवहारः, पराङ्मुखस्वरूपकार्य्यसाम्येनापि रिपुसेनायां प्रतिनायिका व्यवहारः, प्रतीयते, तथाऽपि तदुभयं रणे अन्तःपुररूपणस्य असङ्गतिप्रसङ्गसापेक्षमित्येकदेशविवर्त्तिरूपकमेवेदम् इति भावः । अलङ्कारकौस्तुभे तु संस्कृतभाषायामेव दर्शित पद्यमेतदिति ज्ञेयम् । आर्य्या छन्दः ।

क्वचिच्च यत्रेति ।—अत्र साहचर्य्यमर्य्यादया प्रथमत एवात्राप्रस्तुतोपस्थितिरिति भावः । रूपकप्रतीतेरिति ।—व्यापितया—बहुगामितया इत्यर्थः, समासोक्ति प्रतीतेः तिरोधायकत्वात्—आवरकत्वात्, यथा—"लावण्यमधुभिः पूर्णं—" इत्यादि । सुखसञ्चारतयेति ।—यस्या अन्तःपुरे सुखं सञ्चरित तथा रणेऽपीति भावः । निरपेक्षं—वाक्यार्थपर्य्यालोचननिरपेक्षमित्यर्थः, ततश्च बहूनां स्फुटसादृश्यानां सद्भावे तथा अस्फुटसादृश्यानां सद्भावे रूपणस्य अव्यापित्वेऽपि यदि एकदेशस्य रूपणं स्यात्, तदा एकदेशविवर्त्तिरूपकमेवेति बोध्यम् ।

## लक्ष्मी

**यत्रेति** । रूप्यरूपकयोः आरोपस्थलीययोरुपमेयोपमानयोः (लावण्यमधुनोः) एक देशान्तररूपणं कुत्रचिदेकभागे आरोपम्, तत् वाक्यम् असङ्गतम् अनुपपन्नार्थकम् अशाब्दमपि शब्देनाबोधितमपि आर्थम् अर्थशाल्लभ्यम् एकदेशान्तररूपणं कुत्रचिदेकभागे आरोपम् । **रूपकमेवेति** । एवंविधस्थले शाब्दबोधेन रूपकवृत्त्यारोपापेक्षायाः परमावश्यकत्वादितिभावः ।

तादृशस्थलमेवोदाहरति—**जस्सेति** ।

**'यस्य रणान्तःपुरके करे कुर्वाणस्य मण्डलाग्रलताम् ।**

**रससंम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥' इति संस्कृतम् ।**

कस्यचिद्राज्ञः स्तुतिरियम् । रणः सङ्ग्राम एवान्तपुरं तत्र, मण्डलाग्रः खङ्ग एव लता ताम्, कांचिन्नायिकां च ।

'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' इत्यमरः'

करे पाणौ कुर्वाणस्य धारयतः, यस्य राज्ञः, रसेन सङ्ग्रामोत्साहेन सुरतानुरागेण च सम्मुखी अभिमुखगामिनी अपि रिपुसेना शत्रुबलम्, अन्या नायिका च, सहसा तत्क्षणात् पराङ्मुखी विमुखगामिनी भवति भयात् मानाच्चेतिभावः ।

उदाहरणसङ्गमनाय रूपकहेतुमुपपादयति—**अत्रेति**। **अस्फुटमेवेति**। रणस्य भयप्रदस्थानत्वेन अन्तःपुरस्य च भोगविलासदेशत्वेन चात्यन्तवैलक्षण्यादित्याशयः। अत्र चापाततः समासोक्तेः गम्यमानत्वेऽपि औपम्यास्फुटत्वेन शब्दार्थयोरनपेक्षितत्वेनैकदेशविवर्त्तिरूपकमेव। तथाहि प्रकृतराजनि अप्रकृतनायकस्य व्यवहारसमारोपः, तथा प्रकृतायां मण्डलाग्रलतायामप्रकृताया एकस्या रिपुसेनायाश्चान्यस्या नायिकाया लिङ्गसादृश्याद् व्यवहारसमारोपश्चेति किं समासोक्तिराहोस्वित् रणे अन्तःपुरत्वारोपणं शाब्दः, राजनि नायकत्वारोपणं मण्डलाग्रलतारिपुसेनयोर्नायिकाद्वयत्वारोपणं च आर्थमिति 'यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तत्' इत्युक्तदिशैकदेशविवर्त्तिरूपकमिति संशये, रणान्तः पुरयोरस्फुटसाम्यतया विचार्य साम्यकल्पनया रणे अन्तः पुरत्वारोपणं विना वाक्यार्थानुपपत्तिरिति तदारोपणस्य परमावश्यकतया एकदेशविवर्त्तिरूपकमेवेति तात्पर्यम्।

ननूक्तोदाहरणेऽस्फुटसादृश्यानां शाब्दरूपणाधिक्यमुपलभ्यते, तत् किं स्फुटसादृश्यानां शाब्दरूपणाधिक्ये रूपणं सर्वथैव न सम्भवतीत्याकाङ्क्षायां क्वचित् सम्भवतीत्युपपादयति—**क्वचिच्चेति**। बहूनाम् अधिकस्येत्यर्थः। **व्यापितयेतिहे**तोर्विशेषाभावात्। रूपणम् आरोपः, शाब्दं शब्दबोध्यम्, आर्थम् अर्थवशात् प्राप्यम्। तत्र 'लावण्यमधुभिः पूर्णम्' इत्यादौ व्यापितया अधिकस्थानवर्तितया। **अयमाशयः**—यत्र स्फुटसादृश्यानां शाब्दरूपणाधिक्यत्वेऽपि विशेष्यपदार्थतस्य च शाब्दं रूपणं तत्र समासोक्तिः, यत्र च विशेष्यपदार्थस्य शाब्दं रूपणं तत्रैकदेशान्तररूपत्वस्यार्थवशाल्लभ्यत्वेऽपि स्फुटसादृश्यानामन्येषामाधिक्यात् शाब्दत्वेन रूपकमेव, तथाऽस्फुटसादृश्यानां शाब्दरूपणाधिक्यत्वेन विशेष्यपदार्थस्य शाब्दरूपणानालिङ्गित्वे रूपकमिति।

'विकसितमुखीम्' इत्यादौ 'तिमिरांशुकाम्' इति पाठपरिवर्त्तनेऽपि सादृश्यस्य स्फुटतया समासोक्तिः यथा स्वीकृता तथैव 'जस्य रणन्तेउरए' इत्यादावपि सादृश्यस्य **स्फुटत्वात्** समासोक्तिः कथं नेत्याशङ्कते—**न्विति**। सुखेन सञ्चारो गतिर्यत्र तस्य भावस्तया सुखसंचरणदेशत्वरूपसामान्यधर्मस्य स्फुटतयेत्यर्थः, एकत्र स्वस्य महावीरत्वेन विपक्षिमिरवरोद्रधुमसमर्थत्वात् अन्यत्र त्वात्मनो विलासस्थानत्वादित्यभिप्रायः। **स्फुटसादृश्यमिति** 'रणान्ते उरए' इत्यत्रेतिशेषः अतश्चात्रापि समासोक्तिरेवाङ्गीकरणीयेतिपूर्वपक्षिग्रन्थाशयः। समाधत्ते—**सत्यमिति**। सत्यमित्यर्द्धाङ्गीकारे। अस्त्येव स्फुटसादृश्यमितिशेषः। वाक्यार्थस्य 'जस्स रणन्ते उरए' इत्यादिसमस्तवाक्यार्थस्य पर्यालोचने अनुसन्धाने सापेक्षं तदन्तरमेव प्रतिपाद्यम्, न खलु निरपेक्षं तमिरांशुकमितिवत् तथाविधसमस्तवाक्यार्थपर्यालोचनात् प्रागेव यत्र खलु प्रतिपाद्यं तत् सादृश्यस्य स्फुटत्वमित्यर्थः, रिपुसेनाया विमुखीभवनं यावद्बोधाभावे रणे सुखविहारबोधासम्भवादित्याशयः। मुखचन्द्रादेर्मनोहरत्वादिवत् 'मुखचन्द्रः' इत्यादौ मनोहरत्वादिरूपसाम्यवत्। स्वतः स्वतन्त्रताः सुखसञ्चारत्वाभावात् रणे यस्य कस्यापि सुखविहारत्वाभावेन रणान्तः पुरयोर्द्वयोरेव तदभावात्।

इत्थञ्च यत्रारोपस्थलीययोरुपमानोपमेययोः अस्फुटसादृश्यम्, यत्र बहूनामारोपः शाब्दः एकदेशस्यारोपश्चार्थः तत्रैकदेशविवर्त्तिरूपकम्। यत्र तु स्फुटसादृश्यं यत्र वा बहूनामारोपो न, तत्र समासोक्तिरितिविषयभेदोऽवगन्तव्यः।

## रुचिरा

अत्र समासोक्ति स्थूणनिखननन्यायेन द्रढयितुमाह—**अत्रैवेत्यादि**।

**अत्रोदाहृते पद्ये**। **एव**। **च**। **'तिमिरावृति'** मित्यत्र 'अंशे' इति शेषः। **'तिमिरांशुका'मिति पाठे**। 'परिवर्त्तिते' इति शेषः। **एकदेशस्य**। **रूपणे** 'शाब्दे'इति शेषः। **अपि**। **समासोक्तिः**। **एव**। नतु 'यत्र कस्यचि-

दार्थत्वमेकदेशविवर्त्ति तत्' इत्युक्तदिशेति शेषः। **एकदेशविवर्त्ति**। **रूपकम्**। कोऽत्र हेतुरित्याशङ्क्याह—**हि** यतः। **तत्रोदाहृते पद्ये**। **तिमिरांशुकयोः**। **रूप्यरूपकभावो** रूप्यमारोपविषयः (तिमिरम्) च रूपकमारोप्यमाणम्(अंशुकम्) च तयोर्भाव इति तथोक्तः। **द्वयोस्तिमिरांशुकरूपयो रूप्यरूपकयोः**। **आवरकत्वेन**। **स्फुटसादृश्यतया** स्फुटं सादृश्यं ययोस्तयोः (तिमिरांशुकयोः) भावस्तत्ता तयेति तथोक्तया। **परसाचिव्यं** परस्य दिशि नायिकाऽऽरोपस्य (आर्थस्य रूपणस्य) साचिव्यं साहाय्यं तत् तथोक्तम्। **अनपेक्ष्य**। **अपि**। **स्वमात्रविश्रान्तः** स्वमात्रे तिमिरांशुकयोः रूप्यरूपकत्वरूपे शाब्दे रूपणे विश्रान्तः। मात्रपदेन दिशि नायिकात्वारोपस्यार्थस्य व्यपेक्षाव्यवच्छेदः। इति शाब्दार्थयो रूपणयोः परस्परमनपेक्षित्वेनेति भावः। **समासोक्तिबुद्धम्**। **व्याहन्तुम्** एकदेशविवर्त्तिरूपकनिश्चयं प्रतिपादयितुम्। **न**। **ईशः**। ननु 'लावण्यमधुभि' रित्यत्रापि तत्समासोक्तिरेवास्तामित्याशङ्क्याह—**यत्र** 'लावण्यमधुभि'रित्यादौ। **तु**। **रूप्यरूपकयोः** (यथा—लावण्यमधुनोः) **सादृश्यम्**। **अस्फुटम्**। **तत्र**। **एकदेशान्तररूपण**मेकदेशान्तरं यस्मिन् शाब्दं रूपणं तदपेक्षयाऽर्थम्, यस्मिन् वांऽशे आर्थं तदपेक्षया शाब्दं रूपणमिति भावः। **विना**। **तत्** आर्थं शाब्दं वेति भावः। **असङ्गतम्**। **स्यात्**। **इति** 'अत्र शाब्दार्थयोरन्योऽन्यं सापेक्षत्वेने'ति शेषः। **शाब्दम्** (कर्तृ) **एकदेशान्तररूपणं** तदभिन्नम्। **आर्थम्**। **अपि**। **अपेक्षते**। **एव**। **इति**। **तत्र** 'लावण्यमधुभि'रित्यत्र। **एकदेशविवर्त्तिरूपकम्**। **एव**। अत्र 'यत्र तु रूप्यरूपकयोः सादृश्यमस्फुटं तत्रैकदेशान्तररूपणमार्थमपेक्षत एवेति तत्रैकदेशविवर्त्ति रूपकमेवे'ति पाठान्तरं सुगमम्। 'शाब्द'मित्यत्रा 'शाब्द'मिति त्वपाठ एव, असङ्गतत्वापत्तेः। अतः 'तिमिरांशुकयो'रित्यत्रेव 'लावण्यमधुभि'रित्यत्र सादृश्यताया अनुपलम्भात् शाब्दार्थयोश्च परस्परमनपेक्षिताया असम्भवान्न समासोक्तिः किन्तु एकदेशविवर्त्ति रूपकमेव। अथ—'तिमिरांशुका'मिति पाठेऽपि सादृश्यस्फुटताया उपलम्भात् शाब्दार्थयोश्च परस्परमनपेक्षित्वान्नैकदेशविवर्त्ति रूपकं, किन्तु समासोक्तिरेवेति भावः।

एकदेशविवर्त्ति पुनरप्युदाहृत्य समासोक्तिं व्यवच्छिनत्ति—**यथा**—**जस्सेत्यादि**।

'रणंतेउरए रणान्तःपुरे रणः (सङ्ग्रामः) एवान्तःपुरं तत्र। **करे** पाणौ। **मंडलग्गलअं** मण्डलाग्रलतां मण्डलाग्रः खड्ग एव लता ताम्। कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्।' इत्यमरः। **कुणंतस्स** कुर्वाणस्य। **जस्स** यस्य। **रससंमुही** रससंमुखी रस उत्साहोऽनुरागो वा तेन सम्मुखी। **वि** अपि। **रिउसेणा** रिपुसेना। **परम्मुही** पराङ्मुखी। **सहसा**। **होइ** भवति। अत्रार्य्याच्छन्दः, तल्लक्षणं चोक्तं प्राक्॥' **इति**।।१८६॥'

उदाहरणसङ्गतिसूचनाय रूपकहेतुं निर्दिशति-**अत्रेत्यादिना**। स्फुटम्। इदमबोध्यम्—अत्रापाततः समासोक्तेः प्रतीयमानत्वेऽपि सादृश्यास्फुटत्वेन शाब्दार्थयोरनपेक्षित्वेनैकदेशविवर्त्ति रूपकमेव। इति। अत्र विवृतिकाराः 'अत्र यद्यपि लिङ्गसाम्येन मण्डलाग्रलतायां नायिकाव्यवहारः, पराङ्मुखत्वकार्य्यसाम्येनापि रिपुसेनायां प्रतिनायिकाव्यवहारः प्रतीयते, तथाऽपि तदुभयं रणेऽन्तःपुररूपणस्यासङ्गतिप्रसङ्गसापेक्षमित्येकदेशविर्त्ति रूपकमेवेदमिति भावः।' इत्याहुः।

ननूदाहृते पद्येऽस्फुटसादृश्यानां शाब्दरूपणभूयस्त्वं दृश्यते, तत् किं स्फुटसादृश्यानां शाब्दरूपणभूयस्त्वे रूपणं सर्वथैव न सम्भवति? इत्याशङ्क्य क्वचित्सम्भवतीत्याह—**क्वचिच्चेत्यादिना**। **स्पष्टम्**। अयम्भावः—'विकसितसुरुचिरवदना परितो लावण्यवारिणा पूर्णा। शितधम्मिल्लमधुव्रतजुष्टा कान्तातरङ्गिणी जयति॥' इत्यत्र स्फुटसाम्यानामपि लावण्यवार्य्यादीनां रूप्यरूपकत्वं शाब्दं वदनारविन्दयोश्चार्थमिति 'विकसितमुखी'मित्यादाविव समासोक्तिरिति सुवचत्वेऽपि, अत्र कान्तायां तरङ्गिणीत्वारोपेण रूपकप्रतीत्या समासोक्तिबुद्धेर्बाधः, तत्र पुनर्विशेष्ये शाब्दारोपस्याभावात् समासोक्तिरेव। एवं च—यत्र स्फुटसादृश्यानां

शाब्दरूपणभूयस्त्वेऽपि विशेष्यपदार्थस्य न शाब्दं रूपणं तत्र समासोक्तिः, यत्र च विशेष्यपदार्थस्य शाब्दं रूपणं तत्रैकदेशान्तररूपणस्यार्थत्वेऽपि स्फुटसादृश्यानामन्येषां भूयसा शाब्दत्वेन रूपकमेव। अथास्फुटसादृश्यानां शाब्दरूपणभूयस्त्वेन विशेष्यपदार्थस्य शाब्दरूपणानालिङ्गितत्वे रूपकमिति स्थितम्। इति।

तदेव द्रढयितुमाशङ्क्योत्तरयति-**नन्वित्यादिना**। स्पष्टम्।

साधारण्येन विशेषणसाम्ये समासोक्तिमुदाहर्त्तुमाह—**साधारण्येनेत्यदि**। स्पष्टम्।

'**वासराधीशे** वासराणां दिनानामधीशस्तत्र। **उदिते** 'सती'ति शेषः। **निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी** निसर्गसौरभेण स्वभावसिद्धेन सौगन्ध्येनोद्भ्रान्ता अत्यन्तं मत्ततां नीता ये भृङ्गा भ्रमरास्तेषां सङ्गीतं झङ्कारशब्दरूपं सुष्ठु गानं तद्वद्वा सङ्गीतं तेन शालते शोभत इत्येवंशीलेति तथोक्ता। **सरोजिनी** पद्मिनी। **स्मेरा** सुस्मिता। अजनि जाता॥ १८७॥'

ननु श्लिष्टविशेषणस्य द्व्यर्थवाचकतयाऽस्तु नामार्थान्तरप्रतिपादकत्वेन, तेन चास्तां समासोक्तिप्रत्ययः, किन्तु प्रकृते कथं साधारणविशेषणत्वे सङ्गतिरित्याशङ्क्याह—**अत्रेत्यादि**।

साधारण्येन यथा—

**'निसर्गसौरभोद्भ्रान्तभृङ्गसंगीतशालिनी।**

**उदिते वासराधीशे स्मेराजनि सरोजिनी॥'**

अत्र निसर्गेत्यादिविशेषणसाम्यात्सरोजिन्या नायिकाव्यवहारप्रतीतौ स्त्रीमात्रगामिनः स्मेरत्वधर्मस्य समारोपः कारणम्। तेन विना विशेषणसाम्यमात्रेण नायिकाव्यवहारप्रतीतेरसंभवात्। औपम्यगर्भत्वं पुनस्त्रिधा संभवति, उपमारूपसंकरगर्भत्वात्। तत्रोपमागर्भत्वे यथा—

---

## विवृतिः

**क्वचिच्च यत्रेति**। अत्र साहचर्यमर्यादया प्रथमत एवात्राप्रस्तुतोपस्थितिरिति भावः। **नायिकाव्यवहारेति**। यस्या मुखे स्वाभाविकं सौरभं तस्या एव व्यवहारसमारोपः। ननु श्लिष्टविशेषणस्य ह्यर्थशब्दप्रयोगसामर्थ्यादेवार्थान्तरप्रतिपादकत्वं साधारणविशेषणस्य तु वाच्यविशेषाधानेनैवोपलक्षणत्वात्कथं तेनार्थान्तरप्रतीतिरित्यत आह—**अत्रेत्यादि**। मात्र पदेन सरोजिन्या व्यवच्छेदः। सरोजिनीविकासे चित्तोल्लासविशेषरूपस्मेरत्वस्य तादात्म्यारोपः। **कारणं** सहकारि। **तेन** स्मेरत्वसमारोपेण। **असंभवादिति**। साधारणविशेषणस्य वाच्यविशेषाधानेनैव उपक्षीणतया व्यङ्ग्यबोधे सामर्थ्याभावादिति भावः। एवं च साधारणविशेषणमप्रस्तुतासाधारणधर्मारोपादिसहकृतमेवार्थान्तरप्रतिपादकमिति फलितम्। उपमारूपकयोः संदिग्धत्वे संकरः॥ **दन्तप्रभेति**। नन्वेतद्रूपकगर्भमेवेत्यत आह—**सुवेषत्ववशादिति**। सुवेषत्वस्यान्याथानुपपत्तेरित्यर्थः। पुष्पपल्लवाभ्यामपि शरीरशोभाविशेषस्य संभवेऽपि अलिवृन्देन तस्यासंभवात्तत्रैवोपमासमासस्यावश्यकत्वमित्यवगन्तव्यम्। लताप्रतीतौ सुवेषत्वेन शोभात्वारोपो वेदितव्यः। लावण्येति।

## विज्ञप्रिया

**निसर्गेति**। अत्राप्रस्तुतनायिका व्यङ्ग्या। तत्पक्षे च निसर्गसिद्धमुखसौरभेणोद्भ्रान्तो भृङ्गो यस्यास्तादृशी चासौ सङ्गीतशालिनी चेति समासः। एवं वासरं दिनमेव। वासरं गृहं तदधीशे गृहपतौ उदिते इत्यर्थः।

अत्र दर्शितरीत्या निसर्गेति विशेषणान्नायिकाऽऽपतति।

प्राकरणिकरविकमलिनीवृत्तान्तमात्रप्रत्यायकत्वेनापि तदुपपत्तेरित्यतस्तत्प्रत्यायकत्वनियतं स्मेरविशेषणमेवेति वक्तुमाह—**अत्र निसर्गेत्यादीति**। **स्त्रीमात्रेति**; मात्रपदात् सरोजिनीव्यवच्छेदः। तथा सरोजिन्याः, पुष्पविकाशस्मेरत्वस्यारोपवशात्तस्याः साधारणधर्मत्वं तादृशारोपश्च नायिकाव्यवहारप्रतीतेर्हेतुरित्यर्थः। **विशेषणसाम्यमात्रेणेति**। निसर्गेत्यादिविशेषणसाम्यमात्रेणेत्यर्थः। **असम्भवादिति**। रविकमलिनीवृत्तान्तेनैव तदुपपत्तेरित्यर्थः।

## लोचन

रस उत्साहोऽनुरागश्च।

क्वचिल्लावण्यमधुभि: पूर्णमित्यादौ । करमुदयमहीधर इत्यादौ ।

व्यापितयानेकपदाश्रयत्वादिति भाव: ।

सुखसञ्चारतयाऽनायासविहारास्पदत्वेन स्वतो मण्डलाग्रलतादीनां नायिकात्वाद्यारोपमनपेक्ष्य ।

स्मेरा ईषद्धासवती ।

स्त्रीमात्रगामिन: सरोजिन्यामुपचारादेव प्रवृत्ते:, कारणं प्रधानम्, इतरेषां तु तच्छक्तिसाहाय्यमेव ।

## कुसुमप्रतिमा

निसर्गेति । निसर्गसौरमेण स्वभावसिद्धसौगन्ध्येन उद्क्रान्ता मुग्धीभूता ये भृङ्गा भ्रमरास्तेषां सङ्गीतशालिनी सरोजिनी पद्मिनी तल्लक्षणा नायिका च, वासराधीशे सूर्य्ये स्वनायके च उदिते उदयाचलं प्राप्ते उपस्थिते च, स्मेरा विकसिता आनन्देन सहास्यवदना च, अंजनि जाता । प्रभातवर्णनेयम् ।

उदाहृते स्मेरेति विशेषणस्य साधारण्यं प्रतिपादयति अत्रेति । निसर्गे त्यादे: पूर्वार्द्धरूपस्य विशेषणस्य साम्यात् प्रस्तुताप्रस्तुतयोरुभयोरेव सरोजिनीनायिकयो: सत्त्वेन सादृश्यादित्यर्थ: एतत् साम्यन्तु सरोजिन्यां नायिकाव्यवहारप्रतीतिं प्रति मुख्यं कारणमिति बोध्यम् । अतएवात्र हेत्वर्थे पञ्चमी । अथ तथापि अश्लिष्टस्य स्मेरेतिविशेषणस्य कथं सरोजिन्यां प्रतीति:, तस्या हास्यासम्भवादित्याह स्त्रीमात्रेति । स्त्रीमात्रगामिन: सरोजिन्यामसम्भवात् केवलस्त्रीवर्त्तिन: । समारोप: सरोजिन्यामिति सम्बध्यते । कारणं सरोजिन्यां नायिकाव्यवहारप्रतीतिं प्रति सहकारि कारणम् । तेन सरोजिन्यां स्मेरत्वधर्म्मसमारोपेण, विना "स्मेराजनि" इत्यत्र "स्फुटाजनि" इति पाठे इत्यर्थ:, विशेषणमात्रसाम्येन केवलपूर्वार्द्धरूपविशेषणेन असम्भवादिति । "स्फुटाजनि" इति पाठे इत्यर्थ:, विशेषणमात्रसाम्येन केवलपूर्वार्द्धरूपविशेषणेन असम्भवादिति । "स्फुटाजनि" इति पाठे सरोजिनीमात्रवर्त्तिना स्फटत्वधर्म्मेण साधारणस्यापि पूर्वार्द्धरूपविशेषणस्य सरोजिनीमात्रवर्त्तितया प्रतिपादनीयत्वादित्याशय: । तेन "विकसितमुखीम्" इत्यादौ विशेषणानां ह्यर्थकतयैव साधारण्येन साम्यम्, इह तु निसर्गेत्यादीनामेकार्थकतयैव साधारण्येन साम्यमिति भेद: ।

परमतीयमौपम्यगर्भत्वमयुक्तमिति दर्शयितुं तदपि पुनर्विभजते औपम्येति । उपमागर्भत्वात्, रूपकगर्भत्वात्, उपमारूपकयो: सन्देहेसङ्करगर्भत्वाच्चेत्यर्थ: ।

## विमला

निसर्गेति ।—निसर्गसौरभेण—स्वाभाविकसौगन्धेन, उद्भावन्ता:,—विमोहिता:, ये भृङ्गा तेषां सङ्गीतशालिनी सरोजिनी—पद्मिनी, वासराधीशे—सूर्य्ये, उदिते सति, स्मेरा—विकसिता सस्मिता च, अजनि—अभूत् ।

अत्रेति । नायिकाव्यवहारप्रतीताविति ।—यस्या मुखे स्वाभाविकं सौरभं, तस्या एव व्यवहारसमारोप: । ननु श्लिष्टविशेषणस्य ह्यर्थशब्दप्रयोगसामर्थ्यादिवार्थान्तरप्रतिपादकत्वं, साधारणविशेषणस्य तु वाच्यविशेषाधानेनैवोपलक्षणत्वात् कथं तेनार्थान्तरप्रतीति: ? इत्यत आह, स्त्रीमात्रेति ।—मात्रपदेव सरोजिन्या व्यवच्छेद:; सरोजिनीविकासे चित्तोल्लासविशेषरूपस्मेरत्वस्य तादात्म्यारोप: । कारणं—सहकारि । तेन—स्मेरत्वसमारोपेण । असम्भवादिति—साधारणविशेषणस्य वाच्यविशेषाधानेनैव उपक्षीणतया व्यङ्ग्यबोधे सामर्थ्याभावादिति भाव: ।

एवञ्च साधारणविशेषण प्रस्तुतासाधारणधर्मारोपादिसहकृतमेवार्थान्तरप्रतिपादकमिति फलितम्। उपमारुपक्रयोः सन्दिग्धत्वे सङ्कर इति ज्ञेयम्।

## लक्ष्मी

साधारण्ये च विशेषणसाम्ये समासोक्तिमुदाहर्तुमाह—**साधारण्येनेति**। विशेषणसाम्ये तस्य प्राकरणिकाप्राकरणिकोभयगतत्वेनेत्यर्थः।

उदाहरति—**निसर्गेति**। प्रभातवर्णनमिदम्। निसर्गसौरभेण स्वभावसिद्धसौगन्ध्येन उद्भ्रान्ता अत्यन्तं मतत्ततां नीता ये भृङ्गा भ्रमरास्तेषां सङ्गीतं झङ्कारशब्दरूपं मनोहरगानं तद्वद्वा सङ्गीतं तेन शालते शोभते इत्येवंशीला तादृशी सरोजिनी कमलिनी तत्स्वरूपा नायिका च, वासराधीशे दिनाधिपे (सूर्ये) स्वकान्ते च उदिते उदयाचलं याते उपस्थिते च सति, स्मेरा प्रस्फुटा प्रमोदेन सहास्यमुखी च अजनि जाता। अत्र दर्शितदिशा निसर्गेति विशेषणान्नायिकाऽऽपतति।

उक्तोदाहरणे प्राकरणिकरविकमलिनीवृत्तान्तमात्रप्रत्यायकत्वेनापि तदुपपत्तेरित्यतस्तत्प्रत्यायकत्वनियतं स्मेरेतिविशेषणमेवेति तदुपपादयति—**अत्रेति**। उदाहृतपद्य इत्यर्थः, निसर्गेत्यादिविशेषणसाम्यात् 'निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी' 'इति विशेषणस्य प्राकरणिकाप्राकरणिकयोरुभयोरेव साम्यात् कमलिनीनायिकयोर्विद्यमानत्वेन सादृश्यादित्यर्थः। सादृश्यमिदं कमलिन्यां नायिकाव्यवहारप्रतीतिं प्रति प्रधानं निमित्तमित्यवधेयम्। हेत्वर्थे पञ्चमी चात्रात एव समुपपद्यते। ननु शिलष्टविशेषणस्य द्वयर्थवाचकपदप्रयोगसामर्थ्यात् भवतु नामार्थान्तरप्रतिपादकत्वं तेन चास्तां समासोक्तिप्रत्ययः, अश्लि स्य स्मेरेतिसाधारणविशेषणस्य कथं कमलिन्यां प्रतीतिः, तस्या हास्यसम्भवाभावादत आह—**स्त्रीमात्रेति**। स्त्रमात्रगामिनः कमलिन्यामसम्भवात् केवलस्त्रिवर्त्तिनः मात्रपदं कमलिन्या व्यवच्छेदार्थम्। समारोपः कमलिन्यामित्यर्थः, कारणं कमलिन्यां नायिकाव्यवहारप्रतीतिं प्रति सहकारिकारणमित्यर्थः। तेन कमलिन्यां स्मेरत्वधर्मसमारोपेण विना, 'स्मेराजनि' इत्यत्र 'स्फुटाजनि' इति पाठपरिवर्त्तने इत्यर्थः, विशेषणासाम्यमात्रेण केवलनिसर्गेत्यादिरूपविशेषणसादृश्येन। **असम्भवादिति**। 'स्फुटाजनि' इति पाठपरिवत्तने केवलकमलिनीगामिना स्फुटत्वधर्मेण निसर्गेत्यादिविषयविषय्युभयसाधारणविशेषणस्यापि केवलकमलिनीगामितयाभिधीयमानत्वादिति भावः। एवञ्चात्र निसर्गेत्यादीनामेकार्थकत्वेनैव साधारण्येन साम्यम्, 'विकसितमुखीम्' इत्यादौ तु विशेषणानां द्वयर्थकतयैव साधारण्येन साम्यमितिपरस्परं भेदः।

## रुचिरा

**अत्रोदाहृते** पद्ये। **'निसर्गेत्यादिविशेषणसाम्यात्** 'निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी'ति विशेषणस्य सरोजिनीनायिकोभयसाधारण्येन। **सरोजिन्याः**। **नायिकाव्यवहारप्रतीतौ**। **स्त्रीमात्रगामिनः**। मात्रपदेन सरोजिन्या व्यवच्छेदः। **स्मेरत्वधर्मस्य**। **समारोपः**। **कारणं**। सकारिकारणमिति भावः। तेन स्मेरत्वसमारोपेण। **विना**। **विशेषणसाम्यमात्रेण**। **नायिकाव्यवहारप्रतीतेः**। **असम्भवात्**। इदमुक्तम्—उदाहृते पद्ये 'निसर्गे'ति विशेषणंविषय विषय्युभयसाधारणं 'स्मेरे'तिविशेषणसाचिव्येन सरोजिन्यां नायिकाव्यवहारं प्रत्याययति। इति। अत एव विवृतिकारैरप्युक्तम्—'असम्भवादिति। साधारणविशेषणस्य वाच्यविशेषणाधानेनैवोपक्षीणतया व्यङ्ग्यबोधे सामर्थ्याभावादिति भावः। एवं च—साधारणविशेषणमप्रस्तुतसाधारणधर्मारोपादिसहकृतमेवार्थान्तरप्रतिपादकमिति फलितम्।' इति।

औपम्यगर्भेण विशेषणसाम्येन समासोक्तिमुदाहर्त्तुकामस्तत्रतावत्तस्य त्रैविध्यमाह—**औपम्येत्यादिना**।

**औपम्यगर्भत्वमौपम्यं** सादृश्यं गर्भेऽन्तर्यस्य (विशेषणसाम्यस्य) 'तस्य भवास्तत्त्वम्। **पुनः**। **उपमारूपकसङ्करगर्भत्वात्** उपमा च रूपकं च सङ्कर उपमारूपकयोः सन्दिग्धत्वं चेति ते गर्भे येषां तेषां भावस्तत्त्वं तस्मात्। उपमागर्भत्वेन रूपकगर्भत्वेन उपमारूपकोभयगर्भत्वेन चेति भावः। **त्रिधा**। **सम्भवति**। तत्र तेषु मध्ये। **उपमागर्भत्वे** 'सति विशेषणसाम्यात्समासोक्ति'रिति शेषः। **यथा**—'दन्तेत्यादि।

**'दन्तप्रभापुष्पचिता** दन्तानां प्रभाः, ताः पुष्पाणीव तैश्चिता व्याप्ता। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे।' २/५/५६ इति सूत्रेणोपमेयस्य पूर्वनिपातः। पक्षे-दन्तप्रभा इव पुष्पाणि तैश्चिता। **पाणिपल्लवशोभिनी** पाणिः पल्लव इवेति, पक्षे पाणिरिव पल्लव इति; शोभत इत्येवंशीला इति तथोक्ता। **केशपाशालिवृन्देन** केशपाशोऽलिवृन्दमिवेति, पक्षे केशपाश इवालिवृन्दमिति, तेन। **सुवेशा** रुचिरनेपथ्या। हरिणेक्षणा॥ इति ॥१८८॥'

**'दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी।**
**केशपाशालिवृन्देन सुवेषा हरिणेक्षणा ॥'**

अत्र सुवेषत्ववशात्प्रथमं दन्तप्रभाः पुष्पाणीवेत्युपमागर्भत्वेन समासः अनन्तरं च दन्तप्रभासदृशैः पुष्पैश्चितेत्यादिसमासान्तराश्रयेण समानविशेषणमाहात्म्याद्धरिणेक्षणायां लताव्यवहारप्रतीतिः। रूपकगर्भत्वे यथा—'लावण्यमधुभिः पूर्णं—' इत्यादि। संकरगर्भत्वे यथा—'दन्तप्रभापुष्प—' इत्यादि। 'सुवेषा' इत्यत्र 'परीता' इति पाठे ह्युपमारूपकसाधकाभावात्संकरसमाश्रयणम्। समासान्तरं पूर्ववत्। समासान्तरमहिम्ना लताप्रतीतिः। एषु च येषां मते उपमासंकरयोरेकदेशविवर्तिता नास्ति तन्मते आद्यतृतीययोः समासोक्तिः।

---

## विवृतिः

अत्र लावण्यमधुनोराह्लादकत्वे लोचनरोलम्बयोः श्यामत्वादिना स्फुटसादृश्यसंभवाद्रूपकाणां बहुत्वाभावाच्च समासोक्तिरेव, नत्वेकदेशविवर्तिरूपकम्। एकदेशविवर्तिरूपकस्य यदेतदुदाहरणं दत्तं तन्मतभेदेनेत्यवगन्तव्यम्। नन्वत्र मध्वादीनां मुके बाधात्प्राथमिकबोधानुपपत्तिरिति चेति। न। यथा 'मुखचन्द्रं चुम्बति' इत्यादौ चुम्बनस्य चन्द्रे बाधान्मुखे पर्यवसानं तथा मुखसंबन्धस्य मध्वादावसंभवाल्लावण्यादौ पर्यवसानमिति स्वीकारात्। नन्वेमपि पूर्ववत्समासद्वयाङ्गीकारेणोपमागर्भमेवेदमस्तु किमधिकेन रूपकगर्भत्वकल्पनेन इति चेत्। सत्यम्। गतानुगतिकन्यायेनास्य प्रकारस्य स्वीकाराद् ग्रन्थकृतैव खण्डनीयत्वाच्च। **द्वितीयस्त्विति**। मुखे मध्वाद्यन्वयस्यासंभवात्प्रथमत एव पद्माध्याहारेण प्रतीतिः, कुतो व्यञ्जनामात्रप्राणा समासोक्तिरिति बावः। **वस्तुपपर्यालोचनयेति**। अभिप्रेतार्थबोधानानुरोधेन संचारणीयं याचितमण्डलन्यायेनार्पणीयम्। अत्र वैदिकदृष्टान्तमाह—**दध्नेति**। अन्यथासिद्धेः सायंप्रातर्जुहोतीति वचनान्तरप्राप्तेः। **दध्नि** दधिपदे। **संचार्यते** उपक्रम्यते। विधिरप्राप्तप्रापकत्वरूपविधिशक्तिः। तदुक्तम्—'सर्वत्राख्यातसंबन्धे श्रूयमाणे पदान्तरे। विधिशक्त्युपसंक्रान्ते स्याद्धातोरनुवादता ॥' इति। यथाख्याते स्थिता विधिशक्तिर्धात्वर्थस्यान्यथासिद्धत्वे तत्रानुपयोगिनी अदग्धदहनन्यायेन पदार्थान्तरस्य विधेयतायामुपयोगं लभमाना पदान्तरे संचार्यते तथात्रपीति भावः। **अनिर्वाह इति**। अशक्यनिर्वहित्यर्थः। ननु धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायेनोपमेयस्योपमानत्वकल्पनमपेक्ष्यैकदेशविवर्त्युपमाकल्पना गुरुरित्यत आह—**अस्तु वेति**। **नेत्रैरिवेति**। 'नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरः श्रियः। पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥' इति प्रागुक्तोदाहरण इत्यर्थः।

## विज्ञप्रिया

**उपमारूपकेति**। उपमागर्भत्वे रूपकगर्भत्वे उपमारूपकयोः सन्देहसङ्करगर्भत्वे चेत्यर्थः। गर्भत्वं च तज्ज्ञानपूर्वकत्वम्। नच रूपकगर्भकस्य कथमुपमानगर्भप्रभेद इति वाच्यम्, रूपकस्यापि सादृश्यजनकत्वेन तज्जननातपूर्वं तद्बोधेन तत्पूर्वत्वादपीत्याह—

**दन्तप्रभेति**। अत्र दन्तप्रभाः पुष्पाणीवं इत्यादिरीत्या सर्वत्र पुरुषव्याघ्रादित्वादुपमासमासः। नच दन्तप्रभैव पुष्पमित्यादिरीत्या रूपकमेवेति वाच्यम्। रूपकस्य बाधकद्वयसत्त्वात्। तथा हि—"उपमितं व्याघ्रादिभिः सामा-

न्याप्रयोगे" इति पाणिन्यनुशासनेन साधारणधर्माऽप्रयोगे रूपकसमासबाधाद् उपमासमासस्यैव व्यवस्थापनादित्येकं बाधकम्। द्वितीयं ग्रन्थकृदेव आह—**अत्र सुवेषत्ववशादिति**। अयं भावः। वेषास्तदारोपितधर्माः। कटककुण्डलसिन्दूरादीनां दन्तप्रभादीनां च नायिकाधर्मवृत्तिधर्मत्वेनारोपितत्वात्। पुष्पादिभिन्नैः तैः सुवेषप्रतीतिर्न घटते इत्यतः प्रथमं दन्तप्रभादिविशेष्यके व्याघ्रादिसमास एवेत्याह—**उपमागर्भत्वेनेति**। ननु तथापि सैवानुपपत्तिः, स्वीयधर्मैः सुवेषत्वाऽसम्भवादित्यत आह—**अनन्तरं चेति**। अयमर्थः—सकृदुच्चरितैः शब्दैरसकृच्छक्तिलक्षणाभ्यां बोधासम्भवाद्दर्शितोऽयं पुष्पादिविशेष्यक उपमाससमासार्थो व्यङ्ग्य एव। तात्पर्यवशाच्छक्त्या वाक्यबोधकत्वं वा। सुवेषत्वोपपत्तिकत्वं च समासद्वयतात्पर्यग्राहकं तेन च सुवेषत्वोपपत्तौ उपपत्तिमाह—**समानविशेषणमाहात्म्यादिति**। समासद्वयघटितत्वेनोभयविशेषणात् साम्यम्। एकैकसमासेन एकैकविशेषणमिति भावः। लताव्यवहारस्तद्वल्लास्यादिः।

**लावण्यमध्विति**।—नच एकदेशविवर्त्तिरूपकोदाहरणमेव प्रागुक्तम्, कथमत्र समासोक्तिरिति वाच्यम्। साम्प्रदायिकमते एकदेशविवर्त्तिरूपकस्थले सर्वत्रव्य ङ्ग्यरूप्यांशे समासोक्तित्वस्वीकारात्, यत्र विशेषे तु न स्वीकार इत्यग्रे व्यक्तिर्भविष्यति। अत्र सामान्यधर्माप्रयोगेऽपि नोपमासमासः। मधुतुल्यलावण्यस्य पानासम्भवात्। रूपकत्वे तु मधुनः सम्भवत्येव पानम्। आस्यस्यैवात्र पानमुक्तं तस्य चोभयथापि पानासम्भव इति न वाच्यम्, 'सविशेषणौ विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे' इति न्यायान्मधुन्येव चान्वयात्।

**परीतेति पाठे** इति। सुवेषत्वस्य निजधर्मेणाऽसम्भवात्तत्सत्त्वे क्रमशः समासद्वयेनैवोपपत्तिर्दर्शितेत्यतस्तत्र न रूपकोपमायाः सन्देहसङ्करः। परीतेति पाठे तु परीतत्वं व्याप्तिः पुष्पैर्लावण्यैः सम्भवतीत्यत्र समासद्वयेनोपमारूपकयोर्भवत्येव सन्देह इति भावः। नच सामान्यधर्माप्रयोगवशादुपमा रूपकं बाधत इति वाच्यम्। रूपकस्य सम्भवे तथा रूपकाऽबाधात्। सुवेषत्ववशाद्रूपकबाधादेव तथा तद्बाधस्य प्राग् दर्शितत्वात्। सन्देहसङ्करं ग्राहयति—अत्र हीति। **समासान्तरमिति**। विनिगमकाभावेनोभयसमासान्तरं पूर्ववल्लताप्रतीतिरित्यन्वयः। तत्र हेतुमाह—**समासान्तरमहिम्नेति**। समासान्तरमत्र रूपकसमासः। तद्वत्त्वे लावण्यमधुभिः पूर्णमित्येकदेशविवर्त्तिरूपकोदाहरणेऽपि समासोक्तित्वमिदं दर्शितं साम्प्रदायिकमतानुसारेणैव।

केचित्त्वत्रैकदेशविवर्त्तिरूपके समासोक्तिं न मन्यन्ते, किन्तूपमातत्सङ्करगर्भत्व एव तां मन्यन्ते। तत्र प्रथमं रूपकसमासबाधस्याऽदर्शितत्वात्तेषां मतं दर्शयति—**एषु चेति**। आद्यं दन्तप्रभेत्यादिकम्। तृतीयं परीतत्वपाठविशिष्टम्। तदेवं द्वितीयो लावण्यमधुभिरित्याद्युक्तो रूपकविषय एव न समासोक्तिविषयः। व्यङ्ग्यरूपकं मुखस्य पद्मत्वं तद्धर्मलावण्यादौ मध्वादिरूपकं वाच्यमित्येकदेशविवर्त्तिसुवेषत्वविशेषणवति दन्तप्रभेत्यादौ।

पर्यालोचने तु न समासोक्तिर्नाप्येकदेशविवर्त्तिरूपकं किन्त्वेकदेशविवर्त्युपमैव इति स्वमतं ग्रन्थकृदाह—**पर्यालोचने त्विति**। समासे लुप्तेवकाराल्लावण्यादौ मध्वाद्युपमा वाच्या। नायिकायां तूपमा व्यङ्ग्या इत्येकदेशविवर्त्तिनी उपमैवेत्येवकारात्समासोक्तित्वव्यवच्छेदः। तद्द्वयवच्छेदस्तु तत्पर्यालोचनादित्याह—**पर्यालोचने त्विति**। विशेषणसाम्ये यत्समासोक्तरित्युक्तं तत्र विशेषणस्य साधारणत्वं श्लिष्टत्वं चेति। द्वैविध्यमेवोचितम्। औपम्यगर्भत्वरूपस्तृतीयप्रकारो नोचितः। तत्र दन्तप्रभापुष्पमिवेत्युपमासमासबोधे हरिणेक्षणा लते वेति बोधस्य समासद्वयकुसृष्टिकल्पनं विनैवोपपत्तिरित्येवं पर्यालोचना। एवं चाद्यप्रकाररीतेस्तृतीयप्रकारेऽपि सम्भवात्तत्राप्येकदेशविवर्त्युपमैवेत्यत्र उपमागर्भविशेषणिका समासोक्तिर्नास्त्येवेत्यभिप्रायः। आद्ये प्रकारे इत्युपलक्षणमेव।

**अन्यथेति**। समासद्वयकल्पना कुसृष्टयैव औपम्यगर्भस्थले समासोक्त्यङ्गीकारे इत्यर्थः। यत्र समासद्वयकल्पना कुसृष्टयसम्भवस्तत्र कथं समासोक्तिरित्यत्राह।

**ऐन्द्रं धनुरिति**। पाण्डुना पयोधरेण औपम्येनार्द्रनखक्षताभम् ऐन्द्रं धनुः दधाना सकलङ्कमिन्दुं प्रसादयन्ती प्रसन्नं निर्मलं कुर्वती शरद्रवेरत्यधिकं तापं ततानेत्यर्थः। शरदि मेघस्य पाण्डुत्वादिन्दोः निर्मलत्वान्मेघावरणाभावेन रवेस्तापाधिक्याच्च। अत्र पाण्डुपयोधरेण गौरस्तनेनाद्रनखक्षतं दधानायाः परनायिकाया गन्तृत्वेन कलङ्किनमुपनायकमनुनयन्त्यास्तत्रदर्शनेन पत्युस्तापाधिक्यं जनयन्त्याश्च नायिकायाः समासोक्त्या प्रतीतिः तद्वयवहारस्य च शरदि प्रतीतिः।

उपमागर्भसमासोक्त्यङ्गीकारे तद्गर्भत्वे च समासद्वयनियमे सा कथं स्यादित्यर्थः। आद्रनखक्षताभमित्यत्रोपमाबोधकस्याभापदस्य सक्त्वे रूपकासम्भवाद् उपमासमासे च ऐन्द्रे धनुषि आर्द्रनखक्षततुल्यत्वप्राप्तौ नायिकायां च विशेषणाभावेन तद्विशेषणस्य शरन्नायिकोभयधर्मत्वाभावेन कथं विशेषणसाम्यं कथं तस्यैवोपम्यगर्भत्वं कथं वा समासगर्भद्वयकल्पनमिति मनसिकृत्याह—

**नायिकापयोधरेणेति**। तथा च उपमागर्भसमासोक्तिर्नास्त्येव। किन्त्वत्र पयोधरस्य प्रसादयन्तीति पदस्य सकलङ्कपदस्य तापपदस्य च श्लिष्टविशेषणिका समासोक्तिरेवेयम्। नौपम्यगर्भविशेषणिका इत्युक्तमनेन।

ननु आर्द्रनखक्षताभमित्यत्रार्द्रनखक्षतमुपमानम्। ऐन्द्रं धनुश्चोपमेयम्। धारणान्वयश्चोपमेय एव बोधितस्तेनाऽसम्भवो दर्शितः। मनसा तु आर्द्रनखक्षतस्योपमानत्वं धनुषि बोध्यम्। क्षते तु तदुपमेयत्वं बोध्यम्। तथा च तत्क्षतधारणं स्तनस्य सम्भवत्येव इत्यत उपमागर्भसमासोक्तिरेवात्रापीति कथमुपमागर्भसमासोक्तिविलोप इत्याशङ्कते—**नन्विति**। **स्थितमपि** इति। नखक्षते स्थितमपीत्यर्थः। इदमुपलक्षणम्। धनुषि स्थितमुपमेयत्वमपि नखक्षते सञ्चारणीयमित्यपि बोध्यम्। तत्सञ्चारस्यैव प्रकृतस्तनधरणोपयोगित्वात्। **पर्यालोचनयेति**। पयोधरादिपदश्लेषात्तादृशार्थपर्यालोचनयेत्यर्थः।

शब्देनैकत्र बोधितार्थस्यान्यत्र सञ्चारे दृष्टान्तमाह—**यथा दध्नेति**। आख्यातेन हवनस्येव प्रकृतस्तनधारणोपयोगित्वाद् विधेयत्वं बोध्यते। हवनस्य तु 'हविषा जुहोति' इति वाक्यरूपाद् अन्यतः सिद्धेः सिद्धस्य च विधेयत्वाऽसम्भवपर्यालोचनया तदेव विधेयत्वं यत्त्वसिद्धम्। अतो दध्नि सञ्चार्यते इत्यर्थः। दध्नो होमकरणत्वस्यान्यतः प्राप्त्यभावात्। तथा चैवं रीत्या धनुरुपमेयनखक्षतधारणं पयोधरे सम्भवति, इत्युपमागर्भसमासोक्तिरस्त्येव। कथं तद्विलोप इत्याह—**एवंविधनिवहि** इति। एवंविधया निर्वाह इत्यर्थः। **एकदेशविवर्त्युपमाङ्गीकारस्यैवेति**। उपमागर्भसमासोक्तिर्नास्त्येवेति भावः।

## लोचन

सुवेषत्ववशात् सुवेषिति पदसामर्थ्यात्। तद्धि नायिकायां मुख्यं नतु लतायामिति नायिकाधर्मिणामेव दन्तप्रभादीनामुपमेयप्रयोजकं, नतु हरिणेक्षणापदोपादानं, प्रस्तुतेतरपदापेक्षयैव समासप्रवृत्तेर्व्यवस्थानात्। अन्यथा दासे कृतागसीत्यादावपि प्राचीनप्रसिद्धेऽपि रूपकसमासविषये उपात्तनायिकानुगुण्येन पुलकाङ्कुरकण्टकाग्रैरित्यत्र उपमासमास एव स्यात्। समासान्तरेण सामग्रीवशादामर्षितेन।

**साधकाभावादिति**। परीतत्वस्य हरिणेक्षणायां लतायां च साधारण्येनैव प्रवृत्तेः। **सङ्करसमाश्रयेणेति**। सङ्करोऽत्र उपमारूपकसन्देहसङ्करः। तदाश्रयेण समासो निर्द्धारिताकारः। पूर्व दन्तप्रभासदृशैः पुष्पैश्चितैत्युक्तप्रकारः। लताप्रतीतिरित्यत्र लतापदं भावप्रधानम्।

इह चौपम्यगर्भस्यैवं त्रैविध्यसम्भवेऽपि द्वितीयोदाहरणम् एकदेशविवर्त्तिरूपकविषय एवेति न पूर्वोत्तरविरोध इत्याह—**एषु चेति**। आद्यं दन्तप्रभा इत्यादि पद्यम्। तृतीयं तदेव सुवेषा इत्यत्र परीतपाठयुक्तम्।

## कुसुमप्रतिमा

दन्तेति। दन्तप्रभाः पुष्पाणीव अन्यत्र तु दन्तप्रभा इव पुष्पाणि तैश्चिता व्याप्ता, पाणिः करतलं पल्लवमिव अन्यत्र तु पाणिरिव पल्लवं तेन शोभत इति सा, तथा केशपाशः अलिवृन्दं भ्रमरसमूह इव अन्यत्र केशपाश इव अलिवृन्दं तेन विशिष्टेत्यर्थः, शोभनो वेशः परिच्छेदो यस्याः सा सूवेशा हरिणेक्षणा मृगनयना राजत इति शेषः।

अत्रेति। सुवेशत्ववशात् सवेशेतिपदस्य उपमासाधकत्वादित्यर्थः। तथा च हरिणेक्षणायाः कामिन्याः पुष्पेण पल्लवेन च सुवेशत्वसम्भवेऽपि अलिवृन्देन सुवेशत्वा सम्भवात् "केशपाशालिवृन्देन" इत्यत्र उपमितसमासः कर्त्तव्य एव, तत्साहचर्य्यात् पूर्व पदद्वयेऽप्युपमितसमास इत्याशयः। दन्तप्रभासदृशैरिति तु अर्थप्रदर्शनमात्रम्, "दन्तप्रभा इव पुष्पाणि" इत्यमेव विग्रहवाक्यानि, तानि तु दर्शितान्येव। समासान्तराश्रयेण लताव्यवहारारोपपक्षो प्रकारान्तरोपमितसमासकरणेन; इति केषाञ्चिन्मतम्।

रूपकेति। रूपकगर्भत्वे रूपकमभामसर्भत्वे। तथा च लावण्यन्येव मधूनि तैः, लोकलोचनान्येव रोलम्बास्तेषां कदम्बैरिति मयूरव्यंसकादित्वादरूपकसमासः। एवञ्च लावण्यमधुभिरिति लोकलोचनरोलम्बकदम्बेरिति च विशेषणसाम्यात् समासोक्तिरिति च केष: अन्यतम्। ग्रन्थकन्मते तु मुखे पद्म स्वरूपस्यैवारोपेण व्यवहारसमारोपाभावादत्र न समासोक्तिः। किञ्च ग्रन्थकन्मते औपम्यगर्भवशेषणोत्थापित्व सामान्यमेव न समासोक्तिर्विषयः। तथा चैतत्प्रकरण एव वक्ष्यति—"औपम्यगर्भविशेषणीत्थापितत्त्वं नास्या विषय इति विशेषणसाम्ये श्लिष्टविशेषणीत्थापिता साधारणविशेषणात्थापिता चेति द्विधा" इति। तेन "लावण्यमधुभिः" इत्यादौ मुखे पद्मत्य स्वरूपारोपात् लावण्यमधुनोस्तरलत्वादिना लोचनरोलम्बयोश्च श्यामलत्वादिना सादृश्यस्य स्फुटत्वेऽपि अनेकयो रूपणञ्च एकदेशविवर्त्तिरूपकमेवेति ग्रन्थकारस्य स्थिरसिद्धान्तः।

## विमला

दन्तेति।—दन्तानां प्रभाः पुष्पाणीवेति दन्तप्रभापुष्पाणि, तैः चिता—व्याप्ता, पाणिः पल्लव इव पाणिपल्लवः, तेन शोभते इति पाणिपल्लवशोभिनी, केशपाशः अलिवृन्दमिव तेन उपलक्षिता, सुवेशा—सुष्ठु परिच्छेदवती, हरिणेक्षणा, विभातीति शेषः। लतापक्षे—दन्तप्रभा इव पुष्पाणि तैश्चिता, पाणिरिव पल्लवः तेन शोभिनी, केशपाश इव अलिवृन्दं तेन।

नन्वेतद्रूपकगर्भमेवेत्यत आह, सुवेशत्वशादिति।—सुवेशत्वस्यान्यस्थाऽनुपपत्तेरित्यर्थः, सुवेशत्वधर्मस्य मुख्यतया उपमेये हरिणेक्षणायां वर्त्तनात् औपम्यगर्भत्वम्। पुष्पपल्लवाभ्यामपि शरीरशोभाविशषस्य सम्भवेऽपि अलिवृन्दन तस्यासम्भावात् तत्रैवोपमासमासध्यावश्यकत्वामित्यवगन्तव्यम्; लताप्रतीतौ सुवेशत्वेन शोभनत्वारोपो वेदितव्यः।

लावण्येति ।—अत्र लावण्यमधुनाराह्लादकत्वे लोचनरोलम्बयोः श्यामत्वादिना स्फुटसादृश्यसम्भवात् रूपकाणां बहुत्वाभावाच्च समासोक्तिरेव, न त्वेकदेशविवर्त्तिरूपकम्, एकदेशविवतिरूपकस्य यदेतदुदाहरणं दत्तं तन्मवभेदेनेत्यवगन्तव्यम् । नन्वत्र मध्वादीनां मुखे बाधात् प्राथमिकबोधानुपपत्तिः इति चेत्, न; यथा"मुखचन्द्रं चुम्बति" इत्यादौ चुम्बनस्य चन्द्रे बाधात् मुखे पर्य्यवसानं, तथा मुखसम्बन्धस्य मध्वादावसम्भवात् लावण्यादौ पर्य्यवसानम् इति स्वीकारात्; नन्वेवमपि पूर्ववत् समासद्वयाङ्गीकारेणोपमागर्भमेवेदमस्तु, किमधिकेन रूपकगर्भत्व—कल्पनेन ? इति चेत्, सत्यम्; गतानुगतिकन्यायेनास्य प्रकारस्य स्वीकारात् ग्रन्थकृतैव खण्डनीयत्वाच्च । उपमारूपकेति ।—उपमासाकस्य—उपमेये मुख्यतया स्थितस्य धर्मस्य, रूपकसाधकस्य—उपमाने मुख्यतया स्थितस्य धर्मस्य वाचकस्य च, उपमैवात्र न रूपकं, रूपकमेवात्र नोपमा इत्येवंरूपस्य अभावादित्यर्थः । समासान्तरं पूर्ववत्—उपमापक्षे उपमितिसमासः, रूपकपक्षे रूपकसमासः, यथा दन्तप्रभा पुष्पाणीव, तथा दन्तप्रभा एव पुष्पाणि इत्यादि बोध्यम् । आद्यतृतीययोः,—दन्तप्रभापुष्पतेत्यादिरूपे आद्ये उदाहरणे, तृतीये—अत्रैव सुवेशेत्यञ्च परीतेति पाठे न परिवर्त्तिते इत्यर्थः ।

## लक्ष्मी

अन्यदीयमौपम्यगर्भत्वमसङ्गतमित्युपपादयितुं तत्र तावत्तस्य त्रैविध्यमाह—**औपम्येति** । औपम्यं सादृश्यं गर्भेऽन्तर्यस्य (विशेषणसाम्यस्य) तस्य भावस्तत्त्वम् । उपमा च रूपकं च सङ्कर उपमारूपकयोः सन्दिग्धत्वं चेति ते गर्भे येषां तेषां भावस्तत्त्वं तस्मात्, उपमागर्भत्वात्, रूपकगर्भत्वात्, उपमारूपकयोः सन्देहसङ्करगर्भत्वाच्चेत्यर्थः । तत्र तेषु मध्ये उपमागर्भत्वे 'सति विशेषणसाम्यात् समासोक्ति'रिति शेषः ।

तद्दर्शयति—**दन्तप्रभेति** । दन्तप्रभाः ताः पुष्पाणीव पक्षे दन्तप्रभा इव पुष्पाणि तैश्चिता व्याप्ता, पाणिः पल्लवं किशलयमिव पक्षे पाणिरिव पल्लव इति तेन शोभते इत्येवंशीला तादृशी, तथा केशपाशः अलिवृन्दं भ्रमरपुञ्ज इव पक्षे केशपाश इव अलिवृन्दं तेन विशिष्टेत्यर्थः, सुवेशा रुचिरनेपथ्याहरिणेक्षणा मृगनयना राजते इति शेषः ।

अत्रौपम्यगर्भत्वं विशदीकृत्य दर्शयति—**अत्रेति** । सुवेशत्ववशात् सुवेशेतिपदस्य उपमोपपादकत्वादित्यर्थः । तथा च मृगनयनाया नायिकाया पुष्पेण पल्लवेन च सुवेशत्वोपपद्यमानेऽपि अलिवृन्देन सुवेशत्वानुपपत्तेः, 'केशपाशालिवृन्देन' इत्यत्र 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' २/५/५६ इत्युपमितसमासो विधेय एव तत्साहचर्यात् पुष्पपल्लवपदेऽप्युपमितसमास इति भावः । न च दन्तप्रभैव पुष्पमित्यादिरीत्या रूपकमेवेति वाच्यम्, उक्तसूत्रेण साधारणधर्माऽप्रयोगे रूपकसमासबाधादुपमितसमासस्यैव व्यवस्थापनात् । **दन्तप्रभासदृशैरिति** तु केवलमर्थप्रदर्शनमेतत् 'दन्तप्रभा इव पुष्पाणि' इति विग्रहवाक्यानि तानि तु पूर्वमुपपादितान्येव समासान्तराश्रयेण लताव्यवहारारोपपक्षे तद्भिन्नोपमितसमासस्य विधानेन । लताव्यवहारस्तद्वल्लास्यादिरिति परमतमभिप्रेत्योक्तम् ।

इत्थमौपम्यगर्भितमुदाहृतं रूपकगर्भितविशेषणसाम्यत्वे समासोक्तिमुदाहर्तुमाह—**रूपकेति** । रूपकगर्भत्वे रूपकसमासगर्भत्वे 'विशेषणसामयस्य समासोक्ति' रितिशेषः । तथा च लावण्यान्येव मधूनि तैः, लोकलोचनान्येव रोलम्बा भ्रमरास्तेषां कदम्बैरिति 'मयूरव्यंसकादयश्चे' तिसूत्रेण रूपकसमासः । इत्यञ्च लावण्यमधुभिरितिलोकलोचनरोलम्बकदम्बैरिति च विशेषणसादृश्यात्समासोक्तिरित्यपि मतान्तरमेव ।

उपमारूपकगर्भत्वे उदाहर्तुमाह—**सङ्करेति**। सङ्कर उपमारूपकयोः सन्दिग्धत्वं गर्भे यस्य तस्य भावस्तत्वं तस्मिन् सति 'विशेषनसाम्यस्य समासोक्ति'रिति शेषः। नन्विदमौपम्यमात्रगर्भत्वे उदाहृतं तत्कथं पुनरौपम्यरूपकोभयगर्भत्वे चोदाहरणं प्रदर्श्यत इत्याशङ्कायामाह—**सुवेशेति**। परीता व्याप्तेत्यर्थः। उपमारूपकसाधकाभावात् उपमारूपकयोरन्यतरस्य निष्पादकाभावादित्यर्थः।

तथा च 'सुवेशा' इत्यत्र परीतेति पाठपरिवर्त्तने उपमितसमास 'उपमितं व्याघ्रादिभि' रित्यादिना, रूपकसमासश्च मयूरव्यंसकादित्वादिति द्विविधसमासमपि सम्भवितुमर्हति प्रतिबन्धकाभावात्। 'केशपाशालिवृन्देन' इत्यत्र च 'केशपाशः अलिवृन्दमिव' इत्युमितसमासः, अलिवृन्दतुल्यकेशपाशेन नायिकाया व्याप्तत्वसम्भवात् 'केशपाशः अलिवृन्दमिव' इतिरूपकसमासोऽपि केशपाशरूपेणालिवृन्देन लताया व्याप्तत्वसम्भवादित्युपमारूपकयोरन्यतरस्य साधकाभाव एवेतिभावः। सङ्करसमाश्रयणम् उपमारूपकयोः सन्देहसङ्कराङ्गीकारः। न च सामान्यधर्माप्रयोगवशादुपमा रूपकं बाधत इचि वाच्यम्, रूपकस्य सम्भवे तथारूपकाऽबाधात्। समासान्तरं 'दन्तप्रभा इव पुष्पाणि' इत्याद्युत्तरपदार्थप्रधानरूपः समास इत्यर्थः, पूर्ववत् पूर्व यथा 'दन्तप्रभा' इत्यादौ 'सुवेशा' इतिपाठे समासद्वैविध्यमुपपादितं तद्वत्। नन्वेवं तर्हि हरिणेक्षणायां तथात्वारोपः कथं सेत्स्यतीत्यत आह—**समासान्तरेति**। समासान्तरस्य रूपकानुयोगिनः समासस्य महिमा सार्थक्यान्वेषणं तेन। **लताप्रतीति**रिति। एवञ्च आद्यपादात्रये उपमितसमासेन सादृश्यस्याभिधीयमानत्वात् लतासादृश्यस्य च प्रतीयमानत्वात् एकदेशविवर्त्तिन्युपमेयम् आहोस्वित् दन्तप्रभादौ पुष्पत्वाद्यारोपस्य शाब्दत्वात् हरिणेक्षणार्थः। लतात्वारोपस्य च आर्थत्वादेकदेशविवर्त्तिरूपकम्? इत्येवमुमारूपकयोः सन्देहसङ्करः तथोपमारूपसन्देहसङ्करगर्भकदन्तप्रभापुष्पचितेत्यादिविशेषणसादृश्यात् समासोक्तिरित्यपि च साम्प्रदायिकमतम्।

उक्तमतमसङ्गतमिति दर्शयति—**एषु चेति**। 'दन्तप्रभा' इत्यादिषूदाहृतेषु त्रिषु विशेषणसाम्येषु मध्य इत्यर्थः। मते सिद्धान्ते उपमासङ्करयोः उपमाया उपमारूपकयोः सन्देहसङ्करस्य चेत्यर्थः। एकदेशविवर्त्तिता नास्ति उपमा रूपकं तदुभयं वा एकदेशविवर्त्तित्वेन न विद्यते इत्याशयः। आद्यतृतीययोः प्रथमतृतीययोरुदाहरणयोः, सुवेशेतिपाठयुते 'दन्तप्रभा' इत्यादौ आद्योदाहरणे, परीतेतिपाठयुते 'दन्तप्रभा' इत्यादावेव तृतीयोदाहरणे चेत्यर्थः एतेन उपमासङ्करयोहरेकदेशविवर्त्तित्वोपलम्भे तु तयोरेव स्वीकरणं युक्तमितिध्वनितम्। एतच्च स्पष्टीभविष्यत्यनुपदमेव मूले।

## रुचिरा

**अत्रौपम्यगर्भत्वं** विशदीकृत्य निर्दिशति—**अत्रे**त्यादिना।

**अत्र**। **सुवेशत्ववशात्**सुवेशत्वसामर्थ्यात्। (हरिणेक्षणायाः) 'सुवेशे'ति विशेषणमाश्रित्येति यावत्। **प्रथमम्**। **'दन्तप्रभाः**। **पुष्पाणीव**।' **इत्युपमागर्भत्वेनो**पमितत्वेनेति भावः। **समासः**। **अनन्तरम्**। च। **'दन्तप्रभासदृशैः**। **पुष्पैः**। **चिता** व्याप्ताः।' इत्यादिसमासान्तराश्रयेण तद्भिन्नसमासस्याश्रयेण। **समानविशेषणमाहात्म्यात्** समानं प्रकृताप्रकृतोभयानुगतं यद्विशेषणं ('दन्तप्रभापुष्पचिता' इत्यादि) तस्य माहात्म्यं तस्मात्। **हरिणेक्षणायाम्**। **लताव्यवहारप्रतीतिः**। अयम्भावः—यद्यपि 'दन्तप्रभे'त्यादि विशेषणं प्रकृताप्रकृतानुगतत्वेन साधारणम्, अथापि 'सुवेशे'ति प्रकृतमात्रानुगतमिति प्रथममुपमितं समासमाश्रित्य 'दन्तप्रभे'त्यादि उपमेयमेवानुगतं सङ्गच्छते। एवं च—पुष्पादिसदृशदन्तप्रभाचितत्वादिशालिनी हरिणेक्षणेति प्रथमोऽवगमः शक्त्योदेति, अनन्तरम् 'दन्तप्रभा इव पुष्पाणी'ति समासान्तरमाहात्म्येन दन्तप्रभासदृशपुष्पचितत्वादिशालिनी हरिणेक्षणेत्यवगमस्तयैव शक्त्या व्यक्त्या

वोदेति, अस्मिन् पक्षे हरिणेक्षणा कापि लतेति प्रतीतिरीषद्वुरते। अथ-द्वाविमौ वाक्यार्थौ सव्येतरगोविषाणवद् विश्लिष्टौ यदि भवेतां, तर्हि—हरिणेक्षणाया लतात्वं सहृदयहृदयानुमतं न स्यात्, अस्ति च, एवं पुनर्वाक्यभेदोऽपि; अतः—यदि आनन्तरोऽर्थः प्रकृते आरोप्यते तदा न वाक्यभेदः, अत्र हेतुर्विशेषणसाम्यम्, एतदपि न श्लिष्टं, किंतु औपम्यगर्भितम्। एवं च—लतात्वव्यवहारवती हरिणेक्षणेति बोधः सम्पद्यते, नतु लतेव हरिणेक्षणेति; 'सुवेशा' इति विशेषणस्य लक्षणया 'परीता' इत्यर्थेऽप्रकृतानुगते सम्पद्यमानेऽपि 'राजत्युमावल्लभ' इत्यत्रेव 'हरिणेक्षणा' इत्यत्र श्लिष्टत्वस्यानुपपत्तेः। इति।

एवमौपम्यगर्भितमुदाहृत्य रूपकगर्भितविशेषणसाम्यत्वे समासोक्तिमुदाहरति—**रूपकगर्भत्व** इत्यादिना। 'विशेषणसाम्यस्य समासोक्ति'रिति शेषः। स्पष्टम्। ननु कथमिदमेकदेशविवर्त्ति रूपकोदाहरणमपीति चेत्! मतान्तरमिदमिति गृहाण। अत एव विवृतिकारा अप्याहुः—'अत्र लावण्यमधुनोराह्लादकत्वे लोचनरोलम्बयोः श्यामत्वादिना स्फुटसादृश्यसम्भवाद्रूपकाणां बहुत्वाभावाच्च समासोक्तिरेव, न त्वेकदेशविवर्त्तिरूपकम्। एकदेशविवर्त्तिरूपकंस्य यदेतदुदाहरणं दत्तं तन्मतभेदेनेत्यवगन्तव्यम्। नन्वत्र मध्वादीनां मुखे बाधात् प्राथमिकबोधानुपपत्तिरिति चेत्! न; यथा 'मुखचन्द्रं चुम्बति' इत्यादौ चुम्बनस्य मुखचन्द्रे बाधान्मुखे पर्य्यवसानं तथा मुखसम्बन्धस्य मध्वादावसम्भवाल्लावण्यादौ पर्य्यवसानमिति स्वीकारात्। नन्वेवमपि पूर्ववत् समासद्वयाङ्गीकारेणोपमागर्भमेवेदमस्तु किमधिकेन रूपकगर्भत्वकल्पनेनेति चेत्! सत्यम्, गतानुगतिकन्यायेनास्य प्रकारस्य स्वीकाराद् ग्रन्थकृतैव खण्डनीयत्वाच्च।' इति।

उपमारूपकगर्भत्व उदाहरति—सङ्करेत्यादिना।

**सङ्करगर्भत्वे** सङ्कर उपमारूपकयोः सन्दिग्धत्वं गर्भे यस्य तस्य भावस्तत्त्वं तस्मिन् सतीत्यर्थः 'विशेषणसाम्यस्य समासोक्ति'रिति शेषः। **यथा। 'दन्तप्रभापुष्पचिता'इत्यादौ।**

नचेदमौपम्यमात्रगर्भत्वे उदाहृतं, कथं पुनरौपम्यरूपकोभयगर्भत्व उदाह्रियते इत्याशङ्क्याह—'सुवेशेत्यादि।

हि यतः। **'सुवेशा' इत्यत्र**। 'परीता' इति पाठे। **उपमारूपकसाधकबाधकाभावात्** उपमारूपकयोः साधकबाधकौ तयोरभावस्तस्मात्। उपमाया यत्साधकं तदेव रूपकबाधकं, यच्च रूपकसाधकं तदेवोपमाबाधकम्, एवं च प्रकृते 'सुवेशा' इत्यत्र 'परीते'ति पाठे नोपमा न वा रूपकं साधयितुं बाधितुं वा शक्यते, 'सुवेशे'त्येव पाठे तु उपमा सिध्यति रूपकं न बाध्यते; अत उपमारूपकयोः यत्साधकं बाधकं वा तस्या भावः स्फुटः। इति भावः। **सङ्करसमाश्रयणम्**। तथा च 'सुवेशे'ति पाठसत्त्वे इदमुपमाया एव, 'परीते'ति पाठे पुनरिदमेवोमारूपकयोरिति फलितम्। ननु तथा समासे कथं रूपकमपीत्याह—**समासान्तर**मन्यः समासः समासपरिवर्त्तनमिति यावत्। पूर्ववत् पूर्वे यथा समासद्वैविध्यं दर्शितं तथात्र तृतीयविधः समासः समाश्रयणीयः। तथा च—रूपकगर्भत्वाङ्गीकारे 'दन्तप्रभा एव पुष्पाणि तैश्चिते' त्येवं समासो बोध्यः। ननु कथं तर्हि हरिणेक्षणायां लतात्वारोपः सेत्स्यतीत्याह—**समासान्तरमहिम्ना** समासान्तरस्य रूपकानुयोगितः समासस्य महिमा सार्थक्यान्वेषणं तेन। **लताप्रतीतिः**।

अत्रापि मतभेदं दर्शयन् स्वमतमपि दर्शयति-**एषु चेत्यादिना**।

**एषू**दाहृतेषु त्रिषु विशेषणसाम्येषु मध्ये। **च**। **येषाम्**। **मते** सिद्धान्ते। **उपमासङ्करयो**रुपमाया उपमारूपकयोश्चेत्यर्थः। **एकदेशविवर्त्तिता**। **न**। **अस्ति**। ये उपमां रूपकं तदुभयं वा एकदेशविवर्त्तित्वेन नाङ्गीकुर्वन्ति इति भावः। **तन्मते**। **आद्यतृतीययोः** प्रथमतृतीययोरुदाहरणयोः। 'दन्तप्रभा...सुवेशा'इत्यत्र 'दन्तप्रभा...रीता'इत्यत्र चेति यावत्। समासोक्तिः।

द्वितीयस्तु प्रकार एकदेशविवर्तिरूपकविषय एव। पर्यालोचने त्वाद्ये प्रकारे एकदेशविवर्ति-न्युपमैवाङ्गीकर्तुमुचिता। अन्यथा—

**'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्।**

**प्रमोदयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार॥'**

इत्यत्र कथं शरदि नायिकाव्यवहारप्रतीतिः। नायिकापयोधरेणार्द्रनखक्षताभशक्रचापधारणा-संभवात्। ननु 'आर्द्रनखक्षताभम्' इत्यत्र स्थितमप्युपमानत्वं वस्तुपर्यालोचनया ऐन्द्रे धनुषि संचार-णीयम्। यथा—'दध्ना जुहोति' इत्यादौ हवनस्यान्यथासिद्धेर्दध्नि संचार्यते विधिः। एवं चेन्द्रचापाभमार्द्रनखक्षतं दधानेति प्रतीतिर्भविष्यतीति चेत्। न। एयविधनिर्वाहे कष्टसृष्टिकल्पना-देकदेशविवर्त्युपमाङ्गीकारस्यैव ज्यायस्त्वात्। अस्तु वात्र यथाकथंचित्समासोक्तिः, 'नेत्रैरिवोत्पलैः पद्मैः—' इत्यादौ, (५१७ पृ.) चान्यगत्यसंभवात्। किं चोपमायां व्यवहारप्रतीतेरभावात्कथं तदुपजी-विकायाः समासोक्तेः प्रवेशः।

---

## विवृतिः

अन्यगत्यसंभवात्समासोक्तिप्रकारासंभवात्। 'एकदेशविवर्त्युपमेवाङ्गीकर्तुमुचिता' इति पूर्वेणान्वयः। ननु प्रागुक्त्युक्त्योत्पलादावुपमानत्वं संचारणीयमिति चेत्। न। 'आर्दनखक्षताभम्' इत्यत्रार्थ्या उपमाया अर्थव-शेनैव कल्पनाया योग्यत्वात्। प्रकृते तु श्रौत्यास्तदसंभवादिति भावः। नन्विवशब्दव्यत्ययेनात्रापि व्यवहारसमारोप इत्यत आह—**किं चेति**। विशेषणानां सादृश्योपलम्भमहिम्ना विशेष्यस्याप्यध्याहारेण प्रथमत एव सादृश्यप्रती-तिरनुभवसिद्धा तयैव श्रौतुराकाङ्क्षविरहाद् व्यवहारव्यञ्जनं न भवतीति भावः।

## विज्ञप्रिया

ननु प्राचीनोक्तत्वात्कष्टसृष्टिकल्पनाऽपि कार्य्या। एकदेशविवर्त्युपमा तु प्राचीनैरनुक्ताप्युदाहरणेऽदृष्टा नाङ्गीकर्त्तव्येत्यत उदाहरणे दृष्टत्वं दर्शयितुमाह—**अस्तु वेति**। "नेत्रैरिवोत्पलै"रित्यादौ।

**नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरः श्रियः।**

**पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव॥**

इत्यत्र एकदेशविवर्त्युपमोदाहरणे कष्टसृष्टिरूपगत्यन्तराभावादित्यर्थः। एतदनन्तरं च उपमागर्भसमासो-क्त्यसम्भवात्। एकदेशविवर्त्युपमैवेति शेषः पूरणीयः। न चात्राप्युत्पलैरिव नेत्रैरित्युपमानोपमेयभाववैपरीत्यं सञ्चार्य्यतां कथं गत्यन्तरभाव इति वाच्यम्। तदा सरःश्रीषु नेत्रादिबोधात् सरः श्रिय इव नाभिका इति पर्यवसाने प्रक्रान्तसरः श्रीवर्णना भावापत्तेः।

यद्यपि होमविधानोपदेशः प्रतीयते तथापि वाक्यान्तरलभ्ये तस्मिन् "अप्राप्ते हि शास्त्रमर्थवदि"ति नयेन पिष्टपेषणवदुपदेशवैयर्थ्यादत्रानुक्त एव दध्नः करणत्वांशे पर्यवस्यत्युपदेशः। प्रकृतोदाहरणे सञ्चारणशरीरम्

दर्शयति—प्रतीतिः हि पर्यालोचनोत्पन्ना । एवंविधेति । अयमर्थः । समनन्तरोक्तप्रकारेण दध्नो हवनविधिसञ्चारणवद् इन्द्रधनुषि चौपम्यसञ्चारणमयुक्तम् । शब्दानां हि प्रधानक्रियानिवर्त्तकस्वक्रियाभिसम्बन्धात् साध्यायमानता न्यायसिद्धा, तेन दध्नि विधिसञ्चरणम् । आद्रनखक्षताभमित्यत्राद्रनखक्षतसम्बन्धाद् आभाशब्दस्यार्थस्य औपम्यस्य च तत्परि त्यागेन सम्बद्धे इन्द्रधनुषि सञ्चारणे दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्यनिर्वाहात्; यथा कथञ्चिन्नर्वाहे वा न स्वारसिकीति कष्टा या सञ्चारणसृष्टिः तस्याः कल्पनादस्योत्पादनाद् ज्यायस्त्वादनायससिद्धत्वेन । ऐन्द्रं धनुरित्यादौ अर्थापत्तिः । ऐन्द्रं धनुरित्यादौ मुख्यतया वत्र्तमानस्य उपमामात्रे विशेषेण समासोक्त्युद्दीपकस्य प्रसादनक्रियादेः सद्भावः; तस्यानुभावात् । नेत्रादिबोधात् सरः श्रिय इव नायिका इति पर्यवसाने प्रक्रान्तसरःश्रीवर्णनाभावापत्तेः ।

## लोचन

द्वितीयो लावण्यमधुभिः पूर्णमित्यादिपद्यावस्थितः । नच प्रथमतृतीययोरपि समासोक्तिरित्याह—**पर्यालोचने त्विति** । पर्यालोचने तत्त्वतो विवेचने उचिता हरिणेक्षणा लतेवेति प्रतीतेः ।

**ऐन्द्रमिति** । पयोधरो मेघः स्तनश्च । प्रसादनं निर्मलीकरणं, परितोषणं च । कलङ्को लक्ष्म, कुलादिदोषश्च । तापः । आतपो मनोज्वरश्च । शरदो नायिकात्वप्रतीतिरित्युक्तम् । तद्विशेषणस्यैव विचारदशारूढत्वात् । रविशशिनोर्नायकप्रतिनायकत्वे सैव मुख्यं पदं निदानम् । सकलङ्कतापशब्दयो रविशशिनोर्मुख्ययोर्वर्णनात् नायकविषयाऽनियतत्वात् । उपमानत्वमाभाशब्दबोध्यम् । वस्तुपर्यालोचनया तद्विचारेण सञ्चारणीयम् । धनुराभमिति प्रत्यनुदयप्रसङ्गदिति भावः ।

शब्दशक्त्यर्पितलभ्यस्यार्थस्य पर्यालोचनायामन्यथाभावे दृष्टान्तमाह—**यथेति** । विधिः कर्त्तव्यतोपदेशः । अत्र हि होतव्यमित्यर्थे जुहोतिना यद्यपि होमविधानोपदेशः प्रतीयते तथापि वाक्यान्तरलभ्ये तस्मिन् "अप्राप्ते हि शास्त्रमर्थवदि"ति नयेन पिष्टपेषणवदुपदेशवैयर्थ्यादत्रानुक्त एव दध्नः करणत्वांशे पर्यवस्यत्युपदेशः । प्रकृतोदाहरणे सञ्चारणशरीरम् दर्शयति-प्रतीतिः हि पर्यालोचनोत्पन्ना । **एवंविधेति** । अयमर्थः । समनन्तरोक्तप्रकारेण दध्नो हवनविधिसञ्चारणवद् इन्द्रधनुषि चौपम्यसञ्चारणमयुक्तम् । शब्दानां हि प्रधानक्रियानिवर्त्तकस्वक्रियाभिसम्बन्धात् साध्यायमानता न्यायसिद्धा, तेन दध्नि विधिसञ्चरणम् । आर्द्रनखक्षताभमित्यत्रार्द्रनखक्षतसम्बन्धाद् आभाशब्दस्यार्थस्य औपम्यस्य च तत्परित्यागेन सम्बद्धे इन्द्रधनुषि सञ्चारणे दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्यनिर्वाहात्; यथा कथञ्चिन्नर्वाहे वा न स्वारसिकीति कष्टा या सञ्चारणसृष्टिः तस्याः कल्पनादस्योत्पादनाद् ज्यायस्त्वादनायाससिद्धत्वेन । ऐन्द्रं धनुरित्यादौ अर्थापत्तिः । ऐन्द्रं धनुरित्यादौ मुख्यतया वर्त्तमानस्य उपमामात्रे विशेषेण समासोक्त्युद्दीपकस्य प्रसादनक्रियादेः सद्भावः तस्यानुभावात् ।

प्रत्युत "नैत्रैरिवोत्पलैः" रित्युपमासाधकसद्भावात् । यत्पुनरुक्तं राघवानन्दैः सरः श्रीनिष्ठं लिङ्गसाम्यं समासोक्तिप्रयोजकमिति; तदसत्, व्यवहारप्रतीतिसाधकाभावात् । लिङ्गसाम्यमात्रेण समासोक्तिप्रतीतौ "दृश्यते सखि ! शीतांशुः" इत्यादावप्यतिप्रसङ्गात् । किन्तु प्रस्तुतमपेक्ष्यैव समासोक्तिः क्रियते इति स्वयमनन्तरमेवोक्तम् । तत्कथं युष्मन्मतेऽपि लिङ्गसाम्ये समासोक्तिप्रतीतिरिति चेत् । समानकार्यलिङ्गविशेषणानां लक्ष्येषु द्वयोः त्रयाणां वा सद्भावे प्राधान्येन व्यवहार इति । यच्चोक्तं तैरपि "नेत्रैरिवोत्पलै" रित्यादावुत्प्रेक्षाऽपि । तदत्यन्तमनुचितम् । हेत्वभावेऽध्यवसानस्यानुत्थानात् । किञ्चैवं "मुखेन कमलेनेव विभाति हरिणेक्षणा" इत्यादावपि हरिणेक्षणायां

नलिनीव्यवहारसमारोपेण समासोक्त्युत्प्रेक्षयोः समावेशः स्यात्। एतत्सर्वं गर्भीकृत्य प्राचीनाचार्य्यसम्मतिं दर्शयति—यदाहुरिति।

## कुसुमप्रतिमा

अत एवानुपदमेव ग्रन्थकृत् स्वमतमाह—"द्वितीयस्तु प्रकार एकदेशविवर्त्तिरूपकविषय एव"इति। अतएव चैकदेशविवर्त्तिरूपकलक्षणेध्य लक्ष्यतया "लावण्यमधुभिः" इत्यादिकमेवोदाहृतम्। एतेन "लावण्यमधुनोः" इत्यारस्य "एकदेशविवर्त्तिरूपकभ्य यदेतदुदाहरणं दत्तं तन्मतभेदेन" इत्यन्तं रामकरणेन यत् सम्पूर्णविपरीतमुक्तं तत् "द्वितीयस्तु" इत्याद्युत्तरग्रन्थस्य "औपम्यगर्भविशेषणोत्थापित्वं नास्या विषयः" इत्याद्युत्तरग्रन्थस्य चापर्य्यालोचनेनेति सर्वथैव हेयम्। न खल्वसाधारणधीरबुद्धिना सुधीरधुरीणेन विश्वनाथेन सिद्धिमक्षणादिना नितान्तधीविकारमापन्नेनेदं प्रकरणद्वयं निरमायि, येन आत्मीयत्वेनेव निर्विवाद परमतमुदाहृत्य किञ्चिद्देव एव पुनस्तविपरीतमुदाह्रियेत्।

किञ्च "लावण्यमधुभिः" इत्यादौ एकदेशविवर्त्तिरूपकमसमासांक्त्योरन्वतरेणैव सम्पूर्णवैचित्रयव्याप्तौ उभयोः सङ्कराङ्गीकारोऽपि स सम्भवतीति द्रष्टव्यम्।

सङ्करेति। परीता व्याप्तत्यर्थः। उपमारूपकसाधकाभावात् उपमारूपकयोरेकतरस्य साधकाभावादित्यर्थः। अत्रायमाशयः—परीतेति पाठे पूर्वार्द्धे उपमितसमासो रूपकसमासश्चेत्युमयमेव सम्भवति बाधकाभावात्। "केशपाशालिवृन्देन" इत्यत्र च अलिवृन्दसदृशकेशपाशेन नायिकाया व्याप्तत्वसम्भवात् "केशपाशः अलिवृन्दमिव" इत्युपमितसमासः, केशपाशरूपेणालिवृन्देन लताया व्याप्तत्वसम्भवाच्च 'केशपाश एवालिवृन्दम्' इति रूपकसमासश्च सम्भवतीत्युपमारूपकयोरेकतरस्य साधकाभाव एवेति। सङ्करसमाश्रयणम् उपमारूपकयोः सन्देहसङ्करस्वीकारः समासान्तरं परपदप्रधानः समासः "दन्तप्रभा इव पुष्पाणिं इत्यादिरूपः समास इत्यर्थः, पूर्ववत् "दन्तप्रभा" इत्यादौ सुवेशा इति पाठवत्। लताप्रतीतिरिति। तथा च प्रथमचरणत्रये उपमितसमासेन साम्यस्य वाच्यत्वात् हरिणेक्षणायां लतासाम्यस्य च गम्यत्वात् किमेकदेशविवर्त्तिन्युपमा, किं वा दन्तप्रसादौ पुष्पत्वाद्यारोपस्य शाब्दत्वात् सुवेशा इति पाठवत्। लताप्रतीतिरिति। तथा च प्रथमचरणत्रये उपमितसमासेन साम्यस्य वाच्यतवात् हरिणेक्षणायां लतात्वारोपस्य च आर्थत्वादेकदेशविवर्त्तिरूपकम्? इत्येवमुपमारूपकयोः सन्देहसङ्करः; तद्गर्भकदन्तप्रभापुष्पचितेत्यादिविशेषणसाम्यात् समासोक्तिरित्यपि च केषाञ्चिन्मतम्।

भङ्गीविशेषेणैतन्मत्रस्य अयुक्ततां प्रतिपादयितुमाह एषु चेति। "दन्तप्रभा" इत्यादिषु च त्रिषुवा हरणेष्वित्यर्थः। उपमासङ्करयोः उपमाया उपमारूपकयोः सन्देहसङ्करस्य चेत्यर्थः। आद्यतृतीययोः सुवेशेतिपाठान्विते "दन्तप्रभा" इत्यादौ प्रथमोदाहरणे, परीतेतिपाठान्विते "दन्तप्रभा" इत्यादावेव तृतीयोदाहरणे चेत्यर्थः। एतेन उपमासङ्करयोरेकदेशविवर्त्तितासत्त्वे तु तयोरेवाङ्गीकरणमुचितमिति सूचितम्, एतच्चानुपदं ग्रन्थकृता मुखत एव व्यक्तीक्रियते।

इदानीं क्रमशः स्वमतमाह द्वितीयस्त्विवति। "लावण्यमधुभिः पूर्णम्" इत्यादिविध इत्यर्थः। एकदेशविवर्त्तिरूपकविषय एवेति। मुखे पद्मस्वरूपस्यैवारोपात् पद्मव्यवहारारोपाभावेन समासोक्तेरसम्भवा दिति प्रागुक्तयुक्तेः स्वमते एकदेशविवर्त्तिरूपकसत्त्वाञ्चेति भावः।

आद्यतृतीययोरपि तदुक्तां समासोक्ति क्रमान्निरसितुमाह पर्य्यालोचने त्विति। सर्वतः सूक्ष्मानुसन्धाने त्वित्यर्थः। आद्ये प्रकारे सुवेशेतिपाठान्विते "दन्तप्रभा—" इत्यादौ।

ऐन्द्रमिति। शरत्कालवर्णनेयम्। पाण्डुपयोधरेण सकलजलवर्षणात् शुभ्रमेघेन शुभ्रस्तनेन च, आर्द्रनखक्षताम् नूतननखक्षततुल्यम्, ऐन्द्रं धनुरिन्द्रधनुः, दधाना धारयन्ती, शरत्-शरत्कालः काचित् कुलटा च, सकलङ्कं शशचिन्हसमन्वितं परस्त्रीसंसर्गात् सापवादञ्च, इन्दुं चन्द्रम् उपपतिञ्च, प्रमोदयन्ती निर्म्मलीकुर्वतो स्वसङ्गमेन आनन्दयन्ती च सती, रवेः सूर्य्यस्य पत्युश्चापि, अधिकं ताप प्रखरतां मनस्तापञ्च चकार।

अत्र ऐन्द्रे धनुषि नखक्षतसम्यं मेघे स्तनसाम्यस्य वाच्यम्, शरदि नायिकासाम्यम्, इन्दावुपपतिसाम्यम्, रवौ पतिसाम्यञ्च गम्यभित्येकदेशविवर्त्तिन्युपमेति ग्रन्थकर्त्तुराशयः। पाण्डुपयोधरेण आर्द्रनखक्षताभमैन्द्रं धनुर्दधानेत्याद्युपमानगर्भविशेषणगम्येन शरदि नायिकाव्यवहारसमारोपात् समासोक्तिरिति च परेषामभिप्राय इत्युन्नेयम्।

तत्र परमतं दूषयितुमाह इत्यत्रेति। नायिकाया भूतलस्थिताया इति भावः, पयोधरेण स्तनेन। अत्र ग्रन्थकर्त्तुरयमाशयः-यस्य व्यवहारः, समारोपणीयस्तत्रापि विशेषणस्य सम्भवपरत्वमत्यावश्यकमेव; अन्यथा जलेऽपि वह्निव्यवहारसमारोपो भवितुमर्हति। तेन भूतलस्थिताया नायिकाः स्तनेन दूराकाशस्थितस्य आर्द्रनखक्षतामशकत्रापस्य धारणासम्भवेन "पाण्ड पयोधरेण आर्द्रनखक्षताभमैन्द्रं धनुर्दधाना" इति विशेषणस्य नायिकापक्षे अत्यन्तमेवासम्भवात् शरदि तद्रव्यवहारसमारोपस्यैवसम्भवेन कथं समासोक्तिरिति।

विरोधेनामभिप्रायमाशङ्कते नन्विति। वस्तुपर्य्यालोचनया वक्तुरभिप्रायस्य सव तः समालोचनर्थत्यर्थः। सञ्चारणीयं प्रेरणीयम्।

उक्तार्थे पर एव मीमांसकसिद्धान्तसिद्धं दृष्टान्तमाहुर्यथेति। हवनस्य होमस्य, अन्यथासिद्धेः, "अग्निहोत्र" जुहोति" इत्युत्पत्तिविधिनैव सिद्धेः। विधिर्विधेयता। अत्रायं विस्तर—अग्निहोत्रप्रकरणे "अग्निहोत्रं जुहोति" "दध्ना जुहोति" इत्यादयो नाना विधयः श्रूयन्ते। तत्र अग्निहोत्रनामकहोमस्य "अग्निहोत्रं जुहोति" इत्युत्पत्तिविधिनैव प्राप्तया "दध्ना जुहोति" इत्यनेन पुनस्तदंशे विधानं नोपपद्यते, अप्राप्तप्रापकस्येव विधिरूपत्वात्। तेन "दग्धा जुहोति" इति विद्यौ जुहीतीत्यत्र स्थितं विधित्वं दधि सञ्चार्यते। तथा चौक्त पूर्वमीमार्साथ लौगाक्षिणा दग्धा जुहोति त्यत्र होमस्याग्निहीवं जुहुयादित्यनेन प्राप्तत्वात् होमोछेशेन दधिमात्रविधानम्॥" एवञ्च—"दध्ना जुहोतीत्यत्र होमस्याग्निहोत्रं होमानुवादमात्रे पर्य्यवसानम्। तदुक्तं भट्टपादैः—

"सर्व त्राख्यातसम्बन्धे श्रूयमाणे पदान्तरे। विधिशक्त्युपसंक्रान्ते स्याद्धातोरनुवादता॥"

ततश्च दध्नो होमरूपपरार्थतया शेषत्वेन तदङ्गत्वात् "दध्ना अग्निहोत्रं जुहोति" इति विधिः पर्य्यवस्यति। तथा च पूर्वमीमांसातृतीयाध्वायप्रथमपादे सूत्रम्—"शेषः परार्थत्वात्॥"

एवञ्चेति। आद्रनखक्षतामित्यत्र स्थितस्याप्युपमानत्वस्य ऐन्द्रे धनुषि सञ्चारणीयत्वे चेत्यर्थः। दधाना नायिकेति शेषः। तथा च इंन्द्रचापममाद्रनखक्षतं दधानां इत्य वरूपेण पर्य्यवसितस्य विशेषणस्य नायिकापक्षेऽपि सम्भवात् समासोक्तिर्निष्पन्त्युहैवेति तेषामशयः।

एतदपि दूषयति इति चेन्नेति । एवं विधेन वेदवाक्यवत् काव्ये असम्भवेन अन्यत्र स्थितस्यार्थस्य अन्यत्र सञ्चारणव्यापारेण, निर्वाहे समासोक्तिनिष्पादने, कष्टसृष्टिकल्पनात् कष्टजनकत्वस्वीकारात् तदपेक्षयेत्यर्थः । ज्यायस्त्वात् श्रेयत्वात् ।

ननु तर्हि "एतस्मिन्नधिकपयः श्रियं वहन्त्याः संक्षोभं पवनभुवा जवेन नीताः । वाल्मीकेररहितरामलक्ष्मणानां साधर्म्यं दधति गिरां महासरस्यः ॥" इत्यादौ काव्य एव शिशुपालवधादिपद्ये प्रथमान्ततया महासरसीषु स्थितं श्रीवहनादिधर्म्मं गीषु, षष्ठ्यन्ततया गीषु स्थितम् अरहितरामलक्ष्मणधर्म्मञ्च महासरसीषु सञ्चार्य्य कथं श्लेषः स्वीक्रियत इत्याह अस्तु वेति । अत्र "ऐन्द्रं धनुः—" इत्यादौ । यथाकथञ्चित् "एतस्मिन्" इत्यादिवदेव कष्ट न धर्म्मसञ्चारकल्पनया । अन्यस्या गतेरूपायस्यासम्भवात् एकदेशविवत्युपमामन्तरेण तादृशवैचित्रयस्य संज्ञान्तरासम्भवादित्यर्थः ।

अथ तत्रापि नेत्राद्युपमानत्वमुत्पलादिषु सञ्चार्य्य सरःश्रीषु नायिकाव्यवहारसमारोपेण "दन्तप्रभापुष्पचिता" इत्यादिवदेव समासोक्तिर्भविष्यतीत्याह किञ्चेति । उपमायाम् इवादिशब्दैः साक्षादेव प्रतिपादितायामित्यर्थः । तदुपजीविकाया व्यवहारप्रतीतिमात्राश्रितायाः । तथा च "नेत्रैरिवोत्पलैः पद्मैः—" इत्यादौ पूर्वापरयोरिवशब्दैः सादृश्यस्यैव बोधिततया सन्दंशपातन्यायेन साहचर्य्येण च मध्यपातिसरःश्रीषु अध्याहर्त्तव्यनायिकासादृश्यप्रतीतेरेवं स्वाभाविकत्वम्, न तु गात्रबलेन भवदुच्यमानाया नायिकाव्यवहारप्रतीतेः । सादृश्यव्यवहारयोधात्यन्तमेव वैलक्ष्यणम् । अतः "नेत्रैरिवोत्पलैः पद्मैः—" इत्यादौ तादृशवैचित्रयस्य "एकदेशविवर्त्तिन्युपमा" इति संज्ञाकल्पनमकामेनापि भवता कर्त्तव्यमेवेति "ऐन्द्रं धनुः पाण्डुपयोधरेण—" इत्यादावपि तत्कल्पनमेव न्याय्यमिति भावः ।

## विमला

द्वितीयस्त्विति ।—मुखे मध्वाद्यन्वयस्यासम्भवात् प्रथमत एव पद्माध्याहारेण प्रतीतिः, कुतः व्यञ्जनामात्रामाणा समासोक्तिरिति भावः ।

ऐन्द्रमिति ।—शरद्वर्णनमिदम् । शरत्—तदाख्यकालः, पाण्डुपयोधरेण—निष्ठेष्ठत्वात् सितजलधरेण; आद्रम्—अभिनव, यत् नखक्षतं तस्येव आभा यस्य सादृशम्, ऐन्द्रं धनुः,—शक्रचापं, दधाना—धारयन्ती सती, सकलङ्कम् इन्दु प्रमोदयन्ती—विकासयन्ती, रवेः,—सूर्य्यस्य, तापम् अभ्यधिकं चकार । शरदि चन्द्रस्य उज्ज्वलत्वं, सूर्य्यस्य च उपतापकत्वं स्यादिति प्रसिद्धिरिति भावः । अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिच्छन्दः ।

वस्तुपर्य्यालोचनवेति ।—विषयानुशीलनेन, अभिप्रेतार्थबोधनानुरोधेन इत्यर्थः । सञ्चारणीयं—याचितमण्डलन्यायेनार्पणीयम् । अत्र वैदिकदृष्टान्तमाह, दध्नेति ।—हवनस्य—होमस्य, अन्यथा—अन्यप्रकारेण, "सायं प्रातर्जुहोति" इत्यादि विधिना इति यावत्, सिद्धेः,—वचनान्तरप्राप्तेरित्यर्थः, दध्नि—दधिपदे, विधिः,—अप्राप्यप्रापकत्वरूपविधिशक्तिः, सञ्चार्य्यते—उपक्रम्यते । तदुक्तम्—"सर्वत्राख्यातसम्बन्धे श्रूयमाणे पदान्तरे । विधिशक्त्युसङ्क्रान्ते स्याद्धातोरनुवादता ॥" इति । यथाऽऽख्याते स्थिता विधिशक्तिः धात्वर्थस्यान्यथासिद्धत्वे तत्रानुपयोगिनी अदग्धदहनन्यायेन पदार्थान्तरस्य विधेयतायामुपयोगं लभमाना पदान्तरे सञ्चार्य्यते, तथाऽत्रापीति भावः । अनिर्वाहे इति—अशक्यनिर्वाहे इत्यर्थः । ननु धर्मिकल्पनातो धर्मकल्पना लघीय सीति न्यायेनोपमेयस्योपमानत्वकल्पनमपेक्ष्यैकदेशविवर्त्युपमाकल्पना गुरुरित्यत आह,—अस्तु वेति । यथाकथञ्चिदिति—कष्टसृष्ट्या आर्द्रनखक्षते स्थितस्य उपमावाचकस्य आभाशब्दस्य ऐन्द्रे धनुषि सञ्चारणेनेति भावः । नेत्रैरिवेति ।—"नेत्रैरिवो-

त्पलैः पद्मैर्मुखैरिव सरश्रियः। पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव॥" इति प्रागुक्तोदाहरणे इत्यर्थः। अन्यगत्यसम्भवात्—समासोक्तिप्रकारसम्भवात्, "एकदेशविवर्त्युपमैवाङ्गीकर्त्तुमुचिता" इति पूर्वेणान्वयः। ननु प्रागुक्तयुक्त्या उत्पलादौ उपमानत्वं सञ्चारणीयमं इति चेत्, न; "आर्द्रनखक्षताभम्" इत्यत्रार्थ्याः उपमायाः अर्थवशेनैव कल्पनाया योग्यत्वात्, प्रकृते तु श्रौत्यास्तदसम्भवादिति भावः। ननु इवशब्दस्यत्ययेन अत्रापि सरःश्रिया मङ्गलव्यवहारसमारोप इति समासोक्तिरस्तु, का क्षतिः? इत्याशङ्क्य द्रढयति, किञ्चेति।—तथा च यत्र व्यवहारसमारोपप्रतीतिः स्फुटा, तत्रैव समासोक्तिः, न तु कष्टसृष्टया व्यवहारप्रतीत्यनयने, तथा हि विशेषणानां सादृश्योपलम्भमहिम्ना विशेष्यस्याप्यध्याहारेण प्रथमत एव सादृश्यप्रतीतिरनुभवसिद्धा, तयैव श्रौतुराकाङ्क्षाविरहात् व्यवहारव्यञ्जनं न भवति इति भावः।

## लक्ष्मी

सम्प्रति यथाक्रमं स्वसिद्धान्तं दर्शयति—**द्वितीयस्त्विति**। रूपकगर्भितत्वरूपस्तु 'लावण्यमधुभिः पूर्णम्' इत्यादिरूपमित्यर्थः। **एकदेशविवर्त्तिरूपकविषय** एवेति। मुखे पद्मस्वरूपस्यैवारोपेण पद्मव्यवहारारोपाभावात् समासोक्तेरनुपपत्तेरिति दर्शितदिशा स्वसिद्धान्ते एकदेशविवर्त्तिरूपकस्य विद्यमानत्वाच्चेत्याशयः।

प्रथमतृतीययोरपि तद्दर्शितां समासोक्तिं क्रमशो दूषयितुमाह—**पर्यालोचने त्विति**। परितः सिद्धान्तत्वेन विचारे त्वित्यर्थः। आद्ये प्रकारे 'दन्तप्रभा' इत्यादौ सुवेशेति पाठयुते प्रथमप्रकार इत्यर्थः। उपमेवेत्येवकारेण समासोक्तेर्व्यवच्छेदः, अन्यथा प्रकृते तदनङ्गीकारात्।

ऐन्द्रमिति। शरत्समयवर्णनमिदम्। पाण्डु सकलजलवर्षणतया शुभ्रः अन्यत्र दुग्धसम्भृततया शुभ्रपीतः, असौ पयोधरो मेघ अन्यत्र कुचस्तेन 'पाण्डुः कुन्ती पतौ सिते' इति हैमः, 'हरिणः पाण्डुरः पाण्डु' रित्यमरः, 'पयोधरः कोषकारे नारिकेले स्तनेऽपि च। कशेरुमेघयोः पुंसि' इतिमेदिनी, आर्द्रनखक्षताभं नूतननखक्षतसादृश्यम्, ऐन्द्रमिन्द्रसम्बन्धि धनुश्चापम्, दधाना धारयन्ती शरत् शरत्समयः काचित् स्वैरिणी च सकलङ्कं शशचिन्हविशेषसमन्वितं परस्त्रीगमनादपवाददूषितञ्च इन्दुं चन्द्रम् उपनायकञ्च प्रमोदयन्ती स्वच्छीविदधती स्वसङ्गमेन आह्लादयन्ती च सती, रवेः सूर्यस्य स्वामिनश्चापि, अधिकं तापं तीक्ष्णतां मनस्तापञ्च चकार। अत्रेन्द्रवज्रोपोद्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणं चोक्तं प्राक्।

अत्र पाण्डुपयोधरेण आर्द्रनखक्षताभम् ऐन्द्रं धनुर्दधानेत्याद्युपमागर्भविशेषणसादृश्येन शरदि नायिकाव्यवहारसमारोपात् समासोक्तिरितिसाम्प्रदायिकमतम्। ऐन्द्रे धनुषि नखक्षतौपम्यं मेघे कुचौपम्यञ्च शाब्दम्, शरदि नायिकौपम्यम् इन्दावुपनायकौपम्यं रवौ स्वाम्यौपम्यञ्च प्रतीयमानमित्येकदेशविवर्त्तिन्युपमेति च मूलकर्त्तुरभिप्रायो बोध्यः।

तत्र साम्प्रदायिकमतं निरसितुमाह—**इत्यत्रेति**। नायिकाया भूमौ विद्यमानाया इत्याशयः, तद्वदिव पयोधरः कुचस्तेन 'शरद्' इति शेषः। **असम्भवादिति**। यत्र विशेषणस्य सम्भवपरत्वमवगम्यते तत्रैव व्यवहारसमारोपः कल्प्तु शक्यः अन्यथा शशेऽपि शृङ्गव्यवहारसमारोपः स्यादित्यतः भूमौ विद्यमानाया नायिकाया कुचेन दूराकाशे विद्यमानस्य आर्द्रनखक्षताभैन्द्रधनुषः धारणासम्भवेन 'पाण्डुपयोधरेण आर्द्रनखक्षताभमैन्द्रं धनुर्दधाना' इति विशेषणस्य नायिकापक्षे नितरामेवासम्भवात् शरदि तद्व्यवहारसमारोपस्यैवासम्भवेन समासोक्तेः कथमुपपत्तिर्भवेत्। अत एव नायिकामिव शरदं स्वीकृत्य ऐन्द्रे धनुषि नखक्षतसादृश्यं मेघे कुचसादृश्यञ्च शाब्दम्, शरदि नायिकासादृश्यम्,

इन्दावुपनायकासादृश्यम् रवौ स्वाभिसादृश्यञ्च प्रतीयमानमित्यकामेनाप्येकदेशविवर्त्तिन्युपमास्वीकर्त्तव्यतायां 'दन्तप्रभापुष्पचिते' त्यत्राप्येकदेशविवर्त्तिन्युपमैव स्वीकरणीयेति ग्रन्थकृतामाशयः ।

प्रतिपक्ष्याशयमाशङ्कते—**नन्विति** । वस्तुनोऽभिप्रेतार्थस्य पर्यालोचना तात्पर्यान्वेषणं तया । सञ्चारणीयं 'याचितमण्डन' न्यायेनार्पणीयम् ।

उक्तार्थे प्रतिपक्ष्येव मीमांसकसिद्धान्तसिद्धं दृष्टान्तेन स्पष्टयति—**यथेति** । इत्यादौ 'आगमवाक्ये' इति-शेषः, हवनस्य होमस्य, अन्यथासिद्धेः 'अग्निहोत्रं जुहोति' इत्यागमान्तरोत्पत्तिविधिनैव प्राप्तेः । दध्नि दधिपदे । सञ्चार्यते उपक्रम्यते, विधिरप्राप्तप्रापकत्वरूपविधिशक्तिः । अत्राय**माशयः**—अग्निहोत्रप्रकरणे 'अग्निहोत्रं जुहोति 'सायं प्रातर्जुहोति' 'दध्ना जुहोति' इत्यादयो बहवो विधयः उपलभ्यन्ते । तत्र अग्निहोत्रसंज्ञकहवनस्य 'अग्निहोत्रं जुहोति' इत्युत्पत्तिविधिनैव लब्धतया 'दध्ना जुहोति' इत्यनेन पुनस्तदंशे विधानं न युज्यते विधेरप्राप्तप्रापकत्वरू-पत्वात्, अतश्च 'दध्ना जुहोति' इति विधौ जुहोतीत्यत्रोपलभ्यमानं विधित्वं दध्नि अदग्धदहनन्यायेन याचितमण्ड-नमिव सञ्चार्यते । तथा चोक्तं **पार्थसारथिमिश्रेण**—इत्थं च 'दध्ना जुहोति' इत्यस्य होमानुवादमात्रे पर्यवसानं भवति । उक्तं च **कुमारिलभट्टपादैः**—

'सर्वत्राख्यातसम्बन्धे श्रूयमाणे पदान्तरे । विधिशक्त्युपसङ्क्रान्ते स्याद्धातोरनुवादता ॥'

'यथाख्याते स्थिता विधिशक्तिः धात्वर्थस्यान्यथासिद्धत्वे तत्रानुपयोगिनी अदग्धदहनन्यायेन पदार्थान्त-रस्य विधेयतायामुपयोगं लभमाना पदान्तरे सञ्चार्यते तथात्रापीतिभावः' इति **तर्कवागीशाः** । एवञ्च 'शेषः परार्थ-त्वात्' इति जै० ३/१/२ । सूत्रेण दध्नो होमरूपपरार्थतया शेषत्वेन तदङ्गत्वात् 'दध्ना अग्निहोत्रं जुहोति' इति विधिः पर्यवस्यति ।

फलितमवगमयति—**एवञ्चेति** । आर्द्रनखक्षताभमित्यत्र विद्यमानत्वस्याप्युपमानत्वस्य ऐन्द्रे धनुषि याचितमण्डनन्यायेन सञ्चारणीयत्वं चेत्यर्थः । दधाना नायिकेति शेषः । तथा च ऐन्द्रधनुः सदृशार्द्रनखक्षतं धारय-न्तीत्येवरूपेण फलितस्य विशेषणस्य नायिकापक्षेऽपि भवितुं शक्यत्वात् समासोक्तिरव्याहतैवेति प्रतिपक्षिणाम-भिप्रायः । 'ऐन्द्र'मित्यादौ कथं शरदि नायिकाव्यवहारप्रतीतिरित्युत्तरितं भवतीतिबोध्यम् । चेत् 'समाधत्ते' इति शेषः ।

एतदपि निरस्यति—**नेति** । एवं नैवं समाधेयमित्यर्थः । तत्र हेतुमुपपादयति—**एवंविधेति** । एवंविधेन आगमवाक्यवत् काव्ये भवितुमशक्यत्वेन अन्यत्र विद्यमानस्यार्थस्य अन्यत्र सञ्चारणव्यापारेण निर्वहे समासोक्ति-साधने कष्टायाः सृष्टिः समाधानं तस्याः कल्पनं प्रणयनं दुराग्रहेण समर्थनमिति यावत्, तस्मात् तदपेक्षयेत्यर्थः । ज्यायस्त्वात् श्रेष्ठत्वात् । **अयमाशयः**—समनन्तरोक्तप्रकारेण दध्ना हवनविधिसञ्चारणवत् इन्द्रधनुषि चौपम्यस-ञ्चारणमनुक्तम् । शब्दानां हि प्रधानक्रियानिवर्त्तकस्वक्रियाभिसम्बन्धात् साध्यायमानता न्यायसिद्धा अतएव दध्नि विधिसञ्चारणम् आर्द्रनखक्षताभमित्यत्रार्द्रनखक्षतसम्बन्धात् आभाशब्दस्यार्थस्यौपम्यस्य च तत्परित्यागेन सम्बद्धे इन्द्रधनुषि सञ्चारणे दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्यनिर्वाहः, यथाकथञ्चिन्निर्वाहे वा कष्टसृष्टिकल्पना स्यादित्यना-याससिद्धत्वेनैकदेशविवर्त्तिन्युपमास्वीकारस्यैव ज्यायस्त्वमुपमागर्भसमासोक्तिर्नास्त्येवेति ।

ननु 'धर्मिकल्पनातो धर्मकल्पनायां लाघवम्' इति नयेनैकदेशविवर्तिन्युपमाकल्पनापेक्षयोपमेयस्योपमा-नत्वकल्पनं लघुरित्यत आह—**अस्तु वेति** । अत्र 'ऐन्द्रं धनु' रित्यादौ । यथाकथञ्चित् कष्टेन धर्मसञ्चारकल्पनया । **नेत्रैरिवोत्पलैरिति** ।

**'नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरः श्रियः ।**

**पदे पदे विभान्तिस्म चक्रवाकैः स्तनैरिव ॥'**

इति पूर्वोक्तोदाहरणे इत्यर्थः । अन्यगत्यसम्भवात् एकदेशविवर्त्तिन्युपमास्वीकारं विना अन्योपायासम्भवादित्यर्थः । न च पूर्वोक्तदिशोत्पलादावुपमानत्वं सञ्चार्यतामिति वाच्यम्, 'आर्द्रनखक्षताभ'मित्यत्रार्थ्या उपमाया अर्थवशेनैव कल्प्यमानत्वात् इह तु श्रौत्यास्तदसम्भवादित्याशयः ।

ननु उत्पलैरिव नेत्रैरित्युपमानोपमेयभाववैपरीत्येनात्रापि सरःश्रीषु नायिकाव्यवहारसमारोपेण 'दन्तप्रभा पुष्पचिता' इत्यादिवदेव समासोक्तिः कथं न स्यादित्यत आह—**केच्चिति** । अन्योऽप्यत्र समासोक्तेरनुभ्युपगमे हेतुरित्याशयः । उपमायाम् इवादिपदैः साक्षादेवाभिहितायामित्यर्थः । अभावात् असम्भवात् । तदुपजीविकाया सा व्यवहारप्रतीतिरेवोपजीविकोपस्कारिका यस्यास्तस्याः तादृश्याः । प्रवेशोऽन्तर्भावः । तथा च 'नेत्रैरिवोत्पलै'रित्यादौ पूर्वापरयोरिवपदैरौपम्यस्यैव ज्ञापिततया सन्दंशपतितन्यायेन साहचर्येण च मध्यपातिसरःश्रीषु अध्याहरणीयनायिकौपम्यप्रतीतेरेवानुभवसिद्धत्वम्, तेनैव श्रोतुराकाङ्क्षानिवृत्तेः न त्वत्र नायिकाव्यवहारप्रतीतिर्भवति । औपम्यव्यवहारयोश्च नितरामेव वैलक्षण्यम्, तेन 'नेत्रैरिवोत्पलैः' इत्यादावगत्यैकदेशविवर्त्तिन्युपमास्वीकारे 'ऐन्द्रं धनु'रित्यादावपि तत्स्वीकरणमेवोचितमित्याशयः ।

## रुचिरा

**द्वितीयो** रूपकगर्भितत्वरूपः । **तु** । **प्रकारो** भेदः । एकदेशविवर्त्तिरूपकविषयः । एव । एवकारेण समासोक्तेर्व्युदासः । तदेवाहुः 'मुखे मध्वाद्यन्वयस्यासम्भवात् प्रथमत एव पद्माध्याहारेण प्रतीतिः, कुतो व्यञ्जनामात्रप्राणासमासोक्तिरिति भावः ।' इति पर्य्यालोचने परिताः सिद्धान्तत्वेनालोचनं विचारस्तस्मिन् सति । तु । आद्ये प्रकारे । 'दन्तप्रभा...सुवेशा...' इत्युदाहरण इति भावः । **एकदेशरविवर्त्तिनी** । **उपमा** । **एव** । एवकारेण समासोक्तेर्व्युदासः **अङ्गीकर्त्तुम्** । **उचिता** । **अन्यथा** प्रकृते तदनङ्गीकारात्—

'**पाण्डुपयोधरेण** पाण्डुर्नीलतया श्वेतः, अन्यत्र दुग्धसम्भृततया श्वेतपीतः, असौ पयोधरो मेघः, अन्यत्र कुचस्तेन । 'पाण्डुः कुन्तीपतौ सिते ।' इति हैमः, 'हरिणः पाण्डुरः पाण्डु'रित्यमरः, 'पयोधरः कोषकारे नारीकेले स्तनेऽपि च । कशेरुमेघयोः पुंसि' इति मेदिनी । **आर्द्रनखक्षताभमार्द्रनखक्षतसदृशम्** । **ऐन्द्रमिन्द्रसम्बन्धि** । **धनश्चापम्** । **दधाना** । **सकलङ्कं** चिन्हविशेषशालिनं परस्त्रीगामिताऽपवाददूषितं वा । **इन्दुम्** । **प्रमोदयन्ती** 'प्रसाधयन्ती'ति पाठान्तरम् । **शरत्** । रवेः सूर्यपिक्षया सूर्य्यस्य वा । **अभ्यधिकम्** । **तापम्** । **चकार** । अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः । तल्लक्षणं चोक्तं प्राक् ॥ १८९ ॥'

**इत्यत्र** । **शरदि** । **नायिकाव्यवहारप्रतीतिः** । **कथम्** । शरदो नायिकासदृशत्वेन सहृदयहृदयाभ्यनुमता प्रतीतिर्न स्यात्, किन्तु अस्ति; तस्मात्तत्राप्यत्रेव सङ्गतिर्बोद्धव्येति भावः । ननु किमिह कारणमित्याशक्य तन्निर्दिशति **नायिकापयोधरेण** नायिकावत् (नायिकाया इव) पयोधरस्तेन । 'शरद'इति शेषः । **आर्द्रनखक्षताभशक्रचाप धारणासम्भवात्** । इदमुक्तम्—नायिकेव यदि शरन्नाङ्गीक्रियेत् ! तदा तथाऽभिधानं न सङ्गच्छेत् । अतः—नायिकायाः शरदश्च, पयोधरस्य पयोधरस्यच, इन्दोर्जारस्य च, नायकस्य सूर्य्यस्य च यत्सादृश्यं तदार्थम्, आर्द्रनखक्षतस्यैन्द्रधनुषश्च सादृश्यं शाब्दमित्येकदेशविवर्तिन्युपमा यथा प्रकृतेऽङ्गीक्रियते तथा 'दन्तप्रभापुष्पचिते'त्यत्रापीति निर्बाधोपपत्तिः । इति । एतदेव स्थूणानिखणनन्यायेन द्रढयति—**ननु** । अत्र '**आर्द्रनखक्षताभ**'मित्यत्र । **स्थितम्** ।

**अपि । उपमानत्वम् । वस्तुपर्य्यालोचनया** वस्तुनोऽभिप्रेतार्थस्य पर्य्यालोचना तात्पर्य्यान्वेषणं तया । **ऐन्द्रे । धनुषि । सञ्चारणीयम् ।** 'याचितमण्डनन्यायेने'ति शेषः ।' तदेवागमसिद्धं दृष्टान्तेन स्पष्टयति-**यथा । 'दध्ना । जुहोति । 'इत्यादौ'** आगमवाक्ये'इति शेषः । **हवनस्य** होमस्य । **अन्यथा** 'अग्निहोत्रं जुहुयात्'इत्यावगमवचनद्वारा । **सिद्धेः । दध्नि** दधिपदे । **विधिरप्राप्तप्रापकत्वरूपाऽऽगमोपदेशशक्तिः । सञ्चार्य्यते ।** 'तथाऽऽर्द्रनखक्षताभमित्यत्र स्थितमप्युपमानत्वं वस्तुपर्य्यालोचनया ऐन्द्रे धनुषि सञ्चार्य्यते'इति प्रकृतः सम्बन्धः । फलितमवगमयति—**एवम् । च । ऐन्द्रचापाभम् । आर्द्रनखक्षतम् । दधाना ।** 'शर'दिति शेषः । **इति । प्रतीतिः । भविष्यति ।** इदमुक्तम्—'अग्निहोत्रं जुहुया'दित्युत्पत्तिवाक्यम्, एतेन हवनं विहितम्, विहितस्यास्य च 'दध्ना जुहोती'त्यादिना पुनर्विधानमनुपयुक्तम्, तदिति तत्रादग्धदहनन्यायेन दधिपदे याचितमण्डनमिव सञ्चार्य्यते, तथा प्रकृते नायिकाया आर्द्रनखक्षताभैन्द्रधनुर्धारणोपयोगिताऽनुपपत्तौ ऐन्द्रे धनुषि उपमानत्वं याचितमण्डनन्यायेन सञ्चारणीयम् । एवं च—'ऐन्द्रधनुराभमार्द्रनखक्षत'मिति प्रत्ययोपपत्तौ नायिकाया उपमानत्वप्रत्ययो निर्बाधं सम्पत्स्यते । एतेन 'ऐन्द्र'मित्यादौ कथं शरदि 'नायिकाव्यवहारप्रतीति'रिति दत्तोत्तरम् । इति । आक्षिपति-**इति । चेत्** 'समाधत्से' इति शेषः । **न ।** 'एवं समाधेय'मिति शेषः । हेतुं निर्दिशति—**एवंविधानिर्वाहे । कष्टसृष्टिकल्पनात्** कष्टाया सृष्टिः समाधानं तस्याः कल्पनं प्रणयनं दुराग्रहेण समर्थनं तस्मात् । **एकदेशविवर्तिन्युपमाऽङ्गीकारस्य । एव । ज्यायस्त्वान्महनीयतवात् ।** ननु 'धर्मिकल्पनातो धर्मकल्पनायां लाघव'मिति नयेनैकदेशविवर्त्तिन्युपमाकल्पनाऽपेक्षयोपमेयस्योपमानत्वकल्पनं वरमित्याशङ्क्याह—**अस्तु । वा । अत्र** 'ऐन्द्रं धनु'रित्यादौ । **यथा । कथञ्चित् । समासोक्तिः । किन्तु 'नेत्रैरिवोत्पलैः.... ॥ १९० ॥'**

**इत्यादौ । अन्यगतेरेकदेशविवर्त्तिन्युपमाऽङ्गीकारभिन्नाश्रयस्य । सम्भवः । एव । न । अस्ति ।** 'किन्तु 'नेत्रै.. ।' '..सम्भवः' इत्यस्य स्थाने 'नेत्रैरिवोत्पलै'रित्यादौ चान्यगत्यसम्भवात् इति विवृतिकारसम्मतः पाठः, अत एव-'अन्यगत्यसम्भवात्समासोक्तिप्रकारासम्भवात् एकदेशविवर्त्तिन्युपमैवाङ्गीकर्त्तुमुचिता'इति पूर्वेणान्वयः । ननु प्रागुक्तयुक्तया उत्पलादावुपमानत्वं सञ्चारणीयमिति चेत्, न; 'आर्द्रनखक्षताभ'मित्यत्रार्थ्या उपमाया अर्थवशेनैव कल्पनाया योग्यत्वात् प्रकृते तु श्रौत्यास्तदसम्भवादिति भावः ।' इति विवृतिकाराः । ननु अत्रापीवशब्दव्यत्ययेन व्यवहारारोपः सेत्स्यतीत्यत आह **किञ्चान्योऽपि** तत्र समासोक्तेरनङ्गीकारे हेतुरिति भावः । **उपमायाम् । व्यवहारप्रतीतेः । अभावात्** असम्भवात् । 'विशेषणानां सादृश्योपलम्भमहिम्नाविशेषस्यापि अध्याहारेण प्रथमत एव सादृश्यप्रतीतिरनुभवसिद्धा, तयैव श्रोतुराकाङ्क्षाविरहाद् व्यवहारव्यञ्जनं न भवतीति भावः ।' इति विवृतं तर्कवागीशैः । **कथम् । तदुपजीविकायाः** सा व्यवहारप्रतीतिरेवोपजीवितोपस्कारिका यस्यास्तस्यास्तथोक्तायाः । **समासोक्तेः । प्रवेशोऽन्तर्भावः ।** ननु समासोक्तौ प्राधान्येन व्यवहारप्रतीत्यङ्गीकारे किं मानमित्याशङ्क्य प्राचां संवादं निर्दिशति—**यत् । आहुः ।**

यदाहुः—

**'व्यवहारोऽथवा तत्त्वमौपम्ये यत्प्रतीयते।**

**तन्नौपम्यं समासोक्तिरेकदेशोपमा स्फुटा ।।'**

एवं चोपमारूपकयोरेकदेशविवर्तिताङ्गीकारे तन्मूलसंकरेऽपि समासोक्तेरप्रवेशो न्यायसिद्ध एव। तेनौपम्यगर्भविशेषणोत्थापितत्वं नास्या विषय इति। विशेषणसाम्ये श्लिष्टविशेषणोत्थापिता साधारणविशेषणोत्थापिता चेति द्विधा। कार्यलिङ्गयोस्तुल्यत्वे च द्विविधेति चतुःप्रकारा समासोक्तिः।

---

## विवृतिः

**व्यवहार इति**। औपम्यगर्भविशेषणसाम्ये सति व्यवहारोऽप्रस्तुतस्य साधर्म्यं तत्त्वं स्वरूपं वा यत्प्रतीयते तदौपम्यं समासोक्तिर्न भवति तत्र हेतुरेकदेशेति सादृश्य प्रतीतिरेवानुभवप्रसिद्धा न व्यवहार प्रतीतिरिति। नात्र समासक्ति प्रसंङ्ग इति भावः। स्फुटा सर्वानुभवसिद्धा। तथा च सातत्वप्रतीतौ समासोक्तिमन्ये स्वीकुर्वन्ति तन्मतानुसारेणैवाथवा तत्त्वमित्युक्तम्। व्यवहारादेरित्यादिपदेन स्वरूपस्य ग्रहणम्॥ **यैरिति**। अत्रेश्वरः संबोध्यः। वृत्तिषु वस्तुषु, पदार्थान्वयेषु च। अव्ययमविनश्वरम्, अव्ययपदवाच्यं च। असंख्यतया अनन्तरूपतया, संख्याविशेषप्रतिपादकतया च। परत्वजुष उत्कर्षभाजस्तव विभक्तेर्भेदग्रहस्य, पक्षे—परवर्तिन्या विभक्तेः स्वादेर्लक्षणं विशिष्टज्ञानं सूत्रं च॥

## विज्ञप्रिया

नन्वेवं "दन्तप्रभे"त्यत्र

उपमागर्भसमासोक्तिर्नेत्रैरिवोत्पलैरित्यत्रैकदेशविवर्त्युपमा इति कथमुपमागर्भसमासोक्तिविलोप इत्यत आह—**किञ्चेति**। **व्यवहारोऽथवेति**। ऐन्द्रं धनुरित्यादौ उपमानोपमेयभाववैपरीत्यसञ्चारणोक्तेः कष्टसृष्टिककल्पनारूपं दूषणमुक्त्वा औपम्यगर्भसमासोक्त्यङ्गीकारे दूषणान्तरं ददत इतीयं कारिका। अतो दूषणान्तरत्वबोधकमथवेति। यद् यस्मात् काव्यलिङ्गादिसाम्यहेतुकसमासोक्तौ यथाव्यवहारसमारोपः प्रतीयते तद्वदौपम्यगर्भत्वममुष्मान्न प्रतीयते। तत्तस्मान्नौपम्यसमासोक्तिरङ्गीकार्य्येति शेषः। किन्तु तादृशे स्थले एकदेशोपमा एकदेशविवर्त्युपमैव स्फुटेत्यर्थः। तथा चौपम्यगर्भा समासोक्तिर्नास्त्येवेत्युक्तम्।

उपमाया रूपकस्य एकदेशविवर्तित्वे तुल्यन्यायादुभयत्रैव समासोक्त्यप्रवेशे तदुभयसन्देहसङ्करस्थलेऽपि समासोक्तिर्नास्तीत्याह—**एवं चेति**। **नास्या विषय** इति। अस्याः समासोक्तिरित्यर्थः।

## लोचन

यद्यस्माद् व्यवहारः समासोक्तिवत्तत्त्वं। प्रतीयते। तदौपम्यगर्भकसमासोक्तिर्न रूपकवदऔपम्येन अत एवालङ्कारसर्वस्वकृताप्युक्तम्। नेत्रैरिवोत्पलैरित्यादौ सरःश्रिया नायिकात्वप्रतीतिर्न समासोक्त्या विशेषणा-

साम्याभावात्। तस्मान्नायिकाऽत्र उपमानत्वेन प्रतीयते, नतु सरःश्रीधर्मत्वेन नायिकात्वप्रतीतिरिति। एकदेशविवर्त्तिन्युपमैवोपास्येति। एतेन दन्तप्रभापुष्पेत्यादौ पदानामुपमानरूपकसमाससम्भवेन हरिणेक्षणाया लतायाश्च विशेषणत्वे सम्भवत्यपि ऐन्द्रं धनुरित्यादौ च कष्टकल्पितोक्तयुक्तिसद्भावेऽपि चोक्तप्रकारेणाऽवश्याभ्युपगन्तव्यतयैकदेशविवर्त्युपमयैव व्यवहारो युक्तः। तथाच भाषणम्—

"अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्" इति।

तन्मूलसङ्करे दन्तप्रभेत्यादौ परीतेति पाठे यत्पुनरुक्तं कैश्चित्। सन्देहसङ्करे सन्देहास्पदत्वेनाव्यवस्थितत्वाद्रूपकोपमयोरभाव इति तन्न। द्वयोरपि साधकबांधकाभावेन पर्य्यन्तेऽप्यन्यूनानतिरिक्तत्वेन वृत्तौ हि सन्देहसङ्करालङ्कारः। नतु स्थाणुर्वा पुरुषो वेति असंशयवर्तित्वज्ञानदशायां क्वचित् कस्यचिन्मिथ्यात्वं क्वचिद् द्वयोरपि। अन्यथा तत्र प्राचीनोक्तलौकिकहारमुद्रिकादिसंसृष्ट मुकुटाद्यलङ्कारसादृश्यमनुपपन्नं स्यात्। नच सन्देहसङ्करस्य निर्वाहः शक्यक्रिय इति वक्तुं न युक्तं, वैचित्र्यस्यानुभवसिद्धत्वात्तस्यैव चालङ्कारत्वात्। किञ्च क्षीरनीरन्यायेन मिश्रणेन सङ्कर इति प्राच्याः। तयोश्च मिश्रणेन चैकस्य द्वयोर्वा भावः। किन्त्वत्र एकतरनिश्चयाभावमात्रेण सन्देहसङ्करव्यवहार इत्यलं बहुना। उपसंहरति—**तेनेति**। अस्याः समासोक्तेः।

## कुसुमप्रतिमा

उक्तार्थे प्राचीनसंवादमप्याह यदाहुरिति।

व्यवहार इति। औपम्ये औपम्यगर्भविशेषणस्थले, यो व्यवहारो व्यवहारारोपात्मकमौपम्यम्, अथवा तत् तत्त्वं स्वरूपं स्वरूपारोपात्मकमौपम्यम्, प्रतीयते; तदौपम्यं न समासोक्तिः; किन्तु एकदेशविवर्त्तिन्युपमा स्फुटा उक्तयुक्तेः स्पष्टा। अत्र एकदेशोपमापदमेकदेशरूपकोपलक्षणम्, तत्त्वमित्यभिधानात् समान न्यायाच्च। तेनैतन्मतेऽपि "लावण्यमधुभिः पूर्णम्" इत्यादौ एकदेशविवर्त्तिरूपकमेवेति बोध्यम्।

भङ्गीत उक्तप्रायमप्यर्थं स्पष्टतः पुनराह एवञ्चेति। प्रदर्शितस्वमतस्य प्राचीनमतानुसारित्वेऽपि चेत्यर्थः। तन्मुलसङ्करे उपमारूपकसन्देहसङ्करे एकदेशविवर्त्तिरूपे इति शेषः। अप्रवेशः असम्भव न्यायसिद्ध एव उपमायां रूपके तदुभयसङ्करे च व्यवहारप्रतीतिर्नास्तीत्येव युक्तिसिद्ध एव।

स्वमतमुपसंहरन्नाह तेनेति। उक्तयुक्त्या दन्तप्रभेत्यादावुदाहरणत्रये समासोक्तेरप्रवेशेनेत्यर्थः। अस्याः समासोक्तेः। इति हेतोः। एतेन "औपम्यगर्भत्वेन" इति पूर्वोक्तिः, 'औपम्यगर्भत्वं पुनस्त्रिधा' इति विभागः, "दन्तप्रभा" इत्याद्युदाहरणत्रयञ्च परमत एवेति सूचितम्।

## विमला

व्यवहार इति।—औपम्ये—औपम्यगर्भविशेषणसाम्ये सति इत्यर्थः, व्यवहारः,—साधर्म्यं, तत्त्वं—स्वरूपं वा, अप्रस्तुतस्येति शेषः, (तत्त्वप्रतीतौ समासोक्ति मन्ये स्वीकुर्वन्ति, तन्मतानुसारेणैव "अथवा तत्त्वम्" इत्युक्तम्) यत् प्रतीयते—बुध्यते, तत् औपम्यसमासोक्तिः न—औपम्यगर्भविशेषणसाम्योत्थापिता समासोक्तिर्न भवतीति भावः; तत हेतुः, यतः सा स्फुटा—सुव्यक्ता, सर्वजनानुभवसिद्धा इत्यर्थः, एक देशोपमा—एकदेशविवर्त्तिनी उपमेयत्यर्थः। तथा च सादृश्यप्रतीतिरेवानुभवसिद्धा, न व्यवहारप्रतीतिः इति नात्र समासोक्तिप्रसङ्ग इति भावः।

एवमिति ।—तन्मूलसङ्करे—उपमारूपकसङ्करे इत्यर्थः । न्यायसिद्धः,—युक्तिसिद्धः, व्यवहारसमारोपाभावादिति भावः ।

## लक्ष्मी

ननु समासोक्तौ मुख्यत्वेन व्यवहारप्रतीतिस्वीकारे किं बीजमित्याशङ्क्य तत्र प्राचीनसंवादमाह—**यदाहुरिति** ।

**व्यवहार** इति । यत् यस्मात् कारणात् औपम्ये सादृश्यगर्भविशेषणस्थले व्यवहारः व्यवहारारोपात्मकसाधर्म्यम्, अथवा तत् तत्त्वं स्वरूपं स्वरूपारोपात्मकसाधर्म्यम् 'तत्त्वप्रतीतौ समासोक्तिमन्ये स्वीकुर्वन्ति तन्मतानुसारेणैव 'अथवा तत्त्व' मित्युक्तम् इति विवृतिकाराः । प्रतीयते व्यज्यते, तदौपम्यं न समासोक्तिः किन्तु एकदेशोपमा एकदेशविवर्त्तिन्युपमा स्फुटा अनुभवसिद्धा । अत्र एकदेशोपमेतिपदम् एकदेशरूपकस्याऽऽप्युपलक्षणम्, तत्त्वमितिकथनात् तुल्यन्यायाच्च । एवञ्चैतन्मतेऽपि 'लावण्यं मधुभिः पूर्णम्' इत्यादौ एकदेशविर्त्तिरूपकमेवेत्यवधेयम् ।

अलङ्कारसर्वस्वकृताऽप्युक्तम्—नेत्रैरिवोत्पलैरित्यादौ सरः श्रिया नायिकात्वप्रतीतिर्न समासोक्त्या विशेषणसाम्याभावात् । तस्मान्नायिकाऽत्र उपमानत्वेन प्रतीयते, न तु सरः श्रीधर्मत्वेन नायिकात्वप्रतीतिरित्येकदेशविवर्त्तिन्युपमैवोपास्येति ।

एकदेशविवर्त्तिन्युपमायामेकदेशविवर्त्तिरूपके च तुल्यन्यायादुभयत्रैव समासोक्त्यप्रवेशे तदुभयसङ्करस्थलेऽपि समासोक्तिर्नास्तीति भङ्गीत उक्तमप्यर्थं पुनरपि विशदयति—**एवञ्चेति** । उक्तविधस्वसिद्धान्तस्य प्राचीनमतानुसारित्वेऽपि चेत्यर्थः । तन्मूलसङ्करेऽपि एकदेशविवर्त्तितामूलकोपमारूपकसङ्करे चेत्यर्थः । अप्रवेशऽसम्भवो न्यायसिद्ध एव उपमायां रूपके उपमारूपकसङ्करे च व्यवहारप्रतीतेरभावादित्येवं प्रमाणसिद्ध एव ।

सम्प्रत्युपसंहरति **तेनेति** । दर्शितदिशा 'दन्तप्रभे'त्यादाविव त्रिदाहरणेषु समासोक्तेरसम्भवेनेत्यर्थः । औपम्यगर्भविशेषणोत्थापितत्वं विशेषणसाम्यस्यौपम्यगर्भत्वमित्यर्थः । अस्याः समासोक्तेः । इति हेतोः । द्विधा न तु त्रिधेति शेषः । तुल्यत्वे सादृश्ये च सम्भवतीतिशेषः । **चतुष्प्रकारा समासोक्तिरिति** एतेन 'औपम्यगर्भत्वेन' इत्यभिधाय ततश्च औपम्यगर्भत्वं पुनस्त्रिधा' इत्यनेन विभागः, यथाक्रमं 'दन्तप्रभा' इत्याद्युदाहरणत्रयञ्च साम्प्रदायिकमत एवेति ध्वनितम् ।

## रुचिरा

**'यत्** यस्मिन् । **औपम्ये** सादृश्ये सति । **व्यवहारो**ऽप्रस्तुतसांधर्म्यम् । **अथवा** । **तत्त्वम्** अप्रस्तुतत्वम् । 'तत्त्वप्रतीतौ समासोक्तिमन्ये स्वीकुर्वन्ति तन्मतानुसारेणैवा 'थवा तत्त्व' मित्युक्तम् ।' इति विवृतिकाराः । **प्रतीयते** व्यज्यते । **तत्** । **औपम्यम्** । **समासोक्तिः** । **न** । किन्तु-**एकदेशोपमा** एकदेशविवर्त्तिन्युपमा **स्फुटा**ऽनुभवसिद्धा । औपम्योत्थापितमप्रस्तुतसाधर्म्यमप्रस्तुतत्वं वा । समासोक्तेरविषयः, विषयः पुनरेकदेशपमाया इति फलितोऽर्थः ॥' **इति** ।

उक्तमर्थे प्रकृते सङ्गमयति—**एवम्** । **च** । उपमारूपकयोः । एकदेशविवर्त्तिताऽङ्गीकारे । **तन्मूलसङ्करे** एकदेशविवर्त्तितामूलकोपमारूपकसङ्करे । **अपि** चेत्यर्थः । **समासोक्तेः** । **अप्रवेशो**ऽतिव्यावप्त्यभावः । **न्याय-**

**सिद्धः । एव । तेन । औपम्यगर्भविशेषणोत्थापितत्वं** विशेषणसाम्यस्योपम्यगर्भत्वमिति भावः । **अस्याः समासोक्तेः । विषयः ।** न । **इति । विशेषणसाम्ये । श्लिष्टविशेषणोत्थापिता । साधारणविशेषणोत्थापिता ।** च 'समासोक्ति' रिति शेषः । **इति । द्विधा,** 'ननु त्रिधा' इति शेषः । **कार्य्यलिङ्गयोः । तुल्यत्वे** सादृश्ये । **च ।** 'सम्भवती'ति शेषः । **द्विविधा । इति ।** चतुष्प्रकारा । **समासोक्तिः । सर्वत्र** सर्वप्रभेदासु **एव ।** अत्रासु समासोक्तिष्विति । भावः । **व्यवहारसमारोपः ।** 'अप्रस्तुतस्ये'ति शेषः । **कारणम् ।** सोऽप्रस्तुतव्यवहारसमारोपः । च । **क्वचित् । लौकिके । वस्तुनि । लौकिकवस्तुव्यवहारसमारोपस्तद्रूप** इति भावः । **शास्त्रीये । वस्तुनि । शास्त्रीय-वस्तुव्यवहारसमारोपः । लौकिके ।** वा 'वस्तुनी'ति शेषः । **शास्त्रीयवस्तुव्यवहारसमारोपः ।** शास्त्रीये 'वस्तुनि' इति शेषः । **वा । लौकिकवस्तुव्यवहारसमारोपः । इति । चतुर्द्धा । तत्र** तेषु चतुष्षु प्रकारेषु मध्ये । **लौकिकवस्तु । अपि । रसादिभेदात् । अनेकविधम् ।** एवम्-**शास्त्रीयम्, अपि** 'वस्त्वि'ति शेषः । **तर्कायुर्वेदज्योतिःशास्त्रादिप्रसिद्धतया** 'अनेकविध'मिति पूर्वेणान्वेति । **इति ।** बहुप्रकाराऽनेकविधा । **समासोक्तिः ।**

उदाहरति—**दिङ्मात्रम् । यथा । 'व्याधूय । यद्वसनम्...' इत्यादौ । लौकिके । वस्तुनि । लौकिकस्य । हठकामुकस्य । व्यवहारादेः । समारोपः ।**

'हे भगवन् ! (इदमध्याहार्य्यम्) । **अखिलासु** समस्तासु । **अपि । वृत्तिषु** वस्तुषु पदार्थान्वयेषु वा । अव्ययमविनाशिनं निपातविशेषं वा । **असंख्यतया**ऽनन्तरूपतया सङ्ख्याविशेषप्रतिपादकतया वा । **प्रवृत्तम् । त्वाम् । एकरूपम् । पश्यद्भिः । यैः ।** परत्वजुषः परत्वस्योत्कर्षस्य पुरोवर्त्तित्वस्य वा । **विभक्तेर्भेद**ग्रहस्य प्रत्ययविशेषस्य वा । **लोपो** निरासः । **किल । कृतः । तैः । तव । लक्षणं** विशिष्टज्ञानं सूत्रं वा । **कृतम् ।** इति-**ध्रुवं** निश्चितम् । **एव । मन्ये ।** वसन्ततिलकं वृत्तम्, एतल्लक्षणं चोक्तं प्राक् ॥ १९१ ॥'

उदाहार्य्ये निर्दिशति-**अत्रे**त्यादिना ।

सर्वत्रैवात्र व्यवहारसमारोपः कारणम्। स च क्वचिल्लौकिके वस्तुनि लौकिकवस्तुव्यवहार-समारोपः। शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपः। लौकिके वा शास्त्रीयवस्तुव्यवहारस-मारोपः। शास्त्रीये वा लौकिकवस्तुव्यवहारसमारोप इति चतुर्धा। तत्र लौकिकवस्त्वपि रसादिभेदादनेकविधम्। शास्त्रीयमपि तर्कायुर्वेदज्योतिः शास्त्रप्रसिद्धतयेति बहुप्रकारा समा-सोक्तिः। दिङ्मात्रं यथा—'व्याधूय यद्वसनं—' इत्यादौ लौकिके वस्तुनि लौकिकस्य हठकामुक-व्यवहारादेः समारोपः।

**'यैरेकरूपमखिलास्वपि वृत्तिषु त्वां**

**पश्यद्भिरव्ययसंख्यतया प्रवृत्तम्।**

**लोपः कृतः किल परत्वजुषो विभक्ते-**

**स्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये॥'**

अत्रागमशास्त्रप्रसिद्धे वस्तुनि व्याकरणप्रसिद्धवस्तुव्यवहारसमारोपः। एवमन्यत्र। रूपकेऽप्रकृतमात्मस्वरूपसंनिवेशेन प्रकृतस्य रूपमवच्छादयति। इह तु स्ववस्थासमारोपेणावच्छा-दितस्वरूपमेव तं पूर्वावस्थातो विशेषयति। अत एवात्र व्यवहारसमारोपः न तु स्वरूपसमारोप इत्याहुः। उपमाध्वनौ श्लेषे च विशेष्यस्यापि साम्यम्, इह तु विशेषणमात्रस्य। अप्रस्तुतप्रशंसायां प्रस्तुतस्य गम्यत्वम्, इह त्वप्रस्तुतस्येति भेदः।

---

## विवृतिः

आगमशास्त्रप्रसिद्धे वस्तुनीश्वरे व्याकरणशास्त्रप्रसिद्धवस्तुनो निपातस्य व्यवहारसमारोपः॥ रूपका-दस्याः परैरुपपादितं भेदं दर्शयति—**रूपक इति**। **अप्रकृतं** वस्तु **आत्मरूपसंनिवेशन** आत्मस्वरूपारोपणेन **रूपं** स्वरूपम्। **इह तु** समासोक्तौ तु। **स्वावस्था** स्वसाधर्म्यम्। **तं** प्रकृतपदार्थं **पूर्वावस्थातः** प्रकृतावस्थामवच्छाद्य **विशेषयति** उत्कृष्टत्वेन ज्ञापयति। अत्राप्यप्रकृतमिति कर्तृपदमन्वेति। विशेष्यस्यापीत्यादिना विशेषणस्यापि साम्यं प्रतीयत इति शेषः। **गम्यत्वं** व्यङ्ग्यत्वम्॥ परिकरालंकारमाह—**उक्तैरिति**। विषेणस्य प्रकृतोपयोगित्वज्ञापन-मित्यर्थः। 'विशेषणैः' इति बहुत्वमत्र विवक्षितं तेनैव वैचित्र्यस्यानुभवसिद्धत्वात्। **साभिप्रायैः** प्रकृतार्थपरिपरिपो-षणाभिप्रायेण प्रयुक्तैः। 'यद्यप्यपुष्टार्थस्य दोषत्वाभिधानात्तन्निराकरणेन पुष्टार्थस्य स्वीकारः कृतस्तथाप्येकनिष्ठत्वेन बहूनां विशेषणानामेवोपन्यासे वैचित्र्यमित्यलंकारमध्येऽयं गणितः' इति **काव्यप्रकाशः**॥ **अङ्गराजेति**। भीमेन बाध्यमानं दुःशासनं रक्षितुमशक्नुवन्तं कर्णं प्रत्यश्वत्थाम्नो लज्जाप्रतिपादकं वचनमिदम्। उक्तविशेषणत्रयेण कर्णस्य रक्षणोपयोगित्वं प्रतीयते। तथाविधस्य स्वपक्षरक्षणाक्षमतायां लज्जातिशयः प्रतीयत इति।

## विवृतिपूर्तिः

**एवमन्यत्रेति**। 'गण्डान्ते मददन्तिनां प्रहरतः क्ष्मामण्डले वैधृते रक्षामाचरतः सदा विदधतो लाटेषु यात्रोत्सवम्। पूर्वामत्यजतः स्थितिं शुभकरीमासेव्यमानस्य ते वर्धन्ते विजयश्रियः किमिव न श्रेयस्विनां मङ्गलम्॥' अत्र ज्योतिः शास्त्रप्रसिद्धवस्तुसमारोपः॥

## विज्ञप्रिया

औपम्यगर्भत्वं समासोक्तेर्निरस्य चतुर्विधमेव समासोक्ते रूपं संहृत्य व्यवस्थापयति—**विशेषणसाम्ये श्लिष्टेत्यादि**। व्यवहारसमारोपस्याप्यत्र चातुर्विध्यं वक्तुमाह—**सर्वत्र चेति**।

**यैरेकरूपमिति**। परमेश्वरं प्रति कस्यचिदुक्तिरियम्। अखिलासु वृत्तिषु संसारेषु एकरूपमद्वितीयं त्वां पश्यद्भिर्यैर्जनैः परत्वजुषो भिन्नत्वविषयाया विभक्तेर्विभागस्य लोपः कृतः। तदैतद्दर्शनाद् भेदबुद्धिर्न कृतेत्यर्थः। तैरेव तस्य च ध्रुवं ध्रुवत्वं लक्षणं कृतमित्यहं मन्ये। ध्रुवमिति भावप्रधाननिर्देशः। त्वां कीदृशम् अव्ययम् अक्षयम्, असंख्यतया संख्यातुमशक्यतया प्रवृत्तम् असंख्यपदानुवृत्तित्वात्। अत्र श्लिष्टविशेषणसामर्थ्यादपिकारादव्यय-प्रतीतिः। तेषामपि हि अखिलपदसाहित्येन वृत्तिषु स्थितेष्वेकरूपं विकाराराहित्यात्तदर्थे संख्याराहित्यम्। परस्याः सुब्विभक्तेर्लोपश्च कृतः इति ध्रुवं निश्चितं मन्ये। ईदृशं त्वां पश्यद्भिर्विभक्तिलोपं कुर्वद्भिः चादीनामीदृशत्वं लक्षणं चिन्हं कृतमित्येवं भावः। **अत्रेति**। आगमशास्त्रं वेदः। व्याकरणप्रसिद्धं वस्तु चकारादि। तद्वद् व्यवहारश्च शब्दात्मकत्वम्। ईश्वरे तदारोपस्यापि शब्दब्रह्मात्मकत्वात्। **एवमन्यत्रेति**। तत्र चान्यशास्त्रव्यवहारसमारोपो वेदशास्त्रप्रसिद्धे वस्तुनि ईश्वरे यथा मम।

> **"यस्यौज्ज्वल्यं द्युतिभिरधिकं विग्रहेरलङ्कृतीनां**
>
> **यत्पादान्ते लघुरपि पतत् गौरवं सम्प्रयाति।**
>
> **छन्दः सिद्धाक्षरतनुरसौ सद्गुणः शब्दमूर्त्तिः**
>
> **पुण्यश्लोको मनसि सततं सन्निधिं मे प्रयातु॥"**

इत्यत्र वाक्ये प्रस्तुतोऽर्थो यथाऽसौ पुण्यश्लोकः परमेश्वरो मे मनसि सततं सन्निधि प्रयातु। यस्य विग्रहे शरीरेऽलङ्कृतीनां कौस्तुभभूषणानां द्युतिभिरधिकम् औज्ज्वल्यं, यत्पादान्ते लघुर्निकृष्टोऽपि पतन् गौरवं गुरुत्वम् उत्तमत्वं सम्प्रयाति। असौ पुण्यश्लोकः कीदृशः। छन्दसि वेदे सिद्धाक्षररूपा अस्खलनरूपा तनुर्यस्य तादृशः सद्गुण ऐश्वर्य्यरूपगुणवान्। शब्दमूर्त्तिधरस्यैते विष्णोरंशा इति विष्णुपुराणम्।

अत्र श्लिष्टविशेषणैर्व्यञ्जना पुण्यस्योत्तमश्लोकस्य कविरिव प्रतीतिः। तस्याऽपि विग्रहे समासेऽलङ्कृतीनाम् अनुप्रासोपमादीनां द्युतिभिः शोभाभिरधिकम् औज्ज्वल्यं ततपादस्य चतुर्थभागस्यान्ते पततो लघुवर्णस्यापि गुरुत्वम्, पदान्तगो गुरुर्वेति छन्दःशास्त्रे उक्तत्वात्। असौ छन्दसाऽनुष्टुबत्वादिच्छन्दसा सिद्धो वर्णमयमूर्तिः। माधुर्य्यादिगुणवान् शब्दात्मकश्चेति।

एकदेशविवर्त्तिरूपकसमासोक्त्योर्भेदमाह—**रूपक** इति। एकदेशविवर्त्तिरूपके इत्यर्थः। **अप्रकृतमात्मस्वरूपेति**। अप्रकृतं व्यङ्ग्यरूपं तत् कर्त्तृ। **आत्मस्वरूपसन्निवेशेनेति**। आत्मस्वरूपस्याभेदारोपेण प्रकृतं वाच्यमवच्छादयत्यपह्नवविषयीकरोतीत्यर्थः। यथा "लावण्यमधुभिः पूर्णम्" इत्यादौ। **इह त्विति**। स्वावस्थाव्य-

ङ्ग्यस्य स्वरूपं तत्समारोपेण तदारोपेणावच्छादितस्वरूपमपह्नुतस्वरूपं तत् प्रकृतं वाच्यम्। पूर्वावस्थातोऽन्यारोपितव्यङ्ग्यव्यवहार रुपकावस्थातो विशेषयति आरोपितव्यङ्ग्यव्यवहारं करोतीत्यर्थः। एकदेशविवर्त्तिरूपके व्यङ्ग्यं रूप्यं वाच्ये आरोपिते यथा व्याधूय वसनमित्यादौ वाच्ये गन्धवहेन कामुकाभेदारोपः। किन्तु कामुकव्यवहारस्य रत्यर्थ वसनाक्षेपालिङ्गनरूपव्यवहारस्यैवारोपोऽत्र इत्यर्थः। संवादमाह—**अत एवात्र व्यवहारेति**। वस्तुतस्तु व्यङ्ग्यव्यवहाररूपकत्वद्वयमेवकदेशविवर्त्तिरूपके समासोक्तितो भेदकम्।

उपमाध्वनितोऽस्य भेदमाह—**उपमाध्वनाविति**। अत्र श्लेषेणत्येव पाठः, श्लेषाकारे द्वयोरेव वाच्यत्वेन व्यङ्ग्यस्यैवाभावात्। श्लेषेण विशेष्यस्यापि साम्यमित्यर्थः। प्रामादिकपाठे तु श्लेषे सति ततो विशेष्यादिसाम्यमित्यर्थः। तथापि चकारो निरर्थकः। अप्रस्तुप्रशंसातो भेदः स्फुट एव।

## लोचन

लौकिके सर्वमार्गसाधारणे। शास्त्रीये विद्याव्युत्पत्तिविशेषगम्ये। एकरूपं सन्मात्रत्वेनाविकारित्वात्प्रत्ययादिविशेषाभावाद्वा। वृत्तिषु वर्त्तन्ते प्रवर्त्तन्ते आविर्भवन्तीति व्युत्पत्त्या वस्तुषु स्त्रीत्वादिलिङ्गेषु वा अव्ययं क्षयरहितं चकारादिकञ्च। असंख्यतया प्रवृत्तमनन्तपदार्थरूपेण विवर्तनात्। एकत्रादिसंख्याविरहित्वे न प्रसिद्धेश्च। परत्वजुषो भिन्नत्वभाजः विभक्तेर्व्यक्तेर्वस्तुन इति यावत्। लोपः कृतः अभावो निश्चितः। प्रत्ययत्वेन पराद् भाविन्याः विभक्तेः विभक्तेः सुपः प्रोच्छनमिति लक्षणम्। लक्षणम्—स्पष्टसाक्षात्कारः साधनसूत्रं च। आगमः शास्त्रम्। अभिधानाभिधेययोः शब्दाभिन्नब्रह्मपरं। ब्रह्मणोऽभेदवदाश्रयम् मन्त्रशास्त्रम्। अन्यद् यथा—

> **"सीमानं न जगाम यन्नयनयोर्नान्येन यत्सङ्गतं**
>
> **न स्पृष्टं वचसा कदाचिदपि यद् दृष्टोपमानं न यत्।**
>
> **अर्थादापतितं न यन्नच स यत्तत् किञ्चिदेणीदृशो**
>
> **लावण्यं जयति प्रमाणरहितं चेतः चमत्कारि तत्॥"**

अत्र लावण्ये लौकिके प्रत्यक्षानुमानोपमानार्थपत्त्यभावशब्दरूपषट्प्रमाणादिमीमांसाशास्त्रप्रसिद्धवस्तुसमारोपः। अवच्छादयति निगूहति। अनवच्छादितस्वरूपम्। अगूढस्वरूपम्। पूर्वावस्था लोकप्रसिद्धा। यदुक्तं चण्डीदासपण्डितैरपि "यत्राऽप्रकृततादात्म्येन प्रकृतप्रतीतिस्तत्र रूपकम्। यत्रापकृतव्यापारवतः प्रकृतस्य स्वतन्त्रस्यैव प्रतीतिस्तत्र समासोक्तिरिति स्पष्टार्थः। एवं रूपकेऽपि व्यवहारसमारोपवचनं राघवनन्दानामपास्तम्।

इह चाप्रस्तुतप्रशंसायामप्रस्तुतवर्णनामुखेन प्रस्तुतप्रतीतिर्युक्ता तथाच मूलमन्तरेणाऽप्रस्तुतवर्णनस्याऽसम्बन्धप्रलापप्रायत्वात्। इह च विशेषणानां वर्णनीयार्थप्रतिपादनेन प्रकरणेन नियमितेऽपि द्वितीयार्थप्रतीतेरनुभवसिद्धेः।

## कुसुमप्रतिमा

सर्वत्रेति। अत्र व्यवहारसमारोप एव कारणम्, न तु स्वरूपसमारोपः सादृश्यप्रतीतिर्वेति भावः। स च व्यवहारसमारोपश्च। लौकिके इहलोक इव प्रत्यक्षादियोग्ये। शास्त्रीये शास्त्रमात्रगम्ये न तु साधारणप्रत्यक्षादियोग्य इत्यर्थः। एवमन्वत्रापि। चतुर्द्धेति। तथा च प्रागुक्तानां चतुर्णां प्रकाराणां प्रत्येक एव लौकिक इत्याद्युक्तविधया चतुर्विधत्वात् समुदायेन प्रधानतः षोड़शविधा समासोक्तिरिति बोध्यम्।

तत्रेति। रसा: श्रृङ्गारादय: आदिपदादघटपटादीनि वस्तूनि च तेषां भेदात्। हठेति। आदिशब्देन मतान्तरसिद्धस्य स्वरूपस्य संग्रह:।

यैरिति। हे परमात्मन्! अखिलास्वपि वृत्तिषु सृष्टिस्थितप्रलयादिषु जगत: सर्वास्वेवाव स्थासु, एकरूपम्, अपरिणामित्वात् रूपान्तररहितम्, अन्यत्र तु अखिलास्वपि वृत्तिषु प्रत्ययोगसमासादिषु, एकरूपम् अनन्यथाकारम्। अव्ययं क्षयरहितम्, अन्यत्र तु अव्ययसंज्ञकम्। असंख्यतया इयतारहिततया प्रवृत्तं विद्यमानम्, त्वां भवन्तम्, पश्यद्भिर्जानद्भि:, यैर्जनै: परत्वजुषो भिन्नत्वाश्रितायाः त्वद्भिन्नाः पदार्थाः सन्तीति बुद्धिधेप्रयुक्ताया इत्यर्थ:, विभक्तर्विभागस्य विभागकरणस्येति तात्पर्य्यम्, अन्यत्र तु परवर्त्तिन्याः स्यादिविभक्ते:, लोप उच्छेद कृत; तैजनै: ध्रूवं निश्चितमेव तव लक्षणं स्वरूपावधारणम्, कृतमित्यहं मन्ये। एतदुभयपक्ष एव समानम्। "वृत्तिर्विवरणस्था-समासजीवनेषु च। कैशिक्यादौ प्रवृत्तौ च" इति गोपाल:। "पदानां प्रत्ययैर्योग: समासाश्चेह वृत्तय:" इति कातन्त्रपरिशिष्टे श्रीपतिश्च।

अत्रेति। आगमशास्त्रप्रसिद्धे केवलाध्यात्मशास्त्रप्रथिते वस्तुनि परमात्मनि। तथा च गीतायाम्—
"अव्यक्तोऽयमचिन्तयोऽयम् अविकार्य्योऽयमुच्यते।"

वेदान्तशङ्करभाष्यधृता कठोपनिषत्—

**"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।**
**अनाद्यनन्तं महत: परं ध्रुवं निवार्य्यते मृत्युमुखात् प्रमुच्यते॥"**

"असङ्गतया प्रवृत्तम्" इति तु सांख्यमते। तथा च सांख्यकारिका—

**"जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।**
**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्य्ययाच्चैव॥" सांख्यसूत्रमप्येवम्।**

अथवा कार्य्यरूपेणासंख्यत्वम्। तथा च वेदान्तभामत्याम्—

**"कार्य्यरूपेण नानात्वमभेद: कारणात्मना।**
**हेम्नात्मना यथाऽभेद: कुण्डलाद्यात्मना भिदा॥"**

व्याकरणप्रसिद्धेति। तथा च सूत्रम्—"स्वरादिनिपातमव्ययम्" कान्तन्त्रपञ्जीधृता कारिका च—
"सदृश त्रिषु लिङ्गेषु सर्वासु च विभक्तेषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥"

(ढ) एवमिति। अन्वत्रप्येवमूह्यमित्यर्थ:। यथा मम रुक्मिणीहरणमहाकाव्ये—

**"प्रसाधिका भूरिपदस्य साधु स्वकर्म्मसूत्रेण जगज्जनानाम्।**
**इयं यथार्था प्रकृति: किलेति तस्या: पर: प्रत्यय एव जात:॥"**

अत्र लौकिके विश्वासे व्याकरणशास्त्रप्रसिद्धतादिप्रत्ययपन्यवहारसमारोप:। यथा वा मम वङ्गीयप्रतापनाटके—

**"येन सत्यपि योग्यत्वे विशेषश्चेन्न लभ्यते।**
**सति हेतौ फलाभावे विशेषोक्तिर्हि युज्यते॥"**

अत्र लौकिके वाक्ये अलङ्कारशास्त्रप्रसिद्धविशेषोक्त्यलङ्कारव्यवहारसमारोपः।

**"प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।**

**या दृष्टाऽस्मीति न पुनर्दर्शनमुपैति पुरुषस्य॥"**

इति सांख्यकारिकायां सांख्यशास्त्रप्रसिद्धे प्रकृतिरूपे वस्तुनि लौकिकलज्जाशीलस्त्रीरूपवस्तुनो व्यवहारसमारोपः।

इदानीं सम्भाव्यमानेभ्योऽलङ्कारान्तरादिभ्यः समासोक्तेर्भेदं दर्शयितुमाहरूपक इति। अप्रकृतमप्रस्तुतम् उपमानीभूतं वस्त्वित्यर्थः, आत्मरूपसन्निवेशेन उपमेये स्वकीयरूपारोपेण, प्रकृतस्य प्रस्तुतस्य उपमेयस्येति यावत्, रूपं स्वभावम्, अवच्छादयति तिरोदधाति अप्रधानीकरोति उपमेयप्धानीकृत्य स्वयमेव क्रियादौ प्रधानत्व नान्वेतीत्यर्थः। इह समासोक्तौ तु तदप्रकृतं वस्तु, स्वावस्थासमारोपेण निजव्यवंहारारोपेण, अवच्छादितं रूपकवदेव तिरोहितं स्वरूपं यस्य तत् सादृशमेव, तं प्रकृतं पदार्थम्, पूर्वावस्थातः पूर्वावस्थापेक्षया विशेषयति उत्कर्षयतीति स्वमतम्।

तृतीयमतमाह अतएवेति। अत्र समासोक्तौ। स्वरूपस्याविवरणादेतदुक्तेरस्पष्टतया वदन्तीत्यनेनास्वरसः सूचितः।

उपमेति। "हिममुक्तचन्द्ररूचिरः" इत्यादावुक्ते (२३८ पृष्ठे) उपमाध्वनौ। श्लेषे—"प्रवर्त्तयन् क्रियासाध्वौः" इत्यादौ वक्ष्यमाणे च। न केवलं विशेषणस्य विशेष्यस्यापीत्यर्थः। विशेषणमात्रस्य केवलस्य विशेषणस्य।

अप्रस्तुतेति। गम्यत्वं व्यञ्जनया प्रतीतयमानत्वम्। अप्रस्तुतस्य गम्यत्वमित्यन्वयः।

समासोक्तिप्रयोजकगणशेषे विशेषणस्योपस्थितत्वात्तत्प्रयोजितमेव परिकरं नामालङ्कारं लक्षयति उक्तिरिति। साभिप्रायैर्विशेषाभिप्रायेण प्रयुक्तैरित्यर्थः, उक्तिर्विषयविशेषकथनं परिकरो नामालङ्कारो मतः। "यद्यप्यपुष्टार्थस्य दोषताभिधानात् तन्निराकरणेन पुष्टार्थस्वीकारः कृतः, तथाप्येकनिष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्रयमित्यलङ्कारमध्ये गणितः" इति काव्यप्रकाशकारः। अत एवात्र विशेषणैरिति बहुत्वं विवक्षितम्। तेन—

**भिन्नभिन्नाप्रायेण बहुविशेषणप्रयोगः परिकर इति लक्षणं फलितम्।**

तत्र विशेषणानां हेतुरूपत्वे काव्यलिङ्गं तदितररूपत्वे तु परिकरः सामान्यविशेषन्यायादित्यनयोर्भेदः। परिकीर्य्यते सर्वतः सार्थकविशेषणं प्रक्षिप्यते उपन्यस्यते अस्मिन्नर्थ इति परिकरः। परिपूर्वात् किरतेरधिकरणे अल्। कुवलयानन्दकारस्तु—

**"साभिप्राये विशेष्ये तु भवेत् परिकराङ्कुरः।**

**चतुर्णां पुरुषार्थानां दातादेवश्चतुर्भुजः॥"**

इति सोदाहरणं लक्षणमभिधाय परिकराङ्कुरं नामालङ्कारान्तरमङ्गीकरोति। काव्यप्रकाशदर्पणकाराभ्यान्तु विशेषवैचित्रयाभावादेव तन्न गणितम्। केचितु "वृक्षात्तदङ्कुर इवायं (परिकराङ्कुरः) परिकरान्नातिरिच्यते" इति वदन्ति; तत्तुच्छम्, बहुविशेषणघटितलक्षणेन एकविशेष्यविशिष्टलक्ष्यस्य सर्वथैवास्पर्शात्।

अङ्गेति। वेणीसंहारनाटके भीमेन निहन्तुमाक्रम्यमर्णं दुःशासनमवलोक्य कर्णं प्रति अश्वथाम्नः सरोषोपहासोक्तिरियम्। हे अङ्गराज! एतेन न खलु भवान् यः कश्चित् साधारणो लोकः, किन्तु अङ्गदेशस्यैव राजेति महाशक्तिशालिनस्तै दुर्बलरक्षणमेक्रान्तमेवोचितमित्याभिप्रायो व्यज्यते। ननु तथापि उदाधीनस्य पररक्षणे किं प्रयोजनमित्याह सेनापते इति। नामपहाय दुर्य्योधनेन सेनापतीकृतस्य भवतः सेनान्तर्गतस्यैव विशेषतश्च तस्यैव भ्रातुर्दुःशासनस्य रक्षणं सर्वथैवोचितमित्यभिप्रायः। नत्वहमत्र न समर्थोऽस्मीत्याह द्रोणोपहासिन्निति। तर्हि कथमर्जुनेन वध्यमानं जयद्रथं रक्षितुमशक्नुवन्तं मत्पितरं द्रोणमुपसितवानसीत्यभिप्रायः।

अतएवात्र अङ्गराजेत्यादीनां त्रयाणां विशेषणानां भिन्नभिन्नाभिप्रायेण प्रयोगात् परिकरः।

समासोक्तिप्रयोजकविशेषणमध्ये श्लेषस्यापि प्रस्तावात् शब्दश्लेषस्य च प्रागेव लक्षितत्वादवशिष्टमर्थश्लेषं लक्षयति शब्दैरिति। स्वभावं स्वत एव प्रवृत्तं व्यापारं स्वाभाविकीमभिधाशक्तिमाश्रित्येतिस्वभावात्, एकः अर्थो येषां तैः अभिधया एकमात्रार्थप्रतिपादकैरित्यर्थः, शब्दैः, अनेकार्थस्य वाचनं यथासम्भवं रूढया एकार्थस्य परिभाषादिना चापरार्थस्य प्रतिपादनम्, श्लेषः अर्थलङ्कारप्रकरणादर्थश्लेषां नामालङ्कारो मतः। एतेन "वाचनमभिधालक्षणाभ्यां प्रतिपादनम्" इति रामचरणव्याख्यानामपास्तम्, श्लेषस्थले अभिधयैव युगपदनेकार्थाभिधानस्याङ्गीकारेणानुपपत्तिलेशाभावात् प्रदर्शितलक्ष्ये मुख्यार्थबाधाभावेन लक्षणाया एषा सम्भवात्, "द्वावपि राजसूर्य्यौ वाच्यो" इति वृत्तिपङ्क्तौ "द्वावप्यर्कभूपौ वाच्यौ" इति काव्यप्रकाशोक्तौ च वाच्यावित्यनेन दुर्निवारविरोधाञ्च। अत्र शब्दैरिति बहुत्वमविवक्षितम्, ईदृशैकशब्दप्रयोगस्थलेऽपि ईदृशवैचित्र्यसम्भवात्। तेन—

अभिधया एकमात्रार्थबोधकशब्देन अनेकार्थबोधनमर्थश्लेष इति लक्षणं पर्य्यवसितम्।

## विमला

व्यवहारादेः इत्यादिपदेन स्वरूपस्य ग्रहणम्।

यैरिति।—ईश्वरं प्रति कस्यचिदुक्तिरियम्। हे भगवन्! अखिलासु—समग्रासु, वृत्तिषु—अवस्थासु, वस्तुषु वा, पदप्रत्ययोगसमासादिरूपेषु पदार्थान्वयेषु च, ("वृत्तिविवरणावस्था-समासाजीवनेषु च। कौशिकादौ प्रवृत्तौ च" इति गोपालः) एकरूपं—रूपान्तरमलभमानमित्यर्थः, अव्ययम्—अविनाशिनम्, अव्ययपदवाच्यञ्च, असङ्ख्यातया—सङ्ख्यातीततया, अनन्तरूपतयेति यावत्, सङ्ख्याविशेषाप्रतिपादकतया च, प्रवृत्तं त्वां पश्यद्भिः यैः,—जनैः, परत्वजुषः,—उत्कर्षभाजः, यद्वा—त्वदन्यः कश्चिदस्ति इत्येवंरूपाया इत्यर्थः, विभक्तेः,—भेदग्रहस्य, पक्षे—परवर्त्तिन्याः विभक्तेः,—प्रत्ययस्य, स्वादेरित्यर्थः, लोपः कृतः, तैः तव लक्षणं—विशिष्टस्वरूपज्ञानं, तत्त्वमित्यर्थः, सूत्रञ्च, कृतं—निरूपितम्, इति ध्रुवमेव निश्चितमेव, मन्ये—जानामि। वसन्ततिलकं वृत्तम्।

अत्र आगमेति।—आगमशास्त्रं—वेदः, तव प्रसिद्ध तस्मिन्, वस्तुनि—ब्रह्मणीति भावः, व्याकरणशास्त्रप्रसिद्धस्य वस्तुनः,—अव्ययशब्दस्य इत्यर्थः, व्यवहार समारोपः। एवमन्यत्रेति।—तद्रयथा—"गण्डान्तै मददन्तिनां प्रहरतः क्ष्मामण्डलै वैधृते रक्षामाचरतः सदा विदधतो लाटेषु यात्रोत्सवम्। पूर्वामत्यजतः स्थितिं शुभकरीमासेव्यमानस्य ते वर्द्धन्ते विजयश्रियः किमिव न श्रेयस्विना मङ्गलम्?" ॥ अत्र ज्योतिस्तन्त्रप्रसिद्धपदार्थारोपः। रूपकादस्याः परैरूपपादितं भेदं दर्शयति, रूपके इति।—अप्रकृतं—वस्तु, उपमानमित्यर्थः, आत्मस्वरूपस्य सन्निवेशेन—आरोपणेन, प्रकृतस्य—उपमेयस्य, रूपंम—स्वरूपम्, अवच्छादयति—आवृणोति। इह तु समासोक्तौ तु, स्वावस्था—स्वसाधर्म्यं, तस्या समारोपेण। तं—प्रकृतपदार्थं, पूर्वावस्थात्—प्रकृतावस्थामवच्छाद्ये-

त्यर्थः, विशेषयति—उत्कृष्टत्वेन ज्ञापयति । अत्रापि "च कृतम्" इति कर्तृपदमन्वेति । विशेष्यापीत्यपिना विशेषणस्यापि साम्य, प्रतीयते इति शेषः । गम्यत्व—व्यङ्ग्यत्वम् ।

## लक्ष्मी

समासोक्तौ व्यवहारसमारोप एव हेतुरित्युपपादयति—**सर्वत्रेति** । सर्वप्रभेदादिष्वित्यर्थः । अत्र आसु समासोक्तिषु व्यवहारसमारोप एव अप्रस्तुतस्येतिशेषः, कारणम्, न तु स्वरूपसमारोपः सादृश्यप्रतीतिर्वेत्याशयः । स चाप्रस्तुतव्यवहारसमारोपश्च । लौकिके अमुष्मिल्लोक एव प्रत्यक्षादियोग्ये । शास्त्रीये विद्याव्युत्पत्तिविशेषगम्ये न तु साधारणप्रत्यक्षादियोग्ये । अन्यत्राप्येवमेवानुसन्धेयम् । **चतुर्द्धेति** । एवञ्च पूर्वोक्तानां चतुर्णां भेदानां प्रत्येक एव लौकिक इत्यादप्रदर्शितदिशा चतुष्प्रकारत्वात्साकल्येन मुख्यतः षोडशप्रकारा समासोक्तिः फलिता भवतीत्यवधेयम् ।

सम्प्रति प्रकारान्तरेणानेकविधत्वमुपपादयति—**तत्रेति** । तेषु चतुष्प्रकारेषु मध्य इत्यर्थः । रसाः शृङ्गारादयः, आदिशब्दाद्घटपदादीनि वस्तूनि च तेषां भेदात् हठकामुकव्यवहारादेरित्यत्रादिपदेन साम्यप्रदायिकमतसिद्धस्य स्वरूपस्य ग्रहणम् ।

लौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपे 'व्याधूय यद्वसन' मित्युदाहृत्य सम्प्रति शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपमुदाहरति—**यैरेकरूपमिति** । परमेश्वरं प्रतिकस्या चिदुक्तिरियम् । हे परमात्मन् ! (इदमध्याहार्यम्) अखिलास्वपि वृत्तिसु संसारस्य सृष्टिस्थितिप्रलयादिषु सर्वास्ववस्थासु समस्तासु पदार्थान्वयेषु च एकरूपम् अपरिणामित्वाद्रद्वितीयम् अन्यत्र विकाराराहित्यात्तदर्थे संख्याराहित्यम्, अव्ययम् अविनाशिनम्, अन्यत्र अव्ययसंज्ञकस्वरादिनिपातविशेषम्, असंख्यतया अनन्तेन संख्यातुमशक्यतया प्रवृत्तं विद्यमानम्, अन्यत्र संख्याविशेषप्रतिपादकतया प्रवृत्तम्, त्वां भवन्तम्, पश्यद्भिर्जानद्भिः, यैर्जनैः परत्वजुष उत्कर्षभाजस्तव विभक्तेर्विभागस्य विभागकरणस्येत्यर्थः अन्यत्र तु परवर्त्तिन्या विभक्तेः स्वादेः किल इति निश्चयेन लोपो निरास उच्छेद इत्यर्थः कृतः तैर्जनैः ध्रुवं तव लक्षणं विशिष्टज्ञानं स्वरूपनिश्चयमितितात्पर्यम्, अन्यत्र सूत्रं च कृतमित्यहं मन्ये । ध्रुवमितिभावप्रधाननिर्देशः । अव्ययप्रतीतिश्चात्र श्लिष्टविशेषणसामर्थ्यादपिकाराच्च । **वसन्ततिलकं** छन्दस्तल्लक्षणं तूक्तं प्राक् ।

लक्ष्यं समर्थयति—**अत्रेति** । आगमंशास्त्रं वेदः तत्प्रसिद्धे अध्यात्मशास्त्रप्रथिते इत्यर्थः । आगमानां शास्त्रत्वेऽपि ततो विभज्य प्रतिपादनं तेषामपौरुषेयत्वेन वैलक्षण्यबोधनार्थम् । वस्तुनि परमात्मरूपे । तथा च भगवती श्रुतिः—

> **'अशब्दमस्पर्शमरूपमव्ययं तथा रसं नित्यमगन्धवच्च यत् ।**
>
> **अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥'**

भगवद्गीतायाम्—

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते'

ब्रह्मसूत्रशाङ्करभाष्यभामत्याम्—

> **'कार्यरूपेण नानात्वमभेदः कारणात्मना ।**

**हेम्नात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥'**

इति कार्यरूपेण 'असंख्यतया प्रवृत्तम्' इत्युक्तम् ।

**एवमिति** । अन्यत्र लौकिके शास्त्रीयस्य शास्त्रीये वा लौकिकस्य व्यवहारस्य समारोप एवमूह्यमित्यर्थः । तत्र लौकिके शास्त्रीयव्यवहारसमारोपो यथा—

**'सीमानं न जगाम यन्नयनयोर्नान्येन यत्सङ्गतं**

**न स्पृष्टं वचसा कदाचिदपि यद्दृष्टोपमानं न यत् ।**

**अर्थादापतितं न यत्र च स यत्तत् किञ्चिदेणीदृशो**

**लावण्यं जयति प्रमाणरहितं चेतश्चमत्कारि तत् ॥'**

अत्र लावण्ये लौकिके प्रत्यक्षानुमानोपमानार्थापत्त्याभावशब्दरूपषट्प्रमाणादिमीमांसाशास्त्रप्रसिद्धवस्तु-समारोपः ।

**'गण्डान्ते मददन्तिनां प्रहरतः क्ष्मामण्डले वैधृते**

**रक्षामाचरतः सदा विदधतो लाटेषु यात्रोत्सवम् ।**

**पूर्वामत्यजतः स्थितिं शुभकरीमासेव्यमानस्य ते ।**

**वर्ण्यन्ते विजयश्रियः किमिव न श्रेयस्विनां मङ्गलम् ॥'**

अत्र ज्योतिश्शास्त्रप्रसिद्धवस्तुसमारोपः ।

शास्त्रीये लौकिकव्यावहारसमारोपो यथा—

**'कृत्वा सूत्रैः सुगूढार्थैः प्रकृतेः प्रत्ययं परम् ।**
**आगमान् भावयन् भाति वैयाकरणपुङ्गवः ॥'**

अयं व्याकरणशास्त्रे राजव्यवहारस्य समारोपः ।

सम्प्रति अलङ्कारान्तरादस्या भेदं दर्शयति—**रूपक** इति । एकदेशविवर्त्ति रूपक इत्यर्थः । अप्रकृतमप्रस्तुतम् उपमानरूपं वस्त्वित्यर्थः । इदञ्च कर्त्तृपदम्, आत्मस्वरूपसन्निवेशेन उपमेये आत्मस्वरूपारोपणेन, प्रकृतस्य प्रस्तुतस्योपमेयस्य रूपं स्वरूपम् अवच्छादयति अपह्नविषयीकरोति उपमेयं गोपनीकृत्य स्वयमेव क्रियादौ मुख्यत्वेन सम्बन्धातीत्यर्थः । यथा 'लावण्यमधुभिः पूर्णम्' इत्यादौ । इह तु समासोक्तौ तु अत्रापि अप्रस्तुतमिति-पूर्वतोऽनुषज्यते स्वावस्थासमारोपेण अप्रस्तुतसाधर्म्यारोपेण अवच्छादितं रूपकवदेव अपह्नवविषयीकृतं स्वरूपं यस्य तत्तादृशमेव तं प्रकृतपदार्थम्, पूर्वावस्थातः अप्रस्तुतसाधर्म्यारोपात्प्राग्भवावस्थापेक्षया विशेषयति उत्कृष्टत्वेन ज्ञापयतीतिस्वमतम् ।

तृतीयमतं दर्शयते—**अतएवेति** । अत्र समासोक्तौ । अत्र 'वदन्ती'त्यनेन स्वरूपस्य व्याख्यानाभावादे-तत्कथनस्यास्फुटतयास्वरसो व्यञ्जितः ।

उपमानध्वनितोऽस्या भेदमुपपादयति—**उपमाध्वनाविति** । 'हिममुक्तचन्द्ररुचिरः' इत्यादिप्रदर्शितोपमा-ध्वनावित्यर्थः । श्लेषे 'प्रवर्त्तयन् क्रियाः साध्वीः' इत्यादिनिरूपयिष्यमाणेऽपि च **विशेषस्यापीत्य**पिना विशेषणस्य

तु स्फुटमेवेति बोध्येते। इह अस्यां समासोक्तौ तु विशेषणमात्रकेवलविशेषणस्य साम्यमिति पूर्वतोऽन्वेति। प्रतीयते इति शेषः।

अथाप्रस्तुतप्रशंसातो भेदमुपपादयति—**अप्रस्तुतेति**। प्रस्तुतस्योपमेयस्य गम्यत्वं व्यङ्ग्यत्वम्। अप्रस्तुतप्रशंसायामप्रस्तुतवर्णनामुखेन प्रस्तुतप्रतीतिर्युक्ता मूलमन्तरेणऽप्रस्तुतवर्णनासम्बन्धप्रलापप्रायत्वात्। इह तु समासोक्तौ तु अप्रस्तुतस्योपमानस्य गम्यत्वमितिसम्बन्धः। तथा चेह विशेषाणानां वर्णनीयार्थप्रतिपादनेन प्रकरणेन नियमितेऽपि द्वितीयार्थप्रतीतेरनुभवसिद्धेरितिभावः।

## रुचिरा

अत्रोदाहृते पद्ये। **आगमशास्त्रप्रसिद्धे** आगमा वेदाः शास्त्राणि न्यायादीनि तेषु प्रसिद्धस्तत्र। आगमानां शास्त्रत्वेऽपि ततो विभज्याभिधानं तेषामपौरुषत्वेन वैलक्षण्यद्योतनार्थम्। **वस्तुनि** 'भगवद्रूपे' इति शेषः। **व्याकरणप्रसिद्धवस्तुव्यवहारसमारोपो** व्याकरणप्रसिद्धं वस्तु अव्ययरूपं तस्य व्यवहारसमारोपः। **एवम्। अन्यत्र** लौकिके शास्त्रीयस्य शास्त्रीये वा लौकिकस्य व्यवहारस्य समारोप ऊह्य इति भावः। तत्र लौकिके शास्त्रीयव्यवहारसमारोपो यथा—'सीमानं न जगाम यन्नयनयोर्नान्येन यत्सङ्गतं न स्पृष्टं वचसा कदाचिदपि यद् दृष्टोपमानं न यत्। अर्थादापतितं न यत्र च न यत् तत् किञ्चिदेणीदृशां लावण्यं जयति प्रमाणरहितं चेतश्चमत्कारकृत्॥' शास्त्रीये लौकिकव्यवहारसमारोपो यथा—'कृत्वा सूत्रैः सुगूढार्थैः प्रकृतेः प्रत्ययं परम्। आगमान् भावयन् भाति वैयाकरणपुङ्गवः॥' इति दिक्। अत्र रसगङ्गाधरकाराः—इयं चालङ्कारान्तरेषु बहुष्वानुगुण्येन स्थिता, यथा—"स्थितेऽपि सूर्य्ये पद्मिन्यो वर्त्तन्ते मधुपैः सह। अस्तंगते तु सुतरां स्त्रीणां कः प्रत्ययो भवेत्॥" अत्र समर्थ्यत्वेन स्थिताऽर्थान्तरन्यासानुगुण्यमाधत्ते। "उत्तमानामपि स्त्रीणां विश्वासो नैव विद्यते। राजप्रियाः कैरविण्यो रमन्ते मधुपैः सह॥" अत्र समर्थकत्वेन "व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीतान्याकर्ण्य स्तुतिमुदयत्रपाऽतिरेकात्। आभूमीतलनतकन्धराणि मन्येऽरण्येस्मिन्नवनिरुहां कुटुम्बकानि॥" अत्र हि परकृतनिजस्तुत्याकर्णनकन्धरानमनादिविशेषणसाम्योत्थापितया समासोक्त्या सज्जनव्यवहाराभिन्नतया स्थित एब तरुव्यवहारे भूशाखासम्बन्धाभेदाध्यवसितमस्तकमूलनमननिमित्तोत्थापिता त्रपारूपहेतूत्प्रेक्षा सम्भवति, अन्यथा कितवकृतग्रीवानमनस्यापि त्रपोत्थापकताऽऽपत्तेः। इत्युत्प्रेक्षाऽनुगुणा समासोक्तिः। एवम्—"राज्याभिषेकमाज्ञाय शम्बरासुरवैरिणः। सुधाभिर्जगतीमध्यं लिम्पतीव सुधाकरः॥" इत्यत्रापि स्वमिसेवकव्यवहारमूला सुधालेपनोत्प्रेक्षा। अमुयैव दिशा अचेतनव्यवहारे प्रकृते चेतनव्यवहारसम्बन्धिस्वरूपहेतुफलोत्प्रेक्षायां च समासोक्तिरेव मूलम्। इत्यप्याहुः।

अलङ्कारान्तरादस्या भेदं निर्दिशति—**रूपके** इत्यादिना।

**रूपके**। **अप्रकृतम्**उपमानरूपं। वस्तु। **आत्मस्वरूपसन्निवेशेन**आत्मस्वरूपारोपणेन। **प्रकृतस्योपमेयस्य**। **रूपं** स्वरूपम्। **अवच्छादयति** तरोधत्ते। **इहास्यां समासोक्तौ**। **तु**। **स्वावस्थासमारोपेण** स्वस्याप्रकृतस्य वस्थासाधर्म्ये तस्याः समारोपस्तेन। **अवच्छादितस्वरूपमवच्छादितं** तिरोहितं स्वरूपं यस्य तत्तथोक्तम्। **एव**। **तत्** प्रकृतम्। **पूर्वावस्थातः** पूर्वाऽप्रकृतसाधर्म्यारोपात्प्राग्भवाऽवस्था तस्याः। **विशेषयति** उत्कृष्टत्वेन बोधयतीति भावः। अत्र कर्त्तृपदमप्रकृतमित्येव। **अतः**। **एव**। "अत्र समासोक्तौ। **व्यवहारसमारोपः**। **नतु**। **स्वरूपसमारोपः**।" **इति**। **आहुः**। **उपमाध्वनौ**। **श्लेषे**। **च**। **विशेष्यस्य**। **अपि** 'विशेषणस्य तु स्फुटमेवे' ति शेषः। **साम्यम्**। **इहास्यां समासोक्तौ**। **तु**। **विशेषणमात्रस्य** 'साम्य' मिति पूर्वतोऽन्वेति 'प्रतीयत' इति शेषः। **अप्रस्तुतप्रशंसायाम्**। **प्रस्तुतस्योपमेयस्य गम्यत्वं** व्यङ्ग्यत्वम्। **इह** समासोक्तौ। **तु**। **अप्रस्तुतस्योपमानस्य**। **इति** इत्येवमित्यर्थः। **भेदः**।

**उक्तैर्विशेषणैः साभिप्रायैः परिकरो मतः ।**

यथा—

**'अङ्गराज ! सेनापते ! द्रोणोपहासिन् ! कर्ण !, रक्षैनं भीमाद्दुःशासिनम् ।।'**

---

## विवृतिपूर्तिः

**परिकर इति** । परिकरोति प्रकृतार्थमुपकरोतीति परिकरः साभिप्रायशब्दः सोऽस्मिन्नस्तीति परिकरः । मत्वर्थीयोऽच् । भूषणार्थाभावान्न सुट् । अत्र परिकरस्यालंकारत्वस्वीकारे विवृतिकारैः प्राचां संमतिरुक्तैव । तत्राप्ययदीक्षितास्तु—श्लेषमकादावपुष्टार्थत्वस्य दोषत्वाभावात्तत्रैकविशेषणस्य साभिप्रायत्वेऽप्यलंकारत्वं दुर्वारम् । एवं च 'सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः' इत्यादावपि तत्संयुक्तत्वमित्याहुः । अन्ये तु श्लेषाद्यतिरिक्तस्थले साभिप्रायविशेषणोपादानेन विच्छित्तिविशेषस्वीकारे तस्यालंकारत्वं दुर्वारम् । अन्यथा श्लेषादिस्थलेऽपि विच्छित्तिविशेषो नास्तीत्यपि वक्तुं शक्यम् । यदि च तत्रानुभवः प्रमाणमित्युच्यते, तदान्यत्रापि तुल्यमिति न पृथगलंकारतेति दीक्षितमतं दूषयित्वा—सुन्दरत्वे सत्युपस्कारत्वमलंकारत्वम्, चमत्कारापकर्षकाभावत्वं च दोषाभावत्वम्, तयोश्च कचिदेकत्र समावेशेऽपि नैकेनान्यस्यान्यथासिद्धेः उपाधेरसंकरात् । यथा ब्राह्मणस्य मूर्खत्वं दोषः, विद्या तु दोषाभावो गुणश्च तद्वदिहापि । अन्यथा काव्यलिङ्गमप्यलंकारो न स्यात् । निर्हेतुत्वरूपदोषाभावात्मकत्वात् । न च दोषाभावत्वेनैव संग्रहोऽस्तु, अलंकारत्वेन गणनं किमर्थमिति वाच्यम् । दोषाभावान्तरवैलक्षण्यज्ञापनाय तदुपपत्तेः । अन्यथा गुणीभूतव्यङ्ग्यत्वेन संगृहीतायाः समासोक्तेरप्यलंकारमध्ये गणना न स्यादिति प्राहुः ॥

यत्तु दीक्षतैः—'साभिप्राये विशेष्ये तु **भवेत्परिकराङ्कुरः**' । चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥' इत्युक्तम् । इह पुरुषार्थचतुष्टयदानोपपत्त्यर्थं चतुर्भुजपदं साभिप्रायमिति । तत्र परिकर एवान्तर्भावसंभवात् । चतुर्भुजपदस्य हि देवविशेष्यकभुजचतुष्टयवत्त्वप्रकारबोधत्वं कार्यतावच्छेदकम् । तत्र विशेषणीभूतभुजचतुष्टयवत्त्वांशस्यैव प्रकृतोपकारकत्वात् ॥ 'फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हैहयाधिपः । द्रष्टुमाखण्डलः साक्षात्काहमेषक्ते गुणाः ॥' इत्यत्र प्रकृतोपपादकयौगिकार्थविरहात्कथं परिकरान्तर्भाव इति चेत्, तर्हि सहस्रमुखादिपदानामभावात्कथं परिकराङ्कुरोऽपीत्यवधार्यताम् । सहस्रमुखत्वादौ फणीन्द्रादिपदानां तात्पर्यमिति चेत्, नूनमिदं विशेषणस्य साभिप्रायत्वं एव संभवति फणीन्द्ररूपविशेषणांशेनैव तदाक्षेपात् । अतो रूढपदस्थलेऽवयवार्थस्य प्रकृतोपकारकतायां क्वचित्तेनैव प्रकृतोपकारकस्य विशेष्यस्य प्रतीतिः सिद्धा । यथा—'मन्ये निजस्खलनदोधमवर्जनीयमन्यस्य मूर्ध्नि विनिवेश्य बहिर्बुभूषुः । आविश्य देव रसनानि महाकवीनां देवी गिरामपि तव स्तवमातनोति ॥' अत्र देवी गिरिमित्यनेन विद्याविषयाभ्यर्हितत्वस्य सरस्वतीत्वेन च बोधस्य सिद्धिः । यत्र रूढार्थवाचकपदान्तरमपि युज्यते तत्रावयवार्थमात्रपरत्वमेव तस्य । यथा—'उद्यन्मृगाङ्करुचिकन्दलकोमलानामुन्निद्रशोणनलिनोदरसोदराणाम् । प्राप्तुं तवाधररुचामवलोकनेन नालं सहस्रनयना स वृषापि तृप्तिम् ॥' अत्र सहस्रनयनेति दर्शनसामर्थ्यव्यञ्जनेऽपि तस्यं नरेन्द्रपरत्वं वृषपदपौनरुक्त्यापत्तेः । तश्च—'तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा । कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥' इत्यत्र पिनाकपाणिपदेनायुधदृढत्वमात्रपतीत्या पुनर्हरपदप्रयोगवत् कुसुमायुधपदेन तदसारत्वप्रतीत्या स्मरवाचकपदप्रयोगाभावादनुपपत्तिमाशङ्क्य तत्राप्युत्तमपुरुषाक्षि-

प्ताहंपदस्य स्मरवाचकत्वमस्त्येवेति **साहित्यचिन्तामणिकारोक्तं** न नियमाभिप्रायकमिति स्वयमेव दीक्षितैर्वृत्तिवार्तिके प्रथमपरिच्छेदे प्रतिपादितम्. तस्मात् 'फणीन्द्रः—' इत्यादौ फणीन्द्रत्वाक्षिप्तसहस्रमुखत्वमेव प्रकृतोपकारकमतो न विशेषणसाभिप्रायत्वक्षतिरिति सिद्धम्, इति **विश्वेश्वरपण्डिताः** ॥

## विज्ञप्रिया

परिकरालङ्कारमाह—**उक्तिरिति**। साभिप्रायत्वं प्रतिपादनीयार्थपुष्ट्याऽर्थपुष्टिकारित्वम्। तच्च यद्यपुष्टार्थदोषत्यागेनैव लभ्यं तथापि विशेषणैरित्यत्र बहुविवक्षणाद् बहुत्वे वैचित्र्यविशेषानुभवाद् अलङ्कारित्वम्। अङ्गराजेत्यादिकं कर्णोपहासिनोऽश्वत्थाम्न उक्तिः। अत्र प्रतिपाद्यः कर्णोपहासः तत्पुष्टिकारीण्येतानि सम्बोधनानि। साक्षाद् भीमेन बध्यमानस्य दुःशासनस्य रक्षकत्वेनाङ्गदेशनृपतित्वं सेनापतित्वं महावीरद्रोणोपहासित्वं तदा वीरस्य योग्यमित्युपहासः स्पष्टः।

## लोचन

सम्प्रति सादृश्यमूलालङ्कारलक्षणावसरेऽपि विशेषणविच्छित्तिहेतुकत्वेन समासोक्त्यनन्तरं परिकरं लक्षयति—**उक्तिरिति**। विशेषणैरिति बहुवचनस्य नैकस्य द्वाभ्यां विशेषणाभ्यामिदं वैचित्र्यम्, किन्तु अपुष्टार्थदोषपरिहार एवेति भावः। साभिप्रायैर्गर्भीकृतप्रतीयमानार्थैः। इह च प्रतीयमानार्थस्याऽगूढत्वे गुणीभूतव्यङ्ग्यता, अतोऽस्यालङ्कारस्य न ध्वनित्वम्। **अङ्गराजेति**। इदं भीमवचनम्। अङ्गो देशविशेषः। अत्र अङ्गराजत्वेन पररक्षार्थमधिनायकत्वम्। सेनापतित्वेन राजपूजा। द्रोणोपहासित्वेन शौर्य्यमदः प्रतीयते।

## विमला

परिकरमाह, उक्तिरिति।—साभिप्रायैः,—अभिप्रायञ्चकैः, प्रकृतार्थपरिपोषणाभिप्रायेण प्रयुक्तैरित्यर्थः, विशेषणैः (बहुत्वमत्र विवक्षितं, तेनैव वैचित्र्यस्यानुभवसिद्धत्वात्) उक्तिः,—विशेषणस्य प्रकृतोपयोगित्वज्ञापनमित्यर्थः, ["उक्तैःइति पाठान्तरम्] परिकरोति—प्रकृतार्थमुत्कर्षयति इति परिकरः, [मत्वर्थीयोऽच् "सम्पर्य्युपेभ्यः—"(६/१/१३७ पा.) इति भूषणार्थाभावान्न सुट्] मतः। यद्यप्यपुष्टार्थस्य दोषत्वाभिधानात् तन्निराकरणेन पुष्टार्थस्य स्वीकारः कृतः, तथाऽप्येकनिष्ठत्वेन बहूनां विशेषणानामेवोपन्यासे वैचित्र्यमित्यलङ्कारमध्येऽयं गणित इति काव्यप्रकाशः। अत्र "साभिप्राये विशेष्ये तु भवेत्यरिकराङ्कुरः। चतुर्णां पुरुषार्थानां दाता देव चतुर्भुजः" ॥ इति विशेषोऽवगन्तव्यः। तरोरङ्कुर इवार्थ परिकरान्न भिन्नः, परिकरस्याङ्कुर इति विग्रहात्।

## लक्ष्मी

समासोक्तिप्रयोजकसमुदायमध्ये विशेषणस्य प्राप्तत्वात्तत्प्रयोजितमेव परिकरालङ्कारं निरूपयति—**उक्तिरिति**। साभिप्रायैः प्रकृतार्थपरिपोषणाभिप्रायेण प्रयुक्तैः प्रकृतार्थोपकारकचमत्कारिव्यङ्ग्यताशालिभिरित्यर्थः, अतएवास्य हेत्वलङ्काराद्वैलक्षण्यम्, तत्र व्यङ्ग्यस्यानावश्यकत्वात्, इह तु प्रकृतार्थोपपादकस्य व्यङ्ग्यस्यावश्यकत्वमिति। (क) विशेषणैः, उक्तिर्विषयविशेषप्रतिपादनं परिकरस्तादाख्योलङ्कारो मतः। परिकरः परिकरणमुपस्करणं विशेषणव्यङ्ग्यार्थेन वाक्यार्थस्योपस्करणात् परिकर इत्यन्वर्थेयं संज्ञा। केचित्तु—'परिकरोति प्रकृतार्थमुपकरोतीति परिकरः साभिप्रायशब्दः सोऽस्मिन्नस्तीति परिकरः, मत्वर्थीयोऽचप्रत्ययः, भूषणार्थत्वाभावात्

'संपरिभ्यां करोतौ भूषणे' ६/१/१३७ इति सूत्रेण विहितः सुडागमो नेत्याहुः। अत्र 'विशेषणै'रितिबहुवचनमविवक्षितत्, तेनैकस्मिन्नपि प्रकृतार्थोपकारकचमत्कारितव्यञ्जके विशेषणेऽयं सम्भवति। यद्यप्यत्र 'यद्यप्यपुष्टार्थस्य दोषत्वाभिधानात्तन्निराकरणेन पुष्टार्थस्य स्वीकारः कृतस्तथाऽप्येकनिष्ठत्वेन, बहूनां विशेषणानामेवोपन्यासे वैचित्र्यमित्यलङ्कारमध्ये गणितः' इति काव्यप्रकाशकृदुक्तरीत्या बहुवचनं विवक्षितमेवाभाति तथापि 'वयं त्वालोचयामः—तादृशैकविशेषणोपन्यासेऽप्यलङ्कारत्वमुचितम्, अपुष्टार्थत्वविरहस्य निर्विशेषणतयाऽप्युपपत्तेरनुभवसिद्धत्वाभावाद्वैचित्र्यस्य चानुभवसिद्धत्वात्' यथा—

अयि ! लावण्यजलाशय ! तस्या हा हन्त ! मीननयनायाः।

दूरस्थे त्वयि किं वा कथयामो विस्तरेणालम् ॥

इत्यादौ' इतिप्रदीपकारोक्तयाऽविवक्षाया एव युक्तत्वमिति विचारणीयम्। उक्तोदाहरणे 'लावण्यजलाशय' इति 'मीननयनायाः' इति च विशेषणं साभिप्रायम्। तथा चायम्भावः—यथा नित्ये सन्ध्याबन्दनादौ दोषाभावस्याङ्गवैकल्येऽपि सिद्धौ साङ्गतत्करणं फलातिशयायैव तथा दोषाभावस्य विशेषणानुपादानेऽपि सम्भवेन साभिप्रायैकविशेषणनिबन्धनश्चमत्कारो दुरपह्नव एवेति। किञ्च 'सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः' इत्यत्र 'सुधांशुकलितोत्तंस' इति विशेषणाभावेऽपि तापहरणसामर्थ्यस्य सामर्थ्यातिशयेनाप्युपपत्तेस्तद्विशेषणानुपादानेऽपि न क्षतिस्तत्र तद्विशेषणोपादानमधिकचमत्कारायैवेतिबोध्यम्' स्पष्टञ्चैतत्प्रदीपोद्योतयोः। नन्वेवंप्रकारेण प्रकाशप्रदीपयोर्विरोधे किं न्याय्यमितिचेत् ! अत्रोच्यते 'यथोत्तरं मुनीनां प्रामाण्यम्' इतिन्यायेन प्रदीपकारोक्तसिद्धान्तस्यैवानुसरणीयत्वम्। मुनित्वमनयोः कथमितिचेत् ? 'नानृषिः कवि'रितिवचनात्। एवञ्च 'अत एवात्र विशेषणैरिति बहुत्वं विवक्षितमिति' यदुक्तं तदापातरमणीयमिति सुधीभिर्विभावनीयम्। तथासति भिन्नभिन्नप्रकृतार्थपरिपोषणाभिप्रायेण एकानेकविशेषणप्रयोगः सुधीभिर्विभावनीयम्। तथासति भिन्नभिन्नप्रकृतार्थपरिपोषणाभिप्रायेण एकानेकविशेषणप्रयोगः परिकर इतिलक्षणं फलितम्। अस्यालङ्कारत्वाऽभ्युपगमे प्राचां सम्मतिरूक्तैवः। काव्यलिङ्गे पदार्थवाक्यार्थविव हेतुभावं भजते अत्र तु पदार्थवाक्यार्थबलात् प्रतीयमानोऽर्थो वाच्योपकारतां भजत इत्यनयोर्भेदः।

उदाहरति—**यथेति**। वेणीसंहारनाटके भीमेन हन्यमानं दुःशासनं परित्रातुमसमर्थ कर्ण प्रति तत्कृताचार्योपहासामर्षितस्य अश्वत्थाम्न उक्तिरियम्। हे अङ्गराज ! अङ्गस्य दुर्योधनसमर्पितस्य देशविशेषस्य राजेति तत्सम्बुद्धौ रूपम्। एतेन भवान् असाधारणो लोको न तु पामरः अङ्गदेशस्याधीशत्वेन महाप्रभाववतस्ते दुर्बलरक्षणं नितरां समुचितम्। तथाचोक्तम्—

**'विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय।**

**खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥'**

## रुचिरा

परिकरं लक्षयति—१३८ **उक्तैः** कथितैः। **साभिप्रायैरभिप्रेतार्थबोधकतापूर्णैः** प्रकृतार्थोपकारकचमत्कारिव्यङ्ग्यताशालिभिरिति यावत् (अत एवास्य हेतोर्वैलक्षण्यम्, व्यङ्ग्यस्य तत्रानावश्यकत्वात्)। **विशेषणैः**। **परिकरः**। **मतः**। परिकरोति प्रकृतमर्थमुपकरोतीति सोऽस्मिन्नस्तीति तथोक्तः।' अत्र मत्वर्थीयोऽच्। 'संपरिभ्यां करोतौ भूषणे।' ६/१/१३७ इत्यनेन सुट् तु न, भूषणार्थाभावात्। अत्र 'विशेषणै'रिति बहुवचनमविवक्षितम्,

तेन—एकस्मिन् अपि प्रकृतार्थोपकारकचमत्कारिताव्यञ्जके, विशेषणेऽप्ययं सम्भवति । अत एव 'वयं त्वालोचयामः—तादृशैकविशेषणोपन्यासेऽप्यलङ्कारत्वमुचितम्, अपुष्टार्थत्वविरहस्य निर्विशेषणतयाऽप्युपपत्ते, रनुभवसिद्धत्वाभावाद्वैचित्र्यस्य चानुभवसिद्धत्वात् ।' इति प्रदीपकाराः । अत्रोदाहरणं यथा—'क्षितिभृतैव सदैवतका वयं वनवता,ऽनवता किमहिद्रुहा' इति, 'विशेषणै'रिति विशेष्यस्याप्युपलक्षकम्, एतेन—'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः । चतुर्णो पुरुषार्थानां दाता देवश्चतुर्भुजः ॥' इति चन्द्रालोककृताऽङ्गीकृतः परिकराङ्कुरोऽत्रैवान्तर्भावितः ॥११० ॥

उदाहरति-**यथा**-'अङ्गराजेत्यादिना ।

'हे **अङ्गराज** अङ्गस्य दुर्योधनदत्तस्य देशविशेषस्य राजेति तत्सम्बुद्धौ तथोक्त ! **सेनापते** सेनाया रक्षकपदे नियुक्त । **द्रोणोपहासिन्** द्रोणं तन्नामानमाचार्य्यमुपहसतीत्येवंशील इति तत्सम्बुद्धौ तथोक्त ! हे कर्ण ! एनं दुर्योधनस्य भ्रातरं युवराजपदारूढमिति भावः । **दुःशासनम्** । **भीमात्** । **रक्ष** ।' वेणीसंहारे भीमेन हन्यमानं दुःशासनं रक्षितुमक्षममाणं कर्णे प्रति तत्कृताचार्य्योपहासामर्षितस्याश्वत्थाम्न उक्तिरियम् । अत्र विशेषणत्रयं कर्णस्य तद्रक्षणौचित्यं सूचयत्रपां समुद्भावयति । यथा वा—'मदकामविमोहमत्सरा रिपवस्त्वत्पुर एव हो विभो । रभसा बत हन्त तावकं प्रहरन्ते न कथं निहंसि तान् ॥' इति ।

**शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम् ॥ ५७ ॥**

'स्वाभावादेकार्थैः' इति शब्दश्लेषाद् व्यवच्छेदः । 'वाचनं' इति च ध्वनेः । उदाहरणम्—

**'प्रवर्तयन्क्रियाः साध्वीर्मालिन्यं हरितां हरन् ।**

**महसा भूयसा दीप्तो विराजति विभाकरः ॥'**

अत्र प्रकरणादिनियमाभावाद् द्वावपि राजसूर्यौ वाच्यौ ।

---

## विवृतिः

श्लेषालंकारमाह—**शब्दैरिति** । स्वभावादित्यर्थपदस्याभिधेयमात्रपरत्वरूपतात्पर्यग्राहकत्वम् । अन्यथा एकार्थैरित्ययोग्यं सर्वेषामेव शब्दानां वाच्यलक्ष्यव्यङ्ग्यरूपनानार्थसंभवात् । **वाचनम**भिधालक्षणाभ्यां प्रतिपादनम् । एकस्मिन्विशेष्येऽभिधया अपरस्मिन्विशेष्ये लक्षणया अर्थद्वयप्रतिपादनेऽर्थश्लेष इति भावः । **ध्वने**र्वाचकव्यञ्जनस्य शब्दस्य व्यवच्छेद इति पूर्वेणान्वयः ॥ **प्रवर्तय**न्निति कर्तरि शक्तम् । सूर्यपक्षे—करस्पर्शेन पावित्र्यजननद्वारा उपयोगि लाक्षणिकम् । तदुक्तं विष्णुपुराणे—'स्पृष्टो यदंशुभिर्लोकः क्रियायोग्योऽभिजायते । पवित्रताकारणाय तस्मै शुद्धात्मने नमः ॥' इति । साध्वीः क्रियाः वेदोदितकर्माणि । हरितां दिग्वृत्तीनां मालिन्यं दैन्यादनौजस्यम् । पक्षे—दिशां तमः श्यामताम् । महस्तेजस्तच्च 'अधिक्षेपापमानादेः' इति प्रागुक्तं शौर्यं वा तेन दीप्तोऽधृष्यः, पक्षे—ज्योतिषा जाज्वल्यमानः ॥ नन्वत्र प्रकरणाद्राजप्रतीतौ सूर्ये व्यञ्जनैवोपमाध्वनिरेवायमित्यत आह—**प्रकरणादिनियमाभावादिति** । आदिना संयोगादिपरिग्रहः ॥ नन्वेवं शब्दश्लेष एवायं विभाकरपदस्य राजसूर्योभयवाचकत्वादिति चेत्, संकीर्णमेवेदमुदाहरणम् । असंकीर्णोदाहरणं तु 'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् । अंहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥' अत्रोन्नत्यधोगतिपदाभ्यामुत्कर्षापकर्षौ लक्ष्यौ ॥

## विवृतिपूर्तिः

**क्वचिदिति** । क्वचित्सामान्यादप्रस्तुताद्विशेषः प्रस्तुतः, क्वचिद्विशेषादप्रस्तुतात्सामान्यं प्रस्तुतम्, क्वचित्कार्यादप्रस्तुतात्प्रस्तुतं निमित्तम्, क्वचिन्निमित्तादप्रस्तुतात्प्रस्तुतं कार्यम्, क्वचित्समादप्रस्तुतात्समं प्रस्तुतं चेद्गम्यते तदा पञ्चधाऽप्रस्तुतप्रशंसा स्यादिति निर्गलितार्थः । **अत्राप्ययदीक्षितास्तु**—"संबन्धान्तरेण प्रस्तुतगमनेऽप्येषा दृश्यते । यथा 'तापत्रयौषधिवरस्य तव स्मितस्य निःश्वासमन्दमरुता निबुसीकृतस्य । एते कडंगरचया इव विप्रकीर्णा जैवातृकस्य किरणा जगति भ्रमन्ति ॥' अत्राप्रस्तुतानां चन्द्रकिरणानां भगवन्मन्दस्मितरूपदिव्यौषधविशेषधान्यविशेषकडंगरतादात्म्योत्प्रेक्षया स्मितस्य तत्सारतारूपोत्कर्षप्रतीतिः । न चात्र स्मितकडंगरयोः कार्यत्वादिः कश्चिदुक्तः संबन्धोऽस्ति । अतोऽत्र सहोत्पत्त्यादिकमेव संबन्धतयाश्रयणीयम् ॥ एवं कार्यकारणयोः प्रत्येकमेव प्रस्तुतार्थप्रत्यायकत्वमभिसंधाय द्वे अप्रस्तुतप्रशंसे दर्शिते । ततोऽन्यत्रापि दृश्यते । यथा—'कालिन्दि ब्रूहि, कुम्भोद्भव, जलधिरहं नाम गृह्णासि कस्माच्छत्रोर्मे, नर्मदाहं त्वमपि वदसि मे नाम कस्मात्सपत्न्याः । मालिन्यं तर्हि कस्मादनुभवसि, मिलत्कज्जलैर्मालवीनां नेत्राम्भोभिः, किमासां समजनि, कुपितः कुन्तलक्षोणिपालः ॥' अत्र किमासां समजनीति मालवीनां रोदननिमित्ते पुष्टे तत्प्रियमरणरूपनिमित्तानाख्याय 'कुपितः कुन्तलक्षोणिपाल' इति तत्कारणमभिहितमिति कारणनिबन्धना । अत्रैव मालवान्प्रति प्रस्थितेन कुन्तलेश्वरेण किं ते निर्जिता इति प्रश्ने

तद्वधान्तर्भावि नर्मदाप्रश्नोत्तररूपं कार्यमभिहितमित्यत्रैव कार्यनिबन्धनापि। पूर्वस्यां प्रश्नः शाब्दः, उत्तरस्यां त्वार्थ इति विशेष" इत्याहुः॥

**अत्र विश्वेश्वरपण्डिताः**—स्मितकडंगरचययोः कार्यत्वादिसंबन्धाभावेऽप्यभेदाध्यवसायविषयीभूत-दिव्यधान्येन सह कडंगरचयस्यावयवावयविभावस्य सत्त्वेन कार्यत्वसंबन्धोऽस्त्येव। न च यद्रूपावच्छिन्ने प्रस्तुतेऽप्रस्तुतव्यङ्ग्योऽर्थः प्रतीयते तद्रूपावच्छिन्ने प्रकृतेऽप्रस्तुतस्य कार्यत्वादिसंबन्धोऽपेक्षितः। अत्र च स्मित-त्वावच्छिन्ने एव स्थिते सारत्वरूपोत्कर्षः प्रतीयते, न तु दिव्यधान्यतादात्म्यावच्छिन्ने। अतो दिव्यधान्यकडंगरयो-रुक्तसंबन्धसत्त्वेऽपि स्मितकडंगरयोस्तदभावात्संबन्धान्तरानुसरणमावश्यकमेवेति वाच्यम्। अप्रस्तुतव्यङ्ग्यार्थप्रकारकज्ञानविशेष्यभूते प्रकृतेऽप्रकृतमात्रसंबन्धस्यैव लाघवेन विवक्षितत्वात्। व्यङ्ग्यार्थबो-धधर्मितावच्छेदकीभूतधर्मावच्छिन्नत्वनिवेशे गौरवात्। विशेष्यत्वं च तत्त्वेन विक्षितत्वमात्रम्। अतः स्मितस्यैव तादृशज्ञानविशेष्यतया तत्राप्रकृतसंबन्धो नास्तीत्याकारकदोषाभावः। तद्विशेष्यत्वेन विवक्षितस्य स्मितस्य दिव्य-धान्यतादात्म्याध्यवसायदशायामप्रकृतसंबन्धसत्त्वात्। एवं द्वितीयदोषस्याप्यनवकाशः। तथाहि—तत्र किमुभयो-रेकत्र दर्शनेन प्रत्येकं तत्प्रयोजकत्वानुपपत्तिरिति विवक्षितम्, उत कारणकारणस्यकार्यकार्यस्य न निर्देशात्कार्यत्वकारणत्वाभाव इति। नाद्यः। क्वचित्प्रत्येकपुरस्कारेण तद्दर्शनादुभयोः प्रत्येकंप्रयोजकत्वे स्थिते क्वचिदुभयसमावेशस्यादोषत्वात् न्यूनत्वानापादकत्वाच्च। तत्राप्येकस्यामेवाप्रस्तुतप्रशसाया द्वयोः सम्बन्धयोरप्रयोजकत्वाच्च्। संबन्धनिबन्धनयोर्द्वयोरप्रस्तुतप्रशंसयोरेकत्र निबन्धनमात्रेण तदतिरेक्याभावाच्च। न द्वितीयः। कार्यकारणपदयोः प्रयोज्यप्रयोजकसाधारणतया विवक्षितत्वात्। एवं च मालवीरोदनकारणीभूततत्प्रिय-मरणकारणकुन्तलेशकारणमात्रोक्तौ तत्प्रस्थानकार्यविजयकार्यप्रश्नादिमात्रोक्तौ च तस्यानापायादिति कृतं बहुना॥

**यदप्यप्पयदीक्षिताः**—"प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः। किं भृङ्ग! सत्या मालत्यां केतक्या कण्टकेद्धया॥' इति। अत्र वाच्यव्यङ्ग्यवृत्तान्तयोर्द्वयोरपि प्रकृतत्वेन समासोक्त्यप्रस्तुतप्रशंसाभ्यामतिरिक्तत्वस्य स्फुटत्वात्, प्रस्तुतनिष्ठव्यञ्जकतनिरूपितव्यङ्ग्यताशाल्यप्रस्तुतकत्वे अप्रस्तुतनिष्ठव्यञ्जकतानिरूपितव्यङ्ग्यता-शालिप्रस्तुतकत्वे च तदुभयोपगमात्। अत्र प्रियेण सह विहरन्त्या उक्तौ भृङ्गोऽपि प्रकृत एव। न च भृङ्गबोधनानु-पपत्त्या प्रियमात्राभिप्रायेणैवेयमुक्तिरिति वाच्यम्। अचेतनेऽप्यामन्त्रणदर्शनेन तदविरोधात्। एवं च प्रस्तुतेन वाच्येन भृङ्गोपालम्भेन पत्न्याः कुलवध्वाः सौन्दर्यादिगुणशालिन्याः सत्त्वे क्रूरजनपरिवृतायां सर्वस्वापहरणसंकल्प-दुरासदायां कण्टकाकुलकेतकीकल्पायां वेश्यायां समागमेन किमित्युपालम्भो द्योत्यते। यथा वा—'अन्यासु तावदुपमर्दसहासु भृङ्ग! लोलं विनोदय मनः सुमनोलतासु। बालामजातरजसं कलिकामकाले व्यर्थं कदर्थयसि किं नवमालिकायाः॥' प्रौढाङ्गनासत्त्वेऽपि बालां क्लेशयति कामिनि प्रकृतभृङ्गोपालम्भेन तत्प्रतीतिः॥ 'कोषद्वन्द्वमियं दधाति नलिनी कादम्बचञ्चुक्षतं धत्ते चूतलता नवं किसलयं पुंस्कोकिलास्वादितम्। इत्याकर्ण्य मिथः सखी जनवचः सा दीर्घिकायास्तटे चेलान्तेन तिरोदधे स्तनतटं बिम्बाधरं पाणिना॥' अत्रेयमिति दीर्घिकेत्यादिचोक्त्या वाच्यार्थस्य प्रस्तुतत्वनिर्णयः। नायकदत्तव्रणाङ्किताधरविशिष्टनायिकारूपप्रकृतव्यङ्ग्यार्थप्रकाशनं च चतुर्थचरण एव स्पष्टम्। आद्योदाहरणद्वयेऽन्यापदेशध्वनित्वं प्राचीनैरुक्तम्। अप्रस्तुतप्रशंसायामप्रस्तुतत्वेन वाच्यार्थस्यावर्णनीयतया तत्राभिधायां विरतायां वाच्यार्थेनाक्षेपात्प्रस्तुतार्थव्यक्तिरलंकारः सः। इह तु वाच्यार्थस्यापि प्रस्तुतत्वेन तत्रैव पर्यवसानसंभवेऽपि वस्तुसौन्दर्यबलेनाभिमतार्थव्यक्तिर्ध्वनिरेवेति। वस्तुतोऽत्राप्यलंकारेध्वनित्वमेव। तृतीय-स्यालंकारत्वे तु न कस्यचिद्विवादः। व्यङ्ग्यार्थस्य चतुर्थचरणेन वाच्यत्वमापादितस्य ध्वनित्वायोगात्। 'शब्दा-

र्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः। यत्राविष्क्रियते स्वोक्त्या सैवान्यालंकृतिध्वनेः॥' इति ध्वनिकारोक्तेरिति॥

तत्र रसगङ्गाधरकाराः—अत्राप्यप्रस्तुतप्रशंसैव भवतीति नालंकारान्तरकल्पनम्। किंचिदुक्तिवैचित्र्येण तत्कल्पनेऽलंकारान्त्यप्रसङ्गात्। न च तल्लक्षणानाक्रान्तत्वात्कथमेतदिति वाच्यम्। नह्यप्रस्तुतत्वं सर्वथा प्रस्तावराहित्यं विवक्षितम्। किंतु मुख्यतात्पर्यविषयीभूतार्थातिरिक्तत्वम्। इदं च सर्वथैवाप्रस्तुते प्रस्तुतेऽपि मुख्यतात्पर्यविषयीभूते च समानमेव। अतो भृङ्गादेस्तत्र सत्तामात्रेण प्रकृतत्वेऽपि मुख्यतात्पर्यस्य नायिकाद्युपालम्भे एव सत्त्वादप्रस्तुतत्वेन प्रस्तुतत्वप्रतीतिरिति तल्लक्षणाक्रान्तत्वं स्पष्टमेवेत्याहुः॥

## विज्ञप्रिया

अर्थश्लेषालङ्कारमाह—**शब्दैरिति**। एकार्थैरित्येकार्थे एव शक्तैरित्यर्थः। **अनेकार्थेति**। शक्यैकभिन्नो योऽर्थः अपरार्थः तस्य वाचनं लक्षणया बोधनमित्यर्थः **श्लेषाद् व्यवच्छेद** इति। श्लेषः—शब्दश्लेषालङ्कारः। अत्र शब्दस्य स्वभावादेकार्थत्वाद् वाचनमित्यनेन व्यञ्जनाव्यवच्छेदमाह—**ध्वनेरिति**। गुणीभूतव्यङ्ग्यस्याप्युपलक्षणमिदम्।

**प्रवर्त्तयन्निति**। विभाकरः सूर्य्यः विभाकरनामा राजविशेषश्च विराजति। द्वयोर्विशेषणान्याह—**प्रवर्त्तयन्निति**। क्रियाः आलोकसाध्याः, पक्षेब्राह्मणादिवर्णक्रियाः। हरितां दिशां, पक्षे—दिकस्थितलोकानां मालिन्यं तमः श्यामतां, पक्षेदारिद्र्यवशादनुज्ज्वलतां च, महसा ज्योतिषा, पक्षे—शौर्य्येण। अत्र क्रिया इत्यत्र नानेकार्थता। मालिन्यादिपदत्रयस्य त्वेकार्थे शक्तिरन्यार्थे लक्षणा, विभाकरांशे तु शब्दश्लेषः। अत्रोपमाध्वनित्वं व्यवच्छिनत्ति "अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते' इत्यत्र शक्तिलक्षणाभ्याम् अनेकार्थताऽपि परिग्राह्येत्यभिप्रायेणैवात्रोपमाध्वनिप्रसक्तिर्बोध्या।

## लोचन

श्लेषप्रकरणादत्र श्लेषः। वाचनमनिर्द्धारितत्वेन बोधनम्। एवञ्च शब्दैरितिकारिकापदार्थ एकीभूय बाध्यभावमापन्नैरिति विशकलितानां बहूनां पदार्थानां तथाविधार्थबोधनक्षमत्वात्। नच कस्यचित्पदार्थविशिष्टार्थे शक्तिः।

क्रियाः सन्ध्योपासनाद्याः इष्टापूर्त्ताद्याः। मालिन्यम् अन्धकारमयत्वम्। दुराचारयोगो वा। महस्तेज उत्सवश्च, दीप्तः प्रकाशितः निर्मलीभूतश्च विभाकरः सूर्य्यः। विभां करोति व्यनक्तीति व्युत्पत्त्या राजा च विभायाः कान्तेः कारकत्वात्तदाश्रयत्वाद् वाच्यवन्निर्द्धारितत्वेन बोध्या।

## कुसुमप्रतिमा

'स्वाभावादेकार्थैं' इत्यस्य व्यावृत्तिमुखेन शब्दश्लेषादस्य भेदमाह स्वभावादिति। व्यवच्छेदः अस्य व्यावृत्तिः। तथा च अनेकार्थैः शब्दैरनेकार्थाभिधाने शब्दश्लेषः एकार्थैः शब्दैः शक्तिवैचित्र्यादने कार्याभिधाने अर्थश्लेष इत्यनयोर्भेद इति तूक्तमेव

अथ तथापि बोधनमित्यनभिधाय कथं विशिष्य वाचनमित्याभिहितमित्याह वाचनमिति। ध्वने र्व्यवच्छेद इति पूर्वेणान्वयः। तथा च द्वितीयार्थस्याम्यभिधयैव प्रतिपादने अर्थश्लेषः, व्यञ्जनया प्रतिपादने तु ध्वनिरिति भावः।

प्रवर्त्तयन्निति। उद्भटविधया केनचिन्निर्म्मितमिदं पद्यम्। विभाकरो नाम कश्चन राजा, साध्वीः साधारणहितकरत्वेन पवित्राः, क्रियाः सेतुकूपनिर्म्माणादौ न कार्य्याणि, प्रवर्त्तयन् राज्यमध्ये निष्पादयन्, हरितां दिशां सर्वदिम्बवर्त्तनीनां प्रजानामित्यर्थः, मालिन्वं दैन्वादिना मुखकालिमानम्, हरन् अन्नयस्त्रदानादिना विनाशयन् तथा भूयसा सहसा प्रभूतेन प्रभावेण दीप्तः सर्वत्र प्रकाशमानः सन् विराजति वर्त्तते।

अन्वत्र तु विभाकरः सूर्य्यः साध्वीः क्रिया प्रज्ञादीनि सत्कर्म्माणि, प्रवर्त्तयन् आत्मन उदयेन आरम्भयन्, हरितां दिशां मालीन्यमन्धकारकृतमलिनताम्, हरन् अन्धकारनाशेन नाशयन्, तथा भूयसा सहसा प्रचुरतरेण तेजसा, दीप्तो ज्वलितः सन्, विराजति आकाशे प्रकाशते।

अत्र प्रमाणं यथा प्रायश्चित्ततत्त्वधृतं विष्णुपुराणम्—

**"सत्कार्ययोग्यो न जनो नैवापः शुद्धिकारणम्।**
**यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते॥**

**स्पृष्टो पदंशुभिर्लोकः क्रियायोग्योऽभिजायते।**
**पवित्रताकारणाय तस्मं शुद्धात्मने नमः॥"**

उदांहते लक्षणं प्रवर्त्तयितुमाह अत्रेति। प्रकरणादिनियमाभावात् "संयोगो विप्रयोगश्च—" इत्यादिप्रागुक्ताभिधानियामकसामान्यस्यैवादित्यर्थः। वाच्यौ अभिधया प्रतिपाद्यौ। अत्रायमाशय—"भास्कराहस्करबध्नप प्रभाकरविभाकराः" इत्यमरकोषप्रामाण्यात् विभाकरशब्दस्य सूर्य्ये आजदानिकः सङ्केत इत्यभिधयैव विभाकरशब्दः सूर्य्यस्य वाचकः; "ततश्च नाम कुर्वीति पितै व दशमेऽहनि" इति स्मृत्या विभाकर इति राज्ञः पित्रादिकृतं नामेति विभाकरशब्दस्य राजनि आधुनिकः सङ्केतः, तेन च विभाकरशब्दो राज्ञोऽपि वाचक एवेति। न चैव शब्दश्लेष एवेति वाच्यम्, उभयस्यैवार्थस्य समानप्रसिद्धिसत्त्व एव शब्दश्लेषाङ्गीकारात् अत्र तु राजरूपर्थस्य पित्रादिमात्रसङ्केतितत्वेन सूर्य्यार्थवत् प्रसिद्धिविरहात्। अत्रापि चेदसन्तोषस्तदा "स्तोके नोन्नतिमायाति स्तोकनायात्यधोगतिम्" इत्यादिकं शब्दश्लेषप्रकरणीयग्रन्थकारेङ्गित्तानुसारेण तर्कवागीशदत्तमेवोदाहरणं द्रष्टव्यम्।

## विमला

(भ) अङ्गराजेति। भीमेन बध्यमान दुशासनं रक्षि तुमशक्रुवन्तं कर्णं प्रति अश्वत्थाम सोल्लुण्ठन वचनमिदम्। अङ्गानां देशभेदानां राजा अङ्गवाजः तत्सम्बुद्धौ, सेनापते। माम् अवज्ञाय त्वं सैनापत्ये अभिषिक्तोऽसीति भावः द्रोणम् उपहसितवान् इति द्रोणोपहासो ता सम्बुद्धौ-त्वम् आत्मगर्वेण द्रोणं मत्पितशा उपहसितवानसि, कर्ण । एवं दुःशासनं भीनात् वृकोदरहस्तात् रक्ष परित्रायस्व । अत्र उक्त विशेषणत्रय प्रमावात् कर्णस्य दुःशासन रक्षव्य भवश्य कर्तव्यं प्रतीयते, तथा विधक्य स्वपक्षर क्षणा क्षमतायां लज्जातिशयश्च इति बोध्यम्।

(म) अर्थश्लेषमाह---शब्दैरिति। --- स्वाभावात् एकार्थे शब्दै। [ स्वभावादित्यर्थपदस्याभिधेयमात्र पवत्व रूपतात्पर्यग्राहकत्वम्, अन्यथा एकार्थेरित्य योग्यं सर्वेषामेव शब्दानां वाच्य लक्ष्य व्यङ्ग्य रूपनानार्थसम्भवात्] अनेकार्थानाम् -- अनेकेपामर्थाना वाचनम् --- अभिधालक्षणाभ्यां प्रतिपादनं, सम्बन्धिभेदेन इति भाव, शेषः एकस्मिन विशेष्येऽभिधया, अपरास्मेन विशेष्ये लक्षणया अर्थद्वयप्रति पादनेऽर्थश्लेष इति निकृष्वेऽर्थः।

शब्दश्लेषादिति ।—शब्दश्लेषे हि स्वभावादेव शब्दानां भिन्नार्थता, अत एव तस्य शब्दालङ्कारत्वम्, अर्थश्लेषे तु न शब्दानामनेकार्थत्वं, किन्तु पुनरपि अनेकार्थानामभिधालक्षणाभ्यां प्रतिपादनम् । ध्वनेः;—वाचक-व्यञ्जनस्य शब्दस्य व्यङ्ग्यतया तस्याभिधया बोधनमसम्भवीति ध्वनेः, स्फुटं व्यवच्छेदः इति पूर्वेणान्वयः ।

प्रवर्त्तयन्निति ।—[एतत्कर्त्तरि शक्तम्] साध्वीः क्रियाः;—वैदिककर्माणि, पक्षे—करस्पर्शेन पावित्र-यजननद्वारा उपयोगि लाक्षणिकमित्यर्थः; तदुक्तं विष्णुपुराणे—"स्पृष्टो यदंशुभिर्लोकः क्रियायोग्योऽभिजायते । पवित्रताकारणाय तस्मै शुद्धात्मने नमः ॥" इति; प्रवर्त्तयन्—प्रजाभिः स्वयञ्च कारयन्, हरितां—दिग्वृत्तीनां, मालिन्यं—दैन्यादनौजस्यं, पक्षे—दिशां तमः श्यामतां, हरन्—अपाकुर्वन्, शिक्षाप्रदानादिना अन्धकारध्वसेन चेति भावः, भूयसा—-अतिमहता, महसा—"अधिक्षेपापमानादेः" इत्यादिना प्रागुक्तेन तेजसा, शौर्य्यप्रभावेण वा, पक्षे—ज्योतिषा, दीप्तः;—अधृष्यः, पक्षे—जाज्वल्यमानः, विभां—विनाशितदस्युजनोपद्रवतया यशः प्रसारं, पक्षे—संहततमिस्रतया किरणप्रकाशं, करोतीति विभाकरः;—राजा सूर्य्यश्च, विराजति—शोभते ।

ननु अत्र प्रकरणाद्राजप्रतीतौ सूर्य्ये व्यञ्जनयोपमाध्वनिरेवायमित्यत आह, प्रकरणादिनियमाभावात् इति ।—-आदिना संयोगादिपरिग्रहः । नन्वेवं शब्दश्लेष एवायं, विभाकरपदस्य राजसूर्य्योभयवाचकत्वादिति चेत्, न; तस्याष्टसु भेदेषु कस्मिंश्चिदपि भेदेऽस्यान्तर्भावानुपपत्ते, विभाकरादिपदानां परिवृत्तावपि च एतस्य सम्भवात्, तथाऽपि यदि सङ्कीर्णभेवेदमुदाहरणमिति चेतः तर्हीदम् असङ्कीर्णदाहरणम्—"स्तोकेनोन्नतिमायाति स्तोकेनाया-त्यधोगतिम् । अहो ! सुसदृशी वृत्तिः तुलाकोटेः खलस्य च ॥" अत्रोन्नत्यधोगतिपदाभ्यामुत्कर्षापकर्षौ लक्ष्यौ इति बोध्यम् ।

## लक्ष्मी

तदकरणान्त्रपामभिव्यनक्ति । नन्वेमपि तटस्थस्यान्यरक्षणे न किमपि प्रयोजनमित्यत आह—**सेनापत** इति मां परित्यज्य दुर्योधनेन सेनापतीकृतस्य तव सेनान्तवर्त्तिन एव विशेषतश्च तद्भ्रातुर्दुश्शासनस्यैव सर्वथा परित्राणमेवोचितमित्याशयः । नन्वशक्तोऽस्म्यहमत्र परित्रातुमित्यत आह—**द्रोणोपहासिन्निति** । नास्ति शक्ति-श्चेत्तर्हि पार्थेन निहन्यमानं जयद्रथं परित्रातुमित्यत आह—**द्रोणोपहासिन्निति** । नास्ति शक्तिश्चेत्तर्हि पार्थेन निहन्यमानं जयद्रथं परित्रातुमसमर्थवन्तं मत्पितरं द्रोणाचार्यमुहसितवानसीतिभावः । एनं दुर्योधनस्य भ्रातरं युवरा-जपदारूढमित्यर्थः । अत्राङ्गराजेत्यादिविशेषणत्रयाणां पृथक् पृथगाशयेन प्रयोगातपरिकरः । अत्र च विशेषोऽन्यत्र समुपलभ्यते । तथाहि—'अयं च वाच्यसिद्ध्यङ्गव्यङ्ग्यगर्भत्वेनोपस्कारकव्यङ्ग्यगर्भत्वेन द्विधा भवन् व्यङ्ग्यस्य वाच्यायमानत्वद्विपर्ययाभ्यां चतुर्धा । आद्यो यथा—

**'विहाय संसारमहामरुस्थलीमलीकदोहादिमिलन्मरीचिकाम् ।**
**कृपातरङ्गाकुलमन्मनोमृगो विगादुमीश ! त्वयि गाढमीहते ॥'**

अत्र गाहनसिद्ध्यङ्गं कृपेत्यादेः समुद्ररूपं व्यङ्ग्यं वाच्यायमानम् । एवमन्यदपि ।

समासोक्तिप्रयोजकविशेषणशेषे श्लेषस्याप्युपस्थिततवात्तस्य च शब्दार्थभेदेन द्विविधत्वेऽपि शब्दश्ले-षस्य पूर्वमेव निरूपितत्वात्संप्रत्यवशिष्टमर्थश्लेषं निरूपयति—**शब्दैरिति** । स्वभावं स्वत एव प्रवृत्तं व्यापारं स्वाभाविकीमभिधाशक्तिमाश्रित्येतिस्वाभावात्, एकः अर्थोऽभिधेयमात्रं येषां तैः अभिधया एकमात्रार्थवाचकैरि-त्यर्थः.।

अत्र 'स्वभावादि'त्यर्थपदस्याभिधेयपरत्वमात्ररूपतात्पर्यग्राहकत्वम्, अन्यथा एकार्थैरित्ययोग्यं सर्वेषामेव शब्दानां वाच्यलक्ष्यव्यङ्ग्यरूपनानार्थसम्भवात्' इति **तर्कवागीशाः**। शब्दैः, अनेकार्थस्य वाचनं यथाशक्ति रूढया एकार्थस्य सङ्केतादिना च द्वितीयार्थस्य कथनम्, श्लेषः, अर्थालङ्कारान्तःपातित्वादर्थश्लेषाख्योऽलङ्कारो मत इति पूर्वतोऽनुषञ्जनीयः। अत्रापिशब्दैरिति बहुवचनमविवक्षितम् तादृशैकशब्दप्रयोगस्थलेऽपि एवं विधवैचित्र्यसम्भवात्। तथा च 'अर्थभेदेन शब्दभेदः' इति नियमेन स्वभावत एकार्थस्यैवान्वयबोधसमर्थानां शब्दानां यत्रालङ्कारे विद्यमाने रूढयादिना द्वितीयार्थः प्रकरणादेरनियमेन ज्ञायते सोऽर्थश्लेष इत्यर्थः। नन्वेकार्थप्रतिपादकनानां कथमनेकार्थो वाच्यः स्यादिति चेत्? तथाविधाकारैरन्यैः शब्दैः सह श्लिष्टत्वात्। एवं तर्हि शब्दालङ्कारत्वे किं प्रतिबन्धकमिति चेत्? शब्दपरिवृत्तिसहत्वस्यैव तत्त्वात्। अत एवाहुः **प्रदीपकाराः**—'परिवृत्तिसहानामेव शब्दानामेकवृन्तगतफलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थश्लेष' इति। इत्थञ्च परिवृत्तिसहैरभिधया एकमात्रार्थबोधकश्लिष्टशब्दैः प्रकरणादिनियमाभावादनेकार्थप्रतिपादकत्वमर्थश्लेष इति लक्षणं फलितम्।

शब्दश्लेषादस्य भेदं निर्दिशति—**स्वभावादिति**।—व्यवच्छेदः अस्य व्यावृत्तिः। तथा च यत्र स्वभावतः अनेकार्थकाः शब्दाः परिवृत्तिसहाः सन्त एवानेकार्थप्रतिपादका भवन्ति स शब्दश्लेषः, यत्र तु स्वभावत एकार्थकाः शब्दाः परिवृत्तिसहाः सन्त एव शक्तिवैचित्रयादनेकार्थप्रतिपादका भवन्ति सोऽर्थश्लेष इति परस्परं भेद इति पूर्वमेव प्रतिपादितम्।

नन्वेवमपि अनेकार्थवाचनमित्यत्रानेकार्थबोधनमित्येव कथं नोच्यत इत्यत आह—**वाचनमिति**। ध्वनेर्व्यवच्छेद इति पूर्वेण सम्बन्धः। तथा च एकस्मिन्नर्थे प्रकरणादिना नियन्त्रिते व्यञ्जनावृत्त्या परोऽर्थो यत्रावगम्यते, तत्र ध्वनिर्भवति यथा 'राजत्युभावल्लभः' इत्यादौ। एकार्थशब्दमूलश्चायं पुनः श्लेष इत्यतोऽत्र प्रकरणादिनियन्त्रणाभावादपरार्थस्याप्यभिधयैवैकवृन्तगतफलद्वयन्यायेन प्रतीतेर्व्यञ्जनया प्रतीत्यभावात् अनेकार्थशब्दानामेव हि प्रकरणादिना नियन्त्रणस्य स्वीकारात्। एवञ्च द्वितीयार्थस्य व्यञ्जनया प्रतिपादने ध्वनिः अभिधयैव प्रतिपादने तु अर्थश्लेष इति स्फुटमनयोर्भेद इति सरलार्थः।

उदाहरणं दर्शयति—**प्रवर्त्तयन्निति**। राजस्तुतिरियम्। विभां नीत्या राज्यस्य प्रकाशं ख्यातिम् उन्नतिं करोतीति विभाकरस्तन्नामकराजविशेषः, सूर्यश्च 'भास्कराहस्करब्रध्नप्रभाकरविभाकरः' इत्यमरः, साध्वीः साधारणहितकरत्वेन शोभनाः क्रिया ब्राह्मणादिवर्णक्रियाः, सूर्यपक्षे अग्निहोत्रादिसत्कर्माणि प्रवर्त्तयन् राज्यमध्ये सम्पादयन् पक्षे स्वोदयेन आरम्भयन्, तदुक्तं विष्णुपुराणे—

> **'सत्कर्मयोग्यो न जनो नैवापः शुद्धिकारणम्।**
> **यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते॥**
> **स्पृष्टो यदंशुभिर्लोकः क्रियायोग्योऽभिजायते।**
> **पवित्रताकारणाय तस्मै शुद्धात्मने नमः॥'**

हरितां दिशां लक्षणया सर्वदिग्वर्त्तिजनानामित्यर्थः, मालिन्यं दारिद्रयवशात् कुवेषत्वम्, यद्वा दिग्वर्त्तिदस्युजनानामुद्दण्डत्वादिरूपम्, पक्षे हरितां मालिन्यं दिक्ष्वन्धकारकृतमलिनताम्, हरन् अन्नवस्त्रदानादिना व्यपनुदन्, पक्षे अन्धकारापहरणेन अपहरन्, तथा भूयसा अतिविपुलेन महसा प्रभावेण पक्षे जाज्वल्यमानेन तेजसा, दीप्तः सर्वत्र द्योतमानः सन् पक्षे ज्वलितः सन् विराजति विभाति पक्षे व्योम्नि प्रकाशते।

लक्ष्ये लक्षणं सङ्गमयति—**अत्रेति**। प्रकरणादिनियमाभावात् प्रवर्त्तयन् इत्यादिषु वाक्येषु प्रवर्त्तयन्नित्यादीनां शब्दानामभिधायाः संयोगाद्यैः पूर्वोक्तैर्नियन्त्रणाभावात् अनेकार्थस्य वाच्यतया पर्यायपरिवृत्तिसहतया च, द्वावपि राजसूर्यौ वाच्यौ अभिधया प्रतिपाद्यावित्यर्थः, अतोऽत्रोपमाध्वनिशङ्का न विधेया। ननु विभाकर इत्यंशे परिवृत्त्यसहतया शब्दश्लेष एव स्यादितिचेत्? एतदंशे परिवृत्त्यसहत्वेन शब्दश्लेषेऽपि प्रवर्त्तयन्नित्यादिषु बहुष्वर्थश्लेषादुदाहरणमितिविभावनीयम्। यदि च भास्कराहस्करेत्याद्यमरकोशप्रामाण्येन विभाकरशब्दः सूर्यस्य वाचक 'एकादशेऽहनि पिता नाम कुर्यात् द्वयक्षरं चतुरक्षरं वा' इति स्मृत्या विभाकर इति पित्र्यादिविहितं राज्ञो नामेतिराजनिविभाकरशब्दस्य च साम्प्रतिकः सङ्केतः तेन च विभाकरशब्दौ राज्ञोऽपि वाचक एव। तदा विभाकरशब्दः शक्त्या सूर्ये दर्शितयोगेन राजानं बोधयतीत्येतदंशेऽप्यर्थश्लेषः प्रभाकरादिपर्यायशब्देन परिवृत्तिसहत्वात्। यदि त्वत्र संयोगाद्यैः पूर्वोक्तैः प्रकरणादिभिः अभिधाया नियन्त्रणे राजा प्रकृतो रविरप्रकृतस्तदा 'दुर्गालङ्घितविग्रह' इत्यादाविव द्वितीयार्थस्य ध्वनिरेव। इत्थं च नेदमुदाहरणम्। किन्तु—

**'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।**
**अहो! सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥'**

इति शब्दश्लेषप्रकरणीयभङ्ग्यन्तरेण मूलकृदुक्तमेवेत्यवगन्तव्यम्।

ननु वाच्यस्य प्रस्तुतस्याभिधानेनाप्रस्तुतस्य गम्यत्वे समासोक्तिरभिहिता सम्प्रति तद्वैपरीत्येन अप्रस्तुताभिधानेन गम्यत्वेऽलङ्कारान्तरः सैव वेतिजिज्ञासायान्तत्राप्रस्तुतप्रशंसालङ्कारो भवतीति तां निरूपयति—**क्वचिदिति**। एतच्च वाक्यपञ्चकेऽप्यन्वेति। **अप्रस्तुतादिति**। सामान्यादित्यादिपञ्चकस्य विशेषणम्। **प्रस्तुतामिति**। यथायथं लिङ्गविपरिणामाविपरिणामाभ्यां विशेष इत्यादिपञ्चकस्य विशेषणमिति तर्कवागीशाः। तथा च अप्रस्तुतात् अप्रस्तुतप्रतिपादनात् प्रस्तुतं चेद् गम्यते प्रतीयते ततस्तदा अप्रस्तुतप्रशंसा तन्नामालङ्कारः। एवञ्च अप्रस्तुतप्रतिपादनात् प्रस्तुतप्रतीतिरप्रस्तुतप्रशंसेतिसामान्यलक्षणं, पर्यवसितम्। अप्रस्तुतस्य पदार्थस्य प्रशंसा प्रकृष्टप्रतिपादनवत् व्यञ्जनावृत्त्या स्फुटा वर्णना न तु स्तुतिः सा अप्रस्तुतप्रशंसेतिव्युत्पत्तिः, प्रशंसायाः स्तुतिरूपत्वे—

'धिक् तालस्योन्नततां यस्याच्छायापि नोपकाराय'

## रुचिरा

श्लेषं लक्षयति—१३९ **शब्दैरित्यादिना**।

**१३९ स्वभावात्** वस्तुतत्त्वविचारतः। **एकार्थैरनेकार्थप्रतिपादकताशून्यैः**। **शब्दैः**। **अनेकार्थवाचनमने**कार्थाभिधायकं 'शक्त्या, लक्षणया वा, तदुभयेन वा' इति शेषः। **श्लेषः**।

शब्दश्लेषाद्भेदकं निर्दिशति—'**स्वभावादित्यादिना**। स्पष्टम्।

ध्वनेर्भेदकं निर्दिशति—**वाचनमित्यादिना**। स्पष्टम्। इदमुक्तम्—स्वभावत एकार्थकाः शब्दाः परिवृत्तिसहाः सन्त एवानेकार्थप्रतिपादका भवन्तीति शब्दश्लेषादेतस्य भेदः। अत एव प्रदीपकारा अप्याहुः—'परिवृत्तिसहानामेव शब्दानामेकवृन्तफलगतफलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थश्लेषः।' इति। एकस्मिन्नर्थे प्रकरणादिना नियन्त्रिते व्यञ्जनया द्वितीयोऽर्थो यत्र बुध्यते, स ध्वनिर्भवति, यथा-'राजत्युमावल्लभ' इत्यादौ, श्लेषोऽयं पुनरेकार्थशब्दमूलः, अतोऽत्र प्रकरणादिनियन्त्रणाभावः, प्रकरणादिनियन्त्रणभयं हि अनेकार्थानां शब्दानाम्। स्फुट-

श्चैवं ध्वनिश्लेषयोर्भेदः । एतेन—'विभाकरः सूर्य्यस्तन्नामको राजा चे'ति श्लेषोदाहरणप्रसङ्गे व्याख्यानं निरस्तम्, तत्सद्भावाङ्गीकारे हि उपमाध्वनेर्निवारणसम्भवः । इति सुष्ठूक्तम् 'वाचन'मित्यादि । इति ।

उदाहर्तुमुपक्रमते—**उदाहरणम्** । (उदाह्रियते इति भावः) '**प्रवर्तयन्नि**त्यादिना ।

'**साध्वीः** शोभनाः सन्ध्योपासनादिरूपा निर्विघ्नगमनादिरूपाश्च, अन्यत्राविरुद्धाचरणरूपाः । **क्रियाः** । **प्रवर्त्तयन्** । **हरितां** दिशाम्, अन्यत्र तत्रत्यदस्युजनानाम् । **मालिन्यं** तमस्वितासम्पत्तिम्, अन्यत्रोद्दण्डत्वादिरूपम् । **हरन्** निरस्यन् निर्वर्तयन् वा । **भूयसा**ऽतिविपुलेन । **महसा** तेजसा । **दीप्तः** । **विभाकरः** सूर्य्यः, अन्यत्र लक्षणया तथाऽभिमतो राजा । **विराजति** ॥ १९२ ॥'

विभाकरशब्दस्य राजविशेषवाचकत्वाभावेनानेकार्थकत्वाभावादभिधाया नियन्त्रणं न सम्भवति, अतोऽत्रोपमाध्वनिशङ्का हेयेत्याशयेनाह—**अत्रे**त्यादिना । स्पष्टम् । वाच्यौ 'अभिधया लक्षणया चे'ति शेषः । अत्र वाच्यशब्दो व्यङ्ग्यातिरिक्ताभिप्रायपरतया लक्ष्यस्याप्युपलक्षको बोध्य इति सर्वं निरवद्यम् । यथा वा—'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् । अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥' इत्युदाहृते पद्ये ।

क्वचिद्विशेषः सामान्यात्सामान्यं वा विशेषतः ।

**कार्यान्निमित्तं कार्यं च हेतोरथ समात्समम् ॥ ५८ ॥**

**अप्रस्तुतात्प्रस्तुतं चेद्र गम्यते पञ्चधा ततः ।**

अप्रस्तुतप्रशंसा स्याद्—

क्रमेणोदाहरणम्—

**'पादाहतं यदुत्थाय मूर्धानमधिरोहति ।**

**स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥'**

अत्रास्मदपेक्षया रजोऽपि वरमिति **विशेषे प्रस्तुते** सामान्यभिहितम् ।

---

## विवृतिः

अप्रस्तुतप्रशंसालंकारमाह—**क्वचिदिति**। एतच्च वाक्यपञ्चकेऽन्वेति । अप्रस्तुतादिति सामान्यादित्यादिपञ्चकस्य विशेषणम् । प्रस्तुतमिति । यथायथं लिङ्गविपरिणामविपरिणामाभ्यां विशेष इत्यादिपञ्चकस्य विशेषणम् । ततस्तदा अप्रस्तुतेन प्रस्तुतस्य प्रशंसाव्यञ्जनम् । यद्वा प्रस्तुतव्यञ्जकप्रस्तुतकथनमप्रस्तुतप्रशंसा ॥

**पादाहतमिति**। बलदेवस्योक्तिरियम् । **सामान्यम**भिहितमिति । देहिन इति सामान्यवाचकम् ॥ **स्त्रगियमिति**। अजविलापोऽयम् । अहितकारिविशेषो विषं हितकारिविशेषोऽमृतम् ॥

## विवृतिपूर्ति

इतोऽग्रे **कुवलयानन्दे** प्रस्तुताङ्कुरः—'प्रस्तुतस्य प्रस्तुतेन द्योतने **प्रस्तुताङ्कुरः** । किं भृङ्ग ! सत्यां मालत्यां केतक्या कण्टकेद्धया ॥' इति । प्रधानभूतप्रस्तुतान्तरव्यञ्जकं प्रस्तुतवर्णनं प्रस्तुतस्य व्यञ्जकत्वादङ्कुर इवाङ्कुर इति योगात्तन्नामालंकारः । उदाहरणे भ्रमरवृत्तेन मनोहारायां मयि सत्यां क्लेशकारिण्या परस्त्रिया किमिति नायकवृत्तं व्यज्यत इति तदाशयः । तत्र केचिदाहुः—अप्रस्तुतप्रशंसायामप्रस्तुतपदेन मुख्यतात्पर्यविषयीभूतार्थातिरिक्तोऽर्थो ग्राह्यः तेन सैव । अथवा अप्रस्तुतेन प्रशंसेत्यपि अप्रस्तुतप्रशंसापदार्थः । एवं वाच्येन व्यक्तेन वा अप्रस्तुतेन वाच्यं व्यक्तं वा प्रस्तुतं यत्र सादृश्यादिना प्रशस्यते उन्मील्यत इत्यर्थादिहापि सैव संभवति किमलंकारान्तरेणेति ॥

## विज्ञप्रिया

अप्रस्तुतप्रशंसालङ्कारं पञ्चविधमाह—**क्वचिद्विशेष** इति । सकलपञ्चम्यन्तपदार्थाद् अप्रस्तुतात् सकलप्रथमान्तपदार्थः प्रस्तुतश्चेद् गम्यते बुध्यते तदा पञ्चविधोऽप्रस्तुतप्रशंसालङ्कार इत्यर्थः । अन्यापदेशपरिभाषाऽप्यन्यत्र ।

तत्र सामान्यादप्रस्तुतात् प्रस्तुतविशेषव्यङ्ग्यत्वमाह—**पादाहतमि**ति । अपमानेऽपि स्वस्थाद् देहिनः तद्रजः वरं श्रेष्ठम् । यद्रजः पादाहतं सद् उत्थायाभिहन्तुरेव मूर्द्धानमधिरोहति आरोहतीत्यर्थः । अत्रेति सामान्यं देहिसामान्यं, तदभिधानात् प्रस्तुतस्याऽस्मत्त इत्यस्य व्यञ्जनेत्यर्थः ।

## लोचन

विशेष इत्यादीनां कर्मपदानां प्रस्तुतमिति विशेषणम्। सामान्यादित्यादिपञ्चम्यन्तपदानामप्रस्तुतादिति अप्रस्तुतादर्थतोऽवाच्यात्। अत एवाऽप्रस्तुतस्य प्रशंसावाच्यतया वर्णनमित्यर्थाद् अप्रस्तुतप्रशंसाख्योऽलङ्कारः। एवं चाप्रस्तुतात् प्रस्तुतप्रतीतिरप्रस्तुतप्रशंसेति सामान्यलक्षणम्। तस्याश्चोक्तनयात् पञ्चप्रकारतेति भावः।

**पादहतमिति**। एवं माघकाव्योक्त्या शिशुपालं प्रति प्रयाणाभिमुखीकरणाय श्रीकृष्णं प्रति बलरामवाक्यम्। **अस्मादिति**। अस्मत्पदवाच्याः श्रीकृष्णादयो हि वाच्याः।

## कुसुमप्रतिमा

ननु प्रस्तुताभिधानेनाप्रस्तुतप्रतीतौ समासोक्तिरिव वैपरीत्येन अप्रस्तुताभिधानेन प्रस्तुतप्रतीतौ कश्चिदलङ्कारो भवति न वेत्याकाङ्क्षायामंप्रस्तुतप्रशंसालङ्कार लक्षयति क्वचिदिति। अत्र अप्रस्तुतादिति विशेषण सामान्यादित्यादिपञ्चम्यन्तसकलविशेष्येषु प्रस्तुतमिति। विशेषणञ्च यथासम्भवं लिङ्गव्यत्ययेन विशेष इत्यादिसमस्तपथमान्तविशेष्येषु अन्वेति। तथा अप्रस्तुतादप्रस्तुताभिधानादित्यर्थः। ततश्च—

**अप्रस्तुताभिधानात् प्रस्तुतावगतिवप्रस्तुतप्रशंसेति सामान्यलक्षणं फलितम्।**

अस्या अप्यलङ्कारान्तरादिभ्यो भेदो वृत्तावेव वक्ष्यते। तथा च क्वचिद्प्रस्तुतात् सामान्यात् प्रस्तुता विशेषश्चेद्गम्यते, क्वचिद्वा अप्रस्तुताद्विशेषतो विशेषात् प्रस्तुत सामान्यञ्चेदगम्यते, क्वचिच्च अप्रस्तुतात् कार्य्यात् प्रस्तुतं निमित्तं कारणञ्चेदृगम्यते, क्वचिच्च अप्रस्तुताद्हेतोः कारणात् प्रस्तुतं कार्य्यञ्चेदृगम्ये, अथवा क्वचिद् प्रस्तुतात् समात् तुल्यरूपाद्वस्तुनः प्रस्तुतं समं तुल्यरूपं वस्तु चेदगम्यते प्रतीयते, ततस्तदा पञ्चधा पञ्चप्रकारा अप्रस्तुतप्रशंसा नामालङ्कारः स्यात्।

अप्रस्तुतस्य वस्तुनः प्रशंसा प्रशंसनवत् प्रकृष्टकथनवत् व्यञ्जनया स्पष्टा सूचना अप्रस्तुतप्रशंसेतिव्युत्पत्तिः।

अप्रस्तुतसामान्यभिधानात् प्रस्तुतविशेषप्रतीतावुदाहरति पादेति। शिशुपालवधद्वितीयसर्गे बलरामस्योक्तिरियम्; यत् रजो भूतलधूलिः पादेन चरणेन आहत सत्, उत्थाय उत्पत्यमूर्द्धानम् आहन्तु रेव मस्तकम्, अधिरोहति; तत् रजो धूलिः, अचेतनमपीति भावः। अपमाने सञ्जातेऽपि स्वस्थादेव अविचलितादेव देहितश्चेतनपदार्थात् वरं श्रेष्ठम्।

अत्रेति। शिशुपालेनावमानितस्यापि यादवगणस्य निरुद्यमतामुपक्रम्य "पाद हतम्"इत्यादेरभिधानात् देहिविशेषभूतस्य यादवगणस्य प्रस्तुतत्वम्, देहिसामान्यस्य चाप्रस्तुतत्वमवगन्तव्यम्। तथा चाप्रस्तुतदेहिसामान्यात् प्रस्तुतस्य देहिविशेषभूत-यादवगणस्य प्रतीतेरप्रस्तुतप्रशंसा; एवमन्यत्राप्युह्यम्। उपमेयं देहिनमपेक्ष्य उपमानस्य रजस आधिक्यप्रतिपादनात् मल्लिनाथेन तु व्यतिरेक उक्तः। तेनोमयीः सङ्करः।

## विमला

अप्रस्तुतप्रशंसामाह, क्वचिदिति।—एतच्च वाक्यपञ्चकेऽन्वेति, "अप्रस्तुतात्" इति "सामान्यात्" इत्यादिपञ्चकस्य विशेषणम्। "प्रस्तुतम" इति यथायथं लिङ्गविपरिणामाविपरिणामाभ्यां "विशेषः" इत्यादिपञ्चकस्य च विशेषणम्; तथा हि—क्वचित् सामान्यात्—साधारणात्, अप्रस्तुतात् विशेषः प्रस्तुतः, क्वचित विशेषतः,—विशे-

षात्, अप्रस्तुतात् सामान्यं प्रस्तुतं, क्वचित् अप्रस्तुतात् विशेषः प्रस्तुतः क्वचित् कार्य्यात् प्रस्तुतं निमित्तं, क्वचित् अप्रस्तुतात् निमित्तात् प्रस्तुतं कार्य्यं, क्वचित् समात् अप्रस्तुतात् समं प्रस्तुतं शक्यते चेत्, ततः,—तदा, पञ्चधा— पञ्चविधा, उक्तरीत्येति भावः, अप्रस्तुतप्रशंसा—अप्रस्तुतेन प्रस्तुतस्य प्रशंसाव्यञ्जनं, यद्वा—प्रस्तुतव्यञ्जकमप्रस्तुतकथनम् अप्रस्तुतप्रशंसा, स्यात्।

पादाहतमिति।—बलदेवस्योक्तिरियम्। यत् रजः,—धूलिः, पादाहतं—चरणाघातितं सत्, उत्थाय—उड्डीय, [उद्याम्येति तु ध्वनिः] मूर्द्धानं—शिरः, आहन्तुरेवेति शेषः, अधिरोहति—प्रतिपद्यते, [आक्रामतीति ध्वन्यर्थः] तत्—रजः, अपमानेऽपि पराभवेऽपि स्वस्थात्—अविचलात्, अविजिगीषोरित्यर्थः, देहिनः,—प्राणिनः, तदपेक्षयेति भावः, वरं—श्रेष्ठमित्यर्थः। ("देवाद्वृतें वरः श्रेष्ठे त्रिषु क्लीवे मनाक् प्रिये" इत्यमरः)। शिशुपालवधस्येदं पद्यम्।

## लक्ष्मी

इत्यादावव्याप्त्यापत्तेः।

अस्या अप्यन्यालङ्कारादिभ्यो भेदः स्वयमेव वृत्तौ प्रतिपादयिष्यति।

प्रस्तुतव्यञ्जनं प्रस्तुताप्रस्तुतयोरसम्बन्धे सति न सम्भवतीति तत्सम्बन्धप्रदर्शनमुखेन तामप्रस्तुप्रशंसां सलक्षणं पञ्चधा विभजते—**विशेष** इत्यादिना। तथा च क्वचिदप्रस्तुतात् सामान्यात् प्रस्तुतो विशेषश्चेद् गम्यते क्वचिद्वा अप्रस्तुतात् विशेषतो विशेषात् प्रस्तुतं सामान्यं चेद् गम्यते, अथवा क्वचित् अप्रस्तुतात् कार्यात् प्रस्तुतं निमित्तं हेतुश्चेद् गम्यते, क्वचिच्च अप्रस्तुताद् हेतोर्निमित्तात् प्रस्तुतं कार्यञ्चेगम्यते, क्वचिच्च अप्रस्तुतात् समात् सदृशरूपात्पदार्थात् प्रस्तुतं समं सदृशरूपं पदार्थ चेद् गम्यते ततस्तदा पञ्चधा पञ्चविधा अप्रस्तुतप्रशंसा स्यात्। सामान्यादिना गणने पञ्चविधत्वोपपत्तावपि पुनः पञ्चधेतिकथनम् अधिकसंख्याव्यवच्छेदार्थम्।

तत्राप्रस्तुतसामान्यप्रतिपादनात् प्रस्तुतविशेषगम्यत्वे उदाहरणं दर्शयति—**पादाह**मिति। माघकाव्ये शिशुपालं प्रति प्रयाणाभिमुखीकरणाय श्रीकृष्णं प्रति सभायां बलदेवस्योक्तिरियम्। यत् रजः भूमिधूलिः, पादेन चरणेन आहतं ताडितं सत्, उत्थाय उद्गतं भूत्वा मूर्द्धानम् आहन्तुरेव मस्तकम्, अधिरोहति अधितिष्ठति, तद् रजो धूलिः अचेतनमपीति शेषः, अपमानेऽवज्ञायां सत्यामपि, स्वस्मादेव अप्रतिकारेच्छोरेव देहिनश्चेतनात् तदपेक्षयेति यावत्, वरं श्रेष्ठमभिमतं च। 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीब मनाक् प्रियेः' इत्यमरः।

लक्ष्यं समर्थयति—**अत्रे**ति। शिशुपालेनावहेलनां विहितस्यापि यदुवंशिनस्तत्प्रतीकारानभिमतामुपक्रम्य 'पादाहतम्' इत्यादेः कथनात् विशेषभूतस्य यदुवंशिनः प्रस्तुतत्वम्, देहिसामान्यस्य चाप्रस्तुतत्वमितिबोध्यम्। तथा चाप्रस्तुतदेहसामान्यात् प्रस्तुतस्य देहिविशेषभूतयदुवंशिनोऽवगमादप्रस्तुतप्रशंसा। एवमेवान्यत्राऽप्यनुसन्धेयम्। एतद् व्याख्याकृता मल्लिनाथेन तु प्रस्तुतं देहिनमपेक्ष्य अप्रस्तुतस्य रजस आधिक्याभिधानाद्व्यतिरेक उक्तः, तेनोभयोः सङ्कीर्णमेवेदमुदाहरणम्। असङ्कीर्णोदाहरणन्तु—

**'सुहृद्वधूबाष्पजलप्रमार्जनं करोति वैरप्रतियातनेन।**

**स एव पूज्यः स पुमान् स नीतिमान् सुजीवितं तस्य स भाजनं श्रियः॥'**

श्रीकृष्णेन नरकासुरे विनाशिते तन्मित्रं शाल्वं प्रति तत्सचिवस्योक्तिरियम्। अत्र 'कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि तत् त्वमेव श्लाघ्यः' इति विशेषे प्रस्तुते सामान्यमभिहितमित्यप्रस्तुतप्रशंसा।

## रुचिरा

अप्रस्तुतप्रशंसां लक्षयति—**१४० क्वचित्**। **सामान्यात्** साधारणात्। **विशेषः**। **वा**। क्वचित्-**विशेषतो** विशेषात्। **सामान्यम्**। क्वचित्-**कार्य्यात्**। **निमित्तं** कारणम्। क्वचित्-**हेतोः** कारणात्। **च**। **कार्य्यम् अथ**। क्वचित्-**समात्** सदृशात्। **समं** सदृशम्। इत्येवम्-**अप्रस्तुतात्**। **प्रस्तुतम्**। **चेत्**। **गम्यते** व्यज्यते। **ततः**। अप्रस्तुतप्रशंसाऽप्रस्तुतस्य प्रशंसाकथनमिति तदभिधेयाऽलङ्कृतिः। **पञ्चधा** पञ्चविधा। **स्यात्**। इदमुक्तम्—अप्रस्तुतात् प्रस्तुतस्य व्यङ्ग्यत्वमप्रस्तुतप्रशंसा, सा च पञ्चविधा, अप्रस्तुतात् प्रस्तुतस्य व्यज्यमानस्य पञ्चविधत्वात्। तत्र प्रस्तुतं सामान्यरूपं, विशेषरूपं, कार्य्यरूपं, निमित्तरूपं, समरूपं च; प्रस्तुतमप्येवं क्रमेण विशेषरूपं, सामान्यरूपं, निमित्तरूपं, कार्य्यरूपं, समरूपं चेति। तथा च—'अप्रस्तुतात्'इति 'सामान्या'दित्यादिना, 'प्रस्तुत'मिति लिङ्गविपरिणामविपरिणामाभ्यां 'विशेष'इत्यादिना च विशिनष्टि, तथा हि—चेत् सामान्यात् अप्रस्तुतात् क्वचित् विशेषः प्रस्तुतो गम्यते तर्हि प्रथमा, चेत् विशेषादप्रस्तुतात् सामान्यं प्रस्तुतं क्वचिद् गम्यते तर्हि द्वितीया, चेत् क्वचित् कार्य्यादप्रस्तुतात् निमित्तं प्रस्तुत्तं गम्यते तर्हि तृतीया, चेत् निमित्तात् अप्रस्तुतात् क्वचित् कार्य्यें प्रस्तुतं गम्यते तर्हि चतुर्थी, क्वचिच्चेदेवं समादप्रस्तुतात्समं प्रस्तुतं गम्यते तर्हि पञ्चमी अप्रस्तुतप्रशंसा स्यात् इति फलितोऽर्थः। अस्याः सामान्यं लक्षणम् 'अप्रस्तुतात् प्रस्तुतं गम्यते चे'दिति, विशेषलक्षणं पुनः 'क्वचिद्विशेषः सामान्या'दित्यादि। अत्राप्रस्तुतात्प्रस्तुतस्य व्यङ्ग्यत्वम्, समासोक्तौ तु प्रस्तुतात् अप्रस्तुतस्य व्यङ्ग्यत्वम्, इत्यनयोर्भेदः। इति ॥१११ ॥ ११२ ॥

उदाहर्तुमुपक्रममाण आह—**क्रमेणे**त्यादि। स्पष्टम्। **'पादे**त्यादि।

**'यत्** (रजः) **पादाहतं** पादेनाहतं ताडितमिति तथोक्तम्। 'स'दिति शेषः। **उत्थायोद्गतं** भूत्वा। **मूर्धानं** मस्तकम्। **अधिरोहत्य**धिष्ठिति। **तत्**। **रजः**। **उपमाने**ऽवज्ञायां सत्याम्। **अपि**। **स्वस्था**दप्रतिकारेच्छोः। **एव**। **देहिनः** प्राणिनस्तदपेक्षयेति यावत्। **वरमुत्तमम्**, मनागभिमतं वा। 'देवाद्रवृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक प्रिये।' इत्यमरः। शिशुपालवधस्येदं पद्यम्। बलदेवस्य सभायामुक्तिरियम्॥ १९३।।'

लक्ष्यार्थं निर्दिशति-**अत्रे**त्यादिना। स्पष्टम्। 'देहिनस्तद्वरं रजः' इत्यप्रस्तुताभिधान 'मस्मदपेक्षया रजोऽपि वर'मिति विशेषस्य प्रस्तुतार्थस्य व्यञ्जकम्। इति भावः।

**'स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम्।**

**विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥'**

अत्रेश्वरेच्छया क्वचिदहितकारिणोऽपि हितकारित्वं हितकारिणोऽप्यहितकारित्वमिति **सामान्ये प्रस्तुते** विशेषोऽभिहितः। एवं चात्राप्रस्तुतप्रशंसामूलोऽर्थान्तरन्यासः। दृष्टान्ते प्रख्यातमेव वस्तु प्रतिबिम्बत्वेनोपादीयते। इह तु विषामृतयोरमृतविषीभावस्याप्रसिद्धेर्न तस्य सद्भावः।

---

## विवृतिः

नन्वत्र बिम्बप्रतिबिम्बभावसत्त्वात्।

दृष्टान्त एवायमित्यत आह—**दृष्टान्त इति**। **तस्य** दृष्टान्तस्य **सद्भावः** संभवः। अस्याः संकीर्णोदहारणं तु 'मणिर्लुठति पादेषु काचः शिरसि धार्यते। यथैवास्ति तथैवास्तु काचः काचो मणिर्मणिः ॥' अत्राविवेचकेनोत्कृष्टस्यानादरेऽपि नोत्कर्षापचयः। अनुत्कृष्टस्यादरेऽपि नोत्कर्ष इति प्रस्तुतमप्रस्तुतेन वाक्यार्थेन प्रतीयते ॥

## विज्ञप्रिया

विशेषादप्रस्तुतात् प्रस्तुतसामान्यव्यञ्जनमाह—**स्रगियमिति**। इन्दुमतीभर्तुरदीयपारिजातस्रजं हृदि निधायजस्यायं विलापः।

**अत्रेति**। सामान्ये हिताहितकारित्वादिना सामान्ये विशेषः। अहितकारिविशेषोऽमृतम्। अर्थान्तरन्यासालङ्कारस्याऽत्रानयाऽप्रस्तुतप्रशंसया निष्पाद्यत्वादनयोरत्रानुग्राह्यानुग्राहकभावरूपसङ्कर इत्याह—**एवं चेति**। अर्थान्तरन्यासो ह्यष्टविधो वक्ष्यते। तत्रोक्तस्य विशेषस्यौचित्यप्रतिपादनरूपसमर्थनं सामर्थ्यात् सामान्येनेति। यस्तत्रभेदः स चात्र अप्रस्तुतप्रशंसानिष्पाद्यः। तथाहि किं न हन्ति इत्यनेन हन्तृविशेषस्य स्रजो हननसामर्थ्यसत्त्वेऽपि हननाभावे विशेष उक्तः। स चाप्रस्तुतप्रशंसालभ्येनाहितकारिसामान्येन ईश्वरेच्छाधीनाहितकारित्वाभावरूप एव साधर्म्यात्। समानार्थतः स्रजोऽहननघटितम्। ईश्वरेच्छाडहितकारिणोहऽप्याभिकारित्वा भावादिति प्रतीतेः। ननु स्रङ्निष्ठयोरहननामृतभावयोरपकारसामर्थ्येऽप्यनपकारित्वरूपसाधनप्रतिबिम्बनादत्र दृष्टान्तालङ्कारस्यापि प्रसक्तिरित्यतस्तन्निरस्यति—**दृष्टान्त** इति। प्रख्यातमेव प्रसिद्धमेव बिम्बप्रतिबिम्बत्वेन व्यङ्ग्यसाधर्म्येण। अत्र तस्येति न दृष्टान्तालङ्कारसद्भाव इत्यर्थः। तथा च दृष्टान्तस्तु सधर्मस्य इत्यत्र प्रसिद्धसधर्मस्येत्यर्थः।

## लोचन

अहितकारिविशेषो विषं हितकारिविशेषोऽमृतम्। अप्रस्तुतप्रशंसामूलमुत्थानबीजम्। यस्यार्थान्तरन्यासस्य सामान्येन विशेषकृतः समर्थकत्वात्। तस्य दृष्टान्तस्य। इह तु विषामृतत्वेनाध्यवसानादतिशयोक्तिरेव। तयोश्च सामान्यविशेषाभावरूपेण विच्छित्तिविशेषसम्भवात्।

## कुसुमप्रतिमा

अप्रस्तुतविशेषाभिधानात् प्रस्तुतसामान्यप्रतीतौ प्रदर्शयति स्त्रगियमिति । रघुवंशष्टमसर्गस्थ मिदं पद्यम् । इयं स्त्रक् पुष्पमाला, यदि जीवितापहा इन्दुमत्या जीवनविनाशिनी भवेत्, तदा ममापि हृदये वक्षसि निहिता स्थापिता सती, किं कथ मां न हन्ति । आं ज्ञातमित्याह विषमिति । ईश्वरस्येच्छया विषमपि क्वचिदमृतं भवेत्, क्वचिद्वा अमृतमपि विषं भवेत् । ईश्वरेच्छावशादेव पुष्पमालाताडनेनापि इन्दुमती निहता, न पुनः पुष्पमालाया एव निहनन-शक्तिः स्वाभाविकीति भावः ।

अत्रेति । अहितकारिणोऽपि पदार्थस्य, हितकारित्वं भवतीति शेषः । एवमुत्तरत्रापि । सामान्ये अहित-कारि-हितकारि साधारणे, प्रस्तुते प्रयोगायाभिमतत्वेन प्रक्रान्ते । औचित्यादेवात्र सामान्यस्यैव प्रस्तुतत्वावधारण-मिति ध्येयम् ।

## विमला

सामान्यमभिहितमिति ।—देहिनः इति सामान्यवाचकम् इति ।

स्त्रगिति ।—दिव्यस्त्रजि उरसि पतितायामेव स्वप्रियामिन्दुमतीं गतासुमवलोक्य अजस्य विलापवचन-मिदम् । इयं स्त्रक्—माल्यं, यदि जीवितम् अपहन्तीति जीवितापहा—जीवनहारिणीत्यर्थः, [यद्यपि "अपे क्लेश-तमसोः"(३/२/पा. वा.) इति सूत्राविषयतया च्युतसंस्कारत्वदोषयुक्तं, तथाऽपि अजस्य शोकातुरतायाः प्रत्यायकतया च्युतसंस्कारत्वस्याकिञ्चित्करत्वमेव इति बोध्यम्] तदा हृदये निहिता सती, ममेति शेषः, मां किं—कथं, न हन्ति ? मन्ये सृजो न दोषः, ममैवेश्वरप्रतिकूलतेत्याह, विषमिति ।—क्वचित् ईश्वरेच्छया विषमपि अमृतम्, अमृतं वा विषंभवेत्, अत एव मामनिहत्य एतामेव निहतवतीति भावः । वैतालीयं वृत्तम् । इदञ्च रघुवंशस्य पद्यम् ।

अत्रेति ।—नन्वत्र बिम्बप्रतिबिम्बभावसत्त्वात् दृष्टान्त एवायमत आह—दृष्टान्ते इति । प्रख्यातमेवेति—प्रसिद्धमेवेत्यर्थः । तस्य—दृष्टान्तस्य, सद्भावः—सम्भवः । अस्या असङ्कीर्णोदाहरणन्तु—"मणिर्लुठति पादेषु काचः शिरसि धार्य्यते । यथैवास्ति तथैवास्तु काचः काचो मणिर्मणिः ॥" अत्राविवेचकेनोत्कृष्टस्यानादरेऽपि नोत्कर्षापचयः, अनुत्कृष्टस्यादरेऽपि नोत्कर्ष इति प्रस्तुतमप्रस्तुतेन वाक्यार्थेन प्रतीयते ।

## लक्ष्मी

अप्रस्तुतविशेषप्रतिपादनात् प्रस्तुतसामान्यगम्यत्वे उदाहरति—**स्त्रगियमिति** । रघुवंशे अष्टमसर्गे नार-दीयपारिजातस्त्रक्स्पर्शमात्रे इन्दुमतीप्राणनिर्गमे तत्स्त्रजं हृदि निधाय तद्भर्त्तुरजस्य विलापोऽयम् । इयं स्त्रक् पुष्पमाला यदि जीवितापहा इन्दुमत्याः प्राणहन्त्री भवेत् तदा ममापि हृदये वक्षसि निहिता मया स्वयं स्ववक्षसि स्थापिता सती किं कथं न मामजं हन्ति हिनस्ति ? अतो नेयं जीवितापहेत्याशयः । नन्वेवं कथमिन्दुमतीमपहतवती ? इत्यत आह—**विषमपीति** । ईश्वरस्य कर्त्तुमकर्त्तुमन्यथा वाकर्तु सर्वसमर्थस्य परमेश्वरस्य स्वेच्छया स्वाभिलाषया विषमपि किं पुनरमृतम्, क्वचिदमृतं, भवेत्, क्वचिद्वा अमृतं पीयूषमपि विषं गरलं भवेत् । ईश्वरेच्छावशादेव पुष्पमालास्पर्शेनापि इन्दुमती जीवितापहा, न पुनः पुष्पमालाया एव स्वाभाविकी जीवितापहननशक्तिरित्याशयः । **वैतालीयं** छन्दस्तल्लक्षणं चोक्तं प्राक् ।

लक्ष्यार्थमुपपादयन् लक्ष्यं समर्थयति—**अत्रेति**।—क्वचित्, मादृशे, अहितकारिणोऽपि इन्दुमत्याः प्राणनाशकत्वेन पुष्पमालारूपस्य वस्तुनोऽपीत्यर्थः, हितकारित्वं प्राणान् हन्तुमप्रवृत्तत्त्वम्, हितकारिणो मद्विधस्य प्राणनाशकस्यापि अहितकारित्वम् इन्दुमत्याः प्राणनाशकत्वं भवतीति शेषः। सामान्ये अहितकारि हितकारिसाधरणे, प्रस्तुते प्रयोगायाभिमतत्वेन उपस्थिते, विशेषोऽमृतविषयोर्विषामृतीभवनम्। सामान्यस्यैव प्रस्तुतत्वनिश्चयोऽत्रौचित्यादेवेत्यवगन्तव्यम्। अर्थान्तरन्यासालङ्कारस्यात्रऽनयाऽप्रस्तुतप्रशंसया निष्पाद्यत्वादनयोरत्रानुग्राह्यानुग्राहकभावरूपसङ्कर इति दर्शयति—**एवञ्चेति**। अप्रस्तुताद्विशेषात् प्रस्तुततसामान्यस्यावगतेः अप्रस्तुप्रशंसया सामान्यस्य निष्पादितत्वे चेत्यर्थः। अर्थान्तरन्यासः पूर्ववाक्यार्थस्योत्तरवाक्यार्थे समर्थनात् सामान्येन विशेषसमर्थनरूपोऽपि ज्ञेय इत्यभिप्रायः। इत्थञ्चानयोरङ्गाङ्गिभावेन सङ्कीर्णत्वात्सङ्करोदाहरणमिदम्। इत्थम्—

> **'मणिर्लुठति पादेषु काचः शिरसि धार्यते।**
> **यथैवास्ति तथैवास्तु काचः काचो मणिर्मणिः॥'**

इत्यत्र दृष्टान्तेनास्याः सङ्कीर्णोदाहरणं बोध्यम्। असङ्कीर्णोदाहरणन्तु—

> **एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं वारिणो**
> **यन्मुक्तामणिरित्यमंस्त सजडः श्रृण्वन् यदस्मादपि।**
> **अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः**
> **कुत्रोड्डीयगतो ममेत्यनुदिनं निद्राति नान्तः शुचा॥**

भल्लशतके कस्यचिन्मूर्खस्योदन्तं कुतश्चिदाकर्ण्य विस्मयेन ब्रुवन्तं कंचित्प्रति कस्यचिदुक्तिरियम्।

अत्र जडविशेषस्य वारिकणे मुक्ताधीनत्वरूपाप्रस्तुतविशेषस्याभिधानात् जडानामयोग्यस्थाने एव ममत्वसम्भावना भवतीतिप्रस्तुतसामान्यावगतेऽप्रस्तुतप्रशंसेयम्।

ननु प्रकृतोदाहरणे व्यञ्जनयैव सामान्यस्यावगमो भवति तस्याश्चाभिधासापेक्षत्त्वात्तत्पूर्वमेव निरपेक्षया प्राथम्येनोपस्थितया प्रबलया अभिधया विशेषस्यैव बोधितत्वात् सामान्यविशेषभावाभावेनार्थान्तरस्य स्वीकर्त्तुमशक्यत्वेन बिम्बप्रतिबिम्बत्वसद्भावाद् दृष्टान्त एवायं सम्भवितुमर्हतीति तत्कथमर्थान्तरन्यासेन साङ्कर्यं प्रदर्शितमित्यत आह—**दृष्टान्त** इति। प्रख्यातमेव प्रसिद्धमेव न त्वप्रसिद्धम्। प्रतिबिम्बत्वेन उपमानत्वेन। इह तु 'स्रगियम्' इत्यादौ तु अप्रसिद्धेः प्रख्यातत्वाभावात्। तस्य दृष्टान्तस्य। सद्भावः प्राप्तिः। इत्थञ्चावशिष्टत्वात् व्यञ्जनावृत्त्या सामान्यस्यावगमे सति सामान्यविशेषभावस्य विद्यमानत्वादर्थान्तरन्यास एवेत्याशयः।

## रुचिरा

**'यदि। इयम्। स्रक्** माला। **जीवितापहा** जीवितं प्राणानपहन्तीति तथोक्ता। 'अपे क्लेशतमसोः।' ३/२/५० इत्यनेन उप्रत्ययस्यानुपपत्तेरेतादृशप्रयोगाणां च बाहुल्यात् 'पृषोदरादीनि यथोपदिष्टम्।' ६/३/१०९ इत्यनेन साधुत्वं बोध्यम्। तर्हि—**हृदये** वक्षसि। **निहिता** मया स्वयं स्वस्योरसि स्थापितेति भावः। **माम्**(अजम्)। **किम्। न**। 'स्रगिय'मिति शेषः। **हन्ति** हिनस्ति? अतो नेयं जीवितापहा, अथ कथमिन्दुमतीमपहतवती? इत्याशङ्क्याह—**ईश्वरेच्छयेश्वरस्य** कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं समर्थस्य स्वतन्त्रतया जगन्नियन्तुरिति यावत् इच्छा तया। **विषम्। अपि** किम्पुनरमृतम्। **अमृतम्। क्वचित्। भवेत्। अमृतम्। वा**। 'अपी'ति शेषः। **विषम्**।

'क्वचित् भवेत्'इति पूर्वेणान्वेति। रघुवंशे इन्दुमत्या मालास्पर्शमात्रेण प्राणनिर्गमेऽजस्य विलापोऽयम्, अत्र वैतालीयं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ १९४ ॥

लक्ष्यार्थं निर्दिशन् लक्ष्यं समर्थयते-**अत्रे**त्यादिना।

**अत्र**। **ईश्वरेच्छया**। **क्वचित्** (मादृशे) **अहितकारिणः** (इन्दुमत्याः प्राणघातकत्वेन मालारूपस्य वस्तुनः)। **अपि**। **हितकारित्वम्** (प्राणान् हन्तुमप्रवृत्तत्वम्)। **हितकारिणः** (मादृशस्य प्राणाघातकस्य)। **अपि**। **अहितकारित्वम्** (इन्दुमत्याः प्राणघातकत्वम्) 'भवती'ति शेषः। **इति**। **सामान्ये**। **प्रस्तुते** 'विवक्षितेऽपि तदनभिधाय तद्व्यञ्जयितु'मिति शेषः। **विशेषो**ऽमृतविषयोर्विषामृतीभवनम्। **अभिहितः**। एवं पूर्ववाक्यार्थस्योत्तरवाक्यार्थेन समर्थनात्। **च**। **अत्र**। **अप्रस्तुतप्रशंसामूलः**। **अर्थान्तरन्यासः**। 'अपि ज्ञेय'ति शेषः। ननु अत्र बिम्बप्रतिबिम्बत्वसद्भावेन दृष्टान्त एवायं किन्न स्यादित्याशङ्क्याह—**दृष्टान्ते**। **प्रख्यातं** प्रसिद्धम्। **एव** 'नत्वप्रसिद्धम्'इति शेषः। **वस्तु**। **प्रतिबिम्बत्वेन**। **उपादीयते**। **इहाप्रस्तुतप्रशंसायाम्**। **तु**। **विषामृतयोः**। **अमृतविषीभावस्य**। **अप्रसिद्धेः** प्रख्यातत्वाभावात्। **तस्य** दृष्टान्तस्य प्रतिबिम्बत्व सद्भावकल्पनाय वा। **सद्भावः**। न।

**'इन्दुर्लिप्त इवाञ्जनेन, जडिता दृष्टिर्मृगीणामिव,**
**प्रम्लानारुणिमेव विद्रुमदलं, श्यामेव हेमप्रभा।**
**कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं**
**सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव॥'**

अत्र संभाव्यमानेभ्य इन्द्वादिगताञ्जनलिप्तत्वादिभ्यः **कार्येभ्यो** वदनादिगतसौन्दर्यविशेषरूपं प्रस्तुतं कारणं प्रतीयते।

---

## विवृतिः

**इन्दुर्लिप्त इति**। जडिता निष्पन्दा। कार्कश्यं माधुर्यविपर्यासः। प्रस्तुतं प्रचरीभूतम्। बर्हस्य श्यामकोमलत्वाभाव एव गर्हा॥ **संभाव्यमानेभ्य** उत्प्रेक्षणीयेभ्यः। अनुक्तनिमित्तेयमुत्प्रेक्षा। तन्निष्ठकार्यत्वस्य तद्विषये उपचारादिदमुपपन्नम्। उदाहरणान्तरं तु 'नाघ्रातं न कृतं कर्णे स्त्रीभिर्मूर्धनि नार्पितम्। त्वद्विषां दीर्घिकास्वेव विशीर्णं नीलमुत्पलम्॥' अत्रोत्पलाघ्राणाद्यभावरूपकार्येभ्यः प्रस्तुतायाः शोच्यावस्थाया हेतोः प्रतीतिः। तत्सत्त्वनियतसत्ताकत्वमेव कार्यत्वमभावानामवगन्तव्यम्॥

## विज्ञप्रिया

अप्रस्तुतात् कार्य्यात् प्रस्तुतकारणव्यञ्जनमाह—**इन्दुर्लिप्तइवेति**। वदनादिसौन्दर्य्यवत्याः सीतायाः। पुरतः। इन्द्वादयो निकृष्टा इति समुदायार्थः। तत्र सीतायाः वदनापेक्षया इन्दोः, चञ्चलनयनापेक्षया मृगदृशः, अरुणाधरापेक्षया विद्रुमस्य, अङ्गगौरत्वापेक्षया हेमप्रभायाः, मधुरस्वरोच्चारककोमलकण्ठापेक्षया तादृशस्वरोच्चारककोकिलकण्ठस्य, केशापेक्षया शिखिबर्हस्य च निकृष्टता प्रतिपादकविशेषणान्युत्प्रेक्ष्यन्ते। **इन्दुर्लिप्त इवेति**। जडिता चाञ्चल्यरहिता, प्रम्लानारुणिमेव आरुण्यम्लानिवत। कार्कश्यं मधुरस्वरोच्चारणासमर्थकाठिन्यम्। प्रस्तुतं स्थितं तयैव जनितं वा। तच्च कलयापि चाल्पभावेनापि कोकिलायापि किञ्चिन् मधुरस्वरोच्चारणात्। बर्हाः संगर्हाः सनिन्दाः। हन्तेतीन्द्वादीनामपकर्षात् खेदे सीताया उत्कर्षाद्धर्षे वा। सम्भावितेभ्य उत्प्रेक्षितेभ्यः। कारणं प्रतीयते। इत्युत्प्रेक्षाकारणत्वेन कारणत्वं बोध्यम्।

## लोचन

इन्दुरित्यादि। वदनादीत्यादिशब्देन ईक्षणाधरकान्तिवचनकेशसंग्रहः।

## कुसुमप्रतिमा

एवञ्चेति। अप्रस्तुताद्विशेषात् प्रस्तुतसामान्यस्य प्रतीतेरप्रस्तुतप्रशंसया सामान्यस्य बुद्धावुपस्थितत्वे चेत्यर्थः। अर्थान्तरन्याम् सामन्येन विशेषसमर्थनरूप इत्याशयः। एवञ्चानयोरङ्गाङ्गिभावेन सङ्कर इति बोध्यम्।

नन्वभिधासापेक्षया व्यञ्जनया सामान्यप्रत्यायनात् पूर्वमेव तन्निरपेक्षया प्रबलया अभिधया विशेषस्येव प्रत्यायितत्वात् सामान्यविशेषभावाभावे चार्थान्तरन्यमस्यानङ्गीकारादत्र दृष्टान्त एव भवितुमर्हति, तत्कथमर्थान्तर-

न्यास इत्याह दृष्टान्त इति। प्रख्यातं प्रसिद्धम्। प्रतिबिम्बत्वेन उपमानत्वेन। इह तु "स्रगियम्" इत्यादौ तु। तस्य दृष्टान्तस्य, सद्भावः प्रसङ्गः। एवञ्च पारिशेष्यात् व्यञ्जनया सामान्यस्य प्रतीतौ सत्यां सामान्यविशेषभावोपस्थिते- रर्थान्तरन्यास एवेति भावः।

अप्रस्तुतकार्य्याभिधानात् प्रस्तुतकारणप्रतीताबुदाहरति इन्दुरिति। सीतायाः सौन्दर्य्यमुपक्रम्य कस्यचि- दुक्तिरियम्। सीतायाः पुरतः अग्रतः समीपे इत्यर्थः, इन्दुश्चन्द्रः अञ्जनेन कज्जलेन लिप्त इव विभातीति शेषः। एवमन्यत्रापि। इति मुखसौन्दर्य्यवर्णनम्। मृगीणां हरिणीनां दृष्टि, जड़िता सज्जासङ्कुचिता इव। नयनशोभावर्णनि- यम्। विद्रुमदलं प्रवालखण्डम्, प्रज्वानो मलिनीभूतः अरुणिमा लौहित्यं यस्य तत्तथोक्त मिव। अधरलौहित्यप्र- शंसेयम्। हेमप्रभाः स्वर्णस्नान्तिः, श्यामा श्यामलवर्णेव। गात्रवर्णस्य वर्णनेयम्। कोकिलवधूनः कोकिलपक्षिणीनां कण्ठेषु स्वरेषु च कलया लेशेन कार्कश्य कर्कशतेव प्रस्तुत विधिना निर्म्मितम्। इयन्तु कण्ठस्वरप्रशंसा। तथा शिखिनां मयूराणां बर्हाः पुच्छानि सगर्हाः कुत्सिता इव। केशपाशप्रशंसेयम्। हन्तेति हर्षे।

अत्रेति। सम्भाव्यनानेभ्य उत्प्रेक्षाविषयीक्रियमाणेभ्यः। कार्य्येभ्यः अप्रस्तुतेभ्य इति शेषः। अत्रायमभि- प्रायः—सीतायाः सौन्दर्य्यातिशयमुपक्रम्यैव केनचिदेतत्पद्यस्यभिहितत्वात् तदीयनदनादिगतः सौन्दर्य्यातिशय एवात्र प्रस्तुत; तत्सौन्दर्य्यातिशयवशादेव च चन्द्रादिष्वञ्जनलिप्तत्वादिसम्भावनाः सञ्जाता इति तासां कार्य्यत्वमप्र- स्तुतत्वञ्च, तत्सौन्दर्य्यातिशयस्य च कारणत्वं प्रस्तुतत्वञ्चेति। एवञ्चात्रोत्प्रेक्षामूला अप्रस्तुतप्रशंसेति बोध्यम्।

## विमला

इन्दुरिति।—सीतायाः सौन्दर्य्यवर्णनमिदम्। हन्तेति हर्षसूचकमव्ययं, सीतायाः पुरतः,—अग्रतः, इन्दुः,—चन्द्रः, अञ्जनेन लिप्त इव—मालिन्यपूर्ण इव, न राजते इति भावः, मृगीणां दृष्टिः जड़िता इव—सङ्कुचिता इव, विद्रुमदलं—प्रवालपल्लवं, प्रज्ञानः,—प्रकर्षेण म्लानिं गतः, अरुणिमा—आरक्तत्वं यस्य तादृशमिव, हेम्नः,— काञ्चनस्य, प्रभा श्यामेव—कृष्णवर्णेव, कोकिलवधूनां—कोकिलानां, कण्ठेषु कलया—काकलोरवेण इत्यर्थः, कार्कश्यं—माधुर्य्यविपर्य्यासः, प्रस्तुतमिव—प्रचुरीतमिवेत्यर्थः, कोकिलारवः कर्कशः प्रतीयते इति भावः, तथा शिखिनां—मयूराणां, वर्हाः,—कलापाः, सगर्हा इव—निन्दिता इव, श्यामकोमलत्वाभावात् इति भावः। शार्दूल- विक्रीड़ितं वृत्तम्।

अत्रेति।—सम्भाव्यमानेभ्यः,—उत्प्रेक्षणीयेभ्यः। अनुक्तनिमित्तेयमुत्प्रेक्षा तन्निष्ठकार्य्यत्वस्य तद्विषये उपचारात् इदमुपपन्नम्। उदाहरणान्तरन्तु—"नाघ्रातं न कृतं कर्णे स्त्रीभिर्मधुनि नार्पितम्। त्वद्विषां दीर्घिकास्वैव विशीर्णं नीलमुत्पलम्॥" अत्रोत्पलाघ्राणाद्यभावरूपकार्य्येभ्यः प्रस्तुतायाः शोच्यावस्थायाः हेतोः प्रतीतिः, तत्सत्त्व- नियसत्ताकत्वमेव कार्य्यत्वमभावानामवगन्तव्यम्।

## लक्ष्मी

अथाप्रस्तुतकार्यप्रतिपादनात्प्रस्तुतकारणावगम्यत्वे प्रदर्शयति—**इन्दुर्लिप्त** इति। महानाटकस्थमिदं पद्यम्। जानक्याः सौन्दर्यमाश्रित्य कस्यचिदुक्तिरियम्। सीतायाः जानक्याः पुरतः पुरस्तात् सन्निधावित्यर्थः, इन्दुश्चन्द्रः अञ्जनेन कज्जलेन लिप्तो रञ्जित इव शोभत इति शेषः, अग्रेऽप्येवमेवानुसन्धेयम्। मृगीणां हरिणीनां दृष्टिः प्रेक्षणम्, जडिता स्तब्धा इव विद्रुमदलं प्रवालखण्डम्, प्रकर्षेण म्लानो मलिनीभूत अरुणिमा रकितमा यस्य तत्तादृशमिव हेमप्रभा स्वर्णशोभा श्यामा कृष्णलस्वरूपमेव, कोकिलानां पिकानां वध्वस्तासां कण्ठेषु ध्वन्युद्भूत-

स्थानेषु च कलयां लेशेन कार्कश्यं कर्कशत्वमिव प्रस्तुतस्तं दैवेन रचितम्, हन्तेति हर्षे। शिखिनां मयूराणां बर्हाः पिच्छानि 'बर्ह पिच्छे दलेऽस्त्रियाम्' इति मेदनी, सगर्हाः निन्दिता इव। तथा च सीताया वदनसौन्दर्यस्य पुरस्तात् इन्दोः स्वरूपमञ्जनलिप्तेव, सीताया दृष्टिच्छवेः पुरस्ताञ्च विद्रुमखण्डच्छविः प्रम्लानेव, सीताया गात्रकान्तेः पुरस्तात्स्वर्णकान्तिः श्यामेव, सीताया वाचो माधुर्यात् पुरस्ताच्च कोकिलानां कण्ठध्वनि कर्कश इव सीतायाः केशशोभायाः पुरस्ताच्च बर्हाणि निन्दितानीव जातनीतिभावः। **शार्दूलविक्रीडित** छन्दस्तल्लक्षणं चोक्तं प्राक्।

लक्ष्यं सङ्गमयति—**अत्रेति**। उक्तोदाहरण इत्यर्थः, सम्भाव्यमानेभ्य उत्प्रेक्षाविषयीक्रियमाणेभ्यः, द्वन्द्वादिगताञ्जनलिप्तत्वादिभ्य इत्यत्रादिपदाभ्यां दृष्टयादेर्जडितत्वादेश्च परिग्रहः। कार्येभ्य अप्रस्तुतेभ्य इति शेषः। वदनादिगसौन्दर्यविशेषरूपं 'सीतायाः' इति शेषः। **अत्रायमाशयः**—सीतायाः सौन्दर्यातिशयमाश्रित्यैव केनाऽप्येतच्छ्लोकस्योक्तत्वात्, तन्मुखादिगतः सौन्दर्यातिशय एवेह प्रस्तुतः, तदीयसौन्दर्यातिशयवशादेव हि इन्द्वादिष्वञ्जनलिप्त्वादिसम्भावनाः समुत्पन्ना इति तासां कार्यत्वमप्रस्तुतत्वञ्च; तस्याः सौन्दर्यातिशयस्य च हेतुत्वं प्रस्तुतत्वञ्चेति। इत्यञ्चाप्रस्तुतप्रशंसेयमुत्प्रेक्षामूलेत्यवधेयम्।

## रुचिरा

'**सीताया** जानक्याः। **पुरतः** पुरस्तात्। **इन्दुश्**चन्द्रः। **अञ्जनेन**। **लिप्तः**। **इव**। 'प्रस्तुत' इति शेषः। **मृगीणाम्**। **दृष्टिः**। **जडिता** स्तब्धा। **इव**। 'प्रस्तुत'इति शेषः। **विद्रुमदलं** प्रवालपत्रम्। **प्रम्लानारुणिम्**। प्रकर्षेण म्लानो हतश्रीररुणिमा रक्तिमा यस्य तादृशम्। **इव**। 'प्रस्तुत'इति शेषः। **हेमप्रभा**स्वर्णशोभा। **श्यामा**। **इव**। 'प्रस्तुत'इति शेषः। **कोकिलवधूकण्ठेषु** कोकिलानां पिकानां वध्वः तासां कण्ठा ध्वन्युद्भूततास्थानानि तेषु। **इव**। **कलया**ऽऽधिक्येन। **कार्कश्यं** कर्कशत्वम्। **च**। **प्रस्तुतम्**। **हन्त**। **शिखिनां** मयूराणाम्। **बर्हाः** पिच्छानि। 'बर्हं पिच्छे दलेऽस्त्रियाम्।' इति मेदिनी। अत्र यद्यपि क्लीवबलिङ्गतयैव निर्देशो युक्तः, तथाऽपि छन्दोऽनुरोधेन पुंल्लिङ्गत्वेन निर्देशो बोध्यः। **च**। **सगर्हा** गर्हिताः। **इव**। 'प्रस्तुता।' इति शेषः। इदमुक्तम्-सीतायां मुखच्छवेः पुरस्तात् इन्दुच्छविरञ्जनलिप्तेव, सीताया दृष्टिच्छवेः पुरस्ताच्च मृगीणां दृष्टिच्छविश्चित्रितेव, सीताया अधरच्छवेः पुरस्तांच्च विद्रुमदलच्छविः प्रम्लानेव, सीतायाः शरीरच्छवेः पुरस्तात्सुवर्णच्छविः श्यामेव, सीताया गिरो माधुर्य्यात् पुरस्ताच्च कोकिलानां कण्ठध्वनिः कर्कश इव, सीतायाः केशच्छवेः पुरस्ताच्च बर्हाणि गर्हितानीव जातानि। इति। महानाटकस्येदं पद्यम्, अत्र शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक्॥ १९५॥'

लक्ष्यार्थं निर्दिशति-**अत्रेत्यादि**।

अत्रोदाहते पद्ये। **सम्भाव्यमानेभ्य** उत्प्रेक्ष्यमाणेभ्यः। **इन्द्वादिगताञ्जनलिप्तत्वादिभ्य** आदिपदाभ्यां दृष्टयादेर्जडितत्वादेश्च ग्रहणम्। **कार्य्येभ्यः**। 'अभिधीयमानेभ्य' इति शेषः। **वदनादिगतसौन्दर्य्यविशेषरूपम्**। 'सीताया' इति शेषः। **प्रस्तुतम्**। **कारणम्**। प्रतीयते।

**'गच्छामीति मयोक्तया मृगादृशा निःश्वासमुद्रेकिणं**
**त्यक्त्वा तिर्यगवेक्ष्य बाष्पकलुषेनैकेन मां चक्षुषा।**
**अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया बध्यता-**
**मित्थं स्नेहविवर्धितो मृगशिशुः सोत्प्रासमाभाषितः ॥'**

अत्र कस्यचिदगमनरूपे कार्ये कारणमभिहितम्।

---

## विवृतिः

**गच्छामीति**। सखायं प्रति कस्यचिदुक्तिरियम्। **सोत्प्रासं** सूक्ष्महासयुक्तम्। **मृगशिशुं प्रति मरणसूचकं** तादृगाभाषणमत्र कारणम् ॥

## विज्ञप्रिया

अप्रस्तुतकारणात् प्रस्तुतकार्य्यव्यञ्जनमाह—**गच्छामीति**। त्वं किं प्रस्थाननिवृत्तोऽसीति पृच्छन्तं प्रति प्रस्थानप्रवृत्तस्योक्तिरियम्। उद्रोकिणमुद्भटं निःश्वासम् मुक्त्वा बाष्पकलुषेणैकेन चक्षुषा मां तिर्य्यगवेक्ष्य इत्यन्वयः। स्नेहविवर्द्धितस्य मृगशिशोः स्वस्मिन्नर्पितस्य प्रेम्णः प्रियसखीवृन्दे विवन्धोपदेशस्य मरणसूचनाय सोच्छ्वासं प्रोद्गतस्य ममाभाषणक्रियाविशेषणम्।

**अत्र कस्यचिदिति**। गमननिवृत्तस्य नायकस्येत्यर्थः। **प्रस्तुत** इति। कस्यचित् प्रश्नात् प्रस्तुत इत्यर्थः। कारणं नायिकायाः स्वमरणसूचनम्।

## लोचन

अत्रेति। कस्यचिद् अर्थात् केनचित् कुतो न गतोऽसीति पृष्टस्याऽप्रस्तुतेनाभिधातुमुचितत्वात्। कारण-मगमस्येत्यर्थः।

## कुसुमप्रतिमा

अप्रस्तुतकारणाभिधानात् प्रस्तुतकार्य्यप्रतीतौ दर्शयति गच्छामीति। विदेशं गन्तुमुद्यतोऽपि कथं न गत इति पृच्छन्तं सुहृदं प्रति केनचिदुक्तमिदम्। 'अह गच्छमि' इति मया उक्ताया विदेशगमनायानुमतिं प्रार्थितया मृगदृशा हरिणनयनया मत्प्रियया, उद्रेकिणमत्यन्तविषादोद्रेकसूचकम्, निश्वासं त्यक्त्वा, वाष्पकलुषेण सहसैवो-त्पन्नाश्रुजलाविलेन, एकेन चक्षुषा मां तिर्य्यक् वक्रम्, अवेक्ष्य अवलोक्य हे मृगशिशो ! त्वया मयि अर्पितम् इयन्तं कालं यावत् दत्तम्, प्रेम स्नेहः, अद्य प्रियसंखीवृन्दे बध्यता स्थाप्यताम्, इत्थमनेन पुराकरेन स्नेहेन विवद्धितः परिषोषितो मृगाशिशु सोत्पासं सेषदृहास्यम् आभाषित उक्तः। इतः परं प्रियविच्छेदेनाहं मरिष्याम्येवेत्याशयः।

अत्रेति। अगमनरूपे गृह एवावस्थितिरूपे कार्य्ये प्रस्तुते इति शेषः। कारणमप्रस्तुतम् "अद्य प्रेम" इत्यादिरूपं मरणाभिप्रायव्यञ्जकवाक्यमित्यर्थः। तथा च गन्तुमुद्यतस्याप्यगमनं प्रति प्रियाया मरणाभिप्रायप्रकाश-

कवाक्यमेव हेतुरिति प्रस्तुतस्यागमनस्य कार्य्यत्वम्, अप्रस्तुतस्य तादृशवाक्यस्य च कारणत्वमित्याशयः। एवञ्च तादृशवाक्याभिधानादेव अगमनं जातमित प्रतीतेराप्रस्तुतप्रशंसेति बोध्यम्।

## विमला

गच्छामीति।—विदेशं गन्तुं कृतनिश्चयत्वेऽपि अगमने हेतुं प्रदर्शयतः कस्यचित् सखायं प्रति उक्तिरियम्। गच्छामि इति मया उक्तया मृगदृशा उद्रेकिणं—दीर्घं, निःश्वासं त्यक्त्वा वाष्पकलुषेण—अश्रुमलिनेन, एकेन चक्षुषा मां तिर्य्यक्—वक्रम्, अवेक्ष्य—दृष्ट्वा, अद्य मदपितं—मयि विन्यस्तं, प्रेम त्वया प्रियसखीवृन्दे बध्यताम्—अर्प्यताम्, इत्थम्—अनेन प्रकारेण, स्नेहेन विवर्द्धितः,—प्रतिपालितः, मृगशिशुः सोत्रासं—समनाक्स्मितं, सूक्ष्महासयुक्तम् इत्यर्थः, ("सोत्रासं समनाक्स्मितम्" इत्यमरः) आभाषितः,—कथितः। अद्य यावत् त्वामहं लालितवती, इतः परं प्रिये देशान्तरं गते तद्वियोगं सौढुनशक्ता जीवितं हास्यामीति मम सखीजनस्त्वां लालयिष्यतीति भावः। शार्दूलविक्रीड़ितं वृत्तम्।

अत्रेति।—अगमनरूपे कार्य्ये, जिज्ञासिते इति शेषः, कारणं—मृगशिशुं प्रति तादृगाभाषणं, नायिकाया मरणाभिप्रायव्यञ्जकं वाक्यरूपमिति भावः।

## लक्ष्मी

अप्रस्तुतकारणप्रतिपादनात् प्रस्तुतकार्यावगम्यत्वे उदाहरति—**गच्छामीति**। विदेशं गन्तुमुद्यन्तं सुहृदं प्रति 'गमनान्निवृत्तोऽसि किम्' इति मित्रेण पृष्टो यियासुर्गमननिवृत्तिहेतुं स्वप्रियावृत्तान्तं वर्णयति। अयमर्थः—'अहं गच्छामि' इति मया उक्तया विदेशप्रस्थानायानुमतिं प्रार्थितया मृगदृशा कुरङ्गलोचनया मत्प्रियया, उद्रेकिणं दीर्घविषादोद्रेकबोधकम्, निःश्वासं व्यक्त्वा, वाष्पेन सहसैवोत्पन्नाश्रुजलेन कलुषं तेन आविलं मलिनमिति यावत्; 'कलुषोऽनच्छ आविलः' इत्यमरः, एकेन चक्षुषा मां तिर्यक् वक्रम् अवेक्ष्य दृष्ट्वा, हे मृगशिशो! त्वया मयि अर्पितम् एतावत्कालपर्यन्तं स्थापितम्, प्रेम स्नेहः (कर्म) 'अद्य प्रियाः प्रीतिपात्रभूताः सख्यः प्रेम्णा गृहीता अन्या नायिकास्तासां वृन्दं समूहस्तत्र वध्यतां स्थाप्यताम्, इत्थमनेन प्रकारेण, स्नेहविवर्धितः प्रेम्णा परिपोषितः, मृगशिशुः हरिणशावकः, सोत्रासं सूक्ष्महासयुक्तम्, आभाषितः कथितः। प्रियायाः जीविते सति वैदेशिकानां मिलनं सम्भवति अहन्वितः परं प्रियवियोगेन कथमपि न जीविष्यामि किन्तु मरिष्याम्येवेतमृगशिशः हास्येन प्रतारितेत्यभिप्रायः। **शर्दूलविक्रीडितं** छन्दस्तल्लक्षणञ्चोक्तं प्राक्।

लक्ष्यार्थ प्रदर्शयति—अत्रेति। कस्यचित् स्वप्रियायाश्चेष्टितं वर्णयतः, अगमनरूपे 'गमनान्निवृत्तोऽसि किम्' इति गमननिवृत्तिरूपे कार्ये 'प्रस्तुते तदनभिधाय' इति शेषः, कारणं प्रियाया मरणाभिप्रायरूपमप्रस्तुतं निमित्तम्, अभिहितम् 'अद्य प्रेम' इत्यादिनोक्तमित्यर्थः। तथा च गन्तुं तत्परस्याप्यगमनं प्रति प्रियाया मरणाभिंप्रायसूचकवाक्यमेव करणमितिप्रस्तुतस्य गमनाभावस्य कार्यत्वम्, अप्रस्तुतस्य तथाविधवाक्यस्य च हेतुत्वमितिभावः। इत्थञ्च तथाविधवाक्यप्रतिपादनादेव गमनाभावो जात इत्यवगमादप्रस्तुतप्रशंसेत्यवगन्तव्यम्।

## रुचिरा

'**गच्छामि** साम्प्रतं गमिष्यामि। 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा।' ३/३/१३१ इति लट्। **इति**। **मया**। **उक्तया**। **मृगदृशा** मृगाक्ष्या। **उद्रेकिणं** दीर्घम्। **निःश्वासम्**। **त्यक्त्वा**। **बाष्पकलुषेण** बाष्पेणाञ्जनकलुषितेना-

श्रुणा कलुषं तेन मलिनं तेन। 'कलुषोऽनच्छ आविलः।' **इत्यमरः। एकेन। चक्षुषा। माम्। तिर्यक्** वक्रम्। **अवेक्ष्य** दृष्ट्वा। **अद्य। मदर्पितं** मय्यर्पितमिति तत्तथोक्तम्। **प्रेम** (कर्म)। **त्वया। प्रियसखीवृन्दे** प्रियाः प्रीतिपात्रभूताः सख्योऽनुरागेण गृहीता अन्या अङ्गनास्तासां वृन्दं समूहस्तत्र। **बध्यताम्। इत्थमानेन** प्रकारेण। **स्नेहविवर्धितः** स्नेहेन विवर्धितः परिपोषितः। **मृगशिशुर्मृगपोतः। सोत्रासं** साक्षेपम्। **आभाषितः।** कस्यचित् सखायं प्रतिस्वभाविप्रयाणश्रवणदुःखितकुपितायाः स्वोत्सङ्गस्थमृगशावकनिराकरणेन स्वप्रयाणं निषेधन्त्याश्चेष्टितवर्णनमिदम्। अत्र शार्दूलविक्रीडितं वृत्तम्॥ १९६॥'

लक्ष्यार्थं निर्दिशति-**अत्रेत्यादिना।**

**अत्र। कस्यचित्** (स्वप्रियायाश्चेष्टितं वर्णयतः)। **अगमनरूपे** गमनावरोधात्मनि। **कार्य्ये।** प्रस्तुते तदनभिधाय' इति शेषः। **कारणं** प्रेयस्या उद्वेगाधिक्यरूपो हेतुः। **अभिहितम्।** 'अद्य प्रेमे'त्यादिनेति शेषः। तथा च-प्रेयस्या उद्वेगाधिक्यरूपादिभिहितादप्रस्तुतात् कारणात् प्रेयसो गमनावरोधरूपं प्रस्तुतं कार्य्यं सूचितमिति निष्कृष्टोऽर्थः।

तुल्ये प्रस्तुते तुल्याभिधाने च द्विधा श्लेषमूला सादृश्यमात्रमूला च। श्लेषमूला समासोक्तिवद्विशेषणमात्रस्यश्लेषे श्लेषवद्विशेष्यस्यापि श्लेषे भवतीति द्विधा। क्रमेण यथा—

'सहकारः सदामोदो वसन्तश्रीसमन्वितः।

समुज्ज्वलरुचिः श्रीमान्प्रभूतोत्कलिकाकुलः॥'

अत्र विशेषणमात्रश्लेषवशादप्रस्तुतात्सहकारात्कस्यचित्प्रस्तुतस्य नायकस्य प्रतीतिः।

---

## विवृतिः

**विशेषणमात्रस्येति**। मात्रपदेन विशेष्यव्यवच्छेदः। विशेषस्यापीत्यपिना विशेषणपरिग्रहः॥ **आमोदः** सौरभम्, आनन्दश्च। वसन्तकालोपकरणपल्लवादियुक्तः। **सम्य**गुज्ज्वला रुचिर्दीप्तिर्यस्य सः, पक्षे सम्यगुज्ज्वले श्रृङ्गारे रूचिरभिलाषो यस्य सः। **श्रीः** शोभा, वेषरचना च। प्रभूताभिः प्रचुराभिरुत्कलिकाभिरुद्गतमुकुलैराकुलो व्याप्तः। पक्षे—प्रकर्षेण भूतया उत्कलिकया नायिकोत्कण्ठया आकुलो व्याकुलः।

## विज्ञप्रिया

**समात्सममिति**। पञ्चमप्रकारस्य त्रैविध्यं वक्तुमादौ द्वैविध्यमाह-**श्लेषमूला सादृश्यमूला चेति**। श्लेषमूला च द्विधा भवतीत्याह—**समासोक्तिवदिति**। समासोक्तौ हि विशेषस्यापि श्लेष उपमाध्वनित्वापत्त्या न विशेष्ये श्लेषः। प्रकारान्तरमाह—**श्लेषवदिति**। शब्दालङ्कारविशेष्यवदित्यर्थः। "प्रतिकूलतामुपगते हि वधौ" इति विशेष्यपदेपि श्लेषः।

अत्र विशेषणमात्रश्लेषे आह—**सहकार** इति। सहकार आम्रवृक्षो वसन्तश्रीसमाश्रितः सन् प्रभूताभिर्बहुभिरुद्गताभिः कलिकाभिः मुकुलैः आकुलो व्याप्तः सन् सदामोदो विद्यमानोत्तमगन्धस्तत एव समुज्ज्वलदीप्तिस्तत एव श्रीमांश्च। **अत्रेति**। नायकोऽपि वसन्तलक्ष्म्याऽऽश्रितः सन् आमोदेन हर्षेण समुज्ज्वले सम्यक् श्रृङ्गारे रुचिर्यस्य तादृशः। "श्रृङ्गारशुचिरुज्ज्वलः" इत्यमरः। श्रीमान् अत एवोत्कलिकया उत्कण्ठयाऽन्वितः। "उत्कण्ठोत्कलिके समे" इति कोषः। **कस्यचिदिति**। उक्तविशेषणवत् इत्यर्थः।

## लोचन

**श्लेषमूलेति**। श्लेषोऽर्थश्लेषाभासः प्रस्तुतस्य गम्यत्वात्।

आमोदः अतिनिर्हारी गन्धः, हर्षश्च। उत्कलिका उद्गतकोरक उत्कण्ठा च।

## कुसुमप्रतिमा

इदानीमप्रस्तुतात् समात् प्रस्तुतस्य समस्य प्रतीतामुदाहर्त्तु तद्विभजते तुल्य इति। तुल्ये वस्तुनि। तुल्यस्य अप्रस्तुतस्य वस्तुनः अभिदाने इत्यर्थः। विशेष्यस्यापीत्यपिशब्दात् विशेषणस्यापीत्यर्थः। एतेन तुल्यात्तुल्यप्रतीतौ सादृश्यमात्रमूलत्वे एकविधा श्लेषमूलत्वे च द्विविधेति समुदायेन त्रिविधेति बोध्यम्।

केवलविशेषणश्लेषे उदाहरति सहकार इति। भाविनो वरस्यावस्थां पृच्छन्तीं नायिकां प्रति चूततरुवर्णनच्छलेन तत्संख्या वरवर्णनियम्। सदा सर्वदैव आमोदः कुसुमविकासात् सौरभ दैन्याभावात् प्रमोदश्च यस्य स सदामोदः; वसन्तश्रिया वसन्तकालस्वभावादुतपन्ननूतनपल्लवादिशोभया समन्वितः, अन्यत्र तु वसन्त इव श्रिया स्वाभाविकसौन्दर्य्येण समन्वितः; अतएव समुज्ज्वला रुचिः सर्वप्रकारा कान्तिर्यस्य सः, अन्यत्र तु समुज्ज्वले सम्यक् श्रृङ्गारे रुचिः स्पृहा यस्य सः; "श्रृङ्गारः शुचिरुज्ज्वलः" इत्यमरः, श्रीमान् कुसुमसम्पत्तिमान् धनसम्पत्तिमांश्च; तथा प्रभूताभिर्बहुलाभिः उत्कालिकाभिः उत्पन्नकोरकैः सुरतोत्कण्ठाभिश्र आकुलो व्याप्तः अधीरश्च; सहकार आम्रवृक्षः।

अत्रेति। मात्रपदेन सहकार इति विशेष्यस्य तु न श्लेष इति दर्शितम्।

## विमला

तुल्याभिधाने इति।—तुल्यस्य अप्रस्तुतस्य अभिधाने इत्यर्थः। विशेषणमात्रश्लेषे इति मात्रपदेन विशेष्यव्यवच्छेदः। विशेष्यस्यापीत्यपिना विशेषणपरिग्रहः इति ज्ञेयम्।

सहकार इति।—सहकारः,—अतिशयितसौरभः, आम्र इत्यर्थः, अत एव सदा—शश्वत, आमोद,—गन्धी यस्य तथोक्तः; यद्वा—सतः,—काकादिः खलेभ्यो भिन्नान् कोकिलादीन् आमोदयतीति तथोक्तः, अन्यत्र—सदा आमोदः,—हर्षी यस्य तथोक्तः, ("आमोदो हर्षगन्धयोः" इति मेदिनी) वसन्तस्य श्रिया—शोभया, पुष्पपल्लवादिजनितया इति भावः, समन्वितः,—युक्तः, वसन्तकालोचितवेशसमन्वितश्च, समुज्ज्वला—भासुरा, रुचिः,—कान्तिः, अन्यत्र—समुज्ज्वले—श्रृङ्गारे, रुचिः,—अभिलाषो यस्य तथोक्तः, ("रुचिः स्त्री दीप्तौ शोभायामभिष्वङ्गाभिलाषयोः, इति मेदिनी) श्रीमान्—श्रीः,—शोभा, वेशरचना च तद्वान्, उभयत्रापि सुदर्शन इत्यर्थः, तथा प्रभूताभिः,—वह्वीभिः उत्कलिकाभिः,—उद्गतमुकुलैः, आकुलः,—व्याप्तः, अन्यत्र—प्रकर्षेण भूतया उत्कलिकया—नायिकोत्कण्ठया, आकुलः,—व्याकुलः।

## लक्ष्मी

सम्प्रति अप्रस्तुतात्समात् प्रस्तुतस्य समस्य गम्यमानत्वे उदाहर्त्तुं तद्विभागमाह—**तुल्य इति**। तुल्ये समे पदार्थे। तुल्यस्य अप्रस्तुतस्य पदार्थस्याभिधानं प्रतिपादनं तत्रेत्यर्थः। द्विधा 'अप्रस्तुतप्रशंसे'ति शेषः। तदेव स्पष्टयति—**श्लेषमूलेति**। श्लेषमात्रं मूलेत्यत्र मात्रपदं श्लेषव्यवच्छेदार्थम्। विशेषणमात्रस्य श्लेष इत्यत्र मात्रपदं विशेष्यव्यवच्छेदार्थम्। विशेष्यस्यापीत्यपिपदात् विशेषणस्यापीत्यर्थः। इत्यञ्च समात् समप्रतीतौ सादृश्यमात्रमूलत्वे एकप्रकारा श्लेषमूलत्वे च द्विप्रकारेति साकल्येन त्रिप्रकारेत्यवधेयम्।

विशेषणमात्रश्लेषे उदाहरति—**सहकार** इति। भाविवरस्वरूपं पृच्छन्तीं सहचरीं प्रति चूतद्रुमवर्णनव्याजेन तत्संख्या वरवर्णनमिदम्। सदा सन्नामोदः कुसुमविकासात् सौरभ खेदाभावादानन्दश्च यस्य स सदामोदः, आमोदः सोऽतिनिर्हारी'ति...'प्रमोदामोदसम्मदा' इति चामरः, वसन्तस्य वसन्तसमयस्य श्रीः स्वभावात्प्रादुर्भूताभिनवकिसलयादिशोभा तया समन्वितः, पक्षे वसन्त इव श्रिया प्राकृतिकसौन्दर्येण समन्वितो युक्तः वसन्तकालोचितवेशशालीं वा,

श्रीवेश(ष)रचना शोभा भारतीसरलद्रुमे।

लक्ष्म्यां त्रिवर्गसम्पत्तौ वेशोपकरणे मतौ ॥'इति विश्वमेदिन्यौ;

अतएव समुज्ज्वला मनोरमा रुचिः सर्वप्रकारा कान्तिर्यस्य सः, पक्षे तु समुज्ज्वले सम्यक्श्रृङ्गारे रुचिरभिलाषो यस्य सः, 'श्रृङ्गारः शुचिरुज्ज्वलः' इत्यमरः, 'उज्ज्वलस्तु विकासिनि, श्रृङ्गारे विशदे दीप्तेऽपि' इति हैमश्च, श्रीमान् कुसुमसम्पत्तिमान् धनसम्पत्तिमांश्च; तथा प्रभूताः प्रचुराः उत्कलिकाः उत्पन्नकोरकास्ताभिः आकुलो व्याप्तः प्रभूता वा उत्कण्ठा कान्तासम्भोगविषयिणी अभिलाषा तया आकुल अधीरश्च 'उत्कण्ठोत्कलिके समे' इत्यमरः, सहकार आम्रविशेषवृक्षः, 'सहकारोऽतिसौरभः' इत्यमरः ।

लक्ष्यार्थमुपपादयति—**अत्रेति** । सहकार इति विशेष्यस्य तु न श्लेष इति मात्रपदेन सूचितम्, कस्यचित् उक्तविशेषणवतः । न च समासोक्तिप्रसङ्गः नायकस्य गम्यत्वेऽपि तद्व्यवहारसमारोपानुदयात् ।

## रुचिरा

समात् समे प्रस्तुतेऽस्या भेदानाह—**तुल्ये** इत्यादिना ।

**तुल्ये** समे । **प्रस्तुते** । **तुल्याभिधाने** तुल्यस्य समस्य अप्रस्तुतस्याभिधानं तत्र । **च** । 'अप्रस्तुतप्रशंसे'ति शेषः । **द्विधा** । तदेव स्पष्टयति-**श्लेषमूला** । **सादृश्यमात्रमूला** । मात्रपदेन श्लेषस्य व्यवच्छेदः । **च** । **श्लेषमूला** । **अपि** । **समासोक्तिवत्** समासोक्तिरिव । **विशेषणमात्रश्लेषे** । मात्रपदेन विशेष्यस्य व्यवच्छेदः । 'सम्भवती'ति शेषः । **श्लेषवत्** श्लेष इव । **विशेषस्य** । **अपि** 'विशेषणस्य चे'त्यर्थः । **श्लेषे** । **भवति** । **इति** । **द्विधा** ।

उदाहर्तुमुपक्रमते—**क्रमेणेत्यादिना** । स्पष्टम् । '**सहकार** इत्यादि ।

'**सदामोदः** सन्नामोदः सौरभमानन्दो वा यस्य तथोक्तः । 'आमोदः सोऽतिनिर्हारी'ति '...प्रमोदामोदसम्मदाः' इति चामरः । **वसन्तश्रीसमन्वितो** वसन्तस्य श्रीः शोभा वेशरचना वा तथा समन्वितो वसन्तशोभाया हेतुत्वेनावस्थितः, वसन्तकालोचितवेशशाली वेति भावः । 'श्रीर्वेश (ष) रचना शोभा भारतीसरलद्रुमे । लक्ष्म्यां त्रिवगसम्पत्तौ वेषोपकरणे मतौ ॥' इति विश्वमेदिन्यौ । **समुज्ज्वलरुचिः** सम्यगुज्ज्वला मनोरमा रुचिर्दीप्तिः, सम्यगुज्ज्वले श्रृङ्गारे रुचिरभिलाषो वा यस्य तथोक्तः । 'उज्ज्वलस्तु विकसिनि । श्रृङ्गारे विशदे दीप्तेऽपी'ति हैमः । **श्रीमान् प्रभूतोत्कलिकाकुलः** प्रभूताः प्रचुरा या उत्कलिका उद्गताः कलिकास्ताभिराकुलो व्याप्तः प्रभूता योत्कलिकोत्कण्ठा कान्तासम्भोगविषयाऽभिलाषा तयाऽऽकुलः परतन्त्रः । 'उत्कण्ठोत्कलिके समे ।' इत्यमरः । **सहकार** आम्रविशेषः । 'सहकारोऽतिसौरभः ।' इत्यमरः ॥ १९७ ॥'

लक्ष्यार्थं निर्दिशति-**अत्रेत्यादिना** । स्पष्टम् । न चेयं समासोक्तिः, नायकप्रतीतावपि तद्व्यवहाररोपानुदयात् ।

**'पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि**
**यायाद्यदि प्रणयने न महानपि स्यात्।**
**अभ्युद्धरेत्तदपि विश्वमितीदृशीयं**
**केनापि दिक्प्रकटिता पुरुषोत्तमेन ॥'**

अत्र पुरुषोत्तमपदेन विशेष्येणापि श्लिष्टेन प्रचुरप्रसिध्द्या प्रथमं विष्णुरेव बोध्यते। तेन वर्णनीयः कश्चित्पुरुषः प्रतीयते।

---

## विवृतिः

**पुंस्त्वादपीति**। पुरुषभावाद् यदि प्रविचलेत् स्त्री यदि भवेत्। अधः पातालमपि यदि यायात्। प्रणयने याचननिमित्तं यदि महान्न स्यात्, सर्वः स्यात्। तदपि विश्वमुद्धरेत्। इतीयं दिक्। ईदृशोऽयं प्रकारः केनाप्यनिर्वचनीयेन पुरुषोत्तमेन विष्णुना प्रकटिता दर्शिता। तेन हि दैत्यहृतं राज्यमुद्धर्तुं मोहिनीरूपस्त्रीत्वं प्राप्तम्। जलप्लुतं विश्वमुद्धर्तुं वराहरूपेण पातालं गतम्। बलिदैत्यापहृतं राज्यमुद्धर्तुं पादत्रयभूमियाचननिमित्तं वामनत्वं प्राप्तम्। राजपक्षे—पुंस्त्वात् पौरुषाद् यदि प्रविचलेद् यद्यधो नीचत्वमपि यायाद् याचननिमित्तं यदि महिमशून्यः स्यात् तदपि विश्वं स्वराज्यमुद्धरेदित्ययं प्रकारश्च केनापि पुरुषोत्तमनाम्ना राज्ञा प्रकटितः ॥ **विशेष्येणापि** विशेष्यवाचकेनापि। **प्रचुरप्रसिद्ध्या** भूरिप्रयोगेण, अतिप्रसिध्द्या वा। प्रकृतस्यैवात्र व्यङ्ग्यत्वं न तूपमानस्येति नोपमाध्वनित्वम्। द्वयोरभिधेयत्वाभावान्न श्लेषत्वम् ॥

## विज्ञप्रिया

विशेष्यपदश्लेषे त्वाह—**पुंस्त्वादिति**। सपत्नापहृतं राज्यं येन केनाऽपि प्रकारान्तरेणोद्धर्तुं कञ्चिद्राजानमुपदिशतः कस्यचिदुक्तिरियम्। केनाऽप्यनिर्वचनीयेन पुरुषोत्तमेन नारायणेन ईदृशीत्येवंप्रकारा इयं दिक् अयं प्रकारः प्रकटिता दर्शिता। कीदृशी दिगित्यत्र आह—**पुंस्त्वादिति**। पुंस्त्वात् पुरुषभावाद् यदि प्रविचलेद् यदि स्यात्तदपि विश्वं संसारमुद्धरेत्। पुरा ह्यसुराहृतं राज्यं मोहिनीरूपा कन्या भूत्वा नारायणेनोद्धृतम्। तथा यद्यधोऽपि यायात्तदपीत्यर्थः—पुरा वराहमूर्त्या पातालं गत्वा तेन पृथिव्या उद्धृतत्वात्। तथा यदि प्रणयने याचने याचननिमित्ते न महान् लघुः स्यात् तदपीत्यर्थः। वलिदैत्यापहृतराज्यस्य उद्धरणाय तेन वामनीभावरूपलघुत्वप्राप्तेः। एवं च त्वयापि पुरुषश्रेष्ठेन पुंस्त्वात् पौरुषाञ्चलेनापि निकृष्टताप्राप्तिरूपताधः पातेनापि याचनार्थं लघुत्वप्राप्त्याऽपि सपत्नापहृतं राज्यमर्ज्यतामिति प्रकृतव्यञ्जना।

**प्रचुरप्रसिद्ध्या प्रथममिति**। तेन तुल्यकालबोधश्लेषाव्यपदेशः। इदमुपलक्षणम्। अप्रस्तुतेश्वरस्यैव प्रथमं बोधितत्वात् तात्पर्य्याच्चेति बोध्यम्।

## लोचन

**पुंस्त्वादिति**। अप्रस्तुतवासुदेवपक्षे, पुंस्त्वात् प्रविचलनममृतहरणकाले स्त्रीरूपधारित्वाद् अधोगमनं नीचताप्राप्तिः। प्रणयने प्रीतिविषये महान् उत्तमो यदि न स्यात्। पुरुषोत्तमेन पुरुषश्रेष्ठेन।

श्लिष्टेन द्व्यर्थेन। **प्रचुरप्रसिद्ध्येति**। सामग्रीवशात्प्रकरणमपास्यैकदेशप्रसिद्धेः समुदायप्रसिद्धिर्गरीयसीति नयेनेति भावः। यत्पुनरुक्तं राघवानन्दैः पुंस्त्वादिशब्दानाम भगवन्तं प्रत्यधिकान्वयित्वमिति तन्न, प्रमाणाभावात्। प्रत्युत प्रकरणेन वर्णनीयार्थनियमाच्च।

## कुसुमप्रतिमा

विशेष्यस्यापि श्लेषे प्रदर्शयति पुंस्त्वादिति। भल्लटशतके राजवर्णनामुपक्रम्य पठितोऽयं श्लोकः। यदि पुंस्त्वात् पुरुषभावादपि प्रविचलेत् स्खलितो भवेत् स्त्री अपि स्यादित्यर्थः, अन्यत्र तु पुरुषत्वहीनोऽपि यदि स्यात्; यदि अधः पातालमपि नरकमपि च यायात् गच्छेत्; यदि च प्रणयने परान्तिके प्रार्थनायां महानपि न स्यात् क्षुद्रोऽपि स्यात्; तदपि तथापि विश्वं पृथिवीं निजराज्यञ्च अभ्युद्धरेत् असुराधिकारात् प्रलयजलधिजलाच्च, अन्यत्र तु शत्रु हस्तादिति भावः। अतएव इतादृशी एवम्प्रकारा इयं दिक् दृढ़प्रतिज्ञातरूपा रीतिः, केनापि अनिर्वचननीयेन, पुरुषोत्तमेन विष्णुना, पुरुषश्रेष्ठेन केनचित् राज्ञा च प्रकटिता प्रकाशिता।

अत्रेति। न केवलं पुंस्त्वादित्यादिविशेषणेन, किन्तु पुरुषोत्तमेनेति विशेष्येणापीत्यर्थः। प्रचुरप्रसिद्ध्या भूरिप्रयोगादिति भावः। विष्णुरेव अप्रस्तुत इति शेषः। वर्णनीयो वर्णनोपक्रमेण प्रस्तुतः। अत्र प्रस्तुतस्यैव राज्ञो व्यङ्ग्यत्वादुपमानत्वाविवक्षणाच्च नोपमाध्वनिः। उभयोः प्रस्तुतत्वाभावाच्च न श्लेष इति ज्ञेयम्।

## विमला

पुंस्त्वादिति।—पुंस्त्वात्—पुरुषभावात्, अपि यदि प्रविचलेत्—भृश्येत् पुरुषत्वं परित्यज्य यदि स्त्री अपि स्यादिति भावः, अधोऽपि—पातालमपि, यदि यायात्—गच्छेत्, प्रणयने—यात्रायां, याचननिमित्तमित्यर्थः, यदि महान् अपि न स्यात्—खर्चः स्यादित्यर्थः तदपि—तथाऽपि, विश्वं—जगत, अभ्युद्धरेत् इति ईदृशौ—एवम्प्रकारा, इयं दिक्,—नीतिः, केनापि—अनिर्वचनीयेन इत्यर्थः, पुरुषोत्तमेन—पुरुषेषु उत्तमंस्तथाविधेन, विष्णुना इत्यर्थः, प्रकटिता—दर्शिता। राजपक्षे अयं भावः—यदि पुंस्त्वमपि विनश्यते तर्हि तत् विनश्यतु; यदि अधोऽपि (नरकेऽपि) पतनं स्यात् तर्हि तत् भवतु, यदि याञ्चया खर्वत्वमपि स्यात् तर्हि तदपि अस्तु, एवं सर्वदा विपङ्क्यो विपदापत्तावपि परं सङ्कटतया विश्व—स्ववाज्यम्, उद्धरेदिति केनापि पुरुपोत्तमेन स्वस्य विश्वभरत्वं प्रकटयता पुरुषोत्तमनाम्ना संज्ञेत्यर्थः, नीतिः प्रकटितेति। वसन्ततिलकं वृत्तम्। इदं भल्लटशतकस्य।

अत्रेति।—प्रचुरप्रसिद्ध्या—भूरिप्रयोगेण, बहुशः ख्यात्या वा। विष्णु—रेवेति।—तेन हि दैत्यहृतामृतहरणात् मोहिनीमूर्त्तिपरिग्रहः कृतः। महार्णव निमग्नां धरामुद्धर्तु वराहरूपेण पातालं प्रविष्टम्। बलिराजहृतं त्रैलोक्यमुद्धतु वामनरूपेण याञ्चाऽपि कृता इति द्रष्टव्यम्। प्रकृतस्यैवात्र व्यङ्ग्यत्वं, न तूपमानस्यति नोपमाध्वनित्वं, द्वयोरभिधेयत्वाभावान्न श्लेषत्वम्।

## लक्ष्मी

विशेष्यस्यापि श्लेषे उदाहरति—**पुंस्त्वादिति**। भल्लटकविकृते भल्लटशतके सप्तनापहतं राज्यमुद्धर्तु कश्चिंचन्नृपमुद्वेजयतस्तन्मन्त्रिण उक्तिरियम्। यदि पुंस्त्वात् पुरुषचिन्हादपि प्रविचलेत् चलनं प्राप्नुयात् मोहिनी रूपमङ्गीकृत्य दैत्यगणादमृतहरणेन जगतो रक्षणादिति भावः। अधः पातालमपि यदि यायात् गच्छेत् पृथ्वीरक्षणाय कूर्मस्वरूपेण पातालगमनादितिभावः। जलप्लुतं पृथ्वीमुद्धर्तुं वराहमूर्त्या च पातालगमनादित्यभिप्रायः। प्रणयनें याचननिमित्तं यदि न महान् महत्त्वरहितो लघुरपि स्यात्, वलिसकाशाद् वामनत्वं प्राप्य विश्वसंरक्षणादित्याशयः। न महानिति। 'नैकधा' 'नारायणः' इत्यादिवत् नशब्देन सह समासः। तदपि तथापि विश्वं संसारं सर्वलोकमिति-यावत् अभ्युद्धरेत् दैत्याधिकारात् प्रलयजलधिजलाञ्च रक्षेत् इति ईदृशी इयं दिक् मार्गः यद्वा दिक् प्रकारः नीतिरितितात्पर्यम्, केनापि अनिर्वचनीयेन पुरुषोत्तमेन विष्णुना प्रकटिता प्रकाशिता दर्शितेत्यर्थः। अत्र

'उत्तमः पुरुषन्त्वन्यः परमात्मेत्युदाहृतः।'

'यस्मात्क्षरमतीतोऽहमीश्वरादाप चोत्तमः।

अतोऽस्मि लोके वेदे च प्रथितः पुरुषोतमः।

इत्युक्तदिशोत्तमः पुरुषः पुरुषोत्तम इति व्युत्पन्नोऽयं 'हरिर्यथैकः पुरुषोत्तमः स्मृतः' इत्यभिजनोक्त्या विष्णु मेवाभिधत्ते, इत्यप्रस्तुतविष्णुपक्षेऽर्थोऽभिहितः, प्रस्तुतराजपक्षे तु पुंस्त्वात् पौरुषादपि शौर्यादपि यदि प्रविचलेत् तद्विहीनो भवेत्, यद्यधः सम्पद् भ्रंशेन निकृष्टत्वमपि यायात् प्राप्नुयात्, प्रणयने याचने यदि न महान् महत्त्वशून्योऽपि भवेत् तदपि तथापि सपत्नापहतं विश्वं स्वराज्यम् अभ्युद्धरेत् शत्रुहस्ताद्रक्षेत्, ईदृशी इयं दिक् केनापि अन्येन पुरुषोत्तमेन पुरुषेषूत्तमः पुरुषोत्तम इति व्युत्पन्नशब्देन। 'परोपकरणं नित्यं यतन्ते ये नरोत्तमाः' इत्युक्तदिशा पुरुषश्रेष्ठेनेत्यर्थः प्रकटिता प्रकाशितेत्यर्थः। जगदुपकृतये सर्वमपि यदि स्वमहत्वं नश्येत्तथापि न ततो विरज्येतेति भवतापि तादृशभावेन स्वराज्यमद्रध्रियतामित्याशयः। **वसन्ततिलकाच्छन्दल्लक्षणं** चोक्तं प्राक्।

उदाहृतमर्थमुपपादयति—**अत्रेति**। विशेष्येणापि न केवलं पुंस्त्वादिना विशेषणेनैव किन्तु पुरुषोत्तमेने-तिविशेष्येणाऽपीत्यर्थः। प्रचुरप्रसिद्धया भूरिप्रयोगेणातिप्रसिद्धया वा। विष्णुरेव 'अप्रस्तुत' इति शेषः, बोध्यते अभिधीयते। वर्णनीयो वर्णनोपक्रमेण प्रस्तुतः। अत्र प्रकृतस्यैव राज्ञो व्यङ्ग्यत्वं न तूपमानस्येति नोपमाध्वनित्यम्। ननु प्रकरणेन राजरूपः प्रस्तुतोऽर्थ एव प्रथमं प्रतीयते ततः कथमत्राप्रस्तुतप्रशंसा अप्रस्तुतार्थस्य प्रथमतः प्रतीयमानत्वे एवाप्रस्तुतप्रशंसायाः सम्भवादितिचेत्? अत्रोच्यते पुरुषोत्तमादिशब्दानां सत्पुरुषादिरूपे प्रस्तुतेऽर्थे यौगिकीश-क्तिरितिप्रकरणादिसहितामपि तां बाधित्वा अभिधाशक्तिर्नारायणादिरूपप्रस्तुतमेवार्थ प्रथममेव प्रत्याययति तत-श्चाप्रस्तुतात् प्रस्तुतार्थबोध इति। यत्र तूभयस्मिन्नेवाभिधावृत्तेः सम्भवस्तत्रैण प्रकरणादिकं नियामकम्, यत्र पुनरेकस्मिन् अभिधा अपरस्मिन् यौगिकी शक्तिस्तत्राभिधैव बलवती प्रकरणादिसहितामपि अपरां यौगिकीं शक्तिं बाधते 'अवयवशक्तेः समुदायशक्तिर्वलीयसी' इति न्यायात्। अतएव नात्र श्लेषोऽपि उभयार्थस्यानभिधेयत्वात् प्रकरणाद्यनियमाभावाच्चेति स्पष्टं विवरणादिषु।

यथा वा—

**'पुरा सरसि मानसे विकचसारसालस्खलत्**

**परागसुरभीकृते वयसि यस्य यातं वयः।**

न पल्वलजलेऽधुना मिलदनेकभेकाकुले

मरालकुलनायकः कथय रे कथं वर्त्तताम् ॥' इति ।

## रुचिरा

**'यदि** । **पुंस्त्वात्** पुरुषत्वात् । **अपि** (असम्भवद्योतकमिदम्) । **प्रविचलेत्** प्रकर्षेण भ्रश्येत् । **यदि** । **अधः** । **अपि** । **यायाद्** गच्छेत् । **यदि** । **प्रणयने** याचने । **महान्** । **अपि** । **न** । **स्यात्** । **तत्** । तर्हि-**अपि** । **विश्वम्** । **अभ्युद्धरेत्** । **इतीदृशी**त्येवम्भूता । **केनापि** केनचित् । **पुरुषोत्तमेन** । **इयम्** । **दिक्** नीतिः । **प्रकटिता** । **जगदुपकृतये** सर्वमपि स्वमहत्त्वं नश्येत्तदपि तथाऽपि न ततो विरज्येतेति भावः । भल्लटशतकस्येदं पद्यम् । वसन्ततिलकं वृत्तम्, एतल्लक्षणं चोक्तं प्राक् ॥ १९८ ॥'

उदाहृतमर्थं निर्दिशति-**अत्र** । **'पुरुषोत्तमेने'ति पदेन** तदभिन्नेन । **विशेष्येण** । **अपि** न केवलं 'पुंस्त्वा'दित्यादिना विशेषणेनैवेति भावः । **श्लिष्टेन** । **प्रथमम्** । **प्रचुरप्रसिद्ध्या** भूरिप्रयोगेणातिप्रसिद्ध्या वा । **विष्णुः** । **एव** । **बोध्यते** । प्रतिपाद्यते । **तेन** । **वर्णनीयः** प्रस्तुतः । **कश्चित्** । **पुरुषः** । **प्रतीयते** । इदमुक्तम्—'उत्तमः पुरुषस्त्वन्यः' इत्युक्तदिशोत्तमः पुरुष इति पुरुषोत्तम इति व्युत्पन्नोऽयं 'हरिर्यथैकः पुरुषोत्तमः स्मृतः' इत्यभिजनोक्तया विष्णुमेवाभिधत्ते, पुरुषेषूत्तम इति पुरुषोत्तम इति व्युत्पन्नोऽयं पुनः शब्दः 'परोपकरणे नित्यं यतन्ते ये नरोत्तमाः' इति पुरुषविशेषम्; इत्येवमेतस्य श्लिष्टस्य विशेष्यस्य महिम्ना 'पुंस्त्वा'दित्याद्यपि श्लिष्टम्, तथा च-पुंस्त्वात् पुरुषचिन्हवत्त्वादपि प्रविचलेत् स्त्रीत्वमपि गृह्णीयात्, अधः पातालमपि गच्छेत्, याच्ञया लघुत्वमपि भवेत्, किन्तु विश्वं यथातथमुद्धरेत् इति मार्गो मोहिनीरूपं धृतवता पृथ्वीमुद्धर्त्तुं पातालं गतवता देवराज्यसमुन्नतये बलेर्याच्ञायां वामनत्वं प्रकटितवता पुरुषोत्तमेन 'अहमिव जगदुद्धरे'दिति मार्गः प्रकटित इत्यभिहितोऽप्रस्तुतोऽर्थः 'कदाचित् पुरुषत्वात् पौरुषार्थतोऽपि (पौरुषं कुर्वणोऽपि) भ्रश्येत् (हतार्थः स्यात्) नीचतामपि गच्छेत् याचनया यद्यपि महत्त्वं नश्यति तथाऽपि परोपकारम् 'उदारचरितानां तु वसुधैव कुटुम्बकम् ।' इत्युक्तदिशा कुर्य्यात् इति नीतिः केनापि महनीयेन तथा यतमानेन प्रकटित इति प्रस्तुतमर्थमवगमयति । एनयोश्च समत्वात् समेनाप्रस्तुतेन समः प्रस्तुतोऽर्थो व्यज्यते । इति ।

**सादृश्यमात्रमूला यथा—**

**'एकः कपोतपोतः शतशः श्येनाः क्षुधाभिधावन्ति।**

**अम्बरमावृतिशून्यं हरहर शरणं विधेः करुणा॥'**

**अत्र कपोतादप्रस्तुतात्कश्चित्प्रस्तुतः प्रतीयते। इयं च क्वचिद्वैधर्म्येणापि भवति।**

---

## विवृतिः

**कश्चित्प्रस्तुत** इति। यस्य बहवः शत्रवो गोपनस्थानं नास्ति स इत्यर्थः॥ इयं च अप्रस्तुतप्रशंसा च। **वैधर्म्येणापि** विधर्मान्तरव्यञ्जकवैधर्म्यविशिष्टस्य कथनेनापि। एवं च षट्प्रकारा अप्रस्तुतप्रशंसेति फलितम्।

## विज्ञप्रिया

**एक** इति। पोतः शिशुः। क्षुधेति तृतीयान्तम्। **अत्रेति**। कश्चिदत्र बहुदस्युवेष्टितः पलायनासमर्थो विधिकरणाशरणं प्राप्तो बोध्यः।

## लोचन

सादृश्यमात्रमूला नतु विशेषणादिद्व्यर्थताहेतुका।

उभयरूपता, अंशतः सम्भवित्वादंशतश्चासम्भवित्वादयमलङ्कारः।

## कुसुमप्रतिमा

एक इति बहुभिः शत्रुभिराक्रान्तमसहायमेकं राजकुमारमुपक्रम्य हताशहृदयस्य कस्यचिदुक्तिरियम्। एको निःसहायः कपोतपोतः पारावतशिशुः। इतश्च शतशो बहुशतसंख्यकाः, श्येनास्तदाख्याः पक्षिणः क्षुवा क्षुधया अभिधावन्ति त भक्षयितुमिति शेषः। तर्हि आकाशस्य कस्मिंश्चिदशेपलायतामित्याह अम्बरमिति। अम्बरमाकाशम्, आवृतिशून्यम् आवरणरहितम्; अतः पलायनसम्भावनापि नास्तीति भावः। हर! हर! शिव! विधेः करुणा विधातुदयैव शरणं रक्षित्री।

अत्रेति। कश्चिन्निःसहायो बालक इत्यर्थः।

## विमला

एक इति।—एकः,—असहाय इत्यर्थः, कपोतपीतः,—पारावतशावकः, शिशुः कपोत इति यावत्, शतशः,—बहुशः, श्यनाः,—शशादनाख्याः पक्षिविशेषाः, ("अथ शशादनः पत्रौ श्येनः" इत्यमरः) क्षुधा—क्षुधया, अभिधावन्ति—द्रुतमागच्छन्ति, एनं प्रतीति शेषः, अम्बरम्—आकाशम्, आवृतिशून्यं—निरावरणं, हरि हरि—इदं खेदसूचकमव्ययं, विधेः करुणा शरणं—रक्षित्रौ, विधातैवास्येदानीं रक्षणक्षम इति भावः। अत्रार्य्याच्छन्दः।

अत्रेति । कश्चित प्रस्तुत इति ।—प्रस्तुतः,—आपन्नः, यस्य बहवः शत्रवः, गोपनस्थानं नास्ति, स इत्यर्थः, बहुशत्रुपरिवृत इति भावः । इयञ्च—अप्रस्तुतप्रशंसा च, वैधर्म्येणापि—विधर्मान्तरव्यञ्जकवैधर्म्यविशिष्टस्य कथनेनापि इत्यर्थः । एवञ्च षट्प्रकारा अप्रस्तुतप्रशंसेति फलितम् ।

## लक्ष्मी

इत्थं द्विविधां श्लेषमूलामुदाहृत्य सादृश्यमात्रमूलामुदाहरति—एक इति । अनेकदस्युभिरभिभूतमेकाकिनं कमपि बालकमवलोक्य कस्यचिन्निराशहृदयस्योक्तिरियम् । एकोऽसहायः 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा' इत्यमरः । कपोतपोतः पारावतशिशुः इतश्च शतशोऽनेकशतसंख्याकाः, श्येना मांसभक्षिणस्तदाख्याः पक्षिविशेषाः, क्षुधा बुभुक्षया अभिधावन्ति खादयितुमिति शेषः । ननु विहायसः कस्मिंश्चिद्भागे पलाय्य स्वात्मानं रक्ष्यतामित्यत आह—**अम्बरमिति** । अम्बरमाकाशम्, आवृतिशून्यम् आवरणशून्यम्, अतः पलायनसम्भावनापि नावलोक्यत इत्याशः । हर हर कष्टं कष्टम् इदमव्ययम्, विधेः परमात्मनः करुणा दयैव शरणं रक्षित्री । आर्याच्छन्दस्तल्लक्षणं चोक्तं प्राक् ।

लक्ष्यं सङ्गमयति—**अत्रेति** । अप्रस्तुतात् 'अभिधीयमानादि'तिशेषः । कश्चित् बहुभिर्दस्युभिः पीडयमानः शरणमिच्छुः असहायो बालक इत्यर्थः । प्रतीयते व्यञ्जनावृत्त्या ज्ञायते ।

## रुचिरा

एवं द्विविधां श्लेषमूलामुदाहृत्य सादृश्यमात्रमूलामुदाहर्त्तुमाह—**सादृश्येत्यादि** । स्पष्टम् । **'एक** इत्यादि ।

**'एकोऽशरणः** । **कपोतपोतः** कपोतशिशुः । 'यानपात्रे शिशौ पोत' इत्यमरः । **शतशः** 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ।' ५/४/४२ इति शस् । **श्येना** मांसप्रियाः पक्षिविशेषाः । **क्षुधा** । **अभिधावन्ति** । **अम्बरमा**काशम् । **आवृतिशून्य**मावरणशून्यमात्मगोपनाश्रयप्रतिद्वन्द्विभूतम् । **हरिहरि** कष्टंकष्टम् (इदमव्ययम्) । **विधेः** परमात्मनः । **करुणा** दया । **शरणम्** । आर्य्याच्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १९९ ॥'

उदाहृतमर्थं निर्दिशति-**अत्रे**त्यादिना ।

**अत्र** । **कपोतात्** । **अप्रस्तुतात्** । 'अभीधीयमाना'दिति शेषः । **कश्चित्** बहुभिर्हिंस्रैर्दस्युभिर्वा पीडयमानः शरणमिच्छुः पुरुष इति भावः । **प्रस्तुतः** । **प्रतीयते** व्यञ्जनया बुध्यते । नचेयं समासोक्तिः, अत्राप्रस्तुता प्रतीतेः । अत एव नेयं शिवंरुक्तिरिति बोध्यम् ।

**'धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः ।**

**राममिन्दीवरश्यामं ये स्पृशन्त्यनिवरिताः ॥'**

अत्र वाता धन्या अहमधन्य इति वैधर्म्येण प्रस्तुतः प्रतीयते । वाच्यस्य संभवासंभवोभयरूपतया त्रिप्रकारेयम् । तत्र संभवे उक्तोदाहरणान्येव ।

---

## विवृतिः

**धन्या इति** । दशरथस्योक्तिरियम् । कह्लारस्य कह्लारवतो जलस्य स्पर्शेन शीतलाः । सौगन्धप्रतीतिरत्र लक्षणाप्रयोजनम् ॥ **अत्रेति** । वाता धन्या इति वैधर्म्येण अहमधन्य इति प्रस्तुत इत्यन्वयः । वाच्यस्य वाक्यार्थस्य ॥

## विज्ञप्रिया

**धन्या** इति । वनप्रेषितरामशोकाकुलस्य दशरथस्योक्तिरियम् । **सम्भवेति** । सम्भवमसम्भवं सम्भवासम्भवं चेति पक्षत्रयम् ।

## कुसुमप्रतिमा

धन्या इति । कह्लाराणां स्वभावशीतलानां रक्तोत्पलानां स्पर्शेन शीतलाः, वने वाता वन्यवायवः खलु धन्याः । ये वाताः अनिवारिताः केनाप्यप्रतिरूद्धा सन्तः, इन्दीवरश्याम नीलोत्पलवत् श्यामलं रामं स्पृशन्ति ।

अत्रेति । **वैधर्म्याण** धन्यत्वापेक्षया अधन्यत्वरूपविपरीतधर्म्मविशिष्टत्वेनेत्यर्थः । प्रस्तुत इति । रामविच्छेदेनाधन्यमात्मानमुपक्रम्य दशरथेनास्योक्तत्वादिति भावः । एवञ्च अप्रस्तुतात् समात् प्रस्तुतस्य समस्य प्रतीतिरूपेयमप्रस्तुतप्रशंसेति बोध्यम् ।

सर्वप्रकारामेवाप्रस्तुतप्रशंसां पुनरपि त्रिविधत्वेन विभजते वाच्यस्येति । वाच्यस्य वाच्यार्थस्य उक्तिसम्भवरूपत्वेन एवप्रकारा, उक्त्यसम्भवरूपत्वेन अन्यप्रकारा, उक्तः सम्भवासम्भवोभयरूपत्वेन चापरप्रकारा, इति त्रिप्रकारा ।

तत्रेति । तासु त्रिप्रकारासु मध्ये इत्यर्थः । सम्भवे मनुष्यवक्तृकत्वादेव वाक्यार्थस्योक्तिसम्भवस्थले इत्यर्थः, उक्तोदाहरणानि "पादहतम्" इत्यादीनि ।

## विमला

धन्या इति ।—दशरथस्योक्तिरियम् । कह्लाराणां—रक्तोत्पलवतां जलानां स्पर्शेन शीतलाः, [सौगन्ध्यप्रतीतिरत्र लक्षणप्रयोजनं] वने वाताः,—वनवायवः, धन्याः खलु, ये—वाताः, अनिवारिताः,—प्रतिरोधममप्राप्ताः सन्तः, अविरतमित्यर्थः, इन्दीवरश्यामं रामं स्पृशन्ति ।

अत्रेति ।—वाता धन्या इति वैधर्म्येण अहमधन्य इति प्रस्तुतः, सम इति शेषः । वाच्यस्येति ।—क्वचित् वाच्यस्य—वाक्यार्थस्य, सम्भवरूपत्वं, क्वचित् असम्भवरूपत्वं, क्वचिच्च उभयरूपत्वमिति भावः ।

## लक्ष्मी

एवं साधर्म्येणोदाहृत्य वैधर्म्येणोदाहरति—**धन्या** इति। वनप्रेषितरामशोकाकुलस्य दशरथस्योक्तिरियमिति केचित्। कल्हाराणां सौगन्धिकानां स्वभावशीतलानां जलरुहविशेषाणां स्पर्शः संयोगस्तेन शीतलाः, 'सौगन्धिकं तु कल्हारम्' सौगन्धिकानां स्वभावशीतलानां जलरुहविशेषाणां स्पर्शः संयोगस्तेन शीतलाः, 'सौगन्धिकं तु कह्लारम्' इत्यमरः, वने वाता वन्यपवनाः खलु धन्याः ये वाता अनिवारिताः केनाऽप्यप्रतिषेधिताः सन्तः इन्दीवरं नीलोत्पलं तद्वत् श्यामं श्यामलं रामं स्पृशन्ति उपलक्षणेन सेवन्ते।

लक्ष्यं समर्थयति—**अत्रेति**। वैधर्म्येण धन्यत्वापेक्षयाधन्यत्वरूपवैधर्म्यविशिष्टस्य कथनेनेत्यर्थः। **प्रस्तुत** इति। रामवियोगेन शोकाकुलमधन्यमात्मानमुपक्रम्य दशरथस्याभिधानादित्याशयः। इत्थञ्च अप्रस्तुतात् समात् प्रस्तुतस्य समस्य गम्यमानत्वरूपेयमप्रस्तुतप्रशंसेतिज्ञेयम्।

उक्तसर्वविधाया अप्रस्तुतप्रशंसायाः पुनरपि भेदान्तरं व्यवस्थापयति—**वाच्यस्येति**। वाच्यस्याभिधेयार्थस्य, सम्भवोऽसम्भव उभयं चेति तानि रूपाणि यस्यास्तस्या भावस्तत्ता तया। **त्रिप्रकारेति**। तथा च उक्तिसम्भवरूपत्वेन एकविधा, उक्त्यसम्भवरूपत्वेन अन्यविधा, उक्तेः सम्भवासम्भवोभयरूपत्वेन चान्यविधा, इति त्रिविधेतिसरलार्थः।

तत्रेति। त्रिषु वाच्यस्य सम्भवादिषु मध्य इत्यर्थः। सम्भवे पुरुषवक्तृकत्वादेव वाच्यार्थस्योक्तिसम्भवस्थल इत्यर्थः, उक्तोदाहरणानि उक्तोदाहरणानि 'पादाहतम्' इत्यादिपूर्वोक्तान्युदाहरणानीत्यर्थः।

## रुचिरा

एवं साधर्म्येणोदाहृत्य वैधर्म्येणोदाहर्त्तुमुपक्रमते—इयमित्यादिना। स्पष्टम्। '**धन्या** इत्यादि।'

'**ये**। **अनिवारिता** अप्रतिषेधिताः सन्तः। **इन्दीवरश्याममि**न्दीवरं नीलकमलं तद्वत् श्यामस्तम्। **रामम्**। **स्पृशन्ति** उपलक्षणेन सेवन्ते। **ते-कह्लारस्पर्शशीतलाः** कह्लाराणां सौगन्धिकानां जलरुहविशेषाणामुपचारात्तत्प्रधानानां जलाशयानां स्पर्शः संयोगस्तेन शीतला इति तथोक्ताः। 'सौगन्धिकं तु कह्लार'मित्यमरः। **वने**। **वाताः**। **खलु**। **धन्याः**। दशरथस्योक्तिरियमिति विवृतिकाराः॥ २००॥'

उदाहृतमर्थं निर्दिशति-**अत्रे**त्यादिना। स्पष्टम्।

अस्या भेदान्तरं व्यवस्थापयति-**वायस्ये**त्यादिना।

**वाच्यस्य** वाक्यार्थस्य। **सम्भवासम्भवोभयरूपतया** सम्भवोऽसम्भव उभयं चेति तानि रूपाणि यस्यास्तस्या भावस्तत्ता तया। **त्रिप्रकारा**। **इयम्**। तथा च-सम्भवद्वाच्याऽसम्भवद्वाच्या सम्भवदसम्भवद्वाच्या चेति त्रिभेदेयमिति निष्कृष्टोऽर्थः। **तत्र** त्रिषु वाच्यस्य सम्भवादिषु मध्ये। **सम्भवे**। **उक्तानि**। **उदाहरणानि**। **एव**।

असंभवे यथा—

**'कोकिलोऽहं भवान्काकः समानः कालिमावयोः।**

**अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः॥'**

अत्र काककोकिलयोर्वाकोवाक्यं प्रस्तुताध्यारोपणं विनाऽसंभवि। उभयरूपत्वे यथा—

---

## विवृतिः

कोकिलोऽहमित्यन्तरं विशेषम्। **काकलीकोविदाः** सूक्ष्ममधुरध्वनिविदः। **वाकोवाक्यम्**उक्तिप्रत्युक्ती तौ प्रस्तुतौ तयोरध्यारोपणं स्वरूपव्यञ्जनम्।

## विज्ञप्रिया

असम्भवे व्यङ्ग्यस्य वाच्ये आरोपः। **कोकिलोऽहमि**ति। काकली मधुरास्फुटध्वनिः। 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे' इति कोषः। **वाकोवाक्यमि**ति। कोकिलस्यैव वाच्यमिदम्। तत्कथमुक्तिप्रत्युक्तिरूपं वाकोवाक्यमिदमन्तरकथनाय मध्यस्थावलम्बनात्, कलहत्वप्राप्तौ काकस्याऽपि कोकिलसाम्योक्तेराक्षेपात्। **प्रस्तुताध्यारोपं विने**ति। अप्रस्तुते कोकिले वाच्ये प्रस्तुतस्य व्यङ्ग्यस्याध्यारोपं विनेत्यर्थः। नच वाच्यार्थबोधे तत्कथमप्रस्तुते वाच्ये तदारोप इति वाच्यम्।

कोकिलस्योक्त्यसम्भवात्तद्वयङ्ग्यस्याप्युक्तियोग्यस्य पुरुषस्य स्मरणत्तदारोपसम्भवात् पश्चात्तु व्यञ्जनया पुरुषविशेषबोधेऽप्यनुपपत्त्यभावात्।

## कुसुमप्रतिमा

असम्भव इति। वाक्यार्थोक्तिरिति शेषः।

कोकिल इति। आत्मसमानतया स्पर्द्धमान क्वचिदुद्दिश्य केनचिदुक्तमिदम्। अहं कोकिलः भवांश्च काकः, आद्वयोः कालिमा कालवर्णत्व समान एव; पुनः किन्तु काकलीकोविदा मम मधुरास्फुटसूक्ष्मरवाभिज्ञा जनाः, अन्तरं नितान्तकर्कशराविणा त्वया सार्द्धं मम वैषम्यम्, कथयिष्यन्ति। अतीवमधुरराविणा मया सह नितान्तकर्कशराविणस्तव नहदेव वैषम्यमिति कुतो मतसमानत्वे तव स्पर्द्धेति भावः।

अत्र अप्रस्तुतात् कोकिलकाकरूपसमक्षयात् प्रस्तुतस्य उत्कृष्टापकृष्टजनरूपासमद्वयस्य प्रतीतेरप्रस्तुतप्रशंसा स्पष्टेरेति केवलमेतदुक्तेरसम्भववत्वं दर्शयितुमाह अत्रेति। वाक्योपवाक्यं वादप्रतिवादः। प्रस्तुतस्य एतदुक्तिसमर्थ जनस्य, अध्यारोपणं अप्रस्तुते वक्तरि कोकिले आरोपम्। असम्भवि असम्भवम्, पक्षिमात्रस्य कोकिलस्य ईदृशोक्तिसामर्थ्याभावादिति भावः।

## विमला

कोकिल इति।—इयञ्च कस्यचित् निपुणस्य स्वस्पर्द्धिनमुद्दिश्य उक्तिः। अहं कोकिलः, भवान् काकः, आवयोः कालिमा—कृष्णवर्णत्वं, समानः, पुनः,—किन्तु, काकली—सूक्ष्मो मधुरध्वनिः, ("काकली तु कले सूक्ष्मे"

इत्यमरः) तस्यां कोविदाः,—विचक्षणाः, अन्तरं—कोकिलोऽहमिति प्रमेदम्, आवयोरिति शेषः, कथयिष्यन्ति। कालिम्ना समानत्वेऽपि ये काकलीविज्ञास्ते आवयोः कोकिलकाकयोर्भेदं निरूपयिष्यन्ति, यस्य काकलो सोऽहं कोकिलः, यस्य च कटुरटनं स च भवानिति निवेदनमन्तरैव तै ज्ञास्यन्ति इति भावः।

अत्रेति।—वाक्योपवाक्यम्—उक्तिप्रत्युक्तौ, ["वाकोवाक्यम्" इति पाठे—स एवार्थः] प्रस्तुतयोः,—तयोः काककोकिलयोः, अध्यारोपणम्—आरोपणं, स्वरूपव्यञ्जनमित्यर्थः, विना असम्भाव—न सम्भवति इति भावः।

## लक्ष्मी

**असम्भव** इति। वाच्यार्थोक्तेरितिशेषः।

**कोकिल** इति। स्वसदृशतया स्पर्द्धमानं प्रति कस्यचिदुक्तिरियम्। अहं कोकिलस्तद्वत् स्वगुणरमणीयः, भवांश्च काकस्तद्वत् स्वदोषप्रसिद्ध एवंभूतेऽपि आवयोः कोकिलायितकाकायितयोः कालिमा कृष्णवर्णत्वं समानस्तुल्य एव, पुनः किन्तु काकलीकोविदा मम मधुरास्फुटसूक्ष्मशब्दाभिज्ञाः, 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे' इत्यमरः, अन्तरम् अत्यन्तकर्कशशब्दवता भवता सह मम भेदं, कथयिष्यन्ति प्रतिपादयिष्यन्ति, नितान्तमधुरशब्दवता मया सार्धम् अत्यन्तकर्कशशब्दवतस्तव महदेवान्तरमिति कुतो मत्सदृशत्वे तव स्पर्द्धेत्याशयः।

अत्राप्रस्तुतात् कोकिलकाकरूपसादृश्योभयात् प्रस्तुतस्य उत्तमाधमपुरुषरूपासादृश्योभयस्यावगमादप्रस्तुतप्रशंसा स्फुटैवेति केवलमेतदुक्तेरसम्भवत्वमुपपादयितुमाह—**अत्रेति**। वाक्यं च प्रतिवाक्यं चेत्यनयोः समाहारो वाकोवाक्यम् उक्तिप्रत्युक्ती पृषोदरादित्वात् साधु। तदुक्तं **भोजराजेन**—

'उक्तिप्रत्युक्तिमद्वाक्यं वाकोवाक्यं विदुर्बुधाः। द्वयोर्वक्त्रोस्तदिच्छन्ति बहूनामपि सङ्गमे'॥

प्रस्तुतस्य एतदुक्तियोग्यस्य पुरुषस्य अध्यारोपणम् अप्रस्तुते वक्तरि कोकिले अभेदाध्यवसानम्। असम्भवि सम्भवं न, कोकिलपक्षिमात्रस्य एवंविधोक्तियोग्यत्वाभावात् सत्काराभावाच्चेतिभावः।

## रुचिरा

**असम्भवे**'पुनर्वाच्यस्ये'ति शेषः। **यथा**-'**कोकिल** इत्यादि।

'**अहम्**। **कोकिलस्तद्वत्** स्वगुणरमणीय इति यावत्। **भवान्**। **काकस्तद्वत्** स्वदोषप्रथितः। एवं सत्यपि-**आवयोः** कोकिलायितकाकायितयोः। **कालिमा** कृष्णवर्णत्वम्, लक्षणया (मनुष्यत्वादिना) समानधर्मत्वमित्यर्थः। **समानः**। **काकलीकोविदाः** काकल्या मधुरगिर उपचाराद्भेदकधर्मविशेषस्य कोविदाश्चतुराः। **पुनः**। **अन्तरं** भेदम्। **कथयिष्यन्ति**। कस्यचित् स्वस्मै स्पर्धमानं प्रत्युक्तिरियम्॥ २०१॥'

उदाहरणेऽसम्भवितां निर्दिशति-**अत्रे**त्यादिना।

**अत्र**। **काककोकिलयोः**। 'अल्पाचूतरम्।' २/२/३४ इति काकशब्दस्य पूर्वनिपातः। **वाकोवाक्यमुक्तिप्रत्युक्ती**। वाक्यं च प्रतिवाक्यं चेत्यनयोः समाहार इति तथोक्तम्। पृषोदरादित्वात् साधु। **प्रस्तुताध्यारोपणं** प्रस्तुतयोर्वक्तृबोद्धव्ययोरध्यारोपणमभेदाध्यवसानं तत्। **विना**। **असम्भवि**, मनुष्ययोर्वक्तृबोद्धव्यत्वे काककोकिलयोर्वक्तृबोद्धव्यत्वाभावाच्चमत्काराभावाच्चे'ति शेषः।

'अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः ।

कथं कमलनालस्य मा भूवन्भङ्गुरा गुणाः ॥'

अत्र प्रस्तुतस्य कस्यचिदध्यारोपणं विना कमलनालान्तश्छिद्राणां गुणभङ्गुरीकरणे हेतुत्वमसंभवि । अन्येषां तु संभवीत्युभयरूपत्वम् । अस्याश्च समासोक्तिवद् व्यवहारसमारोपप्राणत्वाच्छब्दशक्तिमूलाद्वस्तुध्वनेर्भेदः । उपमाध्वनावप्रस्तुतस्य व्यङ्ग्यत्वम् । एवं समासोक्तौ । श्लेषे तु द्वयोरपि वाच्यत्वम् ।

---

## विवृतिः

**छिद्राणि** विवराणि, दोषाश्च । **कण्टकाः** तीक्ष्णाग्रवृक्षाः क्षुद्रशत्रवश्च । **गुणास्तन्तवः**, यशांसि च ॥ **छिद्राणां** विवराणां **गुणभङ्गुरीकरणे** पद्मनालतन्तुच्छेदने । **अन्येषां** कण्टकानाम् । अस्याश्च श्लेषमूलतुल्याप्रस्तुतप्रशंसायाश्च । **समासोक्तिवदिति** । समासोक्तौ यथा श्लिष्टशब्दप्रयोगमात्रेण व्यवहारो न प्रतीयते किंतु विशेषणसाम्यानुसंधानेनापि, तथात्रापि विशेषणसाम्यानुसंधानमप्यपेक्षितम्, शब्दशक्तिमूलवस्तुध्वनौ तु तनापेक्षितमिति ततोऽस्या भेद इति भावः ।

## विज्ञप्रिया

**अन्तश्छिद्राणीति** । **अत्रेति** । अत्र अन्तश्छिद्रादिमत्त्वं यत् कमलनालस्य वाच्यं तत्रान्तरश्छिद्रस्य तन्तुभङ्गे हेतुत्वं न सम्भवति तदाह—**छिद्राणामिति** । **अन्येषान्त्विति** । कण्टकानामित्यर्थः । कण्टकैस्तन्तुच्छेदनसम्भवात् । तथा छिद्रांश एव निर्गुणस्य कण्टकतुल्यपरिजनवतश्च प्रस्तुतपुरुषस्य तत्रारोपः । नतु कण्टकानामंश इति भावः ।

ननु "पन्थिअ" इत्यादौ यः शब्दशक्तिमूलो वस्तुध्वनिरुक्तस्तत्र उपभोगक्षमत्वे सति यत्स्थित्यनुमितिरूपं वस्तुव्यङ्ग्यमुक्तं तत्र वक्त्र्या उद्देश्यत्वेन तदेव प्रस्तुतं वाच्यार्थस्त्वप्रस्तुतः । तथा च तत्राप्रस्तुतप्रशंसात्वमेवापतितमित्यस्ततोऽस्या भेदमाह । वस्तुध्वनौ तथा स्थित्यनुमतिर्व्यङ्ग्या । न तत्र वाच्यस्य व्यवहारस्य व्यङ्ग्यपुरुषादौ समारोपस्य प्राणत्वाच्च तत्कारकत्वादित्यर्थः । अत्र च शब्दशक्तिमूलादित्युपलक्षणम् । "दृष्टिं हे प्रतिवेशिनी" त्यादावपि यद्भाविनखक्षतगोपनं व्यङ्ग्यम्, तदपि वक्त्र्या उद्देश्यत्वेन प्रस्तुतम् । वाच्योऽर्थोऽप्रस्तुतस्तत्राप्येवमस्याः प्रसक्तिरेवं समाधानं च बोध्यम् । उपमाध्वनौ समासोक्तौ शब्दश्लेषालङ्कारे तस्याः प्रसक्तिरेव नास्तीत्याह—उपमाध्वनाविति । अत्र ह्यप्रस्तुतो वाच्यः । उपमाध्वनिसमासोक्तौ चाप्रस्तुतो व्यङ्ग्य एवेति तयोर्नास्याः प्रसक्तिः । श्लेषेऽपि नास्याः प्रसक्तिरित्याह । श्लेषेणाऽप्रस्तुतव्यञ्जनत्वे सति ह्यप्रस्तुतप्रशंसा । श्लेषे तु द्वयोरप्यर्थयोर्वाच्यत्वमित्यर्थः ।

## लोचन

अन्तश्छिद्राणि मध्ये छिद्राणि कुटुम्बसुदुश्चरितानि च । कण्टकाः सूक्ष्मा अवयवाः मत्सरिणश्च । भङ्गुराः छिदुरा विनश्वराश्च । गुणाः सूत्राणि । शिल्पादि गौरवादिश्च । असम्भविसूत्रोपदेशता तेषां पृथक्त्वात् । सम्भवि उद्ध्रियमाणे सूत्रे तत् सीम्नि छेददर्शनात् । इह च—

अङ्ग देहि लिहिण मा अपि जवप्पसि परवइँ प्पीनं येउँ ।

अमण्डे कोहलिए अञ्जुकल्लि पि पुं वहिंसि ।

अत्र नाप्रस्तुतप्रशंसा व्यङ्ग्यस्य वाच्यादधिकमास्वाद्यत्वेन ध्वनित्वात्; व्यङ्ग्यस्य वाच्यादप्राधान्य एव एतदलङ्काराभ्युपगमः । यत्र पुनरप्रस्तुतप्रशंसाऽङ्गीकारे राघवानन्दमहापात्रैरप्रस्तुतार्थव्यङ्ग्यो व्यङ्ग्य इति मुहुर्मुहुरभिदधतां ध्वनिकारप्रभृतिचण्डीदासपण्डितानामाचार्याणां ग्रन्थजातमत्रैव च साहित्यदर्पणे 'लक्षणामूलध्वनिपरीक्षावसरे प्रदर्शितम्, 'क्वचिद् बाध्यतया ख्याति' रित्यादिशास्त्रविदां वचनमनालोच्य लक्षणाजीवितमित्यभिधायैतदुदाहरणे सुलक्ष्यो लक्ष्य इत्युत्क्रुश्यते तेषां कस्यचिद् दुर्मेधसः प्रलपितेन वञ्चितानां मतमतितुच्छतरं पूर्वपक्षतया लिखितमात्मनो दुर्मतित्वप्रकटनाय । इह पादाहतं यदुत्थायेत्यादौ 'क्वचिद् बाध्यतया ख्यातिः, इत्युक्तनयेन 'भ्रम धार्मिक' इत्यादिवत् 'दृष्टिं हे प्रतिवेशिनी'त्यादिवच्च लक्षणा मास्तु 'कोकिलोऽह'मित्यादौ वाच्यस्याऽसम्भवित्वे अन्तश्छिद्रेत्यादाववयवस्याऽसम्भवित्वे कथं न लक्षणेति । अत्रोच्यते, यत्र खलु कोकिलोऽहमित्यादौ वाक्यबोधस्तत्रोत्पत्स्यमानान्वयबाधहेतुका कथं लक्षणा? यच्च तैरेव दर्शितम् । श्रुतान्वयादनाकाङ्क्षमित्यादि । किञ्चात्रोदाहरणे अन्तश्छिद्राणीत्यादौ वा यदि लक्षणा तदा शुद्धा गौणी वा, नाद्या । तस्याः सादृश्येतरसम्बन्धमूलत्वात् । यदि द्वितीया सापि सारोपा साध्यवसाना वा, नाद्या विषयस्य निर्गीर्णत्वात् । द्वितीया चेद् अतिशयोक्तिरस्तु किमलङ्कारान्तरकल्पनया । कथं वा पदमात्रान्वयबोधहेतुकाया वाक्यबोधे प्रवेशः । इह खलु प्रभुप्रभृतिषु केनचिद् अभिसन्धानेन कर्त्तव्योऽर्थस्तात्पर्य्यम्, गोपनेनाऽभिमतकार्य्यनिवेदने । अत एवात्र समासोक्तिवद् व्यवहारसमारोप इति प्राच्याः । तथाहि 'अयं रत्नाकरोऽम्बोधिरित्यसेवि धनाशये'त्यादौ प्रकृतराजविषयकोऽम्भोधिव्यपदेशः प्रकृतेन तन्निष्ठसुशब्दप्रतिपादनाल्लक्ष्यगम्भीर्य्यादिगुणाद्यतिशयस्य लक्षणाफलस्य प्रतिपत्तये किन्तु अभिलषितं तत्सेवार्थं वाच्यार्थमलब्ध्वा प्रत्युतानिष्ठप्राप्तेः । सुशब्दरचनाया एवं कोकिलोऽहमित्यादावपि कुत्रचित्कोकिलव्यपदेशः । कस्मिंश्चित् प्रस्तुते महापुरुषे हीनस्य मत्सरो न युक्त इति बोधनाय तुल्येऽप्रस्तुते तुल्याभिधाने च लक्षणायां 'जं दे लिहिण मा असीत्यादौ सुप्रसिद्धे तैरभ्युपगते व्यञ्जनाविषयत्वेऽपि लक्षणा स्यात् । अन्तश्छिद्राणीत्यादौ अप्यन्तश्छिद्रादीनां कमलनालगुणभङ्गुरीकरणादेरसम्भवात् कथमन्वयोपपत्तिरिति चेत्, अत्राहुश्चण्डीदासपण्डिताः "अत्र ब्राह्मस्य प्रस्तुतपरत्वात् प्रारम्भात् प्रकृत्यैव वाच्यार्थवेलया तत्समर्पणेन प्रतीतेर्न दूष्यत इति ।"

अत एवात्र सर्वेष्वपि भेदेषु प्रस्तुताभिधानस्य युक्ताप्रकाशनायालङ्कारसर्वस्वकृताऽप्युक्तम् । "इहाप्रस्तुतवर्णनमेवायुक्तमप्रस्तुतत्वात् । प्रस्तुतपरत्वे तु कदाचित् युक्तं स्यादिति । यदि 'चान्तश्छिद्राणी'त्यादौ लक्षणा तदा तत्र मुख्यार्थबाधे वाक्यार्थान्वयोपपादकं किं नाम लक्ष्यते कुटुम्बे दुश्चरितानीति रूपोऽप्रस्तुतोऽर्थश्चेत् तस्यापि न कमलनालभङ्गुरीकरणमपास्तम् ।

यच्चैषां मान्यानां मते बहुतरमस्खलितमवधार्य्यापि किञ्चित् किञ्चिदेव दूषणमुद्घुष्यते तत्र ध्वनिकारप्रभृतिचण्डीदासपण्डिताचार्यवर्यप्रयत्नप्रणीतविमलतरप्रमेयजातभङ्गभीरुणा तदतिक्षमध्वमविध्वस्तुबुद्धयो विबुधाः । यच्च तैरेव—

'का त्वं कुन्तलमल्लकीर्त्तिरहह क्वापि स्थिता न क्वचित्

सख्यस्तास्तव कुत्र कुत्र वद वाग् लक्ष्मीरुचः सम्प्रति ।

वागाप्ता चतुराननस्य वदनं लक्ष्मीर्मुरारेरुरः—

कान्तिर्मण्डनमण्डलं मम पुनः नाद्यापि विश्रामभूः।'

इति क्वचित् प्रश्नोत्तरिकया कल्पयित्वा "वर्णनीयस्य लेशोद्दिष्टस्य लक्ष्यते" इत्यप्रस्तुतप्रशंसादिविशेषस्य लक्षणं लिखित्वा तदुदाहरणत्वेन दर्शितं तदस्माभिरुपेक्षणीयम्। अत्र हि प्रश्नोत्तरिकाभावेन भवने वस्तुषु न व्यवहारसमारोपेण समासोक्तिं प्रयोजयति। वाच्योऽर्थो द्विविधः, स्वतः सम्भवी प्रौढोक्तिसिद्धश्चेति प्रसिद्धम्। तत्र प्रौढोक्तिसिद्धार्थस्यालङ्कारत्वे "सज्जइ सुरइ" (हि) मासो इत्याद्यर्थानामप्यलङ्कारत्वप्रसङ्गः। कुन्तलेश्वरस्य वागादीनां चतुराननादिगमनेन "योऽनुभूतः कुरङ्गाक्ष्या" इत्यादिवन्निदर्शना इह। ह्यध्यवसायस्य सिद्धेत्वन निर्देशात् शब्दमूलातिशयोक्त्यलङ्कारपरिकल्पनम्। तथाप्यत्र निदर्शनाविवेकप्रस्तावे उक्तम्—उपमा परिकल्पनं निदर्शनेति लक्षणे उपमापदं सादृश्यमात्रवाचकमिति। अत एवालङ्कारसर्वस्वकृताऽप्युक्तम्। सम्भवतासम्भवता वा वस्तुसम्बन्धेन गम्यमानं प्रतिबिम्बकरणं निदर्शनेति। तथाच पद्भ्यां हंसगतिरित्यादौ सोऽपि तदाननरुचमित्यादौ च प्रतिकल्पना।

**"मरकतमयमेदिनीषु भानोस्तरुविटपान्तरपातिनो मयूखाः।**

**अवनतशितिकण्ठकण्ठलक्ष्मीमिह दधति स्फुरिताणुरेणुजालाः॥"**

इत्यत्र च तथाभूतभूमिषु अवनतशितिकण्ठकण्ठानां सम्भवापत्तेः उत्प्रेक्षाकल्पने प्रकृतोदाहरणं वाऽतिशयोक्तिकल्पने निदर्शनायां न विरोधः। किञ्च एकैकस्य वागादे राजनि चतुराननादौ च भवनात्।

सम्प्रति सुमतिवेद्यमस्या ध्वन्यलङ्कारविवेकं दर्शयति-**अस्याश्चेति**। अस्याः अप्रस्तुतप्रशंसायाः शब्दशक्तिमूलाद् वस्तुध्वनेर्भेदः।

तथाहि "भुक्तिमुक्तिकृदेकान्त" इत्यादौ सदागम इत्यत्र सच्छास्त्रे न सत आगमनरूपस्यार्थस्य व्यवहारः समारोप्यते, किन्तु रहस्यगोपनार्थमेव ह्यर्थपदपयोगः,ततोऽस्या भेद इति भावः। वाच्यत्वमनिर्द्धारितत्वेनेति शेषः।

## कुसुमप्रतिमा

उभयेति। उभयरूपत्वे वाक्यार्थस्य सम्भवासम्भवोभयप्रकारत्वे।

अन्तरिति। आत्मदोषेण शत्रुव्यवहारेण च विनष्टयशसं कश्चिदुद्दिश्य कस्यचिदुक्तिरियम्। अन्तः अभ्यन्तरे, भूयांसि बहुतराणि, छिद्राणि रन्ध्राणि कामक्रोधदुरभिसन्धिप्रभृतयो दोषाश्च वर्त्तन्ते; वहिदे शे च बहवः कण्ठकास्तीक्ष्णाया अवयवा, क्षुद्रशत्रवश्च वर्त्तन्ते; अतएव कमलनालस्य पद्मनिम्नस्थदण्डस्य गुणाः अन्तर्गतसूत्राणि दयाधर्म्मादिगुणजनितयशांसि च, कथं भङ्गुराच्छेदनशीला विलुप्तस्वभावाश्च भूवन् न भवेयुः; अपि तु भवेयुरेवेत्यर्थः।

अत्रापि अप्रस्तुत समात् कमलनालात् प्रस्तुतस्य कस्यचित् समस्य प्रतीतेरप्रस्तुतप्रशंसा स्फुटैवेति केवलं वाक्यार्थस्य सम्भवासम्भवोभयरूपत्वं दर्शयितुमाह अत्रेति। कस्यचित् कामक्रोधादि दोषवतो जनस्य, अध्यारोपणं कमलनाले आरोपम्। गुणभङ्गुरीकरणे अन्तर्गतमूत्रच्छेदने, हेतुत्वं तात्पर्य्या देव लब्धं कारणत्वात्, असम्भवि असम्भव; छिद्राणा शून्यमात्ररूपतया निष्क्रियत्वेन गुणच्छेदने योग्यत्वाभावादिति भावः। अन्येषां कण्टकमान्तुः, सम्भवि गुणभङ्गुरीकरणे हेतुत्वं सम्भवपरम्, प्रस्तुताध्यारोपणं विनापीति शेष; मानुषादिचेष्टया अन्तर्गतसूत्राणां बहिष्करणादिना योग्यत्वादिति भावः।

इदानीं ध्वनेरलङ्कारान्तराञ्ज्ञास्या भेदं दर्शयितुमाह अस्याश्चेति। श्लेषेण समादप्रस्तुतात् प्रस्तुतस्य समस्य प्रतीतिरूपाया अप्रस्तुतप्रशंसायाश्चेत्यर्थः। व्यवहारसमारोप एव प्राणी जीवनं स्वरूपं यस्यास्तस्या भावस्तस्मात् व्यवहारसमारोपघटितत्वादित्यर्थः। तथा च "पन्थिय ! ण एत्थसत्थरमत्थि" इत्यादिगतशब्दशक्ति-मूलवस्तुध्वनौ व्यवहारसमारोपप्रतीतिर्नास्तु "सहकार सदामोदः" इत्यादौ तु सा अस्तीत्युभयोर्भेद इति भावः।

ननु तर्हि उपमाध्वनौ व्यवहारसमारोपप्रतीतेस्तेन सह अस्याः को भेद इत्याह उपमेति। अप्रस्तुतस्य "हिममुक्तचन्द्ररुचिरः" इत्यादौ वसन्तादेर्व्यङ्ग्यत्वम्, इह तु "सहकारः सदामीदः" इत्यादौ प्रस्तुतस्यैव नायकादे-र्व्यङ्ग्यत्वमित्युभयोर्भेद इत्याशयः।

अथ समासोक्तेरपि व्यवहारसमारोपप्राणत्वात्तया सहास्याः को भेद इत्याह एवमिति। समासोक्तावम्येम् उपमाध्वनिवदेव अप्रस्तुतस्य व्यङ्ग्यत्वमित्यर्थः। तथा च समासोक्तावपि प्रस्तुतस्यैव व्यङ्ग्यत्वम्, इह तु प्रस्तुतस्य व्यङ्ग्यत्वमित्युभयोर्भेद इति भावः। यथा समासोक्तिप्रकरणशेषे वृत्तावेवोक्तम्—"अप्रस्तुतप्रशंसायां प्रस्तुतस्य गम्यत्वम्, इहं तु अप्रस्तुतस्य" इति।

अथ तदा श्लेषेऽपि व्यवहारारोपप्रतीतेस्तेन सममस्या अभेदापत्तिरित्याहु श्लेषेऽपीति। अपि शब्द-श्चार्थ। द्वयोरपि पक्षयोः, वाच्यत्वम्, "श्लिष्टैः पदैरनेकार्थाभिधाने" इत्युक्तेः "श्लेषोऽनेकार्थवाचनम्" इत्युक्तेश्च अभिधयैव बोध्यत्वं नियतमिति शेषः; इह तु प्रस्तुतपक्षस्य व्यङ्ग्यत्वमेव नियतमिति श्लेषादप्यस्या भेद इत्या-शयः। किञ्चश्लेषेन व्यवहारारोपप्रतीतिरपि स्पष्टा।

अथ प्रस्तुतप्रशंसाभेदसङ्कलनम्।

अप्रस्तुतात् सामान्यात् प्रस्तुतविशेषप्रतीतौ...१

अप्रस्तुताद्विशेषात् प्रस्तुतसामान्यप्रतीतौ...१

अप्रस्तुतात् कार्य्यात् प्रस्तुतकारणप्रतीतौ...१

उक्तेः सम्भवरूपत्वे अप्रस्तुतात् कारणात् प्रस्तुतकार्य्यप्रतीतौ...१

सादृश्यमात्रमूलत्वे अप्रस्तुतात् समात् प्रस्तुतसमप्रतीतौ...१

विशेषणमात्रश्लेषे अप्रस्तुतात् समात् प्रस्तुतसमप्रतीतौ...१

विशेष्यविशेणीभयश्लेषे अप्रस्तुतात् समात् प्रस्तुतसमप्रतीतौ...१

**उक्ते रसम्भवरूपत्वे**—उक्तविधा एव सप्त... ... ... ७

**उक्तेः सम्भवासम्भवोभयरूपत्वे**—उक्तविधा एव सप्त... ... ... ७

वैधर्म्ये भेदस्तु क्वचिदेव सम्भवतीति साधर्म्यवैधर्म्यभ्यां सर्वद्वैविध्यं न गणितम्। एवञ्च कारिकायां "पञ्चधा" इति पञ्चविधत्वोक्तिः प्रधानाभिप्रायेणेति बोध्यम्।

## विमला

अन्तरिति ।—कमलनालस्य—पद्मदण्डस्य, गुणाः,—सूत्राणि यशांसि च, कथं भङ्गुराः,—छिद्राः नश्वराश्व, मा भूवन् ?—न भवेयुः ? यतः अन्तः,—अभ्यन्तरे, भूयांसि—-बहूनि, छिद्राणि—विवराणि दोषाश्च, तथा बहिः वहवः कण्टकाः,—तीक्ष्णांयवृक्षावयवाः क्षुद्रशत्रवश्च, सन्तीति शेषः ।

अत्रेति ।—छिद्राणां—विवराणां, गुणभङ्गुरीकरणे—पद्मनालतन्तुच्छेदने । अन्येषां—कण्टकानामित्यर्थः । अस्याश्च—श्लेषमूलतुल्याप्रस्तुतप्रशंसायाश्चेत्यर्थः, समासोक्तिवत्—समासोक्तौ यथा श्लिष्टशब्दप्रयोगमात्रेण व्यवहारो न प्रतीयते, किन्तु विशेषणसाम्यानुसन्धानेनापि, तथा अत्रापि विशेषणसाम्यानुसन्धानमपि अपेक्षितं, शब्दशक्तिमूलवस्तुध्वनौ तु तन्नापेक्षितमिति ततोऽस्या भेदः, तत्र हि व्यवहारसमारोपो नास्तीति भावः । एवं समासोक्तौ, अप्रस्तुतस्य व्यङ्ग्यत्वमिति शेषः, इह तु प्रस्तुतस्य इति भावः । द्वयोः,—प्रस्तुताप्रस्तुतयोः, वाच्यत्वं, प्रकरणादिनियमाभावादित्यर्थः ।

## लक्ष्मी

उभयरूपत्वे उदाहर्त्तुमाह—**उभयेति** । उभयरूपत्वे वाच्यार्थस्य सम्भवासम्भवोभयविधत्वे इत्यर्थः ।

उदाहरति—**अन्तरिति** । कस्यचिदापत्तिहेतुं बोधयत उक्तिरयम् । अन्तर्मध्यभागे भूयांसि अनेकानि छिद्राणि रन्ध्राणि कुटुम्बसुदुश्चरितप्रभृतयो दोषाश्च विद्यन्ते 'छिद्रं विवररन्ध्रवत् । गर्त्ते दोषे' इति हैमः । बहिर्देशे च बहवः कण्टकास्तीक्ष्णाग्रा अङ्गविशेषाः क्षुद्रशत्रवश्च विद्यन्ते 'कण्टकः क्षुद्रशत्रौ च द्रुमाङ्गे रोम्णि मस्करे' इति गोपालः । अतएव कमलनालस्य कमलाधःस्थदण्डस्य गुणा अन्तर्गतसूत्राणि त्यागशौर्यादिसत्त्वादिगुणजनितकीर्त्तयश्च ।

> **'गुणो मौर्व्यामप्रधाने रूपादौ सूत्र इन्द्रिये ।**
>
> **त्यागशौर्यादिसत्त्वादिसन्ध्यावृत्तिषु रज्जुषु'** ॥

शुक्लादावपि बुधयां च इति मेदिनी, कथं भङ्गुराश्छेदनशीला मा भूवन् न भवेयुः अपि तु भवेयुरेवेत्यर्थः ।

उदाहृतमर्थं समर्थयति—अत्रेति । प्रस्तुतस्य दुर्द्दैवहतकस्य, कस्यचित् कुटुम्बसुदुश्चरितादिदोषवतः पुरुषस्य अध्यारोपणं कमलनाले अभेदाध्यवसानम् । कमलनालान्तश्छिद्राणां कमलाधःस्थदण्डवर्त्तिनां छिद्राणाम्, गुणभङ्गुरीकरणे मध्यभागस्थसूत्रछेदने हेतुत्वम् अभिप्रायादेव प्राप्तं निमित्तत्वं, असम्भवम्, छिद्रानां केवल शून्यरूपत्वेन क्रियारहितत्वेत गुणभङ्गगुरीकरणे सामर्थ्याभावादित्याशय अन्येषां कण्टकानास्तु सम्भवि गुणच्छेदने निमितत्वं सम्भवपरम् सम्भवपरम्, प्रस्तुतस्य अध्यारोपणं विनाऽपीतिशेषः । पुरुषादिव्यापारेण मध्यवर्त्तिसूत्राणां बहिष्करणादिना समर्थत्वादित्यभिप्रायः । तथा **चाहुरलङ्कारसर्वस्वकाराः**—'अत्र वाच्येऽर्थे कण्टकानां भङ्गुरीकरणे हेतुत्वं सम्भवि, छिद्राणां तु असम्भवि इत्युभयविधत्वम्, प्रस्तुतस्य तात्पर्येण प्रतीतेस्तदध्यारोपात्तत्र सङ्गतमेवैतदिति नासमीचीनं किञ्चित्'इति ।

अत्रापि च पूर्ववदेव अप्रस्तुतात् तुल्यात् कमलनालात् प्रस्तुतस्य कस्यचित् तुल्यस्यावगमादप्रस्तुतप्रशंसा स्पष्टैवेति केवलं वाच्यार्थस्य सम्भवासम्भवोभयरूपत्वमेव दर्शितमित्यवधेयम् ।

सम्प्रति सुमतिवेद्यमस्या ध्वनेरलङ्काराच्च भेदं दर्शयति—**अस्याश्चेति**। श्लेषमूलसमाप्रस्तुतप्रशंसायाश्चेत्यर्थः। व्यवहारस्य व्यापारस्य समारोपः स एव प्राणो जीवनं स्वरूपं यस्यास्तस्या भावस्तत्त्व तस्मात्, व्यवहारसमारोपयुक्तत्वादित्यर्थः। तथा च 'भुक्तिमुक्तिकृदेकान्त' इत्यादौ 'सदागम' इत्यत्र सच्छास्त्रे न सत आगमनरूपस्यार्थस्य व्यवहारः समारोप्यते किन्तु रहस्यगोपनार्थमेव द्व्यर्थपदप्रयोगः, 'सहकारः सदामोदः' इत्यादौ तु व्यवहारसमारोपप्रतीतिरस्तीत्यस्याः शब्दशक्तिमूलात् वस्तुध्वनेर्भेदः। अत्र तात्पर्य विवृतं **तर्कवागीशैः**— 'समासोक्तौ यथा श्लिष्टशब्दप्रयोगमात्रेण व्यवहारो न प्रतीयते किन्तु विशेषणसाम्यमनुसन्धानेनापि, तथात्रापि **विशेषणसाम्यानुसन्धानमप्यपेक्षितम्**, शब्दशक्तिमूलवस्तुध्वनौ तु तन्नापेक्षितमिति ततोऽस्या भेद इति भावः' इति। शब्दशक्तिमूलादित्युपलक्षणम्। 'दृष्टिं हे प्रतिवेशिनि' इत्यादावपि यद्भाविनखक्षतगोपनं व्यङ्ग्यं तदपि वक्त्रया उद्देश्यत्वेन प्रस्तुतम्, वाच्यार्थोऽप्रस्तुतस्तत्राप्येवमस्याः प्रसक्तिरेवं समाधानं च बोध्यमिति विज्ञप्रियादयः।

नन्वेवमपि व्यवहारसमारोपप्रतीतिरुपमाध्वनौ भवतीति तत्रास्याः प्रसक्तिः स्यादित्यत आह—**उपमेति**। अप्रस्तुतस्य 'हिममुक्तचन्द्ररुचिरः' इत्यादौ वसन्तादेर्व्यङ्ग्यत्वम्, अत्र तु 'सहकारः सदामोदः' इत्यादौ अप्रस्तुतस्य वाच्यत्वं प्रस्तुतस्य नायकादेरेव व्यङ्ग्यत्वमिति नास्यास्तत्र प्रसक्तिरितिभावः।

ननु मास्तूपमाध्वनावस्याः प्रसक्तिः किन्तु समासोक्तौ व्यवहारसमारोपप्राणत्वात्तत्र कथं नास्याः प्रसक्तिरित्यत आह—**एवमिति**। समासोक्तावप्येवम् उपमाध्वनिवदेव प्रस्तुतस्य वाच्यत्वमप्रस्तुतस्य व्यङ्ग्यत्वमित्यर्थः। उक्तञ्च पूर्वमेव समासोक्तिप्रस्तावान्ते—'अप्रस्तुतप्रशंसायामप्रस्तुतस्य गम्यत्वम्, इह तु प्रस्तुतस्य' इति।

अथ तर्हि श्लेषेऽपि व्यवहारप्रतीतेः सत्त्वात्तत्रास्याः प्रसक्तौ साङ्कर्यं स्यादित्यत आह—**श्लेषेऽपीति**। चार्थेऽत्रापिर्वर्त्तते। द्वयोरपि प्रस्तुताप्रस्तुतयोः वाच्यत्वम्, 'श्लिष्टैः पदैरनेकार्थाभिधाने' इत्युक्तेः 'श्लेषोऽनेकार्थवाचनम्' इत्युक्तेश्च अभिधयैव प्रतिपाद्यत्वं निश्चितमितिशेषः, अत्र तु प्रस्तुतस्य प्रतीयमानत्वमेव निश्चितमिति श्लेषेऽपि नास्याः प्रसक्तिरिति श्लेषोपमाध्वनिसमासोक्तिषु अस्याः प्रसक्तयाभावात् भवति परस्परं भेदः। श्लेषे तु व्यवहारप्रतीतिरपि स्फुटा नेत्यप्यवगन्तव्यम्।

बोधसौकर्याय अस्या भेदा सङ्कलय्यन्ते—

ननु साधर्म्यवैधर्म्याभ्यां सर्वेषां द्वैविध्यात्तद् भेदः कथं न भणित इति चेत्? वैधर्म्योदाहरणस्य क्वाचित्कत्वात्। अथापि मूले '**पञ्चधा**' इत्युक्तिः कथमितिचेत्? प्राधान्याभिप्रायेणेति गृहाण।

## रुचिरा

उभयरूपत्व उदाहर्त्तुमाह-**उभयेत्यादि**। स्पष्टम्। '**अन्तरित्यादि**।

**कमलनालस्य** कमलदण्डस्य। **अन्तर्मध्यभागे**। **भूयांसि** सुबहूनि। **छिद्राणि**। रन्ध्राणि। 'छिद्रं विवरन्ध्रवत्।गर्त्ते गत्रे दोषे' इति हैमः। **बहिरुपरि**। **बहवः**। **कण्टककास्तीक्ष्णाग्रा** अङ्गविशेषाः। 'कण्टकः क्षुद्रशत्रौ च द्रुमाङ्गे रोम्णि मस्करे।' इति गोपालः। अतः—**कथम्**। **गुणास्तन्तवः**। 'गुणो मौर्व्यामप्रधाने रूपादौ सूत्र इन्द्रिये। त्यागशौर्य्यादिसत्त्वादिसन्ध्यावृत्तिषु रज्जुषु॥ शुक्लादावपि बुद्ध्यां च।' इति मेदिनी। **भङ्गुरा** भङ्गशीलाः। **मा**। **भूवन्** भवेयुः। कस्यचिद्विपन्नताहेतुं सूचयत उक्तिरियम्॥ २०२॥'

उदाहृतमर्थं समर्थयते-**अत्रेत्यादिना**।

**अत्रोदाहृते पद्ये । प्रस्तुतस्य** दुर्दैवहतकस्य । **कस्यचित् । अध्यारोपणमभेदाध्यवसानम् । विना । कमलनालान्तश्छिद्राणां** कमलदण्डवर्त्तिनां छिद्राणाम् । **गुणभङ्गुरीकरणे । हेतुत्वं** कारणत्वम् । **असम्भवि । अन्येषां** कण्टकानाम् । **तु । सम्भवि । उभयरूपत्वं** सम्भवासम्भवोभयविधत्वमिति भावः । इति । अत्रेदं तत्त्वम्छिद्राणि गुणान् भज्येरन् इति न सम्भवति, कण्टकास्तान् भज्येरन्निति पुनः सम्भवतीति कमलदण्डे दुर्दैवहतकाभिन्नत्वेनाध्यवसिते 'छिद्राणी'त्यस्य 'क्षुद्रत्वप्रत्यायकानि कार्य्याणि इति, 'कण्टका' इत्यस्य च 'क्षुद्रशत्रवः' इत्यर्थे गुणानां शौर्य्यादीनां भङ्गुरत्वं सर्वथाऽध्यवसीयते । यदाहुरलङ्कारसर्वस्वकाराः—'अत्र वाच्येऽर्थे कण्टकानां भङ्गुरीकरणे हेतुत्वं सम्भवि, छिद्राणां तु असम्भवि' इत्युभयविधत्वम् (रूपत्वम्), प्रस्तुतस्य तात्पर्येण प्रतीतेस्तद्वयारोपात्तत्र सङ्गतमेवैतदिति नासमीचीनं किञ्चित् ।'इति ।

अस्या वाच्यत्वमलङ्कारान्तरतो भेदं च निर्दिशति-**अस्याश्चेत्यादिना** ।

**अस्याः** श्लेषमूलसमाप्रस्तुतप्रशंसायाः । **च । समासोक्तिवत्** समासोक्तेरिव । **व्यवहारसमारोपप्राणत्वाद्** व्यवहारस्य व्यापारस्य समारोस्स एव प्राणो जीवनं यस्यास्तस्या भावस्तत्त्वं तस्मात् । **शब्दशक्तिमूलात् । वस्तुध्वनेः । भेदः** । तात्पर्य्यं च विवृतं यथा विवृतिकारैः—'समासोक्तौ यथा श्लिष्टशब्दप्रयोगमात्रेण व्यवहारो न प्रतीयते, किंतु विशेषणसाम्यानुसन्धानेनापि; तथाऽत्रापि विशेषणसाम्यानुसन्धानमप्यपेक्षितम्, शब्दशक्तिमूलवस्तुध्वनौ तु तन्नापेक्षितमिति ततोऽस्या भेद इति भावः ।' इति । **उपमाध्वनौ । अप्रस्तुतस्य । व्यङ्ग्यत्वम्** 'अत्र पुनर्वाच्यत्वम् । अत्र प्रस्तुतस्य व्यङ्ग्यत्वं, तत्र पुनर्वाच्यत्वम्, इत्यनयोर्महान् भेद' इति शेषः । **एवम् । समासोक्तौ** । 'प्रस्तुतस्य व्यङ्ग्यत्वम्' इति पूर्वतोऽन्वेति 'अत्र पुनर्वाच्यत्वम् । अत्र प्रस्तुतस्य व्यङ्ग्यत्वं, तत्र पुनर्वाच्यत्वम्; इत्यनयोर्महान् भेद' इति शेषः । **श्लेषे । तु** 'अपी'ति पाठान्तरेऽप्ययमेवार्थः, निपातानामनेकार्थत्वात् । **द्वयोः** प्रस्तुताप्रस्तुतयोः । **अपि** 'न त्वेकतरस्ये'ति शेषः । **वाच्यत्वम्** 'अत्राप्रस्तुतस्यैकस्येति भेद' इति शेषः । 'अन्योक्ति'रित्यस्या एवापरः पर्य्याय इति बोध्यम् ।

**उक्ता व्याजस्तुतिः पुनः ॥ ५९ ॥**

**निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः ।**

**निन्दया स्तुतेर्गम्यत्वे व्याजेन स्तुतिरिति व्युत्पत्त्या व्याजस्तुतिः ।**

स्तुत्या निन्दाया गम्यत्वे व्याजरूपा स्तुतिः । क्रमेण यथा—

'स्तनयुगमुक्ताभरणाः कण्टककलिताङ्गयष्टयो देव ।

त्वयि कुपितेऽपि प्रागिव विश्वस्ता द्विट्स्त्रियो जाताः ॥'

इदं मम ।

---

## विवृतिः

द्वयोः प्रस्तुताप्रस्तुतयोर्वाच्यत्वं प्रकरणादिनियमाभावादित्यर्थः । व्याजस्तुत्यलंकारमाह—**उक्तेति** । वाच्याभ्यामापाततः प्रतीयमानाभ्याम् । ननु निन्दाव्याजेन स्तुतिर्भवत्येव व्याजस्तुतिः स्तुतिव्याजेन निन्दा तु व्याजनिन्दैव भवति कथं व्याजस्तुतिरित्यतः संज्ञया द्विविधं योगार्थमाह—**निन्दयेति** ॥ **स्तनयुगेति** ।

राजानं प्रति कस्यचिदुक्तिरियम् । स्तनयुगे मुक्ताभरणं हारो यासाम् । पक्षे—स्तनयुगान्मुक्ताभरणं यासाम् । कण्टको रोमाञ्चः, तीक्ष्णाग्रवृक्षावयवश्च । प्रागितरकोपात् पूर्वकाल इव । विश्वस्ता अयमस्माकं नापकर्तेति विश्वासाश्रयाः । पक्षे—विधवाः । 'विश्वस्ता विधवा समे' इत्यमरः । अत्र स्त्रीणां पीडाजनकत्वेनापाततो निन्दा, पर्यवसाने तु शत्रुनाशकत्वेन स्तुतिः प्रतीयते ॥ **व्याजस्तुतिरिति** ।

## विवृतिपूर्तिः

**व्याजेति** । एवं व्याजनिन्दापि **कुवलयानन्दे**—'निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते । विधे ! स निन्द्यो यस्ते प्रागेकमेवाऽहरच्छिरः ॥' अत्र हरनिन्दया परिणामतापसंस्कारदुःखमयं जगद्विदधतो विधेर्निन्दाभिव्यक्तिरिति । अत्र **रसगङ्गाधरकाराः** प्राहुः—इयं च व्याजस्तुतिर्यस्यैव वस्तुनः स्तुतिनिन्दे प्रतममुपक्रम्येते तस्यैव चेन्निन्दास्तुत्योः पर्यवसानं भवेत्तदा भवति । वैयधिकरण्ये तु नेति प्राचामलंकारशास्त्रप्रवर्तकानां समयः । अतएव यत्र शब्देनाभिधीयमाना स्तुतिर्निन्दा वा बाधितस्वरूपा निन्दायां स्तुतौ च स्वसमर्पणेन पर्यवस्यतीति तैस्तत्र तत्र स्वग्रन्थेषूपनिबद्धम् । एवं च—'परोपसर्पणानन्तचिन्तानलशिखाशतैः । अचुम्बितान्तःकरणाः साधु जीवन्ति पादपाः ॥' इत्यादिषु सांसारिकजननिन्दापर्यवसायिन्यामपि पादपस्तुतौ न व्याजस्तुतित्वम् । प्रथमप्रतीयमानस्तुतेरबाधितत्वात् । एवं निन्दया स्तुतेर्गम्यत्वेऽपि । तथा—अन्यस्य स्तुत्या अन्यस्तुतौ, अन्यनिन्दया वा अन्यनिन्दायां गम्यमानायां नास्या अलंकृतेर्विषयः । पूर्वोक्तादेव हेतोः । यथा—'ये त्वां ध्यायन्ति सततं त एव कृतिनां वराः । मुधा गतं पुराराते ! भवदन्यधियां जनुः ॥' अत्र पूर्वोत्तरार्धगताभ्यां ध्यातृस्तुतिनिन्दाभ्यं ध्येयस्तुतिनिन्दयोरवगमः । एवं स्थिते कुवलयानन्दकर्त्रा स्तुतिनिन्दाभ्यां वैयधिकरण्येन निन्दास्तुत्योः स्तुतिनिन्दयोर्वावगमे प्रकारचतुष्टयं व्याजस्तुतेर्यदधिकमुक्तं तदपास्तम् । यदि तु प्राचीनसंकेतसेतुं निर्भिद्य स्वरुचिरमणीया सरणिराद्रियते, तदा निवेश्यन्तां सर्वेऽपि व्यङ्ग्यप्रकारा गुणीभूतव्यङ्ग्यप्रकारा वा अलंकारोदरेषु । न्निवेश्यतां वा व्याजस्तुतिरपि

योगार्थालीढत्वादप्रस्तुतप्रशंसायाम्। निरस्यतां च कार्यकारणादिविषयकत्वदुराग्रहस्तस्या इति बहु व्याकुली स्यात्। एवं पूर्वोक्तं प्रकार चतुष्टयं कुत्रान्तर्मवत्विति चेद् व्यङ्ग्यमेदेष्विति गृहाण। नहि व्यङ्ग्यभेदाः सर्वेऽपरमिता अलंकारप्रकारगोष्पदेऽन्तर्भावयितुं शक्यन्त इति॥

## विज्ञप्रिया

व्याजस्तुत्यलङ्कारमाह—**उक्ता व्याजेति**। **वाच्याभ्यामिति**। यद्यपि वक्ष्यमाणोदाहरणयोर्निन्दास्तुत्योरेकस्याऽपि वाच्यत्वं तथापि निन्दास्तुतिप्रयोजकार्थाभ्यां वाच्याभ्यामित्यर्थः। गम्यत्वे व्यङ्ग्यत्वे निन्दाव्याजेन स्तुतौ व्याजनिन्दात्वेन व्याजस्तुतिपरयोगार्थसम्भवात् समासद्वयेनोभयत्र ततपदार्थ घटयति—**निन्दयेति**।

अत्र निन्दाव्याजेन स्तुतिमाह—**स्तनेति**। हे देव ताः प्रसिद्धाः तव वैरिस्त्रियः त्वयि कुपिते प्रागिव विश्वस्ताः। अकोपदशायामिव कोपदशायामैक्यरूपमाह—**स्तनयोगेति**। मुक्तारचिताभरणाः। अकोपदशायां दृष्टत्वेन कण्टकैर्व्याप्तङ्गयष्टयः कोपदशायां तु भयेन कण्टकवनप्रवेशात्तादृशास्तथाऽकोपदशायां विश्वस्ता अभीता कोपदशायां तु विशिष्टमधिकं श्वस्तं श्वासो यासां तादृशाः, चिन्तया दीर्घनिःश्वासात्। सर्वत्रैव शब्दवाच्यत्वेन प्राकतुल्यत्वम् कोपेऽपि अकोपकालीनावस्थातोऽविशेषान्निन्दा। श्लिष्टपदद्वितीयार्थेन तु स्तुतिः।

## लोचन

व्याजस्तुतिरित्यलङ्कारनाम। व्यङ्ग्यहेतुकवैचित्र्यसारूप्यादप्रस्तुतप्रशंसानन्तरमस्या लक्षणम्; अस्याश्च स्तुतिनिन्दयोः सामान्यविशेषकार्यकारणतुल्याभावादप्रस्तुतप्रशंसातो भेदः।

मुक्तेत्यत्र मुक्तानि त्यक्तानि, पक्षे—मौक्तिकमयान्याभरणानि यस्याम् कण्टकस्तत्र लतागतः प्रसिद्धः, रोमाञ्चश्च। विश्वस्ता विधवा विश्वासयुक्ताश्च।

## कुसुमप्रतिमा

ननु अप्रस्तुताभिधानात् प्रस्तुतस्य गम्यत्वे अप्रस्तुतप्रशंसेव अन्याभिधानादन्वस्य गम्यत्वे अपरोऽपि कश्चिदलङ्कारो भयति न वेत्यपेक्षायां व्याजस्तुत्यलङ्कारं लक्षयति उक्तेति। वाच्यव्यां वाच्यार्थवत् श्रवणमात्रमेव बोध्याभ्यां निन्दास्तुतिभ्यां निन्द प्रशंसाभ्यां स्तुतिनिन्दयोर्यथासंख्येन प्रशंसानिन्दयोः गम्यत्वे प्रतीयमानत्वे पुनः, व्याजस्तुतिर्नाम अलङ्कृतिरुक्ता। तथा च—

स्पष्टया निन्दया प्रशंसाया गम्यत्वं, स्पष्टया प्रशंसया निन्दाया गम्यत्वे वा व्याजस्तुतिरिति फलितार्थः। अतएवेयं द्विविधा।

उभयपक्षेऽपि व्याजस्तुतिशब्दस्य क्रमेण व्युत्पत्तिमाह निन्दयेति। व्याजेन निन्दाच्छलेन, स्तुतिर्वास्तविकी प्रशंसा। व्याजरूपा छलरूपा अवास्तविकीत्यर्थः।

निन्दया प्रशंसाया गम्यत्वं दर्शयति स्तनेति। छलेन राज्ञः प्रशंसेयम्। अव्ययानां नानार्थत्वात् कुपितेऽपीत्यपिशब्द एवार्थः। तथा च हे देव! राजन्! त्वयि कुपितेऽपि क्रुद्ध एव सति, तव रिपुस्त्रियः, स्तनयुगातन्मुक्तं भयेन परित्यक्तम् आमरणमलङ्कारो याभिस्ताः, तथा कण्टकैर्भयेनैव सञ्जातै रोमाञ्चैः कलिता व्याप्ता अङ्गयष्टयो देहलता यासां तास्तथोक्ताश्च सत्यः, प्राक पतिमरणात् पूर्वमेव विश्वस्ता इव आभरणमोचनाद्विधवा इव जाताः। "विश्वस्ताविधवे समे" इत्यमरः।

अत्रानपकारिणीनामबलानामनर्थ कटु खोत्पादनात् श्रवणमात्रमेव राज्ञो निन्दा प्रतीयते, तयैव च पुनस्तस्य-महावीरत्वसूचनेन प्रशंसावगम्यत इति व्याजेन स्तवनाद्व्याजस्तुतिः ।

तर्कवागीशसम्मतः श्लेषव्याख्यानपञ्चस्तु न मनोरमः, तादृशपञ्चद्वयस्य परस्परासम्बद्धतया निन्दाकरण-कप्रशंसाप्रतीत्यभावादिति सुधीभिर्भाव्यम् ।

## विमला

व्याजस्तुतिमाह, उक्तेति—वाच्याभ्याम्—अभिधेयाभ्याम्, आपाततः प्रतीयमानाभ्यामित्यर्थः, निन्दास्तुतिभ्यां स्तुतिनिन्दयोर्गम्यत्वे—प्रतीयमानत्वे, व्याजस्तुतिरुक्ता । अयं भावः,—व्याजेन—छलेन, प्रकारान्तरेणेति यावत्, स्तुतिः,—प्रशंसनम् इति व्याजस्तुतिः, स्तुतेय प्रकारान्तरं निन्दा, तस्मात् निन्दारूपेण प्रकारान्तरेण स्तुतिर्व्याजस्तुतिरिति फलितम् । एवं व्याजा—छलरूपा, परमार्थदशायामवास्तवीति यावत्, स्तुतिरिति वा व्याजस्तुतिः; स्तुतेः अवास्तवत्वन्तु निन्दापरत्वादेव सम्भवति, तस्मात् स्तुत्या निन्दा व्याजस्तुतिरित्यपि फलितम्; वाच्यया निन्दया स्तुत्या वा स्तुतेर्निन्दाया वा पर्य्यवसीयमानत्वे व्याजस्तुतिरिति भावः ।

ननु निन्दाव्याजेन स्तुतिरिति भवतु व्याजस्तुतिः, स्तुतिव्याजेन निन्दा तु भवति, अथ कथमुभयथा व्याजस्तुतिः ? इत्यतः संज्ञाया द्विविधं योगार्थमाहनिन्दयेति ।

स्तनेति ।—राजानं प्रति कस्यचित् व्याजस्तुतिरियम् । हे देव ! त्वयि कुपितेऽपि रिपुणां स्त्रियः,—नार्य्यः, स्तनयुगेषु मुक्ताभरणं—हारो यासां तथाभूताः, (इति निन्दा) पक्षे—स्तनयुगेभ्यः मुक्तानि—त्यक्तानि, आभरणानि याभिरिति, स्तनयुगैः मुक्तानि—त्यक्तानि, आभरणानि यासामिति वा तथोक्ताः, (इति स्तुतिः) कण्टकेन—रोमाञ्चेन, पतिसङ्गजनितसात्त्विकभावविशेषेण इति यावत्, कलिताः,—आक्रान्ताः, अङ्गयष्टयो यासां तथाविधाः, (इति निन्दा) पक्षे—कण्टकैः,—सूच्यग्रतुल्यैः वृक्षाङ्गरुहविशेषैः, कलिता—आक्रान्ता, अङ्गयष्टिः,—चरणादिरूपाङ्गं यासां तथाभूताः, (इति स्तुतिः । "सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः" इत्यमरः) अत एव प्रागिव—इतरकोपात्पूर्वकाले इव, अकुपिते इवेत्यर्थः, विश्वस्ताः,—अयमस्माकं नापकर्त्ता इति विश्वासाश्रयाः, निःशङ्का इति यावत्, (इति निन्दा) पक्षे—विधवाः, ("विश्वस्ताविधवे समे" इत्यमरः) जाताः, (इति स्तुतिः) । अत्र शत्रु स्त्रीणां पीडाजनकत्वेन आपाततो निन्दा, पर्य्यवसाने तु शत्रुनाशकत्वेन स्तुतिः प्रतीयते इति निन्दया स्तुतेर्गम्यत्वम् । यथा वा—"कस्ते शौर्य्यमदो योद्धुं त्वय्येकं सप्तिमास्थिते । सप्तसप्तिसमारूढा भवन्ति परिपन्थिनः ॥" इति । अत्र राज्ञो निन्दा तत्परिपन्थिनाञ्च स्तुतिः वाच्या, तया प्रकृतस्य राज्ञः स्तुतिः, तत्परिपन्थिनाञ्च निन्दा प्रतीयते ।

## लक्ष्मी

व्यङ्ग्यहेतुकवैचित्र्यसारूप्यादप्रस्तुतप्रशंसानन्तरं व्याजस्तुतिनामालङ्कारं निरूपयति—**उक्तेति** । **वाच्याभ्यामिति** । यद्यपि वक्ष्यमाणोदाहरणयोर्निन्दास्तुल्योरेकस्यापि वाच्यत्वं तथापि निन्दास्तुतिप्रयोजकार्थाभ्यां वाच्याभ्यामित्यर्थ इत्यन्ये, निन्दास्तुतिभ्यां निन्दाप्रशंसाभ्यां स्तुतिनिन्दयोर्यथाक्रमेण प्रशंसानिन्दयोः गम्यत्वे व्यङ्ग्यत्वे पुनः, व्याजस्तुतिर्नाम अलङ्कृतिरुक्ता तथा च—वाच्यया निन्दया प्रशंसाया गम्यत्वे, वाच्यया प्रशंसया निन्दाया गम्यत्वे वा व्याजस्तुतिरितिपर्यवसितोऽर्थः ।

ननु निन्दाव्याजेन स्तुतिः स्यादेव व्याजस्तुतिः, स्तुतिव्याजेन निन्दा तु व्याजनिन्दैव स्यात् तत्कथं व्याजस्तुतिरिति पक्षद्वयेऽपि व्याजस्तुतिपदस्य यथासंख्येन योगार्थ दर्शयति निन्दयेति । व्याजेन निन्दाच्छलेन

स्तुतिर्यथार्थप्रशंसा, व्याजरूपा छलरूपा । अत्र स्तुतिनिन्दयोः सामान्यविशेषकार्यकारणतुल्याभावादप्रस्तुतप्रशंसातोऽस्या भेदः ।

निन्दया प्रशंसाया गम्यत्वे उदाहरति—**स्तनयुगेति** । व्याजेन कस्यचिद्राज्ञः स्तुतिरियम् । हे देव राजन् ! त्वयि कुपितेऽपि क्रुद्धेऽपि सति, द्विषां शत्रूणां स्त्रियः, स्तनयुगेषु मुक्ताभरणानि मौक्तिकगुम्फितभूषणानि यासां तास्तथोक्ताः, तथा कण्टकैस्त्रासेनैव सञ्जातैः रोमाञ्चैः पतिसम्भोगानुभवजन्यैः सात्त्विकभावविशेषैः कलिता व्याप्ता अङ्गयष्टयो देहलता यासां तास्तथोक्ताश्च सत्यः, अतएव प्राक् कोपात् पूर्वमेव विश्वस्ता अयस्माकं न क्लेशदा इति निःशङ्का जाता इति वाच्योऽर्थ इति राज्ञो निन्दा । अथ त्वयि कुपित एव स्तनयुगैर्मुक्तानि आभरणानि भूषणानि यासां तास्तथोक्ताः, कण्टकैः पलायनकाले तीक्ष्णाग्रवृक्षावयवैः कलिता खण्डिता अङ्गयष्टयो यासां तास्तथोक्ताः प्रागेव पतिमरणात् पूर्वमेव, विश्वस्ता विधवाः 'विश्वस्ता विधवा समे' इत्यमरः, द्विट्स्त्रियो जाताः । एतेन स्तुतिरभिव्यक्ता । आर्याच्छन्दस्तल्लक्षणञ्चोक्तं प्राक् ।

अत्र स्त्रीणां व्यथोत्पादकत्वेनापाततो राज्ञो निन्दा, पर्यवसाने तु शत्रुनाशकत्वेन तस्य स्तुतिरवगम्यत इति व्याजेन स्तवनाद्व्याजस्तुतिः ।

अत्र श्लेषव्याख्यानेनोभयपक्षस्यासम्बद्धत्वप्रतीतेः स्पष्टात्वात्तर्कवागीशमतनिराकरणं सिद्धान्तवागीशस्य सर्वथा हेयमेव प्रतिभाति पूर्वकालेदानींकालयोः साम्यद्योतनायैव हि पक्षद्वयस्यावश्यकत्वात् 'प्रागिव' इति स्पष्टमुक्तत्वात् । प्राचीनटीकाकृद्भिरेवमेवं व्याख्यातत्वाच्च ।

## रुचिरा

व्याजस्तुतिं लक्षयति—१४१ **उक्तेत्यादिना** ।

१४१ **वाच्याभ्याम्** । **निन्दास्तुतिभ्याम्** । **स्तुतिनिन्दयोः** । **गम्यत्वे** बोध्यत्वे सति । **पुनः** । **व्याजस्तुतिस्**तन्नामाऽलङ्कारः । **उक्ता** । तथा च यत्र वाच्यया निन्दया स्तुतिः, स्तुत्या पुनर्निन्दा पर्य्यवसीयते सा व्याजस्तुतिरिति फलितोऽर्थः ॥ ११३ ॥

अस्या अन्वर्थता निर्दिशति—**निन्दयेत्यादिना** । स्पष्टम् ।

उदाहर्त्तुकाम आह—**क्रमेणेत्यादि** । स्पष्टम् । '**स्तनेत्यादि** ।

हे **देव** राजन् ! **त्वयि** । **कुपिते** । **अपि** । **द्विट्स्त्रियो** द्विषां रिपुणां स्त्रियः । **स्तनयुगमुक्ताभरणाः** स्तनयुगेषु मुक्ताभरणानि मौक्तिकगुम्फितभूषणानि यासां तादृश्यः । **कण्टककलिताङ्गयष्टयः** कण्टके रोमाञ्चैः पतिसुरतानुभवजन्यैः सात्त्विकभावविशेषैः कलिता व्याप्ता अङ्गयष्टयो यासां तादृश्यः । अत एव-**प्राक्** त्वय्यकुपिते । **इव** । **विश्वस्ता** निश्शङ्काः । **जाताः** । इति वाच्या राज्ञो निन्दा, अथ—त्वयि । कुपिते । स्तनयुगैर्मुक्तान्याभरणानि यासां ता इति स्तनयुगमुक्ताभरणाः । कण्टकैः पलायनसमये वृक्षाङ्गैः कलिताः खण्डिता अङ्गयष्टयो यासां ताः कण्टककलिताङ्गयष्टयः । प्रागिव । विश्वस्तता विधवाः । 'विश्वस्ता विधवा समे ।' इत्यमरः । अपि । द्विट्स्त्रियः । जाताः; इति गम्या स्तुतिः । राज्ञः स्तुतिरियम् । अतएव स्तुतेर्व्यङ्गयत्वमावश्यकमूह्यम् । अत्रार्य्याछन्दस्तल्लक्षणं चोक्तं प्राक् ॥ २०३ ॥'

उक्तपद्यस्य स्वीयत्वं निर्दिशति—इदमित्यादिना स्पष्टम् ।

**'व्याजस्तुतिस्तव पयोद ! मयोदितेयं**
**यज्जीवनाय जगतस्तव जीवनानि ।**
**स्तोत्रं तु ते महदिदं घन ! धर्मराज-**
**साहाय्यमर्जयसि यत् पथिकान्निहित्य ॥'**

**पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते ॥ ६० ॥**

---

## विवृतिः

अयथार्थस्तुतिः धर्मराजस्य साहाय्याचरणेन आपाततः स्तुतिः, पर्यवसाने तु पथिकापकारेण निन्दा प्रतीयते ॥

## विज्ञप्रिया

स्तुत्या निन्दामाह—**व्याजस्तुतिरिति**। हे पयोद ! यज्जगतः जीवनाय तव जीवनानि जलानि इयं तव मया व्याजस्तुतिर्मिथ्यास्तुतिरेवोदिता। इतोऽधिकस्तुतिसत्त्वे इयं न स्तुतिरप्यस्तुतिरेवेत्यर्थः। अधिकां स्तुतिमाह—**स्तोत्रन्तु** ते इति। हे धन ! यत् पथिकान् विरहिणो निहत्य धर्मराजस्य यमस्य साहाय्यं महिमानमर्जयसि इदं तु ते महत्स्तोत्रं धर्मराजस्य तुल्यकर्म लोकमारणकारित्वेन माहात्म्याधिक्यात्तद्विरुद्धजगज्जीवनकारित्वे, नतु तादृशमाहात्म्यम्। अत्र पथिकमारकत्वेन निन्दा। त्र स्तुतेर्वाच्यत्वेऽपि स्तुतिप्रयोजकार्थपरतया यत्स्तुतिपदं व्याख्यातं तदुदाहरणान्तरसंग्रहाय। यता "दानात् प्रसंसां प्राप्तोऽसि कर्णेदानीं तु संगरात्। अपक्रम्य यशो दत्त्वाऽरये प्राप्तस्ततोऽधिका"मिति कर्ण प्रति अशवत्थाम्न उक्तौ स्तुतेरवाच्यता।

## लोचन

जीवनानि जलानि प्राणाश्च। घनं निरन्तरम्। धर्मराजो यमश्च

## कुसुमप्रतिमा

प्रशंसया निन्दाया गम्यत्वे उदाहरति व्याजेति। हे पयोद ! मेष ! जगतो जगज्जनस्य जीवनाय जीवनरक्षणाय तत्र जीवनानि जलानि यत् सम्भवन्तीति शेष; इयं सा, भया तव व्याजस्तुतिच्छलरूपास्तुतिर्मिथ्या प्रशंसा उदिता उक्ता, जगज्जगजीवनरक्षणस्य नद्यादिजलेनापि सम्भवादिति भावः। तु किन्तु, हे घन ! मेघ ! इदं महत् ते तव स्तोत्रं प्रसंसा ।; यत्, पथिकान् विरहिणी जनान् निहत्य विरहयातनायाः शतधोत्पादनेन विनाश्य, धर्म्मराजस्य धर्म्मानुसारेण प्राणिनां शासितुर्यमस्य साहाय्यं तेषां निहननेनैव सहायताम्, अर्जयसि करोषि।

अत्र धर्म्मराजमाहाय्यकरणेन श्रवणमात्रमेव प्रतीयमानया प्रशंसयैव निरपराधविरहिहत्याजनितनिन्दाया गम्यतया व्याजरूपस्तवनाद्व्याजस्तुतिः।

व्याजस्तुतौ गम्यार्थस्य प्रकृतत्वादगम्यार्थविशेषमादायैव पर्य्यायोक्तं नामालङ्कारं निरूपयति पर्य्ययोक्तमिति । यदा भङ्ग्या भङ्गीविशेषेण उक्तेः प्रकारविशेषेण गम्यमेव प्रतीयमानमेव वस्तु अभिधीयते अभिधेयवत् स्पष्टं प्रयाय्यते; तदा तत् पर्य्यायोक्तं नामालङ्कार उक्त इति लिङ्गव्यत्ययेन पूर्वतोऽनुकृष्यते । तथा च—

विशेषानुसन्धानेन प्रतीयमानस्यार्थस्य उक्तिवैचित्र्येण स्पष्टसूचनं पर्य्यायोक्तमिति सरलार्थः । विशेषरूपत्वेनापवादरूपा व्याजस्तुतिरस्य बाधिकेति बोध्यम् ।

## विमला

व्याजेति ।—पयोद !—हे मेघ ! तव जीवनानि—जलानि, जगतः जीवनाय, भवन्तीति शेषः, इति यत् इयं तव व्याजस्तुतिः,—कलरूपा स्तुतिः, घन !—हे मेघ ! इदन्तु ते—तव, महत् स्तोत्रं, यत् पथिकान् निहत्य धर्मराजस्य—नीतिपरतया महामहिम्नो राज्ञः, यमस्य वा, साहाय्यम्—आनुकूल्यम्, अर्जयसि । अत्र—स्तुत्या यमराजसाहाय्यार्जनरूपाया निन्दाया गम्यत्वम् । वसन्ततिलकं वृत्तम् । तथा च, "यद्वक्तं मुहुरीक्षसे न धनिना ब्रषे न चाटून्मृषा नैषां गर्ववचः श्रृणोषि न च तान् प्रत्याशया धावसि । काले बालतृणानि खादसि परं निद्रासि निद्राऽऽगमे तन्म ब्रूहि कुरङ्ग ! कुत्र भवता किन्नाम तप्तं तपः ?" ॥ इत्यत्र तु कुरङ्गस्तुत्या राजसेवानिर्विणस्य स्वात्मनो निन्दा व्यज्यते इति दीक्षिताः । प्राचञ्चस्तु—स्तुतिनिन्दयोः सामानाधिकरण्येन प्रतीतावेवोक्तलङ्कारमभ्युपगच्छन्ति । तेषामयमाशयः;—निन्द्यत्वबद्विषयकत्वं स्तुत्यतद्विषयकत्वञ्च तावत् स्तुतिनिन्दयोः व्याजत्वमिति स्पष्टम् एव, तदेव चोक्तालङ्कारप्रवृत्तिनिमित्तं, तच्च यस्यैव स्तुतिनिन्दे, तस्यैव निन्दास्तुत्योः प्रतीतौ सम्भवति, न त्वन्यथा । न च स्वविपर्य्ययतात्पर्य्यवत् स्तुतिनिन्दान्यतरकत्वमेव प्रवृत्तिनिमित्तं, तच्च सामानाधिकरण्यवैयधिकरण्योभयसाधारणमिति वाच्यम्, एकालङ्कारकोपाध्यवच्छिन्नविषयसाधारणम्यालङ्कारान्तरविभाजकोपाधेः कल्पयितुमनुचितत्वात्, वैयधिकरण्यस्थले चाप्रस्तुतप्रशंसयैवोपपत्तेः तत्साधारणप्रवृत्तिनिमित्तकल्पने प्रमाणाभावात्; तदुक्तमाचार्य्यादण्डिना—"अप्रस्तुतप्रशंसा स्यादप्रकाण्ड तु या स्तुतिः । अर्थेरयत्रसुलभैर्जलदर्भाङ्कुरादिभिः ॥ सुखं जीवन्तु हरिणा न यैष्व (ये स्व) परसेविनः । सेयमप्रस्तुतवात्र मृगवृत्तिः प्रशस्यते ॥ राजानुवर्त्तनक्लेशनिर्विणेन मनस्विना ॥" इति । यत्तूक्तम्—"अप्रस्तुतप्रशंसायामप्रस्तुतेन प्रस्तुतार्थप्रतिपत्तिमात्र, न तु प्रकृताप्रकृतयोः निन्दास्तुतिस्वरूपनियमः, अत्र स्तुत्या निन्दाऽभिव्यक्तिनियमात्; किञ्चैवं सम्मतस्थलेऽप्यप्रस्तुताभ्यां स्तुतिनिन्दाभ्यां प्रस्तुतनिन्दास्तुतिप्रतीतिः इत्यप्रस्तुतप्रशंसैव स्यात् इति व्याजस्तुतेरुच्छेदापत्तिः । स्तुतिनिन्दाप्रतीतिनियमरूपविशेषादतिरेकस्तूभयत्रापि समानः; अतः,—"अर्थैरयत्रसुलभैः,—" इत्यादौ व्याजस्तुतिरेव युक्ता" इति, तच्चिन्त्यम्; अप्रस्तुतेन प्रस्तुतप्रतिपत्तिमात्रमप्रस्तुतप्रशंसास्वरूपं, तच्चोक्तस्थलेऽप्यबाधितमेव इति न निन्दास्तुतिप्रतीतिनियमवैलक्षण्येनातिरिक्तत्वसम्भवः, उक्तधर्मावच्छिन्नत्वेन तदैक्यसिद्धयावान्तरविशेषेण तद्भेदानुपपत्तेः; अन्यथाऽनयैव रीत्या सामान्यधर्मावच्छिन्नावान्तरतत्तद्विशेषस्थलेऽप्यलङ्कारान्तरकल्पने अप्रस्तुतप्रशंसाविलयापत्तेः । यदपि किञ्चैवमित्यादि, तदप्यसत्, सम्मतस्थले स्तुतिनिन्दयोरेकधर्मत्वात् अप्रस्तुतप्रशंसायास्तत्रासम्भवेन व्याजस्तुतेः पार्थक्यस्य साम्राज्यात् । प्रस्तुतधर्मिकेऽप्यप्रस्तुतप्रशंसाऽभ्युपगमे तु ललितालङ्कारपार्थक्यस्वीकारः तत्रैव व्याहतः स्यादिति दिक् ।

## लक्ष्मी

प्रशंसया निन्दाया गम्यत्वे दर्शयति—**व्याजेति**। हे पयोद जलधर ! जगतः संसारिपुरुषस्य जीवनाय प्राणत्राणाय तव जीवनानि प्रारधारणजलानि, 'जीवनं सलिले प्राणधारणायां च जीविते' इति गोपालः।' यत् सम्भवन्तीतिशेषः, इयं सा मया तव व्याजस्तुतिः मिथ्यारूपा स्तुतिः प्रशंसा उदिता कथिता, इतोऽधिकस्तुतिसत्त्वे इयं न स्तुतिरपि तु स्तुतिरेवेत्यर्थः। संसारिपुरुषप्राणत्राणस्य नद्यादिजलेनाऽपि भवितुं शक्त्वादितिभावः। अधिकां स्तुतिमाह—**स्तोत्रन्त्विति**। तु किन्तु हे धन पयोद ! इदं महत्ते तव स्तोत्रं स्तुतिः; यत् पथिकान् वियोगिनः पुरुषान् निहत्य वियोगव्यथाया अनेकधोत्पादनेन व्यापाद्य, धर्मराजस्य धर्मानुसारेण जीवानां नियन्तुर्यमस्य। 'धर्मराजः पितृपतिः समवर्ती परेतराट्' इत्यमरः, साहाय्यं तेषां व्यापादने नैन सहायताम् अर्जयसि सम्पादयसि। **वसन्ततिल-काच्छल्लक्षणं प्रोक्तं** प्राक्।

अत्र धर्मराजसाहाय्यविधानेन आपातमात्रमेव गम्यमानया प्रशंसयैव अनपराधिवियोगिहननजनितनि-न्दायाः प्रतीयमानतया व्याजरूपस्तवनाद् व्याजस्तुतिः।

## रुचिरा

'हे **पयोद** मेघ ! **तव**। **जीवनानि** प्राणधारणाजलानि च। 'जीवनं सलिले प्राणधारणायां च जीविते।' इति गोपालः। **जगतो** विश्वस्य। **सञ्जीवनाय** जीवितरक्षणाय। 'यज्जीवनाये'ति पाठे तु 'य'दिति पृथक् पदम्। इति (यत्) **इयम्**। **तव**। **व्याजस्तुतिर्व्या**जरूपा स्तुतिः। **मया**। **उदिता**। **हे घन** ! **स्तोत्रं** स्तुतिर्वास्तविकी प्रशंसा। **तु**। **इदम्**। **ते**। **महत्**। **यत्**। **पथिकान्**। **निहत्य**। 'पथिकार्पणेने'ति पाठस्तु साधीयान्। **धर्मराजसाहाय्यं** धर्मराजस्य साहाय्यम्। **अर्जयसि** सम्पादयसि। अत्र स्तुत्या वाच्यया निन्दाया अवगमः। वसन्ततिलकं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ २०४ ॥'

अत्राहुः—'इयं चालङ्कारान्तरसङ्कीर्णाऽपि, यथा—"अये राजन्नाकर्णय कुतुकमाकर्णनयन ! स्फुरन्ती हस्ताम्भोरुहि तव कृपाणी रणमुखे। विपक्षाणां वक्षस्यहह तरुणानां निपतति प्रगल्भाः श्यामानामनुपरतकामाः प्रकृतयः॥" इति, अत्र हि समासोक्त्यर्थान्तरन्यासपोषिता निन्दया स्तुतिः। ननु कथमिह व्याजेन स्तुतिः, वाच्याभ्या-मेव निन्दास्तुतिभ्यां स्तुतिनिन्दयोर्गम्यत्वे तस्याः स्वीकारात्, समासोक्त्या च कामुकाव्यापारस्य निन्दनीयत्वेऽपि गम्यत्वात् न प्रकृतोपयोगित्वम्। इति चेत् ! वाच्याभ्यामामुखे प्रतीयमानाभ्यामित्यर्थं गृहाण।' इत्येके, अपरे तु 'गम्यया निन्दया गम्यायाः स्तुतेर्व्याजस्तुत्युपस्कारकत्वमेव न, व्याजस्तुतिर्हि वाच्यार्थीह विवक्षिता, न तु गम्या।' इति।

उदाहरणम्—

**'स्पृष्टास्ता नन्दने शच्याः केशसंभोगलालिताः ।**

**सावज्ञं पारिजातस्य मञ्जर्यो यस्य सैनिकैः ॥'**

अत्र हयग्रीवेण स्वर्गो विजित इति प्रस्तुतमेव गम्यं कारणं वैचित्र्यविशेषप्रतिपत्तये सैन्यस्य पारिजातमञ्जरीसावज्ञस्पर्शनरूपकार्यद्वारेणाभिहितम् । न चेदं कार्यात्कारणप्रतीतिरूपाप्रस्तुतप्रशंसा । तत्र कार्यस्याप्रस्तुतत्वात् । इह तु वर्णनीयस्य प्रभावातिशयबोधकत्वेन कार्यमपि कारणवत्प्रस्तुतम् । एवं च—

---

## विवृतिः

पर्यायोक्त्यलंकारमाह—**पर्यायोक्तमिति** । **भङ्ग्या** उक्तिवैचित्रयविशेषेण अभिधीयते अभिधेयवत्स्फुटं प्रतीयते । एवं च पर्यायेण भङ्ग्या व्यङ्ग्यस्य स्फुटप्रतिपादनं पर्यायोक्तम् ॥ **केशेति** । केशानां संभोगाय भूषणाय लालिताः सयत्नं पालिताः । इन्द्रस्यातिपराभवेन भयस्य, हयग्रीवोद्याने पारिजातमञ्जरीणामनुभूतत्वादादरस्य चाभावश्च सावज्ञमित्यनेन प्रतीयते । इत्थं च हयग्रीवेण स्वर्गः सुतरां जित इति व्यङ्ग्यः सुव्यक्त एव । **वैचित्र्यविशेषस्या**प्रस्तुतप्रशंसाजन्यवैचित्रयादिलक्षणवैचित्र्यस्य । **प्रतिपत्तये** सिद्धये । **कार्यद्वारेण** कार्याभिधानमुखेन । **अभिहितं** स्फुटं प्रतिपादितम् ॥

## विवृतिपूर्तिः

**भङ्ग्येति** । येन रूपेण विवक्षितोऽर्थस्तदतिरिक्तः प्रकारो भङ्गी ॥

## विज्ञप्रिया

पर्यायोक्तालङ्कारमाह—पर्यायोक्तमिति । गम्यं व्यङ्ग्यं तच्च प्रस्तुतस्य कारणरूपं बोध्यम् । भङ्ग्या प्रस्तुतमपि कार्यकथनरूपं भङ्ग्याभिधीयते प्रतिपाद्यते । व्यञ्जनयैवेति शेषः । नतु शक्त्या बोध्यत इत्यर्थः । प्रस्तुतकार्येण प्रस्तुतं कारणं यदा व्यज्यत इत्यर्थः । कारणव्यञ्जककार्यरूपायामप्रस्तुतप्रशंसायां तु अप्रस्तुतेन कार्येण प्रस्तुतं कारणं व्यज्यते इति भेदो वक्ष्यते तथा "इन्दुर्लिप्त इवाञ्जने"इत्यादौ ।

**स्पष्टास्ता** इति । शच्याः केशसम्भोगलालितास्ताः प्रसिद्धाः पारिजातस्य मञ्जर्यो यस्य हयग्रीवस्य नृपस्य सैनिकैर्नन्दने वने सावज्ञं स्पृष्टा इत्यर्थः । अत्रेति । गम्यं व्यङ्ग्यं कारणरूपं सावज्ञमञ्जरीस्पर्शस्य अभिहितं व्यञ्जनया प्रतिपादितम् । **वर्णनीयस्येति** । हयग्रीवनृप्येत्यर्थः । तत्प्रभावेनैव सावज्ञमञ्जरीस्पर्शात् ।

श्लोकान्तरेणापि प्रस्तुतकार्येण प्रस्तुतकारणव्यञ्जनादिदानीमलङ्कारं दर्शयति-**एवं चेति**। पतिवरामिन्दुमतीं धात्र्या उक्तिरियम् । अनेन राज्ञा शत्रु विलासिनीनां स्तनेषु मुक्काफलवत् स्थूलतमान् अश्रुबिन्दून् पर्यासयता पातयता आक्षेपसूत्रेण ग्रन्थनसूत्रेण विनैव हाराः प्रत्यर्पिताः अश्रुबिन्दव एव हारा कृता इत्यर्थः ।

## लोचन

सम्प्रति व्यङ्ग्यविच्छित्तिप्रकरणप्रसक्तं पर्यायोक्तं लक्षयति—**पर्यायोक्तमि**ति । भङ्ग्या चमत्कारनिपुणविच्छित्त्यन्तराश्रयेण व्यङ्ग्यम् अभिधीयते बोध्यते कार्यादिद्वारेणेत्यर्थः ।

## कुसुमप्रतिमा

पर्य्यायेण प्रकारविशेषेणोक्तमुक्तिरिति पर्य्यायोक्तमिति व्युत्पत्तिः । तथा च विश्वः—"पर्य्यायस्तु प्रकारे स्यान्निर्म्माणेऽवसरे क्रमे ।"

स्पृष्टा इति । यस्य हयग्रीवस्य सैनिकैः, शल्या इन्द्राण्याः केशसम्भोगाय केशपाशे परिधानाय लालिता उद्यानपालकैः पोषिताः, पारिजातस्य वृक्षस्य ताः प्रसिद्धा मञ्जर्य्यः, नन्दने कानने, सावज्ञम् अवज्ञया सहितं स्पृष्टाः; स हयग्रीवः प्रस्तूयेत इति पूर्वेणान्वयः ।

अत्रेति । गम्यं पूर्वप्रस्तावानुसन्धानेनैष बोध्यम् । कारणमिति । स्वर्गजयभावे सायङ्गपारिजातमञ्जरीस्पर्शासम्भवात् तज्जये च तत्सम्भवात् सावज्ञपारिजातमञ्जरीस्पर्शं प्रति स्वर्गजयस्यैव कारणत्वमिति भावः । अभिहितं स्पष्टं सूचितम् ।

अप्रस्तुतप्रशंसापर्य्यायोक्तयोर्भेदप्रदर्शनाभिप्रायेण "स्पृष्टास्ता नन्दने शच्याः" इत्यादावप्रस्तुतप्रशंसामाशङ्क्य समाधत्ते न चेति । इदं "स्पृष्टास्ताः—" इत्यादावनुभूयमानं वैचित्रयम् । अप्रस्तुतप्रशंसेति न च वाच्यमित्यर्थः । तत्र कार्य्यात् कारणप्रतीतिरूपायामप्रस्तुतप्रशंसायाम । अप्रस्तुत्वादप्रस्तुतत्वनियमात्, तथैव तल्लक्षणादिति भावः । इह तु "स्पष्टास्ताः—" इत्यादौ तु, वर्णनीयस्य हयग्रीवस्य । कार्य्यमपि सावज्ञपारिजातमञ्जरीस्पर्शनमपि, कारणवत् स्वर्गविजयवत्, प्रस्तुतम्, स्वर्गविजयावगमेनैव तादृशस्पर्शादिरूपात्याचारस्याप्यवगम्यमानत्वादिति भावः । इत्यञ्च "स्पृष्टास्ताः—" इत्यादौ प्रस्तुतादेव प्रस्तुतान्तरप्रतीतेर्नाप्रस्तुतप्रशंसा, किन्तु पर्य्यायोक्तमेवेत्याशयः ।

एवञ्चेति । उक्तरीत्या "स्पृष्टास्ता नन्दने शच्या' इत्यादौ पर्य्याभोक्ते चेत्यर्थः ।

## विमला

पर्य्यायोक्तमाह, पर्य्यायोक्तमिति ।—यदा भङ्ग्या—भङ्गीक्रमेण, उक्तिवैचित्रयविशेषेणेत्यर्थः, गम्यमेव—बोध्यमेवेत्यर्थः, अभिधीयते—अभिधेयवत् स्फुटं प्रतीयते, तत् पर्य्यायोक्तम् एवञ्च पर्य्यायेण भङ्ग्या व्यङ्ग्यस्य स्फुटप्रतिपादनं पर्य्यायोक्तम् इति सारः ।

स्पृष्टा इति ।—यस्य—हयग्रीवस्य इत्याशयः, सैनिकैः शच्याः,—इन्द्राण्याः, केशानां सम्भोगे—नेपथ्यक्रियायाम् इत्यर्थः, लालिता,—प्रयुक्ताः, यद्वा—केशानां सम्भोगाय—भूषणाय, लालिताः,—सयत्रं पालिताः, नन्दने—तदाख्योपवने, पारिजातस्य ताः,—प्रसिद्धाः, मञ्जर्य्यः, सावज्ञं—सावहेलं, स्पृष्टाः, स हयग्रीव आसीदिति शेषः ।

अत्रेति ।—अत्र इन्द्रस्यातिपराभवेन भयस्य, हयग्रीवोद्याने पारिजातमञ्जरीणामनुभूतत्वात् आदरस्य चाभावः सावज्ञमित्यनेन प्रतीयते; इत्यञ्च हयग्रीवेण स्वर्गः सुतरां जित इति व्यङ्ग्यं सुव्यक्तमेव इति ज्ञेयम् ।

वैचित्र्यविशेषस्य—अप्रस्तुतप्रशंसाजन्यवैचित्र्यादिलक्षणवैचित्र्यस्य, प्रतिपत्तये—सिद्धये। कार्य्यद्वारेण—कार्य्याभिधानमुखेन, अभिहितं—स्फुटं प्रतिपादितम्।

## लक्ष्मी

व्याजस्तुतौ प्रतीयमानार्थस्य प्रस्तुतत्वात् प्रतीयमानार्थविशेषमाश्रित्यैव पर्यायोक्तं नामलङ्कारं लक्षयति—**पर्यायोक्त**मिति। यदा भङ्ग्या येन रूपेण विवक्षितोऽर्थस्तदतिरिक्तप्रकारो भङ्गी तया चमत्कारनिपुणविच्छित्त्यन्तराश्रयेणेत्यर्थः, गम्यमेव प्रतीयमानमेव वस्तु, अभिधीयते अभिधेयवत्, स्फुटं प्रतीयते कार्यादिद्वारेणेत्यर्थः, तदा तत् पर्यायेण प्रकारान्तरेणोक्तम् अभिहितं व्यङ्ग्यं पर्यायोक्तं नामालङ्कार **उक्त** इति पूर्वतो लिङ्गव्यत्ययेनानुषञ्जनीयः। तथाच पर्यायेण चमत्कारनिपुणविच्छित्त्यन्तराश्रयेण व्यङ्ग्यस्यार्थस्य स्फुटप्रतिपादनं पर्यायोक्तमिति फलितम्। 'पर्यायोक्तं प्रकारे स्यान्निर्माणेऽवसरे क्रमे' इति विश्वः। विशेषरूपत्वेनापवादरूपा व्याजस्तुतिरस्य बाधिकेति केचित्। **अत्रेदम्बोध्यम्**—

अस्यां हि गम्यस्य येनाकारेण गम्यता तदतिरिक्ताकारेम वाच्यता। तेन पर्यायेण भङ्ग्यन्तरेणोक्तमभिहितं व्यङ्ग्यं यत्र तदितिव्युत्पत्त्या लब्धं लक्षणमसङ्गतमिति नाशङ्कनीयम्, एकस्यैवार्थस्य प्रकारभेदेन व्यङ्ग्यत्ववाच्यत्वयोरविरोधात्। यथा यावककुसुम्भजपाकुसुमादिरूपाणां रक्तत्वादिना वाच्यत्वेऽपि तत्तद्वैजात्यरूपेण प्रत्यक्षत्वमेव न तु वाच्यत्वम्, यथेहापीति **मम्मटभट्टानामाशयः**। उदाहर्तुकाम आह—**उदाहरण**मिति। यथेतिशेषः।

दर्शयति—**स्पृष्टास्ता** इति। मेण्ठकवेर्हयग्रीववधस्य पद्यमिदम्। यस्य ह्यग्रीवस्य तदाख्यदैत्यराजस्य, सैनिकैः सेनास्थितैः शूरैः, शच्या इन्द्राण्याः, केशसम्भोगाय केशपाशे भूषणपरिधानाय लालिता उद्यानपालकैः सयत्नं पालिताः, पारिजातस्य कल्पवृक्षस्य ताः प्रसिद्धा मञ्जर्यः, नन्दने तदाख्ये विपिने, सावज्ञम् अवज्ञया सहितं स्पृष्टाः, सं हयग्रीवः प्रस्तूयत इति पूर्वेण सम्बन्धः।

भङ्ग्यन्तरेणाभिधानं सप्रयोजन दर्शयति—**अत्रेति**। गम्यं पूर्वप्रस्तावपर्यालोचनेनैव व्यङ्ग्यम्। **कारण**मिति। स्वर्गविजयमन्तरा सैनिकैः सावज्ञापारिजातमञ्जरीस्पर्शनासम्भवात्, तद्विजये च तत्सम्भवात् सावज्ञपारिजातमञ्जरीस्पर्शनं प्रति स्वर्गविजयस्यैव हेतुत्वमितिभावः। वैचित्र्यविशेषस्येति अप्रस्तुतप्रशंसासमासोक्तिचमत्कारातिशयस्य प्रतिपत्तिर्ज्ञानं तस्यै तथोक्तये। सैन्यस्य हयग्रीवयोद्धृसमूहस्य। अभिहितं स्पष्टं बोधितमित्यर्थः।

नन्वेवं कार्यात् कारणप्रतीतिरूपाप्रस्तुतप्रशंसैवास्तामलमलङ्कारान्तरणेत्यत आह—**न चेति**। इदं 'स्पृष्टास्ता नन्दने शच्याः' इत्यादावुदाहरणे कारणं बोधयितुं कार्याभिधानम्, अप्रस्तुतप्रशंसेति नच वाच्यमित्यर्थः। तदभावे हेतुमुपन्यस्यति—**तत्रेति**। कारणात् कारणप्रतीतिरूपायामप्रस्तुतप्रशंसायामित्यर्थः। अप्रस्तुतत्वादप्रस्तुतत्वनिश्चयात् तथैव तल्लक्षणविधानादित्याशयः। इह तु 'स्पृष्टास्ताः—' इत्यादौ तु वर्णनीयस्य प्रस्तुतस्य हयग्रीवस्य। कार्यमपि सावज्ञपारिजातमञ्जरीस्पर्शमपि, कारणवत् स्वर्गविजयवत् प्रस्तुतम्, स्वर्गविजयप्रत्यायनेनैव सावज्ञपारिजातमञ्जरीस्पर्शादिरूपदुराचारस्यापरि प्रतीयमानत्वादित्यभिप्रायः, एवञ्चोक्तोदाहरणे प्रस्तुतादेव प्रस्तुतान्तरापगमादप्रस्तुतप्रशंसाया अभावे वातिरिक्तं पर्यायोक्तमेवेतिभावः।

## रुचिरा

पर्य्यायोक्तं लक्षयति—१४२ **पर्य्यायोक्त**मित्यादिना।

**१४२ यदा भङ्ग्योक्तिवैचित्र्येण**। गम्यं बोध्यम्। **एव**। **अभिधीयते**। तदा-**पर्य्यायोक्तं** पर्यायेण प्रकारान्तरेणोक्तं कथनमिति तन्नामालङ्कार इति भावः। तथाऽऽहुः—'विवक्षितस्यार्थस्य भङ्ग्यन्तरेण प्रतिपादनं पर्य्यायोक्तम्।' इति।

उदाहर्त्तुकाम आह—**उदाहरणमिति**। स्पष्टम्। 'यथा' इति शेषः। '**स्पृष्टा** इत्यादि।

'**नन्दने**। **यस्य** हयग्रीवस्य दैत्यराजस्य। **सैनिकैः** सेनास्थितैर्वीरैः। **शच्या** इन्द्रपत्न्याः। **केशसम्भोलालिताः** केशानां सम्भोगो भूषणं तस्मै लालिता प्रेम्णा वर्धिताः। **ताः** प्रसिद्धाः। **पारिजातस्य** कल्पवृक्षस्य। **मञ्जर्य्यः**। **सावज्ञं** साक्षेपम्। **स्पृष्टाः**। 'स हयग्रीव' इति शेषः। मेण्ठकवेर्हयग्रीववधस्येदं पद्यम्॥ २०५॥'

भङ्ग्यन्तरेणाभिधानं सप्रयोजनं निर्दिशति-**अत्रेत्यादिना**।

**अत्र**। '**हयग्रीवेण** तदाख्येन दैत्येन। **स्वर्गः** विजितः।' **इति**। **प्रस्तुतम्**। **एव**। **कारणम्**। **गम्यं** व्यङ्ग्यम्। **वैचित्र्यविशेषप्रतिपत्तये** वैचित्र्यविशेषस्याप्रस्तुतप्रशंसासमासोक्तिचमत्कारातिशयस्य प्रतिपत्तिरवबोधस्तस्यै। **सैन्यस्य** हयग्रीवयोद्धसङ्घस्य। **पारिजातमञ्जरीसावज्ञस्पर्शनरूपकार्य्यद्वारेण**। **अभिहितम्**। अयम्भावः—हयग्रीवस्य सैनिकैर्नन्दनस्थाः शचीप्रियाः पारिजातमञ्जर्यः सावज्ञं स्पृष्टा इत्यभिधानं 'हयग्रीवेण स्वर्गो विजित' इति प्रस्तुतं व्यञ्जयति, स्वर्गविजयमन्तरा शचीप्रियाणां तासां सावज्ञ परस्पर्शनासम्भवात्। अतः प्रकृतं स्वर्गविजयमनभिधाय प्रकृतं तत्कार्य्यं पारिजातमञ्जरीस्पर्शनरूपमभिहितम्, एतच्च 'सावज्ञ' मिति साचिव्येन प्रस्तुतस्यानयाससिद्धत्वं प्रत्याययति। इति। नन्वेवं कार्य्यात् कारणप्रतीतिरूपाऽप्रस्तुतप्रशंसैवेयं किं न स्यादित्याशङ्क्याह—**इदं** कारणं प्रत्याययितुं कार्य्याभिधानमित्यर्थः। **च**। **कार्य्यात् कारणप्रतीतिरूपा**। **अप्रस्तुतप्रशंसा**। **न**। हेतुं निर्दिशति—**तत्र** तस्यामप्रस्तुतप्रशंसायाम्। **कार्य्यस्य**। **अप्रस्तुतत्वात्**। **इह**। **तु**। **वर्णनीयस्य** स्वर्गविजयरूपस्य प्रस्तुतस्य कारणस्य। **प्रभावातिशयबोधकत्वेन**। **कार्य्यम्**। **अपि**। **कारणवत्**। **प्रस्तुतम्**। एतेन सिद्धमर्थं निर्दिशति—**एवं**। **च**।

**'अनेन पर्यासयताश्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु ।**
**प्रत्यर्पिताः शत्रुविलासिनीनामाक्षेपसूत्रेण विनैव हाराः ॥'**

अत्र वर्णनीयस्य राज्ञो गम्यभूतशत्रुमारणरूपकारणवत्कार्यभूतं तथाविधशत्रुस्त्रीक्रन्दनजलमपि प्रभावातिशयबोधकत्वेन वर्णनार्हमिति पर्यायोक्तमेव ।

---

## विवृतिः

**अनेनेति** । पर्यासयता पातयता । आक्षेपसूत्रेण ग्रन्थनगुणेन ॥ **वर्णनार्हं** वर्णनार्हत्वेन प्रस्तुतम् । **पर्यायोक्तमेवे**त्येवकारेणाप्रस्तुतप्रशंसाव्यवच्छेदः ॥

## विज्ञप्रिया

अप्रस्तुतकार्येण प्रस्तुतकारणव्यञ्जनरूपाया अप्रस्तुतप्रशंसाया उदाहरणं "राजन् राजसुता इत्यादिकं" काव्यप्रकाशकृता दत्तम्; तत्रापि कार्यस्य प्रस्तुतत्वमेवेति । केचिदाहुः तद्दर्शयितुमाह—**राजन्निति** । शत्रुजयोद्यतं राजानं प्रतितदमात्यस्योक्तिरियम् । तवारयः पलायिताः । तत्पुरीमध्येनैव वर्त्म प्रवृत्तम् । अतोऽध्वगैः पञ्जरान्मुक्तो राजशुकस्तदीयशून्यवड्भौ चित्रलिखितान् राजादीनवलोक्य एकैकमित्थमाभाषत् इत्यर्थः । किमाभाषत इत्यत्राह — **राजन्निति** । देव्य इति सम्बोधनं यूयमपि तूष्णीं स्थिता इत्यर्थः । न तु राज्ञ इयमुक्तिरेकैकभाषणानुपपत्तेः । कुब्जा शुकभोजननियुक्ता काचिद् राजकुमारी । सचिवभोजनकाले तद्भोजननियमात् पृच्छति **कुमारेति** ।

## कुसुमप्रतिमा

अनेनेति । रघुवंशषष्ठसर्गस्थमिदं पद्यम् । अनेन अङ्गदेशाधिपतिना, शत्रुविलासिनीनां स्तनेषु, मुक्ताफलस्थुलतमान् भौक्तिकवत् पीवरान्, अश्रुविन्दुन् पर्य्यामयता पातयता सता, आक्षेपसूत्रेण विनैव हाराः प्रत्यर्पिता दत्ताः ।

अत्रेति । राज्ञः अङ्गनाथस्य, गम्यभूतं व्यञ्जनया बोध्यरूपं यत शत्रुसारणरूपं कारणं तहत् । कार्य्यभूतमिति । शत्रुमारणादेव तत्स्त्रीणां क्रन्दनजलमुत्पन्नमिति शत्रुमारणस्य कारणत्वम्, तत्क्रन्दनजलस्य च तत्कार्य्यत्वमिति बोध्यम् । प्रभावातिशयबोधकत्वेन राज्ञ इति पूर्वेण सम्बन्धः । वर्णनार्हं वर्णनाहत्वेन प्रस्तुतम्, इति हेतोः, पर्य्यायोक्तमेव, न पुनरप्रस्तुतप्रशंसेति भावः । एतेन प्रस्तुतादेव प्रस्तुतावगतौ पर्य्यायोक्तम्, अप्रस्तुतादेव च प्रस्तुतावगतौ अप्रस्तुतप्रशंसेत्यनयोर्भेदो ग्रन्थकृतापि सूचितः ।

## विमला

अनेनेति ।—अनेन—राज्ञा इति यावत्, शत्रुविलासिनीनां—रिपुसुन्दरीणां, स्तनेषु मुक्ताफलानीव स्थूलतमान्—अतिस्थूलान्, अश्रुविन्दून् पर्य्यासयता—पातयता सता, आक्षेपसूत्रेण—ग्रन्थनगुणेन, गुल्फनसूत्रेण इति यावत्, विनैव हाराः,—मुक्तावल्यः, प्रत्यर्पिताः । उपजातिर्वृत्तम् । रघुवंशस्येदं पद्यम् ।

अत्रेति ।—वर्णनार्हमिति—वर्णनार्हत्वेन प्रस्तुतमित्यर्थः । पर्य्यायोक्त-मेवेत्येवकारेण अप्रस्तुतप्रशंसाव्यवच्छेदः ।

## लक्ष्मी

सम्प्रति पद्यान्तरेऽपि प्रस्तुतकार्येण प्रस्तुतकारणप्रतीतेरेलङ्कारं प्रदर्शयति—**एवञ्चेति**। उक्तदिशा 'स्पृष्टास्ता:' इत्यादौ पर्यायोक्ते चेत्यर्थ:।

तादृशपद्यान्तरमाह—**अनेनेति**। रघुवंशे षष्ठसर्गे पतिंवरामिन्दुमतीं प्रति धात्र्या उक्तिरियम्। अनेन अङ्गदेशाधिपतिना शत्रुविलासिनीनां शत्रुस्त्रीणां स्तनेषु मुक्ताफलेभ्य: स्थूलतमा: अत्यन्तं पीवरास्तान् अश्रुविन्दून् पर्यासयता पातयता सता, आक्षेपसूत्रेण ग्रथनसूत्रेण विनैव हारा: प्रत्यर्पिता अश्रुबिन्दव एव हारा: कृता इत्यर्थ:। अत्रेन्द्रवज्रोपेन्द्रवज्रयो **रूपजातिश्छन्दस्तल्लक्षणं** चोक्तं प्राक्।

उक्तोदाहरणे पर्यायोक्तसद्भावमुपपादयति—**अत्रेति**। वर्णनीयस्य प्रस्तुतवर्णनस्य, राज्ञोऽङ्गदेशाधिपते:, गम्यभूतं व्यञ्जनावृत्त्या प्रतीयमानरूपं यत् शत्रुमारणरूपं कारणं तद्वत्। **कार्यभूतमिति**। शत्रुमारणादेव तत्स्त्रीक्रन्दनजलं प्रादुर्भूतमितिशत्रुमारणस्य कारणत्वम्, तत्क्रन्दनजलस्य च तत्कार्यत्वमित्यवधेयम्। प्रभावातिशयोऽङ्गदेशाधिपते: पराक्रमातिशयस्तद् बोधकं तस्य भावस्तत्त्वं तेन तथोक्तेन अस्य 'राज्ञ' इति पूर्वेणान्वय:। वर्णनार्हं प्रस्तुतमितिशेष:। इति हेतो: पर्यायोक्तमेव न त्वप्रस्तुतप्रशंसेतिभाव:। उक्तोदाहरणेनाऽपि प्रस्तुतादेव प्रस्तुतप्रतीतौ पर्यायोक्तम्, अप्रस्तुतादेव च प्रस्तुतप्रतीतौ अप्रस्तुतप्रशंसेतिस्फुटमुभयोर्भेद इति ग्रन्थकर्त्तुराशय:।

अप्रस्तुतकार्येण प्रस्तुतकारणव्यङ्ग्यरूपाया अप्रस्तुतप्रशंसाया उदाहरणं 'राजन् राजसुता' इत्यादिकं काव्यप्रकाशकृता दत्तम्, तत्रापि कार्यस्य प्रस्तुतत्वे पर्यायोक्तमेवेति नव्या वदन्तीति सन्दिग्धस्थलं तद्दर्शयति—**राजन्निति**। शत्रुजयोद्यतं राजानं प्रति तदमात्यस्योक्तिरियम्। हे देव! तव अरिभवने त्वदागमनभिया शून्यीकृते प्रतिनृपतिमन्दिरे अध्वगै: पथिकै: पञ्जरात् पक्ष्यादिबन्धनागारात् पिञ्जरात् मुक्त: प्रच्यावित:, राजशुक: प्रतिनृपतिशुक: शून्यवलभौ जनहीनोपरिगृहसौधे स्थित इति शेष:।

'शुद्धान्ते वलभीचन्द्रशाले सौधोर्ध्ववेश्मनि' इति रभस:,

## रुचिरा

'**शत्रुविलासिनीनां** शत्रुस्त्रीणाम्। **स्तनेषु**। **मुक्ताफलस्थूलतमान्** मुक्ताफलेभ्य: स्थूलतमा अत्यन्तं स्थूलास्तान्। **अश्रुबिन्दून्**। **पर्यासयता** पातयता। **अनेन** शत्रुहन्त्राऽङ्गदेशाधिपेन। **आक्षेपसूत्रेण** ग्रन्थनसूत्रेण। **विना**। **हारा:**। **एव**। **प्रत्यर्पिता:**। रघुवंशस्येदं पद्यम्॥ २०६॥'

उदाहृते पद्ये तत्सद्भावं समर्थयते-**अत्रेत्यादिना**।

**अत्र**। **वर्णनीयस्य** प्रस्तुतवर्णनस्य। **राज्ञोऽङ्गदेशाधीशस्य**। **गम्यभूतशत्रुमारणरूपकारणवत्** गम्यभूतं शत्रुस्त्रीक्रन्दनकार्य्यानुमेयं यत् शत्रुमारणं तदेव रूपं यस्य तादृशं यत् कारणं तदिवेति तथोक्तम्। **कार्य्यभूतम्**। **तथाविधशत्रुस्त्रीक्रन्दनजलम्**। **अपि**। **प्रभावातिशयबोधकत्वेन** प्रभावातिशयोऽङ्गराजस्य पराक्रमातिशयस्तस्य बोधकं तस्य भावस्तत्त्वं तेन। **वर्णनार्हं** प्रस्तुतमिति भाव:। **इति**। **पर्य्यायोक्तम्**। एव 'नत्वप्रस्तुतप्रशंसा' इति शेष:।

**'राजन्राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः**
**कुब्जे भोजय मां, कुमार सचिवैर्नाद्यापि किं भुज्यते।**
**इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-**
**च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥'**

अत्र प्रस्थानोद्यतं भवन्तं श्रुत्वा सहसैवारयः पलायिता इति कारणं प्रस्तुतम्। 'कार्यमपि वर्णनार्हत्वेन प्रस्तुतम्' इति केचित्।

---

## विवृतिः

**काव्यप्रकाशे** कार्यात्कारणरूपाप्रस्तुतप्रशंसाया दत्तमुदाहरणं **पर्यायोक्तविषयत्वेन** संभावयति—**राजन्निति**। शत्रुजयोद्यतं राजानं प्रति तच्चरस्योक्तिरियम्। तवारेर्भवने वास्तुनि अध्वगैः पञ्जरान्मुक्तो राजशुकः शून्यवलभौ राजादिहीनगृहे चित्रस्थान् राजदीनवलोक्यैकैकमेवमाभाषते ॥ चित्रस्थांस्तानवलोक्य किमाभाषत इत्यत आह—**राजन्निति**। **देव्योऽपि** राजपत्न्योऽपि तूष्णीं स्थिता न पाठयन्ति। कुब्जा तद्भोजने नियुक्ता काचित्। कुमारैरेव सचिवैरस्मद्भोजनसहचरैः। **अद्यापि**। इदानीमपि। **कार्यमपीति**। शुकाभाषणरूपं कार्यम् ॥

## विज्ञप्रिया

केषाञ्चिन्मते अत्रारिपलायनरूपप्रस्तुतकारणस्य कार्यं शुकभाषणप्रस्तुतमेवेति तद्दर्शयति— **अत्रेति**। काव्य प्रकाशकृदभिप्रायं दर्शयति—**अन्ये त्विति**। **राजशुकवृत्तान्तेनेति**। शत्रुमारणकार्याश्रुबिन्दुपातनवत् शुकाभाषणस्य शत्रुपलायननियतकार्यत्वाभावेन सम्बोध्यराजप्रभावबोधकत्वाभावादित्यर्थः। महामारीवशादपि तत्पुरशून्यत्वसम्भवादिति भावः।

पलायनकार्यत्वाभिप्रायेणत्वमात्येन कथनमुपपद्यते एव। वस्तुतस्तु अमात्यवाक्ये प्रस्तुतत्वमखण्डनीयमेव।

## कुसुमप्रतिमा

सन्दिग्धं लक्ष्य काव्यप्रकाशादुदाहरति राजन्निति। आक्रमणीयो राजाः स्वराजधान्यां कीदृशभावेन वर्त्तते इयवगन्तुं प्रेरितेन गुप्तचरेण तदवगत्यागत्य प्रेवयितुर्नृपतेरन्तिके उक्तमिदम्। हे देव ! तव अभिभवने शत्रुपाठ्याम्, अध्वगैः पथिकैः पञ्जारात् पिञ्जरात् मुक्तः प्रच्यावितः, राजशुको राजकीयशुकपक्षी, शून्यवड़मौ जनहीनचन्द्रशालायां स्थित इति शेषः, चित्रस्थान पटे भित्तौ वा चित्रितान् राजादीनिति शेषः, अवलोक्य इत्यमेकैक राजादीनामेकम्, आमषते आलपति। किन्तदित्याह—हे राजन् ! राजसुता मां न पाठयति कृष्णकथादिकमिति शेषः, देव्यो महिव्योऽपि तूष्णीं स्थिता न मां पाठ्यन्तीत्यर्थः, हे कुजे। मत्परिपालिके ! कुञ्जनारि ! मां भोजय, अद्यापि इदानीमपि, कुमारा राजपुत्रा एव सचिवाः स्वसहचरास्तैः किं न भुज्यते।

अत्रेति । प्रस्थानोद्यतम् आत्मनामाक्रमणायेति शेषः । कारणं तत्पलायनरूपम्, तेनैव तादृशशुकाभाषणस्य जनितत्वादिति भावः । कार्य्यमपि तादृशशुकाभाषणमपि । केचिन्नव्याः । एवञ्चैषां मते प्रस्तुतादेव तादृशशुकाभाषणकार्य्यात् प्रस्तुतस्यैव शत्रुपलायनरूपकारणस्य प्रतीतेः पर्य्यायोक्तमेवेति बोध्यम् ।

काव्यप्रकाशकारमतमाह अन्येत्विति । राजशुकवृत्तान्तेन राजन्नित्याद्याभाषणरूपेण । प्रस्तुतस्य विपक्षराजस्य कोऽपि प्रभावो न नास्तीति बोध्यते कविनेति शेषः, सहसैव पलायनादिति भावः । तथा च अप्रस्तुतात् राजशुकवृत्तान्तरूपकार्य्यात् प्रस्तुतस्य विपक्षराजपलायनरूपस्य कारणस्य प्रतीतेरप्रस्तुतप्रशंसेति काव्यप्रकाशकृतामाशयः । यथा काव्यप्रकाशे—"प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गता इति कारणे प्रस्तुते कार्य्यमुक्तम्" ग्रन्थकृन्मते तु निश्चित्यैकतरानभिधानात् उक्तोभययुक्तेरेव सम्भवाच्च अप्रस्तुतप्रशंसापर्य्यायोक्तयोः सन्देहसङ्कर एवेति ध्येयम् ।

## विमला

काव्यप्रकाशे कार्य्यात् कारणरूपाप्रस्तुतप्रशंसायाः दत्तमुदाहरणं पर्य्यायोक्तविषयत्वेन सम्भावयति, राजन्निति ।—शत्रुजयोद्यतं राजानं प्रति पलायितेषु राजपरिवारेषु प्रासादस्थितस्य पालितशुकस्य राजादिचित्रपटेषु राजादिबुद्धया आवेदनस्य तच्चारमुखेनोक्तिरियम् । हे राजन् ! राजसुता मां न पाठयति, देव्यः,—महिष्यः अपि, तूष्णीं स्थिताः,—न पाठयन्ति इति भावः, हे कुब्जे ! मां भोजय, कुमारस्य—राजपुत्रस्य, सचिवैः,—सहचरैः, यद्वा—कुमारैरेव सचिवैः,—अस्मद्‌भोजनसहचरैः, किं—कथम्, अद्यापि—इदानीमपि, न भुज्यते ? इत्थम्—अनेन प्रकारेण, तव अरेः भवने—वास्तुनि, अध्वगैः,—पथिकैः, पञ्जरात्—पिञ्जरात्, मुक्तः राजशुकः शून्यबड़भौ—राजादिहीनगृहे इत्यर्थः,—चित्रस्थान, राजादीनिति शेषः, अवलोक्य एकैकम्—एकाकी एव, आभाषते—कथयति । शार्दूलविक्रीड़ितं वृत्तम् ।

अत्रेति ।—कार्य्यमपीति—शुकाऽऽभाषणरूपं कार्य्यमपीत्यर्थः ।

## लक्ष्मी

चित्रस्थान् पटे भित्तौ वा आलेख्यगतान् राजादीनितिशेषः अवलोक्य एकैकं एकमेकं प्रति इत्थमनेन प्रकारेण आभाषते आलपति । इत्थं कथमिति जिज्ञासायामाह—**राजन्नित्यादि** । हे राजन् नाथ ! राजसुता मां शुकं न पाठयति श्रीकृष्णचरितादिकमितिशेषः, देव्यो राज्ञ्योऽपि तूष्णीं स्थिता मौनमाश्रिता न मां पाठयन्तीत्यर्थः, हे कुब्जे मत्परिपोषिके कुब्जनारि ! (इति तथाविधाया भौजिकायाः सम्बोधनम्) मां शुकं भोजय, अद्यापि इदानीमपि कुमारा राजपुत्रा एव सचिवा मन्त्रिणो भवद्वयस्यास्तैः किं न भुज्यते इति तेषां भोजनसमये शुकस्यापि भोजनलाभादिति-भावः । **शार्द्दूलविक्रीडितं** छन्दस्तल्लक्षणं चोक्तं प्राक् ।

अत्र पर्यायोक्तमप्रस्तुतप्रशंसां च मतभेदेनोपपादयति—**अत्रेति** । प्रस्थानोद्यतं शत्रुजयोद्यतम् । कारणं तत्पलायनरूपम्, तेनैव तथाभूतशुकाभाषणस्योत्पन्नत्वादित्याशयः । कार्यमपि तथाभूतशुकाभाषणमपि । केचिदर्वाचीनाः । इत्थञ्चैतेषां मते शत्रुपलायनरूपप्रस्तुतकारणस्य कार्यशुकभाषणं प्रस्तुतमेवेतिपर्यायोक्तमेवेतिबोध्यम् ।

काव्यप्रकाशकृदभिप्रायमाह—**अन्ये त्वित** । राजशुकवृत्तान्तेन राजन्नित्यादिशुकभाषणरूपेण प्रस्तुतस्य प्रतिपक्षिराज्ञः कोऽपि प्रभावो विद्यत इति बोध्यते प्रत्याय्यते वक्त्रेतिशेषः । झटित्येव पलायनादित्याशयः । तथाच

प्रतिपक्षिराजपलायनरूपकारणस्याप्रस्तुतराजशुकाभाषणरूपकार्येणावगमादप्रस्तुतप्रशंसेति **प्रकाशकृतामभि-प्रायः**। तथा च काव्यप्रकाशे—'प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गता इति कारणे प्रस्तुते कार्यमुक्तम्' इति। **वस्तुतस्तु**—एकतरस्य नैयत्येनानुक्तत्वात् उक्तद्वययुक्तेरेव सम्भावाच्च पर्यायोक्ताप्रस्तुतप्र-शंसयोः सन्देहासङ्कर एवेत्यवधेयम्।

## रुचिरा

उदाहरणान्तरं दर्शयति—'**राजन्नित्यादिना**।

'**हे राजन्! राजसुता। माम्**(शुकम्)। **न**। पाठयति। **देव्यो** राज्यः। **अपि**। **तूष्णीम्**। **स्थिताः**। हे **कुब्जे** (इदं तथाभूताया भोजिकायाः सम्बोधनम्)! **माम्** (शुकम्)। भोजय। हे **कुमार** राजकुमार! **सचिवैर्मन्त्रिभिः**। **अद्यापि**। **किम्**। **न**। **भुज्यते**। **इत्थम्**। हे **नाथ** प्रभो! **तव**। **शून्यवलभौ** शून्या त्वदागमनभिया वलभ्युपरिगृहं यत्र तादृशे। **अरिभवने**। अध्वगैः पथिकजनैः। 'शत्रुभि'रिति शेषः। **पञ्जरात्**। **मुक्तो** निर्मुक्तबन्धनो निर्गत इति यावत्। **शुकः**। **चित्रस्थान** राजादीन्। **अवलोक्य**। **एकैकमे**कमेकम्। **आभाषते**। यत्तु—'शून्यव-लभा'विति'अरिभवने'इत्यस्य विशेषणमस्मरन्तः 'शून्यायां वलभौ उपरिगृहे'इति विवृण्वन्ति, तन्न साधु; 'शुद्धान्ते वलभी चन्द्रशाले सौधोर्ध्ववेश्मनि।' इति रभसा द्युक्तस्य वलभीशब्दस्य गौरादित्वेनीबन्ततया तथा निष्पत्त्यस-म्भवात्। कस्यापि कवे राजानं प्रति स्तुतिपरेयमुक्तिः शार्दूलविक्रीडितं वृत्तम्॥ २०७॥"

अत्र मतभेदेन पर्य्यायोक्तमप्रस्तुतप्रशंसां च निर्दिशति-**अत्रेत्यादिना**। स्पष्टम्।

अन्ये तु—'राजशुकवृत्तान्तेन कोऽपि प्रस्तुतप्रभावो बोध्यत इत्यप्रस्तुतप्रशंसैव' इत्याहुः ।

**सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।**

**कार्यं च कारणेनेदं कार्येण च समर्थ्यते ॥ ६१ ॥**

**साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ।**

क्रमेणोदाहरणम्—

**'बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ।**

**संभूयाम्भोधिमभ्येति महानद्या नगापगा ॥'**

अत्र द्वितीयार्धगतेन विशेषरूपेणार्थेन प्रथमार्धगतः सामान्योऽर्थः सोपपत्तिकः क्रियते ।

---

## विवृतिः

अर्थान्तरन्यासालंकारमाह—**सामान्यमिति**। व्यापकधर्मावच्छिन्नमित्यर्थः। **विशेषेण** व्याप्यधर्माव-च्छिन्नगोचरेण। **साधर्म्येण** साधर्म्यप्रकारकज्ञानेन वा यदि **समर्थ्यते** उत्पाद्यते संशया-योग्यत्वादिरूपानुपपत्तिनि-राकरणेन दृढप्रतिपत्तिविषयः क्रियत इति यावत्। तदा अर्थान्तरन्यास इत्यर्थः। एवमग्रेऽपि। तेन सामान्येन सामान्यविशेषयोर्विधीयमानधर्म एव विशेषसामान्ययोः साधर्म्य तस्य क्वचित्ताद्रूप्येण क्वचिद्व्याप्यधर्मेण क्वचि-द्व्यापकधर्मेण ग्रह एव समर्थकः। वैधर्म्यं निरुक्तसाधर्म्यविरुद्धधर्मः। कारणस्य साधर्म्य प्रकृतकार्यसाधनत्वम्। वैधर्म्य स्वविरुद्धस्वकार्यविरुद्धसाधनत्वम्। इदं कारणं कार्यस्य साधर्म्यं प्रकृतकारणजन्यत्वम्। वैधर्म्यं स्वविरु-द्धस्य स्वकारणविरुद्धजन्यत्वम् ॥ सामान्यविशेषसाधर्म्येण समर्थनमाह—**बृहत्सहाय इति**। कार्यान्तं कार्यातिश-यम्। महाकार्यमित्यर्थः। क्षोदीयानपि अतिक्षुद्रोऽपि। गच्छति प्राप्नोति। साधयतीति यावत्। संभूय मिलित्वा। नगापगा गिरिणदी। नद्या नगसंबन्धदर्शनेन जलबाहुल्याभावः प्रतीयते, तेन चातिक्षुद्रत्वम्। **द्वितीयार्धगतेन द्वितीयवाक्यार्थसंगतेन विशेषरूपेण** विशेषस्वरूपेण नगापगया अर्थेन महानदीमेलनप्रयुक्तसमुद्रप्राप्तिरूपमहा-कार्यसाधनत्वप्रतिपत्तिविषयेण **सोपपत्तिको** विधीयमानसंशयनिरासेन निश्चयविषयः। एकविशेषस्य यद्दृश्यते बाधकाभावेन तुल्यन्यायतया तत्सधर्माणामन्येषामपि तत्संभवतीति विशेषदर्शिनां सामान्यविधीयमानस्य संशयो निवर्तत इति सुतरां दृढप्रतिपत्तिरिति भावः। अत्र सामान्यसमर्थनमुखेनास्मत्क्षुद्रतरस्यापि शिशुपालस्य कालयव-नादिबृहत्सहायसंपत्त्यास्मत्पराभवरूपबृहत्कार्यसाधनत्वं समर्थितमित्यवधेयम् ॥

## विवृतिपूर्तिः

**सामान्यमिति**। सामान्यं विशेषस्य विशेषो वा सामान्यस्य समर्थक इति भेदद्वयम्। तथा कार्य कारणस्य कारणं वा कार्यस्य समर्थकमित्यपि भेदद्वयम्। एवं च भेदचतुष्टये प्रत्येकं साधर्म्यवैधर्म्याभ्यां भेदद्वये भेदाष्टकमु-पपद्यते। इतोऽग्रे **कुवलयानन्दे विकस्वरः प्रौढोक्तिः संभावना मिथ्याध्यवसितिर्ललितं प्रहर्षणं विषादनमु-ल्लासोऽवज्ञाऽनुज्ञा लेशो मुद्रा रत्नावलीति** त्रयोदशालंकारा यथा—"यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः। स न जिग्ये, महान्तो हि दुर्धर्षाः सागरा इव ॥" "**प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम्**। कचाः कलिन्दजातीर-

तमालस्तोममेचकाः ॥" "**संभावना** यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये । यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव ॥" "किंचिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम् । **मिथ्याध्यवसितिर्वे**श्यां वशयेत्खस्रजं वहत् ॥" "वर्ण्ये स्याद्वर्ण्यवृत्तान्तप्रतिबिम्बस्य कल्पनम् । **ललितं**, निर्गते नीरे सेतुमेषा चिकीर्षति ॥" "वाञ्छितादधिकार्थस्य संसिद्धिश्च **प्रहर्षणम्** । दीपमुद्योजयेद्यावन्निर्वाणस्तावदेव सः ॥" "एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि । अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जाह्नवी ॥ काठिन्यं कुचयोः स्रष्टुं वाञ्छन्त्यः, पादपद्मयोः । निन्दन्ति च विधातारं त्वद्धाटीष्वरियोषितः ॥ तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनम् । लाभोऽयमेव भूपाल सेवकानां न चेद्वधः ॥" "ताभ्यां तौ यदि न स्याताम**वज्ञा**लंकृतिस्तु सा । स्वल्पमेवाम्बु लभते प्रस्थः प्राप्यापि सागरम् ॥ मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः ॥" "दोषस्याभ्यर्थनानु**ज्ञा** तत्रैव गुणदर्शनात् । विपदः सन्तु न शश्वद्यासु संकीर्त्यते हरिः ॥""**लेशः** स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् । अखिलेषु विहंगेषु हन्त स्वच्छन्दचारिषु ॥ शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥" "सूच्यार्थसूचनं **मुद्रा** प्रकृतार्थपरैः पदैः । नितम्बगुर्वी तरुणी दृग्युग्मविपुला च सा ॥" "क्रमिकं प्रकृतार्थानां न्यासं **रत्नावलीं** विदुः । चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते ! ॥" इति । अत्र हि विकस्वरो नालंकारान्तरम् । समर्थ्यसमर्थकयोः सामान्यविशेषभावसंबन्धेऽर्थान्तरन्यासस्य सद्भावात्, तदितरसंबन्धे कारणेन कार्यस्य कार्येण कारणस्य वा समर्थने तु काव्यलिङ्गस्याभ्युपगमात् ॥ प्रौढोक्तिरपि नालंकारान्तरम् । असंबन्धे संबन्धरूपातिशयोक्त्या गतार्थत्वात् । संभावनपि नालंकारान्तरम् । संबन्धेऽसंबन्धरूपातिशयोक्त्या कवलितत्वात् ॥ मिथ्याध्यवसतिरपि नालंकारान्तरम् । असंबन्धे संबन्धोतिशयोक्तेरेव विषयत्वात् ॥ एवं ललितमपि नःलंकारान्तरम् । 'निर्गते नीरे सेतुमेषा चिकीर्षति' इत्यादौ किंचिद्दाक्षिण्यसमागतत्कालोपेक्षितप्रतिनिवृत्तनायिकान्तरासक्तनायकानयनार्थं सखीप्रेषयितुकामां नायिकामुद्दिश्य सख्या वचनेऽप्यार्थ्या निदर्शनाया एव सत्त्वात् । नहि प्रस्तुताप्रस्तुतवृत्तान्तयोः शब्दोपात्तयोरेव निदर्शनेत्यत्र मानमस्ति ! न चैवमतिशयोक्तिविषयस्याप्यार्थरूपकेणापहारः स्यादिति वाच्यम् । विषयतावच्छेदकरूपेण भाने विषये विषयितावच्छेदकावच्छिन्नविषय्यभेदस्य रूपकशरीरस्य विषयितावच्छेदकरूपेण भासमानविषयात्मकादतिशयोक्तिस्वरूपादिलक्षणत्वेन तयोरैक्यासंभवात् । न च निदर्शनाविषये व्यङ्ग्योपमैवास्तु चमत्कार इति वाच्यम् । अत्राभेदप्रतीतिकृतचमत्कारस्यैव रूत्त्वात् कल्पितौपम्यमूलिकया पर्यवसन्नया तयैव चमत्कार इत्याशयादित्युद्द्योतादौ । प्रहर्षणामपि नालंकारान्तरम् । समाधावन्तः पातात् । अकस्मादीप्सितार्थलाभस्य वाञ्छितसिद्ध्यर्थलाथ्तदधिकलाभस्य उपायसिद्ध्यर्थयत्नात्साक्षात्फललाभवर्णनस्य च तत्त्वमेव । सौकर्यस्यानायासेन सिद्ध्यादिरूपस्यैवाकस्मिकत्वादिरूपस्यापि ग्रहात् ॥ विषादनमपि नालंकारान्तरम् । दूष्यमाणविरुद्धार्थप्राप्तेरपि विषमतया तादृशेच्छया तादृशार्थलाभयोगस्य विषमत्वात् ॥ उल्लासोऽपि नालंकारान्तरम् । अन्यगुणेनान्यत्र गुणवत्त्वबुद्ध्या अन्यदोषेणान्य दोषवत्त्वबुद्ध्या वा वैपरीत्येन वा विषमावकाशात् ॥ अवज्ञापि नालंकारान्तरम् । अन्यगुणेनान्यत्र गुणाभावस्य अन्यदोषेणान्यत्र दोषाभावस्य वा प्रतिपादनेऽपि विषमप्रवेशात् ॥ अनुज्ञापि नालंकारान्तरम् । दोषेऽपि गुणमाकलय्य तदभ्यर्थनेऽपि विशेषस्यौचित्यात्रैविध्यस्य प्रायोवादाच्च ॥ एवं गुणेऽपि दोषमाकलय्य तदभ्यर्थनेऽपि विशेषस्य प्रवेशाल्लेशोऽपि नालंकारान्तरम् ॥ मुद्रा तु नालंकारपदवीमधिरोहति प्रकृतोपस्कारकत्वाभावात् । यदपि 'एवं नाटकेषु वक्ष्यमाणार्थसूचनेष्वपि' इति कुवलयानन्दफक्किकामालम्ब्य टीकाकारैः 'यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥' इत्यनर्घराघवनाटकश्लोक उदाहरणतया न्यासि; तत्र ध्वनिरिति सहृदयाः । एवं रत्नावल्यपि नालंकारः । तत्र रूपकेण वर्ण्य उपस्क्रियते, न तु तथाविधक्रमेणेत्युद्द्योतादौ प्रतिपादितम् ॥

**काव्येति**। काव्याभिमतं लिङ्गं काव्यलिङ्गम्। तर्कवैलक्षण्यार्थं काव्यग्रहणम्। न ह्यत्र व्याप्तिपक्षधर्मतो-पसंहारादयः क्रियन्ते ॥

कारणेन कार्यसमर्थनं साधर्म्येणाह—पृथ्वीरिति। कार्यकारणयोश्चाविरुद्धधर्मवत्त्वमेव साधर्म्यम्। विरुद्धधर्मवत्त्वञ्च वैधर्म्यं बोध्यम्। धनुर्भङ्गकाले लक्ष्मणस्योक्तिरियम्। आर्यो रामो हरकार्मुकमाततज्यं यतः करोति ततः कारणात् पृथ्व्यादिकं स्थिरादिकं भवेत्यर्थः। एनां पृथ्वीम्। द्वितीयं पृथ्वीभुजङ्गमौ, तत् त्रितये पृथ्वीभुजङ्गकूर्मराजत्रितये। दिधीर्षा धर्तुमिच्छाम्। अन्यथा तु आततज्यीकरणे यावान् भरः स्यात्तेन सर्वेषामस्थैर्य स्यादित्यर्थः।

अत्रेति। नच पृथ्वीस्थैर्यदेः कथमाततज्यीकरणस्य कार्यत्वमस्थैर्यादेरेव तत्कार्यत्वादिति वाच्यम्। अस्थैर्यादिसम्भावनया विशेषस्थैर्यधारणादेस्तत्कार्यत्वात्। नचैवमाततज्यीकरणात्पूर्वभूतस्य विशेषस्थैर्यादेस्त-त्रापि कथं कार्यत्वमिति वाच्यम्-तज्ज्ञानकार्यत्वे च तत्कार्यत्वोपचारात् नान्दीमुखस्य विवाहनिमित्तकत्ववत्। अत्रानयोः कार्यकारणयोश्चाविरुद्धतत्कार्यकारणतावच्छेदकधर्मवत्त्वं साधर्म्यम्। तादृशात् कारणात् पृथ्व्यादेः स्थिरीभवनादिकमुचितमित्येवं समर्थनं स्थिरीभावाद्युपदेश एव कार्यम्। तस्यौचित्यमेव समर्थनमित्यपि वदति। कार्यादिसमर्थनचतुष्कं हेत्वलङ्काररूपस्यैवेत्यतः काव्यप्रकाशकृता तदुपेक्ष्य चातुर्विध्यमेवार्थान्तरन्यासोक्तं कार-णस्य जनकहेतुत्वात् कार्यस्य च ज्ञापकहेतुत्वात्, ग्रन्थकृता तु ततो भेदोस्य वक्ष्यते।

## विज्ञप्रिया

अष्टविधमर्थान्तरन्यासालङ्कारमाह—**सामान्यं वेति**। सामान्यमुक्त्वा विशेषेण, एवं, विशेषः सामान्येन, एवं कार्यं कारणेन कारणं वा कार्येण समर्थ्यते उचितत्वेन प्रतिपाद्यते इत्यर्थः। उक्तं यत् सामान्य तद्विशेषे तथात्वदर्शनादुचितमिति बोधनं समर्थनरीतिः। इति चतुर्विधं समर्थनं समर्थ्यसमर्थकयोः साधर्म्येण तयोः परस्परवैधर्म्यरूपेणेतरेण वेत्यातोऽष्टधेत्यर्थः।

तत्र सामान्यस्य विशेषेण समर्थनं साधर्म्येणाह— **बृहदिति**।कार्यान्तमुद्देश्यकार्यान्तम्। क्षोदीयान् क्षुद्रः महानद्या सम्भूय मिलित्वेत्यर्थः नगापगा पार्वतीयाल्पनदीनिर्झरः। **अत्र द्वितीयार्धेति**। क्षुद्रविशेषो नगापगा तद्रूपेणार्थेनेत्यर्थः। सामान्योऽर्थः क्षुद्रसामान्यरूपः। अत्र कार्यान्तगामित्वं द्वयोः साधर्म्यम्। **सोपपत्तिक** इति। उपपत्तिरौचित्यम् तद्विशिष्टत्वेन प्रतिपाद्यत इत्यर्थः। यद्यपि क्षुद्रसामान्यस्य नेदृशं समर्थनमुचितमित्यप्रतीतेः तथापि कार्यान्तगमनविशिष्टस्य तस्य तत् समर्थनं विशेषणांशमादायेति बोध्यं सविशेषणे विधिनिषेधाविति न्यायात्। एवमुत्तरत्रापि। अत्र च क्षुद्रविशेषस्य नगापगायाः कार्यान्तगामित्वदर्शनात् क्षुद्रसामान्यस्य कार्यान्तगामित्वमौचित्येन सम्भवतीति प्रतीतिः एवं सर्वत्र।

## कुसुमप्रतिमा

ननु कार्य्यकारणभावप्रतीतिस्थले पर्य्यायोक्तवत् अलङ्कारान्तरं भवति न वेत्याकाङ्क्षायां कार्य्यकारण-भावे अर्थान्तरन्यास निरूपयन् सामान्यत एवं तं निरूपयति सामान्यमिति। उक्तार्थसमर्थनमर्थान्तरन्यास इति सामान्यलक्षणम्। उक्तार्थं समर्थनञ्च सम्भवपरेणार्थेन प्रस्तुतस्यार्थस्य असम्भवादिनिरासहारा दृढ़ीकरणम्। तच्च विभजते सामान्यमिति। तत्र समर्थ्यसमर्थकोभयवृत्तिधर्म्मवत्त्वं सामान्यत्वम्, समर्थ्य समर्थकयोरेकतरवृत्तिधर्म्म-वत्त्वं विशेषत्वम्। यद्वा व्यापकत्व सामान्यत्वम्, व्याप्यत्वञ्च विशेषत्वम्। समर्थसमर्थकयोर्विवक्षितसमानधर्म्म-

कत्वं साधर्म्यं तादृशविपरीतधर्म्मकत्वञ्च वैधर्म्यम्। कार्य्यकारणयोश्च उत्पत्त्युत्पादनयोग्यत्वं साधर्म्यं तादृशद्विपरीतञ्च वैधर्म्यम्। एतदुभयञ्च समर्थ्यते इत्यनेन प्रत्येकवारमेवान्वीयते। एवञ्च—साधर्म्येण वैधर्म्येण वा यदि विशेषेण सामान्यं समर्थ्यते, तथैव तेन सामान्येन वा विशेषः समर्थ्यते, तथैव कारणेन च कार्य्यं समर्थ्यते, तथैव कार्य्येण इदं कारणं समर्थ्यते; ततस्तदा तेषां चतुर्णामेव समर्थनानां साधर्म्येण, तदितरेण वैधर्म्येण च सम्भवात् पुनर्द्वैविध्येन समुदाये अष्टधा अष्टविधः अर्थान्तरन्यास उक्तः। अस्य दृष्टान्तादिभिः सह भेदस्तत्र तत्रैवोक्तः, काव्यलिङ्गादिभिर्भेदस्तु वक्ष्यते। काव्यप्रकाशकृता तु काव्यलिङ्गेनैव गतार्थत्वात् कार्य्यकारणभावे अर्थान्तरन्यासो नाङ्गीक्रियते। दर्पणकृता तु तत् काव्यलिङ्गप्रकरणे दूषयिष्यते। अर्थान्तरस्य प्रस्तुतेतरार्थस्य न्यासः स्थापनमिति व्युत्पत्तिः।

विशेषेण सामान्यसमर्थने उदाहरति वृहदिति। शिशुपालवधद्वितीयसर्गस्थमिदं पद्यम्। चोदोयान् नितान्तक्षुद्रोऽपि जनः, वृहन् महान् सहायो यस्य स तादृशः सन्, कार्य्यान्तं कार्य्यशेषं गच्छति दुष्करमपि कार्य्यं साधयितुमर्हतीत्यर्थः। तथ च नगापगा पार्वत्यनदौ महानद्या गङ्गादिकया सम्भूय मिलित्वा अम्भोधिं सागरम् अभ्येति गच्छति।

उक्तलक्ष्ये लक्षणं सङ्गमयितुमाह अत्रेति। विशेषरूपेण नगापगादिरूपेण, क्षीदीयःप्रभृति व्याप्यत्वादिति भावः। सामान्यः क्षोदीयःप्रभृतिः, नगापगादिव्यापकत्वादित्याशयः। सोपपत्तिकः सयुक्तिकः। तथा च "क्षोदीयानपि वृहत्सहायः सन् कार्य्यन्तं गच्छति" इति कुत्र दृष्टमित्याकाङ्क्षाया "नगापगा महानद्या सम्भूय अम्भोधिमभ्येति" इति सम्भवदुदाहरणप्रदर्शनद्वारा एकत्र दृष्टः, अन्यत्रापि सम्भवतीति न्यायेन पूर्वार्द्ध सामान्यस्य असम्भवतादिनिराकरणेदित्यभिप्रायः। तथा समर्थ्यगतकार्य्यान्तप्राप्तेः समर्थकगतसागरप्राप्ते श्च समानत्वादत्र साधर्म्यमित्यपि द्रष्टव्यम्।

## विमला

अर्थान्तरन्यासमाह, सामान्यमिति।—साधर्म्येण—समानधर्मवत्तया साधर्म्यप्रकारकज्ञानेन इत्यर्थः, (सामान्यविशेषयोः विधीयमानधर्म एव विशेषसामान्ययोः साधर्म्यं, तस्य क्वचित् तादूप्येण, क्वचित् व्याप्यधर्मेण, क्वचित् व्यापकधर्मेण सह एव समर्थकः) इतरेण—वैधर्म्यज्ञानेन, (वैधर्म्यं निरुक्तसाधर्म्यविरुद्धधर्मः, तज्ज्ञानेनेत्यर्थः) वा विशेषेण—व्याप्यधर्मावच्छिन्नगोचरेण, सामान्यं—व्यापकधर्मावच्छिन्नमित्यर्थः, वा तेन—सामान्येन, विशेषो वा, कारणेन कार्य्यञ्च [कारणस्य साधर्म्यं प्रकृतकार्य्यसाधनत्वं, वैधर्म्यं स्वविरुद्धस्वकार्य्यविरुद्धसाधनत्वम्] कार्य्येण इदं—कारणञ्च, (कार्य्यस्य साधर्म्यं प्रकृतकारणजन्यत्वं, वैधर्म्यं स्वविरुद्धस्य स्वकारणविरुद्धजन्यत्वम) यदि समर्थ्यते—सोपपत्तिकीक्रियते, संशयायोग्यत्वादिरूपानुपपत्तिनिराकरणे दृढप्रतिपत्तिविषयः क्रियते इति यावत्, तदा अर्थान्तरन्यासः इत्यर्थः, हेतुक्षात्र समर्थकः स्यादेव। असौ ततः,—उक्तरीत्या, अष्टधा—अष्टप्रकाराः इति ज्ञेयम्।तथा हि, सामान्यं विशेषो वा विशेषस्य सामान्यस्य वा समर्थक इति द्वौ भेदौ, एवं कार्य्यं कारणं वा कारणस्य कार्य्यस्य वा समर्थकम् इति द्वौ भेदौ, एवं प्रकारचतुष्टये साधर्म्यवैधर्म्याभ्यां प्रत्येकं पुनः प्रकारद्वये अष्टप्रकारत्वं सम्पन्नम्।

सामान्यविशेषसाधर्म्येण समर्थनमाह, बृहदिति।—क्षोदीयान्—क्षुद्रत्तरोऽपि जनः, बृहत्—महान्, सहायो यस्य तथाभूतः सन्, कार्य्यान्तं—कार्य्यपारं, कार्य्यातिशयं वा, महाकार्य्यमित्यर्थः, गच्छति—प्राप्नोति, साधयतीति यावत्, सिद्धकार्य्योभवतीत्यर्थः; तथा हि नगापगा—नगनिर्झरिणी, [नद्या नगसम्बन्धदर्शनेन जलबा-

हुल्याभावः प्रतीयते, तेन चातिक्षुद्रत्वम्] महानद्या—गङ्गाप्रभृतिकया, सम्भूय—मिलित्वा, अम्भोधिः—समुद्रम्, अभ्येति प्रापोन्ति। शिशुपालवधस्येदं पद्यम्। यथा वा—"निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम्। पश्यति पित्तोपहतः शशिशुभं शङ्खमपि पीतम्॥" इति।

अत्रेति।—द्वितीयार्द्धगतेन—द्वितीयवाक्यार्थसङ्गतेन, विशेषेण—विशेषस्वरूपेण नगापगया, अर्थेन—महानदीमेलनप्रयुक्तसमुद्रप्राप्तिरूपमहाकार्य्यसाधनत्वश्रुतिप्रत्तिविषयेणेत्यर्थः, सोपत्तिकः,—विधीयमानः, संशयनिरासेन निश्चयविषयः इत्यर्थः, एकविशेषस्य यद्दृश्यते बाधकाभावेन तुल्यन्यातया तत्सधर्माणामन्येषामपि तत्सम्भवतीति विशेषदर्शिनां सामान्यविधीयमानस्य संशयो निवर्त्तते इति सुतरां दृढप्रतिपत्तिरिति भावः। अत्र सामान्यसमर्थनमुखेन अस्मत्क्षुद्रतरस्यापि शिशुपालस्य कालयवनादिवृहत्सहायसम्पत्त्या अस्मत्पराभवरूपबृहत्कार्य्यसाधनत्वं संसर्थितम् इत्यवधेयम्।

## लक्ष्मी

ननु कार्यकारणभावावगमस्थले यथा पर्यायोक्तालङ्कारो भवति तद्वदन्योऽलङ्कारो भवति न वेतिजिज्ञासायां कार्यकारणभावे अर्थान्तरन्यासं प्रतिपादयन् सामान्यत एव तं प्रति पादयति—**सामान्य**मिति। प्रतिपादितार्थसमर्थनमर्थान्तरन्यास इति हि तल्लक्षणम्, प्रतिपादितार्थसमर्थनञ्च द्वयोरंशयोरेकतरस्मिन्नंशे असम्भवतादिनिराकरणद्वारा प्रकृतार्थस्य सम्भवपरेणार्थेन निश्चयीकरणम्। अष्टविधश्चायमिति दर्शयति—**सामान्य**मिति। तत्र सामान्यत्वम्—व्यापकधर्मावच्छिन्नत्वम्, विशेष्यत्वम्—व्याप्यधर्मावच्छिन्नत्वम्, **यद्वा**—समर्थ्यसमर्थकद्वयगतधर्मवत्वं सामान्यत्वम्, समर्थ्यसमर्थकयोरन्यतरगतधर्मत्वं विशेषत्यम्। ज्ञाप्यनिष्पाद्यतरसमर्थ्यरूपसाध्यत्वं कार्यत्वम्, ज्ञापकनिष्पादकातिरिक्तसमर्थकरूपहेतुत्वं कारणत्वम्। समर्थ्यसमर्थकयोः प्रतिपिपादयिषितसमानधर्मत्वं साधर्म्यम्, उक्तविधविरुद्धधर्मत्वञ्च वैधर्म्यम्। एतद्द्वयञ्च समर्थ्यते सोपपत्तीक्रियते निःसन्देहप्रत्यायनेन प्रतिवारमेव सम्बध्यते। इत्थञ्च—

साधर्म्येण वैधर्म्येण वा यदि विशेषेण सामान्यं समर्थ्यते, तद्वदेव तेन सामान्येन वा विशेषः समर्थ्यते, तद्वदेव कारणेन च कार्यं समर्थ्यते, तद्वदेव कार्येण च इदं कारणं समर्थ्यते, तत्तस्तदा तेषां चतुर्विधानामपि समर्थानां साधर्म्येण, साधर्म्यप्रकारकज्ञानेन इतरेण वैधर्म्येण वैधर्म्यप्रकारकज्ञानेन च सम्भवात् पुनर्द्वैविध्येन सङ्कलने मिलित्वा अष्टधा अष्टप्रकारः अर्थान्तरन्यासः कथितः, अनुपपद्यमानतया प्रस्तुतार्थं समर्थयितुं प्रस्तुतातिरिक्तार्थस्य न्यासः स्थापनमित्यस्य व्युत्पत्तिर्ज्ञेया। दृष्टान्तादिभिः सहास्य भेदस्तु पूर्वमेव तत्र तत्र प्रतिपादित एव, काव्यलिङ्गादिभिर्भेदस्तु यत्र तत्रैव प्रतिपादयिष्यते काव्यलिङ्गेनैव गतार्थत्वं मन्यमानेन **मम्मटेन तु**—कार्यकारणभावे अर्थान्तरन्यासं अर्थान्तरन्यासं नाङ्गीकृतम् कारणस्य जनकहेतुत्वात् कार्यस्य च ज्ञापकहेतुत्वात्। ग्रन्थकृता तु तत्प्रकरण एव तद्दूषितमित्यस्माभिरपि तत्रैव विवेचयिष्यते।

तत्र विशेषेण सामान्यसमर्थनं साधर्म्येणाह—**बृहत्सहाय** इति। शिशुपालवधद्वितीयसर्गे मन्त्रविचारणायामुद्धवस्योक्तिरियम्। क्षोदीयान् अतिशयक्षुद्रोऽपि जनः, बृहन्तः सहाया यस्य स तादृशः सन्, कार्यान्तं कार्यस्य पारं गच्छति प्राप्नोति अतिकठिनमपि कार्यमनायासेन साधयतीत्यर्थः। तथा हि—नगापगा पर्वतनदी महानद्या गङ्गायमुनाद्यन्यतमया सम्भूय मिलित्वा अम्भोधिं समुद्रम् अभ्येति प्राप्नोति। नद्या नासम्बन्धदर्शनेन जलधिक्याभावोऽवम्यते तेन च नितान्तक्षुद्रत्वम्। अनुष्टुप्छन्दस्तल्लक्षणन्तूक्तं पूर्वमेव।

उक्तोदाहरणे लक्षणं संयोजयितुमाह—**अत्रेति**। द्वितीयार्धगतेन द्वितीयवाक्यार्थसङ्गतेन विशेषरूपेण नगापगादिरूपेण अर्थेन महानदीमेलनप्रयुक्तसमुद्रप्राप्तिरूपमहत्कार्यसाधनत्वप्रतिपत्तिविषयेण प्रथमार्धगतः प्रथमवाक्यार्धगतः, सामान्यः क्षोदीयादिः, सोपपत्तिकः सयुक्तिकः। एवञ्च 'क्षोदीयानपि बृहत्सहायः सन् कार्यान्तं गच्छति' इति क्व दृष्टमिति जिज्ञासायां 'नगापगा महानद्या सम्भूय अम्भोधिमभ्येति' इति सम्भवद्रदृष्टान्तोपपदान-द्वारा एकस्मिन् स्थले दृष्टः, अन्यत्राऽपि सम्भवतीतिन्यायेन प्रथमवाक्यार्थसामान्यस्य असम्भवताद्यपाकरणादित्याशयः। साधर्म्यञ्चाऽप्यत्र—समर्थ्यगतकार्यान्तप्राप्तेः समर्थगतसमुद्रप्राप्तेश्च तुल्यत्वेनैवेति बोध्यम्।

## रुचिरा

अर्थान्तरन्यासं लक्षयति—१४३ **सामान्यमित्यादिना**।

**यदि**। **विशेषण** व्याप्यधर्मावच्छिन्नेन। **सामान्यं** व्यापकधर्मावच्छिन्नम्। **वा** (इदं समुच्चयार्थम्)। **तेन** सामान्येन व्यापकधर्मावच्छिन्नम। **वा**। **विशेषो** व्याप्यधर्मावच्छिन्नम्। **कारणेन** ज्ञापकनिष्पादकेतरसमर्थकरूपेण हेतुना। **च**। **कार्य्यं** ज्ञाप्यनिष्पाद्येतरसमर्थ्यरूपं साध्यम्। **कार्य्येण** ज्ञाप्यनिष्पाद्येतरसमर्थ्यरूपेण साध्येन। **च**। **इदं** कारणं ज्ञापकनिष्पादकेतरसमर्थकरूपो हेतुरिति यावत्। **समर्थ्यते**। **ततस्तर्हि**। **साधर्म्येण** साधर्म्यप्रकारकज्ञानेन। अथवा-**इतरेण** **वैधर्म्येण** वैधर्म्यप्रकारकज्ञानेनेति यावत्। **अर्थान्तरन्यासोऽर्थान्तर**स्यानुपपद्यमानतया सम्भाव्यमानमर्थं समर्थयितुं तद्भिन्नस्योपपद्यमानतया सम्भाव्यमानस्यार्थस्य न्यासः समर्थकतया निरूपणमिति तथोक्तः। तन्नामाऽलङ्कार इति भावः। **अष्टधाऽष्टप्रकारः**। अयम्भावः—कमप्यनुपपद्यमानतया सम्भाव्यमानमर्थं समर्थयितुं कस्यचिदुपपद्यमानतया सम्भाव्यमानस्यार्थस्य समर्थकतया न्यासोऽर्थान्तरन्यासः। स च साधर्म्येण वैधर्म्येण चेति द्विविधः। अयमपि प्रतिभेदं चतुर्धा भिद्यमानोऽष्टविधः। तत्र-विशेषेण सामान्यसमर्थनात्मकैः, सामान्येन विशेषसमर्थनात्मा द्वितीयः, कारणेन कार्यसमर्थनात्मा तृतीयः, कार्य्येण कारणसमर्थनात्मा पुनश्चतुर्थो भेदः। तथा च—अर्थान्तरस्य न्यास इति सामान्यं लक्ष्म, अर्थान्तरस्य, पुनर्न्यासः साधर्म्येण वैधर्म्येण च भवतीति तस्य भेदद्वयम्, भेदद्वयस्य पुनः प्रत्येकं चातुर्विध्येऽष्टविधत्वमिति फलितम्॥ ११४॥ ११५॥

उदाहर्त्तुं प्रतिजानीते—**क्रमेणेत्यादिना**। **क्रमेणानुपूर्व्येण**। **उदाहरणमुदाह्रियते** 'ऽय'मिति प्रक्रमप्राप्तम्। बृहदित्यादिना।

'**क्षोदीयान्** अतिशयेन क्षुद्र इति तथोक्तः। 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः।' ६/४/१५६ इत्यनेन यणादिपरलोपः पूर्वगुणश्च। **अपि**। **बृहत्सहायो** बृहन्तः सहाया यस्य तथोक्तः सन्। **कार्य्यान्तं** कार्य्यस्यान्तः पारस्तम्। **गच्छति**। तथा हि—**नगापगा** पर्वतनदी। **महानद्या** गङ्गायामुनाऽऽद्यन्यतमया नद्या। **सम्भूय**। **अम्भोधिं** समुद्रम्। अभ्येति। शिशुपालवधस्येदं पद्यम्। उद्धवस्य सभायामुक्तिरियम्॥२०८॥'

उदाहृतमर्थं निर्दिशति—**अत्रेत्यादिना**। स्पष्टम्।

**'यावदर्थ्यपदां वाचमेवमादाय माधवः ।**

**विरराम महीयांसः प्रकृत्या मितभाषिणः ॥'**

**'पृथ्वि ! स्थिरा भव भुजङ्गम् ! धारयैनां**

**त्वं कूर्मराज तदिदं द्वितयं दधीथाः ।**

---

## विवृतिः

विशेषस्य सामान्यसाधर्म्येण समर्थनमाह—**यावदर्थ्यपदामिति** । यावन्त्येवार्थ्यानि प्रकृतोपयुक्तार्थाद-नपेतानि पदानि यस्यां तां नत्वनुपयुक्तार्थपदैर्बहुलाम् । एतेन वाक्यस्याल्पत्वं सूचितम् । आदाय कथयित्वा । महीयांसो महत्तराः । प्रकृत्य स्वभावेन । मितभाषिणः अल्पवचसः । अत्र व्यञ्जनया विधीयमानमपि माधवस्याल्प-भाषणं प्रतिपाद्यबाहुल्ये सत्यनुपपन्नमहत्तरस्य स्वभावत एवाल्पभाषणमिति सामान्यगोचरसाधर्म्यज्ञानेन समर्थ्यते । सामान्यधर्मो विशेषेष्वप्रतिहतप्रसर इति विशेषदर्शनेनानुपपत्तिनिरास इति भावः ॥

## विवृतिपूर्ति

कार्येण कारणस्य समर्थनं साधर्म्येणाह—सहसेति । सहसा विमर्षणं विना क्रियां न विदधीत, यतोऽविवेकोऽविमृश्यकारिता परमापदां पदं स्थानम् । विमृश्यकारित्वे तु न केवल नापदः किन्तु सम्पदश्चेत्याह—वृणते हीति । विमृश्यकारितागुणेनैव लोभः । अत्रेति । सम्पद्वरणकार्याद् विमृश्यकारित्वमुचितमिति समर्थनम् ।

विशेषेण सामान्यस्य समर्थनं वैधर्म्येणेत्यस्योदाहरणमूह्यमिति वक्ष्यते । अतस्तदनुदाहृत्य सामान्येन विशेषसमर्थनमेव वैधर्म्येणोदाहरति—इत्थमिति । तारकासुरस्य भुवनत्रयक्लेशकत्वबोधके श्लोके भुवनत्रयक्ले-शकत्वविशिष्टदुर्जनविशेषस्तारकासुरः ।

आराध्यमानत्वतद्धर्मस्य विरुद्धधर्मः प्रत्ययक्रियमाणत्वं दुर्जनसामान्यस्य । एवं क्लेशकत्ववैधर्म्यं शान्तिः । क्लेशकत्वविशिष्टदुर्जनविशेषसमर्थनं क्लेशकत्वसमर्थनरूपमेव । विशेषणे हीति न्यायात् । भवति हि प्रत्यपकारेणैव दुर्जनस्य शान्तिः । तद्विरुद्धाराध्यमानत्ववतो दुर्जनविशेषस्य तारकस्य भुवनक्लेशशनमुचितमिति प्रतीतिः ।

## विज्ञप्रिया

सामान्येन विशेषसमर्थनं साधर्म्येणाह—**यावदर्थेति** । श्रीकृष्णस्योक्तिविरतिवर्णनमिदम् ।

यावान् विवक्षितोऽर्थो यस्य तादृशपदामित्यर्थः । महीयांसो महान्तः । अत्रोक्तिविरति विशिष्टः श्रीकृष्णो विशेषः । मितभाषित्वे विशिष्टा महान्तः सामान्यम् । भाषाविरामः साधर्म्यं मितभाषित्वेऽस्यापि बहुभाषाविरामरूप-त्वात् । कृष्णविशेषस्य भाषाविरतेः समर्थनमेव तस्य समर्थनम् ।

## कुसुमप्रतिमा

सामान्येन विशेषसमर्थने दर्शयति यावदिति। इदमपि शिशुपालवधद्वितीयसर्गगतं पद्यम्। माधवः कृष्णः, एवमित्थम्, यावानर्थ-इति यावदर्थम् अर्थ परिमितानीत्यर्थः पदानि यस्यां तां स्वल्पार्थानुरूपामेव स्वल्पामित्यर्थः, वाचं वाक्यम्, आदाय गृहीत्वा उक्त्वेत्यर्थः, विरराम विरतो बभूव। यतश्च, महीयांसः अतिमहान्तो जनाः, प्रकृत्या स्वभावेनैव मितभाषिणः परिमितवादिनी भवन्ति ?

अत्र प्रथमवाक्यगतो माधवादिरर्थो विशेषः महीयः प्रभृत्यर्थव्याप्यत्वात्, हितीयवाक्यगतो महीयः प्रभृतिरर्थस्तु सामान्यः, माधवाद्यर्थव्यापकत्वात्। तथा प्रयोजनीयमात्रमुक्त्वा विरामो मितभाषित्वञ्च वस्तुतः समान एव धर्म्म इति साधर्म्यम्। तेन साधर्म्यं सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। तथा पूर्णार्द्धवाक्यटकस्य विररामेत्येकमात्रपदस्य परार्द्धे पातादर्हान्तरै कपदतादोषः।

कारणेन कार्य्यसमर्थने उदाहरणमाह पृथ्वीति। बालारामायणमहानाटके लक्ष्मणस्योक्तिरियम्। हे पृथ्वि ! पृथिवी ! त्वं स्थिरा दृढनिश्चला भव, यथा न अनन्तमस्तकात् पतेरिति भावः, हे भुजङ्गम् ! अनन्तनाग ! त्वमेनां पृथ्वीं धारय दृढमवलम्बस्व, यथेयं तव मस्तकान्न पततीति भावः। हे कूर्म्मराज ! त्वं तदिदं द्वितयं पृथ्वीभुजङ्गमावित्यर्थः, दधीथा दृढं धारयेथाः, अन्यथै तौ पतिष्यत इत्याशयः। हे दिक् कुञ्जराः। ऐरावतादयो दिग् दन्तिनः ! यूयमपि तच्चितये पृथ्वी भुजङ्गम कूर्म्मराजेति त्रये दिधीर्षा धर्त्तुमिच्छां दृढधारणचेष्टामित्यर्थः कुरुत, अन्यथा सर्व एवैते स्वस्थ नात् प्रच्यवेरन्नित्यभिप्रायः। ननु कथमीदृसी सावधानता उपदिश्यत इत्याह—आर्य्यः पूज्यो रामचन्द्रः हरस्य कार्म्मुकं धनुः, आतता कीटौ योगाय विस्तृता ज्या गुणो यस्य तत्तादृशं करोति। अत्र विधेयस्य आततत्वस्य समासे गुणीभावाहिधेयाविमर्शदोषोऽपि।

## विमला

विशेषस्य सामान्यसाधर्म्येण समर्थनमाह, यावदिति,—माधवः,—कृष्णः यावन्तः अर्थाः यावदर्थं, यावदर्थपदानि—सुप्तिङन्तानि यस्यांतथोक्तां, [यावदर्थ्यपदाम् इति पाठे—यावन्त्येव अर्थ्यानि—प्रकृतोपयुक्तार्थात् अनपेतानि, पदानि यस्यां ता, न त्वनुपयुक्तार्थपदैर्बहुलामित्यर्थः, एतेन वाक्यस्याल्पत्वं सूचितम्] एवम्—उक्तप्रकारां, वाचम् आदाय—गृहीत्वा, उक्त्वेत्यर्थः, विरराम—निववृते, ["व्याङ्परिभ्यो रमः" (१/३/८३ पा०) इति परस्मैपदम्] तथा हि, महीयांसः,—महत्तराः, अतिमहान्तः इति यावत्, जनाः इति शेषः, प्रकृत्या—स्वभावेन, मितभाषिणः,—अल्पवचसः, भवन्तीति शेषः, वृथाऽऽलापनिषेधादिति भावः। अत्र व्यञ्जनया विधीयमानमपि माधवस्याल्पभाषणं प्रतिपाद्यबाहुल्ये सत्यनुपपन्नमहत्तरस्य स्वभावत एवाल्पभाषणम् इति सामान्यगोचरसाधर्म्यज्ञानेन समर्थ्यते, सामान्यधर्मो विशेषेष्वप्रतिहतप्रसरः इति विशेषदर्शनेनानुपपत्तिनिरासः इति भावः। शिशुपालवधस्येदं पद्यम्। यथा वा—"सुसितवसनालङ्कारायां कदाचन कौमुदी महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः। तदनु भवतः कीर्त्तिः केनाप्यगीयत येन सा प्रियगृहमगात् मुक्ताशङ्का क्व नासि शुभप्रदः ?" ॥ इति।

## लक्ष्मी

सामान्येन विशेषसमर्थने साधर्म्येण उदाहरति—**यावदिति**। शिशुपाल वध एव द्वितीयसर्गे पद्यमिदम्। माधवः माया लक्ष्म्या धवः पतिः श्रीकृष्णः, 'धवः प्रियः पतिर्भर्ता' इत्यमरः एवम् इत्थमुक्तरूपाम्, यावनर्थ इति

यावादर्थम् अर्थपरिमितानीत्यर्थ:, पदानि यस्यां तां तथोक्ताम्, 'वाचं वाणीम्, आदाय गृहीत्वा अभिधायेत्यर्थ:, विरराम तूष्णींबभूव, महीयांस: अतिमहान्तो जना: प्रकृत्या स्वभावेनैव 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयो:' इति विश्व:, मितभाषिण: स्वल्पवादिनो भवन्ति । पूर्वोक्तं छन्द: ।'

अत्र पूर्वार्धगतो माधवादिरर्थो विशेष:, द्वितोयार्धगतो महीय: प्रभृतिरर्थस्तु सामान्य:, अभिधेयमात्रमभिधाय विराम: मितभाषित्वञ्च तुल्य एव धर्म इति साधर्म्यम्, एवञ्च सामान्येन साधर्म्येण विशेषसमर्थनरूपोऽर्थरन्यास: ।

## रुचिरा

**'माधव:** श्रीकृष्ण: । **यावदर्थपदां** यावनार्थो यावदर्थं पदानि यस्यास्ताम् । 'यावदवधारणे ।' २/१/८ इत्यव्ययीभाव: । **एवमुक्तरूपाम्** । **वाचम्** । आदाय गृहीत्वोक्त्वेति यावत् । **विरराम** तूष्णीं बभूव । 'व्याङ्परिभ्योरम: ।' १/३/८३ इति परस्मैपदम् । तथा हि—**महीयांसो**ऽतिशयेन महान्त: । **प्रकृत्या** स्वाभावेन । **मितभाषिणो** मितं भाषन्ते इत्येवंशीला भवन्तीति भाव: । अत्र 'यावदर्थमुक्त्वे' पीत्यनुक्ता तथाऽभिधानं दुष्टमपि छन्दोऽनुरोधेन । एवं 'विरामे'त्यसहायस्योत्तरवाक्ये विन्यासोऽपि दुष्ट: । शिशुपालवधस्येदं पद्यम् । अत्र सामान्येन 'महीयांस' इत्याद्यर्थेन विशेषस्य 'यावदर्थे' त्याद्यर्थस्य समर्थनम् । विवण्वन्ति विवृतिकारा:—'अत्र व्यञ्जनया विधीयमानमपि माधवस्याल्पभाषणं प्रतिपाद्य बाहुल्ये सति अनुपपन्नमहत्तरस्य स्वभावत एवाल्पभाषणमिति सामान्यगोचरसाधर्म्यज्ञानेन समर्थ्यते । सामान्यधर्मो विशेषेष्वप्रतिहतप्रसर इति विशेषदर्शनेनानुपपत्तिनिरास इति भाव: ।' इति ॥ २०९ ॥

**दिक्कुञ्जराः ! कुरुत तत्रत्रितये दिधीर्षां**

**देवः करोति हरकार्मुकमाततज्यम् ॥'**

अत्र कारणभूतं हरकार्मुकाततज्यीकरणं पृथिवीस्थैर्यादिः कार्यस्य समर्थकम् ।

---

## विवृतिः

कारणसाधर्म्येण कार्यसमर्थनमाह—**पृथ्वीति** । श्री रामेण हरधनुर्ज्यायोगोद्यमे कृते पृथ्व्यादीनामस्थैर्यादिकं संभावयतो लक्ष्मणस्योक्तिरिरियम् । भुजङ्गमोऽनन्तः । एनां पृथ्वीम् । द्वितयमनन्तं पृथ्वीं च । तन्नितये कूर्मानन्तपृथ्वीषु । दिधीर्षा धारणेच्छाम् । देवः श्रीरामः । आततज्यं आरूढगुणम् । **आततज्यीकरणं** गुणयोगानुकूलव्यापारः । पृथ्व्यादीनां स्थैर्यादेः सिद्धत्वे तत्तन्नियोगानुपपत्त्या स्थैर्यादिविशेषो लक्षणीयः, तस्य च ज्यायोगसंभावनायामनुष्ठितत्वेन कार्यत्वमक्षतमेव, तच्च ज्यायोगसंभावनायाः कारणत्वग्रहेणैव समर्थ्यते । स्थैर्यादीनां नियुज्यमानत्वेन कार्यत्वं प्रतीयते, तच्च कारणमन्तरेण नोपपद्यते, इत्यनुपपत्तिरत्रावधेया ॥ कार्यसाधर्म्येण कारणसमर्थनमाह—**सहसेति** । अत्र विधीयमानस्य सहसा विधानाभावस्य किंचिदिष्टं प्रति साधनत्वमवगम्यते । तच्च क्वचिदिष्टे साध्यत्वग्रहामन्तरेण नोपपद्यत इति कार्यस्य समर्थकत्वं संपद्वरणं कार्यमिति कार्यं कार्यत्वप्रतीतिविषयः । कार्यत्वप्रतीतिरत्र 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः' इतिवत् विमृश्यकारित्व एव सहसाविधानाभावः पर्यवस्यतीति नानयोर्भेदः । विशेषवैधर्म्येण सामान्यसमर्थनं यथा-'गुणानामेव दौरात्म्याद्धुर्यो धुरि नियुज्यते । अलं जातकिणस्कन्धः सुखं स्वपिति गौर्गडिः ॥' दुःखावहकर्मप्रयोजकत्वाद्रगुनां निन्दा । धुर्यो धूर्वहनयोग्यः । किणो वहनचिन्हविशेषः । गडिरलसः । अत्र गुणवन्त एव धुर्या भारवहने नियुज्यन्त इत्यन्ययोगव्यवच्छेदप्रतीतिरन्यत्रायोगग्रहेणैवोपपद्यत इति धूर्वहनयोग्यतया धुर्यविशेषे गडिगवे धूर्वहनायोगरूपवैधर्म्यज्ञानं समर्थकम् । किणहीनस्कन्धत्वेन सुखस्वपनेन च भारवहनायोगः प्रतीयते ॥ सामान्यवैधर्म्येण विशेषसमर्थनमाह—**इत्थमिति** । ब्रह्माणं प्रति बृहस्पतेस्तारकदौरात्म्यनिवेदनमिदम् । क्लिश्नाति विबाधते । शाम्येत् अपकारान्निवर्तेत ॥ **समर्थकमिति** । अनुकूलाचरणेनोपशमाभावोऽयोग्यतयानुपपन्न एव । दुर्जनसामान्यस्वभावेन प्रत्युपकारमात्रोपशाम्यत्वेन वैधर्म्येण समर्थ्यत इति भावः । कारणवैधर्म्येण कार्यसमर्थनं यथा—'बहिरेव चिरादनाश्रये विलसत्येष तुषारदीधितिः । भज संपदमत्र संततं ननु संतापमितः प्रसूयते ॥' चन्द्रस्य संतापजनकत्वानुभवेन संमदजनकत्वे बाधं प्रति संदधर्ती विरहिणीं प्रति तत्संख्या उक्तिरियम् । अनाश्रये अवचनस्थे । अत्र सूर्यस्य संतापजनकत्वप्रदर्शनेन तद्विरुद्धस्य चन्द्रस्य संतापविरुद्धसंमदजनकत्वमुपपन्नम् ॥

## विवृतिपूर्ति

कारणेन कार्यसमर्थनं वैधर्म्येणेत्यस्योदाहरणमूह्यमिति वक्ष्यते । अतस्तदनुक्तवा कार्येण कारणसमर्थनं वैधर्म्येणेत्यस्याप्युदाहरणं सहसा विदधीतेत्यत्रैवेत्याह—सहसेति । सहसा विधानभावस्येति । कारणस्येत्यर्थः । आपत्पदत्वं समर्थकं कार्यम्, सम्पदा विरुद्धमिति विरुद्धधर्मवदित्यर्थः । अभावत्वाभावत्वेऽत्र विरुद्धधर्मे । अत्र हि विमृश्यकारिण एव सम्पदावरणात् कार्यात् सहसा विधानाभाव उचित इति प्रतीतिः । एवमन्यदिति । विशेषणसा-

मान्यसमर्थनं कारणेन कार्यसमर्थञ्च वैधर्म्येण यदनुदाहृतं तदित्यर्थः। तत्र विशेषेण सामान्यसमर्थनं वैधर्म्येण यथा—

"गुणानामेव दौरात्म्याद्धुरि धूर्यो न युज्यते।

असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः॥"

## विज्ञप्रिया

कारणेन कार्यसमर्थनं साधर्म्येणाह—**पृथ्वीरिति**। कार्यकारणयोश्चाविरुद्धधर्मवत्त्वमेव साधर्म्यम्। विरुद्धधर्मवत्त्वञ्च वैधर्म्यं बोध्यम्। धनुर्भङ्गकाले लक्ष्मणास्योक्तिरियम्। आर्यो रामो हरकार्मुकमाततज्यं यतः करोति ततः कारणात् पृथ्व्यादिकं स्थिरादिकं भवेत्यर्थः। एनां पृथ्वीम्। द्वितीयं पृथ्वीभुजङ्गमौ, तत् त्रितये पृथ्वीभुजङ्गमकूर्मराजत्रितये। दिधीर्षां धर्त्तुमिच्छाम्। अन्यथा तु आततज्यीकरणे यावान् भरः स्यात्तेन सर्वेषामस्थैर्यं स्यादित्यर्थः।

**अत्रेति**। नच पृथ्वीस्थैर्यादिः कथमाततज्यीकरणस्य कार्यत्वमस्थैर्यादिरेव तत्कार्यत्वादिति वाच्यम्। अस्थैर्यादिसम्भावनया विशेषस्थैर्यधारणादेस्तत्कार्यत्वात्। नचैवमाततज्यीकरणात्पूर्वभूतस्य विशेषस्थैर्यादेस्तत्रापि कथं कार्यत्वमिति वाच्यम् तज्ज्ञानकार्यत्वे च तत्कार्यत्वोपचारात् नान्दीमुखस्य विवाहनिमित्तकत्ववत्। अत्रानयोः कार्यकारणयोश्चाविरुद्धतत्कार्यकारणतावच्छेदकधर्मवत्त्वं साधर्म्यम्। तादृशात् कारणात् पृथ्व्यादेः स्थिरीभवनादिकमुचितमित्येवं समर्थनं स्थिरीभावाद्युपदेश एव कार्यम्। तस्यौचित्यमेव समर्थनमित्यपि वदति। कार्यादिसमर्थनचतुष्कं हेत्वलङ्कारररूपस्यैवेत्यतः काव्यप्रकाशकृता तदुपेक्ष्य चातुर्विध्यमेवार्थान्तरन्यासोक्तं कारणस्य जनकहेतुत्वात् कार्यस्य च ज्ञापकहेतुत्वात्, ग्रन्थकृता तु ततो भेदोऽस्य वक्ष्यते।

## कुसुमप्रतिमा

अत्रेति। पृथ्वीस्थैर्य्यादिरिति। उपदिश्यमानदृढतरस्थैर्य्यादिरित्यर्थः। तादृशस्य स्थैर्य्यादेश्च अनुत्पन्नपूर्वत्वात् हरकार्म्मुकाततज्योकरणेनैवोत्पत्तेः परस्परकार्य्यकारणभावः सम्भवत्येवेति नानुपपत्तिः। तथैव चानयीरूत्पत्त्युत्पादनयोग्यत्वरूपं साधर्म्मयमित्यपि द्रष्टव्यम्। समर्थकं सयुक्तिकताप्रतिपादकन्, वक्तुश्चतुर्थचरणोक्तयभावे पृथ्वीप्रभृतीनामसावधानतया पतनादिसम्भावनादिति भावः।

कार्य्येण कारणसमर्थने उदाहरति सहसेति। सम्पहरणं सम्पत्प्राप्तिरूपम्। विमृश्यकारित्वरूपस्य विवेचनपूर्वककार्य्यकरणस्य। समर्थकमुपपादकम्। अत्रायमाशयः—विमृश्यकारित्वं खलु सम्पदं जनयतीति लोके दृश्यते; ततश्च विमृश्यकारित्वं कारणम्, सम्पत्प्राप्तिश्च कार्य्यम्। एवञ्च "वृणते हि" इत्यादिद्वितीयार्द्धवाक्यार्थभूतं विमृश्यकारित्वरूपं कारणं सयुक्तिकं करोति, प्रवृत्तिमतः पुरुषस्य सम्पत्प्राप्तेरिटवादिति। अत्रापि सम्पत्प्राप्तिविमृश्यकारित्वरूपयोः कार्य्यकारणयोरुत्पत्त्युत्पादनयोग्यत्वरूपं साधर्म्यमस्तीति द्रष्टव्यम्।

इत्तमिति। कुमारसम्भवद्वितीयसर्गस्थमिदं पद्यम्। इत्थमनेन प्रकारेण आराध्यमानोऽपि उपास्यमानोऽपि तारकासुरः, भुवनत्रयं क्लिश्नाति उत् पीड़यति। तथाहि, दुर्जनः प्रत्यपकारेणैव शाम्येत् शान्तो भवेत् परीत् पीड़नाहिरतो भवेत्, न पुनरुपकारेण।

अत्रेति । सामान्यं दुर्जनादिद्वितीयवाक्यार्थरूपमित्यर्थः, तारकादिप्रथमवाक्यार्थ व्यापकत्वादिति भावः । विशेषस्य तारकादिप्रथमवाक्यार्थस्य परार्द्धवाक्यार्थ व्याप्यदित्याशयः । समर्थकमुपपादकम्, उक्त रूपस्यैव भूयोदर्शनादित्यभिप्रायः । आराधनं नाम उपकारविशेषः, तेनोपकारापकारयोः परस्परविपरीतत्वादत्र वैधर्म्मयम् ।

## विमला

कारणसाधर्म्येण कार्य्यसमर्थनमाह, पृथ्वीति ।—श्रीरामेण हरधनुर्ज्यायोगोद्यमे कृते पृथ्वादीनामस्थैर्य्यादिकं सम्भावयतः लक्ष्मणस्योक्तिरियम् । हे पृथ्वि ! (त्वं) स्थिरा भव, भुजङ्गम !—हे अनन्त ! इति भावः, त्वम् एनां पृथ्वीं, धारय, हे कूर्मराज ! त्वम् इदं द्वितयं—पृथ्वीभुजङ्गमयोर्द्वयं, पृथ्वीं भुजङ्गमं (शेषं) चेति यावत्, दधीयाः,—धर, दिक्कञ्जराः !—हे दिक्षु कुञ्जराः,—गजाः इति तत्सम्बुद्धौ तथोक्ताः, दिग्गजा इत्यर्थः, ("कुञ्जरो वारणः करो" इत्यमरः । ते च—"ऐरावतः पुण्डरीणी वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥" इत्युक्ता ज्ञेयाः) तर्त्तितये—तेषां—पृथ्वीभुजङ्गकूर्माणां, त्रितयं तत्रेति तथोक्ते, दिधीर्या—धारणेच्छां, धारणप्रयत्नमित्यर्थः, कुरुत, आर्य्यः,—पूज्यः, रामः इति यावत्, ["आर्य्यः इत्यत्र "देवः" इति पाठान्तरम्] हरस्य—शम्भोः, कार्मुकं—धनुः, आततज्यं—विस्तृतमौर्वीकम्, आरूढ़गुणमित्यर्थः, करोति । वसन्ततिलकं वृत्तम् । बालरामायणस्येदं पद्यम् ।

अत्रेति ।—आततज्यीकरणं—गुणयोगानुकुलव्यापारः । पृथ्व्यादीनां स्थैर्य्यादैः सिद्धत्वे तत्तन्नियोगानुपपत्त्या स्थैर्य्यादिविशेषो लक्षणीयः, तस्य च ज्यायोगसम्भावनायामनुष्ठितत्वेन कार्य्यत्वमक्षतमेव, तच्च ज्यायोगसम्भावनायाः कारणत्वग्रहेणैव समर्थ्यते । स्थैर्य्यादीनां नियुज्यमानत्वेन कार्य्यत्वं प्रतीयते, तच्च कारणमन्तरेण नोपपद्यते इत्यनुपपत्तिरत्रावधेया ।

## लक्ष्मी

कारणेन कार्यसमर्थनं साधर्म्येणोदाहरति—**पृथ्वी**ति । बालरामायणमहानाटके श्रीरामेण हरधनुर्भङ्गसमये पृथव्यादीनामस्थैर्यादिकं वितर्कयतो लक्ष्मणस्योक्तिरियम् ।

हे पृथ्वि मेदिनि ! त्वं स्थिरा दृढनिश्चला भव, येन शेषनागशिरसो न पतेरित्याशयः, हे भुजङ्गम शेषनाग ! त्वम् एनां पृथ्वीं धारय निश्चलमवलम्बस्व यथा तव शिरसो नेयं भूः पतेदित्याशयः । हे कूर्मराज कच्छपराज ! त्वं तदिदं द्वितयं पृथ्वीभुजङ्गमयोरितिशेषः दधीथाः निश्चलं धारयेथाः अन्यथोभौ पतिष्यत इति भावः । हे दिक्कुञ्जराः ऐरावतादयो दिग्गजः ! यूयमपि तत्त्रितये पृथ्वी-भुजङ्गम-कूर्मराजेतित्रये दिधीर्षां धर्त्तुमिच्छां निश्चलधारणव्यापारमित्यर्थः कुरुत विधत्त अन्यथा सर्व एवैते स्वस्थानात् स्खलेयुरित्याशयः । लक्ष्मणः कथमेवमुपदिशतीत्यत आह—**आर्य** इति । आर्यः ।

'कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स तु आर्य इति स्मृतः ॥

इत्युक्तलक्षणः समादरणीयो रामचन्द्र इत्यर्थः, हरस्य शिवस्य कार्मुकं धनुः, **आतता** आरूढा ज्या मौर्वी यस्य तत्तादृशं करोति विधत्ते । अन्यथा तु आततज्यीकरणे यावान् भारो भवेत्तेन सर्वेषामस्थैर्यं स्यादित्याशयः । वसन्ततिलकंछंन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

लक्षणं संयोजयति—अत्रेति। आततज्यीकरणं गुणयोगानुकूलव्यापारः, पृथ्वीस्थैर्यादिः उपदिश्यमानातिशयनिश्चलस्थैर्यादिरित्यर्थः। उक्तरूपस्य स्थैर्यादेश्च पूर्वमनुत्पन्नत्वात् हरकार्मुकाततज्यीकरणेनैवोत्पत्तेः मिथः कार्यकारणभाव उपपद्यत एवेति न काचन विप्रतिपत्तिः। कार्यकारणयोरुत्पत्त्युत्पादनयोग्यत्वरूपं साधर्म्यम्। समर्थकम् उपपादकम्, तुरीयपादस्य लक्ष्मणोक्त्यभावे पृथ्व्यादीनामसावधानत्वेन स्खलनादिसम्भवादित्यभिप्रायः।

नन्वत्र पृथ्वीस्थैर्यादेः कथमातज्यीकरणस्य कार्यत्वमस्थैर्यादेरेव तत्कार्यत्वादिति चेत्? मैवम्, अस्थैर्यादिसम्भावनया विशेषस्थैर्यधारणादेस्तत्कार्यत्वाभ्युपगमेनादोषात्। नचैवमातज्यीकरणात्पूर्वभूतस्य विशेषस्थैर्यादेस्तत्रापि कथं कार्यत्वमिति वाच्यम्, तज्ज्ञानकार्थत्वे च नान्दीमुखस्य विवाहनिमित्तकत्ववत् तत्कार्यत्वोपचारात्। स्पष्टञ्चैतद्विज्ञप्रियादौ।

## रुचिरा

'**हे पृथ्वि! स्थिरा**। **भव**। हे भुजङ्गम शेषनाग! एनां पृथ्वीम्। **धारय**। हे **कूर्मराज! त्वम्**। **तत्**। **इदम्**। **द्वितीयं** 'पृथ्वीभुजङ्गमयो'रिति शेषः। **दधीथा**र्धारय। हे **दिक्कुञ्जरा** दिग्गजाः। तत्त्रितये तेषां पृथ्वीभुजङ्गमकूर्मराजानां त्रितयं तत्र। **दिधीर्षां** धर्तुमिच्छाम्। **कुरुत**। **देवः** पूज्यः श्रीरामभद्रः। **हरकार्मुकं** महादेवस्य धनुः। **आततज्यमा**तताऽऽरूढा ज्या मौर्वी यस्य तत्तथोक्तम्। **करोति**। बालरामायणे श्रीलक्ष्मणस्योक्तिरियम्। वसन्ततिलकं वृत्तं, तल्लक्षणं चोक्तं प्राक्॥ २१०॥

'सहसा विदधीत न क्रियां—' इत्यादौ (४१६ पृ.) संपत्करणं कार्यं सहसा विधानाभावस्य विमृश्यकारित्वरूपस्य कारणस्य समर्थकम्। एतानि साधर्म्य उदाहरणानि। वैधर्म्ये यथा—

**'इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्**

**शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः ॥'**

अत्र सामान्यं विशेषस्य समर्थकम्। 'सहसा विदधीत'—इत्यत्र सहसा विधानाभावस्यापत्प्रदत्वं विरुद्धं कार्यं समर्थकम्। एवमन्यत् ॥

---

## विवृतिः

कार्यवैधर्म्येण कारणसमर्थनमाह—**सहसेति** ॥ **विरुद्धं** विरुद्धजन्यम्। **समर्थकमिति**। संपद्विरुद्धकार्ये विपदि विवेकविरुद्धविवेकाभावजन्यत्वज्ञानेन संपदि विवेकजन्यत्वं दृढं प्रत्याय्यते। यज्जन्यं यद्विरुद्धं तत्कारण-विरुद्धजन्यमेवेति नियमादिति भावः। अत्र घटत्वादौ व्यभिचारवारणाय जन्यमिति ॥

## विवृतिपूर्ति

इति। अस्यार्थः—धूर्यः आरोप्यमाणभारवहनसमर्थश्च प्राणी धुरि भारवहने नियुज्यते। तच्च गुणानामेव दौरात्म्याद् दौर्जन्याद् धूर्यत्वगुणस्य भारवहनदुःख प्रयोजकत्वात्तस्य दौर्जन्यम्। गुणाभावे तु तादृशं दुःखं न भवतीत्याह—असंजातेति। किणो युगघर्षणादुच्छूनभागः। असंजाततस्कन्धो गलिरलसो गौः सुखं स्वपिति, नतु धुरि नियुज्यते इत्यर्थः। अत्र धुरि नियुज्यमानधूर्यप्राणी सामान्यम्; अनियुज्यमानप्राणिविशेषेण गलिगवादियुज्य-मानत्वविरुद्धधर्मेण सुखस्वापेन धूर्यविरुद्धधर्मेण गलित्वेन च समर्थितम्। अलसस्य सुखस्वपनशीलस्य धूर्यस्य धुरि नियुज्यमानत्वमुचितमिति प्रतीतेः नियोगसमर्थनमेव नियुज्यमानधूर्यसमर्थनं; 'सविशेषणे हि' इति न्यायात्। कारणेन कार्यसमर्थनं वैधर्म्येण यथा—

**"स विजिग्ये रणे सर्वान् राक्षसेन्द्रो बलोद्धतः।**

**रामबाणकटुस्वादमनास्वाद्य हि तादृशः ॥**

इति। अत्र हि रावणस्य विजयः कार्यं रामबाणकटुस्वादानास्वादेन कारणेन समर्थितम्। तदनास्वादेन तस्य विजय उचितस्तदास्वादे सति तदसम्भवादिति प्रतीतेः। भावत्वाभावत्वे तयोर्वैधर्म्ये।

## विज्ञप्रिया

कार्येण कारणस्य समर्थनं साधर्म्येणाह— **सहसेति**। सहसा विमर्षणं विना क्रियां न विदधीत, यतोऽविवेकोऽविमृश्यकारिता परमापदां पदं स्थानम्। विमृश्यकारित्वे तु न केवलं नापदः किन्तु सम्पदश्चेत्याह—**वृणते हीति**। विमृश्यकारितागुणेनैव लोभः। **अत्रेति**। सम्पद्वरणकार्याद् विमृश्यकारित्वमुचितमिति समर्थनम्।

विशेषेण सामान्यस्य समर्थनं वैधर्म्येणेत्यस्योदाहरणमूह्यमिति वक्ष्यते। अतस्तदनुदाहृत्य सामान्येन विशेषसमर्थनमेव वैधर्म्येणोदाहरति— **इत्थमिति**। तारकासुरस्य भुवनत्रयक्लेशकत्वबोधके श्लोके भुवनत्रयक्लेशकत्वविशिष्टदुर्जनविशेषस्तारकासुरः।

आराध्यमानत्वतद्धर्मस्य विरुद्धधर्मः प्रत्ययक्रियमाणत्व दुर्जनसामान्यस्य। एवं क्लेशकत्ववैधर्म्यं शान्तिः। क्लेशकत्वविशिष्टदुर्जनविशेषसमर्थनं क्लेशकत्वसमर्थनरूपमेव। विशेषणे हीति न्यायात्। भवति हि प्रत्यपकारेणैव दुर्जनस्य शान्तिः। तद्विरुद्धाराध्यमानत्ववतो दुर्जनविशेषस्य तारकस्य भुवनक्लेशनमुचितमिति प्रतीतिः।

## कुसुमप्रतिमा

वैधर्म्यो कार्य्येण कारणसमर्थने दर्शयति पुनः सहसेति। सहसाविधानाभावस्य विमृश्यकारित्वरूपस्य, आपत्प्रदत्वमापज्जननम्, विरुद्धं विमृश्यकारित्वरूपकारणादुत्पत्त्ययोग्यम्। अत्रायमाशयः—"अधर्म्मो दुःखकारणम्" इत्युक्तिः सुखकारणीभूतधर्म्मस्य समर्थनमिव, अविमृश्यकारित्वजन्यविपत्प्राप्त्युक्तिः सम्पज्जनकीभूतविमृश्यकारित्वस्य समर्थनमेव करोतीति।

एवमिति। वैधर्म्यं विशेषेण सामान्यसमर्थने यथा मम वङ्गीयप्रतापनाटके—

"सहायशून्योऽपि गुणान्वितो जनो नैवानुगत्यं भजते प्रभोरपि।

## विमला

कार्य्यसाधर्म्येण कारणसमर्थनमाह, सहसेति।—सहसा—अविविच्येत्यर्थः, क्रियां न विदधीत—न कुर्य्यात्, अविवेकः,—विवेचनाराहित्यं, यद्वा—अविमृष्यकारी जनः, परम्—अत्यर्थम्, आपदां पदं—स्थानम्। अस्योत्तरार्द्धन्तु—"वृणते हि विमृष्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः।" व्याख्या च—सम्पदः गुणलुब्धाः,—गुणानुरक्ताः सत्यः, विमृश्यकारिणं जनं स्वयमेव वृणते हि—आश्रयन्त्येव। वैतालीयं वृत्तम्। किरातार्जुनीयस्येदं पद्यम्।

इत्यादाविति।—अत्र विधीयमानस्य सहसा विधानाभावस्य किञ्चिदिष्टं प्रति साधगत्वमवगम्यते, तच्च क्वचिदिष्टे साध्यत्वग्रहमन्तरेण नोपपद्यते इति कार्य्यस्य समर्थकत्वं सम्पद्वरणं कार्य्यमिति, कार्य्यं—कार्य्यत्वप्रतीतिविषयः; कार्य्यत्वप्रतीतिरत्नं "उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः" इतिवत् विमृष्यकारित्वे एव सहसा विधानाभावः पर्य्यवस्यतीति नानयोर्भेदः। विशेषवैधर्म्येण सामान्यसमर्थनं यथा—"गुणानामेव दौरात्म्याद्धुर्य्यो धुरि नियुज्यते। अलं जातकिणस्कधः सुख स्वपिति गौर्गड़ि॥" दुःखावहकर्मप्रयोजकत्वात् गुणानां निन्दा, [धुर्य्यः,—धूर्वहनयोग्य, किणः,—वहनचिन्हविशेषः, गड़िः,—अलसः] अत्र गुणवन्त एव धुर्य्याः भारवहने नियुज्यन्ते इत्यन्वयोगव्यवच्छेदप्रतीतिः अन्यथायोगग्रहेणैवोपपद्यते इति धूर्वहनयोग्यतया धुर्य्यविशेषे गड़िगवे धूर्वहनायोगरूपवैधर्म्यज्ञानं समर्थकं, किणहीनस्कन्धत्वेन सुखस्वपनेन च भारवहनायोगः प्रतीयते इति सङ्क्षेपः।

सामान्यवैधर्म्येण विशेषसमर्थनमाह, इत्थमिति।—कुमारसम्भवे ब्रह्माणं प्रति बृहस्पतेः तारकदौरात्म्यनिवेदनमिदम्। इत्थम्—अनेन प्रकारेण, आराध्यमानः,—सेव्यमानोऽपि, स तारक इति शेषः, भुवनत्रयं क्लिश्नाति—तापयति, विबाधते इत्यर्थः, दुर्जनः,—दुष्टो जनः, प्रत्यपकारेण—तत्कृतानिष्टविनिमयरूपेणानिष्टेन

इत्यर्थः, शाम्येत्—शान्तिं गच्छेत्, अपकारान्निवर्त्तेत इत्यर्थः, उपकारेण न, शाम्येदिति शेषः, प्रत्युत विकुर्य्यादिति भावः ।

अत्रेति ।—समर्थकमिति—अनुकूलाचरणेनोपशमाभावः अयोग्यतयाऽनुपपन्न एव, दुर्जनसामान्यस्वभावेन प्रत्युपकारमात्रोपशाम्यत्वेन वैधर्म्येण समर्थ्यते इति भावः । कारणवैधर्म्येण कार्य्यसमर्थनं यथा—"बहिरेव चिरादनाश्रवे विलसत्येष तुषारदीधितिः । भज सम्पदमत्र सन्ततं ननु सन्तापमितः प्रसूयते ॥" चन्द्रस्य सन्तापजनकत्वानुभवेन सम्मदजनकत्वे बाधं प्रतिसन्दधतीं विरहिणीं प्रति तत्संख्या उक्तिरियम् । अनाश्रवे—अवचनस्थे । अत्र सूर्य्यस्य सन्तापजनकत्वप्रदर्शनेन तद्विरुद्धस्य चन्द्रस्य सन्तापविरुद्धसम्मदजनकत्वम् उपपन्नम् । कार्य्यवैधर्म्येण कारणसमर्थनं कथयति, सहसेति ।—विरुद्धं—विरुद्धजन्यम् । समर्थकमिति ।—सम्पद्विरुद्धकार्य्ये विपदि विवेकविरुद्धविवेकाभावजन्यत्वज्ञानेन सम्पदि विवेकजन्यत्वं दृढ़ प्रत्यायते, यज्जत्यं यद्विरुद्धं, तत्कारणविरुद्धजन्यमेवेति नियमादिति भावः । अत्र घटत्वादौ व्यभिचारवारणाय जन्यमित्यवगन्तव्यम् ।

## लक्ष्मी

कार्येण कारणस्य समर्थनं साधर्म्येणोदाहरति—**सहसेति** । व्याख्यातमिदम् । सम्पद्वरणं सम्पत्प्राप्तिरूपम् । विमृश्यकारित्वरूपस्य विचारपूर्वककार्यविधानस्य । समर्थकं सयुक्तिकताप्रतिपादकम् । साधर्म्यञ्चात्र सम्पप्राप्ति-विमृश्यकारित्वरूपयोः कार्यकारणयोरुत्पत्युत्पादनयोग्यत्वरूपं बोध्यम् । **अयम्भावः**—संसारे यः खलु विचार्य कार्यं सम्पादयति तस्य लक्ष्मीरतुला भवत्यतो विमृश्यकारित्वं सम्पज्जनकमिति निश्चयीयते ततश्च विमृश्यकारित्वं कारणम्, सम्पत्प्राप्तिश्च कार्यम् । तथा च 'वृणुते हि' इत्याद्युत्तरार्द्धवाक्यार्थभूतं विमृश्यकारित्वरूपं कारणं समर्थयति, प्रवृत्तिं कुर्वतो जनस्य सम्पत्प्राप्तेरभिलषितत्वादिति ।

साधर्म्यनिबन्धनोदाहरणान्युक्तान्येवेति स्पष्टयति—**एतानीति** । तत्र तत्र साधर्म्यं तथोपपादितमेव ।

विशेषेण सामान्यस्य समर्थनं वैधर्म्येणानुदाहृत्य सामान्येन विशेषसमर्थनमेव वैधर्म्येणाह—**इत्थमिति** । कुमारसम्भवद्वितीयसर्गे ब्रह्माणं प्रति सुरगुरोस्तारकासुरदौरात्म्यनिवेदनमिदम् । इत्थम् उक्तप्रकारेण आराध्यमानोऽपि उपास्यमानोऽपि किं पुनरुपेक्षयमाण इति शेषः, तारकासुरः, भुवनत्रयं त्रिभुवनं चतुर्द्दशभुवनं वा न त्वस्माकमेव भुवनं क्लिश्नाति दुःखाकरोति । तथाहि—दुर्जनः खलः प्रत्यपकारेण परापकारप्रतिक्रिययैव शाम्येत् अपकारान्निवर्तेत शान्तो भवेत् न पुनरुपकारेण । अनुष्टुप् छन्दः ।

उक्तलक्ष्ये लक्षणं संयोजयितुमाह—अत्रेति । सामान्यं दुर्जनाद्युत्तरार्द्धवाक्यार्थरूपमित्यर्थः तारकादिपूर्ववाक्यार्थोपपादकत्वेन व्यापकत्वादित्याशयः । विशेषस्य तारकादिपूर्ववाक्यार्थस्योत्तरार्द्धवाक्यार्थोपपन्नत्वेन व्याप्यत्वादितिभावः । आराध्यमानो यो भवति तस्य सर्वत्रानुकूल्यदर्शनादत्र तद्विरुद्धत्वाचरणेन वैधर्म्यमित्यवगन्तव्यम् ।

इत्थं कारणेन कार्यसमर्थनं वैधर्म्येणानुदाहृत्य कार्येण कारणसमर्थनं वैधर्म्येणाह—सहसेति । सहसाविधानाभावस्य विमृश्यकारिस्वरूपस्य कारणस्य आपत्प्रदत्वं विपत्युत्पादनं विरुद्धं विमृश्यकारित्वरूपकारणाद्विपरीतम् । **अयम्भावः**—यथा—

**'अधर्मेणैधते तावत् ततो भद्राणि पश्यति ।**

**ततः सपत्नाञ्जयति समूलञ्च विनश्यति ॥'**

इत्याद्युक्तदिशा अधर्मो दुःखजनकः, तेन सुखकारणन्तु धर्म इति समर्थनं भवति तथैवात्र अविमृश्यकारित्वजन्यविपत्प्राप्तिरिति सम्पत्साधनीभूतविमृश्यकारित्वस्य सयुक्तिकताप्रतिपादनमेव विधत्त इति ।

**एवमन्यदिति** । अन्यत् विशेषेण सामान्यसमर्थनं कारणेन कार्यसमर्थनं वैधर्म्येणानुदाहृतम् एवं सामान्येन विशेषसमर्थनं कार्येण कारणसमर्थनमिव ऊह्यमिति शेषः । तत्र विशेषेण सामान्यसमर्थनं वैधर्म्येण यथा—

**'गुणानामेव दौरात्म्याद्धुरिधुर्यो न भुज्यते ।**

**असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥'**

अत्र धुरि नियुज्यमानधूर्यप्राणी सामान्यम्; अनियुज्यमानप्राणिविशेषेण गविगलादियुज्यमानत्ववैधर्म्येण सुखस्वापेन धूर्यविरुद्धधर्मेण गलित्वेन च समर्थितम् । यद्वा—

कारणेन कार्यं समर्थनं वैधर्म्येण यथा—

**'बहिरेव चिरादनाश्रये विलसत्येष तुषारदीधितिः ।**

**भज सम्पदमत्र सन्ततं ननु सन्तापमिनः प्रसूयते ॥'**

अत्र 'सन्तापमिनः प्रसूयते' इत्यनेन सूर्यस्य सन्तापजनने कारणत्वम्, तच्च 'इनादन्यः शान्त्युपपादक' इति वैधर्म्येण तुषारदीधितेः (शशिनः) सम्पद्रूपकार्यस्योत्पत्तिः समर्थ्यते । एवम्—

**'स विजिग्ये रणे सर्वान् राक्षसेन्द्रो बलोद्धतः ।**

**रामबाणकटुस्वादमनास्वाद्य हि तादृशः ॥'**

इत्यादौ बोध्यम् ।

## रुचिरा

उदाहृतमर्थं निर्दिशति—**अत्रेत्यादिना** । स्पष्टम् । '**सहसा...** । व्याख्यातपूर्वं पद्यमिदम् ॥ २११ ॥'

उदाहृतमर्थं निर्दिशति-**अत्रेत्यादिना** ।

**अत्र** । **सम्पत्करणं** 'वृणते' इत्याद्युक्तम् । **कार्य्यम्** । **सहसाऽविमृश्य** । **विधानाभावस्य** । **विमृश्यकारित्वरूपस्य** । **कारणस्य** । **समर्थकम्** ।

साधर्म्यनिबन्धनस्यास्योदाहृतान्येवोदाहरणानीत्याह—**एतानीत्यादिना** । स्पष्टम् ।

वैधर्म्ये उदाहरणानि दर्शयन्तं इत्याह—**वैधर्म्ये** इत्यादिना । स्पष्टम् । '**इत्थमित्यादि** ।

'**इत्थं** निरुक्तप्रकारेण । **आराध्यमान** उपास्यमानः । **अपि** 'किं पुनरुपेक्ष्यमाण' इति शेषः । 'तारकासुर' इति प्रक्रमप्राप्तम् । **भुवनत्रयं**, नत्वस्माकमेव भुवनमिति शेषः । **क्लिश्नाति** दुःखाकरोति । तथा हि—**दुर्जनो** दुष्टो जनः । **प्रत्यपकारेणापकारप्रतिक्रियया** । **शाम्येत्** । **उपकारेण** । **न** 'शाम्ये'दिति पूर्वतोऽन्वेति । कुमारसम्भवे ब्रह्माणं प्रति गुरोरुक्तिरियम् ॥ २१२ ॥'

उदाहृतमर्थं निर्दिशति—**अत्रेत्यादिना** ।

**अत्र** । **सामान्यं** 'शाम्ये' दित्याद्युक्तं दुर्जनमात्रस्वाभाव्यम् । **विशेषस्य** 'इत्थमाराध्यमानोऽपी' त्यस्य तारकासुरचेष्टितस्य । 'उपकारेण कुप्येत्' इति वैधर्म्येणेति शेषः । **समर्थकम्** । '**सहसा विदधीत...**'**इत्यादौ**

व्याख्यातपूर्वे पद्ये । 'पूर्वार्द्धे' इति शेषः । **सहसा** । **विधानाभावस्य** 'सहसा विदधीत न क्रिया'मित्यनेन निर्दिष्टस्य कारणस्य । 'असहसा विधानं श्रेय'इति वैधर्म्यद्वारेति शेषः । **आपत्पदत्वं** आपत्पदता 'अविवेकः परमापदां पद' मितयुक्तरूपमीति यावत् । **विरुद्धं** विरुद्धजन्यं सहसा विधानजन्यमिति यावत् । **कार्य्यम्** । **समर्थकम्** ।

उदाहरणान्तरं स्वयमूह्यमित्याह—**एवम्** । **अन्यत्** । इति । स्पष्टम् । एवं च-'अहन्नेको रणे रामो यातुधानानेकशः । नूनं सहायसम्पत्तिमपेक्षन्ते बलोज्झिताः ॥' इत्यत्र 'नून'मित्याद्युक्तेन विशेषेण 'नूनं सहायसम्पत्तिमुपेक्षन्ते बलोद्धताः ।' इति वैधर्म्यद्वारा 'अह'न्नित्यादिनोक्तं सामान्यं समर्थितम् । 'बहिरेव चिरादनाश्रवे विलसत्येष तुषारदीधितिः । भज सम्मदमत्र सन्ततं ननु सन्तापमिनः प्रसूयते ॥' इत्यत्रेनः (सूर्य्यः) सन्तापं प्रसूयत इत्युक्तदिशा सूर्य्यस्य सन्तापजनने कारणत्वम्, तच्च 'इनादन्यः प्रशान्तिजनक'इति वैधर्म्यद्वारा तुषारदीधितेः (चन्द्रात्) सम्मदरूपकार्य्यस्योत्पत्तिं समर्थते । इति बोध्यम् ।

**हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते ॥ ६२ ॥**

तत्र वाक्यार्थता—

**'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं**

**मेघैरन्तरितः प्रिये ! तव मुखच्छायानुकारी शशी ।**

**येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-**

**स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥'**

अत्र चतुर्थपादे पादत्रयवाक्यानि हेतवः ।

---

## विवृतिः

काव्यलिङ्गलंकारमाह—**हेतोरिति** ।

वाक्यपदार्थत्वे वाक्यपदान्यतरप्रतिपाद्ये वाक्यार्थस्य पदार्थस्य वा हेतुत्वे व्यङ्ग्ये इति पर्यवसितोऽर्थः । क्रियान्वयसमाप्तौ वाक्यार्थत्वम् । अन्यथा पदार्थत्वम् । अयमेव हेत्वलंकार उच्यते ॥ **यत्त्वन्नेत्रेति** । वर्षाजनितोत्कण्ठस्य प्रोषितस्योक्तिरियम् । मुखच्छायानुकारी मुखकान्तिसदृशः । गतः । मानसमिति शेषः । सादृश्य विनोदमात्रं सादृश्यमात्रेण विनोदः । मात्रपदेन सङ्गव्यवच्छेदः । देवेन दुर्दैवेन । **चतुर्थपादे** चतुर्थपादप्रतिपाद्ये सादृश्यमात्रविनोदाभावे । **पादत्रयवाक्यानि** पादत्रयरूपवाक्यत्रयार्थाः ॥

## विवृतिपूर्ति

काव्यलिङ्गलङ्कारमाह—क्रियाकारकभावेन समाप्तत्वे वाक्यं, असमाप्तत्वे पदम् । अयमेव हेत्वलङ्कारः काव्यहेतुश्चोच्यते ।

## विज्ञप्रिया

कारणेन कार्यसमर्थनं वैधर्म्येणेत्यस्योदाहरणमूह्यमिति वक्ष्यते । अतस्तदनुक्त्वा कार्येण कारणसमर्थनं वैधर्म्येणत्यस्याप्युदाहरणं सहसा विदधीतेत्यत्रैवेत्याह—**सहसेति** । **सहसा विधानाभावस्येति** । कारणस्येत्यर्थः । आपत्पदत्वं समर्थकं कार्यम्, सम्पदा विरुद्धमिति विरुद्धधर्मवदित्यर्थः । अभावत्वभावत्वेऽत्र विरुद्धधर्मे । अत्र हि विमृष्यकारिण एव सम्पदावरणात् कार्यात् सहसा विधानाभाव उचित इति प्रतीतिः । **एवमन्यदिति** । विशेषणसामान्यसमर्थनं कारणेन कार्यसमर्थनञ्च वैधर्म्येण यदनुदाहृतं तदित्यर्थः । तत्र विशेषेण सामान्यसमर्थनं वैधर्म्येण यथा—

**"गुणानाभेव दौरात्म्याद्धुरि धूर्यो न युज्यते ।**

**असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥"**

इति। अस्यार्थः—धूर्यः आरोप्यमाणभारवहनसमर्थश्च प्राणी धुरि भारवहने नियुज्यते। तच्च गुणानामेव दौरात्म्याद् दौर्जन्याद् धूर्यत्वगुणस्य भारवहनदुःखप्रयोजकत्वात्तस्य दौर्जन्यम्। गुणाभावे तु तादृशं दुःखं न भवतीत्याह-**असंजातेति**। किणो युगघर्षणादुच्छूनभागः। असंजाततत्स्कन्धो गलिरलसो गौः सुखं स्वपिति, नतु धुरि नियुज्यते इत्यर्थः। अत्र धुरि नियुज्यमानधूर्यप्राणी सामान्यम्; अनियुज्यमानप्राणिविशेषेण गलिगवादियुज्यमानत्वविरुद्धधर्मेण सुखस्वापेन धूर्यविरुद्धधर्मेण गलित्वेन च समर्थितम्। अलसस्य सुखस्वपनशीलस्य धूर्यस्य धुरि नियुज्यमानत्वमुचितमिति प्रतीते; नियोगसमर्थनमेव नियुज्यमानधूर्यसमर्थनं; 'सविशेषणे हि' इति न्यायात्। कारणेन कार्यसमर्थनं वैधर्म्येण यथा—

**"स विजिग्ये रणे सर्वान् राक्षसेन्द्रो बलोद्धतः।**

**रामबाणकटुस्वादमनास्वाद्य हि तादृशः॥**

इति अत्र हि रावणस्य विजयः कार्यं रामबाणकटुस्वादानास्वादेन कारणेन समर्थितम्। तदनास्वादेन तस्य विजय उचितस्तदास्वादे सति तदसम्भवादिति प्रतीतेः। भावत्वाभावत्वे तयोर्वैधर्म्ये।

काव्यलिङ्गालङ्कारमाह—क्रियाकारकभावेन समाप्तत्वे वाक्यं, असमाप्तत्वे पदम्। अयमेव हेत्वलङ्कारः काव्यहेतुश्चोच्यते।

**यत्त्वन्नेत्रेति**। वर्षासु भावनोपनीतां रावणोपहृतां सीतां सम्बोध्य रामस्येयमुक्तिः। हे प्रिये! त्वत्सादृश्येनार्थाद् दृश्यमानेन यो विनोदस्तन्मात्रमपि में दैवेन न क्षम्यते। ननु नीलोत्पलचन्द्रहंसगतिषु त्वन्नेत्रमुखसादृश्यानि विलोक्यन्तामित्यत आह। **यत्त्वन्नेत्रेति**। वर्षाकालवशात् नीलोत्पलं जलमग्नं, चन्द्रो मेघान्तरितः, राजहंसाश्च मानसं गता इत्यर्थः। **पादत्रयवाक्यानी**ति। वाक्यत्रयस्यैव क्रियाकारकभावेन समाप्तत्वाद् हेतव इत्यत्र हेत्वर्थका इत्यर्थः।

## लोचन

अत्र हेतुस्त्रिधा भवति, भवति, त्रैविध्येन अलङ्काराणां विषयविभागस्थापनात् कथं त्रिधेत्याह। ज्ञापकः सिद्धत्वेनैवानिर्दिष्टस्याप्रतीतस्य प्रत्यायकः। यत्र साध्यसाधकत्वाकारेण हेतुमतोनिर्देशः, यथा "यत्र पतत्यबलाना" मित्यादौ शरापातेन मदनधावनस्यानिष्पादकः साकाङ्क्षत्वेन सिद्धस्य साधकः। यथा—सहसा विदधीत न क्रियामित्यादौ। अन्यथा यत्त्वन्नेत्र इत्यादि पादत्रयं विनाऽसमञ्जसं स्यात् तदैवास्य विरहिणो नायिकासादृश्यविनोदासहत्वस्य स्वतोऽप्रतीतेः। स्वतोऽपि समर्थकत्वाद् वाक्याभावेऽपीत्यर्थः। गतार्थः—यत्त्वन्नेत्रेत्यादिवैलक्षण्येन निराकाङ्क्षतया प्रतीताभिधेयम्। उक्तमेव द्रढयति—**पृथगेवेति**। स्फुटतयाभिधेयविषयतया, वैचित्र्यस्यालौकिकविच्छित्तेः। इदञ्च काव्यलिङ्गस्य हेतुर्वैचित्र्यावहनेन न निवर्त्तत इति काव्यलिङ्गाख्यमलङ्करणम्।

विच्छित्त्या कविप्रतिभोत्थापितेन वैचित्र्येण। वह्निमान धूमवत्त्वादित्यादौ लौकिकोक्तिमात्रे सधर्मिणयोगव्यवच्छेदः। व्यापकस्य साध्यत्वम्। पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टो हेतुः साधनम्। एवं शब्दवृत्तेनापि यत्र साध्यसाधनत्वाकारेण निर्देशस्तत्रानुमानालङ्कारः। काव्यलिङ्गे त्वर्थानुसन्धानादेव हेतुहेतुमद्भावप्रतीतिः।

तस्य चन्द्रस्य कान्तिजालैः। तत् तस्मात् रूपकवशादक्ष्णोः पद्मत्वप्रयोजितं रूपकालङ्कारमन्तर्भाव्योक्तत्वात्।

## कुसुमप्रतिमा

दण्डस्तरोबन्धनरश्मिसंयुतो महाप्रवाहे स्थिर एव लक्ष्यते ॥"

अत्र द्वितीयर्द्धगतोंविशेषार्थ: प्रथमार्द्धगतसामान्यार्थस्य समर्थक:। तथा आनुगत्यभजनाभावो नाम स्थिरत्वम्, स्थिर एवेत्यस्य "न पुनरस्थिर:" इत्यर्थ पर्य्यवसानादस्थिरत्वञ्चैतयो: परस्परं विरुद्धधर्म्मत्वम्।

वैधर्म्यो कारणेन कार्य्यसमर्थने यथा मम रुक्मिणीहरणमहाकाव्ये—

**"नृपते ! गृहिणां गृहक्रिया यदनन्तेति निगद्यते न तत्।**

**भुवने परमेशशेषयोर्न तृतीये क्वचिदस्त्यनन्तता ॥"**

अत्र द्वितीयार्द्धगत: कारणीभूतार्थ: प्रथमार्द्धगतस्य कार्य्यभूतार्थस्य समर्थक:। तथा अनन्ताया अभावस्य न खलु निगदनाभावोत्पादनयोग्यत्वमस्तीति वैधर्म्मयमुन्नेयम्।

अर्थान्तरन्यासे कारणप्रस्तावात् कारणघटितमेव काव्यलिङ्गलङ्कारं लक्षयति हेतोरिति। हेतोय क्वचिर्थं प्रति कारणस्य, वाक्यपदार्थत्वे व्यञ्जनया सम्पूर्णवाक्यबोध्यत्वे पदबोध्यत्वे वा काव्यलिङ्गं नामलङ्कारा निगद्यते। तथा च—

अर्थविशेषं प्रति वाक्यस्यार्थ:, पदस्यार्थो वा यदि हेतुर्भवति, तदा काव्यलिङ्गं नामालङ्कारो निगद्यत इति सरलार्थ:। अतएवायं द्विविध:। वाक्यं पदश्च प्रागेव लक्षितम्। काव्यस्य लिङ्गं वैचित्र्यविशेषभूतं चिन्हमिति व्युत्पत्ति:।

तत्रेति। तयोर्द्विविधयोर्मध्ये, वाक्यार्थता हेतोर्वाक्यबोध्यता यथेत्यर्थ:।

यदिति। हनुमन्नाटके सीताहरणानन्तरं तामुद्दिश्य वर्षाकाले रामस्योक्तिरियम्। हे प्रिये ! यत् इन्दीवरं नीलोत्पलं त्वन्नेत्रसमानकान्ति, तत् सलिले जले मग्नम्; अतएव इन्दीवरदर्शनेनापि तव नयनदर्शनतृप्तिर्नजायत इति भाव:। तव मुखस्य च्छायां कान्तिमनुकरोतीति स तादृश:, शशी चन्द्रोऽपि मेघैरन्तरित आवृत:। अतश्चन्द्रं दृष्ट्वापि तव मुखदर्शनसुखं न लभ्यत इत्याशय:। तथा येऽपि तव गमनानुकारिणो गतिर्येषां ते तथोक्ता आसन्, तेऽपि राजहं सा गता वर्षास्वभावात् मानससरोवरमिति शेष:। अतो राजहंसगतिदर्शनेनापि तव गतिदर्शनान्दी नानुभूयत इत्यभिप्राय:। अतएव दैवेन विधिना, मे मम, तव सादृश्येन अङ्गप्रत्यङ्गसदृशवस्तुदर्शनेनेत्यर्थ: यो विनोदो विरहदु:खनिवृत्तिस्तन्मात्रमपि न चम्यते न सह्यते।

अत्रेति। चतुर्थपादे चतुर्थपादात्मकवाक्यार्थं प्रति, पादत्रयवाक्यानि प्रथमपादत्रयात्मकवाक्यत्रयार्था:, हेतव: कारणानि। प्रथमवाक्यत्रयार्थान् विना चतुर्थ वाक्यार्थानुत्पत्तेरित्याशय:।

पदेति पदार्थता हेतो: पदबोध्यता।

## विमला

काव्यलिङ्गमाह, हेतोरिति।—हेतो:,—कारणस्य, वाक्यपदार्थत्वे—वाक्यपदार्थपदार्थयो: कारणत्वे, वाक्यपदान्यतरप्रतिपाद्ये इत्यर्थ:, वाक्यार्थस्य पदार्थस्य वा हेतुत्वे व्यङ्ग्ये इति पर्य्यवसितोऽर्थ:, (तव क्रियान्वय-समाप्तौ वाक्यार्थत्वम्, अन्यथा पदाश्रत्वामिति बोध्यम्) काव्यलिङ्गं निगद्यते। अयमेव हेत्वलङ्कार उच्यते।

यदिति ।—रावणेन सीताया हरणान्तरं माल्यवत्पर्वते वर्षाकाले सीताविरहिणः रामस्य उक्तिरियम् । हे प्रिये ! तव नेत्रयोः समाना कान्तिर्यस्य तथोक्तं, यत् इन्दीवरं—नीलोत्पलम्, ("अथ नीलाम्बुजन्म च । इन्दीवरञ्च नीलेऽस्मिन्" इत्यमरः) तत् सलिले—जले, मग्नं, वर्षाप्रभावादिति भावः । तव मुखस्य छायां—कान्तिम्, अनुकरोतीति तथाभूतः, त्वन्मुखकान्तिसदृश इत्यर्थः, शशी—चन्द्रः, मेघैरन्तरितः,—आच्छादितः, ये तव गमनानुकारिणी गतिर्येषां तथोक्ताः, ["गमनानुसारिगतयः" इति पाठे—गमनानुसारिणौ गतिर्येषामितिविग्रहोऽवसेयः] ते राजहंसाः अपि गताः, मानसमिति शेषः, वर्षासु भूस्थज़लानामाविलतया तत्पानस्य हंसानां पीड़ाकरत्वात् ते निर्मलजलं मानसं सरो यान्तीति प्रसिद्धिः, (अतः) दैवेन—दुर्दैवेन, इत्यर्थः, तव सादृश्यविनोदमात्रमपि—सादृश्यमात्रेण विनोदः,—सन्तापनिवृत्तिरपि, [मात्रपदेन सङ्गव्यवच्छेदः] मे—मम, न क्षम्यते—न सह्यते । प्रियासादृश्यदर्शनं हि विरहिणां विनोदः, तदपि मम नास्तीति भावः । मतान्तरे प्रतीपालङ्कारोऽयम् । शार्दूलविक्रीडितं वृत्तम् । हनुमन्नाटकस्येदं पद्यम् ।

अत्रेति ।—चतुर्थपादे—चतुर्थपादप्रतिपाद्ये, सादृश्यमात्रविनोदाभावे इत्याशयः, पादत्रयवाक्यानि—पादत्रयरूपवाक्यार्थाः ।

## लक्ष्मी

उक्तालङ्कारे हेतोः प्रस्तावात् हेतुघटितमेव काव्यलिङ्गनामालङ्कारं प्रतिपादयति—**हेतोरिति** । हेतोः यं कञ्चिदर्थं प्रति ज्ञापकसमर्थकेतरनिष्पादककारणस्य वाक्यपदार्थत्वे वाक्यञ्च पदानि चेति वाक्यपदानि तान्यर्थाः प्रयोजनभूतानि यस्य तस्य भावस्तस्मिन् तथोक्ते व्यञ्जनया समस्तवाक्यबोध्यत्वे पदबोध्यत्वे वा काव्यलिङ्गं तन्नामालङ्कारो निगद्यते । तथा च वाक्यार्थरूपस्यैकपदार्थरूपस्यानेकपदार्थरूपस्य च हेतोरभिधानं काव्यलिङ्गमित्यभिधीयत इत्यर्थः, एवञ्च अर्थविशेषं प्रति वाक्यार्थः पदार्थो वा यदि हेतुर्भवेत्तदाऽयमलङ्कार इति निष्कर्षः । एतेन हेतोर्वाक्यपदार्थता एकपदार्थता अनेकपदार्थता चेति त्रैविध्यं फलितम् । वाक्यपदयोर्लक्षणञ्च प्रागेवोक्तम् । लिङ्गमत्र वैचित्र्यविशेषभूतं निष्पादकरूपं कारणमेव न तु तर्कशास्त्रभिमतम् अत एव तद्व्यावृत्त्यर्थं काव्यपदमिति विभावनीयम् । अत एव च 'दण्डेन घटः' इत्यादौ नायमलङ्कारः, वैचित्र्याभावात् ।

हेतुस्वरूपञ्चोक्तं **गोवर्धनेन**—

**'न्यायोऽनुमानं हेतुश्च लिङ्गं युक्तिः समर्थकः' इति ।**

अग्निपुराणेऽपि—

'सिषाधयिषितार्थस्य हेतुर्भवति साधकः । कारको ज्ञापकश्चेति द्विधा सोऽप्युपदिश्यते ॥' इति ।

अयमलङ्कार एव हेत्वलङ्कारेणाभिधीयते । अत एव कारणमालाऽलङ्कारे वृत्तौ **प्रकाशकृ**तोक्तम्—पर्वोक्तकाव्यलिङ्गमेव हेतुः (हेत्वलङ्कार इति) अस्यानुमानार्थान्तरन्यासाभ्यां भेदस्तु स्वयमेवाग्रे वक्ष्यति । साभिप्रायपदार्थविन्यसनरूपात्परिकरादस्य को भेद इति चेत् ? तत्र पदार्थवाक्यार्थबलाद्व्यज्यमानोऽर्थो वाच्योपकारकतां भजते, अत्र पदार्थवाक्यार्थावेव हेतुभावं भजत इत्यन्यत्र स्पष्टम् ।

क्रमादुदाहर्तुमाह—**तत्रेति** । तत्र तयोर्द्विप्रकारयोर्मध्ये वाक्यार्थता यथा वाक्यार्थरूपस्य हेतोरभिधानमुदाहरतीत्यर्थः ।

**यत्वन्नेत्रेति**। हनुमन्नाटकेऽतिप्रसिद्धचम्पूकाव्ये सीतापहरणान्तरं भावनोपनीतां तां सम्बोध्य वर्षासमये तद्विरहव्याकुलस्य श्रीरामस्योक्तिरियम्। हे प्रिये सीते! यत् इन्दीवरं नीलोत्पलं त्वन्नेत्रसमानकान्ति तव लोचन-तुल्यशोभि, तत् सलिले जले 'सलिलं कमलं जलम्' इत्यमरः, मग्नं मज्जितम्; सुतरामिन्दीवरावलोकनेनाऽपि तव लोचनावलोकनानन्दो न भवतीत्यभिप्रायः। तव सीतायाः; मुखस्य वदनस्यच्छाया कान्तिमनुकरोतीति स तथोक्तः 'छाया सूर्यप्रिया कान्तिः' इत्यमरः, शशी चन्द्रोऽपि मेघैः वारिवाहैः अन्तरित आच्छादितः, अतश्शशिनं विलोक्याऽपि तव मुखावलोकनसुखं न जायत इति भावः। तथा येऽपि तव गमनानुकारिणी गमनानुसारिणी गतिर्येषा ते तादृशा आसन्, तेऽपि राजहंसाः कलहंसाः 'राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे' इति हैममेदिन्यौ, गता गमिताः 'जलध-रसमये मानसं यान्ति हंसाः' इत्युक्तनयेन मानससरोवरं प्राप्ता इत्यर्थः, तथा च राजहंसगमनावलोकनेनाऽपि तव गतिदर्शनहर्षो न लभ्यत इत्याशयः। अतएव दैवेन भाग्येन, मे मम, तव सादृश्येन अङ्गप्रत्यङ्गतुल्यवस्त्वलोकनेने-त्यर्थः यो विनोदो वियोगजनितसन्तापनिवर्त्तनं तन्मात्रमपि न क्षम्यते न सह्यते। यद्वा—नीलोत्पलचन्द्रहंसगतिषु त्वन्मुखादिसादृश्यावलोकनेन कथञ्चिद्धैर्यमाप्नुयादपि किन्तु वर्षासमयागमनाद् दुर्दैवहतकेन नीलोत्पलं जले मज्जितम् अत्रान्तर्भाविण्यर्थः, तथा चन्द्रं मेघान्तरितम्, राजहंसाश्च मानसं प्रापिता इति त्वद्विरहः सर्वथाऽसह्य एवेति। सरलार्थः। **शार्दूलविक्रीडितं** छन्दस्तल्लक्षणन्तूक्तं प्राक्।

लक्ष्ये लक्षणं सङ्गमयितुमाह—**अत्रेति**। चतुर्थपादे त्वत्सादृश्येत्यादिचतुर्थपादात्मकवाक्यार्थं प्रति पाद-त्रयवाक्यानि 'यत्त्वन्नेत्र'...इत्यारभ्य 'गता' इत्यन्ताः पूर्वपादत्रयात्मकवाक्यार्थाः, हेतवः कारणानि। पूर्ववाक्यत्रया-र्थान् विहायान्तिमवाक्यार्थोत्पत्तेरभावादितिभावः।

## रुचिरा

काव्यलिङ्गं लक्षयति-१४४ **हेतोर्ज्ञापकसमर्थकेतरनिष्पादककारणस्यावाक्यपदार्थत्वे** वाक्यं च पदानि चेति वाक्यपदानि, तान्यर्थाः प्रयोजनभूतानि यस्य तस्य भावस्तत्त्वं तस्मिंस्तथोक्ते। पदं च पदे च पदानि चेति पदानि, तथा च वाक्यार्थत्वे एकपदार्थत्वे द्विपदार्थत्वे बहुपदार्थत्वे चेति फलितम्। इदम्बोध्यम्—अस्य द्विपदा-र्थत्वबहुपदार्थत्वाभ्यां द्विभेदत्वमनेकपदार्थत्वेनैकभेदत्वमेवामनन्त्याचार्या इति। **काव्यलिङ्गं** काव्यस्य लिङ्गं निष्पा-दकं कारणमिति तथोक्तम्। तन्नामाऽलङ्कार इति भावः। **निगद्यते**। एवं च-निष्पादकत्वावच्छिन्नस्य कारणस्य वाक्यार्थत्वमेकपदार्थत्वमनेकपदार्थत्वं चेति त्रिविधः काव्यलिङ्गनामाऽलङ्कारः। अत्रापि अलङ्कारसामान्यलक्षण-स्यानुस्यूतत्वम्। तेन—'दण्डेन घट' इत्यादौ नातिप्रसङ्गः। अत एव नाप्येवंविधस्थले काव्यत्वम्। इति निष्कृष्टोऽर्थः। अनुमानादर्थान्तरन्यासाच्चैतस्य भेदः स्वयं वक्ष्यते, परिकरात् पुनः 'परिकरे वाक्यार्थपदार्थसाम-र्थ्यात् प्रतीयमानोऽर्थो वाच्योपस्कारकत्वं भजते, काव्यलिङ्गे पुनर्वाक्यार्थपदार्थवेव हेतुभावं भजत' इत्युक्त-दिशाऽवगन्तव्यमित्येके, 'वस्तुतस्तु-निष्पादकस्य वाक्यार्थपदार्थत्वाभावदस्य सर्वेभ्योऽप्यन्येभ्यो भेद'इत्येव बोध्यमि'त्यन्ये प्राहुः। अत्र कौस्तुभकाराः—"यत्तु रसगङ्गाधरे—'अनुमितिकरणत्वेन सामान्यविशेषभावाभ्यां चानालिङ्गितः प्रकृतार्थोपपादकत्वेन विवक्षितोऽर्थः काव्यलिङ्गम्'इति लक्षणं कृत्वोपपादकत्वेनेत्यस्य नतु शब्दात् तेन रूपेण बोधित इत्यर्थकतया शब्दप्रतिपादितहेतुत्वकस्य हेतोरेव वारणं प्रयोजनम्। तेन-'भयानकत्वादसि वर्जनीयोदयाऽऽश्रयत्वादसि देव! सेव्यः।' इत्यत्र न व्यभिचारः।...'इत्युक्ता 'विनिन्द्यान्युन्मत्तैरपि च परिहार्य्याणि पतितैरवाच्यानि व्रात्यैः सपुलकमपास्यानि पिशुनैः। हरन्ती लोकानामनवरतमेनांसि कियतां कदाऽप्यश्रान्ता त्वं जगति पुनरेका विजयसे। इयं तं मामम्ब त्वमथ करुणाऽऽक्रान्तहृदये पुनाना सर्वेषामघमथनदर्पं दलयसि॥'

इत्युदाहृतं, तत्परस्परविरुद्धमिति स्पष्टमेव; हेत्वर्थकशतृप्रत्ययनेन हेतुत्वस्य बोधितत्वात्, अन्यथा पञ्चम्याऽपि तद्बोधानुपपत्तेः। 'हरिं पश्यन्मुच्यते' इत्यादौ भगवद्दर्शनभक्तयोः कार्य्यकारणभावप्रत्ययस्य सर्वानुभवसिद्धत्वात्। तत्र 'हेतुभूतहरिदर्शनाश्रयो मुच्यते' इति बोधस्यावश्यकत्वात्। हेतुत्वं च समभिव्याहृतकार्य्यापेक्षमेवेति। तत्रार्था-न्मुक्तिनिष्ठकार्य्यत्वनिरूपितत्वलाभात्।" इति दिक्।

अथ क्रमादुदाहर्त्तुकाम आह—**तत्र** तयोर्द्विप्रभेदयोर्मध्ये। **वाक्यार्थता** तन्मूलं काव्यलिङ्गम्। **यथा**—

'हे **प्रिये** सीते ! **यत्**। **त्वन्नेत्रसमानकान्ति** तव नेत्रे तयोः समाना सदृशी कान्तिर्यस्य तथोक्तम्। तत्। **इन्दीवरं** नीलकमलम्। **सलिले** जले। 'सलिलं कमलं जलम्।' इत्यमरः। **मग्नं** मज्जितम्। अत्रान्तर्भावितो णिच्प्रत्ययः। 'वर्षाजलौघं सर्वतो वर्धयित्वे'ति शेषः। **तव**। **मुखच्छायानुकारी** मुखस्य च्छाया प्रतिबिम्बं कान्तिर्वा तामनुकरोतीति तथोक्तः। 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः।' इत्यमरः। 'यः स' इति शेषः। **शशी**। **मेघैः**। **अन्तरितो**ऽन्तर्गमितः। अत्रापि णिजोऽन्तर्भावः। **ये**। **अपि**। **त्वद्गमनानुसारिगतयस्**तव गमनं तस्यानुसारिणीं गतिर्येषां तथोक्ताः। **ते**। **राजहंसाः**। **गता** गमिता 'मानस'मिति शेषः। अत्रापि णिजोऽन्तर्भावः। 'वर्षासु मानसं हंसाः प्रयान्ती'ति कविसमयमनुरुध्येदयुक्तम्। एवम्-मे। **दैवेन** दुर्दैवेन। **त्वत्सादृश्यविनोदमात्रं** तव सादृश्यं तस्य विनोदमात्रं विडम्बनमात्रं, तेन वा विनोदमात्रं सन्तापनिवर्तनमात्रमिति तथोक्तम्। **अपि न**। **क्षम्यते**। सीतां स्मरतस्तद्विरहेण वर्षासु व्याकुलस्य रामस्योक्तिरियम्। 'हनुमन्नाटके'ति प्रसिद्धस्य चम्पूकाव्यस्येदं पद्यम्। शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक्॥ २१३॥

लक्ष्यं लक्षयति—**अत्र**। **चतुर्थपादे** 'त्वत्सादृश्य...' इति पद्ये सादृश्यविनोदाभावे। **पादत्रयवाक्यानि**। 'यत्त्वन्नेत्र...' इत्यारभ्य 'गता' इत्यन्ताः पूर्वपादवाक्यार्था इति भावः। **हेतवः**। मज्जितादिक्रियाकर्म्मीभूता इन्दीव-रादयो दैवेन त्वत्सादृश्यदर्शनजन्यसुखासहिष्णुत्वनिष्पादका इति फलितोऽर्थः।

पदार्थता यथा मम—

**('त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम्।**

**न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥')**

अत्र द्वितीयार्धे प्रथमार्धमेकपदं हेतुः। अनेकपदं यथा मम—

---

## विवृतिः

**त्वद्वाजीति**। अत्र कविप्रौढोक्तिसिद्धं तादृशं पङ्किलत्वं संभाव्यमानभूरिभारभयकरणकहरगङ्गात्यागे हेतुः। वास्तवहेतूदाहरणं तु—'वदनाम्बुरुहालोकनिन्दितेन्दुप्रभाभराम्। त्वामवेक्ष्य मनोजस्य को युवा न वशंवदः ॥' अत्र पूर्वार्धस्यैकपदार्थस्यार्थः परार्धार्थे हेतुः ॥

## विज्ञप्रिया

**त्वद्वाजीति**। निर्द्धूतः उद्धूतः। न धत्ते इत्युत्प्रेक्षितम्। **एकपदमिति**। पङ्किलामित्यन्तं क्रियानन्वयेनाऽसमाप्त्या समासेन चैकपदमित्यर्थः।

## कुसुमप्रतिमा

त्वदिति। राज्ञः स्तुतिरियम्। हे राजन्! हरो महादेवः, भूरिभारभिया अत्यन्तभारभयेन शिरसा तव वाजिराजिभिर्घोटकश्चेणिभिः, निर्द्धूतेन उत्तोलितेन धूलीनां पटलेन राशिना, पङ्किलां कर्द्दमितां गङ्गाम्, न धत्ते न धारयति।

अत्रेति। द्वितीयार्द्धे द्वितीयार्द्धगतभूरिभारं प्रति, प्रथमार्द्धमेकपदं प्रथमार्द्धरूपैकपदस्यार्थ, हेतुः कारणम्, तथा पङ्क्तिलत्वं विना अजातपूर्वभूरिमारासम्भावादिति भावः। अत्र म्मपूर्णमेव प्रथमाङ्कं समस्ततया एकमात्रमेव पदमिति बोध्यम्।

## विमला

त्वदिति। राजस्तुतिरियम्। हरः—शम्भुः, भूरिभारभिया—बड़भारभयेन, शिरसा तव वाजिराजिभिः—अश्वसमूहैः, निर्धूतं—क्षिप्तं, यत् धूलीपटलं—धूलीनां—भूमिकणानां, रजसामिति यावत्, पटलं—पुञ्जः, रजोराशिरित्यर्थः, ["पटलं पिटके च परिच्छदे। छदिर्दृयोगतिलके क्लीवं वृन्दे पुनर्न ना ॥" इति मेदिनी "कृदिकारादक्तिनः" इति वार्त्तिकेन धूलिशब्दात् ङीष्] तेन पङ्किलां—सञ्जातपङ्कां, गङ्गां न धत्ते। अत्र कविप्रौढोक्तिसिद्धं तादृशं पङ्किलत्वं सम्भाव्यमानभूरिभारभयकरणहरगङ्गात्यागे हेतुः। वास्तवहेतूदाहरणन्तु—"वदनाम्बूरुहालोक-निन्दितेन्दुप्रभाभराम्। त्वामवेक्ष्य मनोजस्य को युवा न वशंवदः ?" ॥ अत्र पूर्वार्द्धस्यैकपदार्थस्यार्थः परार्द्धार्थे हेतुः।

## लक्ष्मी

हेतोरेकपदार्थतायामुदाहर्त्तुमाह—**पदार्थतेति**। पदार्थता हेतोः पदप्रतिपाद्यतेत्यर्थः।

**त्वद्वाजीति**। इदं पद्यं व्याख्यातम्।

लक्ष्ये लक्षणं सङ्गमयति—**अत्रेति**। द्वितीयार्द्धे 'न धत्ते' इत्यादयुत्तरार्द्धगत भूरिभारं प्रति प्रथमार्द्धं 'त्वद्वाजि' इत्यादिप्रथमार्द्धरूपम् एकपदम् उपाचरादेकपदस्यार्थः कविप्रौढोक्तिसिद्धतथाविधपङ्किलत्वाभिधेय इति यावत् हेतुः तस्य कारणं निष्पादक इत्यर्थः। समस्तमेव प्रथमार्द्धं सम्पूर्णतया एकमात्रमेव पदमित्यवधेयम्। उदाहरणान्तरं यथा—

**'वदनाम्बुसहालोकनिन्दितेन्द्वप्रभाभराम्।**
**त्वामवेक्ष्य मनोजस्य को युवा न वशंवदः॥'**

अत्र पूर्वार्द्धस्यैकपदार्थस्यार्थ उत्तरार्द्धार्थे हेतुः।

## रुचिरा

हेतोरेकपदार्थतायामुदाहरति—**पदार्थतेत्यादिना**। स्पष्टम्। **'त्वद्वाजीत्यादि**। व्याख्यातपूर्वं पद्यमिदम्॥२१४॥'

लक्ष्यं निर्दिशति-**अत्र**। **द्वितीयार्धे** 'स धत्ते' इत्यादिप्रतिपाद्ये सम्भाव्यमानभूरिभारभयकरणहरगङ्गात्यागे। **प्रथमार्धं** 'त्वद्वाजि' इत्यादि। **एकपदमुपचारात्तदर्थः** कविप्रौढोक्तिसिद्धतादृशपङ्किलत्वाभिधेय इति यावत्। **हेतुस्तस्य** निष्पादक इति भावः। यथा वा-'वदनाम्बुसहालोकनिन्दितेन्दुप्रभाभराम्। त्वामवेक्ष्य को युवा न वशवदः॥' इत्यत्र पूर्वार्द्धैकपदार्थः परार्थे हेतुः।

**('पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम्।**

देव ! त्रिपथगात्मानं गोपयत्युग्रमूर्धनि ॥')

---

## विवृतिः

**पश्यन्त्यसंख्यपथगामिति**। अत्र पूर्वार्धं क्रियान्वयसमाप्तौ वाक्यत्वमनापन्नमनेकपदघटितं तदर्थस्य हेतुता। अत्रापि कविप्रौढोक्तिसिद्धो हेतुः। संभाव्यमानमात्मगोपनं कार्यम्। वास्तवहेतूदाहरणं तु—'अपाङ्गान्तनटन्नेत्रं वीक्ष्यमाणा मनागपि। अनङ्गसचिवाः कान्ता हरन्ति जगतां मनः ॥'

## विज्ञप्रिया

**पश्यन्त्यसंख्येति**। अत्रापि गोपायतीत्युत्प्रेक्षितम्। अत्र पश्यन्तीत्यसंख्यपथगामिति त्वद्दानजलवाहिनीमिति च पदादेव क्रियानन्वयेनाऽसमाप्तवात् पथत्रयगमनापेक्षया असंख्यपथगमनोत्कर्षेण तद्दर्शनं गोपनहेतुः।

## कुसुमप्रतिमा

अनेकेति। अनेकपदम् अनेकपदस्यार्थो हेतुयथेत्यर्थः।

पश्यन्तीति। इयमपि राजस्तुतिः हे देव ! राजन् ! स्वर्गमत्यपातालात्मकान् केवलान् त्रीनेव पथो गच्छतीति त्रिपथगा गङ्गा, तव दानजलस्य धनवितरणकालीनोत्सर्गजलस्य वाहिनीं नदीम्, असंख्यपथगा पश्यन्ती सतौ, उग्रमूर्द्धनि महादेवमस्तके, आत्मानं गोपयति गुप्तं करोति, लज्जावशादिति भावः।

अत्र आत्मगोपनं प्रति असंख्यपथगामिति त्रिपथगेति च पदद्वयरूपानेकपदस्यार्थो हेतुरिति पदार्थ हेतुकं काव्यलिङ्गम्।

## विमला

पश्यन्तीति।—हे देव ! त्रिपथगा—मार्गत्रयमात्रवाहिनी, स्वर्गपृथ्वीपातालेषु सञ्चारिणी गङ्गेत्यर्थः, तव दानजलवाहिनीं—नदीमित्यर्थः, असङ्ख्यपथगां—बहुमार्गवाहिनीं, पश्यन्ती सती आत्मानम् उग्रस्य—हरस्य, [भीषणपुरुषस्येति ध्वनिः] मूर्द्धनि—शिरसि, ("उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः) गोपयति—रक्षति, लज्जयेति शेषः। गङ्गा त्रिपथगामिनीति बहुमता आसीत्, किन्तु त्वद्दानजलवाहिनीमसङ्ख्यपथगामिनीं दृष्ट्वा कदाचित् ने(से ?) यं मन यशोऽपहन्यात् इति भीता लज्जयेव तिरोभवितुमिच्छति स्म इति भावः। अत्र पूर्वार्द्धं क्रियान्वयासमाप्तौ वाक्यत्वमनापन्नमनेकपदघटितं तदर्थस्य हेतुता। अत्रापि कश्प्रिौढ़ोक्तिसिद्धो हेतुः, सम्भाव्यमानमात्मगोपनं कार्य्यम्। वास्तवहेतूदाहरणन्तु—"अपाङ्गान्तनटन्नेत्रं वीक्ष्यमाणा मनागपि। अनङ्गसचिवाः कान्ता हरन्ति जगतां मनः ॥" इति बोध्यम्।

## लक्ष्मी

हेतोरनेकपदार्थतामुदाहर्त्तुमाह—**अनेकेति**। अनेकपदम् अनेकपदार्थतेत्यर्थः।

**पश्यन्तीति** । पदमिदं व्याख्यातपूर्वम् । अत्र आत्मगोपनं प्रति असंख्यपथगामिति त्रिपथगेति च द्विपद-रूपानेकपदार्थो हेतुः । उदाहरणान्तरं यथा—

**'अपाङ्गान्तनटन्नेत्रं वीक्ष्यमाणा मनागपि ।**
**अनङ्गसचिवाः कान्ता हरन्ति जगतां मनः ॥'**

## रुचिरा

हेतुरनेकपदार्थतायामुदाहरति- **अनेकपदमनेकपदार्थतेति** भावः । **यथा** । **मम 'पश्यन्तीत्यादि** । व्याख्यातपूर्वं पद्यमिदम् ॥ २१५ ॥' अत्र क्रियाऽन्वयासमाप्तौ वाक्यत्वमप्राप्तस्य 'पश्यन्ती' त्यादिपदानैक्यस्य कविप्रौढोक्तिसिद्धौऽर्थः सम्भाव्यमानो गङ्गाया आत्मगोपने हेतुरिति बोध्यम् । यथा वा—'प्रणयि सखी सलीलपरिहासरसाधिगतैर्ललिताशिरीषपुष्पहननैरपि ताम्यति यत् । वपुषि वधाय तत्र तव शस्त्रोपक्षेपरूपोऽर्थो भुजपातस्य निष्पादकः ।

इह केचिद् वाक्यार्थगतेन काव्यलिङ्गेनैव गतार्थतया कार्यकारणभावेऽर्थान्तरन्यासं नाद्रियन्ते तदयुक्तम्। तथा ह्यत्र हेतुस्त्रिधा भवति—ज्ञापको निष्पादकः समर्थकश्चेति। तत्र ज्ञापकोऽनुमानस्य विषयः, निष्पादकः काव्यलिङ्गस्य, समर्थकोऽर्थान्तरन्यासस्य, इति पृथगेव कार्यकारणभावेऽर्थान्तर-न्यासः काव्यलिङ्गात्। तथाहि—'यत्त्वनेत्र—' इत्यादौ चतुर्थपादवाक्यम्, अन्यथा साकाङ्क्षतया-समञ्जसमेव स्यात् इति पादत्रयगतवाक्यं निष्पादकत्वेनापेक्षते। 'सहसा विदधीत—' इत्यादौ तु—

**'परापकारनिरतैर्दुर्जनैः सह संगतिः।**

**वदामि भवतस्तत्त्वं न विधेया कदाचन॥'**

इत्यादिवदुपदेशमात्रेणापि निराकाङ्क्षतया स्वतोऽपि गतार्थं सहसा विधानाभावं संपद्वरणं सोपपत्तिकमेव करोतीति पृथगेव कार्यकारणभावेऽर्थान्तरन्यासः काव्यलिङ्गात्।

'न धत्ते शिरसा गङ्गां भूरिभारमिया हरः।

त्वद्वाजिराजिनिर्धूतधूलिभिः पङ्किला हि सा॥'

इत्यत्र हिशब्दोपादानेन पङ्किलत्वादितिवद्धेतुत्वस्य स्फुटतया नायमलंकारः। वैचित्र्यस्यै-वालङ्कारत्वात्।

---

## विवृतिः

कार्यकारणभावेऽर्थान्तरन्यासमनङ्गीकुर्वतः **काव्यप्रकाशकारादेर्मतं** दूषयति—**इह केचिदिति**। पदार्थग-तेन काव्यलिङ्गेनार्थान्तरन्यासासंभवादाह—**वाक्यार्थगतेनेति**। अन्यथा हेत्वनुक्तौ साकाङ्क्षतया कारणजिज्ञा-सया। **असमञ्जसं** सुदृढप्रतिपत्तिजननाक्षमम्। पादत्रयगतवाक्यं पादत्रयस्वरूपवाक्यम्। **निष्पादकत्वेन** निष्पादकत्वप्रति पादकत्वेन॥ **स्वतोऽपि** हेतूक्तिं विनापि। **गतार्थं** निःसंशयप्रतिदितस्वार्थम्। तथा च हेत्वाका-ङ्क्षया यद्वाक्यं यद्वाक्यमपेक्षते तदर्थस्य तदर्थो निष्पादकः, स एव काव्यलिङ्गस्य विषयः। यत्र हेतूपदेशादिना हेतुनिरपेक्षं वाक्यं तत्र हेतुवाक्यस्यार्थः समर्थक एव, स चार्थान्तरन्यासस्य विषयः। एवंविधं भेदमनङ्गीकृत्य समर्थकहेतोरपि काव्यलिङ्गविषयत्वस्वीकारेऽर्थान्तरन्यासमात्रोच्छेदप्रसङ्ग इति भावः॥

## विज्ञप्रिया

काव्यप्रकाशकृदभिप्रेतार्थमाह—**इह केचिदिति**। **वाक्यार्थगतेनेति**। कार्यकरणसमर्थेन यान्युदाहर-णानि दर्शितानि तत्र हेतूनां वाक्यार्थमात्रगतत्वाज् ज्ञापकोऽनुमानस्य विषय इति।

इदं तु काव्यप्रकाशकृद्विषयविभागमनादृत्यैव लिखितं तन्मते हि प्रश्नस्यैव ज्ञापको हेतुर्न हेत्वलङ्कारः, तत्रोत्तरालङ्कारेणाघ्रातत्वात्। अन्यत्र तु जनको ज्ञापकश्च हेतुर्हेत्वलङ्कार एव। अत एव—

**"भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं**

**हा सोपानपरम्परां गिरिसुताकान्तालयालङ्कृतिम्।**

**अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-**

**ल्लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥"**

इति श्लोके सुखालोकच्छेदित्वं मोक्षस्य महामोहत्वे हेतुरित्युक्त्या हेत्वलङ्कारोदाहरणतया उदाहृतम् । तत्र मोक्षस्य महामोहताया अलीकत्वेन सुखालोकच्छेदित्वस्य जनकहेतुत्वासम्भवेन ज्ञापकहेतुत्वादेव । अनुमानं तु साध्यसाधनयोरेकधर्मिगतत्वेन निर्देशे सति हेतोर्हेतुत्वेन निर्देशे सत्येव । इह तु सुखालोकाच्छेदिनीत्यनेन हेतोरेव निर्देशो नतु हेतुत्वेन । भवताऽप्यनुमानोदाहरणतया वक्ष्यमाणेषु श्लोकेषु हेतूनां हेतुत्वेनैव निर्देशात् नहि 'पर्वतो वह्निमान धूमात्' इत्युक्तेऽनुमानम् । तस्माद् ज्ञापकहेतुमात्रं नानुमानालङ्कारस्य विषयः, किन्तु दर्शितहेतुरेव । अतो ज्ञापकहेतुमात्रस्यानुमानस्यानुमानत्वमुक्तमित्युक्तम् । निष्पादकः काव्यलिङ्गस्येति । इदमपि 'भस्मोद्रधूलने'त्यादौ न सम्भवतीत्यवधेयम् । त्वद्वाजिराजीत्यत्र पश्यन्त्यसंख्येत्यत्र च हेतोर्निष्पादकत्वासम्भवादुत्प्रेक्षा ।

यत्त्वन्नेत्रसमानकान्तीत्युक्तहेत्वलङ्कारोदाहरणे दैवाक्षमां प्रति नीलोत्पलादीनां सलिलमग्नत्वादेर्जनकहे-तुत्वासम्भवात् कष्टसृष्टया जनकत्वमुपपादयितुमाह । तथाहि 'यत्त्वन्नेत्रेति' चतुर्थपादवाक्यं दैवाक्षमाबोधकम्, अन्यथा यत्त्वन्नेत्रेत्यादिहेत्वनुपादानेऽसमञ्जसं हेत्वाकाङ्क्षासत्त्वेनाऽनिवृत्ताकाङ्क्षम् । पादत्रयवाक्यमित्यत्र वाक्यार्थमित्यर्थः । निष्पादकत्वेन निराकाङ्क्षबोधविशिष्टतया दैवाक्षमानिष्पादकत्वेन ।

तथा च ईदृशबोधविषयतारूपविशेषणांशनिष्पादकत्वेन सविशेषणन्यायाद् विशिष्टनिष्पादकत्वमित्यु-क्तम् । इदं न रुचिरमुक्तम् । ज्ञापकांशविषयताजनकत्वेन तद्विषयजनकत्वस्वीकारेऽनुमानालङ्कारे प्रश्नज्ञापका-लङ्कारे च तदापत्तेः । तस्मादीदृशकष्टसृष्टिमनादृत्य काव्यप्रकाशकृता कार्यकारणसमर्थनेऽर्थान्तरन्यासोऽनादृतः । स एव ज्यायान् ।

नन्वेवं 'सहसा विदधीते'त्यादावपि 'वृणते हि' इत्यादिपदार्थं विना पूर्वार्धवाक्यं साकाङ्क्षमित्यत उक्तरीत्या तत्रापि कावयलिङ्गमेव स्यान्नार्थान्तरन्यास इत्यर्थः । तत्र तादृशाकाङ्क्षा नास्तीत्याह—सहसेत्यादि । उपदेशमात्रेणापि निराकाङ्क्षतया वृणते हि इत्यादावाकाङ्क्षाराहित्येनापि गतार्थं चरितार्थमित्यतः सहसा विधाना-भावं कर्मभूतं सम्पद्वरणं कर्तृ सोपपत्तिकमेव कुरुते । ननु आकाङ्क्षाबलाद्धेतुर्भवतीत्यर्थः । तत्रोपदेशताया दृष्टा-न्तमाह—**परापकारनिरतैरि**ति । तत्र 'न विधेये'ति कृत्यप्रत्ययादिनाऽत्रापि 'विदधीते'त्यत्र विधिप्रत्ययादुपदेशप्रतीतिरित्यर्थः । परापकारेत्यादौ समर्थनीयाऽनिर्देशात् नास्त्येव तत्रार्थान्तरन्यास इति विशेषः । इदं त्ववधेयम्-सहसेत्यादावुपदेशरूपत्वेन चरितार्थत्वान्नमा भवतु तद्धेत्वलङ्कारः पृथ्वि स्थिरा भवेत्यादौ सिद्धै स्थैर्ये उपदेशसम्भवात् कार्मुकज्याततीकरणं हेतुमपेक्षते एवेति तत्र हेत्वलङ्कारप्रसक्तिर्दुर्वारैव ।

## लोचन

न केवलमलङ्कारान्तराश्रयेणैव विच्छित्तिरेतदलङ्कारप्रयोजिकेत्युदाहरणान्तरं दर्शयति—**यथा वे**ति । अनयोरुदाहरणयोर्हृदये प्रियसद्भावस्य स्मरधावनस्य च कारणरूपस्य साध्यस्यापि पद्मकुड्मलता शरपतनञ्च साधनं यथा पर्वतोऽयं वहनिमान् धूमवत्त्वादित्यादौ । एवम्

**"आरूढः पतित इति स्वसम्भवेऽपि स्वच्छानां परिहरणीयतामुपैति ।**

**कर्णेभ्यश्च्युतमसितोत्पलं वधूनां वीचीभिस्तटमनु यन्निरासुरापः ॥"**

अत्र स्वच्छानां पतितपरिहाररूपसामान्यस्य जलानामसितोत्पले निरसनरूपो विशेषरूपः साधनम्। यथा वृक्षोऽयं शिंशपात्वादित्यादौ। एवं चास्य विच्छित्तिविशेषस्य वितर्काख्यभिन्नालङ्कारप्रयोजकत्व। निरूपणप्रयासो राघवानन्दानामविचारमल एव। अनिश्चिततयाऽनिर्द्धारितत्वेन सम्भावनोत्थानाद् इति भावः। निश्चिततया पर्वतोऽयं वह्निमानित्यादौ वह्निमत्त्वादिवत्।

## कुसुमप्रतिमा

केवलसामान्यविशेषाभावे द्विविधमात्रार्थान्तरन्यासवादिनां मम्मटभट्टान्तीनां मतं प्रसङ्गाद्दूषयितुमाह इहेति। अर्थालङ्कारप्रकरण इत्यर्थः। केचित् मम्मटादयः, वाक्यार्थगतेन सम्पूर्णार्थ प्रकाशासमर्थपदार्थहेतुकेनास-म्भवात् केवलवाक्यार्थहेतुकेन, काव्यलिङ्गेनैव। अतएवात्र अर्थान्तरन्यासविषयकपर्य्यालोचनं नासङ्गतमिति द्रष्ट-व्यम्। गतार्थतया निष्पन्नप्रयोजनकतया "पृथ्वी! स्थिरा भव" इत्यादौ "सहसा विदधीत" इत्यादौ च कार्य्यकारणभावे अर्थान्तरन्यासप्रयोजनस्य तादृशकाव्यलिङ्गेनैव सिद्धतयेत्यर्थः। अत्र अनुमान काव्यलिङ्गार्थान्त-रन्यासात्मकालङ्कारत्रये। ज्ञापकः अनुमितिरूपज्ञानजनकः, निष्पादको नियतस्वसापेक्षस्य सम्पादकः, समर्थकः समर्वण्यैव स्वनिरपेक्षस्य असम्भतादि निरासेन नियतसम्भवतामात्रबोधकः।

अथै तेषु कः कस्य विषय इत्याह तत्रेति। ज्ञापकोऽनुमानस्य विषयः, अनुमितिरूपज्ञानजनकत्वात्; निष्पादकः काव्यलिङ्गस्य विषय इत्यनुषङ्गः, नियतस्वसापेक्षस्य सम्पादकत्वात्; समर्थकोऽर्थान्तरन्यासस्य विषय इति सम्बन्धः, सर्वथैव स्वनिरपेक्षस्य असम्भवतादिनिरासेन नियतसम्भवतामात्रबोधकत्वात्।

नन्वेवं विषयविभागे किं प्रमाणमित्याह तथाहीति। चतुर्थपादावादवाक्यं चतुर्थपादवाक्यार्थः, अन्यथा प्रथमपादत्रयगतवाक्यार्थत्रयानुक्तौ, साकाङ्क्षतया हेत्वपेक्षतया असमञ्जस अपर्थ्यवसितान्वयत्वेन असंलग्नम्। पादत्रयवाक्यं प्रथमपादत्रयवाक्यार्थम्, निष्पादकत्वेन स्वसम्पादकत्वेन। अतएव "यत् त्वन्नेत्र"त्यादौ काव्यलिङ्ग-मिति भावः।

अथ "सहसा विदधीत न क्रियाम्" इत्यादावप्येवमेव काव्यलिङ्गमेवास्तमित्याह सहसेति। इत्यादौ तु "उपदेशमात्रेणापि" इति परेणान्वयः।

परेति। परापकारनिरतैदुर्जनैः सह कदारनापि सङ्गतिः सम्मेलनं न विधेया न कर्त्तव्या इति भवतः समीपे तत्त्वं यथार्थ कतां वदामि। अत्र परापकारेत्यादिवाक्याभ्यन्तरे वदामीत्यादिवाक्यस्यानुप्रवेशादुगर्भिततादोषः समुन्नेयः।

इत्यादिवदिति। स्वतोऽपि स्वभावत एव गतार्थं चरितार्थमन्वनिरपेक्षमित्यर्थः, सहसाविधानाभावं "सह-सा विदधीत न क्रियाम्" इति वाक्यार्थभूतमित्यर्थः, सम्पहरणं कर्तृ "वृणते हि—" इत्यादि वाक्यार्थभूता सम्पत्प्राप्तिरित्यर्थः, सोपपत्तिकमेव सयुक्तिकमेव निश्चितमेवेति यावत् करोति, न पुनः "यत् त्वन्नेत्र—" इत्यादिवत् सहसाविधानाभावं निष्पादयतीत्यर्थः। पृथगेव हेतुभेदादि्भन्न एव। तथा च "सहसा विदधीत न क्रियाम्" इत्यादौ समर्थकहेतुस्थलेऽपि काव्यलिङ्गाङ्गीकारे "वृहत्सहायः कार्य्यान्तम्" इत्यादौ "यावदर्थपदा वाच्यम्" इत्यादौ च सामान्यविशेषभायेनार्थान्तरन्यासस्थलेऽपि काव्यलिङ्गाङ्गीकारौचित्येन अर्थान्तरन्यासालङ्कारसामान्यस्यैव विलो-पापत्तिः। अथ सामान्यविशेषभावस्थले हेतोः समर्थकरूपतया पार्थक्यादस्त्येवार्थान्तरन्यास इति चेत् कार्य्यकार-

णभावस्थलेऽपि तथैव हेतोः पार्थक्यात् पृथगेवार्थान्तरन्यासः स्वीकर्त्तव्य एवेति चतुर्विध एवार्थान्तरन्यास इत्याशयः। एतेन हेतोः समर्थक रूपत्वे अर्थान्तरन्यासः निष्पादकरूपत्वे तु काव्यलिङ्गमिति भेदोऽपि दर्शितः।

व्यावृत्तिप्रदर्शनार्थं प्रदर्शितमेव पद्य किञ्चिद्विकलीकृत्य पुनः प्रदर्शयति न धत्त इति इति। हरः शम्भुः, भूरिभारभिया अत्यन्तभारभयेन शिरसा गङ्गां न धत्ते। कुती नाम गङ्गाया भूरिभार इत्याह—हि यस्मात्, सा गङ्गा, तव वाजिराजिभिरश्वश्रेणिभिः निर्द्धूता उत्तोलिता या धूलयस्ताभिः पङ्क्तिला कृद्द मिता।

इत्यत्रेति। स्फुटयेति। पञ्चमीविभक्तेरिव हिशब्दस्य हेत्वर्थत्वात् "हि हेतावधारणे" इत्यमरादिवचनादिति भावः।

## विमला

कार्य्यकारणभावेऽर्थान्तरन्यासमनङ्गीकुर्वतः काव्यप्रकाशकादेर्मूतं दूषयति—इह केचिदिति। पदार्थगतेन काव्यलिङ्गेनार्थान्तरन्यासासम्भवात् आह, वाक्यार्थगतेनेति।—अन्यथा—हेत्वनुक्तौ, प्रथमद्वितीयतृतीयपादवाक्यानि विनेत्यर्थः, साकाङ्क्षतया—कारणजिज्ञासया, असमञ्जसम्—असङ्गतं, सुदृढ़प्रतिपत्तिजननाक्षममित्यर्थः। पादत्रयगतवाक्यं—पादत्रयस्वरूपवाक्यं, निष्पादकत्वेन—निष्पादकत्वप्रतिपादकत्वेनेत्यर्थः।

परापकारेति।—भवतः तत्त्वं—सत्यं, युक्तियुक्तमिति यावत्, वदामि, कदाचन परापकारनिरतैः—परेषाम्—अन्येषां, न तु पराणां शत्रूणाम्, अपकारः तत्र निरताः—परायणास्तैस्तयोक्तैः, अत एव दुर्जनैः सह सङ्गतिः न विधेया—न कर्त्तव्या इति।

इत्यादिवदिति।—निराकाङ्क्षतया—कारणनिरपेक्षतया, स्वतोऽपि—हेतूक्तिं विनाऽपि, आत्मनैव इत्यर्थः, गतार्थं—कृतार्थं, निःसंशयप्रतिपादितस्वार्थमित्यर्थः, नात्रोत्तरार्द्धं निष्पादकत्वेन अपेक्षते इति भावः, तथा च, हेत्वाकाङ्क्षया यद्वाक्यं यद्वाक्यमपेक्षते तदर्थस्य तदर्थो निष्पादकः, स एव काव्यलिङ्गस्य विषयः, यत्र हेतूपदेशादिना हेतुनिरपेक्षं वाक्यं, तत्र हेतुवाक्यस्यार्थः समर्थक एव, स चार्थान्तरन्यासस्य विषयः, एवंविधं भेदमनङगीकृत्य समर्थकहेतोरपि काव्यलिङ्गविषयत्वस्वीकारेऽर्थान्तरन्यासमात्रोच्छेदप्रसङ्गः इति भावः।

नेति।—हरः—शङ्करः, भूरिभारभिया—अत्यन्तमारोहहनभीत्याहेतुना, शिरसा—मस्तकेन, तद्वारेति यावत्, गङ्गां न धत्ते, अत एव तां मार्गत्रयेण कपर्दगोपितामपि निःसारयतीति भावः; ननु भूरिभारभीः सम्प्रत्येव कुतः प्राप्ता ? इत्याह—हि—यतः, सा—गङ्गेत्यर्थः, तव—राज्ञ इत्यर्थः, ये वाजिनः—सैन्याश्वाः, तेषां राजिः—पङ्क्तिः, तया निर्धूताः—खुरक्षोदेनोत्थापिताः, धूलयः ताभिः—तद्वारा, पङ्किला—पङ्कवती, अत एव गरीयसी संवृत्तेति भावः।

## लक्ष्मी

कार्यकारणभावेऽर्थान्तरन्यासमनभ्युपगतस्य, काव्यप्रकाशकारादेर्मतं निराकर्तुमुत्थापयति—**इहेति**। इह काव्यलिङ्गेदाहरणप्रस्तावे, केचित् काव्यप्रकाशकारादयः वाक्यार्थगतेन पदार्थगतेन काव्यलिङ्गेनार्थान्तरन्याससम्भवात् केवलवाक्यार्थहेतुकेन काव्यलिङ्गेनैव एतन्नामाकालङ्कारेणैव गतार्थतया सम्पन्नप्रयोजनकतया 'पृथ्वि स्थिरा भव' इत्यादौ कारणेन कार्यस्य 'सहसा विदधीत' इत्यादौ कार्येण कारणस्या वा समर्थकस्य परैरङ्गीकृतस्यार्थान्तरन्यासस्य तथाविधकाव्यलिङ्गेनैव सिद्धतयेत्यर्थः। नाद्रियन्ते नाङ्गीकुर्वन्ति, किन्तु काव्यलिङ्गमेवेति शेषः।

तदयुक्तं तन्न समीचीनम्। उपपादयति—तथाहीति। 'उपपाद्यते' इति शेषः। अत्र अर्थालङ्कारप्रकरणे अनुमान-काव्यलिङ्गार्थान्तरन्यासात्मकालङ्कारत्रये। ज्ञापकः अनुमितिरूपज्ञानोत्पादकः, निष्पादकः नियतस्वसाकाङ्क्षस्योपपादकः, समर्थकः सर्वथैव स्वनिराकाङ्क्षस्य असम्भवताद्यपाकरणेन केवलनियतसम्भवतापोषकः।

उक्तहेतुषु कः कस्य विषय इति जिज्ञासायामाह—**तत्रे**ति। ज्ञापकोऽनुमानस्य विषयः, अनुमितिरूपज्ञानोत्पादकत्वात्, निष्पादकः काव्यलिङ्गस्य 'विषय' इत्यस्यात्र सम्बन्धः, नियतस्वसाकाङ्क्षस्योपपादकत्वात्; समर्थकोऽर्थान्तरन्यासस्य 'विषय' इत्यस्यात्रापि सम्बन्धः, सर्वथैव स्वनिराकाङ्क्षस्यासम्भवताद्यपाकरणेन केवलनियतसम्भवतापोषकत्वात्।

उपपादितमर्थं समर्थयति—**तथाही**ति। चतुर्थपादवाक्यं तुरीयचरणवाक्यार्थः, अन्यथा पूर्वचरणत्रयगतवाक्यार्थत्रयानुपादाने, साकाङ्क्षातया कारणापेक्षित्वेन असमञ्जस अपर्यवसितसम्बन्धेनायुक्तम्। पादत्रयगतवाक्यं पूर्वचरणत्रयवाक्यार्थम्, निष्पादकत्वेन स्वोपपादकत्वेन अत एवोक्तपद्ये काव्यलिङ्गमित्याशयः।

न चार्थान्तरन्यासोदाहरणेषु 'सहसा विदधीत' इत्यादिषु काव्यलिङ्गमिति दर्शयति—सहसेति। इत्यादौ तु 'उपदेशमात्रेणाऽपि' इत्युत्तरेण सम्बन्धः।

**परापकारे**ति। परापकारेषु अन्यापकृतिषु निरतैः तत्परैः दुर्जनैः खलैः सह कदाचनाऽपि सङ्गतिः सम्मेलनं न विधेया न कर्त्तव्या इति भवतः सन्निधौ तत्त्वं सत्यकथां वदामि कथयामि।

**इत्यादिवद्दि**ति। उपदेशमात्रेणापि केवलोपदेशेनापि निराकाङ्क्षतया निरपेक्षतया स्वतोऽपि हेतूक्तिं विनापि गतार्थं नियतप्रतिपादितस्वार्थम्, सहसाविधानाभावं 'सहसाविधीत न क्रियाम्' इति वाक्यार्थभूतम्, सम्पद्वरणं (कर्त्तृ) 'वृणुते हि' इत्यादिवाक्यार्थभूता सम्पल्लाभ इत्यर्थः, सोपपत्तिकमेव सयुक्तिकमेव नियतमेवेति यावत् करोति, न तु 'यत्त्वन्नेत्र' इत्यादिवत् सहसाविधानभावमुपपदायतीत्यर्थः। इति हेतुना पृथगेव कारणभेदादतिरिक्त एव। एवञ्च यत्र समर्थकहेतुस्तत्रार्थान्तरन्यासः, यत्र तु निष्पादको हेतुस्तत्र काव्यलिङ्गमिति निष्कर्ष आयातः। यदि च समर्थकहेतुस्थले काव्यलिङ्गं स्यात्तदा सामान्यविशेषभावस्थलेऽपि काव्यलिङ्गेनैव निर्वाहे सिद्धेऽर्थान्तरन्यास-सामान्यलङ्कारस्य किमपि प्रयोजनं न स्यात्।

**केचित्तु**—प्रसङ्गेऽयं काव्यप्रकाशकृद्विषयमनादृत्यैव लिखितः तन्मते हि प्रश्नस्यैव ज्ञापको हेत्वलङ्कारः, तत्रोत्तरालङ्कारेणानाघ्रातत्वात्। अन्यत्र तु जनको ज्ञापकश्च हेतुर्हेत्वलङ्कार एव' इति वदन्ति।

यत्रोत्पादकहेतोर्हेतुत्वेनोपन्यासस्तत्र वैचित्र्याभावान्नायमलङ्कार इति दर्शयितुं प्रदर्शितमेव पद्यं किञ्चित्परिवर्त्य पुनः प्रदर्शयति—**न धत्त** इति। राज्ञः स्तुतिरियमिति पूर्वं प्रतिपादितमेव। हरो महादेवः, भूरिभारभिया नितान्तभारत्रासेन शिरसा मूर्ध्ना गङ्गां भागीरथीं न धत्ते। गङ्गाया भूरिभारः कुत इत्यत आह—**त्वदि**ति। हि यस्मात्, सा गङ्गा तव वाजिराजिभिः घोटकपङ्क्तिभिः निर्द्धूता उत्तोलिता, या धूलयो रेणवस्ताभिः पङ्किला पङ्कवती।

**इत्यत्रे**ति। हिशब्दोपादानेन हेतुत्वबोधक—'हि'शब्दग्रहणेन। स्फुटतया पञ्चमीविभक्तेरिव 'हि' पदस्य हेत्वर्थत्वस्पष्टतया 'हि हेतावववधारणे' इत्यमरकोशप्रामाण्यादित्याशयः।

## रुचिरा

अर्थान्तरन्यासादेरस्यावच्छेदकं लक्षयन्मतान्तरमक्षिपति-**केचित्** काव्यप्रकाशकारादयः। **इह** काव्यलिङ्गोदाहरणप्रस्तावे। **वाक्यार्थगतेन** हेतोर्वाक्यार्थतया सम्भवतेति भावः (पदार्थगतेन काव्यलिङ्गेनार्थान्तरन्यासासम्भ-

वादिदमुक्तम्) । **काव्यलिङ्गेन** । **एव** । **गतार्थतया** 'कारणेन कार्य्यस्य कार्येन वा कारणस्य समर्थकस्य परैः स्वीकृतस्यार्थान्तरन्यासस्ये'ति शेषः । **कार्यकारणभावे** कार्य्यस्य कारणेन कारणस्य वा कारणेन समर्थने इति भावः । **अर्थान्तरन्यासम्** । **न** । **आद्रियन्ते,** 'किन्तु काव्यलिङ्गमेवे'ति शेषः । **तत्** । **अयुक्तमसमञ्जसम्** । उपपाद-यति-**तथा** । **हि** । 'उपपाद्यत'इति शेषः । **अत्रार्थालङ्कारप्रस्तावे** । हेतुः । **ज्ञापकः** । **निष्पादक** उपपादकः । **समर्थकः** पोषकः । **च** । **इति** । **त्रिधा** । **भवति** । **तत्र** त्रिषु तेषु मध्ये इत्यर्थः । **ज्ञापको** बोधको हेतुः । **अनुमानस्य** 'उपस्कारक' इति शेषः, एवं पुरस्तात् । **निष्पादकः** । **काव्यलिङ्गस्य** । **समर्थकः** । **अर्थान्तरन्यास** तदभिधेयस्यालङ्कारस्योपस्कारक इत्यर्थ । इति निरुक्ता दस्माद्धेतोः काव्यलिङ्गात् । अर्थान्तरन्यासः **कार्य्यकारण-भावे** । **पृथक्** । **एव** । काव्यलिङ्गार्थान्तरन्यासयोः कार्य्यकारणभावपार्थक्येन पार्थक्यं सुतरामिति भावः । एतेनो-पपादितमर्थं निर्दिशति-**तथा** । **हि** अत एवेति भावः । **'यत्त्वन्नेत्र' इत्यादौ** । **चतुर्थपादवाक्यं** 'निष्पाद्य'मिति शेषः । **अन्यथा** निष्पाद्यत्वानङ्गीकारे । **साकाङ्क्षतया** कारणापेक्षितत्वेन । **असमञ्जसम**युक्तं सुदृढप्रतिपत्तिजननाक्षमा-मिति यावत् । **एव** । **स्यात्** । **इति** । **पादत्रयवाक्यम्** । **निष्पादकत्वेनो**पपादकत्वेन । **अपेक्षते** । नच अर्थान्तरन्या-सोदाहरणेष्वप्येवमित्याह—**'सहसा विदधीत' इत्यादौ** । 'अर्थान्तरन्यासोदाहरणम्' इति शेषः । **तु** । **'परापकारनिरतैः** । **दुर्जनैः** । **सह** । **सङ्गतिः** सङ्ग । **कदाचन** कदाऽपि । **न** । **विधेया** । इति-**भवतः** । **तत्त्वं** यथाऽर्थम् । **वदामि** । ।' **इत्यादिव**दित्यादाविव । **उपदेशमात्रेण** । **अपि** । **निराकाङ्क्षतया** । **स्वतो** हेतूक्तिं विना । **अपि** । **गतार्थं** सुदृढप्रतिपादितस्वार्थम् । **सहसाविधानाभावम्** । **सम्पद्वरणम्** । **सोपपत्तिकम्** । **एव** । **करोति** । **इति** । **काव्यलिङ्गात्** । **कार्य्यकारणभावः** । **अर्थान्तरन्यासः** । **पृथक्** । **एव** । स्पष्टीकृतं च विवृतिकारैः—'तथा चहेत्वा-काङ्क्षया यद्वाक्यं (कर्तृ) यद्वाक्यमपेक्षते, तदर्थस्य तदर्थो निष्पादकः, स एव काव्यलिङ्गस्य विषयः (उपस्कारकः) । यत्र हेतूपदेशादिना हेतुनिरपेक्षं वाक्यं हेतुवाक्यस्यार्थः समर्थकः, स चार्थान्तरन्यासस्य विषयः (उपस्कारकः) ।

एवंविधं भेदमनङ्गीकृत्य समर्थकहेतोरपि काव्यलिङ्गविषयत्वस्वीकारेऽर्थान्तरन्यासोच्छेदप्रसङ्ग इति भावः ।' इति ।

अस्या विषयमुदाहरति—'**हरः** । **भूरिभारभिया** । **गङ्गाम्** । **शिरसा** । **न** । **धत्ते** बिभर्त्ति । हि यतः । **सा** गङ्गाः । **त्वद्वजिराजिनिर्धूतधूलिभिः** । **पङ्क्लिला** पङ्कवती । राज्ञः स्तुतिरियम् ॥ २१६ ॥ **इत्यत्र** । **हिशब्दोपादानेन** । **पङ्किलत्वादितिवत्** । **हेतुत्वस्य** । **स्फुटतया** । **अयं** काव्यलिङ्गाख्यः । **अलङ्कारः** । **न** । हेतुं निर्दिशति—**वैचित्र्यस्य** विच्छित्तिविशेषस्य । **एव** । **अलङ्कारत्वात्** । अत्राहुः कौस्तुभकाराः—"यत्तु (रसगङ्गाधरे) 'काव्यलिङ्गं नालङ्कारः, कविप्रतिभानिर्मितत्वप्रयुक्तचमत्कारविशेषात्मकविच्छित्तिविरहात् । हेतुहेतुमद्भावस्य लोकसिद्धत्वात् । श्लेषा-दिसंमिश्रणजन्यस्तु चमत्कारः श्लेषप्रयुक्तत्वात् तदंशस्यैवालङ्कारतां कल्पयति, नतु काव्यलिङ्गस्य; तत्रप्रयोज्यच-मत्कारान्तराभावात्'इति । तत्तुच्छम् । लौकिकत्वेऽपि कविप्रतिभामात्रगम्यतया चमत्कारजनकत्वात् एतदीयहेतुहेतुमदभावमात्रस्य लोकसिद्धत्वाभावाच्च । न ह्युक्तसुखालोकोच्छेदादीनां महामोहतादात्म्यादिहेतुत्वं क्वचित् सिद्धम् । किञ्च एवमप्युपमाऽऽदेरप्यलङ्कारत्वं न स्यात् सादृश्यस्य वास्तवत्वेन कविप्रतिभाकल्पितत्ववि-रहात् । नच तत्राप्युपमाप्रयोजकसाधारणधर्माभेदांशे तत् कल्पितत्वमेवेति वाच्यम्, रमणीयत्वादिनिमित्तधर्मस्यापिं लोकप्रसिद्धत्वात्, 'गोसदृशो गवय'इत्यादेरपि वस्तुतो भिन्नसाधारणधर्माभेदाध्यवसायमूलकत्वात्, द्रव्यत्वादिनि-मित्तकसादृश्यस्य । शक्तिपरिच्छेदकत्वायोगात् । अभेदांशस्यैव शक्तिकल्पिततया तदंशस्यैवालङ्कारत्वं, नतु सादृश्यस्येत्युक्तदोषापरिहाराच्च । कल्पितत्वावच्छेदकधर्मावच्छिन्नचमत्काराजनकतायास्तद्धर्मावच्छिन्नमात्रा-लङ्कारत्वप्रयोजकतायास्त्वयैवोक्तत्वात् । चमत्कारजनकस्य लौकिकस्याप्यलङ्कारत्वे बाधकाभावात्सर्वालङ्कारो-च्छेदापत्तेश्च ।"इति ।

**अनुमानं तु विच्छित्त्या ज्ञानं साध्यस्य साधनात्।**

यथा—

**'जानीमहेऽस्या हृदि सारसाक्ष्या विराजतेऽन्तः प्रियवक्त्रचन्द्रः।**

उत्कान्तिजालैः प्रसृतैस्तदङ्गेष्वापाण्डुता कुड्मलताक्षिपद्मे ॥'

**अत्र रूपकवशाद्विच्छित्तिः।**

यथा वा—

---

## विवृतिः

अनुमानालंकारमाह—**अनुमानं त्विति**। विच्छित्त्या अलंकारादिकृतवैचित्र्येण। परिपुष्टवैचित्र्यमिति शेषः। साध्यस्य व्यापकस्य। साधनात् साधनगोचरव्याप्यत्वज्ञानात्। अनुमितिं प्रति साधनस्य हेतुत्वाङ्गीकारेऽतीतानागतलिङ्गकानुमितिर्न स्यात् ॥

## विज्ञप्रिया

यत्र जनकहेतोर्हेतुत्वेनैव निर्देशस्तत्र वैचित्र्यभावान्न हेत्वलङ्कार इत्याह—**नि धत्त** इत्यादि। अत्र "हि" शब्दो हेतुताबोधक इत्याह—**हि शब्द** इति।

अनुमानालङ्कारमाह—**अनुमानं त्विति**। विच्छित्त्या भङ्ग्या साधनाद् साध्यस्य ज्ञानमित्यर्थः। भङ्गी चाहार्यारोपरूपा; वह्निमान् धूमादित्यस्य वारणाय तत्। अत्र साध्यसाधनयोरेव धर्मिगतत्वं काव्यप्रकाशकृदुक्तं विशेषणं देयमेव। अन्यथा धनुरातज्यीकरणरूपहेतुपृथ्वीस्थैर्ययोर्धर्मिभेदेऽपि पृथ्वी स्थिरेत्यादौ अतिप्रसक्तयापत्तेः।

पाण्डोर्घूर्णमाननेत्राया विरहिण्या वर्णनमिदम्। जानीमहे अनुमिनुम इत्यर्थः। अस्या अन्तरित्यन्वयः। इयमन्तः प्रियवक्त्रचन्द्रवती तत्कान्त्यधीनपाण्डुदेहकुड्मलितनेत्रपद्मवत्त्वादित्यनुमानम्। अत्र विच्छित्तिं ग्राहयति-**अत्र रूपकेति**। मुखनेत्रयोश्चन्द्रपद्मरूपकमङ्गपाण्डुत्वांशेऽपह्नुतिरपि बोध्या।

## कुसुमप्रतिमा

हेतुप्रकरणात् हेतुप्रयुक्तमेवानुमानालङ्कारं लक्षयति अन्विति। तु शब्दः काव्यलिङ्गभेदद्योतनार्थः। काव्यलिङ्गें निरुक्तदिशा निष्पादकरूपो हेतुः इह तु ज्ञापकरूप इति भेदः। विच्छित्त्या वैचित्रयविशेषेण विशिष्टमित्यर्थः, साधनात् व्याप्तिविशिष्टहेतुज्ञानात्, साध्यस्य अनुमितिविधेयस्य व्यापकस्य, ज्ञानं पञ्चवृत्तित्वबोधः, अनुमानं नामालङ्कारो निगद्यत इत्यनुषङ्गः। तथा च—

वैचित्रयविशेषवत्त्वे सति हेतुज्ञानजन्यं साध्यज्ञानमनुमानमिति सरलार्थः।

वैचित्रयविशेषवत्ते सतीत्यभिधानात् "पर्वती वह्निमान् धूमात्" इत्यादौ वैचित्रयाभावस्थले नातिव्याप्तिः। वस्तुतस्तु वैचित्रयविशेषवत्ते भावे अलङ्कारसामान्यल क्षणस्यै वासङ्कते 'पर्वती वहिमान धूमात्' इत्यादौ

विशेषानुमानल क्षणस्यापयसङ्गतिः सुरतां सिद्धाः। तथापि तत्सामान्यलक्षस्मवणार्थमेव मूले विच्छित्त्ये त्यभिधानादवापि वैचित्रयविशेषवत्वे सतीत्यभिहितम्। अनु व्याप्ति ज्ञानात् पश्चात् मानं ज्ञानमित्यनुमानमिति व्युत्पतिः।

जानीमह इति। काञ्चिद्विरहिणीमवलोक्य सख्युरन्तिके कस्यचिदुक्तिरियम्। अस्या दृश्यमानायाः सारसाक्ष्याः पद्मनयनायास्तरुण्याः, हृदि अन्तः हृदयाभ्यन्तरे प्रियस्य कान्तस्य वक्तं मुखमेव चन्द्रः विराजते प्रद्योतते इयं प्रियस्य मुखचन्द्रं चिन्तयतीत्यर्थः, इति जानीमहे बुध्यामहे। ततस्मात् विराजनात् प्रसूतैः सर्वत्र पतितैः, तस्य प्रियवक्तचन्द्रस्य कान्तिजालैर्द्युतिसमूहैः, अङ्गेषु अस्या नायिकाया गात्रेषु, आपाण्डुता सम्यक् श्वेतता, तथा अक्षिपद्मे कुद्मलता मुकुलितता जातेत्यपि जानीमह इत्यन्वयः। चन्द्र प्रकाशे पद्मस्य कुद्मलता स्यादिति द्रष्टव्यम्।

अत्रेति। रूपकवशात् "प्रियवक्तचन्द्रः" इति निरङ्गकेवलरूपकालङ्कारप्रयोगात्। न च प्रियवक्तं चन्द्र इवेत्युपभितसमासात् लुप्तापमेति वाच्यम्, विराजत इति प्रभाविस्तारार्थकक्रियाया रूपकस्यैव साधकत्वात्। अत्र रूपकेत्युपलक्षणम्। तथा च विरहजनितपाण्डुतायां चन्द्रप्रकाशजंनितपाण्डुतायाः, चिन्ताजनितनेत्रपद्मसङ्कोचे च चन्द्रप्रकाशजनितसङ्कोचस्य सम्भवात् जानीमहे इति वाचकस्थितेश्च वाच्योत् प्रेक्षापि। तस्माच्च विच्छित्तिर्वैचित्र-यम्। ततश्च "अस्या नायिकाया हृदयाभ्यन्तरं प्रियवक्तचन्द्रवत् अङ्गेषु तत्कृतपाण्डुत्वात् अक्षिपद्मे तत्कृतसङ्को-चाच्च" इति ज्ञानादनुमानलङ्कारः। प्रस्तारान्तरे वह्निसत्त्वे प्रस्तरान्तरे च धूमदर्शने "पर्वतो वह्निमान् धूमात्" इत्यादाविव अत्रापि हृदयाङ्गाक्षिपद्मानामेकावयविगततया साध्यसाधनयोर्न व्यभिचार इति ध्येयम्।

विच्छित्तिसामान्यग्रहणादलङ्कारेतरकृतविच्छित्तावप्युदाहर्तुमाह यथा वेति।

## विमला

अनुमानमाह, अनुमानमिति।—विच्छित्त्या—अलङ्कारादिकृतवैचित्रयेण, परिपुष्टवैचित्रयमिति शेषः, साधनात्—साधनगोचरव्याप्यत्वज्ञानात्, साध्यस्य—व्यापकस्य, कार्य्यस्येति यावत्,(अनुमितिं प्रति साधनस्य हेतुत्वाङ्गीकारेऽतीतानागतलिङ्गकानुमितिर्न स्यात्) ज्ञानम् अनुमानम्। अत्रेदं बोध्यम्—स्वार्थपरार्थभेदेन तदनुमानं द्विविधं, यत्र स्वयमवगतोऽर्थः इति आत्मपरामर्शस्य निश्चयः, तत् स्वार्थानुमानं, यत्र अन्यावबुद्धस्य वस्तुनः समर्थनात् अन्यबोधकत्वं, तत् परार्थानुमानम्, एतद्विप्रकारकमप्येकोऽनुमानालङ्कारः इति सङ्क्षेपः।

जानीमहे इति।—विरहवर्णनमिदम्। अस्याः सारसाक्ष्याः,—सरोऽभिजनो नियतवसतिरस्य इत्यणु सारसं—पद्ममित्यर्थः, तद्वत् अक्षिणी यस्याः तथोक्तायाः, कमललोचनायाः इति यावत्, हृदि अन्तः,—हृदयमध्ये, प्रियस्य वक्त्रचन्द्रः,—मुखचन्द्रः, विराजते इति जानीमहे—मन्यामहे, अनुमिनुमः इत्यर्थः, तथा हि—प्रसृतैः,—विस्तृतैः, तस्य—हृदि स्थितस्य प्रियवक्त्रचन्द्रस्य, कान्तिजालैः,—प्रभापटलैः, तदङ्गेषु—तस्याः,—सारसाक्ष्याः, अङ्गेषु आपाण्डुता—ईषत्पाण्डुवर्णता, तथा अक्षिपद्मै—नयनकमले, कुद्मलोलता—मुकुलीभावः, ("कुशली मुकुलोऽस्त्रियाम्" इत्यमरः) जातेति शेषः। अत्र अङ्गानाम् आपाण्डुतया अक्षिपद्मस्य च मुकुलीभावेन लिङ्गेन साध्यस्य वक्त्रचन्द्रस्य हृन्मध्ये विराजनस्य ज्ञानम्। "अनुमानं हि पक्षसत्त्व-सपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टात् लिङ्गात् लिङ्गिनी ज्ञानम्। "इति पञ्चमपरिच्छेदोक्तलक्षणं विच्छित्तिविशेषेण समर्थितम् इति भावः पुनरस्यालङ्का-रस्य। तथा हि, विरहजन्यपाण्डुत्वाक्षिकुद्मलतयोश्च प्रियवक्रचन्द्रकिरणजन्यत्वमुत्प्रेक्ष्य हेतुः क्रियते, एवं रूपकोत्प्रे-क्षाभ्यां परिपुष्टवैचित्रयमनुमानमलङ्कारः इति ज्ञेयम्। उपजातिः वृत्तम्।

## लक्ष्मी

हेतुप्रस्तावात्तत्प्रयुक्तमेवानुमानालङ्कारं निरूपयति—**अनुमान**मिति । तु पदं काव्यलिङ्गपार्थक्यप्रतिपादनार्थम् । काव्यलिङ्गे हि प्रदर्शितरीत्या हेतुर्निष्पादकः, अत्र तु ज्ञापक इति स्फुटं पार्थक्यम् । विच्छित्त्या कविप्रतिभोत्थापितेन वैचित्र्यविशेषेण, साध्यते वह्न्यादिरनेनेति साधनं व्याप्त्यादिविशिष्टहेतुज्ञानं तस्मात् धूमादेः, साधयितुं योग्यं साध्यं वह्न्यादिः तस्य व्यापकस्येत्यर्थः, ज्ञानं पक्षवृत्तित्वावगमः अनुमानं तन्नामालङ्कारः 'निगद्यते' इति पूर्वकारिकातोऽनुवर्त्यान्वयो विधेयः । नन्वनुमाने पक्षसाध्यहेतुदृष्टान्तादेः सत्त्वम् अत्र तु साध्यसाधनयोरेवोपलम्भात्कथमनुमानमिति चेत्? सत्यम्, साधनपदेन पक्षधर्मत्वेनान्वयित्वेन व्यतिरेकित्वेन च त्रिरूपो हेतुरत्राभिधीयते । तत्र पक्षे हेतोर्वृत्तित्वं पक्षधर्मत्व्, यथा—'पर्वतो वह्निमान् धूमात्' इत्यादौ पर्वतादिः पक्षः निश्चितसाध्यवति महानसादौ सपक्षे हेतोर्वृत्तित्वम् अन्वयित्वम्, निश्चितसाध्याभाववति ह्रदादौ विपक्षे हेतोरवृत्तित्वं व्यतिरेकित्वम्, इत्थञ्च साध्यसाधनपदोपादानादेव पक्षादिकं समस्तमुपपन्नमिति न काऽप्यनुपपत्तिः । एवं सति कविप्रतिभोत्थापितत्वे सति साधनज्ञानजन्यं साध्यज्ञानमनुमानमिति सरलार्थः 'पर्वतो वह्निमान् धूमात्' इत्यादावलङ्कारत्वप्रसक्तिवारणाय सत्यन्तदलोपादानम् ।

उदाहरति—**जानीमह** इति । विघूर्णनेत्रां काञ्चिद्वियोगिनीं वीक्ष्य स्वसखायं प्रति कस्यचिदुक्तिरियम् । अस्याः पुरोऽवलाक्यमानायाः सारसाक्ष्याः कमलनयनाया रमण्याः, हृदि अन्तः हृदयमध्ये प्रियस्य कान्तस्य वक्त्रं वदनमेव चन्द्रः शशी विराजते प्रकाशते इयं वल्लभस्य मुखचन्द्रं स्मरतीत्यर्थः, इति जानीमहे अनुमिनुमः तत् तस्मात् विराजनात् प्रसृतैः सर्वत्र विस्तीर्णैः, तस्य प्रियमुखचन्द्रस्य कान्तिजालैः किरणसमूहैः अङ्गेषु अस्याः शरीरेषु, आपाण्डुता समन्ततः स्फुरितत्त्वम्, तथा अक्षिपद्मे नेत्रकमले कुड्मलता मुकुलितता 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः, समुत्पन्नेत्यपि 'जानीमहे' इति सम्बन्धः । सूर्य किरणैः पद्मानां विकास, चन्द्रकिरणैस्तत्कुड्मलतेति विभावनीयम् । इन्द्रवज्रोपेन्द्रवज्रयो**रुपजाति**श्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्र विच्छित्तिमुपपादयति—अत्रेति । रूपकवशात् 'प्रियवक्त्रचन्द्रः' इति निरङ्गकेवलरूपकालङ्कारसंसर्गबलात्, विच्छित्तिः अलङ्कारत्वोपस्कारकश्चमत्कारविशेषः । ननु प्रियवक्त्रं चन्द्र इवेत्युपमितसमासेन लुप्तोपमा कथन्नेति चेत्? मैवम्, 'विराजते' इति ज्योत्स्नाप्रसारार्थकक्रियया रूपकस्यैवोपपादकत्वात् । अत्र रूपकेत्यपह्नुत्यत्प्रेक्षयोरप्युपलक्षकम् । तथा चाङ्गपाण्डुत्वांशेऽपह्नुतिः, वियोगजन्यपाण्डुतायां चन्द्रप्रकाशजन्यपाण्डुतायाः स्मृतिजन्याक्षिपद्मसङ्कोचे च चन्द्रप्रकाशजन्यसङ्कोचस्य सम्भावनात् 'जानीमहे' इति वाचकोपलम्भाच्च वाच्योत्प्रेक्षा च । एवञ्च 'इयमन्तः प्रियवक्त्रचन्द्रवती तत्कान्त्यधीनपाण्डुदेहसङ्कुचितनेत्रपद्मवत्वात्' इति बोधादनुमानालङ्कारः ।

## रुचिरा

अनुमानं लक्षयति—१४५ **विच्छित्त्या**ऽलङ्कारत्वोपस्कारकेण चमत्कारविशेषेण । अभेदे तृतीयेयम् । तथा च-विच्छित्त्यभिन्नमित्यर्थः । **साध्यस्य** साधयितुं योग्यमिति, तस्य वह्न्यादेरित्यर्थः । **साधनात्** साध्यतेऽनेन वह्न्यादिरिति, तस्मात् धूमादेरित्यर्थः । **ज्ञानम**वगमः । **तु** पुनः । **अनुमान**मनुमीयते ज्ञायते साध्यस्य साधनेन यत्तदिति तथोक्तं, तन्नामाऽलङ्कार इति भावः । इदम्बोध्यम्—धर्म्मिणि नियतो व्यापकसम्बन्धः साध्यत्वम्, पक्षवृत्तित्वसपक्षवृत्तित्वविपक्षावृत्तित्वेन त्रिरूपो हेतुविशेषः साधनम् । तथा च-यथा 'पर्वतो वह्निमान् धूमात्' इत्यत्र पर्वते पक्षे धूमस्य हेतुविशेषस्य वृत्तित्वमस्ति, एवं वह्निरूपसाध्यनिश्चयवति महानसेऽपि सपक्षे, तथा वह्निरूपसाध्याभावनिश्चयवति ह्रदे विपक्षे धूमस्य हेतुविशेषस्य वृत्तित्वं नास्तीति त्रिविधेन धूमेन ज्ञापकेन हेतुना पर्वते पक्षे साध्यस्य

वह्नेर्ज्ञानं यज्जायते तदनुमानम् अस्य च 'पर्वतो वह्निमान् धूमा'दित्यादौ सत्त्वेऽपि विच्छित्त्यनालिङ्गितत्वेन नालङ्कारव्यपदेश्यत्वम्, इत्युक्तं विच्छित्त्येति। विच्छित्तिश्च अलङ्कारान्तरोद्भाविता कविप्रतिभोद्भाविता च चमत्कृत्यपरपर्यायाऽलङ्कारत्वोपस्कारकत्वसम्पत्तिः। विवृतं च कौस्तुभकारैः—'अव्यभिचरितसामानाधिकरण्यरूपव्याप्तिविशिष्टस्य साधनस्य दर्शनात् धर्मिणि पक्षे तन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपव्यापकत्वविशिष्टस्य साध्यस्य यज् ज्ञानं तदनुमानमित्यर्थः। अत्रानुमितिरेवानुमानपदेनोच्यते, तस्या एव चमत्कारजनकत्वेनालङ्कारत्वात् तां विना परामर्शमात्रेण प्रकृतानुकूलार्थसिद्धिविरहात्। व्याप्तिश्च पारमार्थिकी कविकल्पिता च।' इति। अयं चालङ्कारः—मन्ये-शङ्के-जाने-अवैमीत्यादिवाचकपदोपादाने वाच्यः। यत्र लिङ्गलिङ्गिनोः सत्त्वं तत्र तेषामनुमितिबोधकत्वम्, यत्र सादृश्यादिनिमित्तसद्भावस्तत्र तेषामुत्प्रेक्षाबोधकत्वम्, अत एवैवमेतयोर्भेदः। वक्ति कथयतीत्यादिलक्षकपदोपादाने पुनर्लक्ष्यः, एवं मन्ये इत्यादीनां वक्तीत्यादीनां चानुपादाने साध्यसाधनाभ्यां तदाक्षेपे व्यङ्ग्यः। इति ॥ २२६ ॥

उदाहरति—**यथा-अस्याः**। **सारसाक्ष्याः** सारसे कमले इवायते अक्षिणी यस्यास्तस्याः, कमलायतनेत्रायाः कान्ताया इति भावः।**हृदि** हृदये। **अन्तो** रहसि। **प्रियवक्त्रचन्द्रः** प्रियस्य नायकस्य वक्त्रचन्द्रो वक्त्रं वदनमेव चन्द्रः। **विराजते**। इति—**जानीमहे** निश्चिनुमः। **तत्**। तथाहि-**प्रसृतैः** विस्तीर्णैः। **तत्कान्तिजालैस्तस्य** प्रियवक्त्रचन्द्रस्य कान्तयस्यतासां जालानि पुञ्जास्तैः। **अङ्गेषु**। **आपाण्डुता** समन्ततः स्फुरितत्वम्। तथा—**अक्षिपद्मे**ऽक्षि नेत्रमेव पद्मं कमलं तत्र। **कुड्मलता** मुकुलित्वम्। 'कुड्मलो मुकुलोऽस्त्रियाम्।' इत्यमरः। अत्राङ्गानामापाण्डुतयाऽक्षिपद्मस्य च कुड्मलतया च साधनेन प्रियवक्त्रचन्द्रस्य हृद्यन्तर्विराजमनुमीयते। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ॥२१७॥'

अत्र विच्छित्तिं निर्दिशति-**अत्र**। **रूपकवशात्** रूपकालङ्कारसंसर्गबलात्। **विच्छित्तिरलङ्कारत्वोपस्कार**कश्चमत्कारः।

**'यत्र पतत्यबलानां दृष्टिर्निशिताः पतन्ति तत्र शराः ।**
**तच्चापरोपितशरो धावत्यासां पुरः स्मरो मन्ये ॥'**

---

## विवृतिः

**जानीमहे इति**। विरहवर्णनमिदम्। जानीमहे अनुमिनुमः। विरहजन्यपाण्डुत्वाक्षिकुड्यलतयोश्च प्रियवक्रचन्द्रकिरणजन्यत्वमुत्प्रेक्ष्य हेतुः क्रियते। अत्र रूपकोत्प्रेक्षाभ्यां परिपुष्टवैचित्र्यमनुमानमलंकारः। कविप्रौढोक्तिजन्यविच्छित्तिपरिपुष्टवैचित्र्यमनुमानमुदाहरति—**यथावेति**। तत्तस्मात्। आसामबलानाम्। मन्ये अनुमिनोमि। अत्र 'अबलादृष्टिपातसहचरितशरपातोऽबलापुरोवर्तिचापरोपितशरजन्योऽबलादृष्टिपातसहचरितशरपातत्वात्' इत्यनुमानम्। तत्रेतरस्य बाधात्स्मरस्य सिद्धिः। वस्तुतस्त्वलंकारादिसहकारं विनापि यत्र वैचित्र्यमनुभूयते तत्राप्ययमलंकारः। यथा—'विकसन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः।' अत्र वर्षाकालानुमानम् ॥

## विज्ञप्रिया

विच्छित्त्यन्तरेणाप्युदाहरति—**यत्र पततीति**। शरा इत्यत्र स्मरीयशरत्वबोधकवैलक्षण्यं बोध्यम्। मन्ये इत्यत्रानुमिनुम इत्यर्थः। अबलाश्चारोपितशरस्मरपुरः सराः स्वदृष्टिपातविशिष्टदिक्पतन्निमित्तशरकत्वादित्यनुमानम्। शरेषु पुष्पमयत्वं बोध्यम्। तेषां निशितत्वं तु आरोप्यम्। उत्प्रेक्षाविशेषादस्य भेदमाह—**उत्प्रेक्षायामिति**। हेतूत्प्रेक्षायामित्यर्थः। एवञ्च दर्शितोदाहरणद्वये "जानीमहे" "मन्ये" इति पदयोरुत्प्रेक्षावाचकत्वे तद्द्वये उत्प्रेक्षा नैवेति बोध्यम्। तत्पदद्वयाभावे तु द्वयोः सन्देहसङ्कर इति च बोध्यम्।

## कुसुमप्रतिमा

यत्रेति। यत्र अबलानां दृष्टिः पतति, तत्रैव निशिताः शराः कामस्य बाणाः पतन्ति। तत्तस्मात् स्मरः कामदेवः, चापे धनुषि रोपितः स्थापितः शरो येन स तादृशः सन्, आसामबलानां पुरः अग्रतो धावतीति मन्ये।

अत्रेति। कवेः प्रौढोक्तिवशात् बलपूर्वकासम्भवोक्तिवशात्, विच्छित्तिर्वैचित्रयम्। तथा च अवज्ञानामग्रे अग्रे स्मरो धावति तदृष्टिपतनदेशे तच्छरपतनादिति ज्ञानादनुमानालङ्कारः। अत्राग्रदेशसामान्यमेव पक्ष इति न साध्यसाधनयोर्व्यभिचारः। "अबलादृष्टिपातसहचरितशरपात्रोऽबलापुरीवर्त्तिचापरोपितशरजन्योऽबलादृष्टिपातसहचरितशरपातत्वात्" इति तर्कवागीशकृतमनुमानन्तु श्लोकार्थपर्य्यालोचनायामनुभवविरुद्धम्।

## विमला

कविप्रौढौक्तिजन्यविच्छित्तिपरिपुष्टवैचित्रयमनुमानमुदाहरति, यत्रेति।—यत्र अवलानां—कामिनीनां, दृष्टिः पतति, तत्रैव निशिताः,—तीक्ष्णाः, शरा, कामस्येति शेषः, पतन्ति, तत्—तस्मात्, स्मरः,—कामः, चापे—धनुषि, रोपितः शरो येन तथाभूतः सन्, आसाम्—अबलानां, पुरः,—अग्रतः, धावति इति मन्ये—अनुमिनोमि। अत्र अबलादृष्टिपतने कामशरपतनरूपात् लिङ्गात् साध्यस्य स्मरस्य धनुरारोपितशरत्वेन पुरीधावनरूपस्य ज्ञानम्। तथा हि—"अबलादृष्टिपातसहचरितशरपातः अबलापुरोवर्त्तिचापरोपितशरजन्यः अबलादृष्टिपातसहचरितशरपात-

त्वात्" इत्यनुमानं, तत्रैतरस्य बाधात् स्मरस्य सिद्धिः। वस्तुतस्तु, अलङ्कारादिसहकारं विनाऽपि यत्र वैचित्रयमनुभूयते, तत्राप्ययमलङ्कारः, यथा—"विकसन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः" अत्र वर्षाकालानुमानम्।

## लक्ष्मी

न केवलमलङ्कारान्तराश्रयेणैव विच्छित्तिरेतदलङ्कारप्रयोजिका, किन्तु विच्छित्त्यन्तरेणापीत्युदाहरणान्तरं दर्शयितुमाह—**यथा** वेति।

यत्रेति। यत्र यस्मिन् (यूनि) अबलानां कामिनीनां दृष्टिः कटाक्षः पतति सञ्चरति, तत्र तस्मिन् (यून्येव) निशितास्तीक्ष्णाः उन्मादकत्वेन सोढुमशक्या इति यावत्, शराबाणाः कामदेवस्येति शेषः, पतन्ति गच्छन्ति तान् विध्यन्तीत्यर्थः। तत्तस्माद्धेतोः स्मरः कामदेवः चापे धनुषि रोपितः स्थापितः शरः येन स तथाविधः सन्, आसामबलानां पुरः अग्रतः धावति मन्ये सम्भावयामि। आर्याच्छन्दस्तल्लक्षणन्तूक्तं प्राक्।

अत्रेति। कवेः प्रौढोक्तिवशात् हठपूर्वकासम्भवाभिधानवशात् विच्छित्तिश्चमत्कारविशेषः। अत्र हि—'अबलाः चापरोपितशरस्मरपुरस्सराः स्वीयदृष्टिपातविशिष्टदिक्पतन्निमित्तशरकत्वात्' इति बोधादनुमानालङ्कारः।

नन्वत्रोत्प्रेक्षालङ्कार एव किं न स्यादित्यत आह—**उत्प्रेक्षा**यामिति। अनिश्चिततया अनियमिततया, प्रतीतिः सम्भावनाया इति शेषः। इह अनुमाने तु निश्चिततया नियमिततया प्रतीतिः सम्भावनाया इति शेषः। तथाचोत्प्रेक्षायां सम्भावनायाः संशयविशेषत्वेन अत्र तु तस्या निश्चयरूपत्वेनैव प्रतीतिरिति स्फुटं भेदः।

अस्य स्वार्थपरार्थाभ्यां भेदद्वयमामनन्ति मान्याः। तत्र यत्र मयाऽयमनुमितोऽर्थ इति स्वपरामर्शनिश्चयः तत्स्वार्थम्, यत्र परेणाप्रतीतस्यार्थस्य प्रत्यायनं तत्परार्थमिति। तत्र स्वार्थमुदाहृतम्, परार्थञ्च—

**'तदस्ति तेषां तमसि प्रसर्पिणां निशाचरत्वं यदि पारमार्थिकम्।**

**ततः प्रिये! सन्निहितेऽत्र वासरे कथन्नु तत् सञ्चरणं भविष्यति॥'**

## रुचिरा

उदाहरणान्तरं निर्दिशति—**यथा**। **वा**। '**यत्र** यस्मिन् (यूनि)। **अबलानां** कमिनीनाम्। **दृष्टिः**। **पतति**। **तत्र** तस्मिन् (यूनि) **निशितास्**तीक्ष्णा उन्मादकत्वेनासह्या इति यावत्। **शराः**। 'कामस्ये'ति शेषः। **पतन्ति**। **तत्**। **आसामबलानाम्**। पुरोऽग्रे। **चापरोपितशरश्चापे** धनुषि रोपित आरोपितः शरो येन तादृशः। **स्मरः** कामः। **धावति**। इति-**मन्ये**। अत्राबलानां दृष्टिपातविषयस्य (काम) निशितशरपातविषयत्वरूपात् साधनात् स्मरस्य धनुरारोपितशरतया पुरोधावनरूपस्य साध्यस्यानुमानम्। आर्य्याछन्दः, तल्लक्षणं चोक्तं प्राक्॥ २१८॥

अत्र विच्छित्तिं निर्दिशति-**अत्रे**त्यादिना। स्पष्टम्। अत्रोत्प्रेक्षैव किं नाङ्गीक्रियेत? इत्याशङ्क्याह—**उत्प्रेक्षायामि**त्यादि। स्पष्टम्। इदम्बोध्यम्-अस्य स्वार्थपरार्थत्वाभ्यां भेदद्वयमामन्ति, तत्र-यत्र मयाऽमनुमितोऽर्थ इति स्वपरामर्शनिश्चयः तत्स्वार्थम्, यत्र परेणाननुमितस्यार्थस्य प्रत्यायनं तत्परार्थम्। आद्यमुदाहृतम्, द्वितीयं यथा—'तदस्ति तेषां तमसि प्रसर्पिणां निशाचरत्वं यदि पारमार्थिकम्। ततः प्रिये! सन्निहितेऽत्र वासरे कथं नु तत् सञ्चरणं भविष्यति॥' अत्र दिवासञ्चरणस्य साध्यस्य विरुद्धं निशाचरत्वं परप्रत्यायकं साधनम्। अस्यालङ्कारान्तरविच्छित्तिमन्तराऽपि सम्भवति। यथा—'विकसन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः।'

अत्र कविप्रौढोक्तिवशाद्विच्छित्तिः। उत्प्रेक्षायामनिश्चिततया प्रतीतिः, इह तु निश्चततयेत्युभयोर्भेदः।

**अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह ॥ ६३ ॥**

यथा मम—'तारुण्यस्य विलासः—' इत्यत्र (१३० पृ.) वशीकरणहेतुर्नायिका वशीकरणत्वेनोक्ता। विलासहासयोस्त्वध्यवसायमूलोऽयमलंकारः।

---

## विवृतिः

(अभिधा) हेत्वलंकारमाह—**अभेदेनेति**। हेतोर्हेतुमता कार्येण सहाभेदेनाभेदारोपेण अभिधा हेतुरित्यर्थः॥

**तारुण्यस्येति**। अत्र प्रकरणान्नायिकाया लाभः। ह्रासः प्रकाशः। नन्वत्र लक्षणया वशीकरणकारणप्रतीतिरेव न त्वभेदप्रतीतिरित्यत आह—**विलासहासयोस्त्विति**। अध्यवसाय आहार्यभेदप्रतीतिः। तथा च नायिकाया विलासहासयोः कार्यकारणभावरूपसंबन्धाभावेन कारणलक्षणाया असंभवादाहार्याभेदप्रतीतिरवश्यमङ्गीकरणीया तत्साहचर्यात्प्रकृतेऽप्याहार्यप्रतीतिरेव, न तु लाक्षणिकी प्रतीतिरिति भावः॥

## विज्ञप्रिया

काव्यलिङ्गातिरिक्तमपरमपि हेतुसंज्ञकमलङ्कारमाह—**अभेदेनेति**। हेतुमता कार्येण सह हेतोरभेदेनाभिधाऽभिधानं हेतुनामालङ्कार इत्यर्थः। तारुण्यस्येत्यादौ तद्दर्शयति—**वशीकरणेति**। विलासहासतांशे कार्यकारणाभावादाह—**विलासेति**। विलासादिस्तारुण्यादिजन्य एव नायिकायाः परम्परायाः कारणत्वाद्योऽभेदाध्यासस्तन्मूलस्तच्छोभितोऽयमित्यर्थः। बहुषु तत्पात एव शोभेत्यभिप्रायः। अत्र च शुद्धसारोपा लक्षणैव, नह्ययमलङ्कार इति काव्यप्रकाशकृत्।

## लोचन

अभेदेनाभिधानं समानाधिकरणनिर्देशादिति भावः। हेतुर्हेत्वाख्योऽलङ्कारः। कार्यकारणविच्छित्त्याश्रयेणानुमानानन्तरस्य प्रस्तावः। अध्यवसायमूलः। वैचित्र्यं विजृम्भणस्य विलासत्वेन प्रचुरतरोल्लासस्य हासत्वेनाध्यवसायात्।

## कुसुमप्रतिमा

नन्वेवमुत्प्रेक्षया सहास्य को भेद इत्याह उत्प्रेक्षायामिति। अनिश्चिततयेति। सम्भावनायाः संशयविशेषरूपत्वादिति भावः। निश्चितयेति। अनुमितेस्तु निश्चयरूपत्वादित्याशयः।

हेतुप्रस्तावादेव हेत्वलङ्कारं लक्षयति अभेदेनेति। हेतुमता कार्य्येण सह हेतोः कारणस्य अभेदेन अभिन्नत्वरूपेण अभिधा उक्तिः, हेतुर्नामालङ्कारो निगद्यत इत्यनुषज्यते। कार्य्यकारणयोरभेदाभिधानमेव हेतुर्नामालङ्कार इति सरलार्थः। केचित्तु हेतुमता कार्य्येण सह हेतोरभेदेनाभिधा अभिधाहेतुर्नाम अलङ्कार इत्यभिधाशब्दस्य द्विधा

अन्वयमङ्गीकृत्य व्याचक्षाणा लक्ष्यमाणालङ्कारस्य अभिधाहेतुरित्येव नाम निद्दि्र्दशन्ति । सरस्वतीकण्ठाभरणे तु हेतुरित्येव नाम निर्दि्र्दष्टम् । तथा च हेतुहेतुमतोरभेदेनाभिधानेऽपि तत्र हेतोरेव प्राधान्यात् हेतुरिति नाम ।

तारुण्यस्येति । प्रागेव विवृतमेतत् । वशीकरणस्य हेतुः कारणीभूता, नायिका प्रकरणवशात् लब्धा सुन्दरी, वशीकरणत्वेन वशीकरणक्रियाया अभिन्नत्वेन, उक्ता कविनेति शेषः, प्रकरणलब्धनायिकाशब्दोत्तरवर्त्तिप्रथमाविभक्तेः "वशीकरणम्" इति प्रथमाविभक्तेश्च अभेदार्थकत्वादिति भावः ।

ननु वशीकरणक्रियां प्रति नायिकाया एव कारणत्वात् तयोश्चाभेदाभिधानादस्तु हेत्वलङ्कारः, किन्तु पूर्वार्द्धे विलासहासयोर्विधातृविहितया तत्र नायिकायाः कारणत्वाभावात्तयोरभेदाभिधानेऽपि कथहेत्वलङ्कार इत्याह विलसेति । विलासः पूर्णविर्भावः हासः प्रकाशस्तयोः, अध्यवसायमूलः कार्य्यत्वारोप मूलकः । तथा च तादृशविलासहासयोर्विधातृविहितत्वेऽपि नायिकाश्रितत्वेन विहितत्वात् तज्जन्यत्वमारोप्य तयोरभेदाभिधानात् हेत्वलङ्कार इति भावः ।

## विमला

[अभिधा] हेत्वलङ्कारमाह, अभेदेनेति ।—हेतुमता—कार्य्येण, सह हेतोः,—कारणस्य, अभेदेन अभिधा—उक्तिः, हेतुः । केचित्तु—हेतुमता सह हेतोरभेदेन अभेदारोपेण, अभेदारोपेणमित्यर्थः, [अभेदे तृतीया] अभिधाहेतुनामालङ्कारः इत्याहुः ।

**तारुण्यस्येति** ।—(व्याख्यातमिदं पद्यं १५५ पृष्ठे) । अत्र प्रकरणवशात् नायिकाया लाभः ।

नन्वत्र लक्षणया वशीकरणकारणप्रतीतिरेव, न त्वभेदप्रतीतिरित्यत आह, विलासहासयोरिति ।—विलासः,—विजृम्भणं, हासः,—विकासः, अध्यवसायः—आहार्य्याभेदावबोध एव, मूलं यस्य तादृशोऽयम् अलङ्कारः, तथा च, नायिकाया विलासहासयोः कार्य्यकारणभावरूपसम्बन्धाभावेन कारणलक्षणाया असम्भवात् आहार्य्याभेदप्रतीतिरवश्यमङ्गीकरणीया, तत्साहचर्य्यात् प्रकृतेऽप्याहार्य्यप्रतीतिरेव, न तु लाक्षणिकौ प्रतीतिरिति भावः ।

## लक्ष्मी

इदमुदाहरन्ति ।

हेतुप्रकरणादेव हेत्वलङ्कारं निरूपयति—**अभेदेनेति** । हेतुमता कार्येण सह हेतोः कारणस्य अभेदेन अनतिरिक्तस्वरूपेण अभिधा कथनं हेतुः कारणं तन्नामालङ्कारो 'निगद्यत' इत्यनुवर्तते । कार्यकारणयोस्तादात्म्यप्रतिपादनमेव हेतुर्नामालङ्कार इति निष्कर्षः । नन्वत्र हेतुहेतुमतोरभेदेनाभिधाने हेत्वलङ्कार एव कथम् ? हेतुमदलङ्कारस्यापि सम्भवादिति चेत् ? सत्यम्, प्राधान्येन हेत्वलङ्कारस्यैवाङ्गीकारात् ।

उदाहरति—**तारुण्येति** । व्याख्यातपूर्वमिदम् । लक्षणसमन्वयं दर्शयति—**अत्रेति** । वशीकरणस्य आत्मसात्करणस्य हेतुः कारणीभूता नायिका प्रकरणेन प्राप्ता सुन्दरी, वशीकरणत्वेन वशीकरणरूपकार्यस्य तादात्म्येन, उक्ता कविनेति शेषः । प्राकरणिकनायिकापदोत्तरगतप्रथमाविभक्तेः 'वशीकरणम् इत्यत्र प्रथमाविभक्तेश्च सामानाधिकरण्येनाभिन्नार्थकत्वादित्यभिप्रायः ।

ननु वशीकरणकार्यं प्रति लक्षणया तत्कारणप्रतीतिरेव, न त्वभेदप्रतीतिस्तत्कथमयमलङ्कार इत्यत आह— विलासहा**सयोस्त्विति**। 'तारुण्यस्य विलासः समधिकलावण्यसम्पदो हासः' इत्युक्तदिशा तारुण्यसम्बन्धिविलासस्य समधिकलावण्यसम्पत्सम्बन्धिनो हासस्य चेत्यर्थः। अध्यवसायमूलः आहार्याभेदप्रतीतिमूलकः।

**केचित्तु**—शुद्धसाध्यवसानलक्षणया धर्मधर्मिणोरेकत्वाध्यवसायेऽप्यतिशयोक्तिमेवाङ्गीकुर्वन्ति, तथाहि—

**'कर्णलम्बितकदम्बमञ्जरीकेशरारुणकपोलमण्डलम्।**

**निर्मलं निगमवागगोचरं नीलिमानमवलोकयामहे॥'**

इत्यत्र नीलिमपदस्य तदाश्रये शुद्धसाध्यवसानलक्षणया नीलिमाभेदप्रतीतिरिति। एवं हेतुफलयोरभेदाध्यवसाये प्येषा। यथा—

**'वित्रासनं समरसीमनि शात्रबाणामाजीवनं विबुधपर्षदि कोविदानाम्।**

**संमोदनं सुरतसंसदि कामिनीनां रूपं तदीयमवलोकयतोऽद्भुतं मे॥'**

अत्र वित्रासनादिपदस्य तद्धेतौ शुद्धसाध्यवसाना।

## रुचिरा

हेतुं लक्षयति—१४६ **हेतुमता** कार्य्येण। **सह**। **हेतोः** कारणस्य। **अभेदेन**। **अभिधा** कथनम्। **हेतुः** कारणं तन्नामाऽलङ्कार इत्यर्थः।

उदाहरति—**यथा**। **मम**—'**तारुण्यस्ये**त्यादि। व्याख्यातपूर्वमिदं पद्यम्। लक्षणसमन्वयं दर्शयति- **अत्रास्मिन्नुदाहृते** पद्ये। **वशीकरणहेतुः** 'युवजनस्येति शेषः। **नायिका**। **वशीकरणत्वेन** वशीकरणरूपकार्य्यत्वेन। **उक्ता**। ननु लक्षणया वशीकरणकारणप्रतीतिरेव, न त्वभेदप्रतीतिरित्यत आह-**विलासहासयोः**। 'तारुण्यस्य विलासः समधिकलावणसम्पदो हास' इत्युक्तदिशा तारुण्यसम्बन्धिविलासस्य समधिकलावण्यसम्पत्सम्बन्धिनो हासस्य चेत्यर्थः। **तु**। **अध्यवसायमूलो**ऽध्यवसाय आहार्याभेदप्रतीतिर्मूलमस्येति तथोक्तः। **अयं** हेत्वाख्यः। **अलङ्कारः**। निष्कर्षितं च विवृतिकारैः—'तथा च नायिकाया विलासहासयोः कार्य्यकारणभावरूपसम्बन्धाभावेन कारणलक्षणाया असम्भावादाहार्य्याभेदप्रतीतिरवश्यमङ्गीकरणीया तत्साहचर्य्यात् प्रकृतेऽध्याहार्य्यप्रतीतिरेव, नतु- लाक्षणिकी प्रतीतिरिति भावः।'इति। अत्र प्राञ्चः—'हेतुमता सह हेतोरभिधानमभेदतो हेतुः'इति हेत्वलङ्कारो न लक्षितः, 'आयुर्वृत'मित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति, वैचित्र्याभावात् 'अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः। रम्योऽयमेति सम्प्रति लोकोत्कण्ठाकरः कालः॥' इत्यत्र काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुर्न पुनर्हेत्वलङ्कारकल्पनयेति पूर्वोक्तकाव्यलिङ्गमेव हेतुः। इति, नव्यास्त्वाहुः—माभूत् 'आयुर्घृत'मित्यादौ वैचित्र्याभावात्, किन्त्वयं 'अविरल...' इत्यादावस्त्येव, न ह्यत्रानुप्रासेन गतार्थत्वं कल्पनीयम्, अनुप्रासघटकशब्दपरिवृत्तावपि वैचित्रयस्य सद्भावात्। अत एव तद्व्याख्यातारोऽपि "वस्तुतस्तु 'अविरलकमलविकास' इत्यादिषु वैचित्र्यमनुभवसिद्धमेवेत्युद्भटादिमतं समीचीनमेवेति नवीनाः।" इति।

**अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत्।**

यथा—

**'कुपितासि यदा तन्वि! निधाय करजक्षतम्।**

**बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा॥'**

अस्य च विच्छित्तिविशेषस्य सर्वालंकारविलक्षणत्वेन स्फुरणात्पृथकलंकारत्वमेव न्याय्यम्।

---

## विवृतिः

अनुकूलालंकारमाह—**अनुकूलमिति**। अनुकूलानुबन्धि आनुकूल्यकरम्॥ **कुपितेति**। नायिकां प्रति सख्या वचनमिदम्। अत्र करजक्षतभुजबन्धयोः प्रातिकूल्यं नायकानुकूल्यपरम्॥

## विज्ञप्रिया

अनुकूलसंज्ञकमलङ्कारान्तरमाह—**अनुकूलमिति**। प्रातिकूल्यं यद्यनुकूलस्य इष्टार्थस्यानुबन्धि जनकमित्यर्थः।

**कुपितासीति**—मानिनीं प्रति सख्या उक्तिरियम्। यदीत्यर्थे यदा। हे तन्वि! यदि कुपितासि तदा करजक्षतं विधाय भुजपाशाभ्यामस्य नायकस्य कण्ठं दृढं बधान इत्यर्थः। अत्र करजक्षतभुजपाशबन्धौ प्रतिकूलौ; नायकप्रीतेः अभीष्टस्यानुबन्धि। अत्रानुकूलपदार्थस्य व्यङ्ग्यत्वम्। क्वचित्तु तस्य वाच्यत्वमपि।

"अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे।

यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति॥"

अत्राभिमतशब्दस्येष्ठपदत्वं वाच्यम्। अन्यैरनुक्तस्यालङ्कारस्य स्वीकारबीजमाह—**अस्य चेति**।

## लोचन

अनुकूलमित्यलङ्कारनाम। अनुकूलानुबन्धि आनुकूल्यावहम्। अस्यापि कारणवैचित्र्यमूलत्वेन हेत्वलङ्कारान्नरं लक्षणम्। अस्य सागस इत्यर्थः।

## कुसुमप्रतिमा

प्राकरणिकहेतुघटितमेवानुकूलं नामालङ्कारं निरूपयति अनुकूलमिति। प्रातिकूल्यं प्रतिकूलताचरणं चेद्यदि अनुकूलानुबन्धि व्यञ्जनागम्यानुकूलजनकं स्यात्, तदा अनुकूलं नामालङ्कारो निगद्यते इति पूर्वक्रियानुकर्षः। एतेन—

अहिताचरणात् द्वितोत्पत्तिप्रतीतिरनुकूलमिति लक्षणनिष्कर्षः।

तत्प्रतीतिस्तु व्यञ्जनयैव । तेन "जीवनहेतोर्विमुञ्चति प्राणान्" इत्यादौ वक्ष्यमाणविचित्रालङ्कारस्थले जीवनादीनां वाच्यतया व्यञ्जनाजन्यप्रतीत्यभावान्नातिव्याप्तिः । अनुकूलमिति अलङ्कारशब्दसामानाधिकरण्येपि नपुंसकलिङ्गमेव दीपकमितिवदलङ्कारार्थे तथैव रूढ़ैः । अनुकूलं हितमिति च नार्थान्तरम् ।

कुपितेति । मानिनीं प्रति तत्सख्याः सकौतुकोक्तिरियम् । हे तन्वि ! क्षीणाङ्गि ! यद्वा यदि त्वं कुपितासि प्रियं प्रति क्रुद्धासि, तदा करजक्षतं तदूरुदेशादौ नखक्षतं निधाय अर्पयित्वा, भुजपाशाभ्याम् अस्य प्रियस्य कण्ठं दृढ़ं वधान बद्धं कुरु ।

अत्र करजक्षतस्य भुजपाशकरणकदृढ़कण्ठबन्धनस्य च स्वरूपतो दुःखकरत्वात् प्रतिकूलताचरणत्वमेव, किन्तु नायकपक्षे मदनोद्दीपकतया आलिङ्गनरूपेण पर्य्यवसितताय च ताभ्यां सुखोत्पत्ते रानुकूल्यजननमेवेत्यनुकूलालङ्कारः ।

ननु भवदादर्शकाव्यप्रकाशादावनुकूलालङ्कारस्य यथासम्भवं विषमादावन्तःपतेन पृथगगणनात् भवता कथं गण्यत इत्याह अस्य चेति । स्फुरणात् प्रतीतेः ।

## विमला

अनुकूलालङ्कारमाह, अनुकूलमिति ।—प्रातिकूल्यं—प्रतिकूलभावः, अनुकूलानुबन्धि—आनुकूल्यविधायकं, चेत् तदा अनुकूलं—तन्नामालङ्कारः ।

कुपितेति ।—नायिकां प्रति सख्या वचनमिदम् । तन्वि !—हे कृशाङ्गि ! यदा—यदि, कुपिता असि, तदा करजक्षतं—नखंक्षतं, निधाय—दत्त्वा, कृत्वेत्यर्थः, भुजपाशाभ्याम अस्य—कान्तस्य, कण्ठं दृढं बधान । अत्र करजक्षरं भुजबन्धनञ्च प्रतिकूलमपि नायकस्यं आनुकूल्यकरम् ।

प्राचीनैरयामलङ्कारो नादृत इत्याशयेताह—अस्येति ।

## लक्ष्मी

प्रकरणाद्धेतुघटितमेवानुकूलं नामालङ्कारं लक्षयति—**अनुकूलमिति** । प्रातिकूल्यं प्रतिकूलत्वाचरणं चेद् यदि अनुकूलमभिमतमनुबध्नाति यत् तत् तादृशं व्यञ्जनया प्रतीयमानमनुकूलजनकमित्यर्थः स्यात्, तदा अनुकूल्यम् एतन्नामालङ्कारो 'निगद्यते' इति पूर्वतोऽनुवर्तते । तथा च—प्रतिकूलत्वाचरणानुकूलोत्पत्तिप्रतीतिरनुकूलमिति लक्षणसारः ।

उदाहरति—**कुपितेति** । प्रणयकोपवतीं प्रति तत्सहचारिण्याः सकुतूहलोक्तिरियम् । हे तन्वि कृशाङ्गि ! यदा यदि त्वं कुतिपासि कान्तं प्रति क्रुद्धासि, तदा करजक्षतं नखक्षतं निधाय अर्पणं विधाय, भुजपाशाभ्यां बाहुरूपाभ्यां पाशाभ्याम् अस्य कान्तस्य कण्ठं कम्बु दृढं गाढं बधान बद्धं विधेहि ।

अत्र नखक्षतस्य भुजपाशविधायककण्ठबन्धस्य च स्वरूपतः क्लेशदत्वेनाहिताचरणत्वमेव, परन्तु नायकपक्षे कामाविर्भावकतया आश्लेषरूपेण परिणततया चोभाभ्यां सुखोत्पत्तेरानुकूल्योत्पादनमेवेत्यनुकूलालङ्कारः । एवञ्चात्रानुकूलपदार्थस्य व्यङ्ग्यत्वमेव । क्वचित्तु तस्य वाच्यत्वमपि यथा—

**'अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।**
**यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥'**

## रुचिरा

अनुकूलं लक्षयति—१४७ **चेत्**। **अनुकूलानुबन्धि** अनुकूलमभिमतमनुबध्नातीति तथोक्तम्, आनुकूल्येन सम्भवतीत्यर्थः। **प्रातिकूल्यं** प्रतिकूलत्वम्। तर्हि-**अनुकूलमेतदभिधेयोऽलङ्कारः** ॥ ११७।

उदाहरति—**यथा**—'**हे तन्वि ! यदा** यदि। **कुपिता**। **असि** त्वम्। **तदा** तर्हि। **करजक्षतं** करजैर्नकैः क्षतं तत्। **निधाय**। **अस्य** 'ममे'ति शेषः। **कण्ठम्**। **दृढं** गाढम्। **भुजपाशाभ्यां** भुजरूपाभ्यां पाशाभ्याम्। **बधान**। अत्र क्षतस्य पाशबन्धनस्य च प्रतिकूलत्वेऽपि प्रकृतनायकानुकूल्यकरत्वेन युज्यते इत्यनुकूलम् ॥ २१९ ॥'

अस्य प्राचीनैरलङ्कारत्वेनानङ्गीकारेऽपि कथं तदङ्गीक्रियते इत्याशङ्क्याह-**अस्येत्यादि**। स्पष्टम्।

**वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये ॥ ६४ ॥**

**निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा ।**

तत्र वक्ष्यमाणविषये क्वचित्सर्वस्यापि सामान्यतः सूचितस्य निषेधः क्वचिदंशोक्तावंशान्तरे निषेध इति द्वौ भेदौ । उक्तविषये च क्वचिद्वस्तुस्वरूपस्य निषेधः, क्वचिद्वस्तुकथनस्येति द्वौ । इत्याक्षेपस्य चत्वारो भेदाः । क्रमेण यथा—

**'स्मरशरशतविधुराया भणामि सख्याः कृते किमपि ।**

**क्षणमिह विश्रम्य सखे ! निर्दयहृदयस्य किं वदाम्यथवा ॥'**

अत्र सख्या विरहस्य सामान्यतः सूचितस्य वक्ष्यमाणविषये निषेधः ।

---

## विवृतिः

आक्षेपालंकारमाह—**वस्तुन इति** । विशेषप्रतिपत्तये विवक्षितवस्तुनो वक्तुर्वा वैलक्षण्यसूचनाय । विवक्षितस्य वक्ष्यमाणोक्तरूपद्वैविध्येनाक्षेपस्यापि द्वैविध्यमाह—**वक्ष्यमाणोक्तग इति** ।

वक्ष्यमाणविषय उक्तविषयश्चेत्यर्थः ॥ **सर्वस्यापि** समुदितस्यापि । वक्ष्यमाणविषये विवक्षितकथनाभावस्यैव वैचित्र्यव्यञ्जकत्वमिति । तत्र प्रकारान्तरासंभवाद् द्वितीयप्रकारस्यैव वस्तुतत्कथननिषेधत्वेन द्वैविध्यमाह—**उक्तविषये चेति** ॥ **स्मरशरशतेति** । कृते निमित्तम् ॥ **विरहस्य** कान्तिविच्छेदस्य । सामान्यतो विरहत्वेन सूचितस्य स्मरशरशतेत्यनेन निर्दयहृदयेत्यनेन च व्यञ्जितस्य विषये मरणयोग्यत्वेनातिमहति निषेध इति विवक्षितस्य वचननिषेधेनैव निषेध इति भावः । इदानीं त्वयि गतेऽपि सावश्यं मरिष्यतीति त्वयि तन्निवेदनमनर्थकमिति विवक्षितवस्तुनो विरहस्य मरणाव्यभिचरितरूपवैलक्षण्यं विशेषकथननिषेधेनैव व्यज्यते । विरहविशेषस्य प्रकरणादिना वाच्यवत्स्फुटप्रतीयमानतया तत्कथननिषेधस्याकिंचित्करत्वेनाभासत्वम् ॥

## विज्ञप्रिया

चतुर्विधमाक्षेपालङ्कारमाह—**वस्तुन** इति । वकतुमिष्टस्य वस्तुनो निषेधाभासोऽनिषेधाभिप्रायत्वेन निषेधाभास आक्षेपालङ्कार इत्यर्थः । निषेधाभासस्य फलमाह—**विशेषप्रतिपत्तये** इति । प्रथमं तस्य द्वैविध्यमाह—**वक्ष्यमाणे**ति । वक्ष्यमाणस्य उक्तस्य । वा वकतुमिष्टस्य निषेधाभास इत्यर्थः । उकतस्य वकतुमिष्टस्य चोक्तिः प्राचीनेच्छाविषयत्वात ।

**स्मरशरे**ति । नायिकाया विरहवस्थां नायके विवक्षोस्तत्संख्या उक्तिरियम् । सखीपतित्वेन सखे ! इति सम्बोधनम् । क्षणमिह विश्रम्य भणामीत्यन्वयः । कथनीयबाहुल्याद् विश्रमपूर्वकत्वकथनम् । निर्दयहृदयेषु युष्मादृशेष्वित्यर्थः । **अत्रेति** । विरहस्य विरहावस्थायाः वक्ष्यमाणे विशेषे पाण्डुत्वकृशत्वादौ निर्दयहृदयत्वेन तु सामान्यतः सूचनम् । निषेधाभासवशाच्च तस्या वश्यमरणरूपविशेषप्रतीपत्तिः ।

## लोचन

सम्प्रत्यर्थस्य गम्यत्ववैशिष्ट्येनावशिष्टमाक्षेपालङ्कारमाह—**वस्तुन** इति। अयमर्थः—विवक्षितस्य वस्तुनः प्राकरणिकत्वादयुक्तो निषेधः कृतः सन् बाधितकस्वरूपो यत्राभासतामवगमयति स आक्षेपोऽलङ्कारः। न चात्र निष्फल इत्याह—**विशेष** इति। प्रकृतनिष्ठत्वेन विशेषस्य प्रतिपत्तये इत्यर्थः। सत्तासमानो निषेधः। क्वचिद् वक्ष्यमाणविषयः क्वचिदुक्तविषय इति द्विविध आक्षेपोऽलङ्कारः।

## कुसुमप्रतिमा

नन्वनुकूलालङ्कारे यथा उक्तातिरिक्तविशेषप्रतिपत्तिस्तथा अलङ्कारान्तरे अस्ति न वेत्याकाङ्क्षाया साक्षेपालङ्कार लक्षयति वस्तुत इति। वक्तु मिष्टस्य वस्तुनो विषयस्य विशेषप्रतिपत्तये यत् किञ्चिदतिरिक्तत्वबोधाय, निषेधामासौ वस्तुत एव न निषेध, किन्तु उक्तेर्वस्तुस्वरूपस्य वा निषेधवत् प्रकाशः, आक्षेपो नामालङ्कारो निगद्यत इति पूर्वेण सह सम्बन्धः। तथा च विवक्षितविषये यत्किञ्चिदतिरिक्तं बोधयितुं विवक्षितविषयस्य वस्तुस्वरूपस्य वा निषेधवङ्गङ्गीकरणमाक्षेप इत्यर्थः। स च प्रथमतो द्विधा—वक्ष्यंमाणगी वक्ष्यमाणविषयगतः, उक्तग उक्तविषयगतश्चेति।

आक्षेपो वक्तुमारब्धस्याकर्षणमसमाप्तावेव विरतीकरणमिति व्युत्पत्तिः।

उक्तयोरपि भेदयोः प्रत्येकमेवावान्तरभेदद्वयसम्भवात् समुदायेन चतुर्विधत्वं दर्शयितुमाह अत्रेति। सर्वस्य सकलांशस्य सामान्यतः साधारणभावेन न तु स्पष्टत इत्यर्थः। अंशान्तरे वक्ष्यमाणे एकस्मिन्नंशे। वस्तुस्वरूपस्य वक्तृत्वादेः।

सर्वस्यापि सामान्यतः सूचितस्य निषेधे उदाहरति स्मरेति। नायिकाप्रेषितायाः सख्या नायकं प्रति उक्तिरियम्। हे सखे ! स्मरस्य मदनस्य शरशतेन शरशतप्रहारेण विधुराया विह्वलायाः सख्याः कृते निमित्ते किमपि भणामि ब्रवीमि; तस्मात्, इह स्थाने क्षणं यावत् विश्राम्यः कुरु; अथवा निर्दयहृदयस्य तव समीपे किं वदामि अपि तु किमपि नेत्यर्थः।

अत्रेति। सामान्यतः सूचितस्य "स्मरशरशतविधुरायाः" इति विशेषणमात्रेण द्योतितस्य, न तु "विरहिण्याः" इति स्पष्टत उक्तस्येत्यर्थः सम्बन्धिनि वक्ष्यमाणे विशेषे विवक्षितनितान्तदूरवस्थायां निषेधो मरणपर्य्यन्तरूपविशेषबोधाय "किं वदामि" इति वचनेन निषेधाभास इत्याक्षेपः।

## विमला

आक्षेपालङ्कारमाह, वस्तुन इति।—वक्तुमिष्टस्य—विवक्षितस्य, वस्तुनः—विषयस्य, विशेषप्रतिपत्तये—विवक्षितवस्तुनो वक्तुर्वा वैलक्षण्यसूचनाय, यः निषेधाभासः—निषेधवत् प्रकाशः, स आक्षेपः। विवक्षितस्य वक्ष्यमाणोक्तरूपद्वैविध्येन आक्षेपस्यापि द्वैविध्यमाह, वक्ष्यमाणेति।—स च द्विधा, वक्ष्यमाणगः—वक्ष्यमाण विषयः, उक्तगश्च—उक्तविषयश्चेत्यर्थः।

अत्रेति।—सर्वस्यापि—समुदितस्यापि इत्यर्थः, वक्ष्यमाणविषये विवक्षितकथनाभावस्यैव वैचित्र्यव्यञ्जकत्वमिति। तत्र प्रकारान्तरासम्भवात् द्वितीयप्रकारस्यैव वस्तुतत्कथननिषेधत्वेन द्वैविध्यमाह—उक्तविषये चेति।

स्मरेति ।—नायकं प्रति नायिकाप्रेरितायाः सख्या उक्तिरियम् । हे सखे ! स्मरस्य—कामस्य, शरशतैः—शरशतप्रहारैरित्यर्थः, विधुरायाः—कातरायाः, सख्याः कृते—निमित्तं, किमपि भणामि—कथयामि, इह क्षणं विश्राम्य—तिष्ठ इत्यर्थः, अथवा निर्दयहृदयस्य, तव इति शेषः, किं वदामि ?—न किमपि वक्तुमुचितं त्वदग्रे इति भावः । अत्र वक्ष्यमाणगः आक्षेपः ।

## लक्ष्मी

अत्राभिमतपदस्येष्टपदत्वं वाच्यम् ।

ननु प्राचीनैरलङ्कारमेनं नाङ्गीकृतं तर्हि भवद्भिः कथमत्राभिहितमित्याशङ्कायामाह—**अस्येति** । विच्छित्तिविशेषस्य चमत्कारविशेषस्य । स्फुरणात् अवगमात् । न्याय्यमुचितम् ।

न केवलमनुकूलालङ्कार एव प्रतिपादितारिक्तविशेषप्रतिपत्तिः किन्त्वलङ्कारान्तरेऽपीत्यत आक्षेपालङ्कारं निरूपयति—**वस्तुन** इति । वक्तुमिष्टस्य प्राकरणिकत्वात् वचनार्हस्य अवचनानर्हस्य वा वस्तुनो विषयस्य, वक्ष्यमाणविषयेऽशक्यवक्तव्यत्वम् उक्तविषयेऽतिप्रसिद्धत्वं च विशेषस्तस्य प्रतिपत्तये बोधाय निषेधाभासः शब्दशक्त्या निषेधोऽर्थशक्त्या विधानम् आक्षेपो 'नामालङ्कारो निगद्यते' इति पूर्वतोऽवर्त्तते । आक्षेपणं विवक्षितार्थस्य भर्त्सनमाक्षेप इति व्युत्पत्तिः । स चाक्षेपः प्रथमं द्विविधः-वक्ष्यमाणगो वक्ष्यमाणविषयगतः उक्तग उक्तविषयगतश्चेति ।

एवं द्विप्रकारकयोरपि प्रत्येकमेवान्तर्भेदद्वयसम्भवात् चतुष्प्रकारत्वमुपपादयितुमाह—**तत्रेति** । तत्र तयोर्भेदयोर्मध्ये वक्ष्यमाणविषये प्रतिपाद्यमानविषये क्वचित् कस्मिंश्चिल्लक्ष्ये सर्वस्य समुदितांशस्य सामान्यतः साधारणभावेन न तु स्फुटत इत्यर्थः, सूचितस्य बोधितस्य निषेधः अभिधाननिषेधः । क्वचित् कस्मिंश्चिल्लक्ष्ये अंशोक्तौ अंशेन कथने अंशान्तरेऽन्यस्मिन् भागे उक्तविषयांशातिरिक्तेंऽशे इति यावत् । एवञ्च वक्ष्यमाणविषयगतोऽयं द्विविधः, तत्र सामान्यतः सूचितस्य सर्वस्य निषेधात्मा, अंशेनोक्तावंशान्तरे निषेधात्मा चेति फलितम् । वक्तृस्वरूपस्य वक्तृत्वादे । वस्तुकथनस्य विषयाभिधानस्य । एवञ्च—उक्तविषयगतोऽप्ययं द्विविधः—वस्तुनिषेधात्मा वस्तुकथननिषेधात्मा चेति फलितम् । तथा च समुदितेन स्पष्टं चतुर्विध इति विचारणीयम् ।

तत्र सामान्यतः सूचितस्य सर्वस्य निषेधात्मतादाहरति—**स्मरेति** । नायिकाया विरहावस्थां नायके कथयितुमभिलषन्त्यास्तत्प्रेषितायाः संख्या उक्तिरियम् । हे सखे ! सखीपतित्वेनैतत्सम्बोधनम् । स्मारस्य कामदेवस्य शरशतेन शरशतपातेन विधुराया विह्वलीकृतायाः कामदेवानेकबाणप्रहारेण विकलीकृताया इत्याशयः 'वैकल्येऽपि च विश्लेषे विधुरं विकलं त्रिषु' इति त्रिकाण्डशेषः, सख्याः सहचारिण्याः कृते निमित्ते किमपि किञ्चित् भणामि कथयामि, अतः क्षणं क्षणकालम् इह स्थाने विश्राम्य उपविश्य विश्रामं विधेहीत्यर्थः, अथवा निर्दयहृदयस्य निष्करुणान्तःकरणस्य (कर्मणि सम्बन्धमात्रविवक्षया षष्ठी) तव भवतः समीपे किं वदामि कथयेयम् अपि तु किमपि वक्तुमशक्यमित्यर्थः । अत्रोद्गीतिश्छन्दस्तल्लक्षणञ्चोक्तं प्राक् ।

लक्ष्यं समर्थयति—**अत्रेति** । सख्याः सहचरीसम्बन्धिनः विरहस्य वियोगावस्थायाः सामान्यतः सूचितस्य 'स्मरशरशतविधुरायाः' इति केवलविशेषणेनैव व्यञ्जितस्य न तु 'विरहिण्याः' इति स्फुटतया कथितस्येत्यर्थः, वक्ष्यमाणे वस्तुनि विशेषेऽशक्यवक्तव्यत्वरूप वैलक्षण्ये निषेधः मरणावधिरूपविशेषावगमाय 'किं वदामि' वचनेन निषेधाभास इत्याक्षेपः । निषेधाभासवशादेव तस्यावश्यमरणरूपविशेषप्रतिपत्तिरित्याकलनीयम् ।

## रुचिरा

आक्षेपं लक्षयति—१४८ **वक्तुम्**। **इष्टस्या**भिमतस्य। **वस्तुनो** विषयस्य। **विशेषप्रतिपत्तये** विशेषेण वैलक्षण्येन प्रतिपत्तिर्बोधनं तस्यै। **निषेधाभासो** निषेधस्याभासः प्रकाशनम्। **आक्षेप** आक्षेपणं विवक्षितस्यार्थस्य भर्त्सनामिति तथोक्तः, तन्नामाऽलङ्कारः। स च-**वक्ष्यमाणोक्तगो** वक्ष्यमाणो वक्ष्यमाणं चोक्तं चेति ते (वस्तुनी) गच्छतीति तथोक्तः। **द्विधा**। अयम्भावः—विवक्षितं वस्तु वचनानार्हमवचनार्हं वा, तस्य निषेधाभासः(शब्दशक्त्या निषेधोऽप्यर्थशक्त्या विधानम्) आक्षेपः। स च-विशेषेण विवक्षितमेवार्थं बोधयितुमीप्स्यते, अन्यथा तस्य चमत्काराधायकत्वाभावेनालङ्कारव्यपदेशार्हत्वं न स्यात्। तत्सुष्ठुक्तं विशेषप्रतिपत्तय इति। वक्ष्यमाणविषयगत उक्तविषयगतश्चार्यम्। एवं च—'वक्तुमिष्ठस्य वस्तुनो निषेधाभास आक्षेप इति सामान्यं लक्षणम्, तावन्मात्रत्वेऽलङ्कारत्वोपकारकस्यवैचित्र्यस्यानुदयात् 'विशेषे'त्याद्युक्तम्, तेन सति विशेषप्रतिपादकत्व एवेति पर्य्यवसितम्। अस्य भेदद्वयम्-वक्ष्यमाणविषयगतत्वेनोक्तविषयगतत्वेन च्नेति। तत्र वक्ष्यमाणे प्रकृतोपयोगिनि वस्तुनि विशेषोऽशक्यवक्तव्यत्वरूप, उक्ते पुनरतिप्रसिद्धत्वरूप इति बोध्यम्। तथाऽऽहुः—'अवश्यवक्तव्यस्यार्थस्य विधानाभिप्रायकं विशेषप्रतिपत्तये प्रतिषेधनमाक्षेपालङ्कारः। स च वक्ष्यमाणे विषयेऽशक्यवक्तव्यत्वेनोक्ते विषयेऽतिप्रसिद्धत्वेन विच्छित्तिं लभत इति द्विविधः।' इति ॥ ११८ ॥'

एवमस्य भेदद्वयं निर्दिश्य सूक्ष्मदृशा पुनर्भेदद्वयं वृत्तिकारो निर्दिशति—**तत्रे**त्यादिना।

**तत्र** तयोर्भेदयोर्मध्ये। **वक्ष्माणविषये** वक्ष्यमाणे विषये। **क्वचित्** कस्मिंश्चिल्लक्ष्ये। **सामान्यतः**। **सूचितस्य**। **सर्वस्य** समुदितस्य। **अपि**। **निषेधः**। **क्वचित्**। **अंशोक्तावं**शेनोक्तिः कथनं तस्यां सत्याम्। अंशान्तरेऽन्यस्मिन्नंशे। उक्तिविषयांशातिरिक्तैऽश इति भावः। **निषेधः**। **इति**। **द्वौ**। **भेदौ**। तथा च-वक्ष्यमाणविषयगतोऽयं द्विविधः, तत्र सामान्यतः सूचितस्य सर्वस्य निषेधात्मा, अंशेनाभिधानेऽशान्तरे निषेधात्मा चेति फलितम्। **उक्तविषये**। **क्वचित्** कस्मिंश्चिल्लक्ष्ये। **वस्तुस्वरूपस्य** वस्तुनो यत् स्वरूपमवच्छेदकं तस्य। वस्तुनि यद्वस्तुत्वावच्छेदकं तस्येति भावः। **च**। **निषेधः**। **क्वचित्**। **वस्तुकथनस्य** वस्तुनो विषयस्य यत् कथनं तस्य। 'निषेध' इति देहलीदीपकन्यायेनानुषज्यते। **इति**। **द्वौ**। 'भेदा' इति पूर्वतोऽनुषज्यते। तथा च-उक्तविषयगतोऽप्ययं द्विधा, वस्तुत्वनिषेधात्मा, वस्तुकथननिषेधात्मा च; इति फलितम्। **इति**। **आक्षेपस्य**। **चत्वारः**। **भेदाः**।

उदाहर्त्तुकाम आह—**क्रमेण**। **यथा**। '**हे सखे ! स्मरशरशतविधुरायाः** स्मरस्य शरशतेन विधुरा दुःखिता तस्यास्तथोक्तायाः। कामदेवस्य बहुबाणप्रहारेण व्याकुलीकृताया इति भावः। 'वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु।' इति त्रिकाण्डशेषः। **सख्याः**। **कृते** निमित्तम्। **किमपि** किञ्चित्। **भणामि** कथये अतः—क्षणम्। **इह**। **विश्राम्य** उपविश। **अथवा**। **किम्**। **निर्दयहृदयस्य** निष्करुणान्तः करणस्य। कर्मणि सम्बन्धमात्रविवक्षया षष्ठी। **वदामि** वेदयमित्यर्थः न किमपि वक्तुं शक्यमिति भावः।अत्र वक्ष्यभाववस्तुगत आक्षेप। अत्रोद्गीतिश्छन्दः, तल्ल क्षणं योक्त प्राक् ॥२२० ॥

'तव विरहे हरिणाक्षी निरीक्ष्य नवमालिकां दलिताम् ।

**हन्त नितान्तमिदानीमाः किं हतजल्पितैरथवा ॥'**

**अत्र मरिष्यतीत्यंशो नोक्तः ।**

---

## विवृतिः

**तवेति** । दलितां विकसिताम् । अत्र जल्पनस्य निन्दया सूचितस्य मरिष्यतीत्यंशस्य सुहृदनिष्ठत्वेनाशक्यवक्तव्यत्वं वस्तुवैलक्षण्यं प्रतीयते ॥

## विज्ञप्रिया

अंशनिषेधाभासमाह—**तव विरह** इति । **नितान्तमिदानीमिति** । अन्यदा उद्दीपकविकसितमल्लिकादर्शनादक्षितजीवना ह्यासीत् । इदानीं तु मरिष्यतीत्यस्यांशस्यानुक्तस्य निषेधाभासः । वीक्ष्येत्यंशस्तूक्तः । एवं निषिद्धोक्तिविषयस्य मरणस्याऽशक्यवक्तव्यत्वरूपस्य विशेषस्य प्रतिपत्तिस्तत्फलम् ।

## लोचन

सर्वत्रापि वक्ष्यमाणस्य विरहस्य सामान्यतः सूचनं स्मरशरविधुराया इति प्रतिपादनात् । वक्ष्यमाणो विरहिण्यास्तत्तदवस्थाविशेषाणामकथनात् ।

## कुसुमप्रतिमा

अंशोक्तावंशान्तरनिषेधे दर्शयति तवेति । नायिकान्तिके नायिकादूत्या उक्तिरियम् । हरिणाक्षी मृगलोचना तव प्रियेत्यथ; तव विरहे, नवमालिकां तदाख्यं कुसुमम्, दलितां प्रस्फुटिताम्, निरीक्ष्य, हन्त खेदे, इदानीं नितान्तमेव मदनवेदनामनुभवतीति शेषः । "आः" इति पीडासूचकम् अव्ययम् । अथवा हतजल्पितैः अनर्थकोक्तिभिः किम्, अपि तु किमपि नेत्यर्थः ।

अत्रेति । तथा च विरह इत्याद्यंशः स्पष्टमेवोक्तः, किन्तु अशक्यवक्तव्यत्वादिरूपविशेषप्रतिपत्तये विवक्षिती मरिष्यतीत्य शो नोक्तः । एवञ्च "किं हतजस्थितैः—" इत्यनेन निषेधाभासादाक्षेपः ।

## विमला

अत्रेति ।—विरहस्य—कान्तविच्छेदस्य, सामान्यतः—विरहत्वेन, सूचितस्य—स्मरशरशतेत्यनेन निर्दयहृदयेत्यनेन च व्यञ्जितस्य, विशेषे—मरणयोग्यत्वेनातिमहति, निषेधः—विवक्षितस्य वचनानषेधैनैव निषेध इति भावः । इदानीं त्वयि गतेऽपि साऽवश्यं मरिष्यतीति त्वयि तन्निवेदनमनर्थकम् इति विवक्षितवस्तुनी विरहस्य मरणाव्यभिचारितरूपवैलक्षण्यं विशेषकथननिनिषेधेनैव व्यज्यते । विरहविशेषस्य प्रकरणादिना वाच्यवत्स्फुटप्रतीयमानतया तत्कथननिषेधस्याकिञ्चित्करत्वेनात्वाभासत्वम् इति सङ्क्षेपः ।

तवेति ।—नायकं प्रति दूया उक्तिरियम् । हन्तेति खेदसूचकमव्ययं, हरिणाक्षी तव विरहे—विरहदशाया, नवमालिकां दलितां—विकसितां, निरीक्ष्य, इदानीं नितान्तम् आः ! अथवा हतजल्पितैः,—अत्यन्तानिष्टत्वात् अशक्यवचनैरित्यर्थः, किम् ! अत्र जल्पनस्य निन्दया सूचितस्य मरिष्यतीत्यशस्य सुहृदनिष्टत्वेनाशक्यत्वाक्य) वक्तव्यंत्वं वस्तुवैलक्षण्य प्रतीयते इति बोध्यम् ।

## लक्ष्मी

अंशेनोक्तावंशान्तरे निषेधात्मतामुदाहरति—**तवेति** । नायकसविधे नायिकादूत्याः कथनमिदम् । हरिणाक्षी मृगनयना तव तदेकाधारस्य भवतः प्रेयसीत्यर्थः, तव विरहे सान्निध्याभावे सति, नवमालिकां तन्नामकं कुसुमम्, दलितां विकसिताम्, निरीक्ष्य अवलोक्य, हन्त कष्टम्, इदानीं सम्प्रति, नितान्तमत्यन्तमेव कामवेदनां सहत इत्याशयः । 'आः' इति व्यथासूचकम्, मृतप्रायेति शेषः । अथवा हतजल्पितैः अनर्थकवचनैः किम् ? अपि तु न किमपि प्रयोजनमित्यर्थः । **उपगीति**श्छन्दस्तल्लक्षणन्तूक्तमेव ।

उदाहरणं सङ्गमयितुमाह—**अत्रे**ति 'विरह' इत्याद्यंशः स्फुट एव प्रतिपादितः किन्तु अवश्यवक्तव्यत्वादिरूपविशेषावगमाय विवक्षितो 'मरिष्यति' इत्यंशो नाभिहितः । तथा च 'किं हतजल्पितैः' इत्यनेन निषेधाभासादाक्षेपः ।

## रुचिरा

उदाहृतमर्थं निर्दिशति—**अत्र** नायिकासख्या नायकं प्रत्युक्तौ । **सख्याः** सखीसम्बन्धिनः । **बिरहस्य** । **सामान्यतः** । **सूचितस्य** 'स्मरशरे'त्यादिनेति शेषः । **वक्ष्यमाणविशेषे** वक्ष्यमाणे (वस्तुनि) विशेषोऽशक्यवक्तव्यत्वरूपं वैलक्षण्यं तत्र, तस्मिन् विषय इति भावः । **निषेधः** 'निर्दयहृदयस्ये' त्यनेन विवक्षितं व्यञ्जयित्वेति शेषः ।

**'हरिणाक्षी** । तव तदेकाधारस्य भवत इति भावः । **विरहे** सान्निध्याभावे सतीति भावः । **नवमालिकाम्** । **वचनानहिवदलितां**'विकसिताम् । **निरीक्ष्य** दृष्ट्वा । **हन्त** कष्टम् । **इदानीम्** । **नितान्तम्** । **आः** ! 'मृतप्राये'ति शेषः । **अथवा** । **हतजल्पितैर्हतानि** यानि जल्पितानि वचनानि तैः । **किम्** । न किमपि प्रयोजनम् । अत्रापि वक्ष्यमाण आक्षेपः, किन्तु अंशत उक्त्वेति विशेषः । उपगीतिच्छन्दः ॥ २२१ ॥'

उदाहरणसङ्गतेर्हेतुं निर्दिशति-**अत्र** । **'मरिष्यती'ति** 'अशक्यं वक्तव्य' मिति शेषः । **अंशेनै**कदेशेन 'हन्त नितान्तमिदानी'मित्यनेन । **उक्तम्** । 'अंशान्तरेण पुनरशक्यवक्तव्यतया तस्य निषेधः । अशक्यवक्तव्यतायाश्च 'हतजल्पितै'रित्यनेन जल्पितनिन्दनद्वारा सूचन'मिति शेषः ।

**'बालअ ! णाहं दूती तुअ प्पिओसि त्ति ण मह वावारो ।**

**सा मरइ तुज्झ अअसो एअं धम्मक्खरं भणिमो ।।'**

**अत्र दूतीत्वस्य वस्तुनो निषेधः ।**

---

## विवृतिः

**बालअ इति** । 'बालक-नाहं दूती तस्याः प्रियोऽसीति न मम व्यापारः । सा म्रियते तवायश एवं धर्माक्षरं भणामः ।।' इति संस्कृतम् । दूतीत्वेन कथितात्मनः सख्या वचनमिदम् । धर्माक्षरं यथार्थवचनम् । अत्र स्वस्मिन् सतोऽपि दूतीत्वस्य निषेधेन दूत्यन्तरवन्नाहं मिथ्या वदामीति स्ववैलक्षण्यं व्यज्यते । निषेधस्यारोप्यमाणत्वादाभासत्वम् ।।

## विज्ञप्रिया

उक्तनिषेधविषये वक्तुमित्यस्य वस्तुस्वरूपस्य निषेधमाह—**बालअ** इति ।

**"बालक नाहं दूती तिष्ठ प्रियोऽसीति न मम व्यापारः ।**

**सा म्रियते तवाऽयशः एतद् धर्माक्षरं भणामः ।। इति ।**

धर्मानभिज्ञत्वेन धर्मवक्त्र्या बालकत्वेन सम्बोधितः । धर्मकथनमात्रस्योद्देश्यत्वसूचनाय आत्मनो दूतीत्वनिषेधः । नायिकायाः प्रवृत्त्यनुमतिरपि मम नास्तीत्येतत्सूचनाय तिष्ठेत्युक्तम् । तथा प्राणिमात्रधर्मो वक्तव्यस्तत्र स्वप्रियत्वमन्यजन्यप्रियत्वं वा न प्रयोजकमित्येत्सूचनाय प्रियोऽसीत्युक्तम् । तस्या मम वा प्रियोऽसीति नेत्यर्थः । अत्र सा म्रियते इत्युक्तविषये वक्तुमिष्टस्यात्मनो दूतीत्वस्य वस्तुन एव निषेधो नतु तदुक्तेः । नच दूतीत्वनिषेधः कथमुक्तमरणविषयक इति वाच्यम् । मरणव्यावर्त्तकदूतीत्वविषयत्वेन परम्परया तद्विषयत्वात् । अत्राधर्मतो निवृत्तये यथार्थवादित्वस्य विशेषस्य प्रतिपत्तिः ।

## लोचन

अत्र च विहितनिषेधेन विच्छित्तेरभावात् क्षुद्रत्वाद्यलङ्कारमध्ये काव्यप्रकाशकारादिभिर्लक्षितेन साङ्कर्यभ्रमं निरस्यति—न **चायमिति** । अत्र विहितनिषेधे । यथा—

"बाणेन हत्वा मृगमस्य यात्रा
निवार्यतां दक्षिणमारुतस्य ।
इत्यर्थनीयः शबराधिराजः
श्रीखण्डपृथ्वीधरकन्दरस्थः ।।"

"यद्वा मृषा तिष्ठतु दैन्येमत-
न्नेच्छन्ति वैरं मरुता किराताः ।

**कोलिप्रसङ्गे शबराङ्गनानां**

**स हि श्रमग्लानिमपाकरोति ॥"**

इह हि प्रथमपद्योक्तस्य द्वितीयपदेन निषेधस्तात्त्विक एव । एवञ्च निषिद्धविधिनाऽपि नास्य साङ्कर्य्य, स हि यथा—

## कुसुमप्रतिमा

वस्तुस्वरूपस्य निषेधे उदाहरणमाह बालअ इति । नायकं प्रति दूतीरूपेणागत्य नायिकासख्या उक्तिरियम् । "बालक ! नाहं दूती; तस्याः प्रियोऽसि इति न मम व्यापारः । सा म्रियते तव अयश एतत् धर्म्माक्षरं भणामः ॥" इति संस्कृतानुवादः । हे बालकवत् प्रेमावस्थानभिज्ञ ! अहं न दूती; अतः अप्रगल्भाया मम वचनं सर्वथा विश्वसनीयमिति भावः । तस्या नायिकायास्त्वं प्रियोऽसि इति हेतोर्न मम व्यापारस्तवानुनयकरणम् । तर्हि कथमेव ब्रवीषि इत्याह सा नायिका म्रियते मदनवेदनयेति भावः, तव अयशस्तम्मरणे सति निन्दा भवेत्, एतत् धर्म्माक्षरं न्यायसङ्गतवाक्यम्, भणामी वदामः ।

अत्रेति । विवक्षितविषये सख्या आत्मनो यथार्थवादित्वरूपविशेषप्रतिपत्तये दूतीत्वस्य दूतीत्वरूपस्य वस्तुनो निषेध इत्यर्थः । तेनाक्षेपोऽलङ्कार इति भावः ।

## विमला

बालअ इति ।—["बालक ! नाहं दूती तस्याः प्रियोऽसीति न मम व्यापारः । सा म्रियते तवायश एतत् धर्माक्षरं भणामः ॥" इति संस्कृतम्] । नायकं प्रति दूतीत्वेन कथितात्मनः संख्या उक्तिरियम् । बालक !—हे अविदग्ध ! इत्यर्थः, नाहं दूती—नाहं मिथ्यावादनीति भावः, तस्याः,—तव कान्ताया इति भावः, प्रियः असि इति—अस्मात् हेतोः, न मम व्यापारः,—उद्यमः, त्वदर्थं प्रयासो नेत्यर्थः, अथ सा—तव कान्ता, म्रियते, तव च अयशः,—अपकीर्त्तिः, एतत् धर्माक्षरं—सत्यवचनं, यथार्थवचनमित्यर्थः, भणामः, स्वप्रियाया स्वस्मिन् सति सर्वथा प्रियमाचरितुं सामर्थ्येऽपि प्रियानाचरणे तस्या अनन्याधारतया मरणं, स्वस्य च तव यशोमालिन्यमिति सत्यमहं ब्रवीभीति भावः । अत्र स्वस्मिन् सतोऽपि दूतीत्वस्य निषेधेन दूत्यन्तरवन्नाह मिथ्या वदामीति स्ववैलक्षण्य व्यज्यत । निषेधस्यारोप्यमाणत्वात् आभासत्वम् इति आक्षेपालङ्कारः । अत्रार्य्या छन्दः ।

## लक्ष्मी

वस्तुनिषेधात्मतामुदाहरति—'बालअ !' इति । नायिकान्तिके दूतीरूपेण प्राप्य नायिकासहचारिण्याः कथनमिदम् ।

**'बालक ! नाहं दूतीः तस्याः प्रियोऽसि इति न मम व्यापारः ।**

**सा म्रियते तव अयशः एतत् धर्माक्षरं भणामः ॥ इति संस्कृतम् ।**

हे बालक शिशुवत् प्रेमावस्थाविदग्ध ! अहं दूती समाचारादिप्रापिका न नैवास्मि; अतो हिताभिलाषिण्या मम वचनं सर्वथा मन्तव्यमित्याशयः । तस्याः तव प्रियायाः त्वं प्रियोऽसि इति हेतोर्न मम व्यापारः तवानुनयोद्यमविधानम् । नन्वेवं किमर्थमेवं वदसीत्यत आह—**सेति** । सा भवदेकाश्रया प्रिया म्रियते प्राणांस्त्यजति असह्यका-

मपीडयेत्यभिप्रायः, तेन तव अयशः तन्मरणे सति निन्दा स्यात्, एतत् धर्माक्षरं नीतियुक्तवचनं भणामो ब्रूमः। आर्याच्छन्दः।

**अत्रे**ति। विवक्षितविषये सख्याः स्वस्य सत्यवादित्वरूपविशेषबोधाय दूतीत्वस्य 'दूत्या मिथ्यावादित्वम्' इति प्रसिद्धदूतीत्वरूपस्य वस्तुनो निषेधः 'नाहं दूत्यन्तरवन्मिथ्यावादिनी' इत्येवंरूप इत्यर्थः, तेनाक्षेपः।

## रुचिरा

'हे **बालअ** बालक लक्षणया तद्वदविदग्ध! **अहम्**। **दूती** 'तस्या (तस्यास्तव प्रियायाः)' इति शेषः। **ण** नैवास्मीत्यर्थः। तुअ त्वम्। **प्पिओं** प्तियः। **असि**। **त्ति** **इति**। **मह** मम। **बाबारो** व्यापार उद्यम इति यावत्। **ण** नैवास्तीत्यर्थः। तदर्थं न ममायं प्रयास इति भावः। **सा** तव कान्ता त्वदेकाधारेति यावत्। **मरइ** म्रियते 'जदि (यदि)' इति शेषः। **तुज्झ** तव। 'तद्धि (तर्हि)' इति शेषः। **अअसो** अयशः। **एअं** एतत्। **धमक्खरं** धर्माक्षरं सत्यवचनमिति यावत्। **भणिमो** भणामः। अत्रोक्तेऽपि दूतीत्वेऽपि प्रसिद्धं 'दुत्या मिथ्यावादित्वं' निषेद्धुं 'नाहं दूत्यन्तरवन्मिथ्यावादिनी'ति प्रत्याययितुं स्ववैलक्षण्यं सूचितम्। आर्याछन्दः। दूतीत्वेन कथितात्मनः कस्याश्चित् स्वाभिधित्सितं द्योतयितुं निषेधोक्तिरियम्॥ २२२॥'

अत्र यस्य वस्तुनो निषेधस्तन्निर्दिशति—**अत्रे**त्यादिना। स्पष्टम्। 'अत्र सतोऽपि स्वस्मिन् दूतीत्वस्य निषेधेन दूत्यन्तरवन्नाहं मिथ्या वदामीति स्ववैलक्षण्यं व्यज्यते। निषेधस्यारोप्यमाणत्वादाभासत्वम्।' इति विवृतिकाराः।

**'विरहे तव तन्वङ्गी कथं क्षपयतु क्षपाम्।**
**दारुणव्यवसायस्य पुरस्ते भणितेन किम्॥'**

अत्र कथनस्योक्तस्यैव निषेधः। प्रथमोदाहरणे सख्या अवश्यंभावि मरणमिति विशेषः प्रतीयते। द्वितीयेऽशक्यवक्तव्यत्वादि।

तृतीये दूतीत्वे यथार्थवादित्वम्। चतुर्थे दुःखस्यातिशयः। न चायं विहितनिषेधः। अत्र निषेधस्याभासत्वात्।

---

## विवृतिः

**विरह इति**। वर्षारम्भे प्रवसन्तं नायकं प्रति सख्या वचनमिदम्। **दारुणव्यवसायस्य** दुरुच्छेदतत्समीपप्रापणनिश्चयस्य। अत्र पूर्वार्धे तत्समीपं त्वं याहीति वक्तुमिष्टं वस्तु तस्य व्यञ्जकनिषेधेनैवार्थतो निषेधः सिद्धयतीति न लक्षणगमनानुपपत्तिरित्यभिप्रायेणाह—**कथनस्योक्तस्यैवेति**। पूर्वार्धस्यैवेत्यर्थः। **अवश्यंभाविमरणं** मरणाव्यभिचारित्वं विरहविशेषस्य वस्तुनो वैलक्षण्यम्। **अशक्येति**। अवक्तव्यं वचनं यस्य तत्त्वम्। आदिना अतिप्रसिद्धत्वपरिग्रहः। **दूतीत्वे यथार्थवादित्वं** दूतीत्वे सत्यपि यथार्थवादित्वम्। **दुःखस्य** दूतीदुःखस्य। न चाक्षेपालंकारघटकनिषेधो वास्तवनिषेध एव, न तु निषेधाभास इति वाच्यम्।

आक्षेपालंकारे निषेधाभासस्यैव वैचित्र्याधायकत्वाद् इत्यभिप्रायेणाह—**नचेति**। अयमाक्षेपालंकारघटकनिषेधः॥

## विज्ञप्रिया

उक्तिनिषेधमाह—**विरहे** इति। अत्रोक्तस्य क्षपाक्षपणासामर्थ्यस्य उक्तेरेव निषेधः। अत्रेति। अत्र कथनस्योक्तस्यैवेत्यत्र उच्चारितस्यैवेत्यर्थः। अत्र तद् व्यङ्ग्यदुःखातिशयस्य विशेषस्य प्रतिपत्तिः।

उक्तश्लोकचतुष्टये उक्तरूपविशेषप्रतिपत्तिं दर्शयति—**अत्र प्रथममिति**। तृतीये दूत्या इत्येव सम्यक् पाठः। तथा च दूतीरेव सतीत्यर्थः। ननु 'कर्त्तव्यं प्रत्यहं स्नानं नतु रात्रौ कदाचन' इत्यत्र विहितस्य प्रत्यहस्नानस्य रात्रौ निषेधवद् विधिनिषेध एवाऽयम्।

स च नालङ्कारतां भजत इत्याशङ्कते—**न** चेति। समाधत्ते—अत्रेति। वास्तवनिषेधस्यैवानलङ्कारत्वम्; निषेधाभासस्य तु अलङ्कारत्वमेवेति भावः।

## लोचन

**"क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥"**
**"मन्दः कवियशः प्रेप्सुर्गमिष्याम्युपहास्यताम्।**
**प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः॥"**

"अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्थे वास्ति मे गतिः ।।"

अत्र पद्यद्वयोक्तनिषेधस्य तृतीयपद्येन विधाने निषेधस्याभासता एव ।

## कुसुमप्रतिमा

कथनस्य निषेधे लक्ष्यमाण विरह इति । नायक प्रति विरहिणीसख्या उक्तिरियम् । तन्वङ्गी कृशाङ्गी, तव विरहे, कथं केन प्रकारेण क्षपां रात्रिं क्षपयत अतिवाहयतु । दारुणव्यवसायस्य निर्द्दयत्वेन प्रवासात्मकभयङ्करकर्म्मणः, ते तव पुरः अग्रतः भणिं तेन तदवस्थाकथनेन किं फलम्, अपि तु किमपि नेत्यर्थः ।

अत्रेति । विवक्षिते नायिकाविरहविषये दुःखातिशयरूपविशेषप्रतिपत्तये कथनस्यैव तद्विषयकोक्तेरेव निषेधः, "भणितेन किम्" इत्यनेनेति शेषः । अतएवाक्षेपोऽलङ्कार इति भावः ।

नन्वेषुदाहरणेषु कुत्र कीदृशविशेषप्रतीतिरित्याह प्रथमेति । प्रथमोदाहरणें "स्मरशरशत्" इत्यादौ । द्वितीये "तव विरहे" इत्यादौ, अशक्यवक्तव्यत्वादि वस्तु अशक्यवक्तव्यत्वादिरुपी विशेषः प्रतीयत इति पूर्वेणान्वयः । एवमुत्तरयोरपि । तृतीये "बालअ ! णाह" इत्यादौ, अदूतीत्वं वक्तृनायिकाया दूतीभिन्नत्वे, यथार्थवादित्वं विशेषः । चतुर्थे "विरहे तव तन्वङ्गी" इत्यादौ विरहिण्या नायिकाया दुःखस्यातिशयी विशेषः ।

ननु यथार्थ एवायं निषेधः किं न स्यात्, तथा च लक्षणे निषेधामास इत्युक्तिरनुपपन्नेत्याह न चेति । अयं "स्मरशरशतविधुरायाः—" इत्यादौ प्रतीयमानः विहितः "अप्रधान्यं विधेर्यत्र" इत्यादिना लक्षितो वास्तविक एवेत्यर्थः निषेध इति "वाच्यम्" न चेत्यर्थः । अत्र एषूदाहरणेषु निषेधस्य "किं वदामि" इत्यादिना प्रतीयमानस्येति तात्पर्य्यम्, आभासत्वात् भङ्गीमात्ररूपत्वात्, तथैव प्रतीतेरित्याशयः ।

## विमला

विरहे इति ।—वर्षाऽऽरम्भे प्रवसन्तं नायकं प्रति सख्या उक्तिरियम् । तव विरहे तन्वङ्गी—कृशाङ्गी, कथं क्षपां—रात्रिं, क्षपयतु ।—अपगमयतु ? रात्रियापनमशक्यमिति भावः, अथवा दारुणव्यवसायस्य—निष्ठुरक्रियस्य, दुरुच्छेदतत्समीपप्रापणनिश्चयस्य वा, (वर्षासु प्रियविच्छेदहेतुत्वात् व्यवसायस्य निन्दा) तव पुरतः,—अग्रतः, भणितेन—उक्तेन, किम् ?—उक्तिः निरर्थिकेति भावः ।

अत्रेति ।—पूर्वार्द्धे तत्समीपं त्वं याहि इति वक्तुमिष्टं वस्तु तस्य व्यञ्जकनिषेधेनैवार्थतो निषेधः सिध्यति इति न लक्षणगमनानुपपत्तिः इत्यभिप्रायेणाह, कथनस्यैवेति ।—पूर्वार्द्धस्यैवेत्यर्थः । अवश्यम्भावि मरणं—मरणाव्यभिचारित्व, विरहविशेषस्य वस्तुनो वैलक्षण्यम् । अशक्येति ।—अवक्तव्यं वचनं यस्य तत्त्वम्, आदिना अतिप्रसिद्धत्वपरिग्रहः । दूतीत्वे यथार्थवादित्वं—दूतीत्वे सत्यपि यथार्थवादित्वम् । चतुर्थे इति—चतुर्थोदाहरणे, दुःखस्य, नायिकाया इति शेषः, दूतीदुःखस्य वेत्यर्थः । न चाक्षेपालङ्कारघटकनिषेधो वास्तवनिषेध एव, न तु निषेधाभास इति वाच्यम्, आक्षेपालङ्कारे निषेधाभासस्यैव वैचित्र्याधायकत्वात् इत्यभिप्रायेणाह, न चेति ।—अयम्—आक्षेपालङ्कारघटकनिषेधः, विहितनिषेधः,—वास्तवनिषेधः, कथनस्येति शेषः, तथात्वे दूत्या आगमनस्य निष्प्रयोजनत्वात्, निषेधाभासस्यैव वैचित्र्याधायकत्वादिति बोध्यम् ।

## लक्ष्मी

वस्तुकथननिषेधात्मतामुदाहरति—**विरह** इति। नायकान्तिके नायिकासख्याः कथनमिदम्। तन्वङ्गी क्षीणशरीरा 'तव विरहे विश्लेषे कथं केन विधिनां क्षपां तु पक्षरात्रिंय व्यपनयतु दारुणव्यवसायस्य परप्राणान्तकारकत्वेन वियोगात्मकभयङ्करकर्मणः, ते तव पुर अग्रे भणितेन तत्स्थितिप्रतिपादनेन किं फलम्, अपि तु न किमपीत्यर्थः।

**अत्रेति**। विवक्षिते नायिकावियोगविषये क्लेशातिशयरूपविशेषावगमाय, कथनस्यैव विवक्षितविषयकाभिधानस्यैव निषेधः, 'भणितेन किम्' इत्यनेनेति शेषः, अत एवाक्षेप इत्याशयः।

इत्थं चतुर्भेदानुदाहृत्य तत्र यथाक्रमं बोद्धव्यविशेषमुपपादयितुमाह—**प्रथमेति**। प्रथमोदाहरणे 'स्मरशरशत' इत्यादौ। विशेषः 'अवश्यवक्तव्य' इति शेषः। द्वितीये 'तव विरहे' इत्यादौ अशक्यवक्तव्यादि 'मरिष्यति' इत्येवं वस्तु प्रतीयते इति पूर्वेण सम्बन्धः। एवमग्रयोरपि। तृतीये 'वालअ ! णाहं' इत्यादौ दूतीत्वे सत्यपि इति शेषः, यथार्थवादित्वं विशेषः प्रतीयते। चतुर्थे 'विरहे तव' इत्यादौ वियोगिन्या दुःखस्य क्लेशस्यातिशयो विशेषः। नायिकाया नायकविरहे रात्र्यपगमं दुश्शकमित्यतिप्रसिद्धत्वरूपः 'प्रतीयते' इति शेषः।

ननु 'कर्त्तव्यं प्रत्यहं स्नानं न तु रात्रौ कदाचन' इत्यत्र विहितप्रत्यहस्नानस्य रात्रौ निषेधवत् विधिनिषेध एव किं न स्यात्, एवञ्च कथमलङ्कारत्वमित्याशङ्कते—**न चेति**। अयं 'स्मरशत' इत्यादौ व्यज्यमानः विहितनिषेधः 'येन चमत्कृतिर्न स्यात्' इति शेषः। विहितनिषेधोदाहरणं यथा—

> **'बाणेन हत्वा मृगमस्य मात्रा निवार्यतां दक्षिणमारुतस्य।**
> **इत्यर्थनीयः शबराधिराजः श्रीखण्डपृथ्वीधरकन्दरस्थः॥'**
> **'यद्वा मृषा तिष्ठतु दैन्यमेतन्नेच्छन्ति वैरं मरुता किराताः।**
> **केलिप्रसङ्गे शबराङ्गनानां स हि श्रमग्लानिमपाकरोति॥'**

अथ प्रथमश्लोकोक्तस्य द्वितीयपादेन निषेधो यथार्थ एव। एवञ्च प्रकृते किमिति दर्शयति—**अत्रेति**। उक्तोदाहरणेषु 'किं वदामि' इत्यादिना व्यज्यमानस्येति भावः, आभासत्वात् आभासमात्ररूपत्वात्, तथैव प्रतीतेरिति भावः। नचैवं निषेधविधिना साङ्कर्यं स्यादितिवाच्यम्।

यथा—'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।'

इत्यादि पद्यद्वयोक्तस्य निषेधस्य 'अथवा कृत.' इति तृतीयपद्येन विधाने निषेधस्याभासता एव न तु साङ्कर्यम्, तथैव प्रकृतेऽपि साङ्कर्याभावात्।

## रुचिरा

**'तव**। **विरहे** वियोगे। **तन्वङ्गी** कृशोदरी। **कथम्**। **क्षपां** रात्रिम्। **क्षपयतु** व्यपनयतु। अथवा-**दारुणव्यवसायस्य** दारुणः परप्राणान्तकारकत्वेन निष्ठुरो व्यवसायो निश्चयो यस्य तादृशस्य। **ते** तव। **पुरः**। भणितेन कथनेन। **किम्** दूत्या नायकं प्रत्युक्तिरियम्। यत्तूक्तं वर्षाऽऽरम्भे प्रवसन्तं नायकं प्रति सख्या वचनमिद'मिति, तन्न; तादृशप्रकरणोपयोगिनोऽर्थस्यानुपलम्भात्॥ २२३॥'

उदाहृतमर्थं निर्दिशति—**अत्रेत्यादिना**।

**अत्र । कथनस्य** विवक्षिताभिधानस्य । **एव । निषेधः** । अयम्भावः 'कथं क्षपयतु क्षपा'मित्यनेन 'तत्स-विधेयऽवश्यं रात्रौ त्वया गन्तव्य'मित्यर्थस्य प्रत्यायनम्, अतोऽस्य कथनम् । अनन्तरं तस्यैव 'पुरस्ते' इत्यादिना प्रतिषेधः । अयं चाभासमात्रेण ।

एवं चतुरो भेदानुदाहृत्य तत्र क्रमेण बोद्धव्यं विशेषं निर्दिशति-**प्रथमोदाहरणे** 'स्मरशर...' इत्यादावित्यर्थः । **'सख्याः । अवश्यम्भावि । मरणम् ।' इति । विशेषः** 'अशक्यवक्तव्य' इति शेषः । **प्रतीयते । द्वितीये** 'तव विरह' इत्यादौ । **अशक्यवक्तव्यत्वादि** अशक्यं यद्वक्तव्यत्वं तदादिर्यस्य तत् 'मरिष्यती'त्येवम्भूतं वस्तु । 'प्रतीयत' इति शेषः । **तृतीये** 'बालअ' इत्यत्र । **दूतीत्वे** 'सत्यपि' इति शेषः । **यथाऽर्थवादित्वम्** 'विशेषः प्रतीयते' इति शेषः । **चतुर्थे** 'विरहे' इत्यत्र । **दुःखस्य । अतिशयः** 'नायिकाया' इति शेषः । 'विशेषः प्रतीयते' इति शेषः । अयम्भावः—नायिकाया नायकविरहे रात्र्यपयामनं दुःशकमित्यतिप्रसिद्धत्वरूपो विशेषः प्रतीयते । इति । नच **'निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ।'** इत्याद्युक्तदिशा वास्तवनिषेध आक्षेपघटक इति न चिन्त्यम्, तस्य वैचित्र्यानाधायकत्वात् इत्यभिप्रायेणाह—**न । च । अयम् । विहितनिषेधः** । 'येन वैचित्र्यन्न स्यात्' इति शेषः । कुत इत्याह-**अत्र । निषेधाभासत्वात्** निषेधस्याभासमात्ररूपत्वात् ।

**अनिष्टस्य तथार्थस्य विध्याभासः परो मतः ॥ ६५ ॥**

तथेति पूर्ववद्विशेषप्रतिपत्तये । यथा—

**'गच्छ गच्छसि ! चेत्कान्त पन्थानः सन्तु ते शिवाः ।**
**ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥'**

अत्रानिष्टत्वाद मनस्य विधिः प्रस्खलद्रूपो निषेधे पर्यवस्यति ।

विशेषश्च गमनस्यात्यन्तपरिहार्यत्वरूपः प्रतीयते ।

---

## विवृतिः

प्रकारान्तरेणाक्षेपालंकारमाह—**अनिष्टस्येति** । परो निरुक्तरूपादन्य आक्षेप इत्यनुषज्यते ॥ **प्रस्खलद्रूपो**ऽत्यन्तमसंभवन् ॥

## विज्ञप्रिया

अन्यविधामाक्षेपालङ्कारमाह—**अनिष्टस्येति** । अनिष्टस्यार्थस्य विध्याभासो निषेधबोधको विधिस्तथा पूर्वोक्तवत् विशेषप्रतिपत्तिपत्तये चेत्तदाऽपर आक्षेपालङ्कार इत्यर्थः ।

'गच्छ गच्छसि चेत्कान्त' इत्यत्र जन्मकथनान्मरणं व्यङ्ग्यम् । **प्रस्खलद्रूप** इति—अविधीभवद्रूप इत्यर्थः । विशेषप्रतिपत्तिं दर्शयति—**विशेषश्चेति** ।

## लोचन

एवमीषन्निषेधाभासाश्रयमेकमाक्षेपमुक्त्वा तद्रविपरीतमनिष्टविध्याभासं द्वितीयमाह—**अनिष्टस्येति** । **अयमर्थः** । यथेष्टस्य निषेधस्तथानिष्टस्य विधिरनुपपद्यमान आभासे पर्यवसायी द्वितीयाक्षेपालङ्कारबीजमिति ।

अत्यन्तपरिहार्यरूपः ममापीत्यादिना द्वितीयार्धेन व्यञ्जितः । यदत्र—

**यातु यातु किमनेन तिष्ठता**
**मुञ्च मुञ्च सखि सादरं वचः ।**
**खण्डिताधरकलङ्कितश्रियं**
**शक्नुमो न नयनैर्निरीक्षितुम् ॥'**

इति राघवानन्दैरुदाहृतं तदसमञ्जसम् । अत्रोदाहरणवत् सर्वथा न यात्विति तथाविधापराधकारे नायिकाया निषेधाभासस्य मूढानामपि बुद्ध्यनारोहात् ।

## कुसुमप्रतिमा

अन्वविधामाक्षेपालङ्कारमेव लक्षयति अनिष्टस्येति । अनिष्टस्य अर्थस्य विषयस्य, तथा पूर्ववत् विशेषप्रतिपत्तये, विध्यभासः वस्तुनो न विधिः किन्तु विधिवत् प्रकाशो विधिवदङ्गीकरणम्, परः उक्तादन्यः अन्यविध आक्षेपो मतः । एतत्पक्षे तु धाक्षेपोऽभिप्रेतनिषेधादाकर्षणम्, अथवा आक्षेपो निषेध्येऽपि विषये विधेः समर्पणमितिव्युत्पत्तिः ।

गच्छेति । विदेशगमनायानुमतिं प्रार्थयन्त कान्तं प्रति कान्ताया उक्तिरियम् । हे कान्त ! तच्चेद्विशेषं गच्छसि, गच्छ, ते तव पन्थानः शिवा मङ्गलमयाः सन्तु । किन्तु भवान् यत्र गती भविष्यति, ममापि तत्रैव जन्म भूयात् । तथा च तव गमने विरहयातनया मम मरणस्यावश्यम्भावित्वात् मरणान्तरञ्चज्ञानिनीजनस्य पुनर्जन्मनोऽप्यवश्यम्भवात् तच्च पुनर्जन्म पुनर्विरहयातनाया असम्भवार्थं भवदन्तिक एव भूयादित्यात्मानं प्रत्याशीर्वादः ।

नन्वत्र कथं विधेयाभास इत्याह अत्रेति । विधिर्गच्छेति गमनविधिः, प्रस्खलद्रूपो भ्रश्यत प्रवर्त्तनशक्तिः । तथा च बलवदनिष्टाननुबन्धीष्टसाधन नाम विधिः, तस्य शशिश्चोद्देश्यविषये नियोज्यस्य प्रवर्त्तना नाम । एवञ्चक्तोदाहरणे कान्तगमनस्य निजमरणसाधनतया अत्यन्तानिष्टत्वात् गच्छेत्यस्य विधित्वमेव नास्तीति तस्य प्रवर्त्तनाशक्तिरपि स्खलितैव । तेन गच्छेत्ययं निषेध एवेत्याशयः ।

अथ तथाप्यत्र कीदृशस्य विशेस्य प्रतिपत्तिरित्याह विशेषश्चेति । गमनस्य विदेशेकान्तगमनस्य, अत्यन्तपरिहार्य्यत्वरूपः सर्वथैव परित्याज्यत्वरूपः, प्रतीयते आत्मजीवनस्य सर्वथैवेष्टत्वात् गमनपरिहारे च तत्स्थितिसम्भवादिति भावः ।

## विमला

प्रकारान्तरेणाक्षेपमाह, अनिष्टस्येति ।—अनिष्टस्य—अनभिमतस्य, अर्थस्य—विषयस्य, तथा—विशेषप्रतिपत्तये इत्यर्थः, विध्याभासः,—विधिरूपेण प्रकाशः, किञ्चित् सत्यवत् प्रतिभास इत्यर्थः, परः,—निरुक्तरूपात् अन्यः, आक्षेप इत्यनुषज्यते, मतः । अत एव अलङ्कारसर्वस्वकृताऽप्युक्तम्—"अनिष्टविध्याभासश्च" इति सूत्रयित्वा "यथा इष्टस्य इष्टत्वादेव निषेधः अनुपपन्नः, एवम् अनिष्टस्यापि अनिष्टत्वादेव विधानं नोपपद्यते । तद्विक्रयमाणं प्रस्खलद्रूपकत्वात् निषेधे पर्य्यवस्यति; ततश्च विधेरुपकरणीभूतो निषेध इति विधिना अर्थ निषेधः आनिष्टविशेषपर्य्यवसायी निषेधाशरणादाक्षेपः" इति ।

गच्छति ।—हे कान्त ! गच्छसि चेत् गच्छ, ते—तव, पन्थानः शिवाः,—शुभदाः, सन्तु—भवन्तु, यत्र भवान् गतः, स्यादिति शेषः, ममापि तत्रैव जन्म भूयात् तव गमने मम मरणं निहितं भविष्यति, ततश्च पुनर्जन्म स्यात् इत्यर्थः । ["गतः" इत्यत्र "भाव्यर्थो भूतवत् अङ्गीक्रियते" इति न्यायात् भूते निष्ठा] ।

अत्रेति ।—प्रस्खलत्—असङ्गच्छमानं, रूपं यस्य तथाविधः, अत्यन्तम् असम्भवन् इत्यर्थः, पर्य्यवस्यति—परिणमति । अयंभावः,—कान्तस्य प्रस्थानमात्मनोऽनिष्टमपि काचित् तस्य अनिराकरणद्वाराऽनुजानातीव, न चास्यानुज्ञापनरूपोविधिः प्रस्थाने अनभिमतत्वात्, तस्मात् तथाऽनुज्ञापनं प्रस्खलद्रूपत्वेन निषेधं पर्य्यवसाययति । प्रयोजनञ्च अत्र अनभिमतस्य प्रस्थानस्यासंविज्ञानपदनिर्बन्धमत्यन्तपरिहार्य्यत्वप्रतिपादनम् इति ।

## लक्ष्मी

उक्तालङ्कारं प्रकारान्तरेण लक्षयति—अनिष्टस्येति। अनिष्टस्य अनभिमतस्य अर्थस्य विषयस्य तथा पूर्ववत् विशेषप्रतिपत्तये विध्याभासः विरोधाभासो न तु वास्तविकत्वम्, परः कथितादन्यः अन्यविधः आक्षेपस्तन्नामालङ्कारो मतः। अस्मिन् कल्पे आक्षेपो निषेध्येऽप्यर्थे विधेः समर्पणम् इति व्युत्पत्तिः, एवञ्च स्फुटमनयोर्विध्याभासः। उक्तञ्चालङ्कारसर्वस्वकृताऽपि 'यथेष्टस्येष्टत्वादेव निषेधोऽनुपपन्नः, एवमनिष्टस्य अनिष्टत्वादेव विधानं नोपपद्यते, तत्क्रियमाणं प्रस्खलद्रूपकत्वात् विध्याभासे पर्यवस्यति' इति।

तथेत्यस्य दुर्बोधतां निराकरोति—**तथेति**। विशेषप्रतिपत्तये वैलक्षण्येन बोधनायेत्यर्थः।

उदाहरति—**गच्छेति**। प्रवासाय सम्मतिं याचयन्तं प्रियं प्रति प्रियाया उक्तिरियम्। हे कान्त हे प्रिय ! चेद् यदि (त्वं विदेशं) गच्छिसि व्रजसि (तदा) गच्छ व्रज, ते तव पन्थानो मार्गाः शिवाः कल्याणमयाः सन्तु भवन्तु। किन्तु भवान् यत्र गतः प्राप्तः स्यादिति शेषः मम मन्दभागिन्या अपि तत्र एव नान्यत्रेति भावः, जन्म उत्पत्तिर्भूयात्। तथा च तव गते वियोगक्लेशेन मम प्राणवियोगोऽवश्यं भविष्यति, तथा तदनन्तरं—

'यं यं वापि स्मरन् भावं त्यज्यन्ते च कलेवरम्। तं तमेवैति कौन्तेय ! सदा तद्भावभावितः'

इत्युक्तदिशा पुनर्जन्म तव विरहव्यथाया निवारणार्थं तव समीप एव भूयादित्यात्मानं प्रत्याशीः शंसनम्।

अत्र विध्याभासः कथमित्युपपादयति—**अत्रेति**। अनिष्टत्वात् अनभिमतत्वात्, गमनस्य गच्छेत्यनुज्ञाया इत्याशयः, विधिः गच्छेतिगमनविधिः, प्रस्खलद्रूपः नितरामसम्भवन्, निषेधे 'भवता कथमपि न गन्तव्यम् अन्यथा मरणमवश्यम्भावि' इत्येवंप्रतिषेधप्रकाशने, पर्यवस्यति परिणमति।

विशेषप्रतिपत्तिरत्र कीदृशीत्युपपादयति—**विशेषश्चेति**। गमनस्य प्रवासे प्रियगमनस्य, अत्यन्तपरिहार्यत्वरूपः सर्वथैव परित्याज्यत्वरूपः, प्रतीयतेऽवगम्यते स्वजीवनस्य सर्वथैवाभिलषितत्वात् गमनपरित्यागे च तत्स्थितिसम्भवादित्याशयः।

## रुचिरा

अस्यैव प्रकारान्तरं लक्षयति—१४९ **तथा** विशेषप्रतिपत्तये। **परोऽन्य** आक्षेपः। **अनिष्टस्यानभिमतस्य**। **अर्थस्य** विषयस्य। **विध्याभासो** विधेराभासः नतु वास्तविकत्वम्। **मतः**।

तथेत्यस्य दुर्बोधता परिहरति—**तथेत्यादिना** स्पष्टम्।

उदाहरति—**यथा**—'हे **कान्त** ! **चेत्**। **गच्छसि** प्रयासि 'परदेश'मिति शेषः। तर्हि-**गच्छ**। **ते तव**। **पन्थानो** मार्गा गन्तव्याः प्रदेशा इति यावत्। **शिवाः**। **सन्तु**। **यत्र**। **भवान्**। **गतः** प्राप्तः 'स्या'दिति शेषः। **तत्र**। **एव** नान्यत्रेति। भावः। **मम**। **अपि**। **जन्म**। **भूयात्**। प्रवसन्तं नायकं प्रत्युक्तिरियम्। दण्डिनः पद्यमिदम् ॥२२४॥'

उदाहृतमर्थं निर्दिशति—**अत्र**। **अनिष्टत्वादनभिमतत्वात्**। **गमनस्य** 'गच्छे'त्यनुज्ञाया इति भावः। **विधिः**। **प्रस्खलद्रूपोऽ**त्यन्तमसम्भवन्। **निषेधे न** 'न त्वया गन्तव्यं, गते त्वयि मम मरणं निश्चितमेव' इत्येवं प्रतिषेधसूचने। **पर्य्यवस्यति** परिणामति। **गमनस्य**। **अत्यन्तपरिहार्य्यत्वरूपः**। **विशेषः**। **च**। **प्रतीयते**।

**विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते।**
**उक्तानुक्तनिमित्तत्वाद्र द्विधा सा परिकीर्तिता ॥ ६६ ॥**

विना कारणमुनिबध्यमानोऽपि कार्योदयः किंचिदन्यत्कारणमपेक्ष्यैव भवितुं युक्तः। तच्च कारणान्तरं क्वचिदुक्तं क्वचिदनुक्तमिति द्विधा। यथा—

**'अनायासकृशं मध्यमशङ्कतरले दृशौ।**
**अभूषणमनोहारि वपुर्वयसि सुभ्रुवः ॥'**

अत्र वयोरूपनिमित्तमुक्तम्। अत्रैव 'वपुर्भाति मृगीदृशः' इति पाठेऽनुक्तम्।

---

## विवृतिः

विभावनालंकारमाह—विभावनेति।

अनुमानमिति। तच्चानुमानं स्वार्थपरार्थ भेदेन द्वेधा। यत्र ममायण वगतोऽर्थ इति स्वपरामर्शस्य निश्चयः स्यात्तत्स्वार्थम् यत्र परेणानवगतस्य वस्तुनः प्रतिपादनात्पर प्रत्ययकत्वं तत्परार्थम्। द्विविधमप्येकोऽलंकार इति विमर्शिन्या व्यक्तम् ॥

हेतु प्रसिद्धकारणम् ॥ किंचिदप्रसिद्धम् ॥ **वयसि** यौवने। 'वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके' इति कोषः ॥

## विवृतिपूर्तिः

**विभावनेति**। विभाव्यते विचार्यते हेतुरस्यामिति विभावना। बाहुलकादधिकरणे युच्। विशिष्टा कारमनिरपेक्षा भावना कार्योत्पत्तिर्यत्रेति वा। अत्र विशेषः कुवलयानन्दे—'हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता। अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः ॥' 'कार्योत्पत्तिस्तृतीया स्यात्सत्यतिप्रतिबन्धके। नरेन्द्रानेव ते राजन्दशत्यसिभुजङ्गमः ॥' 'अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना। शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम् ॥' विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावना। शीतांशुकिरणास्तन्वि! हन्त संतापयन्ति ताम् ॥' 'कार्यात्कारणजन्मापि दृष्ट काचिद्विभावना। यशः पयोराशिरभूत्करकल्पतरोस्तव ॥' इति। तत्र **विश्वेश्वरपण्डिताः**—यत्त 'अकारणात्' इत्यादि, तच्चिन्त्यम्। कारणं विना कार्योत्पत्तिरिति भेद व तदन्तर्भावात्। अधिकं तु **रसगङ्गाधरादौ** द्रष्टव्यम्। वेदेऽपि विभावना दृश्यते—

**अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स श्रृणोत्यकर्णः।**
**स वेत्ति वेद्यं नहि तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥"** (श्वेताश्वतरो. ३/१९)

## विज्ञप्रिया

विभावनालङ्कारमाह—**विभावनेति**। हेतुं हेत्वाभासम्। कार्योत्पत्तिस्तदीयकारणविशेषादिवाच्यम्। उक्तानुक्तेतिनिमित्तं कार्योत्पत्तेः। व्याचष्टे—**विना कारणमिति**।

**अनायासेति** । मध्यो मध्यभागः । अशङ्के शङ्कयैव तारतम्यौचित्यात् ।

## लोचन

अस्य चाक्षेपस्य विरोधाश्रयत्वेन तदनन्तरं विरोधमूलालङ्कारप्रदर्शनं प्रक्रियते—**विभावनेति** । उच्यते चमत्कारप्रतिपत्तये कविना निबध्यते यस्य कस्यचित्कारणस्याभावं दर्शयित्वेत्यर्थः । एवमन्येषु एवंविधस्थलेषु सूत्रार्था नेयाः । तत्त्वतः सर्वथाकारणाभावे कार्योत्पत्तेरविद्यमानत्वात् । **उक्तेति** । सा विभावना उक्तनिमित्ता अनुक्तनिमित्ता चेत्यर्थः ।

## कुसुमप्रतिमा

हेतुघटितसालङ्कारस्यैवात्र प्रकृतत्वात् विशेषातिदिष्टं न च आक्षेपालङ्कारेण तद्बाधाया असम्भवादभाव-सम्बन्धेन हेतुघटितमेव विभावनालङ्कारं निरूपयति विभावनेति । हेतुं प्रसिद्धकारणं विना, यत् कार्य्यस्योत्पत्तिरुच्छते, स विभावना नाम अलङ्कार उच्यत इत्येवान्वयः । तथा च—

प्रसिद्धकारणभावे कार्य्योत्पत्तिप्रतीतिर्विभावनेति सरलार्थः ।

सा च विभावना उक्तनिमित्तत्वात् उक्ताप्रसिद्धकारणत्वात्, अनुक्ताप्रसिद्धिकारणत्वात्वाच्च द्विधा द्विप्रकारा परिकीर्त्तिता । यत्र कारणान्वयोः नञादिस्तत्र विभावना, यत्र तु कार्य्यान्वयो नञाजिस्तत्रविशेषोक्तिरित्य-नोर्भेदः । यद्वा विभावनाविशेषोक्तिविरोधानां परस्परभेदो विरोधप्रकरणे वृत्तावेव वक्ष्यते ।

विभाव्यते प्रसिद्धकारणाभावात् विशेषेण चिन्त्यते कारणं यस्यामिति इनन्तभूधातोः "ईशिश्रन्यासि—" इत्यादिना अधिकरणे बाहुलकाद्युः ।

ननु कारणाभावे कथं कार्य्योत्पत्तिरूपपद्यत इत्याह विनेति । उपनिबध्यमानः अभिधीयमानः, कार्य्यस्य उदय उत्पत्तिः । अन्यदप्रसिद्धम् । युक्त इति । कार्य्योत्पत्त्या यस्य कस्यचित् कारणस्य अवश्यमेवापेक्षणीयत्वात् अन्यथा कार्य्यत्वमेव न स्यादिति भावः । कारणान्तरमप्रसिद्धकारणम् ।

तत्र उक्तकारणे उदाहरति अनायासेति । कस्याश्चिद्गुणवत्या वर्णनमिदम् । वयसि यौवनकाले, शोभने भृङ्गीयस्यास्तस्याः सुभ्रुवो रमण्याः, मध्यं कटिदेशः अनायासम् आयासेन परिश्रमेण रहितमपि कृशं क्षीणम्, दृशी चक्षुषी, अशङ्के शङ्काहीने तथापि तरले चपले, तथा वपुर्देहः, अभूषणमलङ्काररहितं तथापि मनोहरि मनोहरं जातमिति शेषः । "वयः पक्षिणि बाल्यादौ यौवने न नपु सकम्" इति मेदिनी ।

अत्र अङ्गस्य कृशत्वं प्रति आयासः, दृशीस्तरलत्वं प्रति शङ्काः, वपुर्षा मनोहारित्वं प्रति च भूषणं प्रसिद्धं कारणम् । तेषाच्च आयासादीनामभावेऽपि कृशत्वादीनां कार्य्याणामुत्पत्तेर्विभावना । सा चात्र मालारूपा त्रयाणा-मुपनिबन्धनात् ।

केवलरूपा यथा रघुवंशे—

**"स प्राप हृदयवस्त मणिस्पर्शनिमीलितः ।**
**अपयोधरसंसर्गां प्रियालिङ्गननिर्वृतिम् ॥"**

अत्र पयोधरसंसर्गरूपकारणाभावेऽपि आलिङ्गननिर्वृत्तिरूपकार्य्योत्पत्तिर्विभावना ।

अत्रेति । वयोरूपं यौवनरूपं निमित्तं कृशत्वादीनामप्रसिद्धं कारणं यौवनेनैवकटिकृशत्वादीनां जननदिति भाव: ।

अनुक्तकारणे उदाहर्त्तुमाह अत्रैवेति । उक्तोदाहरण एवेत्यर्थ: । पाठे चतुर्थचरणस्थाने इति शेष:, अनुक्तं निमित्तमिति पूर्वेणान्वय: । तथापि योग्यत्वादेव कृशत्वादिकं प्रति तादृशं वयोरूपमेव कारणमुपलभ्यते इति बोध्यम् ।

## विमला

विभावनामाह, विभावनेति ।—हेतुं—प्रसिद्धकारणं, विना यत् कार्य्यस्य उत्पत्ति:, असौ विभाव्यते—समालोच्यते कारणं विना कार्य्यमस्यामिति विभावना, (बाहुलकादधिकरणे युच्) उच्यते । सा उक्तनिमित्ता अनुक्तनिमित्ता चेति द्विधा परिकीर्त्तिता । तथोक्तम्—"इत्यञ्च विशेषोक्तिवत् उक्तानुक्तनिमित्तभेदात् द्विधैव" इति

विनेति ।—किञ्चित्—अप्रसिद्धमित्यर्थ: ।

अनायासेति ।—वयसि—यौवने, ("वय: पक्षिणि बाल्यादौ वयो यौवनमात्रके" इति कोष:) सुभ्रुव:,—नायिकाया: इति भाव:, मध्यं—मध्यावयव:, कटिदेश इत्यर्थ:, अनायासम्—आयासरहितम्, अथ च कृशं, दृशौ—नेत्रे, अशङ्के—शङ्कारहिते, अथ च तरले—चञ्चले, तथा वपु:,—शरीरम्, अभूषणम्—अनलङ्कारम्, अथ च मनोहारि, भवतीति शेष: । अत्र कृशत्वे हेतुमायासं, तारल्ये हेतुं शङ्कां, मनोहारित्वे हेतुं भूषणं विना कार्य्यञ्च कृशत्वस्य, तारल्यस्य, मनोहारित्वस्य चोत्पत्ति: । यथा वा—"असम्भृतं मण्डनभङ्ग्यष्टेरनासवाख्यं करमं मदस्य । कामस्य पुष्पव्यतिरिक्तमस्तत्रं बाल्यात् परं साऽथ वय: प्रपेदे ॥" अत्र द्वितीयचरणे आसवाभावेऽपि मदोक्त्या चोक्तनिमित्ता विभावनेति सर्वस्वकारादिमतं दूषयद्भि: रसगङ्गाधरकृद्भिरुक्तम् "विरोधमूलत्वादेतदाद्यलङ्काराणां प्रकृते च यौवनस्य मदकारणताया: निबद्धत्वादासवयौवनयो: मंदं प्रति व्रीहियवयो: यागं प्रतीव निरपेक्षकारणत्वावगमात् विरोधास्फुरणात् विभावनैवेयं न भवितुमर्हति, कुत: तद्विशेष:? इति तच्चिन्त्यम्; लोकप्रसिद्धकारणताकस्य मदस्य व्यतिरेकेऽपि यौवनान्मदोत्पत्त्यभिधाने विरोधस्य प्रतिभाने बाधकाभवात्; अन्यथा द्वयोर्भिरपेक्षकारणत्वप्रतीतौ योवनोन्मदोत्पत्तौ चमत्कारानुपपत्ते:, आलोकपरामर्शव्यतिरेकेण धूमपरामर्शादनुमित्यनुत्पत्त्यादिवत् अनुपपत्त्यभावात् । किञ्चैवं "यदवधि विलासभवनं यौवनमुदियाय चन्द्रवदनाया: । दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते ॥" इति भवदुक्तोदाहरणमपि दुर्घटं, यौवनावधि हृदयदाहोक्तौ दाहे यौवनहेतुत्वस्यापि श्लोकात् प्रतीत्यविशेषात्, कारणशब्देनाभिधानस्याकिञ्चित्करत्वात्; तदुक्तं कुसुमाञ्जलावाचार्य्यै,—"नियमस्यैवापेक्षार्थत्वात् तस्यैव च कारणार्थत्वात्" इति, तस्यात्माज्या चोक्तनिमित्ता विभावना, आश्रयणीया वा यथोक्तैवेति दिक् ।"

## लक्ष्मी

कारणयुक्तालङ्कारस्यैवेह प्रकरणत्वात् विरोधाश्रयत्वेन चाक्षेपालङ्कारेण तद्बाधाया असम्भवादभावसम्बन्धेन कारणयुक्तमेव विभावनालङ्कारं लक्षयति—**विभावनेति** । हेतुं मुख्यकारणं विना, यत् कार्यस्य उत्पत्ति: जननम् उच्यते प्रतिपाद्यते, स विभाव्यते मुख्यकारणं विना विशेषेण कारणं चिन्त्यते यस्यामिति व्युत्पत्त्या विभावनानामलङ्कार: उच्यते इत्येव सम्बन्ध: । एवञ्च मुख्यकारणसत्त्वे कार्यजननप्रतीतिर्विभावनेति फलितोऽर्थ: । सा विभावना

उक्तनिमित्तत्वात् प्रतिपादितामुख्यहेतुत्वात्, अनुक्तनिमित्तत्वात् अकथितामुख्यहेतुत्वाच्च द्विधा द्विविधा परिकीर्त्तिता कथिता ।

ननु कारणसत्त्वे कार्योदयः कथमित्याशङ्कां निराकरोति—**विनेति**। उपनिबध्यमानः प्रतिपाद्यमानः। कारणं विना यद्यपि न किमपि कार्यं समुत्पद्यते तथापि प्रसिद्धं कारणं विना यदि कविः स्वप्रतिभोन्मेषेण कार्योदयं बोधयेत् तदाऽयमलङ्कारः अन्यथा कस्यापि कारणस्याभावे कार्योत्पत्तौ स्फुरितस्य विरोधस्य प्रसिद्धातिरिक्तेन कारणेन परिहाराद्विरोधाभास एवायमिति वाच्यम्, तत्रोभयोरेव परस्परं बाध्यतया प्रतीतिः, अत्र तु कारणाभावेन कार्यमेव बाध्यतया प्रतीयते न तु कार्येण प्रमाणनिश्चितः कारणाभावोऽपि तेनोक्तदोषाभावात् ।

तत्रोक्तकारणे उदाहरति—**अनायासेति**। काञ्चित्तरुणीमवलोक्य कस्यचन विदग्धस्योक्तिरियम्। वयसि यौवनसमये 'वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदिनी, सुन्दरे भ्रुवौ यस्यास्तस्या नवयौवनायाः, मध्यं कटिभागः, अनायासं परिश्रमरहितमपि कृशं क्षीणं 'जातम्' इति शेषः। दृशौ नयने अशङ्के शङ्कारहिते तथापि तरले चञ्चले, तथा वपुः शरीरम्, आभूषणमलङ्काररहिनं तथापि मनोहारि मनोरमणीयं जातमित्यत्रापि शेषः।

अत्रोक्तं निमित्तं सूचयति—**अत्रेति**। वयोरूपं यौवनरूपं निमित्तं कृशत्वादीनाममुख्यं हेतुरुक्तम्। कृशत्वे आयासस्य, दृशोस्तरलत्वे शङ्कायाः, वपुर्मनोहारित्वे भूषणस्य च मुख्यं (प्रसिद्धं) निमित्तम्। एवञ्चायासादीनामसत्त्वेऽपि कृशत्वादीनां कार्याणां जननाद्विभावनालङ्कारः त्रयाणामिहोपनिबन्धनान्मालारूपेयम्। केवलरूपा यथा—

**'यदवधि विलासभवनं यौवनमुदियाय चन्द्रवदनायाः।**
**दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते ॥'**
**अत्र यौवनरूपनिमित्तत्वमुक्तमितिविभावना।**

अनुक्तहेतावुदाहर्त्तुमाह—**अत्रैवेति**। उक्तलक्ष्य एवेत्यर्थः। पाठे अन्तिमपादस्थाने इति शेषः। अनुक्तं निमित्तमिति पूर्वेण सम्बन्धः। अत्र कृशत्वादिकं कार्यम्प्रति अनुक्तमपि वयोरूपं कारणं योग्यत्वादवगम्यते।

## रुचिरा

विभावनां लक्षयति—१५० **यत्** यत्र। **हेतुं** कारणम्। **विना**। **कार्य्योत्पत्तिः** कार्य्यस्योत्पत्तिः। **उच्यते**। **सा**। **विभावना** विभावयति कारणं विना कार्य्यं प्रत्याययति (सम्भावयति) इति तथोक्ता, तन्नामाऽलङ्कार इति भावः। **उक्तानुक्तनिमित्तत्वादुक्तं** चानुक्तं चेति तादृशे निमित्ते यस्यां तस्या भावस्तत्त्वं तस्मात्। **द्विधा**। परिकीर्त्तिता। अयम्भावः—कारणं विना यद्यपि न किमपि कार्यं समुत्पद्यते, तथाऽपि प्रसिद्धं कारणं विना यदि कविः स्वप्रतिभोन्मेषेण कार्य्योत्पत्तिं सूचयेत् तर्हि विभावना अत्र प्रसिद्धस्यैव कारणस्य निषेधात् तत्सद्भावे पुनर्वैचित्र्यानुदयात्। इति ॥ ११९ ॥

तदेव स्वयं वृत्तिकारो विवृणोति—**विनेत्यादिना**। स्पष्टम्।

उदाहरति—**यथा**—'**सुभ्रुवः** सुन्दरे भ्रुवौ यस्यास्तस्याः। **वयसि** अवस्थायां यौवनप्रादुर्भाव इति यावत्। **मध्यमुदरम्**। **अनायासकृशमा**यासमन्तरैव कृशमिति भावः। 'जात'मिति शेषः। **दृशौ** नेत्रे। **अशङ्कतरले** शङ्कामन्तरा चञ्चले। **वपुः** शरीरम्। **अभूषणमनोहारि** भूषणपरिधानमन्तरा मनोरमणीयम् ॥ २२५ ॥' अत्रोक्तं निमित्तं सूचयन् अनुक्तनिमित्तत्वे पाठभेदं निर्दिशति—**अत्रेत्यादिना**। स्पष्टम्।

**सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा ।**

तथेत्युक्तानुक्तनिमित्तत्वात् । तत्रोक्तनिमित्ता यथा—

**'धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः ।**

**प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥'**

अत्र महामहिमशालित्वं निमित्तमुक्तम् । अत्रैव चतुर्थपादे 'कियन्तः सन्ति भूतले' इति पाठे त्वनुक्तम् ।

---

## विवृतिः

विशेषोक्त्यलंकारमाह—**सतीति** । फलाभावः फलाभावकथनम् । अत्र निमित्तं फलाभावप्रयोजकमुत्कण्ठायाः कारणं नायकाद्यभावस्तद्विरुद्धो नायकादिः कार्यमुत्कण्ठाभावः । कार्यकारणविरुद्धसद्भावमुखेन कार्याभावकारणाभावोक्तौ । विशेषोक्तिविभावनयोः शुद्धोदाहरणे क्रमेण यथा—'धनिनोऽपि स्थिरस्वान्ता यौवने धर्मतत्पराः । अनात्मश्लाघिनः शूरा भूपाला रघुवंशजाः ॥' अत्र स्थिरस्वान्तत्वामुन्मादविरुद्धं धर्मोपार्जनकारणं वार्धकं तद्विरुद्धं यौवनम् ॥

## विवृतिपूर्तिः

**विशेषोक्तिरिति** । इतोग्रे कुवलयानन्देऽसंभवः—'**असंभवोऽ**र्थनिष्पत्तेरसंभाव्यत्ववर्णनम् । को वेद गोपशिशुकः शैलमुत्पाटयेदिति ॥' अत्रोत्पाटनक्रियाया गोपशिशुकेन कर्त्रा शैलेन कर्मणा च द्रव्येण सह विरोधः । मनुष्यविशेषस्य गोपशिशुकस्य शैलोत्पाटनासंभवात् । स च भगवतः कृष्णस्य प्रभावातिशयेन परिह्रियत इति विरोधाभासस्ततो नालंकारान्तरकल्पनेति **प्रकाशानुयायिनः** ॥

## विज्ञप्रिया

विशेषोक्त्यलङ्कारमाह—**सति हेताविति** । उक्ते सतीत्यर्थः, फलाभावोऽप्युक्त इत्यर्थः । **धनिनोऽपीति** । ते वर्णनीया राजानः ।

एतदेव विशदयति—**विनेति** । इयञ्च कारणाभावेन परतन्त्रतया कार्योत्पत्तेर्विशिष्टतया भावनादन्वर्था विभावना ।

## लोचन

फलाभावः शब्देनोपनिबद्ध इत्यादि पूर्ववत् ।

इह च कार्याभाव इत्यादिग्रन्थः प्रथमपरिच्छेद एव विशदीकृतः । सङ्कर एकस्योपग्रहन्यायदोषाभावादनिश्चय इति प्रकारः ।

## कुसुमप्रतिमा

हेतुप्रकरणाद्विभावनाविपरीतत्वाच्च विलावनानिरूपणान्तरं हेतुघटितमेव विशेषोक्त्यलङ्कारं निरूपयति सतीति । हेतौ प्रसिद्धकारणे, सति विद्यमाने, फलाभावः कार्य्यानुत्पत्तिर्विशेषोक्तिर्नाम अलङ्कार उच्यत इत्यनुषङ्गः । तथा च—

प्रसिद्धकारणसत्त्वेऽपि कार्य्यानुत्पत्तिप्रतीतिर्विशेषोक्तिरित्यर्थः ।

सापि च तथा पूर्ववदुक्तनिमित्तत्वात् अनुक्तानिमित्तत्वाच्चेत्यर्थः । द्विप्रकारा परिकीर्त्तिता । विशेषेण कारणविशेषेण अप्रसिद्धकारणग्रहणेनेत्यर्थः उक्तिः कार्य्योत्पत्तिकथनमिति विशेषोक्तिः । अनया सह अतद्गुणा-लङ्कारभेदस्तु तत् प्रकरणे वृतावेष वक्ष्यते ।

उक्तनिमित्ते उदाहरति धनिन इति महामहिममशलिनस्ते पुरुषा धनिना सन्तोऽपि निरुन्मादा मत्तताविहीनाः, युवानः मत्तोऽपि न चञ्चला न चपलम्पभावाः, तथा प्रभवे प्रभुत्वसम्पन्नाः सन्तोऽपि अप्रमत्ताः प्रमादशून्या अनववानतारहिता इति यावत् ।

अत्र उन्मद चाञ्चल्य प्रसादान् प्रति यथा कर्म धन यौवन-प्रभुत्वानि प्रसिद्धकारणानि । तथा च धनादिषु सत् स्वपि उन्मादादीनां कार्य्याणामनत्पत्तेर्विशेषोक्तिः । तथा इयमपि मालरूपा पूर्ववदेव त्रशाणामुपनिबन्धनात् ।

केवलरूपा यथा—"रक्षोगृहे स्थितिर्मूलमग्निगृहौ त्वनिश्चयः ।"

अत्र अग्निशुद्धिरूपे हेतौ सत्यपि निश्चयरूपतत् कार्य्याभावाद्विशेषोक्तिः ।

अत्रेति । तथा च धीरत्वरूपमहामहिम्नवशादेव उन्मादादयो न जाता इति भावः ।

अनुक्तनिमित्ते उदाहर्त्तुमाह अत्रैवेति । धनिन इत्यादावेवेत्यर्थः । अनुक्तं निमित्तमिति पूर्वेणान्वयः । अत्रापि योग्यत्वादेव तादृशमहामहिमशालित्वरूपं कारणमुपलभ्यते ।

## विमला

विशेषोक्तिमाह, सतीति ।—हेतौ—हेतुसद्भावेऽपीत्यर्थः, फलस्य—कार्य्यस्य, अभावे, फलाभावकथने इत्यर्थः, सति विशेषोक्तिः, सा च तथा—पूर्ववत् उक्तानुक्तनिमित्तत्वादित्यर्थः, द्विधा । अत्राहुरलङ्कारकौस्तुभकाराः,—"हेतौ सत्यपि कार्य्यानुत्पत्तिः स्याद्विशेषोक्तिः" इति सूत्रयित्वा "सा च त्रेधा, अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता च" इति । न न्व तर्हि तृतीयः कथं न भेदः कविराजैः स्वीकृतः ? इति शङ्क्यम्, "अचिन्त्यनिमित्तत्वञ्चानुक्तनिमित्तस्यैव भेद इति पृथङ्नोक्तम्" इति कविराजैरेवाभिधास्यमानत्वात् ।

## लक्ष्मी

हेतुप्रस्तावाद्विभावनाविरुद्धत्वाच्च विभावनाप्रतिपादनान्तरंम हेतुयुक्तमेव विशेषोक्त्यलङ्कारं लक्षयति—**सतीति** । हेतौ मुख्यकारणे, सति उपलभ्यमाने, फलाभावः कार्यानुदयो विशेषोक्तिर्नामलङ्कार 'उच्यते' इति पूर्वतोऽनुवर्तते । एवञ्च—मुख्यकारणोपलम्भेऽपि कार्यानुदयबोधो विशेषोक्तिरिति सरलार्थः । इत्थम्भूतापीयं

तथा पूर्ववदुक्तनिमित्तत्वात् अनुक्तनिमित्तत्वाच्च द्विधा द्विविधा परिकीर्त्तिता । विशेषेण निमित्तविशेषेण अमुख्यहेतूपपादनेनेत्यर्थः उक्तिः कार्योदयप्रतिपादनमिति व्युत्पत्तिः ।

उक्तनिमित्ते उदाहरणं दर्शयति—**धनिन** इति । महान् असौ महिमा ते शालन्त इत्येवंशीलास्तादृशास्ते पुरुषाः धनिनः सन्तोऽपि निरुन्मादा उन्मादरहिताः, युवानः तरुणाः सन्तोऽपि न चञ्चलाः न चञ्चलप्रकृतयः, तथा प्रभवः प्रभुत्वयुक्ताः सन्तोऽपि अप्रमत्ताः प्रमादरहिता इत्यर्थः । अत्रोन्मादं प्रति मुख्यहेतुः धनित्वम्, चाञ्चल्यं प्रति मुख्यहेतुः युवत्वम्, प्रमादं प्रति मुख्यहेतुः प्रभुत्वमित्येवंरूपेऽपि उन्मादादिराहित्यप्रतिपादनेन तत्कार्याभावानुदयाद्विशेषोक्तिः ।

लक्ष्यं सङ्गमयति—**अत्रेति** । महामहिमशालित्वरूपनिमित्तवशादेव उन्मादादयो नोत्पन्ना इत्याशयः ।

अनुक्तनिमित्ते उदाहरणं दर्शयितुमाह—**अत्रैवेति** । धनिन इत्युदाहरण एवेत्यर्थः । अनुक्तम्, निमित्तमिति पूर्वेण सम्बन्धः । अत्रापि तादृशनिमित्तयोग्यताबलादवगम्यते ।

ननु प्रकाशकृता—'अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता च' इति प्रदर्शनेन त्रैविध्यमुक्तम्, अलङ्कारसर्वस्वकृताऽप्येमेव प्रातिपादितं तत्कथमत्र द्वैविध्यमेवोक्तमित्याशङ्कां परिहरति—**अचिन्त्येति** । **अनुक्तनिमित्तस्यैव** भेद इति तथाचानुक्तनिमित्त एवाचिन्त्यनिमित्तस्यान्तर्भावेन मया त्रैविध्यं पृथग् न दर्शितमित्याशयः ।

प्रकाशकृदचिन्त्यनिमित्तोदाहरणं दर्शयति—स इति । एकः—

**'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।**
**साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते ॥'**

## रुचिरा

विशेषोक्तिं लक्षयति—१५१ **हेतौ** कारणे । **सति** । **फलाभावः** फलस्य कार्य्यस्याभावस्तथोक्तः । तद्रूपेति भावः । **विशेषोक्तिः** । **तथो**क्तानुक्तनिमित्तत्वादित्यर्थः । **द्विधा** ॥ १२० ॥

तथेतिपदार्थं स्पष्टयति-**तथे**त्यादिना । निगदव्याख्यातम् । उदाहर्तुमाह-**तत्रे**त्यादि । स्पष्टम् । '**ते** । **महामहिमशालिनो** महान् असौ महिमा शालन्त इत्येवंशीलास्तथोक्ताः । **धनिनः** । **अपि** । **निरुन्मादा** उन्मादहीनाः । **युवानः** । **अपि** । **चञ्चलाः** । **न** । **प्रभवः** । **अपि** । **अप्रमादाः** प्रमादशून्याः । अत्रोन्मादस्य हेतोर्धनित्वस्य, चाञ्चल्यस्य हेतोर्युवत्यवस्य, प्रमादस्य हेतोः प्रभुत्वस्य च सत्त्वेऽपि उन्मादादिराहित्याभिधानेन तत् कार्य्याभावोऽभिहितः ॥ २२६ ॥' अत्र निमित्तोक्तिं निर्दिशति-**अत्रे**त्यादिना । स्पष्टम् ।

अत्रैवैकेनांशेब पाठपरिवृत्तौ द्वितीयोदाहरणं समर्थयते अत्रैवेत्यादिना । एपष्टम् ।

अचिन्त्यनिमित्तत्वं चानुक्तनिमित्तस्यैव भेद इति पृथङ् नोक्तम्। यथा—

**'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।**

**हरतापि तनुं यस्य शंभुना न हृतं बलम्॥'**

अत्र तनुहरणेनापि बलाहरणे निमित्तमचिन्त्यम्। इह च कार्याभावः कार्यविरुद्धसद्भावमुखेनापि निबद्ध्यते। विभावनायामपि कारणाभावः कारणविरुद्धसद्भावमुखेन एवं च 'यः कौमारहरः—' इत्यादेरुत्कण्ठाकारणविरुद्धस्य निबन्धनाद्विभावना। 'यः कौमार—' इत्यादेः कारणस्य च कार्यविरुद्धाया उत्कण्ठाया निबन्धनाद्विशेषोक्तिः। एवं चात्र विभावनाविशेषोक्त्योः संकरः। शुद्धोदाहरणं तु मृग्यम्।

**क्रिया क्रियाद्रव्याभ्यां यद्द्रव्यं द्रव्येण वा मिथः।**

**विरुद्धमेव भासेत विरोधोऽसौ दशाकृतिः॥ ६८॥**

---

## विज्ञप्रिया

अचिन्त्यनिमित्तरूपस्य प्रभेदान्तरं काव्यप्रकाशकृतोच्यते। तच्चानुक्तनिमित्तरूपमेवेति पृथक् नोच्यते इत्याह—**अचिन्त्येति**। अचिन्त्यनिमित्तोदाहरणं तदुक्तं दर्शयति—**यथा स एक** इति। त्रीणि जगन्तीत्यन्वयः।

**उत्कण्ठाकारणविरुद्धस्येति**। उत्कण्ठाकारणं हि तादृशपत्याद्यसन्निधानं, तद्विरुद्धस्य तादृशपत्यादिसन्निधानस्येत्यर्थः। **कारणस्य च कार्यविरुद्धाया** इति। तादृशकारणस्य यत्कार्यमनुत्कण्ठा। तद्विरुद्धाया इत्यर्थः। **शुद्धोदाहरणं मृग्यमिति**। शुद्धोदाहरणद्वयन्तु विभावनाविशेषोक्त्योरनायासकृशमित्यादिकं, "धनिनोऽपि निरुन्मादा" इत्यादिकमेक चास्ति। तयोस्तथात्वमेव मृग्यमित्यर्थः। तथाहि-अनायासकृशमित्यादौ शङ्काविरुद्धाया अशङ्काया, भूषणविरुद्धस्याऽभूषणत्वस्य च प्रतीतावपि न विशेषोक्तिः प्रतीयते। न हि तारल्याभावरूपस्य फलाभावस्य मनोहारित्वाभावरूपस्य फलाभावस्य च प्रतीत्या विशेषोक्तिः स्यात्। तथा धनिनोऽपीत्यादावधनित्वाविरुद्धस्य धनित्वस्य प्रतीतावपि न विभावनाप्रतीतिः, नहि अधनित्वादेः फलान्यनुन्मादादीनि येनाऽधनित्वविरुद्धधनित्वप्रतीतावपि तादृशफलाभावप्रतीत्या विभावना स्यात्।

## लोचन

शब्दोदाहरणं विशेषोक्तेः कार्यविरुद्धसद्भावमुखेन, नतु "स एकस्त्रीणि" इत्यादिवत् कार्यविरुद्धमुखेन विभावनायाश्च कारणविरुद्धसद्भावमुखेन शुद्धोदाहरणं तु अन्याऽन्यसाङ्कर्याभावयुक्तम्। तद्यथा—

**"कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने**

**नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे॥"**

अत्र दाहकार्यतया शक्तेरभावोऽशक्तिविरुद्धशक्तिसद्भावमुखेन उपनिबद्ध इति विशेषोक्तिः स्फुटा। एवं विभावनादयोऽपि।

## कुसुमप्रतिमा

ननु काव्यप्रकाशे अलङ्कारकौस्तुभी स "अनुक्तनिमित्ता उक्तनिमित्ता अचिन्त्यनिमित्ता च" इत्युक्ता त्रिविधा विशेषोक्तिरुक्ता, त्वया तु अचिन्त्यनिमित्ता कथं नोक्तेत्याह अचिन्त्येति।

तत्राचिन्त्यनिमित्ते काव्यप्रकाशादाहृत्य उदाहरति स इति। स एक एव कुसुमायुधः कामः, त्रीणि जगन्ति स्वर्गमर्त्य पातालरूपाणि भुवनानि जयति। यस्य कुसुमायुधस्य तनु देहं हरतापि नाशयतापि शम्भुना शिवेन बलं सामर्थ्यं न हृतं न नाशितम्।

अत्रेति। तनुहरणेऽपि बलविनाशं प्रति शरीरविनाशरूपे कारणे सत्यपीत्यर्थः, बलस्य अहरणं अविनाशविषये, निमित्तं कारणम् अचिन्त्यं चिन्तयित्वापि लब्धुं न शक्यम्। एवञ्च अस्य भेदस्य अनुक्तनिमित्त एवान्तर्भावात् विशेषोक्तेस्त्रिविधत्वकल्पनसमञ्जसमेवेति काव्यप्रकाशालङ्कारकौस्तुभकारयोर्मतं कटा क्षितमिति द्रष्टव्यम्।

नन्वेवं विभावनाविशेषोक्त्योर्यथाक्रमं कारणाभाव कार्य्याभावघटितलक्षणद्वये सति "यः कौमारहरः स एव हि वरः" इत्यादौ कारणाभावस्य कार्य्याभावस्य चादर्शनात् विभावनाविशेषोक्त्योर्गन्धोऽपि नास्ति। एवञ्च प्रथमपरिच्छेदे "अत्र हि विभावाविशेषोक्तिमूलस्य सन्देहसङ्करालङ्कारस्य स्फुटत्वम्" इत्यभिधाय कथं काव्यप्रकाशकृता दत्तं तदुदाहरणमपि दूषितमित्याह इह चेति। विशेषोक्तौ चेत्यर्थः। कार्य्याभावः फलाभाव इत्यनेनोच्यमान इति तात्पर्य्यम्, कार्य्यस्य विरुद्धो विपरीतो यः पदार्थस्तस्य सद्भावमुखेनापि सत्तायाः प्रतिपादनद्वारापि। न केवलं "धनिनोऽपि निरुन्मादाः" इत्याद्युदाहृतवत् साक्षात् निःशब्दनञ् शब्दादिना, किन्तु कार्य्यविरुद्धसद्भावमुखेनापि इत्यपेरर्थः। निबध्यते कविभिरिति शेषः।

तथा च—"ज्ञाने मौनम्, क्षमा शक्तौ, त्यागे श्लाघाविपर्य्ययः।"

इत्यत्र ज्ञानादिकार्य्यं बहुभाषित्वादिकम्, मौनादिकञ्च तद्विरुद्धम्, तस्य तस्य चोक्तिद्वारा बहुभाषित्वादि रूपकार्य्यस्याभावः कालिदासेन निबद्ध इति विशेषोक्तिरेव।

तथा विभावनायामपि कारणाभावः "विभावना विना हेतुम्" इत्यनेनाभिहित इत्यर्थः, कारणस्य विरुद्धो विपरीतो यः पदार्थस्तस्य सद्भावमुखेनापि सत्तायाः प्रतिपादनद्वारापि। न केवलम् "अनायासकृशं मध्यम्" इत्यादिवत् साक्षात् नञादिना किन्तु कारणविरुद्धसद्भावमुखेनापि इत्यपेरर्थः, निबध्यते कविमिरिति पूर्वेणान्वयः।

तथा च—"देव्यामपि हि वैदेह्या मापवादो यतो जनः॥"

इत्यत्र अपवादं प्रति दोषित्वमेव कारणम्, तद्विरुद्धञ्च गुणवत्त्वम्। इत्यञ्च अपिशब्देन वैदेहीगतपरमपातिव्रात्यलक्षणागुणवत्त्वस्य प्रतिपादनद्वारा दोषत्वरूपकारणस्याभावो भवभूतिना निबद्ध इति विभावनैव। एतद्विपरोतप्रकारानुसन्धाने तु उभयत्राप्युक्तोभयालङ्कारस्य सम्भवेन सन्देहसङ्कर एवेति ध्येयम्।

नन्वेतावता किमायातमित्याह एवञ्चेति। उक्तोभयविधनिबन्धस्य महाकवीनां स्वभावत्वे चेत्यर्थः। इत्यादेः इत्याद्युक्तस्य, उत्कण्ठयाः कारणं तत्तद्वारादीनामभावस्तद्विरुद्धस्य तत्तहरादीनां सञ्चवस्य निबन्धनात् कविनोक्त्वात् विभावना भवितुमर्हतीत्यर्थः। इत्यादेः इत्याद्युकस्य, कारणस्य तत्तद्वरादिसद्भावरूपस्य, कार्य्यम् उत्कण्ठाया अभावरूपम्, तद्विरुद्धया उत्कण्ठाया उत्कण्ठासद्भावस्य, निबन्धनात् "चेतः समुत्कण्ठते" इत्यनेन कविनोक्तत्वात् विशेषोक्तिश्च भवितुमर्हतीति तात्पर्य्यम्। एवञ्च उक्तरीत्या विभावनाविशेषोक्तयोरुभयोरेव

सम्भवे च, अत्र "यः कौमारहरः—" इत्यादिश्लोके। सङ्करः सन्देहसङ्करः। अतः प्रथमपरिच्छेदे उक्तोदाहरणे ईदृशसङ्करालङ्कारस्य सर्वथा सद्भावेन अनलङ्कृतिवादिमते यद्दूषणमभिहितं तद्दूनिवारमेवेति भावः।

न च विभावनाविशेषोक्त्योर्लक्षणद्वये तत्तदभावबोधकपदनिवेशात् यत्र यत्र कारणकार्य्ययोः साक्षादभावबोधकनञादिसद्भावस्तत्र तत्रैव विभावनाविशेषोक्तिश्च वक्तव्या न पुनर्लक्षणानन्तर्गतेन भवदुक्तमात्रेण कारणविरुद्ध कार्य्यविरुद्धयोः सद्भावेनापीति वाच्यम्; उक्तविधवैचित्र्यस्य असंज्ञकत्वापत्तेः नञादिसद्भावेनेव तत्तद्विद्धसद्भावेनापि समानवैचित्र्यरुवगतेर्युक्तिसाम्याञ्चेति जितं विश्वनाथेन।

अथ तर्हि भवतैवोदाहृते "अनायासकृशं मध्यम्' इत्यादौ प्रगुक्तरीत्या विभावनास्थले अनायासं नाम परिश्रमाभावः, तत्तकार्य्यञ्च स्थूलत्वम्, तद्विरुद्धञ्च कृशत्वमिति स्थूलत्वविरुद्धकृशत्वसद्भावमुखेन स्थूलत्वरूपकार्य्याभावस्य निबन्धनाद्विशेषोक्तेरपि सम्भवेन "यः कौमारहर—" इत्यादिवदेव तयोः सङ्करापत्तिः। तथा "धनिनोऽपि निरुन्मादाः—" इत्यादौ पूर्वोक्तप्रकारेण विशेषोक्तिस्थलेऽपि निरुन्मादत्वं प्रति कारणम् अधनित्वम् तद्विरुद्धञ्च धनित्वमिति अधनित्वविरुद्धनित्वसद्भावमुखेन अधनित्वरूपकारणाभावस्य निबन्धनाद्विभावनाया अपि प्रसङ्गेन "यः कौमारहरः—" इत्यादिवदेव तयोः सङ्करापत्तिश्च स्यादित्यस्तदभ्युपेत्याह शुद्धोदाहरणन्त्विति। उभयोरेवासङ्कीर्णोदाहरणन्त्वित्यर्थः, मृग्यमन्वेषणीयम्। तथा च मम—

**"नलिनी मलिनीभूता पयोदपिहितेऽम्बरे।**
**चन्द्रे चाप्युदिते सान्द्रे स्वस्थैवेयं कुमुद्वती॥"**

अत्र पूर्वार्द्धे कारणाभावेऽपि नलिन्या मालिन्यरूपकार्य्योत्पत्तेः शुद्धा विभावनैव; सा च सूर्य्यास्तगमनप्रत्यायकमेघकर्तृकाकशाच्छादनरूपनिमित्तस्योक्तत्वादुक्तनिमित्ता। किन्तु तन्मालिन्यभावं प्रति प्रसिद्धकारणस्य तद्विरुद्धस्य वा अनुपादानाविशेषोक्तिगन्धोऽपि नास्ति। तथा परार्द्धे चन्द्रोदय—रूपप्रसिद्धकारणे सत्यपि कुमुद्वत्या प्रकाशरूपकार्याभावात् शुद्धा विशेषोक्तिरेव सा चापि चन्द्रोदयप्रतीतिप्रतिबन्धकमेव कर्तृकाकाशवरणरूपनिमित्तस्योक्तत्वादुक्तनिमित्ता। किन्तु कुमुद्वत्याः प्रकाशं प्रति चन्द्रोदयस्य, सङ्कोचं प्रति च चन्द्रोदयाभावस्य कारत्वेन स्वस्थत्वं प्रति कस्यापि कारणत्वाभावात् स्वस्थत्वं न कार्य्यत्वमेव; तेन कारणाभावस्य कारणविरुद्धस्य वा सद्भावामावाद्विभावनाया अपि सम्भावनैव नास्तीति।

अत्र विशेषोक्तिविभावनयोः क्रमिकशुद्धोदाहरणत्वेन "धनिनोऽपि स्थिरस्वान्ता यौवने धर्म्मतत्पराः" इति रामचरणस्वोदाहरणमत्यन्तभ्रमविजृम्भितमेव। तथाहि प्रथमपादे धनित्वरूपकारणे सत्यपि तत्कार्य्योन्मादविरुद्धस्थिरस्वान्तत्वसद्भावमुखेन तदुन्मादरूपकार्य्याभावस्य निबन्धनात् यथा विशेषोक्तिः; तथैव स्थिरस्थान्तत्वं प्रति अधनित्वमेव कारणमिति तद्विरुद्धधनित्वसद्भावमुखेन अधनित्वरूपकारणाभावस्य निबन्धनात् विभावनापि प्रसजतीति "यः कौमारहरः" इत्यादिवदेव सङ्करापत्तिदुर्निवारैव। एवमेव "यौवने धर्म्मतत्पराः" इत्यत्रापि सङ्करापत्तिरुहनीया।

## विमला

धनिन इति।—स्पष्टम्। अत्र उन्मादस्य हेतोर्धनस्य, चाञ्चल्यस्य हेतोर्यौवनस्य, प्रमादस्य हेतोः प्रभुत्वस्य सत्त्वेऽपि उन्मादादीनां फलानामभावः। अत्र निमित्तं फलाभावप्रयोजकम्।

स इति ।—सः कुसुमायुधः एकः,—एकक इत्यर्थः, त्रीणि जगन्ति—भुवनत्रयं, जयति, यस्य तनुं हरता—भस्मीकुर्वता, अपि शम्भुना बलं न हतम् ।

अत्रेति ।—अत्र तनुहरणलक्षणे कारणे सत्यपि बलहरणरूपस्य कार्य्यस्यानुत्पत्तौ निमित्तमनुक्तमेवाचिन्त्यतामावहति, प्रत्ययाविषयत्वात् इति । उत्कण्ठाकारणविरुद्धस्येति ।—उत्कण्ठायाः कारणं—पत्याद्यभावः, तद्विरुद्धस्य—पत्यादिसद्भावस्येत्यर्थः, निबन्धनात्—रचनात् । कारणस्य चेति ।—कारणस्य—उत्कण्ठाऽऽद्यभावकारणस्य पत्यादिसद्भावस्य, कार्य्यम्—उत्कण्ठाभावः, तद्विरुद्धायाः,—तद्विपरीतायाः । कार्य्यकारणविरुद्धसद्भावमुखेन कार्य्याभावकारणाभावोक्तो विशेषोक्तिविभावनयोः शुद्धोदाहरणे क्रमेण यथा—"धनिनोऽपि स्थिरस्वान्ता यौवने धर्मतत्पराः । अनात्मश्लाघिनः शूरा भूपाला रघुवंशजाः ॥" अत्र स्थिरस्वान्तत्वमुन्मादविरुद्धं, धर्मोपार्जनकारणं वार्द्धकं, तद्विरुद्धं यौवनम् इति ।

## लक्ष्मी

इत्युक्तदिशा असहाय इत्यर्थः, स कुसुमायुधः मदनः कुसुमेत्यनेन शस्त्रस्य निःस्सारत्वं सूचितम् । त्रीणि जगन्ति स्वर्गमर्त्यपातालरूपादिभुवनानि जयति, यस्य मदनस्य तनुं शरीरं हरता दाहेन नाशयता शम्भुना महेशेन बलं सामर्थ्यं न हतं न नाशितम् ।

लक्ष्यं संयोजयति—**अत्रेति** । तनुहरणेऽपि बलविनाशं प्रति देहविनाशरूपे हेतौ विद्यमानेऽपि, बलस्य अहरणे विनाशाभावविषये निमित्तं हेतुः अचिन्त्यं विचार्ययित्वापि प्राप्तुमशक्यम् । तथाचास्य भेदस्यानुक्तनिमित्त एवान्तर्भावात् त्रैविध्यं न मया स्वीक्रियत इति भावः ।

केचित्तु—प्रकरणादिना ज्ञातस्य निमित्तस्यावचनेऽनुक्तनिमित्ता, अज्ञातस्य निमित्तस्यावचने चैवेतिभेदमुपकल्प्य त्रैविध्यमेवेच्छन्ति ।

अस्मिन्नलङ्कारे विच्छित्त्यन्तरेण बन्धं प्रतिपादयन् विभावनालङ्कारे कारणाभावस्य तथा बन्धमनुषङ्गतः प्रतिपादयति—**इह** चेति । विशेषोक्तौ चेत्यर्थः । कार्याभावः फलाभावः, कार्यस्य फलस्य यद् विरुद्धं विपरीतं (कारणं) तस्य सद्भावो विद्यमानत्वं तस्य मुखं प्रतिपादनद्वारं तेनापि, किं पुनरन्यथेति शेषः, निबध्यते आलङ्कारिकैरिति शेषः ।

तथा विभावनायामपि विभावनालङ्कारेऽपि कारणाभावः हेतोरभावः 'विभावना विना हेतुम्' इत्यनेनोक्त इत्यर्थः, कारणस्य हेतोः यदविरुद्धं विपरीतं (कार्यम्) तस्य सद्भावो विद्यमानत्वं तस्य मुखं प्रतिपादनद्वारं तेनापि निबध्यते इति पूर्वेण सम्बन्धः ।

नन्वेतेन प्रकृते किञ्ज्ञातमित्यत आह—**एवञ्चेति** । दर्शितोभयरूपनिबन्धनस्यालङ्कारिकप्रकृतत्वे चेत्यर्थः । इत्यादेः इत्यादिप्रतिपादितस्य, उत्कण्ठायास्तद्रूपस्य कार्यस्य कारणं निजान्तिके नायकाद्यवर्तमानत्वं तस्य विरुद्धं नायकादिवर्त्तमानत्वं तस्य तथोक्तस्य, निबन्धनात् कविना प्रतिपादितत्वात् विभावना एतन्नामालङ्कारो भवितुं योग्य इत्याशयः । इत्यादेः इत्यादिप्रतिपादितस्य, कारणस्य निजान्तिकनायकादिवर्तमानत्वस्य, कार्यम् उत्कण्ठाया अभावरूपम्, तद्विरुद्धाया विपरीताया उत्कण्ठाया उत्कण्ठोपलम्भस्य, निबन्धनात् 'चेतः समुत्कण्ठते' इत्यनेन कविना प्रतिपादितत्वात् विशेषोक्तिश्च भवितुं योग्येति भावः । एवञ्च दर्शितदिशा विभावनाविशेषोक्त्योरुभयोरेव सम्भवे च, अत्र 'यः कौमारहरः' इत्यादिपद्ये सङ्करः किं विभावना किं वा विशेषोक्तिरिति सन्देहसङ्कर इत्यर्थः । अत

एवोक्तौदाहरणे प्रथमपरिच्छेदे एवंविधसन्देहसङ्करालङ्कारस्य स्फुटं विद्यमानत्वेनास्फुटालङ्कारत्वमत्रेतिप्रतिपादनं प्राचामसमञ्जसमेवेत्याशयः ।

वस्तुतस्तु—'हरो वर' इत्याद्यनुप्रासस्य स्फुटत्वेऽपि प्रकृतश्रृङ्गाररसप्रतिकूलवर्णघटितत्वेन नालङ्कारत्वम् । यच्चोक्तदिशा सन्देहसङ्करस्तदपि न स्फुटम्, कार्यकारणयोरभावकथनस्यार्थिकस्य विद्यमानत्वेऽपि तद्वाचकनञादिनानुपात्तत्वात् । यदि चेतोऽनुत्कण्ठितं नेत्युच्येत तदा विशेषोक्तेः स्फुटत्वं स्यादिति केचित् ।

ननु यदि 'यः कौमारहरः' इत्यादौ सन्देहसङ्कर एवाभ्युपेयते तर्हि विभावनाविशेषोक्त्युदाहृतयोः 'अनायासकृशं मध्यम्' 'धनिनोऽपि निरुन्मादाः' इत्याद्योरपि सङ्करापत्तिः स्यात्, तथाहि—यथाक्रमं पूर्वोदाहरणे विभावनालङ्कारे अनायासे परिश्रमाभावः, तत्फलञ्च स्थूलत्वम्, तद्विपरीतञ्च कृशत्वमिति परस्परं स्थूलत्वविपरीतकृशत्वस्योपलम्भद्वारा स्थूलत्वरूपफलाभावस्योकतत्वाद्विशेषोक्तिः, एवं विशेषोक्त्युदाहरणे निरुन्मादत्वं प्रति हेतुः अधनित्वम्, तद्विपरीतञ्च धनित्वमिति परस्परम् अधनित्वविपरीतधनित्वस्योपलम्भद्वारा अधनित्वरूपहेत्वाभावस्योक्तत्वाद्विभावनेतिमन्वान आह—**शुद्धोदाहरणन्त्विति** । निरुक्तलक्षणयोरेतयोः पृथक् पृथगुदाहरणन्त्वित्यर्थः । मृग्यं गवेषणीयम् । तद् यथा—

**'कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने ।**
**नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥'**

अत्र दाहकार्यतया शक्तेरभावोऽशक्तिविपरीतशक्त्युपलम्भद्वारा उक्त इति विशेषोक्तिः । एवं विभावनालङ्कारस्याप्युदाहरणं मृग्यम् ।

## रुचिरा

निमित्तस्याचिन्त्यतायामस्या अचिन्त्यनिमित्तत्वन्नाम परैः स्वीकृतो भेदोऽन्तर्भवतीत्याह-**अचिन्त्यनिमित्तत्वम**चिन्त्यं निमित्तं यत्र तस्य भावस्तत्त्वम् । **च** । **अस्या** निरुक्तलक्षणाया विशेषोक्तेः । **अनुक्तनिमित्तत्वम्** । **एव** । **भेदः** । **इति** । **पृथक्** । **न** । **उक्तम्** ।

अथापि उदाहरति—**यथा**—'**यस्य** । **तनुं** शरीरम् । **हरता** निघ्नता । **अपि** । **शम्भुना** शङ्करेण । **बलम्** । **न** । **हृतम्** । **सः** । **एकोऽद्वितीयः** । **कुसुमायुधः** । **त्रीणि** । **जगन्ति** लोकान् । **जयति** । अत्र तनुहरणरूपे हेतौ सत्यपि बलहरणरूपस्य कार्य्यस्यासत्त्वम् ॥ २२७ ॥'

निमित्तस्याचिन्त्यतां निर्दिशति-**अत्रेत्यादिना** । स्पष्टोऽर्थः । अत्रेदम्बोध्यम्—अनुक्तनिमित्ताया द्वौ भेदो, तत्राद्योऽनुक्तचिन्त्यनिमित्तो द्वितीयोऽनुक्ताचिन्त्यनिमित्त इति; अथापि भेदकल्पनाया गौरवं मन्यमाना द्वाप्येतौभेदावनुक्तनिमित्तरूपावेवात एवायं भेदो न पृथगुक्तः । इति ।

अस्यां कार्य्याभावस्य विच्छित्त्यन्तरेण बन्धं दर्शयन् विभावनायां कारणाभावस्य तथा बन्धमनुषङ्गतो दर्शयति **इहास्यां** विशेषोक्तविति यावत् । **च** । **कार्य्याभावः** । **कार्य्यविरुद्धसद्भावमुखेन** कार्य्यस्य यद् विरुद्धं (कारणं) तस्य सद्भावस्तस्य मुखं द्वारं तेन । **अपि** 'किम्पुनरन्यथे'ति शेषः । **निबध्यते** । **एवम्** । **विभावनायाम्** । **कारणाभावः** । **कारणविरुद्धसद्भावमुखेन** कारणस्य विरुद्धं (कार्य्यम्) तस्य सद्भावस्तस्य मुखं द्वारं तेन । **अपि** 'किम्पुनरन्यथे'ति शेषः । 'निबध्यत'इत्यनुषज्यते । **अतः** । **'यः कौमारहरः...'** इति व्याख्यातपूर्व पद्यम् । **इत्यत्र** । **उत्कण्ठाकारणविरुद्धस्यो**त्कण्ठायास्तद्रूपस्य कार्य्यस्य कारणं (नायकाद्यसन्निधिः), तस्य विरुद्धं (नायकादिस-

न्निधिः) तस्य । **निबन्धनात्** । **विभावना** । **कारणस्योत्कण्ठारूपकार्य्यस्य** कारणभूतो यो नायकाद्यसन्निधिस्तस्येति भावः । **विरुद्धं** प्रतिकूलम् । **यत्** । '**चेतः** । **समुत्कण्ठते**' इति । **कार्य्यम्** । उत्कण्ठारूपं कार्य्यमिति भावः । **तस्य** । **निबन्धनात्** । **विशेषोक्तिः** । **च** । **अतः** । **एव** । **अत्रोदाहृते पद्ये** । **विभावनाविशेषोक्तयोः** । **सङ्करः** । अलङ्कारसर्वस्वकारा अप्याहुः—'कार्य्यानुत्पत्तिश्चात्र क्वचित् कार्य्यविरोधोत्पत्त्या निबध्यते, एवं विभावनायामपि कारणाभावः कारणविरुद्धमुखेन क्वचित्प्रतिपाद्यते । तथा च सति—'यः कौमारहर...' इत्यादौ विभावनाविशेषोक्तयोः सन्देहसङ्करः । तथाहि-उत्कण्ठाकारणं विरुद्धं 'यः कौमारहर...' इत्यादिनिबद्धमिति विभावना । तथा 'यः कौमारहर' इत्यादेः कारणस्य कार्य्यं विरुद्धं'चेतः समुत्कण्ठते' इत्युत्कण्ठाऽऽख्यं निबद्धमिति विशेषोक्तिः ।' इति । **शुद्धोदाहरणम्** । निरुक्तलक्षणयोरेतयोः पृथक्पृथगुदाहरणमिति भावः । **तु** । **मृग्यमन्वेषणीयम्** । अत्र विवृतिकाराः— "कार्यकारणविरुद्धसद्भावमुखेन कार्य्याभावकारणाभावोक्तौ विशेषोक्तिविभावनयोः शुद्धोदाहरणे क्रमेण यथा—''धनिनोऽपि स्थिरस्वान्ता यौवने धर्मतत्पराः । अनात्मश्लाघिनः शूरा भूपाला रघुवंशजाः ॥' अत्र स्थिरस्वान्तत्वमुन्मादविरुद्धं धर्मोपार्जनकारणं बार्द्धकं तद्विरुद्धं यौवनम् ।' इति ।

**जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः ॥ ६७ ॥**

क्रमेण यथा—

**'तव विरहे मलयमरुद्दवानलः शशिरुचोऽपि सोष्माणः ।**
**हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः ॥'**

---

## विवृति

विरोधालंकारमाह—**जातिरिति**। जात्याद्यैरित्याद्यपदेन गुणक्रियाद्रव्याणां ग्रहणम्। गुणक्रियाद्रव्याणां जात्या सह विरोधस्तु गुणादिभिः सह जातिविरोध एवेति पृथङ् नोक्तः। **विरुद्धमेवेति**। क्वचिदारोपेण क्वचित्कविप्रौढोक्त्या क्वचित्कालभेदेन क्वचिदीश्वरादिमहिमातिशयेन समावेशं लभमानैर्जात्यादिभिः सह जात्यादेर्यदापाततो विरोधभानं स विरोधालंकारकार इति भावः॥

चतुर्भिः पादैर्जात्यादीनां चतुर्णां विरोधमाह—**तवेति**। गुणेन सह गुणविरोधमाह—**संततेति**। मुसलं धान्यकण्डनोपकरणम्। भवति त्वयि। भवता द्विजेभ्यस्तथा वित्तानि दत्तानि यथा तेषां दासीभिरेव कर्मकरणात्तत्पत्नीनां कराः सुकुमाराः जाता इत्यर्थः॥ अत्र काठिन्यकोमलत्वयोर्गुमयोरापाततो विरोधभानम्। समाधानं तु कालभेदेन॥

## विज्ञप्रिया

दशविधं विरोधाभासलङ्कारमाह—**जातिरित्यादि**। जात्यादौ जातिगुणक्रियाद्रव्यैर्मिथो विरुद्धैरिति यथालिङ्गमन्वयः। गुणश्च जातिक्रियाभिन्नमात्रं बोध्यम्। **गुणादिभिस्त्रिभिरिति**। तस्य जात्या सह विरोधस्तु जातेर्गुमेन सह विरोधरूप एवेति पूर्वगणनाप्रविष्टत्वान्नोक्तः। एवमुत्तरद्वयेऽपि। द्रव्यं त्वेकव्यक्तिकं बोध्यम्।

तत्र जातेश्चतुर्भिश्च सह विरोधमेकश्लोके एव दर्शयति—**तव विरह** इति। तव विरहेऽस्या इति मलयपवनादौ सर्वत्रान्वयः। अत्र दवदहनत्वमलयपवनत्वजात्योर्विरोधः न चात्र रूपकम् दाहकृत्वशीतलत्वधर्मव्याप्ययोर्जात्योर्विरोधस्यैव पुरः स्फुर्तिकत्वात्। शशिरूचोऽपित्यत्र शशिरूपिजाते सोम्त्वगुणविरोधः। हृदयमित्यत्रालिरुतत्वजातेर्भेदेन क्रियया विरोधः। नलिनीदलमपीत्यत्र नलिनीदलत्वजातेर्निदाघरविणा द्रव्येण सह तादात्म्येन विरोधः। अत्रापि विरुद्धधर्मव्याप्यत्वाद् विरोधस्यैव पुरः स्फुर्त्तिकत्वादपिकारेण विरोधबोधनाच्च न रूपकम्। रवेरुष्मत्वव्याप्यता तु तादात्म्येन। रवीणां द्वादशत्वेऽपि नात्र जातिविरोध, निदाघीयविशेषणादृतुषट्कप्रवर्त्तकरवेरेवात्र रविपदार्थत्वात् तस्यैकत्वादेव।

## लोचन

चतुर्भिः जातिगुणाक्रियाद्रव्यैः विरुद्धमिव भासेत, पर्यवसाने तु अविरोध एव अन्यथा दोषावहत्वादित्यर्थः। गुणस्य जात्या सह जातेर्गुणेन सहविरोध एवेति गुणविरुद्धस्य त्रैविध्यमेव। एवमेव क्रियाविरुद्धस्य चैक्यविध्यमेवेति दशाकृतिर्दशाकृतिर्दशप्रकारो विरोधः।

## कुसुमप्रतिमा

ननु यथा कार्य्ये बाध्यत्वप्रतीतौ विभावना कारणे बाध्यत्वप्रतीतौ च विशेषोक्तिस्तथा द्वयोरपि पदार्थयोः परस्परबाध्यत्वप्रतीतौ कश्चिदलङ्कारो भवति न वेत्याकाङ्क्षायां विरोधाभासलङ्कारं लक्षयति जातिरिति। अस्य 'आपाततो विरुद्धवत् प्रतीतिर्विरोधाभासः' इति सामान्यलक्षणं "विरुद्धमिव भासेत" इति कारिकानिद्र्देशानुसारादेवावगन्तव्यम्। विरुद्धत्वञ्च अतस्मिन् तद्धर्म्मनिद्र्देशः। यथा "तव विरहे मलयमरुद्दवानलः" इत्यादौ दवानलभिन्ने मलयमरुति दवानलत्वनिद्र्देशः। आपातत इत्यभिधानादवसाने तादृशविरोधसमाधानमावश्यकमेवेति बोध्यम्।

अत्र विरुद्धमित्यस्य यथासम्भवं लिङ्गविपरिणामेन सर्वत्रान्वयः। तथा च चतुर्भिर्जात्याद्यैः जातिगुणक्रिया-द्रव्यैः सह मिथः परस्परं यत् जातिर्विरुद्धेव भासेत प्रकाशेत इमे चत्वारः प्रकारः। त्रिभिर्गुणादिभिः गुण-क्रिया द्रव्यैः सह मिथो यत् गुणो विरुद्ध इव भासेत। इमे त्रयः प्रकारः। क्रियाद्रव्याभ्यां सह मिथो यत् क्रिया विरुद्धेव भासेत। इमौ द्वौ प्रकारौ। तथा द्रव्येण वा सह मिथो यत् द्रव्यं विरुद्धमिव भासेत। अयमेकः प्रकारः। असौ, दश आकृतय आकाराः प्रकारा यस्य स दशाकृतिर्दशविधः, विरोधो विरोधाभासो नाम अलङ्कार उच्यते इत्यनुषज्यते। जात्या सह गुणस्य क्रियाया द्रव्यस्य वा यो विरोधः स तु तैः सह जातेर्विरोध एव, तस्य परस्यवृत्तिकत्वात्। अतएव दशाधिकप्रकारत्वं नाशङ्कनीयम्। अलङ्कारान्तरैः सह अस्य भेदस्तु वृत्तावेव वक्ष्यते।

विरोधस्य आभास आपाततः प्रतीतिरिति विरोधाभासपदव्युत्पत्तिः। अयन्तु निरुक्तकारिकायामिव क्ववचित् विरोधपदेनापि प्रत्याय्यते, भीमपदेन भीमसेनवत्, "एकदेशेन समुदायो गम्यते" इति न्यायात्।

जात्यादिभिश्चतुर्भिः जातेर्विरोधे उदाहरति तवेति। पतिं प्रति विरहिणेदूत्या उक्तिरियम्। हे नायक! तव विरहे अस्या उल्लिखिताया नायिकायाः सम्बन्धे मलयमरुत् सुशीतलो मलयाचुलवायुरपि, दवानलो दावाग्निः, तद्वद्दाहजनकत्वात्। शशिरुचोऽपि स्वभावशीतलाश्चन्द्रकिरणा अपि सोम्माणं उष्णाः, तापकरत्वात्। अलिरुतमपि सुमधुरी भ्रमररवोऽपि हृदयं भिन्ते विदाहयति, अतोवीद्दीपकत्वात्। तथा नलिनीदलमपि सुशीतलं पद्मिनीपत्रमपि निदाघरविग्रीष्मकालीनसूर्य्यः, तथैव दाहकत्वात्। अत्र विरोधं तत्समाधानञ्च वृत्तावेवानुपदमाह स्म। न च "मलयमरुद्दवानलः" इत्यत्र रूपकमेवेति वाच्यं श्रवणमात्रमेव जायमानया विरोधप्रतीत्या वाक्यार्थबोधनन्तरभाविन्याः सन्तापकत्वरूपसादृश्यप्रतीतेर्व्याहतत्वात्। न च "शशिरुचोऽपि सोष्माणः" इत्यादावतिशयोक्तिः, विरहिजनस्य शशिरुक्प्रभृतिषु सीष्मत्वादिप्रतीतेर्यथार्थत्वात्।

## विमला

विरोधालङ्कारमाह,—जातिरिति।—जातिः,—गोत्वादिः, जात्याद्ये चतुर्भिः,—जातिगुणक्रियाद्रव्यैरित्यर्थः, (गुणक्रियाद्रव्याणां जात्या सह विरोधस्तु गुणादिभिः सह जातिविरोध एवेति पृथङ्नवक्तः) गुणः,—शुक्लादिः, गुणादिभिः त्रिभिः,—गुणक्रियाद्रव्यैरित्यर्थः, क्रिया—पाकादिः, क्रियाद्रव्याभ्या, तथा द्रव्यम्—एकव्यक्तिवाचकः शब्दः इत्यर्थः, द्रव्येण मिथः,—परस्पर, यत् विरुद्धमिव भासेत्, क्विचदारोपेण, क्वचित् कविप्रौढोक्त्या, क्वचित् कालभेदेन, क्वचिदीश्वरादिमहिमातिशयेन समावेशं लभमानैः जात्यादिभिः सह जात्यादेर्यदापाततो विरोधमान—मिति भावः, असौ दशाकृतिः,—उक्तरीत्या दशविधः, विरोधः,—विरोधालङ्कारः, आपाततो विरोधवत् भासनं विरोधालङ्कार इति फलितार्थः। अत्रेदं बोध्यम्—अयमेव विरोधाभासः इति कथ्यते, आभासः ईषद्भासनं,

विरोधश्चासावाभासश्चेति विग्रहः; यथार्थतस्त्वेषः जात्यादिप्रकाराणाममनोहरत्वात् शुद्धश्लेषकारणत्वाभ्यां द्विप्रकारः इति प्राज्ञाः, तत्र श्लेषकारणो यथा विन्ध्याटवीवर्णनप्रसङ्गः—"पुष्पवत्यपि पवित्रा" इति ।

चतुर्भिः पादैः जात्यादीनां चतुर्णां विरोधमाह, तवेति ।—दूत्या नायकं प्रत्युक्तिरियम् । तव विरहे अस्याः;—नायिकायाः, त्वत्कृत इति यावत्, मलयमरुत्—चन्दनगिरिसम्भूतःपवनः, चन्दनराशिसम्पर्केण सुगन्धितसुशीतलोऽपि मारुत इति भावः, दवानलः;—दावाग्निः, शशिरुचः—चन्द्रमरोचयः, स्वभावतः शीतांशोः करदं इति भावः, अपि—तथा शीतला अपि इत्यपिशब्दार्थः, सोष्माणः;—उष्णाः इत्यर्थः अलिरुतं—भ्रमराणां मधुरस्वनोऽपि, हृदयं भिन्ते—विध्यति, नलिनीदलमपि—धम्मिनीनां क्रमादिहरणक्षमं पत्रमपि, निदाघरविः;—ग्रीष्मसूर्य्यः । अत्रार्य्या छन्दः । यथा वा विविक्तानि जातिविरोधोदाहरणानि क्रमेण—"यस्याऽऽकर्णनमात्रतोऽपि भवतोऽवस्थेयमोहग्विधा येनाङ्गे मलयानिलोऽपि भवति प्रायः करोषानलः । हंहो मानस ! बालिश ! प्रतिप्रथं प्रत्याशमुद्रीविकां कुर्वन्तं नयनातिथिं पुनरहो ! कर्तुं किं माकाङ्क्षसि ?"॥ अत्र द्वितीयपादे वायुत्ववह्नित्वयोः विरोधः । "गिरयोऽप्यनुन्नति युजो मरुदथ चलोऽब्धयोऽप्यगम्भीराः । विश्वम्भरोऽप्यतिलघुर्नरनाथ ! तवान्तिके नियतम् ॥" अत्र गुणेन जातेर्विरोधः । "येषां कण्ठपरिग्रहप्रणयितां सम्प्राप्य धाराधरः तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्ताति च । तेषां सङ्गररङ्गसक्तमनसाराज्ञां त्वया भूपते ! पांशूनां पटलैः प्रसाधनविधिर्निर्वर्त्त्यते कौतुकम् ॥" अत्र क्रियया जातेर्विरोधः । "प्राणेश्वरो गुरुजनेन कृतात्रयोगादेशान् परानगमादित्युदयः त्यसूया दुर्दैववैभवबलात् सखि ! साम्प्रतं यच्चन्द्रोऽपि वह्निरभवत् क इहोपराध्येत् ?" ॥ अत्र द्रव्येण जातेर्विरोधः ।

## लक्ष्मी

कार्यकारणयोः यथाक्रमं बाध्यत्वप्रीततौ विभावनाविशेषोक्त्यलङ्कारानुपपाद्याथ द्वयोर्मिथो बाध्यत्वप्रतीतौ सभेदं विरोधाभासालङ्कारं निरूपयति—**जाति**रित्यादिना । 'विरुद्धमिव भासेत' इत्युपादानेन विरुद्धार्थप्रतिपादकस्य पदादेरवसानेऽर्थान्तरपरत्वादिना वस्तुतो विरोधाभावेऽपि आपाततो विरुद्धवत्प्रतीतिर्विरोधाभास इति लक्षणं ज्ञेयम् । विरुद्धत्वञ्चात्र अतस्मिंस्तद्धर्मोपनिबन्धः । यथा प्रथमोदाहरणे 'तव विरहे' इत्यादौ दवानलातिरिक्ते मलयमरुति दवानलत्वोपनिबन्धः । तथा चादावेव विरुद्धत्वेन प्रतीयते पर्यवसाने तु तत्परिहारसम्भवस्यावश्यंभावित्वादित्यवधेयम् ।

अत्र विरुद्धमितिपदस्य लिङ्गव्यत्ययेन सर्वत्र सम्बन्धो ज्ञेयः । तथाहि चतुर्भिः चतुःसंख्याकैः जात्याद्यैः जाति-गुण-क्रिया-द्रव्यैः सह सहार्थेयं तृतीया, मिथः अन्योन्यं यत् जातिः विरुद्धा इव भासेत द्योतेत, इमे चत्वारो विरोधाः । त्रिभिः गुणादिभिः गुणक्रियाद्रव्यैः सह मिथो यद् गुणो विरुद्ध इव भासेत्, इमे त्रयो विरोधाः । क्रियाद्रव्याभ्यां सह मिथो यत् क्रियाविरुद्धेव भासेत्, इमौ द्वौ विरोधौ । तथा द्रव्येण वा सह मिथो यद् द्रव्यं विरुद्धमिव भासेत अयमेको विरोधः । असौ, दशाकृतिः दशविधः, विरोधः विरोधाभास 'उच्यते' इत्यनुवर्त्तते । न्यूनाधिकसंख्याव्यवच्छेदाय दशपदोपादानम् । विरोधपदेनाप्ययमलङ्कारोऽवगम्यते 'सत्या भामा' इतिवत 'नामैकदेशे नामग्रहणम्' इति न्यायात् ।

जात्यादिभिश्चतुर्भिर्विरोधे उदाहरणं दर्शयति—**तवेति** । स्वामिनं प्रति वियोगिनीदूत्या उक्तिरियम् । हे नायक ! तव भवतः विरहे वियोगे सति अस्याः त्वदेकावलम्बिन्याः प्रियायाः सम्बन्धे मलयमरुत् मलयाचलपवनोऽपि चन्दनासौरभयुक्तया शीतलोऽपि वायुरित्यर्थः, दवानलः दावाग्निः तद्वत्सन्तापोत्पादकत्वात् । शशिरुचोऽपि स्वभावशीतलाश्चन्द्रकान्तय अपि सोष्माणः उष्णाः सन्तापदायकत्वात् । अलिरुतमपि सुमनोहरो

भ्रमरझङ्कारोऽपि हृदयं भिन्ते विदारयति अत्यन्तोद्दीपकत्वात्। अलिरुतमपि सुमनोहरो भ्रमरझङ्कारोऽपि हृदयं भिन्ते विदारयति अत्यन्तोद्दीपकत्वात्। तथा नलिनीदलमपि सुशीतलं कमलिनीपत्रमपि निदाघरविः आतपकालीनसूर्यः, तद्वदेव सन्तापकत्वात्। अत्र यादृशो विरोधस्तत्समाधानाञ्च अनुपदमेव वृत्तौ स्वयं वक्ष्यति।

## रुचिरा

विरोधं लक्षयति—**यद्** यदि। **चतुर्भिः**। **जात्याद्यैर्जातिगुणक्रियाद्रव्यैः**। साहार्थेयं तृतीया। **जातिः**। 'विरुद्धमेव भासेते'त्येव लिङ्गविपारिणामेनात्र सर्वत्रान्वेति, तथा च—'विरुद्धैव भासेते' त्याकर्षणीयम्। **त्रिभिः**। **गुणादिभिर्गुणक्रियाद्रव्यैः**। सहार्थेयं तृतीया। **गुणः**। 'विरुद्ध एव भासेते' त्याकर्षणीयम्। **क्रियाद्रव्याभ्याम्**। सहार्थेयं तृतीया। **क्रिया**। 'विरुद्धैव भासेते' त्याकर्षणीयम्। **वा**। **द्रव्येण**। **मिथः** समम्। **द्रव्यम्**। **विरुद्धम्**। **इव**। **भासेत**। तर्हि—**असौ**। **दशाकृतिर्दशविधः**। **विरोधः** ॥ १२१ ॥

उदाहर्त्तुमुपक्रमते—**क्रमेण** यथानिर्देशम्। **यथा**। '**तव**। **विरहे** 'जाते' इति शेषः। **अस्यास्त्वदेकाधा**-रायाः प्रियाया इत्यर्थः। **मलयमरुन्मलय**स्तन्नामा चन्दनोत्पत्तिस्थानभूतः पर्वतस्तस्य मरुद्वायुः। चन्दनसौगन्ध्यस-म्भृततया शीतलोऽपि वात इति भावः। **दवानलो** दावाग्निः। **शशिरुच**श्चन्द्रकान्तयः। **अपि**। **सोष्माण** उष्णाः। **अलिरुतम्भ्रमरझङ्कारः**। **अपि**। **हृदयम्**। **भिन्ते** विदारयति। **नलिनीदलं** पद्मिनीपत्रम्। **अपि**। **निदाघरवि**र्ग्रीष्म-सूर्य्यः। 'जात' इति शेषः। अत्र क्रमेण जातेर्जात्यादिभिश्चतुर्विरोधो भासते ॥ २२८ ॥'

**'संततमुसलासङ्गाद्बहुतरगृहकर्मघटनया नृपते !।**
**द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥'**

---

## विवृतिः

गुणस्य क्रियया विरोधमाह—**अजस्येति**। स्वप्नस्य सिद्धया मनः संयोगरूपतया गुणत्वम् ॥

## विज्ञप्रिया

गुणस्य गुणविरोधमाह—**सन्ततेति**। हे नृप ! ते पूर्व सन्ततेत्यादिना कठिना द्विजपत्नीनां करा भवन्ति सरोजसुकुमाराः। त्वया सम्पद्दानेन दासीभिरेव कर्मकरणात् करसौकुमार्यम्। अत्र कठिनत्वसौकुमार्यगुणयोर्विरोधः।

## कुसुमप्रतिमा

गुणेन सह गुणस्य विरोधं दर्शयति सन्ततेति। राजस्तुतिरियम्। हे नृपते ! सतत सर्वदा यो मुषलालङ्गः तण्डुलादिनिर्म्माणार्थमुत्तोलननिपातनसमये मुषलस्य घर्षणं तस्माद्धेतो, तथा बहुतराणां लेपना दीनां गृहकर्म्मणां घटनया करणेन हेतुना, कठिनाः काठिन्यप्राप्ताः, द्विजपत्नीनां ब्राह्मणस्त्रीणां करा हस्त तलानि, भवति सति त्वयि राजनि जाते सति, सरोजसुकुमाराः पद्मवत् सुकोमलाः, जाता इति शेषः, भवद्दत्तधनेनैव रक्षितदासोदासादिभिस्तत्तत्कर्म्मनुष्ठापनात् स्वयं स्वयञ्च तदकरणदिति भावः।

अत्र कठिनत्वसुकुमारत्वयोर्गुणयोर्विरोधः, कालभेदाच्च तत्समाधानम्।

## विमला

गुणेन सह गुणविरोधमाह, सन्ततेति।—हे नृपते ! भवति—त्वयि राजनि, सति—विद्यमाने इत्यर्थः, सन्ततं—निरन्तरं, यः मुषलेन—धान्यकण्डनोपकरणेन, आसङ्गः—संसर्गः तस्मात्, तथा बहुतराणां गृहकर्मणां घटनया—अनुष्ठानेन, कठिनाः—किणाङ्किता इति भावः, द्विजपत्नीनां—ब्राह्मणीनां, कराः सरोजवत्—कमलवत्, सुकुमाराः—सुकोमलाः, जाताः इति शेषः तव दानशक्तिप्रभावात् ब्राह्मणानां कष्टकरवृत्तित्वव्यपगमादिति भावः; तथा हि, भवता द्विजेभ्यः तथा वित्तानि दत्तानि, यथा तेषां दासीभिरेव कर्मकरणात् तत्पत्नीनां कराः सुकुमारा जाताः। अत्र काठिन्य गुणः, तस्य सौकुमार्य्येण सह विरोध आपाततो भासते, एवं राज्ञो दानशक्त्या कालभेदेन समाधानम्। अत्रार्य्या छन्दः। यथा वा—"सरसाऽपि शुष्यत्येव जानाति दुःखानि मुग्धहृदयापि। रक्ताऽपि पाण्डुरैव जाता वराकी तव वियोगेन ॥"

## लक्ष्मी

गुणेन सह गुणस्य विरोधे उदाहरति—**सन्ततेति**। कस्यचिद्राज्ञःस्तुतिरियम्। हे नृपते नरनाथ ! सन्ततं निरन्तरं यो मुसलासङ्गः तण्डुलादिसम्पादनाय ऊर्ध्वाधःपातसमये मुसलस्य घर्षणं तस्मात्कारणात्, तथा बहुतराणाम् अनेकानां गृहकर्मणां गृहोचितलेपनादीनां घटनया निर्माणया करणेन हेतुना, कठिनाः कठोरं प्राप्ताः, द्विजपत्नीनां

ब्राह्मणीनाम् करा हस्ततलानि, भवति सति यथेष्टं निरन्तरं सम्प्रदातृत्वेन प्रसिद्धे त्वयि राजनि जाते सति, सरोजसुकुमाराः कमलवत् अत्यन्तं कोमलाः जाता इतिं शेषः, भवद्भिस्तथा निरन्तरं ब्राह्मणेभ्यः प्रदीयते यथा तद्धनेन स्वस्त्रीणां गृहोचितकर्त्तव्यानि ब्राह्मणा दासीभिरेव सम्पादयन्तीत्याशयः। **अत्रोपगीतिश्छन्दस्तल्लक्षणञ्चोक्तं** प्राक्।

अत्र कठिनत्वसौकुमार्यगुणयोर्विरोधः, समयभेदेन कार्यनिवृत्त्या तत्परिहारः।

## रुचिरा

एवं जातेर्जात्यादिभिर्विरोधाभासं दर्शयित्वा गुणस्य गुणेन विरोधाभासं दर्शयति—'हे नृपते! **बहुतर-गृहकर्मघटनया** बहुतरं गृहाणां कर्माणि गृहोचितानि कार्य्याणि तेषां घटना निर्माणं तया। **सन्ततमुसलासङ्गात्** सन्ततं निरन्तरं मुसलस्यासङ्गोऽत्यन्तं प्रसङ्गस्तस्मात्। **द्विजपत्नीनां** ब्राह्मणीनाम्। **कठिनाः** कठोराः। 'अपी'ति शेषः। **करा** हस्ताः। **भवति** यथेष्टं सन्ततं सम्प्रदातृत्वेन प्रसिद्धे त्वयीति भावः। **सति। सरोजसुकुमाराः** कमलवत अत्यन्तं कोमलाः। 'जाताः' इति शेषः। त्वया तथा सन्ततं सम्प्रदीयते यथा ब्राह्मणा दासीभिरेव स्वस्त्रीणां कर्त्तव्यानि कारयन्तीति भावः। गीतिश्छन्दः। तल्लक्षणं चोक्तं प्रक्॥ २२९॥'

**'अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।**
**स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥'**

---

## विवृतिः

गुणस्य द्रव्येण सह विरोधमाह—**वल्लभेति** । राकाविभावरीजानिः पूर्णचन्द्रः । अत्र पूर्णचन्द्रेण द्रव्येण सह दाहजनकत्वस्य गुणस्य तादात्म्येनापाततो विरोधभानम् ।

## विज्ञप्रिया

गुणस्य क्रियाविरोधमाह—**अजस्येति** । ईश्वरं प्रति देवानां स्तुतिरियम् । अजस्येत्यत्र जन्माभावगुणजन्मग्रहणक्रिययोर्विरोधः । एवं निरीहत्वनिद्रारूपस्वापगुणयोरपि शत्रुहननजागरणक्रियाभ्याम् ।

## कुसुमप्रतिमा

क्रियया सह गुणस्य विरोधे उदाहरणमाह अजस्येति । रघुवंशदशमसर्गस्थमिदं पद्यम् । हे भगवन् ! अजस्य नित्यत्वात् जन्मरहितस्यापि मत्स्यकूर्म्मादिरूपेण जन्म गृह्णतः, निरीहस्य क्रियारहितत्वात् निश्चेष्टस्यापि हतद्विषी विनाशितशत्रोः, तथा जागरूकस्य चैतन्यरूपताया सर्वदा प्रबुद्धस्यापि स्वपतः प्रलयकाले निद्रा गच्छतः, तव को जनो याथार्थ्यं तत्त्वं स्वरूपं वेद जानाति, अपि तु कोऽपि नेत्यर्थः ।

अत्रापि विरोध तत्समाधानञ्च वृत्तावेव दर्शितवान ।

## विमला

गुणस्य क्रियया विरोधमाह, भजस्येति ।—ब्रह्मस्तुतिरियम् । हे देव ! की जनः अजस्य—जन्मरहितस्य, अथ च जन्म गृह्णतः, निरीहस्य—निश्चेष्टस्य, अथ च हताः द्विषो येन तादृशस्य, स्वपतः—निद्राणस्य, (स्वप्नस्य सिद्धया मनः संयोगरूपतया गुणत्वम्) अथ च जागरूकस्य तव याथार्ये—तत्त्व, वेद ?—जानाति ? अत्र गुणस्य क्रियया विरोधः । इदं रघुवंशस्य पद्यम् ।

## लक्ष्मी

क्रियया सह गुणस्य विरोधं दर्शयति—**अजस्येति** । रघुवंशमहाकाव्ये दशमसर्गे ईश्वरं प्रति देवानां स्तुतिरियम् । हे परमेश्वर ! अजस्य नित्यत्वात् जन्मादिषड्भावरहितस्यापि मत्स्यकूर्मादिरूपेण स्वेच्छया जन्म उत्पत्तिं गृह्णत उपाददतः स्वीकुर्वत इत्यर्थः, निरीहस्य कर्मशून्यत्वात् निरस्तचेष्टस्यापि हतद्विषः विनाशितभक्तरिपोः, तथा जागरूकस्य चैतन्यरूपत्वेन सन्ततं जागरितस्यापि स्वपतः प्रलयसमये निद्रां प्राप्तवतः, तव भवतः परमेश्वरस्य को जनो याथार्थ्यं सत्यं स्वरूपं वेद जानाति, अपि तु न कोऽपीत्यर्थः । अत्रस्थविरोधपरिहारौ वृत्तावेवानुपदं स्फुटीभविष्यतः ।

## रुचिरा

गुणस्य क्रियया विरोधाभासं दर्शयति—**अजस्य** न जायते कर्माधीनत्वेनेति तस्य। 'अपी'ति शेषः। **जन्म**। **गृह्णतः** 'स्वेच्छये'ति शेषः। **निरीहस्य** निरस्तेहा चेष्टा यस्य तस्य। 'अपी'ति शेषः। **हतद्विषो** हता विनाशिता भक्तानुकम्पितया द्विषो भक्तदुःखदा येन तस्य। **जागरूकस्य** जागर्तीति तथोक्तस्य। 'अपी'ति शेषः। **स्वपतः** स्वप्नं नाटयतः। 'स्वप्नस्य सिद्धया मनः संयोगरूपतया गुणत्वम्।' इति विवृतिः। **तव** भगवतः। **याथार्थ्यं** सत्यं स्वरूपम्। **कः** किंस्वरूपो जनो ब्रह्मा वा। **वेद** जानीयात्। रघुवंशस्येदं पद्यम्॥ २३०॥'

**'वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुष ।**
**राकाविभावरीजानिर्विषज्वालाकुलोऽभवत् ॥'**

---

## विवृतिः

विरहहेतुकत्वात्तु समाधानम् ॥ क्रियायाः क्रियाया सह विरोधमाह—**नयनेति** ।

## विज्ञप्रिया

गुणस्य द्रव्यविरोधमाह—**वल्लभोत्सङ्गसङ्गेनेति** । तद् विना विरहिण्या इत्यर्थः । राकाविभावरीजानिः पूर्णचन्द्रः । अत्र चन्द्रो द्रव्यमेकव्यक्तिकरत्वात् । तस्य तादात्म्येन विषज्वालाकुलत्वगुणविरोधः ।

## कुसुमप्रतिमा

द्रव्येण सह गुणस्य विरोधे उदाहरति वल्लभेति । वल्लभेत्सद्भसङ्गेन प्रियतमक्रोडीदोपवेशनेन विना प्रियतिच्छदेनेत्यर्थः, हरिणचक्षुषो मृगलोचनाया नायिकायाः, राकाविभावरी पूर्णिमारात्रिर्जाया यस्य स पूर्ण चन्द्र इति तात्पर्य्यम्, विषज्वालया आकुलः पूर्णः अभवत् ।

अत्रैकन्वक्तित्वात् पूर्णचन्द्रो द्रव्यम् आकुलत्वञ्च गुणः अनयोर्विरोधः, विरहकाले अवस्थावैचित्रयात् समाधानम् ।

## विमला

गुणस्य द्रव्येण सह विरोधमाह, वल्लभीत्सङ्गेति ।—वल्लभस्य—कान्तस्य, उत्सङ्गः,—क्रीडः, तव सङ्गः,—आसक्तिः, उपवेशनमिति भावः, तेन, विना—तत्रोपवेशनेन विनेत्यर्थः, हरिणचक्षुषः,—हरिणेक्षणायाः कान्तायाः, राकाविभावरीजानिः,—राकाविभावरी—पूर्णचन्द्रसमन्विता निशा, पौर्णमासौ रात्रिरित्यर्थः, ("पूर्णे राका निशाकरे" इत्यमरः) जाया—पत्नौ यस्य सः, पौर्णमासीनिशाचन्द्रः इत्यर्थः, विषस्य ज्वालया आकुलः,—आकुलता-जनक इत्यर्थः, अभवत्, । अत्र पूर्णचन्द्रेण द्रव्येण सह दाहजनकत्वस्य गुणस्य तादात्म्येनापाततो विरोधभानं, विरहहेतुकत्वात्तु समाधानम् । अत्र गुणस्य द्रव्येण विरोधः ।

## लक्ष्मी

द्रव्येण सह गुणस्य विरोधं दर्शयति—**वल्लभेति** । वियोगिन्या वर्णनमिदम् । बल्लभस्य प्रियतमस्य उत्सङ्गः क्रोडम् उपचारात्तत्सामीप्य तस्य सङ्गः सम्पर्कस्तेन विना प्रियतमविश्लेषेणेत्यर्थः, हरिणचक्षुषः मृगनयनाया नायिकायाः, राकाविभावरी पूर्णिमारात्रिः जाया पत्नी यस्य स पूर्णचन्द्र इति भावः विषज्वालया गरलज्वालया आकुलः व्याप्त अभवत् ।

## रुचिरा

गुणस्य द्रव्येण सह विरोधाभासं दर्शयति- '**वल्लभोत्सङ्गसङ्गेन** वल्लभस्य प्राणप्रियस्योत्सङ्गः क्रोडमुपचारात् तत्सान्निध्यं तस्य सङ्गः सम्पर्कस्तेन। **विना। हरिणचक्षुषो** मृगाक्ष्याः। **राकाविभावरीजानिः** राका पूर्णिमाऽसौ विभावरी रात्रिरिति, सा जाया यस्य तथोक्तः। राकेशश्चन्द्रः इति भावः। 'जायाया निङ्।' ५/४/१३४ इति निङादेशः। **विषज्वालाऽऽकुलः। अभवत्।** अत्र राकेशस्यानेकव्यक्तिवाचित्वाभावाद्द्रव्येण दाहजनकत्वस्य गुणस्य विरोध आभासमानोऽपि विरहदशायां तस्य सम्भवात्परिह्रियते ॥ २३१ ॥'

**(नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम्।**
**रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥)**

---

## विवृतिः

व्याख्यातमिदं प्राक् (२०४ पृ.) प्रहर्षजन नक्रियया सह खेदजननक्रियाया आपाततो विरोधभानम्। विरहहेतुकत्वात्तु समाधानम् ॥

## विज्ञप्रिया

क्रियायाः क्रियाविरोधमाह—**नयनयुगेति**। आसेचनकं सेकेन तापनाशकम् अमृतेन सेचनकं वा। दुष्प्रापमन्यस्त्रीभिः। अत्र मदनादिक्रिययोर्विरोधः।

## कुसुमप्रतिमा

क्रियया सह क्रियाया विरोधे लक्ष्यमाह नयेनेति। काञ्चित् सुन्दरीमवलोक्य कस्यचित् कामिन उक्तिरियम्। नयनयुगस्य असेचनकम असीमतृप्तिकरम्, "तटसेचनक तृप्तेर्नास्त्यन्तो यस्य दर्शनात्" इत्यमरः। नाना सवृत्त्यापि चित्तवृत्त्यापि दुष्प्रापं दुर्लभम्, निरतिशयपुण्यं नैव प्राप्यत्वान्मम च तदभावादिति भावः, मदिराक्ष्या, खञ्जननयनाया इदं रूपं कर्तृ मे मम हृदयं मदयति आमोदयति, दुनोति च सन्तापयति च।

अत्र वदयति दुनीतीति सुखोत्पादन-दुःखोत्पादनरूपयोः क्रिययोर्विरोधः दृष्टिलाभेन मदयति भोगलाभेन च दुनोतीति हेतुभेदात् समाधानम्।

## विमला

क्रियायाः क्रियया सह विरोधमाह, नयनेति।—नयनयुगस्य आसेचनक्रम—अतितृप्तिकरं, ("तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शने" इत्यमरः) मानसवृत्त्या—मनः कल्पनायाऽपि, दुष्प्रापं—लब्धुमशक्य, मदिराक्ष्या इदं रूपं मे हृदयं मदयति—उल्लासयति, दर्शनेनेति भावः, दुनोति—तापयति च, अप्राप्ता इति भावः। अत्र प्रहर्षजननक्रियया सह खेदजननक्रियाया आपाततो विरोधमानं, विरहहेतुकत्वात्तु समाधानम्। यथा वा—"निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा कलाशेषा मूर्त्तिः शशिन इव नेत्रोत्सवकरी। अवस्थामापन्ना मदनदहनोद्दाहविधुरामियं नः कल्याणी रमयति मनः कम्पयति च ॥" अत्र रमयतीति कम्पयतीति क्रिययोर्युगपदेककारणजन्यत्वरूपो विरोधः, अवच्छेदकद्वयसत्त्वात् तत्परिहारः। क्रियायाः द्रव्येण विरोधो यथा—"अयं वारामेको निलय इति रत्नाकर इति श्रितोऽस्माभिस्तृणातरलितमनोभिर्जलनिधिः। क एवं जानीते निजकरपुटीकोटरगतं क्षणादेनं ताम्यत्तिमिमकरमापस्यति मुनिः?" ॥ अत्र वारानिधिरूपस्य द्रव्यस्य पानं नितान्तमसम्भवि, तस्माद्विरोधः, मुनेस्तु सर्वं तत् सम्भवतीत्यविरोधः। "समदमतङ्गजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात्। क्षितितिलक! त्वयि तटजुषि शङ्करचूडाऽऽपगाऽपि कालिन्दी ॥" अत्र द्रव्यस्य द्रव्येण विरोधः।

## लक्ष्मी

अत्र पूर्णचन्द्रो द्रव्यम्, तस्यानेकव्यक्तिवाचित्वाभावात् तादात्म्येन विषज्वालाकुलत्वञ्च गुण इत्यनयोर्विरोधः, विरहदशायामवस्थावैचित्र्यात्तत्परिहारः ।

क्रियया सह क्रियाया विरोधे उदाहरति—नयनेति । काञ्चित् परमरमणीयां कामिनीं वीक्ष्य तामभिलषतः कस्यचित् कामिनः स्वं प्रत्युक्तिरियम् । पद्यमिदं व्याख्यातपूर्वम् ।

अत्र मदयति दुनोतीति सुखजनन—दुःखजननरूपयोः क्रिययोर्विरोधः दर्शनप्राप्त्या मदयति भोगासङ्गेन च दुनोतीति कारणभेदात्परिहारः ।

## रुचिरा

क्रियायाः क्रियया विरोधाभासं दर्शयति—'नयनेत्यादिना । व्याख्यातपूर्वमिदम् । अत्र खेदजननक्रियायाः प्रहर्षजननक्रियया समं विरोध आभासते, परन्तु सङ्गाभावं यावदित्यन्ततोऽविरोधः ॥ २३२ ॥'

**'त्वद्वाजि' इत्यादि,**

---

## विवृतिः

क्रियाया द्रव्येण सह विरोधमाह—**त्वद्वाजीति**। अत्र हरेण द्रव्येण सह गङ्गाधारणाभावक्रिययास्तादात्म्येनापाततो विरोधभानम् ॥

## विज्ञप्रिया

क्रियायाः द्रव्यविरोधमाह—**त्वद्वाजिराजीति**। अत्र हरो द्रव्यं, तादात्म्येन तस्य नञर्थविशिष्टधारणक्रियाविरोधः। वस्तुतस्तु नेदमुदाहरणमुचितं गङ्गां दधतोऽस्य धारणक्रियाभाररूपगुणस्यैव विरुद्धत्वात्। किन्तु 'मोक्ष्यते शिरसो गङ्गां भुरिभारकरीं हर' इत्येवं पाठविशिष्टमेवेदमुदाहरणं बोध्यम्। **मध्यन्दिनदिनाधिप इति पाठे** इति। चन्द्रसूर्ययोर्विरुद्धशीतोष्णागुणवत्वेन विरोधस्य पुरः स्फुर्त्तिकत्वाद् अत्रापि न रूपकम्। दिनाधिपश्चैक एव सूर्यो नापरे एकादेश इति न जातिविरोधः।

## कुसुमप्रतिमा

द्रव्येण सह क्रियया विरोधे दर्शयति त्वद्वाजीति। इत्यादि उदहरणमिति शेषः। अत्रापि विरोधस्तत्परिहारश्च वृत्तावेव दर्शितः।

## विमला

क्रियाया द्रव्येण सह विरोधमाह, त्वद्वाजीति।—व्याख्यातं प्राक्। अत्र गङ्गाधरोऽपि गङ्गां न धारयतीति गङ्गाधररूपद्रव्यं क्रियया अधारणरूपया विरुद्धमिवापाततः प्रतीयते, राजस्तुतिपरत्वात् तु समाधानम्।

## लक्ष्मी

क्रियाया द्रव्येण सह विरोधे उदाहरति—**त्वद्वाजीति**। इत्यादि लक्ष्यमिति शेषः। एतद् व्याख्यानं प्राक्तनं द्रष्टव्यम्। अत्रापि विरोधपरिहारौ वृत्तावेवालोकनीयौ।

द्रव्यस्य द्रव्येण सह विरोधे उदाहरति—**त्वद्वाजीति**। इत्यादि लक्ष्यमिति शेषः। एतद् व्याख्यानं प्राक्तनं द्रष्टव्यम्। अत्रापि विरोधपरिहारौ वृत्तावेवावलोकनीयौ।

## रुचिरा

क्रियाया द्रव्येण विरोधाभासं दर्शयति—**'त्वद्वाजीत्यादिना**। व्याख्यातपूर्वमिदम्। अत्र हरेणैकव्यक्तिवाचितया द्रव्येण गङ्गाधरत्वेन प्रसिद्धेनापि समं गङ्गाधारणाभावरूपक्रियायास्तादात्म्येनापाततो विरोधः कविप्रौढोक्तया निरसनीय इत्याभासमात्रः ॥ २३३ ॥'

'वल्लभोत्सङ्ग'—इत्यादिश्लोके चतुर्थपादे 'मध्यंदिनदिनाधिप' इति पाठे द्रव्ययोर्विरोधः। अत्र तव विरह—' इत्यादौ पवनादीनां बहुव्यक्तिवाचकत्वाज्जातिशब्दानां दवानलोष्महृदयभेदनसूर्यैर्जातिगुणक्रियाद्रव्यरूपैरन्योन्यं विरोधो मुखत आभासते। विरहहेतुकत्वात्समाधानम्। अत्र 'अजस्य—' इत्यादावजत्वादिगुणस्य जन्मग्रहणादिक्रियया विरोधः। भगवतः प्रभावस्यातिशायित्वात्तु समाधानम्। 'त्वद्वाजि—' इत्यादौ 'हरोऽपि शिरसा गङ्गां न धत्ते' इति विरोधः। 'त्वद्वाजि—' इत्यादिकविप्रौढोक्त्या तु समाधानम्। स्पष्टमन्यत्। विभावनायां कारणाभावेनोपनिबध्यमानत्वात्कार्यमेव बाध्यत्वेन प्रतीयते। विशेषोक्तौ च कार्याभावेन कारणमेव। इह त्वन्योन्यं द्वयोरपि बाध्यत्वमिति भेदः।

---

## विवृतिः

द्रव्यस्य द्रव्येण सह विरोधमाह—**वल्लभेति**। अत्र चन्द्रसूर्ययोद्रव्ययोस्तादात्म्येन विरोधभानम्। **जातिशब्दानामिति**। प्रतिपाद्यतया जातीनां पवनत्वादीनामिति शेषः। यद्वा पवनादीनामिति धर्मपरो निर्देशः। पवनत्वादीनामीति तदर्थः। जातिः शब्दो येषाम्। **दवानलेति**। दवानल इवेत्यर्थः। मुखतः प्रथमतः। **विरहहेतुकत्वादिति**। मलयमरुदादेर्विरहिणां संतापजनकत्वेन दावानलत्वाद्यारोपात्समावेश इति भावः। नन्वजत्वं जन्माभाव एव कथमस्य गुणत्वमिति चेत्, जातिक्रियाभिन्नानां विशेषणानामपि गुणत्वस्वीकारात्। **विशेषोक्तौ चेति**। कार्याभावेनोपनिबध्यमानत्वात्कारणमेव बाध्यत्वेन प्रतीयत इत्यन्वयः। **इह त्विति**। विरोधालंकारे त्वित्यर्थः। ननु 'मलयमरुद्दवानल—' इत्यादौ रूपकमेवेति चेत्। न। सहानवस्थाननियमरूपविरोधस्य पुरःस्फूर्तिकतया वैचित्र्याधायकत्वात्॥

## विज्ञप्रिया

अत्र प्रथमश्लोके जातेश्चतुर्भिः सह विरोधं ग्राहयति—**अत्र तव विरह इत्यादाविति**। पवनादीनामित्यादिपदात् शशिरुच्यलिरुतनलिनीदलपदपरिग्रहः। एषां सर्वेषां बहुव्यक्तिवाचकत्वादित्यर्थः। मुखतः-आपाततः। तेषां यथोक्तजात्याविरोधं दर्शयति—**विरहहेतुकत्वादिति**। समाधानविरोधः। विरोधहेतुकत्वं विरोधं व्यक्त्योरेव तेद्धतुत्वं तद्रव्यक्त्यारोपमात्रम्। नतु विरुद्धयोर्वास्तवमैकाधिकरण्यमित्यर्थः। एव मित्यादिकं स्पष्टम्।

विभावनाविशेषोक्तयोरपि कारणाभावे कार्यसत्त्वयोः कार्याभावकारणसत्त्वयोश्च विरुद्धत्वेन भासमानत्वाद् विरोधाभासत्वप्रसक्तौ तत एनं विशेषयितुमाह—**विभावनायामिति**। कारणाभावेन सहोपनिबध्यमानत्वादित्यर्थः। विशेषोक्ताविति कारणमात्रसामग्री, तस्या एव फलभावकाले बाध्यत्वप्रतीतेः। विशेषोक्त्युदाहरणेषु यद्यत्कारणं निर्दिष्टं तस्यैव सामग्रीत्वेनाध्यासे एवं वैचित्र्यात्। अन्यथा कारणान्तराभावप्रयुक्ते फलाभावे किं वैचित्र्यम्॥

## कुसुमप्रतिमा

द्रव्येण सह द्रव्यस्य विरोधे उदाहर्त्तुमाह वल्लभेति। मध्यन्दिनाधिपो मध्याह्नकालीन सूर्य्यः तद्वत् सन्तापकरत्वादिति भावः। अत्र चन्द्रः सूर्यश्च एकैकमात्रव्यक्तित्वात् द्रव्यरूपः भिन्नयोश्च तयोरभेदाभिधानाद्विरोधः, विरहकालीनत्वाच्च तत्समाधानम्।

इदानीमुदाहृतेषु यथासम्भवं विरोधं तत्समाधानञ्च क्रमाद्दर्शयितुमाह अत्रेति। एतेषु उदाहृतेषु मध्ये इत्यर्थः। पवनादीनां पवनादिवाचकानाम्, बहुव्यक्तिवाचकत्वात् बहुव्यक्तिवाचकत्वेन तदीयशक्यतावच्छेदकानां समवायेन तत्र तत्र वृत्तित्वसम्भवेन च "नित्यानेकसमवेता जातिः" इति लक्षणव्यापनादित्यर्थः, जातिशब्दानां जातिविशिष्टबोधकशब्दानाम्। दवानलत्वं जातिः, उन्मत्वं गुणः, हृदयभेदनं क्रिया, सूर्य्यश्च द्रव्यमिति तद्रूपैरिति यथासंख्येनान्वयः। मुखतः प्रथमतः, आभासते प्रकाशते। विरहो हेतुर्यस्य विरोधस्य स तथोक्तस्तस्य भावस्तस्मात् तादृशतादृशविरोधस्य विरहेणैव जनितत्वादित्यर्थः, समाधानं तत्त विरोधस्य भञ्जनम्। प्रियतमविच्छेददशायां हि प्रेमिकजनानां कामोद्दीपकः समस्तपदार्थ एव कामसन्तापं अनयतीति एकादृशपदार्थनागन्वादृशप्रतीतेः सम्भवपरत्वान्न कश्चिद्विरोध इत्याशयः। एवमन्यत्राप्यवधेयम्।

अजस्येति। कारिकायां जातिक्रिययोः पृथगुपादानात् गुणपदेन जातिक्रियाभिन्नस्य द्रव्यवृत्ति पदार्थमात्रस्यैवग्रहणात् अभावरूपयोरपि अजत्वनिरीहत्वयोर्गुणत्वेन ग्रहणमित्याशं नाह अजत्वादिगुणस्येति। प्रथमादिपदेन निरीहत्वजागरुकत्वयो द्वितीयादिपदेन च शत्रु हनन स्वपनयोग्रहणम्। अतिशयित्वात् सातिशयत्वेन अज्ञेयत्वात्। तथा च यदस्माभिरसम्भवं मन्यते, तत्त्र प्रभावातिशयात् सर्वथैव सम्भवतीति नारायणे तादृशविरुद्धधर्म्मसमावेशोऽपि सम्भवत्येवेति भावः। एवमन्वत्राप्युन्नेयम्।

तद्वाजीति। एकमात्रव्यक्तित्वेन हरी द्रव्यं तस्य च शिरसा गङ्गायां धारणं नियतम्, अत्र च तदभावाभिधानेन गङ्गाधारणकर्त्तरि तदधारणकर्त्तृधर्म्मनिर्द्देशस्यावगतेद्रव्येण सह क्रियाया विरोध इत्यर्थः। कवेः प्रौढोक्त्या बलपूर्वकाभिधानेन। तथा च कवयः खलु वाग्वैचित्रयसम्पादनार्थं बलेनालीकमप्यमिदधतीति तत्र दृश्यमानो विरोधोऽलोकत्वाद्वस्तुतोऽविरोध एवेत्याशयः। इत्यमन्वत्राप्यनुसन्धेयम्।

स्पष्टमिति। अन्वत् "सन्ततमुषलासङ्गात्" इत्यादौ "वल्लभीत्सङ्गसङ्गेन" इत्यादौ "नयनयुग" इत्यादौ च विरुद्धत्वं समाधानञ्च स्पष्टम्, अतो न दर्श्यत इत्याशयः।

ननु विभावनायां विशेषोक्तौ च तथा तथा विरोधप्रतीतेस्ताभ्यां सह अस्य को भेद इत्याह विभावनायामिति। उपनिबध्यमानत्वादभिधीयमानत्वात्। कार्य्यमेव, न तु कारणमित्येवशब्दार्थः, तस्य चानुपनिबध्यमानत्वात् तत्प्रतीतेरेवाभाषादित्याशयः। एवमुत्तरत्रापि बाध्यत्वेन उत्पत्त्ययोग्यत्वेन। कार्य्यभावेन उपनिबध्यमानत्वादिति पूर्वेणान्वयः। कारणमेव, न तु कार्य्यमित्येवशब्दार्थः, बाध्यत्वेन प्रतीयत इत्यनुषज्यते। बाध्यत्वेन कुतोऽपि कारणदुत्पादनयोग्यत्वेन। इह तु विरोधाभासे तु, अन्यन्य परस्परम्, द्वयोरपि कार्य्यकारणयोस्तद्भिन्नयोर्वा पदार्थयोः, बाध्यत्वं विरोधवशादेवासम्भवत्वं प्रतीयत इति पूर्वेणान्वय।

तदिदं विरोधाभासभेदसङ्कलनम्।

प्रकारः। उदाहरणम्।

१) जात्या सह जातेर्विरोधः — "मलयमरुद्वानलः।"

२) जात्या सह गुणस्य विरोधः — "शशिरुचोऽपि सोष्माणः ।"

३) जात्या सह क्रियाया विरोधः — "हृदयमलितरूतमपि भिन्ते" ।"

४) जात्या सह द्रव्यस्य विरोधः — "नलिनीदलमपि निदाधरविः"

५) गुणेन सह गुणस्य विरोधः — "कठिनकराः सुकुमाराः ।"

६) गुणेन सह क्रियाया विरोधः — "अजस्य गृह्णतो जन्म ।"

७) गुणेन सह द्रव्यस्य विरोधः — "राकाविभावरोजानिविषज्वालाकुलः ।"

८) क्रियया सह क्रियाया विरोधः — "रूपमिदं हृदयं मदयति दुनोति च ।"

९) क्रियया सह द्रव्यस्य विरोधः — "हरोऽपि शिरसा गङ्गां न धत्ते ।"

१०) द्रव्येण सह द्रव्यस्य विरोधः — "राकाविभावीजानिर्मद्यन्दिंनदिनाधिपः ।"

विरोधप्रस्तावाद्विरोधविशेषघटितमेव अमङ्गलङ्कारं निरूपयति कार्य्येति । कार्य्यकारणयोभिन्नदेशतायां भिन्नाधिकरणत्वेन सति, असङ्गतिर्नाम अलङ्कार उच्यते, कार्य्यकारणयोर्वैयधिकरण्यमेव असङ्गतिरित्यर्थः । विरोधेन सह अस्या भेदस्तु वृत्तविवोक्तः ।

कार्य्यकारणयोः सामानाधिकरण्यनियमेन वैयधिकरण्ये कार्य्योत्पत्तेरेवामङ्गत्या अस्य असङ्गतिरिति नाम । "वनेऽस्ति दण्डी भवने घटश्च" इत्यादौ कार्य्यकारणयोर्वैयधिकरण्येऽपि वैचित्र्यभावान्नायमलङ्कारः ।

सेति । अमररुतके काश्चित् सुन्दरीमवलोक्य गत्वा सखायं प्रति कस्यचित् कामिन उक्तिरियम् । सा अवलोकितपूर्वा सुन्दरी, बाला बालिका, किन्तु वयं "वाष्मदश्च" इति बहुवचनादहमित्यर्थः, परत्राप्येवम् । अपगल्मनसः अधृष्टचित्ताः, तदानीं किमपि वक्तुमक्षमत्वादित भावः । सा स्त्री, वयन्तु कातरा दुर्बलाः, तदन्तिके अनुनयादिप्रवणत्वादित्याशयः । सा बाला, पौनं स्थूलञ्च तत् उन्नतिमत् तुद्गता युक्तञ्चति तत् तादृशं पयोधरयुगं स्तनद्वयं धत्ते धारयति, किन्तु वयं सखेदाः क्रान्तियुक्ताः, कामभाराक्रान्तत्वादित्यभिप्रायः । तथा सा नायिका, गरुणा विशालेन जघनस्थलेन आक्रान्ता, किन्तु वयं न गन्तु शक्ताः, तां परित्यक्तुं मनसः सर्वथैवनिच्छुत्वादिति भावः । अतएव अन्यजनाश्रितैर्दोषैर्वयम् अपटवः कर्त्तव्यकर्म्मासमर्था जाताः स्म इत्याद्भुतमाश्चर्य्यम् ।

अत्र कारणीभूतानां बालत्वादीनां नायिकानिष्ठत्वात् तत्कार्य्यभूतानामप्रगल्भमनस्त्वादीनाञ्च वक्तृनिष्ठत्वा दसङ्गतिलङ्कारः । इयं मालारूपा ।

केवलरूपा यथा नेषधे—

**"अजस्रमारोहसि दूरदीर्घा सङ्कल्पसोपानततिं तदीयाम् ।**
**श्वासान् स वर्षत्यधिकं पुनर्यंत् ध्यानात्तव त्वन्मयतामवाप्य ॥"**

अत्र सोपानारोहणं दमयन्त्याम अधिकश्वासास्तु नले इति कारणकार्य्ययोर्वैयधिकरण्यादसङ्गतिः ।

ननूदाहृते यथासम्भवं विरुद्धवद्भासनाद्विरोधालङ्कार एवास्तामित्याह अस्याश्चेति । असङ्गते श्वेत्यर्थः । अपवादत्वात् केवलकार्य्यकारणवैयधिकरण्यविषयकतया विशेषरूपत्वेन बाधकत्वात्, एकदेशस्थयोः समानाधिकरणयोः कार्य्यकारणयोरिति शेषः । सामान्यविशेषन्वायादिति भावः ।

## विमला

द्रव्यस्य द्रव्येण सह विरोधमाह, वल्लभेति ।—अत्र चन्द्रसूर्य्ययोः द्रव्ययोः तादात्म्येन विरोधभानम् । जातिशब्दानामिति ।—जातिः शब्दो येषां तथोक्तानामित्यर्थः, प्रतिपाद्यतया जातीनां पवनत्वादीनामिति शेषः; यद्वा—पवनादीनामिति धर्मपरो निर्देशः, पवनत्वादीनामिति तदर्थः । दावानलेति—दावानलत्वेत्यर्थः । मुखतः,—प्रथमतः । विरह हेतुकत्वात् इति ।—मलयमरुदादेर्विरहिणां सन्तापजनकत्वेन दावानलत्वाद्यारोपात् समावेश इति भावः । नन्वजत्वं जन्माभाव एव, कथमस्य गुणत्वम् ? इति चेत्, जातिक्रियाभिन्नानां विशेषानामपि गुणत्वस्वीकारात् । विशेषोक्तौ चेति ।—कार्य्याभावेनोपनिबध्यमानत्वात् कारणमेव बाध्यत्वेन प्रतीयते इत्यन्वयः । इह त्विवति ।—विरोधालङ्कारे त्वित्यर्थः । ननु "मलयमरुद्दवानल—" इत्यादौ रूपकमेवेति चेत्, न; सहानवस्थाननियमरूपविरोधस्य पुरः स्फूर्त्तितया वैचित्र्याधायकत्वात् इति ।

## लक्ष्मी

द्रव्यस्य द्रव्येण सह विरोधे दर्शयति—**वल्लभेति** । मध्यन्दिनस्य मध्याह्नसमयस्य अधिपः सूर्यः, तद्वत् सन्तापदायित्वादित्यभिप्रायः । अत्र चन्द्रसूर्ययोरनेकव्यक्तिवाचित्वाभावाद् द्रव्यत्वम्, भिन्नद्रव्यत्वादेव चोभयोरभेदप्रतिपादनाद्विरोधः, वियोगे चन्द्रस्य सन्तापदायित्वेन तथा प्रतीतिर्युक्तैवेति तत्परिहारः ।

सम्प्रति प्रदर्शितोदाहरणेषु यथासम्भवं विरोधपरिहारौ यथाक्रममुपपादयितुमुत्थापयति—**अत्रेति** । उदाहृतमध्ये इत्यर्थः । पवनादीनां पवनादिवाचकानाम् आदिपदेन शशिरुच्यलिरुतनलिनीदलपदानां परिग्रहः, एषां सर्वेषां बहुव्यक्तिवाचकत्वात् अनेकव्यक्त्यभिधायकत्वेन तच्छक्यतावच्छेदकानां समवायसम्बन्धेन तत्र तत्रोपलम्भसम्भवेन च 'नित्यत्वे सत्यनेकसमवेतत्वम्' इति लक्षणाक्रान्तत्वादित्यर्थः, जातिशब्दानां जातिविशिष्टग्राहकपदानाम्, दवानलोष्म-हृदयभेदेन सूर्यैः दवानलत्वोष्मत्वहृदयभेदसूर्यैः यथासङ्ख्यं जातिगुणक्रियाद्रव्यरूपैः । मुखत आपाततः आभासते प्रतीयते । तथाहि—दवानलत्वमलयपवनत्वजात्योर्विरोधः, न चात्र रूपकं स्यादिति वाच्यम्, दाहकत्वशीतलत्वधर्मव्याप्ययोर्जात्योर्विरोधस्यैव प्रथमं स्फुरणात् । एवं शशिरुचित्वजातेश्च सोष्मत्वगुणविरोधः । न चात्रातिशयोक्तिः ? वियोगिजनस्य शशिरुक्प्रभृतिषु सोष्मत्वादिप्रतीतेः सत्यरूपत्वात् । हृदयमित्यत्रालिरुतत्वजातेर्भेदेन क्रियया विरोधः । एवं नलिनीलमदपीत्यत्र नलिनीदलत्वजातेर्निदाघवारिणा द्रव्येण सह तादात्म्येन विरोधः अत्रापि विरुद्धधर्मव्याप्यत्वाद्विरोधस्यैव प्रथमतः स्फुरणात् अपिकारेण विरोधनाञ्च न रूपकम्, रवेरुष्मत्वव्याप्यता तु तादात्म्येन । रवीणां द्वादशत्वेऽपि नात्र जातिविरोधः, निदाधीयविशेषणादृतुषट्कप्रवर्त्तकरवेरेवात्र रविपदार्थत्वात् तस्य त्वेकत्वात् । विरहहेतुकत्वात् मलयमरुदादेर्विरहिणीनां सन्तापकत्वेन समाधानं तत्र दवानलत्वाद्यारोपेण तद्विरोधभञ्जनम्, प्रियतमविश्लेषावस्थायां हि स्नेहभाजां कामजनकं सफलं वस्त्वेव कामवेदनामुत्पादयतीति एकविधपदार्थानामन्यविधप्रतीतेः सम्भवपरत्वेन न कोऽपि विरोध इत्यभिप्रायः । अन्यत्राऽप्येवमेवावगन्तव्यम् ।

दुर्बाधं लक्ष्यसमन्वयं विज्ञायैकमुपेक्ष्य दर्शयति—**अजस्येति** । अजत्वादीत्यत्रादिपदेन निरीहत्वजागरूकत्वयोः, जन्मग्रहणादीत्यत्रादिपदेन शत्रुहननस्वपनयोः परिग्रहः । नन्वजत्वे जन्माभाव एव तर्हि कथमस्य गुणत्वमिति चेत् ? मैवम्, जातिक्रियाभिन्नानां विशेषणानामपि गुणत्वाभ्युपगमात् । भगवतः भगवत्सम्बन्धिनः प्रभावस्य माहात्म्यस्य अतिशयितत्वात् सातिशयत्वेन अबोध्यत्वात् । समाधानम् अविरोधः । एवञ्चास्माभिर्यसम्भाव्यते

तत्तत्र नारायणे माहात्म्यातिशयेन सम्भवतीति तथाविधविरुद्धधर्मप्रवेशोऽपि सम्भवत्येवेत्याशयः । अन्यत्राऽप्येव-मेवावधार्यम् ।

**त्वद्वाजीति** अनेकव्यक्तिवाचित्वाभावेन हरो द्रव्यम्, तस्य च शिरसा गङ्गाधरत्वं निश्चितम्, तथा च तदभावप्रतिपादनेन गङ्गाधरणकर्त्तरि तदधारणकर्त्तृनिर्देशस्य प्रतीतेः क्रियायाः द्रव्येण सह विरोधः स्फुटः । **कविप्रौ-ढोक्त्येति** । कविभिः स्वप्रतिभावाग्विच्छित्तिप्राप्त्यर्थं हठपूर्वकमसत्यमपि प्रतिपाद्यत इति तत्रोपलभ्यमानो विरोधोऽसत्यत्वापरमार्थतोऽविरोध एवेति भावः । अन्यत्राऽप्येवमेवावगन्तव्यम् ।

यत्र विरोधपरिहारौ न प्रदर्शितौ तदर्थं प्रतिपादयति— **स्पष्टमिति** । अन्यत् गुणस्य गुणेन सह विरोधोदा-हरणे न प्रदर्शितौ तदर्थ प्रतिपादयति— **स्पष्टमिति** । अन्यत् गुणस्य गुणेन सह विरोधोदाहरणे 'सन्ततमुसलासङ्गात्' इत्यादौ, गुणस्य द्रव्येण सह विरोधोदाहरणे 'वल्लभोत्सङ्गसङ्गेन' इत्यादौ च विरोधपरिहारौ स्पष्टं स्फुटम् अतो नेहोपन्यस्यत इति भावः ।

विभावनाविशेषोक्त्योरपि कारणाभावे कार्यसत्त्वयोः कार्याभावकारणसत्त्वयोश्च विरोधत्वेन प्रतीयमा-नत्वात् तत्राप्ययमलङ्कारः स्यादतस्तत एनं विशेषयितुमुत्थापयति— **विभावनायामिति** । उपनिबध्यमानत्वात् प्रति-पाद्यमानत्वात्, कार्यमेव न तु कारणमित्येवपदार्थः तस्य च प्रतिपाद्यमानत्वाभावादितिभावः । एवमग्रेऽपि । बाध्यत्वेन विरुद्धत्वेन उत्पत्यसमर्थत्वेनेत्यर्थः । कार्याभावेन कारणस्योपनिबध्यमानत्वादितिशेषः, कारणमेव न तु कार्यमित्येवपदार्थः 'बाध्यत्वेन प्रतीयते' इति पूर्वेण सम्बन्धः । इह तु विरोधाभासापरपर्याये विरोधालङ्कारे तु अन्योऽन्यं मिथः द्वयोरपि कार्यकारणयोस्तदतिरिक्तयोर्वा वस्तुनोः, बाध्यत्वं विरुद्धत्वं 'प्रतीयते' इति पूर्वेणः सम्बन्धः ।

अथ बोधसौकर्यायस्यालङ्कारस्य सोदाहरणं भेदा प्रदर्श्यन्ते—

भेदाः— उदाहरणानि—

१. जात्या सह जातेर्विरोधः — 'तव विरहे' इत्यत्र 'मलयमरुद्दवानलः ।'

२. „ „ गुणस्य विरोधः — „ „ „ एवं 'शशिरुचोऽपि सोष्माण ।

३. „ „ क्रियाया „ — „ „ „ 'हृदयमलिरुतमपि भिन्ते' ।

४. „ „ द्रव्यस्य „ — „ „ „ 'नलिनीदलमपि निदाघरविः' ।

५. गुणेन सह गुणस्य „ — सन्ततेत्यत्र 'कठिनकराः सुकुमाराः ।'

६. „ „ क्रियाया „ —'अजस्य गृह्णतोजन्म' ।

७. „ „ द्रव्यस्य „ — बल्लभोत्सङ्गेत्यत्र 'राकाविभावरीजानिर्विषज्वालाकुलोऽभवत् ।'

८. क्रियया, क्रियाया „ — नयनयुगेत्यत्र 'रूपमिदं मदिराक्ष्या हृदयं मदयति दुनोति च' ।

९. „ „ द्रव्यस्य „ — त्वद्वाजिराजीत्यत्र 'हरोऽपिशिरसा गङ्गां न धत्ते ।'

१०. द्रव्येण „ „ „ — बल्लभोत्सङ्गेत्यत्रैव 'राकाविभावरीजानिर्मध्यन्दिनदिनाधिपः ।'

## रुचिरा

द्रव्यस्य द्रव्येण विरोधाभासं दर्शयति—**'वल्लभोत्सङ्गसङ्गेन । विना । हरिणचक्षुषः । राकाविभावरी-जानिः । मध्यन्दिनदिनाधिपो** मध्यन्दिनस्य मध्याह्नस्य दिनाधिपः सूर्यः । अत्र राकाविभावरीजानेश्चन्द्रस्य दिना-धिपस्य सूर्यस्य च द्रव्यत्वाद विरोधो भासते, अथापि विरहे राकेशस्य सन्तापकत्वेन तथाप्रतीतिः सङ्गच्छत एवेत्यविरोधः ॥ २३४ ॥'

बोधसौलभ्याय दुर्बोधं लक्ष्यसमन्वयं निर्दिशति-**अत्रैतेषूदाहृतेषु** मध्ये । **'तव विरहे...' इत्यादौ । पव-नादीनां** पवनत्वादीनामित्यर्थः । आदिपदेन रुचिध्वनिपत्रत्वानां ग्रहणम् । **बहुव्यक्तिवाचकत्वात् । जातिशब्दानां** जातिः शब्दो येषां तेषां तथाभूतानाम् । **दवानलोष्म**-हृदयभेदन-सूर्यैर्दवानलत्वोष्म-हृदयभेदनसूर्य्यैः । जातिगुण-**क्रियाद्रव्यरूपैः । अन्योऽन्यं** परस्परम् । **विरोधः । मुखतः** प्रथमतः । **आभासते** प्रतीयते । **विरहहेतुकत्वात्** मलयमरुदादेर्विरहिणीनां सन्तापकत्वेन । **समाधानं** तत्र दवानलत्वाद्यारोपेण परिहारः । एवम्—**'अजस्य...' इत्यादौ । अजत्वादिगुणस्य** । आदिपदेन निरीहत्वजागरूकत्वयोर्ग्रहणम् । 'नन्वजत्वं जन्माभाव एव कथमस्य गुणत्वामिति चेत् ! जातिक्रियाभिन्नानां विशेषणानामपि गुणत्वस्वीकारात् ।' इति विवृतिः । **जन्मग्रहणादिक्रि-यया** । आदिपदेन शत्रुहनन–स्वपनयोर्ग्रहणम् । **विरोधः** । तस्य च—**भगवतो** भगवत्सम्बन्धिनः । **प्रभावातिश-यात् । तु** पुनः । **समाधानं** परिहारः । तथा—**'त्वद्वाजि...' इत्यादौ । 'हरो** गङ्गाधरत्वेन प्रसिद्धः शङ्करः । **अपि । शिरसा । गङ्गाम् । न । धत्ते ।' इति । विरोधः** । तस्य च—**'त्वद्वाजि...' इत्यादिकविप्रौढोक्त्या । तु । समाधानम् । अन्यत्** उदाहरणान्ते विरोधस्तसमाधानं चेत्यर्थः । स्पष्टम् ।

**कार्यकारणयोर्भिन्नदेशतायामसंगतिः ।**

यथा—

**'सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः**
**सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।**
**साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं**
**दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम् ॥'**

अस्याश्चापवादकत्वादेकदेशस्थयोर्विरोधे विरोधालंकारः ।

---

## विवृतिः

असंगत्यलंकारमाह—**कार्यकारणयोरिति** । भिन्नदेशतायां वैयधिकरण्ये ॥ **सा बालेति** । सखायं प्रति नायिकामप्राप्य दुःखभाज उक्तिरियम् । अप्रगल्भमनसः कार्याकार्यावधारणाक्षमचेतसः । तस्या बालात्वेन मदुपभोगरूपकार्यावधारणाक्षमत्वं युक्तम् । मम तु तत्प्राप्त्युपायरूपकार्यावधारणाक्षमत्वमित्याश्चर्यत्वम् । कातराः सभयचेतसः । स्त्रीणां स्वाभाविकं भयम्, मम तु स्मरभयमिति भावः । स्मौ वयम् । अत्र बालत्वादीनां कारणानां नायिकावृत्तित्वमप्रगल्भमनस्त्वादीनां कार्याणां नायकवृत्तित्वमिति वैयधिकरण्यम् । केचित्तु—'कार्यकारणभूतयोर्धर्मयोरत्यन्तं भिन्नदेशतया युगपदुत्पन्नत्वेन ख्यातिरसंगतिः ।' एकधर्मिण्यवच्छेदकभेदेन भिन्नदेशतावारणायात्यन्तमिति । तेन 'दष्टो भुजङ्गेन पदेऽक्षिघूर्णना—' इत्यत्र नातिव्याप्तिः । दंशनघूर्णनयोरेकस्मिञ्शरीरे संगतिसत्त्वात् कालभेदेन तदुभयख्यातिवारणाय युगपदिति । तेन 'क्रिया शरीरेऽत्र परत्र भोगः' इत्यत्र नातिव्याप्तिः' इत्याहुः । तन्न । 'दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम्' इत्यत्र स्वोक्तोदाहरणे बोधकाभावेन कार्यकारणयोर्युगपदुत्पन्नत्वख्यातिविरहात् । 'सा स्त्री वयं कातराः' इत्यत्र स्त्रीत्वस्य कारणस्योत्पन्नत्वाभावादेव कार्योत्पत्तिर्युगपदुत्पन्नत्वख्यातिविरहात् न च स्त्रीत्वस्योत्पन्नत्वमारोप्यमिति वाच्यम् । तस्य वैचित्र्यानावहत्वेन तदङ्गीकारस्यान्यायत्वात् । 'दष्टो भुजंगेन—' इत्यादौ युगपदुत्पन्नत्वख्यातिविरहादेवातिप्रसङ्गभङ्गेन तद्वारणार्थमुपात्तस्यात्यन्तपदस्यानर्थकत्वाच्च ।

## विज्ञप्रिया

असङ्गत्यलङ्कारमाह—**कार्यकारणयोरिति** । उत्पत्तिकाले समानदेशतया प्रतीतिनियतयोरित्यर्थः । तेनाऽन्यदा भिन्नदेशयोर्दण्डघटयोः सर्वदैव भिन्नदेशयोः कार्ययोश्च भिन्नदेशत्वेऽपि नायमलङ्कारः ।

**सा बालेति** । दूरस्थां प्रियां स्मृत्वा विरहे दुर्बलस्योक्तिरियम् । बाल बाल्यधर्ममृदुत्ववती तत्कार्यं तस्या एव वचोऽप्रागल्भ्यं तच्चास्माकं विरहादौर्बल्यात् । वस्तुतो बालात्वेऽपि पौनस्तनकथनानुपपत्तेः ।

सा स्त्रीति कातर्यस्य स्त्रीधर्मत्वात् । गमनाशक्तिरपि दौर्बल्यात् । विरोधालङ्कारबोधकतामस्या आह-अस्या इति । विरोधालङ्कारो भिन्नैकदेशता नियमेनाऽनुक्तत्वादुत्सर्गः । अस्याश्च भिन्नदेशतानियमेनोक्तत्वेनाऽपवादत्वादेतद्विषयपरिहारेणैकदेशस्थयोरेव विरोध इत्यर्थः ।

## लोचन

'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' अमरः । मदिरो मत्तचकोरः ।

कारणाभावे इत्यनन्तरं बलवदित्यर्थः । एवमन्यत्र ।

भिन्नदेशस्थत्वमाप्ततायां यद्देशमेव कारणं तद्देशमेव कार्यमित्येवमेव नियमः । एकदेशस्थयोरेव नतु भिन्नदेशस्थयो अपवादविधेर्बलीयस्त्वादितिभावः ।

## विमला

असङ्गतिमाह, कार्य्येति ।—कार्य्यकारणयोः भिन्नदेशतायां—वैयधिकरण्ये, कार्य्यकारणयोः समदेशवर्त्तित्वं नियमः, तदन्यथात्वे इत्यर्थः, असङ्गतिः । प्रकाशकारोऽप्याह—"भिन्नदेशतयाऽत्यन्तं कार्य्यकारणभूतयोः । युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसङ्गतिः ॥" इति ।

सेति ।—नायिकामप्राप्य दुःखभाजः कस्यचित् विरहिणः सखायं प्रति उक्तिरियम् ।—सा—कान्ता इति यावत्, वाला—मुग्धा, वयम् अप्रगल्भमनसः,—कार्य्याकार्य्यावधारणाक्षमचेतसः, तस्याः बालात्वेन भदुपभोगरूपकार्य्यावधारणाक्षमत्वं युक्तं, मम तु तत्सम्भोगलालसत्वेऽपि तत्प्राप्तुपायरूपकार्य्यावधारणाक्षमत्वमित्यांश्चर्य्यम् इति भावः, सा स्त्री, वयं कातराः,—सभयाः, कामभयार्त्ता इत्यर्थः, स्त्रीणामेव कातरत्वं स्वभावः, न तु पुंसामिति भावः, सा पीनोन्नतिमत्—पीनमुन्नतञ्चेत्यर्थः, पयोधरयुगं धत्ते—धारयति, वयं सखेदाः,—श्रान्ताः, सा गुरूणा—दुर्भरेण, जघन स्थलेन आक्रान्ताः—अभिभूता, वयं गन्तुं—चलितुं, पुरः पदं धर्त्तुमिति यावत्, न शक्ताः, कामार्त्ततया किमपि कर्त्तुं न समर्था इति भावः, अन्यजनाश्रितैः,—तत्कान्तारूपजनाश्रितैः, दोषैः स्मः,—(इदमव्ययं) वयम्, अपटवः,—इतिकर्त्तव्य मूढाः, जाताः इति अद्भुतम्—आश्चर्य्यम् । अत्र अप्रगल्लभमनस्त्वादिकं कार्य्यं नायकनिष्ठं, कारणन्तु बालात्वादिकं नायिकानिष्ठमिति कार्य्यकारणयोर्भिन्नदेशत्वम् । शार्दूलविक्रीडितं वृत्तम् । अमरुशतकस्येदं पद्यम् । केचित्तु—"कार्य्यकारणभावयोः धर्मयोः अत्यन्तं भिन्नदेशतया युगपदुत्पन्नत्वेन ख्यातिरसङ्गतिः । एक धर्मिण्यवच्छेदकभेदेन भिन्नदेशतावारणायात्यन्तमिति, तेन "दष्टो भुजङ्गेन पदेऽक्षिघूर्णना" इत्यत्र नातिव्याप्तिः, दंशनघूर्णनयोरेकस्मिन् शरीरे सङ्गतिसत्त्वात्; कालभेदेन तदुभयख्यातिवारणाय युगपदिति, तेन "क्रियाशरीरेऽत्र परत्र भोगः" इत्यत्र नातिव्याप्तिः" इत्याहुः, तन्न; "दन्तक्षतं कपोले बध्वाः, वेदना सपत्नीनाम्" इत्यत्र स्वोक्तोदाहरणे बोधकाभावेन कार्य्यकारणयोः, युगपदुत्पन्नख्यातिविरहात्, "सा स्त्री वयं कातराः" इत्यत्र स्त्रीत्वस्य कारणत्वस्य उत्पन्नत्वाभावादेव कार्य्योत्पत्तियुगपदुत्पन्नत्वख्यातिविरहात् । न च स्त्रीत्वस्योत्पन्नत्वमारोप्यम् इति वाच्यम्; तस्य वैचित्र्यानावहत्वेन तदङ्गीकारस्यान्याय्यात्वात्, "दष्टो भुजङ्गेन" इत्यादौ युगपदुत्पन्नत्वख्यातिविरहादेवातिप्रसङ्गभङ्गेन तद्वारणार्थमुपात्तस्यात्यन्तपदस्य अनर्थकत्वाच्च । अस्मन्मते तु कार्य्यकारणयोर्वैयधिकरण्यस्यैव यत्र विच्छित्तिविशेषजनकत्वं, तत्रैव तस्यालङ्कारत्वस्वीकारः । "दष्टो भुजङ्गेन" इत्यादौ कार्य्यकारणयोरवच्छेदकभेदसत्त्वेऽपि अधिकरणस्यैकत्वेन वैयधिकरण्याभावात्, "क्रियाशरीरे" इत्यादौ वैयधिकरणयस्य सत्त्वेऽपि तस्य विच्छित्तिविशेषानाधायकत्वादेव नातिप्रसङ्ग इति सङ्क्षेपः । उदाहरणान्तरं यथा—"सन्नयासमकृत काञ्ची जहौ दुकूलं कलत्रमवलायाः । तत्याज रागमधरो मुक्तिमुरीचक्रिरे चिकुराः ॥" अबलायाः काञ्ची सन्नयासम् अकृत, दुकूलं कलत्रम्—अबलां, जहौ । स्पष्टमन्यत् । अत्र चिकुराणां मुक्तयङ्गीकारे काञ्च्यादीनां सन्न्यासाद्यङ्गीकारः इति स्फुटं वैयधिकरण्येन असङ्गतिः । "वर्षासु जाता नवयौवनश्रीराशावधूः प्रौढ़पयो-

धराऽभूत्। पुष्पोद्गमोऽजायत केतकीनां वभूवुरस्पृश्यतमास्तटिन्यः॥" अत्रेयं मालरूपा। "अजस्रमारोहति दूरदीघो सङ्कल्पसोपानततिं तदीयाम्। श्वासात् स वर्षत्यधिकं पुनर्यत् ध्यानात्तव त्वन्मयतामवाप्य॥" अत्र भैम्या सोपानारोहणं, नले च श्वास इति वैयधिकरण्यम्।

ननु कार्य्यकारणयोः सहानवस्थानलक्षणो विरोधोऽत्रास्ति, तस्यैवात्रालङ्कारत्वमास्तां, किमधिककल्पनया? इत्यत आह, अस्याश्च इति।—अस्याः,—कार्य्यकारणवैयधिकरण्यरूपाया असङ्गतेः, अपवादत्वात्—विलक्षणवैचित्र्याधायकत्वेन विशेषत्वात्, एकदेशस्थयोः,—समानाधिकरणयोः, विरोधे विरोधालङ्कारः,—विरोधालङ्कारस्य विषय इत्यर्थः, भिन्नदेशयोस्तथात्वे असङ्गतिरिति भावः।

## लक्ष्मी

विरोधप्रकरणाद्विरोधविशेषयुक्तमेवासङ्गत्यलङ्कारं लक्षयति—**कार्येति**। कार्यकारणयोः फलनिमित्तयोः भिन्नदेशतायां व्यधिकरणत्वे सति, असङ्गतिः तन्नामालङ्कार 'उच्यत' इति पूर्वतोऽनुवर्तते। कार्यकारणयोर्हि सामानाधिकरण्यनियमः सर्वत्र दृष्टः, यथा—'पर्वतस्थो वह्निः पर्वतस्थमेव धूमं जनयति न तु महानसीयो वह्निः पर्वतदेशे धूमं जनयति' इति। एवञ्चात्र तु कार्यकारणयोर्वैयधिकरण्येन स्थितेरेवासङ्गत्या असङ्गतिरित्यभिधीयते। अत्र च भिन्नदेशतायाम**त्यन्तेति** विशेषणमवश्यमेव देयम्, अन्यथा 'दष्टो भुजङ्गेन पदेऽक्षिण घूर्णते' इत्यत्र भिन्नदेशत्वेनातिव्याप्तिः स्यात्, तदुपादाने तु पदाक्षणोरत्यन्तभिन्नदेशत्वाभावेन दोषाप्रसक्तेरिति केचित्। न च कार्यकारणयोरत्यन्तवैयधिकरण्ये यद्ययमलङ्कारस्तर्हि 'दण्डोह्यरण्येऽस्ति गृहे घटश्च' इत्यादावप्ययं स्यादितिवाच्यम्, तत्र वैचित्र्याभावेनालङ्कारत्वाभावात्। अतिशयोक्तौ कार्यकारणयोः पौर्वापर्यविपर्ययः, अत्र तु कार्यकारणयोर्वैयधिकरण्यमिति भेदः। विरोधेन सहास्या भेदस्तु वृत्तावेव स्फुटीभविष्यति।

उदाहरति—सेति। काञ्चिद्रमणीं वीक्ष्य तामभिलषतो वयस्यं प्रत्येत्यं कस्यचित् सखिन्नस्य कामिन अमरुशतके उक्तिरियम्। हे वयस्य! सा दृष्टपूर्वा रमणी, बाला बाल्यधर्म मृदुत्ववती, किन्तु वयम् 'अस्मदो द्वयोश्च १/२/५९ पा. सूत्रेणैकत्वे विक्षिते बहुवचनादाहमित्यर्थः, अग्रेऽप्येवमेव बोध्यम्। अप्रगल्भमनसः न प्रगल्भं कार्यकार्यावधारणक्षमं मनश्चित्तं येषां ते तथोक्ताः, तत्समये किमप्यभिधातुमसमर्थत्वादित्याशयः। सा स्त्री, वयन्तु कातराः सभयचेतसः तत्समीपे अनुनयादिततपरत्वादितिभावः। सा बाला, पीनं पुष्टञ्च तत् उन्नतिमत् उच्चत्वयुक्तञ्चेति तत् तथोक्तं पयोधरयुगं कुचद्वन्द्वं धत्ते धारयति, किन्तु वयं सखेदाः सखिन्नाः, तदप्राप्तेरितितात्पर्यम्। तथा सा रमणी, गुरुणा पृथुलेन जघनस्थलेन नितम्भरेण आक्रान्ता, किन्तु वयं न गन्तुं शक्ताः, तत्परित्यागाय सर्वथैव चेतसोऽनभिलषितत्वादित्यभिप्रायः। अतएव अन्यजनाश्रितैः अन्यजनाबलम्बिभिः दोषैः बालत्वादिभिः वयम् अपटवः अकर्मण्यः कर्त्तव्यकर्मासमर्था जाताः स्म इत्युद्भुतं विचित्रम्। शार्द्दूलविक्रीडितं छन्दस्तल्लक्षणञ्चोक्तं प्राक्।

अत्र कारणीभूतानां बालत्वप्रभृतीनां बालिकावृत्तित्वात् तत्कार्यभूतानामप्रगल्भमनस्त्वप्रभृतीनाञ्च तत्कामिवृत्तित्वादसङ्गतिः।

## रुचिरा

अस्यालङ्कारतो भेदं निदर्शयति—**विभावनायाम्** (इत्यस्य 'प्रतीयते' इत्यनेनान्वयः)। **कारणाभावेन**। कार्य्यस्ये'ति शेषः। **उपनिबध्यमानत्वात्**। **कार्य्यम्**। **एवं**। 'नतु कारणम्' इति शेषः। **बाध्यत्वेन** विरुद्धत्वेन।

**प्रतीयते । विशेषोक्तौ । च** पुनः । **कार्य्याभावेन** । 'कारणस्योपनिबध्यमानत्वा'दिति शेषः । **कारणम्** । **एव** 'नतु कार्य्यं बाध्यत्वेन प्रतीयत' इति शेषः । **इह** विरोधाभासापरपर्य्याये विरोधालङ्कारे । **तु** । **अन्योऽन्यं** परस्परम् । **द्वयोः** कार्य्यकारणयोः । **अपि** । **बाध्यत्वं** विरुद्धत्वम् । **इति** । **भेदः** ।

असङ्गतिं लक्षयति—१५३ **कार्य्यकारणयोः** । **भिन्नदेशतायां** भिन्नदेशवार्त्तित्वे । **असङ्गतिस्तन्नामा-**ऽलङ्कारः । तथोक्तम्—'यद्देशं कारणं तद्देशमेव कार्य्यमुत्पद्यमानं दृष्टं तथा घटादिः; किन्तु—यत्र केनापि हेतुना तयोर्नानादेशसम्भवितयाऽसङ्गतत्वं साऽसङ्गतिर्नामलङ्कारः ।' इति ॥ १२२ ॥

उदाहरति—**यथा**—'**सा** । **बाला** । **वयं** तत्सम्पर्कमपि अलब्धवन्तः । **अप्रगल्भमनसो** न प्रगल्भं कार्य्या-कार्य्यावधारणक्षमं मनो येषां तथोक्ताः । **सा** । **स्त्री** । **वयम्** । **कातराः** सभयचेतसः । **सा** । **पीनोन्नतिमत्पयोधरयुगं** पीनं पुष्टं चोन्नतिमदिति तथाभूतं पयोधरयुगं कुचद्वन्द्वं तत्तथोक्तम् । **धत्ते** । **वयम्** । **सखेदाः** । **सा** । **गुरुणा** बृहता । **जघनस्थलेन** । **आक्रान्ता** । **वयम्** । **गन्तुम्** । **न** । **शक्ताः** क्षमाः । एवम्—'**अन्यजनाश्रयैरन्यजनवर्त्तिभिः** । **दोषै-र्बालत्वादिभिः** । **स्मो** वयम् (इदमंव्ययम्) । **अपटवोऽकर्मण्याः** । **जाताः** । **इति** । **अद्भुतं** विचित्रत्वम् । सखायं प्रति कस्याश्चिद्दर्शनेन खिन्नस्योक्तिरीयम् ।' अमरुशतकस्येदम् । शार्दूलविक्रीडितं वृत्तम् । तल्लक्षणं चोक्तं प्राक् ॥ २३५ ॥'

अत्र तर्कवागीशाः—"केचितु (काव्यप्रकाशकारादयः) 'कार्य्यकारणाभावयोर्धर्मयोरत्यन्तं भिन्नदेशतया युगपदुत्पन्नत्वेन ख्यातिरसङ्गतिः । एकधर्मिण्यवच्छेदकभेदेन भिन्नदेशतावारणायात्यन्तमिति । तेन 'दष्टो भुजङ्गेन पदेऽक्षिण घूर्णना' इत्यत्र नातिव्याप्तिः । दंशनघूर्णनयोरेकस्मिन् शरीरे सङ्गतिसत्त्वात् । कालभेदेन तदुभयख्याति-वारणाय युगपदिति । तेन—'क्रियाशरीरेऽत्र परत्र भोगः' इत्यत्र नातिव्याप्तिः ।' इत्याहुः । तन्न, 'दन्तक्षतं कपोले बध्वा, वेदना सपत्नीनाम् ।' इत्यत्र स्वोक्तोदाहरणे बोधकाभावेन कार्य्यकारणयोर्युगपदत्पन्नत्वख्यातिविरहात् । 'सा स्त्री वयं कातराः' इत्यत्र स्त्रीत्वस्य कारणत्वस्योत्पन्नत्वाभावादेव कार्योत्पत्तियुगपदुत्पन्नत्वख्यातिविरहात् । न च स्त्रीत्वस्योत्पन्नत्वमारोप्यमीति वाच्यम्, तस्य वैचित्र्यानावहत्वेन तदङ्गीकारस्यान्याय्यत्वात् । 'दष्टो भुजङ्गेन पदेऽक्षिण घूर्णना' इत्यादौ युगपदुत्पन्नत्वख्यातिविरहादेवातिप्रसङ्गभङ्गेन तद्वारणार्थमुपात्तस्यात्यन्तपदस्यानर्थक-त्वाच्च । अस्मन्मते तु । कार्य्यकारणयोर्वैयधिकरण्यस्यैव यत्र विच्छित्तिविशेषजनकत्वं तत्रैव तस्यालङ्कारत्वस्वी-कारः । 'दष्टो भुजङ्गेन पदेऽक्षिण घूर्णना' इत्यादौ कार्य्यकारणयोरवच्छेदकभेदसत्त्वेऽपि अधिकरणस्यैकत्वेन वैयधिकरण्याभावात् । 'क्रियाशरीरेऽत्र परत्र भोगः' इत्यादौ वैयधिकरण्यस्य सत्त्वेऽपि तस्य विच्छित्तिविशेषाना-धायकत्वादेव नातिप्रसङ्गः । इत्याहुः ।" ननु कार्य्यकारणयोः सहानवस्थानलक्षणो विरोध एवात्राङ्गीक्रियतां किमस्या अङ्गीकारगौरवेणेत्याह—**अस्या** असङ्गतेः । **च** । **अपवादकत्वात्** कार्य्यकारणयोर्भिन्नदेशवर्त्तित्वेन विलक्षणवि-च्छित्त्याधायकतया विशेपत्वात् । **एकदेशस्थयोः** । **विरोधे** । **विरोधालङ्कारः** । 'भिन्न' इति शेषः । एवं च—सामा-नाधिकरण्ये विरोधः, वैयधिकरण्येऽसङ्गतिरित्येतयोर्भेद इति फलितम् ।

**गुणौ क्रिये वा चेत्स्यातां विरुद्धे हेतुकार्ययोः ॥ ६९ ॥**

**यद्वारब्धस्य वैफल्यमनर्थस्य च संभवः ।**

**विरूपयोः संघटना या च तद्विषमं मतम् ॥ ७० ॥**

क्रमेण यथा—

**'सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।**

**तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते ॥'**

अत्र कारणरूपासिलतायाः 'कारणगुणा हि कार्यगुणमारभन्ते' इति स्थितेर्विरुद्धा शुक्लयंशस उत्पत्तिः ।

---

## विवृतिः

अस्मन्मते तु कार्यकारणयोर्वैयधिकरण्यस्यैव यत्र विच्छित्तिविशेषजनकत्वं तत्रैव तस्यालंकारत्वस्वकीराः । 'दष्टो भुजंगेन—' इत्यादौ कार्यकारणयोरवच्छेदकभेदसत्त्वेऽप्यधिकरणस्यैकत्वेन वैयधिकरण्याभावात् । 'क्रिया शरीरे—' इत्यादौ वैयधिकरण्यस्य सत्त्वेऽपि तस्य विच्छित्तिविशेषानाधायकत्वादेव नातिप्रसङ्गः । ननु कार्यकारणयोः सहानवस्थानलक्षणो विरोधोऽत्रास्ति तस्यैवात्रालंकारत्वमास्तां किमधिककल्पनयेत्यत आह— **अस्याश्चेति** । कार्यकार्यकारणवैयधिकरण्यरूपाया असंगतेर्विलक्षणवैचित्र्याधायकत्वेन विशेषत्वात् । समानाधिकरणयोर्विरोधे विरोधालंकारस्य विषय इत्यर्थः ॥

विषमालंकारमाह—**गुणाविति** । कार्यकारणयोर्गुणौ विरुद्धौ क्रिये वा विरुद्धे चेत्स्यातां तद्विषममित्यग्रेणान्वयः । वैफल्यमभिमतफलानवाप्तिः । अनर्थस्य अनिष्टफलस्य । विरूपयोरेकत्र वस्तुन्यत्यन्तमसंभवतोः संघटनं मेलनम् ॥ कार्यकारणयोर्गुणविरोधमाह— **सद्य इति** ॥ **कारणगुणा इति** । यद्यप्यवयविरूपकार्यगुणक्रिययोरेकावयवरूपकारणगुणक्रियाजन्यत्वनियमस्तथापि तत्र तथा दर्शनादन्यत्रापि तथात्वं कविसृष्टौ कल्प्यत इति नानुपपत्तिरिति भावः ॥

## विज्ञप्रिया

चतुर्विधं विषमालङ्कारमाह—**गुणौ क्रिये वेति** । हेतुकार्ययोर्गुणौ किये वा यद् यदि विरुद्धे परस्परविपरीते स्यातां तदा एतौ द्वे च विषमे । तृतीयमाह—**यदारब्धस्येति** । वैफल्यमुद्देश्यफलाभावः; प्रत्युताऽनर्थस्योत्पत्तिरित्यर्थः । चतुर्थ विषममाह—**विरूपयोरिति** । विरूपत्वेन परस्परसम्बन्धायोग्यत्वेनोक्तयोर्यः सम्बन्धः प्रतीयत इत्यर्थः । एतच्च क्वद्वयप्रयोगे बोध्यम् ।

तत्र कार्यकारणयोर्गुणविरोधमाह—**सद्य** इति । तमालवन्नीला कृपाणलेखा लेखाकारः कृपाणो खड्गो रणे रणे यस्य राज्ञः करस्पर्शमवाप्य शरदिन्दुवत्पाण्डु यशः सद्यः प्रसूते इदं चित्रम् । त्रिलोकेति यशोविशेषणम् । अत्र कारणासिलताकार्ययशसो नीलत्वपाण्डुत्वे विपरीते इत्याह—**अत्रेति** । गुणस्य विरुद्धा इत्यन्वयः । **शुक्लयशस उत्पत्तिरिति** । उत्पद्यमानयशः शुक्लमिति पर्यवसितार्थः । ननु विरुद्धत्वे किं वैचित्र्यमित्यत आह—**कारण-**

**गुणा** इति। स्थितेरिति नियमादित्यर्थः। तथा च विरुद्धयोर्विरोधप्रदर्शनं वैचित्र्यमित्यर्थः। यद्यप्ययं नियमः समवायिकारणकार्ययोरेव तथापि तद्दर्शनात्कविना अन्यत्रापि तन्नियममध्यास्येदं वर्णितम्।

## लोचन

विरूपयोरन्यरूपयोः स घटनायोगः।

## कुसुमप्रतिमा

प्राकरणिकं विरोधमादायैव विषमालङ्कारं लक्षयति गुणविति। हेतुकार्य्ययोर्गुणौ यत् विरुद्धौ स्याता क्रिये वा यद्विरुद्धे स्यातामित्यन्वयः। तथा च कार्य्यगुणो यत् कारणगुणाद्विरुद्धः स्यात्। अयमेकः प्रकारः। अथवा कार्य्यगतक्रिया यत् कारणगतक्रियाती विरुद्धा स्यादित्यर्थः, अयं द्वितीयः प्रकारः। वा अथवा आरब्धस्य कर्म्मणो वैफल्यं निष्फलत्वम् अनर्थस्य अनिष्टस्य च सम्भव उत्पत्तिः स्यात्। इति तृतीयः प्रकारः। या च विरूपयोर्विपरीतयोः पदार्थयोः सङ्घटना संयोजना एकत्र सम्मेलनम्। इति चतुर्थः प्रकारः। तत् विषमं नामालङ्कारणं मतम्। एष च विषमशब्दो वाच्यलिङ्गः, तेन अलङ्कारशब्दविशेषणत्वे विषम इति पुल्लिगोऽपि। अतएव काव्यप्रकाशे अलङ्कार-कौस्तुभे च विषम इति पुंसैव निर्द्देशः।

एकदेशस्थयोर्विरोधे विरोधाभासः, कार्य्यवृत्तित्वेन कारणवृत्तित्वेन च भिन्नदेशस्थयोर्विरोधे तु विषम इत्यनयोर्भेदः। गुणयोः क्रियायोर्वा विरुद्धत्वेन विरूपयोः सङ्घटनयैव गतार्थत्वेऽपि वैचित्रयपार्थक्यादेव पृथगुप-न्यासः।

व्याख्यातरूपेण गुणादीनां वैषम्यादेवास्य विषम इति संज्ञा।

कार्य्यकारणगतायोर्गुणयोर्विरोधे उदाहरति सद्य इति। राजविशेषस्य वर्णनमिदम्। रणे रणे सर्वेष्वेव युद्धेष्वित्यर्थः, तमालनीला तमालपल्लववत् नीलवर्णा कृपाणलेखा असिलता, यस्य राज्ञः करस्पर्श हस्तसम्बन्धम् अत्राप्य प्राप्य शरदिन्दुवत् शरच्चन्द्रवत् पाण्डुशुभ्रवर्णम्, त्रिलोकाभरणं त्रिभुवनालङ्काररूपं यशः, सद्य एव प्रसूते शत्रुविजयादुत्पादयति, एतदेव चित्रसाश्चर्य्यम्।

उदाहरते कार्य्यकारणगतगुणयोर्विरोध दशयितुमाह अत्रेति। आरभन्ते उत्पादयन्ति। स्थितेर्नियमस्य। अत्रायं सरलार्थः—कृपाणलेखयैव यशोजननात् कृपाणलेखा कारणं यशश्च कार्य्यम्, तत्र च कृपाणलेखायां नीलो गुण इति कार्य्येऽपि यशसि "कारणगुणा हि" इत्यादिनियमात् नीलगुणस्यैव सम्भवे तद्विरुद्धस्य शुक्लगुणस्य उत्पत्तिरिति विषमालङ्कार इति।

## विमला

विषममाह, गुणाविति।—हेतुकार्य्ययोः, विरुद्धौ गुणौ, विरुद्धे क्रिये वा चेत् स्यातां, यद्वा—यदि वा, आरब्धस्य—प्रक्रान्तस्य कर्मणः, वैफल्यं—निष्फलत्वम्, अभिमतफलानवाप्तिः इत्यर्थः अनर्थस्य—अनिष्टफलस्य, च सम्भवः, या च विरूपयोः—विरुद्धयोः, एकत्र वस्तुन्यत्यन्तमसम्भवतोः इत्यर्थः, सङ्घटना—सम्मेलनं, तत् विषमं मतम्। अत एवालङ्कारकौस्तुभकृताऽप्युक्तम्—"सम्बन्धानुपपत्तौ इष्टार्थानाप्त्यनिष्टसम्प्राप्तौ। जन्यजनकोभयगु-णक्रियाविरोधे च विषमः स्यात्॥" इति।

कार्य्यकारणयोर्गुणविरोधमाह, सद्य इति।—यस्य तमालनीला कृपाण लेखा—खड्गयष्टिरित्यर्थः, रणे रणे—प्रतिसङ्ग्रामं, करस्पर्शम् अवाप्य शरदिन्दुः—शरच्चन्द्रः, तद्वत् पाण्डु—शुभ्रं, विलोक्याभरणं—सर्वगामित्वेन त्रिभुवनादृतमिति भावः, ["त्रिलोकाभरणम्" इति त्वसाधु] यशः सद्यः प्रसूते—जनयति, चित्रम्—आश्चर्य्यम्, एतदिति शेषः। उपजातिः वृत्तम्। यथा वा—"न खलु न खलु बाणः पातनीयोऽयमस्मिन्मृदनि मृगशरीरे तूलराशाविवाग्निः। क्व वत हरिणकानां जीवितञ्चातिलोलम्? क्व च निशितनिपाताः वज्रसाराः शरास्ते?"॥ इति।

अत्रेति।—अत्र कारणरूपासिलतायाः—हेतोरसिलताया इत्यर्थः। कारणगुणा इति।—यद्यप्यवयविरूपकार्य्यगुणक्रिययोः एकावयवरूपकारणगुणक्रियाजन्यत्वनियमः, तथाऽपि तत्र तथा दर्शनादन्यत्रापि तथात्वं कविसृष्टौ कल्पयते इति नानुपपत्तिः इति भावः। कारणविरुद्धो गुणः—कार्य्यस्य च शुक्लयशसः विरुद्धो गुणः—कारणस्य कृपाणस्य तमालनीलत्वम्।

## लक्ष्मी

ननु कार्यकारणयोरेकत्रानवस्थानस्वरूपो विरोधालङ्कार एवोक्तोदाहरणेऽपि वर्तत इति तदलङ्कारोदाहरणमेव मन्यतामलमधिकालङ्कारस्वीकारेणेत्यत आह—**अस्याश्चे**ति। असङ्गतेरित्यर्थः। अपवादो विशेषः तस्य भावस्तस्मात् कार्यकारणवैयधिकरण्यभावप्रयुक्तविषयकतया विशेषत्वेन बाधकत्वात्, एकदेशस्थयोः एकाधिकरणवृत्तित्वयोः कार्यकारणयोरिति शेषः। **अयमाशयः**—व्यधिकरणयोर्यत्रैकाधिकरण्येन विरोधप्रतिसन्धानं स विरोधालङ्कारः, यत्र तु सामानाधिकरण्ययोर्वैयधिकरण्येन विरोधप्रतिसन्धानं साऽसङ्गतिरलसङ्कारः। न चैवं विषयैक्य एवोत्सर्गापवादभावस्य सम्भवेन प्रकृते विषयभेदादुसर्गापवादभावो न स्यादिति वाच्यम्, विरोधालङ्कारस्य हि विरोधसामान्यं विषयः, असङ्गतेश्च केवलकार्यकारणवैयधिकरण्यप्रयुक्तो विरोधविशेष इति समानविषयत्वस्योत्सर्गापवादभावस्य च सम्भवादिति।

प्रस्तुतविरोधविषयमाश्रित्यैव विषमालङ्कारं निरूपयति—**गुणा**विति। अत्र 'विरुद्धे' इति विभक्तिविपरिणामेनान्वयः कार्यः। हेतुकार्ययोः फलनिमित्तयोःगुणौ यत् विरुद्धौ स्यातां क्रिये वा यद्विरुदेगे स्यातामिति सम्बन्धः। एवञ्च कार्यगुणो यत् कारणविरुद्धः स्यात्, अयमेको विषमः। वा अथवा कार्यवृत्तिक्रिया यत् कारणवृत्तिक्रियातः विरुद्धा स्यात्, अयं द्वितीयो विषमः। वा अथवा आरब्धस्य कार्यस्य वैफल्यम् उद्देश्यफलाभावः, प्रत्युतानर्थस्य अनभिलषितस्य च सम्भव उत्पत्तिः स्यात् अयं तृतीयो विषमः। या च विरूपयोः परस्परसम्बन्धायोग्ययोः पदार्थयोः सङ्घटना सम्मेलना, इति तुरीयो विषमं तन्नामालङ्करणं मतम्। ननु काव्यप्रकाशकृदादयो विषम इति पुल्लिङ्गत्वेनैवाहुरित्यत्र कथं नपुंसकेन निर्देश इति चेत्? विषमशब्दस्य वाच्यलिङ्गत्वेन क्षत्यभावात्। उक्तदिशा गुणादीनां वैषम्यादेव विषम इति नामास्य बोध्यम्।

कार्यकारणगतत्वेन भिन्नदेशस्थयोर्विरोध एवायमलङ्कार अतो न विरोधाभासः एकदेशस्थयोर्विरोध एव तत्स्वीकारात्। यद्यपि 'विरूपयोः सङ्घटना' इत्यनेनैव गुणगुणयोः क्रिययोर्वा विरुद्धत्वेनान्तर्भूतत्वात्पृथगुपन्यासो व्यर्थ इवाभाति तथापि तत्र तत्र वैचित्र्यस्य पार्थक्येनोपलम्भात्तदुपन्यासो युक्त एवेत्यवधेयम्।

तत्र प्रथमं विषयमुदाहरति—**सद्य** इति। पद्मगुप्तनिर्मिते नवसाहसाङ्कचरिते पद्यमिदम्। रणे रणे प्रतिसङ्ग्रामम्, तमालनीला तापिच्छपत्रवत् नीलवर्णा कृपाणलेखा खड्गलत। तद्रूपा कापि नायिकेति भावः। यस्य राज्ञः

करस्पर्शं हरतसंयोगम् अवाप्य लब्ध्वा शरदिन्दुवत् शरत्कालीनचन्द्रवत् पाण्डु श्वेतरूपम्, त्रिलोक्याभरणं त्रिभुवनभूषणरूपं यशस्तद्रूपं पुत्रम्, प्रसूते जनयति, एतदेव चित्रम् अद्भुतम् । कालस्कन्धस्तमालः स्यात्तापिच्छोऽपीत्यमरः, 'तमालस्तिलके खड्गे तापिच्छे वरुणाद्रुमे' इति मेदिनी च। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

उक्तोदाहरणे कारणासिलताकार्ययशसो नीलत्वपाण्डुत्वे विपरीतेति दर्शयति—**अत्रेति** । आरभन्ते जनयन्ति । स्थितेर्नियमस्य । शुल्कयशस उत्पत्तिः उत्पद्यमानयशः शुक्लमितिपर्यवसितार्थः । तथा च कृपाणलेखयैव यश उत्पादनात् कारणरूपकृपाणलेखायां नीलगुणदर्शनेन कार्यरूपे यशस्यपि 'कारणगुणा' इति न्यायेन नीलागुणस्यैवोचितत्वात्तद्विपरीतस्य शुक्लगुणस्योत्पत्त्या कार्यकारणगतगुणयोः प्राथमिकविरोधस्य स्पष्टत्वाद्विषमालङ्कारः । यद्यप्युक्तनियमः समवायिकारणकार्ययोरेव तथापि तद्दर्शनात्कविना अन्यत्रापि तन्नियममध्यसितम् ।

## रुचिरा

विषमं लक्षयति—१५४ **चेत्** । **हेतुकार्य्ययोः** करणस्य कार्य्यस्य चेत्यर्थः । **गुणौ** । 'विरुद्धौ' इति शेषः । **वा**ऽथवा । **क्रिये** । **विरुद्धे** । **स्याताम्** । **यद्वा** । **आरब्धस्य** । 'कार्य्यस्ये'ति शेषः । **वैकल्यम्** । **अनर्थस्या**नभिमतस्य फलस्य । **च** । **सम्भवः** । **च** । यद्वा **विरूद्धयो**रेकत्र वस्तुन्यत्यन्तमसम्भवतोः । **या** । **सङ्घटना** मेलनम् । **तत्** । अत्र-सर्वनाम्नां पर्य्यायेणोद्देश्यविधेयलिङ्गभाक्त्वेन विधेयलिङ्गत्वम् । **विषमं** तदाख्योऽलङ्कारः । **मतम्** । तथा च—कार्य्यकारणयोर्गुणविरुद्धत्वे एकम्, क्रियाविरुद्धत्वे द्वितीयम्, आरब्धस्य वैकल्यानर्थक्ययोस्तृतीयम्, विरूपयोर्मेलने चतुर्थं विषमं च, तत्त्वं समविरुद्धत्वम्, एतच्च तत्रानुगतमित्यन्वर्थं सामान्यं लक्षणात् । इति फलितम् ॥१२३ ॥

उदाहर्त्तुमुपक्रमते-**क्रमेण** । **यथा** । '**तमालनीला** तमालवृक्षवन्नीला । **कृपाणलेखा** कृपाणस्य लेखा रेखा धारेति यावत् । तद्रूपा काऽपि नायिकेति बावः । **रणेरणे** प्रतिसङ्ग्रामम् । **यस्य** । **करस्पर्शम्** । **अवाप्य** । **सद्यः** । **शरदिन्दुपाण्डु** शारदचन्द्रवत् शुभ्रम् । **त्रिलोक्याभरणम्** । **यशस्तद्रूपं** पुत्रम् । **प्रसूते** जनयति । **चित्रम्** । 'स राजे'ति शेषः । पद्मगुप्तरचितस्य नवसाहसाङ्कचरितस्येदं पद्यम् । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणं चोक्तं प्राक् ॥ २३६ ॥'

उदाहृतमर्थं निर्दिशति-**अत्र** । **कारणरूपासिलतायाः** 'तमालनीलाया' इति शेषः । '**कारणगुणाः** । **कार्य्यगुणान्** । **आरभन्ते** उत्पादयन्ते ।' **इति** । **स्थितेः** । **विरुद्धा** । **शुक्लयशसः** । **उत्पत्तिः** । अत्र विवृतिः—'यद्यपि अवयवविरूपकार्यगुणक्रिययोरेकावयवरूपकारणगुणक्रियाजन्यत्वनियमस्तथाऽपि तत्र तथादर्शनादन्यत्रापि तथात्वं कविसृष्टौ कल्प्यत इति नानुपपत्तिरिति भावः ।' इति ।

**'आनन्दममन्दमिमं कुवलयदललोचने ! ददासि त्वम्।**
**विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥'**

अत्रानन्दजनकस्त्रीरूपकारणात्तापजनकविरहोत्पत्तिः ।

---

## विवृतिः

कार्यकारणयोः क्रियाविरोधमाह—**आनन्दमिति**। नायिकां प्रति नायकस्योक्तिरियम्। अत्र कारणस्य नायिकायाः क्रिया आनन्ददानं नायिकाकार्यस्य विरहस्य क्रिया शरीरतपनं तद्विरुद्धम्। यद्यप्यानन्दतापौ गुणौ तथाप्यत्र द्वयोर्धात्वर्थघटकत्वेन क्रियात्वेनैव व्यवहारः ॥

## विज्ञप्रिया

कारणकार्ययोर्विरोधमाह—**आनन्दममन्दमिति**। कुवलयेत्यादिकं सम्बोधनम्। **अत्रेति**। तापजनकविरहोत्पत्तिः स्वोत्पाद्यविरहजन्यतापक्रियोत्पत्तिरिति पर्यवसितार्थः। तथा च स्त्रीतजन्यविरहयोः कारणकार्ययोरानन्ददानतापक्रिये च विरुद्धे इत्यर्थः। एतज्जन्यस्य तत्क्रियासमानक्रियाया एव वैचित्र्यं सम्भाव्य वर्णितम्।

## कुसुमप्रतिमा

कार्य्यगतकारणगतक्रिययोर्विरोधे उदाहरणमाह आनन्दमिति। हे कुवलयदललोचने। नीलोत्पलपत्रतुत्यनेत्रे। त्वमिमम् अमन्दनल्पं बहुलमित्यर्थः आनन्दं ददासि आलिङ्गनादिना जनयसि; किन्तु त्वत्रैव पित्रालयगमनादिना जनितो विरह, मे मम शरीरं तापयति तरामत्यन्तं सन्ताप जनयति। एतदाश्चर्य्यमेवेति भावः।

अत्रेति। एष च सरलार्थः—"विरहस्त्वयैव जनितः" इत्युक्तेः स्त्री कारणम्, विरहश्च तत् कार्य्यम्; तेन स्त्रियां सुखजननक्रियेति "कारणगुणा हि" इत्यादिनियमेन विरहेऽपि सुखजननक्रियाया एव सम्भवे दुःखजननक्रियोत् पत्तेर्विरुद्धत्वाद्विषमालङ्कारः।

## विमला

कार्य्यकारणयोः क्रियाविरोधमाह, आनन्दमिति।—नायिकां प्रति नायकस्योक्तिरियम्। हे कुवलयदलं—नीलोत्पलपत्रं, तद्वत् लोचं यस्याः तत्सम्बुद्धौ, त्वम् इमम् अमन्दं—महान्तम्, आनन्दं ददासि, किन्तु त्वयैव जनितः,—उत्पादितः, विरहः मे—मम, शरीरं तापयतितराम्—अतिशयेन तापयति। अत्र कारणस्य नायिकायाः क्रिया आनन्ददानं, नायिकाकार्य्यस्य विरहस्य क्रिया शरीरतापनं तद्विरुद्धमिति हेतोः कार्य्यस्य विरुद्धे क्रिये। यद्यप्यानन्दतापौ गुणौ, तथाऽप्यत्र द्वयोर्धात्वर्थघटकत्वेन क्रियात्वेनैव व्यवहारः इति ज्ञेयम्। आर्य्या वृत्तम्।

## लक्ष्मी

द्वितीयं विषममुदाहरति—**आनन्दमिति**। रुद्रटालङ्कारे नायिकां प्रति नायकस्योक्तिरियम्। कुवलयस्य नीलकमलस्य दले पत्रे तद्वल्लोचने नयने यस्याः तत्सम्बुद्धौ हे कुवलयदललोचने ! त्वम् इमं मया सम्प्रत्यनुभूय-

मानम् अमन्दम् अधिकम् आनन्दम् आश्लेषादिना हर्षं ददाति जनयति (सम्प्रति) त्वयैव जनितः पितृगृहगमनादिना उत्पादितः विरहो वियोगः, मे मम शरीरं तापयतितराम् अत्यन्तं सन्तापमुत्पादयति एतदत्यद्भुतमेवेत्याशयः। **आर्याच्छन्दस्तल्लक्षणञ्चोक्तं प्राक्।**

लक्ष्यं संयोजयति-**अत्रेति**। तापजनकविरहोत्पत्तिः स्वोत्पाद्यविरहजन्यतापक्रियोत्पत्तिः। तथा च नायिकातज्जन्यविरहयोः 'विरहस्त्वयैव जनितः' इत्युक्त्या कारणकार्ययोरानन्ददानतापनक्रिये च विरुद्धे, 'कारणगुणा' इति न्यायानुसरणस्यावश्यकत्वादित्याशयः। एवञ्च कार्यकारणवृत्तिक्रिययोर्विरोधो द्वितीयविषमालङ्कारः। न चात्रासङ्गतिर्विरोधी वेति वाच्यम्, विरोधे विरोधिनोः सामानाधिकरण्यस्य असङ्गतौ कार्यकारणयोर्वैयधिकरण्यस्य चमत्कारप्रयोजकता, अत्र तु कार्यकारणवृत्तिविजातीयक्रियागुणयोगस्य चमत्कारितेति विशेषात्।

## रुचिरा

द्वितीयमुदाहरति—'**हे कुवलयदललोचने** कुवलयस्य नीलकमलस्य दले तद्वल्लोचने यस्यास्तत्सम्बुद्धौ तथोक्ते! **त्वम्**। **इमं** मया सम्प्रत्यनुभूयमानमित्यर्थः। **अमन्दम्**। **आनन्दम्**। **ददासि** विदधासीति भावः। **त्वया**। **एव**। **जनित** उत्पादितः। **विरहः**। **मे** मम। **शरीरम्**। **तापयतितराम्**। नायिकां प्रति नायकस्योक्तिरियम्। रुद्रटालङ्कारस्येवं पद्यम्। अत्रार्याच्छन्दस्तल्लक्षणं चोक्तं प्राक्॥ २३७॥'

उदाहृतमर्थं निर्दिशति—**अत्रेत्यादिना**। स्पष्टम्। अत्र विवृतिकाराः—'अत्र कारणस्य नायिकायाः क्रिया आनन्ददानं नायिकाकार्य्यस्य विरहस्य क्रिया शरीरतापनं तद्विरुद्धम्। यद्यपि-आनन्दतापौ गुणौ तथाऽपि अत्र द्वयोर्धात्वर्थघटकत्वेन क्रियात्वेनैव व्यवहारः।' इति।

**'अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया।**

**धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥'**

अत्र केवलं काङ्क्षितधनलाभो नाभूत, प्रत्युत क्षारवारिभिर्वदनपूरणम्।

---

## विवृतिः

तृतीयं प्रकारमाह—**अयमिति**। अत्र समुद्रसेवया धनप्राप्तिरूपफलस्यानवाप्तिः। क्षारवारिभिर्वदनपूरणस्यानिष्टस्य प्राप्तिः। सेव्यस्यानभीष्टसंपादकत्वातिशयं स्वस्य दुरदृष्टातिशयं वा व्यञ्जयति ॥

## विज्ञप्रिया

आरब्धकार्यवैफल्यानर्थोत्पत्तिद्वयमुदाहरति—**अयमिति**। अयमसम्भोधिः रत्नाकर इति कृत्वा मया धनाशया असेवि सेवितः। धनं दूरेऽस्तु प्राप्त्यविषयोऽस्तु। क्षारवारिभिस्तु वदनमपूरि इत्यर्थः।

## कुसुमप्रतिमा

आरब्धवैफल्ये अनर्थसम्भवे च लक्ष्यं दश यति अयमिति। कस्यचिद्व्यर्थमनोरयस्योक्तिरियम्। अयम्। अम्भोधिः सागरः, रत्नानामाकरः उत्पत्तिस्थानम्, इति मत्त्वा धनाशया धनलाभेच्छया असेवि उपकूले विचरणादिना सेवितः। किन्तु धनं धनलाभो दूरे अस्तु तिष्ठतु, प्रत्युत चारवारिभिर्लवणाक्तजलैर्वदतं मुखम् अपूरि पूरितम्। अहो ! नहंददुःखमेवैतदिति भावः।

अत्रेति। केवलमित्येवार्थे। तथा च काङ्क्षितधनलाभो नाभवदेवेत्यर्थः। तथाहि धनलाभाभावादारब्धस्य समुद्रसेवनस्य वैफल्यम्, अनिष्टस्य च क्षारवारिकरणकवदनपूरणस्य सम्भव इति विषमालङ्कारः।

## विमला

तृतीयं प्रकारमाह, अयमिति।—अयम् अम्भोधिः,—समुद्रः, रत्नानाम आकर इति हेतोः धनाशया—धनप्राप्तिलालसया, असेवि—सेवितः, नयेति शेषः, किन्तु धनं दूरे अस्तु, (प्रत्युत) वदनं—मुखं, क्षारवारिभिः,—लवणजलैः, अपूरि—पूरितम्। अत्र समुद्रसेवया धनप्राप्तिरूपफलस्यानवाप्तिः, क्षारवारिभिः वदनपूरणस्य अनिष्टस्य प्राप्तिः सेव्यस्यानभीष्टसम्पादकत्वातिशयं स्वस्य दुरदृष्टातिशयं वा व्यञ्जयति। यथा वा—"अयं दुग्धाम्भोधेः पतिरिति गवा पालक इति श्रितोऽस्माभिर्दुग्धोपनयनधिया गोपतनयः। अनेन प्रत्यूहो व्यरचि स तथा येन जननीस्तनादप्यस्माकं निजमपि पयो दुर्लभमभूत् ॥" इति।

## लक्ष्मी

तृतीयं विषममुदाहरति—**अयमिति**। कस्यचिद्विफलाभिलाषिण उक्तिरियम्। अयम्, अम्भोधिः समुद्रः रत्नाकरः रत्नोत्पत्तिस्थानम्, इति विज्ञाय धनाशया द्रव्यप्राप्तीच्छया असेवि तत्प्रान्ते भ्रमणादिना सेवितो मयेति

शेषः। किन्तु धनं धनप्राप्तिः दूरे अस्तु तिष्ठतु, प्रत्युत क्षारवारिभिः लवणमिश्रितसलिलैः वदनम् आननम् अपूरि पूर्णं कृतं तेनेति शेषः, हन्त ! कीदृशी दुर्गतिरियमापन्नेत्याशयः।

उदाहृतमर्थमुपपादयति-**अत्रेति**। एवकारार्थेऽत्र केवलशब्दा तस्य चाभूतक्रियायामन्वयः कार्यः। **अय-माशयः**—धनलाभेच्छया रत्नाकरस्य सेवनमारब्धम्, तत्र दैववशेनाभिमतफलाभावेन न केवलं वैफल्यं जातं किन्तु क्षारवारिभिर्मुखपूरणादनिष्टं फलञ्च जातमिति आरब्धवैफल्यं अनर्थसम्भवे च तृतीयो विषमालङ्कारः।

## रुचिरा

तृतीयमुदाहरति—'**अयम्**। **अम्भोधिः** समुद्रः। **रत्नाकरो** रत्नानामाकरः। **इति**। **धनाशया**। **असेवि**। 'मये'ति शेषः। **धनम्**। **दूरे**। **अस्तु**। किन्तु-**क्षारवारिभिः**। **वदनं** मुखम्। **अपूरि** 'तेने'ति शेषः। अत्र यद्यपि अप्रस्तुतप्रशंसाऽथाप्येतदविरुद्धेति विभाव्यम्॥ २३८॥'

उदाहृतमर्थं निर्दिशति—**अत्रेत्यादिना**। स्पष्टम्। अयम्भावः—धनलाभाशयाऽऽरब्धं रत्नाकरस्य सेव-नम्, तस्याभिमतलाभाभावेन न केवलं वैकल्यं जातं, किन्तु क्षारवारिभिर्मुखपूर्त्तेरनिष्टं फलं च जातमिति स्फुटो लक्षणसमन्वयः। इति।

**'क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता।**
**नियतं प्रतिकूलवर्तिनो बत धातुश्चरितं सुदुःसहम्॥'**

अत्र वनराज्यश्रियोर्विरूपयोः संघटना। इदं मम।

---

## विवृतिः

चतुर्थ प्रकारमाह—**क्व वनमिति**। अत्रैकस्मिन्वस्तुनि श्रीरामेऽत्यन्तसंभवतोर्वनवासराज्यश्रीलाभयोर्मेलनम्। वस्तुतस्तदानीं रामस्य राज्यश्रीलाभ एव नास्तीति न विरुद्धयोः संघटनम्, किंतु दशरथप्रयत्नस्य रामस्य राज्यलाभरूपफलानवाप्तिः प्रत्युतानिष्टस्य रामवनवासस्य संभव इति तृतीयप्रकार एवेदं पर्यस्यति। एवं च 'शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना। अयं क्व च कुकूलाग्निकर्कशो मदनानलः॥' इत्युदाहरणमस्य वेदितव्यम्। अत्राङ्गमार्दवमदनानलसहनयोरेकत्र नायिकायां मेलनम्॥

## विज्ञप्रिया

विरूपयोर्घटनामाह—**क्व वनमिति**। रामं शोचन्त्याः कौशल्याया उक्तिरियम्। तरुवल्कलमेव भूषणं यत्र तादृशं वनं क्व नृपेत्यादिकं क्व। परस्परासम्बन्धायोग्यतया क्वद्वयेनोक्तयोरनयोरेकत्र रामे घटना। एवं 'क्व सूर्यप्रभव' इत्यादावपि बोध्यम्।

## कुसुमप्रतिमा

विरूपपयोः सङ्घटनायामुदाहरति क्वेति। श्रीरामे वनं गते दशरथस्य विलापोऽयम्। तरुवल्कानि वृक्षवल्कालान्य व भूषणानि यस्मिन् तत्तादृशं वनं क्व कुत्र। तथा महेन्द्रवन्दिता देवराजेनापि पूजिता, नृपलक्ष्मी राजलक्ष्मीः क्व कुत्र। अनयोरत्यन्तमेव वैषम्यमिति भावः। तथा च प्रतिकूलवर्त्तिनो धातुवि धातुः, चरित व्यवहारः, नियतं निश्चितमेव सदु सहम्। राजलक्ष्मीसम्भोगोद्यतस्य श्रीरामस्य सहसैव तादृशवनवासाश्रयादिति भावः। वत खेदे।

अत्रेति। सङ्घटना एकस्मिन्नेव पद्ये संयोजनम्; अतोऽत्र विषमालङ्कार इति भावः। अत्र "अत्रैकस्मिन् वस्तुनि श्रीरामे अत्यन्तमसम्भवतोर्वनवासराजश्रीलाभश्रीर्मेलनम्। वस्तुतस्तु तदानीं श्रीरामस्य राजश्रीलाभ एव नास्ति इत न विरुद्धयोः सङ्घटनम्" इत्याद्यभिधाय चतुर्थप्रकारविषमासम्भवं दर्शयित्वा उदाहृते रामचरणस्य तृतीयप्रकारविषमसिद्धान्तश्चिन्त्यः। न खलु एकस्मिन् वस्तुनि विरूपयोः सङ्घटनात्र विवक्षिता, अपि तु एकस्मिन् पद्यादावेव। अन्यथा "क्व सूर्य्यप्रभवो वंशः क्व चाल्यविषया मतिः" इत्यादावपि एकस्मिन् वस्तुनि तादृशवंशमत्योरसंत्त्वात् विषमालङ्कारो न स्यात्। किञ्च, अनुपदमुदाक्रियमाणे विपुलेनेत्यादौ अतिविशालत्वं नारायणे अतिक्षुद्रत्वञ्च पुरस्त्रिया दृशि इति भिन्नवस्तुनि स्थितयोर्विरूपयोः सङ्घटनायां ग्रन्थकृतां स्वयञ्च प्रदर्श्यमानो विषमालङ्कारः कथमुपपद्यते। किञ्च, प्रबन्धार्थमादाय लक्ष्यमाणो विरूप सङ्घटनाघटितो विषमालङ्कार आसत्तियुक्तैकबन्धनाय" एव विरूपयोः सङ्घटनायां भवितु युक्त इत्युदाहृते चतुर्थ प्रकार एव ग्रन्थकारसम्मतो विषमालङ्कारः सर्वथा सङ्गच्छत इति ध्येयम्।

प्रकारान्तरेण विरूपयोः सङ्घटनायामेवोदाहर्तुमाह यथा वेति।

## विमला

चतुर्थं प्रकारमाह, क्वेति ।—तरुणां वल्कानि—त्वचः, भूषणानि यत्र तादृशं, वनं क्व ? महेन्द्रवन्दिता—देवेन्द्रादृता, नृपलक्ष्मीः;—राजश्रीश्चक्व ? [क्वद्वयं महदन्तरमनयोः सूचयति] वत—खेदे, प्रतिकूलवर्त्तिनः;—विरुद्धस्य, धातुः;—दैवस्य, चरितं नियतं—निश्चितं, सुदुःसहम्। अत्रैकस्मिन् वस्तुनि श्रीरामे अत्यन्तमसम्भवतीर्वनवासराजशीलाभयोः मेलनं, वस्तुतः तदानीं श्रीरामस्य राजश्रीलाभ एव नास्तीति न विरुद्रयोः सङ्घटनं, किन्तु दशरथप्रयत्नस्य श्रीरामस्य राज्यलाभरूपफलानवाप्तिः, प्रत्युतानिष्टस्य श्रीरामवनवासस्य सम्भव इति तृतीयप्रकार एवेदं पर्य्यवस्यति, एवञ्च "शिरोषादपि मृदङ्गी केयमायतलोचना ? । अयं क्व च कुकूलाग्नि कर्कशो मदनानलः" ? ॥ इत्युदाहरणमस्य वेदितव्यम्। अत्राङ्गमार्दवमदनानलसहनयोरेकत्र नायिकायां मेलनम् इति ज्ञेयम् । यथा वा—"क्व रुजा हृदयप्रमाथिनी ? क्व च ते विश्वसनीयमायुधम् ? । मृदुतोक्ष्णतरं यदुच्यते तदिदं मन्मथ ? दृश्यते त्वयि ॥" अत्र कोमलायुधोत्कटव्यथयोः कार्य्यकारणभावसम्बन्धोऽनुपपन्नवद्भासते ।

## लक्ष्मी

चतुर्थमुदाहरति—क्वेति । वनं प्रयाते श्रीरामे दशरथस्य कौशल्याया वा परिदेवनमिदम्। तरूणां वृक्षाणां वल्कं तदेव भूषणमलङ्कारो यत्र तत्तथोक्तम्, वनं विपिनं क्व, तथा महेन्द्रवन्दिता सुराधिपेनापि पूजिता नृपलक्ष्मीः राज्यश्रीः क्व, द्वौ क्वावत्र महदन्तरं सूचयतः । बत कष्टम्, प्रतिकूलवर्त्तिनः प्रतिकूलतया स्थितवतः धातुः सृष्टिकर्त्तुः चरितं चरित्रं नियतं निश्चितमेव सुदुःसहम् अत्यन्तं दुःसहम्। राज्यलक्ष्म्युपभोगाय प्राप्तसमयस्य श्रीरामस्यातर्कितमेव तथाविधवनवासाश्रयणादित्याशयः । **वैतालीयं** छन्दस्तल्लक्षणन्तूक्तमेव ।

लक्ष्यं संयोजयति—**अत्रे**ति । सङ्घटना एकत्रपद्य एव सम्मेलनं विषमालङ्कारः । इयञ्च स्वकीयमिति दर्शयति—**इद**मिति ।

उदाहरणान्तरं दर्शयितुमाह—**यथा** वेति ।

## रुचिरा

चतुर्थमुदाहरति—'**तरुवल्कभूषणं** तरूणां वृक्षाणां वल्कं वल्कलम्, तदेव भूषणं यत्र तथोक्तम् । **वनम्** । **क्व** । **महेन्द्रवन्दिता** महेन्द्रेण देवराजेन वन्दिता प्रशंसितेति तथोक्ता । **नृपलक्ष्मी** राजलक्ष्मीः । **क्व** । **बत कष्टम्** । **प्रतिकूलवर्तिनः** प्रतिकूलतया स्थितवतः । **धातु**र्विधातुः । **चरितं** चरित्रम् । **नियतं** नूनम् । सुदुःसहमत्यन्तं दुःसह-सम् । वैतालीयं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ २३९ ॥'

उदाहृतमर्थं निर्दशति-**अत्र** । **विरूपयोः** । **वन-राज्यश्रियोः** । **सङ्घटना** मेलनम् । अत्रेदम्बोध्यम्—श्रीरामे यौवराज्येनाहर्य्यमाणे कैकय्या वनवासं नीयमाने तदानीं तं दृष्टवतः कस्याप्युक्तिरियम् । एवं च—तस्मिन्, राज लक्ष्म्या वनवासस्य च सम्मेलनं सङ्गच्छते । एतेन—"वस्तुतस्तदानीं श्रीरामस्य राजश्रीलाभ एव नास्तीति न विरुद्धयोः सङ्घटनम् । किन्तु दशरथप्रयत्नस्य रामस्य राज्यलाभरूपफलानवाप्तिः, प्रत्युतानिष्टस्य रामवनवासस्य सम्भव इति तृतीयप्रकार एवेति पर्य्यवस्यति । एवं च—'शरीरादपि मृदङ्गी केयमायतलोचना । अयं क्व च कुकूलाग्निमकर्कशो मदनानलः ॥' इत्युदाहरणमस्य वेदितव्यम् ।अत्राङ्गमार्दवमदनानलसहनयोरेकत्र नायिकायां मेलकम् ।"इति विवृतिकारोक्तं दत्तोत्तरम् । अस्य स्वकीयत्वं सम्भावयति—**इदमुदाहृतं पद्यम्** । **मम** ।

यथा वा—

**'विपुलेन सागरशयस्य कुक्षिणा**
**भुवनानि यस्य पपिरे युगक्षये।**
**मदविभ्रमासकलया पपे पुनः**
**स पुरस्त्रियैकतमयैकया दृशा॥'**

---

## विवृतिः

विपुलेनेत्याद्युक्तत्वेत्यादावपि विषमत्वं यथायोगमनुगन्तव्यमिति काव्यप्रकाशोक्तं चतुर्थप्रकार एव संगमयति—**यथा वेति**। **विपुलेनेति**। सागरशयस्य श्रीकृष्णस्य। मदविभ्रमेण असकलया कटाक्षरूपया पपे पीतः। कटाक्षेण सर्वाङ्गीणं दृष्ट इत्यर्थः। यत्र यदेकदेशेन कुक्षिणा जगत्पीयते स पुनश्चक्षुरेकदेशेन स्त्रिया पीयत इति विरूपयोर्मेलनम्। चतुर्थः प्रकारः क्व द्वयप्रयोग एव संभवतीति वदन्तः केचिदेतदवयव्यवयवयोः कार्यकारणयोः क्रियाविरोधोदाहरणमेतद्वदन्ति। तथाहि—कुक्षिरवयवः कारणं तत्कर्तृका भुवनपानक्रिया कुक्षिकार्यस्यावयविनः सागरशयस्य कर्मतासंबन्धेन पानक्रियया विरुध्यते। भुवनपातृकुक्षिमतः कटाक्षपेयत्वस्य विरुद्धतया भानादिति। तन्न। प्रमाणान्तरवेद्यस्य हेतुहेतुमद्भावस्यात्र बोधाभावेनाप्रत्ययात्। धारणदर्शनरूपयोः पानयोः स्वतो विरोधाभावाद् उपदर्शितविरोधस्य क्रियागतत्वाभावेन प्रकृतानुपयोगित्वाच्च॥

## विज्ञप्रिया

कद्वयाभावेऽप्याह—**विपुलेनेति**। सागरशयस्य विष्णोर्विपुलेन कुक्षिणा उदरेण युगक्षयकाले भुवनानि पपिरे। स पुनर्विष्णुः श्रीकृष्णः एकतमया पुरस्त्रिया कर्त्र्या मदविभ्रमेणाऽसकलया एकदेशरूपया एकया दृशा पपे इत्यर्थः। अत्र भुवनपानसमर्थकुक्षिमत एकस्त्रीकटाक्षेण पेयत्वयोगो विरुद्ध इत्यर्थः। काव्यप्रकाशकृन्मते तु क्वद्वयेन विनेवात्र विरुद्धतयाऽप्रतीतेः केनाप्यनुक्रतया नेदं चतुर्थविषमालङ्कारोदाहरणम्। अतः कारणकार्ययोः क्रियाविरोधरूपद्वितीयविषमोदाहरणतयैवायं श्लोकस्तेन दर्शितः। कुक्षिस्तु अवयवः कारणम्। कुक्षिमानवयवी श्रीकृष्णस्तु कार्यम्। तयोर्भुवनपानस्त्रीकटाक्षपेयत्वक्रिये विरुद्धे।

## लोचन

**तदिति**। विषमालङ्काराणामेषां सूत्रोक्तप्रकाराणामुपलक्षणतया सम्बन्धिनोरननुरूपतया लक्ष्यानुसारेणान्येऽपि प्रकारा उदाहर्तव्या इत्यर्थः। तत्र दिङ्मात्रमुदाहृत्य दर्शयति—**विपुलेनेति**। असकलया असमग्रपातिन्या।

अत्रावयवावयविनोर्वैषम्यम्। क्वचित् सजातीययोः—

**"असितभेकसुराशितमप्यंभू-**
**न्न पुनरेष पुनर्विषदं विषम्।**

**अपि निपीय सुरैर्जनितक्षयं**

**स्वयमुदेति पुनर्नवमार्णवम् ॥"**

अत्र व्यतिरेकयोगेऽपि द्वयोः सङ्करो, नतु विषमालङ्काराभावः ।

## कुसुमप्रतिमा

विपुलेनेति । शिशुपालवधत्रयोदशसर्गस्यदिदं पद्यम् । युगक्षये प्रलयकाले, सागरजंनस्य समुद्रशश्रितस्य यस्य श्रीकृष्णस्य, विपुलेन विशालेन, कुक्षिणा उदरेण, भवनानि त्रीणि जयन्ति पपिरे पोतानि; स श्रीकृष्णः, एकतमया पुरस्त्रिया, मदविभ्रमेण मदनमदजनितविकारेण असकलया असमशया एककोकनामव्यापारया दृशा चक्षुषा पुनः पपे यौगः एकनयनैककोणेन सर्वाङ्गेषु दृष्ट इत्यर्थः ।

अत्र भगवानतिविशालः एकनयनेककोणश्च अतिक्षुद्र इत्यनयोर्वि रूपयोः सङ्घटनया विषमालङ्कार इति ग्रन्थकारस्याशयः । इममेव श्लोकमुदाहृत्य काव्यप्रकाशकृता "इत्यादावपि विषमत्वं तथायोगमवगन्तवम्" इत्युक्तम् । तत्र च तदीयटीकाकृता महेश्वरेण कार्य्यकारणगतक्रियाविरोधेन विषमालङ्कारो दर्शिताः । तत्र च तर्कवागीशेन युक्तमेव दूषणमुपत्वस्तमित्यनुसन्धेयम् । मल्लिनायस्तु उदाहृते अधिकालङ्कारमाह स्म, तत्र मनोरमम्, स्पष्टत आश्रयाश्रयिभावप्रतीत्यभावात् तथा प्रतीतावेन च तदलङ्काराङ्गीकारात् ।

## विमला

विपुलेनेत्याद्युक्तवा (इत्यादावपि विषमत्वं यथायोगमनुगन्तव्यम् इति काव्यप्रकाशोक्तं चतुर्थप्रकारे एव सङ्गमयति; विपुलेनेति ।—युगक्षये—कल्पान्ते, सागरशयस्य—समुद्रनिलयस्य, यस्य—श्रीकृष्णस्य, विपुलेन कुक्षिणा—उदरेण, भुवनानि—जगन्ति, पपिरे—पीतानि, सः,—श्रीकृष्णः, एकतमया पुरस्त्रिया—नगरवासिन्या कामिन्या, मदविभ्रमेण असकलया—असम्पूर्णया, कटाक्षरूपयेत्यर्थः, एकया दृशा—नेत्रेण, पुनः पपे—प्रीतः, कटाक्षेण सर्वाङ्गीणं दृष्टः इत्यर्थः । मञ्जुभाषिणी वृत्तं—"सजसा जगो च यदि मञ्जुभाषिणी" इति लक्षणात् । शिशुपालवधस्य पद्यमिदम् । अत्र एकत्र सर्वजगत्पायित्वम् एकनार्य्यैकनेत्रपीतत्वञ्च विरुद्धं सङ्घटितम् । तथा हि, अत्र यदेकदेशेन कुक्षिणा जगत् पीयते, स पुनः चक्षुरेकदेशेन स्त्रिया पीयते इति विरूपयोः मेलनम् । चतुर्थः प्रकारः कृद्वयप्रयोगे एव सम्भवति इति वदन्तः केचिदेतदवयव्यवयवयोः कार्य्यकारणयोः क्रियाविरोधोदाहरणं वदन्ति; तथा हि, कुक्षिरवयवः कारणं तत्कर्त्तृका भुवनपानक्रिया कुक्षिकार्य्यस्यावयविनः सागरशयस्य कर्मतासम्बन्धेन पानक्रियया विरुध्यते, भुवनपातृकुक्षिमतः कटाक्षपेयत्वस्य विरुद्धतया भानादिति, तन्न; प्रमाणान्तरवेद्यस्य हेतुहेतुसद्भावस्यात्र बोधाभावेनाप्रत्ययात्, धारणदर्शरूपयोः पानयोः स्वतो विरोधाभावात् उपदर्शितविरोधस्य क्रियागतत्वाद्भावेन प्रकृतानुपोगित्वाच्च इति ज्ञेयम् ।

## लक्ष्मी

विपुलेनेति । माघकाव्यस्य त्रयोदशे सर्गे पद्यमिदम् । युगक्षये प्रलयसमये सागरे समुद्रे शेते इति सागरशयस्तस्य विष्णोः (श्रीकृष्णस्य) विपुलेन विस्तृतेन कुक्षिणा उदरेण (कर्त्रा) (क) भुवनानि चतुर्दश जगन्ति (कर्माणि) पपिरे पीतानि जग्रसिरे; स पुनः सोऽपि श्रीकृष्णः, एकतमया कयाचित् पुरस्त्रिया नगरकामिन्या (कर्त्र्या)

मदविभ्रमेणमदनमदजनितहावविशेषेण असकलया असमस्तया दृशा चक्षुषा (कारणभूतया) चक्षुरेककोणमात्रेणेत्यर्थः, पपे पीतः सादरं दृष्ट इत्यर्थः । **मञ्जुभाषिणी**च्छन्दस्तल्लक्षणन्तु—'सजसा जगौ भवति मञ्जुभाषिणी' इति ।

अत्र यदेकावयवभूते कुक्षौ सर्वजगत्स्थित्या भगवानतिविपुलः, तस्यैव च कस्याश्चित्पुरस्त्रियाश्चक्षुःकोणमात्रेऽतिक्षुद्रे स्थित्या विषमालङ्कारः ।

## रुचिरा

उदाहरणान्तरं निर्दिशति—**यथा** । **वा** । '**यस्य** । **सागरशयस्य** सागरे महासमुद्रे शेते योगनिद्रां नाट्यतीति तादृशस्य । श्रीकृष्णस्येति भावः । **विपुलेन** विस्तृतेन । **कुक्षिणो**दरेण । **युगक्षये** प्रलयकाले । **भुवनानि** भूर्भुवः स्वः सञ्ज्ञका लोका इत्यर्थः । **पपिरे** पीतानीत्यर्थः । **स** तथाभूतः श्रीकृष्णः । **पुनः** । **एकतमया** (कयाचित्) । **पुरस्त्रिया** । **मदविभ्रमासकलया** मदेन मदस्य वा विभ्रमो हावः शोभा वा तेनासकलाऽसम्पूर्णा तया तथाभूतया । **एकया** । **दृशा** । **पपे** सादरं दृष्ट इति भावः । शिशुपालवधस्येदं पद्यम् । मञ्जुभाषिणीछन्दः, तल्लक्षणं चोक्तं यथा—'सजसा जगौ भवति मञ्जुभाषिणी ।' इति ॥' अत्र यदेकावयवभूते कुक्षौ सर्वेषां जगतां विलयस्तस्यैव कस्याश्चित् पुरस्त्रियाश्चक्षुरेकदेशेऽवास्थानमिति विपुलमत्वाल्पतमत्वयोर्भगवति समावेश इति तत्त्वम् । अत्र रसगङ्गाधरकाराः प्राहुः—"ननु 'क्व शुक्तयः क्व वा मुक्ताः क्व पङ्कः क्व च पङ्कजम् । क्व मृगाः क्व च कस्तूरी धिग् विधातुर्विदग्धताम् ॥' इत्यादौ वस्तुमात्रकथने विषमालङ्कारप्रसङ्गः । न चेष्टापत्तिः । वस्तुवृत्तस्य लोकसिद्धत्वेनालङ्कारत्वायोगात् । यतो बहिरसन्तः कविप्रतिभामात्रकल्पिता अर्थाः काव्येऽलङ्कारं पदास्पदम् । न च 'यथा पद्मं तथा मुखम् ।' इत्यादौ सादृश्यस्य लोकसिद्धत्वात् कविप्रतिभाऽनुत्थापितत्वेऽपि कथमलङ्कारत्वमिति वाच्यम् । सादृश्यरूपे सादृश्योत्थापके वाऽभिन्नधर्मेऽभेदांशस्य कविप्रतिभामात्राधीनत्वात् नहि । पद्ममुखयोः शोभारूपो धर्मो जात्यादिवद्वस्तुत एकोऽस्ति । यो हि जात्यादिरूपो वस्तुत एकस्तदुत्थापितं सादृश्यमलङ्कारबहिर्भूतमेव । यथा—'पद्ममिवास्या मुखं द्रव्य' मित्यादौ । एवं च—'वनान्तः खेलन्ती शशकशिशुमालोक्य चकिता भुजप्रान्तं भर्त्तुः श्रयति भयहर्त्तुः सपदि वा । अहो सेयं सीता शिव ! शिव ! परीता श्रुतिचलत्किरीटीकोटीभिर्वसति खलु रक्षोयुवतिभिः ॥' इति प्रतिपाद्यायाः सीताराक्षसवधूसंसर्गाननुरूपताया लौकिकीत्वेन कविप्रतिभानेपेक्षत्वान्नालङ्कारत्वम् । एतेन-'अरण्यानी केयं, धृतकनकसूत्रः क्व स मृगः, क्व मुक्ताहारोऽयं, क्व च स पतगः, क्वेयमबला । क्व तत् कन्यारत्नं ललितमहिभर्त्तुः क्व च वयं स्वमाकूत धाता कमपि निभृतं पल्लवयति ॥' इत्यलङ्कारसर्वस्वकृतोदाहृतमपि प्रत्युक्तम् । इयमेव पद्यान्तरेऽपि कविप्रतिभाऽनुत्थापितार्थके सरणिरिति सत्यम् । एवं तर्हि—'क्व सा कुसुमसाराङ्गी सीता चन्द्रकलोपमा । क्व रक्षः खदिराङ्गारमध्यसंवासवैशसम् ॥' इति पद्यमुदाहरणं गृहाण । अत्र हि केवलसीतायाः केवलराक्षसीनां च संसर्गस्याननुरूपतायां सत्यामपि न सा कवेर्विवक्षिता, किन्तु या कुसुमसारखदिराङ्गरसंसर्गस्याननुरूपता सेति स्फुटमेवास्यालौकिकत्वात् कविप्रतिभाऽपेक्षित्वम् ।' इति ॥२४० ॥

**समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः ।**

यथा—

**'शशिनमुपगतेयं कौमुदी मेघमुक्तं**

**जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।**

**इति समगुणयोगप्रीतयस्तत्र पौराः**

**श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥'**

---

## विवृतिः

समालंकारमाह—**समं स्यादिति** । आनुरूप्येण योग्यकर्मणा । श्लाघा प्रशंसा ॥

**शशिनमिति** । इयमिन्दुमती कौमुदी अनुरूपमजं शशिनमुपगतेत्यर्थः । एवमग्रेऽपि । समगुणयोर्योगेन प्रीतिर्येषां ते तथा । नृपाणामिन्दुमतीलिप्सया समागतानामजेतरराज्ञाम् । विवव्रुः कथयामासुः ॥ विचित्रालंकार-माह—**विचित्रमिति** । तद्विरुद्धस्य । इष्टविरुद्धस्य ॥

## विवृतिपूर्तिः

**सममिति** । सह तुल्यतया नीयते इति समम् ॥

**अधिकमिति** । **कुवलयानन्दे** त्वल्पमपि—'अल्पं तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता । मणिमालोर्मिका तेऽद्य करे जयवटीयते ॥' अत्र मणिमालामयी ऊर्मिका अङ्गुलीयकं अङ्गुलीमितत्वादतिसूक्ष्मा, सापि विरहिण्याः करे कङ्कणवत्प्रवेशिता जपमालेव लम्बत इति ततोऽपि करस्य विरहकार्श्यादतिसूक्ष्मता निरूपितेत्यल्पाख्यमलंकारा-न्तरमिति । तदन्ये न मन्यन्ते । आधारापेक्षया आधेयस्य महत्त्वकल्पनरूपाधिक्यभेद एव पर्यवसानात् । एव-मन्येऽन्यत् ॥

## विज्ञप्रिया

समसंज्ञकमलङ्कारमाह—सममिति । योग्ययोः परस्परोचितयोः वस्तुनोरानुरूप्येमौचित्येन या श्लाघा सा समनामालङ्कार इत्यर्थः ।

शशिनमित्यादि । अजे इन्दुमत्या स्वयंवृते पौराणां श्लाघोक्तिरियम् । समगुणयोर्योगेन प्रीतिर्येषां तादृशाः पौरा इत्येकवाक्यमेकस्य जनस्य प्राथमिकं वाक्यं विवव्रुः । तदर्थशब्दान्तरैर्विवृतवन्त इत्यर्थः । शशिन-मित्याद्येकस्य वाक्यम् । शशिजलनिधित्वेन अजः । कौमुदीजह्नुकन्यात्वेनेन्दुमती । पृथक्सिद्धस्यैव प्राप्तिः । कौमुदी तु शशिनो न पृथक् सिद्धा, अतः पृथक्सिद्धसम्पादनाय मेघमुक्तत्वविशेषणम् । मेघेन पृथक्कृतायास्तद-पगमे प्राप्तिरित्यर्थः ।

## लोचन

विषमाद् वैपरीत्येन समस्य लक्षणम् । वस्तुनोर्दर्शनीययोः । जह्नुकन्या गङ्गाः ।

## कुसुमप्रतिमा

ननु विरूपयोः सङ्घटनया विषमालङ्कार इव अनुरूपयोः सङ्घटनया कश्चित्तद्विपरीतोऽलङ्कारो भवति न वेत्याकाङ्क्षायां समालङ्कारं निरूपयति सममिति । आनुरूप्येण परस्परसदृशरूपत्वेन हेतुना, योग्यस्य वस्तुनः अनुरूपपदार्थेन सह अनुरूपपदार्थान्तरयोगत्यर्थत्यर्थः श्लाघा साधुवादः, समं नाम अलङ्करणं स्यात् ।

अतएव समाना मा मालं ज्ञानं यस्मिन् तत् सममिति व्युत्पत्तिः । अर्थ समशब्दोऽपि पूर्व वद्वाच्यलिङ्गः ।

इदञ्च सद्योगे असदयोगे च सम्भवतीति द्विधा । तत्र सद्योगे उदाहरति शशिनमिति । रघुवंशषष्ठसर्गे अजे इन्दुमत्त्या स्वयं वृते पौराणामुक्तिगर्भा कवेरुक्तिरियम् । तत्र स्वयं वरे, समगुणयोः समानसौन्दर्य्यादिगुणकयोः इन्दुमत्यजयोः योगेन सम्मेलनेन प्रीतिरानन्दो येषां ते तथोक्ताः पौरा जनाः, इयमिन्दुमती, मेधमुक्तं वर्षाकालातीतं शशिन शरचन्द्रम्, उपगता प्राप्ता, कौमुदी ज्योत्ससा तद्रुपेत्यर्थः, तथा अनुरूप स्वसदृश जलनिधिं समुद्रम्, अवतीर्णा प्रविष्टा जह्नुकन्या गङ्गां तत् स्वरूपेति तात्पर्य्यम्, इति इत्थं नृपाणाम् इन्दुमतीलिप्सया उपस्थितानामपरेषां राज्ञाम्, श्रवणकटु, श्रुतिदुःखावहम्, एकवाक्यम् अभिन्नवचनं विवतुः प्रकाश्य कथयामासः ।

अत्र अनुरूपवरेण अजेन सह इन्दुमत्याः सम्मेलनस्य साधुवदात् समालङ्कारः ।

असद्योगे यथा काव्यप्रकाशधृतम्—

"चित्रं चित्रं वत वत महद्वित्रमेतविचित्रं जाले दैवादुचितरचनासंविधाता विधाता ।

यदिन्वानां परिणतफलस्फीतिरास्वादनीया यच्चै तस्याः कवलन कला कोविदः काकलोकः ॥"

अत्र काकानुरूपे बिम्बफले काकस्यैव योग इति योग्यस्य साधुवादात् समालङ्कारः ।

विरोधस्य प्रकृतत्वात् विशेषातिदिष्टं न च समालङ्कारेण तद्बाधाया असम्भवाद्विरोधघटितमेव विचित्रालङ्कारे लक्षयति विचित्रमिति । चेद्यति विरुद्धस्य इष्टविपरीतस्य कृतिः करणम्, इष्टफलाय अभिलषितफलसिद्धये सम्पद्यत इति शेषः, तदा तत् विचित्रं नाम अलङ्कारं स्यात् ।

विरोधाभासे विषमे च विरोधः स्वतः सम्भवी, इह तु विरुद्धार्थं विरुद्धस्य करणमिति विशेषः । अनुकूत्वालङ्कारेण सह अस्य भेदस्तु तत्प्रकरण एव दर्शितः ।

## विमला

सममाह, सममिति ।—आनुरूप्येण—योग्यकर्मणा, योग्यस्य वस्तुनः—विषयस्य, श्लाघा—प्रशंसा, समं स्यात् ।

शशिनमिति ।—इन्दुंमत्या अजे स्वयंवृते पौराणामुक्तिः । इयम—इन्दुमती कौमुदी, अनुरूपं—स्वयोग्यम्, अजमिति भावः, मेघमुक्तं—मेघावरणशून्यं, शशिनम् उपगता, एवमग्रेऽपि; जह्नुकन्या—जाह्नवी, अनुरूपं—स्वसदृशं, जलनिधिम् अवतीर्णा—प्रविष्टा, इति—एवं, समगुणयोः,—तुल्यगुणयोः, अजेन्दुमत्योरिति शेषः, योगेन—सम्मेलनेन, प्रीतिः येषां तथाभूताः, पौराः,—पुरवासिनः, तव—स्वयंवरक्षेत्रे, नृपाणाम्—इन्दुमतीलिप्सया

समागतानामजेतरराजानां, श्रवणकटु—स्वमनोरथप्रतिकूलतया दुःश्रवम्, असह्यश्रवणमिति यावत्, एकवाक्यं, विवब्रुः,—कथयामासुः। रघुवंशस्येदं पद्यम्। मालिनी वृत्तम्। यथा वा—"स्त्रीपुंसव्यतिषञ्जनं जनयतः पत्युः प्रजानामभूदभ्यासः परिचायकः किमनयोदाम्पत्यसम्पत्तये। आसंसारपुरन्ध्रिपुरुषमिथः प्रेमार्पणक्रीडयाऽप्येतद्दम्पतिगाढरागरचनात् प्राकर्षि चेतो भुवः॥" अत्रान्यस्त्रीपुरुषसम्बन्धजननाभ्यासस्य भेमीनलसम्बन्धफलकोत्त्रया तत्सम्बन्धस्यानुरुप्यं लभ्यतेः। यथा वा—"धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी रूपे देवोऽप्ययमनुपमो दत्तपादः स्मरस्य। जातं दैवात् सदृशमनयोः सङ्गतं यत् तदेतत् श्रृङ्गारस्योपनतमधुना राज्यमेकाधिपत्यम्॥" इति।

## लक्ष्मी

विरूपयोः सङ्घटनायां विषमालङ्कारं लक्षयित्वा अनुरूपयोः स्वङ्घटनायां समालङ्कारं लक्षयति—**सम**मिति। आनुरूप्येण अन्योन्यसदृशरूपत्वेन निमित्तेन, योग्यस्य वस्तुनः उचितपदार्थेन सह उचितपदार्थान्तरसम्बन्धस्य श्लाघा प्रशंसनम्, समा मा मानं ज्ञानं यत्र तत् समं नाम अलङ्करणं स्यात्। विषमशब्दवदयमपि वाच्लिङ्ग एव ज्ञेयः।

सद्रयोगेऽसयोगे चेदं भवतीति द्विविधम्। तत्रायोदाहरणमाह—**शशिनमिति**। रघुवंशे षष्ठसर्गे इन्दुमत्याः स्वयंवरमण्डपे समगुणयोः अन्योऽन्यानुरूपसौन्दर्यगुणयोः योगेन सम्बन्धेन प्रीतिर्हर्षः येषां ते तादृशाः व्यधिकरणबहुव्रीहिः, पौरा नागरिकाः, इयम् इन्दुमती मेघमुक्तं मेघावरणशून्यं शशिनं चन्द्रम् उपगता प्राप्ता कौमुदी चन्द्रिका तत्सदृशीत्यर्थः, तथा अनुरूपम् आत्मतुल्यम् (अजम्) जलनिधिं सागरम्, अवतीर्णा प्रविष्टा जह्नुकन्या गङ्गा तत्तुल्येत्याशयः, इति अनेन प्रकारेण नृपाणाम् इन्दुमतीमुपलब्धुमुपगतानाम्, अथ च तामलब्धावतामजविपक्षिणामपरेषां राज्ञाम्, श्रवणकटु दुःश्रवत्वम्, एकवाक्यम् अभिन्नवाक्यम्, विबब्रुः कथयामासुः। **मालिनीच्छन्दस्तल्लक्षणन्तूक्तं प्राक्**।

## रुचिरा

समं लक्षयति—१५५ **आनुरूप्येणा**नुरूपतया समानतयेति यावत्। **योग्यस्य**। **वस्तुनः**। **श्लाघा** प्रशंसनम्। **समं** सह तुल्यतया मीयते इति तथोक्तम्। तन्नामाऽलङ्कार इति भावः। **स्यात्**॥ १२४॥

उदाहरति—**यथा**—'इयमिन्दुमती। **कौमुदी** चन्द्रिका। अनुरूपं सदृशम् (अजम्)। **मेघमुक्तं** मेघावरणशून्यम्। **शशिनं** चन्द्रम्। **उपगता**। इयम् (इन्दुमती) **जह्नुकन्या** (गङ्गा)। **अनुरूपम्** (अजम्)। **जलनिधिं** समुद्रम्। **अवतीर्णा** प्राप्ता। **इति**। **समगुणयोगप्रीतयः** समोऽन्योऽन्यमनुरूपो गुणो ययोस्तयोर्योगस्तेन प्रीतिर्येषां तथोक्ताः। अत्र व्यधिकरणो बहुब्रीहिः। **पौरा** नागरिकाः। **तत्र** स्वयंवरमण्डपे। **नृपाणामि**न्दुमतीमुपलब्धुमुपेतानाम्, अथ च तामप्राप्तवतामजद्वेषिणां राज्ञाम्। **श्रवणकटु**। **एकवाक्यम**भिन्नवाक्यम्। **विवव्रुः** कथयामासुः। रघुवंशस्येदं पद्यम्। अत्र लक्षणसमन्वयः स्फुटः। मालिनीवृत्तं, तल्लक्षणं चोक्तं प्राक्॥ २४१॥'

**विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत् ॥ ७१ ॥**

**यथा—**

**'प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ।**

**दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥'**

---

## विज्ञप्रिया

**प्रणमिति।** प्रणामो हि नम्रीभावः स उन्नतिविपरीतः । प्राणान् विमुञ्चति, युद्धे इति शेषः । यद्यपि प्राणविमोको न जीवितस्य हेतुस्तथापि प्राणविमोकक्रियापरमत्र विमुञ्चतिपदम् । दुःखीयति दुःखमिच्छति, दुःखजनकक्रियाप्रवृत्तत्वात् ।

## लोचन

इष्टफलस्य प्रकृतोदाहरणादौ उन्नत्यादेः प्राप्त्यर्थं तद्विरुद्धस्य प्रणामादेः करणं विचित्रालङ्कारबीजफलम् ।

## कुसुमप्रतिमा

विपरीतफलाय विपरीतस्य करणादेवास्य विचित्रमिति संज्ञा । विचित्रञ्चाश्चर्य्यम् । अतएवैतदलङ्कारार्थे विचित्रशब्दो नित्यनपुंसकलिङ्गः ।

प्रणमतीति । उन्नतिहेतोरभ्य दयनिमित्तं प्रणमति स्वामिसन्निधाने प्रणतो भवति, सेवक इति शेषः । एवमन्यत्रापि । जीवितहेतोर्वेतनलाभादिना प्राणाक्षानिमित्तम्, प्राणान् विमुञ्चति युद्धादौ परित्यजति । तथा सुखहेतोः सुखसम्पादननिमित्तम, दुःखीयत परिश्रमाय प्रवर्त्तमानो दुःखिच्छति । अतएव सेवकादन्यः को जनो मूढः अपि तु कोऽपि नेत्यर्थः ।

अत्र उन्नत्यादौष्टफललाभाय तद्विरुद्धप्रणत्यादिकरणात् विचित्रालङ्कारः । इयन्तु मालारूपा ।

## विमला

विचित्रमाह, विचित्रमिति ।—तद्विरुद्धस्य—इष्टविपरीतस्य, कृतिः,—करणम्, इष्टफलाय—अभिमतफलसाधनाय, चेत् भवति, तदा विचित्रम् ।

प्रणमतीति ।—सेवकात्—भृत्यात्, अन्यः को मूढः ?—अविवेकी ? उन्नतिहेतोः,—उत्कर्षनिमित्तं, प्रणमति—अपकृष्टो भवति, जीवितहेतोः,—प्राणरक्षानिमित्तं, प्राणान् विमुञ्चति—त्यजति, तथा सुखहेतोः,—सुखाशया, दुःखीयति—दुःखमिच्छति ? न कोऽपि सेवकादन्योऽधिको मूढ इति भावः । अत्रार्य्या छन्दः । इह उन्नतिरूपस्य नतिविरुद्धस्य फलस्य लाभाय उन्नतिविरुद्धस्य प्रणतिरूपकार्य्यस्य करणम् । एवमन्यत्रापि यथा—"मलिनयितुं खलवदनं विमलयति जगन्ति देव ! कीर्त्तिस्ते । मित्राह्लादं कर्तुं मित्राय द्रुह्यति प्रतापोऽपि ॥" इति ।

## लक्ष्मी

अत्र अन्योऽन्यसदृशरूपत्वेन निमित्तेन अजेन सह इन्दुमत्याः प्रशंसनात् समालङ्कारः। द्वितीयोदाहरणं **काव्यप्रकाशे** यथा—

'चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं जातो दैवादुचितरचनासंविधाता विधाता।

यन्निम्बानां परिणतफलस्फीतिरास्वादनीया यच्चैतरस्याः कवलन-कला-कोविदः काकलोकः॥'

अत्र काकयोग्ये बिम्बफले काकस्यैव सम्बन्ध इति सम्बन्धस्य प्रशंसनात् विषमालङ्कारः।

विरोधस्य प्राकरणिकत्वात् तद्धटितमेव विचित्रालङ्कारं निरूपयति—**विचित्रमिति**। न चात्र समालङ्कारेण तद्बाधः शङ्क्यः, तस्य विशेषातिदिष्टत्वात् **चेत्** यदि **विरुद्धस्य** अनिष्टफलकस्य **कर्मणः कृतिर्विधानम्, इष्टफलाय** अभिमतफलप्राप्त्ये सम्पद्यते इति शेषः, तदा **तद् विचित्रं** नामालङ्कारः स्यात् इति पूर्वतोऽनुवर्तते। प्रकाशकृतालङ्कारमिमं विषमेनैव गतार्थं मन्यमानेन नाङ्गीकृतम्, तदाशयं विवृण्वतोद्योतकृता—इष्टसिद्ध्यर्थमिष्टैषिणा क्रियमाणमिष्टविपरीतयत्नाचरणमपि विषममेवेत्युक्तम्। विषमे—विरूपस्य कार्यस्य स्वयमेवोत्पत्तिः, इह च तन्निष्पत्तये कृतिरित्यनयोर्भेद इत्यवधेयम्। एवं विरोधाभसेऽपि।

**प्रणमतीति**। उन्नतिहेतोः अभ्युदयं लब्धुं प्रणमति स्वामिनिकटे प्रकर्षेणावनतो भवति सेवक इति शेषः। इत्थमग्रेऽपि। जीवितहेतोः वेतनप्राप्त्यादिना जीवनरक्षानिमित्तम्, प्राणान् विमुञ्चति सङ्ग्रामादौ परित्यजति, तथा सुखहेतोः सुखलाभाशया दुःखीयति इतस्ततो धावनाय अशक्यमपि च कर्तुम दुःखमिच्छति। अत एव सेवकात् किङ्करात् अन्यः को मूढः अपि तु न कोऽपीत्यर्थः। आर्याच्छन्दस्तल्लक्षणञ्चोक्तं प्राक्।

अत्र अभ्युदयाद्यभिमतफलप्राप्त्यर्थं तद्विरुद्धावनतादिविधानाद्विचित्रालङ्कारः।

## रुचिरा

विचित्रं लक्षयति—१५६ **चेत्**। **इष्टफलाय**ाभिमतायार्थाय। **विरूद्धस्या**निष्टफलकस्य **कर्मणः**। **कृतिर्विधानम्**। **तत्तर्हि**। **विचत्रं** तन्नामाऽलङ्कारः।

उदाहरति-**यथा**—'**उन्नतिहेतो**रुन्नतिं लब्धुमिति भावः। **प्रणमति** प्रकर्षेणावनतो भवति। **जीवितहेतो** र्जीवननिमित्तम्। **प्राणान्** (युद्धादिषु)। **विमुञ्चति**। **सुखहेतोः** सुखलाभाशया। **दुःखीयति** परिश्रान्तोऽपीतस्ततो धावति, अशक्यमपि कर्त्तु प्रवर्त्तते चेति भावः। अतः-**सेवकात्** किङ्करात्। **अन्यः**। **कः**। **मूढो** न कोऽपि मूढ इति भावः। आर्य्याछन्दः, तल्लक्षणं चोक्तं प्राक्॥ २४२॥'

**आश्रयाश्रयिणोरेकस्याधिक्येऽधिकामुच्यते ।**

आश्रयाधिक्ये यथा—

**'किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र ।
अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि ॥'**

---

## विवृतिः

**प्रणमति** अपकृष्टो भवति । **उन्नतिरुत्कर्षः** जीवितं प्राणरक्षा । दुःखीयति दुःखमिच्छति ॥ अधिकालंकारमाह—**आश्रयेति** । एकस्याश्रयस्य आश्रयिणो वा आधिक्ये महत्त्वातिशये । प्रतिपाद्ये इति शेषः ॥ **अज्ञात एवेति** । एकदेश एव शयनात्समुद्रस्थैः सर्वैः सत्त्वैर्न ज्ञायत इत्यर्थः । अत्र 'कुक्षौ निक्षिप्य' इत्यनेन हरेर्महत्त्वमवगम्यते, समुद्रैकदेशे तच्छयनेनाश्रयस्य समुद्रस्यातिशयमहत्त्वं व्यज्यते ॥

## विज्ञप्रिया

अधिकसंज्ञकमलङ्कारमाह-**आश्रयेति** । आधिक्यम् अधिकतया वर्णनमित्यर्थः । **किमधिकमिति** । भुवनानि कुक्षौ निक्षिप्य हरिर्यत्राज्ञात एव शेते । जलनिधेः किञ्चिदवच्छेदेनैव शयनाज्जलनिधिद्रष्टृभिरज्ञात एव शेत इत्यर्थः । अस्य जलनिधेर्महिमानं किमधिकं वदाम इत्यर्थः । अत्र कुक्षिनिक्षिप्तभुवनस्यापि हरेस्तु किञ्चिदवच्छेदेनैव शयनादाश्रयस्य जलनिधेराधिक्यं वर्णितम् ।

## लोचन

आधिक्यं क्वचिदाश्रयाश्रयिणोर्महत्त्वमिति द्विविधोऽधिकाख्यालङ्कारः इत्यर्थः । यत् पुनः कैश्चिदुक्तं वस्तुतः तनुत्वेऽपि यदेकस्याधिक्यं तदधिकमुच्यते इति तन्न ।

## कुसुमप्रतिमा

केवलरूपा यथा महिम्नःस्तवे—"न कस्या उन्नत्यै भवति शिरसस्त्वय्यवनतिः ।"

अथ सम्पूर्णवैरूप्ये विचित्रालङ्कार इव किञ्चिद्वैरूप्ये किञ्चिदलङ्कारान्तरं स्यान्न वेति जिज्ञासायामधिकालङ्कारमाह आश्रयेति । आश्रयाश्रयिणीराधाराधेययोर्मध्ये एकस्य एकतरस्य आधिक्ये विशालत्वे सति अधिकं नाम अलङ्कारं उच्यते ।

आधाराधेययोर्न्यूनत्वाधिकत्वाभ्यां वैरूप्ये अधिकम्, तदितरवैरूप्ये तु विषममित्यनयोर्भेदः, सामान्य विशेषन्वयात् । अत्र व्युत्पत्तिः स्पष्टा । एतदलङ्कारार्थ अधिकशब्दोऽपि नित्यनपुंसकः । "विशालशय्यायां शिशुः शेते" इत्यादौ तु वैचित्र्यभावान्नायमलङ्कारः ।

किमिति । अस्य वारिधेः क्षोरोदसागरस्य अधिकं महिमानं विशालत्वं किं ब्रूमः; यत्र क्षोरोदवारिधौ, हरिर्नारायणः, कुक्षौ उदरे भुवनानि त्रीणि जगन्ति, निक्षिप्य संस्थाप्य, अज्ञात एव "कुत्र स्थितः" इति जलधरैरप्यविदित एव शेते, प्रलयकाले इति शेषः ।

अत्राधेयभूतनारायणापेक्षया आधारभूतवारिधेराधिक्यादधिकालङ्कारः ।

## विमला

अधिकमाह, आश्रयेति ।—आश्रयाश्रयिणोः,—आधाराधेययो, एकस्य—आश्रयस्य आश्रयिणो वा, आधिक्ये—महत्त्वातिशये, प्रतिपाद्ये इति शेषः, अधिकम् उच्यते ।

## लक्ष्मी

इत्थं समस्तवैरूप्ये विचित्रालङ्कारं निरूप्य किञ्चिद्वैरूप्येऽधिकालङ्कारं निरूपयति—**आश्रयेति** । आश्रयाश्रयिणोः आधाराधेययोर्मध्ये एकस्य आश्रयस्य आश्रयिणो वा आधिक्ये बहुलत्वे सति अधिकं तन्नामालङ्कारं उच्यते कविभिरिति शेषः । एवञ्च आश्रयाधिक्यनिबन्धनमाश्रित्याधिक्यनिबन्धनं चेति द्विप्रकारकमेतदितिफलितम् ।

आद्यमधिकमुदाहरति—**किमिति** । अस्य वारिधेः क्षीरसमुद्रस्य अधिकं महिमानं महत्वं किं ब्रूमः; यत्र क्षीरसमुद्रे हरिर्विष्णुः, कुक्षौ उदरे भुवनानि भुर्भुवः स्वर्लोकान्, निक्षिप्यसंस्थाप्य, अज्ञात एव 'क्व वर्तते' इति जलजन्तुभिरविदित एव शेते स्वपिति प्रलयसमये इति शेषः । **आर्याच्छन्दः** ।

**अत्राश्रयिभूतहर्यपेक्षया** आश्रयभूतक्षीरसमुद्रस्याधिक्यादधिकालङ्कारः ।

## रुचिरा

अधिकं लक्षयति—१५७ **आश्रयाश्रयिणोराधाराधेययोर्मध्ये** इति भावः । एकस्यैकतरस्याश्रयस्याश्रयिणो वेति यावत् । आधिक्ये । अधिकम् । तन्नामाऽलङ्कार इति भावः । **उच्यते** । तथा च-आश्रयाधिक्यनिबन्धनमाश्रय्याधिक्यनिबन्धनं चेति द्विप्रभेदमेददिति फलितम् ॥ १२५ ॥

तत्राद्यमुदाहरति—**आश्रयाधिक्ये** । **यथा**—'**कुक्षौ** । **भुवनानि** भुर्भुवः स्वर्लोकान् । **निक्षिप्य** । हरिर्विष्णुः । **यत्र** यस्मिन् । **अज्ञातो**ऽविदितमहत्त्वः । **एव** । **शेते** । **अस्य** 'तस्ये'ति शेषः । **वारिधेः** सागरस्य । अधिकम् । **महिमानं** महत्त्वम् । **किम्** । **ब्रूमः** । इत्येवास्य महत्त्वम्, यत् 'येन कुक्षौ भुवनानि निक्षिप्तानि, सोऽपि (एवम्-अत्यन्तं महनीयोऽपि) हरिर्यस्यैकांशे स्थितो न ज्ञायते, कुत्र विलीन'इति । स्फुटं चैवाधेयाधिक्यापेक्षयाऽऽधाराधिक्यम् । आर्याछन्दः ॥ २४३ ॥'

आश्रिताधिक्ये यथा—

**'युगान्तकालप्रतिसंहृतात्मनो**
**जगन्ति यस्यां सविकासमासत ।**
**तनौ ममुस्तत्र न कैटभद्विष**
**स्तपोधनाभ्यागमसंभवा मुदः ॥'**

---

## विवृतिः

**युगान्तेति** । नारदागमे श्रीकृष्णस्य हर्षातिशयवर्णनमिदम् । युगान्तकाले प्रलयसमये प्रतिसंहताः स्वोदरं प्रवेशिता आत्मानः समस्तप्राणिनो येन तस्य कैटभद्विषः श्रीकृष्णस्य यस्यां तनौ जगन्ति सविकासमयन्त्रणं यथा स्यात्तथा आसत, तस्यां तनौ तपोधनस्य नारदस्य अभ्यागमसंभवा मुदो न ममुर्नावकाशं प्राप्ताः । अत्र 'जगन्ति' इत्यादिना श्रीकृष्णतनोराश्रयस्याधिक्यमुक्तम् । तत्रावकाशालाभादाश्रितानां मुदामतिमहत्त्वं व्यज्यते ।

## विज्ञप्रिया

आश्रिताधिक्यवर्णनमाह—**युगान्तेति** । नारदागमने श्रीकृष्णस्य हर्षाधिक्यवर्णनमिदम् । युगान्तकाले प्रतिसंहृताः स्वकुक्षौ प्रवेशिता आत्मानः प्राणिनो येन तादृशस्य कैटभाद्विषो विष्णोर्यस्यां तनौ जगन्ति सविकाशमयन्त्रणमासत तत्र तस्यां तनौ तपोधनस्य नारदस्याभ्यागमसम्भवा मुदो न ममुः न स्थातुमवकाशं लेभिरे इत्यर्थः । तनुभेदेऽपि विष्णुतनुत्वेनैकत्वाध्यासादेकत्वं बोध्यम् । अत्राश्रितानां मुदामधिकत्वम् ।

## कुसुमप्रतिमा

युगान्तेति । शिशुपालवधप्रथमसर्गस्थमिदं पद्यम् । युगान्तकाले प्रलयसमये प्रतिरोहता आत्मनि उपसहृता आत्मनो जीवा येन तस्य तथोक्तस्य, कैटमहिष, श्रीकृष्णस्य, यस्यां तनौ देहे, जगन्ति त्रीणि भुवनानि, सविकास सावकाशमसम्बाधमिति यावत् यथा तथा आसत स्थितानि; तत्र तस्यां तनौ, तपोधनस्य नारदस्य, आभ्यागमसम्भवा आगमनोत्पन्नः, मुदः आनन्दाः, न ममुनं धृता अतिरिक्ता बभूवुरित्यर्थः ।

अत्राधारभूतनारायणशरीरापेक्षया । आधेयभूतानामानन्दानामाधिक्यादधिकालङ्कारः; मल्लिनाथेन तु सम्बन्धे असम्बन्धरूपा अतिशयोक्तिरभिहिता । सापि सम्भवत्येवेति तदतिशयोक्त्युत्यापितोऽयमधिकालङ्कार इत्यनयोरङ्गाङ्गीभावेन सङ्कर इति तत्त्वम् ।

## विमला

आश्रयाधिक्ये अधिकमाह, किमधिकमिति ।—अस्य वारिधेः,—समुद्रस्य, महिमानं—महत्त्वम्, अधिकं किं ब्रूमः ?—कथयामः ? यत्र—वारिधौ, हारः,—नारायणः, कुक्षौ—जठरे, भुवनानि निक्षिप्य अज्ञात एव—कुत्रेति केनाप्यलक्ष्यमाण एव, एकदेश एव शयनात् समुद्रस्थैः सर्वैः सत्त्वैः न ज्ञायते इत्यर्थः, शेते । अत्र "कुक्षौ निक्षिप्य" इत्यनेन हरेर्महत्त्वमवगम्यते, समुद्रकदेशे तच्छयनेनाश्रयस्य समुद्रस्यातिशयमाहात्म्य व्यज्यते । श्लोकेऽस्मिन्

समस्तभुवनानां महाऽऽधारस्यापि भगवतः क्षीरोदशायित्वेनाधेयत्वं, यौरोदस्य आधारत्वं, तत्रापि अविगणितभावेन स्थितत्वात् आधेयस्य आधाराधिक्यवर्णनमिति लक्षणसमन्वयः । अत्रार्य्या छन्दः ।

आश्रिताधिक्ये अधिकमाह, युगान्तेति ।—नारदागमे श्रीकृष्णस्य हर्षातिशयवर्णनम् । युगान्तकाले—कल्पान्तसमये, प्रलयकाले इति यावत्, प्रतिसंहृतः,—सङ्कुचितः, आत्मा येन तादृशस्य, यद्वा—प्रतिसंहृताः,—स्वोदरं प्रवेशिताः, आत्मानः,—समस्तप्राणिनी येन तथाभूतस्य, कैटभद्विषः,—श्रीकृष्णस्य, यस्यां तनौ—शरीरे, जगन्ति सविकासम्—असङ्कीर्णं यथा तथा, अयन्त्रणं यथा तथेति यावत्, आसत—तिष्ठन्ति स्म, [आम् उपवेशने इत्यस्य लङि प्रथमपुरुषस्य बहुवचनमिदम्] तत्र—तस्यां, तनौ—भगवतो देहे, तपोधनस्य—नारदस्य, अभ्यागमेन—समागमेन, सम्भवाः,—समुत्पन्नाः, मुदः—हर्षाः, न ममुः,—न मान्ति स्म, नावकाशं प्राप्य तस्थुः स्थातुमक्षमाः सत्यो वहिर्निसेरुःरिति भावः । अत्र "जगन्ति" इत्यादिना श्रीकृष्णतनोराश्रयस्याधिक्यमुक्तं, तत्रावकाशालाभात् आश्रितानां मुदामतिमहत्त्वं व्यज्यते इति । अत्र समस्तजगदाधाररूपाया भगवत्तन्वाः अपेक्षया नारदमुनिसमागमजन्या-मोदरूपस्य आधेयस्य "न ममुः" इत्यनेन आधिक्योतेरधिकं नामालङ्कारः । मल्लिनाथस्तु—"चतुर्दशभुवनभरणपर्य्याप्तं वपुषि अन्तनं मान्तीति कविप्रौढोक्तिसिद्धातिशयेन स्वतः सिद्धस्याभेदेनाध्यवसिता-तिशयोक्तिः, सा च मुदामन्तः सम्बन्धेऽप्यसम्बन्धोक्त्या सम्बन्धासम्बन्धरूपा" इति अतिशयोक्त्यलङ्कारं समर्थि-तवान् । वस्तुतस्तु कविप्रौढोक्तिसिद्धातिशयेनाध्यवसितत्वेन आमोदरूपस्याधेयस्य आधिक्यसिद्धिरिति अतिशयोक्तिमूलोऽयमधिकालङ्कारः इति सर्वं समञ्जसम् । वंशस्थविलं वृत्तम् । शिशुपालवधस्येदं पद्यम् ।

## लक्ष्मी

द्वितीयमधिकमुदाहरति—**युगान्तेति** । माघकाव्यप्रथमसर्गे नारदागमने श्रीकृष्णमुदां वर्णनमिदम् । युगान्तकाले प्रलयसमये प्रतिसंहृताः स्वोदरं प्रवेशिता आत्मानः समस्ता, जीवा येन, **यद्वा** प्रतिसंहृतः सूक्ष्मीकृतः आत्मा शरीरं येन तस्य, कैटभद्विषः श्रीकृष्णस्य, यस्यां तनौ शरीरे जगन्ति भुवनानि सविकाशं सावकाशमसम्बा-धमितियावत् यथा स्यात्तथा (क्रिया विशेषणमेतत्) आसत अविद्यन्त; तत्र तस्यां तनौ तपोधनस्य नारदस्य अभ्यागमसम्भवा आगमनजन्याः मुदः प्रीतयः न ममुः नावकाशं प्रापुरित्यर्थः । **वंशस्थं** छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्राश्रयिभूतहरिशरीरापेक्षया आश्रयभूतानां प्रीतीनामाधिक्यादधिकालङ्कारः । एतत्पद्यव्याख्याता मल्लिनाथस्तु सम्बन्धासम्बन्धरूपा अतिशयोक्तिरित्याह । एवञ्चातिशयोक्त्योत्थापितोऽयमधिकालङ्कार इति पर-स्परमङ्गाङ्गिभावेन सङ्कर इति सारविदो वदन्ति ।

यथा आश्रयाश्रयिणोरेकस्याधिक्येऽधिकालङ्कारः तथा उभयघटितं कश्चिदलङ्कारः सम्भवितुमर्हति न वेत्याकाङ्क्षायामन्योन्यालङ्कारं निरूपयति—**अन्योन्य**मिति । उभयोः कर्तृभूतयोर्द्वयोर्वस्तुनोः एकस्याः क्रियायाः, मिथः अन्योन्यं करणं सम्पादनम्, 'विच्छित्तिर्विशेषेण' इति शेषः, अन्योन्यं तन्नामाऽलङ्कारः 'उच्यते' इत्यनुवर्तते । अन्योन्यलक्षणञ्चोक्तामन्यत्र—

'तदन्योऽन्यं मिथो यत्रोत्पाद्योत्पादकता भवेत्' इति ।

'मिथः' पदमित्यभिधानेन 'दुदोह गां स यज्ञाय सस्याय मघवा दिवम्' इत्यादौ मिथः करणाभावान्नाति-व्याप्तिः । यत्र च क्रियापदं न तत्र तु अध्याहारेणैव कार्य भवतीति तत्रापि नाव्याप्तिः । यथा—क्षपया रुचिरश्चन्द्र-श्चन्द्रेण रुचिरा क्षपा ।

अत्र रुचिरभवनक्रियाया मिथः करणम्।

उदाहरति—**त्वयेति**। दम्पत्योर्गुणवर्मनमिदम्। हे सखे ! सा तन्वी कृशशरीरा त्वया कान्तेन शोभते, त्वमपि तया तन्व्या कान्तया शोभसे। तथा च चन्द्रो रजन्या रात्र्या शोभते, निशीथिनी सा रजन्यपि चन्द्रेण शशिना शोभते।

अत्र दम्पत्योश्चन्द्ररजन्योश्च एकशोभनक्रियायाः मिथः करणादन्योन्यालङ्कारः। एवमेव—

'शशिना च निशा निशया च शशी शशिना निशया च विभाति नभः।
**पयसा कमलं कमलेन पयः पयसा कमलेन विभाति सरः॥'**

## रुचिरा

द्वितीयमुदाहरति—**आश्रिताधिक्ये**। यथा—'**युगान्तकालप्रतिसंहृतात्मनो** युगान्तकाले प्रतिसंहृताः स्वोदरं प्रवेशिता आत्मानः समस्ता जीवा येन तथोक्तस्य। **कैटभद्विषः** कैटभनिहन्तुः श्रीकृष्णस्य। यस्याम्। तनौ शरीरे। **जगन्ति** लोकाः। **सविकासं** सावकासम् (क्रियाविशेषणमेतत्) आसताविद्यन्त। **तत्र** तस्यां तनौ। **तपोधनाभ्यागमसम्भवास्तपोधनस्य** नारदस्याभ्यागमः स सम्भव उत्पत्तिस्थानं यासां तास्तथोक्ताः। **मुदो** हर्षाः। **न**। **ममुरवकासं** लब्धवन्तः। अवकासालाभादाश्रितानां मुदामतिमहत्त्वं व्यज्यते। शिशुपालवधस्येदं पद्यम्। वंशस्थविलं छन्दः॥ २४४॥'

**अन्योन्यमुभयोरेकक्रियायाः कारणं मिथः ॥ ७२ ॥**

**'त्वया सा शोभते तन्वी तया त्वमपि शोभसे ।**

**रजन्या शोभते चन्द्रश्चन्द्रेणापि निशीथिनी ॥'**

---

## विवृतिः

अन्योन्यालंकारमाह—**अन्योन्यमिति** । अत्र चेदित्यनुषज्यते । उभयोरेकजातीययोः क्रिययोर्मिथः परस्परं चेत्कारणं तदान्योन्यनामालंकारो भवतीत्यर्थः ॥

**त्वया सेति** । अत्र परस्परशोभयोः परस्परकारणम् । क्रियापदं गुणस्याप्युपलक्षणम् । तेन 'निशया रुचिरश्चन्द्रश्चन्द्रेण रुचिरा निशा' इत्यत्राप्ययमलंकारः । 'दुदोह गां स यज्ञाय सस्याय मघवा दिवम्' इत्यादिव्यावृत्तये 'उभयोः' इति । अत्र स्वं स्वं दोहनं प्रत्येव स्वं स्वं कारणं न तु परस्परस्य दोहनं प्रति परस्परं कारणम् । अत्र कारणयोः क्रिययोश्च शब्दैक्यं वैचित्र्यपरिपोषकमेव, न तु नियामकम् । तेन 'नलेन भायाः शशिना निशेव त्वया स भायान्निशया शशीव' इत्यादौ शब्दभेदेऽप्ययमलंकारः ॥

## लोचन

अन्योन्यसंज्ञकमलङ्कारमाह—**अन्योन्यमिति** । एका क्रिया एक जातीया क्रिया । उभयोर्मिथः करणमित्यर्थः । **त्वया सेति** । परार्द्धं दृष्टान्तालङ्कारेऽपि ।

## कुसुमप्रतिमा

अधिकालङ्कारे उभयोः प्रस्तावोत्थानादुभयघटितमन्योन्यालङ्कारं लक्षयति अन्योन्यमिति । उभयोः कर्त्तृभूतश्चोर्द्वयोः पदार्थयोः एकस्याः क्रियायाः, मिथः परस्परं करणं विधानम्, अन्वोन्वं नाम अलङ्कार उच्यते इत्युषङ्गः । अत्र उभयोर्मिश्रः करणमित्यभिधानात् "दुदोह गां स यज्ञाय शस्याय मघवा दिवम्" इत्यादौ मिथः करणाभावान्नातिव्याप्तिः । "निशया रुचिरश्चन्द्रश्चन्द्रेण रुचिरा निशा" इत्यादौ च "नहि क्रियारहितं वाक्यमस्ति" इति न्यायेन भवतीति क्रिया अध्याहरणीयैव । तेन रुचिरभवनक्रियायाः परस्परकरणान्नाव्याप्तिः । अतः "क्रियापदं गुणस्याप्युपलक्षणम्" इति रामचरणोक्तमपास्तम्, उपलक्षणाङ्गीकारेऽपि भवतीति क्रियाया अवश्यमध्याहरणीयत्वात् तथैव चोपपत्तेरुपलक्षणङ्गीकारस्यान्याय्यत्वात् । अतएव काव्यप्रकाशेऽपि "क्रियाया" इत्येवोक्तम् । अत्रापि व्युत्पत्तिः स्पष्टा । अन्योन्यशब्दश्च नित्यनपुंसक एव ।

त्वयेति । नायकनायिकयोर्गुणवर्णनमिदम् । हे नायक ! सा तन्वी कृशाङ्गी त्वया द्वारा शोभते, त्वमपि त्वया तन्वा द्वारा शोभसे । तथा च चन्द्रो रजन्या द्वारा शोभते, निशीथिनी सा रजन्यपि चन्द्रेण द्वारा शोभते ।

अत्र नायकनायिकयोश्चन्द्ररजन्योश्च एकस्याः शोभनक्रियायाः परस्परकरणादन्योन्वालङ्कारः ।

## विमला

अन्योऽन्यमाह, अन्योऽन्यमिति ।—अत्र चेदित्यनुषज्यते, उभयोः,—एकजातीययोः क्रिययोः, ("दुदोह गां स यज्ञाय शस्याय मधवा दिवम्" इत्यादिव्यावृत्तये "उभयोः" इति, अत्र स्वं स्वं दोहनं प्रत्येव स्व स्व कारणं, न तु परस्परस्य दोहनं प्रति परस्परं कारणम्) मिथः,—परस्परम्, एक क्रियायाः चेत् करणं तदा अन्योऽन्यम्—अन्योऽन्यनामालङ्कारः, भवतीति शेषः । क्रियापदं गुणस्याप्युपलक्षणम्; तेन "निशया रुचिश्चन्द्रश्चन्द्रेण रुचिरा निशा" इत्यत्राप्ययमलङ्कारः । अत्र कारणयोः क्रिययोश्च शब्दैक्य वैचित्रयपरिपोषकमेव, न तु नियामकं, तेन "नलेन भायाः शशिना निशेव त्वया स भाया निशया शशीव" इत्यादौ शब्दभेदेऽप्ययमलङ्कारः । अत्रेद बोध्यम्—यद्यपि एकस्याः क्रियायाः परस्परमेककरणत्वे एव एतदनुज्ञातं, तथाऽपि एकधा क्रियया परस्परमुत्कर्षाधाने एतस्य सद्भावः, अन्यथा तावन्मात्रत्वेऽस्य अलङ्कारव्यपदेशार्हत्वस्यैवासम्भवः; अत एवोक्तमलङ्कारकौस्तुभकृता—"अन्योऽन्यं वस्तूनां परस्परोत्कर्षहेतुत्वे" इति । केचित्तु—यदा तु परस्परमन्विता काचिदेकैव क्रिया अन्येनाप्यत्वेति, तदाऽप्ययमेवालङ्कारः इति सिद्धान्तयन्ति, उदाहरन्ति च—"शशिना च निशा निशया च शशी शशिना निशया च विभाशि नभः । कविना च विभुः विभुना च कविः कविना विभुना च विभाति सभा ॥" इत्यादि ।

त्वयेति ।—सा तन्वी—कृशाङ्गी, त्वया शोभते, त्वमपि तया—कृशाङ्ग्या, शोभसे, चन्द्रः रजन्या शोभते, निशीथिनी—रजनी, अपि चन्द्रेण, शोभते इति शेषः । अत्र परस्परशोभयोः परस्परकारणम् । यथा वा—"कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य । अन्योऽन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥" इति ।

## रुचिरा

अन्योऽन्यं लक्षयति—१५८ **उभयोर्द्वयोर्वस्तुनोरित्यर्थः** । **एकक्रियाया** एकस्याः क्रियायाः, उपचाराद् गुणस्य च । **मिथः** । **करणं** सम्पादनम् । 'विच्छित्तिविशेषेणे'ति शेषः । **अन्योऽन्यं** तन्नामाऽलङ्कार इत्यर्थः ।

उदाहरति—'**त्वया** कान्तेन । **सा** । **तन्वी** । **शोभते** । **तया** तन्व्या । **त्वं** (कान्तः) । **अपि** । **शोभसे** । **रजन्या** रात्र्या । **चन्द्रः** । **शोभते** । **चन्द्रेण** । **निशीथिनी** रात्रिः । **अपि** 'शोभते' इति शेषः । अत्र परस्परं शोभनक्रियायाः समुत्पादनम् ॥ यथा वा—'परपूरुषदृष्टिपातवज्राहतिभीता हृदयं प्रियस्य सीता । अविशत् परकामिनीभुजङ्गीभयतः सत्वरमेव सोऽपि तस्याः ॥' अत्र सीतारामयोः परस्परं प्रवेशनक्रियाया उत्पादनम् । गुणस्य विशेषाधायकत्वं यथा—'सुदृशो जितरत्नजालया सुरतान्तश्रमबिन्दुमालया । अलिकेन च हेमकान्तिना विदधे काऽपि रूचिः परस्परम् ॥' इति । अत्र हि रूचिरूपस्य गुणस्योत्पादनम् । नच विधानरूपायाः क्रियाया उत्पादनं वाच्यम्, भावनासामान्यरूपस्य विधानस्याचमत्कारितयाऽविशिष्टत्वात् । मिथ इत्यनेन 'दुदोद गां स यज्ञाय सस्याय मघवा दिवम् ।' इत्यादौ नातिप्रसङ्गः । अत्र हि स्वंस्वं दोहनं प्रति स्वंस्वमेव साधनम् ॥ २४५ ॥'

**यदाधेयमनाधारमेकं चानेकगोचरम्।**
**किंचित्प्रकुर्वतः कार्यमशक्यस्येतरस्य वा॥ ७३॥**
**कार्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः।**

क्रमेण यथा—

**'दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम्।**
**रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः।'**

---

## विवृतिः

विशेषालंकारमाह—**यदाधेयमिति**। यच्छब्दो यदार्थः। इतरस्य शक्यस्य कार्यस्य अप्रकान्तस्य करणमुत्पत्तिर्दैवात्प्रतिसंधानं विना। **दिवमपीति**। अनल्पो गुणानां माधुर्यादीनां गणो यासा ताः। अत्र निर्मातृत्वेन प्रसिद्धाधारान्कवीन् विनापि काव्यरूपाणां गिरां स्थितिः॥

## विवृतिपूर्तिः

**यदिति**। आधारमन्तरेणाधेयं न वर्तत इति स्थितावपि यस्तत्परिहारेणाधेयस्योपनिबन्धः स एको विशेषः। यच्चैकं वस्तु परिमितं युगपदनेकधा वर्तमानं क्रियते स द्वितीयः। यत्किंचिदारभमाणस्यासंभाव्यवस्त्वन्तरकरणं स तृतीय इति॥

## विज्ञप्रिया

त्रिविधं विशेषालङ्कारमाह—**यदाधेय**मिति। यदिति त्रिष्वन्वितम्। अनाधारमाधारं विना स्थितं वर्णितमित्यर्थः। अनेकगोचरमित्यत्र एकदेति शेषः, क्रमिकस्थितौ तु पर्यायालङ्कारस्य वक्ष्यमाणत्वात्। किञ्चित्प्रकुर्वतः कर्त्तुर्दैवादितरस्याऽशक्यस्य कार्यस्य करणं वा यदित्यर्थः।

**दिवमिति**। दिवमुपयातानामपि येषां कवीनामनल्पगुणगणा गिरः जगन्ति रमयन्ति ते कवयः कथमिह न वन्द्या इत्यर्थः। अत्र कर्त्तृतासम्बन्धेनाधारणां कवीनामसत्त्वेऽपि तदाधेयानां गिरां स्थितिः।

## कुसुमप्रतिमा

अधिकालङ्कारे आधाराधेययोः प्रकृतत्वात् विशेषातिदिष्टे न चान्योन्येन तद्बाधाया अयोगादाधाराधेयघटितं विशेषालङ्कारं लक्षयन् सर्वमेव विशेषालङ्कारं लक्षयति यदिति। जनाधारम् आधाररहितम् आधेयं यदवतिष्ठत इति शेषः। अयमेकविधः। एकञ्च वस्तु अनेकगोचर युगपदनेकस्यानन्वितम्। अयं द्वितीयविधः। तथा किञ्चित् किमपि कार्य्यं प्रकुर्वतो जनस्य सम्बन्धे, अशक्यस्य कर्त्तुमशक्यस्य इतरस्य कर्त्तु शक्यस्य वा कार्य्यस्य दैवात्करणं सम्पादनम्। अयं तृतीयविधः। तत्तस्तत्वात् त्रिविधलक्षणात् विशेषो तानालङ्कारस्थिविध उच्यत इति पूर्वानुकर्षः।

पर्य्यायालङ्कारे एकस्य अनेकस्थानवर्त्तिना क्रमात् तत्र क्रमादित्यभिधानात्, अत्र तु युगपदिति द्वितीयविधविशेषेण सह तस्य भेदः ।

विशेषः अलङ्कारान्तरेभ्यो विलक्षण इति व्युत्पत्तिः ।

तत्र अनाधाराधेये उदाहरति दिवमिति । दिवमुपयातानामपि स्वर्गं गतानामपि येषां कवीनाम, अनल्पा बहुलाः गुणगणा वैचित्र्यमाधुर्य्यादिगुणसमूहा यासु तास्तयाविधा गिरः काव्यात्मकवाक्यानि, आकल्पं प्रलयकालपर्य्यन्तं जगन्ति भुवनानि रमयन्ति आनन्दयन्ति, ते कवयः कथमिव न वन्द्या न पूजनीयाः ? अपि तु वन्द्या एवेत्यर्थः ।

अत्र रक्षयितृत्वेन आधारभूतानां कवीनामभावेऽपि आधेयभूतानां तद्रगिरामवस्थितेर्विशेषालङ्कारः ।

## विमला

त्वयेति । सा तन्वौ— कृशाङ्गी त्वया शोभते, त्वमपि तया कृशाङ्ग्या, शोभसे चन्द्र-रजन्या शोभते, निशीथिनी रजनी अपि चन्द्रेव, शोभते इति शेषः । अत्र परस्परशोभयोः परस्परकारणम् । यथा वा 'कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ता क्लापस्य च निस्लस्य । अन्योऽन्यशोभाजननादवभूव साधारणो भूषणभूष्य भावः" इति ।

विशेषमाह, यदिति ।—यत् अनाधारम्—आधारवर्जितम्, आधेयं, यच्च एकं, वस्तु इति शेषः, अनेकगोचरं—बहुस्थानवर्त्ति, (पर्य्यायालङ्कारलक्षणे "क्रमात्" इत्यस्योपादानादत्र परिशेषात् युगपदित्यस्य लाभो ज्ञेयः) अथवा किञ्चित्—किमपि, कार्य्यं प्रकुर्वतः, जनस्य इति शेषः, अशक्यस्य इतरस्य—शक्यस्य वा, कार्य्यस्य—अप्रक्रान्तस्य इति भावः, दैवात्—प्रतिसन्धानं विना, करणम्—उत्पत्तिः, विशेषः, स च ततः,— तस्मात्, उक्तनयादित्यर्थः, त्रिविधः; तथा च—प्रसिद्धमाधारं विनाऽऽधेयस्य सत्त्वे आद्यो विशेषः, एकस्य परिमितस्य वस्तुनः युगपत् अनेकत्र सत्त्वे द्वितीयो विशेषः, एकस्मिन् कार्य्ये आरब्धं सुकरस्य दुष्करस्य वा अन्यस्य कार्य्यस्य करणे तृतीयो विशेषः इति निष्कृष्टोऽर्थः ।

दिवमिति ।—दिवं—स्वर्गम्, उपयातानामपि—मृतानामपीत्यर्थः, येषां—कवीनाम्, अनल्पाः,—वहवः, गुणानां—माधुर्य्यादीनां, गणा यासु ताः, गिरः,—वाचः, आकल्पम्—आप्रलयं, जगन्ति रमयन्ति—तोषयन्ति, ते कवयः कथमिव—कथमिति भावः, न वन्द्याः ?—नार्चनीयाः ? अपि तु वन्द्या एवेत्यर्थः । अत्र निर्मातृत्वेन प्रसिद्धाधारान् कवीन् विनाऽपि काव्यरूपाणां गिरां स्थितिः इति कवीनां स्वर्गगतत्वात् तेषां वाक्यानां भूमिनिष्ठत्वमनाधारमेव, तस्मादाद्यप्रभेदो विशेषः । अत्रार्य्या छन्दः । इदं रुद्रटस्य । यथा वा—"रूपमक्ष्णोः स्थितं स्पर्शोऽङ्गेषु जल्पितं कर्णे । हृदयं हृदये निहितं वियोजितं किमत्र दैवेन ?" ॥ अत्र नायिकानिष्ठरूपस्य नायिका आधारः प्रसिद्धः, तत्समवायिकारणत्वात्ः तां विनाऽपि अक्ष्णोस्तदवस्थानमुक्तं, तज्जन्योपनीतविषयत्वाभिप्रायेण इत्युपपत्तिः ।

## लक्ष्मी

इत्यादावप्ययमेवालङ्कारो ज्ञेयः ।

आधाराधेययोरधिकालङ्कारे प्रस्तावात्तद्घटितं विशेषालङ्कारं निरूपयति—**यदिति** । न च मध्येऽन्योन्यालङ्कारनिरूपणेन आधाराधेयोर्विच्छेदः ? तस्य विशेषानिर्दिष्टत्वेन क्षत्यभावात् । अनाधारम् आश्रयरहितम् आधेयम् आश्रयं यत् अभिधीयते स एको विशेषः । एकञ्च वस्तु अनेकगोचरम् एककाले अनेकविषयम्, तथाच एकं

वस्तु युगपदनेकगोचरं प्रतिपाद्येत तदा द्वितीयो विशेषः । युगपदिति पर्यायनिवारणाय, तत्र क्रमेणैकस्यानेकसम्बन्धः, अत्र तु एकदैवैकस्य वस्तुनोऽनेकसम्बन्धत्वस्य विवक्षितत्वमित्यवधेयम् । तथा किञ्चित् अनिर्दिष्टमित्यर्थः कार्यं प्रकुर्वतः साधयतो जनस्य सम्बन्धे अशक्यस्य दुःसाध्यस्य इतरस्य विधातुं शक्यस्य वा कार्यस्य दैवात् भाग्यात् करणं सम्पादनम्, प्रतिपाद्येत स तृतीयो विशेषः । ततस्तस्मात् त्रिविधस्वरूपात् विशेषोऽलङ्कारान्तरेभ्यो विलक्षण इति व्युत्पत्त्या तन्नामालङ्कारस्त्रिविधस्त्रिप्रकार 'उच्यते' इति पूर्वत्रतोऽनुवर्तते ।

तत्रानाधाराधेये उदाहरणमाह—**दिवमिति** । दिवं स्वर्गम् उपयातानां गतानामपि येषां कवीनाम् अनल्पाः बहवो गुणगणा विच्छित्तिमाधुर्यादिगुणसमुदायाः यासु तथाभूताः गिरः काव्यरूपा वाण्यः, आकल्पं कल्पपर्यन्तं प्रलयकालं यावदित्यर्थः 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि' इत्यमरः, जगन्ति भुवनानि (कर्म) रमयन्ति रञ्जयन्ति, ते कवयः काव्यकर्त्तारः 'कविः काव्यकरे सूरौ कविर्वाल्मीकिशुक्रयोः' इति विश्वः, कथमिव न वन्द्या न पूजनीयाः ? अपि तु वन्द्या एवेत्यर्थः । आर्याच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्र निर्मातृत्वेन आधारभूतानां कवीनामसत्त्वेऽपि आधेयभूतानां तद्गिरामवस्थितिवर्णनात् प्रथमो विशेषालङ्कारः ।

## रुचिरा

विशेषं लक्षयति—१५९ **यत्** । **आधारम्** । **अनाधारमीषत्** (अप्रसिद्धः) आधारो यस्य तत्तथोक्तम् (प्रतिपाद्येत तदैकः) । **च** । **एकम्** । **अनेकगो**चरमनेकेऽनेकविधा गोचरा विषया एककाले यस्य तथोक्तम् (एकं वस्तु एकस्मिन्समयेऽनेकगोचरं प्रतिपाद्येत तदा द्वितीयः) । **किञ्चिदनिर्दिष्टम्** । **कार्य्यम्** । **प्रकुर्वतः** साधयतो जनस्य । **दैवाद्**भाविमहिम्ना । **इतरस्य** तस्मादिभन्नस्य । **अशक्यस्य** दुःसाध्यस्य । **वा** यद्वा । **कार्य्यस्य** । **करणं** सम्पादनम् । (प्रतिपाद्येत तदा तृतीयः । **गुणे** । **वा** । **दोषे** । **अपि** । **अन्यथा** दोषरूपेण गुणरूपेण चेत्यर्थः । **बोधनम्** । **प्रतिपाद्येत** तदा चतुर्थःपञ्चमश्च) । **ततः** । **त्रिविधः** (**पञ्चधा** पञ्चविधः ।) **विशेषो** विशेषणमाधेयादेरनाधारत्वप्रतिपादनादिनेति तथोक्तः, तन्नामाऽलङ्कार इत्यर्थः । अत्रेदम्बोध्यम्—यद्यपि प्रायो विशेषालङ्कारस्त्रिविध एवाम्नातः, तथाऽपि अनुज्ञालेशयोरत्रान्तर्भावं सिसाधयिषव आमनन्ति, तथा हि—त्रिविध इत्युपलक्षणम्, तेनानुज्ञालेशयोग्रहणम् । ननु 'दोषस्याभ्यर्थनाऽनुज्ञा तत्रैव गुणदर्शनात् ।' 'लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् ।' इत्युक्तदिशा गुणदोषयोरन्यथा बोधनस्य लेशमात्रविषयतयाऽनुज्ञाया अवशिष्टत्वेन कथमन्तर्भावः ? इति चेत् ! दोषेऽपि गुणमवधाय तदभ्यर्थनरूपाया अनुज्ञाया दोषेऽपि गुणत्वकल्पनरूपाल्लेशादनातिरिक्तत्वेन न काऽपि अनुपपत्तिः । यद्यपि-एनयोरप्रस्तुतप्रशंसाकाव्यलिङ्गदृटान्तादिष्वपि यथातथमन्तर्भावः कर्तुं शक्यः, तथाऽपि विशेषविशेषत्वाङ्गीकार ऋजुः पन्थाः । एते नैनयोः पार्थक्यम्, अनुज्ञायाश्चलेशातिरिक्तत्वं च परैरङ्गीक्रियमाणमपास्तम् । एवं—'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ।' इत्युक्तामुद्राया अलङ्कारत्वमेव न, प्रकृतोपस्कारकत्वाभावात्, अमुष्या नाटकोपकरणमात्रत्वाच्च । 'क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः । चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते ॥' इति लक्षितस्य क्रमिकस्य तु रूपकेणैव गतार्थत्वम्, तद्भिन्नविच्छित्त्यनुपलब्धेः । यच्च—'दोषविशेषानुबन्धाद्गुणत्वेन प्रसिद्धस्यापि द्वेषस्तिरस्कारः ।' इति तिरस्कारस्यालङ्कारान्तरत्वं समर्थितं गङ्गाधरकारैः, तन्न; तस्याप्येनयोरेवान्तर्भावात् । इति दिक् ॥ १२६ ॥ १२७ ॥

उदाहर्त्तुमाह—**क्रमेण** । **यथा**—'**दिवं स्वर्गम्** । **उपयातानां** प्राप्तानाम् । मृतानामिति भावः । **अपि** । **येषां** 'कवीना'मिति शेषः । **अनल्पगुणा** अनल्पा बहवो गुणा यास्स्विति तथोक्ताः । **गिरो** वचांसि । **आकल्पम्** ।

**जगन्ति**। **रमयन्ति** रञ्जयन्ति। **ते**। **कवयः**। **कथमिव** कथम्। 'कथमिहे'ति पाठान्तरम्, तत्र-इहास्मिँल्लोक इत्यर्थः। **न**। **वन्द्याः**। अत्र कविरूपमाधारमन्तरैव गिरामुपस्थितिर्वर्णितेति बोध्यम्। आधाराधेयभावश्चायं कविप्रकल्पितः। 'शब्दगुणमाकाश'मिति गिरमाधारस्तु आकाशमेव वास्तविकम्। आर्याछन्दः, तल्लक्षणं चोक्तं प्राक्॥ २४६॥'यथा वा—'अये राजन्नाकर्णय कुतुकमाकर्णनयन! त्वदधारा कीर्त्तिर्वसति किल मौलौ दशदिशाम्। त्वदेकालम्बोऽयं गुणगणकदम्बो गुणनिधे! मुखेषु प्रौढानां विलसति कवीनामविरतम्॥' युक्तं तु याते दिवमासफेन्दौ तदाश्रितानां यदभूद्विनाशः। इदं तु चित्रं भुवनावकाशे निराश्रया खेलति तस्य कीर्त्तिः॥' इति वा।

**'कानने सरिदुद्देशे गिरीणामपि कंदरे।**
**पश्यन्त्यन्तकसंकाशं त्वामेकं रिपवः पुरः ॥'**
**'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।**

---

## विवृतिः

**कानन इति**। अत्र भावनातिशयेनैकेनैव स्वभावेन काननादावनेकत्र युष्मत्पदार्थस्य युगपस्थितिः। पर्यायालंकारलक्षणे क्रमादित्यस्योपादानादत्र परिशेषाद् युगपदित्यस्य लाभः।

## विज्ञप्रिया

**कानन** इति। काननादौ पलायिता रिपवस्त्वामेकं तत्रतत्रैवान्तकसंकाशं पश्यन्तीत्यर्थः।

अत्र दर्शनस्य न क्रमविवक्षा।

## कुसुमप्रतिमा

एकस्यानेकगोचरत्वे उदाहरणमाह कानन इति। कस्यचित् राज्ञः प्रशंसेयम्। रिपवो वैरिणः, कानने वने, मरिदुद्देशे नदीतटे, गिरीणां कन्दरेऽपि पर्वतगुहायाञ्च पुरः अग्रतः, अन्तकसङ्काशं यमतुल्यम्, एकमेव त्वाम्, पश्यन्ति। भवतः शत्रव ईदृशा भयविह्वलाः सञ्जाताः, यथा तत्र तत्र पलायिताः सन्तोऽपि सभयभावनया स्वम्वान्तिक एव युगपदेव च यमतुल्यं भवन्तं पश्यन्तीति भावः।

अत्र एकस्य राज्ञो युगपत् काननाद्यनेकस्थानवर्त्तित्वाद्विशेषालङ्कारः।

## विमला

कानने इति।—राजस्तुतिरियम्। रिपवः,—शत्रवः, एकं त्वां कानने—वने, सरितां—नदीनाम्, उद्देशे—अवकाशे, गिरीणां—पर्वतानां, कन्दरे—गुहायामपि, पुरः,—अग्रतः, अन्तकसङ्काशं—यमसदृशं, पश्यन्ति। अत्र भावनातिशयेनैकेनैव स्वभावेन कानन-नदी-पर्वतकन्दरादिषु अनेकेषु युष्मत्पदार्थस्य एकस्य राज्ञः युगपत् सत्त्वा-पलब्धेः द्वितीयो विशेषः। यथा वा—"प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा पर्य्यङ्के सा दिशि दिशि च सा तद्वियोगातुरस्य। हंहो चेतः! प्रकृतिरपरा नास्ति ते काऽपि सा सा सा सा सा सा जगति सकले कोऽयमद्वैत-वादः?" इति।

## लक्ष्मी

एकस्यानेकविषयत्वे उदाहरति—**कानन** इति कस्यचिद्राज्ञः स्तुतिरियम्। रिपवः शत्रवः कानने वने, सरितां नदीनाम् उद्देश उत्कृष्टो देशस्तत्र, गिरीणां पर्वतानां कन्दरेऽपि गुहाप्रदेशेऽपि, पुरः अग्रतः. अन्तकसङ्काशं यमराजसदृशम्, एकमेव त्वां पश्यन्ति अवलोकयन्ति। भवद्रिपव एवंविधा भयव्याकुला सञ्जाताः, यथा तत्तत्रदेशं समाश्रिता अपि साशङ्कं निजसन्निधावेव एकस्मिन् काले एव च यमराजसदृशं भवन्तमवलोकयन्तीत्याशयः।

अत्र एकस्य राज्ञःएकस्मिन् काल एव काननाद्यनेकस्थानस्थितत्वात् द्वितीयो विशेषालङ्कारः ।

## रुचिरा

द्वितीयमुदाहरति—'**रिपवः** । **कानने** वने । **सरिदुद्देशे** सरितां नदीनामुद्देश उत्कृष्टो देशस्तत्र । **गिरीणां** पर्वतानाम् । **कन्दरे** गुहाप्रदेशे । **अपि** । **त्वाम्** । **एकम्** । **अन्तकसंकाशं** यमराजसदृशम् । **पुरः** । **पश्यन्ति** । अत्र राज्ञः काननदयोऽनेकविधा विषया निर्दिष्टाः ॥ २४७ ॥'

**करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥'**

---

## विवृतिः

**गृहिणीति** । इन्दुमत्या मरणे तत्पत्युरजस्यायं विलापः । गृहिणी हृतेत्यन्वयः । एवमन्यत्रापि । त्वमेव गृहिण्यादि सर्वमिति भावः । इष्टोपदेशकत्वात्सचिवः मिथो रहसि समीहितसाधकत्वात्सखी । ललिते कलाविधौ सुरते । नन्विन्दुमतीहरणमेव सचिवादिहरणं तच्चैकमेव कार्यं कथमत्र कार्यान्तरोत्पत्तिरिति चेत्, सचिवादिहरणे तात्पर्यात् ॥

## विज्ञप्रिया

**गृहिणीति** । मृतामिन्दुमतीं शोचतोऽजस्योक्तिरियम् । त्वां हरता करुणाविमुखेन मृत्युना मम किं न हृतं वद । किं किं हृतमित्यत्राह—**गृहिणी**त्यादि । ललिते कामकलाविधौ मिथो रहसि प्रियशिष्येत्यन्वयः । अत्रेन्दुमतीहर्त्तुर्मृत्योर्गृहिण्यादिहरणरूपस्य कार्यस्य दैवात्करणं वर्णितम् ।

## कुसुमप्रतिमा

तृतीयप्रकारमुदाहरति गृहिणीति । रघुवंशाष्टमसर्गस्थमिदं पद्यम् । हे इन्दुमति ! त्वं गृहिणी गृहस्य कर्त्री, त्वमेव सचिवो मन्त्री, त्वमेव मिथो रहसि सखी नर्म्मसहचरी, तथा त्वमेव ललिते कोमले कला विधौ नृत्यगीतादि-कलानुष्ठाने प्रियशिष्या; अतस्त्वमेतत्समष्टिरूपां भवतीं हरता, अतएव च करुणाविमुखेन दयाविहीनेन मृत्युना यमेन, मे मम किं वस्तु न हृतम्, इति त्वं वद, अपि तु सर्वमेव हृतमिति भावः ।

अत्र इन्दुमतीहरणात्मकमेकं कार्य्यं कुर्वतो मृत्योरशक्यरूपस्य गृहिण्यादिहरणरूपस्य कार्य्यस्य दैवतः करणात् विशेषालङ्कारः । तथाहि मृत्युर्नियतिबलादिन्दुमतीमात्रमेव हर्त्तुं शक्नोति न पुनर्गृहिण्यादिक मिति तेषां हरणं तस्याशक्यमेव असर्वशक्तिमत्त्वात्; किन्तु दैवादेव तस्य तेषां हरणरूपं कार्य्यं जातमिति बोध्यम् । तृतीयप्रकारे शक्यस्योदाहरणं यथा—

"स्फुरदद्भुतरूपमुत्प्रताप ज्वलनं त्वां सृजतानवद्यविद्यम् ।

विधिना ससृजे भयो मनोभूर्भूवि सत्यं सविता वृहस्पतिश्च ॥"

अत्र युष्मच्छब्दवाच्यराजपुत्रसृष्टिरूपं कार्य्यं कुर्वतो विधेः सर्वशक्तिमत्त्वादिच्छामात्रेण मनोभूप्रभृतिसृष्टिकार्य्यमपि शक्यमेवेति स्वेच्छाप्रयुक्तदैवासादृशशक्यकारणं जातमिति विशेषालङ्कारः ।

## विमला

गृहिणीति ।—इन्दुमत्या मरणे तत्पतेः अजस्य विलापोऽयम् । हे प्रिये ! इत्यध्याहार्य्यम्; त्वां हरता करुणाविमुखेन—निर्दयेन, मृत्युना मे किं न हृतम्? वद, तथा हि, त्वं मे गृहिणौति गृहिणी हृता, त्वं मे सचिवः,—इष्टोपदेशकत्वात् मन्त्रीति मन्त्री हृतः, त्वं मे मिथः,—रहसि, सखी—समीहितसाधकत्वात् विजनसहचरीति सखी हृता, त्व मे ललिते—मनोहरे, कलाविधौ—नृत्यगीताद्यनुष्ठाने सुरते वा, प्रियशिष्या इति साऽपि हृता,

तस्मात् त्वां हरता गृहिण्यादिकं सर्वमेव मे हृतमिति भावः। अत्र इन्दुमतीहरणरूपमेकं कार्य्यं प्रकुर्वतः विधेः गृहिण्यादिकस्य अपरस्य कार्य्यस्य दैवात् करणम्। नन्विन्दुमतीहरणमेव सचिवादिहरणं, तच्चैकमेव कार्य्यं, कथमत्र कार्य्यान्तरोत्पत्तिः ? इति चेत्, सचिवादिहरणे तात्पर्य्यात् इति ज्ञेयम्। सुन्दरी वृत्तम्—"अयुजोर्यदि सौ जगौ युजोः सभरा ल्गो यदि सुन्दरी तदा" इति लक्षणात्। इदं रघुवंशस्य पद्यम्।

## लक्ष्मी

अशक्यस्य कार्यस्य दैवात्करणं यत्र तदुदाहरति—**गृहिणी**ति। रघुवंशस्याष्टमे सर्गे इन्दुमतीमरणे तामनुचिन्तयतो राज्ञोऽजस्य विलापोऽयम्। हे इन्दुमुखि ! त्वं मे मम गृहिणी पत्नी, त्वमेव सचिवः (हितोपदेशात्) मन्त्री, त्वमेव मिथो रहसि 'मिथोऽन्योऽन्यं रहस्यपि' इत्यमरः, सखी नर्मसहचरी, तथा त्वमेव ललिते मृदुले कलाविधौ नृत्यगीतादिकलानुष्ठाने प्रियशिष्या प्रेमास्पदतया शिक्षणीया अतस्त्वामेतत्समुदितरूपां भवतीं हरता अपहरता, अतएव च करुणाविमुखेन निर्दयेन मृत्युना यमेन 'मृत्युर्ना मरणे यमे' इति मेदिनी, मे मम किं न हृतम्, त्वं वद, अपि तु एकेन प्रयत्नेन सर्वमेव हृतमित्याशयः। अपरवक्त्र छन्दः तल्लक्षणन्तु—'अयुजि ननरला गुरुः समञ्जमपरवक्त्रमिदं ततो जरौ' इति।

अत्र इन्दुमतीहरणरूपकमेकं कार्यं कुर्वता यमेन तेनैवैकदैव गृहिण्यादिकं सर्वं दैवतः कारणात् हृतमिति दुःसाध्यस्य कार्यान्तरस्य सम्पादनमिति तृतीयो विषमालङ्कारः। अस्मिन्नेवभेदे शक्योदाहरणन्तु काव्यप्रकाशादा-वुन्नेयम्।

## रुचिरा

तृतीयमुदाहरति—'हे' प्रिये (इन्दुमति ! 'त्वं मे' इत्यध्याहार्य्यम्। **गृहिणी** गृहेश्वरी। सचिवः (हितोप-देशात्) मन्त्री। **मिथो** रहसि। 'मिथोऽन्योऽन्यं रहस्यपि।' इत्यमरः। **सखी**। **ललिते** सुन्दरे। **कलाविधौ** कलानां चातुर्य्यविशेषाणां कामकलानां वा विधिर्विधाने तत्र। **प्रियशिष्या** प्रेमास्पदतया शिक्षणीया। **एवंविधाम्त्वाम्**। **हरता**ऽपहरता। **करुणाविमुखेन** निर्दयेन। मृत्युना कालाधिष्ठात्रा। 'मृत्युर्ना मरणे यमे।' इति मेदिनी। **बत** कष्टम्। **किम्**। **मे** मम। **न**। **हृतम्**, अपि तु सर्वमेव **हृतम्**। अजविलापोऽयम्। अत्रेन्दुमतीहरणरूपमेकं कुर्वता यमेन तेनैवैकदैव गृहिण्यादिकं सर्वं हृतमित्यशक्यस्यास्य कार्य्यान्तरस्य करणम्। अपरवक्त्रं छन्दः, तल्लक्षणं च यथोक्तम्, 'अपरवक्त्रं नौ र्लौ ग्नजौ जौ।' इति॥ २४८॥' यथा वा—'लोभाद्वराटिकानां विक्रेतुं तक्रमानिशम-टन्त्या। लब्धो गोपकिशोर्य्या मधघ्ये रथ्यं महेन्द्रनीलमणिः॥' इति, अत्र हि तक्रविक्रयणकार्य्यकरणेन महेन्द्रनी-लमण्युपार्जनस्य सम्पादनम्।

(चतुर्थमुदाहरति—'हे **हरे** हनुमान ! **यत्**। **त्वया**। **उपकृतम्**। **तत्**-**मयि** रामे। **एव**। **जीर्णताम्**। **यातु**। यत्-**प्रत्युपकारार्थी** 'एतेन ममैतदुपकृतमिति मयाऽप्येतस्य यदि विपत्स्यात्तदोपकारः कर्त्तव्य'इत्यभिलाषी। **नरः**। उपकर्त्तु—**विपत्तिम्**। **अभिकाङ्क्षति**। रामचन्द्रस्य हनुमन्तं प्रत्युक्तिरियम्। अत्र प्रत्युपकारस्य गुणस्य दोषत्वेन बोधनम॥ २४९॥'

पञ्चममुदाहरति—'**हे शुक! अखिलेषु** समस्तेषु। **विहङ्गेषु** पक्षिषु। **स्वच्छन्दचारिषु**। सत्यर्थेयं सप्तमी। **हन्त** कष्टम्। **ते तव। पञ्जरबन्धः** पञ्जरे बन्धः। **मधुराणांम्**। गिरां वाचाम्। **फलम्**। अत्र मधुराणां वाचां दोषरूपेण बोधनम्॥ २५०॥'

प्रकारान्तरेणोदाहरति—**यथा। वा**—नरत्वं मनुष्यत्वम्। **एव। साधीयो वरम्**। सुरसम्पदं दैवतानां विभूतिम्। **धिक्। अस्तु। नरा** मनुष्याः। **मुक्तिम्। प्रपद्यन्ते। सुराः। नीच्चैरधः। च्युतिं** पातम्। **बलात्** पारतन्त्र्येण। 'प्रपद्यन्ते' इति पूर्वतोऽन्वेति। अत्र देवसम्पदि दोषद्भावनम्॥ २५१॥')

**व्याघातः स तु केनापि वस्तु येन यथा कृतम् ॥ ७४ ॥**

**तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा ।**

यथा—

**'दृशा दग्धं मनसिजं—' इत्यादि (४७६ पृ०) ।**

---

## विवृतिः

व्याघातलंकारमाह—**व्याघात इति**। येनोपायेन यथा यत्प्रकारं कृतं तदन्यथा तद्विरुद्धप्रकारमित्यर्थः ॥ **दृशा दग्धमिति**। हरस्य दृशेत्यर्थः। **दृशैवेति**। कटाक्षरूपया दृशेत्यर्थः। इत्थं क्रियया जयमुक्त्वा रूपेणापि जयमाह—**विरूपाक्षस्येति**। विरूपमसुन्दरं त्रित्वाल्लोचनानां वामं सुन्दरमतो जय इत्यर्थः। अत्र दृगुपायेन हरेण साधितस्य दाहस्य दृगुपायेनैव वामलोचनादिभिरन्यथाकरणम्।

## विवृतिपूर्ति

**व्याघात इति**। यं कंचिदुपायविशेषमवलम्ब्य केनचिद्यन्निष्पादितं तत्तोऽन्येन केनचित्तत्प्रतिद्वन्द्विना तनैवोपायविशेषेण यदन्यथा क्रियते स निष्पादितवस्तुव्याहतिहेतुत्वाद व्याघातः ॥

## विज्ञप्रिया

व्याघातलङ्कारमाह—**व्याघात** इति। केनापि कर्त्रा यद् वस्तु येनोपायेन यथाकृतं तेनैवोपायेनाऽन्यश्चेत्तदन्यथा कुरुते तदा तदन्यथाकरणं स व्याघात इत्यर्थः।

**"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।**
**विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥"**

इत्युदाहरणम्। दृशा हरस्य याः कटाक्षरूपया दृशा जीवयन्तीत्यर्थः। नारीकटाक्षेण कामोद्दीपनात्। न केवलं क्रियया जयः, किन्तु रूपेणापीत्याह—**विरूपाक्षस्येति**। जेतव्यस्याऽक्षिवैरूप्यम्। जेत्रीणामक्षिषु मनोज्ञत्वरूपं वामत्वमित्येव तत्रापि जय इति भावः। अत्र येन दृगुपायेन दाहास्तेनैव दृगुपायेन जीवनरूपं दाहान्यथाकरणं स्त्रीभिः।

## कुसुमप्रतिमा

तृतीयप्रकारविशेषालङ्कारे अन्यकरणप्रस्तावोत्थानादन्यथाकरणघटितं व्याघातलङ्कारं निर्वक्ति व्याघात इति। केनापि जनेन कर्त्ता, येन उपायेन द्वारा, यत् वस्तु यथा कृतं यत्प्रकारं विहितम्; अन्यो जनः चेदयदि तेनैव उपायेन तत् वस्तु अन्यथा अन्यप्रकारं कुरुते; तदा तु स व्याघातो नाम अलङ्कार उच्यते इत्यनुषङ्गः।

परकरणेन पूर्व करणस्य व्याघातादस्व व्याघात इति संज्ञा।

दृशेति । पूर्वमेव विवृतमेतत् । अत्र महादेवेन चक्षुषा दग्धः कन्दर्पो वामलोचनाभिरुक्षषैव पुनरुज्जीवित इति व्याघातालङ्कारः ।

## विमला

**व्याघातमाह, व्याघात इति ।**—येन केनापि यथा—यत्प्रकारं, कृतं वस्तु अन्यः,—अन्यो जनः इत्यर्थः, तेनैव उपायेन चेत्—यदि, तदन्यथा—तस्मादन्यप्रकारं, कुरुते, तदा सः व्याघातः,—निष्पादितवस्तुव्याहतिहेतुत्वात् व्याघातनामालङ्कार इत्यर्थः ।

**दृशेति ।—६६६ पृष्ठे व्याख्यातं प्राक् । अत्र हरेण दृगुपायेन भस्मीकृतः मदनः नारीभिः तैनेव नेत्ररूपोपायेन सजीवः कृतः । अत्र केचिदाहुः,—"व्यतिरेक एवायमलङ्कारः, उक्तोदाहरणे जयिनीरित्यनेन तस्यैव प्रकाशनात् । न च व्याघातोऽप्यत्र व्यतिरेकोत्थापकत्वेन स्थित इति वाच्यम्; तथाऽप्यलङ्कारान्तरत्वसिद्धेः विविक्तविषयाभावादिति दिक्** । तदसत्, सादृश्यविवक्षायामेव व्यतिरेकः इत्यसकृत् व्यवस्थापितत्वात्, अत्र च धर्मान्तरेणापि शिवनायिकयोः सादृश्यानभिमतेः स्पष्टत्वात्" इति कौस्तुभाशयः ।

## लक्ष्मी

विशेषालङ्कारस्य तृतीयभेदे अन्यकरणस्योत्थानात् प्रकृते अन्यथाकरणयुक्तं विशेषालङ्कारं लक्षयति—**व्याघातेति** । केनापि केनचित् कर्त्रा येन उपायेन द्वारा, यत् वस्तु यथाकृतं यत्प्रकारं साधितम्, अन्यः कर्ता चेद् यदि तेनैव उपायेन तज्जातीयेनैवोपायेन, तत् वस्तु अन्यथा प्रकारान्तरेण कुरुते साध्यते; तदा हि स परकरणेन पूर्वकरणस्य व्याघातात् व्याघातो नाम अलङ्कार 'उच्यते' इति पूर्वतोऽनुवर्त्तते ।

उदाहरति—दृशेति । व्याख्यातपूर्वमिदम् ।

अत्र महेश्वरेण दृशा दाहितरस्य कामस्य वामलोचनाभिश्च दृशैव तं पुनरुज्जीवित इति व्याघातः ।

## रुचिरा

व्याघातं लक्षयति—१६० **येन** । **केनापि** केनचिदुपायेन । **यथा** येन प्रकारेण । **कृतमुत्पादितम्** । **वस्तु** । 'यदि'ति शेषः । **तेन** । **एव** न त्वन्येन । **उपायेन** । **चेत्** । **अन्यस्तद्भिन्नो** जनः । **तत्** 'कार्य्य'मिति शेषः । **अन्यथा** प्रकारान्तरेण । **कुरुते** । तदा-**सः** ।**तु** । **व्याघातः** । यः कश्चिद् यं कञ्चिदुपायामालम्ब्य येन केनापि प्रकारेण विशेषितं यत् किञ्चित् कृतम्, तदन्यः तमेवोपायमालम्ब्य तद्भिन्नविशेषणविशेषितं तत् कर्म कुरुते तदा तस्यान्यथाभूतत्वेन व्याहन्यमानत्वात् तद्वर्णनोपस्कृतोऽयं व्याघातनामाऽलङ्कार इति भावः । व्याहननं व्याघात इति चास्यान्वर्थेयं **सञ्ज्ञा** ॥ १२८ ॥

उदाहरति—**यथा—'दृशा...'** इति । व्याख्यातपूर्वं पद्यम् । अत्र महेश्वरेण दृशा दाहितस्य स्मरस्य **कान्ताभिदृशैव तस्य जीवनम्** ॥

**सौकर्येण च कार्यस्य विरुद्धं क्रियते यदि ॥ ७५ ॥**

व्याघात इत्येव ।

**'इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः**

**समागन्ता कान्ते ! मृदुरसि न चायाससहना ।**

**मृदुत्वं मे हेतुः सुभग ! भवता गन्तुमधिकं**

**न मृद्वी सोढा यद्विरहकृतमायासमसमम् ॥'**

अत्र नायकेन नायिकाया मृदुत्वं सहगमनाभावहेतुत्वेनोक्तम् । नायिकया च प्रत्युत सहगमने ततोऽपि सौकर्येण हेतुतयोपन्यस्तम् ।

---

## विवृतिः

प्रकारान्तरेणापि व्याघातमाह—**सौकर्येणेति** । क्रियते कथ्यते ।

केनापि येनोपायेन तत्कार्यमुच्यते, तदन्येन तेनैवोपायेन सौकर्येण तद्विरुद्धं कार्यं यद्युच्यते तदा व्याघात इति तात्पर्यार्थः ॥ **इहैवेति** । त्वमिहैव तिष्ठ, न तु मया सह गच्छ, अधिकं मृदुत्वमित्यन्वयः ।

## विज्ञप्रिया

अन्यविधं व्याघातालङ्कारमाह—**सौकर्येण चेति** । चकारो व्याघातान्तरसमुच्चये । अन्योक्तकार्यस्य विरुद्धं कार्यमन्येन यदि तदुक्तकारणस्य सौकर्य्येण विशिष्टं क्रियते प्रतिपाद्यते इत्यर्थः । चकारेण व्याघातमनुवर्त्तयति-**व्याघात इत्येवेति** ।

**इहैवेति** । विदेशं जिगमिषुणा पत्या सह जिगमिषुं पत्नीं प्रति नायकस्योक्तिः पूर्वार्द्धम् । त्वमिहैव तिष्ठ न मया सह गच्छ । अहं कतिपयैरहोभिर्द्रुतं समागन्ता समागमिष्यामि, भविष्यदर्थे तृन् । यतो मृदुरसि । नच गमनायासहनाऽसीत्यर्थः । पत्न्या उक्तिः परार्द्धं—हे सुभग ! भवता सह गन्तुं सहगमने एव मम मृदुत्वं हेतुः । यद् यस्मान् मृद्वी असमं विरहायासं न सोढा न सहिष्यते अत्रापि तृन् । अत्र नायकोक्तकार्यस्य नायिकाया विरुद्धघप्रतिपादनं ग्राहयति—**अत्रेति** । **सहागमनहेतुत्वेनेति** । स्थितिहेतुः सहागमनहेतुत्वेनेत्यर्थः । **सौकर्येणेति** । सहगमनमेव स्थितिहेतुत्वेनोक्तस्य मृदुत्वस्य सुकरं, स्थितिस्तु मृदुत्वस्य दुष्करेत्यर्थः । स्थितौ मृदुत्वेन विरहासहत्वजननात् ।

## लोचन

इह तु किञ्चिन्निष्पादयितुं सम्भाव्यमानस्य कारणस्य तद्रविरुद्धनिष्पादकत्वेन समर्थनम् ।

इहैव त्वमित्युदाहरणे नहि मृदुत्वस्य नायकसहगमनस्य कार्यत्वं प्रतीयते किन्तु सहगमनस्य निर्वाहः। विषमालङ्कारे तु 'अयं रत्नाकर' इत्यादौ धनलाभरूपकार्यानुत्पत्तिः, अनर्थस्य चोत्पत्तिरिति भावः। एवं विरोधमूलालङ्कारान् निर्णीय श्रृङ्खलाबन्धेन विचित्रता अलङ्कारा लक्ष्यन्ते।

## कुसुमप्रतिमा

व्याघातमेवान्वप्रकारेण लक्षयति सौकर्य्याणेति। कार्य्यस्य प्रतिवक्तृसम्मतविषयस्य, सौकर्य्येण वक्तृसम्मतविषयापेक्षया प्रतिवक्तृपक्षे सुकरत्वेन हेतुना, यदि विरुद्धं वक्तृसम्मतिविपरीतं क्रियते व्यक्तं क्रियते प्रतिवक्ता अभिधीयत इत्यर्थः, तदापि व्याघात उच्यते इत्यन्वयः। एकमेव हेतुमवलम्ब्य निजसौकर्येण हेतुना प्रतिवक्ता यदि वक्तृमाताद्विपरीतमतं प्रकाशयति, तदा सोऽपि व्याघात इति सरलार्थः। एतल्लक्षणे तु वक्मतस्य व्याघाताद्व्याघात इति संज्ञा।

कारिकायामाकाङ्क्षाया अपूरणादध्याहारेण तत्पूरणं दर्शयति व्याघात इत्येवेति।

इहैविते। विदेशं यियासीर्नायकस्य तेन सार्द्धं गन्तुमिच्छीर्नायिकायाश्च उक्तिप्रत्यक्तिरूपमिदं पद्यम्। हे कान्ते! त्वम् इहैव अस्मिन् भवन एव तिष्ठ, अहं कतिपयैरेव अहोभिर्दि वसैः समागन्ता पुनरागमिष्यामि। अथ त्वया सार्द्धं गमने का हानिरित्याह—त्वं मृदुः सुकुमाराङ्गी असि, अतएव आयाससहना विदेशगमनकष्टसहिष्णुर्न न नहीत्यर्थः। इति नायकेनोक्ते नायिका आह। हे सुभग! एत्रीप्रिय! मे मम मृदुत्वं भवता सह गन्तुमेव अधिकं हेतुर्भवति। अत्राध्याहर्त्तव्यभवतीतिक्रियाविशेषणत्वादधिकमित्यस्य क्लीवत्वम्, यदयस्मात् मृद्वी सुकुमाराङ्गी अहं विरहकृतं भवद्विच्छेदविहितम् असमं अनुपमं निरतिशयमित्यर्थः, आयासं कष्टं न सोढ़ा शक्ष्यामि।

उदाहृते निरुक्तलक्षणं सङ्गमयिःमाह अत्रेति। प्रत्युतवैपरीत्येन। ततोऽपि सहगमनाभावादपि गृहे अवस्थानादपि, सौकर्य्येण विरहकष्टसहनापेक्षया सहगमनकष्टसहनस्य सुकरत्वेनेत्यर्थः हेतूना, सहगमने हेतुतया सहगमनं प्रति हेतुत्वेन उपन्यस्तमुक्तं तन्मृदत्वमित्यन्वयः। अतएवात्र द्वितीय प्रकारो व्याघात इति भावः।

## विमला

प्रकारान्तरेण व्याघातमाह, सौकर्य्येणेति।—सौकर्य्येण—सुकरत्वेन, यदि कार्य्यस्य विरुद्धं क्रियते—कथ्यते इत्याशयः, तदाऽपि व्याघातः स्यादिति शेषः, केनापि येनोपायेन यत्कार्य्यमुच्यते, तदन्येन तेनैवोपायेन सौकर्य्येण तद्विरुद्धं कार्य्यं यद्युच्यते तदा व्याघातः इति तात्पर्य्यार्थः।

व्याघातमुदाहरति, इहेति—प्रवासगमनकाले दम्पत्योरुक्तिप्रत्युक्तौ। हे कान्ते! त्वम इहैव—अत्र गृहे एव, तिष्ठ, अहं कतिपयैरेव—स्वल्पैरेवेति यावत्, अहोभिः समागन्ता—आगमिष्यामीत्यर्थः, (त्वं) मृदुः,—कोमलाङ्गी, अति, आयामसहना—क्लेशक्षमा, न च, येन मया सह गमिष्यसीति भावः। (इति उक्तिः) हे सुभग! मे—मम, मृदुत्वं—कोमलत्वं भवता सह गन्तुम् अधिकं हेतुः, यद्वा—अधिकं मृदुत्वं भवता सह गन्तुं हेतुः यत्—यस्मात्, मृद्वी अहं विरहकृतम् अममं—निरूपमम्, आयासं न सोढ़ा—न सहिष्ये। शिखरिणी वृत्तम्। यथा वा—"अम्भोधीनां तमालप्रभवकिमलयश्यामवेलावनानाम् आ पारेभ्यश्चतुर्णा। चटुलतिभिकुलक्षोभितान्तर्जलानाम्। मालेवाज्ञा मपुष्पा नतनृपतिशतैरुह्यते या शिरोभिः मा मययेव स्खलन्तौ कथयति विनयालङ्कतिस्ते प्रभुत्वम्॥" अत्र चाणक्ये चन्द्रगुप्तेनासक्ति व्यञ्जकतया स्वाज्ञाभङ्गो दोषत्वेन प्रागुक्तः, स एवात्र चाणक्येन विनयव्यञ्जकतया गुणत्वेनोक्तः इति ज्ञेयम्।

## लक्ष्मी

उक्तालङ्कारमेव प्रकारान्तरेण निरूपयति—**सौकर्येणेति**। कार्यस्य प्रतिवक्त्रयभिमतवस्तुनः, सौकर्येण वक्त्र्यभिमतवस्त्वपेक्षया सुकरतया अनायासेनेति यावत्, कारणेन, यदि विरुद्धं वक्त्र्यभिमतं प्रतिकूलं क्रियते स्फुटं क्रियते लक्षणया क्रियमाणं प्रतिवक्त्रा वर्ण्यते इत्यर्थः, तदापि व्याघात 'उच्यत' इति सम्बन्धः। एकमेव कारणमाश्रित्य स्वसौकर्येण कारणेन प्रतिवक्ता यदि वक्तृमताद्विरुद्धं प्रकटयति तदा सोऽपि व्याघात इति निष्कर्षः।

कारिकायां जिज्ञासानिवृत्तये अध्याहर्त्तव्यपदं निर्दिशति—**व्याघात** इत्येवेति।

उदाहरति—**इहैवेति**। विदेशं जिगमिषुणा पत्या सह गमनेच्छां प्रकटयन्तीं पत्नीं प्रति पूर्वार्द्धेन नायकस्य उत्तरार्द्धेन पत्न्याश्चोक्तिप्रत्युक्तिरूपं पद्यमिदम्। हे कान्ते प्रिये ! त्वम् इहैव अस्मिन्नेव भवने तिष्ठ न मया सह गच्छ, अहं कतिपयैरेव अहोभिर्वासरैः समागन्ता समागमिष्यामि भविष्यदर्थे तृन् शीघ्रं प्रत्यावृत्य त्वया सङ्गमिष्यामीत्यभिप्रायः। ननु भवता सह गमने का हानिरित्यत आह—त्वं मृदुः कोमलाङ्गी असि, अत एव आयाससहना विदेशगमनक्लेशसहनयोग्या न च नहीत्यर्थः, इति प्रवत्स्यता पतिनोक्तौ नायिका आह—हे सुभग भार्याप्रिय ! मे मम मृदुत्वं भवता त्वया सह गन्तुमेव अधिकम् अतिशयितं यथास्यात्तथा हेतुः कारणं भवति, अत्राधिकमित्यस्य नपुंसकत्वमध्याहर्तव्यं भवतिक्रियाविशेषणत्वादेवेत्यवधेयम्, यद् यस्मात् मृद्वी कोमलाङ्गी अहं विरहकृतं भवद्विश्लेषजनितम् असमं विषमं भयङ्करमिति यावत्, आयासं कष्टं न सोढा न सोढुं शक्ता। **शिखरिणी**च्छन्दस्तल्लक्षणञ्चोक्तं प्राक्।

लक्ष्यं **संयोजयितुं** निर्दिशति—अत्रेति। प्रत्युत वैपरीत्येन। ततोऽपि सहगमनाभावादपि भवने स्थितेरपि सौकर्येण वियोगक्लेशसहनापेक्षया सह प्रस्थानक्लेशसहनस्य सुलभत्वेन कारणेन, हेतुतया सह प्रस्थानं प्रति कारणत्वेन उपन्यस्तम् उपनिबद्धमभिहितं तन्मृदुत्वमिति सम्बन्धः। एवञ्च स्फुट इवान्यविधो व्याघातालङ्कार इत्याशयः।

## रुचिरा

प्रकारान्तरेण लक्षयति—१६१ **सौकर्य्येण** सुकरतया आयासेनेति यावत्। **यदि**। **कार्य्यस्य**। विरुद्धम्। **क्रियते** लक्षणया क्रियमाणं वर्ण्यत इति भावः। **च** 'व्याघात'इति पूर्वतोऽन्वेति।

आकाङ्क्षापूर्त्तय आह—**व्याघातः**। **इत्येव** 'पूर्वतोऽध्याहृत्य योजनीय'मिति शेषः।

उदाहरति—'**हे कान्ते ! इह**। **एव**। 'गृहे इति शेषः। **त्वम्**। **तिष्ठ**। **अहम्**। **कतिपयैः**। **अहोभिर्दिनैः**। द्रुतं शीघ्रम्। **समागन्ता** समागमं कर्त्ता भविष्यामि प्रत्यावृत्त्य त्वया सङ्गमिष्यामीति भावः। त्वम् मृदुः कोमलाङ्गी। असि। **आयाससहना** क्लेशसहनयोग्या। **च**। **न** 'असी'ति पूर्वतो 'देहलीदीपक'न्यायेनानुयुज्यते। (इति प्रवत्स्यतः कान्तस्योक्तिः)। **हे सुभग ! यत्** यस्मात्। **असमं** विषमं भयङ्करमिति यावत्। **विरहकृतं** 'तवे'ति शेषः। आयासं परिश्रमम्। **मृद्वी** मृदुला। 'अह' मिति शेषः। **न**। **सोढा** शक्ता। तत्-**मे** मम्। **मृदुत्वम्**। **भवता** त्वया सह। **गन्तुम्**। **अधिकम**तिशयितं यथा स्यात्तथा। **हेतुः**। (इति तं प्रति प्रवत्स्यान्नायकाय नायिकाया उक्तिः)। अत्र शिखरिणीवृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ २५२ ॥'

उदाहृतस्य सङ्गतिं निर्दिशति—**अत्रेत्यादिना**। स्पष्टम्।

**परं परं प्रति यदा पूर्वपूर्वस्य हेतुता।**

**तदा कारणमाला स्यात्–**

यथा—

**'श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात्।**

**लोकानुरागो विनयान्न किं लोकानुरागतः ॥'**

---

## विवृतिः

असममतुलम् ॥ कारणमालालंकारमाह—**परं परमिति**। पूर्वपूर्वस्य कार्यस्य ॥ **श्रुतमिति**। अध्ययनमित्यर्थः। कृतधियां पण्डितानाम् ॥

## विवृतिपूर्तिः

**कारणेति**। अत्र यद्यपि कार्याणामपि माला विद्यते तथापि कारणगुणवर्णनमेव कविसंरम्भ इति 'विवक्षापूर्विका हि शब्दार्थप्रतिपत्तिः' इति न्यायेन कारणमालेत्यभिधानम्।।

## लोचन

परमिति। कारणमालाख्यमलङ्करणम्।

## कुसुमप्रतिमा

पूर्वव्याघातलक्षणे उपायपर्य्यायहतोरुत्थानात हेतुघटितं कारणमालालङ्कारं निरूपयति परमिति। यद्वा इदानीं क्रमिकपदार्थघटितालङ्कारप्रकरणाभारभमाणः क्रमिककारणघटितं कारणमालाङ्कारं निरूपयति परमिति। यदा परं परं पदार्थ प्रति पूर्व पूर्वस्य पदार्थस्य हेतुना कारणता वर्त्तते; तदा कारणमाला नाम अलङ्कारः स्यात्।

कारणानां माला श्रेणिरिति व्युत्पत्तिः। अत्र सत्यामपि कार्य्यमालायां तदपेक्षया कारणमालाया एवधिकतरवैचित्र्याधायकत्वात् प्राचीनपरम्पराप्रसिद्धेश्च कारणमाला इत्येव संज्ञा निर्दिर्दष्टा।

श्रुतमिति। कृतधियाम् अध्ययनविहितसूक्ष्मबुद्धीनां विदुषामित्यर्थः, सङ्गात् संसर्गात् हेतोः, श्रुतं शास्त्रज्ञानं जायते, लोकस्येति शेषः। एवं सर्वत्र। श्रुतात शास्त्रज्ञानाच्च विनयः शिष्टव्यवहारो जायते, विनयात् लोकानामनुराग आत्मनि प्रेम जायते; तस्माच्च लोकानुरागात् किं न जायते ? अपि तु सर्वमेव धनादिकं जायत इत्यर्थः।

अत्र विनयादिकं परं परं प्रति श्रुतादेः पूर्वपूर्वस्य हेतुतया कारणमालालङ्कारः। किञ्च, जायत इत्येकक्रियया उत्तरोत्तरसम्बन्धाद्वक्ष्यमाणलक्षणं मालादीपकमपीत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

## विमला

कारणमालामाह, परमिति ।—यदा पूर्वपूर्वस्य, कार्य्यस्येति शेषः, परं परं प्रति हेतुता, तदा कारणमाला स्यात् । कार्य्याणामपि माला इह वर्त्तते एव, कथं न कार्य्यमालेत्याख्यानम्? अत्रोच्यते—"विवक्षापूर्विका हि शब्दार्थप्रतिपत्तिः" इति नियमेन कारणगुणवर्णनस्यैव कवेरभीष्टतया कारणमालेत्याख्यानमेव सङ्गतम् इति ज्ञेयम् ।

श्रुतमिति ।—कृतधियां—शिक्षितमतीनां, पण्डितानामिति यावत्, सङ्गात्—संसर्गात्, श्रुतं—शास्त्रज्ञानम्, अध्ययनमित्यर्थः, जायते, श्रुतात् विनयः,—शिष्टाचारः, जायते इत्यनुषङ्गः, विनयात् लोकानुरागः,—लोकप्रियता, जायते इत्यत्रापि अनुवर्त्तते, लोकानुरागमतः किं न जायते? अत्र परं पंर विनयादिकं प्रति पूर्वपूर्वस्य श्रुतादेः हेतुत्वम् । यथा वा—"विद्या ददाति विनयं विनयात् याति पात्रताम् । पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥" यथा वा—"दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते । निर्विणः शुचमेति शोकविहतो बुद्ध्या परित्यज्यते निर्बुद्धिः क्षयमेत्यहो ! निधनता सर्वापदामास्पदम् ॥" अत्र दारिद्र्यस्य लज्जायां, तस्याः तेजोनाशे, तस्य च परिभवे हेतुत्वमिति रीत्या मालात्वमेव । यत्रोत्तरोत्तरस्य पूर्वं पूर्वं प्रति हेतुत्वमुच्यते, तत्रापीयमिति कौस्तुभकाराः ।

## लक्ष्मी

पूर्वव्याघातस्वरूपे उपायपर्यायकारणस्य प्रदर्शनात् कारणघटितमेव कारणमालालङ्कारं लक्षयति—परमिति । यदा परं परम् उत्तरम् उत्तरं पदार्थं प्रति पूर्वपूर्वस्य पदार्थस्य हेतुता कारणत्वं चेत् तदा कारणानां माला पंक्तिरिति व्युतपत्त्या कारणमाला नामालङ्कारः स्यात् । उपलक्षणञ्चैतत्—यथापूर्वं परपरस्य कारणत्वेऽप्ययमित्यपि बोध्यम् ।

यथा—

> **भवन्ति नरकाः पापात् पापं दारिद्र्यसम्भवम् ।**
> **दारिद्र्यमप्रदानेन तस्माद्दानपरो भव ॥ इति ।**

उदाहरति—श्रुतमिति । कृतधियाम् अध्ययनेन निपुणताभावितात्मनां विदुषाम्, सङ्गात् संसर्गात् हेतोः, श्रुतं शास्त्रं लक्षणया तज्ज्ञानं जायते जनस्येति शेषः । एवमग्रेऽपि । श्रुतात् शास्त्रज्ञानात् विनयः अनुद्धतत्वं जायते, विनयात् लोकानुरागः स्वस्मिन् प्रेम जायते, तस्माच्च लोकानुरागात् किं न जायते? अपि तु वित्तादिकं सकलमेव जायते इत्यर्थः ।

अत्र विनयादिकं परं परं प्रति श्रुतादेः पूर्वपूर्वस्य कारणतया कारणमालालङ्कारः । अपि च वक्ष्यमाणमालादीपकालङ्कारोऽपि जायते इत्येकक्रियायामुत्तरोत्तरस्यान्वयादेकाश्रयानुप्रवेशरूपः सङ्करालङ्कारः ।

## रुचिरा

कारणमालां लक्षयति—१६२ परम्परमुत्तरं मुतरं कारणं कार्य्यं वेति भावः । **प्रति** । **पूर्वपूर्वस्य** पूर्वस्य पूर्वस्य कार्य्यस्य कारणस्य वेति भावः । **यदा** । **हेतुता** कारणत्वमुपचारात् कार्य्यत्वं चेति भावः । **तदा** । **कारणमाला** कारणानां मालेति तदाख्योऽलङ्कार इत्यर्थः । **स्यात्** । तथा चेयं द्विविधा, परम्परं कारणं प्रति पूर्वपूर्वस्य कार्य्यस्य कारणत्वरूपैका, परम्परं कार्य्यं प्रति पूर्वपूर्वस्य कारणस्य कार्य्यत्वरूपाऽपरा । अत्र कारणानामिव कार्य्याणामपि

मालेति कार्यमालेत्यपि सुवचम्, अथायं व्यपदेशः 'विपक्षापूर्विका हि शब्दार्थप्रतिपत्ति'रिति न्यायेन कारणगुणवर्णनमपेक्ष्यैव कवेरुद्योगात्। अत एव गङ्गाधरकाराः 'सैव श्रृङ्खलाऽऽनुगुण्यस्य कार्य्यकारणभावरूपत्वे कारणमाला।' इति सूत्रयित्वा 'तत्र पूर्वं पूर्वं कारणं परं परकार्य्यमित्येका, पूर्वं पूर्वं कार्य्यं परम्परं कारणमित्यपरा' इति विवृतम्॥ १२९॥

उदाहरति—**यथा**—'**कृतधियां** कृता निपुणतां प्रापिता धीर्बुद्धिर्विज्ञानमिति यावत् यैस्तेषां तथोक्तानाम्, निपुणताभावितात्मनां विदुषामिति भावः। **सङ्गात्** प्रसङ्गात्। **श्रुतं** शास्त्रं लक्षणया तज्ज्ञानम्। **जायते**। **श्रुतात्** शास्त्रज्ञानात्। **विनयो**ऽनुद्धतत्वम्। 'जायत' इति पूर्वतोऽन्वेति। **विनयात्**। **लोकानुरागो** लोकस्यानुरागः प्रेमा। 'जायत' इति पूर्वतोऽन्वेति। **लोकानुरागतो** लोकप्रीतेः। **किम्**। **न** 'जायते' इति पूर्वतोऽन्वेति। अत्र श्रुतादिकं प्रति कृतधीसङ्गादिकारणत्वेन वर्णितम्॥ २५३॥' द्वितीया यथा—'स्वर्गापवर्गौ खलु दानलक्ष्मीर्दानं प्रसूते विपुला समृद्धिः। समृद्धिमल्पेतरभागधेयं भाग्यं च शम्भो! तव पादभक्तिः॥' इति, अत्र हि स्वर्गादिकं प्रति दानलक्ष्म्यादेः कारणत्वं निर्दिष्टम्॥

**तन्मालादीपंक पुनः ॥ ७६ ॥**

**धर्मिणामेकधर्मेण संबन्धो यद्यथोत्तरम्।**

यथा—

**'त्वयि संगरसंप्राप्ते धनुषासादिताः शराः ।**

**शरैररिशिरस्तेन भूस्तया त्वं त्वया यशः ॥'**

अत्रासादनक्रिया धर्मः ।

---

## विवृतिः

मालदीपकालंकारमाह—**तन्मालादीपकमिति** ॥

**त्वयीति** । तेन अरिशिरसा । तया भुवा ॥

## विवृतिपूर्तिः

**मालेति** । यथा गालायां पूर्वपूर्वग्रथितपुष्पाणामुत्तरोत्तरधारणादुपकारकत्वं तद्वदत्रापि मालारूपतेति तत्त्वम । **अप्पयदीक्षितैः** पुनरेवमवादि—'दीपकैकावलीयोगान्मालादीपकमिष्यते । स्मरणं हृदये तस्यास्तेन त्वयि कृता स्थितिः ॥'

**त्वयीति** । 'संग्रामाङ्गणमागतेन भवता चापे समारोपिते देवाकर्णय येन येन सहसा यद्यत्समासदितम् । कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥' इति प्रकाश उदाहृतश्च श्लोको वासवदत्तागद्यानुरूपः ॥

## विज्ञप्रिया

कारणमालालङ्कारमाह—**परंपरमिति** । सोदाहरणं स्पष्टम् । माला दीपकालङ्कारमाह—**तन्मालेति** । इद-मपि सोदाहरणं स्पष्टम् ।

## लोचन

यथेत्तरमुत्तरोत्तरं गुणवहत्वेनेत्यर्थः ।

## कुसुमप्रतिमा

क्रमिकप्रकरणे पूर्वत्र मालाप्तस्ताथोत्थानान्मालादीपकालङ्कार लक्षयति तदिति । बहूनां धर्म्मिणाम् एकधर्म्मेण गुणरूपेण क्रियारूपेण वा सह, यत् यथोत्तरम उत्तरोत्तरं सम्बन्धः, तत् पुनर्मालादीपकं माम् अलङ्कारः स्यात् ।

अप्रस्तुतप्रस्तुतयोरेकधर्म्माभिसम्बन्धी दीपकम्, तस्य चात्र श्रेणिरूपत्वेन मालारूपत्वान्मालादीपकमिति संज्ञा। "स्तोकं पाकः" इत्यादिवत् सम्बन्ध इति गौणक्रियाया एव विशेषणत्वेन यदिति नपुंसकलिङ्गम्।

बहूनां धर्म्मिणां क्रियारूपेकधर्म्मसम्बन्धे उदाहरति त्वयीति। राज्ञः प्रशंसेयम्। हे राजन्! त्वयि सङ्करं युद्धं समाप्ते गते मति, तव धनुषा शरा आसादिताः प्राप्ताः। एवमन्यत्रापि आश्वादिता इत्यस्य लिङ्गविभक्त्यर्विपरिणामेन अन्वयो बोध्यः। तथा च शरैस्तवैव बाणैः, अरीणां शिर आसादितम्, तेन अरिशिरसा भूर्भूमिरामादिता, तया भवा त्वामासादितः, त्वया च यश आसादितम्।

अत्रेति। आसादनक्रिया धर्म्मः। तस्य चात्र शरादिभिकत्तरोत्तरं कर्म्मतया सम्बन्धमाला दीपकमित्याशयः।

उत्तरोत्तरमेकगुणसम्बन्धे मालादीपकं यथा मम—

**"पापो नरेषु चाण्डाली ध्याषथाभट्टालमण्डले।**

**व्यधेषु स पुनर्दस्युर्दस्युष्पपि च धातुकः॥"**

क्रमिकप्रकरणात् क्रमिकविशेषणघटितामेकावलीं नामालङ्कारं निर्वक्ति पूर्वमिति। चेदयदि पूर्वं पूर्वं विशेष्यं प्रति, विशेषणत्वेन रूपेण परं परं विशेषं स्थाप्यते उपन्यस्यते अपोह्यते निषिध्यते वा, तदा द्विधा स्थापनापोहनभेदेन द्विप्रकारा एकावली माम अलङ्कार स्यात्। विशेषणश्चात्र समानाधिकरणं व्यधिकरणश्च ग्राह्यम्।

## विमला

मालादीपकमाह, तदिति।—धर्मिणां, बहूनामिति भावः, यथोत्तरम्—उत्तरोत्तरं, यत् एकधर्मेण सम्बन्धः, तत् पुनः मालादीपकम्। अत्रैवं ज्ञेयम्—लोके मालायां यथा पूर्वपूर्वगुम्फितमप्रसूनानामुत्तरोत्तरावलम्बनत्सहायकत्वं, तथैवेहापि मालारूपता इति सारः। अप्ययदीक्षितास्त्वेवमाहुः,—"वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः। मदेन भाति कलभः प्रतापेन महीपतिः॥ त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम्। वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी॥ उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः। माद्यन्ति चातकास्तृप्ताः नाद्यन्ति च शिखाबलाः॥"अत्र देहलीदीपकन्यायमवलम्ब्य अनेकपोषकस्य पदस्यार्थस्य द्वयोरपि वा आवर्त्तने उदाहरणक्रमः॥ इति।

त्वयीति।—राजस्तुतिरियम्। हे राजन्! त्वयि सङ्करसम्प्राप्ते—रणं गते सति, धनुषा शराः आसादिताः,—प्राप्ताः, शरैः अरेः,—शत्रोः, शिरः, आसादितमिति शेषः, तेन—अरिशिरसा, भूः,—भूतलम्, आसादितेति लिङ्गव्यत्ययेन अत्रापि अनुवर्त्तनीयं, तया—भुवा, त्वम्, आसादितः इति शेषः, तव भूस्वामित्वादिति भावः; त्वया यशः, आसादितमित्यनेनान्वयः। अत्रैकया आसादनक्रियया यथोत्तरं बहूनां धर्मिणां धनुरादीनां सम्बन्धः। इदं विश्वनाथस्य पद्यम्। यथा वा—"लावण्येन भवत्कलेवरमिदं तेनोत्कटं यौवनं तेनासौ सुतनु! प्रसूनविशिखस्तेन द्रुतं कार्मुकमं। तेन प्रापि पुनः शिलीमुखगणस्तेनापि मन्मानसं तेनोत्तापभयप्रमाथदलनभ्रान्तिप्रमोहोदयः॥" अत्र प्रापीति क्रियायां पूर्वं कर्मीभूतस्य पश्चात् तत्रैव कर्तृत्वमित्यादिरीत्या मालात्वमिति बोध्यम्।

## लक्ष्मी

उक्तालङ्कारे मालाप्रकरणनिर्देशान्मालादीपकालङ्कारं निरूपयति—**तद्दिति**। अनेकानां धर्मिणाम् एकधर्मेण गुणरूपेण क्रियारूपेण वा सह, यत् यथोत्तरम् उत्तरम् उत्तरं वस्तु प्रति सम्बन्धः। अत्र वीप्सायां यथाशब्दः, तत् पुनः मालादीपकं मालायां यथा बहूनां कुसुमानामवस्थानं, तथा बहूनां धर्मिणामवस्थानं माला तस्या दीप इव धर्मैक्येन प्रकाशनमिति तादृशं तन्नामालङ्कारः स्यादिति पूर्वतोऽनुवर्तते।

अनेकानां धर्मिणां क्रियारूपैकधर्मसम्बन्धे उदाहरणं दर्शयति—**त्वयीति**। कस्यचिद्राज्ञः स्तुतिरियम्। हे राजन्! त्वयि सङ्गरं युद्धं सम्प्राप्ते याते सति, तव धनुषा शरा बाणा आसादिता लब्धाः। इत्थमग्रेऽपि क्रियाया लिङ्गविभक्तिविपरिणामेन सम्बन्धो ज्ञेयः। एवञ्च शरैस्तवैव इषुभिः, अरीणां शिर आसादितम्, तेन अरिशिरसा भूर्भुवमासादिता, तया भुवा त्वमासादितः, त्वया भवता च यश आसादितम्।

लक्ष्यं समर्थयति—अत्रेति। आसादनक्रिया धर्मः, शरादिभिर्यथोत्तरं कर्मत्वेनान्वयान्मालादीपकम्। यथा वा—

**आस्वादेन रसो रसेन कविता काव्येन वाणी तया**
**लोकान्तःकरणानुरागरसिकः सभ्यः, सभा चामुना।**
**दारिद्र्यानलदह्यमानजगतीपीयूषधाराधर**
**क्षोणीनाथ! तया भवांश्च भवता भूमण्डलं भासते॥**

अत्र भासनधर्मेण सम्बन्धः। एवमन्यदपि।

## रुचिरा

मालादीपकं लक्षयति—१६३ **यत्**। **यथोत्तरमुत्तरोत्तरम्**। अत्र वीप्सायां यथाशब्दः। **धर्मिणां** नतु धर्मिणो धर्मिणोर्वेति शेषः। बहूनां धर्मिणमिति भावः। **एकधर्मेण**। **सम्बन्धः**। **तत्**। पुनः। **मालादीपकं** मालायां यथाऽनेकेषां पुष्पाणामवस्थानं, तथा बहूनां धर्मिणामवस्थानं माला, तस्या दीप इव धर्मैक्येन प्रकाशनमिति तथोक्तम्, तन्नामालङ्कार इति भावः॥ १३०॥

उदाहरति—**यथा**—'**त्वयि**। **सङ्गरसम्प्राप्ते** सङ्गरे सङ्ग्रामे सम्प्राप्ते सतीत्यर्थः। **धनुषा**। **शराः**। **आसादिता** गृहीताः। **शरैः**। **अरिशिरः**। लिङ्गवचनविपरिणामेन 'आसादित'मित्यनुषञ्जनीयम्। **तेनारिशिरसा**। **भूः**। अत्रापि पूर्ववत् 'आसादिते'ति। **तया भुवा**। **त्वम्**। (राजा)। अत्रापि पूर्ववत्। 'आसादिति'इति। **त्वया**। **यशः**। अत्रापि पूर्वल्लिङ्गवचनविपरिणामेन 'आसादित' मित्यनुषञ्जनीयम्॥ २५४॥'

अत्र धनुरादीनामेकधर्माभिसम्बन्धं निर्दिशति-**अत्रेत्यादिना**। स्पष्टम्। यथा वा—'आस्वादेन रसो, रसेन कविता, काव्येन वाणी, तया लोकान्तःकरणानुरागरसिकः सभ्यः, सभा चामुना। दारिद्र्यानलदह्यमानजगतीपीयूषधाराधरक्षोणीनाथ! तया भवांश्च भवता भूमण्डलं भासते॥' इति, अत्र भासनधर्मेणान्वयः।

**पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम् ॥ ७७ ॥**

**स्थाप्यतेऽपोह्यते वा चेत्स्यात्तदैकावली द्विधा ।**

क्रमेणोदाहरणम्—

**'सरो विकसिताम्भोजमम्भोजं भृङ्गसंगतम् ।**

**भृङ्गा यत्र ससंगीताः संगीतं सस्मरोदयम् ॥'**

---

## विवृतिः

एकावल्यलंकारमाह—**परं परमिति** । यद्विशेष्यं अपोह्यते निषिध्यते । **यत्र** शरदि । अत्राम्भोजभृङ्गसङ्गी-तानि उत्तरोत्तरत्र विशेष्याणि पूर्वपूर्वेषु सरोऽम्भोजभृङ्गेषु विशेषणत्वेनोपन्यस्तानि ॥

## विवृतिपूर्तिः

**एकावलीति** । एकावली हारविशेषस्तत्सदृशत्वादित्याशाधरः ॥

## विज्ञप्रिया

एकावल्यलङ्कारमाह—**पूर्वं पूर्वमिति** । पूर्वत्र पूर्वत्र यद्विशेषणं तस्य तस्य विशेषणतया यदि परं परं स्थाप्यते, अपोह्यते वा तद्विशेषणाभावप्रतियोगितया निर्दिश्यते वेत्यर्थः । तेन पूर्व पूर्वं विशेषणं यद्युत्तरोत्तरस्य उत्तरोत्तराभावस्य वा विशेष्यं भवतीत्यर्थः ।

सरो विकसितेति । अत्र सरोजराजे यानि विकसिताम्भोजादीनि तदेकदेशानामम्भोजादीनां विशेषणानि परंपराणि ।

## लोचन

अम्भोजं सरसो, भृङ्गा अम्भोजस्य; संगीतानि भृङ्गाणां विशेषणत्वेन । न तज्जलमित्यादौ जलस्य सुचारुपङ्कजं निषेधत्वेन निबद्धम् । एवमन्यत्र ।

सारो नामालङ्कारः ।

## कुसुमप्रतिमा

एकस्य विशेषणस्य क्रमिकावलोघटितत्वादभ्या एकावलीति संज्ञा ।

क्रमिकप्रकरणात् क्रमिकविशेषणघटितामेकावलीं नामालङ्कारं निर्वक्ति पूर्वमिति । चेद्यदि पूर्वं पूर्वं विशेष्यं प्रति, विशेषणत्वेन रूपेण परं परं विशेष्यं स्थाप्यते उपन्यस्यते अपोह्यते निषिध्यते वा, तदा द्विधा स्थापनापोहनभेदेन द्विप्रकारा एकावली माम अलङ्कारः स्यात् । विशेषणञ्चात्र समानाधिकरणं व्यधिकरणञ्च ग्राह्यम् ।

एकस्य विशेषणस्य क्रमिकावलीघटितत्वादस्या एकावलीति संज्ञा ।

स्थापने उदाहरणमाह सर इति । शरद्वर्णनेयम् । यत्र शरत्काले, सरो दीर्घिका विकसितानि अम्भोजानि पद्मानि यत्र तत्तादृशं भवतीति शेष: । अम्भोजं तत् पद्मञ्च, भृङ्गसङ्गतं भ्रमरसमन्वितम् । ते भृङ्गाश्च ससङ्गीता: सम्यग्गीतशालिन: । तत् सङ्गीतञ्च पुन: स्परोदयेन कामाविर्भावेन सहेति सम्मरोदयं कामाविर्भावजनकमित्यर्थ: ।

अत्र सर: प्रभृतिक पूर्वं पूर्वं विशेशं प्रति विशेषणत्वेन अम्भोजादिपरविशेष्यस्य स्थापनादेकावल्यलङ्कार: ।

## विमला

क्रमिकप्रस्तावात् क्रमिकविशेषणयुक्तैकावलीनामालङ्कारं लक्षयति—**पूर्वमिति** । चेद् यदि पूर्वं पूर्वं विशेष्यं प्रति परं परम् उत्तरमुत्तरं विशेषणत्वरूपेण विशेष्यं स्थाप्यते विधीयते अपोह्यते निषिध्यते वा, तदा(क) स्थापनापोहानात्मकतया इति शेष:, द्विधा द्विप्रकारा एकरूपेण विशेषणत्वेन विशेष्यत्वेन विहितानामपोहितानां वाऽऽवली श्रेणिस्तादृशी, एकावली, तन्नामालङ्कार: । अत्र विशेषणत्वेनेत्युपलक्षणम्, तेन विशेष्यतयेत्यपि बोध्यम् । उदाहरिष्यति ग्रन्थकृता स्वयमेव ।

**धर्मेम बुद्धिस्तव देव ! शुद्धा बुद्धया निबद्धा सहसैव लक्ष्मी: ।**

**लक्ष्म्या च तुष्टा भुवि सर्वलोका लोकेश ! नीता भुवनेषु कीर्त्ति: ॥**

एकावलीमाह, पूर्वमिति ।—चेत्—यदि, पूर्वं पूर्वं प्रति परं परं—यद्विशेष्यमित्यर्थ:, विशेषणत्वेन स्थाप्यते वा अपोह्यते—निराक्रियते, तदा द्विधा—स्थापनापोहनभेदात् द्विप्रकारा, एकावली स्यात् । अत्र कौस्तुभलक्षणं यथा—"प्रथमं विशेषणं यद्विशेष्यमग्रे भवत्यसकृत् । विरहप्रतियोगी वा तद्वानेकावली सोक्ता ॥" इति । यत्र प्रथमं विशेषणीभूतस्य पश्चात् विशेष्यत्वं, सा एका, यत्र च प्रथमतोऽभावप्रतियोगिन: अन्यप्रतियोगिकाभावाधिकरणत्वं साऽपरेति द्विविधैकावली इति ।

सर इति ।—यत्र—शरदि इत्यर्थ:, सर:,—सरोवर:, विकसितानि—प्रस्फुटानि, अम्भोजानि—पद्मानि यस्मिन् तथोक्तम्, अम्भोजं भृङ्गै:,—भ्रमरै:, सङ्गतं—युक्तं, भृङ्गा:,—भ्रमरा:, ससङ्गीता:,—सङ्गीतशालिन:, सङ्गीतं स्मरस्य—कामस्य, उदय: स्मरोदय: तेन सहितं, कामवृद्धिकरमित्यर्थ: । अत्र अम्भोजभृङ्गसङ्गीतानि उत्तरात्तरत्र विशेष्याणि पूर्वपूर्वेषु सरोऽम्भोजभृङ्गेषु विशेषणत्वेनोपन्यस्तानि इति बोध्यम् । पथ्यावक्तं छन्द: । यथा वा—"प्रषिता: कर्मारम्भा: नियतविपाकानि कर्माणि । अतिविषमाश्च विपाका वैषम्यं दु:सहं तेषाम् ॥" इति ।

## लक्ष्मी

अत्रोत्तरमुत्तरं विशेषणं पूर्वपूर्वं प्रति विशेष्यम् ।

तत्र स्थापने उदाहरति—**सर** इति । शरत्समयवर्णनमिदम् । यत्र शरत्समये, सरस्तडाग: विकसिताम्भोजं प्रस्फुटितपद्मं भवतीति शेष:, एवमुत्तरत्र । अम्भोजं, तत्कमलञ्च भृङ्गसङ्गतं भ्रमरयुक्तम् । ते भृङ्गाश्च ससङ्गीता: सङ्गीतपरा:, तत्सङ्गीतञ्च पुन:, स्मरोदयेन कामोल्लासकत्वेन सहेति सस्मरोदयं कामप्राकटयजनकमित्यर्थ: ।

अत्राम्भोजादीनि उत्तरोत्तरत्र विशेष्याणि पूर्वपूर्वत्र विशेषणात्मना स्थापितानीति एकावल्यलङ्कार: ।

## रुचिरा

एकावलीं लक्षयति—१६४ **चेद्** यदि । **पूर्वंपूर्वम्** । प्रति । परम्परमुत्तरमुत्तरम् । **विशेषणत्वेनोपलक्षणेन** विशेष्यत्वेन चेत्यर्थः । उपलक्षणे तृतीया । अत एव—'क्वचिद्विशेष्यमपी'त्यादि वक्ष्यति । **स्थाप्यते** विधीयते । अपोह्यते निषिध्यते । **वा** । **तदा** 'स्थापनापोहनात्मकतया' इति शेषः । **एकावली** एकरूपेण विशेषणत्वेन विशेष्यत्वेन विहितानामपोहितानां वाऽऽवली पङ्क्तिस्तथोक्ता, तन्नामालङ्कार इति भावः । **द्विधा** । **स्यात्** । । १३१ ॥

उदाहर्त्तुमाह—**क्रमेण** । **उदाहरणम्** । तत्राद्या यथा—'**सरस्तडागः** । **विकसिताम्भोजम्** । **अम्भोजं** कमलम् । **भृङ्गसङ्गतं** भृङ्गैर्भ्रमरैः सङ्गतम् । **भृङ्ग** अत्र 'भोभगो अघो अपूर्वस्य योऽशि ।' ८/३/१७ इति यत्वं तल्लोपश्च । **यत्र** । **ससङ्गीताः** सङ्गीतपराः । **सङ्गीतं** सुष्ठु गानम् । **सस्मरोदयं** स्मरोदयेन कामोल्लासकत्वेन सह वर्त्तत इति तथोक्तम् । अत्राम्भोजादीनि उत्तरोत्तरत्र विशेष्याणि पूर्वपूर्वत्र विशेषणात्मना विहितानि ॥ २५५ ॥ 'यथा वा—'पुराणि यस्यां सवराङ्गनानि वराङ्गनारूपपरिस्कृताङ्ग्यः । रूपं समुन्मीलितसद्विलासमात्रं विलासाः कुसुमयुधस्य ॥'

**'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम्।**
**न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः ॥'**

---

## विवृतिः

अपोहने त्वाह—**न तज्जलमिति** । अत्र पङ्कजषट्पदगुञ्जितान्युत्तरोत्तरविशेष्याणि पूर्वपूर्वेषु जलपङ्कजषट्पदेषु विशेषणत्वेनापोहितानि ॥

## विज्ञप्रिया

अपोहे तु आह—**न तज्जलमिति** । सुचारुपङ्कजं यत्रेति बहुब्रीहिः । एवमलीनेत्यादावपि । अत्र जलविशेषणीभूतानामभावानां प्रतियोगितया सुचारुपङ्कजत्वादीनि निर्दिष्टानि ।

## कुसुमप्रतिमा

अपोहने उदाहरति नेति । भट्टिकाव्यद्वितीयसर्गस्थमिदं पद्यम् । तत् तादृशं जलं नासीत्, यत् सुचारूणि पङ्कजानि यस्मिन् तत्तथोक्तं नाभवत् । तत् तादृशं पङ्कजं नासीत्, यत् न लीनामधुपानायस्थिरं नोपविष्टाः षट् पदा भ्रमरा यस्मिन् तत्तादृशमभवत् । असौ तथाविधः षट्पदो नासीत्, यः कलं मधुरास्फुटं न जुगुञ्ज न गुञ्जितवान् । तथा, तत्तादृशं गुञ्जितं नासीत्, यत् मनो न जहार हतवत् ।

अत्र जलादिकं पूर्वं पूर्वं विशेष्यं प्रति विशेषणत्वेन पङ्कजादिपरपरविशेष्यस्य निषेधनादेकावल्यलङ्कारः ।

## विमला

नेति ।—तत् जलं न, आसीदिति शेषः, यत्—जलं, सुचारुणि—सुललिबानि, पङ्कजानि यस्मिन् तथाभूतं, न, तत् पङ्कजं—पद्मं, न, यत् अलीनाः,—न लीनाः, सौरभमुग्धतया अनुडद्वीयमानाः स्थिताः इति यावत्, षट्पदाः,—भ्रमराः, ("द्विरेफपुष्पलिङ्गभृङ्ग-षट्पदभ्रमरालयः" इत्यमरः) यत्र तादृशम्, असौ षट्पदो न, यः कलं—मधुरं, न जुगुञ्ज—गुञ्जनं चकार, तत् गुञ्जितं न, यत्—गुञ्जितं, मनः न जहार । अत्र पङ्कजषट्पदगुञ्जितानि उत्तरोत्तरविशेष्याणि पूर्वपूर्वेषु जलपङ्कजषट्पदेषु विशेषणत्वेन अपोहितानि । वंशस्थविदं छन्दः । इदं भट्टिकाव्यस्य पद्यम् । अत्र कौस्तुभकाराशयः,—"यत्तु पूर्वपूर्वस्योत्तरोत्तरं प्रति विशेष्यत्वरूपभेदे उत्तरोत्तरविशेषणस्य स्थापकत्वापोहकत्वाभ्यां द्वैविध्यं, (स्वसम्बन्धेन विशेष्यतावच्छेदकनियामकत्वं स्थापकत्वं, स्वव्यतिरेकेण विशेष्यतावच्छेदकव्यतिरेकबुद्धिजनकत्वमपोहकत्वम्) तदनुकूलोदाहरणे यथा—"स पण्डितो यः स्वहितार्थदर्शी हितञ्च तत् यत्र परानपक्रिया । परे च ते ये श्रितसाधुभावाः सा साधुता यत्र चकास्त केशवः । ।" "नार्थः स यो न स्वहितं समीक्षते न तद्धितं यत्र परानुतोषणम् । न ते परे ये न हि साधुताश्रिता न साधुता सा हि न यत्र माधवः ॥" इति; अत्राद्ये हितार्थदर्शनस्य पाण्डित्यरूपविशेष्यतावच्छेदकनियामकत्वं, द्वितीये च हितावेक्षणव्यतिरेकेणार्य्यत्वव्यतिरेकाभिधानम् इति, तन्न "न तज्जलम्—" इत्यादौ उदाहृतेऽव्याप्तेः, तत्र तत्रोत्तरविशेष्यतावच्छेदकनियामकतायाः स्वव्यतिरेकेण विशेष्यतावच्छेदकव्यतिरेकप्रयोजकतायाश्चाभावात्; न हि पङ्कजव्यतिरेकेण जलत्वाभावे तात्पर्य्यं, किन्तु जलत्वाच्छेदेन पङ्कजायोगव्यतिरेक एव, शरत्समयपरे श्लोके तथैव तात्पर्य्यावगमात्" इति ज्ञेयम् ।

## लक्ष्मी

अपोहने उदाहरणमाह—नेति। भट्टिकाव्ये द्वितीयसर्गे पद्यमिदम्। यत् सुचारुपङ्कजम् अत्यन्तरमणीय-कमलं न तत् जलं प्रशस्तं जलं नेत्यर्थः, एवमुत्तरत्रापि यत् न विद्यते लीनाः मधुपानाय स्थिराः षट्पदा भ्रमरा यत्र तादृशं तत् पङ्कजं न, यः कलं मञ्जुलं गुञ्जितं मत्तभ्रमरशब्दः यत्र तादृशो न असौ षट्पदौ न, यत् मनः न जहार आचकर्ष तत् गुञ्जितं नेत्यर्थः। **वंशस्थं** छन्दः।

अत्र जलादिकं पूर्वपूर्व विशेष्यं प्रति पङ्कजाद्युत्तरोत्तरविशेष्यस्य विशेषणत्वेन निषेधनादेकावली। न चात्र सुचारु पङ्कजं विना जलं न रमणीयमित विनोक्तिध्वनिरेव युक्तः तत्कृतवैचित्रयस्यैव विद्यमानत्वादिति वाच्यम्, वाच्यार्थकृतस्य वैचित्र्यस्यापलपितुमशक्यत्वात्।

## रुचिरा

द्वितीयामुदाहरति—'**तत्**। **जलम्**। **न**। **यत्**। **सुचारुपङ्कजं** सुचारूण्यत्यन्तं रमणीयानि पङ्कजानि यत्र तथोक्तम्। **न**। **तत्**। **पङ्कजम्**। **न**। **यत्**। **अलीनषट्पदं** न लीनाः षट्पदा भ्रमरा यत्र तथोक्तम्। **असौ**। **षट्पदः**। **न**। **यः**। **कलं** रमणीयम्। **न**। **जुगुञ्ज** गुञ्जितवान्। **तत्**। **गुञ्जितम्**मत्तभ्रमरशब्दः। **न**। **यत्**। **मनः**। **न**। **जहाराचकर्ष**। अत्र पङ्कजादीन्युत्तरोत्तरत्र विशेषअयाणि जलादिषु विशेषणभूतात्मनाऽपोहितानि। भट्टेः पद्यमिदम्। अत्र वंशस्थविलं छन्दस्तल्लक्षणं चोक्तं प्राक्॥ २५६॥'

क्वचिद्विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितं च दृश्यते । यथा—

'वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु ।

कमलेषु पतन्त्यलयः करोति संगीतमलिषु पदम् ॥'

एवमपोहनेऽपि ।

**उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते ॥ ७८ ॥**

---

## विवृतिः

प्रकारान्तरेणाप्येकावल्यलंकारमाह—**क्वचिदिति** । **एवमपोहनेऽपीति** । 'पुण्यक्षेत्रं न सर्वत्र पुण्यक्षेत्रे न नास्तिकाः । नास्तिकेषु न धर्मोऽस्ति न धर्मे दुःखहेतुता ॥' अत्र पूर्वपूर्वेषु विशेष्याः पुण्यक्षेत्रनास्तिकधर्माः परेषु परेषु नास्तिकधर्मदुःखहेतुतासु विशेषणत्वेनापोहिताः ॥

## विज्ञप्रिया

अनयोः पूर्वपूर्वोक्तविशेषणानां परत्र परत्र विशेषणे विशेष्यतापोहश्च दर्शित इत्याह—**क्वचिद् विशेष्यमपीति** । **वाप्यो भवन्तीति** । अत्रापि शरदीति बोध्यम् । **करोतीति** । सङ्गीतं कर्तृ, अलिषु पदं सुसम्बन्धरूपतया व्यवसायं करोतीत्यर्थः । अत्र विमलत्वादौ विशेष्यभूता वाप्यादयः स्फुटत्कमलादौ भेदेन विशेषणानि । **एवमपोहनेपीति** । यथा—"न ता वाप्यः स्फुटन्ति यासु पद्मानि सम्प्रति । नच पद्मान्यन्यत्र न यत्र चालयोऽपतन् ॥" (?) इत्यादिके तद्बोध्यम् ।

## कुसुमप्रतिमा

लक्ष्यदर्शनात् कारिकोक्तविपरीतमप्येकावल्यलङ्कारं संग्रहीतुमाह क्वचिदिति । एतेन एता दृर्गकावल्यलङ्कारो नितान्तविरल इति कारिकायां न लक्षित इति सूचितम् । विशेष्यमपि पूर्वं पूर्वमित्यर्थः,यथोत्तरमुत्तरोत्तरम् । अपोहितं निषिद्धम् । कारिकालक्षितायामेकावल्यां परं परं विशेष्यम्, पूर्वं पूर्वं विशेष्यं प्रति विशेषणीभूतम्; अत्र तु पूर्वं पूर्वं विशेष्यम्, परं परं विशेष्यं प्रति विशेषणीभूतमित्युभयोः सम्पूर्णवैपरीत्यं द्रष्टव्यम् ।

तत्र स्थापने उदाहरति वाप्य इति । इयमपि शरद्वर्णना । वाप्यो दीर्घिकाः, विमला भवन्ति, अस्यां शरदीति शेषः । एवमन्यत्रापि । तासु वापीषु च कमलानि पद्मानि स्फुटन्ति । तेषु कमलेषु च अलयो भ्रमराः पतन्ति । तेष्वलिषु च सङ्गीतं कर्तृ, पदं प्रतिष्ठां करोति अलयो गायन्तीत्यर्थः ।

अत्र वाप्यादिकं पूर्वं पूर्वं विशेष्यम्, कमलादिपरपरविशेष्यं प्रति विशेषणतया स्थापितमित्येका वल्यलङ्कारः ।

एवमिति । अपोहनेऽप्ये वमूह्यमित्यर्थः । यथा मम—

**"जले जलेऽस्ति नो पद्मं पद्मे पद्मे न चाप्यलौ ।**
**अलिन्वलिनि नो गीतं गीते गीते न माधुरी ॥"**

अत्र पद्मादिकं पूर्वं पूर्वं विशेष्यम्, अलिप्रभृतिपरपरविशेष्यं प्रति विशेषणतया अपोहितमित्येकावल्यलङ्कारः ।

## विमला

प्रकारान्तरेणाप्येकावल्यलङ्कारमाह—क्वचिदिति ।

उदाहरति, वाप्य इति ।—वाप्यः,—सरस्यः, विमलाः भवन्ति, वापीषु कमलानि स्फुटन्ति—विकसन्ति, कमलेषु अलयः,—भ्रमराः, पतन्ति, सङ्गीतम् अलिषु पदं—स्थानं, करोति, अलयः सङ्गीतं कुर्वन्तीत्यर्थः । उपगीतिच्छन्दः, तल्लक्षणं यथोक्तम्—"आर्य्याऽपरार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम्" इति ।

एवमपोहनेऽपीति ।—"पुण्यक्षेत्रं न सर्वत्र पुण्यक्षेत्रे न नास्तिकाः । नास्तिकेषु न धर्मोऽस्ति न धर्मे दुःखहेतुता ॥" अत्र पूर्वपूर्वेषु विशेष्याः पुण्यक्षेत्र नास्तिकधर्माः परपरेषु नास्तिकधर्मदुःखहेतुतासु विशेषणत्वेनापीहिताः ।

सारमाह, उत्तरोत्तरमिति ।—उत्तरोत्तरं वस्तुनः,—विशेष्यस्य, उत्कर्षः सार उच्यते । केचित्तु—आश्लोकसमापनमुत्तरोत्तरोत्कर्षेण अयमलङ्कारो भवति, तथात्वे एव वैचित्र्यविशेषप्रतीतेः" इत्याहुः, तन्न; "लोकस्रजि द्यौर्दिवि आदितेया अप्यादितेयेषु महान् महेन्द्रः । किं कर्त्तुमर्थी यदि सोऽपि रागाज्जागर्त्ति कक्षा किमतः पराऽपि ॥" इत्यादौ श्लोकार्द्धसमाप्तिपर्य्यन्तमुत्कर्षसत्त्वेनाप्यस्यालङ्कारस्य सम्भवात् इति ।

## लक्ष्मी

अथोक्तविरुद्धमप्यमुमलङ्कारं सङ्ग्राहयितुमुत्थापयति—**क्वचिदिति** । विशेष्यमपि पूर्वपूर्वम्, यथोत्तरम् उत्तरम् उत्तरं प्रति । अपोहितं निराकृतम् । अस्मिन् पूर्वतो भेदः स्पष्ट एव । एवंविधैकावल्यलङ्कारोऽप्यत्यन्तविरल इति पार्थक्येन कथनात्समापतति ।

वाप्य इति । शरत्समयवर्णनमिदम् । वाप्यस्तडागाः, विमला स्वच्छजला भवन्ति, 'अस्मिन् शरत्समय' इति शेषः । एवमग्रेऽपि । तासु वापीषु दीर्घिकासु च कमलानि पङ्कजानि स्फुटन्ति विकसन्ति, तेषु कमलेषु च अलयो भ्रमराः पतन्ति, तेषु, अलिषु च सङ्गीतं सुन्दरं गानं (कर्तृ) पदम् अधिकारं करोति, अलयो गायन्तीत्यर्थः । **आर्याच्छन्द**स्तल्लक्षणन्तूक्तं प्राक् ।

अत्र कमलाद्युत्तरोत्तरविशेष्यं प्रति वाप्यादिकं पूर्वपूर्वं विशेष्यं विशेषणतया उपन्यस्तमित्येकावली ।

एतद्दिग्दर्शनमेवेत्यभिप्रायेणाह—**एवमिति** । अपोहनेऽपि एवमूह्यमित्यर्थः । यथा—

**'पुण्यक्षेत्रं न सर्वत्र पुण्यक्षेत्रे न नास्तिकाः ।**
**नास्तिकेषु न धर्मोऽस्ति न धर्मे दुःखहेतुता ॥'**

अत्रोत्तरोत्तरं विशेषणभूता पूर्वपूर्व पुण्यक्षेत्रादयो विशेष्यतया निषिद्धाः ।

## रुचिरा

प्रकाशकारादिनाऽलक्षितामपि द्वितीयस्वरूपामेकावलीं दर्शयितुमाह—**क्वचित्** । **विशेष्यम्** । **अपि** । **यथोत्तरमुत्तरमुत्तरं** प्रति । **विशेषणतया** । उपलक्षणे तृतीयेयम् । **स्थापितम्** । **अपोहितं** निराकृतम् । **च** । **दृश्यते** ।

अयम्भावः— पूर्वंपूर्वं विशेषणं प्रत्युत्तरोत्तरं विशेष्यं यत् स्थाप्यतेऽपोह्यते वा, तत् उत्तरोत्तरं विशेष्यं प्रति पूर्वंपूर्वम विशेष्यमित्ययं विवेकः । इति ।

उदाहरति—**यथा** । **वाप्यः** । **विमलाः** स्वच्छजलाः । **भवन्ति** । **वापीषु** । **कमलानि** । **स्फुटन्ति** विकसन्ति । **अलयो** भ्रमराः । **कमलेषु** । **पतन्ति** । **अलिषु** । **सङ्गीतं** सुन्दरं गानम् । **पदम्**अधिकारम् । **करोति** । अत्र वाप्यादय त्तरोत्तरत्र विशेषणात्मानः पूर्वंपूर्वं विशेष्यतया वर्णिताः । अत्रार्याछन्दः ॥ २५७ ॥'

एतद्दिग्दर्शनमित्याशयेनाह—**एवमित्यादि** । स्पष्टम् । यथा—'पुण्यक्षेत्रं न सर्वत्र पुण्यक्षेत्रे न नास्तिकाः । नास्तिकेषु न धर्मोऽस्ति न धर्मे दुःखहेतुता ॥' इति, अत्र परंपरं विशेषणभूताः पूर्वंपूर्वं पुण्यक्षेत्रादयो विशेष्यतयाऽपोहिताः ।

यथा—

**'राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम्।**
**सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम्॥'**

---

## विवृतिः

सारालंकारमाह—**उत्तरोत्तरमिति**। वस्तुनो विशेषस्य उत्तरोत्तरमुत्कर्षः सार उच्यत इत्यर्थः। केचित्तु 'आश्लोकसमापनमुत्तरोत्तरोत्कर्षेणायामलंकारो भवति, तथात्व एव वैचि-त्र्यविशेषप्रतीतेः' इत्याहुः। तन्न। 'लोक-स्रजि द्यौर्दिवि चादितेया अप्यादितेयेषु महान्महेन्द्रः। किं कर्तुमर्थीयति सोऽपि रागाज्जागर्ति कक्षा किमतः परा ते॥' इत्यादौ श्लोकार्धसमाप्तिपर्यन्तमुत्कर्षसत्त्वेनाप्यस्यालंकारस्य संभवात्॥

राज्यं राज्याङ्गं तत्र वसुधा सारं तत्र सौधमट्टालिकागृहं सारं सौधवर्तिनि तल्पं सारं शय्यावर्तिनि अनङ्गसर्वस्वं वराङ्गना सारेत्यर्थः। सर्वत्र निर्धारणे सप्तमी। एतदनुरोधेनैव राज्यादिपदानां मुख्यार्थपरित्यागः। तदुपादाने तु सामान्यविशेषभावाभावान्निर्धारणे सप्तमी न स्यात्। नहि भवति घटेषु पटः सुन्दर इति। अत्र **क्लीबा**क्लीबयोः क्लीबः स चैकवद्वेति एकशेषेण क्लीबत्वमुपपन्नम्। यद्वा राज्ये वसुधा सारं वस्त्वित्यर्थः। अथवा राज्ये वसुधासारं धनं तद्वदुपादेयमित्यर्थः। तथा च मेदिनी—'सारो बले स्थिरांशे च यज्ञे पुंसि धने जले। न्याय्ये क्लीबं त्रिषु वरे' इति। केचित्तु 'राज्ये राजत्वविषये यानि वस्तूनि तेषु वसुधा सारम्। वसुधायामित्यादा-वधिकरणे सप्तमी। वसुधायां यानि वस्तूनि सन्ति तेषु पुरं सारम्। एवमग्रेऽपि। सर्वत्र तेष्विति निर्धारणे सप्तमी। राजत्वस्याधिकरणत्वासंभवाद्विषयत्वाविवक्षा। राज्यवसुधादीनां सामान्यविशेषभावाभावेन निर्धारणासंभवात् यानीत्यादेरध्याहारः। सारस्य रूपस्य विशेषणत्वाभावान्न स्त्रीत्वादि' इत्याहुः। तन्न। धर्मे वेदा इतिवद् राज्ये वसुधेत्यत्र वसुधायाः प्रतिपादकत्वाभावेन राज्यत्वस्य प्रतिपाद्यत्वरूपविषयत्वासंभवात् यानीत्यध्याहारेण न्यूनप-दत्वदोषप्रसङ्गात् सारस्य विशेषणत्वं विनोत्कर्षप्रतीतेः सामानाधिकरण्येन विशेषणविशेष्ययो रूप्यरूपकभावसं-भवाच्च। नहि भवति चन्द्रः सुन्दरमिति। यदि न सारपदस्य धनपरत्वं विवक्ष्यते तदा रूप्यरूपकभावः संभवति। उत्कर्षप्रतीतिस्तु व्यञ्जनयैवेति ध्येयम्॥

## विवृतिपूर्तिः

**सार इति। अयमलंकारसर्वस्वकृतोदारनाम्ना** व्यवहृतः॥ अयमलंकारो वेदेऽपि दृश्यते। यथा—'महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः॥'

## विज्ञप्रिया

सारालङ्कारमाह—**उत्तरोत्तरमिति। राज्ये सारमिति**। नपुंसकलिङ्गस्य सारपदस्य जहदजहल्लिङ्गद्वयम-पीत्यतोत्राजहल्लिङ्गता। तत् किं त्रिभुवनसारा बालाऽऽराधिता भवतेत्यत्र तु जहल्लिङ्गता। **वराङ्गनानङ्गेति**—अन-ङ्गसर्वस्वभूता वराङ्गनेत्यर्थः। नन्वत्र राज्ये इत्यादौ यद्यधिकरणसप्तमी तदा राजाद्यपेक्षया सारत्वाऽप्रतीत्या निष्प्रयोजकसारत्वानुपपत्तिः। राज्यवसुधयोः सौधतल्पयोस्तल्पवराङ्गनायोश्च सामान्यविशेषभावाभावेन निर्धा-

रणाऽनुपपत्तिः, पुरुषेषु क्षत्रियः शूर इत्यादिषु सामान्यविशेषभावसत्त्वे एव निर्धारणात् । उच्यते—राज्ये राजत्ववि-षये यद् यद् वस्तु तेषु वसुधा सारम् । वसुधायां यद् यद् वस्तु तेषु पुरं सारमित्यादिरीत्या यद् यद् वस्तु तेष्वित्यध्याहारेण निर्धारणात् तेषु इत्यत्र निर्धारणसप्तमी । राज्ये इत्यत्र विषयसप्तमी, वसुधायामित्यादिष्वधिक-रणसप्तमी ।

## कुसुमप्रतिमा

अस्य च क्रमिकप्रकरणत्वात् क्रमिकोत्कर्षघटितं सारं नामालङ्कारं निरूपयति उत्तरोत्तरमिति । उत्तरोत्तरं क्रमशः वस्तुनो विशेष्यपदार्थस्य, उत्कर्ष उत्तमत्वम्, सारो नाम अलङ्कार उच्यते । सारः श्रेष्ठ इति नार्थान्तरम् । तेन सारत्वघटितत्वादस्य सार इति संज्ञा । अलङ्कारसर्वस्वे तु अयमुदारनाम्ना व्यपदिष्टः ।

मालादीपके यस्य कस्यचिद्‌ गुणरूपस्य क्रियारूपस्य वा धर्म्मस्योत्तरोत्तरसम्बन्धः, इह तु केवलोत्कर्षरू-पगुणस्येति विशेषरूपोऽयं सामान्यरूपं तं बाधते ।

इव उत्कर्षश्च श्लाघ्यगुणानामश्लाघ्यगुणानाञ्च सम्भवति । तत्राद्यं यथा—"राज्ये सारम्" इत्यादि अन्त्यं यथा—"तृष्णादपि लघुस्तुलस्तृलादपि च याचकः । वायुना किं न नीतोऽसौ मामयं प्रार्थयिष्यते ॥" द्रुद्योतकारः । दर्पणकारेण तु श्लाघ्यगुणोत्कयो न विवक्षितः, अविवरणात् प्रकारान्तरामभिधानादनुदाहरणञ्च नेतैतत्समनं "दृणा-दपि" इत्यादौ "कचिद्विशेष्यमपि" इत्याद्य कद्वितीयकारा एकावस्थ व । तथा पदार्थस्य उत्तरोत्तरमुत्कर्षसम्बन्धमात्र एवायमलङ्कारो भवत्येव, त पुनस्तत्र श्लोकसमाप्तिपर्य्यन्तत्वापेक्षा इत्येव ग्रन्थकृन्मतमित्यवधार्य्यते, लक्षणे वृत्तौ च विशेषानभिधानात् तेन—

**"लोकस्त्रजि द्यौर्दिवि यादितेया अप्या दितेषु महान् महेन्द्रः ।**

**किं कर्त्तुमर्थी यदि सोऽपि रागात् जागर्त्ति कक्षा किमतः परापि ॥"**

इति नेषधश्लोकस्य पूर्वार्द्धमात्रेऽपि सारालङ्कारः प्राप्त एवेत्यवधेयम् ।

राज्य इति । "सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु" इत्यमरकोषात् वरार्थकसारशब्दस्य त्रिलिङ्गत्वेन वाच्यलिङ्गत्वेऽपि "नपुंसकानपुसकयोर्नपुसकमेकवद्वा" इत्यनेन सारमित्यत्र नपुंसकत्वमेकत्वञ्च । तेन, राज्ये जलस्थलात्मकममग्रराज्यमध्ये, वसुधा स्थलात्मकप्रदेशः, सारं सारा श्रेष्ठेत्यर्थः, स्वेच्छयैव विचरणसम्भ-वात् । वसुधायां स्थानात्मकप्रदेशमध्येऽपि पुरं नगरं सारं श्रेष्ठम्, सुन्दरत्वाद्विचरणादौ नितान्तसुविधावशाच्च । पुरेऽपि च सौधमट्टालिका । सारम्, परममुदृश्यत्वात्, सुखावसस्थानत्वाच्च । सौधेऽपि तल्पं शय्या सारम्, तत्रापि सुखव्यवहार्य्यत्वात् । तल्पेऽपि अनङ्गसर्वस्वं कामदेवस्य समस्तसम्पत्तिस्वरूपा, वराङ्गना उत्तमस्त्री सारा, भोगसु-खसम्पादकानां मध्ये चरमसीमारूपत्वादिति भावः ।

अत्र वसुधादीनां वस्तुनामुत्तरोत्तरमुत्कर्षात् सारोऽलङ्कारः ।

"जम्बीरश्रितमतिलङ्घ्य लीलयैव व्यानम्नीकृतकमनीयहेतुकुम्भौ ।

नीलाम्भोरुहनयनेऽधुनाकुचौ ते स्पर्द्धते खलु कनकाचलेन सार्द्धम् ॥"

द्वयादावपि कामिनीकुचयोरुत्तरोत्तरोत्कर्षप्रतीतेः सारोऽलङ्कार एवेति बोध्यम् ।

## विमला

राज्ये इति ।—राज्ये—राज्याङ्गे; काननसागरसहितभूतले इति यावत्, वसुधा—पृथिवी, सारं—श्रेष्ठ, वसुधायामपि पुरं—नगरं, सारं पुरे सौधं—राजमन्दिरं, विविधरुचिरमणिमण्डितं सुधासुन्दरमुन्नतं भवनमिति यावत्, ("सौधोऽस्त्री राजसदनम्" इत्यमरः) सारं, सौधे—सौधवर्त्तिनि, तल्पं—शय्या, सारं, तल्पे—शय्यावर्त्तिनि, अनङ्गस्य—कामस्य, सर्वस्वं—सर्वधनं, वराङ्गना—उत्तमा कान्ता, सारं—सारेत्यर्थः । (एतदनुरूपश्लोको यथा वृहत्संहितायाम्—"जये धरित्र्याः पुरमेव सारं पुरे गृहं सद्मनि चैकदेशः । तत्रापि शय्या शयने वरा स्त्री रत्नोज्ज्वला राज्यसुखस्य सारः ॥" इति । जये—उत्कर्षविषये) [सर्वत्र निर्द्धारणे सप्तमी, एतदनुरोधेनैव राज्यादिपदानां मुख्यार्थपरित्यागः । तदुपादाने तु सामान्यविशेषभावाभावान्निर्द्धारणे सप्तमी न स्यात्, न हि भवति घटेषु पटः सुन्दर इति । अत्र क्लीवाक्लीवयोः क्लीवः स चैकवद्वेति एकशेषेण क्लीवत्वमुपपन्नम्] यद्वा—राज्ये वसुधा सारं वस्तु इत्यर्थः, अथवा—राज्ये वसुधा सारं—धनं, तद्वदुपादेयमित्यर्थः, (तथा च मेदिनी—"सारो बले स्थिरांशे च यज्ञे पुंसि घने जले । न्याय्ये क्लीवं त्रिषु वरे" इति) केचित्तु—"राज्ये—राजत्वविषये, यानि वस्तूनि तेषु वसुधा सारम् । [वसुधायामित्यादौ अधिकरणे सप्तमी] वसुधायां यानि वस्तूनि सन्ति तेषु पुरं सारम्; एवमग्रेऽपि । [सर्वत्र तेष्विति निर्द्धारणे सप्तमी । राजत्वस्याधिकरणत्वासम्भवात् विषयत्वविवक्षा । राज्यवसुधादीनां सामान्यविशेषभावाभावेन निर्द्धारणा सम्भवात् यानि इत्यादेरध्याहारः । सारस्य रूपस्य विशेषणत्वाभावान्न स्त्रीत्वादि" इत्याहुः, तन्न; धर्मे वेदा इतिवत् राज्ये वसुधेत्यत्र वसुधायाः प्रतिपादकत्वाभावेन राज्यत्वस्य प्रतिपाद्यत्वरूपविषयत्वासम्भवात् यानीत्यध्याहारेण न्यूनपदत्वदोषप्रसङ्गात् सारस्य विशेषणत्वं विनोत्कर्षप्रतीतेः सामानाधिकरण्येन विशेषणविशेष्योः रूप्यरूपकभावसम्भवाच्च, न हि भवति चन्द्रः सुन्दरमिति । यदि सारपदस्य धनपरत्वं विवक्ष्यते, तदा रूप्यरूपकभावः सम्भवति, उत्कर्षप्रतीतिस्तु व्यञ्जनयैवेति ध्येयम् । केचित्तु—अवस्थाभेदेनैकस्यैवोत्तरोत्तरोत्कर्षवर्णनेऽपि सारः; यथा—"जम्बीरश्रियमतिलङ्घ्य लीलयैव व्यानम्रीकृतकमनीयहेमकुम्भौ । नीलाम्भोरुहनयनेऽधुना कुचौ ते स्पर्द्धेते खल कनकाचलेन सार्द्धम् ॥" अत्र पूर्वपूर्वावस्थाविशिष्टाभ्यां कुचाभ्यामुत्तरोत्तरावस्थाविशिष्टयोः तयोरेवोत्कर्षः । एकाश्रये क्रमेणानेकाधेयस्थितिरूपपर्य्यायस्तु यद्यप्यत्र प्रतीयते, तथाऽप्युत्कर्षरूपसारस्यापि अनन्यथासिद्धत्वाटङ्गीकार इति वदन्ति; तत्र "प्रथमश्रितकञ्चकोरकाभावश्च लक्ष्मीमनुभूय कन्दुकानाम । अधुना श्रयितुं कुचौ यतेते दयिते ते करिशावकुम्भलीलाम ॥" इति तात्पर्य्योदाहरणेऽपि उत्तरोत्तरोत्कर्षानुभवाद्विशेषश्चिन्त्यः । अयमलङ्कारो वेदेऽपि दृश्यते, तथा च कठवल्लीषु—"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु प्ररा बुद्धिरात्मा बुद्धेर्महान् परः ॥ महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥" इति कौस्तुभकाराः । इदं रुद्रटस्य ।

## लक्ष्मी

क्रमिकप्रस्तावात् क्रमित्कोत्कर्षयुक्तं सारालङ्कारं लक्षयति—**उत्तरोत्तरमिति** । उत्तरोत्तरं यथास्यात्तथा वस्तुनः विशेष्यपदार्थस्य उत्कर्ष ज्यायस्त्वम्, सार उत्तम इत्यर्थान्तरं न भवति । अत एव सारत्वयुक्तत्वात् सारः तन्नामालङ्कार उच्यते अभिधीयते । **अलङ्कारसर्वस्वकृता** तूदारनाम्नैनं व्यपदिष्टम् ।

मालादीपकालङ्कारे यस्य कस्यचिद् गुणरूपस्य क्रियारूपस्य वा धर्मस्य परं परमन्वयः, अत्र तूत्कर्षरूपगुणमात्रसस्येति विशेषरूपत्वेनेति भेदः ।

उत्कर्षश्चात्र श्लाघ्यगुणानामश्लाघ्यगुणानाञ्च। तत्राद्यो मूल एवोदाहृतः। अन्त्यो यथा—'तृणाल्लघुतरस्तूलस्तूलादपि च याचकः। वायुना किं न नीतोऽसौ मामयं याचयिष्यति॥'

स्पष्टञ्चेदमुद्योतादौ। अत्र तूलः पिचुसंज्ञकः, 'अथ पिचुस्तूलः' इत्यमरः।

**राज्य** इति। रुद्रटालङ्कारे पद्यमिदम्। राज्ये वसुधा पृथिवी सारं साराःश्रेष्ठा उत्कृष्टेत्यर्थः स्वच्छन्दं पर्यटनसम्भवात्। अत्र सारमिति सामान्ये नपुंसकम्, मृदु पचतीतिवत्। अत एव 'वृद्धिरादैच्' १/१/१ इति पा. सूत्रे 'शक्यं चान्नेन श्वमांसादिभिरपि क्षुत्प्रति हन्तुम्' इति महाभाष्यम्।

**'सारो बले स्थिरांशे च मज्जिन पुंसि जले धने।**

**न्याय्यं क्लीवं त्रिषु वरे'......इति मेदिनी।**

**'सारो बले स्थिरांशे च न्याये क्लीबं वरे त्रिषु' इत्यमरः।**

वसुधायां पृथिव्यामपि पुरं नगरं सारं श्रेष्ठम् उत्कृष्टमित्यर्थः, सुन्दरत्वात्पर्यटनादावत्यन्तमनुकूलत्वाच्च। पुरेऽपि च सौधं सुधालिप्तप्रसादं सारं श्रेष्ठम्, दर्शनेऽत्यन्तरमणीयत्वात्सुखावासस्थानत्वाच्च। सौधेऽपि तल्पं शय्या सारम्, तस्य सुखप्रदायित्वात्। तल्पेऽपि अनङ्गस्य मदनस्य सर्वस्वं सर्वस्वरूपा वराङ्गना उत्तमस्त्री सारा भोगसुखजनकानां मध्ये परमानन्दरूपत्वादित्याशयः। **आर्याच्छन्दस्तल्लक्षणञ्चोक्तं प्राक्।**

अत्र पूर्वपूर्वापेक्षया वसुधादीनां वस्तूनां यथोत्तरमुत्कर्षात्सारोऽलङ्कारः। अन्यत्राप्ययमलङ्कारो दृश्यते यथा—

**'महतः परमव्यक्तमव्यक्तात्पुरुषः परः।**

**पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः॥'**

## रुचिरा

सारं लक्षयति—१६५ **वस्तुनो** विशेष्यस्य। **उत्तरोत्तरम्। उत्कर्षः। सारः। उच्यते।** अत्र विवृतिकाराः—'केचित्तु 'आश्लोकसमापनमुत्तरोत्कर्षेणायमलङ्कारो भवति। तथात्व एव वैचित्र्यविशेषप्रतीतिः।' इत्याहुः। तन्न। 'लोकस्रजि द्यौर्दिवि चादितेया अप्यादितेयेषु महान् महेन्द्रः। किं कर्त्तुमर्थीयति सोऽपि रागाज्जागर्त्ति कक्षा किमतः परा ते॥' इत्यादौ श्लोकार्धसमाप्तिपर्य्यन्तमुत्कर्षसत्त्वेनाप्यस्यालङ्कारस्य सम्भवात्।" इत्याहुः॥

उदाहरति—**यथा—'राज्ये। वसुधा** पृथिवी। **सारं** वरम्। सामान्ये नपुंसकम् 'मृदु पचती' त्यादिवत्। अत एव—'शक्यं चान्नेन श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम्' इति 'वृद्धिरादैच्।' १/१/१ इति सूत्रे महाभाष्यम्। **वसुधायाम्। पुरं** नागरम्। 'सार'मिति पूर्वतोऽनुषज्यते। **पुरे** नगरे। **सौधं** सुधालिप्तं मन्दिरम्। 'सार'मिति पूर्ववत्। **सौधे। तल्पं** शय्या। 'सार'मिति पूर्ववत्। **तल्पे। अनङ्गसर्वस्वम**नङ्गस्य कामदेवस्य सर्वस्वं तत्स्वरूपा। **वराङ्गना।** 'सार'मिति पूर्ववत्। रुद्रटस्य पद्यम्। आर्य्याछन्दः, तल्लक्षणं चोक्तं प्राक्॥ २५८॥' यथा वा—'तृणाल्लघुतरस्तूलादपि च याचकः। वायुना किन्न नीतोऽसौ मामयं याचयेदिति॥' इति, अत्र अश्लाघ्यगुणानामुत्कर्षः पूर्वत्र श्लाघ्यगुणानामिति विशेषः।

**यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत्।**

यथा—

'उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु

क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्त्रासय।

इत्थं वञ्जुलदक्षिणानिलकुहूकण्ठेषु सांकेतिक-

व्याहाराः सुभग ! त्वदीयविरहे तस्याः सखीनां मिथः ॥'

---

## विवृतिः

यथासंख्यालंकारमाह—**उद्दिष्टानामिति**। अनूद्देशः पश्चादुद्देशः। बहुत्वमत्राविवक्षितम्। तेन 'ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ। पीतनीलाम्बरधरौ शरदम्बुरुहेक्षणौ ॥' इत्यादावप्ययमलंकारः ॥ **उन्मीलन्तीति**। प्रोषितं प्रति तद्रगृहागतस्य कस्यचिदुक्तिरियम्। उन्मीलन्ति स्फुटन्ति वञ्जुला इति कर्तृपदं संकेतगम्यम्। लुनीहि वञ्जुलमुकुलानीति कर्मपदं संकेतगम्यम्। वहति दक्षिणानिल इति संकेतगम्यम्। आवृणुत इति संकेत्यम्। आविशन्ति कुहूकण्ठा इति संकेत्यम्। समुन्त्रासय तानिति संकेत्यम्। वञ्जुलादीनां नामग्रहणे नायिकाया विरहपीडातिशयो भवतीति तत्सखीनामयं सांकेतिको व्यवहारः।

## विवृतिपूर्तिः

**यथासंख्यमिति**। ऊर्ध्व निर्दिष्टाः उद्दिष्टाः पश्चान्निद्र्देशोऽनूद्देशः। ऊर्ध्व निर्दिष्टानामर्थानां पश्चान्निर्दिष्टैरर्थैः क्रमेण संबन्धो यथासंख्यमिति वाक्यार्थः। **वामनादयस्त्विममलंकारं क्रमसंज्ञयाभिदधिरे**। यदाहुः—'उपमेयोपमानानां क्रमसंबन्धः क्रमः' इति ॥

## विज्ञप्रिया

यथासंख्यालङ्कारमाह—**यथासंख्यमिति**। प्रथमोद्दिष्टानां यः प्रथमद्वितीयादिक्रमस्तेन क्रमेण तदन्वितानामनु पश्चाद् उद्देश इत्यर्थः।

**उन्मीलन्तीति**। नायके नायिकविरहकालीनान् तत्सखीनां साङ्केतिकव्यवहारान् कथयन्त्याः कस्याश्चिदुक्तिरयम्। हे सुभग ! त्वदीयविरहे तस्याः सखीनां तत्तत्क्रियया वञ्जुलादित्रये सङ्केतिता मिथः इत्थं व्यवहारा इत्यर्थः। कीदृशा व्यवहारा इत्यत्राह। **उन्मीलन्तीति**। विकशन्तीत्यर्थः। इयमेकस्याः सख्याः प्रथमोक्तवञ्जुलपुष्पकर्तृके उन्मीलने सङ्केतिता प्राथमिकी उक्तिः। अपरसख्याश्च नखैरित्यादिका प्राथमिकी प्रत्युक्तिः। वहतीति द्वितीयोक्तदक्षिणानिलकर्तृके वहने सङ्केतिता इयं संख्या द्वितीयोक्तिः। अपरसख्याश्च चेलाञ्चलेनेत्यादि द्वितीया प्रत्युक्तिः। क्रीडेत्यादिना तृतीयोक्तकुहूकण्ठकर्तृके क्रीडाकाननप्रवेशे संकेतिता सख्यास्तृतीयोक्तिः, वलयेत्यादिका अपरसख्या तृतीयप्रत्युक्तिः। इत्थं प्रथमादिक्रमेणोक्तानां पश्चात् तत्क्रमेणैव तदन्वितानामुद्देशः।

## लोचन

सम्प्रति वाक्यन्यायाश्रिता अलङ्कारा उच्यन्ते। यथासंख्यनामाऽलङ्करणम्। अनूद्देशः अनु पश्चात् निर्देशः। उद्दिष्टामुन्मीलनादिक्रियाणां वञ्जुलादिभिः क्रमेण सम्बन्धः।

## कुसुमप्रतिमा

क्रमिकपदार्थघटितालङ्कारनिर्वचनस्य प्रकृतत्वात् क्रमिकाभिधानघटितमेव यथासंख्यालङ्कारं निर्वक्ति यथेति। "शास्त्रे वृक्षव्यवहारः" इति शुद्धितत्त्वधृतन्यायात् ऊर्द्ध्वं दिष्टा इत्युद्दिष्टाः प्रथममभिहितास्तेषां प्रथम भुक्तानामर्थानामित्यर्थः, क्रमेण पौर्वापर्य्येण, यत्, अनूद्देशः पश्चादुक्तिः, तद्यथासंख्यं नाम अलङ्कार उच्यते।

येन क्रमेणार्थाः प्रथममुक्ताः तेनैव क्रमेण तत्सम्बन्धिनामर्थानामपि पश्चादुक्तिर्यथासंख्यमित्यर्थः। अत्रापि अनुद्देश इति गौणक्रियाया विशेषणत्वात् यदिति क्लीवलिङ्गम्। संख्यामनतिक्रम्य स्थितमिति यथासं-ख्यम्। नित्यनपुंसकोऽयं शब्दः।

उन्मीलन्तीति। प्रवासिनं नायकं प्रति नायिकादूत्या उक्तिरियम्। हे सुभग! पत्नीप्रिय! त्वदीयविरहे तस्यास्तव प्रियतमायाः सखीनां मिथः परस्परम् इत्थम् एवन्धूताः वञ्जुला अशोकमुकुलाः, दक्षिणानिली मलयपवनः, कुहूकण्ठाः कोकिलाश्च तेषु, साङ्केतिकव्याहाराः साङ्केतिकवाक्यानि प्रचलन्तीति शेषः। तथा च उन्मीलन्ति प्रस्फुटन्ति। अशोकमुकुला इति सङ्केतबोध्यम्। इत्यमेकया उक्ते, अपरा आह—नखेर्लुनीहि छिन्धि, यथा नेयं पश्येदिति भावन्च तानशोकमुकुलानिति सङ्केतबोध्यम्। वहति प्रचरति। दक्षिणानिल इति सङ्केतबोध्यम्। इति चैकया भाषिते अन्या आह—क्षौगाञ्चलेन पट्टवसनैकदेशेन आवृणु। तं दक्षिणनिलमिति सङ्केतबोध्यम्। यथा नेमां सस्पृशेदित्याशयः। क्रीड़ाकाननं केलिवनम्, आविशन्ति प्रविशन्ति। कोकिला इति सङ्केतगम्यम्। इत्थञ्चैकया कथिते इतरा ब्रवीति—बलयामां हस्ताभरणानां क्वाणैः शब्दैः, समुत्रासय भीषयित्वा अपसारय। तान् कोकिला-निति सङ्केतबोध्यम्। यथा न रुवन्तीति भावः। वञ्जुलादीनां नामोच्चारणेऽपि तस्या नायिकाया मदनवेदना प्रवर्द्धत इति ते सङ्केतगम्याः प्रतिपादिताः। "वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि" इति मेदिनी।

अत्र उन्मीलन्तीत्यादीनामुद्दिष्टानां क्रमेणैव लुनीहौत्यादौनाममनूद्देशाद्यथासंख्यम्।

## विमला

यथासङ्ख्यामलङ्कारमाह, यथासङ्ख्यमिति।—उद्दिष्टानां, वस्तूनामिति शेषः, वहत्वमत्राविवक्षितं, तेन "ददर्श कृष्णं रामञ्च व्रजे गोदोहनं गतौ। पीतनीलाम्बरधरौ शरदम्बुरूहेक्षणौ॥" इत्यादावप्ययमलङ्कारः ज्ञेयः, क्रमेण—अनु—पश्चात्, यत्—य इत्यर्थः, उद्देशः,—कीर्त्तनं, तत् यथासङ्ख्यम्। अत्रेदं बोध्यम्—उत्—उर्व, दिष्टाः,—निर्दिष्टाः उद्दिष्टाः, अनु—पश्चात्, उद्देशः,—निर्देशः, अनूद्देशः, प्रथम प्रतिपादितानामर्थानां पश्चात् प्रति-पादितैः अर्थैः क्रमेण सम्बन्धः यथासङ्ख्यमिति वाक्यार्थः। प्राचीनास्त्वेनमत्र क्रमालङ्कारमाहुः, तथा च वामनः,— "उपमेयोष सामानां क्रमसम्बन्धः क्रम," इति।

उन्मीलन्तीति।—दूत्या नायकं प्रत्युक्तिरियम्। हे सुभग! त्वदीयविरहे तस्याः,—तव कान्तायाः, सखीनां मिथः,—अन्योऽन्यं, वञ्जुलाः,—वकुलाः, दक्षिणानिलाः,—मलयवाताः, कुह्वकण्ठाः,—कोकिलाः तेषु, इत्थम—एवम्प्रकाराः, साङ्केतिकव्यवहाराः,—इङ्गितोक्तयः, वर्त्तन्ते इति शेषः, यथा ["वञ्जला" इति कर्त्तृपदं सङ्केत-

गम्यम्] उन्मीलन्ति—विकसन्ति, स्फुटन्ति इति यावत्, [इति एकया वञ्जुलान् प्रति उक्ते अपरया] नखैः लुनीहि—छिन्धि, [वञ्जुलमुकुलानीति कर्मपदं सङ्केतगम्यम्] [अत्र दक्षिणानिल इति सङ्केतगम्यम्] वहति [इति एकया दक्षिणानिलं प्रति उक्ते अपरया] क्षौमाञ्चलेन—पट्टवमसनप्रान्तेन, तस्य घनत्वादिति भावः, आवृण—आच्छादय, [अत्र तम् इति सङ्केतगम्यम्] यथा न सखीशरीरं स्पृशेदिति भावः, [अत्र कुहूकण्ठा इति सङ्केत्यम्] क्रीड़ाकाननं—विहारोद्यानम्, आविशन्ति—प्रविशन्ति, [इति एकया कोकिलान् प्रति उक्ते अपरया] बलय-क्वाणैः,—कङ्कणध्वनिभिः, समुत्रासय—ताड़य, [अत्र तान् कोकिलान् इति सङ्केत्यम्] येन ते न कुहूरवमातन्वीरन्निति भावः, इति उच्यते। वञ्जुलादीनां नामग्रहणे नायिकायाः विरहपीडाऽतिशयो भवति इति तत्सखीनामयं साङ्केतिको व्यवहारः, सङ्केतश्चात्र योग्यकर्त्ताद्यध्याहारः इति बोध्यम्। अत्र उद्दिष्टानां वस्तूनां पश्चान्न क्रमेण पुनरुद्देशः। शार्दलविक्रीड़ितं वृत्तम्। अलङ्कारसर्वस्वकारस्तु "उद्दिष्टानामर्थानां क्रमेणानूद्देशो यथासङ्ख्यम्" इति सूत्रयित्वा अन्ये त्विममलङ्कारं क्रमसंज्ञयाऽभिदधिरे। तच्च शाब्दमार्थं च द्विधा।—शाब्दं यथासंङ्ख्य यथा—"कज्जलहिमकनकरुचः मुपर्णवृषहंसवाहनाः शं वः। जलनिधिगिरिकमलस्था हरिहरकमलासना ददतु॥"—आर्थं यथा—"लावण्यौकसि सप्रतापगरिमण्ग्रेसरे त्यागिनां देव! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा। इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं चिन्तारत्नमहो! वृथैव किममौ सृष्टाः कुलक्ष्माभृतः?"॥ इति।

## लक्ष्मी

क्रमिकप्रकरणादेव क्रमिकप्रतिपादनयुतं यथासंख्यालङ्कारं लक्षयति—**यथासङ्ख्यमिति**। उद्दिष्टानां प्रथमं निर्दिष्टानां पदार्थानां क्रमेण उद्देश्यानुपूर्व्येण प्रथमस्य प्रथमेन द्वितीयस्य द्वितीयेन तृतीयस्य तृतीयेनेत्येवमित्यर्थः, यत् अनूदेशः पश्चान्निर्देशः तत् सङ्ख्यामनतिक्रम्यस्थितमिति यथासङ्ख्यं तन्नामालङ्कार 'उच्यते' इति पूर्वतोऽनुवर्तते। तथाच येन क्रण यावत्सङ्ख्याका ये प्रथममुद्दिष्टास्तेनैव क्रमेण पश्चादपि तेषां तावत्सङ्ख्याकेषु पदार्थेषु सम्बन्धो यथासङ्ख्यनामालङ्कार इति निष्कर्षः। यद्यपि कविप्रतिभानिर्मितत्वस्यालङ्कारताजीवातोर्लेशतोऽभावादस्य नालङ्कारत्वम्, तथापि एकत्र पद्ये बहूनां क्रमान्वये वैचित्र्यादलङ्कारत्वेनोक्त इत्युद्योते स्पष्टम्। अत्र बहूनामित्यत्र बहुत्वमविवक्षितम्, तेन—

**'ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ।**

**पीतानीलाम्बरधरौ शरदम्बुरुहेक्षणौ॥'**

इत्यादावप्ययमेव।

उदाहरति—**उन्मीलन्तीति**। नायके नायिकाविरहकालीनात् तत्सखीनां साङ्केतिकव्यवहारान् कथयन्त्या नायिकादूत्या उक्तिरियम्। हे सुभग स्त्रीप्रिय! त्वदीयविरहे तव वियोगे तस्या मृताप्रायत्वेन त्वद्वियोगेन वा हतभागाया तव प्रियतमायाः सखीनां सहचरीणां मिथः अन्योन्यम् इत्थम् एवम्भूताः, वञ्जुला नकुलाः (अशोकमुकुलाः) 'वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि इति मेदिनी, दक्षिणानिलश्चन्दनसुगन्धितो वायुः कुहूकण्ठाः कोकिलाश्च तेषु विषयसप्तमीयम्, साङ्केतिकव्यवहारा इङ्गितमात्रेण वाक्यानि प्रचलन्तीति शेषः। तथा च उन्मीलन्ति प्रफुल्लन्ति वञ्जुला इति शेषः इत्थमेकयोक्तम् ततः नखैः कराग्रैः लुनीहि छिन्धि तत् पुष्पाणि इति शेषः, इति द्वितीययोक्तम्; एषामवलोकनेनैषा यथा मदनार्पिता न लभेतेत्याशयः। वहति वाति दक्षिणानिल इति शेषः, ति **तृतीययोक्तम्**; क्षौमाञ्चलेन पट्टवस्त्रैकभागेन आवृणु प्रतिबधान तमिति शेषः, अन्यथाऽस्य स्पर्शेन निधनत्वं प्राप्स्यतीत्यभिप्रायः,

इति **चतुर्थ्यां** उक्तम्; क्रीडाकाननं खेलार्थं निर्मितमुद्यानम् आविशन्ति प्रविशन्ति 'कोकिला' इति शेषः, इति **पञ्चम्योक्तम्**; वलयानां हस्ताभूषणानां क्वाणैः शब्दैः समुत्त्रासय त्रासयित्वा आपसारय तान् कोकिलानिति शेषः, यदि तेषां कलं श्रोष्यति तदा विपस्यत इति भावः, इति षष्ठयोक्तम् । **शारर्दूलविक्रीडितं** छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्र उन्मीलन्तीत्यादीनामुद्दिष्टानां क्रमश एव लुनीहीत्यादीनां पश्चादुक्तेर्यथासङ्ख्यालङ्कारः ।

## रुचिरा

यथासङ्ख्यं लक्षयति—१६६ **यत्** । **उद्दिष्टानां** निर्दिष्टानां वस्तूनाम् । **क्रमेणोद्देशानुपूर्व्येण** । **अनूद्देशः** पश्चान्निर्देशः । तत्-**यथासङ्ख्यं** सङ्ख्यामनतिक्रम्येति तथोक्तं, तन्नामाऽलङ्कारः । पूर्वं निर्दिष्टानां वस्तूनां पुनर्निर्दिष्टैर्वस्तुभिः क्रमेण सम्बन्धो यथासङ्ख्यालङ्कार इति भावः । अत्राहुः—'यद्यपि नात्रालङ्कारोपस्कारकत्वं तथाऽपि बहूनां क्रमेण सम्बन्धस्य तत्तया स्वीकारोऽभ्युपगन्तव्यः । यथा कारणमालाऽऽदौ ।' इति ॥ १३२ ॥

उदाहरति—**यथा**—'**उन्मीलन्ति** प्रफुल्लन्ति 'वञ्जुला' इति शेषः (इत्येकयोक्तम्) । **नखैः** । **लुनीहि** छिन्धि 'तत्पुष्पाणी'ति शेषः (इति द्वितीयया) । एषां दर्शनं एषा मदनार्दिता यथा न लभेतेति भावः । **वहति** वाति 'दक्षिणानिल' इति शेषः (इति तृतीयया) । **क्षौमाञ्चलेन** पट्टवस्त्रेण । **आवृणु** प्रतिबधान 'त'मिति शेषः । अन्यथाऽस्य स्पर्शेन विपत्स्यतेऽसाविति भावः (इति चतुर्थ्या) । **क्रीडाकाननं** क्रीडाऽर्थं निर्मितमुद्यानम् । **आविशन्ति** प्रविशन्ति 'कोकिलाः' इति शेषः (इति पञ्चम्या) । **वलयक्वाणै**र्वलायानां कङ्कणानां क्वाणाः शब्दास्तैः । **समुत्वासय** । यदि तेषां कलं श्रोष्यति तदेयं सद्यो विपत्स्यत इति भावः (इति षष्ठयोक्तम्) । हे **सुभग** ! **इत्थम्** । **त्वदीयविरहे** तव विरहे । **तस्या** मृतप्रायत्वेन त्वद्विरहेण वा हतभागाया इति भावः । **सखीनाम्** । **मिथः** । **वञ्जुल-दक्षिणानिल-कुहूकण्ठेषु** । वञ्जुला बकुलाः । दक्षिणानिलश्चन्दनसुगन्धितो वायुः । कुहूकण्ठाः कोकिलाः । विषये सप्तमीयम् । **साङ्केतिकव्याहारा** इङ्गितमात्रेण वचनानि । 'भवन्ती'ति शेषः । अत्रो'न्मीलन्ती' त्याद्युक्त्वा 'वञ्जुले'त्यादिना पश्चान्निर्देशः । शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक् । नायकं प्रति दूत्या उक्तिरियम् ॥ २५९ ॥'

**क्वचिदेकमनेकस्मिन्नेकं चैकगं क्रमात्॥ ७९ ॥**

**भवति क्रियते वा चेत्तदा पर्याय इष्यते।**

क्रमेण यथा—

**'स्थिताः क्षणं पक्ष्मसु ताडिताधराः**

**पयोधरोत्सेधनिपातचूर्णिताः।**

**वलीषु तस्याः स्खलिताः प्रपेदिरे**

**क्रमेण नाभिं प्रथमोदबिन्दवः॥'**

---

## विवृतिः

संकेतश्चात्र योग्यकर्त्राद्यध्याहारः॥ पर्यायालंकारमाह—**क्वचिदेकमिति**। भवति स्वयं भवति। क्रियते परेण क्रियते॥ **स्थिताः क्षणमिति**। तस्याः पार्वत्याः। तत्र प्रथमोदबिन्दुरूपमेकं वस्तु पक्ष्मादावनेकत्र क्रमेण स्वयं भवति॥

## विज्ञप्रिया

पर्यायालङ्कारमाह—**क्वचिदेकमिति**। क्वचित् श्लोके एकमनेकस्मिन् क्रमात् भवेत् कारणक्रमात् क्रियते वा चेत् तथा अनेकमेकगमेकगामि वा क्रमात् भवति क्रियते वा चेत् तदा पर्याय इष्यते इत्यर्थः।

तत्रैकस्या अनेकत्र भवनमाह—**स्थिता** इति। तपस्यन्त्याः पार्वत्याः अङ्गेषु नवमेघजलपतनक्रमवर्णनमिदम्। प्रथमोदबिन्दवः क्रमेण तस्या नाभिं प्रपेदिरे। तत्क्रममाह—**स्थिता** इति। पक्ष्मणां निबिडत्वेन तत्र क्षणं स्थिताः ततस्ते ताडिताधराः। अधरस्य कोमलत्वेन जलबिन्दुभिरपि ताडनम्। पयोधरोत्सेधः। कृद्विहितभावत्वेनोच्छूनौ पयोधरौ। तयोः कठिनत्वेन तत्र निपातेन ततः चूर्णिताः। तत्र वलीषु स्खलिताः तासामुच्चनीचत्वान्नाभेर्गभीरत्वेन ततो नान्यत्र गमनम्। अत्र स्वयंभवनम्।

## लोचन

स्थिताः क्षणमित्यादावेके प्रथमोदबिन्दवोऽनेकेषु पक्ष्मादिषु क्रमेणा भवन्।

## कुसुमप्रतिमा

क्रमिकस्य प्रकृतत्वात् क्रमप्रयुक्तमेव पर्य्यायालङ्कारं लक्षयति क्वचिदिति। क्वचित् एकं वस्तु, क्रमादनेकस्मिन् स्थाने चेद्यदि भवति स्वयमेवावस्थितं भवति, वा अथवा अन्येन अवस्थितं क्रियते; क्वचिच्च अनेकं वस्तु, क्रमादेकगम् एकस्थानस्थितं चेद्भवति, किं वा अन्येन क्रियते; तदा पर्य्यायो नाम अलङ्कार इष्यते। अतएवायं चतुर्विधः।

द्वितीयप्रकारविशेषालङ्कारेण सह अस्य भेदस्तु तत्रैव टीकायामुक्तः, अत्र च वृत्तौ वक्ष्यते। पर्य्यायः क्रम एव, तद्घटितत्वादस्य पर्य्याय इत्येव संज्ञा।

एकस्य वस्तुनः अनेकस्मिन् स्थाने स्वयमवस्थितभवने उदाहरति स्थिता इति। कुमारसम्भव पञ्चमसर्गस्थमिद पद्यम्। प्रथमा उदबिन्दवो वृष्टिजलबिन्दवः, तस्याः पार्वत्याः, पक्ष्मसु नयनलोभसु क्षणं स्थिताः सन्तः। एतेन पक्ष्मणामतिघनत्वं व्यज्यते। परञ्च ताड़ितः पतनेन पीड़ितः अधरो यैस्तादृशाः सन्तः अधरे पतन्त इत्यर्थः। एतेनाधरस्य कोमलत्वं व्यज्यते, अनन्तरञ्च पयोधरयोः स्तनयोः उत्सेधे उपरिभागे निपातेन पतनेन चूर्णिता जर्जरीभूताः सन्तः। एतेन पयोधरयोरत्यन्तकाठिन्यं द्योत्यते। ततश्च वलीषु उदरपार्श्वस्थानिम्नगभरेखासु स्खलिताः प्रच्युताः सन्तः। अनेन तासां निम्नोन्नतत्वं सूच्यते। तदनु च चिरेण बहुकालेन अनेकप्रतिबन्धकत्वादिति भ्रवः। नाभिं प्रपेदिरे प्रविष्टाः। एतेन च नाभिर्गभीरत्वं ध्वन्यते।

अत्र जलबिन्दुरूपैकवस्तुनः क्रमात् पक्ष्मादावनेकस्मिन् स्थाने स्वयमेवावस्थितभवनात् पर्य्यायालङ्कारः।

मल्लिनाथेन तु "अत्र प्रतिपदमर्थवत्वात् परिकरालङ्कारः" इत्युक्तम्। तदपि युक्तमेव ताड़िताधरा इत्यादिविशेषाभिप्रायेण प्रयुक्त्वात्। तेनैतयोरुभयोरेकाश्रयानुप्रवेशरूपः सङ्कर एव पर्य्यवसित इत्यवधेयम्।

## विमला

पर्य्यायालङ्कारमाह, क्वचिदिति। कृथित् एकं, वस्तु इति भावः, क्रमात् अनेकस्मिन, वस्तुनि इति शेषः, भवति— स्वंय भवति इत्यर्थः वा क्रियते परेण कियते इति भावः, चेत तथा क्वचित् अनेकं, वस्तु इति शेषः, क्रमात एकगं भवति वा क्रियते चेत तदा पर्य्याय इष्यते।

एकस्य वस्तुनोऽनेकत्र भवरूपं प्रथमं पर्य्यायमुदाहरति, स्थिता इति।—समाध्यवस्थायां पार्वत्याः शरीरोपरि पतितस्य वृष्टिसलिलस्य स्वभाववर्णनमिदम्। प्रथमे उदविन्दवः,—वृष्टिजलकणाः, ["मन्थोदन—" (६/३/६० पा.) इत्यादिना उदकशब्दस्य उदादेशः] तस्याः,—पार्वत्याः इत्याशयः, पक्ष्मसु—नेत्रलोमसु, क्षणं स्थिताः, ["स्थिताः" इत्यनेन पक्ष्मणामतिसान्द्रत्वं, "क्षणम्" इति स्नैग्ध्यञ्च गम्यते] ततः ताड़ितः,—पतनेन क्लेशितः, अधरः यैः तथाभूताः, अधरपतिता इत्यर्थः, [एतेन अधरस्य मार्दवं गम्यते] ततः पयोधरयोः,—स्तनयोः, उत्सेधे—उच्छ्राये, निपातेन चूर्णिताः,—खण्डिताः, [एतेन स्तनयोः काठिन्यं व्यज्यते] ततः बलीषु—त्रिबलीषु, स्खलिताः,—निपतिताः सन्तः, निम्नोन्नतत्वादिति भावः, क्रमेण—आनुपूर्व्येण, [अत्र "चिरेण" इति पाठे—विलम्बेन, प्रतिबन्धबाहुल्यादिति भावः] नाभिं प्रपेदिरे—प्रापुः। [एतेन नाभेः सुगभीरत्वं गम्यते]। अत्र एकं प्रथमोदबिन्दुरूपं वस्तु पक्ष्मादावनेकत्र क्रमेण स्वयं भवति। यत्तु मल्लिनाथेन—"अत्र प्रतिपदमर्थवत्त्वात् परिकरालङ्कारः" इत्युक्तं, तदयुक्तम्, "उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः" इत्याद्युक्त्या विशेष्यपदानां साभिप्रायविशेषणानुगततया उक्तावेव परिकरस्याङ्गीकारात्, अत्र च "बिन्दवः" इति विशेष्यपदस्य "ताड़िताधराः" इत्यादिविशेषणानां "प्रपेदिरे" इयत्राभिप्रायशून्यत्वात्। वंशस्थबिलं वृत्तम्। कुमारसम्भवस्येदं पद्यम्।

## लक्ष्मी

क्रमिकप्रस्तावात् क्रमघटितमेव पर्यायालङ्कारं निरूपयति—**क्वचिदित्यादिना**। क्वचित् कुत्रापि एकं वस्तु, क्रमात् क्रमशो न तु यौगपद्येन, अनेकस्मिन् स्थाने चेद् यदि भवति स्वयमेव स्थितं भवति, वा अथवा अन्येन

क्रियते अवस्थितं विधीयते; क्वचिच्च अनेकं वस्तु, क्रमादेकगम् एकस्मिन् स्थाने अवस्थितं चेद् भवति अथवा अन्येन क्रियते; तदा पर्यायः क्रम एव तद्प्रयुक्तत्वात् पर्यायो नामालङ्कारः इष्यते स्वीक्रियते। क्रमादिति कथनेन समुच्चयस्तथा द्वितीयप्रभेदो विशेषश्च व्यवच्छिद्यते। तथा चायम्—एकस्य वस्तुन अनेकस्मिन् स्थाने स्वयमेवावस्थितभवने एकः, अनेकस्य वस्तुनः स्वयमेवैकस्थानस्थभवने द्वितीयः, एकस्यानेकस्मिन् विधाने तृतीयः, अनेकस्य एकत्रविधाने चतुर्थ इत्येवं चतुर्विधः पर्यायः।

तत्राद्योदाहरणं दर्शयति—**स्थिता** इति कुमारसम्भवे पञ्चमसर्गे 'महेश्वर एव मे पाणिं गृह्णातु' इति सङ्कल्प्य तपस्यन्त्याः पार्वत्या समाधौ धर्मान्ते कदाचित् निपततां नवमेघजलबिन्दूनां पतनक्रमवर्णनपूर्वकं समाधिसौन्दर्यबोधिका कवेरुक्तिरियम्। प्रथमाः प्रथमं निपतिताः उदविन्दवः मेघजलविन्दवः न तु उदधाराः, तस्याः पार्वत्याः पक्ष्मसु नयनलोमसु क्षणं न तु दीर्घकालं स्थिताः विद्यमानाः सन्तः, परञ्च ताडितो निपतनेन पीडितः अधरो यैस्ते तथोक्ताः सन्तः अधरे निपतन्त इत्यर्थः, अनन्तरञ्च पयोधरयोः कुचयोः उत्सेध उच्चत्वं तत्र निपातेन पतनेन चूर्णिताः विश्रृङ्खलिताः सन्तः, ततश्च वलीषु उदरपार्श्वस्थत्रिरेखासु स्खलिताः स्खलनं प्राप्ताश्च सन्तः, तदनन्तरञ्च चिरेण बहोः समयात् बह्ववरोधकत्वादित्याशयः। नाभिं प्रपेदिरे प्रापुः प्रविविशुरित्यर्थः।

अत्र च 'स्थिता' इत्यनेन नयनलोम्नामतिसान्द्रत्वम्, 'क्षणम्' इत्यनेन तेषां कोमलत्वञ्च, 'ताडिताधरा' इत्यनेन अधरमृदुत्वम्, 'पयोधर' इत्यादिना कुचयोः काठिन्यम्, 'वलीषु तेषां स्खलनपातोक्त्या वलीनां निम्नोन्नतत्वम्, 'चिरेण' इति च बहुकालेन प्रापणात् वलीनांम व्यासः, नाभौ प्रवेशोक्त्या तस्यातिगभीरत्वञ्च व्यज्यते। एतेन—नासाग्रन्यस्तनयनः संवृताक्ष्यः सुनिश्चलः ध्यातीत मनसा देवमुरो निष्टभ्य चाग्रतः।

इति समाहितानामवस्थोक्तरीत्या धर्मतप्तशरीरोपरि सुखपारतन्त्र्यसम्भ्रमहेतावपि अविहताभगवत्याः समाध्यवस्था च प्रदर्शिता भवति। **वंशस्थं** छन्दस्तल्लक्षणन्तूक्तं प्राक्।

अत्र वृष्टिबिन्दुरूपैकवस्तुनः क्रमशः पक्ष्मादावनेकस्मिन् स्थाने स्वयमेवावस्थितिदर्शनात्पर्यायः। यद्यत्र प्रतिपदमर्थवत्वात् परिकरालङ्कारोऽपीति विभाव्यते तदोभयोरेकश्रयानुप्रवेशरूपः सङ्कर एवेति भावुकाः।

## रुचिरा

पर्य्यायं लक्षयति—१६७ **चेत्**। **क्वचित्**। **एकं** 'वस्त्वि'ति शेषः। **अनेकस्मिन्**। 'भवति क्रियते वा' इति परेणान्वयः। **अनेकम्** 'वस्त्वि'ति शेषः। च। **एकगमे**कनिष्ठम्। **क्रमात्** नतु यौगपद्येन (अत एव समुच्चयादौ 'यौगपद्येने'ति निवेशनीयम्)। **भवति**। **क्रियते**। **वा**। **तदा**। ***पर्य्यायः*** क्रमिकः, अतस्तन्नामालङ्कारः। **इष्यते** स्वीक्रियते। अत्र 'क्रमेणे'ति समुच्चयो, द्वितीयप्रभेदो विशेषश्च व्यवच्छिन्ते। इदम्बोध्यम्-एकमनेकगं भवतीत्येकः, अनेकमेकगं भवतीति द्वितीयः, एकमनेकगं क्रियते इति तृतीयः, अनेकमेकगं क्रियत इति चतुर्थोऽयं पर्यायः। एवं चास्य चत्वारो भेदः। इति ॥ १३३ ॥

उदाहर्त्तुमुपक्रममाण आह—**क्रमेणे**त्यादि। स्पष्टम्। '**स्थिता** इत्यादि।

'**प्रथमोदबिन्दवः** प्रथमाः प्रथमं निपतिता उदबिन्दवो वृष्टिजलबिन्दवः, नतु उदधारा इति तथोक्ताः। **तस्या** घोरतपः कर्मणि। द्रढिलतया प्रसिद्धाया भगवत्याः पार्वत्याः। **क्षणं** नतु दीर्घकालम्। **पक्ष्मसु**। **स्थिताः** पक्ष्मणां श्लक्ष्णत्वेन 'क्षणं' घनतयाऽऽधारौचित्येन वा स्थिततया 'स्थिता' इति चोक्तम्। अथ—**ताडिताधरास्ता**डितोऽधरो यैस्तथाभूताः, एतेनाधरस्य म्रदिमा द्योतितः, प्रपतनक्रियास्वाभाव्यं च दर्शितम्। **पयोधरोत्सेधनिपातचूर्णिताः**

पयोधरयोः कुचयोरुत्सेध उच्चत्वं तत्र निपातस्तेन चूर्णिताः। एतेन काठिन्यं द्योतितम्। अत एव—**वलीषु** त्रिवलीमध्ये। **स्खलिताः** स्खलनं प्राप्ताः सन्तः। **चिरेण** बहोः कालात्। **नाभिम्**। **प्रपेदिरे** प्रापुः। कुमारसम्भवस्येदं पद्यम्। भगवत्याः पार्वत्या 'महेश्वर एव मे पाणिं गृह्णातु'इति तपः प्रवृत्तायाः समाधौ ग्रीष्मान्ते कदाचित् निपततां वृष्टिबिन्दूनां पतनक्रमनिर्देशपूर्वकं समाधिसौन्दर्य्यप्रत्यायिका कवेरियमुक्तिः। अत्र बिन्दुरूपमेकं वस्त्वनेकपक्ष्मादिगतत्वेन वर्णितमिति यथोक्तोऽलङ्कारस्त्वस्त्येव, किन्तु-'स्थिता'इत्यनेन पक्ष्मणामविरलत्वं, 'क्षण'मित्यनेन तेषां मसृणत्वं च, 'ताडिताधरा' इत्यनेनाधरमृदुत्वम्, 'पयोधरो.' इत्यादिना कुचयोः काठिन्यम्, वलीषु तेषां स्खलनपातोक्त्या वलीनां विस्पष्टत्वं, नाभौ प्रवेशोक्त्या तस्यातिगभीरत्वं, 'चिरेणे'ति च तत्र प्रवेशमान्थर्य्योक्त्या वलीनां व्यासश्चेति सौन्दर्य्याभिव्यञ्जनम्, 'नासाऽग्रन्यस्तनयनः संवृतास्यः सुनिश्चलः। ध्यायीत मनसा देवमुरो विष्टभ्य चाग्रतः॥' इति समाहितानामवस्थानोक्तदिशा तप्तदेहोपरि सुखपारवश्यसम्भ्रमहेतावपि अविहता देव्याः समाध्यवस्था चावेद्यते। तथा हि—तत्र, 'पक्ष्मसु स्थिता' इत्यनेन नासाऽग्रन्यस्तनयनत्वात्मकधर्मनिमीलनं नयनयोरभिव्यज्यते, सर्वथा निमीलने तेषामधोऽग्रतया, सर्वथोन्मीलने तेषामूर्द्धावग्रतया तेषु जलबिन्दूनां स्थित्यसम्भवात्, आस्ये प्रवेशानुक्त्याऽधरोष्ठे निपत्य ततस्तेषां च्युत्युक्त्या संवृतास्यत्वं व्यज्यते। ततश्च्युतानां तेषां स्तनोत्सेधनिपतनादिवर्णनयोरोविष्टम्भः, अलसवदनावस्थाने हि स्तनयोरन्तः सङ्कुचिताकारतया तदुत्सेधयोश्च्युतिर्न स्यात्। कथञ्चित्तयोः पतित्वा वलित्रयं प्राप्तानामपि तिर्य्यगेव गमनं स्यात्, न नाभिदेशप्रतिपत्तिः। नाभौ च संवृतायां प्रवेशो न स्यात्। पक्ष्माधरादिच्युतिक्रमोक्त्या च निश्चलत्वमभिव्यज्यते वदनादिसञ्चलने पक्ष्मच्युतानां तेषामधरपयोधरादिपातसम्भवात्। इति बोध्यम्। वंशस्थविलं वृत्तम्, एतल्लक्षणं चोक्तं प्राक्॥ २६०॥'

**'विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः ।**
**वृककाकशिवास्तत्र धावन्त्यरिपुरे तव ॥'**

---

## विवृति

अनेकस्यैकत्र भवनमुदाहरति—**विचरन्तीति**। अत्रैकस्मिन्नरिपुरे विलासिनीनां वृकादीनां चानेकानां (केषां) क्रमेण भवनम् ॥

## विज्ञप्रिया

अनेकेषामेकत्र भवनं त्वाह—**विचरन्तीति** । यत्र तवारिपुरे इत्यन्वयः । अत्र विलासिनी वृकादीमेकत्रारि-पुरे भवनम् ।

## लोचन

एवं विलासिन्यो वृकादयश्चानेकविधा अरिपुरे ।

## कुसुमप्रतिमा

अनेकस्य वस्तुनः स्वयमेकस्थानस्थभवने उदाहरणमाह विचरन्तीति । कस्यचित् राज्ञः स्तुतिरियम् । हे राजन् ! यत्र तव अरिपुरे, श्रोणिभरालसा नितम्बभारेण मन्दगमनाः, विलासिन्यः शत्रुरमण्यो विचरन्ति, अतीतसामीप्ये वर्त्तमाना, तेन विचरितवत्य इत्यर्थः । तत्र अरिपुरे इदानीं वृक काक-शिवा व्याघ्रकाक श्रृगालाः, धावन्ति वेगेन सञ्चरन्ति । भवतो भयेन पलायितेषु शत्रु तदीयं पुरमिदानीं महारण्यतया परिणतमित्याशयः ।

अत्रानेकरूपाणां शत्रुविलासिनीनां वृककाकशिवानाञ्च एकस्मिन्नरिपुरे क्रमेण भवनात् पर्य्यायलङ्कारः ।

## विमला

अनेकस्यैकत्र भवनमुदाहरति, विचरन्तीति ।—राजस्तुतिरियम् । हे राजन् ! इति अध्याहार्य्यं, तव अरिपुरे—शत्रुनगरे, यत्र श्रोणिभरेण—नितम्बभारेण, अलसाः,—मन्थरगामिन्यः, विलासिन्यः तत्र इदानीं वृकका-कशिवाः,—शार्दूलवायसश्रृगालाः, विचरन्ति, तव शत्रूणां निधनात् तन्नगरं वनीभूतमिति भावः । अत्र एकस्मिन्न-रिपुरे विलासिनीनां वृकादीनां चानेकानां क्रमेण भवनम् इति ज्ञेयम् । पथ्यावक्त्रं वृत्तम् ।

## लक्ष्मी

अथ द्वितीयं पर्यायमुदाहरति—**विचरन्तीति** । राज्ञः प्रशंसेयम् । हे राजन् ! यत्र तव अरिपुरे शत्रुनगरे, श्रोण्यो नितम्बाः तस्या भरेण भारेण अलसा मन्दगमनाः विलासिन्यः रिपुस्त्रियः विचरन्ति भ्रमितवत्यः भूतसामीप्ये वर्तमानत्वम्, तत्र शत्रुनगरे इदानीं वृका व्याघ्राः काकाः करटाः शिवाः जम्बूकाः एषां द्वन्द्वः धावन्ति त्वरितं सञ्चरन्ति । शत्रूणां भवता विनाशितत्वात् तन्नगरं सम्प्रति वनीभूतमिति भावः ।

अत्रानेकरूपाणां शत्रुरमणीनां वृकादीनाञ्च एकत्र शत्रुनगरे यथाक्रममवस्थानात् पर्यायः ।

## रुचिरा

**'यत्र** यस्मिंस्त्वदरिपुरे । **श्रोणिभरालसाः** श्रोण्यो भरेणालसाः । **विलासिन्यः । विचरन्ति** । 'स्मे' ति शेषः । **तत्र** तस्मिन् । **तव** । **अरिपुरे** शत्रूणां स्थाने । **वृककाकशिवा** वृकाश्च काकाश्च शिवाः शृगाल्यश्चेति तथोक्ताः । 'शिवा गौरी फेरवयोः' इत्यमरः । धावन्ति । शत्रूणां त्वया समापितत्वात्तन्नगरं वनीभूतमिति भावः । राज्ञः स्तुतिरियम् । अत्र विलासिनीनां वृकादीनां चैकत्र क्रमेण सम्भवो वर्णितः ॥ २६१ ॥'

**'विसृष्टरागादधरान्निवर्तितः**
**स्तनाङ्गरागादरुणाच्च कन्दुकात्।**
**कुशाङ्कुरादानपरिक्षताङ्गुलिः**

---

## विवृतिः

एकस्यानेकत्र करणमुदाहरति—**विसृष्टरागादिति**। अत्रैकः करस्तपसः पूर्व रागादानार्थमधरे क्रीडार्थ कन्दुके कृतः। तपः काले तु कुशाङ्कुरेऽक्षसूत्रे च कृत इत्ययं क्रमः॥

## विज्ञप्रिया

एकस्यानेकत्र परेण क्रियमाणत्वमाह—**विसृष्टेति**। पार्वत्यास्तपस्यारम्भवर्णनमिदम्। तया करोऽत्रसूत्रे प्रणयीकृतः, व्यापृतः। कुशाङ्कुरेत्यादि विशिष्टश्च कृत इत्यर्थः। तथा चात्र विधेयद्वयम्। चार्थस्तु गम्यः। कीदृशः- अधरान्निवर्तितः। यतो विसृष्टरागाद् अधरे रागदानार्थमेव प्रागधरे करदानाद् कन्दुकक्रीडाभावाच्च ततो निवर्तनम्। स्तनाङ्गेत्यादिविशेषणं च स्वरूपकथनमात्रम्। स्तनेऽङ्गरागोपीदानीं च न दीयते इत्येत्सूचनार्थं वा। अत्र तयोः क्रियमाणत्वम्।

## लोचन

विसृष्टेत्यादावेकः करोऽधरादौ।

## कुसुमप्रतिमा

एकस्य अनेकस्मिन् करणे लक्ष्यं दर्शयति विसृष्टेति। इदमपि कुमारसम्भवीयपञ्चमसर्गस्थं पद्यम्। तथा पार्वत्या, विसृष्टस्तपोविरुद्धत्वात् परित्यक्तः रागोऽलक्तकादिना रञ्जनं यस्य तस्मात्तादृशात्, अधरादधरोष्ठात्, निवर्त्तितः, प्रत्यावर्त्तितः, स्तनयोरङ्गरागात् कुङ्कमद्यङ्गरागद्रव्यलेपनात् निवर्त्तितः, तथा अरुणात् स्वभावती रक्तवर्णात् कन्दुकात् खेलोपकरणगुंटकाविशेषाच्च निवर्त्तितः, करः स्वकीयो हस्त, अधुना कुशाङ्कुराणां क्षुद्रक्षुद्रदर्भाणम् आदानेन यज्ञादिसाधनार्थं सञ्चयनेन परिक्षता अङ्गुलयो यस्य तथाभूत एवम् अक्षसूत्रप्रणयी जपमालायामासक्तः कृतः।

अत्र एकस्य हस्तस्य अधरे, स्तनयोः, कन्दुके, कुशाङ्कुरे, अक्षसूत्रे च क्रमेण करणात् पर्य्यायालङ्कारः।

## विमला

एकस्यानेकत्र करणमुदाहरति, विसृष्टेति।—तथा—पार्वत्या इत्यर्थः, विसृष्टः,—त्यक्तः, व्रतविरुद्धत्वादिति भावः, रागः,—रञ्जनं यस्य तथोक्तात् अधरात्—अधरोष्ठात्, निवर्त्तितः,—परावर्त्तितः, रागक्रियात्यागेन निष्प्रयोजनत्वादिति भावः, तथा स्तनयोरङ्गरागेण अरुणितात्—रक्तीकृतात्, पतनसमये तस्य स्तनयोः उपरोधादिति भावः, कन्दुकात्, च, निवर्त्तितः इति शेषः, करः,—पाणिः, इदानीं कुशाङ्कुराणाम् आदानेन—अयनेन, परिक्षताः,—व्रणिताः, अङ्गुलयः यस्य तादृशः, तथा अक्षसूत्रप्रणयो—जपमालानिरतः, कृतः। अत्र एकः करः तपसः पूर्वं

रागादानार्थमधरे, क्रीड़ार्थं कन्दुके कृतः, तपः काले तु कुशाङ्कुरेऽक्षसूत्रे च कृतः इत्ययं क्रमः ज्ञेयः । वंशस्थविलं छन्दः । कुमारसम्भवस्येदं पद्यम् ।

## लक्ष्मी

अथ तृतीयं पर्यायमुदाहरति—**विसृष्टेति** । इदमपि कुमारसम्भवे पञ्चमसर्गे पार्वत्यास्तपस्यारम्भवर्णनम् । तया पार्वत्या, विसृष्टः तपः प्रतिकूलत्वात् परित्यक्तः रागः ताम्बूलचर्वणादिना रञ्जनं यस्य तस्मात् तथाविधात्, अधरात् अधरोष्ठात् निवर्तितः प्रत्यावर्तितः, स्तनयोः कुचयोः अङ्गरागात् कुङ्कुमाद्यङ्गरागद्रव्यलिम्पनात् निवर्तितः तथा अरुणात् प्रकृत्या रक्तवर्णात् कन्दुकात् गेन्दुकाच्च निवर्तितः करः स्वीयपाणिः सम्प्रति कुशाङ्कुराणाम् अतिलघुबर्हीणाम् आदानेन तपस्यार्थं संग्रहणेन परिक्षता अङ्गुलयः करशाखा यस्य तादृशः, इत्थम् अक्षसूत्राणां रुद्राक्षमालारूपतन्तूनां प्रणयी प्रेमी कृतो विहितः । **वंशस्थं** छन्दस्तल्लक्षणञ्चोक्तं प्राक् ।

अत्र एकस्य करस्य अधरे, स्तनयोः, कन्दुके, कुशाङ्कुरे, अक्षसूत्रे च यथाक्रमं विधानात् पर्यायः ।

## रुचिरा

यथा वा—'मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति । अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥' अत्र खलवचसि सुधाहालाहलयोः क्रमेण निर्देशः । '**विसृष्टरागाद्** विसृष्टस्त्यक्तो । व्रतविरोधितया परिहृतो रागस्तामबूलचर्वणेन रञ्जनं यस्य तथोक्तात् । **अधराद**धरोष्ठात् । तथा-**स्तनाङ्गरागात्** स्तनयोरङ्गरागो गौरवर्णत्वं तस्मात् तं प्राप्येत्यर्थः । **अरुणात्** । **कन्दुकात्** । **च** । **निवर्तितः** । **तया** पार्वत्या । **कुशाङ्कुरादानपरिक्षताङ्गुलिः** कुशाङ्कुराणामादानेनोच्चाट्यग्रहणेन परिक्षताः परितः क्षता अङ्गुलयो यस्य तादृशः । **करः** । **अक्षसूत्रप्रणयी,** अक्षाणां सूत्रं मालारूपं तन्तुस्तत्र प्रणयी प्रेमी । **कृतः** । कुमारसम्भवस्येदं पद्यम् । एकस्य कारस्याधरात् कन्दुकाच्च निवर्त्तितत्वे जपमालायां निरतत्वे च विधानमुक्तम् । तर्कवागीशास्तु 'अत्रैकः करस्तपसः पूर्वं रागदानार्थमधरे, क्रीडार्थं कन्दुके कृतः, तपः काले तु कुशाङ्कुरेक्षसूत्रे च कृत इत्ययं क्रमः ।' इत्याहुः । वंशस्थं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ २६२ ॥'

'ते तव राज्ञ इति यावत् । **अरिवधूजनैः** शत्रूणां स्त्रीभिः । 'पतिसद्भावे' इति शेषः । **ययोः** । **तारः** शुद्धमौक्तिकः । 'तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके ।' इति विश्वः । **हारः** । **आरोपितः** । **तयोः** । स्तनयोः । 'पत्यसद्भावे' इति शेषः । **स्थूलाः** । **अश्रुबिन्दवः** । **निधीयन्ते** । राज्ञः स्तुतिरियम् । अत्रैकस्मिन् स्तने हाराद्यनेककारणम् ॥ २६३ ॥'

यथा वा—प्रथमं श्रितकञ्जकोरकाभावथ शोभामनुभूय कन्दुकानाम् । अधुनाऽऽश्रयितुं कुचौ यतेते दयिते ! ते करिशावकुम्भलीलाम् ॥' इत्यत्र हि कोरकाभाद्यनेककरणम् ।

**'ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः ।**

**निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः ॥'**

एषु च क्वचिदाधारः संहतरूपोऽसंहतरूपश्च । क्वचिदाधेयमपि । यथा—'स्थिताः क्षण—' इत्यत्रोदबिन्दवः पक्ष्मादावसंहतरूप आधारे क्रमेणाभवन् । 'विचरन्ति—' इत्यत्राधेयभूता वृकादयः संहतरूपारिपुरे क्रमेणाभवन् । एवमन्यत् । अत्र चैकस्यानेकत्र क्रमेणैव वृत्तेर्विशेषालंकाराद् भेदः । विनिमयाभावात्परिवृत्तेः ।

---

## विवृतिः

अनेकस्यैकत्र करणमाह—**ययोरिति** । तारः शुद्धमुक्ताघटितः अत्रैकस्मिन्स्तने पतिसत्त्वे हारस्य तदसत्त्वेऽश्रुबिन्दूनां करणम् ॥ **क्वचिदाधेयमपीति** । संहतरूपमसंहतरूपं चेत्यर्थः । ननु द्विविधोऽत्र पर्यायः परिवृत्त्यभिन्न एव पूर्वत्र त्यक्तग्रहणरूपत्वेन परत्रैकवस्तुत्यागानन्तरापरवस्तुग्रहणरूपत्वेन परिवृत्तिसंभवादत आह—**विनिमयाभावादिति** । एकवस्तुत्यागोपाधिकापरवस्तूपादानरूपस्य **विनिमयस्याभावादित्यर्थः** । परिवृत्तेर्भेद इत्यन्वयः । तथा च पूर्वत्र वस्तुभेदाभावादपरत्रापरवस्तूपादानं प्रत्यन्यवस्तुत्यागस्य नियमाभावात्पर्यायद्वये परिवृत्त्यभेदसंभावना नास्तीति भावः ॥

## विज्ञप्रिया

अनेकस्यैकत्र क्रियमाणत्वमाह—**ययोरिति** । अत्र हाराश्रुबिन्दूनामनेकेषामेकत्र स्तने अरिवधूभिः ।

एष्वाधाराऽऽधेयानां संहतत्वासंहतत्वे सम्भवतस्तद् भेदाभेदो न विवक्षितः इत्यभिप्रायेण तद्दर्शयति-**एष्विति** । संहतरूपो मिलितानेकरूपोऽसंहतरूपोऽमिलितप्रत्येकरूपः । क्वचित् क्वचिदाधेयस्यापि एवं द्वैरूप्यमित्याह—**क्वचिदाधेयमपीति** । अत्राधारस्यासंहतत्वं दर्शयति—**यथा स्थिताः क्षणमित्यत्रेति** । अत्राधेयानामुदबिन्दूनां तु संहतत्वरूपत्वं नात्र विशेषकम् । येषामनेकत्वघटितोयमलङ्कारस्तेषामेव संहतत्वासंहतत्वयोर्विशेषकत्वाद् बिन्दूनां त्वनेकाश्रयेषु एकस्यैव घटितत्वात् । आधाराणां संहतत्वं यथा "स्वयंवरे सा मिलितेषु राजसु क्रमेण चक्षुर्निदधे पतिंवरा" इति । आधेयानामसंहतत्वं तु ।

**"पूर्वं पूर्वं यदा त्याक्षीन्नपकन्या पतिंवरा ।**

**परः परस्तदा तस्यां विशेषादाकुलो नृपः ॥"**

इत्यत्र बोध्यम् । एकत्राधारेऽनेकेषामाधेयानां संहतत्वं दर्शयति—**विचरन्तीति** । वृकादयाः संहतरूपा इति बहुवचनेन मिलनबोधनात् क्रमस्तु विलासिनीचरणापेक्षया । **एवमन्यत्रेति** । ययोरारोपित इत्यत्रापि अश्रुबिन्दवोऽनेकसंहतरूपः ।

ननु क्वचिदेकमनेकस्मिन्नित्युक्तरूपस्य पर्यायस्यैकं चानेकगोचरमित्युक्तरूपाद् विशेषालङ्कारात् को विशेष इत्यत आह—**अत्र चेति** । क्रमयुगपदवृत्तिभ्यां द्वयोर्भेद इत्यर्थः । वक्ष्यमाणपरिवृत्त्यलङ्कारतो विशेषमाह—

**विनिमयाभावाच्चेति** । परस्परधर्मस्य परस्परेण ग्रहणरूपो विनिमयः परिवृत्तावेव । अत्र त्वनेकाश्रयगतमेवैकं, नतु तादृशाश्रयधर्मसामान्येन ग्रहणमित्यर्थः ।

## लोचन

ययोरित्यादौ हारोऽश्रुबिन्दवश्च पयोधरे कृताः ।

संहतरूपो मिलितस्वरूपः । तद्विविपरीत एकाकीभूतः ।

## कुसुमप्रतिमा

अनेकस्य एकत्र करणे उदाहरणं दर्शयति ययोरिति । इयमपि राजस्तुतिः । हे राजन् ! ते तव अरिबवृजनैः शत्रुस्त्रीलोकैः, ययोः स्तनयोः तारो लम्बमानः हारो मुक्तमाला, आरोपितः परिहितः, इदानीं तयोः स्तनयो स्थूला अश्रुबिन्दवः निवीर्यन्ते स्थाप्यन्ते, त्वयैव तासां पत्यादीनां निहतत्वादिति भावः ।

अत्र अनेकभूतस्य मुक्तावलीनिर्म्मितहारस्य अश्रुबिन्दुसमूहस्य च क्रमेणेकस्मिन् स्तनयुगले करणात् पर्य्यायालङ्कारः ।

ननु "स्थिताः क्षणम्" इत्यादौ उदबिन्दूनामनेकत्वात् "एकमनेकस्मिन्" इति लक्षणम्, "विचरन्ति" इत्यादौ उद्यानजलाशयादिभेदेन अरिपुरस्य अनेकत्वात् "अनेकञ्चकगम्" इति लक्षणम्, "ययोः" इत्यादौ च स्तनयोर्द्विन्व नानेकत्वात् "अनेकञ्चकगम्" इति लक्षणञ्च कथं सङ्गच्छते इत्याह एषु चेति । उदाहरणेषु मध्य इत्यर्थः । संहतरूपः संयुक्तस्वरूपः अनेकोऽपि संयुक्तत्वेनैकरूप इत्यर्थः, असहतरूपः विश्लिष्टरूपः एकावयविगतत्वेऽपि विश्लिष्ट-रूपत्वेन न अनेकरूप इत्यर्थः । आधेयमपि पूर्ववत् सहतरूपसंहतरूपञ्चेत्यर्थः ।

ईदृशविवक्षयैव सर्वत्र लक्षणानां संङ्गतिरित्याह यथेति । असहतरूपे परस्परविश्लिष्टरूपे । एतेन पक्ष्मा-द्याधाराणामनेकत्वम्, आधेयभूतानादविन्दूनाञ्च संहतरूपत्वेनैकत्वमिति सूचितम् । अतः "स्थिताः क्षणम्" इत्यादौ "एकमनेकस्मिन्" इति लक्षणसङ्गतिरिति भावः । वृकादयः असंहतरूपा अतएव ते अनेके इत्याशयः । संहतरूप-विपुरे उद्यानजलाशयादिना भेदेऽपि रथ्यादिना संयुक्तरूपत्वेनाभिन्नतया एकरूपे अविपुरे इत्यर्थः । अतः "विच-रन्ति" इत्यादावपि "अनेकञ्चैकगम्" इति लक्षणसङ्गतिरिति भावः ।

एवमिति । "ययोः" इत्यादौ आधेयभूता अश्रुबिन्दवः असंहतरूपा इति ते अनेके, आधारभूतं स्तनयुगञ्च परस्परसंहतरूपमित्येकरूपमेव तत् । तेन तत्रापि "अनेकञ्चेकगम्" इति लक्षणसमन्वय इत्याशयः । विसृष्टेत्यादे तु "एकमनेकस्मिन्" इति लक्षणसङ्गतिनिर्बाधैव ।

ननु "एकञ्चनेकगोचरम्" इत्युक्तलक्षणेन द्वितीयप्रकारविशेषालङ्कारेण सह "एकमनेकस्मिन्" इति प्रथ-मप्रकारस्य पर्य्यायस्य को भेद पर्य्यायस्य को भेद इत्याह अत्र चेति । प्रथमप्रकारपर्य्याये चेत्यर्थः । वृत्तेवर्त्तमान-त्वात् । विशेषलङ्कारात् एकस्य अनेकत्र युगपद्वृत्तिघटितादिति भावः ।

अथ तत्रापि घटपटयोः स्थानपरिवर्त्तनमिव "एकमनेकस्मिन्, अनेकञ्चैकस्मिन्" इत्येकानेकयोर्वृत्तितायाः परिवर्त्तनमिति तद्घटितस्यास्य पर्य्यायसामान्यस्य परिवृत्त्या सह को भेद इत्याह विनिमयाभावादिति । तथा च किञ्चिद्दत्त्वा कस्यचिदादानं नाम विनिमयः तस्य चात्राभावात् परिवृत्तेरलङ्कारादस्य भेद इति पूर्वेणान्वयः ।

उक्तरित्या परिवृत्तिप्रस्तावोत्थानात् परिवृत्तिं नामालङ्कारं निर्वक्ति परीति । किञ्चिद्दत्त्वा कस्यचिदादानं नाम विनिमय इत्युक्तमेव । समं समानम्, न्यूनं हीनम्, अधिकञ्चोत्तमम् । तथा च समं सत्त्वा समग्रहणरूपः अधिकं दत्त्वा न्यूनग्रहणरूपः, न्यूनं दत्त्वा अधिकग्रहणरूपश्च विनिमयः परिवृत्तिर्नाम अलङ्कारो भवेत् । अतएवायं त्रिविध इत्युन्नेयम् ।

तेन— **"व्यत्ययो वस्तुनीर्यस्तु यो वा विनिमयो मिथः ।**

**परिवृत्तिरिहोक्ता सा काव्यलङ्कारलक्षणे ॥"**

इति सरस्वती कण्ठाभरणे वैपरीत्यात्मकव्यत्ययेऽपि परिवृत्तेष्वैविध्यवर्णनकटाक्षितम्, न चैवं दर्पणकृन्मते "कुमुदवनमपश्चि श्रीमदम्भोजषण्डम्" इत्यादिशिशुपालवधपद्यागतवैचित्र्यस्यासग्रहापत्तिरिति वाच्यम्, विरूपस्य सङ्घटनाघटितविषमालङ्कारेणैव तत्संग्रहात् । परिवर्तनं परिवृत्तिरिति व्युत्पत्तिः स्पष्टा ।

## विमला

अनेकस्यैकत्र करणमाह, ययोरिति ।—ते—तव, अरीणां—शत्रूणां, वध्वः,—स्त्रियः एव जनाः तैः, ययोः,—स्तनयोरिति भावः, तारः,—शुद्धमुक्ताघटितः इत्यर्थः, हारः आरोपितः तयोः,—तादृशयोः, हारशोभितयोरिति यावत्, स्तनयोः स्थूलाः, पत्यादिनिधनजनितातिशोकादिति भावः, अश्रुविन्दवः,—नेत्रजलकणाः, निधीयन्ते—समर्प्यन्ते, निपात्यन्ते इति यावत्, त्वयेति शेषः । अत्रैकस्मिन् स्तने पतिसत्त्वे हारस्य तदसत्त्वे अश्रुविन्दूनां करणम् ।

क्वचिदाधेयमपीति ।—संहतरूपमसंहतरूपञ्चेति शेषः । ननु द्विविधोऽत्र पर्य्यायः परिवृत्त्यभिन्न एव, पूर्वत्र त्यक्तग्रहणरूपत्वेन, परत्रैकवस्तुयागानन्तरापरनस्तुग्रहणरूपत्वेन परिवृत्तिसम्भवात्, अत आह, विनिमयाभावादिति—एकवस्तुत्यागोपाधिकापरवस्तूपादानारूपस्य विनिमयस्याभावात् इत्यर्थः, परिवृत्तेर्भेद इत्यन्वयः, तथा च, पूर्वत्र वस्तुभेदाभावात् अपरत्रापरवस्तूपादानं प्रत्यन्यवस्तुत्यागस्य नियमाभावात् पर्य्यायद्वये परिवृत्त्यभेदसम्भावना नास्तीति भावः ।

## रुचिरा

अस्य प्रकारान्तरं पुनर्निर्दिशति—**एषु** उदाहृतेषु मध्ये । **च** । **क्वचित्** । आधारः । **संहतरूपः** समुदितरूपः । **असंहतरूपः** । **च** । एवम्-**क्वचित्** । **आधेयम्** । अपि 'संहतरूपमसंहतरूपं चे'ति शेषः । **यथा** । **'स्थिताः क्षण' मित्यादौ** उदाहृतपूर्वे पद्ये । **उदबिन्दवः** । 'संहतरूपा आधेया' इति शेषः । **असंहतरूपे** । **आधारे** । **पक्ष्मादौ** । **क्रमेण** । **अभवन्** । **'विचरन्ति' इत्यादौ** । **आधेयभूताः** । 'संहतरूपा आधेया' इति शेषः । **वृकादयः** । **संहतरूपारिपुरे** । **क्रमेण** । **अभवन्** । **एवम्** 'विसृष्टरागादित्यादावसंहतरूपे धरादावाधारे' इति शेषः । **अन्यत्** 'असंहतरूपस्य करस्य संहतरूपस्य हारादेः क्रमेण करण'मिति शेषः ।

अस्यालङ्कारान्तराद्भेदं निर्दिशति-**अत्रास्मिन्** पर्य्यायालङ्कारे । **च** । **क्रमेण** । **एव** । **एकस्य** । **अनेकत्र** । **वृत्तेः** । **विशेषालङ्काराद्** यौगपद्येनैकस्यानेकत्र वृत्तिमुपजीव्य दर्शिताद्विशेषाख्यादलङ्कारात् । 'अस्येति'शेषः । **भेदः** । **विनिमयाभावादे**कवस्तुत्यागोपाधिकारपरवस्तूपादानरूपस्य विनिमयस्याभावात् । **परिवृत्ते**स्तदाख्यादलङ्काराद्भेदः । एवं च-पूर्वत्र वस्तुभेदाभावादन्यत्रान्यवस्तूपादानं प्रत्यन्यवस्तुत्यागस्याभावात् तद्विच्छित्तिकात् परिवृत्त्यलङ्काराद्भेद इति भावः ।

**परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् ॥ ८० ॥**

क्रमेणोदाहरणम्—

**'दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम ।**
**मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ॥'**

अत्र प्रथमेऽर्धे समेन, द्वितीयेऽर्धे न्यूनेन ।

---

## विवृतिः

परिवृत्त्यलंकारमाह—**परिवृत्तिरिति** । **समेनेति** ॥

द्वयोरेवोपादेयत्वात्समत्वम् । ज्वरस्य भयहेतुत्वान्न्यूनत्वम् ॥

## विवृतिपूर्तिः

**परिवृत्तिरिति** । विनिमयोऽत्र किंचित्त्यक्त्वा कस्यचिदादानम् ॥

## विज्ञप्रिया

परिवृत्त्यलङ्कारमाह—**परिवृत्तिरिति** । समाभ्यां न्यूनाधिकाभ्यां च विनिमय इत्यर्थः । न्यूनाधिकविनिमयश्च न्यूनं दत्त्वाऽधिकग्रहणमधिकं दत्त्वा न्यूनग्रहणमिति द्विधा ।

तत्र समाभ्यामधिकं दत्त्वा न्यूनग्रहणाच्च विनिमये एकमुदाहरणमाह—**दत्त्वा कटाक्षमिति** । स्पष्टम् ।

## कुसुमप्रतिमा

समेन न्यूनेन च विनिमये उदाहरति दत्त्वेति । कश्चित् सुन्दरीमवलोक्यागत्य सख्युरन्तिके कस्यचिदुक्तिरियम् । एणाक्षी हरिणलोचना सा नायिका, कटाक्षं वक्रदृष्टिं दत्त्वा, मम हृदयं हृदयवृत्तिं जग्राह । मया तु हृदयं दत्त्वा मदनज्वरः कामसन्तापो गृहीतः ।

ननु उदाहृते कुत्र कीदृशेन विनिमय इत्याह अत्रेति । समेन समानवस्तुग्रहणेन विनिमय इति शेषः, वक्रदृष्टि-हृदयवृत्योरिन्द्रियवृत्तिवेन समानत्वादिति भावः । न्यूनेन न्यूनवस्तुग्रहणेन विनिमय इति शेषः, हृदयवृत्त्यपेक्षया मदनज्वरस्य दुःखकरत्वेन हीनत्वादिति भावः ।

अत्रेति । आधिक्येन अधिकवस्तुग्रहणेनेत्यर्थः । विनिमय इति शेषः, जर्जरकलेवरापेक्षया यशस उत्तमत्वःदित्याशयः ।

## विमला

परिवृत्त्यलङ्कारमाह, परिवृत्तिरिति ।—समन्यूनाधिकैः, वस्तुभिरिति शेषः, विनिमयः,—किमपि विसृज्य कस्यापि ग्रहणमित्यर्थः, परिवृत्तिः भवेत् । अत्रायभाशयः,—समेन समस्य, न्यूनेनोत्तमस्य, उत्तमेन न्यूनस्य च

विनिमये त्रेधा परिवृत्तिः। येषां मते न्यूनेन न्यूनस्य विनिमयः, तेषामिदमुदाहरणम्—"अस्थिमालामयीं दत्त्वा मुण्डमालामयीं तनुम्। गृह्णता त्वत्पुरस्थानां को लाभः स्मरशासन!?"॥ इति समधिककविसम्मताभावात् एतदयोग्यमेवेति ज्ञेयम्।

## लक्ष्मी

अथ तृतीयमुदाहरति—**ययोरिति**। राज्ञः स्तुतिरियम्। हे राजन्! ते तव अरिवधूजनैः रिपुनारीलोकैः पतिसदभावे इति शेषः, ययोः स्तनयोः कुचयोः तारः शुद्धमौक्तिः 'तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके' इति विश्वः, हारः मुक्तामाला, आरोपितः परिहितः, सम्प्रति तयोः स्तनयोः, स्थूला पृथुला अश्रुबिन्दवः नेत्रजलबिन्दवः निधीयन्ते स्थाप्यन्ते, भवतैव तासां पत्यादीनां हननादित्यभिप्रायः।

अत्रैकस्मिन् स्तनयुगले हाराद्यनेकानां विधानात् पर्यायः।

ननु 'एकमनेकस्मिन्' इति लक्षणस्य, अनेकञ्चैकगम्' इति लक्षणस्य च यथाक्रमोदाहृतेषु 'स्थिताः क्षणम्' इत्यादौ मेघबिन्दूनामनेकत्वेन 'विचरन्ति इत्यादौ वाटिकातडागादिभेदेन शत्रुनगरस्य बहुत्वात्, 'ययोः' इत्यादिषु स्तनयोर्युगलत्वेन बहुत्वात् कथं सङ्गतिरित्यत आह—**एषु** चेति उदाहृतमध्येषु चेत्यर्थः। संहतरूपः समुदितरूपः अनेकोऽपि मिलितत्वेनैकरूप इत्यर्थः, असंहतरूपः असंयुक्तरूपः एकावयविवृत्तित्वेऽपि असंयुक्तरूपत्वेनानेक-रूप इत्यर्थः। क्वचित् क्वचित् आधेयस्यापि संहतरूपत्वेन च द्वैविध्यमिति दर्शयति—**क्वचिदिति** स्पष्टम्।

उक्तरीत्या सर्वत्र लक्षणसमन्वय इत्युपपादयितुमाह—यथेति। इत्यत्र उदाहृतपूर्वे पद्ये उदबिन्दवः संह-तरूपा आधेया इति शेषः। असंहतरूपे मिथोऽसंयुक्तरूपे। एतेन आधेयभूतानां मेघबिन्दूनां संयुक्तरूपत्वेनैकत्वं पक्ष्माद्याधाराणाञ्चानेकत्वमिति व्यञ्जितम्। एवञ्च 'एकमनेकस्मिन्' इति लक्षणं 'स्थिताः क्षणम्' इत्यादौ संहतमेवे-त्यवधेयम्। आधेयानामसंहतत्वं तु—

> **'पूर्वं पूर्वं यदात्याक्षीन्नृपकन्या पतिंवरा।**
> **परं परं तदा तस्यां विशेषादाकुलो नृपः॥'**

इत्यत्र बोध्यम्। अनेकेषामाधेयानामेकत्राधारे संहतत्वं दर्शयति—**विचरन्तीति**। वृकादयः असंहतरूपाः अत एव ते अनेका इति भावः। संहतरूपारिपुरे वाटिका तडागादिनाभेदेऽपि प्रतोल्यादिना संहतरूपत्वेनाभिन्नत्वात् एकरूपे शत्रुनगरे इत्यर्थः। एवम् 'अनेकञ्चैकगम्' इति द्वितीयलक्षणं 'विचरन्ति इत्यादौ सङ्गच्छत एवेत्याशयः।

एवमिति। 'ययोरारोपित इत्यादौ असंयुक्तरूपा नेत्रबिन्दव आधेयभूता इति ते बहुविधाः, स्तनद्वयञ्च आधारभूतं मिथः संयुक्तरूपमित्येकरूपमेव तत्। अत अत्रापि 'अनेकञ्चैकगम्' इति लक्षणं सङ्गच्छत एवेति भावः। विसृष्टरागेत्यादौ तु प्रथमलक्षणसमन्वयो ज्ञेयः।

नन्वस्यालङ्कारस्य प्रथमभेदो यः 'एकमनेकस्मिन्' इत्युक्तस्वरूपस्तस्य 'एकञ्चानेकगोचरम्' इति द्वितीय-भेदविशेषालङ्कारेण सह किं पार्थक्यम्? इत्याकाङ्क्षायामाह—**अत्र** चेति। आद्यभेदापर्याये चेत्यर्थः। वृत्तेः विद्यमानत्वात्, विशेषालङ्कारात् यौगपद्येनैकस्यानेकवृत्तिमुपजीव्य निरूपिताद्विशेषनामकालङ्कारादित्यर्थः। ननु परिवृत्त्यलङ्कारेण सहास्य को भेद इत्यत आह—**विनिमयेति**। एकवस्तुत्यागोपाधिकान्यवस्तुग्रहणं विनिमयः, तस्य अभावात् असत्त्वात् परिवृत्तेस्तदाख्यादलङ्काराद् 'भेदः' इति पूर्वेण सम्बन्धः। तथा च घटपटयोः स्थानपरिवर्तन-मिवैकानेकयोर्वृत्तितायाः परिवर्त्तनरूपस्यैव पर्यायसामान्यत्वेनोक्तविनिमयाभावान्न परिवृत्तिसाङ्कर्यमित्याशयः।

दर्शितदिशा परिवृत्तिप्रकरणस्योत्थापनात् परिवृत्त्यलङ्कारमेव लक्षयति—**परिवृत्तिरिति**। विनिमयो नाम एकवस्तुत्यागोपाधिकान्यवस्तुग्रहणम् इत्यभिहितमेव। समानि तुल्यानि न्यूनानि हीनानि अधिकान्युत्तमानि चेति तैः तथोक्तैः। तथा च समं परित्यज्य समोपादानरूपः, अधिकं परित्यज्य न्यूनोपादानरूपः, न्यूनं परित्यज्य अधिकोपादानरूपश्च विनिमयः परिवर्तनं परिवृत्तिरिति व्युत्पत्त्या परिवृत्तिर्नामालङ्कारो भवेत्। अत एवायं त्रिप्रकार इति फलितोऽर्थः।

समेन न्यूनेन च विनिमये उदाहरणं दर्शयति—**दत्त्वेति**। काञ्चिद्रमणीं वीक्ष्य सखायं प्रति कस्यचिदुक्तिरियम्। एणाक्षी मृगनयना सा नायिका, कटाक्षं कुटिलदृष्टिं दत्वा, मम हृदयं मनोवृत्तिं जग्राह आददौ। तु किन्तु मया हृदयं मनो दत्वा मदनज्वरः कामजनितः सन्तापः गृहीत आत्तः।

लक्ष्यं संयोजयति—**अत्रेति**। समेन तुल्यपदार्थोपादानेन विनिमय इति शेषः, कुटिलदृष्टिः अन्तःकरणवृत्त्योरिन्द्रियगतत्वेन तुल्यत्वादित्याशयः। न्यूनेन न्यूनपदार्थोपादानेन विनिमय इति शेषः, मनोवृत्त्यपेक्षया कामसन्तापस्य क्लेशकरत्वेन हीनत्वादित्यभिप्रायः। उदाहरणान्तरं यथा—

**'किमहं कथयामि योषितामधरं बिम्बफलं समर्प्य या।**
**सुरसानि हरन्ति हन्त ! हा विदुषां पुण्यफलानि सत्त्वरम्॥'**

अत्र न्यूनेनाधरेणोत्तमस्य पुण्यफलस्य विनिमयः।

## रुचिरा

परिवृत्तिं लक्षयति—१६८ **समन्यूनाधिकैः** समानि च न्यूनानि चाधिकानि चेति तैः। **विनिमयः** परिवर्त्तनम्। **परिवृत्तिः**। **भवेत्**। तथा च-समं न्यूनमधिकं वा दत्त्वा समस्यान्यूनस्य चादानं परिवृत्तिः। अत एवायं त्रिविध इति फलितोऽर्थः।

उदाहर्त्तुमुपक्रमते—**क्रमेणेत्यादिना**। स्पष्टम्। '**एणाक्षी** मृगनयना। **कटाक्षम्**। **दत्त्वा**। मम। **हृदयम्**। जग्राहाददौ। **मया**। तु **हृदयमन्तःकरणम्**। **दत्त्वा**। **मदनज्वरः** कामजनितः सन्तापः। **गृहीत** आत्त इत्यर्थः॥ २६४॥'

अत्र प्रभेदद्वयं निगमयति—**अत्र**। **प्रथमे**। **अर्धे**। **समेन** तुल्येन कटाक्षेण 'समस्य हृदयस्य परिवर्त्तन'मिति शेषः। **द्वितीये**। **अर्धे**। **न्यूनेन** मदनज्वरेण 'अन्यूनस्य हृदयस्य परिवर्त्तन'मिति शेषः। यथा वा—'किमहं कथयामि योषितामधरं बिम्बफलं समर्प्य याः। सुरसानि हरन्ति हन्त हा विदुषां पुण्यफलानि सत्त्वरम्॥' इत्यत्र न्यूनेनाधरेणोत्तमस्य पुण्यफलस्य परिवर्त्तनम्।

'**येन**। '**जर्जरकलेवरव्ययाज्जजरं** जराक्षीणं यत् कलेवरं शरीरं तस्य व्ययः सीताकृते रावणेन विनाशनं तस्मात्। **इन्दुकिरणोज्ज्वलं** चन्द्रकिरणवद्विमलम्। **यशः**। **क्रीतम्**। **तस्य**। च। **प्रवयसः** प्रवृद्धस्य। **जटायुषस्तन्नाम्नो** गृध्रराजस्य। **अधुना** रामदत्तपितृगत्या दानानन्तरमिति भावः। **स्वर्गिणः**। **किमिव**। **शोच्यते** न किमपि शोच्यत इति भावः। रथोद्धताछन्दः॥ २६५॥'

**अत्र**। **अधिकेन** विमलेन यशसा 'न्यूनस्य कलेवरस्य परिवृत्ति'रिति शेषः। यथा वा—'गरिमाणमर्पयित्वा लघिमानं कुचयुगात् कुरङ्गदृशाम्। स्वीकुर्वते नमस्ते यूनां धैर्य्याय निर्विवेकाय॥'

**'तस्य च प्रवयसो जटायुषः**
**स्वर्गिणः किमिव शोच्यतेऽधुना।**
**येन जर्जरकलेवरव्यया-**
**त्क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥'**

अत्राधिक्येन।

---

## विज्ञप्रिया

न्यूनं दत्त्वा अधिकग्रहणमाह—**तस्य चेति**। रामस्योक्तिरियम्। प्रवयसोऽतिवृद्धस्य। शोच्यते। नैव किमपि शोचनीयम्। येन जर्जरस्य जराजीर्णस्य कलेवरस्य शरीरस्य व्ययाद् इन्दुकिरणोज्ज्वलं चन्द्रकिरणवत् शुभ्रं यशः क्रीतम्। अत्र जर्जरस्य शरीरस्य दानेन उज्ज्वलस्य यशसः क्रयः। अतोत्र आधिक्यम्।

## लक्ष्मी

अधिके विनिमये उदाहरति—**तस्येति**। श्रीरामचन्द्रस्योक्तिरियम्। प्रवयसः अतिवृद्धस्य, स्वर्गिणः स्वर्गं गतस्य, तस्य जटायुषस्तन्नाम्नो गृध्रराजस्य निमित्ते किमिव अधुना मद्दत्तपितृगत्या दानानन्तरमित्याशयः शोच्यते शोकः क्रियते न किमपि शोच्यत इति भावः। येन जटायुषा जर्जरं-जराक्षीणं यत् कलेवरं शरीरं तस्य व्ययः सीतारक्षणार्थ रावणेन विनाशनं तस्मात् तादृशात् इन्दुकिरणोज्ज्वलं चन्द्ररश्मिवत्स्वच्छं यशः क्रीतं गृहीतम्। **रथोद्धताच्छन्दस्तल्लक्षणन्तूक्तं प्राक्**।

लक्ष्यं संयोजयति—**अत्रेति**। आधिक्येन अधिकपदार्थोपादानेन विनिमय इति शेषः। जीर्णशरीरापेक्षया यशस आधिक्यादिति भावः।

## रुचिरा

अत्रोत्तमेन गरिम्णा न्यूनस्य लघिम्नः परिवृत्तिः। अत्राहुर्गङ्गाधरकाराः—'एषु दानादानव्यवहारः कविकल्पित एव, नतु वास्तवः। यत्र वास्तवस्तत्र नालङ्कारः। यथा—'क्रीणन्ति प्रविकचलोचनाः समन्तात् मुक्ताभिर्बदरफलानि यत्र बालाः। 'इदं चापरं बोध्यम्—अत्र। परस्मै स्वकीययत्किञ्चिद्वस्तुत्यागमात्रम्। 'किशोरभावं परिहाय रामा वभार कामानुगुणां प्रणालीम्।' इत्यत्रातिव्याप्त्यापत्तेः। न चेदं लक्ष्यमेवेति वाच्यम्, पूर्वावस्थात्यागपूर्वकमुत्तरावस्थाग्रहणस्य वास्तवत्वे नालङ्कारात्वात्।' इति।

**प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत्।**

**तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥ ८१ ॥**

परिसंख्या—

क्रमेणोदाहरणम्—

**किं भूषणं सुदृढमत्र यशो न रत्नं**

**किं कार्यमार्यचरितं सुकृतं न दोषः।**

**किं चक्षुरप्रतिहतं धिषणा न नेत्रं**

**जानाति कस्त्वदपरः सदसद्विवेकम् ॥'**

अत्र व्यवच्छेद्यं रत्नादि शाब्दम्।

---

## विवृतिः

परिसंख्यालंकारमाह—**प्रश्नादिति**। कथिताद् उपादेयत्वेन निर्णीयोक्तात्। **तादृगिति**। कथितसदृशेत्यर्थः। व्यपोहो निषेधः ॥

अत्र वाच्ये व्यापोह्यां प्रश्नपरिसंख्यामाह—**किमिति**। भूषणमत्युत्कर्षप्रयोजकम्। सुदृढं स्थिरतरम्। रत्नस्य भङ्गापहरणादिसत्त्वान्न तथात्वम्। आर्यैर्मन्वादिभिश्चरितं सुकृतं पुण्यजनकं तपस्यादि, न दोषः पापजनकः परदारगमनादिः। किमप्रतिहतं चक्षुरुत्कृष्टज्ञानसाधनं धिषणा मनो, न नेत्रम्।.तस्य रविकरप्रतिहन्यमानत्वात्। **जानातीति** प्रत्युत्तरपरितुष्टस्य प्रश्नकर्तुः प्रत्युत्तरयितृप्रशंसेयम्। यद्वा स्वस्यैवोत्तरमभिप्रेत्य प्रश्नान्तरमाह—जानातीति। सदसद्विवेकं को जानातीति प्रश्नः। तदभिप्रायबोधेन रुष्टस्योत्तरमिदम्—**त्वदपर इति**। त्वं तु न जानासीत्यर्थव्यपोहोऽत्र बोध्यः। केचित्तु 'तदपरः' इति पाठं कल्पयित्वा 'धिषणातोऽपरः' इति व्याचक्षते। तन्न। धिषणाप्रशंसायां जानातीत्यन्वयापत्तेः ॥

## विवृतिपूर्तिः

**परिसंख्येति**। परिशब्दोऽत्र वर्जनार्थकः। 'परेर्वर्जने'इति पाणिनिसूत्रात्। संख्या बुद्धिः। 'यत्सांख्यैः प्राप्यते स्थानम्' इति भगवद्वचनात्। तेन वर्जनबुद्धिः परिसंख्येत्यन्वर्थमभिधानम्। सा चैषा प्रश्नपूर्विका अप्रश्नपूर्विकेति द्विविधा। प्रत्येकं च पुनः शाब्दत्वार्थत्वाभ्यां द्विविधेति चतुर्विधा। यत्र कविप्रतिभोत्थापितेतरव्यावृत्तिस्तत्रैवालंकारविषयः। तेन 'पञ्च पञ्चनखा भक्ष्या धर्मतः परिकीर्तिताः। गोधा कूर्मः शशः खड्गी शल्यकश्चेति ते स्मृताः ॥' इत्यादिशास्त्रीयपरिसंख्यायां नालंकारतेत्यन्यत्र विस्तरः ॥

## विज्ञप्रिया

चतुर्विधं परिसंख्यालङ्कारमाह—**प्रश्नादप्रश्नतो वापीति**। प्रश्नवशात् तदभावाद्वा कथितं यद् यद् प्रष्टव्यस्य विशेषणस्य विशेष्यभूतं वस्तु परेण कथितात् तस्माद् हेतोः कथितसदृशस्यान्यस्य प्रष्टव्यविशेषणान्वयव्यवच्छेदः शाब्द आर्थो वा प्रतीयते चेत्तदा स व्यवच्छेदः परिसंख्यालंकार इत्यर्थः।

अत्र प्रश्नपूर्वकथिताच्छाब्दं व्यवच्छेदमाहुः—**किं भूषणमिति**। अत्र लोके किं सुदृढं भूषणमिति प्रश्नः, यश इत्युत्तरम्। **न रत्नमिति**। उपादेयत्वेन यशः सदृशस्यान्यस्य रत्नस्य प्रष्टव्यविशेषणभूतभूषणत्वान्वयव्यवच्छेदः। एवं सर्वत्र बोध्यम्। आर्यैर्विशिष्टादिभिश्चरितमाचरितं किं वस्तु कार्यमिति प्रश्नः। सुकृतमित्युत्तरम्। तदीयचाण्डालीगमनरूपदोषस्य तदा चरणीयत्वेन सुकृतसदृशस्य व्यवच्छेदो न दोष इति शाब्दः। एवमुत्तरत्र। अप्रतिहतं चक्षुः किं, धिषणा बुद्धिः, न नेत्रम्। जनातीति त्वदपरं इति पाठे प्रत्युत्तरपरितुष्टस्य प्रष्टुरुत्तरकर्तृजन प्रशंसावाक्यमिदम्। तदपर इति पाठे धिषाणापर इत्यर्थः। अत्र व्यवच्छेद्यमिति व्यवच्छेद इत्यर्थः। सूत्रे व्यवच्छेदस्यैव शाब्दतया उक्तत्वान्नतु व्यवच्छेद्यस्य। एवमुत्तरत्रापि।

## कुसुमप्रतिमा

इदानीमेकोक्तावन्मयप्रतीतेः प्रकरणमारभमाणस्तत्र प्राधान्यात् प्रथमं परिसंख्यालङ्कारं लक्षयति प्रश्नदिति। प्रश्नात् कस्यचिज्जिज्ञ सामाश्रित्य, अप्रश्नतो वापि कस्यचिज्जिज्ञासामनाश्रित्यापि वा, कथितात् केनचिद्विविक्ष्याभिहितात् वस्तुनः पदार्थात्, चेद्यदि, शाब्दः शब्देनैव बोध्यः, अथवा आर्थः, अथ पर्य्यालोचनया गम्यः, तादृश, कथितसदृशस्य, अन्यस्य वस्तुनः व्यपोहः प्रतिषेधो भवेत्, तदा परिसंख्या नाम अलङ्कृतो भवेत्। तेन प्रश्नपूर्वककथनादप्रश्नपूर्वककथनाच्चेयं द्विविधा, तयोश्च प्रत्येकमेव शाब्दत्वार्थत्वभेदेन पुनर्द्विविधेति समुदाये चतुर्विधा परिसंख्या। "पञ्च पञ्चनखा भक्ष्याः" इत्यादौ पञ्चनखेतभक्षणप्रतिषेधप्रतीतावपि वैचित्र्याभावादायमलङ्कारः।

परिसंख्या इतरवर्जनबुद्धिरिति व्युत्पत्तिः, परिशब्दस्य वर्जनार्थत्वात् संख्याशब्दस्य च ज्ञानार्थत्वात् "परेव ने" इति पाणिनिसूत्रे "यत् सांख्यैः प्राप्यते स्थानम्" इति गीतायाञ्च तथादर्शनात्।

प्रश्नपूर्वककथने शाब्दों परिसंख्यामुदाहरति किमिति। अत्र जगति किं नाम सुदृढ़ं चिरस्थायि भूषणम्? इति कस्यचित् प्रश्ने—"यश एव सुदृढ़ भूषणं किन्तु रत्नं न" तस्य क्षयित्वादिति कस्यचित् कथनम्। आर्य्यचरितं मन्वादिमान्यजनव्यवहतं किं नाम कार्य्यम्? इति कस्यचित् प्रश्ने—'सुकृतं पुण्यम्, न तु दोषः पापम्" इति कस्यचित् कथनम्। अपतिहतं सर्वत्रगामि किं नाम चक्षुः? इति कस्यचित् प्रश्ने—"धिषणा बुद्धिः, किन्तु नेत्रं न" तस्य भित्त्यादिना प्रतिहतत्वादिति भावः; इति कस्यचित् कथनम्। इति सदुत्तरं श्रुत्वा प्रश्नकर्त्ता कथयितारं प्रशंसति जनातीति। त्वदपरस्त्वद्भिन्नः को जनः, सदसतोर्विवेक पार्थक्यं जानाति, अपि तु कोऽपि नेत्यर्थः।

अत्रेति। व्यवच्छेद्यं व्यपोह्यं प्रतिषेध्यमित्यर्थः। शाब्दं नेतिशब्दैर्बोध्यम्। तेनात्र प्रश्न पूर्वककथने शाब्दीं परिसंख्यालङ्कार इति भावः।

## विमला

वाच्यव्यपीह्यां प्रश्नपरिसङ्ख्यामहा, किमिति।—उक्तिप्रत्युक्तौ। अत्र—जगति इत्यर्थः, सुदृढ़ं—दृढ़तरम्, अक्षयमित्यर्थः, रत्नस्य भङ्गापहरणादिमत्त्वात् न तथात्वम् इति भावः, भूषणम्—अत्युत्कर्षप्रयोजकं, किम्?

(इति प्रश्नः) यशः,—तादृशं सुदृढं भूषणं यश इति भावः, (इत्युत्तरम्) न रत्नम् (इति व्यपोहः)। किं कार्य्यम् ? (इति प्रश्नः) आर्य्याणाम् आर्य्यैः,—मन्वादिभिर्वा, चरितं, सुकृतं—सत्कार्य्यं, पुण्यजनकं तपस्यादि इति यावत्, (इत्युत्तरम्) न दोषः,—पापजनकः परदारगमनादिरूपः, कार्य्यः इति लिङ्गविपरिणामेन योज्यम्; (इति व्यपोहः [आर्य्यचरितं दुष्टमपि भवति, किन्तु तन्नानुकरणीयम्, अत एवोक्तं—"धर्मव्यति क्रमो दृष्ट ईश्वराणाञ्च साहसम्। तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा॥" (भाग. १०/३३/२९) इति]। अप्रतिहतं—दिव्यं, सर्वतोदर्शीति यावत्, चक्षुः,—नेत्रम्, उत्कृष्टज्ञानसाधनमिति समुदयार्थः, किम्? (इति प्रश्नः) धिषणा—बुद्धिः, अप्रतिहतं चक्षुरिति शेषः, (इत्युत्तरम्) नेत्रं न, तस्यावकरप्रतिहन्यमानत्वात्, (इति व्यपोहः) नेत्रस्य असम्यग्दर्शनमप्याह—"गावो घ्राणेन पश्यन्ति शास्त्रैः पश्यन्तिः पण्डिताः। चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः॥" इति। नैषधेऽपि—"सविधेऽपि न सूक्ष्मसाक्षिणी वदनालङ्कृतिमात्रमक्षिणी" इति। इत्येवमुत्तरं श्रुत्वा प्रसन्नः सन् उत्तरदातारं प्रशंसति, त्वदपरः,—भवतोऽन्यः, कः सदसतां विवेकं—याथार्थ्यावधारणं, जानाति? न कोऽपीत्यर्थः, प्रत्युत्तरपरितुष्टस्य प्रश्नकर्त्तुः वकस्य प्रत्युत्तरयितृप्रशंसेयम्; यद्वा—स्वस्यैवोत्तरमभिप्रेत्य प्रश्नान्तरमाह, जानातीति।—सदसद्विवेकं को जानातीति प्रश्नः [तदभिप्रायबोधेन रुष्टस्योत्तरमिदं, त्वदपर इति—त्वं तु न जानासीति अर्थव्यपोहोऽत्र बोध्यः। केचित्तु—"तदपरः" इति पाठं कल्पयित्वा "धिषणाया अपरः" इति व्याचक्षते, तन्न; धिषणाप्रशंसायां जानातीत्यन्वयापत्तेः] वसन्ततिलकं वृत्तम्।

## लक्ष्मी

परिसंख्यालङ्कारं निरूपयति—**प्रश्नादिति**। प्रश्नात् कस्यचिद्रबोधयिषितमादाय, अप्रश्नतो वापि कस्यचिद्रबुबोधयिषितमनादाय वा, कथितात् केनचिद्विचार्य प्रतिपादितात् वस्तुनः पदार्थात्, चेद् यदि शाब्दः शब्दप्रतिपाद्यः, अथवा आर्थः अर्थपर्यलोचनया बोध्यः, तथाविधस्य प्रतिपादिततुल्यस्य, अन्यस्य वस्तुनः, व्यपोहः निषेधो भवेत्, तदा परिसंख्या इतरवर्जनबुद्धिरिति व्युत्पत्त्या तन्नामालङ्कारो भवेत्। एवञ्च प्रश्नपूर्वकप्रतिपादनादप्रश्नपूर्वकप्रतिपादनाच्चेयं द्विप्रकारा तयोश्च प्रत्येकमेव शाब्दत्वार्थत्वभेदेन पुनर्द्विप्रकारेति मिलित्वा चतुष्प्रकारा परिसंख्या। परिशब्दोऽत्र वर्जनार्थकः 'परेर्वर्जने' ८/१/५ इति पाणिनीयस्मृतेः, संख्या बुद्धिः 'यत्सांख्यैः प्राप्यते स्थानं तद्योगरपि गम्यते इति श्रीमद्भगवद्गीतावचनात्, तेन वर्जनबुद्धिः परिसंख्येत्यन्वर्थेयं संज्ञा। यत्र च विच्छित्तिविशेषस्तत्रैवायमलङ्कारः, तेन(क)'पञ्च पञ्चनखा भक्ष्याः'इत्यादिशास्त्रीयपरिसंख्यायां नालङ्कारत्वम्।

तत्र प्रश्नपूर्वकप्रतिपादने शाब्द्याः परिसंख्याया उदाहरणं दर्शयति—किमिति अत्र लोके सुदृढम् अविनाशि, भूषणम् अलङ्कारः किम्? इति कस्यचित् प्रश्ने—यश एव कीर्त्तिरिव सुदृढं भूषणं किन्तु रत्नं माणिक्यादि न भूषणमिति शेषः, तस्य विनाशित्वादिति कस्यचित्प्रतिपादनम्, आर्यचरितं मन्वादिशिष्टजनसेवितं किं नाम कार्यं कर्त्तव्यम्? इति कस्यचित्प्रश्ने—'सुकृतं पुण्यकर्म, न तु दोषो व्यभिचारादिपापम्' इति कस्यचित्प्रतिपादनम्। अप्रतिहतं व्यवधानेऽपि ग्राहकं चक्षुः किम्? इति कस्यचित्प्रश्ने 'धिषणा बुद्धिः किन्तु नेत्रं न' तस्य कुडयादिना व्यवहितत्वादित्यभिप्रायः; इति कस्यचित् प्रतिपादनम्, इत्यभिमतोत्तरं श्रुत्वा प्रश्नकर्त्ता प्रतिपादयितारं प्रशंसावचनमाह—**जानातीति**। त्वदपरः त्वदन्यः कः सदसद्विवेकम् उत्कृष्टनिकृष्टपार्थक्यम् जानाति, अपि तु न कोऽपीत्यर्थः। **वसन्ततिलकाच्छन्दः**।

लक्ष्यं सङ्गमयितुमाह—**अत्रेति**। व्यवच्छेद्यं निषेध्यम्। शाब्दं 'न रत्नम्' इत्यादिशब्दगम्यम्। अत एवात्र प्रश्नपूर्वकप्रतिपादने शाब्दीपरिसंख्यालङ्कार इत्याशयः।

## रुचिरा

परिसंख्या लक्षयति—१६९ **चेत्**। **पर्शनात्** प्रश्नं कृत्वा प्रश्नादुत्तरमिति यावत्। **अप्रश्नतः** प्रश्नमकृत्वा **वा**। **अपि**। **कथितान्निर्णीतात्**। वस्तुनः पदार्थात्। **शाब्दः** शब्दप्रतिपाद्यः। **भवेत्**। **अथवा**। **आर्थोऽ**र्थगम्यः। **तादृक्** कथितसदृशः। **अन्यव्यपोहो**ऽन्यस्य कथितभिन्नस्य वस्तुनो व्यपोहो निषेधः। **तदा**। **परिसङ्ख्या** तदाख्योऽलङ्कारः स्यादिति भावः। 'प्रश्ना'दित्यादिभेदवचनम्, 'कथिताद्वस्तुनस्तादृगन्यव्यपोह' इति स्वरूपवचनम्। अतएव गङ्गाधरकारैः 'सामान्यतः प्राप्त्यार्थस्य कस्माच्चिदर्थाद् व्यावृत्तिः परिसंख्या।' इत्येवोक्तम्। इदम्बोध्यम्—'परेर्वर्जने।' ८/१/५ इति निर्देशात् परिशब्दो वर्जनार्थः। सङ्ख्याशब्दश्च 'यत्साङ्ख्यैः प्राप्यते स्थान' मिति बुद्ध्यर्थः। तथा च—वर्जनबुद्धिः परिसंख्येति फलितम्। तावन्मात्रायाश्चालङ्कारोपस्कारकत्वाभावात् यत्र कविप्रतिभोन्नीतोऽन्यव्यपोहः स एवास्या विषय इति सिद्धम्, तेन 'पञ्च पञ्चनखा भक्ष्या' इत्यादौ नातिप्रसङ्गः। इयं च प्रश्नपूर्विकाऽप्रश्नपूर्विका चेति द्विविधा, असावपि शाब्दी आर्थी चेति चतुर्विधा। इति ॥ १३४ ॥

उदाहर्त्तुकाम आह—**क्रमेण**। **उदाहरणम्**। '**भुषणम्**। **किम्** (इति प्रश्ने)। **अत्रा**स्मिल्लोके। **सुदृढं** सात्त्विकतयाऽनपोहनीयविकाशम्। **यशः**। 'भूषण'मिति शेषः। **रत्नं** माणिक्यादि। न 'भूषण'मिति शेषः (इत्युत्तरम्)। **कार्य्यं** कर्त्तव्यम्। **किम्** (इति प्रश्ने)। **सुकृतं** सात्त्विकतयाऽऽचरितम्। **आर्य्यचरित**मार्य्याणां 'महाजनो येन गतः स पन्था' इत्युक्तानां सज्जनविशेषाणां चरितम्। 'कार्य्य'मिति शेषः। **दोषो** दुष्टत्वमनार्य्यचरितसेवनमिति यावत्। **न**। 'कार्य्यं'इति शेषः। (इत्युत्तरम्)। **अप्रतिहतं** निर्मलविकाशम्। **चक्षुः**। **किम्** (इति प्रश्ने)। धिषणा **बुद्धिः**। 'चक्षु'रिति शेषः। **नेत्रं** प्रसिद्धं चर्ममयं चक्षुरिति भावः। **न**। 'चक्षु'रिति शेषः। एवमुचितमुत्तरयन्तं प्रष्टा प्रशंसते—**त्वत्**। **अपरः**। सदसद्विवेकं सदसतोरुत्तमदूषितयोर्विवेकस्तम्। **कः**। **जानाति**। 'न कोऽपि'इति शेषः। वसन्ततिलकं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ २६६ ॥'

उदाहृतमर्थं निर्दिशति-**अत्र**। **शब्दं** 'न रत्न' मित्यादिशब्दबोध्यम्। **रत्नादि**। 'प्रश्नपूर्वक'मिति शेषः। **व्यवच्छेद्यं** व्यपोह्यम्। इदं तत्त्वम्—यशः प्रभृतेर्भूषणत्वमागमादिना विदितचरमेवेति न तद्वेदनायेदमभिधानम्, अपि तु-तदभिन्नस्य भूषणत्वादिव्यपोहनार्थमिति परिसङ्ख्येयम्। इति।

**'किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः ।**
**को ध्येयो भगवान्विष्णुः किँ काम्यं परमं पदम् ॥'**

अत्र व्यवच्छेद्यं पापाद्यार्थम् । अनयोः प्रश्नपूर्वकत्वम् । अप्रश्नपूर्वकत्वे यथा—

---

## विवृतिः

प्रतीयमानव्यपोह्यां प्रश्नपरिसंख्यामाह—**किमाराध्यमिति** । कार्यमित्यर्थः । पुण्यं कार्य न पापं, नरकसाधनत्वात् । सत्समागमः सेव्यो नासत्समागमः, पापसाधनत्वात् । विष्णुर्ध्येयो न धनं, भयप्रमादादिसाधनत्वात् । परमं पदं पारमार्थिकं सुखं काम्यं न वैषयिकं सुखम्, अनित्यत्वात् ॥

## विज्ञप्रिया

अन्यव्यपोहस्यार्थत्वं दर्शयति—**किमाराध्यमिति** । यद्यपि आराध्यत्वमाराधनाविषयत्वमाराधना च देवताप्रीतिहेतुः क्रिया तथापि आराध्यत्वमत्र पुरुषप्रवृत्तिविषयत्वमित्यर्थः । तेन आराध्यमुपार्जनीयं पुण्यमिति उत्तरस्य नान्यदिति व्यवच्छेदः । सदागमः । सतामागमः सत्सङ्गः, परमपदं मुक्तिः ।

## कुसुमप्रतिमा

प्रश्नपूर्वककथने आर्थी परिसंख्या दर्शयति किमाराध्यमिंति । सदा किं नाम कार्य्यम् आराध्यं सम्यक् साधनीयम ? इति कस्यचित् प्रश्ने—"पुण्यं धम्मर्यं कार्य्यमेव आराध्यम् । न पुनः पापम्" इत्यर्थतो गम्यते । कश्च सेव्यः ? इति कस्यचित् प्रश्ने—सदागमः साधुशास्त्रं वेदादिकमेव सेव्यः । "न पुनर्वात स्यायनसूत्रादिरसदागमः" इत्यर्थवशाद्बुध्यते । को ध्येयः ? इति कस्यचित् प्रश्ने—परमं पद उत्कृष्टं निर्वाणपदमेव काव्यम् । "न पुनः राजत्वादिकम्" इत्यर्थ तो लभ्यते । भावार्थास्तु सुगमाः ।

अत्रेति । आर्थमर्थवशाद्बोध्यम् । अतएवात्र प्रश्नपूर्वककथने आर्थी परिसंख्येति भावः ।

## विमला

प्रतीयमानव्यपोह्यां प्रश्नपरिसङ्ख्यामाह, किमिति ।—उक्तिप्रत्युक्तौ । सदा किम् आराध्यम् ?—अनुष्ठेयम् ? कार्य्यमित्यर्थः, (इति प्रश्नः) पुण्यं, कार्य्यमिति शेषः, (इत्युत्तरम्) न पापं, नरकसाधनत्वात् (इति व्यपोहः) । कश्च सेव्यः ? (इति प्रश्नः) सदागमः,—सच्छास्त्रं, सत्समागमो वा, सेव्य इति शेषः, (इत्युत्तरम्) नासत्यसमागमः, पापसाधनत्वात् (इति व्यापोहः) । कः ध्येयः ?—चिन्तनीयः ? (इति प्रश्नः) भगवान् विष्णुः, ध्येय इति शेषः, (इत्युत्तरम्) धनं न, भयप्रमादादिसाधनत्वादिति भावः (इति व्यपोहः) । किं काम्यम् ?—वाञ्छनीयम् ? (इति प्रश्नः) परमं—पदं—मुक्तिपदं, वाञ्छनीयमिति शेषः, (इत्युत्तरम्) न स्वर्गादिकं, पुण्यक्षये स्वर्गच्युतिसम्भवात् इति ज्ञेयम् (इति व्यपोहः) ।

## लक्ष्मी

प्रश्नपूर्वकप्रतिपादने आर्थ्याः परिसंख्याया उदाहरणमाह—किमिति। कयोश्चिद्विवेकिनोरुक्तिप्रत्युक्तिरियम्। सदा अहर्निश किं नाम कार्यम् आराध्यं कायेन वाचा मनसेन्द्रियैर्वा सम्यगनुष्ठेयम्? इति प्रश्ने—पुण्यं सुकृतमेव आराध्यम्, न पुनः पापम्, तस्य नरकसाधननत्वात् इत्युत्तरम्, एवमग्रेऽपि। कश्च सेव्य? इति प्रश्ने—सदागमः सतां महात्मनाम् आगमः सम्मेलनम्, यद्वा साधुशास्त्रं वेदादिकमेव सेव्यः, न पुनरसत्समागमः तस्य पापसाधनत्वात्। को ध्येयः? इति प्रश्ने—भगवान् भगं माहात्म्यस्यास्तीति भगवान् विष्णुः ध्येयः, न पुनर्धनम्, तस्य भयप्रमादादिसाधनत्वात्।

**'भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्त्तिषु।**
**माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ॥' इति विश्वमेदिन्यौ।**

अन्यत्र तु—

**'वदन्ति तत्तत्वविदो तत्त्वं यज्ज्ञानमद्वयम्।**
**ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥' इति**

किं काव्यम् अभिलषणीयम्? इति प्रश्ने—परमं 'तद्विष्णोः परमं पदम् सदा पश्यन्ति सूरयः' इत्याद्युक्तमुत्कृष्टं पदं स्थानमेव काम्यं न पुना राजादिकं वैषयिकं पदम्, तस्यानित्यत्वात्। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः।

लक्ष्यं संयोजयति—**अत्रेति**। पापादीत्यत्रादिपदेन दुःसङ्गपरस्त्रीक्षुद्रसुखानां परिग्रहः। आर्थम् अर्थवशेन गम्यम्। तेनात्र प्रश्नपूर्वकप्रतिपादने आर्थी परिसंख्येत्याशयः। एवं प्रश्नपूर्वकत्वेनोदाहरणं प्रदर्श्यान्यथोदाहरणं प्रदर्शयितुमाह—**अनयोरिति**। स्पष्टम्।

## रुचिरा

'**आराध्यम्**। **किम्**? (इति प्रश्ने)। **सदाऽहर्निशम्**। अत एव 'कायेन वाचा मनसेन्द्रियैर्वे'ति शेषः। **पुण्यं** परोपकारादि 'आराध्य'मति शेषः (इत्युत्तरम्)। **सेव्यः**। **च**। **कः** (इति प्रश्ने)। **सदागमः**, सतां महात्मनामागमः सम्मेलनम्। यद्वा-सन् भागवतचरितपरतया श्रेष्ठ आगमः। श्रीमद्भागवतादि शास्त्रम्। 'सेव्य' मिति शेषः (इत्युत्तरम्)। **ध्येयः** स्मरणीयः। **कः** (इति प्रश्ने)। **भगवान्**। **विष्णुः**। 'ध्येय'इति शेषः (इत्युत्तरम्)। **काम्यम**भिलषणीयम्। **किम्**। **परमं** 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इत्याद्युक्तम्। **पदं** स्थानम् (इत्युत्तरम्)॥२६७॥'

**'भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।**
**चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥'**

---

## विवृतिः

वाच्यव्यपोह्यमप्रश्नपरिसंख्यामाह—**भक्तिरिति**। व्यसनमनुशीलनम्। युवतिरूपकामात्रे ॥

## विज्ञप्रिया

अप्रश्नपूर्वकत्वे व्यवच्छेदस्य शाब्दत्वे आह–**भक्तिर्भव** इति। युवतिरूपे कामास्त्रे। भक्तिरित्यादौ सर्वत्र प्रायो महतां परिदृश्यत इत्यस्यान्वयः।

## कुसुमप्रतिमा

भक्तिरिति। प्रायो बाहुल्येनैव महतां जनानाम्, भवे महादेवे भक्तिरगनुरक्तिः परिदृश्यते, न पुनर्विभवे धनसम्पदि। शास्त्रे व्यसनभासक्तिः परिदृश्यते, न तु युवतिरेव कामास्त्रं तस्मिन्। तथा यशस्येव चिन्ता प्राप्त्युपायचिन्तनं परिदृश्यते, न पुनर्वषुषिदेहे

अत्र अप्रश्नपूर्वककथने नञ्त्रयोपादानात् विभवाद्यन्वार्थव्यपोहः शाब्द इति शाब्दौ परिसंख्यालङ्कारः।

## विमला

वाच्यव्यपोह्यामप्रश्नपरिसङ्ख्यामाह, भक्तिरिति।—महतां, जनानामिति शेषः, प्रायः,—बाहुल्येन, भवे—शिवे, ("जन्म-हरौ भवौ" इत्यमरः) भक्तिः,—प्रेम, परिदृश्यते,—प्रतीयते, न विभवे—सम्पदि; शास्त्रे—शास्त्राभ्यासे, व्यसनम्—आसक्तिः, अनुशीलनमित्यर्थः, (सर्वत्र "परिदृश्यते" इति क्रियापदं योजनीयम्) युवतिरेव कामस्य अस्त्रं तस्मिन् न; यद्वा—युवतीनां कामास्त्रं—मधुरवचनश्रवणादि, तत्रेत्यर्थः, न व्यसनमिति शेषः; यशसि—ख्यातौ, चिन्ता, न वपुषि—शरीरे। अत्र महतां कुत्र भक्तिर्दृश्यते इत्यादिप्रश्नाभावः। आर्य्या वृत्तम्। यथा वा—"दानेन पाणिर्न तु कङ्कणेन श्रोत्रं श्रुतेनैव न कुण्डलेन। विभाति कायः करुणापराणां परोपकारेण न चन्दनेन ॥" इति।

## लक्ष्मी

**भक्तिरिति**। प्राय आधिक्येनेव महतां महात्मानम्, भवे महादेवे 'व्योमकेशो भवो भीमः' इत्यमरः, भक्तिः प्रेम परिदृश्यते, न पुनर्विभवे सम्पत्तौ, शास्त्रे वेदादौ व्यसनम् अनुशीलनं परिदृश्यते, न तु युवतिरेव कामास्त्रं तत्र। तथा यशस्येव चिन्ता तत्प्राप्त्युपायचिन्तनं परिदृश्यते, न पुनर्वपुषि शरीरे तद्रक्षरक्षण एवेतितात्पर्यम्। आर्याच्छन्दः।

अत्र अप्रश्नपूर्वकप्रतिपादने नञयस्योपादानात् विभवाद्यन्यार्थ निषेधः शाब्द इति शाब्दी परिसंख्यालङ्कारः।

## रुचिरा

व्यवच्छेद्यं निर्दिशति-**अत्रे**त्यादिना। आदिपदेन दुःसङ्गपरस्त्रीक्षुद्रसुखानां ग्रहणम्। स्पष्टमन्यत्। एवं प्रश्नपूर्वकत्वेनोदाहृत्यान्यथोदाहर्तुमाह-**अनयो**रित्यादि। स्पष्टम्। '**भवे** शङ्करे। 'व्योमकेशो भवो भीम' इत्यमरः। **भक्तिः** प्रेम। **विभवे** सम्पत्तौ। **न**। 'भक्ति'रिति शेषः। **शास्त्रे** वेदादौ। **व्यसनं** चिन्तानुरागः। युवतिकामास्त्रे युवतिरेव कामास्त्रं तत्र तच्चिन्तने इति यावत्। **न**। 'व्यसन'मिति शेषः। यशसि तदुपार्जन इति भावः। चिन्ता। **वपुषि** शरीरे तद्रक्षण इति यावत्। **न** 'चिन्ते'ति शेषः। **प्रायः**। **महतां** महात्मनाम्। **परिदृश्यते**। अत्र प्रश्नमन्तरैव भक्त्यादेरन्याधिकरणत्वं व्यवच्छेद्यम्। आर्य्याछन्दः॥ २६८॥'

**'बलमार्तभयोपशान्तये विदुषां संमतये बहु श्रुतम्।**
**वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजना ॥'**

श्लेषमूलत्वे चास्य वैचित्र्यविशेषो यथा—

'यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्मसु वर्णसंकरश्चापेषु गुणच्छेदः—' इत्यादि।

---

## विवृतिः

प्रतीयमानव्यपोह्यामप्रश्नपरिसंख्यामाह—**बलमिति**। आर्तभयोपशान्तये, न परपीडनाय। संमतये सम्यग्ज्ञानाय, न विवादाय। श्रुतमध्ययनम्। तस्य दशरथस्य ॥ **चित्रकर्मसु** न मनुष्येषु। वर्णानां शुक्लादिद्रव्याणां विप्रादीनां च संकरो मेलकः। चापेषु न जनेषु, गुणस्य मौर्व्याश्छेदो द्वैधीभवनम्, अथ च गुणस्य विद्यादेश्छेदो विरहः ॥

## विज्ञप्रिया

अप्रश्नपूर्वकत्वे व्यवच्छेदस्यार्थत्वं दर्शयति—**बलमिति**। बलं विक्रमः आर्तानां पीडितानां भयनाशाय, सम्मतये प्रीतये इत्यर्थः, श्रुतं विद्या। अतो न केवलं तस्य राज्ञो वसु धनमेव परप्रयोजनम्, परप्रयोजनस्यार्थिदारिद्रयनाशरूपस्य जनकमपितु बलादिगुणवत्तापि तथेत्यर्थः। प्रयोजनजनके प्रयोजनपदमायुर्घृतमितिवत् सारोपलक्षणिकम्। अत्र न स्वार्थमिति व्यपोहप्रतीतिः। चित्रकर्मसु इत्यादि। अनयोर्वर्णगुणपदश्लेषः न ब्राह्मणादिषु न प्रजासु इति व्यापोहप्रतीतिः।

## कुसुमप्रतिमा

बलमिति। रघुवंशाष्टमसर्गस्थमिदं पद्यम्। तस्य विभोः प्रभोरजस्य बलम्, आर्त्तानां पीड़ितानां भयस्य उपशान्तये विवृत्तये, आसीदिति सर्वत्र शेषः, न पुनर्दुर्बलानां निपीड़नाय। बहु प्रचुरं श्रुतं शास्त्रज्ञानम्, विदुषा सम्मतयै बहुमतये अत्यादरायेति यावत्, न तु विवादायेति भावः। तथा केवलं वसु, धनमेव परप्रयोजनम् इति न, अपि तु गुणवत्तापि परप्रयोजनैव, न तु स्वनिमित्तेति भावः।

अत्र प्रश्नपूर्वकादेव "आर्त्तभयोपशान्तये बलम्" इत्यादिकथनात् "न तु दुर्बलपीड़नाय बलम्" इत्यादि रूपोऽन्वार्थव्यपोहः अर्थ तो गम्यत इत्यार्थी परिसंख्यालङ्कारः।

श्लेषेति। अस्य परिसंख्यालङ्कारस्य। कादम्बरीपूर्वार्द्धे शूद्रकनृपतिवर्णनपर यस्मान्नित्यादि गद्यम्। जितजगति यस्मिंश्च राजनि शूद्रके, महीं पालयति सति, चित्रवर्म्मसु आलेख्यनिर्म्माणव्यापरिष्वेव वर्णसुरा नीलपीतादिवर्णानां सम्मिश्रणानि, न पुनर्मानवेषु अन्यवर्णेभ्य अन्वर्णोत्पत्तिरूपा वर्णसङ्कराः, आसन्निति परेणान्वयः। आपेषु धनुष्वेव गुणच्छेदा युद्धादौ मौर्वीकर्त्तमनि, न तु लोकेषु गुणच्छेदादयादाक्षिण्यादिगुणविलोपा आसन्। तत्रत्यं परस्परव्यवहितं वाक्यद्वयमिदम्।

अत्र उक्तप्रकारान्वार्थव्यपोहः अर्थ वशादगम्यते इत्यार्थी परिसंख्या ।

## विमला

प्रतीयमानव्यपोह्यामप्रश्नपरिसङ्ख्यामाह, बलमिति ।—तस्य विभोः,—अजस्येत्यर्थः, बलम् आर्त्तानां—विपन्नानां, भयस्य उपशान्तये—नाशाय, न तु परपीड़नायेति भावः, बहुश्रुतं—शास्त्रज्ञानं, विदुषां—पण्डितानां, सम्मतये—सत्कृतये, सम्मानाय इत्यर्थः, न तु विवादाय इति भावः, वसु—धनं, केवलं न परप्रयोजनं, गुणवत्ताऽपि—दयादाक्षिण्यादिगुणशालित्वमपि, परप्रयोजना—परेषां प्रयोजनानुरोधिनीत्यर्थः, न तु स्वार्थपरेति भावः । अत्रापि किमर्थं तस्य बलमित्यादिप्रश्नाभावः । अत्र सुन्दरी वृत्तम्—"अयुजीर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा" इति तल्लक्षणात् । रघुवंशस्येदं पद्यम् ।

यस्मिंश्चेति ।—जितं जगत् येन तथाभूते, यस्मिन् राजनि—शूद्रकाख्ये, महीं—पृथ्वीं, पालयति—शासति सति, चित्रकर्मसु—आलेख्यव्यापारेषु, वर्णानां—रञ्जनद्रव्याणां, सङ्कराः,—समावेशाः, न तु मनुष्येषु वर्णानां ब्राह्मणादीनां सङ्कराः,—सङ्करोत्पत्तिरिति भावः, चापेषु—धनुःषु, गुणानां—मौर्व्वीणां, छेदाः, न तु जनेषु गुणानां—दयादाक्षिण्यादीनां विच्छेदा इति भावः । इदं कादम्बर्य्याः । यथा वा—"कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते । काठिन्यं कुचयुगले तरलत्वं नेत्रयोर्वसति ॥" इति ।

## लक्ष्मी

**बल**मिति । रघुवंशस्याष्टमे सर्गे दशरथस्तुरियम् । तस्य दशरथस्य बलं सैन्यम्, आर्त्तानां पीडितानां भयस्य त्रासस्य उपशान्तये निवृत्तये 'आसीत्' इति शेषः, एवमग्रेऽपि, न पुनः परपीडनाय । बहु अधिकं श्रुतं शास्त्रज्ञानम्, विदुषां मनीषिणां सम्मतये सम्यगुपकाराय, न तु विवादायेत्याशयः । तथा केवलं वसु, वित्तमेवान्यप्रयजनमिति न, किन्तु गुणवत्तापि विद्यादिशीलत्वमपि अन्यप्रयोजनैव, न तु स्वार्थेत्याशयः । **वैतालीय**छन्दः ।

अत्र प्रश्नपूर्वकप्रतिपादनाभावादेव 'आर्त्तभयोपशान्तये बलम्' इत्यादिप्रतिपादनात् 'न तु परपीडनाय बलम्' इत्यादिरूपोऽन्यार्थनिषेधः अर्थतः प्रतीयते इत्यार्थी परिसंख्यालङ्कारः ।

अस्य श्लेषमूलकत्वे वैचित्र्यविशेषत्वं भवतीति दर्शयितुमुत्थापयति—**श्लेषे**ति । अस्य परिसंख्यालङ्कारस्य । उदाहरति—**यस्मिंश्चेत्यादि** । बाणभट्टविरचिते कादम्बरीपूर्वार्द्ध शूद्रकराज्ञो वर्णनमिदम् । जितं वशीकृतं जगत् संसारो येन तथोक्तं, यस्मिंश्च राजनि शूद्रकनृपतौ, महीं भूमिं पालयति रक्षयति सति, चित्रकर्मसु आलेख्यक्रियासु वर्णाः रक्तपीतादयः तेषां सङ्कराः परस्परं बन्धाः आसन्निति शेषः, न पुनर्मानवेषु ब्राह्मणादिस्त्रीपुरुषदोषतः सङ्कराः अन्येभ्योऽन्योत्पत्तय इत्यर्थः । चापेषु धनुषु गुणच्छेदाः ज्यारूपस्य सङ्ग्रामादौ त्रुटनम्, न पुनर्लोकेषु गुणच्छेदाः वचनमाधुर्यादिगुणविलोपा आसन् । वाक्यद्वयमिदं तत्र मिथो व्यवहितं वर्तत इत्यवगन्तव्यम् ।

अत्र उक्तविधान्यार्थनिषेधः अर्थतः प्रतीयत इत्यार्थी परिसंख्यालङ्कारः ।

## रुचिरा

'**आर्त्तभयोपशान्तये** । **बलम्** । 'न परपीडनाये'ति शेषः । **विदुषाम्** । **सम्मतये** सम्यगुपकृतये । **बहु** । **श्रुतं** शास्त्रं 'नतु विवादाये'ति शेषः । एवम्-**तस्य** दशरथस्य । **विभो** राज्ञः । **केवलम्** । **वसु** धनम् । **न** । किन्तु-**गुणवत्ता**

गुण (विद्याऽऽदि) शालित्वम् । **अपि** । **परप्रयोजनं** तन्निमित्तमिति भावः । 'आसी'दिति शेषः । वैतालीयं वृत्तम् । अत्रापि 'किं तस्य बल'मित्यादिप्रश्नाभावः, अथ-'परपीडनाय ने'त्यादिव्यवच्छेद्यमार्थमिति विशेषः ॥ २६९ ॥'

अस्य श्लेषमूलकत्वे वैचित्र्यमित्याह—**श्लेषे**त्यादिना । स्पष्टम् ।

उदाहरति—'**यस्मिन्** शूद्रके । **च** । **राजनि** । **जितजगति** जितं वशीकृतं जगत्संसारो येन तादृशे । **महीं** पृथिवीम् । **पालयति** । 'सती'ति शेषः । **चित्रकर्मसु** । **वर्णसङ्करा** वर्णानां पीतादीनां सङ्कराः । 'आस'न्निति शेषः । 'न प्रजासु वर्णानां ब्राह्मणादीनां स्त्रीपुरुषदोषतः सङ्करा मेलना' इति व्योपोह्यर्थः । **चापेषु** धनुःषु । **गुणच्छेदा** गुणस्य मौर्व्याः छेदाः 'आसन्निति शेषः । 'न प्रजासु गुणानां माधुर्य्यादीना'मिति व्यपोह्योर्थः ।...' **इत्यादि** । कादम्बर्य्या गद्यमिदम् । अत्र वर्णगुणादिपदानां श्लिष्टत्वम् ।

**उत्तरं प्रश्नस्योत्तरादुन्नयो यदि।**

**यच्चासकृदसंभाव्यं सत्यपि प्रश्न उत्तरम्॥ ८२॥**

यथा मम—

**'वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः।**

**अहमेकाकिनी बाला तवेह वसतिः कुतः॥'**

अनेन पथिकस्य वसतियाचनं प्रतीयते।

---

## विवृतिः

उत्तरालंकारमाह—**उत्तरमिति**। उन्नयः प्रणीयमानत्वम्। असकृदिति प्रश्ने उत्तरे चान्वेति। असंभाव्यं लोकप्रसिद्धिगम्यम्। लोकविलक्षणमित्यर्थः॥

## विवृतिपूर्तिः

**उत्तरमिति**। प्रश्नेऽसति यद्युत्तरात्मप्रश्नस्योन्नयः कल्पनं तदेकमुत्तरम्। अपि चासकृत्प्रश्ने सति यदसंभाव्यं संभावयितुमशक्यमसकृदुत्तरं प्रतिवचनं तत्पुनरपरमुत्तरमिति योजना। अयं चोत्तरालंकारो द्विविधोऽपि प्रश्नोत्तरयोन्यतरस्योभयोश्च साभिप्रायत्वेन निरभिप्रायत्वेन च चतुर्विध इत्यष्टधा॥

## विज्ञप्रिया

द्विविधोत्तरालङ्कारमाह—**उत्तरमिति**। उन्नय उन्नयनं व्यञ्जना। **यच्चेति**। असकृदित्यस्योभयत्रान्वयः। सत्यप्यसकृत् प्रश्नेऽसम्भाव्यं विलक्षणत्वेन सहसा अप्रतीयमानमसकृदुत्तरमित्यर्थः।

**वीक्षितुमुति**। स्वंय दूत्या उक्तिरियम्। वाच्यार्थे श्वश्रवाः वीक्षणासामर्थ्यप्रदर्शनं तव रन्धनभोजनस्थलेऽपि गमनासम्भावनाप्रदर्शनार्थम्। अत्र निषेधाभावादाक्षेपालङ्कारोऽपि बोध्यः।

## लोचन

उत्तरम् उत्तराख्यमलङ्करणम्। असकृदित्यनेन प्रश्नपूर्वस्यासम्भवोत्तरस्य सकृद् निर्देशे न चारुत्वम्।

## कुसुमप्रतिमा

एकस्योक्तावन्वस्य प्रतीतेः प्रकृतत्वात् तद्रूपमुत्तरं नामालङ्कारं निरूपयत् सर्वविधमेव तं निरूपयति उत्तरमिति। उत्तरार्द्धे प्रश्ने सत्यपीत्यभिधानात् पूर्वार्द्धे प्रश्ने असत्यपि इत्यवगन्तव्यम्। तथा उरार्द्धे एकस्मिन्न प्रश्ने तादृशवैचित्र्यासम्भवात् बहुतरप्रश्ने सतीति बोध्यम्। तथा च प्रश्ने असत्यपि, उत्तरात् प्रतिवचनात् यदि प्रश्नस्य उन्नयः अनुमानेन ज्ञानं स्यात्, तदा उत्तरं नाम अलङ्कारो भवेदित्येकविधमुत्तरम्। तथा बहुतरप्रश्ने सत्यपि असम्भाव्यमसम्भावनीयं लोकातीतत्वादचिन्तनीयमित्यर्थः, यच्च असकृद्वार वारम् उत्तरं प्रतिवचनम्, तदपि उत्तरं

नामालङ्कारो भवेदत्यपरविधमुत्तरम् । तेनैतद्द्विविध एवोत्तरालङ्कारः । काव्यप्रकाशेऽध्येयम् । "कोभवान् ? चैत्र" इत्यादौ तु प्रश्नस्य उत्तरस्य च बहुत्वाभावेन वैचित्र्याभावान्नायमलङ्कारः । काव्यप्रकाशेऽप्येवम् । "को भवान् ?" इत्यादौ तु प्रश्नस्य उत्तरस्य च बहुत्वाभावेन वैचित्र्याभावान्नयमलङ्कारः ।

उत्तरघटितत्वादेवास्य उत्तरमिति संज्ञा । अत्रार्थे नित्यनपुंसकलिङ्गोऽयं शब्दः ।

तत्र प्रथमप्रकारमुदाहरति वीक्षितुमिति । रिरं समाणायाः कस्याश्चित्तरुण्याः उक्तिरियम् । श्वश्रूर्भर्त्तुर्माता वीक्षितुं द्रष्टुं न क्षमा न शक्ता अन्धेत्यर्थः । अतो तस्याःकापि शङ्कास्तीति भावः । स्वामी महद्भर्ता दूरतरमतिदूरदेशं गतः । अतस्तदागमनसम्भावनापि नास्तीत्याशयः । अहञ्च एकाकिनी बाला अत्रास्मीति शेषः । अतएव इह अस्मद्रगृहे कुतः कथं तव वसुतिरवस्थानं स्यात् ? अपि तु कुतोऽपि नेत्यर्थः । अत्रावस्थाय यथेष्टं रमस्वेति च व्यज्यते ।

अनेनेति । वीक्षितुमित्यादिना प्रतिवचनेनेत्यर्थः । वसतियाचनं "अहमत्रावस्थातुमर्हामि" इति वासस्थानप्राप्तिप्रश्न इत्यर्थः, प्रतीयते अनुमानेन ज्ञायते । अतएवात्र उत्तरालङ्कार इति भावः ।

## विमला

उत्तरमाह, उत्तरमिति ।—उत्तरात्—उत्तरवाक्यात्, यदि प्रश्नस्य उन्नयः,—आगमः, प्रतीयमानत्वम् इत्यर्थ, स्यात्, यद्वा—सत्यपि—विद्यमानेऽपि, प्रश्ने असकृत्—पुनः पुनः, [एतत् प्रश्ने उत्तरे चान्वेति] असम्भाव्यं—पूर्वं मनसा अनिश्चितं, लोकप्रसिद्धगम्यम् अतिविचित्रमित्यर्थः, यत् उत्तरं स्यात्, तत् उत्तरम्—उत्तरनामालङ्कारः । अत्रैवं बोध्यं, तथा हि, असति प्रश्ने उत्तरात् प्रश्नस्य कल्पनं चेदेकमुत्तरम्, एवमसकृत्प्रश्ने सम्भावनानर्हं यदसकृदुत्तरं तदपरमुत्तरम्, एष द्विप्रकारकोऽपि प्रश्नोत्तरयोरेकस्योभयोश्चापि सप्रयोजनत्वनिष्प्रयोजनत्वाभ्यां चतुष्प्रकार इत्यष्टप्रकारताऽस्य ज्ञेया ।

वीक्षितुमिति ।—पथिकं प्रति कस्याश्चिदुक्तिः । श्वश्रूः,—स्वामिजननी, वीक्षितुं,—द्रष्टुं, न क्षमा—न शक्ता, अन्धेति यावत्, स्वामी—भर्त्ता, दूरतरम्—अतिदूरं, गतः, तस्यागमनमपि न सम्भवतीति भावः,—बाला मुग्धा, अप्रगल्भा इति यावत्, अहम् एकाकिनी, अतः तव इह वसतिः,—अवस्थानं, कुतः,—कथम् ? स्यादिति शेषः । अत्र उत्तरवाक्येन पथिकः पूर्वं वसत्यर्थं प्रार्थितवानिति प्रश्नस्य उन्नयः । यथा वा—"एकाकिनी यदबला तरुणो तथाऽहमस्मद्गृहे गृहपतिश्च गतो विदेशम् । कं याचसे तदिह वासमियं वराको श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ! ॥" इति, अत्रापि मम वासो दीयतामिति प्रश्नः उत्तरादुन्नीयते इति ज्ञेयम् ।

## लक्ष्मी

एकस्याभिहितेऽपरस्यावगमात् प्रकरणेन तद्रूपमुत्तरालङ्कारं प्रतिपादयति—**उत्तरमिति** । द्वितीयार्द्धे 'प्रश्ने सत्यपि' इत्युक्तत्वात् प्रथमार्द्ध 'प्रश्ने असत्यपि' इत्युन्नेयम् । एवं द्वितीयार्द्धे एकप्रश्ने तथाविधविच्छित्तेरसम्भवात् अधिकतरप्रश्ने सतीत्यप्यवगन्तव्यम् । एवञ्च प्रश्ने असत्यपि उत्तरात् प्रतिवचनात्—

**उत्तरं प्रतिवाक्ये स्यादूर्ध्वोदीच्योत्तमेऽन्यवत् ।**

**उत्तरस्तु विराटस्य तनये दिशि चोत्तरा ॥ इति विश्वः ।**

यदि प्रश्नस्य पूर्ववाक्यस्य उन्नयः कल्पनम् अनुमानेन ज्ञानमिति यावत् स्यात्, तदा उत्तरयुक्तत्वादेव उत्तरं तन्नामालङ्कारो भवेत् 'अयञ्च प्रथम उत्तरालङ्कारः।' तथा अनेकतरप्रश्ने सत्यपि असम्भाव्यं सर्वैरेव सम्भावयितुमशक्यं दुर्ज्ञेयमिति यावत्, यच्च असकृत् अनेकवारम् उत्तरं प्रतिवचनम्, तदपि उत्तरं तन्नामालाङ्कारो भवेत् 'अयञ्च द्वितीय उत्तरालङ्कारः'। तदेवं द्विविधोऽयमलङ्कारः। अएत्रासकृदिति विच्छित्तिपुष्ट्यर्थं वचनम्, अतएव—

'किमिति कृशासि कृशोदरि ! किं तव परकीयवृत्तान्तैः' ?

इत्यादावुत्तरस्याभिप्रायगर्भत्वे सकृदुपादानेऽपि चमत्कारस्य सत्त्वादयमलङ्कारः। अत्र प्रश्नेन प्रतीकारासामर्थ्यं व्यङ्ग्यम्, उत्तरेण स्वस्य पातिव्रत्यं व्यङ्ग्यम्।

तत्र प्रथमभेदोदाहरणं प्रदर्शयति—**वीक्षितुमिति**। रन्तुमिच्छन्त्याः कस्याश्चिद्रमण्याः उक्तिरियम्। श्वस्रूः स्वामिमाता वीक्षितुम् अवलोकयितुं गतागतं ज्ञातुमिति यावत्, न क्षमा न समर्था अन्धेत्यर्थः, अतो न कापि तस्या भीतिरिति भावः। स्वामी मम पतिः, दूरतरं नितान्तं दूरं देशमित्यर्थः, गतः प्राप्तः, अतस्तस्याकस्मात् प्रत्यागमनसम्भावना नास्तीत्यभिप्रायः, अहञ्च एकाकिनी असहाया बाला अस्मीति शेषः। अत एव इह मम भवने कुतः कथं तव पथिकस्य वसति वासः सङ्गच्छते ? अपि तु कुतोऽपि नेत्यर्थः। अत्र स्थित्वा स्वच्छन्दं रमस्वेति च ध्वन्यते।

## रुचिरा

उत्तरं लक्षयति—१७० **यदि**। **उत्तरात्**। **प्रश्नस्य**। 'असत' इति शेषः। **उन्नयः** कल्पनम्। 'तदैक'मिति शेषः। **उत्तरम्**। **यत्**। **च**। **प्रश्ने**। **सति**। **अपि**। **असम्भाव्यं** सम्भावितुमशक्यम्। **असकृत्पुनः**। पुन उत्तरम्। 'तदपर'मिति शेषः। 'असकृ'दिति चमत्कारपुष्टार्थं वचनम्, अतः—'किमिति कृशाऽपि कृशोदरि ! किं तव परकीयवृत्तान्तैः' इत्यादौ उत्तरस्याकूतगर्भत्वेन सकृदापि चमत्कारित्वेनोपस्कारमेवेति बोध्यम्॥ १३५॥

उदाहरति—**यथा**। **मम**—'**श्वश्रूः** स्वामिमाता। **वीक्षितुं** द्रष्टुं गतागतं बोद्धुमिति यावत्। न। क्षमा शक्ता। अन्धेति भावः। **स्वामी**। **दूरतरं** नितान्तं दूरं देशमित्यर्थः। **गतः** प्राप्तः। अतस्तस्य सहसा प्रत्यागमनसम्भावना नास्तीति भावः। **अहम्**। **बाला एकाकिनी**। अतः—**तव** पथिकस्य। **इह**। **वसतिर्वासः**। **कुतः** कथं सङ्गच्छेतेति भावः॥ २७०॥'

अत्र प्रश्नोन्नयं निर्दिशति-**अनेनेत्यादिना**। **अनेनोत्तरेणेत्यर्थः**। स्पष्टमन्यत्।

**'का विसमा देव्वगई, किं लद्धव्वं जणो गुणग्गाही।**

**किं सोक्खं सुकलत्तं, किं दुग्गेज्झं खलो लोओ ॥'**

अत्रान्यव्यपोहे तात्पर्याभावात्परिसंख्यातो भेदः। न चेदमनुमानम्। साध्यसाधनयोर्द्वयोर्निर्देश एव तस्याङ्गीकारात्। न च काव्यलिङ्गम्। उत्तरस्य प्रश्नं प्रत्यजनकत्वात्।

---

## विवृतिः

**का विसमा इति**। 'का विषमा दैवगतिः किं लब्धव्यं जनो गुणग्राही। किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः ॥' इति संस्कृतम्। सौख्यं सुखसाधनम्। अत्र प्रतीयमानव्यपोह्याः प्रश्नपरिसंख्यायाः प्रसक्तिं वारयति—**अत्रेति**। ननु वीक्षितुं न क्षमेत्यादावुत्तरात्प्रश्नानुमानमित्यनुमानलंकार एवायमित्यत आह—**न चेदमिति**। ननूत्तरेण प्रश्नं कल्प्यं चेत्तर्हि हेतुताया उत्तरवाक्ये व्यङ्ग्यत्वेन काव्यलिङ्गालंकार एव स्यादत आह—**न चेति** ॥

## विज्ञप्रिया

द्वितीयमुत्तरमाह—**विषमेति**।

**'का विषमा दैवगतिः किं लब्धव्यं जनो गुणग्राही।**

**कि सौख्यं, सुकलत्रं, किं दुर्ग्राह्यं खलो लोकः ॥'**

इति सं. दैवगत्यादिवैषम्यादीनां वैलक्षण्येन सहसार्थतोऽप्रतीयमानत्वात्तत्रैव प्रतीतिविश्रान्तेरिति भावः।

**प्रश्नं प्रत्यजनकत्वादिति**। इदं च ज्ञापकहेतोः काव्यलिङ्गत्वाभावत्वकथनं प्रागेवार्थान्तरन्यासविचारे स्मर्तव्यम्। परं प्रश्नज्ञापकत्वे उत्तरालङ्कारेण बाधनान्न तत्र काव्यलिङ्गत्वावकाशः।

## कुसुमप्रतिमा

द्वितीयप्रकारं दर्शयति का इति। "का विषमा? दैवगतिः, किं लब्धव्यम्? जनो गुणग्राही। किं सौख्यम्? सुकलत्रम्, किं दुर्ग्राह्यम्? खलो लोकः ॥" इति संस्कृतानुवादः। का विषमा पूर्वापरासमाना अप्रतिकार्य्यत्वेन दारुणा वा? दैवगतिर्विधेर्व्यवहारः। किं नाम वस्तु लब्धव्यम्। गुणग्राही जनः। किं सौख्यं सुखजनकम्? सुकलत्रम् उत्तमभार्य्या। किं नाम दुर्ग्राह्यं वशीकर्त्तुमशक्यम्? खलो लोकः।

अत्र बहुतरेषु प्रश्नेषु साधारणस्याचिन्तनीयबहुतरोत्तरदानादुत्तरदानादुत्तरालङ्कारः।

ननु "किमाराध्यम्" इत्यादिवदेव "का विषमा" इत्यादावपि प्रश्नपूर्वकात् "दैवगतिः" इत्यादि कथनात् "न मानवचरित्रादिगतिः" इत्याद्यन्यव्यपोहसम्भवेन आर्थपरिसंख्याप्रसक्तिरिति ततः अथ द्वितीयप्रकारोत्तरालङ्कारस्य को भेद इत्याह अत्रेति। अन्यव्यपोहे इतरार्थव्यवच्छेदे तात्पर्य्याभावादुत्तरकर्त्तुरिच्छाया अभावात्। तथा च सदा "किमारध्यम्" इति प्रश्ने "पुण्यम्" इत्युत्तरकर्त्तुः "न तु पापम्" इत्यन्यव्यपोह इष्ट एव; "का विषमा" इति प्रश्ने

"दैवगतिः" इत्युत्तरकर्त्तुस्तु तावन्मात्रमेवेष्टम्, न तु "न मानवचरित्रादि गतिः" इत्यन्यव्यपोहः, ईदृग्वैषव्यानुमानस्य-सर्वेषामात्मनिदर्शनैव सर्वथा सम्भवपरत्वादिति भावः।

अथ तथापि "वीक्षितुं न क्षमा श्वश्रूः" इत्यादौ तादृशेनोत्तरेण पथिकवसतिप्रश्नस्यानुमानात्, तादृशव्य-ङ्ग्यार्थसत्त्वेन विच्छित्तिवशाच्च अनुमानालङ्कार एवास्तु किं प्रथमप्रकारोत्तरालङ्काराङ्गीकारेणेत्याह न चेति। निद्र्देश एव उक्त वेव, तस्य अनुमानस्य। तथा चाक्तोदाहरणे तादृशपथिकप्रश्नस्यानुक्तत्वान्नानुमानमित्या-शयः।

ननु तर्हि तथाविधपथिकप्रश्नप्रतीतिं प्रति "वीक्षितु न क्षमा श्वश्रूः" इत्यादिवाक्यार्थानां हेतुत्वात्तत्र वाक्यर्थहेतुकं कथलिङ्गमेवास्तम्, किमतिरिक्तोत्तरालङ्कारस्वीकारेणेत्याह पुनर्न चेति। तथाहि तादृशप्रश्नप्रतीतिं प्रत्येव "वीक्षितुम्" इत्यादिवाक्यार्थानां हेतुत्वम्, न तु तादृशप्रश्नं प्रति; अतो न काव्यलिङ्गमपीत्याराय::। इदमुपलक्षणम्। निष्पाद्य निष्पादकयोरुभयोनिद्र्देशस्थल एव काव्यलिङ्गस्याप्यङ्गीकारात् अत्र तु निंष्पाद्यस्य निद्र्देशाभावादपि न काव्यलिङ्गप्रसक्तिरित्यपि द्रष्टव्यम्।

## विमला

का विसमा इति।—["का विषमा ? दैवगतिः किं लब्धव्यम् ? जनो गुणग्राही। किं सौख्यम् ? सुकलवं किं दुर्ग्राह्यम् ? खलो लोकः॥" इति संस्कृतम्]। विषमा—विसदृशी, का ? दैवगतिः। किं लब्धव्यम् ?—प्राप्त-व्यम ? गुणाग्राही जनः। सौख्य—सुखसाधनं, किम् ? सुकलत्रं—साध्वी भार्य्येत्यर्थः। दुर्ग्राह्यम्—अवश्यं, किम् ? खलः लोकः,—दुर्जन इत्यर्थः।

इह प्रतीयमानव्यापोह्यायाः प्रश्नपरिसङ्ख्याः प्रसक्तिं वारयति, अत्रेति।—अन्यव्यपोहे—अन्यस्य व्यवच्छेदे, तात्पर्य्याभावात्—वक्तुरभिप्रायासद्भावात्। ननु "वीक्षितु न क्षमा" इत्यादावुत्तरात् प्रश्नानुमानमिति अनुमानलङ्कार एवायमित्यत आह—न चेदमिति। ननु उत्तरेण प्रश्न कल्प्यं चेत् तर्हि हेतुताया उत्तरकाव्ये व्यङ्ग्यत्वेन काव्यलिङ्गालङ्कार एव स्यात्, अत आह—न चेति।

## लक्ष्मी

अत्र प्रश्नोन्नंय दर्शयति—**अनेनेति**। अनेन वीक्षितुमित्यादिना उत्तरेणेत्यर्थः. वसतिर्याचनम् 'अहमत्रा-वस्थातुं कामये' इति वासभूमिप्राप्तिप्रश्नमित्यर्थः, प्रतीयते कल्प्यते। तेनात्र उत्तरालङ्कार इत्याशयः।

द्वितीयभेदोदाहरणं दर्शयति—**का इति**।

का विषमा ? दैवगतिः किं लब्धव्यं ? जनौ गुणग्राही।

किं सौख्यं ? सुकलत्रं किं दुर्ग्राह्यं ? खलो लोकः॥ इति संस्कृतम्।

का विषमा प्रतिकूला ? दैवगतिः प्रारब्धभोगः, किं नाम वस्तु लब्धव्यं यत्नेनोपार्जनीयम् ? गुणग्राही जनो लोको लब्धव्य इति शेषः, किं सौख्यं सुखसाधनम् ? सुकलत्रम् उत्तमभार्या 'दुर्गस्थाने नृपादीनां कलत्रं श्रोणिभा-र्ययोः' इति रभसः, किं नाम दुर्ग्राह्यं वशीकर्त्तुमशक्यम् ? खं छिद्रं लाति आदत्ते गृह्णातीति खलो दुष्टो लोको जनः, 'खलः वल्के भुवि स्थाने क्रूरे कर्णे जपेऽधमे' इति हैममेदिन्यौ, लोकस्तु भुवने जने' इत्यमरः। गाथाच्छन्दः।

अत्र अनेकतरेषु प्रश्नेषु सामान्यस्याविचारणीयानेकतरोत्तरादानादुत्तरालङ्कारः।

अत्रालङ्कारान्तरतो भेदमुपपादयितुमाह—**अत्रेति**। अन्यव्यपोहे वस्त्वन्तरनिराकरणे तात्पर्याभावात् उत्तरविधातुरभिलाषाया अभावात्। भेदो भिन्नत्वम्। एवञ्चार्थपरिसंख्यालङ्कारे 'किमाराध्यम्' इति प्रश्ने 'पुण्यम्' इत्युत्तरविधातुः 'न तु पापम्'इत्यन्यनिषेध अभिलषित एव, उक्तोदाहरणे तु का विषमा इति ? प्रश्ने 'दैवगतिः' इत्युत्तरविधातुस्तु तावन्मात्रमेवाभिलषितम्, न तु मानवचरित्रादिगतिः' इत्यन्यनिषेध इति स्फुटं भेद इत्याशयः।

नन्वेवमपि 'वीक्षितुं न क्षमा' इत्यादौ तथाविधप्रतिवचनेन पथिकवसतिप्रश्नस्य कल्पनात् तथाविधव्यङ्ग्यार्थविद्यमानत्वेन वैचित्र्यवशाच्चानुमानालङ्कार एव स्वीक्रियतामलं प्रथमभेदोत्तरालङ्कारेणेत्यत आह—**नचेति** साध्यसाधनयोः लिङ्गिलिङ्गयोः निर्देश एव अभिहित एव। एवञ्चोक्तोदाहरणे तथाविधपथिकप्रश्नस्यानभिहितत्वान्नानुमानमिति भावः।

ननूत्तरेण प्रश्नं कल्प्यञ्चेत्तर्हि हेतुताया उत्तरवाक्ये व्यङ्ग्यत्वेन वाक्यार्थहेतुकं काव्यलिङ्गालङ्कारमेवाभ्युपेयताम्, अलमुत्तरालङ्काराङ्गीकारेणेत्यत आह—**नचेति**। उत्तरस्य प्रतिवचनस्य प्रश्नं प्रश्नवाक्यं प्रति अजनकत्वात् हेतुत्वाभावात्। एवञ्च तथाविधप्रश्नप्रतीतिं प्रत्येव 'वीक्षितुम्' इत्यादिवाक्यार्थानां कारणत्वम्, न तु तथाविधप्रश्नं प्रति, तेन न काव्यलिङ्गमपीतिभावः। किञ्च निष्पाद्यस्यात्रानभिधानान्न काव्यलिङ्गप्रसक्तिः, निष्पाद्यनिष्पादकयोर्द्वयोरभिधान एव तत्स्वीकारादित्यवधेयम्।

## रुचिरा

द्वितीयमुदाहरति-'**विसमा** विषमा प्रतिकूलेति यावत्। **का** ? **देव्वगई** दैवगतिः प्रारब्धभोग ईश्वरेच्छेति यावत्। 'विषमे'ति शेषः। **लद्धव्वं** लब्धव्यं यत्नेनोपार्जनीयमिति यावत्। **किम्** ? **गुणग्गाही** गुणग्राही। **जणो** जनः। 'लब्धव्य'इति शेषः। **सोक्खं** सौख्यं सुखसाधनमिति यावत्। **किम्** ? **सुकलत्तं** सुकलत्रं सुभगायाः सम्पत्तिरिति यावत। **दुग्गेज्झं** दुग्राह्यं दुर्वश्यमिति यावत्। **किम्** ? **खलो** दुर्जनः। **लोओ** लोकः। आर्याछन्दः। अत्रासकृत्प्रश्नः॥ २७१॥'

अलङ्कारान्तरतोऽस्य व्यवच्छेदं निर्दिशति—**अत्रोत्तरालङ्कारे**। 'प्रश्नस्ये'ति शेषः। **अन्यव्यपोहे** वस्त्वन्तरनिराकरणे। **तात्पर्याभावात्**। **परिसङ्ख्यातः**। **भेदो** भिन्नत्वम्। **इदमुत्तरम्**। **च**। **अनुमानम्**। **न**। **तस्यानु**-मानस्य। **साध्यसाधनयोर्लिङ्गिलिङगयोः**। **निर्देशे**। **एव**। **अङ्गीकारात्**। इदम्-**काव्यलिङ्गम्**। **च**। **न**। **उत्तरस्य** प्रतिवचनस्य। **प्रश्नं** प्रश्नवाक्यम्। **प्रति**। **अजनकत्वात्** हेतुत्वाभावात्।

**दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते।**

मूषिकेण दण्डो भक्षित इत्यनेन तत्सहचरितामपूपभक्षणमर्थादायातं भवतीति नियतसमानन्यायादर्थान्तरमापततीत्येष न्यायो दण्डापूपिका। अत्र च क्वचित्प्राकरणिकादणिकादर्थाद त्प्राकरणिकस्यार्थस्यापतनं क्वचिदप्राकरणिकार्थात्प्राकरणिकार्थस्येति द्वौ भेदौ। क्रमेणोदाहरणम्—

**'हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले।**
**मुक्तानामप्यवस्थेयं के वयं स्मरकिंकराः॥'**

---

## विवृतिः

अर्थापत्त्यलंकारमाह—**दण्डापूपिकयेति**। दण्डापूपन्यायेनेत्यर्थः। अन्यार्थागमो भिन्नार्थप्रतीतिः॥ दण्डापूपन्यायमाह **मूषिकेणेति**। इतिशब्दो हेतौ। अनेन मूषिकेण तत्सहचरितं दण्डभक्षणसहचरितमर्थादौचित्यादायातमवगतं भवतीत्यनन्तरं 'वदन्यत्रापि' इति पूरणीयम्। **नियतेति**। नियतस्य तद्वत्त्वेन निश्चितस्य समानन्यायात्तुल्यसामर्थ्यादर्थान्न तु शब्दात्। आपतति प्रतीतिविषयो भवति। मूषिकस्य हि दण्डभक्षणं दुष्करं तन्निष्पत्तौ तत्सहचरितापूपभक्षणमतिसुकरत्वाद्यथा संभाव्यते तथात्रापि सहचरितैकसिद्धेरपरसिद्धरौचित्यात्संभाव्यत इति भावः॥

## विवृतिपूर्तिः

**दण्डेति**। दण्डापूपयोर्भावो दण्डापूपिका। 'द्वन्द्वमनोज्ञादिभ्यश्च' इति वुञ्। पृषोदरादित्वाद्वृद्ध्याभाव इति केचित्। अन्ते तु दण्डापूपौ विद्येते यस्यां नीतौ सा दण्डा पूपिका। 'अत इनिठनौ' इति ठनित्याहुः। अपरे दण्डापूपाविव दण्डापूपिकेति 'इवे प्रतिकृतौ' इति कनं वर्णयन्ति॥

## विज्ञप्रिया

अर्थापत्त्यलङ्कारमाह—**दण्डापूपिकयेति**। दण्डापूपिका न्यायविशेषः। तच्च स्वयमेव दर्शयिष्यति। तन्नायायेनान्यार्थस्यानुक्तापरार्थस्यागमो व्यञ्जनेत्यर्थः। तन्यायश्च शब्दश्लेषाल्लभ्यो बोध्यः। अन्यथा समासोक्त्यप्रस्तुतप्रशंसादावपि तत्प्रसक्तेः।

तन्नयायं दर्शयति—**मूषिकेणेति**। दण्डोऽत्र तत्तत्स्थलीतोऽपूपस्याकर्षणदण्डः अपूपः पिष्टकम्। तद्दण्डभक्षणं तत् पिष्टकगन्धात्। तथा तत् सहचरितपिष्टकभक्षणमावश्यकमतो मूषिकेण दण्डो भक्षित इत्यनेनार्थात् केनाप्युक्तेनेति। शेषः। **इति नियतसमानेति**। इति यत् नियतं तस्य समानन्यायादर्थान्तरमुक्तभिन्नोर्थ आपतति प्रतीयत इत्यर्थः। तन्नायायलभ्यत्वे द्वैविध्यं दर्शयति**क्वचिदिति**।

तत्र प्राकरणिकादप्राकरणिकार्थस्य तन्न्यायगम्यत्वं दर्शयति हारोयमिति। **लुठतीति**। स्तनमण्डलावज्ञाधीनाङ्गपरावृतिरूपगतिविशेषेण तिष्ठतीत्यर्थः। इयमवस्थाऽवज्ञास्थितिरूपा। **के वयमिति**। स्मराकिङ्कराणामि-

यमवस्था। स्मरकिङ्कराणामस्माकमित्येवं ज्ञेयत्वात् सुतरां लुठनमित्यर्थः। अत्रालङ्काराधीनसौन्दर्यवर्णनस्य प्रक्रान्तत्वान्मुक्ताः। प्राकरणिक्यः। अत्र के वयमित्यनेन तन्नयायलाभः।

## लोचन

केति।

**"का विषमा दैवगतिः किं लब्धव्यं जनो गुणग्राही।**

**किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः॥"**

अन्यव्यपोहे तात्पर्य्याभावात्, किन्तु पूर्वजनाभिसम्बन्धस्य दैवगत्यादेर्विषमत्वस्य ख्यापनमात्रस्य परिगतत्वादित्यर्थः। एवमुत्तरालङ्कारस्य विषयप्रकारस्यालङ्कारान्तरविवेकलाघवात् पश्चाद् भिनत्ति—**नचे**ति।

कन् प्रत्ययेन दण्डापूपवत् दण्डापूपिका, तथाविधन्यायोपि दण्डायूपिका। येन केन विधिना च वस्त्वन्तरस्यागमोऽर्थादापतनं सिद्धिरिति यावत्। एतदेव दर्शयति—**मूषिकेणे**ति। अर्थादापतति। तथाहि येन खलु मूषिकेणापूपसहचरितो दण्डो भक्षितस्तेन कथमपूपः परित्यक्त इति तथेहापि बोद्धव्यम्। तस्मात् यत्र प्रतिसदृशन्यायाद् अर्थान्तरानुगमस्तत्रायमलङ्कार इत्यर्थः।

## कुसुमप्रतिमा

एकोक्तावन्वप्रतीतेः प्राकरणिकत्वात् तत्स्वरूपामेवार्थापत्तिं नामालङ्कारं लक्षयति दण्डेति। दण्डापूपिकया दण्डापूपिकाख्यन्वायेन, अन्यस्य अर्थस्य आगमः प्रतीतिरर्थापतिर्मामि अलङ्कार इष्यते। वृत्ति विवरणेनैव एतद्विवरण स्पष्टीभविष्यति। अर्थस्य अन्यार्थस्य आपत्तिरापतनमुपस्थितिरिति व्युत्पत्तिः।

ननु का नाम दण्डापूपिका इत्याह मूषिकेणेति। इत्यनेन एवम्प्रकारेण वाक्येन तत्सहचरितं दण्डभक्षणसहसम्पन्नम्, अपूपभक्षणं मूषिककर्तृकमेव पिष्टकभोजनम्, अर्थात् समानयुक्तिवशात्, आयातं श्रीतुरवगतम्, इति नियतसमानन्यायात् इत्थं निश्चिततुल्ययुक्तेः। आपतति उपस्थितं भवति। न्यायो नीतिः। अत्रायं विस्तृतः सरलार्थः—कस्मिंश्चिद्रगृहे गृहिणी रात्रो भोजनावशिष्टानि पिष्टकानि पत्युरन्तिक एव दण्डोपरि भाजने निधाय निद्रिता, पतिश्च निद्रितः। प्रभाते तु पिष्टकहीनं भक्षितैकदेशं दण्डं पश्यता पत्या पृष्टा गृहिणां ब्रूते स्म—"भूषिकेण दण्डी भक्षितः" इति। तच् श्रुत्वा च पत्या एवमवगम्यते यत्, "येन भूषिकेण दण्डो भक्षितस्तेन पिष्टकमपि भक्षितम्" तयोः सहचरत्वात् दण्डभक्षणापेक्षया पिष्टकभक्षणस्य सुकरत्वादिष्टत्वाच्चेति। तेन एकस्य सिद्धिबुद्धौ तत्सदृशस्यान्वस्य सिद्धिबुद्धिर्दण्डपूपिका। एवञ्च दण्डापूपौ अस्यास्त इति दण्डापूपिका "इन्विषये इको वाच्यः" इत्यस्त्यर्थः दण्डापूपश आदिकप्रत्ययः

अत्रेति। प्राकरणिकात् प्रस्तुतात्, अर्थाद्विषयात्। एवमुत्तरत्रापि। आपतनमुपस्थितिः। प्राकरणिकार्थस्य आपतनमिति पूर्वेणःन्वयः।

तत्र प्रथममुदाहरति हारोऽयमिति। कामिनीकुचकुम्भसम्भोगसमासक्तस्य कस्यचित् सुहृदं प्रति निजनिर्द्दोषत्वख्यापनायोक्तिरियम्। अयं हारी मुक्तामाला, हरिणाक्षीणां मृगलोचनानां तरुणीनां स्तनमण्डले लुठति सततमनवस्थमवतिष्ठते मुक्तानां मौक्तिकफलानां मोक्षपदप्राप्तानां पुरुषाणाञ्च, इयमवस्था दशा; तत्र वयं स्मरकिङ्कराः कामदेवाधीना इत्यर्थः। के? अपि तु केऽपि नेत्यर्थः।

अत्र मुक्ता वर्णनीयत्वेन प्राकरणिकाः, अस्मत्पदवाच्या अमुक्ताश्च अवर्णनीयत्वेन अप्राकरणिकाः । तथा च मोक्षपदं प्राप्तानां नितान्तनीरागतया कामिनीकुचमण्डले अवलुण्ठनमत्यन्तासम्भवमेव, तस्यापि सम्भवे जायमाने, अमुक्तानां कामदेवाज्ञाधीनानां रागसागरमग्नानामस्माकं तत्रावलुण्ठनम् अतएव सम्भवपरमिति प्राकरणिकादर्थादप्राकरणिकस्यार्थस्य आपतनादर्थापत्तिलङ्कारः । अत्र पुरुषत्वरूपसामान्यधर्म्मेण मुक्तामुक्तयोः सदृशत्वमवधेयम् ।

## विमला

अर्थापत्तिमाह, दण्डेति ।—दण्डापूपिकया—दण्डापूपौ विद्येते यत्र सा दण्डापूपिका, ["अत इनिठनौ" (५/२/११५ पा.) इति ठन्] यद्वा—दण्डायूपयोर्भाव इति, ["द्वन्द्वमनोज्ञादिभ्यश्च" (५/१/१३३ पा.) इति बुञ् । "पृषोदरादीनि यथोपदिष्टम्"(६/३/१०९ पा.) इति बृद्धयाभावः] अथवा—दण्डापूपाविवेति दण्डापूपिका, ["इवे प्रतिकृतौ" (५/३/१६ पा.) इति कन्] तया, कैमुतिकन्यायेनेत्यर्थः, अन्यस्य अथस्य आगमः,—उपस्थितिः, भिन्नार्थप्रतीतिरित्यर्थः, अर्थापत्तिः इष्यते ।

दण्डापूपन्यायमाह, मूषिकेणेति ।—इतिशब्दो हेतौ, अनेन—मूषिकेण, तत्सहचरितं—दण्डभक्षणसहचरितम्, अर्थात्—औचित्यात्, आयातम्—अवगतं, भवतीत्यनन्तरं "वदन्त्यत्रापि" इति पूरणीयम् । नियतेति ।—नियतः,—निश्चितः, सिद्धान्तित इति यावत्, यः समानन्यायः तस्मात्—तुल्यनयादित्यर्थः, आपतति—आगच्छति; यद्वा—नियतस्य—तद्वत्त्वेन निश्चितस्य, "समानन्यायात्—तुल्यसामर्थ्यात्, अर्थात्, न तु शब्दादिति भावः, आपतति—प्रतीतिविषयो भवति, मूषिकस्य हि दण्डभक्षणं दुष्करं, तन्निष्पत्तौ तत्सहचरितापूपभक्षणमतिसुकरत्वात् यथा सम्भाव्यते, तथा अत्रापि सहचरितैकसिद्धेरपरसिद्धिरौचित्यात् सम्भाव्यते इति भावः । न्यायः,—नीतिः ।

हार इति ।—अयं हारः हरिणाक्षीणां स्तनमण्डले लुठति, मुक्तानां—मौक्तिकानां, हारघटकरत्रविशेषाणां, [निवृत्तसंसारदुःखानाञ्च मुक्तिपथावलम्बिनःमिति ध्वनिः] अपि (यदा) इयम् अवस्था—दशा, (तदा) स्मरस्य—कामस्य, किङ्कराः वयं के ? अत्र मुक्तानां तावत् योषिदालिङ्गनं दुर्घटं, तन्निष्पत्तौ अमुक्तानांमस्माकं सुतरां तत् स्यात् इति पुंस्त्वमत्र समानो धर्मः । मुक्तानां वर्णनीयत्वेन प्राकरणिकत्वम् इति बोध्यम् । यथा वा—"पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिभसुतासमागमोतकः । कमपरमत्रयं न विप्रकुर्य्युर्विभुमपि तं यदमी स्पृशन्ति भावः ?" ॥ इति । अत्र विभुवृत्तः प्राकरणिको लोकवृत्तान्तमप्राकरणिकमर्थादाक्षिपति इति ज्ञेयम् ।

## लक्ष्मी

एकस्य कथनेऽन्यस्यापि प्रस्तुतत्वात् तल्लक्षणामेवार्थापत्तिमलङ्कारं निरूपयति—**दण्डेति** । दण्डापूपिकया तन्नामकन्यायेन अन्यस्य अर्थस्य अनुक्तापरार्थस्य आगमो व्यञ्जना तदर्थस्य आपत्तिः आपतनमुपस्थितिरिति यावत् अर्थापत्तिर्नामालङ्कार इष्यते । अत्र दण्डापूपयोर्भावः दण्डापूपिका 'द्वन्द्वमनोज्ञादिभ्यश्च' ५/१/१३५ पा. सूत्रेण बुञ्, पृषोदरादित्वाद् वृद्धयभाव इति केचित् । अपरे तु दण्डापूपौ विद्येते यस्यां नीतौ सा दण्डापूपिका 'अत इन् ठनौ' इति पा. सूत्रेण ठन् । अन्ये तु दण्डापूपाविव दण्डापूपिकेति 'इवे प्रतिकृतौ' इति पा. सूत्रेण कन् भवतीति प्रतिपादयन्ति । एतत्स्वरूपन्तु स्वयमेव वृत्तौ प्रतिपादयिष्यति ।

दण्डापूपिकास्वरूपमुपपादयति—**मूषिकेणे**ति । दण्डोऽत्र तत्तत्स्थलीतोऽपूपस्याकर्षणदण्डः, अपूपः पिष्टकम्, तद्दण्डभक्षणं तत्पिष्टकबन्धात् । इत्यनेन एवंविधेन वाक्येन तत्सहचरितं दण्डभक्षणं सहसम्पन्नम्,

अपूपभक्षणं (क) मूषिककर्तृकमेव पिष्टकादनम्, अर्थात् तात्पर्यतः आयातं ज्ञातम्, इति नियतसमानन्यायात् एवं निर्धारितसमानयुक्तिवशात् । आपतति: अर्थतः उपस्थितं भवति न तु शब्दतः प्रतिपाद्यते न्यायो नयः ।

**'उदुम्बरफलानि ब्रह्माण्डान्यत्ति यः सदा ।**

**सर्वगर्वापहः कालस्तस्य के मशका वयम् ॥' इत्यादौ नायमालङ्कारः ।**

अस्या भेदद्वयमिति दर्शयति—**अत्रे**ति । प्राकरणिकत्वात् प्रकृतत्वात्, अर्थात् वस्तुनः, एवमग्रेऽपि । आपतनम् आगमनम् उपस्थितिरिति यावत् । प्राकरणिकस्यार्थस्य आपतनमिति पूर्वेण सम्बन्धः ।

भेदद्वयमध्ये आद्योदाहरणं दर्शयति—**हारोऽयमि**ति । स्वकीयदोषाभावमुपपादयितुं कञ्चन सखायं प्रति तरुणीकुचकुम्भाश्लेषतत्परस्य कस्यचित् कामिन उक्तिरियम् । अयं हारः मुक्तापुञ्जभूतभूषणम्, हरिणाक्षीणां मृगनयनानां रमणीनां स्तनमण्डले कुचयुग्मे लुठति अवज्ञात इव पतितो भवति, मुक्तानां मौक्तिकानां निर्वाणपदमुपगतानां जनानाञ्च इयम् अवस्था दशा, चेत्तर्हीतिशेषः, तत्र स्मरकिङ्करा कामदेवाधीनां वयं के ? अपि तु केऽपि नेत्यर्थः ।

अत्र वर्णनीयत्वेन मुक्तानां प्राकरणिकत्वम्, अवर्णनीयत्वेनास्मत्पदवाच्यामुक्तानाञ्चाप्राकरणिकत्वम् । एवञ्च निर्वाणपदमुपगतानां निवृत्तसंसारदुःखानाम् अत्यन्तविरागतया तरुणीस्तनमण्डले अवलुण्ठनं नितरां दुर्घटमेव, तन्निष्पत्तौ सत्याम्, अमुक्तानां कामकिङ्कराणां रागाम्बुधिनिमज्जतामस्माकं तत्रावलुण्ठनं सुतरामेव सुघटमिति प्राकरणिकस्यार्थस्य आगमनाल्लक्षणसमन्वयः । अत्र मुक्तामुक्तयोस्तुल्यत्वन्तु पुरुषत्वरूपसाधारणधर्मेणेति ज्ञेयम् ।

## रुचिरा

अर्थापत्तिं लक्षयति—१७१ **दण्डापूपिकया** दण्डापूपन्यायेनेत्यर्थः । दण्डापूपयोर्भावो दण्डपूपिका । 'द्वन्द्वमनोज्ञादिभ्यश्च ।' ५/१/१३३ इति वुञ् । **अन्यार्थागमो**ऽन्यार्थज्ञानम् । **अर्थापत्ति**स्तदभिधेयोऽलङ्कारः । **इष्यते** । । १३६ ॥

दण्डापूपिकां निर्दिशति—**'मूषिकेण । दण्डः । भक्षितः ।' इति** इत्युक्तौ । **अनेन** दण्डभक्षणेन । **तत्सहचरितं** तस्य दण्डस्य सहचरितम् । **अपूपभक्षणम्** । **अर्थात्**तात्पर्य्यतः । **आयातं** ज्ञातम् । **भवति** । **इति** । **नियतसमानन्यायान्नि**यतस्य नियतवत्त्वेन निश्चितस्य समानन्यायः सदृशः पन्थाः तस्मात् तत्सामर्थ्यादिति भावः । **अर्थान्तरम्** । **आपतत्यर्थ**तो न तु शब्दतः प्रतिपद्यते । **इत्येषः** । **न्यायः** । **दण्डापूपिका** । मूषिकस्य दण्डभक्षणं दुश्शकमिति सुशकं तत्सहचरितापूपभक्षणं सम्भाव्यते यथा, तथा यत्र सहचरितैकसिद्धेरपरसिद्धिरौचित्यात् सम्भाव्यते सा कविप्रतिभोत्थाऽर्थापत्तिर्नामलङ्कार इति भावः । अस्याश्च भेदद्वयमित्याह—**अत्र** चेत्यादिना । स्पष्टम् । उदाहरणं निर्दिशति-**क्रमेण** । **उदाहरण**मुदाह्रियते—

**अयं** मुक्तानां पुञ्जभूतः । **हार**स्तदाख्यं भूषणम् । **हरिणाक्षीणाम्** । **स्तनमण्डले** । **लुठति** अवज्ञात इव पतितो भवतीति भावः । **मुक्तानां** (मौक्तिकानाम्) विरतानाम् । **अपि** । **इयम्** । **अवस्था** । 'चेत्तर्हीं'ति शेषः । **स्मरकिङ्कराः** स्मरेण किङ्करत्वं नीताः । **के** । **वयम्** । अस्माकं तु कथैव केत्यर्थः । मुक्तानां तावद् योषिदालिङ्गनं दुर्घटम्, अथ यदि तत्सुघटम्, किं पुनः स्वभावतो रक्तानां तत्सुघटत्वे संशयनमिति तत्त्वम् । अत्र मुक्तानां वर्णनीयत्वेन प्राकरणिकत्वम् ॥ २७२ ॥'

**'विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम्।**
**अतितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिणाम्॥'**

अत्र च समानन्यायस्य श्लेषमूलत्वे वैचित्र्यविशेषो यथोदाहृते'हारोऽयं—' इत्यादौ। न चेदमनुमानम्। समानन्यायस्य संबन्धरूपत्वाभावात्।

---

## विवृतिः

**हारोऽयमिति**। मुक्तानां हारघटकरत्नविशेषाणां निवृत्तसंसारदुःखानां च। मुक्तानां तावद्योषिदालिङ्गनं दुर्घटं तन्निष्पत्तावमुक्तानामस्माकं सुतरां तत्स्यादिति पुंस्त्वमत्र समानो धर्मः। मुक्तानां वर्णनीयत्वेन प्राकरणिकत्वम्॥ विललापेति सोऽजः। द्रव्यत्वमत्र समानो धर्मः। अयसो वर्णनीयत्वाभावादप्राकरणिकत्वम्। **संबन्धरूपत्वाभावादिति**। व्याप्तिरूपत्वाभावादित्यर्थः। व्याप्तिश्च ज्ञाप्यज्ञापकयोरव्यभिचरितसामानाधिकरण्यरूपा। प्रकृते तु एकस्य साधर्म्यग्रहेण औचित्यात्तत्समानस्य तादृशधर्मान्तरग्रहो भवतीति ज्ञाप्यज्ञापकयोर्व्याप्त्यसंभवादिति भावः॥

## विज्ञप्रिया

अप्राकरणिकात् प्राकरणिकार्थलाभमाह—**विललापेति**। स राजा अजः सहजां स्वाभाविकीम्, अत्रायोऽप्राकरणिकम्। ततः प्राकरणिकाजस्य मार्दवलाभः। कैव कथेत्यादिशब्दाच्च तन्न्यायलाभः।

**श्लेषमूलत्वे** इति हारोयमित्यादौ मुक्तापदं स्मरस्याकिङ्करमुक्तरूपेऽर्थे मौक्तिके च श्लिष्टम्। लुठतीति पदं च सावज्ञस्थितिरूपे आलिङ्गने चार्थे श्लिष्टम्। विललापेत्यादौ च तप्तपदमग्निसंयोगे विरहदुःखे च श्लिष्टम्। मार्दवपदं च कोमलत्वे कातरत्वे च श्लिष्टम्। यथा हारोयमित्यादिपदाद् विललापेत्यादिश्लोकस्यापि परिग्रहः। **नचेदमिति**। हारोयमित्यत्र स्तनसङ्गिहारलुठनेन स्तनसङ्गिकामुकलुठनस्य विललापेत्यादौ चाभितापेन मार्दवस्यानुमेयत्वप्रसक्तेः। **समानन्यायस्येति**। दण्डापूपिकान्यायस्येत्यर्थः। सम्बन्धरूपत्वाभावात् व्याप्तिरूपसम्बन्धरूपत्वाभावात्। यद्यपि स्तनसङ्गित्वतल्लुठनयोरभितप्तत्वमार्दवयोश्च व्याप्तिरस्ति, तथा न्यायस्य पुरः स्फूर्तिकत्वात् साध्यहेतुभावेन निर्देशाभावाच्च नानुमानमित्यभिप्रायः।

## लोचन

मुक्ता मौक्तिकानि प्राप्तनिः श्रेयसश्च। एवं मुक्तानां नारीणां स्तनमण्डललुण्ठेन च पूर्वन्यायात् स्मरकिङ्कराणामपीत्यर्थः।

## कुसुमप्रतिमा

द्वितीयप्रकारं दर्शयति विललापेति। रघुवंशाष्टमसर्गे श्लोकोऽयम्। सः अजः, सहजामपि स्वाभाविकीमपि धीरता धैर्य्यम् अपहाय, वाष्पेण अश्रू द्गमेन गद्गगदमस्पष्टं यथा स्यात्तथा विललाप। तथा च अभितन्नं सर्वतः

सन्तप्तम् अयो लौहमपि मार्द्दवं कोमलतां भजते, शरीरिषु स्वभावत एव कोमलेषु देहिषु माद्दर्वभजने, कैव कथा ? अपि तु कापि प्रतिवादकथा नास्तीत्यर्थः ।

अत्र शरीरिषु माद्वभजनं वर्णनीयतया प्राकरणिकम्, अयसो मार्द्दवभजनन्तु अवर्णनीयतया अप्राकरणिकम् । एवञ्च अप्राकरणिकादयसो मार्द्दवभजनरूपार्थात् प्राकरणिकस्य शरीरिमाद्दर्वभजनरूपस्यार्थस्य आपतनादर्थापत्तिः । अत्र तु सन्तप्तत्वरूपसामान्यधर्म्मेण अयः शरीरिणीः सादृश्यं बोध्यम् ।

अनुभवसिद्धं कञ्चित् फलितार्थमाह अत्र चेति । अर्थापत्तिस्थले चेत्यर्थः । समानन्वायस्य उक्तविधदण्डापूपिकाख्यनीतेः । उदाहृते तु मुक्तानामित्यत्र श्लेषः ।

## विमला

विललापेति ।—सः,—अजः, सहजां—स्वाभाविकोम्, अपि धीरताम् अपहाय—परित्यज्य, वाष्यगद्गदं यथा तथा विललाप, तथा हि, अभितप्तं—सन्तप्तम्, अयोऽपि—लौहमपि, मार्दवं भजते, शरीरिषु—देहिषु, कोमलेषु इति भावः, कैव कथा ? अत्र अप्राकरणिकात् लौहद्रवीभावात् अयसो वर्णनीयत्वाभावात् अप्राकरणिकत्वं, प्राकरणिकस्य शरीरिद्रवस्यापतनम् । सुन्दरी वृत्तं, तल्लक्षणञ्च यथोक्तम्—"अयुजोर्यदि सौ जगौ युजोः, सभरा ल्गौ यदि सुन्दरी तदा" इति । रघुवंशस्येदं पद्यम् । यथा वा—"धृतधनुषि बाहुशालिनि शैला न नमन्ति यत्तदाश्चर्य्यम् । रिपुसंज्ञकेषु गणना केव वराकेषु काकेषु ?"इति । अत्रापि शैलवृत्तान्तः अप्राकरणिकः रिपुवृत्तान्तं प्राकरणिकम् अर्थादाक्षिपति इति बोध्यम् ।

समानन्यायस्येति ।—द्रव्यत्वमत्र समानो धर्मः, सम्बन्धरूपत्वाभावात्—व्याप्तिरूपत्वाभावात् इत्यर्थः, व्याप्तिश्च ज्ञाप्यज्ञापकयोः अव्यभिचरितसामानाधिकरण्यरूपः, प्रकृते तु एकस्य साधर्म्यग्रहेणे औचित्यात् तत्समानस्य तादृशधर्मान्तरग्रहो भवति इति ज्ञाप्यज्ञापकयोः व्याप्त्यसम्भवादिति भावः ।

## लक्ष्मी

द्वितीयभेदोदाहरणं निर्दिशति—**विललापेति** । रघुवंशकाव्यस्याष्टमे सर्गे पद्यमिदम् । स अजो नाम राजेन्द्रः, सहजामपि स्वभावसिद्धामपि धीरतां धैर्यम् अपहाय परित्यज्य, वाष्पेण नयनजलोद्गमेन गद्गदम् अस्फुटं यथा स्यात्तथा विललाप रुरोद । तथा च अभितप्तं समन्तात्सन्तप्तम् अयो लौहमपि मार्दवं मृदुलतां भजते समाश्रयति, शरीरिषु प्रकृतित एव मृदुलेषु वपुःषु मृदुत्वाप्राप्ते, कैव कथा ? अपि तु कापि प्रत्युत्तरवार्ता नास्तीत्यर्थः । तथा च यदि सन्तप्तं लौहमपि द्रवति, तर्हि अज इन्दुमत्या विरहेण सन्तप्तस्तथाविधः सञ्जात इति किमाश्चर्यमिति सारार्थः । **वैतालीयं** छन्दः ।

अत्र शरीरिषु मृदुत्वप्रापणं वर्णनीयत्वेन प्राकरणिकम्, अयसो मृदुत्वप्रापणन्तु वर्णनीयत्वाभावेन अप्राकरणिकम् । तथा च अप्राकरणिकत्वात् अयसो मृदुत्वप्रापणरूपतात्पर्यतः प्राकरणिकस्य शरीरिमृदुत्वप्रापणरूपस्यार्थस्य आगमनादर्थापत्तिः । अत्र अयः शरीरिणोस्तुल्यत्वन्तु सन्तप्तत्वरूपसाधारणधर्मेणेति ज्ञेयम् ।

फलितमर्थं निर्दिर्दशति—**अत्र चेति** । अर्थापत्तिस्थले चेत्यर्थः । समानन्यायस्य शतदण्डापूपिकासंज्ञकतुल्यन्यायस्य । उदाहरति—**यथेति । इत्यादाविति** । मुक्तानामित्यत्र श्लेष इति शेषः ।

ननूक्तोदाहरणादावनुमानालङ्कार एव किन्न स्यादित्याकाङ्क्षायामाह—**न चेति**। इदम् अर्थापत्तिरूपम् अनुमानम् अनुमानसाध्यं ज्ञानं न चेत्यर्थः। सम्बन्धिरूपत्वाभावात् व्याप्तिरूपत्वाभावादित्यर्थः। तथा च एकसिद्धौ तत्तुल्यान्यसिद्धिज्ञानं समानन्याय इति सिद्धान्तेन प्रकृते हेतुसाध्ययोः सामानाधिकरण्यरूपव्याप्तिरभावान्नानुमान-मिति भावः। **यथा** वा—

**'निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ?।**
**अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥'इति।**

## रुचिरा

द्वितीयामुदाहरति—'**सोऽजो** नाम राजेन्द्रः। **सहजां** स्वभावसिद्धाम्। **अपि**। **धीरताम्**। **अपहाय**। **बाष्पगद्गदम्**। **विललाप**। **अतितप्तम्**। **अयो** लोहम्। **अपि**। **मार्दवं** मृदुत्वम्। **भजते**। **शरीरिणाम्**। **कथा**। **एव**। **का**। यदि संतप्तं लोहमपि द्रवति, तर्हि अज इन्दुमत्या वियोगेन सन्तप्तस्तथाभूतो जात इति किं चित्रमिति भावः। रघुवंशस्येदं पद्यम्। वैतालीयं छन्दः। अत्रायसो वर्णनीयत्वाभावादप्राकरणिकत्वम् ॥ २७३ ॥'

अत्र वैचित्र्यहेतुं निर्दिशति—**अत्रार्थपत्तौ**। **च**। **समानन्यायस्य** दण्डापूपिकान्यायस्य। **श्लेषमूलत्वे**। **वैचित्र्यविशेषः**। उदाहरति—**यथा**। **उदाहृते**। **'हारोऽय'**मित्यादौ। व्याख्यातपूर्वमिदम्। अनुमानादस्य व्यवच्छे-दमाह—**इदमर्थापत्तिरूपम्**। **च**। **अनुमानम्**। **न**। **समानन्यायस्य**। **सम्बन्धरूपत्वाभावाद्** व्याप्तिरूपत्वाभा-वात्। व्याप्तिश्च ज्ञाप्यज्ञापकयोरव्यभिचरितसमानाधिकरण्यरूपः, प्रकृते तु एकस्य साधर्म्यग्रहेण तत्सधर्मणो योग्यतया तादृशधर्मग्रहो भवतीति नात्रानुमानशङ्केति भावः।

**विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयु(य) तः ॥ ८३ ॥**

यथा—'नमयन्तु शिरांसि धनूंषि वा कर्णपूरीक्रियन्तामाज्ञामौर्व्यो वा ।'

अत्र शिरसां धनुषां च नमनयोः संधिविग्रहोपलक्षणत्वात्, संधिविग्रहयोश्चैकदा कर्तुमशक्यत्वाद्विरोधः । स चैकपक्षाश्रयणपर्यवसानः । तुल्यबलत्वं चात्र धनुः शिरोनमनयोर्द्वयोरपि स्पर्धया संभाव्यमानत्वात् । चातुर्यं चात्रौपम्यगर्भत्वेन । एवं 'कर्णपूरीक्रियन्ताम् इत्यत्रापि । एवं 'युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः' । अत्र श्लेषावष्टम्भेन चारुत्वम् ।

**'दीयतामर्जितं वित्तं देवाय ब्राह्मणाय वा ।'**

**इत्यत्र चातुर्या भावान्नायमलंकारः ।**

---

## विवृतिः

विकल्पालंकारमाह—**विकल्प** इति । तुल्यबलत्वं तत्तदुदाहरणे यथायथं बोध्यम् ।

अर्थतोऽलंकारादेः चारुता वैचित्र्यं यदि स्यादित्यर्थः । 'विरोधश्चान्तरा यतः' इति पाठस्तु न सम्यक् । अर्थासंगतेः । 'चातुरी यतः' इति पाठे तु यतो विरोधाच्चातुरी वैचित्र्यं स विकल्प इत्यर्थः ॥ **नमयन्त्वित्वति** । बलवद्युयुत्सोरुक्तिरियम् । अरय इति कर्तृपदमत्रोह्यम् । कर्णपूरीक्रियन्तां कर्णभूषणसदृशीक्रियन्ताम् । कर्णसंगतीक्रियन्तामिति यावत् । अरिभिरिति कर्तृपदमत्रोह्यम् । नन्वसमर्थस्य शिरोनभनं समर्थस्य धनुर्नमनमिति कथं तुल्यबलत्वमत आह—**अत्र शिरसामिति** । संधिविग्रहयोर्वैरोच्छेदाय राजाद्यनुष्ठेयत्वात्तुल्यबलत्वम् । विरोधमुपपादयति—**संधिविग्रहयोरिति** । ननु सर्वत्रोदाहरणे तादृशविरोधो न संभवतीत्यत आह—**स चेति** । विरोधश्चेत्यर्थः । तुल्यबलयोरेकतरस्यैव प्रकृतेऽन्वय एकपक्षाश्रयणं यस्य स इत्यर्थः । तथा च तुल्यबलयोरेकस्मिन्प्रकृतेऽन्वयो विरोध इति परमतात्पर्यम् । इदानीं धनुःशिरोनमनयोर्यथाकथंचित्तुल्यबलत्वमुपपाद्योपलक्षणं विनैव लक्षणं संगमयति—**तुल्यबलत्वमिति** । वक्तुः स्पर्धाजन्यसंभावनाविषयत्वादित्यर्थः । **चातुर्यमिति** । वैचित्र्यमित्यर्थः । **औपम्यगर्भत्वेनेति** । शिरोनमनस्योत्कटत्वेन धनुर्नमनस्योपमानत्वेन पर्यवसानमिति भावः । **युष्माकमिति** । अत्र तनुनेत्रयोर्भवार्तिशमनसाधनक्षमत्वेन तुल्यबलत्वम् । तयोरेकतरस्यैव भवार्तिशमनरूपे प्रकृतकार्ये हेतुत्वेनान्वयो न तु समुच्चयवदुभयोरिति विरोधः । **श्लेषावष्टम्भेन** श्लेषानुकूल्येन । 'पतत्यविरतं वारि नृत्यन्ति शिखिनो मुदा । अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥' अत्र विप्रलम्भश्रृङ्गारावष्टम्भेन चारुत्वम् । एवमन्यत्रापि यथायथं चारुत्वमवगन्तव्यम् । चारुतार्थत इति यदुक्तं तस्य व्यावृत्तिमाह—**दीयतामिति** । अत्र देवब्राह्मणयोरुत्तमपात्रत्वेन तुल्यबलत्वम् । प्रकृते दाने एकतरस्यैव संबन्धो न तूभयोरित्यस्ति विरोधः ॥

## विवृतिपूर्तिः

'भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी ध्यानालम्बनतां समाधिनिरतैर्नी तेहितप्राप्तये । लावण्यस्य महानिधी रसिकतां लक्ष्मीर्दृशोस्तन्वती—' इति पूर्वा पादत्रयी ॥

## विज्ञाप्रया

विकल्पालङ्कारमाह—**विकल्प इति**। कोटिद्वये समानत्वं तुल्यबलता। चातुरी चालङ्कारान्तरघटित-रूपा। अत एव अस्याः सर्गविधौ इत्यत्र चन्द्र मदनयोः प्जापतित्वविकल्पेऽप्यलङ्कारान्तराघटितत्वान्न विकल्पाल-ङ्कारः।

नमयन्त्वित्यादिकं न श्लोकः, किन्तु जेतृनृपतेर्जेतव्यनृपतिषु जिज्ञासावाक्यमात्रमिदम्। प्रणिपातार्थं ते राजानः शिरांसि वा नमयन्तु युद्धार्थं धनुर्वा नमयन्तु इत्यर्थः। तथा च ममाज्ञा चाकर्णपूरीक्रियतां कर्णं पूरयित्वा श्रूयतां युद्धार्थं मौर्वी वा कर्णपर्यन्तं नीयतामित्यर्थः। अत्र विरोधं ग्राहयितुमाह—**अत्र धनुषामिति**। सन्धिविग्रहो-पलक्षणत्वात्तद्बोधकत्वादित्थं विरोधं दर्शयित्वा अत्रेच्छाविकल्पत्वं दर्शयति—**स चेति**। इच्छाया एकपक्षग्रहणे पर्याप्तेः। तुल्यबलत्वे एव इच्छाविकल्पसम्भवात्। **तुल्यबलत्वं चात्रेति**। **द्वयोरिति**। द्वयोः सकाशादित्यर्थः। तद्द्वयहेतुकयोः सन्धिविग्रहयोरपि स्पर्द्धया इच्छया वा सम्भाव्यमानत्वादित्यर्थः एव चात्महितकारित्वेन द्वयोस्तु-ल्यबलत्वम्। चातुरीयुतत्वं दर्शयति—**चातुर्यं चेति**। औपम्यमुपमा। शिरो धनुषोर्नमनसादृश्यादाज्ञामौर्व्योश्च कर्णपूरीकरणसादृश्यादुपमा। इदमुपलक्षणं द्वयोरेकक्रियान्वयेन तुल्ययोग्यता बोध्या।

चातुरीयुतस्य व्यावृत्तिं दर्शयति—**दीयतामिति**। अत्र विरोधप्रसक्तिरनवधानमूलिकैवेति मन्यामहे—एकदैव देवब्राह्मणेभ्यो वित्तदानसम्भवेन विरोधाभावात्। दवायैवेत्यादिनियमगर्भत्वेन एकव्यक्तिकवित्ताभिप्रा-येण वा विरोधो दर्शित इति वा।

## लोचन

सम्बन्धोऽविनाभावः। नचेयं शास्त्रीयार्थापत्तिः। तस्य हि पीनो देवदत्तो दिवा न भुङ्क्ते पीनत्वभोजना-दिकयोरविनाभाव इति भावः।

तुल्यबलयोरेकस्मिन् कार्ये नियोजितुमर्हयोः, विरोधः एकदाऽनिर्वाहयितुमशक्यत्वात्। स एककक्षाश्रय-णपर्यवसानादविरोध एव।

श्लेषश्च कुरुतामित्यत्र द्विवचनैकवचनयोरेकरूपत्वात्। अत्र नेत्रवर्ष्मणोद्वयोरपि चार्तिशमने समर्थ-त्वात्।

## कुसुमप्रतिमा

ननु स्तनमण्डले मुक्तानामवलुण्ठनदर्शनेन, अमुक्तानामपि तत्रावलुण्ठनज्ञानसम्भवात् तप्ते अयस्यपि माद्र्दवदर्शनेन तप्तेषु शरीरेषु माद्र्दवस्य अतएव ज्ञानसम्भवाच्च सर्वत्रानुमानालङ्कार एवास्ताम्, किमर्थापत्तिस्वी-कारेणेत्याह न चेति। इदमर्थान्तरोपस्थितिरूपम् अनुमानमनुमानसाध्यं ज्ञानं न चेत्यर्थः। सम्बन्ध रूपत्वाभावात् व्याप्तिरूपत्वाभावात्। तथा च एकसिद्धौ तत्सदृशापरसिद्धिबुद्धिः समानन्वायः, व्याप्तिस्तु साध्यसाधनयोः समा-नाधिकरण्यविशेषः। यथा—"नियतधर्म्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः" इति सांख्यप्रवचनपञ्चमाध्यमे सूत्रम्। "प्रतियोग्यसमानाधिकरणयत्समानाधिकरणत्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः" इति सिद्धान्तलक्षणे गङ्गेशोपाध्यायाश्च। तेन व्याप्तिप्रयुक्तादनुमानात् समान-न्वायप्रयुक्ताया अर्थापत्तेर्भेद इत्याशयः।

निरुक्तप्रकरैणवशादेव विकल्पं नामालङ्कारं निर्वक्ति विकल्प इति। चातुरीयुतः कवेर्निपुणता युक्तः कवेर्निपुणताजनितवैचित्र्यविशिष्ट इत्ययः, तुल्यबलयोः समकक्षयोः पदार्थयोः, विरोधो विप्रतिपत्तिरसम्भवतेति यावत् विकल्पो नाम अलङ्कार इत्यत इत्यनुषङ्गः।

विरोधाभासे विरोधस्य अवास्तवतया आपातत एव प्रतीतेः येन केनचित् समाधानञ्च, अतएव तस्यं विरोधाभास इति संज्ञा। अत्र तु विरोधस्य वास्तवतया सर्वदैव प्रतीतिः एकपक्षावलम्बनेनैव समाधानञ्च; अतएव चास्यापि विकल्प इति संज्ञा इत्यनयोर्भेदः। तेनैव च विरुद्धौ कल्पौ पक्षौ यस्मिन्निति व्युत्पत्तिः।

नम्यन्तामिति। आक्रान्तं प्रति दृप्तस्य आक्रमितुरुक्तिरियम्। शिरांसि नम्यन्तां युद्धे पराजय निश्चयेन मत्समीपे अवनतीक्रियन्ताम्, वा किं वा, धनूंषि नम्यन्तां शक्तिश्चेदाकृष्यन्तां युद्धार्थमित्याशयः। आज्ञा ममादेश-वाक्यानि, कर्णपूरीक्रियन्तां नियताबलम्बनेन कर्णभूषणीक्रियन्तां पराजयस्वीकारेण ध्रियन्तामित्यर्थः, वा अथवा शक्तिश्चेत् मौर्व्यो धनुर्गुणाः, कर्णपूरीक्रियन्तां युद्धार्थं कर्णपर्य्यन्तगामीक्रियन्ताम्।

नन्वत्र शिरोधनुर्नमनयोरुभयोरेव सम्भवपरत्वाद्विरोधः कुत इत्याह अत्रेति। सन्धिविग्रहोपलक्षणत्वा-दिति। अन्यथा तयोर्निष्प्रयोजनतापत्तिरित्याशयः।

अथ तर्हि कथं तस्य समाधानमित्याह स चेति। एकपक्षस्य सन्धेर्विग्रहस्य वा आश्रयणेन पर्य्यवसानं निवृत्तिर्यस्य सः तयोश्चैकपक्षाश्रयणस्य वक्तुरभिप्रेतत्वात् तत्समाधानमित्याशयः।

ननु तथाप्यनयोस्तुल्यबलत्वं कुत इत्याह तुल्येति। स्पर्द्धया गर्वेण, सम्भाव्यमानत्वात्, आक्रमता वक्ता इति शेषः। तथा च आत्मदुर्बलत्वज्ञानेन शत्रूणां शिरोनमनं समानाधिकबलत्वज्ञानेन धनुर्नमन वा एतदुभयमपि गर्विणा वक्ता सम्भाव्यते; तेनात्र उभयोः सम्भवतरत्वमेव तुल्यबलत्वं विवक्षितमित्याशयः।

अथ तथापि चातुरी कुत इत्याह चातुर्य्यमिति। कविरचनाचातुरीनिबन्धनवैचित्र्यमित्यर्थः। तथा च शिरोनमनस्यैव स्पर्द्धया प्रस्तूयमानत्वे न उपमेयत्वम्, धनुर्नमनस्य तूपमानत्वम्। तेन बलवद्भिर्यथा धनूंषि नम्यन्ते, तथैव दुर्बलैर्युष्माभिः शिरसि नम्यन्तामिति सादृश्यगर्भाभिप्रायवशेन वैचित्र्यमिति भावः।

एवमिति। इत्यत्रापि ऊह्यमिति शेषः, तत्तु सर्वमेव पूर्ववदिति सुगमम्।

श्लेषघटितवैचित्र्ये उदाहरति युष्माकमिति। अस्य पूर्व पादत्रयं यथा ग्रन्थान्तरे—

"भक्तिप्रह्वविलोकनप्रणयिनौ नीलोत्पलस्पर्द्धिनी

ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये।

लावण्यस्य महानिधौ रसिकतां लक्ष्मीदृशीस्तन्वती

हरेर्विष्णोः, नेत्रे नयनयुगलं तनुः शरीर वा, युष्माकं भक्तानां भवर्त्तिशमनं सांसारिकदुःखनिवृत्तिं कुरुताम्। नेत्रे इत्यनेनान्वये कुरुतामित्यत्र लोटः परस्मैपदप्रथमपुरुषद्विवचनम्, तनुरित्यनेनान्वये तु तस्या एवात्मनेपदप्रथम-पुरुषैकवचनमिति बोध्यम्।

अत्रेति। श्लेषस्य अवष्टम्भेन आश्चर्येण, चारुत्वं वैचित्र्यम्, तथा एकेन भवार्त्तिशमनस्य कृतत्वे अन्वस्य करणासम्भवाद्विरोधः, एकतराबलम्बनेन तत्समाधानम्, उभयोरपि भवार्त्तिशमने सामर्थ्याच्च तुल्य एवात्मनेपद प्रथम मपुरुषैकवचनमिति बोध्यम्।

अत्रेति। श्लेषस्य अवष्टम्भेन आश्रयेण, चारुत्वं वैचित्र्यम्, तथा एकेन भवार्त्ति शमनस्य कृतत्वे अन्यस्य करणासम्भवाद्विरोधः, एकतरावलम्बनेन तत्समाधानम्, उभयोरपि भवार्त्तिशमने सामर्थ्याच्च तुल्यबलत्वमित्यनेयम्।

चातुरीयुत इत्यस्य व्यावृत्तिप्रदर्शनायाह दीयतामिति। अस्य मत्पूरितपूर्वार्द्धं यथा—

"प्राणानपि एकीकृत्य समुत्तीर्य्य च सागरान्।"

इत्यत्रेति। चातुर्य्याभावात् चातुर्य्यनिबन्धनवैचित्र्याभावात्। किन्तु एकस्मै दत्ते अन्वस्मै दानासम्भवाद्विरोधः, एकस्मा एव दानमभिप्रेतमिति तत्समाधानम्, देवब्राह्मणयोरुभयोरेव उत्तमपात्रत्वेन तुल्यबलत्वञ्चास्तीति द्रष्टव्यम्। "न रत्नानि न वा भस्म रुचिमादधते मुनेः" इत्यत्र आदधत इति धाधातुदधधात्वोर्बहुवचनैकवचनरूपतया शिलष्टत्वेन चातुरीयुतत्त्वेऽपि रत्नभस्मनोस्तुल्यबलत्वाभावान्नातिव्याप्तिरित्यतस्तुल्यबलयोरिति विशेषणञ्चोहनीयम्।

## विमला

विकल्पमाह, विकल्प इति।—तुल्यं बलं ययोः, तादृशयोः, वस्तुनोरिति शेषः, (तुल्यबलत्वं तत्तदुदाहरणे यथायथं बोध्यम्) चातुरीयुतः,—वैचित्र्ययुक्तः, विरोधः,—अर्थतोऽलङ्कारादेः चारुता वैचित्र्यं यदि स्यात् इत्यर्थः, विकल्पः। ["विरोधश्चान्तरा यतः" इति पाठस्तु न सम्यक्, अर्थासङ्गतेः। "चातुरी यतः" इति पाठे तु—यतः,—विरोधात्, चातुरी—वैचित्र्यं, स विकल्प इत्यर्थः]।

नम्यन्तामिति।—बलवद्युयुत्सोरुक्तिरियम्। शिरांसि धर्नूष वा नम्यन्तां—नतैः भूयतां, धनुर्वा गृह्यताम् इत्यर्थः। आज्ञाः,—अस्मदादेशाः, मौर्व्यः,—धनुर्गुणाः वा, कर्णपूरीक्रियन्तां—कर्णभूषणसदृशीक्रियन्तां, कर्णसङ्गतीक्रियन्तामिति यावत्, अरिभिरिति कर्त्तृपदमत्रोह्यम्।

नन्वसमर्थस्य शिरोनमनं, समर्थस्य धनुर्नमनमिति कथं तुल्यवलत्वम्? अत आह, अत्र शिरसामिति।—शिरोनमनं सन्धिलक्षणं धनुर्नमनं विग्रहलक्षणं तदुपलक्षणत्वात्—तद्भावात् इत्यर्थः, सन्धिविग्रहयोर्वैरोच्छेदाय राजाद्यनुष्ठेयत्वात् तुल्यबलत्वम्। विरोधमुपपादयति, सन्धिविग्रहयोरिति।—एकदा—युगपत्, कर्त्तव्यताया असम्भवात्—कर्त्तुमशक्यत्वात्, विरोधः। ननु सर्वत्रोदाहरणे तादृशविरोधो न सम्भवतीत्यत आह, स चेति—विरोधश्चेत्यर्थः, तुल्यबलयोरेकतरस्यैव प्रकृतेऽन्वयः एकपक्षाश्रयणं यस्य स इत्यर्थः, तथा च तुल्यबलयोरेकस्मिन् प्रकृते अनन्वयविरोधः इति परमतात्पर्य्यम्। इदानीं धनुःशिरोनमनयोः यथाकथञ्चित् तुल्यबलत्वमुपपादय उपलक्षणं विनैव लक्षणं सङ्गमयति, तुल्यबलत्वमिति।—वक्तुः स्पर्द्धाजन्यसम्भावनाविषयत्वात् इत्यर्थः। चातुर्य्यमिति—वैचित्र्यमित्यर्थः, औपम्यगर्भत्वेनेति।—शिरोनमनस्योत्कटत्वेन धनूर्नमनस्योपमानत्वेन पर्य्यवसानमिति भावः। एवमिति।—आज्ञायाः कर्णपूरीकरणस्य सन्धिलक्षणत्वात्, मौर्व्याः कर्णपूरीकरणस्य विग्रहलक्षणन्वात् तयोर्यौगपद्ये विरोधः, स च एकपक्षाश्रयणपर्य्यवसानः। औपम्यञ्च वैचित्र्याधायकं, तुल्यबलत्वञ्च अत्र उभयोरपि प्रस्तावस्य स्पर्द्धाजन्यत्वादिति बोध्यम्।

युष्माकमिति।—हरेः,—नारायणस्य, नेत्रे तनुः,—शरीरं वा, युष्माकं भवर्त्तिशमनं—संसारदुखध्वसं, कुरुताम्। अस्य पूर्वगतं पादत्रयन्तु—"भक्तिप्रह्वविलोकनप्रणयिनौ नीलात्पलस्पर्द्धिनौ ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये। लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती" इति। अत्र कुरुतामिति पदस्य

लोट्विभक्तेः परस्मैपदीयप्रथमपुरुषद्विवचनान्तत्वे नेत्रे इत्यनेनान्वयः, आत्मनेपदीयैकवचनान्तत्वे तनुरित्यनेनान्वयः। नेत्रयोस्तन्वा वा जीवार्त्तिशमनसाधनक्षमत्वेन संसारदुःखमोचने सामर्थ्यात् तुल्यबलत्वं, तयोरेकतरस्यैव भवार्त्तिशमनरूपे प्रकृतकार्य्येहेतुत्वेनान्वयः, न तु समुच्चयवदुभयोः इति विरोधः। श्लेषावष्टम्भेन—श्लेषानुकूल्येन। "पतत्यविरतं वारि नृत्यन्ति शिखिना मुदा। अद्य कान्तः कृतान्ता वा दुःखस्यान्तं करिष्यति॥" अत्र विप्रलम्भश्रृङ्गारावष्टम्भेन चारुत्वम्, एवमन्यत्रापि यथायथं चारुत्वमवगन्तव्यम्। चारुतार्थत इति यदुक्तं तस्य व्यावृत्तिमाह, दीयतामिति।—अत्र देवब्राह्मणयोरुत्तमपात्रत्वेन तुल्यबलत्वं, प्रकृते दाने एकतरस्यैव सम्बन्धः, न तूभयो इत्यस्ति विरोधः इति बोध्यम्।

## लक्ष्मी

प्रदर्शितप्रस्तावादेव विकल्पं निरूपयति—**विकल्प** इति। चातुरी कवेर्नैपुण्यं वैचित्र्यमिति यावत् तया युतः युक्तः तुल्यबलयोः तुल्यकक्षयोः पदार्थयोः विरोधो विप्रतिपत्तिः विरुद्धौ कल्पौ पक्षौ यत्रेति व्युत्पत्त्या विकल्पः तन्नामालङ्कारः 'इष्यते' इति क्रियापदमनुवर्त्तते।

उदाहरति—यथेति। **नम्यन्ता**मिति। कमपि रिपुं प्रति राजदूतोक्तिरियम्। शिरांसि मस्तकानि नम्यन्तां पराजयस्यावश्यम्भावित्वेन मम स्वामिनोऽन्तिके अवनतीक्रियताम्, वा अथवा धनूंषि चापा नम्यन्तां यदि शक्तिरस्ति तर्हि समराय आकृष्यन्ताम्। आज्ञा ममादेशवचनानि, कर्णपूरीक्रियन्तां निश्चिताकर्षणेन कर्णालङ्कारीक्रियन्तां पराजयाङ्गीकारेण धार्यन्तामित्यर्थः, वा किं वा शक्तिर्विद्यते चेत् मौर्व्यो धनुर्ज्याः कर्णपूरीक्रियन्तां सङ्ग्रामार्थम् आकर्णान्तगामीक्रियन्ताम्।

शिरो धनुर्नमनयोः विरोधः कथमित्युपपादयति—अत्रेति। **सन्धिविग्रहयोरुपलक्षणत्वा**दित्यत्र उपलक्षणं परिचायकम्, तथा च सन्धिपरिचायकत्वात् विग्रहपरिचायकत्वाच्चेत्यर्थः, अन्यथा तयोर्निष्फलत्वादिति भावः।

ननु तद्विरोधपरिहारस्तर्हि कथमित्यत आह—**स** चेति। विरोधश्चेत्यर्थः। एकपक्षस्य शिरोधनुर्नमनयोरेकतरस्य पक्षस्य सन्धेर्विग्रहस्य कस्यचित्पक्षस्येत्यर्थः, आश्रयणेन अवलम्बनेन पर्यवसानं समाप्तिर्यस्य स तथाभूतः, तथाच तयोरेकपक्षावलम्बनस्य वक्तुरिष्टत्वात्तत्परिहार इति भावः।

ननु शिरोधनुर्नमनयोस्तुल्यबलत्वं कथमिति जिज्ञासायामाह—**तुल्ये**ति। स्पर्द्धया अहङ्कारेण वक्तुरिति शेषः, सम्भवपरत्वात्। तथा च स्वाशक्तित्वज्ञानेन रिपूणां शिरोनमनम्, स्वाधिकशक्तित्वज्ञानेन धनुर्नमनं वा एतद्द्वयमपि वक्तुः स्पर्द्धया सम्भाव्यते; अत एवेह द्वयोः सम्भवपरत्वमेव तुल्यबलत्वमिति भावः।

अथैवमपि वैचित्र्यं कथमित्यत आह—**चातुर्य**मिति। कविप्रतिभानिबन्धनविच्छित्तिरित्यर्थः। औपम्यगर्भत्वे 'धनूंषीव शिरांसि नम्यन्ता'मिति वैचित्र्यविशेषाशालित्वेन, तृतीयेयमभेदे। तथाच शिरोनमनस्यैव गर्वेण प्रस्तूयमानत्वेन उपमेयत्वम्, धनुर्नमनस्य तूपमानत्वम्। अत एव येन प्रकारेण शक्तिमन्तो धनूंषि अवनमयन्ति तेन प्रकारेणैव क्षीणशक्तिका भवन्तः शिरांसि अवनमयन्त्विति औपम्यगर्भांशेन विच्छित्तिरित्याशयः।

एवमिति। इत्यत्रापि ऊहनीयमिति शेषः। ग्रन्थान्तरेऽस्य पूर्वपादत्रयन्तु—

**भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी**

**ध्यानालम्बनतां समाधिनिरतैर्नीतेति तत्प्राप्त्ये।**

लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती, इति।

हरेः मधूसूदनस्य, नेत्रे लोचनद्वयं तनुर्देहो वा, युष्माकं भक्तानां भवार्त्तिशमनं जगत्सम्बन्धिक्लेशापगमं 'कुरुताम्' इत्यत्र 'नेत्रे' इत्यस्यान्वये सति कुरुतामिति लोटः परस्मैपदस्य प्रथमपुरुषद्विवचने रूपम्, तनोरित्यस्य यद्यन्वयस्तर्हि लोटः आत्मनेपदस्य प्रथमपुरुषैकवचने रूपमित्यवधेयम्।

लक्ष्यं संयोजयति—**अत्रे**ति। श्लेषस्य अवष्टम्भेन अवलम्बनेन, चारुत्वं विच्छित्तिः। तथा तनुनेत्रयोः भवार्त्तिशमनसाधनक्षमत्वेन तुल्यबलत्वम्, तयोरेकतरेण भवार्त्तिशमनस्य कृतत्वे अपरस्य करणासम्भवाद् विरोधः, एकतराश्रयणेन तत्परिहार इति बोध्यः।

'चातुरीयुत' इत्यनेन व्यावृत्तिं दर्शयति—**दीयत** मिति।

'परत्रेह च कल्याणं तेनैव भवति ध्रुवम्' इतिमद्रचितोत्तरार्द्धम्।

## रुचिरा

विकल्पं लक्षयति—१७२ **तुल्यबलयो**स्तुल्य बलं ययोस्तादृशयोः। 'अर्थयो'रिति शेषः। **चातुरीयुत**श्चातुरी चातुर्य्यं वैचित्र्यमिति यावत् तया युतः। **विरोधः**। **विकल्पः**।

उदाहरति—**यथा**—'**शिरांसि**। **नम्यन्ताम्**।' 'यदि योद्धुमशक्ति'रिति शेषः। **धनूंषि**। **वा** 'नम्यन्ता'मिति पूर्वतोऽन्वेति। 'यदि योद्धुं शक्ति'रिति शेषः। **आज्ञाः** 'अस्माक'मिति शेषः। **कर्णपूरीक्रियन्तां** कर्णपूरा इव क्रियन्तामित्यर्थः। श्रूयन्तामिति भावः। 'यदि सन्धित्से'ति शेषः। **मौर्व्यो** धनुर्ज्याः। **वा**। 'कर्णपूरीक्रियन्ता'मिति पूर्वतोऽन्वेति आकृष्यन्तामिति भावः। 'यदि युयुत्से'ति शेषः। कमपि शत्रुं प्रति राज्ञो दूतद्वारोक्तिरियम्। गद्यमिदम्।'

उदाहृतं सङ्गमयति-**अत्र**। **शिरसाम्**। **धनुषाम्**। **च**। **नमनयोः**। **सन्धिविग्रहोपलक्षणत्वात्** सन्ध्युपलक्षणत्वात् विग्रहोपलक्षणत्वाच्चेत्यर्थः। उपलक्षणं परिचायकम्। **सन्धिविग्रहयोः**। **च**। **एकदा**। **कर्त्तुम्**। **अशक्यत्वात्**। **विरोधः**। ननु सर्वत्र तथा विरोधो न सम्भवतीत्यत आह—**स** विरोधः। **च**। **एकपक्षाश्रयणपर्य्यवसान** एकपक्षस्य शिरोधनुर्नमनयोरेकतरस्य पक्षस्याश्रयणं तत्र पर्य्यवसानं समाप्तिर्यस्य तादृशः। तदन्यतरपक्षाश्रयणे तस्य निराकरणमिति भावः। 'तथा च—तुल्यबलयोरेकतरस्मिन् प्रकृतेऽनन्वयविरोध इति परमतात्पर्य्य'मिति विवृतिकाराः। एवमुपलक्षणामाश्रित्य तुल्यबलत्वं साधितम्, अथ तदन्तरा साधयति—**तुल्यबलत्वम्**। **च**। **अत्र**। **द्वयोः**। **अपि**। **धनुः शिरोनमनयोः**। **स्पर्धया**। 'वक्तु'रिति शेषः। **सम्भाव्यमानत्वात्**। **चातुर्य्यं** वैचित्रयम्। **च**। **औपम्यगर्भत्वेन** 'धनूंषीव शिरांसि नम्यन्ता'मिति विच्छित्तिविशेषशालित्वेन। अभेदार्थेयं तृतीया। **एवम्**। '**कर्णपूरीक्रियन्ता**' **मित्यत्र**। **अपि**। एतेन 'मौर्व्यो वा' इत्यस्य ग्रहणम्।

एवमुदाहरणं सङ्गमयान्यत्राप्येवं सङ्गमनीयमित्याह—**एवमित्यादिना**। स्पष्टोऽर्थः। 'भक्तिप्रह्वविलोकनप्रणायिनी नीलोत्पलस्पर्धिनी ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये। लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः॥' इति समस्तं पद्यम्। अत्र द्विवचनैकवचनश्लेषः। 'अत्र तनुनेत्रयोर्भवार्तिशमनसाधनक्षमत्वेन तुल्यबलत्वम्। तयोरेकतरस्यैव भवार्तिशमनरूपे प्रकृतकार्य्ये हेतत्वेनान्वयो, नतु समुच्चयवदुभयोरिति विरोधः।' इति विवृतिकाराः। यथा वा—'पतत्यविरतं वारि नृत्यन्ति शिखिनो मुदा। अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति॥' इत्यत्र विप्रलम्भानुगुण्येन वैचित्र्यम्। यथा वा—'प्राणानर्पय सीतां वा, गृध्रांस्तर्पय वा द्विजान्। यमं भजस्व रामं वा यथेच्छसि तथा चर॥' इत्यत्र त्वौपम्यगम्येन चातुर्य्यम्।

**समुच्चयोऽयमेकस्मिन्सति कार्यस्य साधके।**

**खले कपोतिकान्यायात्तत्करः स्यात्परोऽपि चेत्॥ ८४॥**

**गुणौ क्रिये वा युगपत्स्यातां यद्वा गुणक्रिये।**

यथा मम—

**'हंहो धीरसमीर हन्त जननं ते चन्दनक्ष्माभृतो**

**दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः।**

**प्रत्यङ्गं दहसीति मे त्वमपि चेदुद्दामदावग्निव-**

**न्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः॥'**

अत्र दाहे एकस्मिंश्चन्दनक्षमाभृज्जन्मरूपे कारणे सत्यपि दाक्षिण्यादीनां हेत्वन्तराणामुपादानम्। अत्र सर्वेषामपि हेतूनां शोभनत्वात्सद्योगः। अत्रैव चतुर्थपादे मत्तादीनामशोभनानां योगादसद्योगः।

---

## विवृतिः

समुच्चयालंकारमाह—**समुच्चयोऽयमिति**। खलेकपोतिकान्यायश्च—'वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति।' यथा भक्षणार्थं कपोतानां खले युगपत्पतनं तथैककार्यानुष्ठानार्थं युगपदनेकस्योपस्थापनम्। प्रकारान्तरेण समुच्चयालंकारमाह—**गुणाविति**। गुणश्च क्रियाभिन्नधर्ममात्रम्। क्रिया धात्वर्थरूपः॥

**हंहो इति**। विरहिण उक्तिरियम्। दाक्षिण्यं दक्षिणदिग्भवत्वम्, अथ च सारत्यम्। **किं वक्ष्यते कोकिल इति**। कोकिलः सुतरां दाहजनको भवतीति भावः। अयमर्थापत्त्यलंकारासंकीर्णः। सतामुपादेयानां कारणानां केवलानां योगः सद्योगः। तेषामेवानुपादेयानां योगोऽसद्योगः।

## विवृतिपूर्तिः

**तत्कर इति**। चेत्परोऽन्योऽपि तत्करः तस्य कार्यस्य संपादकः स्यात्। एष एकः प्रकारः, गुणयोः क्रिययोर्गुणक्रिययोर्वा यौगपद्येनावस्थाने त्रिविध इति चतुर्विधः। सोऽयं समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च भवतीति त्रिधा भिद्यते॥

## विज्ञप्रिया

चतुर्विधं समुच्चयालङ्कारमाह—**समुच्चयोयमिति**। धान्यमर्दनखले कपोतानामेकदापतनं तन्न्यायस्तन्न्यायादित्यर्थः। अन्यद् भेदत्रयमाह— **गुणाविति**। गुणद्वयं वा क्रियाद्वयं वा गुणक्रियाद्वयं वा यदि युगपद् वर्णितं स्यादित्यर्थः।

**हंहो धीरेति**। मन्दस्यैव धैर्यवत्त्वेनाऽकार्यनिवृत्तिरूपेण सम्बोधनम्। **चन्दनेति**। चन्दनसम्बन्धात् सुगन्धेरेव महाजनजन्यत्वेन सम्बोधनम्। **दाक्षिण्यमिति**। दक्षिणदिग्भवस्यैव जगाद्विलक्षणविचक्षणत्वमुक्तम्। **परिचय** इति। जलसम्बन्धेन शीतलस्यैव पुण्यनदीसम्बन्धेन महत्त्वमुक्तम्। ईदृशस्त्वमिह विरहे मे मम प्रत्यङ्गं दावाग्निवद् दहसि चेत् तदा मत्त उन्मत्तो मलिनात्मकः कृष्णवर्ण एव कुटिलस्वभावः। वनचरत्वेन च लोकव्यवहारानभिज्ञः कोकिलः किं वक्ष्यते ? स सुतरां धक्ष्यतीत्यर्थः।

**अत्रेति**। अदाहकत्वे इत्येव पाठः। दाहकत्वे इति प्रामादिक एव पाठः। चन्दनक्ष्मेत्यादीनामदाहकहेतुत्वं श्लोकव्याख्यायामेव व्याख्यातम्। **चतुर्थपाद** इति। दाहं प्रति हेतूनां मत्तत्वादीनामित्यर्थः। सत्त्वासत्त्वे उपादेयत्वानुपादेयत्वे।

## लोचन

**समुच्चय** इति। तृतीयपादेन समाधेर्व्यवच्छेदः। तच्च वृत्तावेव सुव्यक्तम्। तत्करः तस्य कार्यस्य साधकः।

## कुसुमप्रतिमा

ननु विरुद्धयोर्यौगपद्येनाभिधाने विकल्प इव अविरुद्धानां यौगपद्येनाभिधाने किञ्चिदलङ्कारान्तरं भवति न वेत्याकाङ्क्षायां कारणयौगपद्ये समुच्चयं निरूपयन् सर्वविधमेव तं निरूपयति समुच्चय इति। धान्वानां मर्दनस्थानं खलम् (खीला, खमार इति भाषा) खले कपोताः, पारावता अस्यां सन्तीति खलेकपोतिका नीतिः युक्तार्थत्वेऽपि "आमुष्यायणः" इत्यादौ षष्ठ्यां इव खले इति सप्तम्या लोपाभावः, दण्डा पूपिकेतिवत् "इन्विषये इको वाच्यः" इति इकप्रत्ययस्ततश्च स्त्रियामादा। सा चासौ न्यायो नीतिश्चेति खलेकपोततिकान्यायः। स चोक्तो यथा सामान्यलक्षणाया जगदीशैः—

**"वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत् पतन्ति।**

**तथैव सर्वे युगपत् पदार्थाः परस्परेणान्वयिनी भवन्ति॥"**

तथा च कार्य्यस्य एकस्मिन् सार्थके निष्पादके सति, चेद्यदि खलेकपोतिकान्यायात् परोऽपि पदार्थः, तत्करस्तस्य कार्य्यस्य साधकः स्यात्; तदा अयं समुच्चयो नाम अलङ्कारः स्यात्। अयमेकप्रकारः। यद्वा अथवा युगपदेकदा गुणौ यत् किञ्चिद्गुणद्वयम्, क्रिये यत्किञ्चित् क्रियाद्वयम्, वा अथवा गुण एकः क्रिया चैका इति गुणक्रिये यतुष्प्रकार चेत् स्यातम्, तदा सोऽपि समुच्चयः स्यादित्यर्थः। इमे च त्रिप्रकारा इति समुदायेसमुच्चयः। दीपकेन सह अस्य भेदो वृतावेवोक्तः। समुच्चय उक्तानां कारणादीनां परस्परान्वये परम्प्रानुचतुष्प्रकारः कर्ष इति व्युत्पत्तिः।

प्रथमप्रकारमुदाहरति हंहो इति। प्रियविच्छिन्नस्योक्तिरियम्। हंहो इति सम्बोधनार्थकमव्ययम्। हन्तेति। खेदे। धीरो मन्दसञ्चारी सुधीश्च स चासौ समीरो वायुश्चेति तत्सम्बोधनम्। हे धीरसमीर ! ते तव चन्दनक्ष्माभृतो मलयपर्वतात् जननं जन्म, दाक्षिण्यं दक्षिणदिग् भवत्वमौदार्य्यञ्च जगति उत्तरं प्रधानम्, गोदावर्य्या नद्या वारिभिज लैः सह परिचयः सर्व्वतः संसर्गः, ईदृशोऽपि त्वञ्चैत् उद्दाम दावाग्निवत् भयङ्करद्वावानलवत् मे मम प्रत्यङ्गं सर्वाण्यङ्गानि दहसि; तदा मत्तः मदेनाधीरः, मलिनात्मको दुष्टमना मलिनवर्णञ्च, वनचरः सर्वदा वनचारी

असभ्यश्च कोकिल किं वक्ष्यते पञ्चमस्वरेणोत् पीड़ने किं निन्दिष्यते । उत्तमश्चेत् परान् पीड़यति, तदा अधमप्य परपीड़ने का निन्देति भावः ।

उक्तलक्ष्ये प्रथमलक्षणं सङ्गमयति अत्रेति । दाहे मलयवायुतो दाहसम्भवेऽपि विरहित्वादेव दहनरूपे कार्य्ये । हेत्वन्तराणाम् अन्येषां दाहकारणानाम् । अत्र तु विषमादयोऽन्वेऽप्यलङ्कारा: सन्तीत्यन्नेयम् ।

अयन्तु केवलसद्योगे केवलासद्योगे सदसमुभययोगे च पुनस्त्रिविध इति केचिदाचक्षते, वदपि भङ्ग्या अङ्गीकुरुते अत्रेति । प्रथमार्द्धे इत्यर्थः, सर्वेषां धीरत्वादीनाम् । अशोभनानां हेतूनामिति पूर्वेण सम्बन्धः ।

सदिति सदसद्योगः एकत्र सदसदुभययोगः ।

## विमला

समुच्चयमाह, समुच्चय इति ।—एकस्मिन्—वस्तुनि इत्यर्थः, कायर्यस्य—प्रक्रान्तस्य इति भावः,—साधके—निष्पादके सति, खले—धान्यादिमर्दनस्थाने, रूपोतिकान्यायात् पराऽपि—अन्योऽपि, चेत् तत्करः,—तस्य कार्य्यस्य सम्पादकः, स्यात्, तदा समुच्चयः; अयं भावः,—खलं—धान्यकणमर्दनस्थानं, तत्र यथा वृद्धा युवानः शिशवः कपोताः भक्षणार्थम् एकदैव निपतन्ति, तथा एककार्य्यानुष्ठानार्थं यत्र समकालमनेकेषामुपस्थापनं, तत्र तमर्थं बोधयितुं प्रवृत्ता नीतिः "खले कपोतिका" इति गीयते । प्रकारान्तरेण समुच्चयालङ्कारमाह, गुणारिति ।—वा—अथवा, गुणौ—गुणद्वयं, [गुणश्च क्रियाभिन्नधर्ममात्रम्] वा क्रिये—क्रियाद्वयं, [क्रिया धात्वर्थरूपा] युगपत् स्याताम्, अथवा गुणक्रिये—गुणः क्रिया च द्वयं, युगपत् स्यात्, तदाऽपि समुच्चय; तथा च, खले कपोतिकानीत्या यत्र गुणयोः क्रिययोः गुणक्रिययार्वा युगपत् समुपस्थितिः स समुच्चयः । स च उक्तरीत्या चतुर्विध इति बोध्यम् । स एष समुच्चय, सद्रयोगेऽसद्योगे सदसद्योगे च भवतीति त्रिधा भिद्यते इति सारः ।

हंहो इति ।—विरहिण उक्तिरियम् । हंहो ! इति सम्बोधनसूचकमव्ययं,—हे इत्यर्थः, हे धीरसमीर ! हन्तेति खेदमूचकमव्ययं, तै—तव, जननम—उत्पत्तिः, चन्दनक्ष्माभृतः,—चन्दनपर्वतात्, मलयशैलादित्यर्थः, दाक्षिण्यं—सारल्यं, दक्षिणदिग्भवत्वञ्च, जगति उत्तरं—प्रधानं, ख्यातञ्च, परिचयः,—सङ्गः, गोदावरीवारिभिः, इति—एतादृशोऽपि, त्वं चेत्—यदि, उद्दामदावाग्निवत्—उत्कटदावानल इव, मे—मम, प्रत्यङ्गं—सर्वाण्यङ्गानि, दहसि, तदा मत्तः,—गर्वितः, मलिनात्मकः,—मलिनस्वभावः, कृष्णवर्णश्च, वनचरः,—वन्यः, अभद्र इति भावः, अयं कोकिलः किं वक्ष्यते ? मयेति शेषः, न किमपि वक्तुं शक्यः कोकिलः, सुतरां दाहजनको भवतीति भावः । यदि महान्तोऽपि परान् बाधन्ते, तदा दरात्मानः परान् बाधन्ते एव इति किमस्माभिरुच्येत ? कथं वा तेऽस्मिन् विषये उपलम्भनीयाः ? इति भावः । शार्दूलविक्रीड़ितं वृत्तम् । अयमर्थापत्त्यलङ्कारसङ्कीर्णः ।

अत्र सर्वेषामिति ।—सताम्—उपादेयानां कारणानां केवलानां, योगः सद्योगः, तेषामेवानुपादेयानां योगः असद्योगः, उभयमिश्रणे सदसद्रयोगः इति ज्ञेयम् । तत्र सद्योगे उदाहरणं यथा—"कुलममलिनं भद्रा मूर्त्तिर्मतिः श्रुति शालिनी भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् । प्रकृतिसुभगा एते भावा अमीभिरयं जनो व्रजति सुतरां दर्पं राजन् ! त एव तवाङ्कुशाः ॥" इति । असद्रयोगे यथा—"दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्यात्मकं गाढ़ं प्रेम नवं वयोऽति कठिनाः प्राणाः कुलं निर्मलम् । स्त्रीत्वं धैर्य्यविरोधि मन्मथसुहृत् कालः कृतान्तोऽक्षमो न सख्यश्चतुराः कथं नु विरहः सौढ़व्य इत्थं शठः ?" ॥ इति ।

## लक्ष्मी

इत्यत्रेति । चातुर्याभावात् चातुर्यनिबन्धनचारुत्वाभावात् । एवञ्च देवब्राह्मणयोरुत्तमपात्रत्वेन तुल्यवलत्वम्, एकस्मै दाने दत्ते अन्यस्मै तदसम्भवाद्विरोधः, एकस्मा एव दानमभिमतमिति तत्परिहारः ।

विरुद्धयोरेककालेनैव प्रतिपादने तथा विकल्पालङ्कारः तथा अविरुद्धानामेककालेनैव प्रतिपादने कोऽलङ्कार इति जिज्ञासायां कारणादियौगपद्ये समुच्चयालङ्कारं लक्षयति—**समुच्चय** इति । तथा च कार्यस्य प्रस्तुतार्थस्य एकस्मिन् साधके कारणे सति चेत् यदि (क) खले धान्यादिमर्दनस्थानविशेषे कपोतिकान्यायात् कपोता इवेति कपोतिका सैव न्यायो नीतिस्तस्मात्, 'इवे प्रतिकृतौ ५/३/९६ इति पा. सूत्रेण कन् । धान्यादिमर्दनस्थाने यथा कपोतानां युगपत् भक्षणरूपैककार्यार्थं पतनं तथेत्याशयः । एतन्न्यायस्वरूपञ्चोक्तं **जगदीशभट्टाचार्येण**—

**'वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत्पतन्ति ।**

**तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति' ॥ इति ।**

परोऽपि पदार्थः, तत्करः तत्कार्यसिद्धिकरः स्यात्; तदा अयं समुच्चय अभिहितानां कारणादीनां परस्परान्वये परस्परानुकर्ष इति व्युत्पत्त्या समुच्चयः तन्नामालङ्कारः स्यात् । अयमेकविधः । यद्वा अथवा युगपत् एककालम्, गुणौ यत् किञ्चिद् गुणाद्वयं, क्रिये यत्किञ्चित् क्रियाद्वयम्, वा अथवा गुण एकः क्रिया चैकेति गुणक्रिये चेत् युगपत् स्याताम्, तदाऽप्ययं समुच्चयः स्यात् । तदेवं चतुर्विधोऽप्ययं सद्योगेऽसद्योगे सदसद्योगे चेति त्रिधा भिन्नो द्वादशप्रकार इत्यवधेयम् । काव्यलिङ्गे हेतुत्वमात्रं विवक्षितम्, समाध्यलङ्कारे एकेन हेतुना कार्यनिष्पाद्यमाने आगन्तुकेनापरेण कार्यस्य सौकर्यकरणं विवक्षितम् अत्र तु बहूनां कार्यकारणक्षमानां साहित्यं विवक्षितमिति परस्परमेषां भेद इत्यन्यत्र स्पष्टम् ।

तत्र प्रथमभेदोदाहरणं दर्शयति—**हंहो** इति । कोकिलरवश्रवणेनातिसन्तप्तस्य कस्यचिद्वियोगिनो दक्षिणानिलं प्रत्युक्तिरियम् । 'हं हो इति विस्मयार्थकमव्ययम्, हन्तेति विषादे । हे धीरसमीर धीरत्रायो ! ते तव चन्दनक्ष्माभृतः चन्दनप्रधानमलयपर्वतात् जननं जन्म, दाक्षिण्यं दक्षिणाशाभवत्वं परसन्तोषकत्वञ्च जगति उत्तरं विलक्षणम्, अलौकिकमिति भावः, गोदावर्या नद्या वारिभिः सलिलैः सह परिचयः सर्वतः सङ्गः, इदृशोऽपि त्वञ्चेत् उद्दामा प्रचण्डाऽसौ दावाग्निर्दावानलस्तद्वत् मे मम प्रत्यङ्गं सर्वाङ्गं दहसि; तदा मत्तः प्रमादमुपगतः, मलिनात्मको मलिनस्वभावः मलिनवर्णश्च, वनचरः सततमरण्यचारी असभ्यश्च कोकिलः पिकः, किं वक्ष्यते पञ्चमस्वरेण सन्तापने किं वक्तुं शक्य इत्यर्थः; यदि भवत्सदृशानामुत्तमानामियं दशा यत्परपीडनं भवति तदा अधमा यद्युत्पीडयन्ति तत्र का निन्दा भवेदिति निष्कर्षः । **शार्दूलविक्रीडितं** छन्दस्तल्लक्षणञ्चोक्तम् ।

प्रथमलक्षणं संयोजयति—**अत्रेति** । दाहे दक्षिणानिलतः दाहासम्भवेऽपि वियोगित्वादेव दहनरूपे कार्ये । दाक्षिण्यादीनामित्यत्रादिपदेन गोदावरीनारिपरिचियधीरत्वयोग्रहणम् । हेत्वन्तराणाम् अन्येषां दाहजनकानाम् । विषमाद्यलङ्कारा अप्यत्र सन्तीति विभावनीयम् ।

## रुचिरा

समुच्च्यं लक्षयति—१७३ **चेत्** । **एकस्मिन्** । **कार्यस्य** प्रस्तुतार्थस्य । **साधके** । **सति** स्थिते सतीति भावः । **खले**ऽन्नोत्पत्तिस्थानविशेषे । **कपोतिकान्यायात्** कपोताः इवेति सैव न्यायस्तस्मात् । 'इवे प्रतिकृतौ ।'

५/३/९६ इति कन् । खले यथा कपोतानां युगपत् भक्षणरूपैककार्य्यार्थं पतनं तथेति भावः । **परो**ऽन्यः । **अपि** । **तत्कर**स्तस्य कार्य्यस्य **करः** साधकः । **स्यात्** । 'तदैकः' इति शेषः । **अयम्** । **समुच्चयः** । अथ चेत्-**गुणौ** गुणद्वयम् । युगपदेककालम् । स्यात् । 'तदा द्वितीयः' इति शेषः । **वा** यद्वा । **क्रिये** क्रियाद्वयम् । **युगपत** । **स्याताम्** 'तदा तृतीय' इति शेषः । **यद्वा** । **गुणक्रिये** । एको गुण एका च क्रियेति भावः । युगपत् स्याताम् । 'तदा चतुर्थ' इति शेषः । 'अयं समुच्चय' इति पूर्वतोऽनुषज्यते । तथा च—समुञ्चयनं कारणयोर्गुणयोः क्रिययोर्गुणक्रिययोर्वा युगपदुपस्थानमिति समुञ्चय इति साधारणं लक्षणम् । अत्र द्वित्वं चाविवक्षितम् । चतुर्विधोऽप्ययं सद्योगेऽसद्रयोगे चेति त्रिधा भिन्नो द्वादशविधः ॥ १३७ ॥ १३८ ॥

उदाहरति—**यथा** । **मम** । 'हंहो विस्मयः । हे **धीरसमीर** धीरवायो ! **ते** तव । **चन्दनक्ष्माभृतश्चन्द**नप्रधानात् पर्वतात् । **जननमुत्पत्तिः** । **हन्त** ! **जगदुत्तरं** जगत्युत्तरं विलक्षणम्, अलौकिकमिति भावः । तव दाक्षिण्यं चातुर्य्यं परसन्तोषकत्वमिति यावत् । **गोदावरीवारिभिः** । **परिचयः** सङ्गः । अत एवंविधः—**अपि** । **त्वम्** । **चेत्** । **उद्दामदावाग्निवदुद्दा**मा प्रचण्डोऽसौ दावाग्निस्तद्वत् । **इह** । **मे** । (अनागसः) । **प्रत्यङ्ग** सर्वाङ्गम् । **दहसि** । तत्-**अयम्** । **मत्तः** प्रमादंम प्राप्तः । **मलिनात्मको** मलिन आत्मा स्वभावो देहो वा यस्य तथोक्तः । **वनचरः** । **कोकिलः** । **किम्** । **वक्ष्यते** न किमपि वक्तुं शक्य इति भावः । यदि साधुतया सर्वथाख्यातोऽपि धीरः समीरस्त्वं मां दहसि, तदयं मलिनः कोकिलस्त्वत्साहाय्यं कर्तुमुपस्थितः केन प्रतिषेध्य इति निष्कर्षः । विरहिणः कोकिलखेनेन पीडयमानस्य दक्षिणानिलं प्रत्युक्तिरियम् । शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ २७४ ॥'

उदाहरणं सङ्गमयति-**अत्र** । **अदाहे** दाहाभावे दाहकत्वानौचित्यसमर्थन इति यावत् । **एकस्मिन्** । **चन्दनक्ष्माभृज्जन्मरूपे** । **कारणे** । **सत्यपि** । **दाक्षिण्यादीनाम्** । आदिपदेन गोदावरीवारिपरिचय-धीरबायोग्रहणम् । **हेत्वन्तराणाम्** । **उपादानम्** । अथ-**अत्र** । **सर्वेषां** चन्दनक्ष्माभृज्जन्मादीनाम् । **अपि** । **हेतूनाम्** । **शोभनत्वात्** । **सद्रयोगः** । तथा-**अत्र** । **एव** । **चतुर्थपादे** । **मत्तादीनां** मतत्त्वादीनामित्यर्थः । 'सर्वेषामपी'ति शेषः । **अशोभनानाम्** । **योगात्** । असद्रयोगः ।

सदसद्योगो यथा—

**'शशी दिवसधूसरो गलितयौवना कामिनी**

**सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः।**

**प्रभुर्धनपरायणः सततदुर्गतः सज्जनो**

**नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे ॥'**

इह केचिदाहुः—'शशिप्रभृतीनां शोभनत्वं खलस्याशोभनत्वं चेति सदसद्योगः' इति। अन्ये तु—'शशिप्रभृतीनां स्वतः शोभनत्वं चेति सदसद्योगः' इति। अन्ये तु—'शशिप्रभृतीनां स्वतः शोभनत्वं धूसरत्वादीनां त्वशोभनत्वमिति सदसद्योगः।' अत्र हि शशिप्रभृतिषु धूसरत्वादेरत्यन्तमनुचितत्वमिति विच्छित्तिविशेषस्यैव चमत्कारविधायित्वम्। 'मनसि सप्तशल्यानि मे' इति सप्तानामपि शल्यत्वेनोपसंहारश्च। 'नृपाङ्गनगतः खल' इति तु क्रमभेदादुष्टत्वमावहति सर्वत्र विशेष्यस्यैव शोभनत्वे प्रक्रमादिति।

---

## विवृतिः

उभयमिश्रेणे सदसद्योगः ॥ **शशीति**। मे मनसि सप्तैव शल्यानि दुःखदायकत्वात्। किं किमित्याह—शशीति। मे मनसि सप्तैव शल्यानि दुःखदायकत्वात्। किं किमित्याह—शशीति। स्वाकृतेः शोभनशरीरस्य अनक्षरं वचनहीनम्। धनपरायणो धनलालसत्वेन सदसद्विवेकहीनः। शशिप्रभृतीनामिति सज्जनपर्यन्तानाम्। धूसरत्वादीनामिति सततदुर्गतत्वपर्यन्तानां ग्रहणम्। खलस्य तु स्वतोऽशोभनत्वं नृपाङ्गनगतत्वस्य शोभनत्वमिति वैपरीत्येन सदसद्योगः। मनोदुःखं प्रति धूसरत्वादिविशिष्टाश्चन्द्रादयः कारणानि कारणीभूतानां विशेष्याणां विशेषणानां च यथासंभवं च यथासंभवं सतामसतां च योग एव सदसद्योग इति भावः। अन्येषां मतमुपपादयति—**अत्र हीति**। विच्छित्तिविशेषस्यैवेत्येवकारेण मनसीत्यादेर्व्यावृत्तिः। नन्वेतन्निरर्थकमत आह—मनसीति। तथा च वाक्यसमापकत्वेनैव तत्सार्थकमिति भावः। प्रथममतं दूषयति—नृपाङ्गनगत इति। विशेषस्यैवेत्येवकारेण विशिष्टव्यवच्छेदः। तथा चात्र विशेष्यविशेषणयोर्योग एव वैचित्र्यावहो नतु विशिष्टानां योगः। क्रमभेदरूपदोषावहत्वादिति भावः। समाध्यलंकारादस्य भेदमाह—**इहेति**। साहित्येन मिलितत्वेनावतारः। समग्रे समर्थे पर्याप्ते काकतालीयन्यायेन अप्रतिसंहतत्वेनापतनमुपस्थापनम्। यत्र कार्यविशेषं मिलितान्येव कारणानि जनयन्ति समुच्चयस्य विषयः। यत्र त्वेकस्मिन्कारणे फलसाधनायानुष्ठीयमाने दैवादुत्पन्नेन कारणान्तरेण तत्फलस्य सुकरत्वं स समाधिरिति भावः ॥

## विज्ञप्रिया

**शशीति**। एते सप्त धूसरत्वविशिष्टशय्यादयः सप्त मनसि शल्यानीत्यर्थः। अनौचित्यदर्शनेन शल्यवद् दुःखदायित्वात्। तेष्वनौचित्यं दर्शयति-**शशीति**। उज्ज्वलमूर्तेस्तस्य दिवसधूसरत्वमनुचितम्। एवं गलितयौवनायाः कामवत्त्वं कामिन्या गलितयौवनत्वं वा अनुचितम्। एवं सरसो वारिजशून्यत्वम्। शोभनाकृतेर्मूर्खस्याऽक्षेण

विद्यया शून्यत्वम्। प्रभोर्धनपरायणत्वं, धनपरायणजनस्य प्रभुत्वं वा। सज्जनस्य सततदुर्गतत्वं सततदुर्गतस्य सज्जनत्वं वा, नृपाङ्गणगतस्य खलत्वं, खलस्य नृपाङ्गणगतत्वं सततदुर्गस्य सज्जनत्वं वा, नृपाङ्गणगतस्य खलत्वं, खलस्य नृपाङ्गणगतत्वं वा अनुचितमित्यर्थः। अत्र शोच्यानां विधेयानां सदसत्त्वशात् सदसद्योगः। तत्र दैवाधीन-दोषेण शोच्यस्य सत्त्वं स्वाधीनदोषेण शोच्यस्यासत्त्वम्। तत्र शशिनो धूसरत्वं, कामिन्या गलितयौवनत्वस्य विधेयत्वपक्षे गलितयौवनात्वं, सरसो वारिजशून्यत्वं, स्वाकृतेरनक्षरमूर्खत्वं, सज्जनस्य दुर्गतत्वं तदेव दोषात् शोच्यत्वेन शोभनम्। गलितयौवनायां कामवत्त्वस्य विधेयत्वपक्षे विधेयस्य तस्य प्रभोर्धनपरायणस्य धनपरायणे प्रभुत्वस्य वा, विधेयस्य खले नृपाङ्गणगतत्वस्य नृपाङ्गणगते खलत्वस्य वा विधेयस्य स्वाधीनदोषेण शोच्यत्वाद-शोभनत्वमिति विधेयानामेव सदसत्त्वम्।

पूर्वोक्तश्लोकोपि विधेयानामेव तथात्वाद् भिन्नाभिप्रायं ग्रन्थकृन्मनसि कृत्वापरोक्तं सदसद्योगं दर्श-यति—**इह केचिदिति**। एतन्मते उद्देश्यानां विशेष्याणामेव सदसत्त्वम्। मतान्तरमाह—**अन्ये त्विति**। एतन्मते उद्देश्यविधेययोर्विशेष्यविशेषणयोः सदसतोर्योगः। तेषां मते तथात्वमेव विच्छित्तिविशेषाच्चमत्कारस्तद्दर्शयति—**अत्रहीति**। उद्देश्ये सत्त्वासत्त्वाभ्यां तु तेषां मतेन चमत्कार इत्यर्थः। तेषां सदसत्त्वे एव तावद्लङ्कारः। प्रत्युत प्रथमपक्षे तादृशनिर्देशः क्रमभङ्गमावहतीत्यर्थः।

## लोचन

धीरः वंशेन विधिना पाण्डित्याच्च, क्ष्माभृत्पर्वतः भूधरणक्षमः कश्चित् महापुरुषः। दाक्षिण्यं दक्षिणा दिक् जन्मसरलता च। मलिनात्मकः श्यामः कुटिलाशयश्च। हेतूनां धीरत्वादीनां सन्तः शोभनाः।

## कुसुमप्रतिमा

शशीति। नीतिशतके श्लोकोऽयम्। दिवसेन दिनारम्भेण धूसरो धूम्रवर्णीभूतः, शशी चन्द्रः। गलितं विगतं यौवनं यस्याः सा तादृशी कामिनी भार्य्या। विगतानि लुप्तानि वारिजानि पद्मानि यस्मात् तत्तथोक्तम्, सरो दीर्घिका। शोभना आकृतिर्यस्य तस्य सुन्दरपुरुषस्य अनधरं वर्णोधारणरहितं मुखम्, मूकत्वमित्यर्थः। धनपरायणो धनलोभविमुग्धः प्रभुः राजा। सततदुर्गतश्चिरदरिद्रीभूतः सज्जनः। एवम्, नृपाङ्गनगतो राजसभास्थः खलः—एतानि सम मे मम मनसि शल्यानि शल्यवद्दुःखदायकानि।

अत्र मनोदुःखोत्पादनकार्य्ये प्रति दिवसधूसरशशिरूपे एकस्मिन् कारणे सत्यपि गलितयौवनकामिनीप्र-भृतीनामन्वेषां वा कारणानामुपादानात् समुच्चयः।

उदाहृते सद्सद्योगं दर्शयितुमाह इहेति। शशिप्रभृतीनां शशि-कामिनी-सरः स्वाकृति प्रभुसज्जनानाम्। एवमुत्तरत्रापि।

अलङ्कारसर्वस्वकारमतमाह अन्येत्विति। स्वतः स्वभावतः धूसरत्वाद्यभावे इत्यर्थः। धूसरत्वादीनामि-त्यादिशब्देन गलितयौवनत्व-विगतवारिजत्वानक्षरत्वधनपरायणत्वसततदुर्गतत्वरूपाणां विशेषणानां ग्रहणम्।

उक्तस्वमतसमर्थनाय अलङ्कारसर्वस्वकार एवाह अत्रेति। हि यस्मात्। धूसरत्वादेरित्यादिशब्देन गलि-तयौवनवनत्वादिविशेषणधर्म्माणां ग्रहणम्। अनुश्चितत्वमयोग्यत्वम्। परमसुन्दरे शशिकामिन्यादौ परमसुन्द-रस्य उज्ज्वलत्वनवयौवनत्वादिधर्म्मस्यैव सर्वथा योग्यत्वादित्याशयः। इति इत्थं यो वैचित्रयातिरेक इत्यर्थः, तस्यैव

चमत्कारविधायित्वम्, न पुनः केचिदित्याद्युक्तरूपस्य सदसद्योगस्य चमत्कारविधायित्वम् इति एवशब्दस्यार्थः, शशिकामिनीप्रभृतीनां सद्रूपाणां विशेष्याणाम् असद्रूपेण विशेष्यात्मकेन खलेन सह योगरूपो यः सदसद्योगस्तस्य एकपद्यान्तर्गतत्वमात्ररूपतया अवास्तविकत्वेना किञ्चित्करत्वादिति भावः ।

ननु यथाकथञ्चित् सद्सद्योग एव विवक्षणीयः, तेन एकपद्यान्तर्गतत्वरूपेणापि सद्सद्योगे का हानिरित्याह मनसीति । किञ्चेति चार्थः, उपसंहारः समापनम्, इदञ्च आवहतीति परक्रियायां कर्तृत्वे नान्वेति । दुष्टत्वं भग्नप्रक्रमतादोषम्, आवहति भवन्मते जनयति, सर्वत्र "शशी दिवसधूसरः" इत्यादौ, विशेष्यस्यैव, न पुनर्धूसरत्वादिविशेषणस्येत्यर्थः । अत्र अलङ्कारसर्वस्वकारस्यायमभिप्रायः—भवता शशिप्रभृति खलपर्य्यन्तं केवलं विशेष्यमादायैव सदसद्योग आख्यायते, विशेषणानां का गतिरिति तु कथञ्चिदपि न विविच्यते । एवञ्च शशिकामिन्यादीनां विशेष्याणामेव शोधनत्वप्रक्रमे नृपाङ्गनगत इति विशेषणस्य शोभनत्वाभिधानात् भवन्मते भग्नप्रक्रमतादोषो दुर्निवार एव । अस्मन्मते तु विशेष्यविशेषणयोरेव सदसतोर्योगत्वेन सदसद्योग इत्यभिधानात् धूसरत्वादिविशेषणानामपि सम्पूर्णविवेचनाधीनत्वात् शशिप्रभृतौ धूसरत्वादीनामसङ्गत विशेषणानामेव प्रक्रमे खले "नृपाङ्गनगतः" इत्यसङ्गतविशेषणेनैवोपसहारात् न भग्नप्रक्रमतादोषस्य कथमपि प्रसक्तिरिति । किञ्च शशिकामिनीप्रभृतिशोभनविशेष्याणां सहचरत्वेन अशोभनस्य खलस्याभिधानात् सहचरभिन्नतादोषः, पुनस्तथैव सदसद्योगेन समुच्चयालङ्काराङ्गीकारे "सज्जनो दुर्गतौ मग्नः" इत्यादावपि (४८९ पृष्ठे) परमेव सद्सद्योगेन समुच्चयालङ्कारप्राप्त्या सहचरभिन्नतादोषस्य प्रायेण विलोपापत्तिः दोषालङ्कारयो साङ्कर्य्यापत्तिश्च । अस्मन्मते तु ईदृशसदसद्योगो न समुच्चयभेदक इति पृथगेवावतिष्ठत इति । दर्पणकारमते तु परमतस्यैवाङ्गीकार इति प्रतीयते पूर्वमतदूषणायतस्याभिधानात् तत्र च दोषानाभिधानादिति ध्येयम् ।

## विमला

सद्सद्रयोगे उदाहरणं, शशीति ।—(१) दिवसे धूसरः,—मलिनः, शशी, (२) गलितं—गतं, यौवनं यस्यास्तादृशी, कामिनी, (३) विगतानि—नष्टानि, वारिजानि—पद्मानि यस्मात् तादृशं, सरः,—सरोवरः, (४) शोभना आकृतिः यस्य तादृशस्य सुन्दरस्येत्यर्थः, अनक्षरम्—अक्षरशून्यं, वचनाक्षममित्यर्थः, मुखं, (५) धनपरायणः,—धनल्लब्धः, अतिलोभेन सदसद्विवेकहीन इत्यर्थः, प्रभुः,—राजा, (६) सततं दुर्गतः,—दुरवस्थः, सज्जनः,—साधुजनः, (७) तथा नृपाङ्गनगतः,—राजसभास्थः इत्यर्थः, खलः,—दुर्जनः, (एतानि) मे मनसि सप्त शल्यानि, दुःखदायकत्वादिति भावः, निखातानीति शेषः । पृथ्वी वृत्तं—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति च तल्लक्षणम् । नीतिशतकस्येदं पद्यम् ।

इह केचिदिति ।—अत्र शल्यत्वे एकस्यैव दिवसधूसरशशिनः कारणत्वेऽपि कामिन्यादेर्गलितयौवनत्वादीनां बहूनामुपादानम् । अन्ये त्विति ।—शशिप्रभृतीनामिति सज्जनपर्य्यन्तानां, धूसरत्वादीनामिति सततदुर्गतत्वपर्य्यन्तानां ग्रहणम् । खलस्य तु स्वतः अशोभनत्वं, नृपाङ्गनगतत्वस्य शोभनत्वमिति वैपरीत्येन सदसद्रयोगः । मनोदुःखं प्रति धूसरत्वादिविशिष्टाश्चन्द्रादयः कारणानि, कारणीभूतानां विशेष्याणां विशेषणानाञ्च यथासम्भवं सताम् असताञ्च योग एव सदसद्योग इति भावः । अन्येषां मतमुपपादयति, अत्र हीति ।—"विच्छित्तिविशेषस्यैव" इत्येवकारेण मनसीत्यादेर्व्यावृत्तिः । नन्वेतत् निरर्थकम्, अत आह, मनसीति ।—तथा च, वाक्यसमापकत्वेनैव तत् सार्थकमिति भावः । प्रथममतं दूषयति, नृपाङ्गनगत इति ।—विशेष्यस्यैव इत्येवकारेण विशिष्टव्यवच्छेदः, तथा च, अत्र विशेष्यविशेषणयोर्योग एव वैचित्र्यावहः, न तु विशिष्टानां योगः, क्रमभेदरूपदोषावहत्वादिति भावः । अत्र

सर्वस्वकाराणामयमभिप्रायः, यथा—शशिनः स्वतः शोभनस्यापि दिवसधूसरत्वात् अशोभनत्वेन सदसतः तादृशै-रेव कामनीप्रभृतिभिः समुच्चयः। न त्वत्र कश्चित् समुच्चीयमानः शोभनः, अन्यस्त्वशोभनः इति सदसद्रयोगो व्याख्येयः। ननु "नृपाङ्गनगतः खलः" इत्यशोभनः, धन्ये तु अशोभना इति कथं समुच्चीयमानस्य सतः तादृशेनासता योगः ? नैतत्, "नृपाङ्गनगतः खलः" इति प्रत्युत प्रक्रमभङ्गात् दष्टमेव, न तु सौन्दर्य्यानिमित्तमिति उपेक्ष्यमेवैतत; अत एव अन्यैरेवमादौ सहचरभिन्नोऽथदृष्ट एवेत्युक्तम्; प्रकृते तु नृपाङ्गनगतत्वेन शोभनत्वं खलत्वेनाशोभनत्वम् इति समर्थनीयम्; एवमपि विशेष्यस्य शोभनत्वं प्रक्रान्तं, विशेषणस्य त्वशोभनत्वम्, इह तु अन्यथा इति न सर्वथा निरवद्यम् इति।

## लक्ष्मी

कथं सद्योग इति दर्शयति—अत्रेति। पूर्वार्द्धे इत्यर्थः, सर्वेषां चन्दनक्ष्माभृज्जन्मादीनाम्। मत्तादीनां मत्तत्वादीनामित्यर्थः, अशोभनानां 'सर्वेषां हेतूनाम्' इति पूर्वेणान्वयः।

अथावशिष्टं सदसद्योगमुदाहरति—**शशीति**। भर्तृहरिकृते नीतिशतके पद्यमिदम्। शशी चन्द्रः दिवसेन दिनारम्भेण धूसरो निस्तेजाः। कामिनी कान्ता गलितं नष्टं यौवनं तारुण्यं यस्याः सा तादृशी। सरः तडागः विगतानि निरस्तानि वारिजानि पद्मानि यस्मात्तत्तथोक्तम्। शोभना आकृतिर्नासिकाद्यङ्गनिवेशपूर्विकाङ्गरमणीयता वारिजानि पद्मानि यस्मात्तत्तथोक्तम्। शोभना आकृतिर्नासिकाद्यङ्गनिवेशपूर्विकाऽङ्गरमणीयता यस्य तस्य अनक्षरं विद्याहीनं मुखं वदनं मूकत्वमित्यर्थः। धनपरायणः धनलुब्धः प्रभुः राजा। सज्जनः सततं निरन्तरं दुर्गतः दरिद्रः 'निःश्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः' इत्यमरः। खं छिद्रं लाति गृह्णातीति खलो दुष्ट इत्यर्थः, नृपाङ्गनगतः राजप्रासादप्रसिद्धः। एतानि सप्त मे मम मनसि बाणाग्राणि।

'क्ष्वेडाशङ्कुशरे शल्यं ना श्वाविन्मदनद्रुमे' इति रभसः।

'शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषुतोमरे'।

मदनद्रुश्वाविधोर्ना...इति मेदिनी च।

**पृथ्वीच्छन्**दस्तल्लक्षणन्तु—'पृथ्वी ज्सौ ज्सौ य्लौग् वसुनवकौ' इति। अत्र दिवसधूसरशशिरूपे मनोदुःखहेतौ सत्येव गलितयौवनादिविशिष्टं कामिन्यादिकमपि मनोदुःखहेतुत्वेनोपात्तमिति समुच्चयः।

सदसद्योगमुपपादयितुमुत्थापयति—**इहे**ति। शशिभृतीनां चन्द्रादीनाम्। इति एवं सदसद्योगः शोभना-शोभनमेलनम्। इत्थमग्रेऽपि।

अलङ्कारसर्वस्वकाराभिप्रायं स्पष्टयति—**अन्ये** त्विति। स्वभावतः दिवसधूसरत्वाद्यसत्त्वे इत्यर्थः। इति शोभनाशोभनात्मनां कारणानां योगादिति शेषः।

ननु शशिप्रभृतीनां शोभनत्वं, खलस्य चाशोभनत्वमित्येवं सदसद्योगः कथं नाभ्युपेयत इत्यत आह—**अत्र हीति**। हि यस्मात्। धूसरत्वादेरित्यत्रादिपदेन गलितयौवनत्व—विगतवारिजत्वानक्षरत्वधनपरायणत्वसततदुर्ग-तत्वरूपाणां विशेषधर्माणां परिग्रहः। अनुचितत्वम् अशोभनत्वम्। तथाहि–उज्ज्वलमूर्तेस्तस्य दिवसधूसरत्वम-नुचितम्। एवं गलितयौवनाया कामवत्वं कामिन्या गलितयौवनत्वं वा अनुचितम्। एवं सरसो वारिशून्यत्वम्, शोभनाकृतेर्मूर्खस्य विद्यया शून्यत्वम्, तथा प्रभोर्धनपरायणत्वं धनपरायणजनस्य प्रभुत्वं वा, सज्जनस्य सततदुर्ग-तत्वं सततदुर्गतस्य सज्जनत्वं वा, नृपाङ्गनगतस्य खलत्वं, खलस्य नृपाङ्गनगतत्वं वा अनुचितमित्यर्थः। इति इत्थं

यो विच्छित्तिविशेषः चारुत्वातिरेक इत्यर्थः, तस्यैव चमत्कारविधायित्वम्, न पुनः **केचिदित्या**दिनाभिहितसदसद्योगस्य चमत्कारविधायित्वमिति एवकारपदार्थः ।

नन्वेकपद्यमध्यान्तःपातितत्वरूपेण यथाकथञ्चित् सदसद्रयोग एव कथं न स्यादित्यन्त आह—**मनसीति** । अपि चेति चार्थः, उपसंहारः समाप्तिः, अस्य चाग्रिम 'आवहति' इति क्रियायां कर्त्तृत्वेन सम्बन्धः । प्रस्तुतक्रमस्य विशेष्यस्य अन्यत्र सर्वत्र शोभनत्वं विशेषणस्य चाशोभनत्वमित्यस्य प्रस्तुतमार्गस्य भेदः पार्थक्यं तस्मात् दुष्टत्वं भग्नप्रक्रमत्वदोषम् आवहति त्वदीयसिद्धान्ते जनयति; तथाच 'नृपाङ्गनगतः खलः' इत्यत्र नृपाङ्गनगतत्वेन शोभनत्वं खलत्वेन तु अशोभनत्वमितिरीत्या सदसद्ररूपतासमर्थनेऽपि तस्मिन्नंशे नायमलङ्कारः, किन्तु तत्र स्वतोऽशोभनस्य खलस्य पाठात् प्रक्रमभङ्गदोष एवेतिभावः । सर्वत्र 'शशी दिवसधूसरः' इत्यादौ विशेष्यस्यैव न पुनर्धूसरत्वादिविशेषणस्येत्यर्थः । प्रक्रमादिति, अतः—'नृपाङ्गनमसद्युतम्' इति पाठोऽदुष्ट इति शेषः' । अस्मत्सिद्धान्ते तु विशेष्यविशेषणयोरेव सदसतोर्योगत्वेन सदसद्रयोग इति प्रतिपादनात् धूसरत्वादिविशेषणानामपि समस्तविचाराधीनत्वात् शश्यादौ धूसराद्ययुक्तविशेषणानामेव प्रस्तुते खले 'नृपाङ्गनगतः' इत्युकतविशेषणेनैव समापनात् कथञ्चिदपि न भग्नप्रक्रमत्वदोषावसरः, नापि पाठभेदकल्पनञ्चेत्य**लङ्कारसर्वस्वकारा** आहुरिति पूर्वेण सम्बन्धः । अत्र पूर्व केचिदित्यनेनोक्तम् अन्ये तु इत्यादिना खण्डनमेव कृतम्, अस्मिन् पक्षे च दोषमपि न प्रदर्शितं ग्रन्थकृताऽतोऽलङ्कारसर्वस्वकृन्मतमेव स्वमतमित्यवगम्यते ।

## रुचिरा

सदसद्रयोगमुदाहरति—**सदसद्रयोग** इत्यादिना । स्पष्टम् । '**शशी** चन्द्रः । **दिवसधूसरो** दिवसे धूसरो गतप्रभः । **कामिनी** । **गलितयौवना** गलितं नष्टं यौवनं यस्याः तादृशी । **सरस्तडागः** । **विगतवारिजं** विगतानि निरस्तानि वारिजानि कमलानि यस्मात्तथोक्तम् । **स्वाकृतेः** शोभनाऽऽकृतिर्नासिकाद्यङ्गनिवेशपूर्विकाऽङ्गरमणीयता यस्य तस्य भावः । **मुखम्** । **अनक्षरं** विद्याहीनम् । **प्रभुः** स्वामी । **धनपरायणो** धनलुब्धः कदर्य्य इति यावत् । **सज्जनः** । **सततदुर्गतः** सततं निरन्तरं दुर्गतो दरिद्रः । 'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ।' इत्यमरः । **खलः** पिशुनः । **नृपाङ्गणगतो** राजसभायां स्थित इति भावः । 'पिशुनो दुर्जनः खलः ।' इत्यमरः । इत्येतानि-**सप्त** । **मे** मम । **मनसि** । **शल्यानि** बाणाग्रभूतानीति भावः । 'शल्यं तु न स्त्रियां शङ्कौ, क्लीवं क्ष्वेडेषुतोमरे । मदनद्रुश्वाविधोर्ना' इति मेदिनी । भर्तृहरिकृतस्य नीतिशतकस्येदं पद्यम् । अत्र पृथ्वीछन्दः, तल्लक्षणं यथोक्तम्—'पृथ्वी ज्सौ ज्सौ यौग् वसुनवकौ ।' इति ॥ २७५ ॥'

अत्र द्वैविध्येन सदसद्योगं समर्थयते—**इह** । **केचित्** । **आहुः** । '**शशिप्रभृतीनां** चन्द्रादीनाम् । **शोभनत्वम्** । खलस्य । **च** । **अशोभनत्वम्** । **इति** इत्येवम् । सदसद्योगः शोभनाशोभनमेलनाम् ।' **इति** । **अन्ये** । **तु** । 'आहुः' इति पूर्वतोऽन्वेति । '**शशिप्रभृतीनाम्** । **स्वतः** स्वभावतः । **शोभनत्वम्** । **धूसरत्वादीनाम्** । **तु** । **अशोभनत्वम्** । **एव** । **इति** 'शोभनाशोभनात्मनां कारणानां योगा'दिति शेषः । सदसद्योगः । ननु 'शशिप्रभृतीनां शोभनत्वं, खलस्य चाशोभनत्व' मित्येव **सदसद्योगः** किं न स्वीक्रियते? इत्याशङ्क्याहहि यतः । **अत्र** । **शशिप्रभृतिषु** । **धूसरत्वादेर्दिवसधूसरत्वादेः** । **अनुचितत्वम्** । अशोभनत्वम् । **इति** इत्येतद्विहितस्येत्यर्थः । शोभनेषु अशोभनतापातवर्णनसमर्पितस्येति भावः । विच्छित्तिविशेषस्य । एव । चमत्कारविधायित्वम् । नन्वेतत् कथमवगतमित्याशङ्क्य-'उपक्रमोपसंहाराभ्या'मिति नयं सूचयन्नाह—'**मनसि सप्तं शल्यानि मे**' इति इत्येवम् । **सप्तानाम्** । **अपि** । **शल्यत्वेन** । **उपसंहारः** । **च** । अत्र 'चे'त्यनेन तथौपक्रमस्त्वस्त्वेवे'ति सूच्यते । अयम्भावः—सतां शशिप्रभृतीनां

दिवसधूसरत्वाद्युपक्रम्य तस्यैव 'मनसि सप्त शल्यानि मे' इति समर्थक उपसंहारः । अन्येऽप्याहुः—इह शोभनस्य सतोऽशोभनत्वमिति विवक्षा...अत एवैकत्रोपसंहृतं 'मनसि सप्त शल्यानि मे' **इति** इति । **'नृपाङ्गणगतः । खलः । इति । तु । क्रमभेदात्** क्रमस्य विशेष्यस्यान्यत्र सर्वत्र शोभनत्वं विशेषणस्य चाशोभनत्वमित्यस्य मार्गस्य भेदो भिन्नस्तस्मात् । दुष्टत्वम् । **एव । आवहति । सर्वत्र । विशेष्यस्य । एव । शोभनत्वेन । प्रक्रमात् ।** 'अतः-'नृपाङ्गणमसद्युत'मिति पाठः साधीयान् ।' इति शेषः । इदमुक्तम्—शशी शोभनस्तस्य दिवसधूसरत्वेनाशोभनेन योगः, एवमेव कामिन्यादयः शोभना गलितयौवनत्वादिनाऽशोभनेन च तेषां योग इति सद्सद्योगात्मा समुच्चयः । 'शशी दिवसधूसर' इत्यादौ विशेष्यभूताः शश्यादयः शोभना दिवसधूसरादयो विशेषणभूताः । पुनरशोभना इत्युपक्रमः, अस्य च 'नृपाङ्गणगतः खलः' इत्यत्र भङ्गः, विशेष्यस्य खलस्याशोभनत्वात्, विशेषणस्य नृपाङ्गणगतपदार्थस्य शोभनत्वाच्च । एतेन-'शशिप्रभृतीनां शोभनत्वं खलस्याशोभनत्वं चेति सदसद्योग'इति प्रत्युक्तम् । **इति ।**

समाधेरस्य भेदं निर्दिशति-**इहास्मिन्** समुच्चयोदाहरणे । **च । खले** धान्यादिक्षेत्रे । **कपोतवत्** कपोतानामिव । 'तत्र तस्येव ।' ५/१/११६ इति वतिः । **सर्वेषाम् । कारणानां** धूसरत्वादीनां हेतूनामिति भावः । **साहित्येन । अवतारः । समाध्यलङ्कारे । तु । एककार्यम् । प्रति ।** समग्रे पर्य्याप्ते । **अपि । साधके** कारणे । **अन्यस्य** साधकान्तरस्य । **काकतालीयन्यायेन । आपतनम् । इति । भेदः ।** 'यत्र कार्य्यविशेषं मिलितान्येव कारणानि जनयन्ति समुच्चयस्य विषयः । यत्र त्वेकस्मिन् कारणे फलसाधनायानुष्ठीयमाने दैवादुत्पन्नेन कारणान्तरेण तत्फलस्य सुकरत्वं स समाधिरिति भावः ।' इति विवृतिकाराः ।

इह च खलेकपोतवत्सर्वेषां कारणानां साहित्येनावतारः। समाध्यलंकारे त्वेककार्यं प्रति साधके समग्रेऽप्यन्यस्य काकतालीयन्यायेनापतनमिति भेदः।

**'अरुणे च तरुणि नयने तव मलिनं च प्रियस्य मुखम्।**
**मुखमानतं च सखि ते ज्वलितश्चास्यान्तरे स्मरज्वलनः॥'**

अत्राद्येऽर्थे गुणयोर्यौगपद्यम्, द्वितीये क्रिययोः।

---

## विवृति

गुणयोगपद्ये समुच्चयमाह—**अरुणे चेति**। नायिकां प्रति सख्या उक्तिरियम्। नयने वृत्ते इति शेषः॥

## विज्ञप्रिया

तदेव ग्राहयति—**सर्वत्रे**ति। शशी धूसर इत्याद्युद्देश्यविधेयार्थकसर्ववाक्ये इत्यर्थः, अयं च दोषः, खले नृपाङ्गणगतत्वस्य विधेयता गतत्वस्य विधेयतापक्ष एव नृपाङ्गणगते खलत्वस्य विधेयता पक्षेतूद्देश्यः शोभन एवेति नैष दोष इति बोध्यम्। एककारणादेव सुकरे कार्ये दैवात् कारणान्तराऽऽगमनरूपात् समाध्यलङ्कारादस्य भेद-माह—**इह च खले**ति। **एकस्यैवे**ति। कार्यं प्रति एकस्यैव समग्रे साधकत्वेऽसमग्रप्रकारणवृत्तिर्न साधकत्वे इत्यर्थः।

गुणयोः क्रियायोश्च यौगपद्यरूपं समुच्चयमाह—**अरुणे चेति**। अत्र चकारौ यौगपद्यबोधकौ। तौ च ययोरुत्तरभूतौ तयोर्यौगपद्यबोधकौ इत्यत आह**अत्राद्ये** इति।

## लोचन

द्वितीयपक्षे सुगतिं दर्शयति। विशेष्यस्य शशिकामिनीप्रभृतेः सूत्रस्य तृतीयपादं विशदयति—**इह चेति**। काकतालीयन्यायेनेति।

## कुसुमप्रतिमा

ननूक्तप्रकारे कारणसमुच्चये यथा एककार्य्यं प्रति अनेककारणोपन्यासः वक्ष्यमाणसमाध्यलङ्कारेऽपि तथैवेत्यनयोः को भेद इत्याह इह चेति। कारणसमुच्चये चेत्यर्थः। साहित्येन यौगपद्येन, अवतार उपस्थितिः। साधके कारणे समग्रेऽपि साधनसमर्थेऽपि आपतनमुपस्थितिः। काक उड्डीनः तालफलमपि पतितम्, तत्र लोकोरा-ख्यते—काकेन तालफलं पातितमिति। एष न्यायः, काकतालीयः। तथा च कारणानामदैवाद्यौगपद्ये तु समाधिरि-तानयोभेद इति सरलार्थः। अतएव समाधुलक्षणे दैवादिति वक्ष्यते।

गुणयोः क्रिययोश्च यौगपद्ये द्वितीयतृतीयप्रकारौ समुच्चयावेकीदोहरणेनैवाह अरुणे इति। मानिनीं प्रति तत्सख्या उक्तिरियम्। हे तरुणि! तव नयने नेत्रद्वयम्, करुणे रक्तवर्णे जाते इति शेषः। प्रियस्य तव पत्युश्च सुखं मलिनं जातम्। तथा हि सखि! ते तव मुखमानतमवनतीभूतञ्च, अस्य त्वत्पत्युरन्तरे चित्ते स्मरज्वलतो मदनानली ज्वलितश्च। अत्र चकारचतुष्टयं यौगपद्यसूचनाय।

अत्रेति । गुणयोरुणत्वमलिनत्वयोः यौगपद्यमेककालीनत्वम् । द्वितीये अर्द्धे इति पूर्वेणान्वयः, क्रिययोरानमनज्वलनरूपयोः यौगपद्यमिति पूर्वानुषङ्गः । तेनात्र प्रथमार्द्धे गुणसमुच्चयः, द्वितीयार्द्धे तु क्रियासमुच्चय इति भावः । अत्र द्वावेव समुच्चयौ वैयधिकरण्य इति द्रष्टव्यम् ।

## विमला

समाध्यलङ्कारादस्य भेदमाह, इहेति ।—खले इति ।—खले—धान्यादिक्षेत्रे, यथा एकस्य कपोतस्य आगमनात् बहवः समापततन्ति तद्वत् एकस्य कारणत्वेऽपि यत्र अन्येषामापतनं, स खले कपोतिकान्याय इति बोध्यम् । साहित्येन—यौगपद्येन, मिलितत्वेनेत्यर्थः, अवतारः । काकतालीयन्यायेनेति—कालगमनेन तालपतनमिव आकस्मिकम् अन्यस्य यत्र आपतनं, स काकतालीयन्यायः तेन, अप्रतिसंहतत्वेनेत्यर्थः, समग्रे—समर्थे, पर्य्याप्ते इति यावत्, आपतनम्—उपस्थापनम् । यत्र कार्य्यविशेष मिलितान्येव कारणानि जनयन्ति, स समुच्चयस्य विषयः, यत्र तु एकस्मिन् कारणे फलसाधनाय अनुष्ठीयमाने देवादुत्पन्नेन कारणान्तरेण तत्फलस्य सुकरत्वं, स समाधिरिति भावः ।

गुणयौगपद्ये समुच्चयमाह, अरुणे इति ।—नायिकां प्रति सख्या उक्तिरियम् । हे तरुणि ! तव नयने अरुणे—रक्ते च, वृत्ते इति शेषः, तव प्रियस्य मुखं मलिनञ्च, हे सखि ! ते—तव, मुखम् आनतञ्च अस्य—तव प्रियस्य, अन्तरे—मनसि, स्मरज्वलनः,—कामाग्निः, ज्वलितश्च । च-द्वयं यौगपद्यसूचकम् । अत्रोद्गीतिश्छन्दः,—"आर्य्याशकतलद्वितये विपरीते पुनरिहोद्गीतिः" इति । यथा वा—"यौवनविजृम्भणेन स्तनद्वयं महदभुच्चास्याः । मदनीद्रेकात् यूनां मनांसि रक्तानि चाभूवन् ॥" अत्र महत्वरक्तत्वगुणयोर्यौगपद्यं, च-कारेण तदभिधानात् । क्रिययोर्यौगपद्य यथा वा—"अद्यैव प्रोषितोऽद्यैव शून्यकानि जातानि । रथ्यामुखदेवकुलचत्वराण्यस्मा कञ्च हृदयानि ।" अत्र प्रस्थानजननक्रिययोरिति ज्ञेयम् ।

अत्रेति ।—गुणयोः,—अरुणमलिनयोरित्यर्थः । क्रिययोः,—आगमनज्वलनयोरित्यर्थः ।

## लक्ष्मी

एककारणादेव सुकरे कार्ये दैवात् कारणान्तराऽऽपतनरूपात् समाध्यलङ्कारादस्य को भेदइति दर्शयितुमाह—इह चेति । कारणसमुच्चये इत्यर्थः । साहित्येन मिलितत्वेन अवतार उपस्थितिः । साधके कारणे समग्रेऽपि पर्याप्तेऽपि अन्यस्य साधकान्तरस्य (क) काकतालीयन्यायेन अप्रतिसंहतत्वेन आपतनम् उपस्थापनम् । तथाच यत्र कार्यविशेषं मिलितान्येव कारणानि जनयन्ति स समुच्चयस्य विषयः, यत्र तु एकस्मिन् कारणे फलसाधनायानुष्ठीयमाने दैवादुत्पन्नेन कारणान्तरेण तत्फलस्य सुकरत्वं स समाधिरिति भावः । स्पष्टञ्चैतद्विवरणे ।

गुणयोः क्रिययोश्च साहित्ये द्वितीयतृतीयभेदौ समुच्चयौ लाघवायैकत्रैव दर्शयति—**अरुणे** इति । प्रणयकोपवतीं प्रति तत्सख्याः कथनमिदम् । हे तरुणि ! तव नयने लोचनयुगलम्, अरुणे रक्ते जाते इति शेषः, प्रियस्य त्वत्कान्तस्य च मुखं मलिनं विच्छायं जातम् । तथा हे सखि ! ते तव मुखम् आनतम् अवनम्रीभूतञ्च, अस्य तव कान्तस्य अन्तरे हृदये स्मरज्वलनः कामाग्निः ज्वलितश्च । अत्र साहित्यद्योतनाय चत्वारश्चकाराः । उद्गीतिश्छन्दः ।

लक्ष्यं संयोजति—**अत्रेति**। गुणयोः अरुणत्वमलिनत्वयोः यौगपद्यं साहित्यम्। द्वितीये 'अर्द्धे' इति पूर्वेण सम्बन्धः, क्रिययोः आनमनज्वलनयोः यौगपद्यमिति पूर्वतोऽनुवर्तते। अत एवात्र प्रथमार्द्धे गुणसमुच्चयः, उत्तरार्द्धे तु क्रियासमुच्चय इत्याशयः। द्विवचनञ्चात्राविवक्षितम्, तेन—

**प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभः।**

**रक्तं च पथिकहृदयं कपोलपाली मृगीदृशः पाण्डुः॥**

इत्यादौ बहूनामपि मलिनत्वरक्तत्वपाण्डुत्वगुणानां समुच्चयस्य। तथा—

**उदितं मण्डलमिन्दोः रुदितं सद्यो वियोगिवर्गेण।**

**मुदितं च सकलबलनाचूडामणिशासनेन मदनेन॥**

इत्यादौ बह्वीनामुदयनरोदनमोदनरूपाणां क्रियाणां समुच्चयस्य च सङ्ग्रहः।

## रुचिरा

अथ गुणयोः क्रिययोश्च समुच्चयमुदाहरति—'हे **तरुणि**! **तव**। **नयने**। **अरुणे** रक्ते। **च** (इदं समुच्चयार्थम्)। तव—**प्रियस्य**। मुखम्। मलिनं विच्छायम्। **च**। हे **सखि**! **ते** तव। **मुखम्**। **आनतम्**। **च**। **अस्य** त्वत्प्रियस्य **अन्तरेऽन्तः**। **स्मरज्वलनः** कामाग्निः। **ज्वलितः**। **च**। नायकदूत्या नायिकां प्रत्युक्तिरियम्। उद्गीतिश्छन्दः॥ २७६॥'

उदाहृतमर्थं निर्दिशति-**अत्रोदाहृते** पद्ये। **आद्ये**। **अर्धे**। **गुणयोररुणत्वमलिनत्वयोः**। **यौगपद्यमेकका**-लावच्छेदेन समुच्चयः। **द्वितीये**। 'अर्द्धे' इति शेषः। **क्रिययोरानमनज्वलनयोः**। 'यौगपद्यमि'ति शेषः। यथा वा'प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभः। रक्तं च पथिकहृदयं कपोलपाली मृगीदृशः पाण्डुः॥' अत्र मलिनत्रक्तत्वापाण्डुत्वगुणानां सदसदां योगः। 'उदितं मण्डलमिन्दोरुदितं सद्यो वियोगिवर्गेण। मुदितं च सकल-युवजनचूड़ामणि शासनेन मदनेन॥' अत्रोदयनरोदनमोदनरूपाणां शोभनाशोभनक्रियाणां योगः।

उभयोर्यौगपद्ये यथा—

**'कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः ।**

**पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥'**

**'धुनोति चासिं तनुते च कीर्तिम् ।'**

इत्यादावेकाधिकरणेऽप्येष दृश्यते । न चात्र दीपकम् । एते हि गुणक्रियायौगपद्ये समुच्चयप्रकारानियमेन कार्यकारणकालनियमविपर्ययरूपातिशयोक्तिमूलाः । दीपकस्य चातिशयोक्तिमूलत्वाभावः ।

---

## विवृतिः

**कलुषमिति** । रोषकषायितमित्यर्थः । सितपङ्केरुहस्य सोदरी सदृशी श्रीः शोभा यस्य तत् । अस्य वैयधिकरण्ये एव प्रयोगप्राचुर्यं विच्छित्तिविशेषजनकत्वं च । क्वचित्सामानाधिकरण्येऽपि प्रयोगमाह—**धुनोति चेति** । कार्यकारणयोः कालनियमः पौर्वापर्यं तस्य विपर्ययो यौगपद्यमारोपितं झटिति फलोत्पादनप्रतिपत्त्यर्थम् ॥

## विज्ञप्रिया

**कलुषं चेति** । अहितेषु विपक्षेषु, महीपतीन्द्रेति सम्बोधनम् । अत्र पूर्वार्धे गुणोत्तरं चकारः, परार्धे तु क्रियोत्तरमित्यनयोर्यौगपद्यम् । **धुनोति चेति** । एकाधिकरणे रणस्थलरूपे । व्यधिकरण्येप्येष दृश्यते इति काव्यप्रकाशकृत, यथा—

**"कृपाणपाणिश्च भवान् रणक्षितौ ।**

**ससाधुवादाश्च सुराः सुरालये ॥"**

इत्यत्र रणक्षिति सुरालयरूपाधिकरणभेदः ।

'धुनोति चसि मित्युदाहरणे एकस्मिन् कर्तृकारकेऽनेकक्रियासम्बन्धादनेकक्रियास्वेककारकरूपदीपकप्रसक्तिमाशङ्क्य निषिध्यति—**न चात्रेति** । एते गुणक्रियायौगपद्ये ये समुच्चयप्रकारास्ते कार्यकारणयोर्यः पौर्वापर्य्यरूपः कालनियमः तद्विपर्य्ययरूपातिशयोक्तिमूला इत्यर्थः । दर्शितोदाहरणेषु सर्वत्रैव गुणयोः क्रिययोर्वा कार्यकारणभावसत्त्वेपि यौगपद्योक्तेः । दीपके तु तथात्वं नास्तीत्याह—**दीपकस्येति** । इदमुपलक्षणम्—तत्र यौगपद्यस्याप्यविवक्षणं भेदकमिति बोध्यम् । तथा चेत् तदद्वयाभावे सतीति विशेषणं देयमित्यभिप्रायः ।

## कुसुमप्रतिमा

उभयोरिति । गुणक्रिययोरित्यर्थः ।

कलुषञ्चेति । कस्यचित् राज्ञो गुणवर्णनियम् । हे महीपतीन्द्र ! राजश्रेष्ठ ! सितण्ङ्केरुहस्य श्वेतपद्मस्य सोदरा तुल्याः श्रीः शोभा यस्म तत्तादृशं तव चक्षुः, अहितेषु शत्रुषु कलुषं रोषेणाविलञ्च जातमिति शेषः; अकस्मात् सहसैव तेषामहितानां वपुषि शरीरे आपदा कटाक्षैर्वक्रदृ दृष्टिभिः प्रस्फुटं स्पष्टं पतितञ्च आपद्भिरुपस्थितञ्चेत्यर्थः ।

अत्र कलुषत्वं गुणः पतनञ्च क्रिया अनयोर्योगपद्यात् समुच्चयः । स चात्रापि वैयधिकरण्य एव ।

सामानाधिकरण्येऽप्युदाहरति धूनीतीति । अस्य मत्पूरितापरपादत्रयं सम्पूर्णमितं पद्यं यथा—

**"दत्ते च दृष्टिं कुरुते च भीतिम् उपैति चारादहरत च शक्तिम् ।**

**धुनोति चासिं तनुते च कीर्त्तिं हिनस्ति चारीन् लभते च राज्यम् ॥"**

द्वयमपि राज्ञो गुणवर्णना । असौ राजा असिञ्च धुनोति सञ्चालयति, कीर्तिं शत्रुविजयनिबन्धनामात्मनः सख्यातिञ्च तनुते विस्तारयति, युगपदेवैतत् द्वय करोतीत्यर्थः ।

इत्यादविति । एष गुणक्रियासमुच्चयः । एतेन वैयधिकरण्य एव गुणक्रियासमुच्चयस्य बाहुल्यम् एकाधिकरण्ये तु विरलत्वमिति द्योतितम् ।

ननु "धुनोति चासिम्" इत्यादौ अनेकयोः क्रिययोरेककर्तृकारकत्वात् "अथ कारकमेकं स्यादनेकासु क्रियासु चेत्" इत्युक्तलक्षणे बहुवचनस्य चाविवक्षितत्वाङ्गीकावात् निरुक्तलक्षणं दीपकमप्यास्तामित्याह न चेति । अत्र "धुनोति चासिम्" इत्यादौ ।

कुतो न दीपकमित्याह एत इति । हि यस्मात् । समुच्चयस्य प्रकारा भेदाः, नियमेन विच्छित्तिविशेषाया-वश्यसम्भावेन, कार्य्यकारणयोर्यः कालनियमः कारणस्य पूर्ववर्त्तित्वं कार्य्यस्य च परवर्त्तित्वमित्थं नियमस्तस्य विपर्य्यये वैपरीत्ये रूपं यस्याः सा तादृशी अतिशयोक्तिर्मूल येषां ते तथोक्ताः । तथा च "धुनोति चानिम्" इत्यादौ कीर्त्तिविस्तारं प्रति असिञ्चालनस्य कारणत्वात् तयोः पौर्वापर्य्यस्यावश्यकत्वेऽपि यौगपद्यविव्रक्षणादतिशयोक्त-स्तदुत्थापितत्वाच्च क्रियासमुच्चय एवेत्याशयः । एतेन एकस्य कारकस्य अनेकक्रियास्थले उक्तरूपातिशयोक्ति-सत्त्वे क्रियासमुच्चयः, तदसत्त्वे तु दीपकमित्यनयोर्भेदोऽपि प्रतिपादितः ।

## विमला

कलुषमिति ।—राजस्तुतिरियम् । महीपतीन्द्र !—हे भूपश्रेष्ठ ! तव सितं—शुभ्रं, यत् पङ्केरुहं—पद्मं, तस्य सोदरा—सदृशीत्यर्थः, श्रीर्यस्य तादृशं, चक्षुः अकस्मात् अहितेषु—शत्रुषु, कलुषञ्च—आविलञ्च, रोषकषा-यितञ्चेत्यर्थः, तेषां—तव अहितानां, वपुषि प्रस्फुटं—सुव्यक्तं यथा तथा, आपदां कटाक्षैः पतितञ्च । अत्र गुणस्य कलुषस्य क्रियायाः पतनस्य च यौगपद्यम् । अस्य वैयाधकरण्ये एव प्रयोगप्राचुर्य्यं विच्छित्तिविशेषजनकत्वञ्च इति ज्ञेयम् । औपच्छन्दसकं वृत्तं—"षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समाऽत्र पराश्रता कला वैतालीयेऽन्ते रलौ गुरुः ॥ तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्रहृद्यम् ॥" इति च तल्लक्षणम् । यथा वा—"सज्जितकज्जलरेखो बिम्बाधर ईक्षितश्च दयितस्य । तामरसच्छदशोणं नयनञ्चाभूत मनस्विन्याः ॥" इति । अत्र दर्शनशोणत्वरूपयोः क्रियागुणयोः । इह यौगपद्यमात्रं विवक्षितं, न तु सामानाधिकरण्यं वैयधिकरण्यं वा, तच्चोदाहृतेषु स्पष्टमिति कौस्तुभकाराः ।

क्वचिच्च सामानाधिकरण्येऽपि प्रयोगमाह, धुनोतीति ।—असिं—तलवारं, धुनोति च—कम्पयति च, कीर्त्तिं तनुते च—विस्तारयति च । समुच्चयप्रकारा इति—समुच्चयभेदा इत्यर्थः, नियमेन—अवश्यम्भावेन, कार्य्यकारणयो, कालनियमः,—पौर्वापर्य्यं, तस्य विपर्य्ययः, यौगपद्यमारोपितं झटिति फलोत्पादनप्रतिपत्त्यर्थम् ।

## लक्ष्मी

गुणयो: क्रिययोश्च वैयधिकरण्येन यौगपद्यं प्रदर्श्य सम्प्रति वैयधिकरण्येनैव गुणक्रिययो: यौगपद्यमेकोदाहरणेनैव दर्शयितुमाह—**उभयो**रिति। उभयो: गुणक्रिययोरित्यर्थ:, यौगपद्ये समुच्चय इति शेष:।

**कलुषञ्चे**ति। राजस्तुतिरियम्। महीपतीनां राज्ञामिन्द्रस्तत्सम्बुद्धौ हे महीपतीन्द्र राजाधिराजेत्यर्थ:, सितपङ्केरुहसोदरा स्वभावत: श्वेतकमलतुल्या श्री: शोभा यस्य तत्तथाविधं तव चक्षुर्नेत्रम्, अहितेषु शत्रुषु विषये, अकस्मात् दैवात् कलुषं कषायं क्रोधादीषद्रक्तमित्यर्थ:। तेषां शत्रूणां वपुषि शरीरे आपदां विपत्तीनां कटाक्षै: वक्रदृष्टिभि: (कर्तृभि:) प्रस्फुटं स्पष्टं यथा स्यात्तथा पतितञ्च आपद्भिरुपनतञ्चेत्यर्थ:। **मालभारिणी**च्छन्दस्तल्लक्षणन्तु—'विषमे ससजा गुरू अनोजे सभरायश्च तु मालभारणीयम्' इति।

अत्र कलुषत्वं गुण: पतनञ्च क्रियेत्युभयोर्यौगपद्यं चकारद्वयगम्यमिति समुच्चयालङ्कार:।

रुद्रटस्तु वैयधिकरण्ये एव (आश्चर्यभेदे एव) समुच्चय इत्याह तन्मतं दूषयितुमुत्थापयति—**धुनोती**ति। अस्य मत्पूरितपादत्रयं समस्तं पद्यं यथा—

**भृत्यादिवर्गैश्च पराभवं स्वं श्रुत्वा च शत्रोर्बलनाशनाय।**

**धुनोति चासिं तनुते च कीर्त्तिं राज्यञ्च प्राप्नोति विजित्य सर्वम्॥**

इयमपि राजस्तुतिरेव। अयं राजा असिं खड्गं धुनोति कम्पयति च कीर्त्तिं तनुते करोति च। धनु:सञ्चालनं तथा शत्रुविजयेन कीर्त्तिविस्तारं च द्वयं युगपदेव सम्पादयतीत्यर्थ:।

**इत्यादावि**ति। एष गुणक्रिययो: समुच्चय:, तस्माद्रुद्रटमतमसमीचीनमेवेति ध्वनितम्। एतेन गुणक्रिययो: समुच्चयस्य वैयधिकरण्य एवाधिक्यम्, सामानाधिकरण्ये तु क्वाचित्कमिति च ध्वनितम्।

ननु 'धुनोति चासिम्' इत्युदाहरणे एकस्मिन् कर्त्तृकारकेऽनेकक्रियासम्बन्धादनेकक्रियास्वेककारकरूपदीपकालङ्कारोऽपि कथन्न? न च 'अथ कारकमेकं स्यादनेकासु क्रियासु चेत्' इत्यत्र बहुवचनोपादानेनात्र न तत्प्रसक्तिरिति वाच्यम्, तस्य विवक्षितत्वाभावात्। एवञ्च दीपकस्यापि प्रसक्तौ सङ्कर: स्यादित्याशङ्क्य निषिध्यति—**नचे**त्यादिना। अत्र 'धुनोति चासिम्' इत्यादौ। एते उदाहृतस्वरूपा:, हि यत:, गुणक्रियाश्च गुणक्रियाश्चेति गुणक्रियास्तासां यौगपद्यं साहित्यं तस्मिन् तथोक्ते गुणक्रियायौगपद्ये। समुच्चयप्रकारा समुच्चयभेदा: नियमेन चमत्कारविशेषायावश्यम्भावेन, कार्यकारणयो: साध्यसाधकयो: य: कालनियम: पौर्वापर्यं कारणस्य प्राग्वर्त्तित्वं कार्यस्य च तदुत्तरवर्त्तित्वमित्येवं नियम इत्यर्थ:, तस्य विपर्यये विरुद्धे रूपं यस्या: सा एवम्भूता अतिशयोक्ति: मूलं येषां ते तादृशा:। एवञ्च उक्तस्थले कीर्त्तिविस्तारं प्रति असिकम्पनस्य कारणत्वात् उभयो: पौर्वापर्यस्य विद्यमानत्वेऽपि यौगपद्यविवक्षणादतिशयोक्तिस्तन्मूलकत्वाच्च क्रियासमुच्चयालङ्कार एवेति भाव:। एवञ्चोक्तरूपातिशयोक्त्युपलम्भे क्रियासमुच्चय:, तदनुपलम्भे तु दीपकमिति स्फुटमुभयो: पार्थक्यम्।

## रुचिरा

गुणक्रिययोर्यौगपद्यमुदाहर्तुमाह—**उभयो**र्गुणक्रिययो:। **यौगपद्ये**। 'समुच्चय' इति शेष:। **यथा**—'हे **महीपतीन्द्र** महीपतीनां राज्ञामिन्द्रस्तत्सम्बुद्धौ तथोक्त! राजाधिराजेत्यर्थ:। **तव**। **सितपङ्केरुहसोदरश्रि** सितानि यानि पङ्केरुहाणि कमलानि तेषां सोदराऽत्यन्तं समाना श्री: शोभा यस्य तथोक्तम्। **चक्षु**र्नेत्रम्। **अहितेषु** शत्रुषु।

**अकस्मात्** दैवात्। **कलुषं** रोषाबिलम्। च (इदं समुच्चयार्थम्)। तेषां तव कलुषचक्षुर्विषयीभूतानां शत्रूणामित्यर्थः। वपुषि (जात्यभिप्रायेणैकत्वम्)। **आपदा**मापत्तीनां तद्रूपाणां कालनायिकानामिति भावः। **कटाक्षैः**। **प्रस्फुटम्**। **पतितम्**। **च**। अत्र कलुषत्वगुणपतनक्रिययोर्योगः। औपच्छन्दसिकं वृत्तमिदम्, तल्लक्षणं च यथोक्तम्—'गौपच्छन्दसिकम्।' इति॥ २७७॥' यथा वा मम—'पतिते पतितेऽपि ते कटाक्षं विभुताभिः समुपास्यते स सद्यः। विपदां विरतिस्ततस्तदैव सुरतिस्तत्र मुकुन्द ! सम्पदां च॥' इति। इति।

अस्य प्रायो वैयधिकरण्ये एव सम्भवः, किन्तु क्वचित्सामानाधिकरण्येऽपीत्याशयेनोदाहरति—**'असिं** खड्गम्। **धुनोति** कम्पयति चञ्चलयतीति यावत्। **च**। कीर्त्तिम्। च। **तनुते** वितनोति। 'प्रियार्पणैरप्सरसां प्रमोदिता। नरेन्द्र ! देवान् कुरुते हताहितान् भवान् खलांमस्तान्नयति स्वरञ्जसा॥' इति शेषः। अत्रैक एवास्यादीनां धूननादिकर्त्ता। वंशस्थं छन्दः, तल्लक्षणं चोक्तं प्राक्॥'

एवमयं सामानाधिकरण्येऽपि सम्भवतीति निर्दिशन्नलङ्कारान्तरसंशयमपाकरोति—**इत्यादौ**। **एकाधिकरण्ये**। **अपि**। **एष** समुच्चयः। **दृश्यते**। **अत्र**। च। **दीपकम्**। **न** 'शङ्क्य'मिति शेषः। हि यतः। **एते** उदाहृतस्वरूपाः। **समुच्चयप्रकाराः**। समुच्चयभेदा। **नियमेन**। **गुणक्रियायौगपद्ये** गुणक्रियाश्च गुणक्रियाश्चेति गुणक्रियास्तासां यौगपद्यं तस्मिन्सतीति भावः। **कार्यकारणकालनियमविपर्य्यरूपातिशयोक्तिमूला**: कार्य्यकारणयोः कालनियम पौर्वापर्य्य तस्य विपर्य्ययो योग पद्यम् (आरोपित मेककालभवत्वं) एवं रूपं मस्याः साऽसातिशयोक्तिरिति, सा कालमूलं यस्यास्तथोक्ता। **दीपकस्य**। **च**। **अतिशयोक्तिमूलत्वाभावो**ऽतिशयोक्तिर्मूलं यस्य तस्य भावस्तत्त्वं तस्याभावः।

**समाधिः सुकरे कार्ये दैवाद्वस्त्वन्तरागमात्॥ ८५॥**

यथा—

**मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः।**

**उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम्॥'**

---

## विवृतिः

समाध्यलंकारमाह—**समाधिरिति**। दैवादकस्माद् वस्त्वन्तरागमात्कारणान्तरसमाधानात्कार्ये सुकरे सति समाधिरित्यर्थः। एतेन प्रक्रान्तकारणेन कार्यस्य दुष्करत्वं प्रतीयते॥

**मानमिति**। सखायं प्रति कस्यचिदुक्तिरियम्। दिष्ट्या भाग्येन। उदीर्णमुत्पन्नम्॥ प्रतीपालंकारमाह—**प्रसिद्धस्येति**। **निष्फलत्वाभिधानमिति**। उपमानस्येत्यन्वयः।

## विज्ञप्रिया

समाध्यलङ्कारमाह—**समाधिरिति**। एककारणेनैव सुकरे कार्ये दैवात् कारणरूपवस्त्वन्तरोपस्थितेरित्यर्थः। **मानमस्या** इति। घनगर्जितस्योद्दीपकत्वेन मानभङ्गे तदपि कारणान्तरं दैवादुपस्थितमित्यर्थः।

## कुसुमप्रतिमा

पूर्वलक्षणे अनेककारणप्रस्तावादनेककारणघटितमेव समाधिं नामालङ्कारं लक्षयति समाधिरिति। दैवादीश्वरेच्छात्;, वस्त्वन्तरस्य कारणान्तरस्य आगमादुपस्थितेर्हेतोः, कार्य्ये सुकरे अनायासनिष्पाद्ये सति, समाधिर्नाम अलङ्कारः स्यात्। एतेन केवलप्रारब्धकारणेन दुष्करस्य कार्य्यस्य ईश्वरेच्छाप्राप्तकारणेन सुकरत्वे सति समाधिरिति फलितम्। अतएव काव्यलिङ्गादस्य भेदः। कारणसमुच्चयेन सह भेदस्तु तत्रैव दर्शितः। दैवप्राप्तकारणेन कार्य्यस्य समाधानादस्य समाधिरिति संमाख्या।

मानमिति। सख्युरन्तिके कस्यचित् प्रियाया मानभङ्गीक्रिरियम्। अस्याः प्रस्तुतायाः प्रियायाः, मानं निराकर्त्तुं खण्डयितुं तस्याः पादयोः पतिष्यतो मे मम उपकाराय, दिष्ट्या भाग्येन इदमुक्तरूपं घनस्य मेघस्य गर्जितम्, उदीर्णमुत्पन्नम्। केवलपादपतनेन तस्या मानभङ्गी दुष्कर एवासीत् किन्तु घनगर्जनश्रवणात् तस्याः कामावेशवशेनासौ सुकरो जात इत्याशयः।

अतएवात्र केवलपादपतनेन दुष्करस्य मानभङ्गरूपकार्य्यस्य ईश्वरेच्छाप्राप्तघनगर्जनेन सुकरत्वात् समाधिरलङ्कारः।

ननु समाधिरिव अभीष्टकार्य्यस्य आत्मनो दुष्करत्वे अलङ्कारान्तरं भवति न वेत्याकाङ्क्षायां प्रत्यनीकनामालङ्कारं निरूपयति प्रत्यनीकमिति। रिपोः प्रतीकारे अभीष्टे दमनकार्य्ये अशक्तेन दुष्करतया असमर्थेन जनेन विहित इति शेषः, तदीयस्य रिपुपक्षभुक्तस्य पदार्थस्य तिरस्कारः परिभवः, यदि तस्यैव रिपोरेव उत्कर्ष साधको भवेत्, तदा प्रत्यनीकं नाम अलङ्कारः स्यात्।

## विमला

समाधिमाह, समाधिरिति ।—दैवात्—सहसा, अकस्मादित्यर्थः, वस्त्वन्तरस्य—अन्यस्य वस्तुनः, आगमात्—कारणान्तरसमाधानादित्यर्थः, कार्य्ये सुकरे सति (एतेन प्रक्रान्तकारणेन कार्य्यस्य दुष्करत्वं प्रतीयते) समाधिः स्यात् । चिकीर्षितस्य कार्य्यस्य सिद्ध्यर्थमभिमतौ यो हेतुः, तदतिरिक्तहेतुना कार्य्यस्य सौकर्य्यं समाधिः, समाधीयते कार्य्यमनेन इति व्युत्पत्तेः, इति कौस्तुभकाराशयः ।

मानमिति ।—सखायं प्रति कस्यचिदुक्तिः । अस्याः,—कान्तायाः इति भावः, मानं—प्रणयकोपं, निराकर्त्तुम्—अपनेतुं, पादयोः,—चरणयोः, पतिष्यतः मे—मम, उपकाराय—पादपतनस्य अनावश्यकत्वाय इत्यर्थः, दिष्टया—दैवेन, भाग्येनेत्यर्थः, इदं घनगर्जितं—मेघगर्जनम्, उदीर्णम्—उपस्थितम्, उत्पन्नमिति यावत्, तस्योद्दीपकत्वात् तत्क्षणादेव मानभङ्गो जात इति भावः । अनारब्धकारणस्य एतदुदाहरणं ज्ञेयम् । अत्र दैवात् मेघगर्जनरूपवस्तुन आगमात् मानभञ्जनस्य कार्य्यस्य सुकरत्वम् । अत्रदं बोध्यं—सौकर्य्यमत्र तद्धर्मावच्छिन्नोद्देश्यकप्रवृत्तिविषयहेत्वतिरिक्तहेतुना कार्य्योपकाराधानम्, उपकारश्च तदुपयुक्तकिञ्चित्सहकारिसकलसहकारि समवधानसजातीयान्तरसंबलितत्वादिसाधारणः । कारणबाहुल्यस्य वा विवक्षित त्वादत्र समुच्चयाद्भेदः, कार्य्यस्य प्रवृत्तिविषयत्वस्य फलतो लाभात् काव्यलिङ्गात् इति कौस्तुभाशयः । प्रकृतकारणसम्भवे यथा—"पादपतितस्य पत्युः पृष्ठं पुत्रे समारोहति । दृढ़मन्युदूनाया अपि हासो गृहिण्या निष्क्रान्तः ॥" इति । अत्र मानापनोदार्थं प्रणते पत्यौ तदभावेऽपि तत्पृष्ठे पुत्रसमारोहणरूपविलक्षणचेष्टाहासगम्यो मानत्यागः ।

## लक्ष्मी

समुच्चयस्वरूपे विविधहेतुप्रस्तावः प्रदर्शितस्तद्युक्तमेव समाध्यलङ्कारं निरूपयति—**समाधिरिति** । दैवात् अकस्मात्, वस्त्वन्तरस्य हेत्वन्तरस्य आगमात् आपतनाद्धेतोः कार्ये सुकरे अनायासाध्ये सति, सम्यक् आधिः आधानम् उत्पादनमितिव्युत्पत्त्या समाधिर्नाम अलङ्कारः स्यादिति शेषः । तथा च एककारणजन्यकार्यस्य आकस्मिकहेत्वन्तरसमवधानाहितं सौकर्यं समाधिरित्यर्थः । सौकर्यञ्च कार्यस्यानायासेन निष्पत्त्या साङ्गनिष्पत्त्या चेति बोध्यम् ।

**मान**मिति । काव्यादर्शे द्वितीयपरिच्छेदे दण्डिना पठितं पद्यमिदम् । कश्चित् स्वप्रियाया मानभङ्गप्रकारं सुहृदं प्रति वर्णयति—अस्या मानिन्याः प्रियायाः, मानं 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' इत्युक्तलक्षणं निराकर्त्तुं खण्डयितुं तस्याः पादयोः पतिष्यतो मे मम उपकाराय, दिष्टया भाग्येन इदं प्रतिपादितस्वरूपं घनस्य मेघस्य गर्जितं गर्जनम् उदीर्णम् उद्भूतम् उत्पन्नमित्यर्थः । मानिन्याः पादयोः पतनमपि मानभङ्गस्य हेतुः तदुक्तम्—

> **'साम भेदं च दा नं च नत्युपेक्षे रसान्तरम् ।**
>
> **तद्भङ्गाय पतिः कुर्यात् पडुपायानिति क्रमात् ॥'** इति ।

एवञ्च पादपतनमात्रेण तस्या माननिराकरणमसम्भव एवासीत्, किन्तु घनागर्जनाकर्णनात् तस्या मदनाधीनत्वेनासौ सुलभः सञ्जात इत्यभिप्रायः ।

अत एवात्र पादपतनरूपहेतुना आरब्धस्य मानापगमरूपकार्यस्य आकस्मिकघनगर्जितरूपहेतुत्वान्तरयोगेन सुकरत्वात्समाधिरलङ्कारः ।

## रुचिरा

समाधि लक्षयति—१७४ **दैवादकस्मात्**। **वस्त्वन्तरागमादन्यद्वस्तुकारणरूपः** पदार्थ इति वस्त्वन्तरं तस्यागम उपस्थितिस्तस्मात्। **कार्ये**। **सुकरे** सुसाध्ये सतीत्यर्थः। **समाधिः** समाधीयते सुकरत्वेनाधीयते क्रियते इति तथोक्तः तन्नामाऽलङ्कार इत्यर्थः। एककारणजन्यस्य कार्य्यस्याकस्मिकोपस्थितिकेनान्येन कारणेन समवधानाहितं सौकर्य्यं समाधिर्नामालङ्कार इति भावः। 'उपसर्गे घोः किः।' ३/३/९२ इति किः।

उदाहरति—**यथा—अस्या** मानिन्याः प्रियाया इत्यर्थः। **मानं** क्रोधम्। **निराकर्त्तुम्**। **पादयोः**। **पतिष्यतः**। **मे** मम। **उपकाराय**। **दिष्टया** भद्रम्। **इदम्**। **घनगर्जितं** मेघगर्जनम्। **उदीर्णम्**उद्भूतम्। मानभङ्गे घनगर्जितस्य कामोद्दीपकत्वेन सहायकत्वमित्यस्य पादपतनेन तन्निराकरणावसरे उपस्थित्या मानभङ्गसाध्यत्वं समाहितम्। सखायं प्रति कस्याप्युक्तिरियम्॥ २७८॥'

**प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि।**

**तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधनः ॥ ८६ ॥**

तस्यैवेति रिपोरेव। यथा मम—

**'मध्येन तनुमध्या मे मध्यं जितवतीत्ययम्।**

**इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः ॥'**

---

## विवृतिपूर्तिः

**प्रत्यनीकमिति**। अनीकेन सदृशं प्रत्यनीकम्। सादृश्यस्य यथार्थत्वेनैव संग्रहे पुनः सादृश्यग्रहणाद्गुणीभूतेऽपि सादृश्येऽव्ययीभावः। लोके प्रतिपक्षस्य तिरस्कारायानीकं प्रयुज्यते। तदशक्तौ प्रतिपक्षसंबन्धिनः कस्यचितिरस्कारः क्रियते। स चानीकसदृशप्रयुज्यमानत्वात्प्रत्यनीकमुच्यते। अत्र च प्रतिपक्षगतं बलववत्त्वम्, आत्मगतं दुर्बलत्वं च गम्यत इति पण्डितराजः ॥

## विज्ञप्रिया

प्रत्यनीकालङ्कारमाह—**प्रत्यनीकमिति**। रिपोः प्रतीकारे प्रत्यपकारेऽशक्तेन केनापि यदि तत्सम्बन्धिनोऽन्यस्य तिरस्कारः तस्यैव रिपोरेवोत्कर्षतासाधकः, उत्कर्षपर्य्यवसायक इत्यर्थः।

**मध्येनेति**। रिपुकुम्भभेदनार्थं सिंहस्य भावना पूर्वार्धम्। अत्र मध्येन स्वमध्यजयात् नायिका सिंहस्य रिपुः, तत्कुचसादृश्यात् करिकुम्भौ तदीयौ।

## लोचन

एवं वाक्यन्यायाश्रयिणोऽलङ्कारान् दर्शयित्वा, लोकन्यायाश्रयिणो दर्शयति—**प्रत्यनीकमिति**। अनेकं सैन्यं, तच्चात्र स्वसामान्यस्य सम्बन्धिमात्रस्योपलक्षकम्। तेनाभियोज्यतया प्रतिनिधिभूतोर्थो रिपोः सम्बन्धी वर्ण्यते इति प्रत्यनीकं नामालङ्करणम्। तदीयस्य रिपुसम्बन्धिनः।

इभकुम्भयोरत्र नायिकासम्बन्धिता। स्वसम्बन्धः कुचकुम्भसम्बन्धः। सादृश्यसम्बन्धादिदं च क्वचिदनुकूलस्य वाञ्छिताचरणेपि सम्भवति। यथा विरहविधुरपि सततं भवतः श्वासानुहारिणी पतति इत्यादौ।

## कुसुमप्रतिमा

प्रत्यनीकं प्रतिपक्षः तत्प्रयुक्तत्वादस्य प्रत्यनीकमिति संज्ञा।

मध्येनेति। तनुमध्या कृशतरकटोदेशा नायिका, मध्येन कटीदेशेन, मे मम सिंहस्य, मध्यं कटोदेवं जितवती स्वकटीदेशस्य कृशताधिक्येन पराजितवती; इति हेतोः, अयं हरिः सिंहः, अस्या नायिकायाः, कुचकुम्भनिभौ स्तनकुम्भतुल्यौ, इभस्य हस्तिनः कुम्भौ भिनत्ति नखराघातेन विदारयति।

अत्र सिंहस्य मध्यविजयित्वान्नायिका सिंहस्य रिपु:, स च सिंहस्तस्या नायिकाया: साक्षात् कमपि प्रतीकारं कर्त्तुं न वक्त:; इतञ्च हस्तिकुम्भौ नायिकास्तनकुम्भसदृशाविति नायिका: पञ्चभुक्तावेव, तेनैव च सिंहस्तौ भिनत्ति, तच्च मेदनं नायिकाया: स्तनकुम्भोत्कर्षसाधकत्वेन तस्या अच्युत कर्षसाधकमेवेति प्रत्यनीकमलङ्कारः। तथा स्तनकुम्भोपमानत्वेन प्रसिद्धयोरिभकुम्भयो: कुचकुम्भनिभावित्यनेनोपमेयत्वकल्पनात् प्रतीपालङ्कारञ्चेत्यनयोरेका-श्रयानुप्रवेशरूप: सङ्कर:।

## विमला

प्रत्यनीकमाह, प्रत्यनीकमिति।—रिपो: प्रती क़ारे—दमने, अशक्तेन, जनेन कृत इति शेष:, तदीयस्य—तस्य रिपुसम्बन्धिवस्तुन: तिरस्कार: यदि तस्यैव—रिपोरेव, उत्कर्षसाधक,—श्रेष्ठत्वप्रतिपादक:, स्यात्, तत् प्रत्यनीकं—प्रतिकूलम् अनीकमित्यर्थ:, उपचारात् तथा वर्ण्यमानवैचित्रयमिति भाव:; यद्वा—अनोकेन सदृशं प्रत्यनीकं, यथा-र्थत्वेन सादृश्यादानेऽपि पुन: सादृश्यग्रहणं विशेषणीभूतेऽपि सादृश्ये अव्ययीभावद्योतनाय; प्रतिभटस्य अवमानाय अनीकं नियुज्यते, तदक्षमत्वे प्रतिभटसम्बन्धिन: यस्य कस्यचिदपि अधिक्षेप: क्रियते इति लोकाचार:, स चानीक-सदृशप्रयोगयोग्यत्वात् प्रत्यनीकमिति कथ्यते; प्रतिभटगतं बलवत्त्वम् आत्मगतं दुर्बलत्वञ्च इह गम्यते इति रसगङ्गाधरकाराशय:।

मध्येनेति।—तनुमध्या—क्षीणकटी प्रमदा, मध्येन—कटीदेशेन, मे—मम, मध्य, कृशमिति शेष:, जित-वतौ इति—हेतो:, क्रोधेनेति भाव:, असौ हरि:,—सिंह:, अस्या:,—प्रमदाया: इत्यर्थ:, कुचकुम्भनिभौ—स्तनकलम-सदृशौ, इभकुम्भौ—हस्तिकुम्भौ, भिनत्ति; तदीयस्य स्तनकुम्भस्य तत्सदृशहस्तिकुम्भभेदेन तिरस्कार: कृत:। अत्र मध्यजयित्वेन रिपो: प्रमदाया: प्रतीकारासमर्थेन हरिणां तस्य एव उत्कर्षसाधक: औपम्येनेति भाव:। यथा वा—"यस्य किञ्चिदपकर्त्तुमक्षम: कायनिग्रहगृहीतविग्रह:। कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनाऽपि बाधते॥" अत्र राहो: सकाशात् भगवान् बलवान् विपक्ष:, तदीय: पुन: वक्त्रसादृश्यमुखेन दुर्बलचन्द्रमा:, तत्तिरस्कारात् भगवत: प्रकर्षावगति: इति ज्ञेयम्।

## लक्ष्मी

स्वाभिलषितकार्यस्य दुष्करत्वे यथा समाधिस्तद्वदेव कोऽप्यन्योऽलङ्कारो भवेन्न वेति जिज्ञासायां प्रत्यनी-कालङ्कारं लक्षयति—प्रत्य**नीकेति**। रिपो: प्रतिपक्षिण: प्रतीकारे प्रत्यपकारे अशक्तेन दुष्करतया अक्षमेण जनेन कृत इति शेष:, तदीयस्य प्रतिपक्ष्युपभुक्तस्य वस्तुन: तिरस्कार: तिरस्करणम्, यदि तस्यैव प्रतिपक्षिण एव उत्कर्षसाधक: स्तुतिपर्यवसायको भवेत्, तदा प्रत्यनीकं(क)प्रत्यनीकनामालङ्कार: स्यादिति शेष:।

उक्तञ्चान्येनाऽप्येनाऽप्येतल्लक्षणम्—

**'बलिन: प्रतिपक्षस्य प्रतीकारे सुदुष्करे।**
**यस्तदीयतिरस्कार: प्रत्यनीकं तदुच्यते॥' इति।**

तस्यैवेतस्यस्य विवरणं रिपो: प्रतिपक्षिण एवेति।

मध्येने**ति**। तनु कृशं मध्यम् उदरं यस्या: सा तनुमध्या नायिका, मे मम सिंहस्य मध्यम् उदरम् (कर्म) मध्येन कृशोदरेण सिंहोदरापेक्षया नायिकाया उदरस्य कृशताधिक्येन जितवती; इत्यस्माद्धेतो:, अयं हरि: सिंह: अस्या नायिकाया: प्रतीकाराक्षम: कुचावेव कुम्भौ तयोर्निभौ तत्तुल्यौ नायिकारूपस्य रिपोरेवौपम्येनोत्कर्षप्रत्यायकावित्यर्थ: इभकुम्भौ हस्तिगण्डौ भिनत्ति नखाघातेन विदारयति।

अत्र सिंहमध्यविजयित्वात्प्रस्तुतनायिका सिंहरिपुः, सिंहश्च साक्षात् प्रमदारूपत्वेन तन्नायिकाया प्रत्यपकर्त्तुमसमर्थः अतो रिपुसम्बन्धित्वेन सम्भाव्य इभकुम्भौ भिनत्ति तद्‌भेदनञ्च नायिकायाः कुचकुम्भस्तुतिसाधकत्वेन तस्या अपि स्तुतिसाधकमेवेति प्रत्यनीकालङ्कारः ।

तथा इभकुम्भयोः स्तनकुम्भस्योपमानत्वेन लोके प्रसिद्धत्वम्, अत्र च कुचकुम्भनिभावित्यनेनोपमेयत्वप्रतिपादनादनुपदवक्ष्यमाणप्रतीपालङ्कारश्चेत्युभयोरेकाश्रयानुप्रवेशरूपसङ्करालङ्कारः । उदाहरणान्तरं यथा—

'रे रे मनो मम मनोभवशातनस्य पादाम्बुजद्वयमनारतमानमन्तम् ।

किं मां निपातयसि संसृतिगर्तमध्ये नैतावता तव गमिष्यति पुत्रशोकः ॥' इति ।

## रुचिरा

प्रत्यनीकं लक्षयति—१७५ **यदि रिपोः** शत्रोः । **प्रतीकारे**ऽपाकरणे मर्दन इति यावत् । **अशक्तेना**समर्थेन केनापि जनेनेत्यर्थः । **तस्य** रिपोः । **एव** । **उत्कर्षसाधक** उत्कर्षकः । **तदीयस्य** रिपुसम्बन्धिनः । **तिरस्कारस्तिर**स्करणम् । **प्रत्यनीकं** तदाख्योऽलङ्कार इत्यर्थः । तथाऽऽहुः 'बलिनः प्रतिपक्षस्य प्रतीकारे सुदुष्करे । यस्तदीयस्तिरस्कारः प्रत्यनीकं तदुच्यते ॥' इति ॥ १३९ ॥

तदेव विवृणोति—**तस्यैवे**त्यादिना । स्पष्टम् । उदाहरति—**यथा** । **मम**—'**तनुमध्या** तनु कृशं मध्यमुदरं यस्यास्तथोक्ता । **मे** मम (सिंहस्य) । **मध्यमुदरम्** (कर्म) । **मध्येन** (कृशेन मध्येन) । **जितवती** (सिंहोदरापेक्षया कान्ताया उदरकार्श्यमधिकं सम्भाव्येदमुद्‌भाव्यते) । **इतीत्य**स्मात् कारणादित्यर्थः । **अयम्** । **हरिः** सिंहः । **अस्याः** कृशोदर्य्याः । **कुचकुम्भनिभौ** कुचावेव कुम्भौ तयोर्निभौ सदृशाविति तौ तथोक्तौ । **इभकुम्भौ** इभस्य हस्तिनः कुम्भौ गण्डौ तौ । **भिनत्ति** विदारयति । अत्र मध्यजयित्वेन प्रमदारूपस्य शत्रोः प्रतिकाराक्षमेण सिंहेन प्रमदारूपस्य शत्रोरवौपम्येनोत्कर्षप्रत्यायकः कुचसदृशकुम्भतया शत्रुसम्बन्धित्वेन सम्भावितस्य शः हस्तिनः कुम्भभेदनेन तिरस्कारो विहितः । यथा वा—'रेरे, मनो मम मनोभवशातनस्य पादाम्बुजद्वयमनारतमानमन्तम् । किम्मां निपातयसि संसृतिगर्त्तमध्ये नैतावता तव गमिष्यति पुत्रशोकः ॥' इति । यत्तूक्तं गङ्गाधरकारैः—'अत्र विचार्यते-हेतूत्प्रेक्षयैव गतार्थत्वान्नेदमलङ्कारान्तरम्भवितुमर्हति ।...हेतुतायाश्च स्फुटं प्रतीतेः । 'अस्मिन्नलङ्कारे हेतुत्वं निश्चीयमानम्, हेतूत्प्रेक्षायां तु सम्भाव्यमानमित्यस्ति विशेष इति चेत् ! प्रतीयमानहेतूत्प्रेक्षात्वापत्तेः । वाचकस्येवादेरभावाद्धेतुत्वस्य निश्चीयमानतायास्तत्रापि वक्तुं शक्यत्वात् । 'अस्य किञ्चिदपकर्त्तुमक्षमः कायनिग्रहगृहीतविग्रहः । कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनाऽपि बाधते ॥' इत्यलङ्कारसर्वस्वकृतोदाहृते प्राचीनपद्येऽपि भगवद्वैरानुबन्धादिव भगवद्वक्त्रसदृशमिन्दुं राहुर्बाधत इति प्रतीतेरुत्प्रेक्षैव गम्यमाना । 'मम रूपकीर्तिमहरद्‌भुवि यस्तदनुप्रविष्टहृदयेयमिति । त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु ताम्मदनः ॥' इति कुवलयानन्दकारेणोदाहृते तु पद्ये हेत्वंश उत्प्रेक्षांशश्चेत्युभयमपि शाब्दमिति कथङ्कारमस्यालङ्कारस्योदाहरणतां नीतमिदमायुष्मतेति न विद्मः । प्रतिपक्षगतबलवत्त्वस्वात्मगतदुर्बलत्वयोः प्रतीतेर्हेतुत्प्रेक्षान्तरादस्य वैलक्षण्यम् । नैतावता हेतूत्प्रेक्षया बहिर्भवितुमिदमीष्टे, तदविनाभावात् । किंतु तदवान्तरविशेषीभवितुम् । नहि पृथिव्यवान्तरभेदाद्घटात् पटो विलक्षण इति पृथिव्या बहिर्भवतीत्यपि वदन्ति ।' इति, तन्निराकृतं तस्यैव व्याख्यातृभिः हे तूप्तेक्षासत्वेऽपि तद्धेतुकप्रतिपक्षीयबाधे नैतद्विषयत्वाच्चिन्तयमिदम् ।' इति ॥ २७९ ॥

**प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्।**

**निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते ॥ ८७ ॥**

क्रमेण यथा—

**'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं—'** इत्यादि (५८३ पृ.)।

---

## विवृतिः

अभिधानं ज्ञापनं उपमानोपमेयभावे वैपरीत्यमत्रेति प्रतीपमुच्यते। द्वितीयपक्षे निष्फलत्वाभिधानेनोपमेयस्य प्रकर्षप्रतीतेरुपमानप्रातिकूल्यमिति प्रतीपमुच्यते। आद्ये उपमानस्योपमेयत्वकल्पनेन द्वितीये वैफल्याभिधानेनापकर्षः प्रतीयते ॥

## विवृतिपूर्तिः

**प्रतीपमिति**। प्रतिगच्छन्त्यापो यस्मिन्निति प्रतीपं निम्नोन्नतस्थलम्, तत्सादृश्यादलंकारे लक्षणा। 'ऋक्पूः—' इयादिनाप्रत्ययः। 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इतीदादेशः ॥ **कुवलयानन्दे** त्वित्यधिकम्—'वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत्। मुधापवादो मुग्धाक्षि, त्वन्मुखाभं किलाम्बुजम् ॥' **"प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते। दृष्टं चेद् वदनं तस्याः किं पद्मेन किमिन्दुना ॥"** तत् चतुर्थ प्रतीपम्। केचित्तु पञ्चमं प्रतीपकारमुपमानस्य कैमर्थ्यवर्णनादाक्षेपालंकार इत्याहुः। अन्ये तु प्रथमादिप्रतीपत्रयस्य अनन्वयोपमेयोपमयोश्चोपमाविशेषत्वेन तदन्तर्भावमिच्छन्ति ॥

## विज्ञप्रिया

द्विविधं प्रतीपालङ्कारमाह—**प्रसिद्धस्येति**। प्रसिद्धस्योपमानस्य उपमेयत्वकल्पनं वा निष्फलत्वकथनं वेति द्विविधं प्रतीपमित्यर्थः।

**यत्त्वन्नेत्र** इत्यादि। सादृश्यस्य प्रतियोगि उपमानम्। अत्र च त्वन्नेत्रस्य समानकान्तिरित्युक्त्या नेत्रकान्तेरिन्दीवरकान्तिसादृश्यप्रतियोगित्वेन निर्देशात्त्वन्नेत्रकान्तिरूपमानम्। इन्दीवरकान्तेश्चोपमानत्वेन प्रसिद्धाया उपमेयत्वकल्पनम्।

क्वचिदुपमांनस्योपमानत्वकल्पनेपि काव्यप्रकाशकृदुक्तिमिममलङ्कारं लक्षयति—उक्त्वा चात्यन्तमिति। अत्युत्कृष्टस्य वस्तुनोऽत्यन्तमुत्कर्षमुक्त्वापि उपमानत्वेऽपि कल्पिते निर्दिष्ट इत्यर्थः। सच निर्देशः समभिव्याहारविशेषवशात्तन्निन्दापर्यवसायको बोध्यः। अन्यथोपमानस्योपमानत्वेन निर्देशेनानुगुणस्यैव प्रतीत्या प्रतीपत्वस्यैवाऽसम्भवात्। अतिसुन्दरश्चन्द्र इव मुखमित्युपमायामतिव्याप्तेश्च।

## कुसुमप्रतिमा

प्रत्यनीकोदाहरणद्वितीयार्द्धे प्रतीपालङ्कारोपस्थितेः कारिकाकर्त्तुवृत्तिकर्त्तुश्चैकत्वात् तत्प्रसङ्गेन प्रतीपालङ्कारं निर्वक्ति प्रसिद्धस्येति । प्रसिद्धस्य उपमानस्य उपमानत्वे न लोके प्रसिद्धं प्राप्तस्य पदार्थस्य, उपमेयत्वप्रकल्पनम्, वा अथवा तादृशोपमानस्यैव निष्फलत्वाभिधानाम् अभिधानवत् निष्फलत्वस्य स्पष्टसूचनम्, प्रतीपमिति नाम अलङ्कार उच्यते । अतएवेदं द्विप्रकारम् ।

प्रसिद्धोपमानस्य उपमेयत्वकल्पनेनैव प्रतीपं प्रतिकूलम् (उल्टा) इति प्रथमप्रकारे संज्ञा व्युत्पत्तिः । द्वितीयप्रकारे तु उपमानस्य निष्फलत्वाभिधानेनैव तस्य प्रातिकूल्यकरणात् प्रतीपमिति व्युत्पत्तिः ।

तत्र प्रथमप्रकारमुदाहरति यत्त्वदिति । व्याख्यातपूर्वमेतत् । अत्र यथाक्रमं नयनवदनगमनोपमानत्वेन प्रसिद्धानाम् इन्दीवर चन्द्र राजहं सगतीनां तत्तदुपमे त्वकल्पनात् प्रतीपलङ्कारः । स च मालारूपः । केवलरूपस्तु "इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः" इत्यत्रैव ।

## विमला

प्रतीपमाह, प्रसिद्धस्येति ।—प्रसिद्धस्य—विख्यातस्य, उपमानस्य उपमेयत्वप्रकल्पनं वा निष्फलत्वाभिधानं—निष्फलत्वज्ञापनमित्यर्थः, प्रतीपं—प्रतिगता आपो यस्मिन् इति प्रतीपम्—आनतोन्नतस्थलं, तत्साम्यात् लक्षणया अलङ्कारोऽपि तन्नामकः, ["ऋक्पूरब्धू" (५/४/७४ पा.) इति अ-प्रत्ययः । "द्वयन्तरूपसर्गेभ्योऽप ईत्" (६/३/९७ पा.) इति ईदादेशे सिद्धम्] इति कथ्यते । तदव उपमानोपमेयभावे वैपरीत्यं प्रथमप्रतीपं, निष्फलत्वाभिधानेन उपमेयस्य प्रकर्षप्रतीतेरुपमानप्रातिकूल्यं द्वितीयप्रतीपम् । आद्य उपमानस्य उपमेयत्वकल्पनेन, द्वितीये वैफल्याभि धानेन अपकर्षः प्रतीयते ।

## लक्ष्मी

उक्तञ्चान्येनाऽप्येतलक्षणम्—

**'बलिनः प्रतिपक्षस्य प्रतीकोरे सुदुष्करे ।**

**यस्तदीयतिरस्कारः प्रत्यनीकं तदुच्यते ॥'** इति

तस्यैवेत्यस्य विवरणं रिपो प्रतिपक्षिण एवेति ।

'मध्येने' मध्येनेति । तनु कृशं मध्यम् उदरं यस्याः सा तनुमध्या नायिका, मे मम सिंहक्य मध्यम् उदवम् (कर्म) मध्येन कृशोदरेण सिहोदरापेक्षया नाभिकाया उदरस्य कृशताधिक्येन जितवती, इत्यस्माद्धेतो, अयं हरि सिहः अस्या नायिकायाः प्रतीकारा क्षमः कुयावेव कुम्भौ तयोर्निभौ तन्तुल्यौ नायिकारूपस्य रिपोरेवौपम्चेनोत्कर्ण प्रत्यामकावित्यर्थः इभकुम्भौ हस्तिगण्डौ भिनति नरवाद्यातेन विदारयति ।

अत्र सिंहमध्यविजयित्वात्प्रस्तुतनायिका सिंहरिपु; सिंश्चसाक्षात् प्रमदारूपत्वेन तन्नायिकाया प्रत्यपकर्तुमसमर्थः अतो रिपु सम्बन्धित्वेन सम्भाव्य इभकुम्भौ भिनत्ति तद्रभेदनञ्च नायिकायाः कुचकुम्भस्तुतिसाधकत्वेन तस्या अपि स्तुतिसाधक भेवेति प्रत्यनोकालङ्कारः ।

तथा इभकुम्भयोः स्तनकम्भस्योपमानत्वेन लोके प्रसिद्धत्वम् अत्र च कुचकुम्भनिभावित्यनेनोपमेयत्व प्रतिपादननुपदवक्ष्यमाण- प्रतीपालङ्कारश्चेत्युभचोरेका श्रयानु प्रवेश रूपसङ्करा लङ्कारः । उदाहरणान्तरं यथा—

रे रे मनो मन मनो भवशातनस्य पादाम्बुजद्वय भनारतमानमन्तम् ।

कि मां निपातयसि ससृतिगर्तमध्ये नैतावता तव गमिष्यति पुत्र शोकः ॥ इति । त्यस्योत्तरार्द्धं प्रतीपालङ्कारापातात्तत्प्रकरणमादाय प्रतीपालङ्कारं निरूपयति—**प्रसिद्धस्येति** । प्रसिद्धस्य प्रख्यातस्य उपमानस्य सादृश्यप्रतियोगित्वेन लोके प्रसिद्धिमुपगतस्य वस्तुनः, उपमेयत्वप्रकल्पनं सादृश्यानुयोगित्वप्रकल्पनम्, वा अथवा तथाविधोपमानस्यैव निष्फलत्वाभिधानं व्यर्थत्वप्रतिपादनं प्रतीपमिति प्रतीपनामालङ्कारः कथ्यते प्रतिपाद्यते ।

प्रतिगच्छन्ति आपो यस्मिन्निति प्रतीपं निम्नोन्नतस्थलम्, तत्सादृश्यात्पूर्ववदेवालङ्कारे लक्षणा । 'ऋक्पूरब्धूपथामानक्षे' ५/४/७४ इति पा. सूत्रेण समासान्तोऽप्रत्ययः, द्वयन्तरुपसर्गेऽभ्योऽप इत्' ६/३/९७ इति पा. सूत्रेण ईदादेशः । प्राञ्चोऽपि प्रतीपादयः शब्दा गौणा एवेत्याहुः ।

अयञ्च प्रसिद्धोपमानस्योपमेयत्वकल्पनेनैकः उपमानस्य निष्फलत्वाभिधानेन द्वितीय इति द्विविध इत्यवगन्तव्यम् ।

तत्राद्योदाहरणं दर्शयति—**यत्त्वन्नेत्र** इति । व्याख्यातमिदम् । अत्र क्रमशो नेत्रमुखगत्युपमानत्वेन प्रसिद्धानाम् इन्दीवर-शशि-राजहंसगतीनां तत्तदुपमेयत्वाभिधानात् प्रतीपालङ्कारः । मालारूपोऽयम्, केवलरूपस्तु 'इभकुम्भा' वित्युदाहरण एव ज्ञेयः ।

## रुचिरा

प्रतीपं लक्ष्यति प्रसिद्धस्य । उपमानस्य सादृश्यप्रतियोगिनाः उपमेयत्वप्रकल्पनमुपमेयत्वस्य सादृश्यायोगित्वस्य प्रकल्पनम् । वा यद्धा । निष्फलत्वभिधानं व्यर्थत्वकथनम् । प्रतीपम् । इति । कथ्यते । इदमबोध्यम् उपमानाकर्णानु भावको वाग् व्यापारः प्रतीपनामाऽलङ्कारः, स च द्विविधः उपमानस्या पकर्षमनुभावयितुमुपमेयत्वेनाभिधानम्, निष्फलत्ववचनं चेति ॥१४०

उदाहर्त्तुमुपक्रमते—**क्रमेणेत्यादि** । स्पष्टम् । '**यत्त्व**दित्यादि । व्याख्यातपूर्वमिदम् । अत्र नेत्रादेरुपमेयस्येन्दीवराद्युपमानं प्रसिद्धं, तस्य च वैपरीत्याभिधानात् प्रतीपम् ॥ २८० ॥

**'तद्वक्त्रं यदि मुद्रिता शशिकथा हा हेम सा चेद्द्युति-**
**स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत्स्मितं का सुधा।**
**धिक्कंदर्पधनुर्भ्रुवौ यदि च ते किं वा बहु ब्रूमहे**
**यत्सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः ॥'**

अत्र वक्रादिभिरेव चन्द्रादीनां शोभातिदवहनात्तेषां निष्फलत्वम्।

---

## विवृतिः

**तद्वक्त्रमिति**। शशिनः कथा सौन्दर्यप्रशंसा। हाशब्देन हेम्नः शोच्यत्वम्, तेन च तस्य वैफल्यं प्रतीयते। विफलार्थो वा हा शब्दः। हारितं विफलीभूतम्। यद्वा-हा खेदे, रितं गतम्। नष्टमिति यावत्। **यत्सत्यमिति**। वेधसः सर्गक्रमः पुनरुक्तवस्तुहीन इति यद्गीयते तत्सत्यमेवेत्यर्थः। एतेन केशपाशादिसत्त्वे चामरादीनां वैफल्यं प्रतीयते। वैफल्यमुपपादयति—**वक्रादिभिरेवेति**।

## विज्ञप्रिया

उपमानस्य वैफल्यमुदाहरति—**तद् वक्त्रं यदीति**। तद् वक्त्रादिसत्त्वे शशिकथादीनां मुद्रितत्वादिकं वैफल्यं पर्यवसितं बोध्यम्। हा इति शोचामीत्यर्थः। हारितं पराजयः प्राप्त इत्यर्थः। **तच्चेदिति**। तस्याः तत्स्मितं चेदित्यर्थः। का निकृष्टा। इत्थमुक्त्वा उपसंहरति—**किं वा बह्विति**। वेधसः सर्गक्रमः सृष्टिक्रमः पुनरुक्तवस्तुविमुखः, पुनरुक्तं यत्सदृशवस्त्वन्तरकल्पनं तद्विमुखः। तत्र वैफल्यरूपदोषदर्शनविमुख इत्यर्थः। विमुखपदस्यैवेदृशार्थपरत्वं बोध्यम्।

## कुसुमप्रतिमा

उपमानस्य निष्फलत्वाभिधाने उदाहरति तद्वक्तमिति। विद्धशालभञ्जिकायाः श्लोकोऽयम्। यदि तस्याः कुवलमालाख्याया नायिकायाः, वक्रं वदनं विद्यत इति शेषः। एवं सर्वत्र। तदा शशिकथा चन्द्रसौन्दर्य्यसम्बन्धिनो प्रशंसा, मुद्रिता सङ्कुचिता; सा कुवलयमालासम्बन्धिनौ द्युतिर्देहशोभा चेद्विद्यते, तदा हेम सुवर्णं हा शोभाविषये शोच्यमित्यर्थः। यदि तस्याश्चक्षुर्विद्यते, तदा कुवलयैरिन्दीवरैः हारितं पराजितम्। तत् कुवलयमालासम्बन्धि स्मितं चेद्विद्यते, तदा का नाम सुधा अमृतम्, अपि तु कापि नेत्यर्थः। अपि च यदि ते कुवलमालासम्बन्धिन्यौ भ्रुवौ विद्येते, तदा कन्दर्पधनुर्धिक् निन्दामीत्यर्थः। बहु वा किं ब्रूमहे वदामः, यत् वेधसो विधातुः सर्गक्रमः सृष्टिप्रणाली, पुनरुक्तवस्तुन एकप्रकारद्वितीयपदार्थात्तन्निर्म्माणादित्यर्थः विमुखो विरोधौ भवति, तत सत्यम्, विधाता एकप्रकारं वस्तुद्वयं न सृजतीति प्रवादः सत्य एवेत्यर्थः, चन्द्रादिभ्यस्तदृक्त्वादीनामत्युत्तमत्व न एकप्रकारत्वाभावादिति भावः।

अत्रेति। शोभाया अतिवहनादितिरेकेण धारणात् चन्द्रादिशोभाभ्यः अत्यधिकशोभाधारणादित्यर्थः, तेषां चन्द्रादीनाम्, निष्फलत्वं सूचितमिति शेषः, उत्तमसत्त्वे अधमानमनावश्यकत्वादिति भाव अत्रापि मालरूपोऽयम्। केवलरूपो तथा नैषधे—

**"मन्ये स विज्ञः स्मृततन्मुखश्रीः कृतार्द्धमीज्झद्भवमृद्धिस्तम्।"**

## विमला

यदिति ।—व्याख्यातं प्राक् । अत्र नेत्रादीनामुपमानानामपि इन्दीवरादीनामुपमेयत्वकथनम् ।

तदिति ।—विद्धशालभञ्जिकायां केरलाधिपतेः स्वप्नावस्थायां कुवलयमालामवलोक्य तन्मूर्त्तिस्मरणम् । यदि तस्याः,—स्वप्नदृष्टायाः कुवलयमालाया इति भावः, एवं सर्वत्र; वक्त्रं—मुखं, तिष्ठतीति शेषः, तदा शशिकथा—चन्द्रसम्बन्धिनी वार्त्ता, शशिसौन्दर्य्यप्रशंसा इति यावत्, मुद्रिता—सङ्कुचिता, नष्टेत्यर्थः, चेत्—यदि, सा द्युतिः,—कान्तिः, तिष्ठतीति शेषः, तदा हेम—स्वर्ण, हा !—शोचनीयमित्यर्थः, हेम्नः शोच्यत्वमिति भावः, तेन च तस्य वैफल्यं प्रतीयते, हाशब्दः शोकसूचको विफलार्थो वा अव्ययः, यदि तस्याश्चक्षुः तिष्ठति, तदा कुवलयैः,—नीलोत्पलैः, हारितं—पराभूतं, विफलीभूतमित्यर्थः, यद्वा—हा—खेदे, रितं—गतं, नष्टमिति यावत्,

चेत्—यदि, तत्—विलक्षणमित्यर्थः, स्मितं—मृदुहास्यं, तिष्ठतीति शेषः, तदा सुधा का ?—साऽपि विफला इति भावः, यदि ते भ्रुवौ, तिष्ठत इति शेषः, तदा कन्दर्पस्य—कामदेवस्य, ("कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः" इत्यमरः) धनुः,—शरासनं, धिक् !—निन्दामीत्यर्थः, ("धिक् निर्भर्त्सननिन्दयोः" इत्यमरः:) कामदेवस्य धनुः अतिधिक, एतदपि तदपेक्षया अकिञ्चित्करमिति भावः, किं वा बहु—अधिकं, ब्रूमहे—वदामः, वेधसः,—विधातुः, सर्गक्रमः,—सृष्टिनियमः, पुनरुक्तात्—द्वितीयात्, वस्तुनः विमुखः,—विधिरेकरूपं वस्तुद्वयं न सृजतीत्यर्थः, इति यत् तत् सत्यम् । एतेन केशपाशादिसत्त्वे चामरादीनां वैफल्यं प्रतीयते । शार्दूलविक्रीड़ितं वृत्तम् । यथा वा—"तदोजसस्तद्यशसः स्थिताविभौ वृथेति चित्ते कुरुते यदा यदा । तनोति भानोः परिवेषकैतवात् तदा विधिः कुण्डलनां विधोरपि ॥" इति । अत्र नलीयप्रतापकीर्त्तिभ्यां सूर्य्याचन्द्रमसोः वैफल्यम् ।

## लक्ष्मी

अथ द्वितीयभेदोदाहरणं दर्शयति—**तद्वक्त्र**मिति । हनुमन्नाटके सीतां ध्यायतो रावणस्योक्तिरियम् । यदि तस्याः सीताया वक्त्रं मुखं 'विद्यत' इति शेषः । एवमुत्तरत्र । तदा शशिकथा चन्द्रोत्कर्षप्रत्यायिका चर्चा मुद्रिता सङ्कुचिता नष्टेति यावत्; सा सीतासम्बन्धिनी द्युतिश्शरीरशोभा चेद्विद्यते,-तदा हेम सुवर्णं हा शोभाविषये चिन्त्यमित्यर्थः । तस्याः चक्षुर्विद्यते, तदा कुवलयैः नीलोत्पलैः हारितं पराजितम् । तत् सीतासम्बन्धि स्मितं मन्दहसितं चेद् विद्यते, तदा का नाम अमृतम् अपि तु कापि नेत्यर्थः, 'पीयूषममृतं सुधा' इत्यमरः । तथा यदि ते सीतासम्बन्धिन्यौ भ्रूवौ भ्रुकुटिद्वयं विद्येते, तदा कन्दर्पधनुः कामचापः धिक् गर्हामीत्यर्थः । वा अथवा बहु अधिकं किं ब्रूमहे कथयामः, यत् वेधसो ब्रह्मणः सर्गक्रमः सृष्टिप्रणाली पुनरुक्तवस्तुन एकविधापरपदार्थरचनात् विमुखः विपरीतो भवति, तत् सत्यं यथार्थम्, एष सृष्टिनियमः यदेकविधं पदार्थद्वयं प्रजापतिर्न सृजतीति स यथार्थ एवेत्यर्थः, शशिप्रभृतिभ्यस्तन्मुखादीनामतिश्रेष्ठत्वेन एकविधत्वाभावादित्याशयः । **शार्दूलविक्रीडितं** छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

लक्ष्यं संयोजयति—**अत्रेति** । शोभातिवहनात् शशिप्रभृतिशोभातिरेकेण धारणात्, तेषां शशिप्रभृतीनाम्, निष्फलत्वं व्यर्थत्वं ध्वनितमिति शेषः ।

## रुचिरा

'**यदि** । **तत्** । **वक्त्रम्**मुखम् । तर्हि-**शशिकथा** शशिनश्चन्द्रस्य कथोत्कर्षप्रत्यायिका चर्चेति तथोक्ता । **मुद्रिता** सङ्कुचिता नष्टेति यावत् । **चेत्** । **सा** । **द्युतिः** शोभा । तर्हि-हे **हेम** स्वर्ण ! **हा** कष्टं त्वं मृतमिति भावः । **यदि** । **तत्** । **चक्षु**र्नेत्रम् । तर्हि-**कुवलयै**र्नीलकमलैः । **हारितं** पराभूतं पराभवोऽङ्गीकृत इति यावत् । **चेत्** । **तत्** । **स्मितं**

मन्दहसितम् । तर्हि-**सुधा** । **का** । **यदि** । **च** । **ते** । **भ्रुवौ** । तर्हि-**कन्दर्पधनुः** कन्दर्पस्य कामस्य धनुस्तत्तथोक्तम् । **धिक्** । **किंवा** । **बहु** । **ब्रूमहे** कथयामः । **यत्** । **वेधसो** ब्रह्मणः । **पुनरुक्तवस्तुविमुखः** पुनरुक्तं पुनरुक्तिविषयं यद्वस्तु तस्मात् विमुखः शून्यः । **सर्गक्रमः** सृष्टिनियमः । इति तत्-**सत्यम्** । सीतां ध्यायतो रावणस्येयमुक्तिः । तत्पदं च दृष्टपूर्वतत्तद्वैलक्षण्यसूचनार्थम् । हनुमन्नाटकस्येदम्पद्यम् । शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥२८१ ॥'

उदाहृतमर्थ निर्दिशति-**अत्रेत्यादिना** । स्पष्टम् ।

**उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः ।**

**कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे ॥ ८८ ॥**

यथा—

**'अहमेव गुरुः सुदारुणाना-**

**मिति हालाहल तात मा स्म दृप्यः ।**

**ननु सन्ति भवादृशानि भूयो**

**भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥'**

अत्र प्रथमपादेनोत्कर्षातिशय उक्तः । तदनुक्तौ तु नायमलंकारः ।

यथा—

**'ब्रह्मेव ब्राह्मणो वदति' इत्यादि ।**

---

## विवृतिः

प्रकारान्तरेण प्रतीपालंकारमाह—**उक्तत्वेति** । येन धर्मेण उत्कर्ष उच्यते तेनैव धर्मेणाप्रसिद्धमप्युपमानत्वं कल्प्यत इति भावः । अपिकारात्पूर्वोक्तप्रकारयोः समुच्चयः ॥

**अहमेवेति** । हे हालाहल, हे तात, अहमेव सुदारुणानां गुरुरिति दर्पवान्मा भूः । कथमित्यत आह—**नन्विति** । ननु भोः, अस्मिन्भुवने दुर्जनानां वचनानि भूयो यथा स्यात्तथा सन्ति । अत्र दारुणत्वातिशयः सामान्यगुणस्तद्योगादुपमानत्वमभूतपूर्वमपि दारुणत्वांशे दर्पनिषेधादनुभूतमेव विवक्षितम् ॥ **ब्रह्मेवेति** । अत्रोत्कर्षो गम्य एव न तु वाच्यः ॥

## विज्ञप्रिया

**अहमेवेति** । हे हालाहल हे तात, अहमेव सुदारुणानां गुरुः प्रधानम् । इत्येवं दृप्यो मा स्म, एवं दर्प मा कुरु इत्यर्थः । कुत इत्यत्राह—**नन्विति** । ननु भो अस्मिन् भुवने दुर्जनानां भूयो बहूनि वचनानि अपि भवादृशानि भवत्तुल्यानि सन्तीत्यर्थः । भूय इति सान्तक्रियाविशेषणम् । तद्भूयस्त्वेन वचनानमेव भूयस्त्वं बोध्यम् ।

अत्र भवदिव दृश्यन्ते यानीत्यनेन हलाहलस्योपमानत्वेनैव निर्देशः । दर्पनिषेधसमभिव्याहाराच्च तन्निन्दापर्यवसायकः । अत्रोक्तमत्यन्तमुत्कर्ष घटयति—**प्रथमपादेनेति** । सुदारुणान्तरापेक्षया तेन गुरुत्वकथनात् तद्विशेषणफलमाह-**तदनुक्ताविति** । नायमलङ्कारः, किन्तु उपमा एवेत्यर्थः । तद् दर्शयति–**यथा ब्रह्मेति** । ब्रह्मा यथा वेदं वदति तथा ब्राह्मण इत्यर्थः । यद्यपि वेदस्यातिवक्ता ब्रह्मैवेति ब्राह्मणस्यात्यन्तोत्कर्षकथनेप्युपमैव नायमलङ्कारस्तथापि प्रतीपघटनार्थं समभिव्याहारविशेषादुपमानस्य निन्दापर्य्यवसायकत्वं निर्देशस्य विशेषणं दत्तमित्यतस्तद्वारणमिति प्रागेवोक्तं बोध्यम् ।

## कुसुमप्रतिमा

मतान्तरीयप्रतीपं लक्षयति उक्तेति । किञ्चेति चार्थः । अत्युत्कृष्टस्य अतीवप्रधानस्य, वस्तुनः पदार्थस्य अत्यन्तमुत्कर्षमतीवप्राधान्यमुक्त्वा, उपमानत्वे कल्पिते स्थापितेऽपि केचिदालङ्कारिका प्रतीपमूचिरे उक्तवन्तः । अत्र सुष्ठुसंज्ञाव्युत्पत्तिविरहादसव वादिसिद्धत्वाच्च अस्वरसता प्रत्येतस्या ।

अहमिति । दुर्जननिगृहीतस्य कस्यचिदुक्तिरियम् । हे हालाहल ! महाविष ! तात ! "अहमेव सुदारुणानां मध्ये गुरुः श्रेष्ठः" इति एवं विविच्येत्यर्थः, मात्म दृप्यः न दर्पितो भव । कथमेवमित्याह—ननु हे हालाहल ! अस्मिन् भुवने भवादृशनि त्वत्तुल्यसुदारुणानि, दुर्जनानां वचनानि बूयो बाहुल्येन सन्ति । अतएवात्मनः अद्वितीयत्वबुद्ध्या तादृशदर्पो न युज्यत इति भावः ।

अत्रेति । उत्कर्षातिशयो हालाहलस्येत्यर्थः । तथा च तीव्रतायामतिप्रधानस्य हालाहलस्य "सुदारुणानां गुरुः" इत्यनेन अयन्तमुत्कर्षमुक्त्वा "भवादृशानि" इत्यनेन उपमानत्वकल्पनात् प्रतीपालङ्कारः । तदनुक्तौ उत्कर्षातिशयानुक्तौ । ब्रह्मेव विरिञ्चिरिव । अत्रोपमानभूतस्य ब्रह्मण उत्कर्षातशयानुक्तेर्न प्रतीपमित्याशयः ।

वस्तुनोः प्रतिरूपत्वे प्रतीपमिव अनुरूपत्वे कश्चिदलङ्कारो भवति न वेत्याकाङ्क्षायां मीलितालङ्कारं निर्वक्ति नीलितमिति । तुल्यं लक्ष्म चिन्हं रूपं यस्य तेन अनुरूपेणेत्यर्थः, केनचिद्वस्तुना, वस्तुनस्तुल्यरूपवस्त्वतरस्य गुप्तिर्गोपनं तिरस्करणमिति यावत् मीलितं नाम अलङ्कारः स्यात् । उत्कृष्टगुणेन निकृष्टगुणस्य आच्छादनं मौलितमिति विवक्षितोऽर्थः । अतएवास्य वक्ष्यमाणसामान्यालङ्कारादिभिभेदस्तत्र तत्र वृत्तावेव वक्ष्यते । व्याजोक्तौ प्रकाशितस्य वस्तुनो व्याजेन गोपनचेष्टामात्रं न तु गोपनं सम्पद्यते अत्र तु अव्याजेन चेष्टां विनैव च गोपनं सम्पद्यत इत्यनयोर्भेदः ।

मौलितं मुद्रितं यत्किञ्चिद्वस्तु वस्त्वन्तरेण तिरोहितमित्यतो मीलितमिति संज्ञा ।

## विमला

प्रकारान्तरेण प्रतीपमाह, उक्तेति ।—अत्युत्कृष्टस्य—अतिश्रेष्ठस्य, वस्तुनः अत्यन्तम् उत्कर्षम् उक्त्वा तस्यैव उपमानत्वे कल्पिते अपि—येन धर्मेण उत्कर्ष उच्यते, तेनैव धर्मेण अप्रसिद्धस्यापि उपमानत्वे कल्पिते इति भावः, [अपिकारात् पूर्वोक्तप्रकारयोः समुच्चयः] केचित् प्रतीपम् ऊचिरे—कथयामासुः ।

अहमिति ।—हालाहल !—हे कालकूट ! हे तात ! अहमेव सुदारुणानाम्—अतिभीषणानां, प्राणघातिनामिति भावः, गुरुः,—श्रेष्ठः, इति—एवं बुद्ध्या, मा स्म दृप्यः,—दर्पवान् मा भूः, दर्पं मा कार्षीरित्यर्थ; कथमित्यत आह, नन्विति ।—अस्मिन् भुवने—जगति, भवादृशानि—त्वत्सदृशानि, दुर्जनानां वचनानि भूयः,—बाहुल्येन सन्ति ननु—विद्यन्ते खल ।

अत्रेति ।—अत्र प्रथमे पादे उत्कर्षमुक्त्वा द्वितीये दुर्जनवचनानाम् उपमानत्वं कल्पितम्; तथा हि, दारुणत्वातिशयः सामान्यगुणः, तद्योगादुपमानत्वमभूतपूर्वमपि दारुणत्वांशे दर्पनिषेधादनुभूतपूर्वमेव विवक्षितम् इति भावः । तदनुक्तौ—उत्कर्षानुक्तादित्यर्थः । ब्रह्मेवेति ।—अत्रोत्कर्षो गम्य एव, न तु वाच्यः ।

## लक्ष्मी

नायं द्विविध एव किन्तु येन वस्तुना असाधारणगुणसम्बन्धादुपमानत्वमपि पूर्वं चानुभूतं तस्य वस्तुनः उपमानत्वकल्पनायामपि प्रतीपालङ्कारो भवतीति काव्यप्रकाशकृता उक्तम्, तदेव लक्षयति—**उक्त्वेति** । अपि चेति चार्थः । अत्युत्कृष्टस्य अत्यन्तप्रधानस्य, वस्तुनो विषयस्य अत्यन्तमुत्कर्षम्, अत्युत्कृष्टत्वम् उक्त्वा कथयित्वा, उपमानत्वे कल्पिते स्थापितेऽपि 'तदपकर्षप्रत्यायनम्' इति शेषः, केचित् आलङ्कारिकाः प्रतीपं प्रतीपालङ्कारम् ऊचिरे कथयामासुः ।

अहमिति । खलपरिगृहीतस्य कस्यचित्कथनमिदम् । तातेत्युपहाससम्बोधनम्, अथवा 'तातोऽनुकम्प्ये जनके' इति विश्वकोषात् सानुकम्पसम्बोधनम् । हे तात ! हे हालाहल उत्कटविष 'गोनासगोनसौ हालाहलं विषम्' इति त्रिकाण्डशेषः । अहमेव सुदारुणानां महाभयङ्कराणां मध्ये 'दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्' इत्यमरः, गुरुः श्रेष्ठ इति त्वं मा स्म दृप्यः गर्वं मा कृथाः । तत्र कारणं दर्शयति—**तन्वित्या**दिना । ननु यतः हे हालाहल ! अस्मिन् भुवने लोके दुर्जनानां खलानां वचनानि वाक्यानि भवानिव दृश्यन्ते इति भवादृशानि भवदुपमेययानि भूयः पुनः अथवा बहु यथा स्यात्तथा सन्ति, तेन स्वस्याद्वितीयत्वं मत्वा तथाविधाहङ्कारोऽयुक्त इत्याशयः । **मालाभारिणी**च्छन्दस्तल्लक्षणन्तूक्तम् ।

लक्ष्यं सङ्गमयति—**अत्रेति** । उक्तोदाहरण इत्यर्थः । उत्कर्षातिशयः हालाहलस्यात्युत्कटदुःखकारणत्वेनानौपम्योक्तिमूलोऽतिशय इत्यर्थः । दुःखकारणेऽत्यन्तमुत्कृष्टस्य हालाहलस्य 'सुदारुणानां गुरुः' इत्यनेन अतीवोत्कृष्टत्वमभिधाय 'भवादृशानि' इत्यनेन उपमानत्वप्रत्यायनादुक्तालङ्कारः । तदनुक्तौ उत्कर्षातिशयानभिधाने । ब्रह्मेव प्रजापतिरिव । अत्र चोपमैव न तु प्रतीपालङ्कारः, उपमानभूतस्य ब्रह्मण उत्कर्षातिशयाप्रतिपादनादिति भावः ।

## रुचिरा

मतान्तरेण प्रतीपं लक्षयति—१७७ **केचित्** । **अत्युत्कृष्टस्य** येन धर्मेण यदत्युत्कृष्टं तस्येति भावः । **वस्तुनः** । **अत्यन्तम्** । **उत्कर्षं** तेन धर्मेणोत्कृष्टत्वम् । **उक्त्वा** कथयित्वा । **च** (इदं प्रकारान्तरबोधनार्थम्) । **उपमानत्वे** । **कल्पिते** । **अपि** । 'तदपकर्षप्रत्यायन'मिति शेषः । **प्रतीपम्** । **ऊचिरे** कथयामासुः । अयम्भावः—येन धर्मेण यदुत्कृष्टं तस्योपमानतयाऽप्रसिद्धस्यापि तेनैव धर्मेणोत्कर्षमभिधाय तस्यापकर्षं द्योतयितुमुपमानत्वकल्पनमपि प्रतीपम् । इति ॥ १४१ ॥

उदाहरति—**यथा**—'हे **तात** वत्स ! **हालाहल** ! **सुदारुणानाम्** । **गुरुर्मुख्यः** । **अहम्** (हालाहलः) । **एव** । **इति** । त्वम्-**मा** । **स्म** । **दृप्यो** गर्वं कृथाः । हेतुं निर्दिशति-**ननु** । **अस्मिन्** । **भुवने** संसारे । **भवादृशानि** भवत्सदृशानि । **दुर्जनानाम्** । **वचनानि** । **भूयः** पुनः । **सन्ति** । अत्र हालाहलस्यात्युत्कटदुःखहेतुत्वेनोत्कर्षमभिधाय दुर्जनवचनोपमानत्वेन तस्याप्रसिद्धस्यापि उपमानत्वं कल्पयित्वाऽसदृशत्वनिराकरणेन तिरस्करणम् । एवं च तिरस्कारफलकोपमानापकर्षबोधानुकूलव्यापारस्य स्फुटं समन्वयः । मालभारिणीछन्दः, तल्लक्षणं च यथोक्तम्- 'विषमे ससजा यदा गुरू चेत्सभरा येन तु मालभारिणीयम् ।' इति ॥ २८२ ॥'

नन्वत्रोपमैव किं न स्वीक्रियत इत्याशङ्क्याह—**अत्रो**दाहृते पद्ये । **प्रथमपादे** । **उत्कर्षातिशयो**ऽत्युत्कटदुःखहेतुत्वेनासदृशत्वोक्तिमूलोऽतिशयः । **उक्तः** । **तदनुक्तौ** । **तु** । **अयं** प्रतीपाख्यः । **अलङ्कारः** । **न** । **यथा** । '**ब्राह्मणः** । **ब्रह्मा** । **इव** । **वदति** ।' **इत्यादि** । इदमुक्तम्-'ब्रह्मैवे'त्यादौ उपमैव, नतु प्रतीपालङ्कारः, अत्र च प्रतीपमेव, न तूपमा; उपमानत्वेनाभिधास्यमानस्य हालाहलस्यात्युत्कर्षाभिधानात्, तत्र च ब्रह्मणोऽत्युत्कर्षानभिधानाच्च इति ।

**मीलितं वस्तुनो गुप्तिः केनचित्तुल्यलक्ष्मणा।**

अत्र समानलक्षणं वस्तु क्वचित्सहजं क्वचिदागन्तुकम्। क्रमेण यथा—

**'लक्ष्मीवक्षोजकस्तूरीलक्ष्म वक्षः स्थले हरेः।**

**ग्रस्तं नालक्षि भारत्या भासा नीलोत्पलाभया॥'**

अत्र भगवतः श्यामा कान्तिः सहजा।

---

## विवृतिः

सामान्यालंकारमाह—**सामान्यमिति**। प्रकृतस्य प्रस्तुतस्य अन्यतादात्म्यमितरभिन्नत्वेनापरिचेयत्वम्॥

## विवृतिपूर्ति

**कुवलयानन्दे** तु 'भेदवैशिष्ट्योः स्फूर्तावुन्मीलित**विशेषकौ**। हिमाद्रिं त्वद्यशोमग्नं सुराः शीतेन जानते॥ लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च॥' इति मिलितन्यायेन भेदानध्यवसाये प्राप्ते कुतोऽपि हेतोर्भेदगस्फूर्तौ मिलितप्रतिद्वन्द्वि **उन्मीलितम्**। तथा सामान्येन विशेषस्फुरणे प्राप्ते कारणान्तराद्विशेषस्फूर्तौ सामान्यप्रतिद्वन्द्वी विशेषक इति दीक्षितानां तात्पर्यम्। तत्र केचिदाहुः—व्यक्तं प्रतीयमानस्य कस्यचिद् वस्तुनो लिङ्गैरत्यन्तं साम्याद् भिन्नत्वेनाज्ञायमानानां वस्त्वन्तरलिङ्गानां स्वकारणानुमापकत्वं खलु मीलितम्। एवं च 'हिमाद्रिं'—इत्यत्र शीतेन तज्ज्ञानेऽपि यशसः साधारणलिङ्गैर्धवलिमादिभिस्तदनुमानाभाव इति शीतेन जानते इत्यनेनापि मीलनस्यैव दाढ्र्य न त्वन्येनेति प्रत्ययादुन्मीलितं न पृथगलंकार इति। तथा चन्द्रोदये पद्ममुखयोर्भेदभानेऽपि प्राथमिकाभेदभानस्य वृत्ततया निरासोगे सामान्यमेव। चन्द्रदर्शनजन्यभेदभानेन उत्तरकालिकेन तत्पूर्वजाताभेदमानग्रहो नान्यथयितुं पार्यत इति तत्त्वम्। एतेन विशेषको न पृथगलंकारः॥

## विज्ञप्रिया

मीलितालङ्कारमाह। **मीलितमिति**। गुप्तिराच्छादनम्। तुल्यलक्ष्मणा तुल्यचिन्हेन। आगन्तुकमतदीयं, सहजं तद्रवृत्ति।

## कुसुमप्रतिमा

अस्य विभजनाय तुल्यलक्ष्म विभजते अत्रेति। समानलक्षणं तुल्यलक्ष्मेति पदोपात्तमित्यर्थः। सहजं स्वाभाविकम्, आगन्तुकं वस्त्वन्तरादगमनशीलम्। अतएवायं द्विविध इति भावः।

तत्राद्यमुदाहरति लक्ष्मीति। हरेर्नारायणस्य वक्षस्थले, लक्ष्म्या वक्षोजयोः स्तनयो कस्तूरीलक्ष्म आलिङ्गनेन संलग्नः कस्तूरीचिन्हम्, नीलोत्पलाभया नीलपद्मतुल्यवर्णया मासा हरेरेव देहप्रभया, ग्रस्तं कवलितं तिरोहितमिति यावत्, अतएव भारत्या लक्ष्मीसपत्नीरूपया सरस्वतीदेव्या, न अलक्षि तत् कस्तूरीलक्ष्मन दृष्टम्। अतएव भारत्या मानो न कृत इत्याशयः।

## विमला

मौलितमाह, मौलितमिति। केनचित्—सहजेनाऽगन्तुकेन वा इत्यर्थः, तुल्यलक्ष्मणा—समानचिन्हेन, वस्तुनः गुप्तः,—गोपनं, मौलितम्। न चायं सामान्यालङ्कारः, तस्य हि साधारणगुणयोगात् भेदानुपलक्षणं रूपम्, अस्य तु उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानमिति महाननयोर्विशेषः।

लक्ष्मीति।—भारत्या—सरस्वत्या, सपत्न्या इत्यर्थः, हरेः,—नारायणस्य, वक्षः स्थले लक्ष्म्याः,—श्रियाः, वक्षोजयोः,—स्तनयोः, या कस्तूरी—मृगमदः, तस्य लक्ष्म—चिन्हं, नीलोत्पलाभया—इन्दीवरतुल्यया, भासा—भगवद्देहप्रभया, ग्रस्तं—कवलितं, दर्शनाविषयीभूतमित्यर्थः, अत एव न अलक्षि—न दृष्टम्। अत तुल्यलक्ष्मवस्तुना देहप्रभया कस्तूरीलक्ष्मरूपस्य वस्तुनः गोपनम्। यथा वा—"अपाङ्गतरले दृशौ मधुरवक्तवर्णा गिरो विलासभरमन्थरा गतिरतीव कान्तं मखम्। इति स्फुरित मङ्गके मृगदृशा स्वतो लीलया यदत्र न भदोदयः कृतपदोऽपि संलक्ष्यते॥" इति।

## लक्ष्मी

पदार्थस्य प्रतिरूपत्वे यथा प्रतीपालङ्कारस्तथा अनुरूपत्वे सति मीलितालङ्कारो भवतीति दर्शयति—**मीलि**तमिति। तुल्यं समानं लक्ष्म चिन्हं यस्य तेन सदृशरूपेणेत्यर्थः 'चिन्हं लक्ष्म च लक्षणम्' इत्यमरः, केनचित् पदार्थेन, वस्तुनः अनुरूपवस्त्वन्तरस्य गुप्तिः गोपनम् अलक्षिततत्वमिति यावत् मीलितं तन्नामालङ्कारो भवेत्। मालितमिति भावे क्तः, एवं च मीलितं यत्किञ्चिद्वस्तु वस्त्वन्तरेण गुप्तमित्यन्वर्थेयं संज्ञा। तथा च समानचिन्हयोरपि वस्तुनोरेकस्य स्वभावतः प्रबलतया तेन यदि अन्यस्य गोपनम् (अन्तर्धानम् अनुद्बोधः अलक्षिततत्वम्) भवेत् तदा मीलितमिति फलितम्। व्याजोक्त्यलङ्कारे वस्तुस्वभावजनितं न गोपनं किन्तु कथञ्चिदुद्भिन्नं वस्तु कश्चित् गोपयितुं यतते, अत्र तु वस्तुनोद्भिन्नं तस्यापि च गोपनं भवतीति ततो भेदः। नचापह्नुतावतिव्याप्तिः स्यादिति वाच्यम्, उपमानोपमेयाभावात्। वस्तुतस्तु अपह्नुतौ निषेधसहितं व्यवस्थापनम्, अत्र तु न तथेति स्पष्टं भेदः।

अस्य द्वैविध्यमुपपादयति—**अत्रेति**। तुल्यलक्ष्मपदार्थमाह—**सामानलक्षण**मिति। सहजं स्वाभाविकमित्यर्थः, आगन्तुकम् औपाधिकमित्यर्थः कारणविशेषसम्पर्कजनितमिति यावत्। तेनायं द्विप्रकारक इत्याशयः।

तत्र प्रथमभेदोदाहरणं दर्शयति—**लक्ष्मीति**। हरेर्नारायणस्य वक्षः स्थले उरः स्थले, लक्ष्म्या वक्षोजौ कुचौ तयोः (आश्लेषसमये समर्पितम्) कस्तूरीलक्ष्म कस्तूरीचिन्हम्, (कर्म) नीलोत्पलस्य नीलपद्मस्य आभेवाभा यस्याः तया तादृश्या भासा हरेरेव देहकान्त्या, ग्रस्तं कवलितं गोपितमिति यावत्, अत एव भारत्या लक्ष्मीसपत्नीरूपया सरस्वत्या, न अलक्षि तत्कस्तूरीचिन्हं नावलोकितम्। तेन सरस्वत्या मानो न विहित इत्याशयः।

लक्ष्यं सङ्गमयति—**अत्रेति**। भगवतो नारायणस्य। कान्तिश्छविः। अत्र सहजो गुण उत्कृष्टः, कस्तूरीगतश्यामगुणस्तदपेक्षया अपकृष्टः, द्वयोः सादृश्यं तुल्यम्। तथा च तुल्यरूपया शरीरकान्त्या श्यामकस्तूरीचिन्हस्य गोपनात् मीलितमिति भावः। **प्रकाशकृता** तु इदमुदाहृतम्—

**'अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो विलासभरमन्थरा गतिरतीव कान्तं मुखम्।**
**इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया तदत्र न महोदयः कृतपदोऽपि संलक्ष्यते॥'**

अत्र प्रसिद्धया बलिष्ठेन लीलारूपपदार्थेन (कर्त्रा) स्वाभाविकसाधारणदृक्तरलतादिरूपचिन्हद्वारा मदरूपः पदार्थः (कर्म) गोपित इति मीलितालङ्कारः।

## रुचिरा

मीलितं लक्षयति—१७८ **केनचित्**। **तुल्यलक्ष्मणा** तुल्यं लक्ष्म यस्य तथोक्तेन, सदृशेन वस्तुनेति भावः। **वस्तुनः**। गुप्तिस्तिरोभावोऽलक्षिततत्वमिति यावत्। **मीलितं** तदाख्योऽलङ्कारः॥ १४२॥

येन निगूहनं तस्य द्वैविध्यं निर्दिशति-**अत्रे**त्यादिना। स्पष्टम्। अत एवाहुः—'समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते। निजेनागन्तुना वाऽपि तन्मीलितमिति स्मृतम्॥' इति। एवं च-तुल्यस्वरूपयोरपि वस्तुनोरेकस्य वस्तुनः स्वभावतोऽन्येन वा केनापि हेतुनोत्कृष्टत्वं सम्भवति तेन यदि अपरस्य वस्तुनस्तिरोधानम्भवेत् तर्हि मीलितं नामालङ्कारः। उत्कर्षस्य च द्विविधतयाऽस्यापि द्विविधत्वम्। इति फलितम्।

उदाहर्त्तुमुपक्रमते—**क्रमेण**। **यथा**—'**भारत्या** सरस्वत्या सपत्न्येति भावः (कर्त्तृपदमिदम्)। **हरेर्ना**राय-णस्य। **नीलोत्पलाभया** नीलोत्पलस्याभेवाभा यस्यास्तया तथोक्तया। **भासा कान्त्या**। ग्रस्तं तिरोहितम्। वक्षः **स्थले**। **लक्ष्मीवक्षोजकस्तूरीलक्ष्म** लक्ष्म्या वक्षोजौ कुचौ तयोः (आलिङ्गनकाले समर्पितम्) कस्तूरीलक्ष्म कस्तूर्या लक्ष्म चिन्हमिति तथोक्तम् (इदं कर्मपदम्)। **न**। **अलक्षि**। अत्र भगवतो देहप्रभया कस्तूरीलक्ष्मणो निगूहनम्। एतच्च-उत्कृष्टेन निकृष्टस्यैव सम्भवतीति बोध्यम्, अत एव-सामान्यादस्य भेदो वक्ष्यते॥ २८३॥' तिरोधायिकाय भासः स्वाभाविकत्वमत्रोह्यमित्याह—**अत्रे**त्यादि स्पष्टम्।

**'सदैव शोणोपलकुण्डलस्य यस्यां मयूखैररुणीकृतानि।**
**कोपोपरक्तान्यपि कामिनीनां मुखानि शङ्कां विदधुर्न यूनाम्॥'**
**अत्र माणिक्यकुण्डलस्यारुणिमा मुखे आगन्तुकः।**

---

## विज्ञप्रिया

**लक्ष्मीवक्षोजे**ति। हरेर्वक्षः स्थले लक्ष्मीस्तनकस्तूरीचिन्हं भारत्या नालक्षि, यतो नीलोत्पलभिया हरेरेव भासा ग्रस्तामाच्छादितमित्यर्थः।

आगन्तुकलक्षमणा त्वाह—**सदैवे**ति। शोण उपलो मणिः खचितो यत्र तादृशकुण्डलस्य मयूखैः सदैवाऽरुणीकृतानि यस्यां पुरि कामिनीनां कोपोपरक्तान्यपि मुखानि यूनां कोपशङ्कां न विदधुरित्यर्थः।

## कुसुमप्रतिमा

अत्रेति। भगवतो हरेः। तथा च कस्तूरीगतश्यामगुणमपेक्ष्य उत्कृष्टगुणभूतया सहजया उभयोरपि श्यामत्वात्तुल्यरूपया देहप्रभया श्यामकस्तूरीचिन्हेनस्य तिरोधानादत्र मीलितालङ्कार इत्याशयः।

द्वितीयप्रकारस्योदाहरणमाह सदैवेति। यस्यां पुर्य्याम्, शीणोपलकुण्डलस्य रक्तवर्णमणिनिर्म्मितकर्णा-भरणस्य, मयूखै प्रभाभिः, सदैव अरुणीकृतानि कामिनीनां सुखानि, कोपेन प्रणयकोपेन उपरक्रान्तपि आरक्तवर्णी-कृतान्यपि सन्ति, यूनां शङ्कां भयं न विदधुः; तादृशकुण्डलमयूखकृत एवायं रक्तिमेतियूनां निश्चयादिति भावः।

अत्रेति। अरुणिमा रक्तिमा। तथा च मुखे कुण्डलादागन्तुकेन कोपजनितरागापेक्षया अधिक्यादुतकृष्टेन रागेण कोपजनितरागस्य तिरोधानादत्र मौलितालङ्कार इति भावः।

मौलिते सदृशगुणप्रस्तायोत्थानात् सदृशगुणघटितमेव सामान्यालङ्कारं लक्षयति सामान्यमिति। सदृशै-र्गुणैः प्रकृतस्य प्रस्तुतपदार्थस्य अन्वतादात्म्यप्रस्तुतपदार्थभेदः सामान्यं नाम अलङ्कारं स्यात्। समानगुणद्वारा प्रस्तुताप्रस्तुतपदार्थयोरभेदप्रतीतिः सामान्यमित्यर्थः। परत्र स्वगुणत्यागादित्यभिधानादत्र स्वगुणात्यागादिति लभ्यते। तेन तद्गुणेन सह भेदः।

सामान्यं समानता त घटितत्वादस्य सामान्यमिति संज्ञा।

## विमला

सदेति।—नगरीवर्णनामदम्। यस्या—नगर्य्यां, सदैव शोणोपलकुण्डलस्य—माणिक्यकुण्डलस्य, मयूखैः,—किरणैः, अरुणीकृतानि—रक्तौकृतानि, कामनीनां मुखानि कोपेन—प्रणयजनितेनेति भावः, उपरक्ता-न्यपि—आरक्तान्यपि, यूनां—तरुणानां, शङ्कां भयं, न विदधः,—उत्पादयामसुरित्यर्थः। अत्र तुल्यलक्षमवस्तुना आगन्तुकेन माणिक्यमयूखेन कोपोपरागरूपस्य वस्तुनः गोपनम इति। उपजातिः वृत्तम्। यथा वा—"अपह्नुतः स्वेदभरः करे तयोस्त्रपाजुषोर्दानजलैर्मिलन् महः। दृशारपि प्रस्तुमश्रु सात्त्विकं घनैः समाधीयत धूमलङ्घनैः॥" इति। अत्र दानजलनागन्तुकधर्मेण स्वदजलस्य धूमजन्येन चाश्रुणा सात्त्विकजन्याश्रुणां तिरोधानम्। एतयोराद्यस्य

सजातीयापेक्षोत्कर्षवत्त्व, द्वितीयस्य च प्रत्ययविषयस्वकार्य्यत्वप्रतियोगिककारणताश्वयवत्त्व तिरस्कारत्वप्रयोजकम्। इति ज्ञेयम्। यथा वा—"ये कन्दरासु निवसन्ति सदा हिमाद्रेस्त्वत्पातशङ्कितधियो विवशा द्विषस्ते। अप्यङ्गमुत्पुलकमुद्वहतां सुकम्पं तेषामहो ! वत म्पियां न बुधोऽप्यभिज्ञः ॥" अत्र हिमाद्रिकन्दरानिवाससामर्थ्यप्रतिपन्नेन शैत्येन समुद्भावितो आगन्तुकौ कम्परोमाञ्चौ भयकृतयोस्तयोः तिरोधायकौ, तिरोधायकत्वादेव च मौलितव्यपदेशः इति ज्ञेयम्।

## लक्ष्मी

द्वितीयभेदमुदाहरति—**सदैवेति**। कस्याश्चिन्नगर्या वर्णनमिदम्। यस्यां नगर्याम्, शोणारक्ता उपला रत्नानि येषु तथाविधानि यानि कुण्डलानि कर्णभूषणानि तेषां मयूखैः कान्तिभिः, सदैव सर्वस्मिन् काल एव अरुणीकृतानि रक्तिमानं प्रापितानि मानिनीनां मानवतीनां कामिनीनां मुखानि वदनानि कोपेन प्रणयक्रोधेन उपरक्तान्यपि रक्तप्रभत्वं गतान्यपि यूनां तरुणानां शङ्कां भयं न विदधुः चक्रुः, तथाविधकुण्डलकिरणाविहित एवायं शोणिमेति तरुणानां निर्णयादित्याशयः। उपेन्द्रवज्रेन्द्रयोरुपजातिश्छन्दः।

लक्ष्यं सङ्घटयति—**अत्रेति**। अरुणिमा रक्तिमा। अत्र कुण्डलादागन्तुको राग उत्कृष्टः, तदपेक्षया कोपजनितरागः अपकृष्टः, सादृश्यं च द्वयोस्तुल्यम्। तथा च तुल्यरूपया आगन्तुककुण्डलरागेण कोपजनितरागस्य गोपनात् मीलितमित्याशयः।

## रुचिरा

'**यस्यां** नगर्याम्। **सदा**। **एव**। **शोणोपलकुण्डलानां** शोणा रक्ता उपला रत्नानि येषु तादृशानि यानि कुण्डलानि तेषाम्। **मयूखैः** किरणैः। **अरुणीकृतानि** रक्तिमान नीतानि। **मनिनीनाम्**। **कोपोपरक्तानि** कोपेन क्रोधेनोपरक्तानि रक्तप्रभत्वं गतानि। **अपि**। **मुखानि**। **यूनां** कामुकानाम्। **शङ्कां** कोपभयम्। **न**। **विदधुश्चक्रुः**। कस्याश्चिन्नगर्य्या वर्णनमिदम्। अत्र माणिक्यप्रभया कोपरक्तिम्नो निगूहनम्। उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ २८४ ॥' अत्र तिरोधायिकायाः कान्ते आगन्तुकत्वमित्याह—**अत्रेत्यादि**। स्पष्टम्।

**सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणः ॥ ८९ ॥**

यथा—

**'मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः ।**

**अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः ॥'**

मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानम् । इह तूभयोस्तुल्यगुणतया भेदाग्रहः ।

---

## विवृतिः

मल्लिकेति । 'धम्मिल्लः संयताः कचाः' इत्यमरः । अत्राभिसारिका वर्णनीयत्वेन प्रस्तुताश्चन्द्रिकाभिन्नत्वेनापरिचिताः ॥

## विवृतिपूर्तिः

**तद्गुण इति ।** तस्योत्कृष्टगुणस्य गुणा अस्मिन्निति तद्रगुणः । अतोऽग्रे **कुवलयानन्दे**पर्वरूपमलंकारः—"पुनः स्वगुणसंप्राप्तिः **पूर्वरूप**मुदाहृतम् । हरकण्ठांशुलिप्तोऽपि शेषरत्वद्यशसा सितः ॥" इति ॥

**तदिति ।** उत्कृष्टगुणपदार्थसंनिधानाख्ये हेतौ सत्यपि तद्रूपस्योत्कृष्टगुणस्याननुद्वारो न्यूनगुणेनाननुवर्तनमतद्रगुणः । तस्योत्कृष्टगुणस्य गुणा अस्मिन्न सन्तीति । इतोऽग्रे **कुवलयानन्दे**ऽगुणालंकारः—'प्राक्सिद्धस्य गुणोत्कर्षोऽ**नुगुणः** परसंनिधेः । नीलोत्पलानि दधते कटाक्षैरतिनीलताम् ॥' इति । अन्यसंनिधानेन पूर्वसिद्धस्वगुणोत्कर्षोऽपि तद्रगुणविशेष एव । अत्र-'कपिरपि च कापिशायनमदमत्तो वृश्चिकेन संदष्टः । अपि च पिशाचग्रस्तः किं ब्रूमो वैकृतं तस्य ॥' इत्यप्युदाह्रियते । कपित्वजात्या स्वतः सिद्धस्य वैकृतस्येह मद्यादिभिरुत्कर्षवर्णनात् ॥

## विज्ञप्रिया

**सामान्यमिति ।** अन्यतादात्म्यमन्यभेदाग्रहो यदि वर्णित इत्यर्थः । रूपकभ्रान्तिमतोस्तु अभेदाग्रहादेवाहार्या वेति ततो भेदः । अत एवोदाहरणे व्याख्यास्यति—**भेदाग्रह** इति ।

मल्लिकेति । अविभाव्या ज्योत्स्नातोऽगृहीतभेदाः ।

## कुसुमप्रतिमा

मीलिते सदृशगुणप्रस्तावोत्थानात् सदृशगुणघटितमेव सामान्यालङ्कारं लक्षयति सामान्यमिति । सदृशैर्गुणैः प्रकृतस्य प्रस्तुतपदार्थस्य अन्वतादात्म्यमप्रस्तुतपदार्थाभेदः सामान्यं नाम अलङ्कारः स्यात् । समानगुणद्वारा । प्रस्तुताप्रस्तुतपदार्थयोरभेप्रतीतिः सामान्यमित्यर्थः । परत्र स्वगुणत्यागादित्यभिधानादत्र स्वगुणात्यागादिति लभ्यते । तेन तद्रगुणेन सह भेदः ।

सामान्यं समानता तद्घटितत्वादस्य सामान्यमिति संज्ञा ।

मल्लिकेति। मल्लिकाभिस्तदाख्यश्वेतपुष्पैश्चिता व्याप्ता धम्मिल्लाः संयतकेशा यासा ताः, तथा चारुभिश्चन्दनैश्चर्च्चिताः कृशाङ्गलेपाः, अतएव अविभाव्याः चन्द्रिकासमानवर्णन्त्वात् लोकै चन्द्रिकाभिन्नत्वेन विभावयितुमशक्त्याः, अभिसारिकाः प्रागुक्तलक्षणा नायिकाविशेषाः, चन्द्रिकासु ज्योत्स्नासु सुखं निरुद्देशं यथा स्यात्तथा यान्ति रमणान्तिकमिति शेषः।

अत्र समानश्वेतगुणद्वारा प्रस्तुताया अभिसारिकाया अप्रस्तुतायाश्चन्द्रिकायाश्च अभेदप्रतीतेः सामान्यालङ्कारः।

## विमला

सामान्यमाह, सामान्यमिति।—प्रकृतस्य—प्रस्तुतस्य, सदृशैः गुणः अन्यस्य—इतरस्य, तादात्म्यं—भिन्नत्वेनापरिचेयत्वम्, अभेदप्रतीतिरिति यावत्, सामान्यम्। यद्वा—"स्वगुणसजातीयगुणाश्रयैकरूप्यन्तु सामान्यम्। यत्र कस्यचिद्वस्तुनोऽपरित्यक्तस्वगुणस्यैव स्ववृत्तिगुणसजातीयगुणाश्रयेण सहाभिन्नतया भानं, तत् सामान्यम्। तद्गुणे व्यभिचारवारणाय अपरित्यक्तेति। अत्र स्वगुणसाजात्यं रूपवत्तव्याप्यधर्मेण शुक्लत्वादिना बोध्यम्, अन्यथा गुणत्वादिधर्मभिन्नरूपाणां साजात्यं नैव स्यात्, समानस्य भावः सामान्यमिति व्युत्पत्त्या उभयोरेकधर्मवत्ताप्रतिपादनादित्यर्थः" इति कौस्तुभाशयः।

मल्लिकेति।—अभिसारिकाः,—कान्तार्थिन्यः नायिकाः, (तदुक्तं—"कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका" इति) मल्लिकाभिः,—पुष्पविशेषैः, आचिताः,—खचिताः, धम्मिल्लाः,—संयतकेशा यासां तथोक्ताः, ("धम्मिल्ला संयताः कचाः" इत्यमरः) तथा चारुभिः,—अतिसुरभिभिः, चन्दनैः चर्चिताः,—कृताङ्गरागा इत्यर्थः, अत एव चन्द्रिकासु—ज्योत्स्नासु, अविभाव्याः,—अभिसारिकात्वेन अप्रतीयमाना इत्यर्थः, सुखं यान्ति। अत्र मल्लिकादिगुणसादृश्येन प्रकृतस्य अभिसारिकारूपस्य वस्तुनः चन्द्रिकातादात्म्यम्। न च दीक्षितादिमते अस्य मीलितोदाहरणत्वेन लिखनादिष्टापत्तिरिति वाच्यम्; सामान्योदाहरणतया लिखद्भिः नवीनैर्विरोधप्रसङ्गात्; विशेषस्त्वत्र कौस्तुभे द्रष्टव्यः। यथा वा—"सितारविन्दप्रचयेषु लीनाः संसक्तफेनेषु च सैकतेषु। कुन्दावदाताः कलहंसमालाः प्रतोयिरे श्रोत्रसुखैर्निनादैः॥" अत्र कुसुमसैकते हसानामेकगुणतया अभेदेन भानं, न च शब्देन हंसानां पृथक् प्रतीतिरस्त्येवेति वाच्यं, तत्पूर्वकाले अभेदभानस्य निर्बाधतया तदभिप्रायेणैवोदाहृतत्वात् उत्तरकालीनभदज्ञानेन पूर्वकालीनाभेदज्ञानबाधाभावात्, अत एव "वेत्रत्वचा तुल्यरुचा वधूनां कर्णाग्रतो गण्डतलागतानि। भृङ्गाः सहेलं यदि नापतिष्यन् को वेदयिष्यन्नवचम्पकानि?"॥ इति। मत्त, नैतद्युक्तम्, उत्तरप्रतिपत्त्या तिरस्कृतत्वात् पूर्वप्रतीतेर्न चमत्कारकत्वं, किन्तु उत्तरप्रतीतेरेवेति तयैश्च व्यपदेशस्य युक्तत्वात्, अन्यथा व्यतिरेकेऽप्युपमाया एवापत्तेरिति, तच्चिन्त्यम्; भेदप्रतीतेर्वनीयोत्कर्षानाधायकत्वेन तथाऽनापत्तेः तिरस्करातिरस्कारयोश्चाप्रयोजकत्वात्, अन्यथा विरोधाभासस्याप्युच्छेदापत्तेः, विरोधस्य तत्राप्यप्रविष्टत्वात्। एतेन भीलितसामान्योभयप्रतिद्वन्द्विभूतमुन्मीलितविशेषात्मकं दीक्षितालङ्कारद्वयं प्रत्याख्यातं, वर्णनीयोत्कर्षानाधायकत्वेन प्रथमवृत्तिकाभ्यां मीलितसामान्यास्यामेवान्यथासिद्धेरित्रिदिक्।

## लक्ष्मी

उक्तालङ्कारे गुणसाम्यप्रकरणोत्थानात् गुणसाम्ययुक्तमेव सामान्यं निरूपयति—**सामान्यमिति**। सदृशैः तुल्यैर्गुणैः प्रकृतस्य प्राधान्येन वर्णनीयस्य पदार्थस्य अन्यतादात्म्यम् अप्राधान्येन वर्णनीयपदार्थैक्यं सामान्यं

तन्नामालङ्कारो भवेत्। सदृशगुणद्वारा प्रकृताप्रकृतपदार्थयोर्मेलनात् तयोरुभयोरपि एकतया प्रतीतौ सामान्यमिति फलितोऽर्थः। समानयोर्भावः सामान्यमिति व्युत्पत्तिः।

**मल्लिकेति**। मल्लिकाभिः तृणशून्यपुष्पै आचिता भूषिता धमिल्लाः संयतकेशाः यासां ताः तथोक्ताः, 'तृणशून्यं तु मल्लिका' इत्यमरः तथा चारुभिः शुभ्रातिशयितत्वेन सुन्दरैः चन्दनैः चर्चिताः कृताङ्गलेपाः, अत एव अविभाव्या ज्योत्स्नातुल्यरूपत्वात् जनैः ज्योत्स्नातादात्म्येन तर्कयितुमयोग्याः, अभिसारिकाः प्रियसम्मिलनेच्छया सङ्केतस्थानगन्त्र्यः पूर्वोक्तस्वरूपा नायिकाविशेषाः, चन्द्रिकासु ज्योत्स्नासु 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः, सुखम् आनन्दपूर्वकं यथा स्यात्तथा यान्ति व्रजन्ति।

अत्र तुल्यशुभ्रगुणद्वारा प्राधान्येन वर्णनीयाया नायिकायाः ज्योत्स्नायाश्च ऐकात्म्यावगमात् सामान्यालङ्कारः।

मीलितालङ्कारादस्य को भेद इति दर्शयति—**मीलिते** इति। समानरूपेण वस्तुना वस्त्वन्तरस्य गुप्तिरूपे मीलिते इत्यर्थः। तिरोधानं गोपनम्। इह तु सामान्यालङ्कारे तु उभयोः प्रस्तुताप्रस्तुतयोः। भेदाग्रहः भिन्नत्वेन अवगमाभावः इति भेदः। न च भ्रान्तिमता सङ्करः? तत्र स्मर्यमाणस्य आरोपः, अत्र अनुभूयमानस्येति विशेषात् रूपकप्रथमातिशयोक्त्योश्च उपमेयस्य उपमानतया प्रतीतिः, अत्र तु एकरूपतया प्रतीतिरिति ततोऽपि भेदो ज्ञेयः॥

## रुचिरा

सामान्यं लक्षयति—१७९ **सदृशैः**। **गुणैः**। **प्रकृतस्य** प्रस्तुतस्य वर्ण्यस्येति यावत्। **अन्यतादात्म्यम**न्यस्याप्रस्तुतस्य तादात्म्यमभिन्नत्वम्, नतु तिरोभावः। **सामान्यं** तदाख्योऽलङ्कारः।

उदाहरति—**यथा**—**मल्लिकाचितधम्मिल्ला** मल्लिकाभिः तृणशून्यपुष्पैराचिता अलङ्कृता धम्मिल्लाः संयताः कचा यासां तथोक्ताः। 'तृणशून्यं तु मल्लिका।' इत्यमरः। **चारुचन्दनचर्चिताश्चारु** शुभ्रातिशयिततया सुन्दरं यत् चन्दनं तेन चर्चिताः कृतसर्वाङ्गरागाः। अत एव—**चन्द्रिकासु**। **अविभाव्या** भिन्नत्वेनानिश्चेयाः। **अभिसारिकाः** कान्तसङ्गाभिलाषेण सङ्केतस्थानगन्त्रयो नायिकाः। **सुखम्**। **यान्ति**। अत्र चन्द्रिकासदृशैर्मल्लिकादिगुणैश्चन्द्रिकाऽभिन्नत्वेनाभिसारिकाणां प्रत्ययः॥ २८५॥' मीलितादस्य भेदं निर्दिशति—**मीलित** इत्यादिना। स्पष्टम्।

**तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः ।**

यथा—

**'जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ।**

**नयन्मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ॥'**

मीलिते प्रकृतस्य वस्तुनो वस्त्वन्तरेणाच्छादनम् । इह तु वस्त्वन्तरगुणेनाक्रान्तता प्रतीयत इति भेदः ।

---

## विवृतिः

तद्गुणालंकारमाह—**तद्गुण इति** । अत्युत्कृष्टगुणस्य अर्थात्संनिकृष्टस्य वस्तुनोऽतिनिबिडगुणस्य ग्रहः स्फूर्तिः । अत्युत्कृष्टेति गुणविशेषणं स्वगुणतिरोधाने बीजम् ॥ **जगादेति** । अत्र प्रक्रान्तो बलदेवः कर्ता । नन्वत्रोत्कृष्टगुणेन निष्कृष्टगुणतिरोधानमस्तीति मीलितादस्य को भेद इत्यत आह—**मीलित इति** । इह तु तद्गुणे तु । संनिकृष्टगुणेन स्वगुणस्यैव तिरोधानं न तु वस्तुनः । मीलिते तु वस्तुनोऽपीति विशेषः । मीलिते स्वजातीयोत्कृष्टगुणतिरोधानम्, अत्र तु विजातीयोत्कृष्टगुणेनापकृष्टगुणतिरोधानं 'स्वगुणत्यागात्' इत्यनेन लभ्यत इत्यपि बोध्यम् । अनेन सामान्यालंकारादप्यस्य भेदस्तत्र 'सदृशैर्गुणैः' इत्युपादानात् ॥

## विज्ञप्रिया

तद्गुणालङ्कारमाह—**तद्गुण** इति । अत्युत्कृष्टस्य गुणस्य ग्रहो गुणग्रहणम् । **जगादेति** । बलभद्रवदनच्छद्मनो वदनव्याजस्य पद्मस्य पर्यन्तपातिनो मधुलिहो भ्रमरान् उदंशूनाम् उद्गतांशूनां दशनानां दन्तानामंशुभिः श्वैत्यं नयन् जगादेत्यर्थः । अत्र भ्रमराणां स्वगुणत्यागः श्वैत्यप्रापणादित्यर्थः ।

मीलितालङ्कारादस्य विशेषमाह—**मीलिते** इति । **प्रकृतस्य वस्तुन** इति । प्रकृतस्य यद्वस्तुनो गुणस्वरूपं तस्याच्छादनमग्रह इत्यर्थः । आक्रान्तता स्वाश्रयीकरणम् ।

## कुसुमप्रतिमा

ननु तुल्यरूपेण वस्तुना वस्त्वन्तरस्व गुप्तिः समानगुणवशात् प्रस्तुताप्रस्तुतयोर्वस्तुनोरभेदप्रतीतिश्च पर्य्यालोचने एकरूपतयैव पर्य्यवश्यतोश्चनयोर्मीलितसामान्वयोः को भेद इत्याह मीलित इति । तिरोधानमाच्छादनम् । इह तु सामान्ये तु भेदाग्रहो भिन्नतया प्रतीत्यभावः । मीलिते कस्यचिद्रगुणस्योत्कर्षः कस्यचिच्च निष्कर्षः, सामान्ये तु उभयगुणयोः समानतैवेति भेदः ।

गुणप्रस्तावाद्रगुणघटितमेव तद्रगुणालङ्कार निरूपयति तद्रगुणइति । स्वगुणत्यागदात्मगुणत्यागं कृत्वा, अत्युत्कृष्टगुणस्य ग्रहो ग्रहणं तद्रगुणो नाम अलङ्कारः स्यात् । तस्य उत्कृष्टगुणस्य गुण यस्मिन्निति तद्रगुणः ।

जगादेति। शिशुपालवधद्वितीयसर्गस्थमिदं पद्यम्। उदया उन्नता ये दशना दन्तास्तेषामंशुभिः शुभ्रकिरणैः, वदनमेव छद्म व्याजं यस्य तादृशं यत् पद्मं तस्य पर्य्यन्ते प्रान्तभागे पतितुं शीलं येषां तान्, मधुलिहो भ्रमरान्, श्लेत्यं श्वेतवर्णतां नयन् प्रापयन् सन्, जगाद बलराम उवाच।

अत्र भ्रमरैः स्वकीयकृष्णगुणं परित्यज्य तदपेक्षया अत्युत्कृष्टश्चेत्यगुणग्रहणात्तद्रगुणः। वस्तुतः स्वगुणत्यागाभावेऽपिऽपि गुणान्तरेणाक्रान्तिवशादेव स्वगुणत्याग इव प्रतीयत इति बोध्यम्।

ननुदाहृते श्वैत्यरूपेण उत्कृष्टगुणेन निकृष्टगुणस्य कृष्णरूपस्य तिरोधानान्मीलितस्यापि प्रसक्तिरित्यनयोः को भेद इत्याह मीलित इति। वस्त्वन्तरेण सजातीयगुणविशिष्टेनेत्यर्थः। वस्त्वन्तरगुणेन विजातीयेनेति तात्पर्य्यम्, आक्रान्तता अभिभूतता। तथा च सजातीयोत्कृष्टगुणेन सजातीयनिकृष्टगुणस्य तिरोधाने मीलितम्, विजातीयोत्कृष्टगुणेन विजातीयनिकृष्टगुणस्य तिरोधाने तु तद्रगुण इत्यनयोर्भेदः। तत्र उत्कर्षनिकर्षौ तु अधिकत्वन्यूनत्वरूपावेवेति बोध्यम्। सामान्यालङ्कारेण सह अस्य भेदस्तु तत्रैव दर्शितः।

## विमला

तद्गुणमाह, तद्गुण इति।—स्वस्य गुणत्यागात् अत्युत्कृष्टस्य गुणस्य—सन्निकृष्टस्य वस्तुनः अतिनिविड़गुणस्य, ग्रहः,—ग्रहणं, स्फूर्त्तिरिति यावत्, तद्गुणः। (अत्युत्कृष्टेति गुणविशेषणं स्वगुणतिरोधाने बीजम्) तथा च, परकीयैर्गुणैस्तरोहितगुणत्वे सति परकीयगुणशालितया प्रत्ययस्तद्गुण इति निष्कृष्टोऽर्थः। अत्रेदं बोध्यं—यत्र परिमितगुणस्य वस्तुनः समीपवर्त्तिपकृष्टवस्तुगुणस्य स्वीकरणं स गद्गणः, तस्योत्कृष्टगुणस्य गुणा अस्मिन् इति कृत्वा। न चेदं मौलितं, तत्र हि प्रकृते वस्तु वस्त्व, रणाच्छादितत्वेन प्रतीयते, इह तु अनपह्नुतप्यरूपमेव प्रकृतम्। यत्र परिमितगुण वस्तु तस्य समीपवर्त्तिप्रकृष्टवस्तुगुणस्वीकारे कुरुते सतद्गुणः, वस्त्वन्तरगुणोपरक्ततया प्रतीयते इत्यस्त्यनयोर्भेदः इति सर्वस्वकारः।

जगादेति।—उदयदशनांशुभिः,—उन्नतदन्तकिरणैः, वदनमेव छद्म—छलं यस्य तादृशं, यत् पद्म तस्य पर्य्यन्ते पतन्तीति तथोक्तान् मधुलिहः,—भ्रमरान्, श्वैत्यं—धावल्यं, नयन्—प्रापयन्, जगाद—उवाच। अत्र प्रक्रान्तो बलदेव कर्त्ता। इह मधुलिहां कृष्णवर्णरूपध्वगुणस्यागात् अत्युत्कृष्टस्य श्वैत्यगुणस्य ग्रहणम्। शिशुपालवधस्येदं पद्यम्। यथा वा—"गाढ़ाश्लेषावकीर्णचन्दनरजःपुञ्जप्रसङ्गादियं शय्या सम्प्रति कोमलाङ्गि! कठिनेत्यारोप्य मां वचसि। गाढ़ोष्ठग्रहपूर्वमाकुलतया पादाग्रसन्दशकेनाकृष्याम्बरमात्मनो यदुचितं धूर्त्तेन तत् प्रस्तुतम्॥" इति। अत्र शय्यास्पर्शतिरोधानेन चन्दनपरागीयकठिनस्पर्शसम्बन्धः। उक्तः। इह सर्वत्र तिरोधायकगुणस्य तिरोधेयगुणनिष्ठात्यन्ताभावप्रतियोगिगुणत्वव्याप्यजात्यवच्छिन्नत्वमवधेयम्। यथा वा—"विभिन्नवर्णा गरुड़ाग्रजेन सूर्य्यस्य रथ्यः परितः स्फुरन्त्या। रक्षैर्पुनष्टत्र रुचं रुचा स्वामानिन्दिरं वंशकरीरनीलैः॥" अत्र रवितुरगापेक्षया गरुड़ाराजस्य तदपेक्ष्या च हरिन्मणीनांम प्रगुणवर्णता इति सारः।

नन्वत्रोत्कृष्टगुणेन निकृष्टगुणतिरोधानमस्तीति मीलितादस्य को भेदः? इत्यत आह, मीलिते इति।—इह तु—तद्गणे तु, सन्निकृष्टगुणेन स्वगुणस्यैव तिरोधानं, न तु वस्तुनः, मीलिते तु वस्तुनोऽपीति विशेषः; मीलिते स्वजातीयोत्वृष्टगुणतिरोधानम्, अत्र तु विजातीयोत्कृष्टगुणेन अपकृष्टगुणतिरोधानं "स्वगुणत्यागात्" इत्यनेन लभ्यते इत्यपि बोध्यम्। अनेन सामान्यालङ्कारादप्यस्य भेदः, तत्र "सदृशैर्गुणैः" इत्युपादानात्।

## लक्ष्मी

गुणप्रकरणात् गुणयुक्तमेव तद्गुणालङ्कारं लक्षयति—**तद्गुण** इति। 'गुणोऽप्रधाने रूपादौ मौर्व्यां सूत्रे वृकोदरे' इति कोशात् गुणशब्दोऽत्र रूपवाची बोध्यः। तथा च स्वगुणत्यागात् स्वरूपत्यागं विधायेत्यर्थः, ल्यब्लोपे पञ्चमीयम्, अत्युत्कृष्टगुणस्य अत्यन्तोत्कर्षस्वरूपस्य ग्रहः ग्रहणम्, तस्य उत्कृष्टगुणस्य गुणो यत्रेति व्युत्पत्त्या **तद्गुणः** तन्नामालङ्कारः।

**जगादे**ति। शिशुपालवधद्वितीयसर्गे इन्द्रप्रस्थं शिशुपालं प्रति वा गन्तव्यमिति मन्त्रणायां श्रीकृष्णे उवते सति श्रीबलभद्रोक्तिरियम्। उदग्रा उन्नता ये दशना दन्तास्तेषाम्, अंशुभिः श्वेतमयूखैः, वदनं मुखमेव छद्म कपटं यस्य तथाविधं यत् पद्मं कमलं तस्य पर्यन्तः प्रान्तभागः तत्र पतितुं शीलं येषां तान् मुखकमललोलुपानित्यर्थः, मधुलिहः भ्रमरान् श्वैत्यं शुभ्ररूपतां नयन प्रापयन् सन् (द्विकर्मकोऽयं धातुः) जगाद उवाच।

अत्र मधुलिड्भिः स्वीयश्यामरूपं त्यक्त्वा तदपेक्षया अत्यन्तोत्कर्षशुभ्ररूपग्रहणात्तद्गुणालङ्कारः।

नन्वस्यालङ्कारस्यापि उत्कृष्टगुणेन निकृष्टगुणस्य गोपनरूपात् मीलितालङ्कारात् को भेद इति जिज्ञासायामाह-–**मीलिते** इति। वस्त्वन्तरेण समानोत्कृष्टगुणेन आच्छादनं तिरोतिरोधानम्, इह तु तद्गुणालङ्कारे तु वस्त्वन्तरगुणेन असमानेनेतिभावः, आक्रान्तता अभिभूतता सामान्यस्वगुणत्यागाभावः, अत्र तु तत्त्याग इति भेदः। भ्रान्तिमति स्मर्यमाणस्यारोपः अत्र च गृह्यमाणस्येति भेदः, भ्रान्तेर्निबद्धत्वाभावादपि भेदो ज्ञेयः।

## रुचिरा

तद्गुणं लक्षयति—१८० **स्वगुणत्यागात्** स्वस्य प्रस्तुतस्य गुणस्तस्य त्यागस्तस्मात् तं कृत्वेत्यर्थः। ल्यबर्थेयं पञ्चमी। **अत्युत्कृष्टगुणग्रहो**ऽत्युत्कृष्टस्याप्रस्तुतस्य गुणस्तस्य ग्रहो ग्रहणम्। तद्गुणः सोऽत्युत्कृष्टो वस्त्वन्तरगतो गुणो यत्र तथोक्तः, तन्नामाऽलङ्कारः॥ १४३॥

उदाहरति—**यथा**। '**वदनच्छद्मपद्मपर्य्यन्तपातिनो** वदनं मुखं छद्म कपटो यस्य तादृशं यत् पद्मं तस्य पर्य्यन्तः तत्र पातिनस्तान्। मुखकमललुब्धानित्यर्थः। **मधुलिहो** भ्रमरान्। **उदग्रदशनांशुभिरुद्रमा** उन्नता ये दशनांशवो दन्तकान्तयस्तैः। **श्वैत्यम्**। **नयन्** प्रापयन् (द्विकर्मकोऽयं धातुः)। बलदेव इति प्रकृतोऽर्थः। **जगाद**। अत्र भ्रमराणां निष्कृष्टस्य मालिन्यस्य त्यागपूर्वकमुत्कृष्टस्य श्वैत्यस्य ग्रहणम्। शिशुपालवधस्येदं पद्यम्॥ २८६॥' ननु उत्कृष्टेन निकृष्टस्य तिरोधानसाम्ये मीलितादस्य को भेदः? इत्याशङ्क्याह—**मीलित** इत्यादि। स्पष्टोऽर्थः। अयम्भावः—मीलिते वस्तुच्चरितरोभावः, अत्र गुणमात्रस्येति विशेषः। इति।

**तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्रगुणः ॥ ९० ॥**

यथा—

**'हन्त सान्द्रेण रागेण भृतेऽपि हृदये मम।**

**गुणगौर निषण्णोऽपि कथं नाम न रज्यसि ॥'**

यथा वा—

---

## विवृति

अतद्गुणालंकारमाह—**तद्रूपेति**। तद्रूपस्य उत्कृष्टगुणवस्तुनो गुणस्याननुहारः। अपकृष्टगुणेन वस्तूना अग्रहणमित्यर्थः। **हेताविति**। उत्कृष्टगुणवस्तुसंनिधानमत्र हेतुरवधेयः ॥

रागेण अनुरागेण भृते पूर्णे। गुणगौर यशः श्कुल। शुक्लगुणस्य रक्तगुणयोगेन रक्तत्वं सुतरां जायते। अत्र श्लेषादनुरागरक्तिम्नोरेकत्वाध्यासादेतदुपपद्यते। अत्र प्राकरणिकेन नायकेन प्राकरणिकस्य नायिकाहृदयस्य गुणाग्रहणम् ॥

## विज्ञप्रिया

अतद्गुणालङ्कारमाह—**तद्रूपे**ति। अननुहारोऽपग्रहणम्। हेतौ ग्रहणहेतौ।

**हन्त सान्द्रे**ति। अननुरक्तं नायकं प्रति अनुरक्ताया नायिकाया उक्तिरियम्। **गुणगौरे**ति। गुणेन गौर इति, गुणो गौरो यस्येति समासेन च सम्बोधनम्। हृदये निषण्णोऽपीत्यन्वयः। रागपदरज्यसिपदे रक्तिमानुरागयोः शिलष्टे। अत्र रागभृतिहृदये निषण्णत्वं रक्तहेतुः।

## कुसुमप्रतिमा

तद्रगुणवैपरीत्ये अतद्रगुणं निर्वक्ति तद्रूपेति। हेतो सत्यपि सन्निधानादिरूपे परगुणहस्तकारणे विद्यमानेऽपि, तद्रूपस्य परगुणस्य अननुहारः अग्रहणन्तु, अतद्रगुणो नाम अलङ्कारः स्यात्। न विद्यते तस्य परस्य गुणो यस्मिन्नित्यतद्रगुणेः।

प्रकृतेन-प्रकृतगुणाग्रहणे उदाहरति हन्तेति। अननुरक्तं पतिं प्रति अनुरक्ताः। कस्याश्चिदुक्तिरियम्। हन्त खेदे। हे गुणगौर! विद्याविनयादिगुणजनितयशसा गौरवर्ण! सान्द्रेण गाढ़ेन रागेण अनुरागात्मकरक्तिम्ना। भूतेऽपि परिपूर्णेऽपि मम हृदये निषणोऽपि अवस्थितोऽपि त्वं कथं नाम न रज्यसि नानुरक्तो भवसि न लोहितो भवसि च।

अत्र रक्तिमपूर्ण हृदयावस्थानरूपे कारणे सत्यपि तदीयरक्तिमाग्रहणादतद्रगुणः।

प्रकृतेन अप्रकृतगुणाग्रहणे उदाहर्त्तुमाह यथा वेति।

## विमला

अतद्गुणमाह, तद्रूपेति ।—हेतौ सत्यपि [उत्कृष्टगुणवस्तुसन्निधानमत्र हेतुरवधेयः] तस्य रूपस्य—उत्कृष्टगुणवस्तुनो गुणस्य, अननुहारः,—अपकृष्टगुणेन वस्तुता अग्रहणम्, अतद्गुणः ।

हन्तेति ।—नायकं प्रति कस्याश्चिदुक्तिरियम् । गुणगौर !—हे गुणोज्ज्वल ! यशः शुक्ल ! इत्यर्थः, शुक्लगुणस्य रक्तगुणयोगेन रक्तत्वं सुतरां जायते इति भावः, हन्त—खेदे, सान्द्रेण—घनेन, रागेण—अनुरागेण, लौहित्येन च, भृते—परिपूर्णेऽपि, मम हृदये निषणोऽपि—आसीनोऽपि, त्वं कथं नाम न रज्यसि ?—न अनुरागभाक् लौहितश्च भवसीत्यर्थः । अत्र रक्ते स्थाने स्थितिरूपहेतौ सत्यपि रक्तताया अपग्रहणं, श्लेषादनुरागरक्तिम्नारेकत्वाध्यासादेतदुपपद्यते । इह प्राकरणिकेन नायकेन प्राकरणिकस्य नायिकाहृदयस्य गुणाग्रहणम् ।

## लक्ष्मी

तद्रगुणविरुद्धमतद्रगुणं लक्षयति—**तद्रूपेति** । 'हेतौ सामीप्यादिरूपेऽन्यगुणग्रहणरूपे कारणे सत्यपि विद्यमानेऽपि, तद्द्रूगुपस्य तद्रगुणस्य अननुहारः ग्रहगाभावस्तु तस्याधिकगुणस्यास्मिन् गुणा न सन्तीति व्युत्पत्त्या अतद्रगुणः तन्नामालङ्कारो भवेत् ।

प्रस्तुतेन प्रस्तुतगुणग्रहणे, प्रस्तुतेन अप्रस्तुतगुणाग्रहणे चायं भवति । तत्राद्योदाहरणं दर्शयति—**हन्तेति** । वल्लभं प्रति कस्याश्चिदुक्तिरियम् । हन्तेति खेदे । गुणैः विद्याविनयादिगुणजकीर्त्या गौरः शुद्धस्तसम्बुद्धौ हे गुणगौर ! सान्द्रेण निबिडेन रागेण अनुरागरूपरक्तिम्ना भृतेऽपि सुसम्पन्नेऽपि मम हृदये चेतसि निषण्णोऽपि उपविष्टोऽपि त्वं कथं नाम न रज्यसि अनुरक्तो न भवसि नापि रक्तवर्णा भवसि चेत्यर्थः ।

अत्र रागसुसम्पन्नहृदयनिषण्णरूपहेतौ सत्यपि तद्रक्तत्वाग्रहणात् अतद्रगुणालङ्कारः ।

## रुचिरा

अतद्गुणं लक्षयति—१८१ **हेतौ** कारणे । **सति** । **अपि** । *तद्रूपाननुहारस्तस्या*प्रस्तुतस्य रूपं स्वरूपं तस्याननुहारोऽनुहाराभावो ग्रहणाभाव इति यावत् । तु अतद्गुणस्तन्नामाऽलङ्कार इत्यर्थः । परगुणग्रहणसामग्रीसत्त्वेऽपि परगुणग्रहणमतद्गुणो नामलङ्कार इति फलितोऽर्थः ।

उदाहरति—यथा—'हे **गुणगौर** गुणैर्गौरः शुद्धस्तत्सम्बुद्धौ तथोक्त ! **हन्त** कष्टम् । **सान्द्रेण** । **रागेणा**नुरागेण रक्तिम्णा च । **भृते** पूर्णे । **अपि** । **मम** । **हृदये** । **निषण्णः** । **अपि** । **कथम्** । **नाम** । **न रज्यसि** रक्तो भवसीत्यर्थः । अत्र रक्तस्थाने निषण्णत्वरूपे हेतौ सत्यपि रक्तत्वाग्रहणम् । कान्तं प्रति कस्याश्चिदुक्तिरियम् ॥ २८७ ॥' उदाहरणान्तरं निर्दिशति—

**'गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।**
**राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ।।'**

पूर्वत्रातिरक्तहृदयसंपर्कात्प्राप्तवदपि गुणगौरशब्दवाच्यस्य नायकस्य रक्तत्वं न निष्पन्नम् । उत्तरत्राप्रस्तुतप्रशंसायां विद्यमानायामपि गङ्गायमुनापेक्षया प्रकृतस्य हंसस्य गङ्गायमुनयोः संपर्केऽपि न तद्रूपता । अत्र च गुणाग्रहणरूपविच्छित्तिविशेषाश्रयाद्विशेषोक्तेर्भेदः । वर्णान्तरोत्पत्त्यभावाच्च विषमात् ।

---

## विवृतिः

प्राकरणिकेनाप्राकरणिकगुणाग्रहणेऽप्ययमलंकार इत्याह—**राजहंसेति** । चीयते गङ्गाजलसंपर्केणोपचीयते । अपचीयते यमुनाजलसंपर्केणोपक्षीयते ।। **प्राप्तवदपि** भवितुं योग्यमपि । ननूत्तरत्राप्रस्तुतप्रशंसया स्वसंबन्धिगुणग्राही जन एव प्रकृतो न तु राजहंस इति प्रकृतस्याप्रकृतगुणाग्रहणोदाहरणं कथमेतत्संगच्छतामत आह—उत्तरत्रेति । प्रस्तुतस्य प्रतिपाद्यत्वेन प्राकरणिकस्य गङ्गायमुनाम्ब्वपेक्षया प्रतिपाद्यत्वेन राजहंसस्यापेक्षिकं प्रकृतत्वमिति भावः । नन्वत्र कारणसत्त्वे कार्यानुत्पत्तिरस्तीति विशेषोक्त्यलंकार एवायमित्यत आह—**अत्र चेति** । विच्छित्तिविशेषाश्रयाद् वैचित्र्यविशेषसंबन्धात् । कारणसत्त्वे कार्यानुत्पत्तिरूपवैचित्र्यादुक्तवैचित्र्यं विलक्षणं तत्प्रयोजकत्वादलंकास्य वैलक्षण्यमिति भावः । ननु नायिकाहृदयादिरूपकारणगुणस्य विरुद्धस्तसंपृक्तनायकादिरूपकार्यगुण इति विषमालंकार एवायं संपर्कस्य कार्यत्वासंपृक्तस्यापि कार्यत्वमुपर्यत इत्यभिप्रायेणाह—**वर्णान्तरेति** । कार्यस्य कारणगुणविरुद्धगुणोत्पत्तावेव विषमस्य विषयः । प्रकृते तु तदभावान्न तद्विषय इति भावः । **विषमादिति** । भेद इत्यन्वयः ।।

## विज्ञप्रिया

उदाहृतश्लोकद्वयेपि एतद्रगुणाग्रहणमुदाहरणद्वयवैलक्ष्यण्यं चाह—**पूर्वत्रेति** । अतिरिक्तहृदयं रागभृतत्वेनातिरिक्तगुणं हृदयं प्राप्तवत् प्राप्तप्रायं रक्तत्वं न निष्पन्नम्, नायकस्येत्यर्थः । इत्थमत्र प्रकृतेन नायकस्य प्रकृतस्य हृदयस्य गुणाग्रहणं दर्शयित्वा प्रकृततोऽप्रकृतगुणग्रहणरूपफलाभावमुत्तरश्लोके दर्शयति—**उत्तरत्रेति** । यद्यपि राजहंसोप्यप्रकृतस्तथापि सम्बोध्यत्वेनाऽऽपेक्षिकं तस्य प्रकृतत्वं दर्शयन्नाह—**अप्रस्तुतप्रशंसायामिति** । सति हेतौ फलाभावरूपाया विशेषोक्तेरस्य भेदमाह—**अत्र चेति** । विशेषोक्तौ सामान्यत एव फलाभावः इह तु गुणाग्रहणरूपफलाभावरूपो भङ्गिविशेष इति भेद इत्यर्थः ।

ननु कार्यस्य कारणविरोधिगुणवशात् कार्यस्य कारणगुणाग्रहणं विषमालङ्कारेप्यस्ति चेद् यद्यपि दर्शितोदाहरणद्वये कार्यकारणभावसत्त्वात् तादृशस्याऽतद्गुणस्य विषमालङ्कारत्वाविशेष इत्याह—**वर्णान्तरेति** । विषमालङ्कारे कारणविरोधिगुणान्तरोत्पत्तिरिति भेद इत्यर्थः ।

## कुसुमप्रतिमा

गाङ्गमिति; तपस्विगृहे वेश्यागृहे च भिक्षां कुर्वन्तं कश्चित् साधुं प्रति कस्यचिदुक्तिरियम् । हे राजहंस ! गङ्गाया इदं गाङ्गम्, अम्बु जलम्, सित श्वेतवर्णम्, यदुनाया इदं यामुनम्, अम्बुजलञ्च कज्जलाभं कज्जलतुल्यकृष्णवर्णम्, उभयत्र तयोरुभयोरपि मज्जतः अवगाहमानस्य तव सैव पूर्वेव शुभ्रता देहधवलता, न च चीयते शुभ्रगङ्गाजलसम्बन्धात् न च वर्द्धते, न च अपचीयते कृष्णयमुनाजलसम्बन्धादपि न च ह्रासं प्राप्नोति एतदाश्चर्य्यमिति भावः ।

अत्र मज्जनरूपे कारणे सत्यपि गङ्गाजलगतशुभ्रतायाः यमुनाजलगतकृष्णतायाश्च ग्रहणादतद्रगुणः ।

उक्तोदाहरणद्वये क्रमेण लक्षणं सङ्गमयति पूर्ववति । हन्त । सान्द्रेण इत्यादावित्यर्थः । प्राप्तवदपि प्राप्तुमुचितमपि । न निष्पन्नमति । तेन अतद्रगुणालङ्कार इति भावः । उत्तरत्र "गाङ्गमम्बु" इत्यादौ । ननु अप्रस्तुतप्रशंसाया विद्यमानत्वे राजहंसस्य प्रकृतत्वं कुत इत्याह गङ्गायमुगापेक्षयेति । तथा च प्रकृतत्वं नाम वर्णनीयम्; तेन राजहंसस्य वास्तविकप्रकृतिभिक्षुमपेक्ष्य अप्रकृतत्वेऽपि गङ्गा यमुनापेक्षया अधिकवर्णनीयत्वात् प्रकृतत्वमेवेति भावः । न तद्रूपता न श्वेतरूपता न कृष्णरूपता वा । अतएवात्रापि अतद्रगुणालङ्कार इत्याशयः ।

ननु उभयोरेव लक्षणयोः सर्वथैकरूपत्वादनेनातद्रगुणेन सह प्रागुक्तविशेषोक्तेः को भेद इत्याह अत्र चेति । अतद्रगुणे चेत्यर्थः । चकारस्त्वर्थ । गुंणाग्रहणरूपो यो विच्छित्तिविशेषो वैचित्रयातिरेकस्तस्य आश्रयादवलम्बनात् । तथा च वैचित्र्यवैषम्यान्नाम्नोऽपि वैषम्यमिति भावः ।

अत्र तथापि "हन्त ! सान्द्रेण" इत्यादौ नायकावस्थानं प्रति कारणभूते नायिकाहृदये रक्तो गुणः तदवस्थानरूपकार्य्यवन्नायके तु गौरी गुण इति कार्य्यकारणगुणयोर्विरुद्धत्वाद्विषमालङ्कारेण सह अस्यातद्रगुणालङ्कारस्य को भेद इत्याह वर्णेति । वर्णान्तरस्य रक्तविपरीतगुणान्तरस्य उत्पत्त्यभावात् विषमाद्भेद इत्यनुषज्यते । तथा चोक्तोदाहरणे नायकगतो गौरी गुणो नोत्पन्नः, किन्तु स्थित एव; विषमालङ्कारलक्षणे तु कार्य्यगतविरुद्धगुणोत्पत्तिरेव विवक्षितेति भावः । वस्तुतस्तु उक्तोदाहरणद्वये विषमालङ्कारप्रसक्तिरेव नास्ति, नायकं राजहंसञ्च प्रति नायिकाहृदयस्य गङ्गायमुनयोश्च कारणत्वाभावात्, अवस्थानादिक्रियायाः कार्य्यत्वेन तद्वतोऽपि कार्य्यत्वाङ्गीकारस्य अन्याय्यत्वादिति ध्येयम् ।

## विमला

प्राकरणिकेनाप्राकरणिकगुणाग्रहणेऽप्ययमलङ्कार इत्याह, गाङ्गमिति ।—हे राजहंस ! गाङ्ग—गङ्गा इदं, गङ्गासम्बन्धीत्यर्थः,—अम्बु—जलं, मितं—शुभ्रं, यामुनम् अम्बु—यमुनासम्बन्धि जलं, कज्जलाभं—कज्जलसदृशगुणवर्णमित्यर्थः, उभयत्र—गङ्गाजले यमुनाजले च, मज्जतः तव मैव शुभ्रता न च धीयते—न च वर्द्धते, गङ्गाजलसम्पर्केणेति भावः, न च अपश्योयते—ह्रासं गच्छति, यमुनाजलमन्यर्केमेत्याशयः । अत्र शुभ्रताया हेतौ सत्यपि तदग्रहणम् । अत्र रथोद्धता च्छन्दः,—"रात् परैर्नरलगै रथोद्धता" इति । यथा वा—ध्माता भालतलानलैः कवलिता कण्ठस्थहालाहलैरालीढ़ाऽश्च जटाटवीवलयितैराशीविषाणां गणैः । कीर्णा भस्मभिराहताऽस्थिपटलैर्विद्धा जटाग्रैरपि स्वीयामुञ्झति माधुरीं हरशिरोरत्नं किमिन्दोः कला ?" अत्र प्राकरणिकया चन्द्रकलया अप्राकरणिकानामनलहालाहलादिगुणानामग्रहणम् ।

पूर्वत्रेति ।—प्राप्तवदपि—भवितुं योग्यमपि इत्यर्थः । ननु उत्तरत्राप्रस्तुत—प्रशंसया स्वसम्बन्धिगुण-ग्राही जन एव प्रकृतः, न तु राजहंस इति प्रकृतस्याप्रकृतगुणाग्रहणोदाहरणं कथमेतत् सङ्गच्छताम् ? अत आह, उत्तरत्रेति ।—प्रस्तुतस्य प्रतिपाद्यत्वेन प्राकरणिकस्य गङ्गायमुनाम्बुपेक्षया प्रतिपाद्यत्वेन राजहसस्यापेक्षिकं प्रकृत-त्वमिति भावः । नन्वत्र कारणसत्त्वे कार्य्यानुत्पत्तिरस्तीति विशेषोक्त्यलङ्कार एवायमित्यत आह, अत्र चेति ।—गुणाग्रहणरूपा या विच्छित्तिः,—वैचित्रयं, तस्या विशेषः,—वैशिष्ट्यं, तस्य आश्रयात्—वैचित्रयविशेषसम्बन्धात् इत्यर्थः, कारणसत्त्वे कार्य्यानुत्पत्तिरूपवैचित्रयादुक्तवैचित्रयं विलक्षणं, तत्प्रयोजकत्वादलङ्कारस्य वैलक्षणस्यमिति भावः । विशेषोक्तेः "सति हेतौ गुणाभावरूपायाः" भेदः,—सामान्यविशेषभावेनेति भावः । ननु नायिकाहृदयादि-रूपकारणगुणस्य विरुद्धस्तत्सम्पृक्तानायकादिरूपकार्य्यगुण इति विषमालङ्कार एवायं, सम्पर्कस्य कार्य्यत्वात् सम्पृक्तस्यापि कार्य्यत्वमुपचर्य्यते इत्यभिप्रायेणाह, वर्णान्तरेति ।—कार्य्यस्य कारणगुणविरुद्धगुणोत्पत्तावेव विष-मस्य विषयः, प्रकृते तु तदभावान्न तद्विषय इति भावः । विषमादिति, भेद इत्यन्वयः । तथा हि, "अत्राक्षिपन्ति—सत्यपि परगुणग्रहणहेतौ तद्रूपकार्य्याभावात् विशेषोक्तितो नातिरिच्यते एवायं, न चात्र कार्य्यकारणभावो न विवक्षितः, किन्तु धर्म्यन्तरसन्निधानेऽपि तद्गुणग्रहणाभाव एवेति वाच्यम्, अपि शब्देन विरोधस्मरणात्, विरोधस्य कार्य्यकारणभावविवक्षाया एव समुल्लासात्, अन्यथा कारणाभावेऽपि कार्य्यानुत्पत्तौ विरोधानुपपत्तिप्रसङ्गात् इति । अत्रोच्यते—कारणसत्त्वे कार्य्यानुपपत्तिसाम्येऽपि यत्राभावप्रतियोगिताऽवच्छेदकस्य तद्धर्मावच्छिन्नकार-णताऽवच्छेदकप्रतियोगिकार्य्यताऽऽवच्छेदकत्वं विवक्षितं, तत्र विशेषोक्तिः, यत्र तु अभावप्रतियोगिनः तन्निष्ठका-रणतानिरूपितकार्य्यताशालित्वामात्रं तत्रातद्गुण इति विभागात्" इति कौस्तुभाशयः ।

## लक्ष्मी

द्वितीयभेदोदाहरणं दर्शयितुमाह—**यथा वेति** ।

**गाङ्गमिति** । गणिकागृहे तपस्विगृहे च भिक्षयन्तं कञ्चन प्रति कस्यचिद्विदग्धस्योक्तिरियम् । हंसानां राजा राजहंसः 'राजदन्तादिषु परम्' २/२/३१ इति पाणिनीयसूत्रे राजदन्तादिषु पाठात् हंसशब्दस्य परनिपातः, तत्सम्बुद्धौ हे राजहंस पक्षिविशेष ! 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः, गङ्गाया इदं गाङ्गम् गङ्गासम्बन्धि अम्बु सलिलम्, सितं शुभ्रवर्णं यमुनाया इदं यामुनं यमुनासम्बन्धि, अम्बु सलिलञ्च कज्जलाभं कज्जलसदृशं कृष्णवर्णम्, उभयत्र गङ्गायमुनयोः सितासिताम्बुनीत्यर्थः प्रयागतीर्थ इति तात्पर्यम्, मज्जतः स्नानं विदधतः तव सैव पूर्वैव शुभ्रता शरीरस्वच्छता न चीयते गङ्गाजलसम्पर्केण न वर्धते न च अपचीयते श्यामयमुनाम्बुसम्पर्केण न च हसति एतन्महदाश्चर्यमित्याशयः । **रथोद्धताच्छन्दः**, तल्लक्षणन्तु 'रात्परैर्नलगै रथोद्धता' इति ।

उभयोदाहरणे लक्षमं सङ्घटयति—**पूर्वत्रेति** । 'हन्त ! सान्द्रेण' इत्यादौ पूर्वस्मिन्नुदाहरण इत्यर्थः, अति-रिक्तम् अत्यन्तमनुरक्तम्, यद्वा अत्यन्तं शोणवर्णं यत् हृदयं तस्य सम्पर्कः सम्बन्धः तस्मात्, प्राप्तवदपि लब्धुमु-चितमपि, गुणगौरववाच्यस्य गुणागौरवपदाभिधेयस्य । न निष्पन्नं न जातम्, तेन अतद्रगुणालङ्कार इत्याशयः । इत्थमत्र प्रस्तुतेन नायकस्य प्रस्तुतस्य हृदयस्य गुणाग्रहणं दर्शयित्वा प्रस्तुताऽप्रस्तुतगुणग्रहणरूपफलाभावमुत्तरपद्ये दर्शयति—**उत्तरत्रेति** 'गाङ्गमम्बु' इत्यादावुत्तरस्मिन्नुदाहरण इत्यर्थः, यद्यपि राजहंसोऽप्यप्रस्तुततस्तथापि सम्बोध्यत्वेऽपि पुरुषान्तरेणापेक्षिकं तस्य प्रस्तुत्वमिति दर्शयन्नाह—**अप्रस्तुतप्रशंसायामिति** । गङ्गायमुनयोः गङ्गा-यमुनासम्बन्ध्यम्बुनोः न तद्रूपता तयोर्गङ्गायमुनासम्बन्ध्यम्बुनो रूपं तदिव रूपं त्रस्य तस्य भावः तत्ता न शुभ्र रूपता न वा श्यामरूपतेत्यर्थः ।

नन्वेवमपि हेतौ सति फलाभावरूपा विशेषोक्तिरेव किं न स्यादित्याशङ्कायामाह—**अत्र** चेति। अतद्गुणे चेत्यर्थः। अत्र त्वर्थे चो बोध्यः। गुणस्याग्रहणं तद्रूपो यो विच्छित्तिविशेषश्चमत्कारातिशयस्तस्य आश्रयात् अवलम्बनात्। तथा च विशेषोक्तौ सामान्यत एव फलाभावः, इह तु गुणाग्रहणरूपफलाभावरूपो वैचित्र्यविशेष इति स्पष्टं भेद इत्याशयः।

ननु कार्यस्य कारणगुणविरोधिवशात् कार्यस्य कारणगुणाग्रहणं विषमालङ्कारेऽप्यस्ति, प्रकृते 'हन्त ! सान्द्रेण' इत्यादौ रागादिरूपस्य गुणस्य नायके सम्पर्काभावरूपकार्यसत्त्वेनातद्गुणस्य विषमालङ्कारत्वाविशेष एवेत्यत आह—**वर्णान्तरे**ति। वर्णान्तरस्य रक्तविरोध्यन्यगुणस्य उत्पत्त्यभावात् अजननात् विषमात् तन्नामकालङ्कारात् 'भेद' इति पूर्वतोऽनुवर्तते। विषमे कारणगुणेभ्यः कार्यगतविरुद्धगुणोक्तिः, अत्र च गुणोत्पत्त्यभाव एव; तथाचोक्तोदाहरणे नायकगतो रक्तविरोधिगौरो गुणो नोत्पन्नः किन्तु स्थित एवत्यनयोर्विशेष इतिभावः।

**आधुनिकास्तु**—उभयत्रापि विषमालङ्कारप्राप्तिरेव नास्ति, नायकं राजहंसं प्रति नायिकाहृदयस्य गङ्गायमुनाम्बुनोश्च हेतुत्वाभावात्, निषण्णादिक्रियायाः कार्यत्वेन तद्वतोऽपि कार्यत्वस्वीकारस्यानुचितत्वादिति वदन्ति।

## रुचिरा

'हे **राजहंस**! **गाङ्गं** गङ्गासम्बन्धि। **सितं** शुभ्रम्। **अम्बु** जलम्। **यामुनं** यमुनासम्बन्धि। **कज्जालाभं** कज्जलस्याभेवाभा यस्य तत्तथोक्तम्। **अम्बु** जलम्। इत्येवम्भूते। **उभयत्र** गङ्गायमुनयोः सितासिताम्बुनीति भावः। **मज्जतो** बाढं स्नातः। **तव**। **सा** सहजा। **एव**। **शुभ्रता**। असौ—**च** **णन**। **चीयते** गङ्गाजलसम्पर्केम वर्धते। **नच** नवेत्यर्थः। **अपचीयते** हसति। अत्र मज्जनहेतुसत्त्वेऽपिसितासितत्वाग्रहणम्। रथोद्धतावृत्तं, तल्लक्षणं चोक्तं प्राक्॥ २८८॥

उभयत्र वैलक्षण्यं निर्दिशन् लक्षणं सङ्गमयति—**पूर्वत्र** पूर्वस्मिन्नुदाहरणं इत्यर्थः। **अतिरिक्तहृदयसंपर्कात्** अतिरक्तमत्यन्तमनुरक्तम्, अथ च—अत्यन्तं शोणवर्णम्, यत् हृदयं तस्य सम्पर्कस्तस्मात्। **गुणगौरवाच्यस्य** गुणगौरपदाभिधेयस्य। **नायकस्य**। **प्राप्तवत्**। **अपि**। **रक्तत्वम्**। **न**। **निष्पन्नं** जातम्। **उत्तरत्रो**त्तरस्मिन्नुदाहरण इत्यर्थः। **अप्रस्तुतप्रशंसायाम्**। **विद्यमानायाम्**। **अपि** 'प्रकृतस्य पुरुषान्तरस्योदासीनत्वप्रशंसना' दिति शेषः। **गङ्गायमुनाऽपेक्षया** गङ्गायमुनासम्बन्ध्यम्ब्वपेक्षया। 'प्रतिपाद्यत्वेने'ति शेषः। **प्रकृतस्य**। **हंसस्य** राजहंसस्य। **गङ्गायमुनयो**र्गङ्गायमुनासम्बन्ध्यम्बुनोः। **सम्पर्के**। **अपि**। **तद्रूपता** तयोर्गङ्गायमुनासम्बन्ध्यम्बुनो रूपं तदिव रूप यस्य तस्य भावस्तत्ता। **न**। ननु कारणसत्त्वे कार्यानुत्पत्तिरूपा विशेषोक्तिरेव किन्नेयं स्वीक्रियत इत्याशङ्क्याह—**अत्रातद्गुणे**। **च**। **गुणाग्रहणरूपविच्छित्ति**विशेषाश्रयाद् गुणस्याग्रहणं तद्रूपं यस्याः साऽसौ विच्छित्तरलङ्कारत्वजीवातुश्चमत्कारस्तस्या विशेषः प्रकारस्तस्याश्रयस्तस्मात्। **विशेषोक्तिः**। **भेदः**। ननु विशेषोक्तौ हि कारणसत्त्वे कार्यानुत्पत्तिः, अतद्गुणे गुणरूपकारणसत्त्वे गुणाग्रहणमित्येनयोर्भेद इति भावः। ननु रागादिरूपस्य गुणस्य सम्पर्काभावरूप विरुद्धकार्य्यसत्तया विषममेवायं स्यादित्याह—**वर्णान्तरोत्पत्त्यभावात्**। **विषमात्तन्नाम्नोऽलङ्कारात्**। **च** 'भेद' इति पूर्वतोऽनुषज्यते। विषमे हि कारणगुणेभ्यो विरुद्धकार्य्यगुणोत्पत्तिः, अत्र च गुणोत्पत्त्यभाव एवेत्येनयोर्विशेष इति भावः।

**संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा ।**
**कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ॥ ९१ ॥**

सूक्ष्मः स्थूलमतिभिरसंलक्ष्यः । अत्राकारेण यथा—

**'वक्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।**
**पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥'**

अत्र कयाचित्कुङ्कुमभेदेन संलक्षितं कस्याश्चित्पुरुषायितं पाणौ पुरुषचिन्हखड्गलेखालिखनेन सूचितम् ।

---

## विवृतिः

सूक्ष्मालंकारमाह—**संलक्षित** इति । आकारो धर्मः । इङ्गितं क्रियाभङ्गी विदग्धचेष्टा ॥ मतेः स्थूलत्वं गहनार्थाग्राहित्वम् । **वक्रस्यन्दीति** । कापि वयस्या तन्व्या नायिकायाः कण्ठे वक्रात्स्यन्दिभिः स्वेदबिन्दुसंतानैर्भिन्नं रेखारूपकृतविभागं कुङ्कुमं दृष्ट्वा तस्याः पुंस्त्वं सुरते पुरुषायितं व्यञ्जयन्ती ज्ञापयन्ती स्मित्वा तस्या एव पाणौ खड्गलेखां लिलेख । पुरुषायिताया एव वक्रगलितस्वेदानां गण्डे गलनं संभवति न तूत्तानसुप्तायाः । अतः सूक्ष्ममपि पुरुषायितं लक्षितं पुरुषधर्मस्य खड्गलेखायाः सस्मितलिखनेन प्रकाशितम् । खड्गलेखा खड्गाकृतिचिन्हविशेषः पुंसां हस्ते तिष्ठति ।

## विज्ञप्रिया

सूक्ष्मालङ्कारमाह-–**संलक्षित** इति । भङ्ग्या प्रकारविशेषेण सूच्यत इत्यर्थः । आकारः संस्थानम्, इङ्गितं क्रिया इत्यर्थः ।

**वक्त्रस्यन्दि** इति । काचिद् व्यस्या सखी कस्याश्चिन्नायिकायाः कण्ठे वक्त्रस्यन्दिभिः स्वेदबिन्दुप्रवाहैः भिन्नं द्विधाकृतं कुङ्कुमं दृष्ट्वा तस्याः नायिकायाः पुंस्त्वं रतौ पुरुषायितत्वं व्यञ्जयन्ती स्मित्वा हसित्वा तस्याः पाणौ खड्गलेखां लिलेखेत्यर्थः । **अत्रेति** । **संलक्षितमिति** । प्रकृतरतौ स्वेदस्य पृष्ठगामित्वेन संलक्षणम् ।

## कुसुमप्रतिमा

गुणघटितानलङ्कारानभिधायेदानीं दुरूहार्थघटितानभिधातुं तम प्रधान्यात् प्रथमं सूक्ष्म नामालङ्कारमभिधत्ते मेल क्षत इति । तुशब्दः पूर्वप्रकरणभेददेयोतनार्थः । यत्रेति यदषट्कमव्ययम् । तथा च आकारेण चित्राद्याकृतिविशेषेण, इङ्गितेन भ्रूनेत्रादिङ्ग वा संलक्षितः जनेन परस्मैज्ञाप्यते, तत् सूक्ष्मं नाम अलङ्कार उच्यते ।

संज्ञाप्युत्पत्तिमाह सूक्ष्म इति । सूक्ष्मबुद्धिवेद्यत्वादेवस्य सूक्ष्म इति संज्ञेत्याशयः । अत्र अनयोर्भेदयोर्मध्य इत्यर्थः ।

वक्रेति । कोऽपि वयस्या, तन्वयाः कृशाङ्ग्याः अपरम्य वयम्यायाः वक्वान्मुखात् स्यन्दिनः अवस्रसिनः ये स्वदबिन्दुप्रबन्धा धर्म्मबिन्दुधारास्तैः, कण्ठे गलदेशे कुङ्कमम् अङ्गरागभूतं कुङ्कुमलेपं भिन्नं विभक्तं दृष्ट्वा, सुरते

उपरिस्थितत्वेन पुरुषवद्व्यवहारमनुमायेत्यर्थः, स्मित्वा मन्दहास्यं कृत्वा, पुंस्त्वं तस्या एव वयस्यायाः पुरुषत्वम्, व्यञ्जयन्ती प्रकाशयन्ती सती, पाणौ तस्या वयस्याया एव हस्ततले खड्गलेखाम् असिचित्रं लिलेख चित्रयामास ।

अत्रेति । कयाचित् व्यसाया कुङ्कुमभेदेन तद्रूपाकारेण । पुरुषायितं पुरुषवदाचरितम् उत्तानशयस्य नायकमोपरि तिष्ठत रमणात् पुरुषवद्व्यवहतमित्यर्थः । तथैव मुखगलितधर्म्मबिन्दुपवाहेण कण्ठगतकुङ्कुमलेपभेदनसम्भवात् उत्तानशयाया नायिकाया रमणे तु तन्मुखगलितधर्म्मप्रवाहस्य शय्यायामेव पतनसम्भवेन तदीयकण्ठकुङ्कुमलेपभेदनासम्भवादिति भावः । पुरुषचिन्ह पुरुषेणैव खड्गधारणात् पुरुषत्वपरिचायको यो खड्गस्तस्य लेखा चित्रं तस्या लिखनेन अलक्तकादिभिश्चित्रणेन ।

## विमला

सूक्ष्ममाह, संलक्षित इति ।—आकारेण—धर्मेण, मुखभावादिना इत्यर्थः, वा इङ्गितेन—क्रियाभङ्ग्या, विदग्धचेष्टयेति यावत्, संलक्षितः,—सम्यक् अनुभूतः, सूक्ष्मः अर्थः कयाऽपि—अनिर्वाच्यया इत्यर्थः, भङ्ग्या—प्रकारेण, यत्र सूच्यते—प्रकाश्यते, तत् सूक्ष्मम् उच्यते ।

सूक्ष्म इति ।—मतेः स्थूलत्वं—गहनार्थाग्राहित्वमिति भावः ।

वक्रेति ।—काऽपि वयस्या—सखी, तन्वयाः,—कृशाङ्गाः वयस्यायाः, नायिकाया इति भावः, वक्रात्—वदनात्, स्यन्दिनः,—क्षरन्तः, ये स्वेदविन्दवः,—धर्मविन्दवः, तेषां प्रबन्धैः,—वाराभिः, कण्ठे कुङ्कुमं भिन्नं—मृष्टं, रेखारूपकृतविभावमित्यर्थः, दृष्ट्वा (तस्याः) पुंस्त्वं—पुरुषत्वं, सुरते पुरुषवदाचरितत्वमित्यर्थः, व्यञ्जयन्ती—प्रकटयन्ती सती, स्थित्वा—ईषत् हसित्वा, पाणौ—तस्या एव करे, खड्गलेखां—खड्गवर्तिं, लिलेख । अत्र स्वेदबिन्दुकतकुङ्कुमरूपभिन्नेनाकारेण संलक्षितं पुरुषायितं पाणौ पुरुषोश्चितखड्गधारालिखनेन प्रकाशितं, पुरुषायिताया एव वक्त्रगलितस्वेदानां गण्डे गलनं सम्भवति, न तु उत्तानसुप्तायाः; अतः सूक्ष्ममपि पुरुषायितं लक्षितं पुरुषधर्मस्य खड्गलेखायाः सजितलिखनेन प्रकाशितम् । अत्र शालिनी छन्दः,—"मात् तौ गौ चेच्छालिनो वेदलोकैः" इति तल्लक्षणम् । यथा वा—"संवाहनमुखरसतोषितेन ददता तव करे लाक्षाम् । चरणेन विक्रमादित्यचरितमनुशिक्षितं तस्याः ॥" अत्र नायकहस्तद्वये लाआरससंयोगं दृष्ट्वा द्वित्तलाख्यसुरतमभिज्ञाय तच्छ्लेषेण चरणस्य विक्रमादित्यसाम्यमभिधाय नायिकया नायकाय तत्प्रकाशनं कृतम् ।

अत्र कयाचिदिति ।—कुङ्कुमभेदोऽत्राकारः । खड्गलेखा—खड्गाकृति चिन्हविशेषः, पुंसां हस्ते तिष्ठति ।

## लक्ष्मी

इत्थं गुणयुक्तालङ्कारान् प्रतिपाद्य सम्प्रति, दुरूहार्थयुक्तानलङ्कारान् प्रतिपादयितुं तत्र मुख्यतः प्रथमं सूक्ष्मालङ्कारं निरूपयति—**संलक्षित** इत्यादिना । पूर्वप्रसङ्गभेदसूचनायैव तुशब्दोपादानम् । यदर्थकोऽव्ययो यत्रशब्दः । एवञ्च आकारेण रूपादेरन्यथात्वमाकारः चेष्टाविशेषस्तेन, इङ्गितेन नेत्रभङ्ग्यादिरूपक्रियाविशेषेण वा संलक्षितः सम्यग्ज्ञातः, सूक्ष्मः सहृदयेतरज्ञानज्ञेयः कुशाग्रबुद्धिभिर्वेद्य इत्यर्थः अर्थो विषयः, कयापि भङ्ग्या विदग्धाचरणेन यत्र यत् सूच्यते सम्यगज्ञातवता पुरुषेण अन्यस्तं बोध्यते तत् सूक्ष्मज्ञानज्ञेयत्वादेव सूक्ष्मं तन्नामालङ्कार उच्यते अभिधीयते ।

सूक्ष्मपदार्थ दर्शयति—**सूक्ष्म** इत्यादिना । स्पष्टम् । अत्र अनयोर्भेदयोर्मधघ्य इत्यर्थः ।

आकारेण संलक्षितस्य सूचनमुदाहरति—**वक्त्रस्यन्दी**ति। कापि विदग्धा वयस्या सखी, तन्व्याः क्षीणाङ्गयाः अन्यस्याः वयस्याया वक्त्रात् नायिकामुखात् स्यन्दिनः प्रस्रवणशीला ये स्वेदविन्दवः विपरीतसुरतजन्यधर्मबिन्दवः तेषां प्रबन्धैः धाराभिः, कण्ठे गलदेशे कुङ्कुमं केशरं काश्मीरदेशोत्पन्नसुगन्धिद्रव्यमित्यर्थः, भिन्नं भेदं प्राप्तं स्मित्वा मन्दहास्यं विधाय, पुंस्त्वं पुरुषायितं रात्रौ तस्या एव वयस्याया विपरीतसुरते उपर्यारोहणमित्यर्थः मित्यर्थः व्यञ्जयन्ती प्रकाशयन्ती सती पाणौ तत्सख्याया एव हस्ततले खड्लेखां खड्गाकारां रेखां लिलेख लिखितवती। स्त्रीणां हस्तेऽलङ्कारार्थं चन्दनादिभिर्लतापत्रावल्यादिलिखनं सम्प्रदायसिद्धमपि तत्परित्यज्य तस्याः पुरुषायितं द्योतयितुं पुरुषहस्ते लेखनीयां खड्गलेखां चित्रयामासेति भावः। प्रसिद्धरतौ उत्तानाया नायिकाया मुखमण्डलात् प्रसूतानां स्वेदजलानां पृष्ठदेश एव गमनम् कण्ठे तेषां गमनं तु विपरीतरतावेवेति **वक्त्रस्यन्वी**त्यादेस्तात्पर्यमिति भावुकाः। **शालिनी**च्छन्दस्तल्लक्षणन्तु—'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति।

लक्ष्यं संयोजयति—**अत्रेति**। कयाचित् सख्या, कुङ्कुमभेदेन तद्रूपस्वरूपेण। पुरुषायितं पुरुषवद्व्यवहृतम्। पुरुषेणैव खड्गधारणात् पुरुषत्वबोधको यो खड्गस्तस्य लेखा रेखा तस्या लिखनेन यावकादिभिश्चित्रणेनेत्यर्थः। अत्र **कुशलाः**—'यद्यप्यत्र स्वेदविशेषपुरुषायितयोः साध्यसाधनयोरेकधर्मिगतत्वेनोपादानादनुमानमेवालङ्कारो भवितुमर्हति तथापि स्ववैदग्ध्यप्रतिपिपादयिषयान्यस्मै सूक्ष्मार्थमुखेनैव चमत्कार इति स एवालङ्कारः, अनुमानन्तु तदनुग्राहकमित्यन्यदेतत्' इति।

## रुचिरा

सूक्ष्मं लक्षयति—१८२ **आकारेण** नेपथ्यादिचेष्टितेन। **इङ्गितेन** भ्रुवादिचेष्टितेन। **वा**। **संल्लक्षितः**। **सूक्ष्मः** सहृदयेतरैरसँल्लक्ष्यः। **अर्थः**। **तु**। **यत्र**। **कयाऽपि भङ्ग्या** प्रकारेण। **सूच्यते**। **तत्**। **सूक्ष्मं** तदाख्योऽलङ्कारः। **उच्यते**। सूक्ष्मपदार्थं निर्दिशति-सूक्ष्म इत्यादिना। स्पष्टम् ॥ १४४ ॥

अत्राकारेण संलक्षितस्य सूचनमुदाहर्त्तुकाम आह—**अत्र आकारेण** संलक्षितस्य सूचनम्। **यथा** '**काऽपि**। **वयस्या** सखी। **वक्रस्यान्दिस्वेदबिन्दुप्रबन्धैर्वक्रा**नायिकामुखात्तदुपलक्षितात् स्थानात्। स्यन्दिनः प्रस्रवणशीला ये स्वेद बिन्दवो विपरीतसुरतजन्यश्रमबिन्दवस्तेषां प्रबन्धास्तैः। **कण्ठे**। **भिन्न**म्भेदं प्राप्तम्। **कुङ्कुमम्**। दृष्ट्वा। अत एव **स्मित्वा**। **तन्व्याः** स्ववयस्यायास्तस्या इति भावः। **पुंस्त्वं** पुरुषत्वम्। **व्यञ्जयन्ती**। **पाणौ** 'नायिकाया' इति शेषः। **खड्गलेखां** खड्गस्य लेखा पङ्क्तिस्ताम्। **लिलेख** लिखितवती। स्त्रीणां हस्तेऽलङ्कारार्थं चन्दनादिभिर्लतापत्रादेर्लेखनं सम्प्रदायः, अतस्तच्छलेन सख्याः पुरुषायितं सूचयितुं पुरुषहस्ते लेखनीया खड्गलेखा लिखितेति बोध्यम्। अनुकूलसुरते उत्तानाया नायिकाया मुखमण्डलाद्गलितानां स्वेदाम्बूनां पृष्ठे एव गमनम्, कण्ठे तेषां गमन तु विपरीतसुरत एवेति 'वक्त्रस्यन्दी' त्यादिना सूचितम्। शालिनीछन्दः, तल्लक्षणं च यथोक्तम्, 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः।'इति ॥ २८९ ॥'

उदाहृतमर्थं निर्दिशति-अत्रेत्यादिना। स्पष्टम्। अत्राहुः 'अत्र स्वेदलिङ्गकस्वानुमितिविषयस्य पुरुषायितत्वस्य खड्गलेखालेखनेनाभिव्यञ्जनम्। अत्र विद्यमानमप्यनुमानं सूक्ष्माङ्गम्, स्ववैदग्ध्यप्रकाशनद्वारा सूक्ष्मस्यैव चमत्कारित्वात्।' इति।

इङ्गितेन यथा—

**संकेतकालमनसं विटं ज्ञात्वा विदग्धया।**

**हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥**

अत्र विटस्य भ्रूविक्षेपादिना लक्षितः संकेतकालाभिप्रायो रजनीकालभाविना पद्मनिमीलनेन प्रकाशितः।

---

## विवृतिः

कुङ्कुमभेदोऽत्राकारः। एतदेवाह—अत्र **कयाचिदिति** ॥ **संकेतेति**। संकेतकालजिज्ञासुमित्यर्थः। विटं धूर्तमुपनायकं ज्ञात्वा भ्रूविक्षेपादितदिङ्गितादिना ज्ञात्वेति बोध्यम्। हसता हर्षसूचकचेष्टावता नेत्रेणार्पितं ज्ञापितमाकूतमभिप्रायो यस्य यत्र वा तद्यथा स्यात्तथा निमीलितमित्यर्थः। **संकेतकाला**भिप्रायः संकेतकालजिज्ञासा ॥

## विज्ञप्रिया

**संकेतकालेति**। विटं धूर्तम् उपनायकं तद्जिज्ञासार्थं संकेतकालमनसं ज्ञात्वा विदग्धया नायिकया हसता नेत्रार्पिताकूतं यथा स्यात्तथा लीलापद्मं निमिलितमित्यर्थः। कालाभिप्रायः कालजिज्ञासा भ्रूविक्षेपश्चाऽशाब्दोऽपि योग्यताबललभ्यमिङ्गितम्।

## कुसुमप्रतिमा

सङ्केतेति। विवृतपूर्वमेतत् (६१ पृष्ठे)।

अत्रेति। विटस्य उपनायकस्य, भ्रूक्षेपादिना इङ्गितेनेत्यर्थः, सङ्केतकालाभिप्रायो रमणस्य कालं ज्ञातुमिच्छेत्यर्थः। पद्मस्य निमीलनेन मुद्रणेन, प्रकाशितः स्वयमवगतत्वेन विटाय द्योतितः। अथवा प्रकाशितो विटस्याभिप्रायं बुद्धा तस्मै रजनीरूपः सङ्केतकालो ज्ञापितः।

निरुक्तसूक्ष्मलक्षणे व्याजरूपाया भङ्ग्याः प्रस्तावातं व्याजघटित व्याजोक्ति नामालङ्कारं लक्षयति व्याजोक्तिरिति। उद्भिन्नस्यापि कार्य्यद्वारा प्रकाशितस्यापि, वस्तुनः पदार्थस्य, व्याजात् प्रकाशयोग्यकारणाभिधानरूपच्छलात् गोपन व्याजोक्तिर्नाम अलङ्कार उच्यत इत्यनुषङ्गः।

## विमला

सङ्केतेति।—व्याख्यातं प्राक्।

यत्र विटस्येति।—इह सङ्केतकालाभिप्रायः,—सङ्केतकालजिज्ञासा, विटसम्बन्धिना भ्रूविक्षेपादिना इङ्गितेन लक्षितः रजनिकालभाविना लीलापद्मनिमीलनेन प्रकाशितः इति बोध्यम्।

व्याजोक्तिमाह, व्याजोक्तिरिति।—उद्भिन्नस्य—प्रकटितस्य, केनापि कारणेनेति शेषः, कार्य्यादिना व्यक्तिभूतस्य वा, वस्तुनः व्याजात्—कारणान्तरोद्भावनच्छलात्, गोपनं व्याजोक्तिः।

## लक्ष्मी

इङ्गितात् संलक्षितस्य सूचनमुदाहरति—सङ्केतेति। व्याख्यातमिदम्।

लक्ष्यं सङ्गमयति—अत्रेति। विटस्य जाररूपधूर्त्तनायकस्य भ्रूक्षेपादिना चेष्टितेनेत्यर्थः। सङ्केतकालभिप्रायः सुरतसमयजित्रासेत्यर्थः। पद्मनिमीलनेन पद्मसङ्कोचेन प्रकाशितः स्वयं ज्ञातत्वेन विटाय सूचितः। यद्वा प्रकाशित उपनायकाशयं ज्ञात्वा तस्मै रजनीरूपः सुरतसमयो बोधित इत्यर्थः।

## रुचिरा

इङ्गितात् सँल्लक्षितस्य सूचनमुदाहर्तुकाम आह-**इङ्गितेन**। **यथा 'विदग्धया** चतुरया। **हसन्नेत्रार्पिताकूतं** हसन्ती प्रसीदन्ती नेत्रे ताभ्यामर्पितं सूचितमाकूतं रहस्यं येन तादृशम्। **विटं** जारम्। **सङ्केतकालमनसं** सङ्केतकाले मनो यस्य तादृशम्। सङ्केतसमयमवजिगमिषुम्। **ज्ञात्वा**। **लीलापद्मं** क्रीडार्थं धृतं पद्मं। **निमीलितं** सङ्कोचितम्॥२९०॥

उदाहृतमर्थं निर्दिशति-**अत्रेत्यादिना**। स्पष्टम्।

**व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः ।**

यथा—

**'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-**
**द्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः ।**
**आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं**
**शैलान्तः पुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥'**

नेयं प्रथमापह्नुतिः, अपह्नवकारिणो विषयस्यानभिधानात् द्वितीयापह्नुतेर्भेदश्च तत्प्रस्तावे दर्शितः ।

---

## विवृतिः

व्याजोक्त्यलंकारमाह—**व्याजोक्तिरिति** । व्याजात्कारणान्तरोद्भावनच्छलाद् उद्भिन्नस्य कार्यादिना व्यक्तीभूतस्य ॥ **शैलेन्द्रेति** । शैलेन्द्रेण हिमालयेन प्रतिपाद्यमानाया दीयमानाया गिरिजायाः पार्वत्या हस्तस्योपगूढेन संपर्केणोल्लसन् यो रोमाञ्चादिः पुलककम्पादिस्तेन विसंस्थुलोऽयथाभूतो योऽखिलविधिव्यासङ्गः समस्तवैदिकक्रियासंबन्धस्तस्य भङ्गेनाकुलो व्याकुलः । शैलस्य हिमालयस्यान्तः पुरवर्तिनो(तानि) ये (तानि) मातृकामण्डला(नि) मण्डलीभूता मातरस्तेषां गणैः ॥ अत्र रोमाञ्चादिना कार्येणोद्भिन्नः स्वकीयोद्भावविशेषः शैत्यरूपकारणान्तरोद्भावनेन शिवेन गोपितः । ननु प्रकृतगोपनेनाप्रकृतोद्भावनमपह्नुतिरुक्ता तदनयोः को भेद इत्यत आह—**नेयमिति** । प्रथमा कृतनिषेधपूर्वकप्रकृतस्थापनरूपा । **विषयस्य** अप्रकृतारोपविषयस्य । अत्र तु गोपनाकारिभिन्नेन काव्यादिना विषयो व्यज्यत एव, नत्वभिधीयत इति भावः । द्वितीयापह्नुतेः, 'गोपनीयं कमप्यर्थं द्योतयित्वा कथंचन । यदि श्लेषेणान्यथा वान्यथयेत्साप्यपह्नुतिः ॥' इत्युक्तलक्षणायास्तत्प्रस्तावे दर्शित इति । तत्र गोपनकृता गोपनीयं प्रथममभिधीयते, अत्र तु न तथेति भावः ॥

## विवृतिपूर्तिः

**व्याजोक्तिरिति** । एतत्प्रसङ्गेन **कुवलयानन्दे** । **गूढोक्तिर्विवृतोक्तिर्युक्तिर्लोकोक्तिश्छेकोक्तिर्वक्रोक्तिरिति** षडलंकृतयो निरूपिता यथा—'**गूढोक्तिरन्योद्देश्यं** चेद्यदन्यं प्रति कथ्यते । वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः ॥' '**गूढोक्तिरन्योद्देश्यं** चेद्यदन्यं प्रति कथ्यते । वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः ॥' '**विवृतोक्तिः** श्लिष्टगुप्तं कविनाविष्कृतं यदि । वृषापेहि परक्षेत्रादिति वक्ति ससूचनम् ॥' '**युक्तिः** परतिसंधानं क्रियया मर्मगुप्तये । त्वामालिखन्ती धनुः पौष्पं करेऽलिखत् ॥' 'लोकप्रवादानुकृतिर्**लोकोक्तिरिति** भण्यते । सहस्व कतिचिन्मासान्मीलयित्वा विलोचने ॥' '**छेकोक्तिर्**यदि लोकोक्ते स्यादर्थान्तरगर्भिता । भुजङ्ग एव जानीते भुजङ्गचरणं सखे ॥' '**वक्रोक्तिः** श्लेषकाकुभ्यामपरार्थप्रकल्पनम् । मुञ्च मानं दिनं प्राप्तं नेह नन्दी हरा न्तिके ॥' इति । अत्र गूढोक्तेर्नालंकारत्वमिष्यते, तस्या ध्वनिविषयत्वात् । विवृतोक्तेरपि नालंकारत्वं गुणीभूतव्यङ्ग्यमात्रत्वाद् वाच्यरसाद्युत्कर्षकत्वाभावाच्च । युक्तिरपि व्याजोक्तिरेव, उक्तिपदस्य व्यापारमात्रपरत्वात् तेन नालंकारान्तरत्व-

मिष्टम्। लौकोक्तिच्छेकोक्ती अपि नालंकारो उपस्कारकत्वाभावात्। वक्रोक्तिस्तु शब्दालंकारे( ४८३ पृ. उक्तैव ॥

**शैलेन्द्रेति।** अत्र रोमाञ्चादिनोद्भिन्नो रतिभावः शैत्यप्रक्षेपमेनापलपितः ॥

## विज्ञप्रिया

व्याजोक्त्यलङ्कारमाह—**व्याजेति**। उद्भिन्नस्य व्यक्तीभूतस्य व्याजात् कपटेन।

**शैलेन्द्रेति**। शिवो वोऽवतात्। कीदृशः। शैलेन्द्रेण प्रतिपाद्यमानाया उत्सृज्यमानाया गिरिजाया हस्तस्य उपगूढेन उपगूहनेन स्पर्शेण उल्लसद्भिः रोमाञ्चादिभिः रोमाञ्चवेपथुस्वेदैः विसंष्ठुलस्य व्यस्तस्य अखिलवैवाहिकविधेः व्यासङ्गस्य व्यापारस्य भङ्गेनाकुलः सन् आः आश्चर्य तुहिनसम्बन्धिनोऽचलस्य करयोः शैत्यम् इत्यूचिवान् सन् शैलान्तःपुरेण तद्गतस्त्रीभिः गौर्य्यादिमातृमण्डलेन स्वीयगणैश्च सस्मितं दृष्टः।

प्रथमोक्तापह्नुतितोऽस्य भेदमाह—**नेयमिति**। **अपह्नवकारिण** इति। प्रकृतापह्नवकारी यो विषयो वस्तु स्थाप्यमानमप्रकृतं वस्तु, तस्याऽनभिधानादित्यर्थः। इदमुपलक्षणम्, अपह्नवार्थपदस्य नञादेरप्यनाभिधानादिति बोद्धव्यम्। अपह्नव हेतोः श्वेतस्याभिधानाद् रोमाञ्चादेस्त्वनपह्नुतत्वादेव। **द्वितीयापह्नुतेरि**ति।

"गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन। यदि श्लेषेणान्यथा वाऽन्यथेयत् साप्यपह्नुतिः" इत्युक्तलक्षणात् "काले वारिधराणाम्" इत्युदाहरणाद् द्वितीयापह्नवादित्यर्थः। तत्प्रस्तावे दर्शित इति। गोपनीयार्थस्य गोपनकृता प्रथममभिहितत्वाच्च व्याजोक्तेरिति लिखनेन दर्शित इत्यर्थः। इह तु गोपनीयार्थस्य रोमाञ्चादेः शिवेन प्रथममनभिधानात्।

## कुसुमप्रतिमा

अयथार्थकारणोपन्यासेन कार्य्यस्य यथार्थकारणगोपनं व्याजोतिरिति फलितार्थः। व्यजेनउक्तिर्यस्मिन्नितिव्युत्पत्तिः।

शैलेन्द्रेति। शैलेन्द्रेण गिरिराजेन हिमालयेन प्रतिपाद्यमानाया दीयमानाया गिरिजायाः पार्वत्या हस्तस्य उपगूढ़ेन सयोगेन उल्लसन्त उत्पद्यमाना ये रोमाञ्चादयः कामोद्रेकात् रोमारुकन्धप्रभृतयस्तैः विसंष्ठुली विश्रृङ्खलीभूतो यः अखिलः समस्तो विधिव्यासङ्गो विवाहकालीनमन्त्रपाठादिवैदिकव्यापारस्तस्य भङ्गेन भङ्गभयेन आकुलो व्यस्तः। 'आः' इति शेषजनितपीड़ासूचकम्। तुहिनाचलस्य वरणसमये संस्पर्शिनी हिमालयस्य, करयोर्हस्तयोः शैत्यं शीतलत्वम् इति ऊचिवानुक्तवान्; तथा शैलस्य हिमाचलस्यैव अन्तपुरे ये मातृमण्डलगणा मण्डलाकारेणावस्थिता ब्रह्मीप्रभृतिमातृगणास्तैः सस्मितं कामोद्रेकेणैव रोमाञ्चकम्पादिदर्शनात् समन्दहास दृष्टः, शिवो महादेवः, वो युष्मान् अवतात् रक्षेत्।

अत्र "आः! शैत्यं तुहिनाचलस्य करयोः" इति प्रकाशयोग्यकारणभिधानरूःच्छलं कुर्वता शिवेन "शीतलस्पर्शजनित एवायं मम रोमाञ्चकम्पादिः" इति सूचयता तादृशरोमाञ्चादिकार्य्यद्वारा प्रकाशितस्यापि कामोद्रेकरूपकारणस्य गोपनं कृतमिति व्याजोक्तिरलङ्कारः। अथवा हिमालयकरस्पर्शेनैवाय मे रोमाञ्चकम्पादि इति सूचयता शिवेन रोमाञ्चादिकार्य्यसिद्धिं प्रति शीतस्पर्शरूपायथार्थकारणोपन्यासेन कामोद्रैकरूपयथार्थकारणस्य गोपनात् व्याजोक्तिः।

नन्वत्र प्रकृतकारणप्रतिषेधसूचनेन अप्रकृतकारणस्थापनात् "प्रकृतं प्रतिषिध्यान्यस्थापनं स्यापपह्नुतिः" निरुक्तलक्षणाया अपह्नुतेरपि प्रसक्तिरित्यनयोः को भेद इत्याह नेयमिति। इयमुदाहरणस्था विचित्रता, प्रथमा प्रकृतमित्याद्युक्तलक्षणा। अपह्नवकारिणः प्रकृतकारणगोपनकारिणः शिवस्य कर्त्तुः, विषयस्य प्रकृतकारणस्य। तथा च गोपनकारिणा जनेन प्रकृतमभिधायैव तत्प्रतिषेधपूर्वकाप्रकृतस्थापने प्रथमा अपह्नुतिः, प्रकृतमनभिधाय तत्प्रतिषेधसूचनपूर्वकाप्रकृतस्थापने तु व्याजोक्तिरित्यनयोर्भेद इति भावः। किञ्च, निरुक्तपह्नुतिलक्षणस्य "उपमेयं निषिध्य उपमानस्थापनादपह्नुतिः" इत्यर्थकतया उदाहृते तत् प्रसक्तिरेव नास्ति, कामोद्रेशीतलस्पर्शयोरुपमेयोपमानभावाभावदित्यपि द्रष्टव्यम्।

अथ तथापि रोमाञ्चकम्पदिकार्य्येणैव कामोद्रेकरूपकारणं द्योतयित्वा शीतलस्पर्शरूपकारणोपन्यासेन तदन्यथाकरणात् "गोपनीय कमप्यर्थम्" इत्याद्युक्तलक्षणाया द्वितीयापह्नुतेः प्रसक्तेस्तया सह अस्य को भेद इत्याह द्वितीयेति। तत्प्रस्तावे द्वितीयापह्नुतिप्रकरणे।

दुरूहार्थस्य प्रकृतत्वात् विशेषातिदिष्टेन च व्याजोक्त्यलङ्कारेण तद्बाधाया अयोगात् दुरूहार्थघटितमेव स्वभावोक्तिं नाम अलङ्कारं निरूपयति स्वाभावोक्तिरिति। दुरूहयोर्विशेषनैपुण्योन्नेयत्वेन स्थूलबुद्धिभिरवेद्ययोः, कविमात्रवेद्ययोः, अर्थस्य शिशु पशु पक्षिप्रभृतिपदार्थस्य स्वक्रियारूपयोः केवलतत्तदगतस्वाभाविकचेष्टाकारयोः, वर्णनं स्वाभावोक्तिर्नाम अलङ्कारे उच्यत इत्यनुषज्यते।

**"गौरपत्यं बलीवर्द्दो घासमत्ति मुखेन सः।**
**लाङ्गूलं विद्यते तस्य शृङ्गश्चापि च विद्यते॥"**

इत्यादौ साधारणबुद्धिवेद्यत्वेनादुरूहयोर्वृषगतस्वाभाविकचेष्टाक्रिययोर्वर्णने अतिव्याप्तिवारणाय दुरूहेति विशेषणम्। तर्कवागीशस्तु "पश्चात् पुच्छं वहति विपुलम्" इत्यादावुत्तररामचरितपद्येऽपि स्वाभावोक्तिमाह स्म। तदपि युक्तमेव; अश्वगततदृशचेष्टारूपयोत्तत् कालोपस्थितलवादिवालकानां दुरूहत्वेन चमत्कारविधायित्वात्। "गोरपद्यम्" इत्यादौ तु उद्देश्यभूतश्चोतुरदुरूहत्वेन अचनत् कारविधायित्वमेवेति सुधीभिर्विभावनीयम्।

## विमला

शैलेन्द्रेति—शैलेन्द्रेण—हिमालयेन, प्रतिंपाद्यमानायाः,—सम्प्रदीयमानायाः, गिरिजायाः,—गौर्य्याः, हस्तस्य उपगूढ़ेन—स्पर्शेन, सम्पर्केणेति यावत्, उल्लसद्भिः,—उत्पाद्यमानैः, रोमाञ्चादिभिः,—पुलकम्पादिभिः, विसंष्ठुलः,—विपर्य्यस्तः अयथाभूत इत्यर्थः, यः अखिलः,—समस्तः विधिः,—वेदबोधितक्रियाकलापः, तस्य व्यासङ्गः,—सम्बन्धः, अत्यन्तामक्तिर्या, तस्य भङ्गेन—व्याघातेन, तद्भयेनेति यावत्, व्याकुलः,—व्याकुलः, अत एव आः! तुहिनाचलस्य—हिमाद्रेः, परयोः शैत्यं—शीतलत्वम्, इति ऊक्षिवान् तथा शैलस्य—हिमालयस्य, अन्तःपुरे, स्थितैरिति शेषः, मातृमण्डलगणैः,—ब्राह्मीत्यादिभिः, यद्वा—शैलस्य अन्तःपुरवर्त्तिनी ये मातृकामण्डलाः,—मण्डलीभूता मातरः, तेषां गणैः, मातृकासङ्घैरिति भावः, सस्मितं दृष्टः शिवः वः,—युष्मान् अवतात्—रक्षतु। शार्दूलविक्रीड़ितं वृत्तम्। अत्र सत्त्वोद्रेकात् रोमाञ्चादिना कार्य्येणोद्भिन्नः स्वकीयोदभावविशेषः तुहिनाचलकरशैत्यरूपकारणान्तरोद्भावनेन श्रीशिवेन गोपितः इति। "यद्यप्यपह्नुतोऽपि सस्मितत्वख्यापनेन पुनरप्युद्भिन्नत्वेन प्रकाशितः, तथाऽप्यपलापमात्रचिन्तयाऽस्यालङ्कारस्योल्लेखः। नन्वपह्नुतिग्रन्थं "यथा सादृश्याय योऽपह्नवः साऽपह्नुतिः तथाऽपह्नवायापि यत्सादृश्यं साऽप्यपह्नुतिः" इति स्थापितं, व्याजोक्तौ चोत्तरः प्रकारो विद्यते,

तत् कथमियमलङ्कारान्तरेण कथ्यते ? सत्यम्, उद्भटसिद्धान्ताश्रयेणोत्तरत्रोक्तम्; न हि तन्मते व्याजोक्त्याख्यमल-
ङ्करणमस्ति; इह तु तस्य सम्भवाद्वयतिरिक्तापह्नुतिरिति पृथगयमलङ्कारो निर्दिष्टः" इत्यलङ्कारसर्वस्वकाराः । यथा
वा—"श्वश्रूः क्रुध्यतु विद्विषन्तु सुहृदो निन्दन्तु वा यातरः तस्मिन् किन्तु न मन्दिरे सखि ! पुनः स्वापो विधेयो मया ।
आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती मार्जारी नखरैः खरैः कृतवती कां कां न मे दुर्दशाम् ?" ॥ इति । अत्र
नखदन्तक्षतादिदर्शनेन स्वव्यभिचारप्रवादप्राकट्यमाशङ्क्य तदनुमितिलिङ्गभूता नखक्षतादय उक्तप्रकारेण निगू-
हिताः ।

ननु प्रकृतगोपनेनाप्रकृतोद्भावनमपह्नुतिरुक्ता, तदनयोः को भेदः ? इत्यत्र आह, नेयमिति ।—प्रथमा—
अप्रकृतनिषेधपूर्वकप्रकृतस्थापनरूपा, विषयस्य—अप्रकृतारोपविषयस्य; अत्र तु गोपनाकारिभिन्नेन काव्यादिना
विषयो व्यज्यते एव, न त्वभिधीयते इति भावः । द्वितीयापह्नुतेः,—"गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन । यदि
श्लेषेणान्यथा वाऽन्यथयेत् साऽप्यपह्नुतिः ॥" इत्युक्तलक्षणायाः, तत्प्रस्तावे दर्शित इति ।—तत्र गोपनकृता गोप-
नीयं प्रथममभिधीयते, अत्र तु न तथेति भावः । यत्तु, "दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वचस्तत्प्रातर्गुरुस-
न्निधौ निगदतस्तस्यैव तारं वधूः । कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चोः पुटे व्रीडार्त्ता विदधाति
दाड़िमफलव्याजेन वाग्बन्धनम् ॥" इत्यत्र "युक्तिः परातिसङ्ख्यानं क्रियया मर्मगुप्तये" इत्यलङ्कारमुक्तावल्यां
दर्शितः युक्त्यलङ्कारः; व्याजोक्तौ वचसा गोपनम्, इह तु क्रियया इति द्वयोर्भेद इति, तन्न; व्याजोक्तिलक्षणस्योभ-
यसाधारण्यात्, तत्रोक्तिनिवेशस्य गौरवपराहतत्वात्, अन्यथा प्रकारान्तरेण गोपनस्थले अलङ्कारान्तरप्रसङ्गात्,
तत्राप्युक्तक्रियाऽन्यत्वनिवेशस्य सुवचत्वादिति दिक् ।

## लक्ष्मी

सूक्ष्मालङ्कारे 'कयापि सूच्यते भङ्ग्या' इत्युक्तौ व्याजरूपाया भङ्ग्याः उत्थापनात् व्याजयुक्तमेव व्याजो-
क्तयलङ्कारं निरूपयति—**व्याजोक्तिरि**ति । उद्भिन्नस्यापि कार्यद्वारा प्रकटितस्यापि, वस्तुनः विषयस्य व्याजात्
प्रकटसमर्थहेतुप्रतिपादनरूपकपटात् गोपनं निगृहणं व्याजेनोक्तिर्यत्रेतिव्युत्पत्या व्याजोक्तिः तन्नामालङ्कार 'उच्यते'
इत्यनुवर्तते । असत्यहेतूपस्थापनेन कार्यस्य सत्यहेतुनिगूहनं व्याजोक्तिरित्यर्थः ।

उदाहरति—**शैलेन्द्रे**ति । भवानीशङ्करयो वैवाहिकेतिवृत्तवर्णनं प्रकृत्य कस्यचिदाशीः शंसनमिदम् ।
शैलेन्द्रेण हिमाद्रिणा प्रतिपाद्यमाना आदीयमाना या गिरिजा पार्वती तस्या हस्तस्य उपगूढेन सम्बन्धेन उल्लसन्त
आविर्भवन्तः ये रोमाञ्चादयः मदनोद्रेकात् पुलककम्पादयः तैः विसंष्ठुलः व्यग्रहस्तः यः अखिलः सम्पूर्णः विधिव्या-
सङ्गः वैवाहिकेतिकर्त्तव्यतारूपव्यापारः तस्य भङ्गेन भङ्गभयेन आकुलश्चकितः 'आः' इति शैत्यजनितव्यथाबोधक-
पदम् । तुहिनाचलस्य हिमालयस्य करयोः हस्तयोः शैत्यं कन्यादानकाले स्पर्शेन शीतलत्वम् इति ऊचिवान्
कथितवान्; तथा शैलान्तः पुरैः हिमालयावरोधनारीजनैः मातृमण्डलेन—

**'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।**
**वाराही च तथेन्द्राणी चामुण्डाः सप्त मातरः ॥'**

इति परिभाषितब्राह्मयादिसमूहेन गणैः देववृन्दैः नन्द्यादिभिश्च वा सस्मितं मन्दहासपूर्वं यथास्यात्तथा दृष्टः
सन्, शिवः शम्भुः वः युष्मान् अवतात् रक्षतात् । **शार्दूलविक्रीडितं** छन्दस्तल्लक्षणन्तूक्तम् ।

अत्र तुहिनाचलहस्तस्पर्शेनैवायं मम रोमाञ्चादिर्भाव इति प्रकटयता महेश्वरेण रोमाञ्चादिकार्यनिष्पत्तिं प्रति शैत्यस्पर्शरूपासत्यहेतूपस्थापनेन मदनाविर्भावरूपहेतोर्निगूहनाद् व्याजोक्तिरलङ्कारः । **यद्वा**—'आः शैत्यं तुहिनाचलस्य करयोः' इति प्रकटसमर्थहेतुप्रतिपादनरूपकपटं विदधता महेश्वरेण 'शीतलस्पर्शोत्पन्न एवायं मम रोमञ्चादिसात्त्विकभावः' इति प्रकटयता तथाविधरोमाञ्चादिकार्यद्वारा द्योतितस्यापि मदनाविर्भावरूपहेतोः निगूहनं विहितमिति भवति व्याजोक्तिः ।

ननु प्रस्तुतहेतुगोपनेनाप्रस्तुतहेतूद्भावनरूपापह्नुतिः प्राग्दर्शिता तया सहास्याः को भद इत्याशङ्कायामाह—**नेय**मिति । इयं व्याजोक्तिः प्रथमा प्रस्तुतहेतुनिषेधपूर्वकाप्रस्तुतहेतूद्भावनरूपा न, तत्र हेतुमुपपादयति—**अपह्नवे**ति । अपह्नवकारिणः प्रस्तुतहेतुगोपनविधायिनः शिवस्य विधातुः विषयस्य प्रस्तुतहेतोः अनभिधानात् । तथा च अपह्नुतौ प्रस्तुतं गोपयित्वा अप्रस्तुतं स्थाप्यते, अत्र तु गोपनमकृत्वैव लिङ्गादिना प्रकटितस्य विषयस्य गोपनमित्यनयोर्भेदः । ननु मास्तु प्रथमापह्नुतिः किन्तु रोमाञ्चादिकार्येणैव मदनाविर्भावरूपहेतुं प्रकटयित्वा शैत्यस्पर्शरूपहेतूपस्थापनेन तदन्यथा विधानात्—

**'गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन ।**

**यदि श्लेषेणान्यथा वान्यथयेत्साप्यपह्नुतिः ॥'**

इत्युक्तलक्षणया द्वितीयापह्नुत्या को भेदः स्यादित्यत आह—**द्वितीये**ति । तत्प्रस्तावे द्वितीयापह्नुतिप्रसङ्गे दर्शितः 'गोपनकृता गोपनीयस्यापि प्रथममभिहितत्वाच्च व्याजोक्तेः' इत्यनेनेति शेषः । तथा च गोपनकृता गोपनीयं प्रथमं प्रतिपाद्यते, अत्र तु न तथेति स्फुटमनयोर्भेद इत्याशयः ।

अस्याः 'गुढोक्तिर्विवृतोक्तिर्युक्तिर्लोकोक्तिश्छेकोक्तिर्वक्तोक्ति'रिति षड्भेदाः प्रतिपादयन्ति **कुवलयानन्दकाराः** । तत्र लक्षयन्ति च यथाक्रमम्—

**'गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रति कथ्यते ।**
**वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः ।**

इत्यादिना, तन्न विचारसहम्; गूढोक्तेर्ध्वनिविषयत्वेन पृथगलङ्कारस्वीकारे गौरवात् । विवृतोक्तेरपि नालङ्कारत्वं केवलगुणीभूतव्यङ्ग्यत्वात्, युक्तेस्तु व्याचोक्तावेवान्तर्भावः उक्तिपदेन व्यापारमात्रस्य विवक्षितत्वात्, उपस्कारकत्वाभावेन लोकोक्तिछेकोक्तयोरपि नालङ्कारत्वम्, वक्रोक्तिरेव केवला स्वीकरणीया सा च शब्दालङ्कारनिरूपणप्रस्तावे लक्षितैव ।

## रुचिरा

व्याजोक्तिं लक्षयति—१८२ **उद्भिन्नस्य** प्रकटितस्य । **अपि** । **वस्तुनः** । **व्याजात्** केनापि प्रतारणोपायेन । **गोपनम्** । **व्याजोक्ति**र्व्याजेनोक्तिरिति तन्नामाऽलङ्कार इत्यर्थः ॥ १४५ ॥

उदाहरति—**यथा—'शैलेन्द्र..**शैलेन्द्रेण हिमालयगिरिणा प्रतिपाद्यमाना दीयमाना या गिरिजा पार्वती तस्या हन्तस्तस्योपगूढं सम्बन्धस्तेनोल्लसदुद्गच्छद् यद्रोमाञ्चादि तेन विसंष्ठुलो व्यग्रोऽव्यवस्थ इति यावत् तथोक्तः । योऽखिलविधिः समस्तवैवाहिककर्त्तव्यत्वं तस्य व्यासङ्गस्तत्परता तस्य भङ्गस्तेनाकुलश्चकित इति तथोक्तः । एवम्भूत एव—**शैलान्तःपुरमातृमण्डलगणै**श्शैलस्य हिमाद्रेरन्तःपुरमवरोधस्तत्र उपगूहनमुपगूढम्, भावे क्तः ।

यन्मातृमण्डलम्मेनकापरिवारस्तस्य गणास्तैः, यद्वा—शैलान्तःपुरं (मेनका) च मातृमण्डलं (मातृणां ब्राह्मीवैष्णवीतत्सखीप्रभृतीनाम्मण्डलम्) च गणः (देववृन्दं प्रमथादिगणो वा) चेति तैस्तथोक्तैः। **सस्मितं** मन्दहासपूर्वं यथा स्यात्तथा। **दृष्टः**। **आः** कष्टम्। **तुहिनाचलस्य** हिमालयस्य। **करयोः**। **शैत्यम्** (कन्यादानसमये हिमाचलकरयोः सम्बन्धे रोमाञ्चादिसात्त्विकभावभावगोपनायेदमुक्तम्)। **इत्यूचिवान्**। इत्येवं कथितवान् इत्यर्थः। **शिवः**। **वो** युष्मान्। **अवतात्** रक्षतात्। भवानीशङ्करयोर्वैवाहिकवृत्तस्य वर्णनं प्रस्तूयाशीर्वादोऽयम्। अत्र रोमाञ्चकम्पादिरूपेण कार्य्येण प्रकटितस्य पार्वतीविषयकस्य भावस्य शैत्यरूपकारणान्तरोद्भावनेन गोपनम्। शार्दुलविक्रीडितं वृत्तम्॥ २९१॥'

**स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्॥ ९२॥**

दुरूहयोः कविमात्रवेद्ययोरर्थस्य डिम्भादेः स्वयोस्तदेकाश्रययोश्चेष्टास्वरूपयोः। यथा मम—

**'लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपध्द्या-**

**मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन्विक्रमेण।**

**स्फूर्जद्धुंकारघोषः प्रतिदिशमखिलान्द्रावयन्नेव जन्तू-**

**न्कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः॥'**

---

## विवृतिः

स्वभावोक्त्यलंकारमाह—**स्वभावोक्तिरिति**।

व्याचष्टे—**दुरूहयोरिति**। डिम्भादेरित्यादिपदेनाकृत्रिमक्रियारूपवन्मात्रपशुपक्ष्यादिपरिग्रहः। 'मात्रं कात्स्न्र्येऽवधारणे' इत्यमरः। स्वपदं स्वकीयपरतया—व्याचष्टे—**स्वयोरिति**। तस्याप्यवधारणपरतामाह—**तदेकाश्रययोरिति**। डिम्भादिमात्रगतयोरित्यर्थः। कारिकास्थे क्रियारूपपदे व्याचष्टे—**चेष्टास्वरूपयोरिति**। स्वरूपं वर्णसंस्थानादि। तत्र डिम्भस्य क्रियावर्णनं यथा—'करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम्। वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि॥' आदिपदग्राह्यस्य तरक्षोः क्रियावर्णनमाह—**लाङ्गूलेनेति**। क्षितितलमिति काकाक्षिन्यायेन पूर्वापरयोरन्वेति। आत्मनि स्वदेहे अवलीय लीनो भूत्वा। अतिवामनीभूयेति यावत्। प्रतिवनं यावद्वनम्। तरक्षुर्व्याघ्रविशेषः। ईदृशक्रिया अकृत्रिमा रुष्टतरक्षोरेव॥ वर्णवर्णनं **दण्डयाचार्येणो**दाहृतं यथा—'तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः। त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः॥' संस्थानवर्णनं यथा—'पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं दीर्घग्रीवः स भवति खुरास्तस्य चात्वार एव। शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रानास्तामेतद्व्रजति स पशुर्दूरमेह्येहि यामः॥' अत्र विपुलपुच्छखुरचतुष्टयदीर्घग्रीवा अश्वस्यैव संस्थानानि॥

## विज्ञप्रिया

स्वाभावोक्त्यलङ्कारमाह—**स्वाभावोक्तिरिति**। दुरूहार्थेत्यस्याऽत्यन्तदुरूहस्यार्थस्येति नार्थः। किन्त्वर्थस्य दुरूहा क्रिया इत्येवमन्वयः। अर्थश्च डिम्भादिरित्येवमेव व्याचष्टे—**दुरूहयोरिति**। दुरूहयोः स्वयोरित्यन्वयः। दुरूहपदार्थमाह—**कविमात्रेति**। कविभिन्नाऽवेद्ययोरित्यर्थः। अर्थपदं डिम्भादिपरतया व्याचष्टे—**अर्थस्येति**। डिम्भः शिशुः। आदिपदादप्रकृष्टज्ञानमात्रपरिग्रहः। तदेकाश्रययोस्तन्मात्रनिष्ठयोः।

**लाङ्गूलेनेति**। अरुणे उच्छूने स्फारिते चक्षुषी यस्य तादृशः एष तरक्षुः व्याघ्रः प्रतिबलं प्रतिपक्षसमूहं प्रविष्टः। कीदृशः क्षितितलमसकृद् लाङ्गूलेनाऽभिहत्य अग्रपदूभ्यां दारयन् विलिखन्। अथानन्तरं आत्मन्येवावलीय कुञ्चिताङ्गोभूत्वा द्रुतं गगनं विक्रमेण च प्रोत्पतन् तथा स्फूर्जता विस्फुरता फूत्कारेण घोरः तथाऽखिलान् जन्तून् प्रतिदिशं द्रावयन् तथा कोपाविष्टोऽरुणोत्फुल्लचक्षुश्च। अत्रारुणेत्यादि रूपस्य क्रियाणां च वर्णनम्।

## कुसुमप्रतिमा

स्वभावस्योक्तियं स्मिन्निति व्युत्पत्तिः । अथवा स्वभावोक्तिघटितत्वादेवास्य स्वभावोक्तिरिति संज्ञा ।

लक्षणाथ विवृणो दुरूयोरिति । डिम्भः शिशु, आदिशब्दात् पशु पक्षिप्रभृतीनां ग्रहणम् । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । स डिम्भादिरेव एकः केवलः आश्रयो ययोस्तयोः । डिम्भादेर्याक्रिया यच्च रूपवर्ण्यते, तत् केवलं तन्मत्रगतमेव भवेदिति भावः । चेष्टा आचरणम्, रूपमाकारस्तयोः ।

लाङ्गूलेनेति । कोपाविष्टः क्रुद्धः अतएव अरुणे रक्तवर्णे उच्छूने स्फीते च चक्षुषी यस्य स तथोक्तः एष तरक्षुर्व्याघ्रविशेषः, लाङ्गुलेन क्षितितलं भूमिम् अभिहत्य ताड़यित्वा, अग्रपद्भ्या चरणाग्राभ्याम्, असकृत् वारं वारं दारयन् क्षितितलमेव विलिखन्, आत्मन्येव अवलीय सङ्कुचितदेहो भूत्वेत्यर्थः, अथ अनन्तरं विक्रमेण द्रुतं गगनं प्रोतपतन् उद्गच्छन्, स्फुर्जन् वर्द्धमानो हुङ्कारघोषो हुमिति शब्दो यस्य स तथाभूतः सन्, प्रतिदिशं सर्वासु दिक्षु, जन्तून् छागकुर्कुरादि प्राणिगणान् द्रावयन् मयजननेनापसारयन्, प्रतिवनं वने वने प्रविष्टः ।

अत्र क्रुद्धस्य तरक्षोः स्वाभाविकक्रियारूपयोर्वर्णनात् तथोश्च तथाभूतयोरन्वत्रासम्भवेन केवलतन्मात्रनिष्ठत्वात् स्वभावोक्तिरलङ्कारः । इदं पशोः स्वभाववर्णनम् ।

शिशोः स्वभाववर्णने यथा मम रुक्मिणीहरणमहाकाव्ये शिशुभूताया रुक्मिण्याः—

**'यदा तु धातो नहि सन्निधात्री तदा सलीलं सलिलं विलाप्य ।**

**मृदुव्ययाङ्गे मृदि तद्विमूह्य करेण दक्षेण लिलेप दक्षा ॥"**

प्राकरणिकदुरूहार्थघटितमेव भाविकं नाम अलङ्कारं लक्षयति अद्भुतस्येति । अद्भुतस्य आश्चर्य्यस्य, भूतस्य अतीतस्य, अथवा भविष्यती भाविनः पदार्थस्य, यत् प्रत्यक्षायमाणत्वं वर्णनाकौशलेन प्रत्यक्षवत् प्रकाशमानत्वं तत् भाविकं नाम अलङ्करणमुदाहृतमुक्तम्, आलङ्कारिकैरिति शेषः । पदार्थस्य उक्तत्रिविधतया भाविकमपि त्रिविधम् ।

## विमला

स्वभावोक्तिमाह, स्वाभावोक्तिरिति ।—दुरूहयोः स्वक्रियारूपयोः अर्थस्य वर्णनं स्वभावोक्तिः ।

दुरूहयोरिति ।—डिम्भादेरित्यादिपदेन अकृत्रिमक्रियारूपवन्मात्रपशुपक्ष्यादिपरिग्रहः । ("मात्रं कार्त्स्न्येऽवधारणे" इत्यमरः) स्वपदं स्वकीयपरतायां व्याचष्टे—स्वयोरिति । तस्याप्यवधारणपरतामाह, तदेकाश्रययोरिति—डिम्भादिमात्रगतयोरित्यर्थः । कारिकास्थे क्रियारूपपदे व्याचष्टे, चेष्टास्वरूपयोरिति ।—स्वरूपं—वर्णसंस्थानादि । तत्र डिम्भस्य क्रियावर्णेनं यथा—"करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् । वटस्थ पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥" इति ज्ञेयम् ।

आदिपदग्राह्यस्य तरक्षोः क्रियावर्णनमाह, लाङ्गूलेनेति ।—कोपाविष्टः अत एव अरुणे—रक्ते, उच्छूने—स्फीते, चक्षुषी यस्य तथाभूतः, एष तरक्षुः, —शार्दूलविशेषः, ("तरक्षुस्तु मृगादनः" इत्यमरः) असकृत्—पुनः पुनः, चाङ्गुलेन क्षितितलम् [एतत् काकाक्षिगोलकन्यायेन पूर्वापरयोरन्वितम्] अभिहत्य—आहत्य, अगपद्भ्यां—पादाग्राभ्यां, दारयन्—उल्लिखन् आत्मन्येव—स्वदेहे एव, अवलीय—लीनो भूत्वा, अतिवामनीभूयेति यावत्, अथ द्रुतं—शीघ्रं, विक्रमेण—बलेन, गगनं प्रोत्पतन्—उल्लम्फन्, स्फूर्जन् हुङ्कारस्य घोषः यस्य तथोक्तः सन्, घोरं हूङ्कारं

कुर्वन्नित्यर्थः, प्रतिदिशं—दिशि दिशि, अखिलान्—सर्वान्, जन्तून् द्रावयन्—ताड़यन्, भापयन्निति यावत्, प्रतिवनं—वनं प्रति, यावद्वनं वा, प्रविष्टः। ईदृशक्रिया अकृत्रिमा रुष्टतरक्षोरेव इति ज्ञेयम्। स्रग्धरा वृत्तम्। वर्णवर्णनं दण्ड्याचार्य्येणोदाहृतं यथा—"तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः। त्रिवर्णराजिभिः कण्ठैरते मञ्जुगिरः शुकाः॥" संस्थावर्णनं यथा—"पश्चात् पुच्छं वहति विपुलं तच्च धुनोत्यजस्रं दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव। शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्नामात्रनास्तामेतत् व्रजति स पशुर्दूरमेह्येहि यामः॥" अत्र विपुलपुच्छखुर-चतुष्टयदीर्घग्रीवा अश्वस्यैव संस्थानानि इति। यथा वा—"ग्रीवाभङ्गाभिरामं मुहुरनुपपत्ति स्यन्दने दत्तदृष्टिः पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्। शब्पैरर्द्धावलीढैःश्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्र-प्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यो प्रयाति॥" इति।

## लक्ष्मी

दुरूहार्थप्रकरणत्वात् तद्युक्तमेव स्वभावोक्तयलङ्कारं लक्षयति—**स्वाभावोक्ति**रिति। न च मध्यमपतितव्याजोक्त्यलङ्कारेण प्रकरणबोध इति वाच्यम्, विशेषातिदिष्टेन तेन तद्बाधाया अभावात्। दुरूहार्थयोः विशेष-चातुर्यबोध्यत्वेन पामरजनैरज्ञेययोः केवलसहृदयसंवेद्योरित्यर्थः, अर्थस्य डिम्भादेः स्वक्रियारूपयोः तत्तद्गतस्वाभाविकमात्रचेष्टाकारयोः वर्णनं निरूपणं स्वभावस्योक्तिर्यत्रेति व्युत्पत्त्या स्वभावोक्तिः तन्नामालङ्कारः 'उच्यते' इत्यनुवर्तते। तथा च यस्य कस्यचिद् दुरूहवस्तुनोऽसाधारणधर्मवर्णनं स्वभावोक्त्यलङ्कार इति फलितम्। अत्र दुरूहेतिविशेषणोपादानेन—

**'गोरपत्यं बलीवर्द्दो घासमत्ति मुखेन सः।**

**मूत्रं मुञ्चति शिश्नेन अपानेन तु गोमयम्॥'**

इत्यत्र पामरजनज्ञानगम्यत्वेन वलीवर्द्दगतस्वाभाविकचेष्टाक्रिययोर्वर्णनेऽपि नालङ्कारत्वप्रसक्तिः, असाधारणस्वभाववर्णनस्य लोकसिद्धत्वेऽपि प्रतिभामात्रवेद्यत्वादलौकिकवद्भातीति भवत्यलङ्कार इति तत्त्वम्।

काठिन्यांशमपाकर्त्तु विवृणोति—दुरूहयोरिति। कविमात्रवेद्ययोः, अत्र मात्रपदेन साधारणपामरजनबुद्धिवेद्यत्वनिरासः। डिम्भः शिशुः, 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः आदिपदेन युवति-मुग्ध-कातरतिर्यग्भ्रान्तहीनपात्रादिपरिग्रहः।

**लाङ्गूलेने**ति। कोपाविष्टः कुपितः, अतएव अरुणे शोणवर्णे अथ च उच्छूने स्फीते चक्षुषी लोचने यस्य स तादृशः, एष तरक्षुः व्याघ्रविशेषः 'तरक्षुस्तु मृगादनः' इत्यमरः, लाङ्गूलेन पुच्छेन 'पुच्छोऽस्त्रीलोमलाङ्गुले' इत्यमरः' क्षितितलं भुवम् अभिहत्य ताडयित्वा अग्रपद्भ्यां चरणाग्राभ्याम् असकृत् मुहुर्मुहुः दारयन् भूतलमेव भिन्दन् विलिखन्नित्यर्थः, आत्मन्येव स्वशरीर एव अवलीय लीनो भूत्वा सङ्कुचद्वपुर्भूत्वेत्यर्थः, अथ अनन्तरं विक्रमेण द्रुतं त्वरितं गगनम् आकाशं प्रोत्पतन् उद्गच्छन् स्फूर्जन् वर्द्धमानः हुङ्कारघोषः यस्य स तादृशः, भयङ्करं हुङ्कारं विदधदित्यर्थः, प्रतिदिशं चतुर्दिक्षु अखिलान् समग्रान् जन्तून् मृगकुक्कुरछागादिप्राणिवर्गान् द्रावयन् भयोत्पादनेन सवेगं सञ्चालयन् प्रतिवनं वनं वनं प्रविष्टः। **शार्दूलविक्रीडितं** छन्दः।

अत्र कोपाविष्टस्य तरक्षोः स्वाभाविकक्रियारूपयोर्वर्णनात् यादृशयोश्च तयोरन्यत्र सम्भवाभावेन केवलं तन्मात्रगतत्वात् स्वभावोक्तिः। अत्र पशोः स्वभाववर्णना। शिशोः स्वभाववर्णना यथा—

**'करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम्।**

**वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥'**

## रुचिरा

ननु प्रकृतगोपनेनाप्रकृतोद्भावनरूपाया अपह्नुतेरस्याः को भेद इत्याशङ्क्याह—**इयं** व्याजोक्तिः । **प्रथमा** प्रकृतनिषेधपूर्वकाप्रकृतोद्भावनरूपा । **अपह्नुतिः** । **न** । हेतुं निर्दिशति-**अपह्नवकारिणः** प्रतिषेधकारिणः । **विषयस्या** प्रकृतारोपविषयस्य । **अनभिधानात्** । अयम्भावः—अपह्नुतौ प्रकृतं निषिध्याप्रकृतं स्थाप्यते, अत्रानिषिध्यैव लिङ्गादिना प्रकटितस्य वस्तुनो गोपनम् । इति । **द्वितीयापह्नुतेः** । **भेदः** । **तु** । **तत्प्रस्तावे** तस्या अपह्नुतेः प्रस्तावः प्रसङ्गस्तत्र । **दर्शितः** । 'गोपनकृता गोपनीयस्यापि प्रथममभिहितत्वाच्च व्याजोक्तेः' इत्यनेनेति शेषः । तत्र गोपनकृता गोपनीयं प्रथममभिधीयते, अत्र तु न तथैत्येतयोर्भेद इति भावः ।

स्वाभावोक्तिं लक्षयति—१८४ **दुरुहार्थस्वक्रियारूपवर्णनं** दुरूहे ये अर्थस्वक्रियारूपे तयोवर्णनम् । अर्थस्य स्वक्रियारूपे इत्यर्थस्वक्रियारूपे । स्वे स्वकीये ये क्रियारूपे इति स्वक्रियारूपे । **स्वभावोक्तिस्तन्नामाऽलङ्कारः** । अयम्भावः—यस्य या क्रिया रूपं वा, तयोः कविमात्रवेद्ययोः सतोर्वर्णनं स्वभावोक्तिर्नामलङ्कारः । इति ।

सूत्रं सुगमयितुं तत्कठिनांशं व्याचष्टे—**दुरूहयोः** । **कविमात्रवेद्ययोः** । मात्रपदेन पामरजननिरासः, एतेन-'श्वा मुखं व्यादाय बुक्कतीत्यादौ नातिप्रसङ्गः । **अर्थस्य** । **डिम्भादेः** । आदिपदेन-जन्त्वन्तरमात्रस्य ग्रहणम् । डिम्भो बालः । **स्वयोः** स्वीययोः । **तदेकाश्रययोः** (इति यावत्) । **चेष्टास्वरूपयोः** । 'वर्णनं स्वाभावोक्ति'रिति शेषः । तथा च —दुरूहे ये डिम्भाद्याश्रिते क्रियारूपे तयोर्वर्णनं स्वाभावोक्तिरिति फलितम् ।

उदाहरति—**यथा** । **मम**—'**एषः** । **तरक्षुर्व्याघ्रविशेषः** । 'तरक्षुस्तु मृगादनः ।' इत्यमरः । असकृत् वारंवारम् । **लाङ्गूलेन** पुच्छेन । 'पुच्छोऽस्त्री लूमलाङ्गुले' इत्यमरः । **क्षितितलं** पृथ्वीम् । **अभिहत्य** ताडयित्वा । **अग्रपद्भ्यां** पादाग्राभ्याम् । 'असकृत् क्षितितल'मिति पूर्वतोऽन्वेति ।' **दारयन्** भिन्दन् । **आत्मनि** स्वशरीरे । **एव** । **अवलीय** विलीय सङ्कुचद्वपुर्भूत्वेति यावत् । **अथ** । **द्रुतं** त्वरितम् । **विक्रमेण** । **गगनमाकाशम्** । **प्रोत्पतन्**नुलम्फन् । **स्फूर्जद्धुङ्कारघोषः** स्फूर्जन् हुङ्कारघोषो यस्य तथोक्तः । भयङ्करं हुङ्कारं कुर्वन्निति भावः । **प्रतिदिशं** दिशिदिशि । **अखिलान्** । **जन्तून्** मृगादीन् । **द्रावयन्** संवेगं सञ्चालयन् । **कोपाविष्टः** कुपितः । अत एव-**अरुणोच्छूनचक्षुररुणे** शोणवर्णे अथ च—उच्छूने स्फीते चक्षुषी नेत्रे यस्य तथोक्तः 'सन्नि'ति शेषः । **प्रतिवनं** वनंवनम्, यद्वा-वनं प्रतीत्यर्थः । **प्रविष्टः** । अत्र कोपाविष्टस्य क्रियारूपं च दर्शितम् । शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ २९२ ॥' यथा वा—'ग्रीवाभङ्गाभिराममुहुरनुपतति स्यन्दने बद्धदृष्टिः पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् । शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥' इति ॥

**अद्‌भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ।**
**यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥ ९३ ॥**

यथा—

**'मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः ।**
**येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥'**

---

## विवृतिः

भाविकालंकारमाह—**अद्‌भुतस्येति** । प्रत्यक्षायमाणत्वं वर्णनाविशेषवशेन प्रत्यक्षवद्‌भासमानत्वं भावो वक्तुरभिप्रायः । स च वर्णनीयगोचर (वति) स्वरूपस्तद्योगाद्‌भाविकं तद्योगश्च व्यञ्जकत्वेन ॥

अद्‌भुतस्य प्रत्यक्षायमाणत्वे भाविकमाह—**मुनिरिति** । दिव्यौ विष्णोरवतारौ तौ प्रसिद्धौ । अत्र चुलुकीकृतसमुद्रे दृश्यमानदिव्यमत्स्यकच्छपरूपमद्‌भुतं वस्तु वर्णनाविशेषवशेन मुनिसंनिकृष्टश्रोतृणां प्रत्यक्षवद्भासते ॥

## विवृतिपूर्तिः

**भाविकमिति** । कविगतो भाव आशयः श्रोतरि प्रतिबिम्बत्वेनास्तीति, भावो भावना वा पुनः पुनश्चेतसि निवेशनं सोऽत्रास्तीति व्युत्पत्तिः ॥

## विज्ञप्रिया

भाविकालङ्कारमाह—**अद्‌भुतस्येति** । अथेतिवेत्यर्थः । भूतस्य भविष्यतो वा अद्‌भुतस्य पदार्थस्य यत् प्रत्यक्षायमाणत्वं प्रत्यक्षेण दृश्यमानत्वं वर्णितं तदित्यर्थः ।

**मुनिरिति** । एकचलुके पीयमानसमुद्ररूपे गण्डूषे मत्स्यकच्छपावीश्वरावतारौ भूतभाविनौ योगबलेन दृष्टौ । एतदर्थमेव योगीन्द्रपदोपादानम् ।

## कुसुमप्रतिमा

भावेन कवेरभिप्रायविशेषेण संसृष्टमिति व्युत्पत्तिः । काव्यप्रकाशकृता तु "भावः कवेरभिप्रायोऽस्तीति भाविकम्" इत्युक्तम् । अत्रार्थे अयमपि नित्यनपुंसकलिङ्गः शब्दः ।

तत्राद्यमुदाहरति मुनिरिति । योगिनामिन्द्रः श्रेष्ठो महात्मा कुम्भसम्भवो मुनिरगस्त्यः, जयति सर्वेष्वेव मुनिषु उत्कर्षेण वर्त्तते । येन मुनिना एकस्मिन् चुलुके प्रसृतौ दिव्यौ स्वर्गीयौ, तौ नारायणावतारत्वेन प्रसिद्धौ, मत्स्यकच्छपौ दृष्टौ समुद्रपानकाल इति शेषः ।

अत्र आत्मनः प्रसृतिमात्रस्थान एव निरतिशयविशाल-भगवदवतारमत्स्यकच्छपदर्शितया अद्‌भुतस्य महर्षेरजस्यस्व जयतीति वर्त्तमानकालनिर्द्देशेन श्रोतृणां प्रत्यक्षायमाणत्वात् भाविकालङ्कारः ।

## विमला

भाविकमाह, अद्‌भुतस्येति ।—अद्‌भुतस्य—असम्भवस्य, भूतस्य—अतीतस्य, भविष्यतः,—भाविनः, पदार्थस्य—वस्तुनः, यत् प्रत्यक्षायामाणत्वं—वर्णनाविशेषवशेन प्रत्यक्षवत् भासमानत्वं, तत् भाविकं—भावः,—वक्तुरभिप्रायः, स च वर्णनीयगोचरवति स्वरूपः, तद्योगात् भाविकमित्याशयः, तद्योगश्च व्यञ्जकत्वेन इति बोध्यम्; यद्वा—भावः,—कविगत आशयः, श्रोतरि प्रतिबिम्बत्वेन अस्तीति, भावः,—भावना वा चेतसि पुनः पुनः निवेशनं, स अस्य अस्तीति, [विषयत्वाख्यसम्बन्धपरषष्ठीसामर्थ्यात्मत्वर्थे ठन्; सोऽवास्तीति विग्रहप्रदर्शनं, तन्न; "सप्तम्याञ्च न तौ स्मृतौ" इति भाष्यकारोक्तेः] उदाहृतम् ।

अद्‌भुतस्य प्रत्यक्षायमाणत्वे भाविकमाह, मुनिरिति ।—महात्मा कुम्भकुम्भवः,—कुम्भोद्‌भूतः, योगीन्द्रः,—ऋषिश्रेष्ठः, मुनिः,–अगस्त्यः, ("अगस्त्यः कुम्भसम्भव" इत्यमरः) जयति—सर्वोत्कर्षेण वर्त्ततामित्यर्थः, येन—अगस्त्येन, एकचुलुके—एकस्मिन् गण्डूषे, तौ—प्रसिद्धौ, दिव्यौ—श्रीविणोरवतारौ, मत्स्यकच्छपौ दृष्टौ, समुद्रपानकाले गण्डूषे समुद्रेण सह पातालनिलययोर्मत्स्यकूर्मयोरप्युत्थानादिति भावः । अत्र चुलुकीकृतसमुद्रे दृश्यमानदिव्यमत्स्य कच्छपरूपमद्‌भुतं वस्तु मुनिश्च वर्णनाविशेषवशेन सन्निकृष्टश्रोतृणां प्रत्यक्षवद्‌भामते इति अतीतपदार्थस्य अद्‌भुतस्य प्रत्यक्षायमाणत्वम् । यथा वा सेतुबन्धे (५/२८)—"क्षुभितजलशिष्टसारो मुखनिर्धावितप्रसारितोल्कानिवहः । आकृष्यमाण एव ज्ञायते पतित इति सागरे रामशरः ॥" इति । अत्र बाणस्य समुद्रमध्यापाते भावित्यपि तस्मात् प्रागेव शरपातस्य लौकिकप्रत्यक्षमुक्तं, श्रीरामप्रभावातिशयवर्णने तात्पर्य्यमिति बोध्यम् ।

## लक्ष्मी

प्रस्तुतदुरूहार्थयुक्तमेव भाविकालङ्कारं निरूपयति—**अद्‌भुतस्येति** । अद्‌भुतस्य आश्चर्यस्य, भूतस्य पूर्वकालजातस्य अथवा भविष्यतः उत्तरकालभाविनः पदार्थस्य वस्तुनः, यत् प्रत्यक्षायमाणत्वं रचनानैपुण्येन प्रत्यक्षवद्‌भासमानत्वं तत् भावेन कवेराशयविशेषेण संसृष्टमिति व्युत्पत्त्या भाविकं तन्नामालङ्करणम् उदाहृतम् अभिहितम्, काव्यविद्‌भिरिति शेषः । पदार्थस्य प्रतिपादितत्रैविध्येन भाविकमपि त्रिविधमित्यवधेयम् ।

तत्र प्रथमोदाहरणं दर्शयति—**मुनिरिति** । योगिनां चित्तवृत्तिनिरोधिनाम् इन्द्रः श्रेष्ठः महात्मा कुम्भः सम्भवः उत्पत्तिस्थानं यस्य स तादृश (क) अगस्त्य इत्यर्थः जयति सर्वोत्कर्षेण वर्तते, येन मुनिना एकचुलुके एकस्मिन् प्रसृतौ दिव्यौ तौ जगदाधारकत्वेन ख्यातौ नरनारायणौ मत्स्यकच्छलौ मीनकूर्मौ दृष्टौ योगजलेन अवलोकितौ समुद्रपानसमये इति शेषः । समुद्रस्यैकचुलुकविधाने तत्र स्थितयोर्भगवतोर्मत्स्यकच्छपयोरप्येतदन्तर्गतत्वं दृष्टचरमित्यवधेयम् ।

अत्र स्वस्य चुलुकमात्रस्थान एव अतिविपुलभगवदवतारमत्स्यकच्छपयोर्योगबलेनावलोकिततया आश्चर्यस्य महर्षेः कुम्भयोनेः जयतीति वर्त्तमानसमयोपन्यासेन श्रवणार्थिनां प्रत्यक्षायमाणत्वाद् भाविकम् ।

अतीतानागतयोः प्रत्यक्षायमाणत्वे द्वितीयतृतीयभेदावेकोदाहरणप्रदर्शनेनैवाह—यथा वेति ।

## रुचिरा

भाविकं लक्षयति—१८४ **भूतस्य** जातस्य । **अथ** । **भविष्यतो** भाविनः । **अद्भुतस्य** । **पदार्थस्य** । **यत्** । **प्रत्यक्षायमाणत्वं** प्रत्यक्षवद्भासमानत्वम् । **तत्** । **भाविकम्**भावो वक्तुरभिप्रायो वर्णनीयस्वरूपेणास्तीति तथोक्तम् (व्यङ्ग्यम्) उपचारात्तन्नामाऽलङ्कारः । **उदाहृतं** कथितम् ॥ १४६ ॥

उदाहरति—**यथा 'येन** । **एकचुलुके** एकस्मिंश्चुलुके । **तौ** जगदाधारकत्वेन प्रसिद्धौ । अत एव—**दिव्यौ** । **मत्स्यकच्छपौ** । **दृष्टौ** । समुद्रस्यैकचुलुककरणे तत्रत्ययोर्भगवतोर्मत्स्यकच्छपयोरप्येतदन्तःपातित्वं दृष्टचरम् । सः-**योगीन्द्रः** । **महात्मा** । **कुम्भसम्भवः** कुम्भः सम्भव उत्पत्तिस्थानं यस्य तथोक्तः । अगस्त्य इत्यर्थः । उर्वशीं दृष्ट्वोन्मथितेन्द्रियाभ्यां मित्रावरुणाभ्यां कुम्भे वीर्यं सिक्तं, तत एतस्य जन्मेति पुराणप्रसिद्धम् । **मुनिः** । **जयति** । अत्र दिव्ययोर्मत्स्यकच्छपयोः प्रत्यक्षः ॥ २९३ ॥

यथा वा—

**'आसीदञ्जनमत्रेति पश्यामि तव लोचने ।**

**भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥'**

न चायं प्रसादाख्यो गुणः । भूतभाविनोः प्रत्यक्षायमाणत्वे तस्याहेतुत्वात् । न चाद्भुतो रसः । विस्मयं प्रत्यस्य हेतुत्वात् । न चातिशयोक्तिरलंकारः । अध्यवसायाभावात् । न च भ्रान्तिमान् । भूतभाविनोर्भूतभावितयैव प्रकाशनात् । न च स्वभावोक्तिः । तस्य लौकिकवस्तुगतसूक्ष्मधर्मस्व-भावस्यैव यथावद्वर्णनं स्वरूपम् । अस्य तु वस्तुनः प्रत्यक्षायमाणत्वरूपो विच्छित्तिविशेषोऽस्तीति । यदि पुनर्वस्तुनः क्वचित्स्वभावोक्तावप्यस्या विच्छित्तेः संभवस्तदोभयोः संकरः ।

---

## विवृतिः

भूतभाविनोः प्रत्यक्षायमाणत्वे भाविकमाह—**आसीदिति** । अत्रानयोः । अत्र पूर्वार्धे भूतस्य परार्धे भाविनः प्रत्यक्षायमाणत्वं नयनशोभाविशेषवशेनाञ्जनं सौन्दर्यातिशयवशीकृतस्य धनिनः पत्युरादरातिशयेन भूषणसंभार-मनुमाय सख्या तथाभिहितं यथा भूतभाविनावप्यञ्जनभूषणसंभारौ संनिकृष्टश्रोतृणां प्रत्यक्षवद् भासेते । केचित्तु 'यौवनोद्भेदादञ्जनं विनापि चक्षुषि तच्छोभा भूषणाभावेऽपि वपुषि तच्छोभारम्भः' इति व्याचक्षते । तन्न । तादृशार्थस्य व्यञ्जकाभावेनाप्रतीतेः । भूतभाविनोरञ्जनभूषणयोः प्रत्यक्षायमाणत्वे तत्कृतचारुत्व एव तात्पर्यात् । ननु संनिकृष्टपदार्थस्य वर्णन प्रत्यक्षायमाणत्वं तदा भवति यदि प्रसन्नार्थाः शब्दाः प्रयुज्यन्ते । एवं सति प्रसादाख्यो गुण एवायमित्यभिप्रायेणाशङ्कते—**न चायं प्रसादाख्यो गुण इति**। भूतभाविनोरित्यद्भुतस्याप्युपलक्षणम् । **तस्य** प्रसादगुणस्य । अद्भुतस्य प्रत्यक्षायमाणत्वपक्षे शङ्कते—**न चाद्भुतो रस इति । विस्मयं** चमत्कारम् । चमत्का-रायोगे रसरूपत्वासंभवादिति भावः । नन्वत्र वर्णनीयगतः कोऽप्यतिशयः प्रतीयत इत्यतिशयोक्तिरेवायमित्याश-ङ्कते—न **चातिशयोक्तिरीति**। अध्यवसायाभावाद् अभेदारोपाभावात्। ननु भूतभाविपदार्थभाववति तत्प्रकारकप्रतीतिरत्रास्तीति भ्रान्तिमानेवायमित्यशङ्कते—**न च भ्रान्तिमानिति** । भूतभाविनोर्वर्तमानत्वेन भानेऽपि भ्रमः संभवतीति तद्वारणाय भूतभावितयैवेत्युक्तम् । **प्रकाशनात्त**द्वति विषयीकरणात् । **तस्य** स्वभावोक्त्यलंका-रस्य । **सूक्ष्मेति** । कवितृमात्रवेद्य इत्यर्थः । **यथाव**द्वर्णनं संभावनातिक्रमेण वर्णनम् । **अस्य** भाविकालंकारस्य तु । **विच्छित्ति**विशेषोऽस्तीतिशब्दो हेतौ ॥

## विज्ञप्रिया

**आसीदिति** । यौवंनेऽञ्जनाभावेऽपि अञ्जनशोभासत्त्वादासीदिति । भूषणेन भविष्यन्त्याः शोभाया तद्वि-नापि दर्शनाद् भाविभूषणेति ।

ननु भूतभाविनोः प्रत्यक्षायोग्योरपि प्रत्यक्षायमाणत्वं शीघ्रप्रतीतिविषयत्वात् । तथाचेदृशार्थस्य विषय-त्वेन शब्दबोधितोपि सोर्थो विशद एव । तथ्य चार्थवैमल्यं प्रसादो यः परोक्तः प्रसादगुणः स एवायं तदभिन्नवै-चित्र्यविशेषाभावाद् भाविकनामलङ्कारो नास्तीत्याशङ्कते—**न चायमिति** । समाधत्ते—**भूतभाविनोरिति** । तयोः

प्रत्यक्षायमाणत्वे ग्राह्ये तस्य प्रत्यक्षायमाणत्वस्याहेतुकत्वादहेतुकत्वस्फुरणादित्यर्थः। तथा चाहेतुकत्वस्फुरणवैशिष्ट्यरूपवैचित्र्यमेव भाविकालङ्कार इत्युक्तम्

नन्वहेतुकत्वेन हेत्वनुसन्धानं विस्मय एव, तथा चाद्‌भुतरस एवायमित्याशङ्कते—**नचाद्‌भुत** इति। समाधत्ते—**विस्मयं प्रती**ति। अहेतुकत्वज्ञानविशिष्टं भाविभूतवस्तुप्रत्यक्षायमाणत्वमेवायमलङ्कारः। तस्य विस्मयं प्रति हेतुत्वादेव, नतु विस्मयरूपत्वादित्यर्थः। तथा नचात्र रसोऽद्‌भुतोलङ्कारस्तु भाविकमिति भावः।

नायिकायाः रूपातिशयप्रतीत्या उक्तचतुर्विधातिशयोक्तितोऽतिरिक्तप्रकारातिशयोक्तिरेवेयं स्यादित्याशङ्कते—**नचातिशये**ति। समाधत्ते—**अध्यवसाये**ति। सर्वविधातिशयोक्त्य एवाध्यवसायघटिताः। अत्र तदभावात्तद्रूपातिशयबोधमात्रेण तदीयप्रकारान्तरकल्पनाऽनौचित्यादिति भावः। भूते भाविनि रूपे भूतभावित्वेन ज्ञापनात् भ्रान्तिमत्त्वमाशङ्कते—**न च भ्रान्ती**ति। समाधत्ते—**भूते**ति। प्रकृतस्यान्यतादात्म्यभ्रम एव भ्रान्तिमान्न चात्राभूतभाविकपदार्थाः प्रकृतास्तत्र भूतभाविताविभ्रमः। किन्तु भूतभाविपदार्थं प्रकृत्य तत्रैव तथात्वप्रकाशनादित्यर्थः। रूपविशेषवन्नायिकामात्रधर्मयोरत्र नयनाकृत्योर्वर्णितत्वात्।

स्वाभावोक्तिमाशङ्कते—**नचे**ति। समाधत्ते—**तस्या** इति। लौकिकं वस्तु डिम्भव्याघ्रादि तद्‌गतस्य सूक्ष्मधर्मात्मकस्वभावस्य कविभिन्नजनावेद्यतन्मात्रवृतिधर्मरूपस्य तत्र यथा वर्णितं तस्य स्वरूपमित्यर्थः। अत्र नूतनतेत्याह—**अस्यत्वि**ति। तदपेक्षया अत्र विलक्षणभङ्गिरस्तीत्यर्थः। ननु

**"अस्फुटाक्षरवागासीदेष बालो विलोक्यते।**

**दरदन्ताङ्कुरश्रीकहसो भावी च दृश्यते॥"**

इत्यत्र डिम्भमात्रक्रियादेर्भाविभूतस्य कोऽलङ्कारः स्यादिति मनसिकृत्य समाधत्ते **यदि पुनरि**ति। संकरः स्वातन्त्रयेणैकत्र स्थितिरूपः।

## कुसुमप्रतिमा

एकोदाहरणेनैव भूतभविष्यतोः प्रत्यक्षायमाणत्वे द्वितीयतृतीयप्रकारौ दर्शयितुमाह यथा वेति।

आसीदिति। दशवर्षदेशीयां काञ्चित् कुमारीमवलोक्य कस्यचिदुक्तिरियम्। अत्र अनयोः अञ्जनं कज्जलमासीत् इति ज्ञानेन तत्र लोचने नयनद्वयं पश्यामि; पूर्वं सततमेवाञ्जनदर्शनादिदानीमपि तथैव संस्कारादिति भावः तथा भावी भूषणसम्भारः अलङ्कारसमूहो यस्यां तां तादृशीं तव आकृति देहं साक्षात कुर्वे प्रत्यक्षीकरोमि; अस्यास्तवाकृतेरत्यन्तसुन्दरतया धमिगृहे परिणयावश्यम्भावसम्भावनया तथैवानुमानोदयादित्याशयः।

अत्र पूर्वार्द्धे भूतस्याम्यञ्जनस्य पश्यमीति वर्त्तमाननिर्द्देशेन प्रत्यक्षायमाणतया भाविकम्। परार्द्धे च भाविनोऽपि भूषणसम्भारस्य साक्षात् कुर्व इति वर्त्तमाननिर्द्देशेन प्रत्यक्षायमाणतयाभाविकम्।

ननु भूतभाविनीः प्रत्यक्षायमाणत्वं प्रति उक्तरूपसुखबोध्यशब्दप्रयोग एव प्रयोजक इति प्रसादगुणः एवायंमङ्गीक्रियताम्, किमतिरिक्तभाविकाख्यालङ्काराङ्गीकारगौरवेणत्याह न चेति। अयमनुभूयमानो वैचित्रयविशेषः प्रसादाख्यो गुण इति वाच्यं न चेत्यर्थः। एवमुत्तरत्रापि बोध्यम्। तस्य प्रसादगुणस्य। रसादिपुष्टिं प्रत्येव तस्य हेतुत्वादित्याशयः।

तर्हि अद्भुतस्य प्रत्यक्षायमाणत्वस्थले अद्भुतरस एवास्तामित्याह न चेति। अस्य अद्भुतरसस्य, विस्मयं प्रति हेतुत्वात् श्रोतृणां विस्मयजनकत्वात्; "मुनिर्जयति" इत्यादौ तु तदभावादिति भावः।

अथ तदा अप्रत्यक्षस्यापि अद्भुतस्म प्रत्यक्षायमाणत्वे भूतभाविनोः प्रत्यक्षामाणत्वे च सम्भवातिक्रमेणा-यथार्थताप्रतीतेरतिशयोक्त्यलङ्कार एवायं भववित्याह न चेति। अध्यवसायस्य अभेदप्रतिपत्तेरभावात्; अतिशयो-क्तेश्च तद्रूपत्वादित्याशयः।

ननु तर्हि अप्रत्यक्षस्यापि प्रत्यक्षवत् प्रतीतिभ्रान्तिरेवेति भ्रान्तिमानलङ्कार एवायमस्तु इत्याह न चेति। भूतेति। एवच सति "अतस्मिंत्तद्बुद्धिर्भ्रान्तिः" इत्युक्तलक्षणाया भ्रान्तेरेवाभावात् प्रत्यक्षायमाणत्वमित्युक्त्या वास्त-विप्रत्यक्षाभावस्य सूचितत्वाच्चेति भावः।

अथ तथापि अगस्त्यस्य कुमार्य्यश्च दुरूहयोः क्रियारूपयोर्वर्णनात् स्वभावोक्तिरेव भवत्वित्याह न चेति। तस्य स्वभावोक्त्यलङ्कारस्य, लौकिकवस्तुगतः सूक्ष्मः सूक्ष्मबुद्धिमात्रवेधो यो धर्म्मरूपः स्वभावस्तस्यैव, न तु प्रत्यक्षायमाणत्वस्य इति एवशब्दस्यार्थः। स्वरूपमवस्था। अस्य तु भाविकालङ्कारस्य तु वस्तुनः अद्भुतस्य, भूतस्य भविष्यतो वा पदार्थस्य। विच्छित्तिविशेषः स्वभावोक्तिवैचित्रयापेक्षया भिन्नरूपवैचित्रयम् इति हेतानं च स्वाभावोक्तिरित्यर्थः। एतेन वैचित्रयभेदादेव नाममेव इति सूचितम्।

नन्वेकत्र स्वभावोक्तिघटकविच्छित्तेर्भाविकघटकविच्छित्तेश्च सम्भवे कतरोऽङ्गीकर्त्तव्य इत्याह यदि पुनरिति। अस्या भाविकालङ्कारघटिकायाः। उभयोः स्वभावोक्तिभाविकयोः। तथा च "ग्रीवाभङ्गाभिरामम्" इत्यादौ शाकुन्तलश्च के हरिणस्य तदानीजनतन्मात्रगतक्रियारूपयोवर्णनात् स्वभावो क्तः, तथाभूततया अद्भुत-रूपस्य तस्य हरिणस्य प्रत्यक्षायमाणत्वाच्च भाविकमित्यनयोरङ्गाङ्गिभावेन सङ्करः।

## विमला

भूतभाविनोः प्रत्यक्षायमाणत्वे भाविकमाह, आसीदिति।—अत्र अञ्जनमासीदिति तव लोचने—नयने, पश्यामि, तव आकृतिञ्च भाविनः,—भविष्यन्त, भूषणानां सम्भाराः,—समूहाः यसस्तादृशीं, साक्षात् कुर्वे—पश्या-मीत्यर्थः। अत्र पूर्वार्द्धे भूतस्य परार्द्धे भाविनः प्रत्यक्षायमाणत्वं नयनशोभाविशेषवशेनाञ्जनं सौन्दर्य्यातिशयवशी-कृतसय धनिनः पत्युरादरातिशयेन भूषणसम्भारमनुमाय संख्या तथाऽभिहितं, यथा भूतभाविनावपि अञ्जनभूषणसम्भारौ सन्निकृष्टश्रोतृणां प्रत्यक्षवद्भासेते। केचित्तु—"यौवनोद्भेदादञ्जनं विनाऽपि चक्षुषि तच्छोभा, भूषणाम् वेऽपि वपुषि तच्छोभारम्भः" इति व्याचक्षते, तत्र; तादृशार्थस्य व्यञ्जकाभावेनाप्रतीते; भूतभाविनोरञ्जनभू-षणयोः प्रत्यक्षायमाणत्वे तत्कृतचारुत्वे एव तात्पर्य्यात्।

ननु सन्निकृष्टपदार्थस्य वर्णनातः प्रत्यक्षायमाणत्वं तदा भवति, यदि प्रसन्नार्थाः शब्दाः प्रयुज्यन्ते, एवं सति प्रसादाख्यो गुण एवायमित्यभिप्रायेणाशङ्कते, न चायं प्रसादाख्यो गुण इति।—भूतभाविनोरित्यद्भुतस्याप्युपल-क्षणम्। तस्य—प्रसादगुणस्य। अद्भुतस्य प्रतयक्षायमाणत्वपक्षे शङ्कते, न चाद्भुतो रस इति।—विस्मयं—चम-त्कारं, चमत्कारायोगे रसरूपत्वासम्भवादिति भावः। नन्वत्र वर्णनीयगतः कोऽप्यतिशयः प्रतीयते इत्यतिशयोक्तिरेवायमित्याशङ्कते, न चातिशयोक्तिरिति।—अध्यवसायाभावात्—अभेदारोपाभावात्। ननु भूतभाविपदार्थाभाववृति तत्प्रकारकप्रतीतिरत्रास्तीति भ्रान्तिमानेवायमित्याशङ्कत, न च भ्रान्तिमानिति।—भूतभा-विनोर्वर्त्तमानत्वेन भानेऽपि भ्रमः सम्भवतीति तद्वारणाय भूतभावितयैवेत्युक्तं, प्रकाशनात्—तद्वति विषयीकर-

णात्। तस्य—स्वभावोक्त्यलङ्कारस्य। सूक्ष्मेति कविमात्रवेद्य इत्यर्थः। यथावद्वर्णनं—सम्भावनाऽतिक्रमेण वर्णनम्। अस्य—भाविकालङ्कारस्य तु। विच्छित्तिविशेषोऽस्तीति।—अत्र इतिशब्दो हेतौ इति।

## लक्ष्मी

**आसी**दिति। अप्राप्तयौवनां कामपि कन्यकां निरीक्ष्य कस्यचन कथनमिदम्। अत्र अनयोर्लोचनयोः यत् अञ्जनं कज्जलम्, आसीत् इत्यतीताञ्जनयुक्ते तव लोचने नेत्रे पश्यामि साक्षात्करोमीत्यर्थः 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरेणात्रेतिपदं प्रकारार्थकं न तु हेत्वर्थकमिति बोध्यम्। यद्यत्र हेत्वर्थकत्वं स्यात्तदा 'आसीदिति हेतोः पश्यामि इत्यन्वयेऽतीतस्य (भूतस्य) अञ्जनस्य लौकिकसाक्षात्कारविषयत्वमुपपादितं न स्यात्। तथा भावी भविष्यत् भूषणानाम् अलङ्काराणां संभारः समूहः यत्र तथाभूतां भाविभूषणसम्भारसहितामित्यर्थः, तव आकृति स्वरूपं साक्षात्कुर्वे अवलोकयामीत्यर्थः। अञ्जनभूषणादिकं विनापि तव स्वरूपवैलक्षण्येनैव शोभातिशयात्तेषां वैयर्थ्यमित्याशयः।

अत्राद्यचरणयोर्भूतस्याऽप्यञ्जनस्य पश्यामीतिवर्तमानोपन्यासात् द्वितीयचरणयोरपि भूषणसम्भारस्य साक्षात्कुर्वे इति वर्त्तमानोपन्यासेन च प्रत्यक्षायमाणतया भाविकं नामालङ्कारः। क्वचित् भूतत्वानिद्र्देशं विनाप्येवं दृश्यते यथा—

'अहं विलोकयेऽद्यापि युद्ध्यन्तेऽत्र सुरासुराः' इत्यादौ।

ननु प्रत्यक्षायोग्ययोरपि भूतभाविनोः (अतीतानागतयोः) प्रत्यक्षायमाणत्वं प्रति प्रतिपादितरूपसुखगम्यपदप्रयोग एव प्रयोजकः तथासति प्रसादगुण एवान्तर्भाव्यतामलं पृथगलङ्कारस्वीकारेणेत्यत आह—नचे**ति**। अयं प्रत्यक्षीक्रियमाणः विच्छित्तिविशेषः प्रसादाख्यः प्रसादसंज्ञको गुण इति न च वाच्यमित्यर्थः। इत्थमग्रेऽपि। तस्य प्रसादाख्यगुणस्य। रसादिसाहाय्यं प्रत्येव तस्य कारणत्वादित्यभिप्रायः।

नन्वेवं विस्मयहेतुत्वमभ्युपेत्य अद्‌भुतस्यानुभूयमानत्वस्थलेऽद्‌भुतरस एव स्वीक्रियतामित्यत आह—नचेति। विस्मयं चमत्कारं प्रति अस्य अद्‌भुतरसस्य हेतुत्वात् श्रवणार्थिनां विस्मयकारकत्वात् 'मुनिर्जयति' इत्यादौ तु हेतुत्वाभावादित्याशयः।

अथैवं प्रत्यक्षासम्बन्धेऽपि तत्सम्बन्धवर्णनात् भूतादिवस्त्वसम्बन्धेऽपि तत्सम्बन्धवर्णनाच्च असम्बन्धे सम्बन्धरूपातिशयोक्तयैव गतार्थो भवतु किमतिरिक्तालङ्काराभ्युगमगौरवेणेत्यत आह—नचेति। अध्यवसायस्य तादात्म्यप्रतिपत्तेरभावात् अतिशयबोधमात्रेण तदीयप्रकारान्तरकल्पनानौचित्यादिति भावः।

ननु प्रत्यक्षायोग्ययोरपि भूतभाविनोः प्रत्यक्षवत्प्रतीत्या भ्रान्तिरेवेति भ्रान्तिमानलङ्कार एव जायतामित्यत आह—**नचेति**। भूतेति। तथा चात्र भ्रान्तिलक्षणस्य 'अतस्मिंस्तबुद्‌धिभ्रान्ति' रित्युक्तरूपस्यैवाभावेन भ्रान्तिमानलङ्कारस्वीकर्त्तुमशक्यत्वात्। प्रत्यक्षायमाणमितिप्रतिपादनेन तात्त्विकप्रत्यक्षभावस्य व्यञ्जितत्वाच्चेत्याशयः।

ननु तर्हि दुरूहयोः आगस्त्यस्य कुमार्याश्च क्रियारूपयोः प्रतिपादनात् स्वभावोक्तयलङ्कार एव कथं न स्वीक्रियते इत्यत आह—**नचेति**। तस्य स्वभावोक्त्यलङ्कारस्य, लौकिकं वस्तु डिम्भादि तद्गतः सूक्ष्मः असाधारणज्ञानमात्रज्ञेयो यो धर्मरूपः स्वभावः तस्यैव न तु प्रत्यक्षायमाणत्वस्येति एवपदस्यार्थ। 'अस्य भाविकस्य तु वस्तुनः अद्‌भुतस्य अतीतानागतस्य वा वर्णनीयपदार्थस्य। विच्छित्तिविशेषः स्वभावोक्त्यलङ्कारचमत्कारापेक्षया अतिरि-

क्तरूपचमत्कारः, इति हेतोः नच स्वभावोक्तिस्तन्नामालङ्कार इत्यर्थः। एवञ्च विच्छित्तिभिन्नत्वादेवालङ्कारभेद इत्यवधेयम्।

ननु यत्र स्वभावोक्त्यलङ्कारचमत्कारः भाविकालङ्कारचमत्कारश्च द्वावपि विद्येति तत्र किं स्वभावोक्तयलङ्कारः किवा भाविकालङ्कारः स्वीकरणीय इति विचिकित्सायामाह—**यदि** पुनरिति। अस्या भाविकसम्बन्धिन्याः। उभयोः स्वाभावोक्तिभाविकयोः, सङ्करः स्वातन्त्रयेणैव स्थितिरूपः। उदाहरणं यथा शाकुन्तले प्रथमेऽङ्के—

**'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः**
**पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।**
**शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा**
**पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥'**

अत्र मृगस्य तत्कालिकतन्मात्रगतक्रियारूपयोर्वर्णनात् स्वभावोक्तिः, तादृशत्वेनाद्रभुतरूपस्य तस्य मृगस्य प्रत्यक्षायमाणत्वाच्च भाविकमित्युभयोरङ्गाङ्गिभावेनैकाश्रयानुप्रवेशरूपसङ्कर इति कुशला आचक्षते।

## रुचिरा

उदाहरणान्तरमपि निदर्शयति। **यथा वा**-अत्रानयोर्नेत्रयोः। **अञ्जनम्। आसीत्। इत्येवम्।** तव। **लोचने। पश्यामि। भाविभूषणसम्भारां** भाविनो ये भूषणसम्भारा भूषणानां विशिष्टानि नेपथ्यानि यत्र तादृशीम्। **तव। आकृतिं** स्वरूपम्। **साक्षात्कुर्वे।** अत्र भूतभाविनोरुभयोरपि साक्षात्करः। यथाऽऽहुर्विवृतिकाराः—'अत्र पूर्वार्धे भूतस्य परार्धे भाविनः प्रत्यक्षायमाणत्वं नयनशोभाविशेषवशेन अञ्जनं सौन्दर्यातिशयवशीकृतस्य धनिनः पत्युरादारातिशयेन भूषणसम्भारमनुमाय सख्या तथाऽभिहितं यथा भूतभाविनामप्यञ्जनभूषणसम्भारौ सन्निकृष्टश्रोतृणां प्रत्यक्षवद् भासेते।' इति॥ २९४॥' यदि तु—अत्र सहृदयैश्चमत्कारो नानुभूयते, तर्हि—'जगदीश ! भवन्तमीक्षमाणो भुवनं प्रस्फुटमीक्षते न कस्तत्। यदभूदचरं चरं तथा वा ननु यद्भावि कदाऽपि यत्र तत्र॥' इत्युदाहार्य्यम्। इदम्मम॥

ननु सन्निकृष्टपदार्थस्य वर्णनेन तदा प्रत्यक्षायमाणत्वम्, यदा प्रसन्नार्थाः शब्दाः प्रयुज्यन्त इत्यत्र प्रसादगुण एवाङ्गीक्रियतामित्याशङ्कायाह—**नचेत्यादि**। स्पष्टम्। ननु तर्हि एवं विस्मयहेतुत्वमङ्गीकृत्याद्भुतरसोऽङ्गीक्रियतामित्याशङ्क्याह **नचेत्यादि**। स्पष्टम्। 'विस्मयं चमत्कारम् (प्रत्यस्य भाविकस्य हेतुत्वाभावात्)। चमत्कारयोगे रसरूपत्वासम्भवादिति भावः।' इति विवृतिकाराः। नन्वत्र वर्णनीयनिष्ठस्यातशयविशेषस्य सद्भावेनातिशयोक्तिरेवाङ्गीक्रियतामित्याशङ्क्याह—**नचेत्यादि**। स्फुटम्। अध्यवसायाभावादभेदारोपासत्त्वादिति भावः। ननु भूतभाविनोः प्रत्यक्षायमाणत्वम्भ्रममूलमेवेति भ्रान्तिमानेवाङ्गीक्रियतामित्याशङ्क्याह—**नचेत्यादि**। स्पष्टम्। ननु तर्हि वस्तुस्वाभाव्यमिति स्वभावोक्तिरेवाङ्गीक्रियतामित्याशङ्क्याह—**स्वभावोक्तिस्तन्नामाऽलङ्कारः। च। न।** हेतुमुपपादयति—**तस्य** स्वभावोक्त्यलङ्कारस्य। **लौकिकवस्तुगतसूक्ष्मधर्मस्वभावस्य** लौकिकवस्तुगतो यः सूक्ष्मो दुरूहरूपो धर्मस्वभावस्तस्य। **एव। यथावद्याथातथ्येन। वर्णनम्। स्वरूपम्। अस्य** भाविकस्य। **तु। वस्तुनो** वर्णनीयस्य पदार्थस्य। **प्रत्यक्षायमाणत्वरूपः। विच्छित्तिविशेषो** भिन्नश्चमत्कारः। **अस्ति। इति** 'ततोऽस्य भेद' इति भावः। अस्य क्वचित्स्वभावोक्त्यनुप्राणत्वमित्याह—**यदि। पुनः। वस्तुनः। क्वचित्** कस्मिंश्चिदुदाहरण इत्यर्थः। **स्वाभावोक्तौ।** 'सत्या'मिति शेषः। **अपि। अस्या** भाविकसम्बन्धिन्याः। **विच्छित्तेः। सम्भवः। तदा। उभयोः** स्वभावोक्तिभाविकयोः। **सङ्करः।**

**'अनातपत्रोऽप्ययमत्र लक्ष्यते।**
**सितातपत्रैरिव सर्वतो वृतः।**
**अचामरोऽप्येष सदैव वीज्यते**
**विलासबालव्यजनेन कोऽप्ययम्॥'**

अत्र प्रत्यक्षायामाणस्यैव वर्णनान्नायमलंकारः। वर्णनावशेन प्रत्यक्षायमाणत्वस्यास्य स्वरूपत्वात्। यत्पुनरप्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्वं तत्रायमलंकारो भवितुं युक्तः। यथोदाहृते 'आसीदञ्जनन्—' इत्यादौ।

---

## विवृतिः

**अनातपत्रोऽपीति**। अत्र सदनुमानवशेन वक्तुः प्रत्यक्षायमाणयोः सितातपत्रचामरयोर्वर्णनम्, न तु वर्णनाविशेषवशेन श्रोतृणां तयोः प्रत्यक्षायमाणत्वमिति नास्ति भाविकावसर इति भावः। **अस्य** भाविकालंकारस्य। नन्वेवमासीदञ्जनमित्यादावपि सदनुमानवशेन प्रत्यक्षायमाणत्ववर्णनमिति नास्य विषय इत्यत आह—**यत्पुनरिति**। यद् यदा धर्मिसंनिकर्षादिरूपहेत्वभावदशायामित्यर्थः। **वर्णने इति**। वर्णने वाग्वैचित्र्यविशेषे सतीत्यर्थः। **तत्रायमिति**। तत्राप्ययमित्यर्थः। न चातपत्रोऽपीत्यादावप्युक्तरीत्या भाविकप्रसक्तिरिति वाच्यम्। श्रोतृणां धर्मिसंनिकर्षाभावेन प्रत्यक्षायमाणत्वाभावात्तस्यापि प्रकृतोपयोगित्वेन विवक्षणीयत्वात्॥

## विज्ञप्रिया

यत्र भूतभाविवस्तुनोर्न प्रत्यक्षायमाणत्वं किन्तु तद्वस्तुन एव प्रत्यक्षमाणत्वं वर्णितं तत्र नायमलङ्कार इत्युदाहृत्य दर्शयति—**अनातपत्रोऽपीति**। आतपत्ररहितोप्ययं राजा सर्वदिक्षु सितातपत्रैः सर्वतो वेष्टित इव लक्ष्यते, वीक्ष्यत इत्यर्थः। दीप्यमानश्रीकत्वात्। एवमचामरश्चामररहितोप्येष सदैव विलासहेतुकव्यजनेन वीज्यमान इव लक्ष्यते इति पूर्वतोऽनुषङ्गः, शीतलाङ्गत्वात्।

**अत्रेति**। प्रत्यक्षायमाणस्यैवेत्यत्राऽतपत्रवृतत्वस्य वीज्यमानत्वस्य चेत्यर्थः। एवकाराद् भूतभाविव्यवच्छेदान्नतु भूतभाविपदार्थस्य प्रत्यक्षायमाणत्वमित्यर्थः। अत्र श्लोके तथात्वाभावं विशदयित्वा दर्शयति—**वर्णनावशेनेति**। अत्र स्वरूपत्वात्, एतत् श्लोकार्थस्वरूपत्वात्, ननु भूतभाविपदार्थस्य प्रत्यक्षायमाणत्वमित्यर्थः। भाविकालङ्कारे तु भूतभावित्वघटनावशाद् विशेषान्तरमप्यस्तीत्याह—**यत्र पुनरिति**। प्रत्यक्षायमाणत्वं पर्यवस्यतीत्यर्थः। अनातपत्रोपीत्यत्र तु तेजोविशेषाच्छत्रत्वाद्यारोपोऽनुमानमेवेति भेद इत्यर्थः। तथा चात्र विरोधालङ्कार एव इति बोध्यम्।

## कुसुमप्रतिमा

प्रत्यक्षायमाणत्व निवक्तुमुदाहरति अनातपत्र इति। कस्यचित् राज्ञो वर्णनमिदम्। अयं राजा, अनातपत्रोऽपि छत्रविहीनोऽपि, सर्वतः समन्तात् सितातत्रैः श्वेततछत्रैर्वृत आवृत इव लक्ष्यते। तथा अवामरोऽपि

बालव्यजनरहितोऽपि, सदैव बालव्यजनेन श्वेत चः मरेण वीज्यत इव; उभयत्रैवयशीराशिप्रसारादिति भावः; अतएवायं कोऽपि अनिर्वचनीयः पुरुष इत्यर्थः.

अत्रेति । प्रत्यक्षायमाणस्यैव सितातपत्रकर्तृकावरणस्य विलासव लब्धजनद्वारकस्याजनस्य च उत्प्रेक्षिततया सम्भावनावशेनैव प्रत्यक्षवदाचरत इत्यर्थः । अथ भाविकनामा । अस्य भाविकस्य । तथा च यत्र उत्प्रेक्षेतरकविरत्र कौशलेन अद्भुतादेः प्रत्यक्षायमाणत्वम्, तत्रैव भाविकम्, न पुनरुत्प्रेक्षात्मक सम्भावनास्थलेऽपि तस्याः सर्वत्रैव सम्भवेन सर्वत्रैवभाविकप्रसङ्ग इत्याशयः ।

अथ तर्हि "आसीदश्लेममत्रेति" इत्यादावपि प्रत्यक्षायमाणस्यैव अञ्जनसत्तादेर्वर्णनात् कथं भाविकमित्याह यत् पुनरिति । अयं भाविकामा । तथा च वयं प्रत्यक्षायमाणस्य वर्णनास्थल एव भाविकमिति न ब्रूमः, अपि तु यत्र उत्प्रेक्षेतरवर्णनावशेन प्रत्यक्षायमाणत्वं तत्रैव भाविकमिति ब्रूमः । तेन "अनातयत्रः" इत्यादौ उत्प्रेक्षावशेनैव प्रत्यक्षायमाणस्य वर्णनाम्न भाविकम्; "आसीदञ्जनम्" इत्यादौ तु प्रत्यक्षायमाणस्यापि उत्प्रेक्षेतरवर्णनावशेन पुनः प्रत्यक्षायमाणत्वमिति भाविकं भवत्येवेति सर्वं समञ्जसमिति भावः ।

ननु सर्वथा यथावद्वस्तुवर्णने स्वाभावोक्तिः यथाकथञ्चिद्यथावद्वस्तुवर्णने च भाविकम्, किन्तु अयथावद्वस्तुवर्णने कश्चिदलङ्कारो भवति न वेत्याकाङ्क्षायां प्रथमप्रकारमुदात्त निरूपयन् सर्वमेव तन्निरूपयति लोकेति । लोकानतिशेते अतिक्रामतीति लोकातिशया लोके असम्भवेत्यर्थः या सम्पत्तिर्धनरत्नादिसमृद्धिस्तस्यावर्णना उदात्तं अलङ्कार उच्यते । वा अथवा यद्यपि महतां चरितं चरितवर्णनम्, प्रस्तुतस्य प्रस्तुतवर्णनस्य अङ्गं सम्पादकं भवेत्, तदपि उदात्तमुच्यते इति पूर्वेणान्वयः । अतएवेदं द्विविधमिति बोध्यम् ।

अतिशयोक्तिरध्यवसायमूला इदन्तु न तथेति भेदः । महतामिति बहुवचनमविवक्षितम् ।

## विमला

अनातपत्र इति ।—अयम् अनातपत्रः,—छत्ररहितोऽपि, अत्र—अस्मिन् समये, स्थाने वा, सितातपत्रैरिव, सर्वतः,—समन्तात्, वृतः,—आवृत, लक्ष्यते, एष अचामरः,—चामरप्ररिहीणः अपि, सदैव—नित्यमेव, विलासवालव्यजनेन—शुभ्रतया दीप्यमानक्षामरेण इत्यर्थः, वीज्यते, अतः कोऽपि—अलोक सामान्यगुण इत्यर्थः, अयं—पुरुष इति भावः ।

अत्रेति ।—अत्र सदनुमानवशेन वक्तुः प्रत्यक्षायमाणयोः सितातपत्रचारयोर्वर्णनं, न तु वर्णनाविशेषवशेन श्रोतृणां तयोः प्रत्यक्षायमाणत्वम् इति नास्ति भाविकावसर इति भावः । अस्य—भाविकालङ्कारस्येत्यर्थः । ननु एवम् "आसीदञ्जनम्" इत्यादावपि मदनुमानवशेन प्रत्यक्षायमाणत्ववर्णनम् इति नास्य विषयः ? इत्यत आह, यत्पुनरिति ।—यत्—यदा, धर्मिसन्निकर्षादिरूपहेत्वभावदशायाभित्यर्थः । वर्णने इति ।—वर्णने—वाग्वैचित्र्यविशेषे सतीत्यर्थः । तत्रायमिति—तत्राप्ययमित्यर्थः । न चातपत्रोऽपीत्यादावपि उक्तरीत्या भाविकप्रसक्तिरिति वाच्यम्; श्रोतृणां धर्मिसन्निकर्षाभावेन प्रत्यक्षायमाणत्वाभावात् तस्यापि अतोपयोगित्वेन विवक्षणीयत्वात् इति । अत्र कौस्तुभाशयः,—ननु कारणाभावेऽपि कार्य्योत्पत्तिरूपायाः विभावनायाः कोऽस्य भेदः ? लौकिकप्रत्यक्षं प्रति विषयस्य हेतुतया अनागतातीतविषयरूपहेतुव्यतिरेकेऽपि तत्प्रत्यक्षरूपकार्य्योत्पत्तिः । एवं द्वितीयभेदस्यातिशयोक्तावेवान्तर्भावः, कारणात् प्रागेव कार्य्योत्पत्तेरभिधानात् । न क्षात्र "यः कौमारहरः—" इत्यादिवत् हेत्वभावत्वेनोक्तिः नास्तीति वाच्यम्; "आसीदञ्जनमत्रेति" "विरतेऽपि गीतसमये" इत्यादौ तत्तद्भूतभाव्यर्थकप्रत्ययेर्हेतूनां

ध्वनप्रागभावबोधनेन हेत्वभावोक्तिसत्त्वात्; "अनातपत्रोऽप्ययमत्र लक्ष्यते" इत्यादौ नञैव तदभावबोधनात् इति चेत्; उच्यते—कारणताऽवच्छेदकरूपावच्छिन्नप्रतियोगिताकसंसर्गाभावत्वेन हेवभावोक्तौ विभावना, इह तु उक्त-रूपावच्छिन्नप्रतियोगिताकत्वं ध्वसप्रागभावयोः न सम्भवत्येव, तयोः सामान्यावच्छिन्नप्रतियोगिकत्वाभावात्; "अनातपत्रोऽपि" इत्यादौ तु विभावनासत्त्वेऽपि न क्षतिः। एवं द्वितीयभेदस्येतिशयोक्तावपि नान्तर्भावसम्भवः, विषयतातिरिक्तसम्बन्धावच्छिन्नकार्य्यताऽवच्छेदकधर्मावच्छिन्नतादात्म्यातिरिक्तसम्बन्धावच्छिन्नकारणताऽव च्छेदकधर्मावच्छिन्नात् प्रागुत्पत्तावेवातिशयोक्तेरभ्युपगम्यत्वात्, "कारणात् प्राक् कार्य्योत्पत्तिः" इत्यनेन प्रकारे-णोक्ता वेवातिशयोक्तः, भाविविषयप्रत्यक्षत्वेनोक्तौ भाविकमित्यङ्गीकारात्, तन्मुखाभिधाना नाभिधानयो एव नियामकत्वाच्च; किञ्च, तत्रत्यं कार्य्यताऽवच्छेदक कार्य्याधिकरणवृत्ताप्रागभावप्रतियोगित्वेनोक्तं यत्कारणं तत्प्र-तियोगिककार्य्यताऽवच्छेदकम्, अत्र तु प्रागभावप्रतियोगित्वेन यत्कारणमुक्तं, तदतिरिक्तकारणताप्रतियोगिकका-र्य्यताऽवच्छेदकम् इति भेदः इति दिक्।

## लक्ष्मी

अलङ्कारसर्वस्वकृतोदाहृतं दूषयितुमुत्थापयति—**अनातपत्र** इति। राजवर्णनमिदम्। अयं राजा अनात-पत्रोऽपि छत्ररहितोऽपि, सर्वतः सर्वदिक्षु सितातपत्रैः श्वेतच्छत्रैः वृतः वेष्टित इव लक्ष्यते वीक्ष्यते इत्यर्थः दीप्यमान-श्रीकत्वात्। एवम् अचामरोऽपि बालव्यजनविहीनोऽपि एष राजा सदैव वीज्यत इव विलासहेतुकव्यजनेन वीज्यमान इव 'लक्ष्यते' इति पूर्वतोऽनुवर्तते' शीतलाङ्गत्वात् कीर्त्तिराशिविस्ताराद्वा अतः अयं कोऽपि अलौकिक-गुणशालीपुरुष इत्यर्थः। **वंशस्थं** छन्दः।

अत्र कथं नायमलङ्कार इति दर्शयितुमाह—अत्रेति। प्रत्यक्षायमाणस्यैव श्वेतच्छत्रकर्त्तृकाच्छादनस्य विलासबालव्यजनद्वारकव्यजनस्य च उभयोरुत्प्रेक्षिततया सम्भावनावशेनैव प्रत्यक्षवद्व्यवहरत इत्यर्थः। भूतभा-विपदार्थस्य प्रत्यक्षायमाणत्वव्यावृत्तये एवकारः। अयं भाविकसंज्ञकः। तदेव स्पष्टयति—**अस्येति**। भाविकस्ये-त्यर्थः। एवञ्च यत्र उत्प्रेक्षेतरकविप्रतिभानैपुण्येन अद्‌भुतादेः प्रत्यक्षायमाणत्वम्, तत्रैव भाविकालङ्कारः, न तूत्प्रेक्षात्मकसम्भावनायामपि; एवं सति सर्वत्रैव सम्भवप्रसङ्गेन सर्वत्र भाविकस्यैव प्रसक्तेः। अत एव 'अनातपत्रः' इत्यादिस्थले उत्प्रेक्षात्मकसम्भावनायाः श्वेतच्छत्रकर्तृकाच्छादनादेः प्रत्यक्षायमाणत्वान्न भाविक प्रसक्तिरित्यभि-प्राय इति कुशलः।

नन्वेवम् 'आसीदञ्जनम्' इत्याद्युदाहरणेऽपि प्रत्यक्षायमाणस्यैव वर्णनात् भाविकालङ्कारः कथमित्यत आह—**यत्पुनरिति**। अयं भाविकसंज्ञकः। एवञ्च यत्र प्रत्यक्षायमाणत्वं तत्रैवायं भाविकं इति नैव सिद्धान्तः किन्तु यत्र उत्प्रेक्षेतरकविप्रतिभानैपुण्येन प्रत्यक्षायमाणत्वं तत्रैव भाविकाभ्युपगम इति स्वीकारेण प्रकृते क्षत्यभावात्।

## रुचिरा

अलङ्कारसर्वस्वकृतोदाहृतं दूषयति—'**अत्र**। **अयम्**। **अनातपत्रो** नातपत्रं छत्रं यस्य तथोक्ताः। **अपि**। **सितातपत्रैः** श्वेतच्छत्रैः। **सर्वतः**। **वृतः**। **इव**। **लक्ष्यते**। **एषः**। **कोऽपि**। **अचामरो** न चामरं यस्य तथोक्तः। **अपि**। **सदा**। **एव**। **विलासवालव्यजनेन**। **अयं** शुभावहो विधिर्यथा भवेत्तथा। **वीज्यते**। यद्वा एषः। अचामरः। अपि। सदा। एव। विलासवालव्यजनेन। वीज्यते। अतः--अयम्। कोऽपि अलौकिकगुण इत्यर्थः। वंशस्थ-विलं छन्दः, तल्लक्षणं चोक्तं प्राक्॥ २९५॥'

**अत्र**-इत्यत्रेत्यर्थः । **प्रत्यक्षायमाणस्य** । **एव** । 'नतु भूतस्य भविष्यतो वे'ति शेषः । **वर्णनात्** । **अयम्भाविकनामा** । **अलङ्कारः** । **न** । तदेव पुनः स्पष्टयति—**अस्य** भाविकस्य । **वर्णनावशेन** वर्णनमहिम्ना । 'नतु विद्यमानत्वेने'ति शेषः । **प्रत्यक्षायमाणत्वस्य** 'भूतभाविनो'रिति शेषः । **सरूपत्वात्** । **यत्** यत्र । **पुनः** । अप्रत्यक्षायमाणस्य भूतस्य भविष्यतो वेत्यर्थः । **वर्णने** । **अपि** । **प्रत्यक्षायमाणत्वम्** । **तत्र** । अयं भाविकनामा । **अलङ्कारः** । **भवितुम्** । **युक्तः** । उदाहरति—**यथे**त्यादिना । स्पष्टम् ।

**लोकातिशयसंपत्तिवर्णनोदात्तमुच्यते ।**

**यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ॥ ९४ ॥**

क्रमेणोदाहरणम्—

**'अधःकृताम्भोधरमण्डलानां यस्यां शशाङ्कोपलकुट्टिमानाम् ।**

**ज्योत्स्नानिपातात्क्षरतां पयोभिः केलीवनं वृद्धिमुरीकरोति ॥'**

---

## विवृतिः

उदात्तलंकारमाह—**लोकेति**। लोकानतिशेतेऽतिक्रामति या संपत्तिर्धनसमृद्धिस्तस्या वर्णनो ज्ञापनम् । अन्यविधमुदात्तालंकारमाह—यद्वेति । महतां प्रस्तुतसंबन्धिमहताम् । चरितं महत्त्वप्रतिपादकसाधर्म्यम् प्रस्तुतमहत्त्वव्यञ्जकप्रस्तुतमहत्त्वसंबन्धिचरितमुदात्तमित्यर्थः । **अधःकृतेति**। यस्यां नगर्या उरीकोरति स्वीकरोतीति । प्राप्नोतीति यावत् । अत्र पौराणां समृद्धतिशयो व्यङ्ग्यः ॥

## विवृतिपूर्तिः

**उदात्तमिति**। अतोऽग्रे कुवलयानन्देत्**युक्तिर्निरुक्तिः प्रतिषेधो** विधिरिति चत्वारोऽलंकारा यथा— '**अत्युक्ति**रद्भुतातथ्यशौर्यौदार्यादिवर्णनम् । त्वयि दातरि राजेन्द्र ! याचकाः कल्पशाखिनः ॥' '**निरुक्ति**र्योगतो नाम्नामन्यार्थत्वप्रकल्पनम् । ईदृशैश्चरितैर्जानि सत्यं दोषाकरो भवान् ॥' '**प्रतिषेधः** प्रसिद्धस्य निषेधस्यानुकीर्तनम् । न द्यूतमेतत्कितव ! क्रीडनं निशितैः शरैः ॥' 'सिद्धस्यैव विधानं यत्तदाहु**र्विध्य**लंकृतिम् । पञ्चमोदञ्चने काले कोकिलः कोकिलो भवेत् ॥' इति । अत्र अत्युक्तिरुदात्तालंकारे प्रविशति, तत्र असंबन्धे संबन्धातिशयोक्तिरनुप्राणिका ॥

## विज्ञप्रिया

उदात्तालङ्कारं द्विविधमाह—**लोके**ति । **यद्वे**ति । महतां चरितं वा प्रस्तुतस्याङ्गं प्रकर्षकं यदा भवेदित्यर्थः ।

**अधः कृते**ति । यस्यां पुरि अधःकृतमम्भोधराणां मेघानां मण्डलं यैस्तादृश्यानां चन्द्रज्योत्स्नानिपातात् क्षरतां शशाङ्कोपलकुट्टिमानां चन्द्रकान्तमणिमयगृहाणां पयोभिः केलीवनं वृद्धिमुरीकरोति प्राप्नोतीत्यर्थः । जलसेकेन वर्धितमित्यर्थः । अधः कृतेत्यादिकं कुट्टिमविशेषणम् । मण्डलायामिति क्वचित् पाठः । कुट्टिमैरधः करणमेव पुर्या अधःकरणं बोध्यम् । अत्रैतादृशकुट्टिमवतो नृपस्य लोकातिशयसम्पत्तिवर्णना ।

## कुसुमप्रतिमा

उदात्तमुच्चम् । तथा च उदात्तसम्पत्तिवर्णनास्वरूपत्वात् उदात्तचरितवर्णनास्वरूपत्वाच्च अस्य उदात्तमिति संज्ञा । अस्मिन्र्थे अयमुदात्तशब्दोऽपि नित्यनपुंसकलिङ्गः ।

तत्राद्यमुदाहरति अध इति । कस्याश्चित् पुरी वर्णनमिदम् । यस्यां पुरि केलीवन तादृशभवनसन्निहितं विलासकाननं कर्तृ, अधःकृतं नीचे स्थापितम् अम्भोधरमण्डलं मेघसमूहो यैस्तादृशानम्, ज्योत्स्नायाश्चन्द्रकिरणा-

वल्याः निपातात् पतनात् क्षरतां जलं निःसारयताम्, शशाङ्कोपलकुट्टिमाना चन्द्रकान्तमणिनिर्म्मितोपरितनभूमीनां पयोभिः प्रस्तुतजलैः वृद्धिं पुष्टिम्, उरीकरोति अङ्गीकरोति आप्नोतीत्यर्थः । चन्द्रकिरणसम्पर्के चन्द्रकान्तमणितो जलं स्रवतीति प्रसिद्धिः । जलेन वनवृद्धिस्तु प्रत्यक्षा ।

लोके एकोऽपि चन्द्रकान्तमणिः सुदुर्लभ एव, किन्तु तव पुरि तैरेव चन्द्रकान्तमणिभिगृहस्य उपरितनभू-मस्य एव वद्धा इति लोकातिशयसम्पत्तिवर्णनादन उदात्तलङ्कारः ।

## विमला

उदात्तमाह, लोकेति ।—लोकातिशयसम्पत्तिवर्णना—लोकानतिशेते—अतिक्रामति, या सम्पत्तिः,—धनसमृद्धिः, तस्याः वर्णना—व्यञ्जनया ज्ञापनम्, अलौकिकसमृद्धिवर्णनमिति यावत्; अन्यविधमुदात्तमाह, यद्वेति ।—यद्वा—महतां—प्रस्तुतसम्बन्धिमहतामित्यर्थः, चरितं—महत्त्वप्रतिपादकसाधर्म्यं, प्रस्तुतस्य—प्रकृतस्य, वर्णनीयस्य इत्यर्थः, अङ्गं भवेत्, तदपि उदात्तम् उच्यते प्रस्तुतमहत्त्वव्यञ्जकप्रस्तुतमहत्त्वसम्बन्धिचरितमुदात्त-मित्याशयः । स्वभावोक्तौ भाविके च यथावद्वस्तुवर्णनं, तद्विपक्षत्वेनारोपितस्त्वात्मन उदात्तस्यावसरः; तत्र असम्भाव्यमानविभूतियुक्तस्य वस्तुनो वर्णनं कविप्रतिभात्थापितमैश्वर्य्यलक्षणम् उदात्तमिति तात्पर्य्यम् ।

अध इति ।—नगरीवर्णनमिदम् । यस्यां—पुर्य्याम्, अधः कृतानि—नीचैः कृतानि, अम्भोधरमण्ड-लानि—मेघपटलानि यैः तादृशानाम्, अभृङ्कषाणामित्यर्थः, ज्योत्स्नानिपातात्—गृहमध्ये कौमुदीयप्रभापातात् इत्यर्थः, क्षरतां—स्रवतां, शशाङ्कोपलकुट्टिमानां—चन्द्रकान्तमणिनिर्मितगृहभूमीनां, पयोभिः,—जलैः, ("पयःक्षीरं पयोऽम्बु च" इत्यमरः) केलीवनं—क्रीड़ाकाननं, वृद्धिम् उरीकरोति—अङ्गीकरोति, प्राप्नोतीत्यर्थ । चन्द्रकिरणस-म्पर्कात् चन्द्रकान्तमणेर्निम्नावः प्रसिद्धः । अत्र पौराणां समृद्ध्यतिशयो व्यङ्ग्यः । उपजातिः वृत्तम् । यथा वा—"मुक्ताः केलिविमूत्रहारगलिताः सम्मार्जनीभिर्हृताः प्रातः प्राङ्गणमीम्नि मन्थरचलाद्बालाङ्घ्रिलाक्षाऽरुणाः । दूराद्दाड़िमवीजशङ्कितधियः कर्षन्ति केलीयुक्ता यद्विद्वदभवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥" इति । यथा वा—"नीवीबन्धोच्छ्रूसनशिथिलं यत्र यक्षाङ्गनानां वासः कायादनिभृतकरेष्वाक्षिपत्सु प्रियेषु । अर्चिस्तुङ्गानभिमु-खमपि प्राप्य रत्नप्रदीपान् ह्रीमूढ़ानां भवति विफलप्रेरणश्चूर्णश्रूष्टिः ॥" इति ।

## लक्ष्मी

अथ सभेदमुदात्तालङ्कारं लक्षयति—**लोकातीत्यादिना** । लोकान् भुवनान् अतिशेते अतिक्रामतीति लोकातिशया लोके असम्भवेत्यर्थः सा चाऽसौ सम्पत्तिः धनसमृद्धिः तस्या वर्णना व्यञ्जनया ज्ञापनम् उदात्तं तन्नामालङ्कारः उच्यते 'आलङ्कारिकै'रिति शेषः । वा अथवा यदपि महतां महाप्रभावाणां चरितं महत्वप्रतिपादक-साधर्म्यम्, प्रस्तुतस्य प्रकृतवर्णनीयस्य अङ्गं सम्पादकं भवेत् तदपि उदात्तमुच्यते इति पूर्वेण सम्बन्धः, तेनेदं द्विप्रकारकम्—अलौकिकं सम्पत्तिवर्णनम्, प्रकृतवर्णनीयसम्पादकञ्चेति । उत्कर्षेण आदीयते गृह्यत इत्युदात्तम्, कर्मणि क्तप्रत्ययः 'अच उपसर्गात्तः' ७/४/४७ इति पा. सूत्रेण तादेशः ।

तत्राद्योदाहरणं दर्शयति—**अध** इति । नगर्या वर्णनमिदम् । यस्यां नगर्यां केलीवनं तथाविधगृहसमीप-वर्त्तिक्रीडार्थं निर्मितमुद्यानं (कर्तृ) अधःकृतं नीचैः स्थापितम् अम्भोधरमण्डलं मेघसमुदायः यैस्तथोक्तानाम्, ज़्योत्स्नायाः चन्द्रिकाया निपातात् स्खलनात् क्षरतां सलिलं निर्गमयताम्, शशाङ्कोपलकुट्टिमानां चन्द्रकान्तमणिर-चितोर्ध्वभूमीनां पयोभिः प्रपतितसलिलैः वृद्धिं पुष्टिम्, ऊरीकरोति स्वीकरोति लभत इत्यर्थः । चन्द्ररश्मिसंयोगे

चन्द्रकान्तमणितः सलिलं द्रवतीति ख्यातिः । सलिलेन उद्यानादिवृद्धिस्तु सर्वानुभवसिद्धा । **उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिश्छन्दः** ।

एकोऽपि चन्द्रकान्तमणिः लोकेऽत्यन्तदुष्प्राप्य एव, किन्तु तत्र नगर्यां तु तैरेव भवनस्योर्ध्वभूमयो बद्धेति लोकासम्भवसम्पत्तिवर्णनादत्र उदात्तालङ्कारः ।

उदाहरणान्तरं यथा—

**'मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिहृताः**
**प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः**
**दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः ।**
**यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥'**

अत्र विद्वद्भवनस्थलोकातिशायिसमृद्धिवर्णनादुदात्तालङ्कारः ।

## रुचिरा

उदात्तं द्विधा लक्षयति—१८६ **लोकातिशयसम्पत्तिवर्णना** लोकानतिशेतेऽतिक्रामतीति लोकातिशया, साऽसौ सम्पत्तिर्धनादिसम्पत्तस्या वर्णना व्यञ्जनया बोधनम् । **यद्वा** । **अपि** । **प्रस्तुतस्य** वर्णनीयस्य । **अङ्गम्** । **महतां** महाप्रभावाणाम् । **चरितम्** अङ्गमनुप्राणकम् । **भवेत्** । तदा-**उदात्तं** तदाख्योऽलङ्कारः । **उच्यते** । तथा च—द्विविधमिदमुदात्तम्, अलौकिकं वैभववर्णनम्, प्रस्तुतानुप्राणकमहच्चरितवर्णनं च । उदात्तत्वं च महनीयतावर्णनशालित्वम्, तच्चोभयत्रानुगतमिति बोध्यम् ॥ १४७ ॥

क्रमादुदाहर्त्तुकाम आह—**क्रमेणे**त्यादि । स्पष्टम् । **'यस्याम्** 'पुर्या'मिति शेषः । **अधःकृताम्भोधरमण्डलानामधः** कृतान्यम्भोधर (मेघ) मण्डलानि उच्चतया) यैस्तथोक्तानाम् । **शशाङ्कोपलकुट्टिमानां** शशाङ्कोपलाश्चन्द्रकान्तमणयः कुट्टिमेषु येषां तादृशानाम् । अत एव—**ज्योत्स्नानिपाता**च्चन्द्रप्रतिच्छायापातेन । पयोभिर्जलैः । **क्षरताम्** । **केलीवनं** क्रीडाऽर्थं निर्मितमुद्यानम् । **वृद्धिम्** । **उरीकरो**त्यङ्गीकरोति । उपेन्द्रवज्रेन्द्रयोरुपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥' अत्र स्फुटं पौराणां समृद्धत्वं व्यज्यते ॥ २९६ ॥'

**'नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान्पुरुषोऽधिशेते ॥'**

---

## विवृतिः

**नाभीति** । नाभेः प्रभिन्नमुत्पन्नमम्बुरुहमासनं यस्य तेन । अमुं समुद्रम् । अत्र प्रस्तुतसमुद्रस्य महत्त्वव्यञ्जकं सर्वलोकसंहारकस्य हरेश्चरितम् । रसवदाद्यलंकारचतुष्टयमाह—**रसभावाविति** । गुणीभूतत्वं रसान्तरादीनामुत्कर्षाधायकत्वेनाङ्गत्वम् ।

## विवृतिपूर्तिः

निरुक्तिः श्लेषविशेष एव । सिद्धस्यैव विधानं विधिरलंकारः । यथात्र द्वितीयकोकिलपदं ध्वनिमाधुरीं लक्षयद् हृदयावर्जनं व्यनक्ति । तदेतद् ध्वनिना गतार्थम् । क्वचिद् गुणीभूतव्यङ्ग्येन वा । एवं सिद्धस्यनिषेधानुकीर्त्तनमपि पर्यालोचनीयम् ॥

## विज्ञप्रिया

**नाभिप्ररूढेति** । युगान्तोचितयोगनिद्रः, युगान्ते उचिता । योगनिद्रा यस्य सः पुरुषो विष्णुर्लोकान् संहृत्य अमुं समुद्रम् अधिशेते । कीदृशः, प्रथमेन धात्रा आदिब्रह्मणा संस्तूयमानः । धात्रा कीदृशेन नाभिप्ररूढाम्बुरुहासनेन—नाभिस्थेन अतिस्फुटपद्मस्थितेन, अत्र नयनरविणा आसनासङ्कोचनम् । लोकसंहारात् सूर्याभावेऽपि नयनरविणा पद्मविकाश इति भावः । अत्र वर्णनीयोऽम्भोधिः प्रकृतस्तस्य प्रकर्षकमीदृशं ब्रह्म स्तूयमानेदृशविष्णुशयनरूपं तच्चरितम् ।

## कुसुमप्रतिमा

द्वितीयप्रकारं दर्शयति नाभीति । समुद्रवर्णनात्मकं रघुवंशत्रयोदशसर्गस्थमिदं पद्यम् । नाभितः प्रभिन्नमुत्पन्नम् अम्बुरुहं पद्ममेव आसनं यस्य तेन तादृशेन, प्रथमेन आद्येन धात्रा सृष्टिकर्त्रा ब्रह्मणा संस्तूयमानः, युगान्ते प्रलयकाले उचिता अभ्यस्ता योगनिद्रा यस्य सः, पुरुषो नारायणः, लोकान् संहृत्य आत्मनि उपसंहृत्य, अमुं समुद्रम्, अधिशेते आश्रित्य स्वपिति ।

अत्र नारायणस्य चरितवर्णनं प्रस्तुतसमुद्रवर्णनस्याङ्गमिति उदात्तालङ्कारः ।

## विमला

नाभीति ।—समुद्रवर्णनमिदम् । युगान्ते—कल्पान्ते, उचिता—अभ्यस्ता, योगनिद्रा यस्य तादृशः, पुरुषः,—नारायणः, नाभेः,—नाभिदेशात्, प्रभिन्नम्—उत्थितम्, उत्पन्नमिति यावत्, यत् अम्बुरुहं—पद्मं, तदेव आसनं यस्य तथोक्तेन, प्रथमेन धात्रा—आदिस्रष्ट्रा, ब्रह्मणा इत्यर्थः, संस्तूयमानः सन् लोकान्—जगन्ति, संहृत्य—स्वकक्षो सङ्गाप्यत्यर्थः, अमुं—समुद्रम्, अधिशेते । अत्र प्रस्तुतसमुद्रस्य महत्त्वव्यञ्जकं सर्वलोकसंहारकस्य महतो

हरेः चरितम् अङ्गम् । रघुवंशस्येदं पद्यम् । यथा वा—"तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी । निवसन् बाहुसहायश्चकार (रक्षः क्षयं रामः ॥" अत्रारण्य वर्णनीये रामचरितमङ्गत्वेन वर्णितम् इति ।

## लक्ष्मी

द्वितीयभेदमुदाहरति—**नाभीति** । रघुवंशत्रयोदशसर्गे समुद्रवर्णनियम् । नाभितः प्रभिन्नं जातम् अम्भोरुहं कमलमेव आसनं विष्टरं यस्य तेन तथोक्तेन, प्रथमेन जगदाद्येन धात्रा प्रजापतिना संस्तूयमानः, युगान्ते प्रलयसमये उचिता योग्या योगनिद्रा यस्य स तथोक्तः, पुरि शेते इति पुरुषः नारायण इत्यर्थः, लोकान् संहृत्य स्वस्मिन्नुपसंहारं विधाय अमुं समुद्रम् अधिशेते अधिकृत्य स्वपिति ।

**अत्र प्रस्तुतवर्णनीयसमुद्रवर्णनस्य नारायणचरितवर्णनमङ्गमिति उदात्तालङ्कारः ।**

## रुचिरा

'**युगान्तोचितयोगनिद्रो** युगान्ते प्रलये उचिता योग्या योगनिद्रा यस्य तादृशः । पुरुषः 'पुराण' इति शेषः । नारायण इत्यर्थः । **नाभिप्रपन्नाम्बुरुहासनेन** नाभेः प्रपन्नमुत्थितं यदम्बुरुहं कमलं तदेवासनं यस्य तादृशेन । **प्रथमेन** जगदाद्येन । **धात्रा** । **संस्तूयमानः** । **लोकान्** । **संहृत्य** । **अमुं** समुद्रम् । **अधिशेते**ऽधिकृत्य स्वपिति । अत्र समुद्र-महत्त्वस्याङ्गं नारायणचरितम् । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक् । रघुवंशस्येदं पद्यम् ॥२९७ ॥'

**रसभावौ तदाभासौ भावस्य प्रशमस्तथा।**

**गुणीभूतत्वमायान्ति यदालंकृतयस्तदा ॥ ९५ ॥**

**रसवत्प्रेय ऊर्जस्वि समाहितमिति क्रमात्।**

तदाभासौ रसाभासो भावाभासश्च। तत्र रसयोगाद्रवदलंकारो यथा—'अयं स रशनोत्कर्षी—'इत्यादि [२३९ पृ०)। अत्र श्रृङ्गारः करुणस्याङ्गम्। एवमन्यत्रापि। प्रकृष्टप्रियत्वात्प्रेयः। यथा मम—

**'आमीलितालसविवर्तिततारकाक्षीं**

**मत्कण्ठबन्धनदरश्लथबाहुवल्लीम्।**

**प्रस्वेदवारिकणिकाचितगण्डबिम्बां**

**संस्मृत्य तामनिशमेति न शान्तिमन्तः ॥'**

अत्र संभोगश्रृङ्गारः स्मरणाख्यभावस्याङ्गम्। स च विप्रलम्भस्य। ऊर्जो बलम्, अनौचित्यप्रवृत्तौ तदत्रास्तीत्यूर्जस्वि।

---

## विवृतिः

रसस्येतराङ्गत्वे रसवत्। भावस्येतराङ्गत्वे प्रेयः। आभासयोरितराङ्गत्वे ऊर्जस्वि।

भावप्रशमस्येतराङ्गत्वे समाहितमित्यर्थः। 'न भावहीनोऽस्ति रसः—इत्युक्तदिशा रसव्यभिचारिभावयोरव्यभिचारर्णालंकार्यालंकारभावासंभवात्तयोरङ्गाङ्गिभावेनैतदलंकारप्रसङ्ग इति ध्येयम् ॥ **एवमन्यत्रापीति**। वीरादेः श्रृङ्गाराङ्गत्वेऽप्युदाहरणान्यूह्यानीत्यर्थः। करुणस्य भावाद्यङ्गत्वे उदाहरणं गुणीभूतव्यङ्ग्यप्रकरणे 'मानोन्नतां प्रणयिनीं—' इत्यादि स्वयमेवोक्ताम् ॥ **आमीलितेति**। अलसेन रसावेशजिनतालस्येन विवर्तितं स्थिरीकृतं तारकं यस्य तादृशमक्षि यस्यास्ताम्। मत्कण्ठबन्धने दरश्लथा ईषच्छिथिला बाहुवल्लिर्यस्यास्ताम्। **पुलिन्दाः** किरातविशेषाः। अत्र परोढाविषयत्वाच्छृङ्गाराभासः ॥

## विज्ञप्रिया

इदानीं रसाद्यलङ्कारमाह—**रसभावाविति**। रसस्याङ्गत्वे रसवान्। भावस्याङ्गत्वे प्रेयान्। आभासयोरङ्गत्वे ओजस्वी। भावप्रशमस्याङ्गत्वे समाहितमिति क्रमः।

प्रियशब्दात्प्रकर्षार्थे इयसुन्प्रत्ययेन साधितस्य प्रेयः शब्दार्थमाह। **प्रकृष्टप्रियत्वादिति**। तत्र भावस्य रसाङ्गत्वे प्रेयोऽलङ्कारमुदाहरति—**अमीलितेति**। नायिकाया रत्युत्तरावस्थां स्मृत्वा चिन्तयतो विरहिण उक्तिरियम्। तां रत्युत्तरावस्थां प्रियां संस्मृत्य तिष्ठतो ममान्तर्मानसमनिशमेव न शान्तिमेति। कीदृशावस्थां रतिप्रशमादामीलिता अलसाद् विवर्तिता च तारका यत्र तत् तादृशमक्षि यस्याः तादृशीम्। मत्कण्ठबन्धने दरश्लघा चाल्पशिथिला बाहुवल्ली यस्याः तादृशीं, प्रस्वेदवारिकणिकया आचितगण्डबिम्बां च।

**अत्रे**ति । अत्र स्मरणस्य वाच्यत्वेन गुणीभूतव्यङ्ग्याभावेऽपि गुणीभूतवाच्यस्याप्यलङ्कारत्वमभिप्रेत्येदमुक्तम् । वस्तुतस्तु स्मरणपदमत्र स्मरणव्यङ्ग्यचिन्तापरम् । स्मरणस्य वाच्यत्वेन तस्य विप्रलम्भाङ्गतोक्त्यनुपपत्तेः । व्यङ्ग्यत्वे सत्येवापराङ्गत्वादपराङ्गस्येव चालङ्कारत्वस्य काव्यप्रकाशकृदादिसर्वलङ्कारिकसम्मतत्वात् । तथाच सम्भोगश्च श्रृङ्गारचिन्ताया अङ्गमित्यर्थः । सम्भोगकालावस्थायाः चिन्तितत्वात् । अत्रांशे रसवदलङ्कार एव । **सचे**ति । सच चिन्ताख्यो व्यभिचारिभावो विप्रलम्भस्याङ्गमित्यर्थः । चिन्तया विप्रलम्भाधिक्यात् । अत्र प्रेयोलङ्कारः ।

ऊर्जस्विपदार्थ व्याकुर्वाणस्तमुदाहर्त्तुमाह—**ऊर्जो बल**मिति । क्वचिदनौचित्यप्रवृत्तौ तदस्तीत्याह—**अनौचित्ये**ति। तेन बलात्कारं विना परोढाप्रवृत्तौ तदभावेपि संज्ञाशब्दस्यास्य प्रायिकी व्युत्पत्तिर्दर्शिता । अत्र बलात्कार एव उदाहरति—**वनेऽखिले**ति ।

## कुसुमप्रतिमा

एतावता ग्रन्थेन शब्दघटितानर्थघटितांश्चालङ्कारान् निरूप्य इदानीं रसादिघटितानपि निरूपयितु तत्र प्रधानतया रसवदाद्यलङ्कारचतुष्टयं निरूपयति रसेति । तत्र रसादयः सर्व एव तृतीयपरिच्छेदे निरूपिता द्रष्टव्याः । रसो भावश्चेति तौ तयो रसभावयोराभासौ तदाभासौ, तथा भावस्य प्रथमः शान्तिश्च एते यदा गुणीभूतत्वम् अपररसाद्यपेक्षया अप्रधानत्वमङ्गत्वमिति यावत् आयान्ति प्राप्नुन्ति; तदा रसवत्, प्रेयः ऊर्जस्वि, समाहितञ्च इति नामभिश्चतस्त्रः, अलङ्कृतयः क्रमाङ्भवन्तीत्यर्थः । अत्र आभासत्वेन रूपेण रसाभासभावाभासयोरुभयोरप्येकत्वेनैव ग्रहणं प्राचीनमतानुसारादित्यवधेयम् । तथा च यदा एको रसः अपरस्य रसस्य भावादेर्वा अङ्गं भवति, तदा प्रेयो रसवद्‌भामालङ्कारः; यदा एको भावः अपरस्य भावस्य रसादेर्वा अङ्गं भवति, तदा प्रेयो नामालङ्कारः, यदा रसाभासो भावाभासो वा रसस्य भावादेर्वा अङ्गं भवति, तदा ऊर्जस्वि नामालकारः; यदा च भावस्य प्रशमो रसस्य भावादेर्वा अङ्गं भवति, तदा समाहितं नाम अलङ्कारश्च स्यादिति सरलार्थः ।

अत्र एव्वर्थेषु रसवदादयः शब्दा नित्यनपुंसका एव । अतएव अलङ्कृतय इति स्त्रीविशेषणत्वेऽपि तेषां नपुंसकनिद्‌र्देशः, अपत्यं कन्या इत्यादिवत् । एषां व्युत्पत्तयस्तु वृत्तावेव दर्शिताः ।

रसंवदादिशब्दानां व्युत्पत्तिप्रदर्शनपूर्वकं तेषामुदाहरणानि क्रमेण दर्शयितुमाह तत्रेति । तेषु चतुर्षु अलङ्कारेषु मध्ये इत्यर्थः । रसयोगादिति रसवच्छब्दस्य व्युत्पत्तिप्रदर्शनम् । तथा च रसोऽस्थास्तीति रसवत् प्रशस्ताथे मत्वर्थीयां वन्तुप्रन्थयः । रसस्य प्राशस्त्यञ्च रसान्तरेण पुष्टीकरणादिति बोध्यम्; अयमित्यादेर्विवरणं श्रृङ्गारस्य करुणाङ्गत्वञ्च चतुर्थपरिच्छेदे (२५६ पृष्ठे) अस्माभिः स्पष्टमेव दर्शितम् ।

एवमिति । अन्वत्रापि अन्वरसस्य अन्वरसाङ्गत्वे भावाङ्गत्वेऽपि च एवमुदाहरणमूह्यमित्यर्थः । तथा च "क्षिप्तो हस्तावलग्नः—" इत्यादौ (५२७ पृष्ठे) करुणः श्रृङ्गारस्याङ्गम् । "एकं ध्याननिमीलनान्मुकुलित प्रायम्" इत्यादौ (५२६ पृष्ठे) शान्तश्रृङ्गाररौद्ररसाः शिवविषयकरतिभावस्याङ्गानि ।

भावस्य इतराङ्गत्वे प्रेय उदाहर्त्तु प्रेयः शब्दस्य व्युत्पत्तिमाह प्रकृष्टेति ।

आमीलितेति । सख्युः समीपे विरहिण उक्तिरियम् । आमीलिते किञ्चित् सङ्कुचिते अलसं शनैर्यथा स्यात्तथा विवर्त्तिते सञ्चालिते च तारके कनीनिकाद्वयं ययोस्ते तादृशे अक्षिणी नयनयुगलं यस्यास्ताम्; मन कण्ठबन्धने कण्ठालिङ्गने दरश्लथा अल्पशिथिलीभूता बाहुवल्ली भुजलता यस्यास्ताम्; उभयत्रापि रतिश्रमेण

निद्रावेशादिति भावः; तथा प्रस्वेदवारिकणिकाभिः सुरतपरिश्रमेण समुत्पन्नधर्म्मजलबिन्दुभिः चितौ व्याप्तौ गण्ड-बिम्बौ कपोलद्वयं यस्यास्ताम्; तां प्रियतमां संस्मृत्य विद्यामानस्य मम अन्तः अन्तःकरणं कर्तृ, शान्तिं न एति न प्राप्नोति ।

अत्रेति । स च स्मरणाख्याभावश्च; विप्रलम्भस्य प्रवासात्मकविप्रलम्भश्रृङ्गारस्य अङ्गमिति सम्बन्धः । एवञ्च भासस्य रसाङ्गतया प्रेयोऽलङ्कार इत्याशयः । किञ्च सम्भोगश्रृङ्गारस्य स्मरणाख्यभावाद्भतया रसवदल-ङ्कारोऽपि । तेनानयोरङ्गाङ्गिभावेन सङ्कर इत्यवधेयम् । शुद्धोदाहरणन्तु "अरविन्दमिदं वीक्ष्य" इत्यादि (६१९ पृष्ठे) । अत्र स्मरणाख्यभावो विप्रलम्भश्रृङ्गारस्यङ्गमिति प्रेयोऽलङ्कारः ।

रसभावयोराभसस्य इतराङ्गत्वे ऊर्जस्वि उदाहर्तुम् ऊर्जस्विशब्दस्य व्युत्पत्तिमाह ऊर्ज इति । अनौचित्य-प्रवृत्तौ रसभावयोरिति शेषः । एतेन तयोराभासत्वं दर्शितम्, "अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः" इत्युक्त-लक्षणात् । तदत्रास्तीति तु अर्थमात्रप्रदर्शनपरम्, सप्तम्यन्तशयात् मत्वर्थीयप्रत्ययम्यनु शासनाभावात् । वाक्यन्तु ऊर्जः अस्यस्तीति । चमत्कारविधायित्वे ऊर्जस्वि बलवदिति तदर्थः ।

## विमला

उदात्ते महापुरुषचरितस्य चित्तवृत्तिरूपत्वात् चित्तवृत्तिविशेषस्वभावत्वाच्च रसादीनामिह तदलङ्काराणां प्रस्तावः, अत एव चत्वारोऽलङ्काराः युगपत् लक्षिताः, तद्यथा रसेति ।—रसः,—श्रृङ्गारहासाद्यन्यतमः, विभावानुभा-वव्यभिचारिभिः प्रकाशिता रत्यादिश्चित्तवृत्तिविशेष इति यावत्, भावः,—विभावानुभावाभ्यां सूचितःनिदर्वेदिः त्रयस्त्रिंशद्भेदाः, देवादिविषयो रत्यादिश्च तौ, तदाभासौ—तयाराभासौ, श्रृङ्गाराद्यन्यतमामासः निर्वेदाद्यन्यतभा माभासश्च, आभासत्वम्— अविषयप्रवृत्त्यामोचित्यम् इत्यर्थः, भावस्य— निवेदाद्यन्यतमस्य अभिचारिभावस्य, प्रशमः,—उक्ताप्रकाराभ्यां निवर्त्तभानत्वेन प्रशाम्यदवस्था इति यावत्, तत्रापि रसस्य परविश्रान्तिरूपत्वात् सा न सम्भवति इति परिशिष्टभेदविषयः भावतदाभासत्रशमविषय इत्यर्थः द्रष्टव्यः इति भावः, इत्येत, यदा गुणीभूतत्व,—गुणीभावं, गुणीभूतरसान्तरादीनामुत्कर्षाधायकत्वन रसाङ्गत्वमित्यर्थः, आयान्ति—रसान्तराङ्गतयाऽप्रधाना भव-न्तीति यावत्, तदा क्रमात् रसवत्—रसा विद्यत यत्र व्यापारात्मनि निबन्धे तदिति विग्रहः, तथा हि, यत्र तु रसोऽन्यस्मिन्नर्थे अङ्गत्वं भजति, तत्रात्योपकारकत्वात् एष इति भावः, प्रेय भावस्य तथात्वे इत्यर्थः, रसाभासो भावाभासश्चेत्येतद्वयम् ऊर्जस्वीति, गृह्यभासयोरितराङ्गत्व इत्यर्थः, भावप्रथमः समाहितं भावप्रशमस्य इतरङ्गत्वे इत्यर्थः । "न भावहीनोऽस्ति रसः" इत्युक्तदिशा रसव्याभिचारिभावयोरव्यभिचारेणालङ्कार्य्यालङ्कारभावासम्भवात् तयोरङ्गाङ्गिभावेनैतदलङ्कारप्रसङ्ग इति ध्येयम्, इति अलङ्कृतयः, भवन्तीति शेषः, इत्यलङ्कारव्यपदेश्यता भजन्ते इत्यर्थः ।

तत्रेति । रसवत् उदाहरणाह, अयमिति ।—व्याख्यातोऽयं, प्राक् ३२० पृ. । यथा वा—"किं हास्येन ? न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं केयं निष्करुण ! प्रवासरुक्षिता ? केनासि दूरीकृतः ? । स्वप्नान्तेष्विति वा वदन् प्रियतमव्यासक्तकण्ठयहो बुद्धा रोदिति रिक्तबाहुबलयस्तारं रिपुस्त्रीजनः ॥" अत्र हि करुणो रसो विप्रलम्भ श्रृङ्गाराङ्गभावं प्राप्त इति । एवमन्यत्रापीति—वीरादेः श्रृङ्गाराद्यङ्गत्वेऽप्युदाहरणान्यूह्यानीत्यर्थः । करुणस्य भावाद्य-ङ्गत्वे उदाहरणं गुणीभूतव्यङ्ग्यकरणे "मानोन्नतां प्रणयिनीम्—" इत्यादि स्वयमेवोक्तम् ।

आमीलितेति ।—सखायं प्रति कस्यचिदुक्तिः । आमीलिते—ईषत् सङ्कुचित, अलसं यथा तथा । विवर्त्तिते—चालिते, तारके ययोः तादृशी अक्षिणी यस्यास्तां, सुरतान्ते निद्रावेशपरामिति भावः, यद्व—अलसेन—

रसावेशजनितालस्येन, विवर्त्तितं—स्थिरीकृतं, तारकं यस्य तादृशमक्षि यस्याः तः, मम कण्टबन्धने—कण्ठालिङ्गने, दरश्लथा—ईषच्छिथिला, बाहुवल्ली यस्यास्तथाविधां, तथा प्रस्वेदवारिक्षणिकाभिः,—सुरतश्रमात् सञ्जातप्रकृष्ट-स्वेदबिन्दुभिः, आचितं—व्याप्तं, गरुडबिम्बं—कपोलमण्डलं यस्याः ताशीं, तां—मत्कान्ताम्, अनिशं—सततं, संस्मृत्य अतः,—अन्तःकरण, शान्तिं न एति—न गच्छति। वसन्ततिलक वृत्तम्। यथा वा—गाढ़ालिङ्गनवासनी-कृतकुवप्रोद्भिन्नरोनोद्गमा सान्द्रस्वेदरसातिरेकविगलच्छ्रीमन्त्रितम्बाम्बरा। मा मा मानद! माऽति मामलमिति क्षामाक्षरोल्लापिनी सुप्ता किं नु! मृता नु किम! मनसि मे लीना विलीना नु किम्!!॥" अत्र नायिकायां हर्षाख्यो व्यभिचारिभावः। यथा वा—"तद्वक्त्तामृतपानदुर्ललितया दृष्टया वा विश्रम्यताम्? तद्वाक्यश्रवणाभियोगपरयोः श्राव्यं कुतः कर्णयोः?। एभिस्तत्यरिरम्भनिर्भरतरैरङ्गैः कथं स्थीयताम? कष्टं तद्विरहेण सम्प्रति वयं कृच्छ्रामवस्थां मताः॥" अत्र चिन्ताख्यो व्यभिचारिभावः।

## लक्ष्मी

इयता प्रबन्धेन शब्दयुक्तानर्थयुक्तांश्चालङ्कारान् प्रतिपाद्य सम्प्रति रसादियुक्तानपि तान् प्रतिपादयितुं तत्र मुख्यतया चतुर्विधं रसवदाद्यालङ्कारं प्रतिपादयति—**रसभावाविति**। अत्र रसभावादयः सर्वेऽपि तृतीयपरिच्छेदे प्रतिपादिता अवलोकनीयाः। रसो भावश्चेति तौ रसभावौ, तयोः (रसभावयोः) आभासौ तदाभासौ, तथा भावस्य प्रशमः शान्तिश्च, एते यदा गुणीभूतत्वं रसान्तरादीनामुत्कर्षाधायकत्वेनाङ्गत्वम्, न्यग्भूतचमत्कारत्वमित्यर्थः आयान्ति प्राप्नुवन्ति, तदा रसवत्, प्रेयः ऊर्जस्वि, समाहितञ्चेति संज्ञाभिश्चतुःसंख्याकाः अलङ्कृतय अलङ्काराः क्रमात् जायन्त इत्यर्थः। एवञ्च यत्र एको रसः इतरस्य रसस्य भावादेर्वा अङ्गत्वं तत्र रसवत्, यत्र एको भावः इतरस्य भावस्य रसादेर्वा अङ्गत्वं तत्र प्रेयः, यत्र रसाभासो भावाभासो वा रसस्य भावादेर्वा अङ्गत्वं तत्र ऊर्जस्वि, यत्र च भावस्य प्रशमः रसस्य भावादेर्वा अङ्गत्वं तत्र समाहितम्, इति निष्कर्षः। तदुक्तम्—

**'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।**

**काव्ये तस्मिन्नलङ्कारो रसादेरिति मे मतिः॥' इति।**

रसवदादयः शब्दा उक्तेष्वर्थेषु नित्यनपुंसका एव। न चैवम् 'अलङ्कृतयः' इति विशेषणानुपपत्तिः 'अपत्यं सुता' इत्यादिवद्वयवहारे क्षत्यभावात्।

काठिन्याशं परिहर्त्तुमाह—**तदाभासाविति**। स्पष्टम्।

रसवदादिपदानां व्युत्पत्त्युपपादनपूर्वकं यथाक्रममुदाहरणान्युपपादयितुमुत्थापयति—**तत्रेति**। चतुर्वि-धेषु रसवदादिषु अलङ्कारेषु मध्ये इत्यर्थः। रसयोगात् रसशालितया। तथा च रसः अस्यास्तीति विग्रहे—

**'भूमिनिन्दाप्रशंसायां नित्ययोगेऽतिशायने।**
**सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः॥'**

इत्युक्त्या प्राशस्त्ये मतुप्। प्राशस्त्यञ्च रसस्य अन्यरसेन पौष्कल्यापादनमित्यवगन्तव्यम्। 'अयं स' इत्यादेर्व्याख्यानं श्रृङ्गारः करुणस्याङ्गमिति च चतुर्थपरिच्छेदे स्फुटतया प्रतिपादितमिति तत्र द्रष्टव्यम्।

नायमत्रैवेति नियम इत्यभिप्रायेणाह—**एवमिति**। अन्यत्रापि रसान्तरस्य रसान्तराङ्गत्वे भावाङ्गत्वेऽपि च एवं यथा श्रृङ्गारः करुणस्याङ्गम्, तथैवोदाहरणं ज्ञेयमित्यर्थः। एवञ्च श्रृङ्गारः करुणस्याङ्गं यथा पूर्वोदाहृत एव 'क्षिप्तो

हस्तावलग्नः' इत्यादौ सप्तमपरिच्छेदे । शान्तश्रृङ्गाररौद्ररसा भगवद्विषयकरतिभावस्याङ्गानि यथा—'एकं ध्याननिमीलितात्' इत्यादौ उक्तपरिच्छेदे । एवमन्यदप्युदाहार्यम् ।

प्रियशब्दात् प्रकृष्टार्थे इयसुन्प्रत्यये सति प्रेयःशब्दो निष्पन्न इति प्रेयः शब्दार्थमाह—**प्रकृष्टेति**। प्रकृष्टं रसान्तराङ्गत्वेऽपि रसान्तराङ्गत्वेनोत्कृष्टं यत्प्रियत्वं तस्मात् तथोक्तात् । तथा च प्रकृष्टप्रियत्वादेव भावस्य रसाङ्गत्वे प्रेयोऽलङ्कार इत्याशयः ।

**आमीलितेति**। कान्ताया रत्युत्तरावस्थां स्मृत्वा चिन्तयतो विरहिणः सखायं प्रति उक्तिरियम् । आमीलिते रतिप्रशमात् ईषत् सङ्कुचिते अथ च अलसं मन्दं यथा स्यात्तथा विवर्त्तिते सञ्चालिते तारके कनीनिके ययोस्ते तथोक्ते अक्षिणी लोचनद्वयं यस्यास्ताम्; मम (प्रेयसः) कण्ठबन्धने कण्ठाश्लेषे दरश्लथा ईषदलसा बाहुवल्ली भुजरूपा लता यस्यास्ताम् सुरतखेदेन निद्रावेशादित्याशयः; तथा प्रस्वेदवारिकणिकाभिः रतिखेदात् समुद्भूतधर्मजलबिन्दुभिः आचितौ व्याप्तौ गण्डबिम्बौ कपोलयुगलं यस्यास्ताम्; तां रत्युत्तरावस्थां प्रियतमां संस्मृत्य चिन्तयित्वा तिष्ठतो मम अन्तः अन्तःकरणं (कर्त्तृ) अनिशं रात्रिन्दिवं न एति न लभ्यते । वसन्ततिलकाच्छन्दः ।

लक्ष्यं सङ्घटयति—अत्रेति । उदाहृतपद्ये इत्यर्थः । अङ्गं पौष्कल्यापादकम् । स च स्मरणनामा भावश्च, विप्रलम्भस्य विदेशात्मकविप्रलम्भश्रृङ्गारस्य 'अङ्गम्' इति पूर्वेण सम्बन्धः । इत्थञ्च भावस्य रसाङ्गतया प्रेयोऽलङ्कार इति भावः । अत्र स्मरणस्य वाच्यत्वेन गुणीभूतव्यङ्ग्यत्वाभावेऽपि गुणीभूतवाच्यस्याप्यलङ्कारत्वभ्युपेत्येदमुक्तमित्यवधेयम् । तथा च स्मरणस्य वाच्यत्वेन तस्य विप्रलम्भश्रृङ्गारस्याङ्गोक्तयनुपपत्त्या स्मरणपदं स्मरणव्यङ्ग्यचिन्तापरं बोध्यम् । अत्र रसवदलङ्कारेऽपि सम्भोगश्रृङ्गारस्य स्मरणाख्यभावस्याङ्गत्वात्, अत एव उभयोरङ्गाङ्गिभावेन सङ्कारालङ्कार इति बोध्यम् । **असङ्कीर्णोदाहरणन्तु—**

'अरविन्दमिदं वीक्ष्य खेलत्वञ्जनमञ्जुलम् ।
स्मरामि वदनं तस्याश्चारुचञ्चललोचनम् ॥'

ऊर्जस्विपदार्थं व्याकुर्वाण आह—**ऊर्ज** इति । **बलमिति**। 'ऊर्जः स्यात् कार्त्तिके बले' इति हैमः । अनौचित्येन शास्त्रीयनियमस्वाभाविकनियमादिविपरीत्वेन प्रवृत्तौ विद्यमाने 'रसभावयोः' इति शेषः । एवञ्च—

'अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः ।'

इत्युक्तस्वरूपेण रसभावयोराभासत्वमुपपादितम्, तदत्रास्तीति प्रतिपादनन्तु केवलमर्थप्रदर्शनाय, 'तदस्यास्त्यस्मिन्निति मतुप्' इति पाणिनीयानुशासनेन सप्तम्यन्तान्मत्वर्थीयप्रत्ययाभावात् । ऊर्ज अस्यास्तीतिविग्रहे निपातनाद्विनिः । वैचित्र्यकारित्वे ऊर्जस्वि बलवत् इति तस्यार्थः ।

## रुचिरा

रसवत्प्रेय ऊर्जस्विसमाहितानि लक्षयति—१८७ **रसभावौ** रसो भावश्चेत्यर्थः । **तदाभासौ** तयो रसभावयोराभासौ । **तथा** । **भावस्य** । **प्रशमः** क्षयः । **यदा** । गुणीभूताय न्यग्भूतचमत्कारत्वम् । **आयान्ति** । तदा । **क्रमात्** । **रसवत्** । **प्रेयः** । **ऊर्जस्वि** । **समाहितम्** । **इति** । **अलङ्कृतयो**ऽलङ्काराः । तथा च—रसस्य गुणीभूतत्वे रसवत्, भावस्य गुणीभूतत्वे प्रेयः, रसाभासस्य भावाभासस्य च गुणीभावे ऊर्जस्वि, भावप्रशमस्य गुणीभावे समाहितं चालङ्कारः । इति फलितम् । अत एवालङ्कारसूत्रकारैः—'रसभावा-भास-भावप्रशमानामितरगुणीभावो रसवत्-प्रेय-ऊर्जस्व-समाहितानि ।' इति सूत्रयित्वा'रसाः श्रृङ्गारादयः । विभावादिभिरपरिपुष्टा देवादिविषया रत्यादयो निर्वेदा-

दयश्च भावाः। अनौचित्येन प्रवृत्ता रसाभावाश्च रसवद्भावच्चावभासमाना अपि न खल्वपि परमार्थतो रसाभावश्च भवन्तीति त इहाभासाः। भावस्य कस्यचिदुपशमो भावप्रशमः। ते खल्वमी यदेतरत्र रसादौ वाक्यार्थे वा गुणीभावमायान्ति, तदा यथाक्रमं रसावदादिनामानोऽलङ्काराः। रसस्य गुणीभावो रसवदभिधेयोऽलङ्कारः। भावस्य प्रेयोऽभिधानः। आभासस्योर्जस्विनामा। भावप्रशमस्य समाहिताह्वः। इति विवृतम् ॥ १४८ ॥ १४९ ॥

सूत्रबोधांशं परिहरति—**तदाभासा**वित्यादिना। स्पष्टम्।

क्रमादुदाहर्त्तुमुपक्रमते—**तत्र** तेषु रसवदादिषु मध्ये इत्यर्थः। **रसयोगाद्**रसशालितया। **रसवदलङ्कारः**। **यथा**। **'अयं स'** इत्यादि। व्याख्यातपूर्वमिदम् ॥ २९८ ॥ अत्र रसस्यालङ्कारत्वे हेतुं निर्दिशति—**अत्रे**त्यादिना। स्पष्टम्। नायमत्रैव नियम इत्याशयेनाह—**एव**मित्यादि। स्पष्टम्। वीरादेः श्रृङ्गाराङ्गत्वेऽप्येवमूह्यमिति भावः।

भावस्य गुणीभावः प्रेय इत्युक्तं तत्र हेतुं निर्दिशति—**प्रकृष्टप्रियत्वात्** प्रकृष्टं रसान्तराङ्गत्वेऽपि रसान्तराङ्गत्वेनोत्कृष्टं यत् प्रियत्वं तस्मात्। **प्रेयः**। तच्च—**यथा**। **मम**।

**'आमीलितासविवर्त्तिततारकाक्षीम्**आमीलिते ईषत्सङ्कुचिते अथ च अलसं यथातथा विवर्तिते चालिते तारके ययोः, तादृशे अक्षिणी नेत्रे यस्यास्तथोक्ताम्। **मत्कण्ठबन्धनदरश्लथबाहुबल्लीं** मम (प्रेयसः) कण्ठस्तस्य बन्धनं बाहुक्षेपेणालिङ्गनं तत्र दरश्लथेषदलसा बाहुवल्ली बाहुरूपा लता यस्यास्तथोक्ताम्। **प्रस्वेदवारिकणिकाचितगण्डबिम्बां** प्रस्वेदवारिकणिकाभिः सुरतश्रमात्समुद्भूतस्वेदबिन्दुभिराचितं व्याप्तं गण्डस्थलं यस्यास्तथोक्ताम्। **ताम्**। **संस्मृत्य** चिन्तयित्वा। **अन्तत**रन्तःकरणम्। **अनिशं** निरन्तरम्। **शान्तिम्**। **न**। एति प्रयाति। सखायं प्रति कस्याप्युक्तिरियम्। वसन्ततिलकं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ ९२९ ॥'

भावस्य गुणीभावं निर्दिशति—**अत्रो**दाहृते पद्ये। **सम्भोगश्रृङ्गारः**। **स्मरणाख्यभावस्य**। **अङ्ग**मनुपोषकम्। स स्मरणनामा भावः। च। विप्रलम्भस्य विप्रलम्भश्रृङ्गारस्य। 'अङ्ग'मिति पूर्वतोऽन्वेति। रसभावाभासयोर्गुमीभाव ऊर्जस्वीत्युक्तम्, तत्पदार्थं निर्दिशति—ऊर्जः। बलम्। 'ऊर्जः कार्तिके बले।' इति हैमः। तद्बलम्। अनौचित्यप्रवृत्तौ 'रसभावाभासयोः' इति शेषः। **अत्र** (वाक्ये) **अस्ति**। **इति**। **ऊर्जस्वि**।

यथा—

**'वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः ।**

**त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम् ॥'**

अत्र शृङ्गाराभासो राजविषयरतिभावस्याङ्गम् । एवं भावाभासोऽपि । समाहितं परिहारः ।

---

## विवृतिः

**एवं भावाभासोऽपीति** । भावाभासस्याङ्गत्वेऽपीत्यर्थः । एतदुदाहरणं यथा—'बन्दीकृत्य नृप ! द्विषां मृगदृशस्ताः पश्यतां प्रेयसां श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः । अस्माकं सुकृतेर्दृशोर्निपतितस्यौचित्यावारांनिधे ! विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥'

अत्र राजविषयरतिभावस्योत्तरार्धोद्योत्यो भावः शत्रुविषयत्वादाभासरूपोऽङ्गम् ॥

## विज्ञप्रिया

वने त्वद्वैरिवनितावृन्दे पुलिन्दा निजस्त्रियः परिहृत्य रतिं कुर्वते । निजस्त्रीपरिहारे बीजमाह—**अखिलेति** । आसामखिलकामकलावेत्तृत्वात् तदासक्ता इत्यर्थः ।

**अत्रेति** । वैरिस्त्रीविडम्बनेन राज्ञः प्रकर्षात् तत एव तद्विषयभावप्रकर्षाच्चेत्यर्थः । एवं भावाभासेपीति यथा—

**"किं ब्रूमस्ते महाराज माहात्म्यमन्यदुर्लभम् ।**

**स्तुवन्ति शत्रवस्त्वां हि कुड्मलीकृतपाणयः ॥" इति**

अत्र शत्रुस्तुत्या तदीयरतिभावाभासो राजविषयरतिभावस्याङ्गम् ।

## कुसुमप्रतिमा

वन इति । कस्यचित् राज्ञः स्तुतिरियम् । हे राजन् ! वने पुलिन्दा म्लेच्छविशेषाः अखिलासु कलासु नृत्यगीतादिषु आसक्ता आसक्ततया तासु दक्षा अपि निजस्त्रियः परिहृत्य विहाय, त्वद्वैरिवनितावृन्दे तव शत्रुस्त्रीसमूहे रतिं सुरतव्यापारं कुर्वते ।

अत्रेति । शृङ्गाराभासः परस्त्रीविषयकत्वादिति भावः ।

एवमिति । ऊर्जस्विविषये भावाभासोऽपि एवमूहनीय इत्यर्थः; तत्र यथा मम—

**"अनन्तभङ्गी परिभषिताङ्गी मञ्जीरमञ्जुस्वनशालिनीयम् ।**

**वेशाङ्गना कापि विलोक्य लोकं नतानना राजति राजमार्गे ॥"**

अत्र "भावाभासो लज्जादिके तु वेश्यादिविषये स्यात्" इति प्रागुक्तलक्षणात् लज्जाया वेश्यागततया भावः भासः; स च शृङ्गारस्याङ्गमिति ऊर्जस्वि ।

भावप्रशमस्य इतराङ्गत्वे समाहितमुदाहर्तुं समहितशब्दस्य व्युत्पत्तिं दर्शयति समेति । परिहार उपसंहारः समापनमिति ऊर्जस्वि ।

## विमला

वने इति ।—राजस्तुतिरियम् । हे राजन्निति अध्याहार्य्यं, पुलिन्दाः,—-किरातभेदाः, म्लेच्छजातिविशेषा इति यावत्, वने अखिलकलासक्ताः,—चतुःषष्टि—कलासु निपुणा इत्यर्थः, निजस्त्रियः परिहृत्य—परित्यज्य, तव वैरिणां—शत्रूणां, वनितावृन्दे—कान्तासमूहे, रतिं—विहारं, कुर्वते । यथा वा—"देव ! त्वत्परिग्रन्थिपार्थिक्ममालौकैकसत्तात्मनां कान्तारेषु पुलिन्दराजनिवहप्राणप्रियाणामपि । तेषामेव तथाऽवरोधनबधूलावण्यमुत्पश्यतां तेषाञ्चापि परस्परं कथमहो ! जातानुरागक्षतिः ?" ॥ अत्र शबरीनिष्ठवैरिराजविषयकः शवरनिष्ठवैरिस्त्रीविषयकश्च रसाभासः कविनिष्ठराजविषयकभावस्य इति सारः । यथा वा—"दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिचेतः कालकलामपि प्रकुरुते नावस्थितिं या विना एतैराकलितस्य विचततरैरङ्गैवनङ्गातुरै सम्पद्येत कदा तदाप्तिसुखमित्येतन्न वेद्मि स्फुटम् ॥" अत्र रावणस्याभिलाषको विप्रलम्भश्रृङ्गारः, औत्सुक्यञ्च व्यभिचारिभावः ।

अत्रेति ।—अत्र—"वनेऽखिल" इत्यादिश्लोके परोढ़ाविषयत्वाच्छङ्गारा—भासः । एवं भावाभासोऽपीत—भावाभासस्याङ्गत्वेऽपीत्यर्थः । एतदुदाहरण यथा—"वन्दीकृत्य नृप ! द्विषां मृगदृशस्ताः पश्यतां प्रेयसां श्लिष्यन्ति प्रणमन्ति लान्ति परितश्रुम्बन्ति ते सैनिका । अस्माकं सुकृतैर्दृशा निपतितोऽस्योचित्यवारा निधे ! विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥" अत्र राजविषयकरतिभावस्योत्तरार्द्धद्योत्यो भावः शत्रुविषयत्वादाभासरूपोऽङ्गम् । परीहारः,—परित्यागः, विलय इति यावत् ।

## लक्ष्मी

वने इति । राज्ञः प्रशंसेयम् । हे राजन् ! वने अरण्ये पुलिन्दाः वनेचरा किरातविशेषाः अखिलाः स्वोचिताः सर्वाः कला नृत्यगीतादयः तासु आसक्ता आसक्ततया निपुणा अपि निजस्त्रियः स्वनार्यः परित्यज्य, तव भवतो वैरिणो रिपवस्तेषां वनितानां स्त्रीणां वृन्दे समूहे रतिं सम्भोगव्यापारं कुर्वते विदधते ।

लक्ष्यं सङ्गमयति—**अत्रेति** । श्रृङ्गाराभासः परोढाविषयत्वादित्याशयः ।

द्वितीयोदाहरणविषये आह—**एवमिति** । भावाभासोऽपि भावाभासस्याङ्गत्वेऽपि एवमूह्यमित्यर्थः । यथा—

**'किं ब्रूमस्ते महाराज ! माहात्म्यमन्यदुर्लभम् ।**
**स्तुवन्ति शत्रवस्त्वां हि कुड्मलीकृतपाणायः ॥'**

अत्र शत्रुप्रशंसया 'भावाभासो लज्जादिके तु वेश्यादिविषये स्यात्' इति पूर्वप्रतिपादितस्वरूपात् तदीयरतिभावाभासो राजवियकरतिभावस्याङ्गम् रसाभासभावाभासयोर्भावाङ्गतायाम् अस्मट्टीकायामेव चतुर्थपरिच्छेदे 'बन्दीकृत्य नृप ! द्विषाम्' इत्यवलोकनीयम् ।

अत्र पूवार्द्धे सैनिकगतः श्रृङ्गारोऽननुरक्तस्त्रीविषयकतया परस्त्रीविषयकतया च प्रवृत्त इत्याभासः, उत्तरार्द्धे पुनः प्रत्यर्थिगतो रतिरूपो भावः प्रस्तुतराजरूपशत्रुविषयकत्वेनाहार्यतया प्रवृत्त इत्याभासः; इत्थमत्र श्रृङ्गाराभासः भावाभासश्च कविगतराजविषयकरतिभावस्याङ्गमिति ।

समाहितपदं व्याकरोति—**समाहित**मिति । परिहारः प्रशमः समापनमिति तात्पर्यम् । परिहारप्रशमावभि-न्नार्थाविति व्याख्यातारः । 'परिहार' इति पाठे दूरभवनमर्थः ।

## रुचिरा

उदाहरति—**यथा** । '**पुलिन्दा** वनेचरा म्लेच्छविशेषाः । **अखिलकलासक्ता** अखिलाः स्वोचिताः सर्वाः कलाः सुरताविधानानि तत्रासक्तास्ताः । **निजस्त्रियः** । परिहृत्य परित्यज्य । हे राजन् !-**त्वद्वैरिवनितावृन्दे** तव वैरिणः शत्रवस्तेषां वनितानां स्त्रीवृन्दं तत्र । **वने** । **रतिं** प्रेम । **कुर्वते** । कस्यचिद्राज्ञः स्तुतिरियम् ॥ ३०० ॥'

उदाहृतं निर्दिशति-**अत्रे**त्यादिना । स्पष्टम् । अत्र परोढाविषयत्वाच्छृङ्गाराभासः, सोऽपि नीचजनेस्सोऽपि पराङ्गमित्यनौचित्यमिति बोध्यम् । द्वितीयोदाहरणं तूह्यमित्याह—**एव**मित्यादि । स्पष्टम् । तथा च-'वन्दीकृत्य नृपा द्विषा मृगदृशस्ताः पश्यतां प्रेयसीं श्लिषन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः । अस्माकं सुकृतैर्दृशर्नि पतितस्यौचित्यवारान्निधे ! विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥' अत्र प्रथमार्धे सैनिकनिष्ठः श्रृङ्गारोऽननुरक्तस्त्रीविषयकतयाऽऽहार्यतया प्रवृत्त इत्याभासः । परार्धे पुनः प्रत्यर्थिनिष्ठो रतिरूपो भाव प्रकृतराजरूप शत्रुविषयकतयाऽऽहार्यतया प्रवृत इत्या भासः । एवमेतौ रसभावाभासौ कविगतस्य राजविषयकस्य रतिभावस्याङ्गम् । भावप्रशमे गुणीभूते समाहितमित्युक्तम्, तत्र समाहितपदार्थं निर्दिशति-**समाहि**तमित्यादिना । स्पष्टम् । परिहारप्रशमावभिन्नार्थौ इति भावस्य प्रशमोऽपि परिहारापरपर्यायः समाहितनामाऽलङ्कार इति भावः ।

यथा—

**'अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।**

**ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥'**

**अत्र मदाख्यभावस्य प्रशमो राजविषयरतिभावस्याङ्गम् ।**

---

## विवृतिः

**अविरलेति** । तवेक्षणे त्वत्कर्मदर्शने सतीत्यर्थः ॥

## विज्ञप्रिया

**परिहार** इति—प्रथमोत्पन्नभावस्य परिहारस्त्यागो नाशपर्यवसन्नः । **अविरलेति** । मदो गर्वः तद्दर्शने तेषामविरलेत्यादिकं हेतुः । तवेक्षणे तवदर्शने सति क्षणात् स मदः क्वापि गतो न दृष्ट इत्यर्थः ।

**अत्र मदाख्यस्येति** । यद्यपि तत्प्रशमोपगतपदस्य लक्ष्यार्थेन्न मदस्य चात्यन्ताभावेन तत्प्रशमस्य लक्षणी-यता तथापि गुणीभूतव्यङ्ग्यस्यैव गुणीभूतस्य लक्ष्यार्थस्याप्यलङ्कारत्वमभिप्रेत्येदमुक्तम् । वस्तुतस्तु अपराङ्गभू-तव्यङ्ग्यस्यैव रसवदलङ्कारत्वं काव्यप्रकाशकृदादिसकलालङ्कारिकसम्मतं न गुणीभूतलक्ष्यार्थस्य । तदा अत्रैव श्लोके कवेरतिरूपो भावस्तस्यैव तन्मदनाशान्नाशो व्यङ्ग्यः । स एवात्र समाहितालङ्कारो बोध्यः ।

## कुसुमप्रतिमा

अविरलेति । इयमपि राजस्तुतिः । हे राजन् ! तव वैरिणां शत्रूणाम्, अविरलैर्निरन्तरैः करबालानामसीनां कम्पनैः, भ्रूभङ्गीभिः तर्जनैस्तव पक्षमिद्दिश्य भत् सनैः गर्जनैर्वीरनादेश्च मदी मत्तता मुहुर्वारं वारं ददृशे सोकैर्दृष्टः किन्तु तव ईक्षणे दर्शने सत्येव स मदः, क्षणादेव क्वापि गतो विक्षुप्त इत्यर्थः ।

अत्रेति । मदाख्याभावस्य "सम्मोहानन्दसम्भेदो मदो मद्योपयोगजः" इति प्रागुक्तलक्षणस्य, प्रशमो निवृत्तिः । अङ्गमिति । अङ्गमिति । अतएव समाहितमलङ्कार इति भावः ।

## विमला

अविरलेति ।—हे राजन् ! अविरलैः,—घनैः, सन्ततैरित्यर्थः, करवालानाम—असीनां, कम्पनैः,—आस्फालनैः, तथा मुहुः,—पुनः पुनः, भ्रुकुटीभिः तर्जनैः गर्जनैश्च तव वैरिणां मदः,—गर्वः, ददृशे—दृष्टः, सः,—मदः, क्षणात् तव ईक्षणे—दर्शनमात्रे, क्वापि गतः,—विलयं प्राप्त इत्यर्थः । वैतालीयं वृत्तम्—"षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥" इति च तल्लक्षणम् । यथा वा—"अस्मिन्नेव जने विधेयमधुना व्यावर्त्तितेच्छं मनो दूत्यं वा शशिनः कुले कथमिति क्षिप्तो विमर्षो मया । इत्येव बहुदोषमाधिगहनं यत्कार्य्यमङ्गीकृतं तन्मा भ्रुन्नमुचिद्विषो मयि मुधैवाभ्यर्थनाविस्तरः ॥" अत्र विमर्षभाव-शान्तर्नलनिष्ठन्द्रविषयकभावस्येति समाहितम् ।

## लक्ष्मी

**अविरलेति**। राज्ञः प्रशंसेयम्। हे राजन्! तव वैरिणां शत्रूणाम्, अविरलं निरन्तरं यानि करवालानां खड्गानां कम्पनानि सञ्चारणानि तैः तथोक्तैः, भ्रुकुटीकरणकैः तर्जनैः तव पक्षमाश्रित्य 'छिन्धि भिन्धि'इत्यादिवाक्यरूपैः भर्त्सनैः गर्जनैः हुङ्कारसिंहनादरूपैश्च यो मदो गर्वः मुहुः वारम्वारं ददृशे अस्माभिः दृष्टः, किन्तु स मदः तवेक्षणे त्वत्कर्तृके त्वद्विषयके वा दर्शने सति; क्षणादेव क्वापि गतः पलायितः प्रशान्त इत्यर्थः। गर्जनैरित्यन्ते 'प्रकृत्यादिभ्य उपसंख्यानम्' इत्यनेन तृतीया बोध्या। **वैतालीयं छन्दः**

समन्वयं दर्शयति—**अत्रेति**। उदाहृतपद्य इत्यर्थः। मदाक्यभावस्य 'सम्मोहानन्दसम्भेदो मदो मद्योपयोगजः' इति प्रतिपादितस्वरूपस्य प्रशमः समापनम्। **अङ्गमिति**। तेन समाहितमित्याशयः।

## रुचिरा

उदाहरति—**यथा—'अविरलकरवालकम्पनैरविरलं** निरन्तरं यानि करवालकम्पनानि तलवारसञ्चारणानि तैः। तथा—**भ्रुकुटीतर्जनगर्जनैर्भ्रुकुटीभिस्तर्जनानि** 'छिन्धिभिन्धि' इत्यादीनीङ्गितोद्‌भावनानि च गर्जनानि चेति तैस्तथोक्तैः। मुहुः। हे राजन्!—**तव**। **वैरिणां** शत्रूणाम्। **मदः**। 'य' इति शेषः। **ददृशे**। **सः**। **तव**। **ईक्षणेक्षणा** दीक्षणयोर्नेत्रयोरीक्षणं दृष्टिपास्तस्मात्। यद्वा-तव। ईक्षणे दर्शने। क्षणादित्यर्थः। **क्वापि**। **गतः**। वैतालीयं वृत्तम्। तल्लक्षणं चोक्तं प्राक्॥ ३०१॥'

उदाहृतमर्थं निर्दशति-'**अत्रेत्यादिना**। स्पष्टम्।

भावोदयादीन् लक्षयति—१८८ **भावस्य** निर्वेदादेः। **च**। **उदये**। **सन्धौ** 'तयो'रिति शेषः। **मिश्रत्वे** सम्मेलने 'तेषा' मिति शेषः। **च**। **तदाख्यका** रसा भावोदयादिरूपाऽऽख्या येषां तथोक्ताः।

**भावस्य चोदये संधौ मिश्रत्वे च तदाख्यकाः ॥ ९६ ॥**

तदाख्यका भावोदयाभावसंधिभावशबलनामानोऽलंकाराः । क्रमेणोदाहरणम्—

**'मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः ।**

**श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ॥'**

अत्र त्रासोदयो राजविषयरतिभावस्याङ्गम् ।

---

## विवृतिः

भावोदयादिनामकालंकारत्रयमाह—**भावस्य चेति** ।

## विवृतिपूर्तिः

**भावोदयेति** । भावस्योदय उद्गमावस्था, संधिर्द्वयोर्विरुद्धयोः स्पर्धित्वेनोपनिबन्धः, शबलता बहूनां पूर्वोपमर्देन निबन्ध इति ॥ इतोऽधस्तात्कुवलयानन्दे प्रत्यक्षमनुमानमुपमानं शब्दोऽर्थापत्तिरनुपलब्धिः संभव ऐतिह्यमित्यष्टौ प्रमाणालंकारः ॥ तत्र **प्रत्यक्षम्** 'क्रान्तकान्तवदनप्रतिबिम्बे भग्नवालसहकारसुगन्धौ । स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥' अत्रेन्द्रियाणां तृप्त्या तज्जन्यं प्रत्यक्षमलंकारः । **अनुमानम्**—'विलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः । उन्मीलद्भिश्च कुमुदैर्गतोऽस्तं ज्ञायते रविः ॥' रविरस्तगमनवान् तादृशकालसंबन्धित्वात्, इत्यनुमानप्रयोगः । **उपमानम्**—'तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले । यस्तन्वि ! तरकान्यासः शकटाकारमाश्रितः ॥' तां रोहिणीं विजानीहीत्यतिदेशवाक्यार्थज्ञानमुपमानम् । **शब्दः**—'विवृण्वता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम् । यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्य प्रभवो भविष्यति ॥' अत्र शिवो ब्रह्मणोऽपि हेतुरित्यत्र श्रुतिरूपं शब्दप्रमाणमुपन्यस्तम् ॥ श्रुतयस्तु । 'अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् । तमादिमध्यान्तविहीनमेकं विमुं चिदानन्दमरूपमद्भुतम् ॥' इत्येवमादयः । भगवन्तं **मनु**मुपहसन्ती 'बलात्कुरुत पापानि सन्तु तान्यकृतानि वः । सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥' इति नास्तिकोक्तिरपीह द्रष्टव्या । **अर्थापत्तिः**—'निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि । अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥' **अनुपलब्धिः**—'स्फुटमसदवलग्नं तन्वि ! निश्चिन्वते । ते तदनुपलभमानास्तर्कयन्तोऽपि लोकाः । कुचगिरिवरयुग्मं यद्विनाधारमास्ते तदिह मकरकेतोरिन्द्रजालं प्रतीमः ॥ **संभवः**—'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान्प्रति नैष यत्नः । उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्यं निरवधिर्विपुला च पृथ्वी ॥' **ऐतिह्यम्**—'कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे । एति जीवन्तमानन्दो नरं वर्षशतादपि ॥' अत्र प्रमाणेषु प्रथममेकं **चार्वाकः**, द्वयं वैशेषिकाः, त्रयं (शब्देन) **सांख्याः** पातजलाश्च, चतुष्कं नैयायिकाः, पञ्चकं **प्राभाकराः**, **षड्कं भाट्टा** वैदान्तिकाश्च, सर्वमैतिह्यान्तं पौराणिकाश्च मन्यन्ते । एतेषां स्वरूपाण्यकरतो ज्ञेयानीति ॥

## विज्ञप्रिया

भावोदयादयस्तु गुणीभूताः स्वस्वनामान एवाऽलङ्कारा इत्याह—**भावस्य चोदये इति** । मिश्रत्वे भावशबलत्वे । बलवद्भिरुत्तरोत्तरभावैः सह पूर्वपूर्वभावस्यैकपद्यस्थितिरूपमिश्रणात् ।

तत्रापराङ्गभवोदयमुदाहरति—**मधुपानेति**। **अत्रेति**। प्रथमज्ञातस्य त्रासस्य श्लोकमध्ये उदयप्रतीत्या उदयः सराजविषयभावप्रकर्षकमङ्गम्।

## कुसुमप्रतिमा

रसभावादिघटितालङ्कारनिरूपणप्रस्तावादेव भावघटितान् भावोदयादीन् त्रीनलङ्कारान् निरूपयति भावस्य चेति। प्रथमचकारेण "गुणीभूतत्वमायान्ति" इति पूर्वस्मादनुकृष्यते; तथात्र आयातीति सप्तम्येकवचनान्त-तया विपरिणम्यते योग्यत्वात्। द्वितीयचकारस्तु अत्रत्यानामुदयादीनां समुच्चये। तथा च भावस्य "सञ्चारिणः प्रधानानि" इत्यादिप्रागुक्तलक्षणस्य कस्यचित्, उदये आविर्भावे गुणीभूतत्वमायाति सति (भावसदयनामा); सन्धौ कयोश्चिदुक्तलक्षणकयोर्भावयोः संयोगे गुणीभूतत्वामायाति सति (भावसन्धिमा); यथा केषारिचदुक्तलक्षकानां भावानां मिश्रत्वे सम्मिलितत्वे च गुणीभूतात्वमायति सति (भाव रावल नामा); तदाख्यकास्तत्तन्नामानः भावोदया-दिमान इत्यर्थः अलङ्काराः स्युः।

अत्र द्वयोर्योगे सन्धिशब्दस्य बहूनां योगे च मिश्रताशबलताशब्दयोरालङ्कारिकनिरूढ़त्वमवधेयम्। एषां व्युत्पत्तिस्तु स्पष्टा।

भावोदयमुदाहरति मधुपानेति। राजस्तुतिरियम्। हे राजन्! सुहृद्भिः स्वकीयबन्धुभिः सह मधुपाने मद्यपाने प्रवृत्ताः, ते तव वैरिणः शत्रवः, कुतोऽपि जनात् तन्नाम श्रुत्वा, विषमां दशां भयविह्वलतावस्थां लेभिरे प्राप्तवन्तः।

अत्रेति। त्रासस्य तदाख्यव्यभिचारिभावस्य उदयो वैरिहृदये आविर्भावः। अङ्गं सम्पादकः। अतएव भावोदयनामालङ्कारः इत्याशयः।

## विमला

भावोदयादीनामलङ्कारत्रयमाह, भावस्येति।—भावस्य उदये सन्धौ मिश्रत्वे च, चकाराद्गुणीभूतत्वमायाति सति चेत्यनुवर्त्तते, [अत्रायातीति सप्तम्यन्तभवगन्तव्यं, योग्यत्वात्] तदाख्यकाः,—तन्नामानः, अलङ्काराः भवन्ति इति शेषः। एवं भावोदयभावशबलत्वयोरलङ्कारत्वं विशेषसंज्ञाऽनभिधानात् स्वसंज्ञयैवेति ज्ञेयम्। तथा चात्र—"भावोदयो भावसन्धिर्भावशबलता च पृथगलङ्कारः" इति। अस्यार्थः,—भावस्य—उक्तरूपस्य, उदयः,—उद्गमा-वस्था, सन्धिः,—द्वयोर्विरुद्धयोः स्पर्द्धित्वेनोपनिबन्धः, शबलता च—बहूनां पूर्वोपमर्देन निबन्धः, एते च पृथक्—रसवदादिभ्यो भिन्नाः, अलङ्कारा इति बोध्यम्। एतत्प्रतिपादनं चोद्भटादिभिरेषां पृथगलङ्कारत्वेनानिर्दि-ष्टत्वात्, अथ च सङ्करसंसृष्टिवैलक्षण्येन, एते च सर्वालङ्काराः पृथक्केवलत्वेनालङ्कारा इति सर्वालङ्कारशेषत्वेनोक्तं, संसृष्टिसङ्करयोर्हि सम्पृक्ततयाऽलङ्काराणां स्थितिः, तद्वैलक्षण्यप्रतिपादनमेतत् इति सर्वस्वकाराः।

माध्वति। ते वैरिणः,—शत्रवः, मुहृद्भिः,—सखिभिः, सह, मधुपाने—मद्यपाने, प्रवृत्ताः,—उद्यताः अपि, कुतोऽपि—कस्मादपि, जनादिति शेषः, तव नाम श्रुत्वा विषमा—वैक्लव्यकारिणीं, दशाम्—अवस्थां, लेभिरे—प्रापुः। यथा वा—"साकं कुरङ्गकदृशा मधुपानलीलां कर्तुं सुहृद्भिरपि वैरिधि च प्रवृत्ते। अन्याभिधायितव नाम विभो! गृहीतं केनापि तत्र विषमामकरोदवस्थाम्॥" इत्यत्र त्रासस्योदयो राजविषयिण्या रतेरङ्गम्।

## लक्ष्मी

रसभावादियुक्तालङ्कारप्रतिपादनप्रकरणादिह, भावयुक्तान् भावोदयप्रभृतीन् अलङ्कारान् प्रतिपादयति—**भावस्येति**। अत्र चद्वयम्, तत्राद्येन 'गुणीभूतत्वमायान्ति' इति पूर्वकारिकातोऽनुवर्त्तते, तत्र 'आयान्ति' इत्यस्य आयातीति सप्तम्येकवचनान्तत्वेन विपरिणामो विधेयः तथैव सङ्गतत्वात्। अपरश्च 'चः' अत्रत्योदयादीनां समुच्चयार्थः। एवञ्च भावस्य पूर्वप्रतिपादित-'सञ्चारिणः प्रधानानि' इत्यादिस्वरूपस्य यस्य कस्यचित्, उदये उद्गमे गुणीभूतत्वमायाति सति **भावोदय**संज्ञकः सन्धौ कयोश्चित् प्रतिपादितस्वरूपयोर्भावयोः; सम्बन्धे गुणीभूतत्वमायाति सति भावसन्धिसंज्ञकः; तथा केषाञ्चित् प्रतिपादितस्वरूपाणां भावानां मिश्रत्वे बलवद्भिरुत्तरोत्तरभावैः सह पूर्वपूर्वस्यैकपद्यस्थितिरूपसम्मिलितत्वे च गुणीभूतत्वमायाति सति **भावशबलसंज्ञकः** तादाख्यका रसा भावोदयादयः गुणीभूता स्वस्वनामान एवालङ्कारा इत्यर्थः।

तदाख्यका इति पदं विवृणोति—तदेत्यादिना। स्पष्टम्।

भावोदयोदाहरणं दर्शयति—**मधुपानेति**। इयमपि राज्ञः प्रशंसा। हे राजन्! सुहृद्भिः मित्रैः सह मधुपाने मद्यपानकर्मणि प्रवृत्ताः परायणाः, ते तव वैरिणः रिपवः 'रिपौ वैरिसपत्नारि' इत्यमरः, कुतोऽपि लोकात् तन्नाम श्रुत्वा, विषमां सङ्कटप्रधानां दशाम् अवस्थां लेभिरे लब्धवन्तः।

समन्वयति—**अत्रेति**। त्रासस्य 'निर्घातविद्युदुल्काद्यैस्त्रासः कम्पादिकारकः' इत्युक्तव्यभिचारिभावस्य उदयः शत्रुचित्ते उद्गमः। अङ्गं परिपोषकम्। तेन भावोदयसंज्ञकालङ्कार इत्यभिप्रायः।

भावसन्ध्युदाहरणं दर्शयति—**जन्मेति**। जन्मान्तरे (दक्षभवनजन्मनि) भव इति जन्मान्तरीणः, यो रमणः पतिः तस्य महेश्वरस्येत्यर्थः, अङ्गसङ्गे सर्वतोऽवयवस्पर्शे आश्लेषे समुत्सुका उत्कण्ठिता, अत एव च सख्या वयस्याया अन्तिके निकटे सलज्जा तथा व्यापारे त्रपायुक्ता पार्वती नगसुता नः असमान् पातु अवतु।

## रुचिरा

'तदाख्यका' इति पदं व्याचष्टे—**तदे**त्यादिना। स्पष्टम्। उदाहर्तुमाह—**क्रमेणे**त्यादि। स्पष्टम्।

**'सुहृद्भिर्मित्रैः**। **सह**। **मधुपानप्रवृत्ता** मद्यपानपरायणाः। हे राजन्!—**ते** तव। **वैरिणः** शत्रवः। **कुतोऽपि**। **त्वन्नाम**। **श्रुत्वा**। **विषमां** सङ्कटप्रधानाम्। **दशामवस्थाम्**। **लेभिरे** लब्धवन्तः॥ ३०२॥

उदाहृतमर्थं निर्दिशति—**अत्रे**त्यादिना। स्पष्टम्।

**'जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका ।**

**सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥'**

अत्रौत्सुक्यलज्जयोश्च संधिर्देवताविषयरतिभावस्याङ्गम् ।

---

## विज्ञप्रिया

अपराङ्गभावसन्धिमुदाहरति—**जन्मान्तरीणेति** । **अत्रेति** । औत्सुक्यलज्जयोरलङ्कारत्वमत्रोदाहृतम् ।

**"असोढा तत्कालोल्लसदसहभावस्य तपसः**

**कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।**

**प्रमोदं वा दिश्यात्कपटवटुवेशापनयने**

**त्वराशैथिल्याभाभ्यां युगपदभियुक्तः स्मरहरः ॥"**

इति काव्यप्रकाशकृद्दत्तोदाहरणे आवेगहर्षयोर्व्यङ्ग्ययोरपि सन्धिरलङ्कारः ।

## कुसुमप्रतिमा

भावसन्धेरुदाहरणमाह जन्मेति । जन्मान्तरीणः पूर्वजन्मवर्ती यो रमणः पतिस्तस्य शिवस्येत्यर्थः, अङ्गसङ्गे सर्वाङ्गीनस्पर्शे आलिङ्गने समुत्सुकाः, अथ च सख्या अन्तिके इति हेतोः सलज्जा पार्वतो नः अस्मात् पातु रक्षतु ।

अत्रेति । सन्धिरेकस्यां पार्वत्यां सम्बन्धः । अतएव भावसन्धिरलङ्कारः ।

## विमला

अत्रेति ।—अत्र त्रासस्य भावस्य उदयः राजविषयरतेरङ्गम् ।

जन्मान्तरीणेति ।—**जन्मान्तरीणस्य**—पूर्वजन्मनि भूतस्य, रमणस्य—पत्युः हरस्य, अङ्गसङ्गे समुत्सुका—उत्कण्ठिता, अत एव संख्या अन्तिके—समीपे, सलज्जा च पार्वती सदा नः,—अस्मान्, पातु—रक्षतु । यथा वा—"वामेन नारीनयनास्त्रधारां कृपाणधारामय दक्षिणेन । उत्पुंसयन्नेकतरः करेण कर्त्तव्यमूढः सुभटा बभूव ॥" अत्र स्नेहाख्यरतिभावरणौत्सुक्ययोः सन्धिः ।

## लक्ष्मी

समन्वयं—दर्शयति—**अत्रेति** । सन्धिः एकस्यां पार्वत्यां संयोगः । तेन भावसन्धिरलङ्कार इत्याशयः । आवेगहर्षयोर्व्यङ्ग्ययोः सन्धिर्यथा पूर्व टीकायामुक्तम्—

'असोढा तत्कालोल्लसितसहभावस्य तपसः' इत्यादि ।

## रुचिरा

'**जन्मान्तरीणरमणस्य** जन्मान्तरे (दक्षगृहे जन्मनि) भव इति, तादृशोऽसौ रमणो नायकः (महेश्वरः) तस्य। **अङ्गसङ्गसमुत्सुका**ऽङ्गसङ्गे समुत्सुकोत्कण्ठात। अत एव—**सख्याः**। **अन्तिके**। **च** (तथा व्यापारे) **सलज्जा**। **पार्वती**। **सदा**। **नो**ऽस्मान्। **पातु** रक्षतु॥ ३०३॥'

उदाहृतमर्थं निर्दिशति—**अत्रे**त्यादिना। स्पष्टम्।

**'पश्येत्कश्चिच्चल चपल ! रे का त्वराहं कुमारी**
**हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।**
**इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः**
**कन्या कंचित्फलकिसलयान्याददानाभिधत्ते ॥'**

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता राजविषयरतिभावस्याङ्गम् ।

---

## विवृतिः

चकाराद् गुणीभूतत्वमायातीत्यनुववर्तते । अत्रायतीति सप्तम्यन्तमवगन्तव्यम् योग्यत्वात् ॥ **पश्येदिति** । चल इतोपसर । श्रमभरेण किंचिन्निद्रायिता झटिति चेतनां प्राप्याह—**व्युत्क्रम इति** । वैपरीत्यमित्यर्थः ॥

## विज्ञप्रिया

अपराङ्गभावशबलत्वमुदाहरति—**पश्येत्कश्चिदिति** । हे पृथ्वीपरिवृढ ! अरण्यपरिवृत्तेर्भवद्विद्विषः भक्षणार्थं फलकिशलयानि आददाना कश्चिदर्थादाकृष्टकामा इत्थमभिधत्ते । कीदृशमभिधत्ते इत्यत्राह—**पश्येदि**त्यादि । अत्र पश्योदित्यत्र शङ्का व्यङ्ग्या । चल चपल रे इत्यत्र धृतिः । कुमारीत्यत्र कुमारीत्वस्मरणात् कार्यत्वस्मृतिः, का त्वरेत्याश्वासना । हस्तालम्बमित्यत्र ममेदमकार्यमेवेत्यवधारणरूपा मतिरेव विबोधः । क्वासीत्यत्र क्व त्वं यासीत्यर्थः । अत्र तद्गमननिवर्तने औत्सुक्यं व्यङ्ग्यम् । अत्र दैन्यविरोधमात्रयोर्न बाध्यबाधकता । अन्येषु तु पूर्व पूर्वं प्रत्युत्तरोत्तरस्य बाधकत्वेन बलवत्तया शबलता । राजविषयरतिभावस्याङ्गमिति राजप्रक्रान्तत्वात्तदरिकन्याया एवं भावात् ।

## कुसुमप्रतिमा

भावशबले उदाहरणं दश यति पश्येदिति। पराजकेन वनवासीभूतस्य विपक्षनृपतेः कन्यया सह कस्यचिद्विशेषपरिचितवनेचरयुवकस्य उक्तिप्रत्युक्तौ प्रदर्श्य कश्चिदात्मीय राजानमनेन स्तौति । कश्चितृतीयो जनः पश्येत् आवयोरेतन्निज नस्थानावस्थानमवलोकयेत्, दृष्ट्वा चावयोर्दुष्प्रवृत्तिं सम्भावयेदिति भावः । इयं कन्याया उक्तिः । अत्र कन्यायाः शङ्का । अतएव रे चपल ! चञ्चलस्वभाववनेचरर्युवक ! चल मया सह पितुरावासमागच्छ । इयमपि कन्याया उक्तिः । अत्र निकृष्टसम्बोधनेन कन्याया औद्धत्यात् तां प्रति वनेचरस्थासूया । का त्वरा इतो गमने का तव सत्वरता । अस्मिन् दुर्गमस्थ ने सहसा तृतीयः कोऽपि न खल्वागच्छेदिति भावः । इयं वनेचरस्य प्रत्युक्तिः । अत्र वनेपरस्य धृतिः । अह कुमारी राजकन्या; अतो लोकः स्वत्वमपि सङ्केतः चेत्तदा महादोष एव भवेत्, विशेषताश्चाहं फलपल्लवाहरणाय प्रस्तरारोहणेन परिश्रान्तास्मीति भावः । इयं कन्याया उक्तिः । अत्र कन्यायाः 'अहं कुमारी' इति स्मृतिः । हस्तालम्बं वितरपरिश्रान्तासि चेत् मम गात्रे हस्तभरं देहि । इति वनेचरस्योक्तिः । अत्र राजकन्यायाः श्रमः । हहहा इति कन्याया दैन्यसूचिकोक्तिः । अहमुच्चजातीया राजकन्या सती कथमश्चैवं व्यवहरामीति भावः । अत्र राजकन्याया दैन्यम् । व्युत्क्रमः राजकन्यया त्वया वनेचरस्य सभावलम्बनं निरूद्धः क्रम एव । इति वनेचरस्योक्तिस्तस्य विबोधश्च । इत्युक्ताः वनेचरे प्रच्छन्नीभूय प्रस्थिते कन्या आह—

क्वासि वनेचर ! क्व वर्त्तसे त्वं किं यासि । अत्र कन्यायां औत्सुक्यम् । हे पृथ्वीपरिवृढ़ ! धराधिय ! अरण्यवृत्ते-र्वनवासिनः, भवद्विद्विषस्तव शत्रुनृपतेः कन्याः, फलकिसलयानि आददाना भोजनभूषणार्थमाहरन्ती सती, कश्चिद्वने-चरयुवकम्, इत्यमुक्तप्रकारम्, अभिधत्ते परस्परं ब्रवीतित्यर्थः ।

अत्रेति । शङ्काऽसूत्रादयः । स्वस्वस्थान एव व्यवस्थायां दर्शिताः । शबलता मिश्रता । अङ्गं सम्पादिका । अतोऽत्र भावशक्लनामालङ्कार इत्याशयः ।

## विमला

पश्येदिति ।—स्वकामुकं कश्चित् शवरयुवानं प्रति प्रतिपचराजभयेन जनं गतस्य कस्यचित् राज्ञः कुमार्य्याः कन्यायां उक्तिवर्णनप्रसङ्गेन राज्ञः स्तुतिरियम् । कश्चित् पश्येत्, चपल !—रे दुर्विनीत इत्यर्थः, चल—गच्छ, इतोऽपसरेत्यर्थः, का त्वरा ?—औत्सुक्यम् ? अहं कुमारी—अजातपरिणया, हस्तालम्बं वितर—हस्तं गृहाणेत्यर्थः, हहहा—दैन्यसूचकमव्ययमेतत्, व्युत्क्रमः—वैपरीत्यम्, अहं राजकन्या, कथमिममधमजातिं स्पृशा-मीति स्वस्या अवस्थाविपर्य्यय इति भावः, असि—त्वं, क्व—कुत्र, यासि ? पृथ्वीपरिवृढ ।—हे पृथिवीपते ! अरण्यवृत्तेः—वनाश्रयस्य, भवद्विद्विषः—भवद्रिपोः, कन्या फलकिसलयानि—फलनवपल्लवानि, ("पल्लवोऽस्त्रीकिसलयम्" इत्यमरः) आददाना—चिन्तती सती, कञ्चित्—शबरयुवानमिति भावः, इत्यम्—उक्तप्रकारम, अभिधत्ते—कथयति । मन्दाक्रान्ता वृत्तम् । यथा वा—"अप्यादेर्जगतां नवो लवणिमा सीदन्ति गात्राणि किम् ? रज्यन्ते न हि मानसानि विषये प्रत्यङ्गिरुद्धात्मनाम् । धिक् वृत्तिं मनसः स्पृहातरलितां लभ्यत वाऽयं मया प्रेयानित्यचलाधिराजतनयाचिन्ता चिरं पातु: वः ॥" इत्यत्र भगवदालोकनेन भगवत्या महेश्वर्य्या विस्मयश्र-ममतिनिर्वेदोत्कण्ठानां शाबल्यं कविनिष्ठस्य महेश्वरीविषयकस्य भक्त्यपरपर्य्यायस्य रतिभावस्याङ्गम् । यथा वा—"क्वाकार्य्यं शशलक्ष्मणः—" इत्यादि, अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां भावानां शब-लता, तदेते चित्तवृत्तिगतत्वेनालङ्कारा दर्शिताः इति ज्ञेयम् ।

अत्रेति ।—पश्यत् कश्चिदिति शङ्का, चल चपल रे इति असूया, सा त्वरेति धृतिः, अहं कुमारीति स्मृतिः, हस्तालब्धं वितर इति श्रमः, इहहेति दैन्यं, व्युत्क्रम इति विबोधः, क्वापि यासीति औत्सुक्यम्, एतेषां शबलता—मिश्रणम् ।

## लक्ष्मी

भावशबले उदाहरति—**पश्येदिति** । किञ्चिदाविर्भूतयौवनायाः प्रस्तुतनृपविरोधिवननिवासिनृपसुतायाः फलाद्याहरणकाले कस्मिंश्चित्कामुके कृतानुरागायाः कामुकेन सह उक्तिप्रत्युक्ती दर्शयित्वाऽऽत्मीयं नृपं प्रति कस्यश्चिदुक्तिरियम् । कश्चित् तटस्थः पुरुषः पश्येत् आवयो रहस्यस्थानस्थितिमवलोकयेत्, निरीक्ष्य चावयोर्दु-श्चरित्रं सम्भावयेदित्याशयः, इयं कन्याया उक्तिः । रे चपल स्वच्छन्दाचरणशीलतरुण ! चल अपसर यद्वा मया सह जनकगृहमागच्छ, इयमपि कन्याया उक्तिः । का त्वरा इतो गमने का ते शीघ्रता ? शीघ्रगमने को हेतुः निर्जनस्थानेऽन्यस्य सहसा प्रवेशासम्भवादितिभावः, इति कामुकस्य प्रत्युक्तिः । अहं कुमारी राजकन्या 'अस्मि' इति शेषः, अतः स्वल्पमपि त्वयि प्रेम इति कश्चिज्जानीयात्तदा महाननर्थः सम्भवेत् विशेषतश्च फलपप्लवाद्यान-यनाय इतस्ततो भ्रमणेन परिश्रान्तास्मीत्यभिप्रायः; इति कन्याया उक्तिः । हस्तालम्बं हस्तरूपमालम्बनं वितर देहि परिश्रान्तासि चेन्मम गात्र इति शेषः, इति कामुकस्योक्तिः । हहहा कष्टं कष्टम् इति कन्याया दैन्यद्योतिकोक्तिः,

अहमत्युच्चकुलप्रसूता राजकन्या सती अद्य कथमेवमाचरामीति भाव:। व्युत्क्रम: राजकन्यया भवत्या सह अकिञ्चनस्य ममानर्थाचरणम्, इति कामुकस्योक्ति:, इत्यभिधाय कस्मिंश्चित् प्रदेशेऽवलीने यूनि कन्या उक्तवती क्वासि तरुण ! कुत्र वर्त्तसे, किं त्वं यासि व्रजसि इति कन्याया उक्ति:। पृथिव्या: भूमे: परिवृढ: अधिप: तत्सम्बुद्धौ हे पृथ्वीपरिवृढ ! 'प्रभु: परिवृढोऽधिप:' इत्यमर:, अरण्यवृत्ते: वनवासिन: भवद्विद्विष: त्वच्छत्रो: कन्या, फलकिसलयानि फलकोमलपल्लवांश्च (भक्षणार्थमलङ्कारार्थञ्च) आददाना आहरन्ती सती, कञ्चित्तरुणं कामुकं जातानुरागा सती, इत्थमुक्तप्रकारम्, अभिधत्ते मिथो वक्तीत्यर्थ:। **मन्दाक्रान्ताच्छन्द:**।

समन्वयं दर्शयति—**अत्रेत्यादिना**। 'पश्येत् कश्चित्' इत्यनेन शङ्का, 'रे चपल !' इति अधमसम्बोधनेन काकुविशेषसहकाराद्रागानुविद्धासूया, 'का त्वरा' इत्यनेन धृति:, 'अहं कुमारी' इत्यनेन स्मृति:, 'हस्तालम्बं वितर' इत्यनेन श्रम:, 'हहहा' इत्यनेन दैन्यम्, व्युत्क्रम:' इत्यनेन विबोध:, 'क्वासि यासि' इत्यनेनौत्सुक्यम्, इत्येतेषां शबलता मिश्रता। अङ्गं परिपोषकम्। अत एव भावशबलसंज्ञकोऽलङ्कार इति भाव:।

## रुचिरा

'**हे पृथ्वीपरिवृढ** पृथ्व्या; परिवृढोऽधिपस्तत्संबुद्धौ तथोक्त ! 'प्रभु: परिवृढोऽधिप:।' इत्यमर:। **अरण्यवृत्तेरण्ये** वने वृत्तिर्निवासो यस्य तादृशस्य। **भवद्विद्विषो** भवतो विद्विट् शत्रुस्तस्य। **कन्या**। **फलकिसलयानि** फलानि च किसलयानि नवपल्लवाश्चेति। तानि। **आददाना** गृह्णन्ती सती। **कश्चित्** कोऽपि जन:। **पश्येत्** रहस्यं जानीयात् (इति शङ्का तद्धेतुश्च व्यङ्ग्य: सङ्गोपनीयपुरुषचेष्टा)। **रे चपल** स्वच्छन्दाचरणशील ! **चलापयाहि** (इत्यसूया, तद्धेतुश्च परत्र रागानौचित्यं व्यज्यते)। **का**। **त्वरा** सत्वरं गमने को हेतुरिति भाव: (इति धृति:, तद्धेतुश्चानुरागप्राबल्यम्)। **अहं** त्वया गृह्यमाणेत्यर्थ:। **कुमारी** कन्या (इति स्वात्मनस्तत्र प्रागल्भ्यज्ञानेन स्मृति:, तद्धेतुश्च ततकुलीनं त्वव्यङ्ग्यम्)। **हस्तालम्बं** हस्तरूपमालम्बनम्। वितर देहि (इति श्रम:, तद्धेतुश्च तत्सौकुमार्यं व्यङ्ग्यम्) **हहहा** कष्टंकष्टम् (इति दैन्यम्, तद्धेतुश्च मदनबाधया किंकर्त्तव्यताविमूढत्वम्)। **व्युत्क्रमो**ऽनर्थाचरणमिदम् (इति विबोध:, तद्धेतुश्च स्वस्वरूपपरिचिन्तनम्)। **क्व** कुत्र। **असि** त्वमिति भाव: (इदमव्ययम्)। **यासि** 'मां विहाये'ति शेष: (इत्यौत्सुक्यम्, तद्धेतुश्च पुन: कन्दर्पोन्मादप्राबल्यम्)। **इत्थम्** इत्येवम्। **कञ्चित्** कमपि स्वमनोहरं युवानमिति भाव:। **अभिधत्ते**। किञ्चिदुद्भूततारुण्याया: प्रस्तुतराजशत्रुकन्याया वनवासे फलद्याहरणे क्रियमाणे कस्मिंश्चिज्जातानुरागाया अवस्थावर्णनमुद्दिश्य प्रकृतराजस्तुतिरियम्। मन्दाक्रान्ताछन्द:' ॥ ३०४ ॥' उदाहृतमर्थं निर्दिशति—**अत्रेत्यादिना**। स्पष्टम्।

इह केचिदाहुः—'वाच्यवाचकरूपालंकरणमुखेन रसाद्युपकारका एवालंकाराः। रसादयस्तु वाच्यवाचकाभ्यामुपकार्या एवेति न तेषामलंकारता भवितुं युक्ता' इति। अन्ये तु—'रसाद्युपकारमात्रेणेहालंकृतिव्यपदेशो भाक्तश्चिरंतनप्रसिद्ध्याङ्गीकार्य एव' इति। अपरे च—'रसाद्युपकारमात्रेणालंकारत्वं मुख्यतो रुपकादौ तु वाच्याद्युपधानम्, अजागलस्तनन्यायेन' इति। अभियुक्तास्तु—'स्वव्यञ्जकवाच्यवाचकाद्युपकृतैरङ्गभूतै रसादिभिरङ्गिनो रसादेर्वाच्यवाचकोपस्कारद्वारेणोपकुर्वद्भिरलंकृतिता, लभ्यते। समासोक्तौ तु नायिकादिव्यवहारमात्रस्यैवालंकृतिता, न त्वास्वादस्य, तस्योक्तरीतिविरहात्' इति मन्यन्ते। अत एव ध्वनिकारेणोक्तम्—

'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।

काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः॥'

यदि च रसाद्युपकारमात्रेणालंकृतित्वं तदा वाचकादिष्वपि तथा प्रसज्येत। एवं च यच्च कैश्चिदुक्तम्—'रसादीनामङ्गित्वे रसवदाद्यलंकारः। अङ्गत्वे तु द्वितीयोदात्तालंकारः' इति, तदपि परास्तम्।

---

## विवृतिः

इदानीं रसवदादीनामलंकारत्वमस्वीकुर्वतां केषांचिन्मतमाह—**इह केचिदिति**। वाच्यवाचकरूपालंकरणमुखेन शब्दार्थस्वरूपशोभाजननद्वारेण इह रसवदादाव**लंकृतिव्यपदेशो**ऽलंकारपदप्रयोगो **भाक्तो** गौणः। **चिरंतनप्रसिद्ध्या** प्राचीनमतेन। **वाच्याद्युपधानं** वाच्यवाचकालंकरणम्। **अजागलस्तनन्यायेनेति**। अजागलस्तनो यथा दुग्धानुपयोगी तथा प्रकृतानपयोगीत्यर्थः। **स्वव्यञ्जकेति**। स्वमङ्गभूतं रसादि तदव्यञ्जकाभ्यामेव वाच्यवाचकाभ्यामुपकृतैर्न तु प्रधानीभूतरसादिव्यञ्जकाभ्याम्। प्रत्युत स्वव्यञ्जकशब्दार्थघटितत्वेन तयोरुपकारका एवाङ्गरसादयो न तूपकार्याः। एतेन रसादयस्तु वाच्यवाचकाभ्यामुपकार्या एवेति यद्दूषणमुक्तं तन्निरस्तम्। नन्वत्र गुणप्रधानभावेनालंकार्यभाव उपपद्यतां समासोक्तौ तु व्यवहारसमारोपजन्यास्वादस्यालंकारत्वस्वीकारेऽलंकार्याभावत्वकथं स उपपद्यत इत्यत आह—**समासोक्तौ त्विति**। व्यवहारमात्रस्य प्रस्तुते वस्तुन्यप्रस्तुतसाधर्म्यारोपमात्रस्य, न तु तज्जन्यास्वादस्य। **उक्तरीति**विरहात् वाच्यवाचकालंकारद्वारेण रसाद्युपकारकत्वस्याभावात्॥ **प्रधान इति**। अन्यत्र रसादौ वाक्यार्थे वा। रसाद्युपकारकत्वमात्रेणालंकारत्वं मुख्यत इति प्रागुक्तमपरेषां मतं दूषयत—**यदीति**। **एवं चेति**। उक्तरीतिविरहादित्यर्थः॥

## विज्ञप्रिया

**वाच्यवाचकरूपेति**। वाच्यवाचकयोरूमर्थशब्दस्वरूपं, तयोरलङ्करणं शोभनम्, उपमानुप्रासादायः। तन्मुखेन तद्द्वारेणेत्यर्थः। **रसादयस्त्विति**। अपराङ्गभूता रसादय इत्यर्थः। अपराङ्गानां रसादीनामलङ्कारत्वं स्वीकुर्वतामन्येषां तु मतमाह—**अन्ये त्विति**। वाच्यवाचकशोभनद्वारा मुख्यरसस्योपकारकत्वप्रयोजकमिति न नियमः।

किन्तु मुख्यरसोपकारकत्वमेव तथात्वप्रयोजकम्। किन्त्वर्थशब्दालङ्कारकत्वेन व्यवहारवशात्तयोरलङ्कारेष्वेवालङ्कारपदं शक्तम्। अपराङ्गरसादौ त्वलङ्कारपदं भाक्तमित्यर्थः, भाक्तं लाक्षणिकम्।

अपराङ्गरसादावपि अलङ्कारपदं शक्तमेव न भाक्तमिति वदतां मतमाह—**अपरे चे**ति। रसाद्युपकारकतामात्रेणेत्यनेनोपमादीनामिवापराङ्गरसादीनामपि मुख्यतो मुख्यभावेनैवालङ्कारकत्वं न भाक्तालङ्कारपदार्थत्वेनेत्युक्तम्। तथा चोभयत्रैवालङ्कारपदं शक्तमित्यर्थः। ननु सर्वेषामेवालङ्कारपदवाच्यत्वे रूपकादावेवालङ्कारव्यवहारः कथमित्यत्राह—**रूपकादावि**ति। वाच्याद्युपधानं वाच्यतादर्शनमजागलस्तनपानमिव निष्प्रयोजनमित्यर्थः।

**अभियुक्तास्त्वि**ति। एतन्मतेऽपि द्वयोरप्यलङ्कारपदवाच्यत्वमेव। किन्तु पूर्वमते रसाद्युपकारकद्वारता तत्रेपेक्षणीया। एतन्मते तु उपमादेरिवाङ्गभूतरसादेरपि शब्दार्थोभयोपकारकद्वारैव रसोपकारकतयाऽलङ्कारपदवाच्येति विशेषः। तदाह—**स्वव्यञ्जके**ति। स्वस्याङ्गभूतरसादेर्व्यञ्जकौ वाच्यवाचकौ ताभ्यामुपकृतैरङ्गभूतरसादिभिर्वाच्यवाचकोपस्कारकद्वारेणोपकुर्वद्भिरर्थादङ्गिनं रसमुपकुर्वद्भिरलङ्कृतिव्यपदेशो लभ्यत इत्यर्थः। अङ्गभूतरसादीनां शब्दार्थाभ्यामुपकारो व्यञ्जनावशादेव तैः शब्दार्थयोरुपकारस्तद्व्यङ्ग्यत्ववैशिष्ट्येनेति परस्परमुपकारो दर्शितः।

(समासोक्तौ तु यो नायकनायिकाव्यवहारो व्यङ्ग्यस्तस्य रसाद्युपकारनिरपेक्षमेवालङ्कारत्वमित्याह—**समासोक्तावि**ति। इदमुपलक्षणमप्रस्तुतप्रशंसायामपीदृशत्वं बोध्यम्। **अत एवे**ति। अङ्गभूतरसादेरप्यलङ्कारपदवाच्यत्वादेवेत्यर्थः।

**प्रधाने** इति। यत्र काव्ये प्रधाने अङ्गिनि अन्यत्र रसादिरूपे रसादयोऽङ्गमित्यर्थः। अङ्गत्वैक्याश्रितमेकवचनम्। तस्मिन् काव्ये रसादिलङ्कारोऽलङ्कार पदवाच्य इति मे मतिरित्यर्थः।

ननु कटककुण्डलादेरलङ्कारत्वमङ्गप्रकर्षकत्वेनैव, अत उक्तन्यायादङ्गरसादेरुपमादेर्वालङ्कारत्वमस्तु। समासोक्तेस्त्वङ्गिरसादिप्रकर्षकत्वाभावान्नालङ्कारत्वमित्यत आह—**यदी**ति। क्वचिदङ्गिप्रकर्षकत्वेन समासोक्तौः तु स्वतो वैचित्र्येणैवालङ्कारत्वं, नतु अङ्गिप्रकर्षकत्वं तल्लक्षणम्। तथात्वे अतिव्याप्तिः स्यादित्यर्थः। केचित्तु अङ्गिरसस्यैव रसवदलङ्कारादित्वमङ्गभूतरसादेस्तु 'यद् व्यङ्ग्यं प्रस्तुतस्याङ्गं महतां चरितं भवे'दित्यनेनोक्तं द्वितीयोदात्तालङ्कारत्वमेवाहुः। एवं "ध्वनिकारोक्तसम्वादेन अस्मद्दर्शितोदाहरणेऽव्याप्तेश्च तत्परास्तमित्याह। "आमीलितालसविवर्तिततारकाक्षी इत्यत्र यः स्मरणाख्यभावो विप्रलम्भाङ्गत्वेनोक्तस्तस्य कस्यापि महतचरितत्वाभावेनोदात्तालङ्कारत्वस्य तत्राव्याप्तेः।

## कुसुमप्रतिमा

ये किल रसवदादीनामलङ्कारत्वं नाङ्गीकुर्वन्ति; इदानीं तन्मतभिराकरणेन, तेषामलङ्कारत्वं व्यस्थापयितुं दूषणाय तन्मतानि क्रमादाह इहेति। अलङ्क्रियते अनेनेति अलङ्करणम्। तथा च वाच्यः अर्थः वाचकः शब्दः तदुभयरूपं तदलङ्करणमलङ्कारहेतुस्तन्मुखेन तद्द्वारा रसादीनामुपकारकाः पुष्टिजनकाशब्दार्थमात्रवृत्तिवैचित्रयरूपा धर्म्मा इत्यर्थः। तेषां रसादीनाम्। अतएव रसवदादयो नालङ्कारा इति तेषामाशयः। अत्र द्वाभ्यामेवादिशब्दाभ्यां भाव-रसाभास भावाभास सन्धि-शबलतानां ग्रहणम्। एवमुत्तरवाक्येष्वपि।

अन्ये त्विति। रसादीनामङ्गिभूतानामित्यर्थः, उपकारमात्रेण यथाकथञ्चित् सामान्यत एव पुष्टिमात्रेण, इह रसवदादौ, अलङ्कृतिव्यपदेशः अलङ्कारतया निर्द्देशः, भाक्तो गौणः, चिरन्तनप्रसिद्धया प्राचीनपरम्परया अलङ्कार-

तया प्रसिद्धिलाभेन । तथा च अङ्गभूतै रसादिभिरङ्गिभूतानां रसादीनां यथाकथञ्चित् पुष्टिकरणात् प्राचीनपरम्परया अलङ्कारतया प्रसिद्धत्वञ्च रसवदादीनां गौणालङ्कारत्वमङ्गीक्रियत एव, किन्तु शब्दार्थान्धतरघटितवैचित्र्यविशेषस्यैव वास्तविकालङ्कारत्वेन पुनर्मुख्यालङ्कारत्वमित्यमीषामभिप्रायः ।

अपरे चेति । मुख्यतः प्रधानतः । रूपकादावित्यादिशब्देन सन्देहादीनां ग्रहणम् । वाच्यादेर्वाच्यवाचकयोः अर्थ शब्दयोः, उपधानं शोभासम्पादनम्, अजा छागौ तस्या गलस्तनन्यायेन तद्वत् । तथा च यः पदार्थौ रसादीनुपकरोति स एव मुख्योऽलङ्कारः एवञ्च रूपकसन्देहादौ यत्, रसाद्युपकारातिरिक्तं शब्दार्थयोरपि शोभासम्पादनम्, तत् स्वभावागतम् अजाया गलदेशवर्त्ती दुग्धहीनः स्तन इव निरर्थकमिति भावः । एतन्मतेऽपि रसवदादीनां गौणालङ्कारत्वमिति बोध्यम्, मुख्यत इत्यभिधानात् ।

मतसमर्थक मतमाह अमीति । अभियुक्तास्तु युक्तियुक्ताभिधानेन सर्वमानितास्तु आहुरिति पूर्वेणान्वयः । स्वव्यञ्जका अङ्गभूतरसादिव्यञ्जका ये वाच्यवाचका आदिशब्दात् लक्ष्यलक्षणकाश्च अर्थशब्दास्तैरुपकृताः पुष्टीकृतास्तैः । वाच्यवाचकयोरर्थशब्दयोः उपस्कारद्वारेण अध्याहाराद्वारेण 'अयं स रसनोत्कर्षी इत्यादौ केवलश्रृङ्गारव्यञ्जकशब्दार्थवति पद्ये करुणव्यञ्जकशब्दार्थाध्याहारेणेत्यर्थः, उपकुर्वद्भिः अङ्गिनो रसादेरिति सम्बन्धः, अलङ्कृतिव्यदेशः अलङ्कार इति नाम, लभ्यते, तेषामङ्गभूतरसादीनामपि शब्दार्थवत् रसाद्युपकारकत्वाविशेषादिति भावः ।

नन्वत्र अङ्गीभूतानां रसादीनामुपकारकत्वादङ्गभूतानां रसादीनामलङ्कारत्वम्, यत्र एक व रसादिस्तत्र उपकार्य्योपकारकभावासम्भवात् कथं तस्यालङ्कारत्वमित्याह समासोक्तौ त्विति । अत्र समासोक्तिवदमेकमात्ररसाद्युपकारकालङ्कारमात्रोपलक्षणम् । आस्वादस्य रसादेः तस्य आस्वादापरपर्य्यायस्य रसादेः उक्तरीतिविरहात् आस्वादान्तराविद्यमानत्वेन तदुपकारकत्वाभावात् । एतेनैतन्मते अङ्गिभूतानां रसादीनामुपकरकत्वादङ्गभूतानां रसादीनामलङ्कारत्वमक्ष्येवेति रसवदादीनां स्वसम्मतमलङ्कारत्वं सिद्धमेवेति दर्शितम् ।

अतएवेति । अङ्गिभूतानां रसादीनामुपकारकत्वेनैव अङ्गभूतानां रसादीनामलङ्कारव्यपदेशस्य युक्तियुक्तत्वादेवेत्यर्थः ।

प्रधान इति । यत्र काव्ये अन्वत्र, अन्यस्मिन् वाक्यार्थे वा प्रधाने सति अन्ये रसादयस्तु अङ्गं तयोरुपकारका भवन्तीत्यर्थः, तस्मिन् काव्ये रसादिरङ्गभूत इत्याशयः, अलङ्कारो भवेत्, इति मे मम मतिः सम्मतिः ।

एतेन ध्वनिकारमतेऽपि रसवदादीनामलङ्कारत्वमस्तीति दर्शितम् ।

केचिदित्यादिमतत्रयमेव दूषयितुमाह यदि चेति । किञ्चेति चार्थः । रसादीनामुपकारमात्रेण केवलेनैवोपकारकत्वेन, न पुनः शोभातिशायित्वेनापीति मात्रशब्दार्थः, यदि अलङ्कृतित्वमलङ्कारत्वमुच्यते भवद्भिरिति शेषः; तदा वाचकादिष्वपि अभिधादिना रसादिबोधकेष्वपि । आदिशब्देन लक्षकग्रहणम्, बहुवचनन्तु व्यक्तिभेदात् । तथा अलङ्कृतित्वम् । तथा च—"तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत" "उदितं चन्द्रमालोक्य श्रृङ्गारे मग्नमन्तरम्" "आसील्लज्जावती मुग्धा प्रियस्य परिचुम्बने" इत्यादौ रसश्रृङ्गारलज्जादिपदैरपि रसाभावादीनामभिधानेनैवोपकृतत्वात् भवतां मते अलङ्कारत्वप्रसक्त्या अतिव्याप्तिः; प्रत्युतैतेषु स्वशब्दवाच्यतादोष एव । अस्माकं मते तु अलङ्कारलक्षणे शोभातिशायीतिविशेषणनिवेशेन एतेषु शोभातिशायित्वाभाव न्नातिव्याप्तिः रसवदादौ चाङ्गभूतरसादिभिरेव शोभातिशायित्वादलङ्कारलक्षणसङ्गतिश्चेत्याशयः ।

प्रागुक्तसर्वमतविलक्षणं कस्यचिदद्भुतं मतं दूषयितुमाह एवञ्चेति । सपक्षविपक्षाणां सर्वेषामेव मते रसाद्युपकारकारकाणमेवालङ्कारत्वे चेत्यर्थः । अङ्गित्वे प्रधानत्वे अङ्गत्वे उपकारकत्वे तु, द्वितीयो दात्तालङ्कारः "यत्रापि

प्रस्तुतस्याङ्गं महतां चरितं भवेत्" इत्युक्तलक्षणोदात्तालङ्कारः; तन्मते उक्तलक्षणे "महतां चरितम्" इत्यनिवेशात् "अप्रस्तुतानां प्रस्तुताङ्गत्वं उदात्तम्" इति सामान्याभिधानादिति बोध्यम् । परास्तमिति अङ्गिनां रसादीनां केवलोपकार्य्यतया उपकारकत्वाभवेनालङ्कारत्वस्यैवाप्रसक्तेः, अङ्गत्वे तु उपकारकतया रसवदादीनामपि प्रसक्तेश्चेति भावः । किञ्च, अङ्गाङ्गीर्नियतपरस्परसापेक्षतया एतन्मते रसवदादिभिः सह द्वितीयोदात्तालङ्कारस्य नियतसाङ्कर्य्यापत्तिश्चेति द्रष्टव्यम् ।

## विमला

इदानीं रसवदादीनाम्: अलङ्कारत्वमस्वीकुर्वतां केषाञ्चिन्मतमाह, इहेति ।—वाच्यवाचकरूपालङ्करणमुखेन—वाच्यः,—अभिधेयोऽर्थः, स च वाचकः—अभिधायकः शब्दः, स चेति तावेव रूपं यस्य तादृशस्य, काव्यस्येत्यर्थः, यदलङ्करणं—शोभोत्पादनं, तन्मुखेन—तद्वारा, शब्दार्थस्वरूपशोभाजननद्वारेणेत्यर्थः, रसादीनां—रस-भाव-रसाभास-भावाभासादीनाम्, उपकारकाः,—पोषका एव, रसवदादय इति शेषः, अलङ्काराः,—अलङ्कारपदव्यपदेश्या भवन्तीति भावः । रसादयः,—रसभावतदाभासभावप्रशमभावोदयभावसन्धिभावशबलताः पूर्वोक्ताः, पुनः वाच्यवाचकाभ्याम्—अर्थशब्दद्वारा, उपकार्य्याः,—अलङ्कार्य्याः एव, न तु तयोरुपकारकाः, येनालङ्कारा इति व्यपदेष्टुं शक्येरन्निति भावः, इति—अस्मात् कारणात्, तेषां—रसादीनाम्, अलङ्कारता—अलङ्कारलक्षणलक्षिततया स्वीकार्य्यत्वं, भवितुं न—नैव, युक्ता इति केचित् आहुः । अन्ये पुनः "रसादीनामुपकारः तन्मात्रेण इह—रसवदादौ, यः अलङ्कृतेर्व्यपदेशः,—अलङ्कारपदप्रयोगः, सः भाक्तः,—गौणः, चिरन्तनप्रसिद्धया—प्राचीनमतेन । एतेभ्योऽपि भिन्नानां मतमाविष्करोति, रसाद्युपकारमात्रेणेति ।—अलङ्कारत्वमिति मुख्यलक्षणमिति भावः । वाच्याद्युपधानं—वाच्यवाचकालङ्करणमित्यर्थः । अजागलस्तनन्यायेनेति—यथा छागस्य गलदेशवर्त्ती स्तनः दुग्धानुपयोगितया निष्प्रयोजनः, तथा रसादेरुपकारकत्वाभावेन प्रकृतानुपयोगो इति निष्प्रयोजन इत्यर्थः । अभियुक्ताः,—मान्याः । स्वव्यञ्जकेति ।—स्वम्—अङ्गभूतं रसादि, तद्व्यञ्जकौ यौ वाच्यवाचकौ—अर्थशब्दौ, ताभ्याम् उपकृतैः,—पुष्टिं नीतैः, अङ्गभूतैः,—अप्रधानतया स्थितैः, न तु प्रधानीभूतरसादिव्यञ्जकाभ्यामिति भावः, प्रत्युत स्वव्यञ्जकशब्दार्थघटितत्वेन तयोरुपकारक एवाङ्गरसादयः, न तूपकार्य्याः इति सारः । अङ्गिनः,—मुख्यस्य, वाच्यवाचकोपस्कारद्वारेण—अर्थशब्दाभ्यां य उपस्कारः स एव द्वारं तेन, [एतेन रसादयस्तु वाच्यवाचकाभ्यामुपकार्य्या एवेति यद्दूषणमुक्तं तन्निरस्तमिति बोध्यम्] नन्वत्र गुणप्रधानभावे कथं स उपपद्यते ? इत्यत आह, समासोक्तौ, त्विति ।—व्यवहारमात्रस्य—प्रस्तुते वस्तुनि अप्रस्तुतसाधर्म्यारोपमात्रस्य, न तु तज्जन्यास्वादस्येत्यर्थः । उक्तरीतिविरहादिति—वाच्यवाचकालङ्काराद्वारेण रसाद्युपकारकत्वस्याभावादित्यर्थः ।

प्रधाने इति—यत्र वाक्यार्थे प्रधाने अन्यत्र—अन्यस्मिन् रसादौ, वाक्यार्थे वा, रसादयः (आदिपदेन भावादिपरिग्रहः) अङ्गम्—अप्रधान्येन स्थिता इत्यर्थः, तस्मिन् काव्ये—वाक्यार्थे, रसादिः अलङ्कारः, भवतीति शेषः, इति मे—मम, मतिः ।

रसाद्युपकारकत्वमात्रेणालङ्कारत्वं, मुख्यतः इति प्रागुक्तमपरेषां मतं दूषयति—यदीति । वाचकादिष्विति ।—तथा अलङ्कारत्वमित्यर्थः । एवञ्चति—उक्तरीतिविरहादित्यर्थः । परास्तं—निराकृतं, वाच्यवाचकालङ्करणमुखेन रसाद्युपकारकत्वाभावादिति भावः ।

## लक्ष्मी

सम्प्रति रसवदाद्यलङ्कारमनङ्गीकुर्वतां मतं दूषयितुं तद्दूषणेन स्वमतं व्यवस्थापितुं च तन्मतमुत्थापयति—**इहेति** वाच्योऽर्थश्च वाचकः शब्दश्चेति तयो रूपं स्वरूपं तस्य अलङ्कृतेऽनेनेति अलङ्करणं शोभाजननं तदेव मुखं द्वारं तेन, रसाद्युपकारकाः रसादीनां परिपोषकाः केवलशब्दार्थवृत्तिविच्छित्तिरूपा धर्मा इत्यर्थः। रसादयः रसभावरसाभासभावाभासभावप्रशमादयस्तु वाच्यवाचकाभ्याम् अर्थेन शब्देन च उपकार्याश्चचमत्कार्या। तेषां रसादीनाम्, अलङ्कारव्यवहारभावत्वम्, सुतरां रसवदादयोऽलङ्कारा नेति तेषामभिप्रायः।

**अन्ये** त्विति। रसवदादीनामलङ्कारव्यवहारभाक्त्वं मन्यमानाः **कुवलयानन्द**कारास्त्वित्यर्थः। रसादीनां मुख्यभूतानामित्यर्थः, उपकारमात्रेण येन केनापि प्रकारेण सामान्यत एव परिपोषमात्रेण, मात्रपदेन शब्दार्थद्वारेत्यस्य व्यवच्छेदः इह रसवदादौ, अलङ्कृतिव्यपदेशः अलङ्कारत्वेन व्यवहारः, भाक्तो गौणः, चिरन्तनप्रसिद्धया प्राचीनमतानुरोधेन। इति 'आहुः' इति पूर्वतो इति पूर्वतोऽनुवर्तते। एवञ्च शब्दार्थान्यतरयुक्तचमत्कारविशेषस्यैव मुख्यलङ्कारत्वेन रसवदादीनामङ्गिभूतानां यथाकथञ्चित् परिपोषापादनात् प्राचीनमतानुरोधेन च न वास्तविकालङ्कारत्वममीषां किन्तु गौणालङ्कारत्वमेवेति तेषामाशयः।

**अपरे चेति**। रसवदादीनामपि वास्तविकालङ्कारत्वं मन्यमानाश्चेत्यर्थः। मुख्यतः वास्तविकतः प्रधानत इत्यर्थः। **रूपकादा**विति। अत्रादिपदेन सन्देहादीनां परिग्रहः। वाच्यादेः शब्दार्थयोः उपधानं शोभाजननम्। अजायाः छाग्याः गलस्तन्यायेन तद्वत्। एवञ्च रसादीन् यः पदार्थ उपकरोति स एव प्रधानोऽलङ्कार इतिरीत्या रूपकादौ रसाद्युपकारभिन्नं यत् वाच्यवाचकयोरपि शोभाजननं तत् प्राकृतिकम् तथा च अजागले लम्बमानः स्तनो यथा दुग्धदानासमर्थोऽपि स्तनत्वेन व्यवह्रियते तथा रूपकादौ वाच्यादिशोभाभाजनयुक्तमलङ्कारत्वं भाक्तमिति भावः। एतेन रसवदाद्यलङ्काराणामपि गौणालङ्कारत्वमेवेति तदाशयः।

एवं परमतं प्रदर्श्य स्वमतसमर्थकं मतं दर्शयति—**अभियुक्तास्त्व**िति। सयुक्तिकप्रतिपादनेन सर्वमान्यास्त्वित्यर्थः अस्य अग्रिमेण 'मन्यन्त' इति क्रियया सम्बन्धः। यत्त्वत्र सिद्धान्तवागीशा **आहु**रिति पूर्वेण सम्बन्ध इत्याहुः तत्कथमिति त एव प्रष्टव्याः। स्वम् अङ्गभूतं रसादि तस्य व्यञ्जकं द्योतकं यत् वाच्यवाचकादि शब्दार्थादि आदिपदात् लक्ष्यलक्ष्यकाश्च तैः उपकृताः परिपोषमापादिता अभिव्यक्तिं प्रापितास्तैरित्यर्थः, अङ्गभूतैः अप्रधानभूतैः अङ्गिनः प्रधानस्य, रसादेरिति सम्बन्धसामान्यविवक्षया कर्मणि षष्ठी। वाच्यवाचकयोः शब्दार्थयोः उपस्कारः अध्याहारः स एव द्वारं तेन शब्दार्थाध्याहारेणेत्याशयः, यथा 'अयं स रसनोत्कर्षी' इत्यादौ शृङ्गारमात्रद्योतकशब्दार्थवति श्लोके करुणद्योतकशब्दार्थाध्याहारः, उपकुर्वद्भिः उपकारतत्परै 'अङ्गिनो रसादेः इत्यन्वयः, अलङ्कार इति व्यवहारः लभ्यते (रसादिभिरिति कर्तृपदम्)। तथा च शब्दार्थौ यथा रसाद्युपकारकौ तथाङ्गभूतरसादयोऽपि रसादेरुपकारका एव वैपरीत्ये कश्चिद्विशेषानुपलम्भादिति भावः।

ननु समासोक्त्यलङ्कारे रसाद्युपकारकत्वाभाव एव, तत्र हि नायिकादिव्यवहारसमारोपजन्यास्वादस्यैवालङ्कारत्वम्, आस्वादश्च रसाद्यनतिरिक्त एवेति कथमलङ्कारत्वव्यपदेश इत्यत आह—**समासोक्तावि**ति। **नायिकादि**। **व्यवहारमात्र**स्येत्यत्र मात्रपदेनानुपदवक्ष्यमाणस्थास्वादस्य व्यवच्छेदः। आस्वादस्य रसादेः। तस्य आस्वादापरपर्यायस्य रसादेः, उक्तरीतिविरहात् शब्दार्थादिद्वारा रसाद्युपकारकत्वाभावात् एवञ्च तेषां मते रसादीनामङ्गिभूतानामुपकारकत्वादङ्गभूतानां रसादीनामलङ्कारत्वस्यावश्यं विद्यमानत्वेन रसवदादीनामपि स्वाभिमतमलङ्कारत्वं निर्विवादमेवेति प्रतिपादितम्।

ननु कस्यचिद्रसादेरुपकारकत्वं कस्यचिञ्चोपकार्यत्वं प्रकल्प्य रसवदाद्यलङ्कारत्वं कथमभ्युपेयत इत्याशङ्कां निराकर्तुमाह—**अत एवेति**। अङ्गिभूतानां रसादीनामुपकारकत्वेनेव अङ्गभूतानां तेषामलङ्कारव्यवहारस्य वास्तविकत्वादेवेत्यर्थः।

**प्रधानत** इति। यत्र यस्मिन् काव्ये अन्यत्र स्वस्मादि्भन्ने रसादौ वाक्यार्थे वा प्रधाने अलङ्कार्ये सति अन्ये रसादयस्तु अङ्गम् अङ्गभूता तयोरुपकारका वाक्यार्थीभूतश्चान्यो भवति तस्मिन् काव्ये रसादिः अङ्गभूत इत्यर्थः, स एव अलङ्कारः अलङ्कारव्यपदेश्यो भवेत् इति मे मम ध्वन्यालोकनिर्मातुरानन्दवर्धनाचार्यस्येत्यर्थः मतिः सिद्धान्तः 'वर्तते' इति शेषः। अनेन ध्वनिकृन्मते रसवदादीनामलङ्कारत्वमक्षतमेवेत्युपादितम्।

एवं स्वसिद्धान्तं प्रदर्श्य 'इह केचित्' इत्यादिना यन्मतत्रयमुपपादितं तमेव दूषयितुमुत्थापयति—यदि **चेति**। चकारस्य किञ्चेत्यर्थः। रसाद्युपकारमात्रेण रसादीनां केवलमुपकारकत्वेनैव न पुनः चमत्कारातिशायित्वेनापीतिमात्रपदस्यार्थः, यदि अलङ्कृतित्वम् अलङ्कारेतिनामव्यपदेश्यत्वम् 'प्रतिपाद्यते भवद्‌भि'रिति शेषः, वाचकादिष्वपि शब्दादिष्वपि अपिना रसादिप्रत्यायदेश्यत्वम् 'प्रतिपाद्यते भवद्‌भि'रिति शेषः, वाचकादिष्वपि शब्दादिष्वपि अपिना रसादिप्रत्यायकेष्वपि आदिपदेन लक्षकपरिग्रहः, बहुवचनोपादानन्तु व्यक्तिभिन्नत्वात्। तथा रसाद्युपकारमात्रत्वमादाय अलङ्कृतित्वम्। एवञ्च 'तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः क्वाप्यजायत' 'श्रृङ्गारः सखि ! कौतुकात् वितनुते मुग्धो हरिः पातु वः' इत्यादौ रसश्रृङ्गारादिशब्दैरपि रसादीनां प्रतिपादनेनैवोपकृतत्वादलङ्कारत्वापातात् भवन्मतेऽतिव्याप्तिर्निर्बाधैव, प्रत्युत स्वशब्दवाच्यत्वदोष एवैतेष्विति विभावनीयम्। अस्मन्मते तु चमत्कारातिशायीतिविशेषणप्रविष्टेन चमकारातिशायित्वाभावान्नैतेष्वतिव्याप्तिरिति रसवदादावङ्गभूतरसादिभिरेव चमत्कारातिशायित्वाद्‌भवति अलङ्कारलक्षणसमन्वय इत्यभिप्रायः।

सम्प्रति पूर्वप्रतिपादितसर्वमताद्‌भुतं कस्यचिन्मतं निराकर्तुमुत्थापयति—एवञ्चेति। वादिप्रतिवादिसर्वसिद्धान्ते रसाद्युपकारकत्वमेवालङ्कारत्वमितिस्वीकारे चेत्यर्थः। अङ्गित्वे मुख्यत्वे अङ्गत्वे अमुख्यत्वे उपकारकत्वे इत्यर्थः, द्वितीयोदात्तालङ्कारः 'यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्' इति प्रतिपादितद्वितीयोदात्तालङ्कार इत्यर्थः तथा च तन्मते प्रतिपादितलक्षणे 'महतां चरितम्' इत्यस्य प्रवेशाभावेन केवलम् 'अप्रस्तुतानां प्रस्तुताङ्गत्वमुदात्तम्' इति सामान्यलक्षणप्रतिपादनादित्यवधेयम्। **परास्त**मिति। रसादीनामङ्गिनां केवलोपकार्यत्वेन उपकारकत्वस्यैवासत्त्वेन अलङ्कारत्वप्राप्त्यभावात्। अङ्गत्वे तूपकारकत्वेन रसवदादीनामाप्यलङ्कारत्वाक्षतेरित्याशयः।

यद्यपि—'गुणीभूतो रसो रसवत् भावस्तु प्रेयः रसाभासभावाभासौ ऊर्जस्विभावशान्तिः समाधिः' इत्यभिप्रायेणैव प्राचीनैर्महिमभट्टादिभिः रसादिचतुष्टयस्यैव (क) रसवदाद्यलङ्कारकत्वं न तु भावोदयादीनामिति प्रतिपादितम् **तथापि** परोत्कर्षकत्वस्यालङ्कारत्वव्यवहारबीजस्य गुणीभूतरसादाविव भावोदयादावपि सत्त्वात् विनिगमनाविरहेण भावोदयादीनामपि अलङ्कारत्वाक्षतिरिति विवेचनीयम्।

## रुचिरा

सम्प्रति रसवदादीनामलङ्कारत्वं निर्णयते—**इह**। **केचित्**। **आहुः**। '**वाच्यवाचकरूपालङ्करणमुखेन** वाच्योऽर्थश्च वाचकः शब्दश्चेति तयो रूपं स्वरूपं तस्यालङ्करणं शोभाजननं तदेव मुखं द्वारं तेन। **रसाद्युपकारकाः**। **एव**। **आलङ्काराः**। **रसादयो** रसभावरसाभासभावाभासभावप्रशमादयः। **तु**। **वाच्यवाचकाभ्यामर्थेन** शब्देन च। **उपकार्याश्चमत्कार्याः**। **एव**। **इति**। **तेषां** रसादीनाम्। **अलङ्कारता**ऽलङ्कारव्यपदेशभाक्तत्वम्। **भवितुम्**। **न**। **युक्ता**। **इति**। इदं तत्त्वम्-प्रकाशकारादयः—'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्। हारादि-

वदलङ्कारास्तेऽनुप्रासोपमादयः ॥' इत्यादिनाऽलङ्काराणां रसाद्युपकारकत्वमात्रं, रसादीनां च तदुपकार्य्यत्वं मन्यमाना रसवदादीनामलङ्कारव्यपदेशभाक्त्वं न मन्यन्ते । इत्येव केषाञ्चिन्मतत्वेनेह निर्दिष्टम् । इति । अन्ये रसवदादीनामप्यलङ्कारव्यपदेश्यत्वं मन्यमानाः कुवलयानन्दकारादय इति भावः । **तु** । '**इह** रसवदादौ । **अलङ्कृतिव्यपदेशो**ऽलङ्कार इति व्यपेदशः । **रसाद्युपकारमात्रेण** । मात्रपदेन'शब्दार्थद्वारे'त्यस्य व्यवच्छेदः । **भाक्तो** गौणः । अथापि **चिरन्तनप्रसिद्धया** प्राचीनानाम्मतानुरोधेन । **अङ्गीकार्य्यः** । **एव** ।' **इति** 'आहुः'इति पूर्वतोऽन्वेति । इदं तत्त्वम्—शब्दार्थद्वारा रसाद्युपकारकत्वेनालङ्कारत्वं मुख्यम्, रसाद्युपकारकत्वमात्रेणालङ्कारत्वं पुनर्गौणम् । अत एषां गुणप्रधानभावमङ्गीकृत्य शब्दार्थोपस्कारमन्तराऽपि स्वीकार्थोऽलङ्कारभावो भाक्तः । एतेन केषांचिन्मतं परास्तमिति बोद्धव्यम् । इति । **अपरे** रसवदादीनामपरि मुख्यमलङ्कारत्वम्मन्यमानाः । **च** । '**रसाद्युपकारमात्रेण** । मात्रपदेन शब्दार्थोपस्कारापेक्षाव्युदासः । **अलङ्कारत्वमुख्यता** मुख्यामलङ्कारव्यपदेश्यत्वम् । रसाद्युपकारकत्वमेवालङ्कारत्वम्, नतु शब्दार्थोपस्कारद्वारेत्येबालङ्कारसामान्यलक्षणम्, एवं च—रसवदादीनां प्रधानभूतरसाद्युपकारतयालङ्कारत्वम्मुख्यमिति भावः । नन्वेवं रूपकादेः का व्यवस्थेत्याशङ्क्याहुः—**रूपकादौ** । **वाच्याद्युपधानं** वाच्यादेः शब्दार्थयोरूपधानामुपस्कारकत्वम् । 'अतोऽत्रालंकारत्व'मिति शेषः । **'अजागलस्तन'न्यायेन** । जागले लम्बमानः स्तनो यथा दुग्धानुपयोगित्वेऽपि स्तनत्वेन यथा व्यवह्रियते तथा—रूपकादौ वाच्याद्युपधानप्रयुक्तमलङ्कारत्वं गौणमिति भावः । **इति** 'आहु'रिति पूर्वतोऽन्वेति । इदं तत्त्वम्—रसवदादो गौणमलङ्कारत्वन्नाङ्गीकार्यम्, प्रत्युत शब्दार्थमात्राषष्ठम्भेषु । अलङ्कारत्वं हि रसाद्युपकारकत्वम्, तच्च—अत्राङ्गभूतस्य रसादेः प्रधानभूतरसाद्युपकारकतयाऽनुगतम् । रूपकादौ च तदभावादलङ्कारत्वस्य गन्धमात्रम् । इति । इदं चावधेयम्—रसवदादेरलङ्कारत्वं नास्त्येवेति यत् केचिदाहुः, तत्तु परास्तम् । अथात्र विप्रतिपत्तिरेषैव, यत्-केचिद्रसवदादेर्गौणम् अन्ये रूपकादेरलङ्कारत्वमाहुः । इति । एवं परेषाम्मतं निदर्श्य महनीयानाम्मतं दर्शयन् स्वमतस्यापि तदनुकूलत्वं सूचयति—**अभियुक्ता** । मान्याः । **तु** । '**स्वव्यवञ्जकवाच्यवाचकाद्युपकृतैः** स्वमङ्गभूतं रसादि तस्य व्यञ्जकं यद् वाच्यवाचकादि शब्दार्थकाक्वादि तेनोपकृताभिव्यक्तिं नीतास्तैः । **अङ्गभूतैर**प्रधानभूतैः । **रसादिभिः** । आदिपदेन भावादीनां ग्रहणम् । **अङ्गिनः** प्रधानभूतस्य । **रसादेः** । सम्बन्धसामान्यविवक्षया कर्मणि षष्ठीयम् । **वाच्यवाचकोपस्कारद्वारेण** वाच्यवाचकयोः शब्दार्थयोरुपकारः साहाय्यं स एव द्वार तेन, शब्दार्थसाहाय्येनेति भावः । **उपकुर्वद्भि**रुपकारपरायणैरिति भावः । **अलङ्कृतिव्यपेदशः** । **लभ्यते** (रसादिभिरिति कर्तृपदम्) । इदमुक्तम्—शब्दार्थादिना रसादेरभिव्यक्तिः, सोऽपि अपरस्य रसादेरभिव्यक्तौ हेतुः । अतः—यस्य रसादेरभिव्यञ्जको यो रसादिस्तपेक्षयाऽस्य गौणत्वम् (उपकारकत्वम्) एतद्पेक्षया च तस्य प्रधानत्वम् (उपकार्य्यत्वम्) एतदुभयापेक्षया च वाच्यवाचकादेर्गौणत्वम् (उपकारकत्वम्) एतदपेक्षयाऽप्रधानरसाद्यपेक्ष्य गौणस्य रसादेरपि प्रधानत्वम् (उपकार्यत्वम्) । एवं च रसाद्युपकारकत्वं शब्दादे रसादेश्चेत्युभयोरपि सम्प्रतिपन्नम् । तत्र-रसादे रसाद्युपकारकत्वं शब्दादिद्वारकम्, शब्दादेः पुनः स्वस्वद्वारकमेवेति । विशेषः । किन्तु-अलङ्काराणां रसाद्युपकारकत्वं शब्दादिद्वारेत्युभयत्रेति निर्विवादम् । एवं सति-उपमादे रसवदादेश्च मुख्यमेवालङ्कारव्यपदेशार्हत्वम् । इति । ननु तर्हि समासोक्तौ कथमलङ्कारव्यपेश्यत्वम्? तत्र हि नायिकादिव्यवहारोपजन्यस्यास्वादस्यालङ्कारत्वम्, आस्वादश्च रसाद्यभिन्न एवेत्येवं रसाद्युपकारकत्वाभावः । इत्याशङ्क्याह—**समासोक्तौ** । **तु** । **नायिकाऽऽदिव्यवहारमात्रस्य** (मात्रपदेनास्वादस्य व्यवच्छेदः पुरस्तादेव वक्ष्यते) । **एव** । अलङ्कृतिताऽलङ्कारव्यपदेशभाक्त्वम् । **आस्वादस्य** नायिकादिव्यवहारारोपकार्यास्वादस्य । **तु** । **न** । नन्वत्र का बाधेत्याहुः—**तस्यास्वादस्य** । **उक्तरीतिविरहाद्** वाच्यवाचकादिद्वारा रसाद्युपकारकत्वाभावात् । इदमुक्तम्-समासोक्तावपि रसाद्युपकारकत्वमादायैवालङ्कारत्वम्, तच्चात्र

नायिकऽऽदिव्यवहारस्य । अत एव—'वाच्यवाचकाद्युपकृतैः'रित्यत्रादिपदस्य निवेशः । आस्वादस्येति तु नास्माकं पक्षः । तस्यालङ्कार्यत्वेनैवाभिमतत्वात् । इति । **इति** । **मन्यन्ते** (अभियुक्ता इत्यनेन सम्बन्धः) । ननु एकस्य रसादेरुपकारकत्वमपरस्योपकार्य्यत्वं कल्पयित्वा किमिति रसवदाद्यलङ्कारत्वं समर्थ्यतेऽत्र भवद्भिरित्याशङ्क्य तदुपपादयितुमाह—**अतः** । 'यतस्तथा मन्यन्ते तत' इति भावः । **एव** । **ध्वनिकारेण** । **उक्तम्** । '**रसादयः** । **तु पुनः** । **यत्र** । **अन्यत्र** स्वस्मात् (अप्रधानापेक्षया) भिन्ने । अत एव **प्रधाने** (अलङ्कार्ये) । **वाक्यार्थे** विभावादौ रसादाविति यावत् । **अङ्गमङ्गभूताः** । **तस्मिन्** । **काव्ये** रसादौ । **रसादिरङ्ग**भूतः 'स' इति शेषः । **अलङ्कारो**ऽलङ्कारव्यपदेश्यः । **इति** । **मे** मम ध्वन्यालोककर्त्तुरानन्दवर्धनाचार्यस्येत्यर्थः । **मतिः** सिद्धान्तः ॥' 'इति' इति शेषः ।

एवं सर्वतोभद्रं सिद्धान्तमुपपाद्य 'इह केचिदाहु'रित्यादिना दर्शितं मतं 'अन्ये तु' इत्यादिना दर्शितेन मतेन निराकृतम्, अथैतदपि निराकर्तुमभियुक्तानां च मतं प्रकारान्तरेण द्रढयितुमाह—**यदि** । **च** । **रसाद्युपकारमात्रेण** । मात्रपदेन 'शब्दार्थद्वारे'त्यस्य व्यवच्छेदः । **अलङ्कृतित्वम**लङ्कारव्यपदेश्यत्वं स्वीक्रियतेति भावः । **तदा** । **तथा** रसाद्युपकारमत्रत्वमादायेति भावः । **वाचकादिषु** शब्दादिषु । 'वाच्यादिषु' इति पाठान्तरेऽर्थादिष्वित्यर्थः । **अपि** । 'अलङ्कारत्वं मुख्यतया' इति शेषः । **प्रसज्येत** । इदं तत्त्वम्—यदि रसाद्युपकारकत्वमलङ्कारत्वमिति मन्यमानैरपि भवद्भिः रूपकादिषु तु वाच्याद्युपधानम्, 'अजागलस्तन'न्यायेन इति कथमुच्यते, रूपकादीनां दूरमास्तां कथा, किन्तु तथा वाचका द्युपधानेषु पुनरूक्तवदाभासादिष्वपि अङ्कारत्वम्मुख्यमापधते, रसाद्युपकारकत्वमात्रस्य तत्रापि सत्त्वात् । इति अपरेषाम्मतमपि न सम्यक् । इति । एवमपरेषां मतं निरस्य मतान्तरं निराकर्तुमुपक्रमते**एवम**भियुक्तानां सिद्धान्तस्य ध्वनिकाराद्यनुकूलत्वेन ग्राह्यत्वोपपादनात् । **च** । **यत्** । **च** तु (इदं'वाच्यवाचकरूपालङ्कारमुखेन'इत्यादिना दर्शितं स्मारयति) । **कैश्चित्** । **उक्तम्** । '**रसादीनाम्** । **अङ्गित्वे** प्रधानत्वे । **रसवदाद्यलङ्काराः** । अङ्गत्वेऽप्रधानत्वे । **तु** । **द्वितीयोदात्तालङ्कारः** ।' **इति** । **तत्** । **अपि** (इदं केषाञ्चिदन्येषामपरेषां च मतस्य ग्राहकम्) । **परास्तम्** । इदमुक्तम्-ध्वनिकारोक्तदिशाऽभियुक्तानां सिद्धान्तेन चाङ्गभूतानां रसादीनां प्रधानरसाद्युपकारकत्वमादाय रसवदाद्यलङ्कारत्वं, नतु प्रधानभूतानां रसादीनामिति 'रसादीनामङ्गित्वे रसवदाद्यलङ्कार'इति पराहतम् । अथ-अङ्गत्वे द्वितीयोदात्तालङ्कारस्वीकारोऽप्येतेनैव पराहतः, अङ्गत्वे रसवदाद्यलङ्कारत्वस्य तैः स्वीकृतत्वात् । इति ।

**यद्येत एवालंकाराः परस्परविमिश्रिताः ।**

**तदा पृथगलंकारौ संसृष्टिः संकरस्तथा ॥ ९७ ॥**

यथा लौकिकालंकाराणामपि परस्परमिश्रणे पृथक्चारुत्वेन पथगलंकारत्वं तथोक्तरूपाणां काव्यालंकाराणामपि परस्परमिश्रत्वे संसृष्टिसंकराख्यौ पृथगलंकारौ । तत्र—

**मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते ।**

एतेषां शब्दार्थालंकाराणाम् । यथा—

**'देवः पायादपायान्नः स्मेरेन्दीवरलोचनः ।**

**संसारध्वान्तविध्वंसहंसः कंसनिषूदनः ॥'**

अत्र पायादपायादिति यमकम्, संसारेत्यादौ चानुप्रास इति शब्दालंकारयोः संसृष्टिः । द्वितीये पादे उपमा, द्वितीयार्धे च रूपकमित्यर्थालंकारयोः संसृष्टिः । एवमुभयोः स्थित्वाच्छब्दार्थालंकारसंसृष्टिः ।

---

## विवृतिः

प्रत्येकमलंकारानुक्त्वा तेषां मेलके संसृष्टिसंकरालंकारावाह—**यद्येत इति** । एते उक्ता यमकोपमादयः परस्परविमिश्रिता एकस्मिन्पद्ये गद्ये वा स्थिताः ॥ तयोः सामान्यलक्षणमुक्त्वा विशेषलक्षणमाह—**मिथ इति** । परस्परव्यपेक्षाविरहेणेत्यर्थः । स्थितइतिरेकस्मिन्पद्ये गद्ये वा शब्दालंकाराणामर्थालंकाराणामुभयेषां च परस्परानपेक्षया स्थित्या त्रिविधा संसृष्टिः । आद्या यथा—'चारुचान्द्रमयं भीरु ! बिम्बं पश्येदमम्बरे । मन्मनो मन्मयथाक्रान्तं निर्दयं हन्तुमुद्यतम् ॥'

अत्र प्रथमार्धे उपमा, द्वितीयार्धेऽनुप्रासः, तृतीयपादे यमकम् । द्वितीया यथा—'द्विषद्भयस्त्रायतां देवः फुल्लेन्दीवरलोचनः । भवान्धकारसंक्षोभरविः केशिनिषूदनः ॥' अत्र प्रथमार्धे उपमा, द्वितीयार्धे रूपकम् । उभयसंसृष्टिर्द्विविधा—शुद्धा, संसृष्टिमिश्रा च । आद्या यथा—'त्वयि वीर ! परं विराजते दमयन्तीकिलकिञ्चितं किल । तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम् ॥' अत्र यमकानुप्राप्ताभ्यां शब्दालंकाराभ्यां सह प्रतिवस्तूपमाया अर्थालंकारस्य संसृष्टिः ॥ एकस्मिन्नेव पद्ये चतुर्विधां संसृष्टिमुदाहरति—**देव इति** । हंसः सूर्यः ॥ **एवमिति** । शब्दालंकारयोरर्थालंकारयोश्च स्वजातीयत्वेनान्तरङ्गतया संसृष्टीभूय वैचित्र्यविशेषं जनयित्वा संसृष्टित्वेनाप्यतिरिक्तवैचित्र्यजनकत्वमिति भावः ॥ **अङ्गाङ्गित्वे इति** । गुणप्रधानाभावे इत्यर्थः ।

## विवृतिपूर्तिः

**संसृष्टिरिति** । तिलतण्डुलन्यायेन स्फुटावगम्यमेदालंकारमिश्रणे संसृष्टिरिति । सैवा शब्दालंकारगतत्वेनार्थालंकारगतत्वेनोभयालंकारगतत्वेन च त्रिधा भिद्यते ॥

## विज्ञप्रिया

इदानीमनेकालङ्काराणामेकपदस्थितिरूपमिश्रणे क्वचित् संसृष्टिनामा क्वचिच्च सङ्करनामा पृथगलङ्कारो भवतीत्याह—**यद्येत एवे**ति। पृथगलङ्कारावपीत्यर्थः। तेन मूलभूतालङ्कारव्यवच्छेदस्तथा च समासोक्तौ यदौपम्यगर्भत्वाद्यनेकालङ्कारगर्भत्वमुक्तं, यच्चान्यत्राप्यलङ्कारान्तरोत्थापितत्वे तदलङ्कारस्य शोभाधिक्यमुक्तं, तत्र सङ्करसम्भवेऽपि न समासोक्त्यालङ्कारत्वव्याहतिरिति बोध्यम्।

तत्र संसृष्टिलक्षणमाह—**मिथोऽनपेक्षयैतेषामि**ति। देवः पायादित्यादि स्पष्टोऽर्थः। हंसः सूर्यः। अत्र शब्दालङ्कारयोः संसृष्टिमादौ दर्शयति—**अत्र पायादि**ति। **संसारेत्यादावनुप्रास** इति। ध्वान्तविध्वंसहंसेत्यत्रेत्यर्थः। अत्रैवार्थालङ्कारयोरपि संसृष्टिमाह—**द्वितीयपाद** इति। लोचने स्मेरेन्दीवरोपमा। **द्वितीयार्ध** इति। कंसनिषूदने सूर्यरूपकम्। तत्साधकं च संसारो ध्वान्तरूपकमिति परम्परितरूपकमित्यर्थः। एवं च संसृष्टिद्वयमित्याह—**उभयोरपी**ति। **संसृष्टिश्चे**ति। चकारस्य स्थितवाच्चेत्येवमन्वयः। तत् संसृष्टिद्वयस्यापि परस्परसंसृष्टिमित्याह—**एवं चे**ति।

## कुसुमप्रतिमा

एतावता सर्वेषामेवालङ्काराणां प्रातिस्विकलक्षणान्युक्त्वा इदानीं तेषामेव एकत्रानेकसम्भवे पृथगलङ्कारौ निरूपयितुमुद्दिशति यदीति। अत्र यदिशब्दाच्च परम् अपिशब्दः सामर्थ्यादवगन्तव्यः। तथा च यद्यपि परम्परविमिश्रिता एकस्मिन् पद्ये गद्ये वा बाधकाभावात् परस्परं सम्मिलिताः सन्तः, एत एव पूर्वोक्ताः, अलङ्काराः शब्दालङ्कारा अर्थालङ्कारा रसाद्यलङ्कारश्च, पृथक् पृथग् व्यपदेष्टुं योग्याः सम्भवन्तीत्यर्थः, तथापि संसृष्टिर्नाम सङ्करो नाम च पृथग् भिन्नौ अलङ्कारौ वेदितव्याविति शेषः; अनेकविधवैचिक्षत्रयस्यैकत्र मेलने पृथग्वैचित्रयतयैव तदुपलम्भात् तस्य पृथङ्नामताया एवौचित्यादित्याशयः।

दृष्टान्तमुपन्यस्य व्याचष्टे यथेति। लौकिकालङ्काराणां कटककुण्डलादीनाम्। पृगगलङ्कारत्वमिते। यथा कटकवन्मकराकृतिमुखत्वात् कुण्डलवद्दोलाकारत्वाच्च कटककुण्डतयोर्मिश्रितरूपस्य कर्णालङ्कृतिविशेषस्य "माकरौ" इतिसंज्ञकपृथगलङ्कारत्वम्।

तत्रेति। तयोः संसृष्टिसङ्करयोर्मद्य इत्यर्थः।

उद्देशक्रमेण प्राक् संसृष्टिं निरूपयति मिथ इति। एतेषामिति बहुवचनमविवचितम्। तेन ययोः कयोश्चित् द्वयोरलङ्कारयोः येषां केषाञ्चित् बहूनामलङ्काराणां वा मिथोऽनपेक्षया परस्परनैरपेक्ष्येण, स्थितिः एकस्मिन् पद्ये गद्ये वा अवस्थानं संसृष्टिर्नाम अलङ्कार उच्यते। अनेकशब्दालङ्कारमात्रस्य अनेकार्थालङ्कारमात्रस्य अनेकशब्दार्थौभयालङ्कारस्य च परस्परनेरपेक्ष्येण स्थितिः सम्भवतीति त्रिविधा संसृष्टिः।

एतेषामिति। अत्र शब्दार्थालङ्काराणामित्युपलक्षणम्। रसालङ्काराणामपि रसवदादीनामुक्त्वातेषामपि, संसृष्टिसङ्करौ वेदितव्यौ समानन्यायाद्बाधकाभावाच्च। अतएव "आमौलितालसविवर्त्तिततारकाक्षीम्" इत्यादौ प्रेयोरसवदलङ्कारयोः सङ्करो दर्शितः।

एकोदाहरणेनैव त्रिविधा एव संसृष्टीर्दर्शयति देव इति। स्मेरे प्रस्फुटिते इन्दीवरे नीलोत्पले इव लोचने नयनयुगलं यस्य सः, संसार एव ध्वान्तमन्धकारं तस्य विध्वंसे विनाशविषये हंसः, सूर्य्यः, तथा कंसस्य निसूदनो निहन्ता देवः श्रीकृष्णः, नः अस्मान्, अपायाद्विपत्तेः सकाशात् पायात् रक्षेत्।

अत्रेति । "ध्वान्तविध्वंस—" इत्यत्र ध्वकारयोरनेकधा सकृत् साम्यात् छेकानुप्रासः, "विध्वंस" "कस" इत्यनयोश्च आद्यस्वरेण सह यथावस्थव्यञ्जनावृत्तेः पदगतः अन्त्यानुप्रासः, "संसारः" "हंसः" "निसूदनः" एतेषु दन्त्यसकाराणामसकृत् साम्याद्‌वृत्त्यनुप्रासश्च एषामनुप्रासानामपि परस्परनैरपेक्ष्येण स्थितेरपरा संसृष्टिश्चानुसन्धेया । उपमेति । "क्विप्समासगता द्वेधा धर्म्मेवादिविलोपने" इत्युक्तलक्षणा समासगता लुप्तोपमे त्यर्थः । रूपकमिति । संसारे ध्वान्तत्वारोपः श्रीकृष्णे सूर्य्यत्वारोपस्य निमित्तमिति अश्लिष्टशब्दनिबन्धनं केवलपरम्परितरूपकमित्यर्थः । उभयोरिति । यमकानुप्रासरूपशब्दालङ्कारस्य उपमारूपकरूपार्थालङ्कारस्य चेत्यर्थः, स्थितत्वात् परस्परनैरपेक्ष्येणेति शेषः ।

## विमला

अधुना एषां सर्वेषामलङ्काराणां संश्लेषसमुत्थापितं पृथगलङ्कारहयमुच्यते, यदीति ।— यदि एते— पूर्वोक्ता एव अलंङ्काराः यमकोपमादयः इत्यर्थः, परस्परं विमिश्रिताः,— एकस्मिन् पद्ये गद्ये वा स्थिताः, भवन्ति इति शेष, तदा संसृष्टिः तथा संङ्कर इति नामानौ, पृथक् भिन्नौ, अलंङ्कारौ, स्यातामिति शेषः । अयं भावः, पूर्वमभिहिताः शब्दालङ्कारा अर्थालंकाराश्चेति दिविधा अलंङ्काराः, ते पुनर्यदि परस्परं मिश्रिताः एकत्र सम्भवन्त उपलभ्येरन् तदा तेषां संसृष्टिः संङ्करश्चेत्यलंङ्कारद्वयं सम्पद्यते इति । अत्रेदं बोध्यम्— उक्तलंकाराणां यथासम्भवं यदि कृयिद्‌व्यचनं स्यात्, तदा ते किं पृथक्त्वेन पर्य्यवसिता ? उत अलङ्कारान्तरमेव किञ्चित् ? इति विचार्य्यते— तत्र यथा बाह्यालङ्काराणां ।

तयोः सामान्यलक्षणमुक्त्वा विशेषलक्षणमाह, मिथ इति ।—मिथः,—अन्योऽन्यम्, अनपेक्षया—परस्परापेक्षां विनेत्यर्थः, एतेषाम्—अलङ्काराणां, [बहुवचनमुपलक्षणं, तेन द्वयोरपि अलङ्कारायोरित्याशयः] स्थितिः संसृष्टिः उच्यते—एकस्मिन् गद्ये पद्ये वा शब्दालङ्काराणामर्थालङ्काराणामुभयेषाञ्च परम्परानपेक्षया स्थित्या त्रिविधा संसृष्टिः निरूप्यते इत्यर्थः । तत्राद्याः यथा—"चारुचन्द्रमसं भीरु ! बिम्बं पश्येदमम्बरे । मन्मनो मन्मयाक्रान्तं निर्दयं हन्तुमुद्यतम् ॥" अत्र प्रथमार्द्धे द्वितीयार्द्धे चानुप्रासः, तृतीयपादे यमकम् । द्वितीया यथा—"द्विषङ्ग्यस्तत्रायतां देवः फुल्लेन्दीवरलोचनः । भवान्धकारसङ्ग्राम-रविः केशिनिसूदनः ॥" अत्र प्रथमार्द्धे उपमा, द्वितीयार्द्धेरूपकम् । उभयसंसृष्टिः यथा—"त्वयि वीर ! परं विराजते दमयन्ती किलकिञ्चितं किल । तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम ॥" अत्र यमकानुप्रासाभ्यां शब्दालङ्काराभ्यां सह प्रतिवस्तूपमायाः अर्थालङ्कारस्य संसृष्टिः इति ज्ञेयम् ।

एकस्मिन्नेव पद्ये त्रिविधा संसृष्टिमुदाहरति, देव इति ।—स्मेरे—विकसिते, इन्दीवरे इव लोचने यस्य तथोक्तः, संसार एव ध्वान्तं—तिमिरं, तस्य विध्वंसे,—विनाशने, हंसः,—सूर्य्यः, ("भानुहंसः सहस्राशुस्तपनः सविता रविः" इत्यमरः) कंसनिसूदनः,—कंसारिः, देवः,—श्रीकृष्णः, अपायात्—आपदः, नः,—अस्मान्, पायात्—रक्षतु ।

एवमिति ।—शब्दालङ्कारयोरर्थालङ्कारयोश्च स्वजातीयत्वेन अन्तरङ्गतया संसृष्टीभूय वैचित्र्यावशेषं जनयित्वा संसृष्टित्वेनापि अतिरिक्तवैचित्र्यजनकत्वमिति भावः ।

## लक्ष्मी

इयता प्रबन्धेनोक्तानां सर्वेषामप्यलङ्काराणां श्रृङ्ग्राहिकया लक्षणान्यभिधाय सम्प्रति तेषामेव एकस्मिन् स्थाने बहूनां सम्भवेऽतिरिक्तावलङ्कारौ भवत इत्यभिधातुमुत्थापयति—**यद्येत** इति । अत्र 'यदि'पदात् 'तदा'पदा-

च्चानन्तरम् 'अपि'पदं सामर्थ्याज्ज्ञातव्यम् । तथा च यद्यपि परस्परविमिश्रिता एकत्र गद्ये पद्ये वा प्रतिबन्धकाभावात् मिथो मेलनं गताः सन्तः, एत एव दर्शिता अलङ्काराः, शुद्धाः पुनरुक्तवदाभासादयः शब्दालङ्काराः, उपमादयः, रसवदाद्यर्थाङ्कारश्चेत्यर्थः, पृथक् पार्थक्येन निर्देष्टुं योग्याः सम्भवन्तीत्यर्थः, तदापि संसृष्टिः तन्नाम्ना सङ्कर इति नाम्ना च पृथग् भिन्नावलङ्कारौ ज्ञातव्याविति शेषः, बहुविधविच्छित्तेरेकस्मिन् गद्ये पद्ये वा मिश्रणे विच्छित्तितयैव तदुपलम्भात् तस्य भिन्ननामत्वस्यैव योग्यत्वादिति भावः ।

दृष्टान्तं प्रतिपाद्य विवृणोति—**यथे**ति । लौकिका लोप्रसिद्धा ये अलङ्काराः कटककुण्डलाद्या तेषाम् । **अयमाशयः**—यथा एकस्मिन्नवयवे कण्ठादौ बहवोऽलङ्कारा अभिन्नतयोपनिबद्धा भिन्नभूतामेव कामप्यनिर्वचनीयां शोभां जनयन्ति, यथा वा केनाप्यलङ्कारनिर्मात्रा बहुविधालङ्कारकार्यकारित्वं विधातुं तत्तत्सदृश एक एवालङ्कारस्तथा विधीयते स यथा कामप्यनिर्वचनीयां शोभां जनयन् तत्तदेकतरत्वं न परित्यजति, तथा क्वचिलौकिका अप्यलङ्कारा**स्तिलतण्डुलन्यायेन क्वचिन्नीरक्षोरन्यायेन** मिलिताः सन्तः कामपि भिन्नभूतां शोभां सम्पादयन्तीति तेषां मिश्रणं संसृष्टिसङ्करव्यपदेश्यमिति भावुकाः ।

इत्थं संसृष्टिसङ्करयोः साधारणलक्षणमभिधाय विशेषलक्षणमभिधातुमाह—तत्रेति । तयोः संसृष्टिसङ्करयोर्मध्य इत्यर्थः ।

क्रमप्राप्तत्वात्प्रथमं संसृष्टिं लक्षयति—**मिथ** इति । एतेषां निरुक्तलक्षणानाम् । अत्र बहुत्वमविवक्षितम्, तेन ययोः कयोश्चिदलङ्कारद्वययोः येषां केषाञ्चि अनेकालङ्काराणां वा मिथः परस्परम् अनपेक्षया उपकार्योपकारकत्वनैरपेक्ष्येण स्थितिः एकत्र गद्ये पद्ये वा अवस्थानं **तिलतण्डुलन्यायेनेति** शेषः, संसृष्टिः तन्नामालङ्कारः उच्यते आलङ्कारिकैरिति शेषः । सेयं संसृष्टिः बहुविधशब्दालङ्कारमात्रस्य, बहुविधार्थालङ्कारमात्रस्य, बहुविधशब्दार्थोभयालङ्कारस्य च मिथोऽनपेक्षया स्थितत्वे त्रिप्रकारेति बोध्यम् ।

काठिन्यांशं परिहर्तुमाह—**एतेषा**मिति । **शब्दार्थौ**त्यादि उपलक्षणञ्चैतत्, तेन रसावदादीनामलङ्काराणामपि संसृष्टिसङ्करौ ज्ञातव्यौ तुल्यन्यायात् प्रतिबन्धकासत्त्वाच्च । अत एव प्रेयोरसवदलङ्कारयोः सङ्करः ग्रन्थकृत 'आमीलितालसविवर्त्तिततारकाक्षीम्' इत्युद्युदाहरमे सङ्गच्छते ।

त्रिविधसंसृष्टिरेकत्रस्थल एवोपपादयति—**देव** इति । स्मेरे प्रफुल्ले इन्दीवरे नीलकमले तद्वल्लोचने चक्षुषी यस्य सः, संसारश्चराचरात्मकं जगदेव ध्वान्तम् अन्धकारं तस्य विध्वंसे विनाशविषये हंसः सूर्यः 'भानुर्हंसः सहस्रांशुः' इत्यमरः, तथा कंसस्य उग्रसेनसुतस्य निसूदनो निहन्ता देवः श्रीकृष्णः, न अस्मान् अपायात् क्लेशात् पायात् रक्षेत् ।

लक्ष्यं सङ्गमयति—**अत्रे**ति । 'ध्वान्तविध्वंसः' इत्यत्र ध्वयोरनेकधा सकृत् साम्यात् छेकानुप्रासः; एवं 'विध्वंस हंस-कंस' इत्यत्रान्त्यानुप्रासः 'संसारे'त्यादौ वृत्त्यनुप्रासश्चेत्ये तेषां मिथोऽनपेक्ष्यत्वेनावस्थानात् संसृष्टिः । **उपमेति** । समासगता लुप्तोपमेत्यर्थः । **रूपक**मिति । श्रीकृष्णे सूर्यत्वारोपस्य संसारे ध्वान्तत्वारोपकारणमिति अश्लिष्टशब्दनिबन्धनं केवलपरम्परितरूपकमित्यर्थः । उभयोरिति । यमकानुप्रासयोः उपमारूपकयोः शब्दार्थालङ्कारयोत्यर्थः स्थितत्वात् मिथोऽनपेक्षया अवस्थानत्वादित्यर्थः । **उदाहरणान्तरं यथा—**

**'आनन्दमन्थरपुरन्दरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य ।**

**पादाम्बुजं भवतु मे विजयाय मञ्जु-मञ्जीरसिञ्जितमनोहरमम्बिकायाः ॥'**

## रुचिरा

एवं शुद्धा अलङ्कारा दर्शिताः, अथैषां मेलनेऽलङ्कारान्तरद्वयमुपपादयति—१८९ **यदि**। **एते** दर्शिताः शुद्धाः पुनरुक्तवदाभासादय उपमाऽऽदयेश्चेत्यर्थः। **एव**। **अलङ्काराः**। **परस्परविमिश्रिता** अन्योऽन्यं मेलनं गता भवन्ति। **तदा**। **संसृष्टिः**। **तथा**। **सङ्करः**। इति-**पृथगन्यौ**। **अलङ्कारौ**। 'ज्ञेया'विति शेषः ॥ १५० ॥

तदेव स्पष्टम्बोधयितुं विवृणोति—**यथा**। **लौकिकानाम्**। **अपि** 'किम्पुनरलौकिकाना' मिति शेषः। **अलङ्काराणाम्**। **परस्परमिश्रणे**। **पृथक्चारुत्वेन** विलक्षणचमत्कारत्वेन। 'अमिश्रितालङ्कारापेक्षया' इति शेषः। **पृथगलङ्कारत्वम्**। **तथा**। **उक्तरूपाणा**मभिहितलक्षणानाम्। **काव्यालङ्काराणाम्**। **परस्परमिश्रणे**। **संसृष्टिसङ्कराख्यौ**। **पृथक्**। **अलङ्कारौ**। अयम्भावः-यथा-एकत्राङ्गे (कण्ठादौ) अनेकेऽलङ्कारा अपृथक्तयोपनीताः पृथग्भूतामेव कामपि शोभामुपपादयन्ते, यथा वा केनापि शिल्पिपटुनाऽनेकालङ्कारकार्यकारित्वमुपपादयितुं तत्तस्वरूप एक एवालङ्कारस्तथोपपाद्यते स यथा कामपि शोभां सम्पादनयन्, तत्तदेकतरत्वं न जहाति; तथा—क्वचिदलौकिका अपि अलङ्कारास्तिलतण्डुलन्यायेन क्वचिन्नीरक्षीरन्यायेन मिश्रिताः कामपि पृथग्भूतां शोभां जनयन्तीति तेषां मेलनं संसृष्टिसङ्करव्यपदेव्यम्। अत्रैवानुक्तानां परैरुक्तानामन्येषामलङ्काराणामन्तर्भावस्यतस्य मिश्रितालङ्कारत्वाविरहात्। अत एव—'अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम्' इत्युक्तोऽत्युक्त्यलङ्कारोऽतिशयोक्त्युदात्तयोः, 'प्राक्सिद्धत्वगुणोत्कर्षोऽनुगुणः परसन्निधेः।' इत्युक्तोऽनुगुण उदात्ततद्गुणयोः, 'असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम्।' इत्युक्तोऽसम्भवो व्याजोक्तिविरोधोदात्तानाम्, 'यस्मिन् विशेषसामान्यविशेषाः विकस्वरः।' इत्युक्तो विकस्वरोऽर्थान्तरन्यासस्याद्ययोर्भेदयोर्मेलनम्। एवमसमोदाहरणातुल्ययोगित्वादीनामपि अनेकालङ्कारान्तरवैचित्र्यमूलत्वं याथातथ्येन बोध्यम्। इति दिक्।

एवं संसृष्टिसङ्करयोः सामान्यं लक्षणं दर्शयित्वा विशेषं दर्शयति—**तत्र**—१९० **एतेषां** निरुक्तालङ्काराणाम्। **मिथः**। **अनपेक्षयो**पकार्य्योपकारकत्वोपेक्षया। **स्थितिः**। 'तिलतण्डुलन्यायेने'ति शेषः। **संसृष्टिः**। **उच्यते**। अयम्भावः-यथा तिलतण्डुलमिश्रणं परस्परमनुपकार्यानुपकारकत्वेन स्थितं तथा यत्र पद्ये गद्ये वा शाब्दयोः शाब्दार्थयोः शाब्दार्थयोर्वाऽलङ्कारयोः स्थितिः संसृष्टिपदाभिधेया। सा यथा—'वदनसौरभलोपरिभ्रमद्भ्रमर! सम्भ्रमसम्भृशोभया। चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यथा॥' इति, अत्र वृत्त्यनुप्रासयमकयोः सद्भावात्। 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः। असत्पुरुषत्सेवेव दृष्टिर्निष्फलतां गता॥' इति, अत्र ह्युपमोत्प्रेक्षयोः तृतीया तु स्वयमुदा हरिष्यते। इति। १५१ ॥

**अङ्गाङ्गित्वेऽलंकृतीनां तद्वदेकाश्रयस्थितौ ।**

**संदिग्धत्वे च भवति संकरस्त्रिविधः पुनः ॥ ९८ ॥**

अङ्गाङ्गिभावो यथा—

**'आकृष्टिवेगविगलद्भुजगेन्द्रभोग-**

**निर्मोकपट्टपरिवेष्टनयाम्बुराशेः ।**

**मन्थव्यथाव्युपशमार्थमिवाशु यस्य**

**मन्दाकिनी चिरमवेष्टत पादमूले ॥'**

अत्र निर्मोकपट्टापह्नवेन मन्दाकिन्या आरोप इत्यपह्नुतिः। सा च मन्दाकिन्या वस्तुवृत्तेन यत्पादमूलवेष्टनं तच्चरणमूलवेष्टनमिति श्लेषमुत्थापयतीति तस्याङ्गम् । श्लेषश्च पादमूलवेष्टनमेव चरणमूलवेष्टनमित्यतिशयोक्तेरङ्गम्। अतिशयोक्तिश्च मन्थव्यथाव्युपशमार्थमिवेत्युत्प्रेक्षाया अङ्गम् । उत्प्रेक्षा चाम्बुराशिमन्दाकिन्योर्नायकनायिकाव्यवहारं गमयतीति समासोक्तेरङ्गम् ।

---

## विवृतिः

एकाश्रयस्थितौ एकस्मिन्पादे पदे वा स्थितौ ॥ **आकृष्टीति** । समुद्रमन्थनसमये देवादीनामाकर्षणवेगेन विगलन् यो भुजगेन्द्रभोगस्य वासुकिदेहस्य निर्मोकपट्टस्त्यक्तचर्मपट्टः तद्वेष्टनया । तद्वेष्टनच्छलेनेत्यर्थः । पादमूले एकदेशे । पक्षे—चरणसमीपे । अवेष्टत अवहत् । पक्षे—संनाहक्रिययात्यतिष्ठत् । । अङ्गाङ्गिभावमुपपादयति—**अत्रेति** । **सा च** अपह्नुतिश्च । **वस्तुवृत्तेन** वस्तुगत्या । 'नायकनायिका' इति पाठे नायकेन सहिता नायिका नायकनायिका । द्वन्द्वविषय एकशेषप्राप्तेः ॥ **अनुरागेति** ।

## विज्ञप्रिया

सङ्करश्च त्रिविधो भवतीत्याह—**अङ्गाङ्गित्वे इति** । अलङ्कृतीनामङ्गाङ्गित्वे एकविधः । अपरविधमाह—**तद्वदिति**—एकाश्रये एकवाक्ये वा अलङ्कृतीनां स्थितावित्यर्थः । अपरविधमाह—**संदिग्धत्वे चेति** । अलङ्कारद्वयस्य सन्देहे कोटिद्वयत्वे इत्यर्थः ।

**अङ्गाङ्गिभावो यथेति** । यद्यप्यङ्गाङ्गिभावो जन्यजनकभावः प्रकृष्यप्रकर्षकभावो ज्ञाप्यज्ञापकभावश्चेति त्रिविधस्तथापि ज्ञाप्यज्ञापकभावरूपमेवोदाहरति ।

**आकृष्टवेगेति**—मन्दरपर्वतवर्णनमिदम् । यस्य मन्दरपर्वतस्य पादमूलेऽधोभागरूपमूले एव श्लेषेण चरणस्य मूले प्रान्ते मन्दाकिनी अचेष्टत सेवारूपां चेष्टामकरोदित्यर्थः । किमर्थमित्यत्रोत्प्रेक्षते—**अम्बुराशेर्मन्थव्यथाव्युपशमार्थमिवेति** । मम पत्युरम्बुराशेर्मन्थजन्याया व्यथाया आशु शीघ्रं व्युपशमाय इत्येव तदर्थमिवेत्यर्थः । मन्थतो निवृत्तस्य तेनैव पूर्व जनिता मन्थव्यथा आशु नंक्ष्यतीत्येवंरूपा प्रार्थना । ननु मन्दाकिनी मन्थनात्पूर्वमपि मन्दरस्य पादमूले वर्तते । इदानीं किंविधया चेष्टया सेवते इत्यत्राह—**आकृष्टवेगेति** । भावक्तान्तत्वाद् आकर्षण-

वेगेन विगलन् यो रज्जुभूतस्य भुजगेस्य वासुकेर्भोगात् कायान्निर्मोकश्चर्मकञ्चुकं तद्रूपस्य पट्टस्य वस्त्रविशेषस्य परिवेष्टनया उद्वेष्टनप्रकारेणेत्यर्थः। नेदं चर्मकञ्चुकपदवेष्टनं, किन्तु मन्दाकिन्येव परितः पादमूलं सेवार्थं वेष्टितवतीत्यर्थः।

तत्र प्रथमापह्नुतिं दर्शयति—**निर्मोकेति**। **सा चेति**। सा अपह्नुतिः वस्तुवृत्तेन गङ्गावस्तुस्वभावेन। वस्तुतस्तु वेष्टनस्वभावत्वात् तस्या इत्यर्थः। **श्लेषमुत्थापयतीति**। श्लेषे ज्ञापयतीत्यर्थः। निर्मोके गङ्गारोपाभावे चरणार्थकश्लेषाप्रतीतेरित्यर्थः। सच श्लेषाऽतिशयोक्तेरङ्गमित्याह—**श्लेषश्चेति**। अतिशयोक्तिं दर्शयति—पादमूलवेष्टनमेव सेवनमितीति भेदेप्यभेदारोपरूपातिशयोक्तिरियम्। नतु रूपकं रूपकाधिकरणस्य सेवनस्यानिर्दिष्टत्वाच्चरणार्थकपादश्लेषादेव सेवाबोधात्। श्लेषस्तज्ज्ञापक इत्यर्थः। अतिश्योक्तिरपि वाच्योत्प्रेक्षाया अङ्गमित्याह-**अतिशयोक्तिरपीति**। इयं तु प्रकर्षकमङ्गं सेवाज्ञानं विना मन्थव्यथोपशमनार्थतायाः वेष्टनमात्रस्यासम्भवेनात्प्रेक्षायास्तथा प्रकर्षणात्। नतु ज्ञापकमङ्गम्। इवशब्दादेव तस्याः प्रतीतेः, नापि जनकमङ्गमुत्कटकोटिसंशयात्मिकाया उत्प्रेक्षायाः सेवाज्ञानेन अजननात्। उत्प्रेक्षापि समासोक्तेर्ज्ञापकमङ्गमित्याह—**उत्प्रेक्षा चेति**। समुद्रगङ्गयोर्नायकनायिकाव्यवहारज्ञानस्य मन्थव्यथोपशमार्थतोत्प्रेक्षां विनाऽचेतनयोरसम्भवात्।

## कुसुमप्रतिमा

इदानीमवशिष्टं सङ्करालङ्कारं लक्षयति अङ्गेति। अत्रालङ्कृतीनामिति सर्वत्रान्वेति। बहुवचनञ्चाविवक्षितम्। तथा च अनेकस्यालङ्कारस्य अङ्गाङ्गित्वे सम्पादकसम्पाद्यत्वेन सापेक्षभावेन गुणाप्रधानाभावेन वा, तद्वत् तथा, अनेकस्यालङ्कारस्य एकस्मिन्नाश्रये पायरूपे वा स्थाने स्थितौ, तथा अनेकस्यालङ्कारस्य सन्दिग्धत्वं अनेकलक्षणगमनात् अयमलङ्कारो भवेत् एष वा" इत्येवं संशयविषयत्वे च सङ्करो भवति। अतएव सोऽपि पुनः सङ्करः संसृष्टिवदेव त्रिविधः।

विषयविभागाभावात् संसृष्टिः सामान्यरूपा, विषयविभागात् सङ्करस्त विशेषरूपः एवञ्च सामान्यस्य विशेषे तरवृत्तित्वनियमादनेकालङ्कारस्य परस्परनैरपेक्ष्येणापि एकाश्रयस्थितिपक्षे सन्देहपक्षे च सङ्कर एव। एवमेव एकाश्रयस्थितिरूपसङ्करस्यापि, सामान्यरूपत्वात् अङ्गाङ्गिभावसन्देहसंकरयोर्विशेषरूपयोरतिरिक्तस्थल एव तस्य विषयत्वम्। तथा अनेकसंसृष्टेः अनेकसंकरस्य संसृष्टिसंकरयोरुभयोश्च परस्परनैरपेक्ष्येण स्थितौ पुनः संसृष्टिः, अङ्गाङ्गिभावादौ च पुनः संकरः सम्भवत्येव, संसृष्टिलक्षणे एतेषामिति अत्र च अलङ्कृतीनामित्येतयोरलंकारसामान्यपरतया संसृष्टिसंकरयोरपि ग्रहणादिति सुधीभिर्भाव्यम्।

व्युत्पत्तिस्तु संकरः संकीर्णता अनेकस्यैकत्र सम्मेलनमिति यावत्।

आकृष्टीति। समुद्रवर्णनमिदम्। मन्दाकिनी गङ्गा पतिव्रता स्त्री चेति व्यज्यते, आकृष्टेर्मन्थनकाले सुरासुरगणैरुभयत आकर्षणस्य, वेगेन गलन् प्रस्खलन् यो भुजगेन्द्रभोगस्य अनन्तनागशरीरस्य निर्म्मोकपट्टः परित्यक्तचर्म्मरूपं वस्त्रम्, तस्य परिवेष्टनया परिवेष्टनकरणच्छलेन, अम्बु राशेः समुद्रस्य, पत्युरिति व्यज्यते, मन्थनव्यथाव्युपशमार्थमिव, आशु त्वरितम्, यस्य समुद्रस्य पत्युरिति च गम्यते, पादमूले एकस्मिन् प्रदेशे चरणनिकटे च चिरमवेष्टत प्रावहत् कराभ्यां परिवेष्ट्य धारणमकरोच्च।

अत्रेति। अपह्नुतिर्वस्तुना अपह्नुतिध्वनिः, तद्वाचकस्यात्राभावादित्यवधेयम्। सा अपह्नुतिः। वस्तुवृत्तन वस्तुगत्या अत्रत्यपदार्थपर्य्यालोचनावशेनेत्यर्थः। श्लेषं विभक्तेरभेदात् "नीतानामाकुलीभावम्" इत्यादिवत् प्रकृ-

तिश्लेषम् । अतिशयोक्तेः भेदे अभेदाध्यवसायरूपायाः । उत्प्रेक्षायाः फलोत्प्रेक्षायाः । समासोक्तेर्लिङ्गसाम्यघटितायाः ।

कारिकायामलङ्कृतीनामिति बहुवचनस्य अविवक्षितत्वसूचनाय द्वयोरप्यङ्गाङ्गिभावेन संकरदर्शयितुमाह यथा वेति ।

## विमला

सङ्करमाह, अङ्गेति ।—अलङ्कृतीनाम अङ्गाङ्गित्वे—गुणप्रधानाभावे, तद्वत्—तथा, एक एव आश्रयः,—आधारः तत्र, एकस्मिन् पादे पदे वा इत्यर्थः, स्थितो तया सन्दिग्धत्वे च अत एव सङ्करः पुनः त्रिविधः भवति, अङ्गाङ्गिभावेन, एकवाचकानुप्रवेशेन, संशयेन च सङ्करस्त्रिप्रकारकः इति सारः ।

सौवर्णमय प्रभृतीनां पृथक् चारुत्वहेतुत्वेऽपि संङ्घटनाकृतं चारुत्वान्तरं जायते, तद्वत प्रकृतालङ्काणामपि संयोजने चारुत्वान्तरमुपलभ्यते, उत पृथक् पर्य्यवसानामति निर्णयः ।

आकृष्टीति ।—आकृष्टः,—समुद्रमन्थनसमये देवासुराणामुभयत्रः आकर्षणस्य, यः वेगः तस्मात् तेन वा, विगलन्—स्खलन्, भुजगेन्द्रभोगस्य—वासुकिदेहस्य, यः निर्भीकपट्टः,—परित्यक्तत्वग्वसमं, त्यक्तचर्मपट्ट-इत्यर्थः, तस्य परिवेष्टनया—परिवेष्टनच्छलेनेत्यर्थः, अम्बुराशः,—समुद्रस्य, पत्युरिति भावः, मन्यव्यथायाः,—मन्थनजानतपीड़ायाः, व्युपशमार्थमिव—अपनोदनार्थमिव, आशु—शीघ्र, मन्दाकिनी—गङ्गा, यस्य—समुद्रस्य इति भावः, पादमूले—एकदेशे, चरणसमीपे च, चिरम् अवेष्टत—अवहेत्, संवाहनार्थमतिष्ठञ्च । वसन्ततिलकं वृत्तम् ।

अङ्गाङ्गिभावमुपपादयति, अत्रेति ।—सा च—अपह्नुतिश्चेत्यर्थः । वस्तुवृत्तेन—वस्तुगत्या ।

## लक्ष्मी

अत्र हि अनुप्रासोपमयोःसंसृष्टिः ।

एवं संसृष्ट्यलङ्कारं निरूप्य सम्प्रत्यवशिष्टं सङ्करालङ्कारस्त्रिविधो भवतीति निरूपयति**अङ्गाङ्गित्वं** इति । अलङ्कृतीनामित्यत्र बहुत्वमविवक्षयित्वा सर्वत्र सम्बन्धो ज्ञेयः । तथा च विविधालङ्कारस्य अङ्गाङ्गित्वे अनुग्राह्यानुग्राहगत्वे उपकार्योपकारकत्वे सापेक्षभावेन गुणप्राधानभावेन वा, तदुक्तम्—

'अविश्रान्तिजुषामात्मन्यङ्गिङ्गित्वं तु सङ्कर' इति ।

तद्वत् तथा विवधस्यालङ्कारस्य एकत्र आशये पदे पादे वाक्ये वा स्थाने स्थितौ, तथा विविधस्यालङ्कारस्य सन्दिग्धत्वे विविधलक्षणसमन्वयात् 'अयमलङ्कारो भवेत् एष वा' इति संशयविषयत्वे तेषां साधकबाधकाभावेन स्थितत्वे चेत्यर्थः सङ्कीर्यमाणस्वरूपत्वात्सङ्करो भवति, अत एव सोऽपि पुनः सङ्करः संसृष्टिवदेव त्रिविधस्त्रिप्रकारः । उक्तानामेवालङ्काराणां चारुत्वार्थं स्वरूपनिष्पत्तये वान्यापेक्षणादात्मन्यनासादितस्वतन्त्रभावानां यत् परस्परम् अनुग्राह्यानुग्राहकत्वादिकं स तु सङ्करो नामालङ्कारः । स त्वङ्गाङ्गित्वादिना त्रिविध इति सारार्थः ।

संसृष्टेर्विषयपार्थक्याभावात् सामान्यरूपत्वम्, सङ्करस्य तु विषयपदार्थैक्याद् विशेषरूपत्वम्, इत्थञ्च सामान्यस्य विशेषातिरिक्तवृत्तित्वनियमाद् विविधालङ्कारस्य परस्परापेक्षाभावेनाऽपि एकाश्रयस्थितिपक्षे सन्दिग्धत्वपक्षे च सङ्कर एव । इत्थमेव सङ्करेषु एकाश्रयस्थितिसङ्करस्यापि साधारणरूपत्वेन अङ्गाङ्गिभावसन्दिग्धसङ्करयोर्विशेषरूपयोर्भिन्नस्थल एव तस्य विषयत्वम् । तथा संसृष्टिसङ्करयोरप्युपादानात् विविधसंसृष्टेः

विविधसङ्करस्य संसृष्टिसङ्करयोर्द्वयोश्च परस्परापेक्षाभावेन स्थितौ पुनः संसृष्टिः, अङ्गाङ्गिभावादौ च पुनः सङ्करः सम्भवत्येवेति धीधनैर्विद्वद्भिरेव विबावनीयम्।

**आकृष्टीति**। समुद्रमन्थनसमये समुद्रवर्णनमिदम्। मन्दाकिनी लक्षणया गङ्गेत्यर्थः 'मन्दाकिनी वियद्गङ्गा' इत्यमरः, पतिव्रता स्त्री चेति प्रतीयते, आकृष्टेर्मन्थनसमये दवादिगणैरुभयत आकर्षणस्य वेगोऽत्यन्तत्वरया विधानं तेन विगलन् दूरीभवन् यो भुजगेन्द्रभोगस्य वासुकेः कायस्य निर्मोकश्चर्मकञ्चुक एव पट्टो बन्धनवस्त्रम्, तस्य परिवेष्टनया परिवेष्टनविधानव्याजेन, अम्बुराशेः समुद्रस्य पत्युरिति च प्रतीयते, मन्थने या व्यथा तस्या व्युपशमो विशेषेणोपशमनं तदर्थमिव मन्थनोत्पादितव्यथाशान्त्यर्थमिव, आशु झटिति, यस्य समुद्रस्य पत्युरिति च व्यज्यते, पादमूले एकदेशे पक्षे चरणसमीपे च चिरं बहुकालम् अचेष्टत पर्यवहत् प्रत्यवरोध्य धारणमकरोच्च। **वसन्ततिलकाछन्दः** तल्लक्षणञ्चोक्तं प्राक्।

अङ्गाङ्गिभावमुपपादयति—**अत्रेति**। निर्मोकपट्टस्य अपह्नवेन परिवेष्टनात्मतया प्रतिपादनेनेत्यर्थः। अपह्नुतिर्वस्तुना अपह्नुतिध्वनिः, तत्प्रतिपादकस्यात्रासत्त्वादिति बोध्यम्। सा च अपह्नुतिश्च वस्तुवृत्तेन वस्तुगत्या अत्रत्यपदार्थानुसन्धानवशेनेत्यर्थः। यस्य अम्बुराशेः पादमूल(एकदेश) वेष्टनमिति तथोक्तम्। तस्य श्रीपतेः पत्युश्चरणवेष्टनम्। श्लेषं विभक्तेरैक्यात् 'नीतानामाकुलीभावम्' इत्यादिवत् प्रकृतिश्लेषम् उत्थापयति अर्थशक्त्या निरूपयति निर्मोकपट्टैः गङ्गारोपाभावे चरणार्थकश्लेषाप्रतीतेरित्यर्थः तस्य श्लेषस्य, अङ्गं परिपोषिका। स च श्लेषोऽतिशयोक्तेरङ्गमित्युपपादयति—**श्लेषश्चेति**। अतिशयोक्तिं दर्शयति—**पादमूलवेष्टनमेवेति**। अतिशयोक्तेः समुद्रलक्ष्मीपत्योर्भेदेऽप्यभेदाधध्यवसायरूपातिशयोक्त्यलङ्कारस्य। अतिशयोक्तिरपि वाच्योत्प्रेक्षाया अङ्गमित्युपपादयति—**अतिशयोक्तिश्चेति**। अयम्भावः—इवशब्दप्रतिपादनोत्प्रेक्षा उक्तरूपातिशयोक्तिश्चात्र, तत्रोभयोर्मध्ये अतिशयोक्तिरुत्प्रेक्षायाः परिपोषकतां विनोत्तम्भिताया अप्यस्याश्चमत्काराभावात्। समुद्रस्याचेतनतया मन्थनव्यथाया असम्भवात् अत्र विष्णुसादृश्यमाश्रित्यैव गङ्गाया मन्थनव्यथाव्युपशमपरत्वोत्प्रेक्षणस्यौचित्यमिति। उत्प्रेक्षापदेनेवशब्दस्य सत्त्वेन वाच्यरूपैव न तु फलरूपेत्यवधेयम्। एवञ्च उत्प्रेक्षायाः फलोत्प्रेक्षाया इति व्याख्यानमसङ्गतमेवेत्यालोचनीयम्। उत्प्रेक्षापि समासोक्तेरङ्गमिति दर्शयति—**उत्प्रेक्षा चेति**। समुद्रगङ्गयोर्नायकनायिकाव्यवहारज्ञानस्य मन्थनव्यथोपशमार्थतोत्प्रेक्षां विनाऽचेतनयोरसम्भवादित्याशयः। समासोक्तेर्लिङ्गसादृश्यघटितायाः, अङ्गं परिपोषिका।

## रुचिरा

कारिकां सुगमयितुं तत्कठिनांशं सुगमयति—**एतेषामित्यादिना**। स्पष्टम्।

उदाहरति—**यथा**—**संसारध्वान्तविध्वंसहंसः** संसारश्चरात्मकं जगदेव ध्वान्तमविद्याविजृम्भितत्वादन्धकारतस्य विध्वंसस्तत्र हंसः सूर्यः। 'भानुर्हंसः सहस्रांशु'रित्यमरः। **स्मेरेन्दीवरलोचनः** स्मेरे प्रफुल्ले इन्दीवरे नीलकमले तद्वल्लोचने यस्य तथोक्तः। **कंसनिषूदनः** कंसारिः। **देवः**। **अपायात्** क्लेशात्। **नोऽस्मान्**। **पायाद्रक्षेत्**॥ ३०५॥'

अत्र शब्दार्थलङ्काराणां स्थित्यंशनिर्देशपूर्वकं मिश्रणं निर्दिशति—**अत्रेत्यादिना**। स्पष्टम्।

यथा वा—'आनन्दमन्थरपुरन्दरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य। पादाम्बुजं भवतु मे विजयाय मञ्जु—मञ्जीरसिञ्जितमनोहरमम्बिकायाः॥' इति, अत्र हि-अनुप्रासोपमयोः संसृष्टिः। गद्ये पुनरियं कादम्बर्यादौ यथातथं स्वयं द्रष्टव्या।

सङ्करमुपपाद्य लक्षयति—१९१ **अलङ्कृतीनामुक्तालङ्काराणाम्**। **अङ्गाङ्गित्वे** गौणप्रधानत्वे। **तद्वत्** तथा। **एकाश्रयस्थिताव**ेकः पादरूपः पदरूपः पद्यरूपो वाऽऽश्रय आधारस्तत्र स्थितिस्तस्याम्। **सन्दिग्धत्वे** साधकबाधकाभावेन स्थितत्वे। **च**। **सङ्करः**। **पुनः**। **त्रिविधः**। **भवति**। अयम्भावः—सङ्करस्त्रिविधः, अङ्गाङ्गित्वै—काश्रयत्व—सन्दिग्धत्वभेदात्। तत्र—अङ्गाङ्गित्वं नाम स्वातन्त्रयमप्राप्ततयोपकार्योपकारकत्वं गतत्वम्। तथाऽऽहुः 'अविश्रान्तिजुषामात्मव्यङ्गाङ्गिषं तु सङ्करः।' इति। एकाश्रयत्वं नाम एकत्र पदे पादे वाक्ये वा व्यवस्थितत्वम्। सन्दिग्धत्वं च द्वयोर्बहूनां वा साधकबाधकाभावेनैकत्राविरुद्धसमाविष्टत्वम्। इदं बोध्यम्—अयं प्रायः—नीरक्षीरन्यायेनास्फुटपार्थक्येनालङ्कारमिश्रणमूलः, अत एवास्य शाब्दोरार्थयोरेव वा एकत्र समावेशे सम्भवति। शाब्दार्थमिश्रणमूलत्वे नीरक्षीरसादृश्यानुपपत्तेः। प्रायः पदेन—एकाश्रयत्वे शाब्दार्थमिश्रणमूलत्वेऽपि न क्षतिरिति सूचितम्॥ १५२॥

अङ्गाङ्गित्वप्रभेदं सङ्करमुदाहर्तुमाह—**अङ्गाङ्गीत्यादि**। स्पष्टम्। '**आकृष्टीत्यादि**।

'**मन्दाकिनी** आकाशगङ्गा लक्षणया गङ्गेत्यर्थः। 'मन्दाकिनी वियद्गङ्गे'त्यमरः। **यस्य** यत्पदवाच्यस्य, यद्वा-ई लक्ष्मीः पत्नीत्वेनास्यास्तीति तस्य, लक्ष्मीपतेरित्यर्थः। **अम्बुराशेः** समुद्रस्य, यद्वा-लक्षणया तदभिन्नस्येत्यर्थः। श्यामिम्रा सेव्यत्वेन चेयं लक्षणा(अस्मिन्पक्षे यस्येति विशेष्यम्)। **आशु**। **मन्थव्यथाव्युपशमार्थं** मन्थस्य मन्थनस्य, यद्वा मन्थे मन्थने या व्यथा तस्या व्युपशमो विशेषेणोपशमनं तदर्थम्। **इव**। **पादमूले** एकदेशे, यद्वाचरणसमीपभागौ। 'पादा रश्म्यङ्घ्रितुर्यांशा'इत्यमरः। **आकृष्टिः**...आकृष्टेराकर्षणस्य वेगोऽत्यन्तत्वरया विधानं तेन विगलन् दूरीभवन् भुजगेन्द्रस्य वासुकेर्भोग(स्य)निर्मोकः (कञ्चुकः) एव पट्टो बन्धनवस्त्रं यद्वा....निर्मोकः पट्ट इवेति, स एव परिवेष्टना परितः प्रवहणं प्रत्यवरोध्यावस्थानं वा तया 'तच्छलेने'ति विवृतिकाराः। **चिरं** चिरकालं व्याप्य। **अवेष्टत** पर्य्यवहत् प्रत्यवरोध्य वाऽतिष्ठत्। वसन्ततिलकं वृत्तम्, तल्लक्षणं चोक्तं प्राक्॥ ३०६॥'

अलङ्कारसाङ्कर्यं निर्दिशति-**अत्रोदाहृते पद्ये**। **निर्मोकपट्टापह्नवनेन** निर्मोकपट्टस्य परिवेष्टनात्मतया प्रतिपादनेनेति शेषः। **मन्दाकिन्याः**। **आरोपः** 'अस्याः परिवेष्टन (परितः प्रवहण) रूपत्वात्'इति शेषः। **इति**। **अपह्नुतिः** 'प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः।' इति वक्ष्यमाणलक्षणोऽपह्नुत्यलङ्कारः। **सापह्नुतिः**। **च**। **मन्दाकिन्याः**। वस्तुवृत्तेन वस्तुनः स्वरूपस्य वृत्तमितिवृत्तं निर्वचनमिति यावत् तेन। **यत्पादमूलवेष्टनं** यस्याम्बुराशेः पादमूल (एकदेश) वेष्टनमिति तथोक्तम्। एव। **तच्चरणमूलवेष्टनं** तस्य श्रीपतेः चरणमूलवेष्टनम्। **इति**। **श्लेषम्**। **उत्थापयत्यर्थ**शक्त्या निरूपयति। **इति**। **तस्य** श्लेषस्य। **अङ्गं** परिपोषिका। तदेवोपपादयति—**तस्या** इत्यादि। अयम्भावः—पादमूलशब्दस्य एकदेशेतिचरणसन्निधानेति चार्थः। पादमूलशब्दस्य परिवृत्तावप्युक्तस्यार्थस्यापरिवृत्तिः, एवं परिवेष्टनशब्दस्यापि अर्थद्वयम्। प्रकरणस्य च गङ्गायाः समुद्रव्यथाव्युपशमपरत्वे भगवद्व्यथाव्युपशमपरत्वे च समानतया श्लेषः, अस्योपकारिका निर्मोकपट्टमपह्नुत्य तत्र परिवेष्टनारोपेणोत्तम्भिताऽपह्नुतिः, अस्या असत्त्वे तत्परिपोषाभावात्। इति। **अतिशयोक्तिः**। समुद्रलक्ष्मीपत्योर्भेदेऽप्यभेदाध्यवसायरूपोऽतिशयोक्त्यलङ्कारः। **च**। '**मन्थव्यथाव्युपशमार्थमिवे**'त्युत्प्रेक्षायाः (इवशब्दवाच्यायाः)। **अङ्गम्**। अयम्भावः—इवशब्दप्रतिपाद्योत्प्रेक्षा, अम्बुराशिपदार्थस्य समुद्रात्मकत्वेऽपि यत् (लक्ष्मीपति) पदार्थेन विशेष्येण विशेषणतामुपपादयितुं तयोरभेदाध्यवलसायेऽशयोक्तिश्च, अनयोरतिशयोक्तिरुत्प्रेक्षायाः परिपोषिका, तां विनोत्तम्भिताया अप्यस्या अपरिपोषात्(अचमत्कारकत्वात्)। समुद्रस्य जडतया मन्यथव्यथाया असम्भवात्, तत्र विष्णुसादृश्यसमुद्भाव्यैव गङ्गया मन्थव्यथाव्युपशमपरत्वोत्प्रेक्षणस्य ह्यौचित्यम्। इति। **उत्प्रेक्षा**। **च**। **अम्बुराशि** (समुद्र-विष्णु) **मन्दाकिन्योः**। **नायकनायिकाव्यवहारम्**। **गमयत्यवगमयति**। **इति समासोक्तेः**। **अङ्गं** परिपोषिका।

यथा

**'अनुरागवती संध्या दिवसस्तत्पुरः सरः।**
**अहो दैवगतिश्चित्रा तथापि न समागमः ॥'**

अत्र समासोक्तिर्विशेषोक्तेरङ्गम्। संदेहसंकरो यथा—

---

## विज्ञप्रिया

अनेकालङ्काराणामङ्गाङ्गिभावमुक्तवाऽलङ्कारयोस्तथात्वमाह—**यथा वेति**। सायंसन्ध्यावर्णनामिदम्। अनु दिवसस्य पश्चाद्रागवती रक्तिमवती सन्ध्या, दिवसश्च तस्याः पुरः सरः पूर्ववर्ती। अहो आश्चर्यम्। चित्रा विलक्षणा दैवगतिर्यतस्तथापि न समागमः। पुरः पश्चाद्भावेन स्थितयोरेकदा मिलनरूपस्य समागमस्यैव दृष्टत्वात्। दिवससन्ध्ययोस्तु नैकदा मिलनम्; सन्ध्याकाले दिवसाभावात्। **अत्र समासोक्तिरिति**। अत्र रागवन्नायिकापुरः सरनायकयोर्दैवात्समागमरहितयोर्वृत्तान्तप्रतीतिरूपा समासोक्तिः। पूर्वपश्चाद्भावस्थितिरूपस्य समागमहेतोः सत्त्वेपि समागमरूपफलस्याभावरूपाया विशेषोक्तेर्ज्ञापकहेतुरित्यर्थः। नायकनायिकासमागमाभावप्रतीतेर्नायके वृत्तान्तप्रतीतिं विनाऽसम्भवात्। जनकरूपाङ्गोदाहरणं तु न दर्शितम्। तत्तु यथा—

**"पुलिन्दास्ते रिपुस्त्रीणां वने हारं हरन्ति नो।**
**बिम्बोष्ठकान्त्या शोणं तं गुञ्जमालां हि मन्यते ॥"**

अत्र हारेण बिम्बोष्ठकान्तेग्रहणात् तद्गुणोऽलङ्कारः। तेन च गुञ्जाहारभ्रान्तिरजननाद् भ्रान्तिमांस्तद्रगुणस्य प्रकर्षकमङ्गम्।

## कुसुमप्रतिमा

अनुरागेति। सन्ध्याः सायं कालः काचिन्नायिका च, अनुरागवती रक्तोत्पलादिसदृशलौहित्यवती पुरतेच्छावती च, दिवसो वासरो नायकश्च, तस्याः सन्ध्याया नायिकायाश्च, पुरः सरः अवसानाय रमणाय च अग्रवर्त्ती सम्मुखवर्तीत्यर्थः। अहो आश्चर्य्यम्। तथापि न समागमस्तयोः सम्मेलनम्; अतएव दैवगतिर्विधातृव्यवहारः, चित्रा आश्चर्य्या; दैवगतिवशादेव तयोर्नै समागम इति भावः।

अत्रेति। समासाक्तिः सन्ध्यादिवसयोर्लिङ्गसाम्यघटितेत्यर्थः। विशेषोक्तेः रमणाय नायकस्य नायिकायाः सम्मुखवर्तित्वरूपकारणे सत्यपि रमणात्मकसमागमरूपतत्कार्य्याभावादिति भावः। अङ्गं सम्पादिका। किञ्चात्र 'दैवगतिश्चित्रा' इत्येतमर्थं प्रति वाक्यान्तरार्थानां हेतुत्वात् काव्यलिङ्गं तत् प्रति च सा विशेषोक्तिरप्यङ्गमिति त्रयाणामेवाङ्गाङ्गिभावेन संकरत्वात् द्वयोः संकरः कुत इति चेत्, तदेदमुदाहरणम्—"क्व सूर्य्यप्रभवो वंशः" इत्यादि। अत्र केवलविषमानिदर्शनयोरेवाङ्गाङ्गभावेन संकरः।

गुणप्रधानभावेनाङ्गाङ्गिभावे संकरो यथा मम विराजसरोजिन्याम्—

**"उदयति रसिकत्वं यौवने कामिनीनां सततमनयनेया मुग्धता शैशवे तु।**
**मधु भवति नलिन्याः पुष्पितायाः स्वभावात् पतति च कलिकाया न्यस्तमप्यात्मनैव ॥"**

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासो व्यापित्वात् प्रधानः, "न्यस्तमपि" इत्यर्थापत्तिस्तु अव्यापित्वादप्रधान इत्येतयोः संकरः।

अङ्गाङ्गित्वाभावे सन्देहाभावे च सामान्यत्वेन पारिशेष्यादेकाश्रयस्थितिरूपः संकर इति सूचयितुमेव कारिकोक्तक्रममुल्लङ्घ्य प्राक् सन्देहसंकरमुदाहर्त्तुमाह सन्देहेति।

## विमला

अनुरागेति।—सन्ध्या—सायंसमयः, नायिका च, अनुरागवती—लौहित्यवती, सुरताभिलाषवती च, दिवसः,—अहः, नायकश्च, तस्याः,—सन्ध्यायाः, पुरः सरः,—पुरीवर्ती, अहो!—आश्चर्य्यं, दैवगतिश्चित्रा—अद्भुता, (यतः) तथाऽपि—अनुरागवत्त्वे पुरोवर्त्तित्वे चेत्यर्थः, न समागमः,—न सम्मेलनम्। यथा वा—"त्रयोमयोऽपि प्रथितो जगत्सु यद्वारुणीं प्रत्यगमद्विवस्वान्। मन्येऽस्तशैलात् पतितोऽत एव विवेश शुद्ध्यै बड़वाग्निमध्यम्॥" इति। अत्र हि पूर्वार्द्धे विरोधोत्पत्तिहेतुः श्लेषः उत्तरार्द्धे पुनस्ताभ्यामङ्गाङ्गिभावमापन्ना मन्ये इति पदेनोत्थापितोत्प्रेक्षा इति भावः; तथा ह्यत्र यत्कारणमुत्प्रेक्षते, तत्र विरोधश्लेषानुप्रवेशः, यच्चात्र कार्य्यमुत्प्रेक्षानिमित्तं, तत्र पतितत्वाग्निप्रवेशौ वस्तुस्थित्या अन्यथास्थितावपि अन्यथाभूताभ्यां ताभ्यामभेदेनाध्यवसितौ ज्ञेयौ, तेनावाङ्गाङ्गिभावः सङ्करः, न च विरोधोत्पत्तिहेतौ श्लेषे श्लेषस्य विरोधेन सहाङ्गाङ्गिर्भावः सङ्करः, उत्प्रेक्षाया वा निमित्तगतातिशयोक्त्या सहायं सङ्करः, ताभ्यां विना तयोरनुत्थानात्, अतश्च निरवकाशत्वाद्बाधकत्वम्; न च मन्तव्य विरोधमन्तरेणापि श्लेषो दृश्यते इति श्लेषस्य सावकाशत्वमिति, यतो न ब्रूमो विरोधमन्तरेण श्लेषो न भवतीति; किं तर्हि, अलङ्कारान्तरविविक्तो विषयः श्लेषस्य नास्तीति निरवकाशत्वात् तेषां बाधाः, तन्मध्ये च विरोधोऽनुप्रविष्टः इति सोऽपि न बाध्यते इति न कश्चिद्दोषः, एवमर्थालङ्कारसङ्कारा: प्रोक्ता इति सर्वस्वकाराः।

## लक्ष्मी

कारिकायामलङ्कृतीनामित्यत्र बहुत्वमविवक्षितमिति द्योतनाय बहूनामङ्गाङ्गिभावेन सङ्करमुपपाद्य द्वयोरपि तद्दर्शयितुमाह—**यथा** वेति।

उदाहरति—**अनुरागेति**। सायं सन्ध्यावर्णनमिदम्। सन्ध्या सायंकालः तदात्मना व्यवहृता काचिन्नायिका च, अनु दिवसस्य पश्चाद् रागवती रक्तोत्पलादिसदृशलौहित्यवती सुरताभिलाषया प्रेमवती च, दिवसो वासरस्तदात्मना व्यवहृतो नायकश्च, तस्याः सन्ध्यायाः तदात्मना व्यवहृताया नायिकायाश्च पुरस्सर अवसानाय सुरताय च पुरोवर्त्ती सम्मुखवर्त्तीत्यर्थः। अहो आश्चर्यम्! तथापि तयोः पाश्चात्यपुरस्त्ययोः सन्ध्यादिवसयोः न समागमः परस्परं मेलनं भवतीति शेष; अत एव दैवगतिः विधिव्यवहारः, चित्रा विलक्षणा विधिवशादेव तयोर्न समागमो भवतीतिभावः।

लक्ष्यं समर्थयति—**अत्रेति**। समासोक्तिः रागवत् सन्ध्यापुरस्सरदिवसयोः दैवात्समागमरहितयोः लिङ्गसादृश्ययुक्ता समासोक्तिरित्यर्थः। विशेषोक्तेः सुरताय नायकस्य नायिकायाः पाश्चात्यपुरस्त्यरूपहेतौ सत्यपि सुरतात्मकसमागमरूपकत्कार्याभावादित्याशयः। अङ्गं परिपोषिका। यदि च 'दैवगतिश्चित्रा' इत्येतमर्थं प्रति वाक्यान्तरार्थस्य हेतुत्वेन काव्यलिङ्गं तत्प्रति च विशेषोक्तेरङ्गत्वमिति विभाव्यते तदा—

'पुलिन्दास्ते रिपुस्त्रीणां वने हारं हरन्ति नो।

बिम्बोष्ठकान्त्या शोणं तं गुञ्जमालां हि मन्येते ॥' इत्युदाहार्यम् ।

अत्र हारेण बिम्बोष्ठकान्तेग्रर्हणात् तद्गुणोऽलङ्कारः । तेन च गुञ्जाहारभ्रान्त्युत्पादनाद् भ्रान्तिमांस्तद्गुणस्य सम्पादकमङ्गम् । यथा वा 'क्व सूर्यप्रभवो वंशः' इत्याद्यप्युदाहार्यम् ।

## रुचिरा

उदाहरणान्तरेण विषयकाठिन्यं परिहर्त्तुमाह—**यथा वा**। स्पष्टम् । '**अ**न्वित्यादि । **सन्ध्या** (तदात्मना व्यवहृता नायिका) । **अनुरागवती** लौहित्यवती प्रेमवती चेत्यर्थः । **दिवसः** (तदात्मना व्यवहृतो नायकः) । **तत्पुरः सरस्तस्याः** सन्ध्यायाः (तदात्मना व्यवहृताया नायिकायाः) पुरः सरः पुरोवर्त्ती । **अहो** आश्चर्यम् । **दैवगतिः** प्रारब्धोदयः । **चित्रा** विलक्षणा यत्-**तथाऽपि** तयोः पाश्चात्यपुरस्त्ययोः सन्ध्यादिवसयोः । **समागमः** परस्परं मेलनम् । **न** 'सम्भवती'ति शेषः ॥ ३०७ ॥

उदाहृतमर्थं निर्दिशति-**अत्र । समासोक्तिः** 'सन्ध्यादिवसयोर्नायिकानायकव्यवहारमूलेति' शेषः । **विशेषोक्तेः** 'सति हेतौ फलाभावे विशेषोक्ते' रित्युक्तस्य सन्ध्यादिवसयोः पाश्चात्यपुरस्त्यरूपे हेतौ सत्यपि समागमरूपस्य कार्य्यस्यानिष्पत्तिमूलस्य 'अहो'इत्यादिनोक्तनिमित्तस्यालङ्कारविशेषस्य । **अङ्गम्** ।

**'इदमाभाति गगने भिन्दानं संततं तमः ।**

**अमन्दनयनानन्दकरं मण्डलमैन्दवम् ॥**

अत्र किं मुखस्य चन्द्रतयाध्यवसानादतिशयोक्तिः, उत इदमिति मुखं निर्दिश्य चन्द्रत्वारोपाद्रूपकम्, अथवा इदमिति मुखस्य चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्माभिसंबन्धात्तुल्ययोगिता, आहोस्विच्चन्द्रस्याप्रकृतत्वाद्दीपकम्, किं वा विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात्समासोक्तिः, यद्वाप्रस्तुतचन्द्रवर्णनया प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा, यद्वा मन्मथोद्दीपनः कालः स्वकार्यभूतचन्द्रवर्णनामुखेन वर्णित इति पर्यायोक्तिरिति बहूनामलंकाराणां संदेहात्संदेहसंकरः ।

---

## विवृतिः

अनुरागो लौहित्यम् सुरताभिलाषश्च ॥ संदेहसंकरातिरिक्तस्थले एकाश्रयस्थितेर्विषयो भविष्यतीति चरमोक्तमपि संदेहसंकरं प्रथमं दर्शयति—**इदमिति**। संतततं सम्यग्व्याप्तम् । पक्षे—संततं तमः स्मरकृतज्ञानं भिन्दानम् । 'इदमाभाति वदनं इति पाठो न रमणीयः । विषयस्य निगरणाभावादतिशयोक्तेरसंभवापत्तेः, इदमिति मुखं निर्दिश्येति' निर्वचनासंगतिप्रसङ्गाच्च । 'वदनम्' इत्यत्र 'गमनम्' इति पाठोऽपि न सुन्दरः ।

## विज्ञप्रिया

बहूनामलङ्काराणां सन्देहसङ्करमाह—**इदमाभातीति**। इदमैन्दवमण्डलं गगने आभाति । कीदृशं सन्ततं विस्तृतं तमः अन्धकारम् अज्ञानं च भिन्दानममन्दनयनानन्दकरं च ।

अत्रालङ्काराणां संशयकोटितां दर्शयति-**अत्रेति**। इदं गगने ऐन्दवं मण्डलमर्थान्नायिकायामाभातीत्यर्थः । एवं चारोपाधिकरणस्य मुखस्यानिर्देशादतिशयोक्तिरित्यर्थः । मुखस्येदं पदेन निर्देशे तु रूपकमित्याह **उतेति**। तुल्ययोगितां दर्शयत्**यथवेति**। तथा च इदं निर्दिश्यमानं मुखं गगने ऐन्दवं मण्डलं चाभातीत्यर्थः । **द्वयोरपि प्रकृतयोरिति**। उभयस्यैव दीप्यमानत्ववर्णनेऽपि क्रमसत्त्वे इत्यर्थः । मुखस्यैव प्रक्रान्तत्वे तदुपमानतयैव चन्द्रनिर्देशे तु तस्याऽप्रकृतत्वात् प्रकृताप्रकृतयोरेकधर्मान्वयरूपं दीपकमित्यर्थः । समासोक्तिं दर्शयति—**किंवेति**। चन्द्रवर्णनस्यैव प्रक्रान्तत्वेऽप्रस्तुतप्रशंसेत्याह **यद्वेति**। **कार्यभूतेति**। चन्द्रोदयस्य सन्ध्याकालकार्यत्वात् ।

## कुसुमप्रतिमा

इदमिति । सततं व्याप्तम्, तमोऽन्धकारम्, भिन्दानं विनाशयत्, तथा अमन्दं बहुलं नयनानन्दं करोतीति तत्तादृशम्, इदं दृश्यमानम्, इन्दोश्चन्द्रस्येदमिति ऐन्दवं मण्डलम्, गगने आभाति शोभते ।

अत्रेति । अतिशयोक्तिर्भेदे अभेदाध्यवसायरूपा । निर्दिश्येत्यनेन मुखस्य अनिगरणं दर्शितम्, अतएव रूपकं तच्च निरङ्गं केवलरूपकम् । तुल्ययोगितेति । इदं मुखं चन्द्रमण्डलञ्च आभातीत्येकक्रियया तदुभयाभिसम्बन्धादिति भावः । चन्द्रस्यारप्रकृतत्वादिति । मुखस्य च प्रकृतत्वादिति । गम्यते । तथा च प्रस्तुता प्रस्तुततयोर्मुख

चन्द्रयीराभातीत्येक क्रियाभिसम्बन्धात् दीपकमित्यर्थः। विशेषणसान्यादिति। मुखपक्षे, गगने वातायनाकाशे, तमः तमोगुणजनितं विरहकालीनं मोहं भिन्दानमित्यर्थकरणादुभयत्रापि विशेषणसाम्य गम्यते मित्याशयः। मुखस्य गम्यत्वात् प्रस्तुते चन्द्रमण्डले गम्यस्य व्यवहारसमारोपादित्यर्थः। स्वकार्य्येति। स्वस्य मन्मथोद्दीपनकालस्य रात्रेरित्यर्थः कार्य्यभूतो यश्चन्द्रप्रकाशस्तस्य वर्णनामुखेन वर्णनद्वारा।

कारिकायां "सन्दिग्धत्वे" इत्यत्राप्यन्वितस्य अलङ्कृतीनाम्' इति पदस्य बहुवचनाविवक्षासूचनाय द्वयोरप्यलंकारोः सन्देहसंकरं दर्शयितुमाह यथा वेति।

## विमला

सन्देहसङ्करातिरिक्तस्थले एकाश्रयस्थितेर्विषयो भविष्यतीति चरमोक्तमपि सन्देहसङ्करं प्रथमं दर्शयति, इदमिति।—सन्ततं—निविड़ं, सम्यग्व्याप्तमिति यावत्, तमः,—अन्धकारं, पक्षे—स्मरकृताज्ञानं, भिन्दानं—खण्डयत्, अमन्दं यथा तथा नयनयोः आनन्दकरम् ऐन्दवं—चान्द्रं, मण्डलविदं गगने आभाति—राजते। "दृढ़मामापि वदनम्—" इति पाठो न रमणीयः, विषयस्य निगरणाभावादति शयोक्तेरसम्भवापत्तेः इदमिति मुखं निर्दिश्येति निर्वचनासङ्गतिप्रसङ्गाच्च; "वदनम्" इत्यत्र "गगनम्" इति पाठोऽपि न सुन्दरः, अव्यावर्त्तकत्वात्, तस्मात् "इदमाभाति रुचिरम्" इति पाठो रुचिरः इत्यवधेयम्] यथा वा—"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्ते चोन्मीखिलमालतीसुरभयः प्रौढ़ाः कदम्बानिलाः। सा चैवास्मि तथाऽपि तत्र सुरतव्यापारलीणाविधौ रेवारोधसि वेतसीतरूतले चेतः समुत्कण्ठते॥" अत्र विभावनाविशेषोक्तयोः सन्देहसङ्करः, तथा ह्युत्कण्ठाकारणाभावे उत्कण्ठाया उत्पत्तौ विभावना, चख कारणाभावो "यः कौमारहरः" इत्यादिना कारणविरुद्धमुखेन प्रतिपादितः तथा च "यः कौमारहरः" इत्याद्युत्कण्ठाधारणसद्भावेऽपि अनुत्कण्ठायाः अनुत्पत्तौ विशेषोक्तिः, सा चानुत्पत्तिः "समुत्कण्ठते"

इति विरोधोत्पत्तिमुखेनोक्ता, अत एव द्वयोरप्यस्फुटत्वमन्यत्रोक्तम्। न चानयोः प्रत्येकं साधकबाधकप्रमाणयोग इति सन्देहसङ्करोऽयम् इति सर्वस्वकाराः।

## लक्ष्मी

क्रमवशेन पूर्वमुदाहर्त्तुं युक्तस्यापि एकाश्रयस्थितिरूपसङ्करस्य अङ्गाङ्गिभावसन्देहसङ्करातिरिक्तो विषय इति एकाश्रयस्थितिरूपसङ्करमनुदाहृत्य प्राक् सन्देहसङ्करमेवोदाहर्त्तुमाह **सन्देहसङ्कर** इति।

**इदमिति**। सन्ततं सम्यग् व्याप्तम्, पक्षे विपुलीभूतं च तमः अन्धकारं मदनजनितमज्ञानं च (कर्म) भिन्दानं विनाशयन्, अमन्दं यथास्यात्तथा नयनयोरानन्दस्तस्य करं विधायकम्, इदं दृश्यमानम्, ऐन्दवमिन्दुसम्बन्धि मण्डलं बिम्बम् आभाति शोभते।

लक्ष्यं समर्थयति—**अत्रेति**। अतिशयोक्तिः इदं पदार्थस्य मुखरूपत्वेऽपि चन्द्रतयाऽध्यवसानात् भेदे अभेदाध्यवसायरूपा। निर्दिर्दश्येत्यनेन मुखस्य अनिगरणमुपपादितम् अत एव रूपकं तद्धि निरङ्गं केवलरूपकम्। **तुल्ययोगितेति**। इदम्पदवाच्यं मुखम् ऐन्दवमण्डलपदवाच्यं चन्द्रबिम्बं च उभयोश्च सन्ततमोभेदानादिरूपस्य धर्मस्य तुल्यतया आभातीत्येकक्रिययाभिसम्बन्धादित्याशयः। **चन्द्रस्याप्रकृतत्वादिति**। मुखस्य च प्रस्तुतत्वादिति व्यज्यते तथा च मुखस्यैव प्रक्रान्तत्वे तदुपमानतयैव चन्द्रनिर्देशे तस्याप्रकृतत्वेन तयोश्चाभातीत्येकक्रियाभिसम्बन्धात् दीपकमित्यर्थः। समासोक्ति दर्शयति—किं वेति। **विशेषणसाम्यादिति**। इदम्पदवाच्यं यदीन्दुमण्डलं प्रस्तुतं विशेषणसाम्यात् मुखव्यवहारश्च यदि प्रतीयते तदा चन्द्रमण्डले मुखस्य व्यवहारसमारोपात् समासोक्ति-

रितिभावः। मुखवर्णनस्यैव प्रक्रान्तत्वेऽप्रस्तुतप्रशंसेत्याह—**यद्वेति**। अप्रस्तुतप्रशंसा समात् (चन्द्रात्) सममुख-रूपा। **स्वकार्येति**। स्वस्य कामोद्दीपनसमयस्य रात्रेरित्यर्थः कार्यभूतो यश्चान्द्रोदयस्तस्य वर्णनामुखेन वर्णना-द्वारा। तथा च इदम्पदेन सम्प्रति सुरतावसर इत्यवगतं चेत् पर्यायोक्तिरित्याशयः। इत्येवं बहूनाम् अतिशयोक्त्यादीनाम्, अलङ्काराणां साधकबाधकाभावेनेतिशेषः।

## रुचिरा

क्रमवशेन प्रागुदाहार्य्यस्यापि एकाश्रयानुप्रविष्टस्य सन्देहसङ्करातिरिक्तो विषय इति एकाश्रयानुप्रविष्ट-त्वमनुदात्य सन्देहसङ्करमेवोदाहर्त्तुमा-**सन्देहसङ्करः। यथा-'सन्ततं** सम्यग्व्याप्तं विपुलीभूतं वा। **तमोऽन्धकारं** स्मरजनितमज्ञानं वा (कर्म्म)। **भिन्दानं** निवर्त्तयन्तम्। **अमन्दनयनानन्दक**ममन्दं यथा स्यात्तथा नयनयोरानन्दस्तस्य करमुत्पादकम्। **ऐन्दव**मिन्दुसम्बन्धि। **इदम्**। **रुचिरम्**। **मण्डलं** बिम्बम्। **आभाति** ॥ ३०८ ॥'

उदाहृतमर्थं निर्दिशति-**अत्रे**त्यादिना। स्पष्टोऽर्थः। इदं तत्त्वम्-इदंपदार्थस्य मुखरूपत्वेऽपि चन्द्र-तयाऽध्यवसानादतिशयोक्तिः 'भेदेऽप्यभेद' इत्युक्तलक्षणा निर्बाधा, इदंपदवाच्यं मुखमुद्दिश्य चन्द्ररूपेण रूपणा-द्रूपकं 'रूपकं रूपितरोपाद्विषये निरपह्नवे।' इत्युक्तलक्षणं च निर्बाधाम्। इदम्पदवाच्यम्मुखमैन्दवमण्डलपदवाच्यं चन्द्रबिम्बं च यदि प्रकृते, तयोश्च सन्ततमोभेदनादिरूपस्य धर्मस्य समानतया निर्देशात्तुल्ययोगिता 'पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्। एकधर्माभिसम्बन्धः स्यात्तदा तुल्य-योगिता ॥' इत्युक्ता च निर्बाधा। इदम्पदवाच्यस्य मुखस्य प्रकृतत्वमैन्दवमण्डलवाच्यस्य च चेच्चन्द्रस्याप्रकृतत्वम्, इत्येवं स्थितौ तयोरेकधर्मत्वेन दीपकम् 'अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते।' इत्युक्तं निर्बाधं च। इदम्पदवाच्यं यदीन्दुमण्डलं प्रकृतं, विशेषणसाम्याद् वदनव्यवहारो वा यदि तत्रावगम्यते तत्समासोक्तिः 'समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥' इत्युक्ता निर्बाधा च। यदि मुखवर्णनं प्रस्तुतं चन्द्रस्याप्रस्तुतस्य पुनर्वर्णनं प्रतिपादितं तदप्रस्तुतप्रशंसा'अप्रस्तुतात्प्रस्तुतं चेद्गम्यते'इत्युक्ता समात् (चन्द्रात्) सम (मुख) रूपा निर्बाधा। 'इद' मित्यादिना वा सम्प्रति सुरतावसर इति बोधितं चेत् पर्यायोक्तिः 'पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते।'इति स्फुटं सम्पद्यते। इति **इत्येवम्। बहूनामतिशयोक्त्यादीनाम्। अलङ्काराणाम्।** 'साध-कबाधकाभावेने'ति शेषः। **सन्देहात्। सन्देहसङ्करः।** सन्देहेन युक्तः सङ्करः।

यथा वा—'मुखचन्द्रं पश्यामि' इत्यत्र किं मुखं चन्द्र इव इवेत्युपमा, उत चन्द्र एवेति रूपकमिति संदेहः। साधकबाधकयोर्द्वयोरेकतरस्य सद्भावे न पुनः संदेहः। यथा—'मुखचन्द्रं चुम्बति' इत्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकम्। चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकम्। 'मुखचन्द्रः प्रकाशते' इत्यत्र प्रकाशाख्यो धर्मो रूपकस्य साधको मुखे उपचरितत्वेन संभवतीति नोपमाबाधकः।

---

## विज्ञप्रिया

अलङ्कारद्वयसन्देहं दर्शयति—**यथा वेति**। मुखचन्द्रं चुम्बतीति मुखस्यानुकूलं चन्द्रतुल्यमुख एव साक्षादन्वितमित्यर्थः। नतु मुखात्मके चन्द्रे सम्भोगचुम्बनासम्भवात्। **चन्द्रस्य तु प्रतिकूलमिति**। मुखनिष्ठस्य चुम्बनस्य मुखाभिन्नत्वेन गृहीतचन्द्रेऽपि परस्परस्याऽसम्भवात्। **प्रकाशाख्य** इति। तिमिरनाशाख्य इत्यर्थः। सच धर्मश्चन्द्रे एव साक्षादस्तीत्यतो विशेष्यत्वेन प्रतीयमाने चन्द्रे साक्षादन्वितत्वाद्रूपकस्य साधक इत्यर्थः। उपमायास्तु न बाधक इत्यत **आह-मुखे उपचरितत्वेने**ति। चन्द्रतुल्यमुखेऽपि चन्द्रधर्मप्रकाशनारोपसम्भवादित्यर्थः।

## कुसुमप्रतिमा

मुखेति। उपमेति। "क्विप्समासगता द्वेधा धर्म्मेवादिविलोपने" इत्युक्तलक्षणा औपम्यवाचकसामान्यधर्म्मयोर्लोपस्थलीया समासगता लुप्तोपमेत्यर्थः। चन्द्र एवेतीति। मुखमिति पूर्वस्मादनुकृष्यते रूपकं निरङ्गकेवलरूपकम्।

तत् किमेव समासमात्र एव उपमारूपकयोः सन्देहसङ्कर इत्याह साधकेति। साधक एकतरस्य प्रतिपादकः, बाधकोऽप्येकतरस्य प्रतिबन्धकः, तयोर्द्वयोरेव सद्भावे, अथवा तयोरेकतरस्य सद्भावे इत्यर्थः।

तत्र साधाकबाधकयोर्द्वयोः सद्भावे उदाहरति मुखचन्द्रं चुम्बतीति। मुखास्यानुकूलं मुखे सम्भवपरम्। चन्द्रस्य तु प्रतिकूलं चन्द्रे असम्भवमित्यर्थः, चुम्बनस्य भूतलस्यकर्तृकत्वात् चन्द्रस्य तु गगनस्थत्वेन बहुदूरवत्तित्वादिति भावः। अत्रेदमवधेयम्—उपमितसमासे उपमेयस्य प्राधान्यं रूपकसमासे तु उपमानस्य प्राधान्यं भासते। तेन "अव्यक्तं प्रधानगामि" इति मीमांसोक्तन्यायेन अन्वये अनियतस्य चुम्बतीतिपदस्य, प्रधानेनैवान्वयो वाच्यः। एवञ्च भूतलस्यजनकर्तृकचुम्बनस्य मुख एव सम्भवात् मुखस्य प्रधान्यप्रतिपादनाय उपमितसमासस्यैवाश्रयणीतया चुम्बतीति पदमेव उपमायाः साधकं रूपकस्य च बाधकमित्युक्तमेव। एवमुत्तरत्रापि बोध्यम्।

साधकबाधकयोरेकतरस्य सद्भावे उदाहरति मुखचन्द्रः प्रकाशत इति। प्रकाशाख्यस्तेजः स्फुरणरूपः। रूपकस्य साधक इति। प्रकाशत इत्यस्य शक्यार्थमादाय चन्द्रान्वयार्थं "मुखचन्द्रः" इत्यत्र मुखमेव चन्द्र इति चन्द्रस्य प्राधान्यप्रतिपादकरूपकसमासस्यैव आश्रयणीयत्वादिति भावः। उपचरित्वेन शोभत इत्यर्थकतया लक्षितत्वेन। नोपमाबाधक इत्यनेन रूपकस्य साधकतामात्रं दर्शितम्।

## विमला

साधकेति ।—साधकं—मुख्यतया उपमाननिष्ठं साधर्म्यं रूपकस्य साधकम् उपमाया बाधकं, तथा मुख्यतया उपयेयनिष्ठं साधर्म्यम् उपमायाः साधकं रूपकस्य बाधकं, तयोरेकतरस्य—साधकस्य बाधकस्य वा इत्यर्थः ।

## लक्ष्मी

**अलङ्कृतीनामि**तिकारिकोक्तपदस्य 'सन्दिग्धत्वे' इत्यत्राप्यन्वयात्तत्रापि पूर्ववदेव बहुत्वमविवक्षितमिति बोधनाय द्वयोरप्यलङ्कारयोः सन्देहसङ्करमुपपादयितुमाह—**यथा** वेति ।

मुखचन्द्र**मिति** । **उपमे**ति । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' २/१/५६ इत्यनेन समासे तस्य च लोपेन 'क्विप्समासगमा द्वेधा धर्मेवादिविलोपने' इत्युक्तस्वरूपा सादृश्यवाचकसाधारणधर्मयोर्लोपस्थलीया उपमितसमागता लुप्तोपमेत्यर्थः॰। **चन्द्र एवेती**ति । मुखमिति पूर्वतोऽनुवर्तते । रूपकं निरङ्गं केवलरूपकम् । तच्च 'मयूरव्यंसकादयश्च' इत्यनेन समासाश्रयणे इति बोध्यम्, उभयत्रापि दोषाभावात् समासस्योभयत्राऽप्युपपत्तिरित्याशयः इति हेतोः सन्देहः ।

ननु साधकबाधकयोरेकतरोपलम्भेऽपि किं सन्देहो भवतीत्याशङ्कायामाह—**साधके**ति । साधक एकतरस्य बोधकः, बाधकोऽप्येकतरस्य निषेधकः, अनयोर्द्वयोरेवोपलम्भे अथवा अनयोरेकतरस्य साधकस्य बाधकस्यैवोपलम्भे इत्यर्थः ।

तत्र साधकबाधकयोरुभयोरुपलम्भे दर्शयति—**मुखचन्द्रं चुम्बती**ति । इत्यत्र समासस्योपमारूपकोभयघटकत्वेऽपि, चुम्बनं मुखसंयोगानुकूलव्यापारः, मुखस्यानुकूलं मुखे सम्भवपरम् चंद्रतुल्यमुख एवान्वितमित्यर्थः, न तु मुखात्मके चन्द्रे सम्भोगचुम्बनासम्भवात् । चन्द्रस्य तु प्रतिकूलं चन्द्रेऽसम्भवमित्यर्थः, तस्य नभोवर्त्तित्वादिति भावः । **बाधक**मिति । अतोऽत्र नालङ्कारद्वयं न वा तस्य सङ्कर इत्याशयः । **अत्रेदम्बोध्यम्**-उपमायां सादृश्यांशे उपमानं विशेषणीकृत्य उपमैव मुख्यत्वेन विशेष्यत्वेन प्रतिपाद्यते अतः प्राधान्यतयोपमेये सम्भवदेव विशेषणं गृह्यते । रूपके तु—अभेदेनोपमेयं गोपयित्वा उपमानमेव मुख्यत्वेन प्रतिपाद्यते । अतः प्राधान्येनोपमाने एवान्वयसमर्थविशेषणं गृह्यते । तस्य उपमेये कथञ्चिदुपचर्यते, अतो विशेषणांशस्य यदि उपमेये सम्भवस्तदोपमा, यद्युपमाने सम्भवस्तदा रूपकमेव । तन 'अव्यक्तं प्रधानागामि' इति जैमिनीयन्यायेन अन्वये, अनिश्चितस्य चुम्बतीतिपदस्य प्रधानेनैव सम्बन्धो वक्तव्यः । तथा च मेदिनीस्थपुरुषकर्त्तृकचुम्बनस्य मुख एव सम्भवात् मुखस्य प्राधान्याभिधानाय उपमितसमासस्यैवावलम्ब्यमानतया चुम्बतीतिपदमेवोपमायाः साधकं रूपकस्य च बाधकमिति प्रतिपादितमेव । एवमग्रेऽपि ज्ञेयम् ।

## रुचिरा

उदाहरणान्तरं निर्दिशति—**यथा-वेत्यादिना** । स्पष्टम् । इदं तत्त्वम् 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ।' २/१/५६ इत्यनेन 'मुखं चन्द्रं इवे'ति समासाश्रयणे उपमा निर्बाधा, 'मुखमेव चन्द्र'इति समासस्य 'मयूरव्यंसकादयश्च ।' २/१/७२ इत्यनेनाश्रयणे रूपकं च । उभयत्रापत्यभावात्समास्योभयथोपपत्तिः । इति । ननु साधकबाधकयोरेकतरसत्त्वेऽप्यस्याङ्गीकारः स्यादित्याशङ्क्याह—**साधके**त्यादि । **द्वयोः** । **साधकबाधकयोः** । निर्धारणार्थेयं षष्ठी सप्तमी वा । **एकतरस्य** साधकस्य बाधकस्यैव वेत्यर्थः । **पुनः** । **सद्भावे** । **सन्देहः** । **न** ।

अतस्तवास्य विषय इति भावः। उदाहरति—**यथा**। **'मुखचन्द्रं चुम्बति'** **इत्यत्र** समासस्योपमारूपकोभयघटकत्वेऽपि। **चुम्बनं** मुखसंयोगानुकूलव्यापारः। **मुखस्य**। **अनुकूलम्**। **इति**। **उपमायाः**। **साधकम्**। **चन्द्रस्य**। **तु**। **प्रतिकूलम्**। **इति**। **रूपकस्य**। **बाधकम्**। अतोऽत्र नालङ्कारद्वयं, न वा तस्य सङ्कर इति भावः। **'मुखचन्द्रः प्रकाशते।'** **इत्यत्र**। **तु** (इदं पूर्वतो वैलक्ष्यण्यद्योतकम्)। **प्रकाशाख्यः**। **धर्मः**। **रूपकस्य**। **साधकः**। **मुखे**। **उपचरितत्वेनोप**चारेण गौण्या लक्षणयेति यावत्। **सम्भवति**। **इति**। **उपमाबाधकः**। 'अपी'ति शेषः। **न** 'अतोऽत्रोपमारूपकयोः सन्देहसङ्कर एवे'ति केचित, 'संसृष्टि'रित्यपरे प्राहुः।

**'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरमं ॥'**

अत्र योषित आलिङ्गनं नायकस्य सादृश्येनोचितमिति लक्ष्म्यालिङ्गनस्य राजन्यसंभवादुपमा-बाधकम्, नारायणे संभवाद्रूपकम् । एवम्—

---

## विज्ञप्रिया

रूपकसाधकमाह—**राजनारायणमि**ति । लक्ष्मीरत्र नारायणस्य पत्नी नतु सम्पत् । अत आह—**योषित** इति । **नारायणे च सम्भवाद्रूपकमि**ति । रूपके नारायणस्यैव विशेष्यत्वात् तत्रैवालिङ्गनान्वयात् ।

## कुसुमप्रतिमा

उपमाबाधकसद्भावेऽप्युदाहरति राजेति । "विध्युद्भावनविख्यातं शङ्खचक्रामभूषितम् ।" इति मत्पूरि-तपूर्वार्द्धम् । लक्ष्मीः, राजा एव नारायणस्तं त्वां निर्भरं दृढम् आलिङ्गति ।

अत्रेति । योषितो नायिकायाः । नायकस्य स्वयोग्यपुरुषस्य, सदृशेन समानस्थान प्रभावजात्यादिना तुल्येन अपरेण पुरुषेण सहेत्यर्थः, उचितं सम्भवपरम्, इति हेतोः । असम्भवादिति । मानुषमात्रस्य राज्ञो लक्ष्मीयो-ग्यनायकापेक्षया स्थानप्रभाव जात्यादिना नितान्यूनत्वादिति भावः । उपमाबायकमिति । लक्ष्मीकर्त्तृकम् "आलि-ङ्गति" इति पदमित्यर्थः । नारायणे सम्भवात् लक्ष्मालिङ्गनस्येति सम्बन्धः । रूपकमिति । प्रदर्शितप्रकाररूपक समासस्यैवाश्रयादिति भावः ।

## विमला

राजेति ।—राजा एव नारायणः तं त्वां लक्ष्मीः निर्भरं—गाढ़म्, आलिङ्गति—आश्रयतीत्यर्थः । "विध्यु-द्भावनविख्यातं शङ्खचक्राब्जभूषितम् ॥" इति स्यादस्योत्तरार्द्धम्; एवं सति रूपकं श्लेषोत्थापितम् । अत्र प्रसङ्गे "पादाम्बुज भवतु ते विजभाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः ।" पादाम्बुजमित्यत्र उपमितसमासे च उपमा-रूपकयोः सम्भवात् सन्देहः, तत्र रूपकसत्त्वे उत्तरपदार्थस्याम्बुजस्य प्राधान्यप्रसङ्गेन तत्र च मञ्जीरादिविशेषणानाम-न्वयानुपपत्तिरूपबाधकसत्त्वादुपमैवेति निर्णयः । "यस्यातिशब्दविषयं चरणारविन्दमुर्त्तमसयन्त्यमितभक्ति...... वराननाः" इत्यादौ नूत्तंसनकार्य्यस्यारविन्दनिरूपितत्वमेवेति । एवं "राजनारायणम्" इत्यत्र उपमायां राजप्राधान्ये लक्ष्मीसमागमानौचित्यापातात् राज्ञि तदुपपादकनारायणतादात्म्यसिद्धयर्थ रूपकमेवेति कौस्तुभाशयः ।

## लक्ष्मी

साधकबाधकयोर्मध्ये कस्यचिदेकतरस्योपलम्भे दर्शयति—**मुखचन्द्रः प्रकाशत** इति । प्रकाशाख्यः तिमिरनाशाख्यः तेजः स्फुरणरूपः । **रूपकस्य साधक** इति । स च प्रकाशाख्यो धर्मश्चन्द्रे एव साक्षादस्तीत्यतो विशेष्यत्वेन प्रतीयमाने चन्द्रे साक्षादुचितत्वादिति चन्द्रान्वयार्थ 'मुखमेव चन्द्र' इति चन्द्रस्य प्राधान्याभिधायकरू-पकसमासस्यैवावलम्ब्यमानत्वादितिभावः । उपमायास्तु न बाधक इत्यत आह—**मुखे** इति । उपचरितत्वेन चन्द्र-तुल्यमुखेऽपि चन्द्रधर्मप्रकाशनारोपसम्भवेन शोभत इत्यर्थकतया लक्षितत्वेन **नोपमाबाधक** इति । अनेन रूपकस्य

केवलं साधकत्वमेवोपपादितम्, अतोऽत्रोपमारूपकयोः सन्देहसङ्कर इति केचित्, संसृष्टिरित्यपरेउपमाबाधकोपलम्भेऽपि दर्शयति—**राजनारायण**मिति।

'चञ्चलाऽपि चिरायात्मदूषणं परिमार्ज्य सा' इत्युत्तरार्धमिति केचित्।

लक्ष्मीः, राजा एव नारायणस्तं त्वां निर्भरं स्थिरप्रेमपूर्वकम् आलिङ्गति।

**अत्रे**ति। लक्ष्मीरत्र नारायणस्य पत्नी न तु सम्पत् अत आह—**योषित** इति। योषितो नायिकायास्तत्कर्तुकमिति भावः। नायकस्य स्वयोग्यपुरुषस्य, सदृशेन तुल्यस्थान-प्रभावजात्यादिना समाने न अन्येन नायकेन सहेत्यर्थः उचितं योग्यम्, इति हेतोः लक्ष्म्यालिङ्गनस्य लक्ष्मीकर्तृकस्याश्लेषस्य। असम्भवात् केवलमनुष्यस्य राज्ञः लक्ष्मीयोग्यपुरुषापेक्षया स्थानप्रभावजात्यादिनात्यन्तमधमत्वादित्यभिप्रायः। उपमाबाधकं लक्ष्मीकर्त्तृकम् 'आलिङ्गति' इति पदमित्यर्थः। नारायणे च सम्भवादिति रूपके नारायणस्यैव विशेष्यत्वात्तत्रैव लक्ष्म्यालिङ्गनस्यान्वयात्। रूपकम् उक्तविधरूपकसमास्यैवाश्रयणीयत्वादिति भावः।

अत्र 'सादृश्येनोचितम्' इति पाठविधाय 'सादृश्येन उचितम्' इत्यर्थ कुर्वाणाः परास्ता इवेत्यस्मद्गुरूचरणाः।

## रुचिरा

**यथा। वा। 'सा** प्रसिद्धा **लक्ष्मीः। चञ्चलाऽ**स्थिरस्वभावा। **अपि। चिराय। आत्मदूषणं** स्वचाञ्चल्यदोषम्। **परिमार्ज्य** निःशेष्य। **निर्भरं** स्थिरप्रेमपूर्वकम्। **राजनारायणं** राजैव नारायणस्तम्। **त्वाम्। आलिङ्गति ॥** ३०९ ॥'

**अत्र। 'योषितस्तत्कर्तृकमिति भावः। नायकस्य। आलिङ्गनम्। सादृश्येन** तत्तदनुरूपेण दाम्पत्येनेति भावः। **उचितम्।' इति। लक्ष्म्यालिङ्गनस्य** लक्ष्मीकर्तृकस्याश्लेषस्य। **राजनि। असम्भवात्।** 'त'दिति शेषः। **उपमाबाधकम्। नारयणे।** सम्भवात्। **रूपकम्।** अयम्भावः—राजा नारायण इवेति समासस्तदैव समगमिष्यत, यर्हि लक्ष्यालिङ्गनौचित्स्यं राजन्यभविष्यत्। अतस्तदभावादुपमाया बाधः, रूपकस्य तु सम्पत्तिः। इति। **एवम्।**

**'वदनाम्बुजमेणाक्ष्या भाति चञ्चललोचनम्।'**

अत्र वदने लोचनस्य संभवादुपमाया: साधकता, अम्बुजे चासंभवाद्ररूपकस्य बाधकता। एवं 'सुन्दरं वदनाम्बुजम्' इत्यादौ साधारणधर्मप्रयोगे 'उपमितं व्याघ्रादिभि: सामान्याप्रयोगे' इति वचनादुपमासमासो न संभवतीत्युपमाया बाधक:। एवं चात्र मयूरव्यंसकादित्वाद्रूपकसमास एव।

---

## विज्ञप्रिया

उपमाया: साधकमाह—**वदनाम्बुजमि**ति। चञ्चलं लोचनं यत्रेति विग्रहेण चञ्चललोचनवत्त्वस्याम्बुजतुल्ये वदने एव सम्भवादुपमाया: साधकतेत्याह। **अत्रे**ति।

एवमनुशासनेनाऽपि यत्रोपमासमासो निषिद्धस्तत्रापि नोपमेत्याह**एवमि**ति। सुन्दरं वदनाम्बुजमित्यादौ साधारणधर्मप्रयोगे उपमासमासो न सम्भवतीत्यत्र उपमाया बाधक इत्यन्वय:। स च धर्मो त्रसुन्दरत्वम्, तस्य उपमाबाधकताग्राहकपाणिन्यनुशासनं दर्शयति—**उपमितिमि**ति। अनेन पाणिनिसूत्रेण साधारणधमप्रयोग एव पुरुषव्याघ्राद्युपमासमास:। एवं बोधनात्साधारणधर्मप्रयोग एव तत्समासो निषिद्ध:। अत्रहीति वचनात् सुन्दरं वदनाम्बुजमिति प्रयोगे उपमासमासे सति न सम्भवतीत्यत: सुन्दरत्वरूपसाधारणधर्माप्रयोगे उपमाया बोध इत्यर्थ:। ननु "मयूर इव पुरुषो व्यंसको विगतभुजमूल" इत्याद्यर्थे व्यंसकत्वादिभावाद् यत्रोपमानस्य पूर्वनिर्देशस्तत्रैव मयूरव्यंसकादित्वमुपमानस्य परनिर्देशे तु नेत्यर्थ:।

## कुसुमप्रतिमा

विशेषणस्य साधकबाधकतायामुदाहरति वदनेति। "तथा भुजलताद्वन्द्वं कृष्णत्कद्व्रणभूषितम्॥" इति मत्पूरितपरार्द्धम्। चञ्चले लोचने यत्र तत्तादृशम्, एणाक्ष्या मृगनयाया नायिकाया:, वदनमम्बुज: पद्ममेव तद्भाति।

अत्रेति। उपमाया: साधकतेति। प्रागुक्तरीत्या वदनस्य प्राधान्यप्रतिपादनार्थमुपमितसमासस्यैवाश्रयणीत्वादिति भाव:। असम्भवात् लोचनयेति सम्बन्ध:।

प्रकारान्तरेण विशेषणस्यैव बाधकबाधकतात्रां प्रयाति सुन्दरमिति। सामान्याप्रयोगे साधारणधर्म्मानुल्लेखे सति व्याघ्रादिभि: परपदै समस्यत इति सूत्रार्थ:। न सम्भवतीति। उदाहृते सुन्दरमिति सामान्यधर्म्मप्रयोगादिति भाव: इति हेतो:, उपमाया बाधक:, सुन्दरमिति सौन्दर्य्यरूपसामान्यधर्म्मप्रयोग इति शेष:। एवञ्च उपमानासम्भवे च।

इदानीमवशिष्टमेकाश्रयस्थितिरूपं सङ्करमुदाहर्त्तुमाह एकेति। एकस्मिन्नाश्रये पादरूपे पदरूपे वा स्थाने अनुप्रवेश: अनेकशब्दालङ्कारस्य अनेकार्थालङ्कारस्य अनेकशब्दार्थालङ्कारस्य वा समावेश:।

## विमला

वदनेति।—एणाक्ष्या:,—हरिणाक्ष्या:, चञ्चले लोचने यत्र तथाविधं, वदनम् अम्बुजमिव तत् वदनाम्बुजं, भाति—शोभते।

## लक्ष्मी

विशेषणस्य साधकबाधकतायां दर्शयितुमाह—**एवमिति**। **वदनाम्बुजमिति**। चञ्चले चपले लोचने नयने यत्र तत्तादृशम्, एणाक्ष्याः मृगलोचनायाः नायिकायाः वदनं मुखम् अम्बुजं पद्ममिव तद्भाति।

लक्ष्यं समर्थयति—**अत्रेति**। **उपमायाः** साधकतेति। प्रदर्शितदिशा वदनस्य प्राधान्योपपत्त्यर्थमुपमितसमासस्यैवाश्रयादित्याशयः। असम्भवात् लोचनस्येति पूर्वेणान्वयः।

पुनरपि भिन्नप्रकारेण विशेषणस्य साधकबाधकतायामुदाहरति—**सुन्दरमिति**। **उपमितं व्याघ्रादिभिरिति**। सामान्याप्रयोगा साधारणधर्माप्रतिपादने सति व्याघ्रादिभिरुत्तरपदैः सुबन्तैः सह उपमितं पूर्वपदं सुबन्तं समस्यत इति सूत्रार्थः। **न सम्भवतीति**। वदनसुन्दराम्बुजमित्यत्र वदनमेव सुन्दराम्बुजमित्येव समासः रूपकसमासस्य मयूरव्यंसकादेराकृति गणत्वेन तेष्वन्तर्भावात्, न तु वदनं सुन्दरमम्बुजमिव इतिवदनं सुन्दराम्बुजमित्यपि वा समासः पाणिनिसूत्रेण साधारणधर्मवाचकाप्रयोग एवोपमितसमासविधानेन प्रकृते सुन्देरतिसाधारणधर्मवाचकस्य प्रयोगात्। इति हेतोः उपमाया बाधकः, सुन्दरमिति सौन्दर्यरूपसाधारणधर्मप्रयोग इति शेषः। एवञ्च उपमितसमासस्य बाधकत्वे चेत्यर्थः। मयूरव्यंसकादित्वात् 'मयूरव्यंसकादयश्च २/१/७२ इति सूत्रेणेति शेषः।

## रुचिरा

'**एणाक्ष्या** मृगनेत्रयाः। **चञ्चललोचनं** चञ्चले लोचने नेत्रे यस्य तथोक्तम्। **रुचिरभ्रुकुटीशालि** रुचिरे ये भ्रुकुटी ताभ्यां शालते शोभते इत्येवम्भूतम्। **मधुरस्मितशोभनं** मधुरस्मितेन शोभनं रमणीयम्। **वदनाम्बुजं** वदनम्मुखमम्बुजमिवेति तथोक्तम्। **भाति**।। ३१० ॥

**अत्र**। वदने मुखे। **लोचनस्य**। **सम्भवात्**। उपमायाः। **साधकता**। **अम्बुजे** कमल। **च**। **असम्भवात्**। **रूपकस्य**। **बाधकता**। **एवम्**। '**वदनाम्बुज**'**मित्यादौ**। **साधारणधर्मप्रयोगे**। 'वदनसुन्दराम्बुज'मित्येवं पाठपरिवृत्ताविति भावः। '**उपमितं व्याघ्रादिभिः सामान्याप्रयोगे**।' २/१/५६ **इतिवचनात्** (इति सूत्रात्)। **उपमा** (उपमाघटक) **समासः**। **न**। **सम्भवति**। **इति**। उपमायाः। **बाधकः** ?'साधारणधर्मप्रयोग' इति शेषः। **एवं** तथासति। **रूपकसमासः**। **एव**। **च**। **अत्र**। **मयूरव्यंसकादित्वात्** 'मयूरव्यसकादयश्च।' २/१/७२ इत्यनेन सूत्रेणेति शेषः। अयम्भावः-'वदनसुन्दराम्बुज'मित्यत्र वदनमेव सुन्दराम्बुजमित्येव समासः, मयूरव्यंसकादिगणगतत्वेन तस्य स्वीकारात्। नतु 'वदनं सुन्दरमम्बुजमिवे'ति वदनं' सुन्दराम्बुज'मित्यपरि वा समासः। एतद्घटकस्य 'उपमितं व्याघ्रादिभिः सामान्याप्तयोगे।' २/१/५६ इति सूत्रस्य सामान्याप्रयोग एव प्रवृत्तेः, अत्र च 'सुन्दरे'ति सामान्यधर्मवाचकस्य प्रयोगात्। इति।

एकाश्रयानुप्रवेशो यथा मम—

**'कटाक्षेणापीषत्क्षणमपि निरीक्षेत यदि सा**
**तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः।**
**सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः**
**परीरम्भारम्भः क इव भविताम्भोरुहदृशः॥'**

अत्र कटाक्षेणापीषत्क्षणमपीत्यत्र च्छेकानुप्रासस्य निरीक्षेतेत्यत्र क्षकारमादाय वृत्त्यनुप्रासस्य चेकाश्रयेऽनुप्रवेशः। एवं चात्रैवानुप्रासार्थापत्त्यलंकारयोः। यथा वा—'संसारध्वान्तविध्वंस' इत्यत्र रूपकानुप्रासयोः। यथा वा—'कुरबका रवकारणतां ययुः' इत्यत्र रवका इत्येकं बकार-वकार इत्येकमिति यमकयोः।

---

## विवृतिः

अव्यावर्तकत्वात्। तस्मात् 'इदमाभाति रुचिरम्' इति पाठो रुचिरः॥ **कटाक्षेणापीति**। सान्द्रादिविशेषणद्वयेन आनन्दस्य ब्रह्मानन्दसदृशत्वं प्रतीयते। सरोमाञ्चादुदञ्चद् उच्चात् कुचकलशान्निर्भिन्नं विगलितं वसनं यत्र सः। **क इवेति**। निरूपम इत्यर्थः। कटाक्षेणापीषत्क्षणमपीति वर्णद्वयघटितस्य क्षकारस्य क्रमस्वरूपाभ्यां सकृत्साम्याच्छेकानुप्रासः। पश्चान्निरीक्षेतेति क्षकारमादाय क्रमस्वरूपाभ्यामसकृत्साम्यसंभवाद्वृत्त्यनुप्रासः। एवं चतुर्थपादेऽपि मकारभकारघटितवर्णपिण्डस्य च्छेकवृत्त्यनुप्रासौ वेदितव्यौ॥

## विज्ञप्रिया

एकाश्रयस्थितिरूपाणामलङ्काराणां सङ्करमाह—**कटाक्षेणे**ति। एकाश्रयश्च क्वचिदेकं वाक्यं क्वचिदेकं पदम्। नचैकवाक्यस्थत्वे संसृष्टिरेवेति वाच्यम्, अङ्गाङ्गिभावे अतथात्वात्। नच तदा अङ्गाङ्गिभावसङ्कर इति वाच्यम्। तदाप्येकाश्रयानुप्रवेशनपायात्।

**कटाक्षेणे**ति। सा नायिका क्षणमर्थान्मामीषदल्पं यदि निरीक्षेत तदा पिहिताशेषविषयः सान्द्र आनन्दः स्फुरति। तदा तस्या अम्बुजाक्ष्याः परीरम्भारम्भः क इव भविता, कटाक्षेणैव कृतार्थोऽहं तत्परिरम्भं नापेक्ष इत्यर्थः। यद्वा कटाक्षपातनतोऽधिकतरः परिरम्भारम्भः क इव भविता, अनिर्वचनीय एव भविता इत्यर्थः। कीदृशः परिरम्भारम्भः। सरोमाञ्चाभ्यामत एवोदश्चद्भ्यां कुचकलशाभ्यां निर्भिन्नं परिभ्रष्टं वसनं यत्र तादृशः।

अत्र वाक्यरूपैकाश्रयसत्त्वं द्विविधानुप्रासयोर्दर्शयति-**अत्रे**ति। छेकानुप्रासोऽनेकस्य व्यञ्जनस्य स्वरूपतः साम्ये सति तच्छेकानुप्रासोक्तत्वात्। संयुक्तानेकवर्णस्य तु आनुपूर्व्यसम्भवात्तादृशेऽनेकस्य क्षकारमात्रस्य सकृच्छेकानुप्रास इत्यर्थः। तादृशस्यैव क्षकारान्तरसाहित्यादेनकधात्वे वृत्त्यनुप्रास इत्याह—**निरीक्षेतेत्यत्रे**ति। अनेकस्याऽसकृत्त्वे वृत्त्यनुप्रासस्योक्तत्वात्। एकाश्रयानुप्रवेश एकवाक्यप्रवेशः। एवं च क्षकारद्वयघटितच्छेकानुप्रासेन क्षकारान्तरसाहित्यवशाद् वृत्त्यनुप्रासजननादङ्गाङ्गिभावसङ्करोऽप्यत्रस्तीत्यतः समासैकपदारूपाश्रयेऽसङ्कीर्णमुदाहरति—आपाततस्तत्रैवानुप्रासार्थापत्त्यलङ्कारयोरेकाश्रयानुप्रवेशं दर्शयति—**एवं चा-**

**त्रैवेति**। कटाक्षपातेनापि सान्द्रानन्दस्फुरणाद् दण्डापूपिकया सिद्धे स्तनपरिरम्भेऽनिर्वचनीयानन्द इत्येवमर्थापत्त्यलङ्कार इत्यर्थः।

समास एकपदेऽङ्गाङ्गिभावसङ्कररहितमेकाश्रयानुप्रवेशसङ्करमाह—**यथा वेति**। **रूपकानुप्रासयोरिति**। कंसनिषूदने सूर्यातारोपणात्। कुरुबका इत्यादि। अएत्र एकवाक्यगतं यमकद्वयम्। नचात्र पूर्वयमकेनोत्तरयमकनिर्वाहादनुग्राह्यानग्राहकतासङ्करोपीति वाच्यम्। कारणतमित्येतदीयरेफपर्यन्तस्योत्तरयमकस्य पूर्वयमकेनाऽपि निर्वाह्यत्वात्। एवं 'कलकलोलकलोलदृशे'त्यत्रापि लकलो लकलो कलोल कलोल इति यमकद्वयम्।

## कुसुमप्रतिमा

कटाक्षेणेति। काञ्चित् किशोरौ कुमारीमवलोक्य कस्यचित् साभिलाषोक्तिरियम्। सा नायिका यदि क्षणमपि कटाक्षेणापि ईषदपि निरीक्षेत मां पश्येत्, तदा सान्द्रो निविडः, तथा पिहिता आवृता अशेषा सकला विषया येन स तयाविधः सर्वविषयवर्त्तीत्यर्थः, आनन्दः स्फुरति चित्ते प्रकाशते। किन्तु अम्भोरुहे पद्मे इव दृशौ चक्षुषौ यस्यास्तस्याः, सरोमाञ्ची कामवेशात् सपुलकौ, अतएव उदञ्चन्तौ बाहुल्येनोन्नतीभवन्तौ यो कुवकलसौ ताभ्यां निर्भिन्नमुदीर्णं ततो निपतितं वा वसनं यस्मिन् स तादृशः, परीरम्भारम्भ आलिङ्गनारम्भः, क इव भविता तन्न जाने इत्यर्थः। अनिर्वचनीयानन्ददायको भविष्यतीति भावः।

अत्रेति। छेकानुप्रासस्येति. ककारषकारघटितक्षकारस्य स्वरूपतः क्रमतश्च सकृत्साम्यादिगधाशयः। इत्यत्र स्थितिमिति शेषः। वृत्त्यनुपासस्य चेति। तृतीयक्षकारग्रहणे चकाराणां बहुतया स्वरूपतः क्रमतश्च असकृत्सम्येन "यमकृदाप्यनेकधा" इति लक्षणसङ्गतेरिति भावः। चतुर्थ चरणेऽप्येवमेव सङ्करः समुन्नेयंः।

एवञ्चेति। अपि चेत्यर्थः। अनुप्रासः प्रदर्शितप्रकारच्छेकानुप्रासवृत्त्यनुप्रासात्मकः, अर्थापत्तिश्च "पूर्णदृष्ट्या दर्शने का कथा कटाक्षेणापि" "अधिकदर्शने का कथा ईषदपि" "बहुकालं यावद्दर्शने वा कथा क्षणमपि इत्येव रूपत्रितयात्मिका तयोः, एकाश्रयेऽनुप्रवेश इति पूर्वेण सम्बन्धः।

एकपदरूपैकाश्रयेविजातीयानेकालङ्कारानुप्रवेशं दर्शयितुमाह यथा वेति।

संसारेति। अत्र रूपकं निरङ्गकेवलरूपकम्, अनुप्रासश्च च्छेकस्तयोः एकाश्रये अनुप्रवेशं इति पूर्वेण सम्बन्धः। एवञ्च ईदृशेन सङ्करेणापि सह "पायादपायात्" अत्र स्थितस्य यमकस्य संसृष्टिरित्यवधेयम्।

एकपादरूपैकाश्रयेसजातीयानेकालङ्कारानुप्रवेशमुदाहर्तुमाह यथा वेति।

## विमला

कटाक्षेणापीति। —यदि सा कटाक्षेण ईषत्क्षणमपि—अल्पक्षणमपि, निरीक्षेत—पश्येत्, तदा पिहितः,—आच्छादितः, अशेषः,—निखिलः, विषयः येन तादृशः, सान्द्रः,—घनः, आनन्दः स्फुरति—उदेतीत्यर्थः, सान्द्रादिविशेषणद्वयेन आनन्दस्य ब्रह्मानन्दसदृशत्वं प्रतीयते; अम्भोरुहे इव दृशौ यस्याः तथाभूतायाः तस्याः, सरोमाञ्चं—सपुलकं यथा तथा, उदञ्चद्भ्यां—स्फीततां गच्छद्भ्यां कुचकलसाभ्यां—कलससदृशस्तनाभ्यां, निर्भिन्नसरोमाञ्चं—सपुलकं यथा तथा, उदञ्चद्भ्यां—स्फीततां गच्छद्वयां कुचकलसाभ्यां—कलससदृशस्तनाभ्यां, निर्भिन्नं—विगलितं, छिन्नं वसनं यत्र तादृशः, अथवा सरोमाञ्चात्जात पुलकात, उदञ्चतः,—उच्चात्, कुचकलसान्निर्भिन्नं—विगलितं, वसनं यत्र सः, परीरम्भारम्भः,—आलिङ्गनव्यापारः, क इव—कीदृगिव, निरूपम इत्यर्थः, भविता ?—तत्र कियानानन्दो भवितेति न जाने इति भावः। शिखरिणीवृत्तं—"रसै रुद्रैश्छिन्ना यमनसभला गः, शिखरिणी" इति च

तल्लक्षणम् । यथा वा—"स्पष्टोल्लसत्किरणकेसरसूर्य्यबिम्बविस्तीर्णकर्णिकमयो दिवसारविन्दम् । श्लिष्टाष्टदिग्दलकपालमुखावतारबद्धान्धकारमधुपावलि सञ्चुकोच ॥" अत्र रूपकानुप्रासौ एकपदानुप्रविष्टौ स्पष्टौ । प्राञ्चस्तु अर्थालङ्कारयोरपि उक्तरूपसङ्करमङ्गीकुर्वन्ति । वाचकानुप्रवेशेत्यत्र वाचकत्वस्य वाच्यनिरूपितत्वात् वाच्ययोरेवानुप्रवेशः प्रतिभाति, उदाहरणं यथा—"सत्पुष्करद्योतितरङ्गशोभिन्यभेदमारब्धमृदङ्गवाद्ये । उद्यानवापीपयसीव यस्यामेणीदृशो नाट्यगृहे रमन्ते ॥" अत्राद्यविशेषणे शब्दमात्रासाम्यं श्लेषः, द्वितीयेऽर्थसाम्यमुपमा, तदुभयमप्येकस्मिन् इवपदेऽनुप्रविष्ट, नाट्यगृहवापीपयसोरूपमायामिवशब्देन तयोः साधारणधर्मतया बोधनादिति । अत्र दीक्षताः; —तद्युक्तं, सत्पुष्करेत्यत्र श्लेषसत्त्वेऽपि तद्बोध्यार्थद्वयस्य भेदऽप्यभेदरूपातिशयोक्तिमहिम्ना ऐक्यविवक्षया तत्रापि धर्मसाम्यस्य प्रतिपादितत्वेन शब्दसाम्यस्य तत्रानभिमतत्वात्; अन्यथा "अहो रागवती सन्ध्या" इत्यादौ विशेषणसाम्याभावेन श्लिष्टविशेषणकसमासोक्त्यनुपपत्तेः, अस्तु वा शब्दसाम्यमिव-प्रतिपाद्यं, तथाऽप्युपभावाचकत्वात्तस्य श्लेषवाचकत्वमनुपपन्नमेव; तस्मात् यत्रैकस्मिन्नेवार्थे प्रतिपाद्यमानेऽलङ्कारद्वयलक्षणसम्भवादलङ्कारप्रतीतिः, तत्रैकवाचकानुप्रवेशरूपसङ्करः । यथा वा—'विधुकरपरिरम्भादात्मनिस्यन्दपूर्णैः शशिदृषदुपकॢप्तेरालबालैस्तरूणाम् । विफलितजलसेकप्रक्रियागौरवेण व्यरचि स हतचित्तः तत्र भेमौवनेन ॥" अत्र समृद्धिमद्वस्तुवर्णनादुदात्तम्, असम्बन्धे सम्बन्धकल्पनाच्चातिशयोक्तिः, न चोदात्तस्य यथोक्तातिशयोक्तिव्याप्यत्वेन विविक्तविषयाभावात् कथमेतदिति वाच्यम्; दिव्यलोकसम्पद्वर्णने उदात्तस्यातिशयोक्त्यव्यभिचारेण, शौर्य्यदारिद्रयादिवर्णने चातिशयोक्तेरुदात्तव्यभिचारेण, प्रकृते द्वयोः समावेशात् । नचानयोरङ्गाङ्गिभावः, एकस्याद्यनुपजीवकत्वात्; नापि समप्राधान्यम्, उदात्तप्रतिपादकशक्तेरेवातिशयोक्तिवस्थायनात्; नापि सन्देहः, एककोटेरपरकोटिप्रतिक्षेपकत्वाभावादित्याहुः; तदसत्, स्वम्बजन्मताऽवच्छेदकीभूत-वैजात्यावच्छिन्नचमत्कारनिष्ठकार्य्यताप्रतियोगिक-कारणताऽवच्छेदकधर्मवत्तया प्रकृतेऽप्येककोटेस्तदन्यणोटिविरोधित्वेन सन्देहस्योपपत्तेः, एतद्विलक्षणायाः प्रतिक्षेपकतायाः अलङ्कारमात्रेऽपि दुर्बलत्वात् । प्राचां त्ववमाशयः, उपमाप्रकरणे यादृशधर्मोक्तौ श्लेषेणानुगामित्वेन च तदुक्तिव्यवहारसादृश्यमेव, भेदमाश्रित्यं "सत्पुष्करद्योतित" इति उदाहरणं, तदुपादानञ्चेवशब्देन सम्भवत्येव, तस्य साधारणधर्मवाचकतायाः अप्यङ्गीकारात्, एतेन शब्दसाम्यस्य इवशब्दप्रतिपाद्यत्वेऽपि तस्योपमावचित्वस्यैव प्राप्त्या श्लेषवाचकत्वाभावादित्यापास्तम् । श्लेषत्वेन रूपेण तस्यैव शब्दवाच्यत्वाभावेऽपि श्लेषवाच्यार्थद्वयस्य साधारणधर्मत्वेन इवपदयोस्तुव्यवस्थावश्यकत्वात्, तावतैव प्रकृतोदाहरणोपपत्तेरिति दिक् ।

अत्रेति ।—"कटाक्षेणापीषत्वाक्षणमपि" इति वर्णद्वयघटितस्य चकारस्य क्रमस्वरूपाभ्यां सुकृत् साम्यात् छेकानुप्रासः, पश्चात् "निरीक्षेत" इति चकारमादावक्रमस्वरूपाभ्यामञ्चकृत् साम्यसम्भवात् वृत्त्यनुप्रासः, एवं चतुर्थपादेऽपि मकार-मकारघटितवर्णपिण्डस्य छेकवृत्त्यनुप्रासौ वेदितव्यौ इति ।

## लक्ष्मी

सम्प्रति पारिशेष्यादेकाश्यस्थितिरूपसङ्करं प्रदर्शयितुमाह—**एकाश्रयेति** । एकत्राश्रये पदरूपे पादरूपे वाक्यरूपे वा स्थाने अनुप्रवेशः विविधशब्दालङ्कारस्य विविधार्थालङ्कारस्य विवधोभयलङ्कारस्य वा समावेशः ।

**कटाक्षेणापीषदिति** । काञ्चिन्नवयौवनामुद्वीक्ष्य मनसा भावयतः कस्यचित् साभिलाषोक्तिरियम् । सा मनोरमतया प्रसिद्धा नायिका यदि क्षणं किञ्चित्कालमपि कटाक्षेणापि ईषत् अल्पमपि निरीक्षेत मामवलोकयेत्, तदा सान्द्रो निबिडः, तथा पिहिता आच्छादिता अशेषाः समग्रा विषया येन स तथोक्तः सर्वविषयवर्त्तीत्यर्थः, आनन्दः प्रमोदः स्फुरति हृदये दीप्यते । किन्तु अम्भोरुहे कमले इव दृशौ नयने यस्याः तस्याः कमलनयनायाः नायिकाया

इत्यर्थः, सरोमाञ्चौ स्मरावेशात् सपुलकौ, अत एव उदञ्चन्तौ वर्धमानौ यौ कुचकलशौ ताभ्यां निर्भिन्न छन्न ततः परिभ्रष्टं वा वसनं यत्र स तथोक्तः, परीरम्भस्यालिङ्गनस्यारम्भः प्रारम्भः क इव भविता कटाक्षेणैव कृतार्थोऽहं तत्परिरम्भं नापेक्ष इत्यर्थः, यद्वा कटाक्षपातनतोऽधिकतरः परीरम्भारम्भः ! क इव भविता तज्ज्ञातुं न शक्यते अवाङ्मनसगोचरानन्ददायको भविष्यतीतिभावः । **शार्दूलविक्रीडितं** छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

लक्ष्यं समर्थयति—**अत्रेति** । **छेकानुप्रास** इति 'छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा' इत्यनेनानेकस्य व्यञ्जनस्य स्वरूपतः क्रमतश्च साम्ये सति छेकानुप्रासस्योक्तत्वात्, संयुक्तानेकवर्णस्य तु आनुपूर्व्यसम्भवात् तादृशेऽनेकस्य ककारषकारसंयुक्तक्षकारस्य सकृत्साम्याच्छेकानुप्रास इत्यर्थः । इत्यत्र स्थितमिति शेषः । तादृशस्यैव क्षकारान्तरसाहित्यादनेकधावे वृत्त्यनुप्रास इत्याह—**'निरीक्षेत'** इति । **वृत्त्यनुप्रासस्य** चेति । तृतीयक्षकारग्रहणे क्षकारणामनेकत्वात् स्वरूपतः क्रमतश्च असकृत् साम्येन 'असकृद्वाप्यनेकधे'तिलक्षणसमन्वयाद्वृत्त्यनुप्रास इति भावः । अनयोरेकस्मिन् पादरूपे आश्रये समावेशः । एवं च क्षकारद्वयघटित छेकानुप्रासेन क्षरान्तरसाहित्यवशात् पादरूपे आश्रये समावेशः । एवं च क्षकारद्वयघटितछेकानुप्रासेन क्षरान्तसाहित्यत्वात् वृत्त्यनुप्रासजननादङ्गाङ्गिभावसङ्करोऽप्यत्राऽस्तीत्यतः समासैकपादरूपाश्रयेऽसङ्कीर्णमुदाहरणे मृग्यम् । एवमेव तुरीयपादेऽपि मकारभकारयुक्तवर्णपिण्डस्य सत्त्वाच्छेकवृत्त्यनुप्रासाभ्यां सङ्करः समुन्नेयः ।

आपातत उक्तोदाहरण एवानुप्रासार्थापत्त्यलङ्कारयोरेकाश्रयानुप्रवेशं दर्शयति—**एवञ्चेति** । अपि चेत्यर्थः । अनुप्रास उक्तविधच्छेकानुप्रासवृत्त्यनुप्रासात्मकः, अर्थापत्तिश्च पूर्णदृष्ट्याऽत्रलोकने का कथा कटाक्षेणापि, अधिकावलोकने का कथा ईषदपि, अधिकसमयं यावदवलोकने का कथा क्षणमपि' इत्येवं त्रिस्वरूपात्मिका । तथा च कटाक्षपातदिनापि सान्द्रानन्दस्फुरणात् तण्डापूपिकया सिद्धे स्तनपरिरम्भेऽनिर्वचनीयानन्द इत्येवंरूपा वा तयोः एकाश्रयेऽनुप्रवेश इति पूर्वेणान्वयः ।

एकपदरूपैकाश्रये विभिन्नविविधालङ्कारास्यानुप्रवेशमुपपादयितुमाह—**यथा** वेति ।

**संसारेति** । संसार एव ध्वान्तं तमस्तस्य विध्वंसे विनाशे हंसः सूर्यः । अत्र कंसनिषूदने हंसत्वेन रूपणाद्रूपकम्, केवलं निरङ्गरूपकम्, धकारोत्तरवकारघटितवर्णसाम्येन छेकानुप्रासश्च तयोः, एकाश्रयेऽनुप्रवेश इति पूर्वेणान्वयः अत्रानुप्रासस्य शाब्दत्वं रूपकस्य चार्थत्वमित्युभयालङ्कारः, इत्थञ्च एवंविधेन सङ्करेणापि सह 'पायादपायात्' इत्यत्र विद्यमानस्य यमकस्य संसृष्टिरिति ध्येयम् ।

एकपादरूपैकाश्रये समानानेकालङ्कारानुप्रवेशं दर्शयितुमाह—**यथा** वेति ।

**कुरवकेति** । पादत्रयपूर्वकमिदं पद्यं यथा—

> **'विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः ।**
> **मधुलिहां मधुदानविशारदाः कुरवकारवकारणतां ययुः ॥'**

रघुवंशस्य पद्यमिदम् । मधुना वसन्तकालेन विरचिताः जनिताः, उपवनश्रियाम् उद्यानश्रीणाम्, पत्रविशेषकाः पत्रावलीतिलक इव मधुदाने पुष्परसदाने विशारदाः कुशलाः, कुरवका रक्तवर्णाः कुसुमविशेषाः 'तत्र शोणे कुरवक इत्यमरः, मधुलिहां भ्रमराणाम् रवकारणतां ध्वनिपरत्वहेतुतां ययुः प्रापुः, इत्येकं 'यमक'मिति शेषः । एवमुत्तरत्रापि । यमकयोरेकाश्रये अनुप्रवेश इति पूर्वेण सम्बन्धः । नचात्र पूर्वयमकेनोत्तरयमकनिर्वाहादङ्गाङ्गिभावसङ्करोऽपीति वाच्यम्, 'कारणता'मित्येतदीयरेफपर्यन्तस्योत्तरयमकस्य पूर्वयमकनापि निर्वाह्यत्वात् । एवं 'कलकलोलकलोलदृशे'त्यत्रापि 'कलोलकलोलकलोलकलोल' इतियमकद्वयमनुसन्धेयमिति विज्ञप्रियादयः ।

## रुचिरा

एकाश्रयत्वमुदाहर्त्तुमाह—**एकाश्रयानुप्वेशः**। **यथा**। **मम—'सा** मनोमतया प्रसिद्धा कान्ता। **यदि**। **ईषतक्षणं** किञ्चित्क्षणावधि। **अपि**। **कटाक्षेण**। **अपि**। **निरीक्षेत**। **तदा**। **पिहिताशेषविषयः** पिहिता अशेषा विषया येन तादृशः। अत एव—**सान्द्रो** निबिडः। **आनन्दः** प्रमोदः। **स्फुरति**। अथ-**अम्भोरुहदृशो**ऽम्भोरुहे इव दृशौ यस्यास्तस्याः, कमलनेत्रायास्तस्याः कान्ताया इत्यर्थः। **सरोमाञ्चोदञ्चकुचकलशनिर्भिन्नवसनः** सरोमाञ्चमुदञ्चन्तौ वर्धमानौ कुचकलशौ ताभ्यां निर्भिन्न छिन्न वसनं यत्र तादृशः। **परीरम्भारम्भः** परीरम्भस्याश्लेषस्यारम्ः। 'उपसर्गस्य घञ्चमनुष्ये बहुलम्।' ६/३/१२२ इति दीर्घः। **कः**। **इव**। **भविता**। तत्र कियान् प्रमोदो भावीति न वेत्तुं शक्यत इति भावः। मनसा कामपि भावयतः कस्याप्युक्तिरियम्। शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक्॥ ३११॥'

उदाहृतमर्थं निगमयति—**अत्रे**त्यादिना। स्पष्टोऽर्थः। अयम्भावः—'छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा।' इत्युक्तः छेकानुप्रासः 'अनेकस्यैकधा-साम्य'-मित्याद्युक्तो वृत्त्यनुप्रासश्च क्षकारमादायोत्तम्भितशरीरौ। अनयोच्चैकस्मिन् पादरूपे आश्रये प्रवेशः। विवृतं चैतत्तर्कवागीशैः 'कटाक्षेणापीषत्क्षणमपी' त्यत्र वर्ण (क्-ष्)-द्वयघटितस्य क्षकारस्य क्रमस्वरूपाभ्यां सकृत्साम्याच्छेकानुप्रासः, पश्चात्-'निरीक्षेत'ति क्षकारमादाय क्रमस्वरूपाभ्यामसकृत्साम्यसम्भवाद् वृत्त्यनुप्रासः। एवं चतुर्थपदेऽपि मकारभकारघटितवर्णपिण्डस्य च्छेकवृत्त्यनुप्रासौ वेदितव्यौ।' इति। अयं च सङ्कर एवपादाश्रयः, एकपद्याश्रयस्तु-अनुप्रासार्थापत्त्यलङ्कारयोः, तथा हि—अनुप्रासश्छेकवृत्त्यात्मा दर्शित एव, अथ—'दण्डापूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते' इत्युक्तोऽर्थापत्त्यलङ्कारः 'क इवे' त्यत्रार्पितः। इति। इदं बोध्यम्-एकाश्रयत्वे तिलतण्डुलन्यायस्य चरितार्थत्वेन संसृष्टिस्वीकारौचित्येऽपि प्राचामादेशेन सङ्करस्वीकारः। यद्यपि-एकपदाश्रययोः सजातिकियोरलङ्कारयोर्मिश्रणं नीरक्षीरन्यायानुगतमिति तत्र सङ्करः, अन्यथा संसृष्टिः। यथोदाहरिष्यमाणे 'अहिणअ' इत्यत्रोपमारूपकयोरेकपदाश्तत्वात्सजातीयत्वान्मिश्रणं सङ्कर इति ज्यायः। एवमुदाहृतेऽनुप्रासयोः सजातीयत्वेऽपि एकपदाश्रितत्वाभावेन मिश्रणं संसृष्टिः, अनुपसार्थापत्त्योस्तु विजातीयत्वेनैकपदाश्रितत्वाभावेन च मिश्रणं संसृष्टिः स्फुटेति विभागः कर्त्तुं शक्यते। अत एव-विषयस्फुटीकरणायानैकधोदाहृत्यान्ते 'अहिणअ' इत्येवोदाहृतमिति च वक्तुं शक्यं तथाऽपि 'कटाक्षेणापीषत्क्षण'मित्यत्र च्छेकवृत्त्योरेकपदाश्रयत्वाभावेऽपि एकपादाश्रयत्वेन नीरक्षीरन्यायस्य सुचरितत्वेन च सङ्कर इति सहृदयाः। एवमनेकपदाश्रयत्वेऽपि एकपादाश्रयत्वेन सङ्करोपपत्तौ एकाश्रयत्वे क्वचित्सङ्करः क्वचित् संसृष्टिरिति कल्पनमयुक्तम्, विषयान्वेषणक्लिष्टत्वापत्तेः। अत एव-शब्दार्थयोरेकपदगतत्वेन एकाश्रयानुप्रविष्टत्वेऽपि नीरक्षीरन्यायस्य सुचरितत्वाभावेन मिश्रणस्य संसृष्टिरूपत्वम्, अथाऽपि तत्रैष एव सङ्करः प्रकाशकारादिभिरुदाहृत्याङ्गीकृतः। इति।

शाब्दार्थावलङ्कारावुदाहरति—**यथा वे**त्यादिना। स्पष्टम्। इदं तत्त्वम्-अत्र हि कंसनिषूदनस्य हंसत्वेन रूपणाद्रूपकम, धकारोत्तरवकारघटितवर्णसाम्येन चानुप्रासः। एवमनुप्रासस्य शाब्दत्वं रूपकस्य चार्थत्वम्। इति।

पुनरुदाहरति—**यथा वा—'कुरबका** रक्तवर्णा अम्लानाः। 'तत्र शोणे कुरवक्र" इत्यमरः। **रवकारणतां** ध्वनि परत्वनिमित्ततं मित्यर्थः। 'मधुलिहा'मिति पूर्वतोऽनुषज्यते। **ययुः**। अस्य पूर्वपादत्रयं 'विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः। मधुलिहां मधुदानविशारदाः' इति। रघुवंशस्येदं पद्यम्। द्रुतविलम्बितं वृत्तं, तल्लक्षणं चोक्तं प्राक्॥' उदाहरणीयं सूचयति—**इत्यत्रे**त्यादिना। स्पष्टम्।

यथा—

**'अहिणअपओअरसिएसु पहिअसामाइएसु दिअहेसु।**

**रहसपसारिअगीआणं णच्चिजं मोरविन्दाणम्॥'**

अत्र 'पहिअसामाइएसु' इत्येकाश्रये पथिकश्यामायितेत्युपमा। पथिकसामाजिकेष्विति रूपकं प्रविष्टमिति।

---

## विवृत्तिः

एकपदे संकरमाह—**अहिणअ इति**। 'अभिनवपयोदरसितेषु पथिक! श्यामायितेषु दिवसेषु। रभसप्रसारितग्रीवाणां नृत्यं मयूरवृन्दानाम्॥' इति संस्कृतम्। महति उत्सवायते। पथिकानां प्रियाविरहदुःखेन श्यामत्वम्, दिवसानां मेघेनेत्युपमा। **पक्षे**—पथिका एव सामाजिकास्तेषु नाट्यदर्शनिन सामाजिकानामुत्सवो भवतीति रूपणम्। पथिकानां मयूरनृत्यं सुखदं न भवतीति महतीत्युक्तम्। वस्तुतस्तु 'मुखचन्द्रं पश्यामि' इत्यादौ यथा समासद्वयसंभवात्संदेहः, तथेहापि 'पाहि असामाइएसु' इति प्राकृतमोनिशब्दद्वयसंभवात्संदेह एवेत्यवधेयम्। एवं चैकपदवृत्तिसंकस्योदाहरणम् 'संसारध्वान्तविध्वसं हसंः, इत्याद्यवगन्तव्यम्। यथा वा— मनो विद्वं सरोजा क्षी स्मरशक्त्या मुनिर्भरम्। सा येद्विसृजते गाढं स्वास्थ्यमालम्बते खलु॥' इत्याद्युदाहरुामुन्नेयमिति॥

(श्रीद्द गुरुचरणार्पणस्तु)

## विज्ञप्रिया

उपमारूपकयोरप्येकाश्रयानुप्रवेशं दर्शयति—अहिणअ इति।

**"अभिनवपयोदरसिकेषु पथिकसामाजितेषु दिवसेषु।**

**महति प्रसारितगीतानर्तितकं मयूरवृन्दानाम्॥"**

इति संस्कृतम्। प्रसारितं गीतं यत्रेति तादृशं मयूरवृन्दानामानर्तितकं नृत्ययुक्तविशेषणकेषु दिवसेषु महति पूज्यं भवति शोभते इत्यर्थः। मह पूजायामिति धातुः। नृत्योचितं दिवसविशेषणमाह—**अभिनवेति**। अभिनवपयोद एव रसिका रसवन्त एव नृत्यदर्शनार्थं रसवन्तो यत्र तादृशेषु। तथा पथिकाः सामाजिका इव नृत्यादिदिवृक्षुसमाजप्रधानानीव यत्र तादृशेषु। अत्र रसिकसामाजिकानां समाजप्रधानतुल्यानां च नृत्यदर्शिनामाश्रयत्वेन दिवसानां नृत्यसत्तारूपकं व्यङ्ग्यमवधेयम्।

अत्रोपमारूपकयोरेकाश्रयानुप्रवेशं दर्शयति—**अत्रेति**। पथिकाःश्यामायिता यत्रेत्युपमेत्यर्थः। पथिकसामाजिकेषु इत्यत्रैव दिवसेषु व्यङ्ग्यरूपकं दर्शयति। पथिकाः सामाजिका येषु इति। सामाजिका एव येष्वित्यर्थः। **प्रविष्टमितिव्यङ्ग्यसत्तारूपकमित्यर्थः**।

## कुसुमप्रतिमा

कुरवका इति। "विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः। मधुलिहा मधुदानविशारदाः— " इति माघे प्रथमचरणत्रयम्। मधुना वसन्तकालेन विरिचिता उत्पादिताः, उपवनश्रियामुद्यानलक्ष्मीणाम, पत्रविशेषकाः पत्रावलीतिलका इव मधुदाने मकरन्दवितरणे विशारदा दक्षाः, कुरवकाः कुसुमविशेषाः, मधुलिहां भ्रमरणाम्, रवकाराणतां गुञ्जनहेतुतां ययुः प्रापुः। इत्येकं यमकमिति शेषः। एवं स्यरत्रापि। यमकयोरेकाश्रये अनुप्रवेश इति पूर्वेणान्वयः।

एकपदरूपैकाश्रये अनेकार्थालङ्कारानुप्रवेशं दर्शयितुमाह पुनर्यथा वेति।

अहिणअ इति। "अभिनवपयोदरसितेषु पथिकश्यामायितेषु (पथिकसामाजिकेषु) दिवसेषु। महति प्रसारितग्रीवाणां नृत्यं मयूरवृन्दानाम्॥" इति संस्कृतानुवादः। गाथासप्तशतीस्यमिदं पद्यम्। अभिनवानां पयोदानां मेघानां रसितानि गर्जितानि येषु तेषु पथिका विदेशवासिनः प्रियाविरहिण इत्यर्थः। श्यामायिताः कामवेदनया श्यामाङ्गवदाचरिता येषु तेषु पथिकसामाजिकेषु इति पक्षे तु पथिका एव सामाजिकाः सभ्या नित्यदर्शिनो येषु तेषु, दिवसेषु वर्षाकालीनदिनेषु, प्रसारिता लम्बीकृता ग्रीवा यैस्तेषां मयूरवृन्दानाम्, नृत्यं कर्तृ, महति मह उत्सव इवाचरति।

अत्रेति। उपमा क्यङ्गतेत्यर्थः। रूपकञ्च निरङ्गकेवलरूपं पर्य्यालोचने तु "पथिकसामाद् एसु" इत्यत्र पथिकाः श्यामायिता येषु इत्यनुवादः? उत पथिका एव सामाजिका येषु इत्यनुवाद इत्येवमनुवाद सन्देहेनैव उपमारूपकयोः सन्देहात सन्देहसङ्कर एव युक्त इत्यवधेयम्। तेन "राजहसगतिप्रापिपदपद्मेयमागता" इत्युदाहरणं दृश्यम् अत्र हि "राजहंसगतिप्रापिपदपद्मा" इत्येकपदरूपैकाश्रये निदर्शनालुप्तोपमारूपयोरलङ्कारनुप्रवेशः।

ग्रन्थ समाप्त्यादीनाम् पूर्वक ग्रन्थस्य पूर्णतां सूचयितुमाह श्रीचन्द्रेति। हे सुधियः! पण्डिताः! यूयन श्री चन्द्रशेखरो नामालङ्कादिषु चन्द्र इव तस्य महाकविषु श्रेष्ठस्य श्रीचन्द्रशेखरस्येत्यर्थः सूनुः पुत्रो यः श्रीविश्वनाथो नाम कविराजः कवीनां मध्ये श्रेष्ठ इति तात्पर्य्यम्, तेन कृतम्, साहित्यदर्पणं नाम अमुं प्रबध्यत इति प्रबन्धो ग्रन्थस्तम्, विलोक्य आद्योपान्तं समालोच्य, सुखमेव विस्रष्टत्वादनायाजमेव यथा स्यात्तथा, अखिलं सकलं साहित्यस्य काम्यस्य तत्त्वं स्वरूपं ज्ञातव्यविषयमित्यर्थः वित्त जानीत। एतेनास्मिन् ग्रन्थे काव्यस्य ज्ञातव्यविषयाः सर्व एव निबद्धा इति ग्रन्थान्तरापेक्षया अस्य पूर्णतया प्राधान्यं द्योतितम्। हन्त! पूर्णः खलु ग्रन्थे, किन्तु स्वकीयस्थानसमयादिपरिदयाप्रदानादपूर्णैव चिरमितिहास लिप्सुनामाकाङ्क्षा।

## विमला

एकपदे सङ्करमाह, अहिण्य इति।—["अभिनवपयोहरसितेषु पथिकश्यामायितेषु [पथिकसामाजिकेषु] दिवसेषु। महति प्रसारितयौवाणां इत्थं मयूरवृन्दानाम्॥' इति संस्कृतम्।] अभिनवं—नूतनं, पयोदानां—मेघानां, रसि—गर्जितं येषु तथोक्तेषु, यद्वा—अभिनवानां नवोदितानां, पयोदानां रसितं येषु तथोक्तेषु पथिकाः,—प्रवासिनः, श्यामायिताः,—प्रियाविरहदुःखेन मलिना इव आचरन्तः येषु तादृशेषु,—पक्षे—पथिका एव सामाजिकाः,—नृत्यकलद्रष्टारः येषु तथोक्तेष्वित्यर्थः, दिवसेषु—दिनेषु, वर्षासु इत्यर्थः, प्रसारिता—विस्फारिता, ग्रीवा यैः तेषा, मयूरवृन्दानां नृत्यं महति—उत्सवायते इत्यर्थः, अथवा—पथिकेति सम्बोधनं, श्यामायितेषु मेघेनेति भावः, दिवसेषु इत्यस्य विशेषणमिति च बोध्यम्।

## लक्ष्मी

एकपदरूपकाश्रये विविधार्थालङ्कारानुप्रवेशमुदाहर्त्तुमाह पुनः—यथा वेति ।

**अहिणअ** इति । अस्य श्लोकस्य संस्कृतानुवादो द्विविधो भवितुमर्हतीति तत्र **प्रथमः**—

अभिनवपयोदरसितेषु पथिकसामाजिकेषु दिवसेषु ।

महति प्रसारितगीतानर्त्तितिकं मयूरवृन्दानाम् । इति संस्कृतम् ।

**द्वितीयस्तु**—अभिनवपयोदरसितेषु पथिकश्यामायितेषु दिवसेषु ।

महतिप्रसारितग्रीवाणां नृत्तं मयूरवृन्दानाम् इति ।

गाथासप्तशतीस्थपद्यमिदम् ।

अभिनवा नूतना ये पयोदा मेघाः तेषां रसितानि गर्जितानि येषु तेषु पथिकाः प्रोषितवासिनः कान्तावियोगिन इत्यर्थः, श्यामायिता श्यामाङ्गवदाचरितवन्तः येषु तेषु यद्वा पथिकसामाजिकेषु इति पाठे पथिका एव सामाजिका नृत्योत्सवादिदर्शका येषु तेषु आहिताग्न्यादित्वात्परनिपातः दिवसेषु वर्षाकालीनाहः सु, प्रसारिता विस्तारिता ग्रीवा यैः तेषां मयूरवृन्दानां शिखिसमूहानाम्, नृत्यं (कर्तृ) महिति उत्सव इव आचरति । गायाच्छन्दः ।

उदाहरणं सङ्गमयति—**अत्रे**ति । उपमा व्यङ्गतेत्यर्थः । रूपकं च निरङ्गकेवलरूपम् ।

## रुचिरा

एकपदगतत्वेनैकाश्रयमुदाहरति—**यथा** वेति । **'अहिणअ'** इत्यादि । **'अहिणअपओदरसिअसु** अभिनवपयोदरसितेषु अभिनवा ये पयोदा जलदास्तै रसिता ध्वनिशालितां नीतास्तेषु इति यावत् । अभिनवत्वेन पयोदानां तर्पणक्षमत्वतदुन्मुखत्वे सूचिते । **पहिअस्सामाइएसु** पथिकश्यामायितेषु पथिका विरहिणः श्यामायिता मलिन इवाचरितवन्तो यैषु तेषु । यद्वा—'पथिकसामाजिकेषु'इत्यर्थः पथिका एव सामाजिका उत्सव (नृत्य) दर्शका येषु तथाभूतेष्विति भावः । आहिताम्यादित्वात्परनिपातः । **दिअसेसु** दिवसेषु । **पसारिअगिआणं** प्रसारितग्रीवाणाम् । **मोरविन्दाणं** मयूरवृन्दानाम् । **णिचिअं** नृत्यम् । **मोहइ** मोहयति । गाथासप्तशत्याः पद्यमिदं, गाथाछन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ३१२ ॥'

**श्रीचन्द्रशेखरमहाकविचन्द्रसूनु-**

**श्रीविश्वनाथकविराजकृतं प्रबन्धम्।**

**साहित्यदर्पणममुं सुधियो विलोक्य**

**साहित्यतत्त्वमखिलं सुखमेव वित्त ॥ ९९ ॥**

परमात्मानं स्मरन् ग्रन्थाभ्युदयाय प्रार्थयते-**यावदित्यादिना** ।

तावन्मनः संमदयन्कबीनामेष प्रबन्धः प्रथितोऽस्तु लोके ॥ २०० ॥

---

## विवृतिः

अक्षिपक्षरसचन्द्र(१६२२) संमिते हायने शकवसुंधरापतेः ।

श्रीलरामचरणाग्रजन्मना दर्पणस्य विवृतिः प्रकाशिता ॥

दोषं कंचन वीक्ष्य सूक्ष्ममतयो द्वित्राः शपन्त्यत्र चे-

त्तन्मां न व्यथयेद्गुरोरपि गिरो निर्दूषणा दुर्वचाः ।

छात्राणां मतिमादधाति यदसौ गूढार्थसंदीपना-

दानन्दं वितनोति यद्गुणवतां तेनास्मयमोघश्रमः ॥'

**इति श्रीरामचरणतर्कवागीशभट्टाचार्यविरचितायां साहित्यदर्पणविवृतौ दशमः प्रकाशः । ग्रन्थसंख्या (६०००) ॥**

## विज्ञप्रिया

**श्रीचन्द्रेति** । अत्र सुधिय इति सम्बोधनम् । क्वचित् कवय इति पाठः । हे सुधियः, श्रीचन्द्रेत्यादिकृतममुं साहित्यदर्पणं पुस्तकं विलोक्य अखिलं साहित्यतत्त्वं सुखमेव सुखविशिष्टमेव यथा स्यात्तथा वित्त जानीतेत्यर्थः ।

**यावदिति** । प्रसन्नेन्दुनिभानना श्रीर्यावन्नारायणस्याङ्कमलङ्करोति, तावत्कवीनां मनः सम्मदयन्नयं प्रबन्धो लोके प्रथितोस्तु इत्यर्थः ।

यावदिति । प्रसन्नेन्दुनिभानना श्रीर्यावन्नारायणस्याङ्कमलङ्करोति, तावत्कवीनां मनः सम्मदयन्नयं प्रबन्धो लोके प्रथितोस्तु इत्यर्थः ।

**इतीत्यादि** । अखिलभाषैव विलासिनी नायिका तस्याः भुजङ्गः कामुकस्तदनुशीलकत्वात् ।

इति महेश्वरतर्कालङ्कारविरचितायां साहित्यदर्पणटीकायां दशमपरिच्छेदविवरणम् ।

**सुश्लिष्टसंस्कृतवशेन सुखाधिरोहा**

**वैषम्यदुस्तरतरङ्गविभेददक्षा ।**

**साहित्यदर्पणमहार्णवमुत्तरीतुं**

टीकेयमस्ति तरणिर्न बिभीत धीराः ॥ १ ॥

दर्पणे प्रतिबिम्बन्ते पदार्था इति नाद्भुतम्।

चित्रं मतैतद् व्याख्याने दर्पणः प्रतिबिम्बिते ॥ २ ॥

अवधानकृतामोदा टीकेयं नावधीर्यताम्।

धीराः कषायताम्बूले स्वाद्यन्ते हि क्रमाद्रसाः ॥ ३ ॥

समाप्तश्चायं ग्रन्थः।

## लोचन

**श्रीचन्द्रशेखरेति**। महाकविचन्द्रेत्यत्र चन्द्रशब्दः श्रेष्ठार्थः। विश्वनाथनामा कविराजः यस्येमां प्रशस्तिमाचक्षते विवक्षणाः।

"आः किं कम्पमुरीकरोषि वसुधे धूरर्दिते वा भव-

द्गोविन्देन तु नन्दमन्दिरकृतक्रीडावतारेण ते।

विख्यातः कविराजिराज इति यः श्रीविश्वनाथः कृती

तस्याकर्ण्य गिरः शिरांसि भुजगाधीशो धुनीतेऽधुना ॥"

तेन कृतं साहित्यदर्पणाख्यं ग्रन्थमवलोक्येति सम्बन्धः।

सम्प्रति ग्रन्थस्य समाप्तौ स्वाभीष्टपूर्वकं शुभाशंसनं करोति—**यावदिति**। सम्मदयन् सम्यक् प्रीणयन्—

**आस्तामनन्तकृतिना कृत एष धीरे-**

**णासाद्य तातशरणाम्बुरुहप्रसादम्**

**आचन्द्रमातरणिकोविदवृन्दवन्द्यः**

**साहित्यदर्पणविवेकवचः प्रपञ्चः ॥**

**इति श्रीमदालङ्कारिकचक्रवर्त्तिगजपतिसाम्राज्यसन्धिविग्रहिकश्रीविश्वनाथकविराजात्मजश्रीमदानन्तदाकृतौ साहित्यदर्पणलोचने दशमः परिच्छेदः समाप्तः।**

## कुसुमप्रतिमा

इतीति। प्रथमपरिच्छेद एवैष सन्दर्भो यथायथं विवृत् इति।

विरोधिविद्वेषविवर्जनान्न मे न वाऽन्ति दुःखं खल दूषकात् खलु।

विषान्तिके हन्त! सुधा सुधायते न कम्पयेत् कम्प्रति वा कपिमुखम् ॥ १ ॥

सुधीधुरीमेन विविच्य चेत् कृता तिरस्कृतिः सैव भवेत् पुरस्कृतिः।

तनोति दाहो दहनस्य काञ्चने सुसज्जितां काञ्चिदपूर्वचारुताम् ॥ २ ॥

जानकौविक्रमं नाम नाटकं वाररौद्रवत्।

४०३८

नाटिकामुज्ज्वलरसां श्रीविराजसरोजिनीम् ॥ ३ ॥

वियोगवैभवाख्यानं खण्डकाव्यमनन्तरम् ।

नानाबन्धं महाकाव्यं रुक्मिणीहरणोभिधम् ॥ ४ ॥

स्मृतिचिन्तामणिं नाम संक्षिप्तस्मृतिसंग्रहम् ।

उत्तररामचरित टीकां सर्वार्थ बोधिनीम् ॥ ५ ॥

मालविकाग्निमित्रस्य मालतीमाधवस्य च ।

कादम्बरीकथायाश्च टीकां कल्पलताभिधाम् ॥ ६ ॥

श्रीवङ्गीयप्रतापाख्यं नाटकं वङ्गगौरवम् ।

कृत्वा कुर्वन् गद्यकाव्यमपूर्वं सरलाभिधम् ॥ ७ ॥

कोटालिपाड़ीनशियानिवासौ नकीपुरेशस्य सभाप्रवासौ ।

सत्काश्यपोऽध्यापनमुख्यकर्म्मा व्यधादिमां श्रीहरिदासशर्म्म ॥ ८ ॥

ख वेद वस्विन्दुमिते शकाब्दे सूर्य्ये धनुस्थे दशमे बुधेऽङ्घि ।

वङ्गेषुरामा प्रतिमा ममेयं समाप्तिमाप्ता गिरिशप्रसादात् ॥ ९ ॥

रसिकाधिकदृष्टिहारिणी सुषमा सौरभलोभदायिनी ।

कुसुमप्रतितमाऽत्र दर्पणे चिरलग्ना विबुधैर्विलोक्यताम् ॥ १० ॥

इति गङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मज महामहोपाध्याय महाकवि-भारताचार्य्यश्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचित्यां साहित्यदर्पणटीकायां कुसुमप्रतिमायां दशमः परिच्छेदः ॥ ० ॥ समप्तश्चायं ग्रन्थः ।

## विमला

यावदिति ।—प्रसनेन्दुनिभं—पूर्णचन्द्रसदृशमित्यर्थः, आननं—मुखं यस्याः तादृशी, श्रीः,—लक्ष्मीः, ("श्रीर्वेशरचनाशोभा-भारतीसरलद्रुमे । लक्ष्म्यां त्रिवर्गसम्पत्ति-विधोपकरणेषु च ॥ विभूतौ च मतौ च स्त्री" इति मेदिनी) यावत् नारायणस्य—भगवतः, अङ्गं—वक्षः स्थलम्, अलङ्करोति, तावत्—तत्कालावधि, एषः,—मत्कृत इत्यर्थः, प्रबन्धः—साहित्यदर्पणनामालङ्कारशास्त्रविषयको निबन्धः, कवीनां मनः सम्मदयन्—संहृष्टं कुर्वन, लोके—जगति, ("लोकस्तु भुवने जने" इत्यमरः) प्रथितः,—विख्यातः, अस्तु । इन्द्रवज्रा वृत्तं—"स्यादिन्दवज्रा यदि तौ जगौ गः ।"

वैधेयैर्यदि किञ्चिदत्र रभसादुद्भाव्यते दूषणं

तेनाधातुरपारमार्थिकतया काचिन्न शक्या क्षतिः ।

विद्वद्भिः पुनरुच्यते यदि च तत् स्यात्तेन शोभा परा

सन्तापोऽपि विभावयत्यतिशयं कार्त्तस्वरस्यानले ॥

विलोक्य तर्कवागीश-निर्मितां विवृतिं वराम् ।

**टीका विरचिता पूर्वं या जीवानन्दशर्मणा ॥**

**शश्वद्विचारविनिवेशपरैः प्रमाणैः दृष्टान्तराजिरुचिरैश्च गभीरभावैः ।**

**तां भूषितां व्यदधताऽऽशुसुबोधहेतोः श्रीनित्यबोधसहितो द्विज आशुबोधः ॥**

## लक्ष्मी

एवं सोपष्टम्भं ग्रन्थं सामाप्य सम्प्रति एवं परिचाययन् ग्रन्थसमाप्तिं द्योतयितुमाह—**श्रीचन्द्रशेखरेति**। हे सुधियः विद्वांसः! सदसद्विवेचनद्वारातत्त्वमात्रबुभुत्सव इति तात्पर्यम्। यूयम्, श्रीचन्द्रशेखर एतन्नामक एव महाकविषु नक्षत्रगणेष्विव चन्द्रः तस्य महाकविषु सर्वोत्तमस्य श्रीचन्द्रशेखरस्येत्यर्थः सूनुः 'आत्मजस्तनयः सूनुः' इत्यमरः, यः श्रीविश्वनाथ एतत्संज्ञकः कविराजः कविश्रेष्ठ इत्यर्थः तेन कृतं निर्मितं साहित्यदर्पणं नाम अमुं प्रबन्धं ग्रन्थम्, विलोक्य आरब्धान्तं पर्यालोच्य सुखमेव अतिस्फुटत्वादक्लेशमेव यथा स्यात्तथा, अखिलम् अङ्गोपाङ्गसहितं साहित्यस्य अलङ्कारशास्त्रस्य तत्त्वं स्वरूपं बोद्धव्यविषयमित्यर्थः, वित्त जानीत, तत्त्वत एतद्ग्रन्थसमालोचनानन्तरं काव्यगतबोद्धव्यविषयाणां सर्वेषामेवानायासेन ज्ञानान्न तत्रान्यग्रन्थापेक्षेति भावः। **वसन्ततिलकाच्छन्दः।**

ग्रन्थान्ते परमेश्वरं संस्मरन् तत्सन्निधावेव स्वरचितप्रबन्धस्य चिरस्थायितां याचते **यावदिति**। प्रसन्नेन्दुनिभं स्वच्छचन्द्रसदृशम् आननं मुखं यस्याः तथोक्ता श्रीर्लक्ष्मीः यावत् नारायणस्य परमेश्वरस्य अङ्कं वक्षःस्थलम् अलङ्करोति भूषयति स्वस्थित्या शोभां जनयतीत्यर्थः तावत् तत्समयमेव एष साहित्यदर्पणनामा प्रबन्धः ग्रन्थः लोके जगति, कवीनां सुधीनां मनः सम्मदयन् ज्ञातव्यविषयबोधनेन प्रमोदं नयन् प्रथितः प्रसिद्धः अस्तु भवतु। इन्द्रवज्राच्छन्दः। (क) इदञ्चाग्रन्थान्ते मङ्गलम्।

**'साहित्यदर्पणव्याख्या लक्ष्म्याख्या पूरिता मया।**

**प्रीत्यै भूयाद्भगवतोः साम्बविश्वेशयोः सदा ॥'**

**इति वत्सकुलावतंस—वैयाकरणकेसरि-श्रीबदरीनाथशर्मात्मज-दैवज्ञशिरोमणि-श्रीलोकनाथात्मज साहित्यव्याकरणाद्याचार्य-ठक्कुरोपनामक (एम. ए.) श्रीकृष्णमोहनशास्त्रिविरचितायां 'लक्ष्मी' नामिकायां साहित्यदर्पणटीकायां दशमः परिच्छेदः।**

## रुचिरा

उदाहृतमर्थं निर्दिशति-**अत्रेत्यादिना**। स्पष्टम्।

विदुषः सम्बोध्यास्य फलानुभवाय प्रार्थयते—'हे **सुधियो** विद्वांसः सदसद्विवेचनपूर्वकं सारमात्रग्रहणपटव इति यावत्। **श्रीचन्द्रशेखर**....श्रीचन्द्रशेखर एव महाकविन्द्रो महाकविषु (तारागणेष्विव) चन्द्रभूतस्तस्य सूनुः पुत्रः, सोऽसौ विश्वनाथकविराजस्तेन कृतस्तम्। **अमुम्। साहित्यदर्पणम्। प्रबन्धम्। विलोक्य। अखिलमङ्गोपाङ्गसहितम्**। साहित्यतत्त्वं **साहित्यस्यालङ्कार** (प्रधान)—शास्त्रस्य तत्त्वं तत्। **सुखमनायासम्। एव। वित्त** यूयं जानीत। एतद्विलोकनानन्तरं रसमञ्जर्यादेरप्यपेक्षा न भविष्यतीति भावः। वसन्ततिलकं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥

**यावत्। प्रसन्नेन्दुनिभानना** प्रसन्न आवरणशून्यो य इन्दुस्तन्निभमाननं मुखं यस्यास्तथोक्ता। **श्रीर्लक्ष्मीः। नारायणस्य** परमात्मनः। **अङ्कं** वक्षः स्थलम्। **अलङ्करोति। तावत्। एष** साहित्यदर्पणानामा। **प्रबन्धः। लोके**

जगति । **कवीनां** विदुषाम् । **मनः** । **सम्मदयन्** प्रमोदं नयन् । **प्रथितः** । **अस्तु** । इन्द्रवज्राछन्दः तल्लक्षणं चोक्तं प्राक् ॥

प्रकरण-प्रबन्धयोः समाप्तिं निर्दिशति- इतीत्यादिना पूर्ववदूह्यम् ।

चरणरजांसि शिरोभिर्वोढुं भूमृद्वराः अनेकशो यत्र ।

तदुदयसिंहनराधिपशासितमुद्भाति पाटनं नगरम् ॥ १ ॥

भुवनभावुकभावितभावनं भयभयावहनाममनोहरम् ।

शिवमहं शिवदत्तकविर्मुहुर्विनतवान्नतवाञ्छितपूरकम् ॥'

भारद्वाजान्वयजनिभूढुण्डुरामः पवित्रस्वान्ताराध्यः परमपुरुषाराधनव्यापृतात्मा ।

तस्यात्मोद्भूर्महितचरितः श्रीमतां धीमतां च नित्यं मान्यो जगति बलदेवेत्युपाहः प्रभूतः ॥ २ ॥

तत्सूनुर्निगमागमज्ञमहितः शान्तो वदान्यः प्रियः सिद्धः श्रीशिवनाथसूरिरुदभूद्भिषक् प्रसिद्धो गुणैः ।

तस्यात्मप्रभवः प्रभूतधिषणो निर्मत्साराधकः पृथ्व्यां श्रीशिवदत्तइत्यधिगताभिख्योऽहमेष स्थितः ॥ ३ ॥

एनेन साहित्यमहासमुद्रमुन्मथ्य रत्नानि ततो गृहीत्वा ।

व्याख्येयमाविष्क्रियते स्म तेषां निधानभूता रुचिरा प्रयत्नात् ॥ ४ ॥

साहित्यदर्पणस्येयं रुचिरा प्रथिता गुणैः । रचिता शिवदत्तेन विश्वनाथस्य तुष्टये ॥ ५ ॥

लोचनाचलान्देन्दुमिते विक्रमवत्सरे । भाद्रमासेऽसिते पक्षे दशम्यां रविवासरे ॥ ६ ॥

पूरिता कविरत्नेन व्याख्येयं रुचिराऽभिधा । चिराय रुचिरा भूयात् स्वगुणैर्विमलात्मनाम् ॥ ७ ॥

यदिहोद्भावितं नूत्नं प्राचीनं वा मतं मया । तत्सर्वं सुविचार्यैव न मनागवहेलया ॥ ८ ॥

अथापि स्खलितं क्वापि कथञ्चिदपि यन्मनाक् । संशोधयन्तु तत्सर्वं करुणावरुणालयाः ॥ ९ ॥

इह यद्यपि भूयांसः सुलभा दोषाः समन्ततः सन्ति । न तथाऽपि सर्वथाऽऽस्ते विगुणं किमपीति हन्त तुष्यामि ॥ १० ॥

अथवा रत्ननिधावपि न तथा सुलभानि सन्ति रत्नानि । प्रस्तरशङ्खवराटकशकलानि यथा पदेपदे हन्त ॥११ ॥

**इति श्रीमद्भारद्वाजवंशावतंसानां सहृदयशिरोमणीनां सुगृहीतनाम्नां श्रीशिवनाथसुरीणां तनूभुवा स्वपितामह-ज्येष्ठसहोदर ज्येष्ठात्मजानां समस्तशास्त्रनिष्णातानां प्रथितमहिम्नां श्रीदेवीसहायचरणानामाराधनया गृहीत शास्त्रेण श्रीरम्भादेवीगर्भभुवा काव्यप्रकाशध्वन्यालोकादिव्याख्यात्रा भगवत्सुधाशत कार्याशतकसंस्कारसर्व-स्वादिनिर्मात्रा श्रीशिवदत्तकविरत्नेन विरचितायां साहित्यदर्पणव्याख्यायां रुचिरायां दशमः परिच्छेदः ।**

**समाप्ता चेयं व्याख्या । इति शम् ।**



**जन्म**—६-११-१९३७

**जन्मस्थानम्**—ग्रामः—रोहटः, मण्डलम् सोनी-पतः (हरियाणा)।

**शिक्षा**—शास्त्री १९५३, पञ्जाबविश्वविद्यालये सर्वप्रथमः, एम. ए. १९६३ दिल्ली विश्वविद्यालयः, पी.एच.डी. १९७० दिल्ली विश्वविद्यालयः।

**अध्ययनक्षेत्रम्**—साहित्यशास्त्रम्, व्याकरणम् च।

**प्रकाशितानि शोधपत्राणि**—दिल्ली विश्व-विद्यालयदक्षिणपरिसरे समवेतानां परिचर्चाना पुस्तकाकारेषु प्रकाशनेषु बहवो लेखाः।

**प्रकाशितो ग्रन्थः**—अभिधाविमर्शः, दिल्ली १९८० आचार्यो दण्डी, (राष्ट्रियसंस्कृत-संस्थानेन प्रकाशितः) ब्रह्मसूत्रशांकरभाष्यम् एकादशटीकासंयुतम् अष्टसु भागेषु, साहित्य-दर्पणम् चतुर्थ भागेषु, काव्यदर्शः पञ्चभागेषु।

**कार्यक्षेत्रम्**—दिल्ली विश्वविद्यालयस्थे हिन्दूमहाविद्यालये,

**प्राध्यापकः**—१९६९-१९८६

**गचकः**—१९८७-१९८८

नकांगड़ी विश्वविद्यालये प्राचार्य

**यक्षश्च**—१९८८-१९८९

महाविद्यालये प्रवाचकः।

# ALL MAHAPURANAS

Text with Shloka Index & Introduction

**Agni Mahapurana**
664 pp 450.00

**Bhagavata Mahapurana-**
4vols 2304 pp Set 1500.00

**Bhavishya Mahapurana**
3vols 1400 pp Set 1200.00

**Brahma Mahapurana**
728 pp 450.00

**Devi Bhagavata Mahapurana**
1154 pp 800.00

**Ganesha Purana**
832 pp 1993 450.00

**Garuda Mahapurana**
668 pp 400.00

**Harivansha Purana**
मूल, हिन्दी अनुवाद तथा श्लोकानुक्रमणी सहित
1802 pp 2vols. set 900.00

**Kurma Mahapuran**
298 pp 300.00

**Linga Mahapurana**
774 pp 400.00

**Markandeya Mahapurana**
मूल, हिन्दी अनुवाद तथा श्लोकानुक्रमणी सहित
828 pp 450.00

**Narada Mahapurana**
932 pp 600.00

**Padma Mahapurana**
2381pp 4vols set 1600.00

**Shiva Mahapurana**
1504 pp 2vols set 900.00

**Shiva Mahapurana** (Small Type)
412 pp 400.00

**Skanda Mahapurana**
5600 pp 8 vols set 4000.00

**Skanda Mahapurana** (small type)
1452 pp 3vols set 1500.00

**Vamana Mahapurana**
472 pp 400.00

**Vayu Mahapurana**
540 pp 400.00

**Vishnudharmottara Mahapurana**
1246 pp 900.00

**Vishnu Mahapurana with two commentaries**
680 pp 500.00

**विष्णुमहापुराण**
मूल, हिन्दी अनुवाद तथा श्लोकानुक्रमणी सहित
—डा० श्रद्धा शुक्ला
2 vols Press

**Maha Bhagavat Devipurana**
Press

**Ekamara Purana**
490 pp 150.00

**Kalki Purana**
316pp 120.00

**Kuber Purana** (Text With Study) Press

**Narasimha Purana**
380 pp 100.00

**Saura Purana**
290 pp 100.00

**Srimadbhargavopapuranam**
—Brijesh Kumar Shukla
pp 348 Rs. 124.00

**Vasuki Purana**
260 pp 100.00

**Ashtadasha Purana Darpana**
**Contents of 18 Puranas**
432 pp 180.00

## PURANAS WITH TEXT, TRANS & NOTES IN ENGLISH VERSWISE

**Vishnu Purana** – *H.H. Wilson*
1065 pp 2 vols Set 500.00

**Matsya Purana** – *N.S. Singh*
1252 pp 2 vols 500.00

**Narasimha Purana** —*Dr.S.Jena*
750 pp 400.00

**Kalika Purana**
*Prof. Biswanarayan Shastri*
1770 pp 3vols set 900.00